**व्यासतीर्थीया–** सः प्रसिद्धः । दिव्यं पयो यस्मिन् असौ दिव्यपयाः, घृतेनाधिकः घृताधिकः, दिव्यपयाश्चासौ घृताधिकश्चेति स तथोक्तस्तम् । घृताधिकदिव्यपयसमिति वा ।।९।।

**वेदाङ्गतीर्थीया–** नेत्रं पाशम् । दिव्यपयः विकाररहितत्वात् दिव्यक्षीरमब्धिरूपं क्षीराब्धिमिति यावत् ।।९-११।।

**वादिराजीया–** कृतश्च कद्रोस्तनयोऽत्र वासुकिरित्यत्र कद्रोस्तनयः कश्यपजश्च यो नागराट् वासुकिः सोऽत्र मथने इतस्ततो मन्थानं नयतीति नेत्रम्, रज्जुः कृतः । त्रान्तत्वेन नित्यनपुंसकत्वात् पुल्लिङ्गेन सम्बन्धः । दिव्यपयसि घृतमधिकं यस्येति विग्रहः ।।९।।

**वरदराजीया–** अत्राब्धौ कद्र्वाः कद्रुनामिकायाः दक्षपुत्र्याः तनयो वासुकिः सुप्रसिद्धो नेत्रं त्वया पर्वतपाशः कृतः । वासुकिः कस्माज्जात इत्यत उक्तम्– **कश्यपज इति** ।। स नागराट् सर्पराजो वासुकिः कश्यपाज्जात इत्यर्थः । सहासुराः असुरैः सह वर्तमानाः त्वया सहिताश्च सुरा दिव्याभ्यां विकाररहिताभ्यां पयोघृताभ्यामधिकं प्रचुरमब्धिं क्षीराब्धिं ममन्थुः मथितवन्तः ।।९।।

**अनन्तभट्टीया–** नेत्रं..।। **दिव्येति** ।। दिव्यं पयो यस्य तत् तेनाधिकः । ततः कर्मधारयः ।।९।।

**जनार्दनीया–** अत्र समुद्रमथने कश्यपऋषेः जातः कद्रूवाः कद्रूनाम्नी कश्यपभार्या, तस्यास्तनयः पुत्रः, नागेषु राजते असौ तथा । अष्टकुलसर्पश्रेष्ठेषु अयमप्येकतमः सर्पश्रेष्ठः, नाम्ना वासुकिरिति प्रसिद्धः। नेत्रं परिवर्तकरज्जुः कृतः । असुरैः सहिताः सहासुराः त्वया सहिताः सन्तः । दिव्ये निर्विकारे पयोघृते क्षीराज्ये अधिकः श्रेष्ठः तं अब्धिं ममन्थुः । 'नेत्रं वस्त्रविशेषे स्यान्नेत्रं चक्षुरुदाहृतम् । परिवर्तगुणो नेत्रो नेत्रः कस्तूरिकामृगः ।।' इत्यभिधानम् ।।९।।

**ताम्रपर्णीया–** दिव्यं पयः यस्मिन् असौ दिव्यपयाः घृतेनाधिकः घृताधिकः । दिव्यपयाश्चासौ घृताधिकश्च इति विग्रहः । 'जैत्रैः दोर्भिः जगदभयदैः दन्दशूकं गृहीत्वा मथ्नन् मथ्ना प्रतिगिरिरिवाशोभताथो धृताद्रिः' [भा.८.७.१७] इति भागवतविरोधपरिहाराय घृताधिकमित्युक्तम्[१] ।।९-११।।

**अतिविशद–** नेत्रं त्वया कश्यपजस्स नागराट् इत्यत्र नेत्रं परिवर्तनरज्जुः । नेत्रं वस्त्रविशेषे स्यात् नेत्रं चक्षुरुदाहृतम् । परिवर्तगुणो नेत्रो नेत्रः कस्तूरिकामृगः ।। इत्यभिधाधानात् ।।९-१६।।

**भावचन्द्रिका–** दिव्यश्च तत् पयश्च तादृशमब्धिम् । घृताधिकमिति क्रियाविशेषणम् । अधिकं घृतं यथा भवति तथा ममन्थुरिति । 'ततस्तस्य समुद्रस्य सञ्जातमुदकं पयः । रसोत्तमैर्विमिश्रं च ततः क्षीरादभूत् घृतम् ।।' [१८-४०] इत्यादिपर्वणि आस्तीके भारतवचनात् ।।९-१०।।

---

१. घृताधिक इत्यत्र इदं भागवतवाक्यं न ज्ञापकम् इति भाति ।

**भारतश्री—** धृतराष्ट्रकुलजातवासुकिव्यावृत्त्यर्थं– **कश्यपज** इत्युक्तम् ।। तस्यापि परम्परया कश्यपजत्वात् कद्रवाः तनयमित्युक्तं भारते– 'धृतराष्ट्रकुले जातान् पन्नगांस्त्वं निबोध मे । नीलो नीलो वासुकिश्च पिण्डकारमहोदरौ ।।' इति ।।९-१३।।

**चट्टि—** अत्र समुद्रमथने कश्यपऋषेः जातः कद्र्वाः कद्रुनामिकायाः कश्यपभार्यायास्तनयः । नागेषु राजत इति नागराट् । अष्टकुलसर्पश्रेष्ठेषु अयमप्येकः सर्पश्रेष्ठः । नाम्ना वासुकिरिति यः सः त्वया इतस्ततो मन्थानं नयतीति नेत्रं परिवर्तकरज्जुः कृतः । असुरैः सहितास्सहासुराः सुरास्त्वया सहितास्सन्तः, दिव्ये निर्विकारे पयोघृते क्षीराज्ये ताभ्यामधिकं श्रेष्ठमब्धिं ममन्थुः । दिव्यपयसि घृतं अधिकं यस्य तमब्धिमिति वा । 'नेत्रं वस्त्रविशेषः स्यान्नेत्रं चक्षुरुदाहृतम् । परिवर्तगुणो नेत्रो नेत्रः कस्तूरिकामृगे' इत्यभिधानम् ।।९।।

**नैच्छन्त[१] पुच्छं दितिजा अमङ्गलं तदित्यथाग्रं जगृहुर्विषोल्बणम् ।**
**श्रान्ताश्च तेऽतो विबुधास्तु पुच्छं त्वया समेता जगृहुस्त्वदाश्रयाः ।।१०।।**

**व्यासतीर्थीया—** अतो विषाधिकग्रहणात् । तर्ह्यमङ्गलपुच्छग्रहणेन दोषो भवति किमिति जिज्ञासायां नेत्युक्तम्– **त्वदाश्रया इति** ।।१०-११।।

**वादिराजीया—** विबुधास्तु पुच्छमित्यत्र तुशब्देन देवानां बुद्धिविशेषवत्त्वं सूचयति । त्वया सहिताः सहासुरा इति सामान्योक्त्या उभयोरपि हरिसहायत्वभ्रमं निवरयितुमुक्तम्– **त्वया समेता विबुधा इति** ।।१०-११।।

**वरदराजीया—** तत्र दितिजाः वासुकेः पुच्छं धर्तुं नैच्छन् । केनाभिप्रायेण? एतत्पुच्छं हीनाङ्गत्वादमङ्गलं अशुभमित्यभिप्रायेणेत्यर्थः । अथ तस्मादुत्तमाङ्गत्वादग्रं शिरोभागं विषेणोल्बणं जगृहुः धृतवन्तः । अतः कारणात् विषाधिकशिरोभागधारणात् कारणात्ते दितिजाः श्रान्ता आसन्नित्यर्थः । विबुधास्तु त्वया समेता अतस्त्वदीश्रयाः बुद्धिबलाश्रयाः पुच्छं वासुकेः पुच्छं जगृहुरित्यर्थः ।।१०।।

---

१. 'हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् । तन्नैच्छन् दैत्यपतयो महापुरुषचेष्टितम् ।। न गृह्णीमो वयं पुच्छमहेरङ्गम-मङ्गलम् । स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः ।। इति तूर्ष्णीं स्थितान् दैत्यान् विलोक्य पुरुषोत्तमः । स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ।।' इति भागवते ८.७.२-५ । 'ततो देवा हृदि हरिं सस्मरुः कार्यसिद्धये । स्मृतमात्रः स तत्रागात् अच्युतः सर्वदर्शनः ।। तमालोक्यामरगणाः मुदिताः फणिनां पतेः । पुरोभागं गृहीत्वैव तस्थुस्तेनानुमोदिताः ।। देवतापक्षपातित्वं सूचयन् स्वस्य च प्रभुः । यत्र देवास्तत्र तस्थौ ततो दैत्यास्तु चुक्रुधुः ।। तपोविद्यावयोज्येष्ठा अधोभागममङ्गलम् । कथं तिरश्चो गृह्णीमो नेदृङ्मूर्खा वयं त्विति ।। सह देवैस्ततो विष्णुः स्वयं तान् मानयन्निव। प्रहस्य दत्वा प्राग्भागं सुरान् पुच्छमजिग्रहत् ।। महाहिविषफूत्कारदाहादमररक्षणम् । चरित्रमेतच्छ्रीभर्तुरिति दैत्या न ते विदुः ।।' इति स्कन्दे. वैष्णवखण्डे. वासुदेवमाहात्म्य. ११.१९-२१ ।

**अनन्तभट्टीया–** तत् पुच्छम् । अग्रं शिरः.... [अतः] ग्रहणात् ॥१०॥

**जनार्दनीया–** दितिजाः तत्पुच्छं अमङ्गलं नीचाङ्गमिति पुच्छं सर्पपुच्छं नैच्छन्त, गृहीतुमिति शेषः । उत्तमाङ्गद्योतकोऽथशब्दः । विषेण उल्बणं क्रूरं अविषह्यमित्यर्थः । अग्रं मुखं जगृहुः । ते दैत्याः तु अतिशयेन श्रान्ताः । अथ पुच्छग्रहणानन्तरं त्वया समेताः । 'त्वदाश्रयाः' इत्यनेन स्वानिष्टपरिहारः सूचितः ॥१०॥

**चट्टि–** दितिजाः दैत्याः तत्पुच्छं नीचाङ्गत्वाद् अमङ्गलमशुभमिति पुच्छं नैच्छन्त । गृहीतुमिति शेषः । अथ विषेणोल्बणं क्रूरं अविषह्यमित्यर्थः । अग्रं मुखं जगृहुः धृतवन्तः । अतः कारणात् ते दैत्याः तु अतिशयेन श्रान्ताः आसन् । त्वमेवाश्रयो एषां ते त्वदाश्रयाः त्वद्बुद्धिबलाश्रया इत्यर्थः । विबुधाः देवास्तु त्वया समेतास्सन्तः पुच्छं वासुकेः पुच्छं जगृहुः ॥१०॥

**अथातिभारादविशत् सुकाञ्चनो गिरिः स पातालमथ त्वमेव ।**
**तं [1]कच्छपात्मा त्वभरः स्वपृष्ठे ह्यनन्यधार्यं पुरुलीलयैव ॥११॥**

**सत्याभिनवतीर्थीया–** तत्रैव अथातिभारादविशत्...इति श्लोके 'स्वपृष्ठे' इत्यस्य स्वातन्त्र्यादिगुणयुक्तपृष्ठे इत्यर्थः । एतेन परपृष्ठप्रसक्तेरभावात् स्वपृष्ठे इत्यत्र स्वेत्येतत् व्यर्थमिति दूषणं निरस्तम् । भगवता इव भगवदङ्गानामपि स्वातन्त्र्यादिगुणयुक्तत्वमस्तीति ज्ञापयितुं स्वातन्त्र्यवाचकेन स्वशब्देन लक्षणया स्वातन्त्र्यादिगुणयुक्तत्वं कूर्मपृष्ठस्योच्यते इत्यभ्युपगमात् ॥११॥

**वरदराजीया–** अथानन्तरं सुकाञ्चनः समीचीनकाञ्चनमयो गिरिः मन्दरो अतिभारात् स्वगतातिभारेण पातालमाविशत् विवेश । अथान्तरं त्वमेव कच्छपात्मा कूर्मस्वरूपो भूत्वा स्वपृष्ठे अनन्यधार्यं त्वामृते अन्येनाधार्यं तं मन्दरगिरिं पुरु लीलयैव अभरः धृतवानसि हि ॥११॥

**अनन्तभट्टीया–** सुकाञ्चनं शोभनकाञ्चनात्मकम् ।...अविशत् । अभरः अधाः ॥११॥

**जनार्दनीया–** अथ पुच्छमुखग्रहणानन्तरं सुकाञ्चनः उत्तमसुवर्णात्मा स गिरिः अतिभारात् काञ्चनात्मकत्वात् भूरिभारो गिरिरिति भावः । कच्छपात्मा कूर्मस्वरूपो भूत्वेति शेषः । तं मन्दरम् । अभरः धृतवानसि ॥११॥

---

१. कूर्मरूपी भगवान् ब्रह्मोत्पत्तेः पूर्वमेवास्मिन् ब्रह्माण्डे आसीत् । तथा चोक्तं तैत्तिरीयारण्यके. प्रपा.१.अनु.२३ 'अन्तरतः कूर्मं भूतं सर्पन्तम् । तमब्रवीत् । मम वै त्वङ्मांसा समभूत् । नेत्यब्रवीत् । पूर्वमेवाहमिहासमिति । तत्पुरुषस्य पुरुषत्वम् । स सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । भूत्वोदतिष्ठत् ।' इत्यादि ।

**भावचन्द्रिका–** ।।**अथेति**।। पातालमिति समुद्रादधःप्रदेशमेतदुच्यते । तदुक्तं भागवते– 'मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत्' इति [८.७.६] । मङ्गलाष्टके 'लक्ष्मीधरापैरपि शम्बरतलालीढम्' इति शम्बरमुदकम् । पाताले प्रवेशे । विघ्नेश्वरपूजाभावे च 'विलोक्य विघ्नेशगतिं सुरेश्वरा' [८.७.८] इत्यादि भागवते त्रिपुरदाहे मयेन रुद्रस्येव अत्रापि पराभव इति ज्ञेयम् ।।११।।

**चट्टि–** अथानन्तरं सुकाञ्चनः उत्तमसुवर्णात्मा स गिरिः अतिभारात् काञ्चनात्मकत्वात् भूरिभारो गिरिरिति भावः । पातालमविशद्विवेश । अथ त्वमेव कच्छपात्मा कूर्मस्वरूपो भूत्वा स्वपृष्ठे अनन्यधार्यं अन्यैः धर्तुमशक्यं तं मन्दरगिरिं पुरुलीलया अतिलीलया अभरः धृतवानसि ।।११।।

**[१]उपर्यधश्चाऽत्मनि नेत्रगोत्रयोस्त्वया परेणाऽविशता समेधिताः ।**
**ममन्थुरब्धिं तरसा मदोत्कटाः सुरासुराः क्षोभितनक्रचक्रम्[२] ।।१२।।**

**व्यासतीर्थीया–** गिरेरुपर्यधश्चात्मनि ।।१२-१६।।

**वेदाङ्गतीर्थीया–** क्षोभितनक्रचक्रं क्षोभितजलचरसमूहं यथा भवति तथा । नक्रशब्दः सर्वजलचरोपलक्षितः [लक्षकः] ।।१२-१४।।

**वादिराजीया–** उपर्यधश्चेत्यत्र मथनभरेण चूतपक्वबीजवदुद्गमनपरिहारायोपरि हरेरवस्थानम् । चूर्णीभावपरिहाराय गोत्रे गिरौ प्रवेश इति भावः ।।१२।।

**मधुसूदनीया–** ।। **उपर्यधश्चेति** ।। नेत्रगोत्रयोः उपर्यधश्च आत्मन मध्यभागे तथाच देवदैत्यानां आत्मनि मध्ये च विशता । तदुक्तम्– 'देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तम' इति रामायणे [बाल.४५.३१]।।१२।।

**वरदराजीया–** नेत्रयो नेत्रे वासुकिरूपे पाशे गोत्रे पर्वते च तथा तयोरुपरि अधश्च तथा आत्मनि देवासुरेषु च परेण सर्वोत्कृष्टत्वेन त्वया आविशता प्रविष्टेन समेधिता अभिवृद्धाः सुरासुराः मदेनोत्कटाः पूर्णाः सन्तः । क्षोभितं भयं प्राप्तं नक्राणां तदुपलक्षितानामशेषजलचराणां चक्रं समूहो यत्र । अब्धिं क्षीराब्धिं ममन्थुः मथितवन्तः ।।१२।।

---

१. क्षीरोदमध्ये भगवान् कूर्मरूपी स्वयं हरिः । मन्थनाद्रेरधिष्ठानं भ्रमतोऽभून्महामुने ।। रूपेणान्येन देवानां मध्ये चक्रगदाधरः । चकर्ष नागराजानं दैत्यमध्येऽपरेण च ।। उपर्याक्रान्तवान् शैलं बृहद्रूपेण केशवः । तथाऽपरेण मैत्रेय यन्न दृष्टं सुरासुरैः ।। तेजसा नागराजानं तथाप्यायितवान् हरिः । अन्येन तेजसा देवानुपबृंहितवान् प्रभुः ।।

२. भाग.८.७.१३

**अनन्तभट्टीया–** गोत्रं पर्वतः । तरसा बलेन । आत्मनि देवासुरेषु ।। **क्षोभितेति** ।। क्षोभितनक्राणां चक्रं समूहो यस्मिन्निति विग्रहः ।।१२।।

**जनार्दनीया–** उपरि पर्वतोपरि अधः पर्वताधः । आत्मनीति जातावेकवचनम् । अस्मास्वित्यर्थः । नेत्रगोत्रयोः परिवर्तपाशपर्वतयोः परेण आविशता प्रविशता त्वया सम्यक् एधिता बलेनाभिवृद्धाः, मदेन उत्कटाः उत्कृष्टाः सुरासुराः तरसा वेगेन । क्षोभितं सञ्जातक्षोभं नक्राणां जलचराणां, चक्रं समूहो यस्मिन् स तथा तम् । अब्धिं ममन्थुः । 'गोत्रं नामान्वये गोत्रश्चक्रधरणीधरः' इत्यनेकध्वनिपदमञ्जर्याम् ।।१२।।

**ताम्रपर्णीया–** उपर्यधश्च गिरेः नेत्रगोत्रयोः रज्जुरूपवासुकिपर्वतयोः आत्मनि देवासुरादिसमूहे अपरेण तत्तदाकारवद्रूपेण । तदुक्तं भागवते– 'अथासुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् । उद्दीपयन् दैवगणाश्च नित्यं दैवेन नागेन्द्रमथापरेण ।।'[८.७.११] इति ।।१२-१५।।

**भावचन्द्रिका–** ।। **उपरीति** ।। 'तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् । उद्दीपयन् देवगणांश्च विष्णुर्दैवेन नागेन्द्रमथापरेण ।।'[८.७.११] इति भागवते ।।१२-२१।।

**चट्टि–** नेत्रगोत्रयोः परिवर्तपाशपर्वतयोरुपर्यधश्च आत्मनि मध्यभागे तथा देवदैत्यानामात्मनि मध्ये च आविशता परेण सर्वोत्कृष्टेन त्वया सम्यगेधिताः बलेनाभिवृद्धाः मदेनोत्कृष्टाः सुरासुरास्तरसा वेगेन । क्षोभितं सञ्जातक्षोभं नक्राणां जलचराणां चक्रं समूहो यस्मिन् स तथा तमब्धिं ममन्थुः । तदुक्तम् 'देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तम' इति रामायणे ।।१२।।

**श्रान्तेषु तेष्वेक [१]उरुक्रमस्त्वं सुधारसाप्त्यै मुदितो ह्यमथ्नाः ।**
**तदा जगद्ग्रासि विषं[२] समुत्थितं त्वदाज्ञया वायुरधात् करे निजे ।।१३।।**

१. भगवान् अजितरूपेण समुद्रमथनं चक्रे । तथा च भागवते । तत्रापि देवः सम्भूत्यां वैराजस्याभवत् सुतः । अजितो नाम भगवानंशेन जगतः पतिः ।। पयोब्धिं येन निर्मथ्य सुराणां साधिता सुधा । भ्रममाणोम्भसि धृतः कूर्मरूपेण मन्दरः ।। [भा.५.९-१०] 'अहीन्द्रसाहस्रकरालदिङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः । पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः शलभा इवापतन् । देवांश्च तच्छ्वासशिखाहतप्रभान् धूम्राम्बरस्रग्वरकञ्चुकाननान् । ...मथ्यमानात् तदा सिन्धोर्देवासुरवरूथपैः । यदा सुधा न जायेत निर्ममन्थाजितः स्वयम् ।।' इति भागवते [८.७.१४-१५] 'श्रान्ताः स्म सुभृशं ब्रह्मन् नोद्भवत्यमृतं च यत् । ऋते नारायणात् सर्वे दैत्या देवोत्तमास्तथा ।।' इति मात्स्ये [२४९.८०]

२. 'ततो विषं समुत्पन्नं कालकूटं भयावहम्' इति पाद्मे [१ सृ.४.५४] कालकूटमित्युच्यते । भागवते तु हालाहलमित्युच्यते कथं विरोधपरिहार इत्यत उच्यते । एकमेव विषं नामद्वयवाच्यम् । तथाहि स्कान्दे-[२वै.वा.मा.११.३४] 'हालाहलं विषमभूत् उत्सर्पद्भिदिशो दिशः । यदाहुः कालकूटाख्यं सर्वलोकातिदाहकम् ।।' इति ।

**वादिराजीया–** त्वमेक एवामथ्ना हीति हिशब्देन हरेः 'किं स्विदासीदधिष्ठानम्' इत्यादिश्रुत्युक्ता-सहायत्वप्रसिद्धिं सूचयति ।।१३।।

**सत्याभिनवतीर्थीया–** तत्रैव श्रान्तेषु तेष्वेक उरुक्रमस्त्वं...इति श्लोके 'निजे' इत्यनेन करस्य वायुसम्वन्धित्वोक्त्या विषग्रहणसामर्थ्यं सूचयति । एतेन 'वायुः करे अधात्' इत्युक्त्यैव करस्य वायुसम्वन्धित्वलाभात् 'निज' इत्येतत् व्यर्थमिति दूषणं परास्तम् । अन्यकरापेक्षया वायुकरस्य महासामर्थ्यमिति सूचनार्थं करस्य वायुसम्वन्धित्वमुक्तमित्यभ्युपगमात् ।।१३।।

**मधुसूदनीया–** ।। तदा जगद्ग्रासि विषमिति ।।

'महाविषं महाघोरं संवर्ताग्निसमप्रभम् । दृष्ट्वा प्रदुद्रुवुस्सर्वे भयार्ता देवदानवाः ।।
ततस्तान् विद्रुतान् दृष्ट्वा ब्रह्मा लोकपितामहः । जगाद वायुं तरसा हरेराज्ञापुरस्कृतः ।।
निःशेषं कुरु वायो त्वं लोकसंहारकं विषम् । त्वदन्यो नास्ति तत् ग्रस्तुं सर्वभूतहितङ्कर ।।
इति धातुर्वचः श्रुत्वा दशप्रमतिरब्रवीत् । [वायुस्तद्वाक्यमाकर्ण्य प्रहृष्टमतिरब्रवीत् ।]
भक्ष्यामि हरेराज्ञां पुरस्कृत्य विधेर्वचः । हरेर्नामोच्चारणेन तद्भक्त्या च विशेषतः ।।
सर्वव्यापिविषं घोरं पात्रे न्यस्य करे दधत् । विन्दुमात्रं पृथग्गृह्य तद्विषं मर्दयन् ततः ।।
परीक्षणार्थं चान्येषां देवादीनां च पार्वति । मम हस्ते ददौ किञ्चित् भक्षस्वेति समादृतः ।।
नामत्रयेण सहितं मन्त्रानुग्रहमादिकृत् । तद्विषप्राशनादेव मम दाहोऽभ्यवर्धत ।।
जिह्वाग्रधारणादेव मम प्राणा हि निर्गताः । कृपया पवमानस्य तथा नामत्रयेण च ।।
अच्युतानन्तगोविन्दनाममाहात्म्यतश्शुभे । जीवितोऽस्मि तदा काले विष्णोर्नामत्रयादहो ।।
पश्चात्तु तद्विषं सर्वं एकीकृत्य सुपात्रके । अनायासात् पपौ वायुः सर्वेषां रक्षणाय च ।।
हरेः सम्प्रीतये देवि ब्रह्मणो वचनात्तथा । ऋचो ब्रुवन्ति वेदस्य केशीति ब्रह्मवादिनः ।।
इत्थं प्रायो महत्वं हि विष्णुभक्तस्य पार्वति ।।'

इति पद्मपुराणे[१] उत्तरकाण्डे [२३२.१०-२१] । अनेन अत्यल्पपानाच्च बभूव शूला शिवस्येत्यन्तं विवृतं भवति ।।१३-२०।।

**वरदराजीया–** तेषु च असुरेषु श्रान्तेषु श्रमं प्राप्तेषु सत्सु यतस्त्वमुरुक्रम उत्कृष्टपराक्रमः ततो मुदा आनन्देन एक एव सुधारसाप्त्यै अमृतरसरूपप्राप्त्यर्थं अमथ्नाः मथितवानसि हीत्यर्थः । तदा मथने सति जगद्ग्रासि जगत् त्रैलोक्यं ग्रासितुं शीलमस्यास्तीति तादृशं विषं समुत्थितं उत्पन्नम् । वायुः मुख्यप्राणः त्वदाज्ञया निजे करे स्वहस्ते अधात् धृतवान् ।।१३।।

---

१. उपलभ्यमानपद्मपुराणे तु वायुकर्तृकविषपानप्रतिपादकश्लोका नोपलभ्यन्ते ।

**अनन्तभट्टीया–** ।। **सुधेति** ।। सुधैव रसः ।।१३।।

**जनार्दनीया–** तेषु देवासुरेषु । उरुक्रमः उत्कृष्टपराक्रमः अत एव मुदा सन्तोषेण इतः युक्तो । हि यस्मात् तस्मात् त्वमेकः । सुधैव रसः अमृतमेव रसः, तस्यास्यै देवानाममृतप्राप्त्यर्थमिति भावः । अमथ्नाः । ग्रसतीति ग्रासि जगन्नाशकरमित्यर्थः । अधात् दधार ।।१३।।

**चट्टि–** तेषु देवासुरेषु श्रान्तेषु सत्सु उरुक्रम उत्कृष्टपराक्रमः । अत एव मुदितः मुदा सन्तोषेणेतः युक्तो हि यस्मात् तस्मात् त्वमेकः सुधैवामृतमेव रसस्तस्य अप्त्यै । देवानाममृतप्राप्त्यर्थमिति भावः । अमथ्नाः मथितवानसि । तदा मथनसमये जगद्ग्रसतीति जगद्ग्रासि जगन्नाशकरमित्यर्थः । विषं समुत्थितं उत्पन्नम् । वायुस्त्वदाज्ञया तद्विषं निजे करे स्वहस्ते अधात् दधार । तदुक्तम्–

महाविषं महाघोरं संवर्ताग्निसमप्रभम् । दृष्ट्वा प्रदुद्रुवुस्सर्वे भयार्ताश्चैकमानसाः ।।
ततस्तान् विद्रुतान् दृष्ट्वा ब्रह्मा लोकपितामहः । जगाद वायुं तरसा हरेराज्ञापुरस्कृतः ।।
निश्शेषं कुरु वायो त्वं लोकसंहारकं विषम् ।
त्वदन्यो नास्ति तद्धन्तुं [ग्रस्तुं] सर्वभूतहितंकर [सर्वजीवहितं कुरु]।।
वायुस्तद्वाक्यमाकर्ण्य प्रहृष्टमतिरब्रवीत् । [इति धातुर्वचः श्रुत्वा दशप्रमतिरब्रवीत् ।]
भक्षयामि हरेराज्ञां पुरस्कृत्य विधेर्वचः । हरेर्नामोच्चारणेन तद्भक्त्या च विशेषतः ।।
सर्वव्यापि विषं घोरं पात्रे न्यस्य करे दधत् । बिन्दुमात्रं पृथग्गृह्य तद्विषं मर्दयन् ततः ।।
परीक्षणार्थं चान्येषां देवादीनां च पार्वति । मम हस्ते ददौ किञ्चित् भक्षस्वेति समादृतः[मारुतः]।।
नामत्रयेण सहितं मन्त्रानुग्रहमादिकृत् । तद्विषप्राशनादेव महादाहोऽभ्यवर्धत ।।
जिह्वाग्रधारणादेव मम प्राणा हि निर्गताः । कृपया पवमानस्य तथा नामत्रयेण च ।।
अच्युतानन्तगोविन्दनाममाहात्म्यतश्शुभे । जीवितोऽस्मि तदा काले विष्णोर्नामत्रयादहो ।।
पश्चात्तु तद्विषं सर्वं एकीकृत्य स पात्रके । अनायासात्पपौ वायुः सर्वेषां रक्षणाय च ।।
हरेस्सम्प्रीतये देवि ब्रह्मणो वचनात्तथा । ऋचो ब्रुवन्ति वेदस्य केशीति ब्रह्मवादिनः ।।
इत्थं वायोर्महत्त्वं हि विष्णुभक्तस्य पार्वति ।। इति पद्मपुराणे उत्तरकाण्डे [२३२अ.१०-२१]
अनेन 'अत्यल्पपानाच्च बभूव शूला शिवस्य' इत्यन्तं विवृतं भवति ।।१३।।

**कलेः स्वरूपं तददतीव दुःसहं वराद् विधातुः सकलैश्च दुःस्पृशम् ।**
**करे विमथ्यास्तबलं विधाय ददौ स किञ्चिद् गिरिशाय वायुः ।।१४।।**

**वादिराजीया–** कलिनाऽभिमन्यमानत्वात् कलेः स्वरूपमित्युक्तम् ।।१४-१५।।

**वरदराजीया—** कलेः स्वरूपं तच्छरीरभूतम् । अत एव विधातुर्वराच्चातीव दुःसहं सोढुमशक्यम् । सकलैः लोकैः दुःस्पृशं स्प्रष्टुमशक्यं तद्विषं स वायुः किंचित् तन्मध्येऽल्पमेव गृहीत्वा करेण विमथ्य मर्दयित्वा अस्तबलं गतवीर्यं विधाय गिरीशाय रुद्राय ददौ ॥१४॥

**अनन्तभट्टीया—** कलेः स्वरूपं तदभिमानी कलिरित्यर्थः । वरात् कलये दत्तादिति शेषः । अस्तबलं नष्टदर्पम् ॥१४॥

**जनार्दनीया—** तद्विषं कलेः स्वरूपं स्वयमेव । कलिः विषरूपेणोत्पन्न इत्यर्थः । अत एव विधातुर्वरात् कलिना लब्धवरबलात्, तद्विषं अतीवदुःसहं सोढुमशक्यं, दुःस्पृशं संस्प्रष्टुमशक्यम् । 'तत्' इत्युभयत्रानुषङ्गः । स वायुः स्वकरे विमथ्य मर्दयित्वा, अस्तवलं गतसारं विषम् ॥१४॥

**भारतश्री—** किञ्चित् गिरिशाय ददौ विषस्य इतरदुस्सहत्वज्ञापनार्थमिति ज्ञेयम् ॥१४॥

**चट्टि—** तद्विषं कलेस्स्वरूपम् । स्वयमेव कलिर्विषरूपेणोत्पन्न इत्यर्थः । अत एव विधातुर्वरात् कलिना लब्धब्रह्मवरबलात् तद्विषं सकलैरतीव दुस्सहं सोढुमशक्यं दुःस्पृशं स्प्रष्टुमशक्यं च । सः वायुस्तन्मध्ये किञ्चिदादाय स्वकरे विमथ्य मर्दयित्वा अस्तबलं गतसारं विधाय गिरिशाय रुद्राय ददौ ॥

**स तत् [१]पिबत् [२]कण्ठगतेन तेन निपातितो मूर्च्छित आशु रुद्रः ।**
**हरेः करस्पर्शबलात् स सञ्ज्ञामवाप नीलोऽस्य गलस्तदाऽसीत् [३] ॥१५॥**

**वेदाङ्गतीर्थीया—** तत्पिबत्कण्ठगतेन तद् विषं पिबन्तं कण्ठं गतेन विषेण । पिबदिति शत्रन्तं भिन्नं वा पदम् । नुमभावः छान्दसः ॥१५॥

**वरदराजीया—** स गिरीशः तद्विषं पिबन् कण्ठगतेन लग्नेन तेन विषेणाशु भुवि मूर्च्छितो मूर्च्छां प्राप्तो निपातितोऽभूत् । स रुद्रो हरेः नारायणस्य करस्पर्शस्य हस्तस्पर्शस्य बलात् सञ्ज्ञां ज्ञानमवाप । उत्थितोऽभूदित्यर्थः । तदास्य रुद्रस्य गलः कण्ठो नील आसीत् । अत एव नीलकण्ठ इति प्रसिद्धोऽभूदिति भावः ॥१५॥

---

१. 'तत्पिबन्' इति जनार्दनीयपाठः ।

२. विष्णुधर्मे– अच्युतानन्तगोविन्दमन्त्रमानुष्टुभं परम् । ओं नमः सम्पुटीकृत्य जपन् विषधरो हरः ॥ यत्र जीर्णं च गरलं कण्ठे स्तब्धं कपालिनः । अन्तरात्मधृतस्तस्य हृदयं गरुडध्वजः ॥

३. रुद्रस्य नीलकण्ठत्वे कारणान्तरमप्युक्तं मोक्षधर्मपर्वणि [३५१.२६]। तथाहि- त्रिपुरवधार्थं दीक्षामुपगतस्य रुद्रस्य उशनसा जटाः शिरसः उत्कृत्य अग्नौ प्रयुक्ताः ततः प्रादुर्भूता भुजगास्तैरस्य भुजगैः पीड्यमानः कण्ठो नीलतामुपगतः । पूर्वे च मन्वन्तरे स्वायंभुवे नारायणहस्तबन्धग्रहणात् नीलकण्ठत्वमुपनीतः ॥ 'ततः प्रसभमाप्लुत्य रुद्रं विष्णुः सनातनम् । कण्ठे जग्राह बलवान् नीलकण्ठस्ततोऽभवत् ॥' हरिवंशे भविष्यत्पर्वणि ३२.४७ ।

**जनार्दनीया–** तद्विषं पिबतीति तत्पिबन् रुद्रः । कण्ठगतेन कण्ठे विद्यमानेन विषेण । अल्पत्वात् कण्ठे लग्नं सत् तत्रैव स्थितं उदरं न प्राप्तमिति भावः । तेन विषेण निपातितः सन् आशु मूर्च्छितो बभूवेति शेषः । 'पिबत्' इति वा पाठः । छान्दसत्वात् नुमाभावः । स रुद्रः । तदा विषपानकाले अस्य रुद्रस्य गलः कण्ठः नीलः नीलवर्णः । अत एव नीलकण्ठनामेत्यर्थः ॥१५॥

**भारतश्री–** हरेः करस्पर्शवलात् वायोः करस्पर्शबलात् । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवह्निषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' इत्यभिधानम् ॥१५॥

**चट्टि–** सः गिरिशः तद्विषं पिबन् कण्ठगतेन गललग्नेन विषेणाशु मूर्च्छितः सन् निपातितोऽभूत् । सः रुद्रः हरेः श्रीनारायणस्य करस्पर्शबलात् हस्तस्पर्शबलात् सञ्ज्ञां ज्ञानमवाप । तदास्य रुद्रस्य गलः कण्ठः नीलवर्ण आसीत् । अत एव नीलकण्ठ इति प्रसिद्धोऽभूदिति भावः ॥१५॥

**अथ त्वदाज्ञां पुरतो निधाय निधाय पात्रे तपनीयरूपे ।**
**स्वयं त्वनिर्मथ्य बलोपपन्नं [1]पपौ स वायुस्तदुतास्य जीर्णम् ॥१६॥**

**वेदाङ्गतीर्थीया–** तदुत तस्मिन् काले तच्च अस्य जीर्णं उत जीर्णमेव ॥१६॥

**वादिराजीया–** स्वयं त्वनिर्मथ्येत्यत्र तुशब्देन वायोः शक्तिविशेषोऽस्तीति सूचितम् । तथा च श्रुतिः 'वायुरस्मा उपामन्थत् पिनष्टि स्म कुनन्नमा । केशी विषस्य पात्रेण यद्रुद्रेणापिवत्सह ॥' इति [ऋ.१०.१३६.७]। अस्याः श्रुतेरयमर्थः । केशी प्रशस्तकेशवान् सुखरूपनारायणाख्येशवांश्च । कुनन्नमा कुत्सितकल्यादीन् विशेषेण नमयत्यधः पातयतीति अन्धे तमसि मज्जयति इति कुनन्नमा वायुः । विषस्य पात्रेण सुवर्णपात्रेण धृतं यद्विषं रुद्रेण सह अपिवत् । तद्विषमस्मै रुद्रायोपामन्थत् उपपन्नं पानार्हं यथा भवति तथाऽमथ्नात् । पिनष्टि स्म पिष्टमकरोच्च । 'अस्मै उपामन्थत्' इत्युक्त्या स्वस्मै मथनं नेति सिद्धम् ॥

पात्र एव मथनं चेत् स्वस्मा अपि मथनं स्यात् । अतः पात्रादन्यत्रैव मथनं सिद्धम् । तच्च योग्यतया कर एवेति भावेनाह– **करे विमथ्येति** ॥ पानयोग्यं यथा भवति तथेत्युक्त्या विषस्यात्युग्रता निरस्तेति गम्यत इति भावेनाहुः– **अस्तबलं विधायेति** ॥ 'अस्मा उपामन्थत्' इत्युक्त्या न तु स्वेन पीयमानमप्यमथ्नादिति लभ्यते । अत एव 'स्वयं त्वनिर्मथ्य' इत्याहुः । रुद्रेण सह वायुरपिबदित्युक्त्या वायोरेव मुख्यपात्रत्वं रुद्रस्य त्वमुख्यतः पात्रत्वं च लभ्यते । सह योगेऽप्राधान्यस्य शिष्येण सहागतो

---

१. 'अमृतोत्पादने पुनर्भक्षणतां वायुसमीकृतस्य विषस्योपगतश्च तद्भक्षणमिति तन्निमित्तमेव चन्द्रकला ब्रह्मणा निहिता' इति मोक्षधर्मपर्वणि ३५१.२७ ।

गुरुरित्यादौ दर्शनात् । अनुशासनाच्च । अत एव 'किञ्चित् गिरिशाय ददौ' इति आहुः । विषपानेनापि रुद्रस्य रोदनमासीदिति सूचनाय रुद्रपदम् । 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं' इति हि श्रुतिः । एतदेवाभिप्रेत्याहुः 'स तत्पिबन् कण्ठगतेन तेन निपातितो मूर्च्छित आशु रुद्रः' इति । सुखरूपनारायणस्य स्वहृदि धारणात् कुनन्नमत्वाच्च वायोस्तु विषपानेन दुःखलेशोऽपि नाभूदिति सूचनाय 'केशी कुनन्नमा' इति चोक्तम् । तदा गमनादिसामर्थ्यस्य नेषदपि हानिरिति सूचनाय वायुरित्यक्तम् । 'वय गतौ' इति धातुः । एतदप्याहुः– **तदुतास्य जीर्णमिति** ।। गोप्यत्वादयमर्थः न तु पुराणादौ स्पष्टमुदितः । सर्वज्ञत्वाद्देवाः श्रुत्युक्तं इमं सर्वमेकीकृत्य अस्तुवन्निति ग्रन्थकारस्य भावः ।।१६।।

**वरदराजीया–** अथानन्तरं वायुः त्वदाज्ञां इदं पिबेति त्वदीयामाज्ञां पुरतो निधाय पुरस्कृत्य तपनीयरूपे स्वर्णमयपात्रे निधाय अनिर्मथ्यानवलोक्यैव बलोपपन्नं वीर्यवदेव विषं तु स्वयमेव पपौ अपिबत् । तद्विषमस्य वायोः जीर्णमेव जातमित्यर्थः ।।१६।।

**अनन्तभट्टीया–** तपनीयरूपे सुवर्णात्मके । बलोपपन्नं तदनिर्मथ्य । अस्य वायोः ।।१६।।

**जनार्दनीया–** पुरतो निधाय पुरस्कृत्य, तपनीयरूपे सुवर्णात्मके । पात्रे भाजने निधाय, करस्थं विषमिति शेषः । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम् । तपनीयं शातकुम्भं.....।।' इत्यमरः । स्वयं अनिर्मथ्य अमर्दयित्वा बलोपपन्नं सारयुक्तं तद्विषं पपौ । उत पानानन्तरं अस्य वायोः जीर्णमभूदिति भावः ।।१६।।

**ताम्रपर्णीया–** पपौ स वायुरिति तच्छब्देन 'वायुरस्मा उपमन्थत् पिनष्टि स्म कुनन्नमा । केशी विषस्य पात्रेण यद्रुद्रेणापिबत् सह' [ऋ .१०.१३६.७] इति श्रुतिप्रसिद्धं सूचयति । केशी क आनन्दरूपो हरिः ईशो अस्यास्तीति केशी । कुनं कुत्सितकल्यादीन् विशेषेण नमयति अधः पातयतीति कुनन्नमा वायुः । विषस्य पात्रेण सुवर्णपात्रेण धृतं यद् विषं रुद्रेण सहापिबत् । न चैतावतोभयोः विषपाने साम्यमित्युच्यते । उपेति तद् विषं अस्मै रुद्राय उप उपपन्नं पानार्हं यथा भवति तथा अमन्थत् पिनष्टि पिष्टमकरोत् अस्तवलमकरोदिति ऋगर्थः ।।१६।।

**चट्टि–** अथानन्तरं स वायुस्त्वदाज्ञां पुरतो निधाय पुरस्कृत्य तपनीयरूपे सुवर्णात्मके पात्रे भाजने निधाय स्वर्णा 'स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम् । तपनीयं शातकुम्भम्' इत्यमरः । स्वयं अनिर्मथ्य मथनमकृत्वा बलोपपन्नं सारयुक्तं तद्विषं पपौ । उत पानानन्तरं अस्य वायोस्तद्विषं जीर्णमभूदिति शेषः । अत्र तुशब्देन वायोस्तादृशशक्तिविशेषः सूचितः । वायुरस्मा उपामन्थत् पिनष्टि स्मा कुनन्नमा । केशी विषस्य पात्रेण यद्रुद्रेणापिबत् सह । इति । श्रुत्यर्थः– केशी प्रशस्तकेशवान् सुखरूपनारायणाख्येशवांश्च। कुनन्नमा कुत्सितकल्यादीन् विशेषेण नमयति अधःपातयति इति कुनन्नमा वायुः विषस्य पात्रेण धृतं

यद्विषं रुद्रेण सहापिबत् । तद्विषमस्मै रुद्रायोपामन्थत् उपपन्नं पानार्हं यथा भवति तथा अमन्थत् । पिनष्टि स्म पिष्टमकरोदिति । 'अस्मै उपामन्थत्' इत्युक्त्या स्वस्य मथनं नेति लब्धम् ।।१६।।

**अत्यल्पपानाच्च बभूव शूला शिवस्य शीर्ष्ण्यस्य करावशिष्टम् ।**
**अभूत् कलिः सर्वजगत्सु पूर्णं पीत्वा विकारो न बभूव वायोः ।**
**कलेः शरीरादभवन् कुनागाः सवृश्चिकाः श्वापदयातुधानाः[1] ।।१७।।**

**व्यासतीर्थीया–** सर्वजगत्सु पूर्णं सर्वजगद्व्यापी । यातुधानाः राक्षसाः ।।१७-२१।।

**वेदाङ्गतीर्थीया–** अस्य रुद्रस्य करावशिष्टं विषं कलिरभूत् कलिदेहोऽभूत् । स च कलिः सर्वजगत्सु व्याप्त इति शेषः । वायोः पूर्णं पीत्वा विकारो न बभूव ।।१७-२९।।

**वादिराजीया–** अत्यल्पपानाच्चेत्यत्र अत्यल्पपानादपि शिवस्य शीर्ष्णि शूला बभूव । अत एव अभिषेकप्रियः शिवः चन्द्रशेखरश्चाभूत् । अस्य शिवस्य करावशिष्टं अत्यल्पपानादेव मूर्च्छितशिवस्य करे उर्वरितं विषं सर्वजगत्सु पूर्णं सत् कलिरभूत् । अभिमान्यभिमन्यमानयोः ऐक्यव्यपदेशात् कल्यभिमन्यमानमभूदित्यर्थः ।।१७-२०।।

**वरदराजीया–** शिवस्य च शीर्ष्णि अत्यल्पस्य वीर्यरहितस्य विषस्य पानात् शूला वेदना बभूव । वायोस्तु संपूर्णस्य तस्य पानेन किमपि न जातमिति भावः । अस्य शिवस्य करावशिष्टं विषं कलिदेहोऽभूत् । स च कलिः सर्वजगत्सु सर्वलोकेषु प्रचरतीति शेषः । अत्यल्पस्य विषस्यैवं सामर्थ्यम् । पूर्णं विषं पीत्वा स्थितस्य वायोः कोऽपि विकारो न बभूवेत्यर्थः । कलेः शरीरादवशिष्टं तस्माद्विषात् कुनागाः कुत्सितसर्पाः वृश्चिकैः सह वर्तमाना अभवन् । तथा श्वापदा वृकसालावृकादयो यातुधाना राक्षसाश्चाभूवन्नित्यर्थः ।।१७।।

**अनन्तभट्टीया–** अस्य शिवस्य करावशिष्टं कलिः कलिस्वरूपं विषं सर्वं जगत्सु पूर्णमभूत् । पूर्णमित्येतत् पीत्वेत्येतेनापि सम्बध्यते । पूर्णं तत्पीत्वा । कलेश्शरीरात् कलिदेहात्मकविषात् श्वापदाः वृकादयः यातुधानाः राक्षसाः ।।१७।।

**जनार्दनीया–** अत्यल्पमित्यनेन अल्पमपि निर्वीर्यमित्यर्थः । तादृशविषपानात् शीर्ष्णि शिरसि शूला व्यथा । रुद्रः वायुदत्तनिर्वीर्याल्पविषमपि पूर्णं न पपावित्याह– **अस्येति** ।। अस्य रुद्रस्य

---

१. 'प्रस्कन्नं पिबतः पाणेः यत् किञ्चित् जगृहुः स्म तत् । वृश्चिकाहिविषौषध्यो दन्दशूकाश्च ये परे ।।' इति भागवते ८.७.४६ । 'पास्यतस्तस्य पाणेर्ये पतिता भुवि बिन्दवः । तान्नागा वृश्चिकाद्याश्च जगृहुः काश्चनौषधीः ।।' इति स्कान्दे । २वै.वा.मा.११.४० ।

करावशिष्टं उर्वरितं गलितं कलिः कल्यात्मकविषं सर्वजगत्सु पूर्णं व्याप्तमभूत् । अत्यल्पेत्यादिना विषसामर्थ्यमुक्त्वा वायुसामर्थ्यं दर्शयति– **पूर्णमिति** ।। पूर्णं अशेषं विषं पीत्वा पीतं वायुनेति शेषः । वायोर्विकारो न बभूव । यद्वा पूर्णं पीत्वा वर्तमानस्य वायोः विषविकारो न बभूव । सर्वजगत्सु विषात्मकस्य कलेः पूर्णत्वं स्पष्टयति– **कलेरिति** ।। कलेः शरीरात् कलिस्वरूपात् विषात् श्वापदा वृकव्याघ्रादयः यातुधानाः राक्षसाः ।।१७।।

**ताम्रपर्णीया–** अस्य रुद्रस्य करावशिष्टं विषं सर्वजगत्सु कलिरभूत् । सर्वजगत्सु बहुरूपेण विद्यमानस्य कलेः शरीरमभूदिति यावत् । पूर्णं समग्रं विषं पीत्वापि वायोः विकारो न बभूवेत्यर्थः ।।१७-२०।।

**अतिविशद–** पीत्वा विकारो न बभूव वायोरित्यत्र पीत्वा स्थितस्येत्यध्याहारः । अन्यथा त्वाप्रत्ययासङ्गतेः ।।१७।।

**चट्टि–** अत्यल्पपानात् निर्वीर्याल्पविषपानादपि शिवस्य शीर्ष्णि शूला व्यथा बभूव । अत एवाभिषेकप्रियश्चन्द्रशेखरश्चाभूत् । अस्य शिवस्य करेऽवशिष्टं उर्वरितं कलिः कल्यात्मकं विषं सर्वजगत्सु पूर्णं व्याप्तमभूत् । पूर्णं पीत्वा वर्तमानस्यापि वायोः विकारो न बभूव । पूर्णमित्यस्यात्राप्यनुषङ्गः । विषात्मकस्य कलेः सर्वजगत्सु पूर्णत्वं स्पष्टयति– **कलेरिति** ।। कलेः शरीरात् कलिस्वरूपात् विषात् वृश्चिकैः सहिताः कुनागाः कुत्सितसर्पाः अभवन् । श्वापदाः वृकव्याघ्रादयः यातुधाना राक्षसाश्च अभवन् ।

**अथ त्वयाऽब्धौ तु विमथ्यमाने सुराऽभवत् तामसुरा अवापुः ।**
**'उच्चैःश्रवा[१] नाम तुरङ्गमोऽथ करी तथैरावतनामधेयः ।।१८।।**

---

१. अत्र क्षीरोदधौ ये उत्पत्स्यमानाः पदार्थाः ते सृष्ट्यादावेव समभूवन् । अथापि अयोग्यविष्णुद्वेषिभिः असाधुवृत्तिभिः परिगृहीतत्वात् स्वात्मानं अशुचि मन्यमानाः रूपान्तरेण क्षीरोदधेरुत्पन्नाः । तथाहि स्कान्दे १. माहेश्वरखण्डे [९.१९-२४] 'ऐरावतो महानागः तथैवोच्चैःश्रवा हयः । एवमादीनि रत्नानि अनेकानि बहून्यपि ।। नीतानि सहसा दैत्यैः लोभादसाधुवृत्तिभिः । पुण्यभाञ्जि च तान्येव पतितानि च सागरे ।। तदा स विस्मयाविष्टो बलिराह गुरुं प्रति । देवान्निर्जित्य चास्माभिः आनीतानि बहूनि च ।। रत्नानि तु समुद्रेऽथ पतितानि तदद्भुतम् । बलेस्तद्वचनं श्रुत्वा उशना प्रत्युवाच तम् ।। अश्वमेधशतेनैव सुरराज्यं भविष्यति । दीक्षितस्य न सन्देहः तस्माद्भोक्ता स एव च ।। अश्वमेधं विना किञ्चित् स्वर्गं भोक्तुं न पार्यते । गुरोर्वचनमाज्ञाय तूष्णीं भूतो बलिस्ततः ।। बभूव देवैः सार्द्धं च यथोचितमकारयत् ।।'

वायुपुराणे. ६९.५३-५८– गणा अप्सरसां ख्याताः पुण्यास्ते वै चतुर्दश । [आहूताः शोभयन्तश्च गणा ह्येते चतुर्दश ।। ब्रह्मणो मानसा कन्या शोभयन्त्योः मनोः सुताः । वेगवन्तस्त्वरिष्टायाः ऊर्जायाश्चाग्निसम्भवाः ।। आयुष्मत्यश्च सूर्यस्य रश्मिजाताः सुभास्वराः । गर्भस्तेजश्च सोमस्य ज्ञेयास्ते कुरवः शुभाः ।। यज्ञोत्पन्नाः शुभा नामा ऋक्सामान्यास्तु वह्नयः।] वारिजा ह्यमृतोत्पन्नाः अमृता नामतः स्मृताः ।। वायूत्पन्ना सुदा नाम भूमिजाता भवास्तु....

**वरदराजीया–** अथ विषोत्पत्त्यनन्तरमपि त्वयाब्धौ क्षीराब्धौ विमथ्यमाने सति सुरा अभवत् । तां सुरां असुरा अवापुः गृहीतवन्तः । अथानन्तरं उच्चैःश्रवा नाम प्रसिद्धस्तुरङ्गमः अश्वो बभूवेत्यर्थः । ऐरावतनामधेयः करी गजोऽपि बभूव ।।१८।।

**अनन्तभट्टीया–** सुरा मद्यादिः ।।१८।।

**जनार्दनीया–** अथ विषोत्पत्त्यनन्तरं सुरा मद्यम् । तां सुराम् । उच्चैःश्रवा इति नाम प्रसिद्धः । तुरङ्गमः इन्द्रस्य अश्वः । ऐरावतनामधेयः करी गजः ।।१८।।

**अतिविशद–** करी तथैरावतनामधेयः ।।१८।।

**चट्टि–** अथ विषोत्पत्त्यनन्तरं त्वयाऽब्धौ विमथ्यमाने सति सुरा मदिरा अभवत् । तां सुरामसुरा अवापुः गृहीतवन्तः । उच्चैःश्रवा इति नाम प्रसिद्धः तुरङ्गः इन्द्रस्याश्वोऽभूत् । तथा ऐरावतनामधेयः गजः करी अभवत् ।।१८।।

**अन्ये [1]च दिक्पालगजा बभूवुर्वरं तथैवाप्सरसां[2] सहस्रम् ।**
**तथाऽऽयुधान्याभरणानि[3] चैव दिवौकसां [4]पारिजातस्तरुश्च ।।१९।।**

---

...वै । विद्युतश्च रुचो नाम मृत्योः कन्याश्च भैरवाः ।। शोभयन्त्यश्च कामस्य गणाः प्रोक्ता चतुर्दश ।। क्वचित् कोशेषु पाठान्तरमपि दृश्यते । आहूताः शोभयन्त्यश्च वेगवत्यस्तथैव च । दुर्मयाश्च युवत्यश्च तथा भेकुरयः शुभाः।। वह्न्योत्यमृतास्वेदा भुवश्च रुचयस्तथा । भैरवाः शोभयन्त्यश्च गणा ह्येते चतुर्दश ।।

समुद्रमथनसमये जातपदार्थानां विषये १.**भागवते** ८.८.-कामधेनु, उच्चैःश्रवाः, ऐरावत, पारिजातः, अप्सरसः, रमा , वारुणी देवी, धन्वन्तरी । २.**अग्निपुराणे**- [३.९] वारुणी, पारिजात, कौस्तुभ, गावः, अप्सरसः, रमा, धन्वन्तरि । ३.**महाभारते**- चन्द्रः, रमा, सुरा, उच्चैःश्रवाः, कौस्तुभ, धन्वन्तरि, ऐरावत, ४.**रामायणे**- धन्वन्तरि, [ज्येष्ठा, पारिजात], अप्सरसः [६० कोटि], असङ्ख्याः तासां परिचारिकाः, वारुणी, उच्चैःश्रवस्, कौस्तुभं, [चन्द्र, रमा] अत्र वारुणीं देवाः जगृहुः इति रामायणे श्रूयते । असुराः जगृहुः इति भारते निरूप्यते । एवं विरोधे रामायणव्याख्याशिरोमणिकारस्तु भागवतस्य हरेरनुमते स्थिता असुराः तां वारुणीं कन्यां न जगृहुः । सुरा एव जगृहुः इत्यर्थः इति व्याचक्षते ।

१. 'चशब्देन दिक्पालगजातिरिक्तगजा अपि ग्राह्याः । तथाहि स्कान्दे [१माहे.११.५५] 'तथैव गजरत्नञ्च चतुःषष्ट्या समन्वितम् । गजानां पाण्डुराणां च चतुर्दन्तं मदान्वितम् ।।' इति । वक्ष्यते च आचार्यचरणैरपि 'चतुर्दन्तान् षट्सहस्रान् करीन्द्रान् पयोब्धिजान् प्राहिणोत्' इति ।

२. 'अप्सु निर्मथनादेव रसाद् तस्मात् वरस्त्रियः । उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन् ।। इति अप्सरोनामनिर्वचनं रामायणे १.४५.३३ । 'रूपौदार्यगुणोपेतास्ततश्चाप्सरसां गणाः । षष्टिकोट्यस्तदा जाताः सामान्या देवदानवैः ।।

...सर्वास्ता कृतपूर्वास्तु सामान्याः पुण्यकर्मणा ।।' इति पाद्मे १सृ.४.५०-५१ । 'षष्टिः कोट्योऽभवत् तासां अप्सराणां सुवर्चसाम् । असङ्ख्येयास्तु काकुत्स्थ यास्तासां परिचारिकाः ।। न ताः स्म प्रतिगृह्णन्ति सर्वे ते देवदानवाः । अप्रतिग्रहणादेव ता वै साधारणा स्मृताः ।।' इति रामायणे १.४५.३४-३५ । पाद्मे रामायणे च षष्टिकोटीनां अप्सरसां उत्पत्तिरुच्यते । षष्टिकोट्यप्सरस्सु सहस्राणां प्राधान्यविवक्षया आचार्यैः 'वरं सहस्रम्' इत्युच्यते इति भाति ।

३. दिवौकसां आयुधानि आभरणानि इत्यन्वयः । 'छत्रं जग्राह वरुणः कुण्डले च शचीपतिः' इति मात्स्ये २५१.४ । आसीदथ धनुः शार्ङ्गं सर्वशस्त्राधिदैवतम् । वाद्याधिदैवतं शङ्खः पाञ्चजन्यस्ततोऽभवत् ।।' इति [स्कं.२वै.वा.मा. १२.१४] स्कान्दे अप्सरसां गुणविशेषाः उक्ताः- एता वारविलासिन्यो यज्ञभाजां प्रियङ्कराः । गीतज्ञा नृत्यकुशला वाद्यविद्याविचक्षणाः ।। कामकेलिकलाभिज्ञा द्यूतविद्याविशारदाः । रसज्ञा भाववेदिन्यः चतुराश्चोचितोक्तिषु ।। नानादेशविशेषज्ञा नानाभाषासु कोविदाः । सङ्केतोदन्तनिपुणा नैकाः स्वैरचरा मुदा ।। लीलानर्मसु साभिज्ञाः सुप्रलापेषु पण्डिताः । यूनां मनांसि सततं स्वैर्हावै रमयन्त्यमूः ।। निर्मथ्यमानात् क्षीरोदात् पूर्वमप्सरसस्त्वमूः । निःसृतास्त्रिजगज्जेतुः मोहनास्त्रं मनोभुवः ।। उर्वशी मेनका रम्भा चन्द्रलेखा तिलोत्तमा । वपुष्मती कान्तिमती लीलावत्युत्पलावती ।। अलम्बुषा गुणवती स्थूलकेशी कलावती । कलानिधिः गुणनिधिः कर्पूरतिलकोर्वरा ।। अनङ्गलतिका चापि तथा मदनमोहिनी । चकोराक्षी चन्द्रकला तथा मुनिमनोहरा ।। ग्रायद्रावा तपोद्वेष्ट्री चारुनासा सुकर्णिका । दारुसञ्जीविनी सुश्रीः क्रतुशुल्का शुभानना ।। तपःशुल्का तीर्थशुल्का दानशुल्का हिमावती । पञ्चाश्वमेधिका चैव राजसूयार्थिनी तथा ।। अष्टाग्निहोमिका तद्वद्वाजपेयशतोद्भवा । इत्याद्यप्सरसां श्रेष्ठं सहस्रं षष्टिसम्मितम् ।। इति ४.काशीखण्ड.९अ.२.१२

४. हरिवंशे विष्णुपर्वणि ६७ । पुरादित्या महातेजास्तोषितः किल कश्यपः । वरेण छन्दयामास मारीचस्तपसो निधिः ।। सोवाच सुभगा येन भवेयं मुनिसत्तम । स्वलंकृता कामतश्च सर्वैरेव विभूषणैः ।। ईप्सितं गीतनृत्यं च भवेन्मम तपोधन । कुमारी नित्यदा चैव भवेयं तपसो निधे ।। विरजा शोकरहिता भवेयमिति नित्यदा । पतिभक्तिमती चैव धर्मशीला तथैव च ।। पारिजाते ततोऽस्राक्षीत् अदित्याः प्रियकाम्यया । सर्वकामप्रदैः पुष्पैरावृतं नित्यगन्धदैः ।। त्रिशाखं सर्वदा दृश्यं सर्वभूतमनोहरम् । सर्वपुष्पाणि दृश्यन्ते तस्मिन्नेव महाद्रुमे ।। ईदृशान्यपि पुष्पाणि बिभर्त्येकोऽपि रूपिणी । बहुरूपाणि चाप्यन्या पद्मानि च ततोऽपरा ।। मन्दारादपि वृक्षाच्च सारमुद्धृत्य कश्यपः । तस्मादेषः तरुश्रेष्ठः सर्वेषां श्रेष्ठतां गतः ।।६५।। ... परि जातो विष्णुपद्याः पारिजातेतिशब्दितः । मन्दारपुष्पैर्युक्तो मन्दारस्तेन कथ्यते ।।७०।। कोऽप्ययं दारुरित्याहुरजानन्तो यतो जनाः । कोविदार इति ख्यातस्ततः स सुमहातरुः ।। मन्दारः कोविदारश्च पारिजातश्च नामभिः । स वृक्षो ज्ञायते दिव्यो यस्यैतत्कुसुमोत्तमम् ।।७२।।

'मनीषितेन स तरुः अल्पो भवति भारत । महांश्च वासुदेवस्य तदद्भुतमभून्महत् ।। कदाचित् द्वारकां सर्वां प्रच्छादयति भारत । कदाचित् हस्तधार्यस्तु भवत्यङ्गुष्ठसन्निभः ।। ननन्द सत्या कौरव्य देवी प्राप्य मनोरथम् ।।' इति हरिवंश.२.७५.६५-६७

'वृक्षोत्तमं पश्यतां वै वृद्धानामगमज्जरा । ये त्वन्धचक्षुषः सर्वे तेऽभवन् दिव्यचक्षुषः ।। विरोगा रोगिणश्चासन् घ्रात्वा गन्धं वनस्पतेः ।।' इति हरिवंशे.२.७५.५५-५६ ।

**वरदराजीया–** अन्ये दिक्पालानां गजाः कुमुदाद्या बभूवुः । तथैव तद्वदेव वरं श्रेष्ठं अप्सरसां अप्सरस्त्रीणां सहस्रं बभूवेत्यर्थः । तथा दिवौकसां देवानां आयुधानि च बभूवुः । पारिजातः तन्नामतरुः वृक्षश्च बभूव ।।१९।।

**अनन्तभट्टीया–** गजा बभूवुः । रूपान्तरेण बभूवुरिति द्रष्टव्यम् ।।१९।।

**जनार्दनीया–** अन्ये ऐरावतादन्ये दिक्पालनां गजाः । वरं उत्तमं अप्सरसां उर्वश्याद्यप्सरःस्त्रीणां सहस्रम् । बहिरित्यर्थः । अभूदिति शेषः । दिवौकसां देवानाम् । पारिजाताख्यः तरुः वृक्षः ।।१९।।

**भावविवृतिः–** अन्ये च दिक्पालगजा बभूवुरित्यत्र दिशः पालयन्तीति दिक्पालाः ते च ते गजाश्च ते तथा । ऐरावतादन्ये ये ते गजाः तेभ्योऽन्ये सुप्रतीकादिषट्सहस्रसङ्ख्याकाः गजाश्च जाता इत्यर्थ । 'चतुर्दन्तान् षट्सहस्रान् करीन्द्रान् पयोब्धिजान् प्राहिणोत् द्वारवत्यै' इति । वरं तथैवाप्सरसां सहस्रं इत्यत्र वरं मुक्तियोग्यम् । 'तमार चासुराप्सरा बलिष्ठपुत्रकाम्यया' इति असुराणामपि अप्सरस्त्वकथनात् । 'कथमपि तपसैवाप्सरस्त्वं प्रयाता' इत्यलक्ष्म्या अपि अप्सरस्त्वं च । वरमिति विशेषः ।।१९-२१।।

**अतिविशद–** अन्ये च दिक्पालगजा बभूवुः इत्यत्रैवमक्षरार्थः । ऐरावतनामधेयः गजः । तथा अन्ये च दिक्पालगजा षट्सहस्राः चतुर्दन्ताः । 'चतुर्दन्तान् षट्सहस्रान् करीन्द्रान् पयोब्धिजान् प्राहिणोत् द्वारवत्यै' इति वक्ष्यमाणत्वात् । 'अन्ये च' इत्यत्रत्यः चशब्दः गजशब्देन सम्बध्यते । तत्तद्दिक्पालगजा बभूवुः ।।१९-२१।।

---

...दिव्यमभ्यर्चितं देवैः पारिजातं महाद्रुमम् । नित्यपुष्पधरं दिव्यं पुण्यगन्धमनुत्तमम् ।। यमासाद्य जनस्सर्वो जातिं स्मरति पौर्विकीम् ।।' इति हरिवंशे.२.६४.६६-६७ ।

'अम्लानमेतत्सततं पुष्पं भवति कामिनी । संवत्सरपरं कालं कालज्ञे गुणसंमते ।। ईप्सितानपि गन्धांश्च ददाति वदतां वरे । शीतोष्णे चेच्छिते देवि पुष्पमेतत् प्रयच्छति ।। स्रवत्यपि रसान् देवि मनसा काङ्क्षितान् वरान् । सेव्यमानं च सौभाग्यं ददाति वरवर्णिनी ।। स्रवत्यपि तथा गन्धानीप्सितान् प्रीतिवर्धनान् । यानि यानि च पुष्पाणि त्वं देव्यभिलषिस्यसि ।। कुसुमं वृक्षराजस्य तानि तानि प्रदास्यति । एतदेव भागदानं धर्मिष्ठे पुत्रदं तथा ।। मतिश्च नाशुभे धत्ते धार्यमाणं सदा शुभे । यद्यदिच्छसि वर्णश्च तत्सर्वं धारयिष्यति ।। स्वल्पं वा यदि वा स्थूलं छन्दतस्ते भविष्यति । अनिष्टगन्धहरणं तत्समं गन्धवर्धनम् ।। प्रदीपकर्म रात्रौ च करोति कमलेक्षणे । सन्तानकस्रजो मालां पुष्पवस्त्रादि वाऽच्युतम् ।। बुभुक्षा वा पिपासा वा ग्लानिर्वाप्यथवा जरा । देववद्धारयन्त्यास्ते स्वच्छन्देन भविष्यति ।। अनुगीतानि गीतानि दास्यत्यपि च चिन्तिते । सुवादित्रान् सुमधुरान् तथैव तव संमतान् ।। पूर्णे संवत्सरे देवि पुष्पमेतत्तवान्तिकात् । निर्वर्त्स्यते तरुवरं समये न प्रयास्यति ।।' इति हरिवंशे.२.६५.२०-३१। 'पारिणो अब्धेर्जातः । ततः स्वार्थे कन् [५.३.८७], पारि पारं गतं जातं जन्मास्य इति वा पारिजातः ।

**चट्टि–** अन्ये ऐरावतादन्ये दिक्पालनां गजा बभूवुः । तथैव तद्वदेव वरं श्रेष्ठं अप्सरसां उर्वश्याद्यप्सरसां सहस्रं अभूदिति शेषः । तथा दिवौकसां द्यौर्दिवं वा ओको एषां ते दिवौकसस्तेषां देवानाम् । आद्ये पृषोदरादित्वाद् साधुः । द्वितीये 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः । आयुधानि आभरणानि च बभूवुः । पारिजाताख्यतरुः वृक्षश्च ।।१९।।

**तथैव साक्षात् [१]सुरभिर्निशेशो बभूव तत् कौस्तुभं लोकसारम् ।**
**अथेन्दिरा[२] यद्यपि नित्यदेहा बभूव तत्रापरया स्वतन्वा ।।२०।।**

**वरदराजीया–** तथा साक्षादेव सुरभिर्मुख्या कामधेनुः तथा निशेशः चन्द्रश्च बभूव । तत्प्रसिद्धं लोके सारभूतं कौस्तुभं च बभूव । अथानन्तरं इन्दिरा यद्यपि नित्यदेहा तथापि तत्र क्षीराब्धौ अपरया द्वितीयया स्वतन्वा स्वरूपेण बभूव प्रादुर्बभूव ।।२०।।

**अनन्तभट्टीया–** निशेशोऽपि । कौस्तुभश्च रूपान्तरेणेति द्रष्टव्यम् । इन्दिरा बभूव प्रादुर्बभूव ।।

**जनार्दनीया–** साक्षात् सुरभिः मुख्यकामधेनुः । नन्दिन्यादिव्यावृत्त्यर्थं 'साक्षात्' इत्युक्तम् । निशायाः रात्र्याः ईशः चन्द्रः । लोकेषु सारं श्रेष्ठम् । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । तत् प्रसिद्धं कौस्तुभं कौस्तुभमणिः बभूवेति सर्वत्रानुषङ्गः । यद्यपि इन्दिरा नित्यदेहा नाशरहितस्वरूपा तथापि अपरया स्वतन्वा द्वितीयरूपेण । तत्र क्षीराब्धौ आविर्बभूवेत्यर्थः ।।२०।।

**चट्टि–** तथैव साक्षात् सुरभिः मुख्यकामधेनुः । नन्दिन्यादिव्यावृत्त्यर्थं साक्षादित्युक्तम् । निशेशः चन्द्रः । लोकेषु सारः श्रेष्ठमिति तत् प्रसिद्धं कौस्तुभं कौस्तुभमणिश्च । बभूवेति सर्वत्रानुषङ्गः । अथानन्तरं यद्यपि इन्दिरा नित्यदेहा नाशरहितस्वरूपा तथापि अपरया स्वतन्वा द्वितीयरूपेण तत्र क्षीराब्धौ आविर्बभूव ।।२०।।

**ततो भवान् दक्षिणबाहुना सुधाकमण्डलुं[३] कलशं चापरेण ।**
**प्रगृह्य तस्मान्निरगात् समुद्राद् धन्वन्तरिर्नाम हरिन्मणिद्युतिः ।।२१।।**

---

१. महाभारते उद्योगपर्वणि– १०६. इदं रसातलं नाम सप्तमं पृथिवीतलम् । यत्रास्ते सुरभिर्माता गवाममृतसम्भवा ।। क्षरन्ती सततं क्षीरं पृथिवीसारसम्भवम् । षण्णां रसानां सारेण रसमेकमनुत्तमम् ।। अमृतेनाभितृप्तस्य सारमुद्गिरतः पुरा । पितामहस्य वदनादुदतिष्ठदनिन्दिता ।। यस्या क्षीरस्य धारायाः निपतन्त्या महीतले । ह्रदः कृतः क्षीरनिधिः पवित्रं परमुच्यते ।।

२. 'प्रकृतिस्सा विनिर्दिष्टा पुरुषः पुरुषोत्तमः । तया वियुज्यते नासौ कदाचिदपि शत्रुहा ।।' इति विष्णुधर्मोत्तरपुराणे १खं.४१. २ ।

**वादिराजीया–** सुधाकमण्डलुं कलशं चापरेणेत्यत्र सुधाकमण्डलुं न तु सुधापूरितकमण्डलुम् । तथा सति दैत्यैस्तस्याप्यपहारप्रसङ्गात् । किन्तु जलपरिवेषणकमण्डलुमिति भावः । कलशं सुधापरिपूरितकलशम् । परिवेषणपात्रस्य सुधापात्रत्वे कलशस्य सुधापूर्णत्वं स्वत एव सिद्धमित्यतो न पृथगुक्तम् । सुधायाः भरः भारो यत्र तं 'सुधाभरं कलशम्' इति वक्ष्यति च । 'ज्ञानं सुधाकलशमेव च सन्दधानम्' इति तन्त्रसारे स्वयमेव ग्रन्थकारैरुक्तत्वाच्च ॥२१॥

**मधुसूदनीया–** ॥ धन्वन्तरिर्नामेति ॥ पुरुराजवंशेऽपि भिषग्धन्वन्तरिरवतीर्णः । अयं च धन्वन्तरिः [भिन्न] इति विशेषोऽत्र द्रष्टव्यः । तदुक्तम् । 'तस्य वंशे समुत्पन्नो देवो धन्वन्तरिस्तथा' इत्यादि हरिवंशे [१.२९.२६] ॥२१-४३॥

**वरदराजीया–** ततस्तदनन्तरं भवान् दक्षिणबाहुना दक्षिणहस्तेन सुधापूर्णं कमण्डलुं प्रगृह्य तथा अपरेण दक्षिणोत्तरेण हस्तेन कलशं च सुधापूर्णमेव गृह्य । हरिन्मणेः इन्द्रनीलस्य द्युतिरिव द्युतिः यस्य स तथा । धन्वन्तरिर्नाम प्रसिद्धः तस्मात् समुद्रात् क्षीराब्धेः सकाशात् निरगात् प्रादुर्बभूव ॥२१॥

**अनन्तभट्टीया–** अपरेण बाहुना...सुधाभरं सुधापूर्णम् ॥२१॥

**भावविवृतिः–** धन्वन्तरिर्नाम हरिन्मणिद्युतिः इत्यत्र 'चन्द्रौघकान्ति' इत्युक्त्या विरुद्धमतो अत्र राजकुले अवतीर्णस्यैव धन्वन्तरेर्मन्त्रध्येयत्वं इत्यङ्गीकारात् न विरोधः । तदुक्तं हरिवंशे[१.२९.९-२८] 'सुतस्तु दीर्घतपसो विद्वान् धन्वन्तरिस्मृतः । तपसोऽन्ते स महतो जातो वृद्धस्य धीमतः ॥ पुनर्धन्वन्तरिर्देवो मानुषेष्वभिजग्मिवान् । एतद्वेदितुमिच्छमि तत्वतो वद विस्तरात् ॥'

वैशम्पायनः–

धन्वन्तरेस्सम्भवोऽयं श्रूयतां भरतर्षभ । ... द्वितीये द्वापरे प्राप्ते सौनहोत्रिः स काशिराट् ॥
पुत्रकामस्तपस्तेपे धन्वी दीर्घतपस्तथा । प्रपद्ये देवतां तां तु या मे पुत्रं प्रदास्यति ॥
अब्जदेवं सुतार्थाय तपसाराधयन्नृपः । ततस्तुष्टस्स भगवानजः प्रोवाच तं नृपम् ॥
यदिच्छसि वरं सर्वं तत्ते दास्यामि सुव्रत ।

---

३. एकादश्यां पुरा जज्ञे वैशाख्याममृतं शुभम् । द्वादश्यां पालितं तच्च विष्णुना प्रभविष्णुना ॥ त्रयोदश्यां सुधां देवान् पाययामास वै हरिः । जघान च चतुर्दश्यां दैत्यान् देवविरोधिनः ॥ पूर्णिमायां सर्वदेवानां साम्राज्याप्तिर्बभूव ह ॥ [वि.माहात्म्यं २५.५-७] नहुषभ्राता क्षत्रवृद्धः । क्षत्रवृद्धसुतस्यासन् सुहोत्रस्यात्मजास्त्रयः। काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ शुनकः शौनको यस्य बह्वचप्रवरो मुनिः। काश्यस्य काशिस्तत्पुत्रः सुराष्ट्रो दीर्घतमःपिता।। धन्वन्तरिः दीर्घतमसः आयुर्वेदप्रवर्तकः । यज्ञभुक् वासुदेवांशः स्मृतमात्रार्तिनाशनः ॥ भा.९.१४.३९-४१.इति धन्वन्तरिरूपेण भगवान् विष्णुः चन्द्रवंशे पुनरवततार ॥ एवं ब्रह्माण्डपुराणेपि ।

नृपः–
भगवन् यदि तुष्टोऽसि पुत्रो मे ख्यातिमान् भव । तथेति समनुज्ञाय तत्रैवान्तरधीयत ।।
तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्ततः । काशिराजो महाराजः सर्वरोगप्रणाशनः ।।
आयुर्वेदं भरद्वाजात् प्राप्येह स भिषक् क्रियाम् । तेनाष्टधा पुनस्तस्य शिष्येभ्यः प्रत्यपादयत् ।।
धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः ।। इति सप्तविंशोध्याये ।
'धन्वन्तरिस्तु भगवान् स्वयमादिदेवो नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवाप रक्षो आयुश्च वेदमनुशास्त्यवतीर्य लोके ।।' इति द्वितीयस्कन्धे [७.२१] ।।

**जनार्दनीया–** ततः हरिन्मणिः इन्द्रनीलमणिः, तस्य द्युतिरिव द्युतिर्यस्य स तथा । धन्वतरिर्नाम धन्वन्तरिस्वरूपेण प्रसिद्धो भवान् अपरेण सव्यवाहुना । तस्मात् समुद्रात् । निरगात् आविर्बभूवेत्यर्थः ।।

**ताम्रपर्णीया–** ।। **सुधाकमण्डलुमिति** ।। 'ज्ञानं सुधाकलशमेव च सन्दधानं' इति तन्त्रसारे [४.९१] कमण्डलुस्थाने ज्ञानमुद्रोक्तिस्तु उपासकनां ज्ञानस्यापेक्षितत्वाद् रूपविशेषविवक्षयेति बोध्यम् ।। **हरिन्मणिद्युतिरिति** ।। इन्द्रनीलमणिवर्णः इत्यर्थः । 'श्यामलः तरुणः स्रग्वी' इति भागवते [८.८.३१] । न च 'चन्द्रौघकान्तिः' [४.९१] इति तन्त्रसारविरोधः । 'श्यामावदाते जगदेकसारे स्वनन्तचन्द्राधिक-कान्तिकान्ते' इतिवत् श्यामवर्णत्वेऽपि चन्द्रकान्तित्वोपपत्तेः ।।२१।।

**भावचन्द्रिका–** भागवते कलशस्योक्तेः विष्णुपुराणे कमण्डलस्योक्तेरुभयमपि सुधापूर्णमित्याह– **सुधेति** ।।२१-३५।।

**चट्टि–** ततस्तदनन्तरं हरिन्मणिः इन्द्रनीलमणिस्तस्य द्युतिरिव द्युतिर्यस्य स तथा । धन्वतरिर्नाम धन्वतरिस्वरूपेण प्रसिद्धो भगवान् दक्षिणवाहुना सुधाकमण्डलुम् । सुधापरिवेषणकमण्डलुं इति भावः । तथा अपरेण सव्यबाहुना कलशं सुधापरिपूरितकलशञ्च प्रगृह्य तस्मात् क्षीरसमुद्रात् निरगाद् आविर्बभूव । परिवेषणपात्रस्य सुधापात्रत्वे कलशस्य सुधापूर्णत्वं स्वत एव सिद्धमित्यतो न पृथगुक्तम् । सुधाया भरो भारो यत्र तम् । 'सुधाभरं कलशम्' इति वक्ष्यति च । 'ज्ञानं सुधाकलशमेव च सन्दधानं' इति तन्त्रसारे स्वयमेव ग्रन्थकारैरुक्तत्वाच्च ।।२१।।

**ततो भवद्धस्तगतं दितेः सुताः सुधाभरं कलशं [१]चापजह्रुः ।**
**मुक्तं त्वया शक्तिमताऽपि दैत्यान् सत्यच्युतान् कारयितुं वधाय ।।२२।।**

**व्यासतीर्थीया–** सत्यच्युतान् भाषाच्युतान् ।।२२-२५।।

---

१. 'तमालोक्यासुराः सर्वे कलशं चामृताभृतम् । लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन् ।।' इति भागवते ८.८.३४

**वादिराजीया–** सुधाभरं कलशं चेत्यत्र चशब्द एवार्थः न तु कमण्डलुमिति ।।२२।।

**वरदराजीया–** ततस्तदनन्तरं दितेः सुताः असुराः भवतः तव हस्ते स्थितं सुधाभरं अमृतेन पूर्णं कमण्डलुं कलशं चापजह्रुः । त्वया वधाय हन्तुं दैत्यान् असुरान् सत्यच्युतान् भाषाच्युतान् कारयितुं भवता त्वया शक्तिमता अपि मुक्तं अमृतं परित्यक्तमित्यर्थः । अपराधेन विना वधायोगात् तानपराधिनः कर्तुं त्वया तूष्णीं स्थितमिति भावः ।।२२।।

**अनन्तभट्टीया–** सत्यच्युतान् 'अब्धिमथनजं यथायोग्यं स्वीकुर्मः' इत्येवमुक्तभाषाच्युतान् । एतत्करणमपि किमर्थमित्य आह– **वधायेति** ।। हन्तुमित्यर्थः ।।२२।।

**जनार्दनीया–** सुधाभरं अमृतपूर्णम् । शक्तिरस्यास्तीति शक्तिमान् तेन । त्वया धन्वन्तरिणा 'तेषां सत्याच्चालनार्थं हरिर्धन्वन्तरिर्विभुः । समर्थोऽप्यसुराणां तु स्वहस्तादमुचत् सुधाम् ।।' इति ब्रह्माण्डे । [भा.ता.८.८.३५] मुक्तं कलशमपजह्रुरित्यन्वयः । किं कर्तुम् ? दैत्यान् वधाय वधं कर्तुमित्यर्थः । सत्यच्युतान् स्वोक्तवाक्योज्झितान् कारयितुं, पूर्वं मथनकाले यथायोग्यतया मथनजं स्वीकर्तव्यमित्युक्तं तदर्थं दैत्यैः स्वयोग्या सुरा लब्धा । अयोग्यामृतापहरणात् सत्यच्युतान् कारयितुमिति भावः ।।२२।।

**ताम्रपर्णीया–** सुधाभरं कलशम् । चशब्दात् कमण्डलुं चापजह्रुः । सत्यच्युतान् यथाविभागं अमृतं स्वीकार्यमिति भाषाच्युतान् ।।२२-२५।।

**अतिविशद–** मुक्तं त्वया शक्तिमतापि इत्यत्र सत्यच्युतान् कारयितुं वधाय इत्यत्रापि 'तेषां सत्याच्चालनार्थं हरिर्धन्वन्तरिः प्रभुः । समर्थोऽप्यसुराणां तु स्वहस्तादमुचत् सुधाम् ।।' इति ब्राह्मवचनम् ।।२२-३०।।

**चट्टि–** ततस्तदन्तरं दितेः सुताः दैत्याः भगवतस्तव हस्तगतं हस्ते स्थितं सुधाभरं अमृतपूर्णं कलशमेवापजह्रुः । अत्र चशब्दः एवार्थः । न तु कमण्डलुमिति । शक्तिरस्यास्तीति शक्तिमान् तेन त्वयापि दैत्यान् वधाय हन्तुं सत्यच्युतान् स्वोक्तवाक्यात् च्युतान् कारयितुं मुक्तं परित्यक्तं अमृतिमिति शेषः । पूर्वं मथनकाले यथायोग्यतया मथनजं वस्तु स्वीकर्तव्यमित्यर्थः । ततो दैत्यैः स्वयोग्या सुरा लब्धा । अयोग्यामृतापहरणात् सत्यच्युतान् कारयितुममृतभाजनं मुक्तमिति भावः ।।२२।।

**ततो भवाननुपममुत्तमं वपुर्बभूव दिव्यप्रमदात्मकं त्वरन् ।**
**श्यामं नितम्बार्पितरत्नमेखलं जाम्बूनदाभाम्बरभृत् सुमध्यमम् ।।२३।।**

**वादिराजीया–** विष्णोः विष्णुवपुषश्चाभेदसूचनाय भवाननुपममुत्तमं वपुर्बभूवेत्युक्तम् । अनुपममसदृशम् । नीचत्वेऽप्यसदृशत्वसम्भवात् उत्तममित्युक्तम् ॥२३-२५॥

**सत्याभिनवतीर्थीया–** तत्रैव ततो भवाननुपममुत्तमं इत्यस्ति । तस्यार्थः । ततः तदनन्तरं अनुपमं असदृशं उत्तमं दिव्यं प्रमदात्मकं यद्वपुः भवतो बभूव, तद्वपुः भवान् त्वरन् व्यक्तीचकारेति । एतेन भगवतः प्रमदात्मकवपुरूपस्य सर्वदा विद्यमानत्वात् 'भवान् प्रमदात्मकं वपुः बभूव' इति कथनमयुक्तमिति दूषणं प्रत्युक्तम् । यदीत्यादीनां शेषेण सर्वदा विद्यमानस्य प्रमदात्मकवपुषः व्यक्तीकरणमत्रोच्यते इत्यभ्युपगमात् ॥२३॥

**वरदराजीया–** ततस्तदनन्तरं उत्तममनूपमसदृशं दिव्यप्रमदात्मकं अलौकिकं वपुः रूपं त्वरन् वेगं कुर्वन् वहून् मोहयितुं नारायणीरूपं प्रकटितवानसीति भावः । कीदृशं वपुः ? श्यामं षोडशवार्षिकं नीलमेघश्यामं वा । नितम्बे जघनप्रदेशे अर्पिता बद्धा रत्नमयी मेखला येन तत् । जाम्बूनदाभं स्वर्णं वा पीतं अम्बरं वस्त्रं बिभर्तीति तत् । समीचीनं मध्यमं मध्यप्रदेशं यस्य तत् ॥२३॥

**अनन्तभट्टीया–** श्यामं यौवनमध्यस्थम् । [अष्टवर्षं च] ॥२३॥

**जनार्दनीया–** ततः भवान् त्वरन् तत्क्षण इत्यर्थः । अनुपमं असदृशं उत्तमं लक्ष्मीस्वरूपादुत्तममित्यर्थः। वपुः स्वरूपं बभूव । नारायणीस्वरूपवान् बभूवेति भावः । अत्यन्ताभेदेन सामानाधिकरण्यम् । कथम्भूतं वपुः ? प्रमदायाः योषितः आत्मा देहो यस्य तत्तथा । 'श्यामं यौवनमध्यस्थम्' 'श्यामा स्त्री मुग्धयौवना' इत्यभिधानम् । द्व्यष्टवर्षं वा नीलवर्णं वा । नितम्बे जघने अर्पिता स्थापिता रत्नानां मेखला काञ्ची येन तत्तथा । जाम्बूनदस्य आभेव आभा दीप्तिर्यस्य तच्च तदम्बरं पीतवसनं तद्बिभर्तीति तथा तादृशः । सु समीचीनमध्यमः कटिप्रदेशो यस्य तत्तथा । 'मध्यमः स्यात् स्वरे मध्ये कटिदेशे च मध्यजे' इति विश्वः ॥२३॥

**चट्टि–** ततो भवान् त्वरन् वेगं कुर्वन् अनुपममसदृशमुत्तमं लक्ष्मीस्वरूपादुत्तममित्यर्थः । दिव्यमलौकिकं प्रमदात्मकं स्त्र्यात्मकं वपुः स्वरूपं बभूव । नारायणीस्वरूपं प्रकटीकृतवानिति भावः । विष्णोर्विष्णुवपुषश्च अभेदसूचनाय भवाननुपमं उत्तमं वपुश्च बभूवेत्युक्तम् । कीदृशं वपुः । श्यामं षोडशवार्षिकं यौवनमध्यस्थम् । 'श्यामा स्त्री मुग्धयौव्वना' इत्यभिधानम् । नीलमेघश्यामं वा । नितम्बे जघने अर्पिता स्थापिता रत्नानां मेखला काञ्ची यस्य तत् । जाम्बूनदस्य सुवर्णस्य आभा इव आभा दीप्तिर्यस्य तत्, तच्च तदम्बरं पीतवसनं च तद्बिभर्तीति तथा तादृशम् । सु समीचीनं मध्यमं मध्यप्रदेशो यस्य तत्तथा ॥२३॥

**बृहन्नितम्बं[1] कलशोपमस्तनं सत्पुण्डरीकायतनेत्रमुज्ज्वलम् ।**
**समस्तसारं परिपूर्णसद्गुणं दृष्ट्वैव तत् सम्मुमुहुः सुरारयः ॥२४॥**

**वरदराजीया–** बृहद्विस्तीर्णं नितम्बं जघनं यस्य तत् । कलशोपमौ घटोपमौ स्तनौ यस्य तत् । सत्पुण्डरीकवत् निर्दुष्टपद्मवदायते नेत्रे यस्य तत् । उज्ज्वलं प्रकाशमानं, समस्तेषु पदार्थेषु सारमुत्तमं, परिपूर्णं दोषरहिता गुणा यस्य तत् । एतादृशं वपुः दृष्ट्वैव सुरारयो असुराः सम्मुमुहुः । सम्यक् मोहं प्राप्नुवन्तः ॥२४॥

**अनन्तभट्टीया–** उज्ज्वलं प्रकाशवत् । सारं श्रेष्ठं । परिपूर्णं सद्गुणं वपुर्बभूव । तद्वपुः । ते असुराः ॥

**जनार्दनीया–** बृहत् विस्तीर्णं नितम्बो स्त्रीकटिपश्चाद्भागः यस्य तत्तथा । कलशेन उपमौ सदृशौ कुचौ यस्य तत्तथा । सत्पुण्डरीकवत् कमलवत् आयते विस्तीर्णे नेत्रे यस्य तत्तथा । उज्ज्वलं दीप्यमानं समस्तेषु वस्तुषु सारं श्रेष्ठम् । परिपूर्णाः सद्गुणाः यस्य तत्तथा । सुरारयो दैत्याः तद्वपुः दृष्ट्वा सम्मुमुहुः सम्यक् मोहिताः बभूवुः ॥२४॥

**चट्टि–** बृहद्विस्तीर्णं नितम्बो यस्य तत्तथा । कलशेनोपमौ सदृशौ स्तनौ यस्य तत्तथा । सत्पुण्डरीकवत् निर्दुष्टपद्मवत् आयते विशाले नेत्रे यस्य तत्तथा । उज्ज्वलं प्रकाशमानम् । समस्तेषु वस्तुषु सारमुत्तमम् । परिपूर्णाः सन्तः दोषरहिताः गुणाः यस्य तत्तादृशं तद्वपुः दृष्ट्वैव सुरारयः दैत्याः सम्मुमुहुः सम्यग्मोहं प्राप्तवन्तः ॥२४॥

**[2]परस्परं तेऽमृतहेतुतोऽखिला विरुद्ध्यमानाः प्रददुः स्म ते करे ।**
**समं सुधायाः कलशं विभज्य निपाययास्मानिति वञ्चितास्त्वया ॥२५॥**

---

१. तां दृष्ट्वा चारुसर्वाङ्गीं मन्मथाविष्टचेतसः । प्रह्लादरहिताः सर्वे बभूवुर्दानवास्तदा । पादयोः पृथिवीं तस्या धृतिं देवीं च जङ्घयोः । जानुभ्यां च तथा क्षान्तिं कान्तिमूरुयुगे शुभे ॥ आयतिं नियतिं लक्ष्मीं वेलां तु जघने तथा । मध्ये वाहां सतीं पृष्ठे पार्श्वयोश्च सुधां मुखे ॥ रतिं प्रीतिं कुचयुगे कण्ठे वाणीं तथैव च । जयां च विजयां चैव करयोर्भुजयोस्तथा । शोभां प्रभां वक्षसि च श्रियं देवीं मनोरमाम् । अरुन्धतीं च चुबुके जिह्वायां च सरस्वतीम् । ज्योत्स्नां कपोलयोर्देवीं निद्रां नेत्रयुगे तथा । केशपाशे तथा रात्रिं दिशः श्रोत्रयुगे तथा । भद्रकालीं ललाटे च नासायां च तथा शचीम् । सर्वाङ्गसन्धिगा नद्यो लोमस्वथ वनस्पतिम् । पार्श्वयोः पर्वताश्चैव दैत्येशः सर्वदेवताः । दृष्टवान् स्त्रीतनुं तत्र प्रह्लादोऽरिकुलान्तकः । विश्वरूपधरां दृष्ट्वा प्रह्लादस्तां च योषितम् । विष्णुं मत्वा विशालाक्षीं ज्ञात्वा चैवामृतार्थिनीम् । कामार्तदैत्यानुमतः प्रह्लादो दैत्यसत्तमः । प्रददावमृतं तस्यै प्रणिपत्य प्रसाद्य च । ...भक्तोऽसि मे सदा वत्स सदैव विजितेन्द्रियः । तेन ते दर्शिता सौम्य प्रकृतिर्या परा मया । इति विष्णुधर्मोत्तरे [१.४२.१७-३१]

२. मिथः कलिरभूत् तेषां तदर्थे तर्षचेतसाम् । अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ॥ देवाः स्वभागमर्हन्ति ये

**वरदराजीया–** अखिलाः सर्वे ते दैत्याः अमृतहेतुतो अमृतार्थं परस्परं विरुध्यमाना मया ग्राह्यं मया ग्राह्यमिति स्पर्धमानास्ते ते तव करे सुधायाः कलशं ददुरिति सम्बन्धः । केनाभिप्रायेण अमृतं सममेव विभज्यास्मान् निपायय इत्यभिप्रायेण । यतः त्वया वञ्चिता विप्रलम्भिता इत्यर्थः ।।२५।।

**अनन्तभट्टीया–** अस्मान् देवासुरान् ।।२५।।

**जनार्दनीया–** ते असुराः समं यथा भवति तथा विभज्य विभागं कृत्वा, अमृतमिति शेषः । अस्मान्निपाययेति सुधायाः अमृतस्य कलशं ते करे प्रददुः स्म । त्वया वञ्चिता दैत्या इति शेषः ।।

**चट्टि–** अखिलाः सर्वे ते दैत्याः अमृतहेतुतः अमृतार्थं परस्परं विरुद्ध्यमानाः मया ग्राह्यं मया ग्राह्यमिति स्पर्धमानाः सन्तः समं यथा भवति तथा विभज्य, अमृतमिति शेषः । अस्मान्निपाययेति सुधायाः कलशं ते करे प्रददुः स्म । यतस्त्वया वञ्चिताः विप्रलम्भिता इत्यर्थः ।।२५।।

**धर्मच्छलं पापजनेषु धर्म इति त्वया ज्ञापयितुं तदोक्तम् ।**
**[१]यद्यत् कृतं मे भवतां यदीह संवाद एवोद्विभजे सुधामिमाम् ।।२६।।**

**व्यासतीर्थीया–** यदि इत्थं मे यद्यत्कृतं यो यो व्यापारः स सर्वोऽपि भवतां संवाद एव तर्हि सुधां समुद्विभज इत्युक्तिद्योतकं किमर्थमुक्तमित्यत उक्तम्– **धर्मच्छलमिति** ।।२६-२९।।

**वादिराजीया–** धर्मच्छलं धर्मरक्षणाय छलं छद्म धर्मः ।।२६।।

**वरदराजीया–** तदा तस्मिन् समये पापजनेषु इष्टजनेषु धर्मच्छलं धर्मपरित्याग एव धर्म इति ज्ञापयितुं त्वया तान् प्रत्युक्तं किमिति मे मया यद्यत्कृतं कार्यम् । इह कार्ये । यदि भवतां संवादः प्रतिपत्तिः तर्हि इमां सुधां इदममृतं सममेवोद्विभजे विभजिष्यामि ।।२६।।

**अनन्तभट्टीया–** धर्मच्छलं आभासधर्मम् । यदि मे मयि संवादः अङ्गीकृतमित्यर्थः ।।२६।।

**जनार्दनीया–** त्वया पापजनेषु धर्मच्छलं धर्माभासः धर्म इति सतां ज्ञापयितुं, तदा तस्मिन् समये त्वया उक्तम् । किमिति ? इह अमृतविभागविषये मे मया यद्यत् कृतं यो यो मम व्यापारः तस्मिन् वो युष्माकं यदि संवाद एव सम्मतिरेव । तर्हि इमां सुधां उद्विभजे विभजामि ।।२६।।

---

...तुल्यायासहेतवः । सत्रयाग इवैतस्मिन् एष धर्मः सनातनः ।। इति स्वान् प्रत्यषेधन् वै दैतेया जातमत्सराः । दुर्बलाः प्रबलान् राजन् गृहीतकलशान् विभुः ।। भा.८.८.३७-३९ ।

१. 'यद्यभ्युपेतं क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम्' इति भागवतवचनं व्याख्याति- यद्यदिति ।। स्कान्देऽपि [१.१२.२४] 'तस्माद्भवद्भिः सञ्चिन्त्य कार्याकार्यविचक्षणैः । कर्तव्यं परया बुद्ध्या प्रयाता सुरसत्तमाः।।' इति ।

**ताम्रपर्णीया–** धर्मच्छलं व्याजधर्मः धर्मवत् प्रतीयमान इति यावत् ।।२६।।

**भारतश्री–** मे मया ।।२६।।

**चट्टि–** पापजनेषु धर्मच्छलं धर्माभासः धर्म इति सतां ज्ञापयितुं तदा तस्मिन् समये त्वया उक्तं किमिति । मे मया यद्यत् कृतं यो यो व्यापारः कृत इत्यर्थः । तत्तत् इह अमृतविभागविषये भवतां यदि संवादः सम्मतिरेव तर्हि इमां सुधां इदममृतं उद्भिभजे विभजामि ।।२६।।

**यथेष्टतोऽहं विभजामि [1]सर्वथा [2]न विश्वसध्वं मयि केनचित् क्वचित् ।**
**इति प्रहस्याभिहितं निशम्य स्त्रीभावमुग्धास्तु तथेति तेऽवदन् ।।२७।।**

**वादिराजीया–** लोकशिक्षणायैव इमां सुधां उद्भिभज इति प्रागनृतं त्वयोक्तम् । 'न विष्णोर्वचनं क्वापि मृषा भवति कस्यचित्' इति स्वनियमरक्षणााय पुनः सत्यमेवोक्तमिति भावेनाहुः– **यथेष्टत इति** ।। इष्टं इच्छा भावे क्तः । ममेच्छानुसारत इत्यर्थः । यथेष्टत इति तर्हि दैत्याः कथमङ्गीचक्रुरित्यत्र उक्तम्– **स्त्रीभावमुग्धा इति** ।।२७।।

**वरदराजीया–** अहं यथेष्टतो मदिच्छानुसारेणामृतं ते विभजामि । मयि सर्वथा क्वचिद्विषये केनापि प्रकारेणाविश्वसध्वं विश्वासं मा कुरुध्वं इत्युक्तमिति पूर्वेणान्वयः । इत्यनेन प्रकारेण प्रहस्य प्रहसित्वा अभिहितं वचनं निशम्य, स्त्रीभावेन स्त्रीणां विलासेन मुग्धा मोहिता ते दैत्याः तथेति तथास्त्विति अवदन्नित्यन्वयः ।।२७।।

**अनन्तभट्टीया–** मुग्धाः मूढाः ।।२७।।

**जनार्दनीया–** अहं यथेष्टतः स्वेच्छानुसारेण विभजामि । यूयमपि केनचित् प्रकारेण क्वचित् कदापि सर्वथा सर्वप्रकारेण न विश्वसध्वं विश्वासं मा कुरुध्वमित्युक्तमिति सम्बन्धः । ते दैत्याः

---

१. सर्वथा-अविश्वसध्वमिति वरदराजीयपाठः इति भाति ।

२. 'सा प्राह मम विश्रम्भो न कार्यः स्वैरिणी ह्यहम् । अकार्यं वः कृतं ह्येतद्विभजिष्ये निजेच्छया । इत्युक्त्वा अपि ते मूढा यथेष्टं कुर्विति ब्रुवन् ।।' इति स्कान्दे २वै.वा.मा.१३.१४-१५ । 'कथं कश्यपदायादाः पुंश्चल्यां मयि सङ्गताः । विश्वासं पण्डिता जातु कामिनीषु न यान्ति हि ।। सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः । सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम् ।।' इति भागवते ८.८.५४-५५ । भागवतोक्तमेव किञ्चिद्विवृतं स्कान्दे- 'अनृतं साहसं माया मूर्खत्वमतिलोभता । अशौचं निर्घृणत्वञ्च स्त्रीणां दोषाः स्वभावजाः ।। निःस्नेहत्वञ्च विज्ञेयं धूर्तत्वञ्चैव तत्वतः । स्वस्त्रीणां चैव विज्ञेया दोषा नास्त्यत्र संशयः ।। यथैव श्वपदानाञ्च वृका हिंसापरायणाः । काका यथाण्डजानाञ्च श्वापदानाञ्च जम्बुकाः ।। धूर्ता तथा मनुष्याणां स्त्री ज्ञेया सततं बुधैः ।।' १.माहेश्वर. १२.२०-२२ ।

इत्यभिहितं उक्तं निशाम्य श्रुत्वा, स्त्रीभावेन स्त्रीविलासेन मुग्धा मोहिताः सन्तः प्रहस्य तथेति तथास्त्वित्यवदन् ।।२७।।

**ताम्रपर्णीया–** 'न विष्णोर्वचनं क्वापि मृषा भवति कुत्रचिद्' इति स्वनियमविरोधपरिहाराय यथेष्टतः इति ।।२७।।

**चट्टि–** अहं यथेष्टतः मदिष्टानुसारेणामृतं विभजामि । यूयमपि केनचित् प्रकारेण क्वचित् कदापि सर्वथा सर्वप्रकारेण मयि न विश्वसध्वमित्युक्तमिति सम्बन्धः । ते दैत्याः इत्यनेन प्रकारेण प्रहस्य हसित्वा, अभिहितं वचनं निशाम्य श्रुत्वा, स्त्रीभावेन स्त्रीणां विलासेन मुग्धाः मोहितास्सन्तः तथेति तथास्त्वित्यवदन् ।।२७।।

**ततश्च संस्थाप्य पृथक् सुरासुरांस्तवातिरूपोच्चलितान् सुरेतरान् ।**
**सर्वान् भवद्दर्शन ईक्ष्य लज्जिताऽस्म्यहं दृशो मीलयतेत्यवोचः ।।२८।।**

**वादिराजीया–** अतिरूपोच्चलितान् तवातिरूपेण उत्कृष्टं चलितं मनश्चाञ्चल्यं येषां तानित्यर्थः । भवद्दर्शिन ईक्ष्य लज्जितेत्यत्र भवतां रागेण मद्दर्शने सति युष्मानीक्ष्येति योग्यपदाध्याहारेण योजना । अत एवातिरूपोच्चलितानित्युक्तम् । देवानां तु रागं विहायैव मद्दर्शनात् तान् वीक्ष्य न लज्जेति भावः । वस्तुतो नारायणस्य लज्जाभावादनृतमिदमिति न शङ्कनीयम् । अतिपापिनां दर्शने लज्जाया अपि गुणत्वात् ।।

**वरदराजीया–** ततस्तदनन्तरं सुरासुरान् देवासुरान् पृथक् संस्थाप्योपवेशयित्वा तवातिरूपेणातिसुन्दरेण रूपेणोच्चलितान् चञ्चलीकृतान् सर्वान् सुरेतरान् असुरान् प्रति त्वमवोचः उक्तवानसि । किमिति । अहं भवतो दर्शने च । क्रुधा प्रगृह्याभावः छान्दसः । ईक्ष्य दृष्ट्वा लज्जितास्मि । भवत्कर्तृके मद्विषयके दर्शने सति भवत ईक्ष्य लज्जितास्मीति । तस्मात् दृशो नेत्राणि मीलयत आच्छादयतेति ।।२८।।

**अनन्तभट्टीया–** उच्चलितान् प्राप्तविकारान् । भवद्दर्शने युष्मच्चक्षुषी ईक्ष्य । छान्दसत्वात् प्रगृह्यसञ्ज्ञाभावः ।।२८-२९।।

**जनार्दनीया–** ततः सुराश्च असुराश्च तथा तान् । पृथक् संस्थाप्य, तवातिरूपेण सुरूपातिशयेन उच्चलितान् चञ्चलीकृतान् सुरेतरान् दैत्यान् इत्यवोचस्त्वमिति शेषः । किमिति ? भवतां दर्शने नेत्रे ईक्ष्य प्रतीक्ष्य । यद्वा दर्शने जाते चक्षुषी प्रतीक्ष्येति । ईक्ष्येत्युपसर्गविभक्तिस्वरप्रतिरूपकाश्च इति । अत्र चकारस्यानुक्तसमुच्चयार्थत्वात् तिङन्तप्रतिरूपकाश्चेतिवत् ल्यबन्तप्रतिरूपकमव्ययं द्रष्टव्यम् । यद्वा ईक्षित्वा इति विगृह्य, स्वरप्रतिरूपकेणाव्ययेन 'कर्तृकरणे कृता बहुलम्' इति बहुलवचनात् समासः । लज्जितास्मि । अत एव दृशः नेत्राणि मीलयत निमीलयतेति सम्बन्धः ।।२८-२९।।

**ताम्रपर्णीया–** ।। **भवद्दर्शन ईक्ष्येति** ।। भवद्दर्शने सति । युष्मान् ईक्ष्येत्यर्थः ।।२८।।

**चट्टि–** ततः सुरासुरान् पृथग्संस्थाप्य तवातिरूपेण अतिसुन्दरेण रूपेणोच्चलितान् चञ्चलीकृतान् सर्वान् सुरेतरान् दैत्यान् इत्यवोचः । त्वमिति शेषः । किमिति । भवतां दर्शने नेत्रे ईक्ष्य दृष्ट्वा । प्रगृह्यसञ्ज्ञाभावश्छान्दसः । अहं लज्जितास्मि । यद्वा भवत्कर्तृके मद्विषयके दर्शने सति भवतः ईक्ष्य लज्जितास्मीति योग्यपदाध्याहारेण सम्बन्धः । अत एव दृशो नेत्राणि मीलयतेति ।।२८।।

**निमीलिताक्षेष्वसुरेषु देवता न्यपाययः साध्वमृतं ततः पुमान् ।**
**क्षणेन भूत्वा पिबतः सुधां शिरो राहोर्न्यकृन्तश्च सुदर्शनेन ।।२९।।**

**वादिराजीया–** पिबतः सुधामित्युक्त्या देवपङ्क्त्यवसाने राहुरुपविष्ट इति सूच्यते । सर्वेषां देवानां सुधापानानन्तरं अन्ते सुधां पिबतः राहोः शिरः न्यकृन्तत इति योजना । अन्यथा मध्ये राहोः स्थितौ केषाञ्चिद्देवानां सुधापानं न स्यात् । परिवेषकस्त्रीरूपस्य तत्रैव परिसमाप्तिप्रसङ्गात् । मायया देववेषधारी भीतस्सन् कोण एवोपविवेश चेति भावः ।।२९।।

**वरदराजीया–** ततस्तदनन्तरं निमीलितनेत्रेषु असुरेषु सत्सु त्वं देवताः देवान् अमृतं साधु यथा भवति तथा अपाययः पायितवान् असि । ततः क्षणेन क्षणमात्रेण पुमान् पुरुषाकृतिः भूत्वा सुधाममृतं पिबतो राहोः शिरः सुदर्शनेन चक्रेण न्यकृन्तः छेदितवानसि ।।२९।।

**ताम्रपर्णीया–** ।। **पिबतः सुधामिति** ।। अनेन देवतापङ्क्तौ राहुः उपविष्ट इति सूच्यते ।।२९।।

**चट्टि–** असुरेषु निमीलिताक्षेषु निमीलितलोचनेषु सत्सु त्वं देवताः देवान् अमृतं साधु यथा भवति तथा न्यपाययः पायितवानसि । ततः क्षणेन क्षणमात्रेण पुमान् पुरुषाकृतिः भूत्वा सुधाममृतं पिबतो राहोः शिरः सुदर्शनेन चक्रेण न्यकृन्तः छेदितवानसि ।।२९।।

**तेनामृतार्थं हि सहस्रजन्मसु प्रतप्य भूयस्तप आरितो वरः ।**
**स्वयम्भुवस्तेन भवान् करेऽस्य बिन्दुं सुधां प्रास्य शिरो जहार ।।३०।।**

**व्यासतीर्थीया–** अयोग्यस्य सुधाप्राप्तिः कुतो जातेति जिज्ञासायामाह– **तेनेति** ।। भूयो महत् । आरितः प्राप्तः ।।३०-३२।।

**वेदाङ्गतीर्थीया–** भूयः बहु तपः प्रतप्य स्वयंभुवः विरिञ्चात् वर आरितः प्राप्तः । बिन्दुं बिन्दुमात्रम् ।।३०-३२।।

**वादिराजीया–** तप आरितो वर इत्यत्र 'रा दाने' इति धातोः आरितः आत्तः ।।३०।।

**वरदराजीया–** न चायोग्यस्य कथममृतं प्राप्तिरभवदित्यत आह– **तेनेति** ।। तेन राहुणा अमृतार्थं अमृतपानार्थं सहस्रजन्मसु जन्मनो सहस्रेषु भूयो बहु तपः प्रतप्य स्वयंभुवो ब्रह्मणः सकाशात् वरः आरितः प्राप्तः तेन कारणेनास्य राहोः करे सुधां निन्दुमात्रं प्रास्य क्षिप्त्वा राहोः शिरो जहार छेदितवानसि इत्यर्थः ।।३०।।

**अनन्तभट्टीया–** [भूयः महत्] । आरितः प्राप्तः । विन्दुं विन्दुरूपाम् ।।३०।।

**जनार्दनीया–** नन्वयोग्यस्य सुधाप्राप्तिः कथमित्यत आह– **तेनेति** ।। तेन राहुणा भूयः महत् । 'भूयः पुनः पुनः ख्यातं प्रभूतार्थे त्वनव्ययम्' इति विश्वः । तपः प्रतप्य स्वयम्भुवः विरिञ्चात् वरः अमृतप्राप्तिरूपो वरः आरितः प्राप्तो येन कारणेन तेन भवान् अस्य राहोः करे विन्दुं विन्दुमात्रं सुधां प्रास्य निक्षिप्य, राहोः शिरः जहार चिच्छेद ।।३०।।

**ताम्रपर्णीया–** भूयो भूयः तपः प्रतप्य तपस्तप्त्वा वरः आरितः स्वीकृत इत्यर्थः ।। **करेऽस्येति** ।। करेऽस्य सुधाविन्दुसम्बन्धे शिरसः स्थायितया ग्रहत्वं कबन्धस्य चास्थायित्वं कुत इति चेत् । अत्र केचिदाहुः । 'अमृतं हस्ते प्रक्षिप्य शिरच्छेदेऽपि संस्कारवशात् शिरसः भूमिपतनात् पूर्वमेव सामृतहस्तस्य छिन्ने कण्ठलग्ने शिरसि गलद्वारे च संसर्गात् शिरःकबन्धयोः स्थायित्वम्' इति । अपरे तु 'हस्ताख्यावयवे अमृतसंसर्गमहिम्नैवाङ्गिनः स्थायित्वं लभ्यते । तत्रोत्तमाङ्गत्वात् शिरसो ग्रहत्वम्' इति मन्यन्ते । वस्तुतस्तु 'पिबतः सुधां शिरः' इत्युक्तत्वात् अमृतस्य मुखसंवन्धाच्छिरसो ग्रहत्वम् । करसंश्लेषात् सबाहुकबन्धस्याविनाश इति न काचित्कथन्ता ।।३०।।

**भारतश्री–** आरितः प्राप्तः ।।३०।।

**चट्टि–** ननु अयोग्यस्यामृतप्राप्तिः कथमित्यत आह– **तेनेति** ।। तेन राहुणा अमृतार्थं अमृतप्राप्त्यर्थं सहस्रजन्मसु जन्मसहस्रेषु भूयो वहुतपः प्रतप्य तप्त्वा स्वयम्भुवः ब्रह्मणो अमृतप्राप्तिरूपः वरो आरितः प्राप्तः । येन कारणेन तेन भवानस्य राहोः करे सुधां विन्दुं विन्दुमात्रं प्रास्य क्षिप्त्वा राहोः शिरो जहार छेदितवानसि ।।३०।।

**शिरस्तु तस्य [१]ग्रहतामवाप सुरैः समाविष्टमथो सबाहुः ।**
**क्षिप्तः कबन्धोऽस्य शुभोदसागरे त्वया स्थितोऽद्यापि हि तत्र सामृतः ।।३१।।**

---

१. 'चक्रेण पातितं वत्स सभुजं मस्तकं मम । अमृतप्राशनात् प्राणैरवियुक्तोऽस्मि दानव ।। न मे कण्ठादधोभागमागतं मम चक्रिणा । शिरश्छिन्नं महाराज तत्र प्राणास्ततः स्थिताः ।।' इति विष्णुधर्मोत्तरे १खं.४२.३५-३६ । शिरस्तु तस्य ग्रहतामवाप इत्यत्र तुशब्दो 'भगवतो वरदानादेव ग्रहतामवाप' इति विशेषार्थो द्रष्टव्यः । राहोः ग्रहत्वमपि विष्णुरेव ददौ । तथा मुहूर्तचिन्तामणिटिप्पण्यां विवाहप्रकरणे ४४ श्लोकव्याख्यायां पीयूषधारायाम् । कश्यपश्च-

**वादिराजीया–** शिरस्तु तस्य ग्रहतामवापेत्यत्र चमत्कारेण छिद्यमाने शिरसि राहुर्मृतः । तस्य सुधापानं नासीदेव । शिरस्तु हरेर्हस्तलाघवबलात्तत्रैव लग्नम् । न तु तदैव पतितम् । अथ तस्याधरोष्ठोपरि निक्षिप्तकरस्थममृतं तु छिन्नशिरःपातात् पूर्वं आस्यविवरं प्रविश्य गलविवरद्वारेण कबन्धं प्राविशत् शिरोऽपि प्राविशत् । अतः सुधासत्वाच्छिरोऽपि चिरकालस्थायि । कबन्धोऽपि चिरकालस्थायी । तयोर्मध्ये शिरसि 'राहुर्ज्येष्ठं केतुशतम्' [भा.६.६.३६] इति वचनात् राहोरपीषत्सन्निधानम् । देवानां शतस्य च सन्निधानम् । तत्रापि शिरोऽभिमानित्वात् राहोरंशस्य ज्येष्ठता केतूनां कनिष्ठता । एवं ग्रहद्वयस्याप्येकं शिर एवाधिष्ठानम् । अत एव 'करे प्रास्य शिरो जहार' इत्युक्तम् । राहुनाम्ना याज्ञिकैर्दीयमानं हविः देवा एव गृह्णन्ति । यज्ञाहुत्यां दैत्यानामनधिकारात् । पर्वणि पर्वणि सूचकयोश्चन्द्रसूर्ययोर्द्वेषमात्राय राहुः । अवैष्णवदत्ताहुत्यैव तस्य जीवनमिति विवेकः ।।३१।।

**वरदराजीया–** तस्य राहोः शिरः सुरैः देवैः समाविष्टं सत् ग्रहतां नवग्रहेषु ग्रहरूपत्वमवाप । अथानन्तरं बाहुभ्यां सह वर्तमानस्य राहोः कबन्धः शिरोरहितो देहभागः शुभोदसागरे स्वादूदकसमुद्रे त्वया क्षिप्तः प्रक्षिप्तः । तत्र सागरे यः सामृतो हृद्गतामृतः ततोऽद्यापि स्थितः तिष्ठतीत्यर्थः ।।३१।।

**अनन्तभट्टीया–** हृद्गतामृतयुक्तः । शुभोदसागरे स्वादूदकसमुद्रे ।।३१।।

---

....छिन्नोऽपि विष्णुचक्रेण सुधामयशिरास्तमः । केशवस्य वरेणासौ तथापि ग्रहतां गतः ।। इति । नारदोऽपि- अमृतास्वादनाद् राहुः शिरश्छिन्नोऽपि सोऽमृतः। विष्णुना तेन चक्रेण तथापि ग्रहतां गतः ।। इति । एवं अन्यत्रापि पुराणेषु एतादृशाः श्लोकाः लभ्यन्ते। तथा च भागवते ५.२३.१ योसावमरत्वं ग्रहत्वं चालभत भगवदनुकम्पया स्वयमसुरापशदः सैंहिकेयो ह्यतदर्हः ।। इति । तथा ९.८.७१ शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् । यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः ।। अग्निपुराणे ३-१५-हरिणाप्यरिणा छिन्नं स राहुस्तच्छिरः पृथक् । कृपयाऽमरतां नीतं वरदं हरिमब्रवीत् ।। इति ।

विष्णुधर्मोत्तरे १-४२ यस्य क्रोधादनङ्गोऽहं जातः परबलार्दनः । प्रसादाच्च तथा यस्य ग्रहत्वमुपलब्धवान् ।।४।। इति राहोर्वचनम् । तत्रैव- चक्रेण पातितं वत्स सभुजं मस्तकं मम । अमृतप्राशनात् प्राणै न वियुक्तोऽस्मि दानव ।।३५।। न मे कण्ठादधोभागमागतं मम चक्रिणा । शिरश्छिन्नं महाराज तत्र प्राणास्तत स्थिता ।।३६।। शिरसश्छेदनादीनं मां दृष्ट्वा मधुसूदनः । जातानुकम्पो भगवानिदं वचनमब्रवीत् ।।३७।। पीतामृतस्य दैत्यस्य मरणं नास्ति कर्हिचित् । मम हस्तविनष्टानां गतिर्भवति शोभना ।।३८।। अमरत्वं त्वमासाद्य वरं वरय कांक्षितम् । ततो मयोक्तो भगवान् प्रणम्य मधुसूदनः ।।३९।। लभेयातां हि सोमार्कौ मत्तो देव पराभवम् । पूजां च प्रार्थये लोकाद् ग्रहत्वं च जनार्दन ।।४०।। एवमुक्तः स भगवान् मामुवाच तदा हरिः । ग्रहत्वं भविता दैत्य पूजां चैवोपलप्स्यसे ।।४१।। पर्वकाले तु सम्प्राप्ते चन्द्रार्कौ छादयिष्यसि ।।४२।। तमोमूर्तिरदृश्यश्च विपरीतं चरिष्यसि । भूमिच्छायागतश्चन्द्रं चन्द्रगोर्कं च दानव ।।४३।। महाभारते उद्योगपर्वणि [११०.११] कम्बन्धस्य समुद्रमध्य-स्थितत्वमुक्तम् । अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते । स्वर्भानोः सूर्यकल्पस्य सोमसूर्यौ जिघांसतः ।। इति ।

**जनार्दनीया–** तस्य राहोः सुरैः समाविष्टं प्रविष्टशिरः । ग्रहतां गृह्णाति ग्रसतीति ग्रहः । तस्य भावः ग्रहता । चन्द्रसूर्यग्रहत्वमवाप । तदुक्तं आदिपर्वणि– 'ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै । शाश्वतश्चन्द्रसूर्याभ्यां ग्रसत्यद्यापि चैव तौ ।।' [१९.११] इति । अथो त्वया उत्तमं स्वाद्वित्यर्थः । उदकं यस्मिन् असौ तथा, स चासौ सागरश्च, तस्मिन् स्वादूदकसमुद्रे इति यावत् । सबाहुः अस्य राहोः कवन्धः अशिरः कायः क्षिप्तः प्रक्षिप्तोऽभूदित्यर्थः । 'कवन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः । सामृतः अमृतेन सहितः कवन्धो हि यस्मात् तस्मादद्यापि तत्र स्वादूदकसागरे स्थितः पर्वते इत्यर्थः ।।३१।।

**ताम्रपर्णीया–** ।। **शिरस्तु तस्येति** ।। राहुणा अधिष्ठितमिति शेषः । अन्यथा 'पूर्ववैरमनुस्मरन्' इति भागवतविरोधत् ।।३१।।

**अतिविशद–** शिरस्तु तस्य ग्रहतामवापेत्यत्र 'ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै । शाश्वतश्चन्द्रसूर्याभ्यां ग्रसत्यद्यापि चैव तौ ।।' इति ।।३१-४२।।

**चट्टि–** तस्य राहोः शिरः सुरैर्देवैस्समाविष्टं प्रविष्टं सत् ग्रहतां केत्वाख्यग्रहतामवाप । अथो अनन्तरं बाहुभ्यां सहितः सबाहुः अस्य राहोः कवन्धः शिरोरहितदेहः । शुभमुत्तमं स्वादु इत्यर्थः । उदमुदकं यस्मिन् सः शुभोदः, स चासौ सागरश्च तस्मिन्, स्वादूदकसमुद्र इति यावत् । त्वया क्षिप्तः प्रक्षिप्तोऽभूत् । सामृतो अमृतेन सहितः कवन्धो हि यस्मात् तस्मादद्यापि तत्र स्वादूदकसमुद्रे स्थितः वर्तत इत्यर्थः । कण्ठेन वक्षःशिरसोरतिसामीप्यात् कण्ठगतामृतसम्वन्धः उभयोस्तिष्ठति यस्मात् तस्माच्छिरो ग्रहतामवाप कवन्धरूपो राहुरद्यापि जीवतीति भावः ।।३१।।

**अथासुराः प्रत्यपतन्नुदायुधाः समस्तशस्ते च हतास्त्वया रणे ।**
**कलिस्तु स ब्रह्मवरादजेयो ऋते भवन्तं पुरुषेषु संस्थितः ।।३२।।**

**वादिराजीया–** ब्रह्मवराद्भवन्तमृते अजेयः कलिस्तु । परशुक्लत्रयस्य कलिजयोऽपि भवत्प्रसादादेवेत्यतो न स पृथगुक्तः । पुरुषेषु 'पुरुषाः पूरुषा नरा' इत्यनुशासनात् मानुषेषु संस्थितः सम्यक् स्थितः । रुद्रादिषु कदाचित् कल्यावेश इति सूचनाय संस्थित इत्युक्तम् ।।३२।।

**वरदराजीया–** अथानन्तरं उदायुधा उद्यदायुधा असुरा युद्धार्थं प्रत्यपतन् प्रत्याजग्मुः । समस्तशः सर्वे असुराः त्वया रणे हता मारिता इत्यर्थः । स कलिः यः क्षीराब्धेरुत्पन्नो हतः सर्वं[?] इत्यर्थः । ब्रह्मणो वरात् भवन्तमृते अजेयो जेतुमशक्यो भवन्तमृते अन्येषु पुरुषेषु संस्थितोऽभूत् । 'ब्रह्मणो वरात्' इत्युक्त्या ब्रह्माणमृत इत्यपि लभ्यते ।।३२।।

**अनन्तभट्टीया–** सः कलिः । समस्तशः कलिव्यतिरेकेण समस्ताः । [सतु हरकार्यार्थं हतः] । पुरुषेषु शिवादिषु ॥३२॥

**जनार्दनीया–** उदायुधाः ऊर्ध्वकृतायुधाः असुराः प्रत्यपतन् अभिजग्मुः । स कलिः अभूत् । कलिः सर्वजगत्सु इत्युक्तो विषरूपो य कलिः स इत्यर्थः । भवन्तं त्वा ऋते विना पुरुषेषु रुद्रादिषु संस्थितः प्रविष्टोऽभूदित्यर्थः । ब्रह्मवरादित्यनेन ब्रह्माणमप्यृत इत्यवगन्तव्यम् । तुशब्दस्तु इममेव विशेषार्थं सूचयति ॥३२॥

**ताम्रपर्णीया–** ॥ ऋते भवन्तमिति ॥ ब्रह्मवरादित्युक्त्या तं च ऋते इति सिद्धमेव । ब्रह्माण्यपि तेनैव व्याख्यातम् । अत एव पुरुषेषु देहाभिमानिषु इत्युक्तम् । ब्रह्मणः तदभावात् अन्येषां तद्भावात् । अत एव 'गिरीशादिमनोऽनुशायी' इति वक्ष्यतीति ज्ञेयम् ॥३२॥

**भारतश्री–** त्वया जित इत्यर्थः ॥३२॥

**चट्टि–** अथानन्तरमसुराः उदायुधाः ऊर्ध्वकृताः आयुधाः सन्तः युद्धार्थं प्रत्यपतन् प्रत्याजग्मुः । समस्तशः सर्वे ते असुराः रणे त्वया हताः मारिताः । ब्रह्मणो वरादजेयः यः पूर्वं समस्तजगत्सु व्याप्तः इत्युक्तः सः कलिः भवन्तं त्वामृते विना पुरुषेषु रुद्रादिषु संस्थितः प्रविष्टोऽभूदित्यर्थः । ब्रह्मवरादित्यनेन ब्रह्माणमपि ऋते इत्यवगन्तव्यम् । तुशब्दः इममेव विशेषार्थं सूचयति ॥३२॥

**तस्यार्द्धदेहा समभूदलक्ष्मीस्तत्पुत्रका दोषगणाश्च सर्वशः ।**
**अथेन्दिरा वक्षसि ते समास्थिता त्वत्कण्ठगं [1]कौस्तुभमास धाता ॥३३॥**

**व्यासतीर्थीया–** दोषगणाः कामक्रोधादिदोषगणाभिमानिनः ॥३३-३४॥

**वेदाङ्गतीर्थीया–** धाता कौस्तुभं धात्राभिमन्यमानं कौस्तुभं त्वत्कण्ठगमास ॥३३-३५॥

**वादिराजीया–** तस्यार्धदेहेत्यत्र अर्धदेहा अर्धाङ्गी भार्या । दोषगणाः दोषाभिमानिनो दैत्यगणाः । कौस्तुभमास कौस्तुभाभिमानी आसेत्यर्थः ॥३३॥

**वरदराजीया–** अलक्ष्मीः दारिद्र्याभिमानिनी तस्य कलेः अर्धदेहा भार्या समभूत् । सर्वशो दोषगणा रागाद्याः तदभिमानिनो सुराः तस्य कले पुत्रकाः । अथानन्तरं इन्दिरा लक्ष्मीः ते तव वक्षसि समाश्रिता अभूत् । धाता ब्रह्मा तदभिमन्यमानं कौस्तुभं त्वत्कण्ठगं च कण्ठे स्थितमास बभूव ॥३३॥

---

१. कण्ठे च कौस्तुभं नाभौ वैकुण्ठादित्रिधामसु । सत्यलोके च मेर्वादौ सर्वत्र चतुराननः ॥ आदित्यपु.वे.मा.२.८ ।

**अनन्तभट्टीया–** अलक्ष्मीः दारिद्र्याभिमानिनी । तस्य कलेः अर्धदेहा भार्या समभूत् । सर्वशः सर्वे तत्पुत्रकाः कल्यलक्ष्मीपुत्रकाः दोषगणाः दुष्टकामादिदोषाभिमानिनः । धाता कौस्तुभम् ।।३३।।

**जनार्दनीया–** अलक्ष्मीः दारिद्र्यदोषाभिमानिनी नाम्नाप्यलक्ष्मीः । तस्य कलेः अर्धदेहा अर्धाङ्गी स्त्रीत्यर्थः । सर्वशः सर्वदोषगणाः कामादिदोषाभिमानिनः तस्य कलेः पुत्रकाः । धाता त्वत्कण्ठगं कौस्तुभं ब्रह्मणा अभिमन्यमानमासेत्यर्थः ।।३३।।

**चट्टि–** अलक्ष्मीः दारिद्र्याभिमानिनी नाम्नाप्यलक्ष्मीः तस्य कलेरर्धदेहा भार्या समभूत् । सर्वशः सर्वे दोषगणाः रागाद्याः तदभिमानिनो असुरास्तस्य कलेः पुत्रकाश्च अभूवन् । अथानन्तरं इन्दिरा लक्ष्मीस्ते वक्षसि समास्थिता अभूत् । धाता त्वत्कण्ठगं कौस्तुभमास । ब्रह्मणा अभिमन्यमानं कौस्तुभं त्वत्कण्ठगमासीदित्यर्थः ।।३३।।

**यथाविभागं च सुरेषु दत्तास्त्वया तथाऽन्येऽपि हि तत्र जाताः ।**
**इत्थं त्वया साध्वमृतं सुरेषु दत्तं हि मोक्षस्य निदर्शनाय ।।३४।।**

**वादिराजीया–** यथाविभागमित्यत्र तत्र मथ्यमानक्षीरसमुद्रे जाताः अन्ये प्रागुक्तेभ्यः अन्ये लक्ष्मीकौस्तुभसुधादिभ्योऽन्य इत्यर्थः । यथाविभागं विभागमनतिक्रम्य सुरेषु दत्ताः । स च विभागः शास्त्रप्रसिद्धितोऽवगन्तव्य इति सूचनाय हिशब्दः । ऐरावतोच्चैःश्रवपारिजातप्रभृतयः इन्द्राय दत्ताः । तथा शास्त्रे उक्तत्वात् । तदतिरिक्ताः पुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाख्याः सप्तदिग्गजाः अग्न्यादिसप्तदिक्पालानां दत्ताः । तथा शास्त्रप्रसिद्धत्वात् । आयुधान्याभरणानि च यथायोग्यं सुरेषु दत्तानीत्यर्थः । सुरेषु दत्तं हीति हिशब्देन 'तमेवं विद्वानमृत इह भवति' इति श्रुतिप्रसिद्धिं सूचयति ।।

**वरदराजीया–** तथा तत्र क्षीराब्धौ जाता उत्पन्ना अन्येऽपि उच्चैःश्रवआद्याः पदार्थाः यथा विभागं योग्यविभागमनतिक्रम्य सुरेषु इन्द्रादिषु दत्ता स्थापिता । इत्थं एवं प्रकारेण मोक्षस्य निदर्शनाय देवानामेव मोक्षं नासुराणामिति निदर्शयितुं साधु समीचीनं अमृतं सुरेषु देवेषु दत्तं हि ।।३४।।

**अनन्तभट्टीया–** अन्ये पारिजातादयः । यथाविभागं... विभागानुसारेण ।।३४।।

**जनार्दनीया–** तत्र क्षीराब्धौ जाताः अन्ये पदार्थाः सुरेषु यथा विभागं पूर्वविभागमनतिक्रम्य इत्यर्थः । तथा तदनुसारेण त्वया दत्ताः । इत्थं अनेन प्रकारेण मोक्षस्य निदर्शनाय येषाममृतं दत्तं तेषां मोक्षः इति दर्शनार्थं सुरेषु दत्तम् । सुराणां मोक्षः नियतं ध्रुवं यथा स्यात्तथा भवेत् हि यस्मात् तस्मात् अमृतं दत्तमिति सम्बन्धः ।।३४।।

**चट्टि–** तथा तत्र क्षीराब्धौ जाता अन्येऽपि पदार्थाः सुरेषु यथा विभागं पूर्वविभागमनतिक्रम्येत्यर्थः । त्वया दत्ताः । इत्थमनेन प्रकारेण मोक्षस्य निदर्शनाय येषाममृतं दत्तं तेषां मोक्ष इति निदर्शनार्थं साधु समीचीनममृतं सुरेषु देवेषु दत्तं हि ।।३४।।

**भवेद्धि मोक्षो नियतं सुराणां नैवासुराणां स कथञ्चन स्यात् ।**
**उत्साहयुक्तस्य च तत् प्रतीपं भवेद्धि राहोरिव दुःखरूपम् ।।३५।।**

**व्यासतीर्थीया–** मोक्षस्य निदर्शनायेत्युक्तं स्पष्टयति– **भवेदिति** ।। मोक्षार्थमुत्साहयुक्तस्य च तत्प्रतीपं मोक्षविरुद्धं भवेत् । प्रतीपत्वं च न राज्यादिप्राप्तिरूपमित्युक्तम्– **दुःखरूपमिति** ।। तत्र निदर्शनं राहोरिवेति ।।३५-३६।।

**वादिराजीया–** असुराणां न स्यादिति हिशब्देन 'मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूँरधूनुथाः' [ऋ.सं.८.१४.१४] इत्यादिश्रुतिप्रसिद्धिं 'आरुरुक्षन्ति मायाभिः उत्सिसृप्सन्ति ये दिवम् । तान् दस्यून् विधुनोम्यज्ञ पूर्वस्माच्च पदादधः ।।' 'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।।' इति स्मृतिप्रसिद्धिं सूचयति । उत्साहयुक्तस्य मोक्षोत्साहयुक्तस्य तत्प्रतीपं सुखरूपमोक्षविपरीतं दुःखरूपमन्धन्तमो भवेद्धीति हिशब्देन 'परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति' [ऋ.६.४७.१७] इत्यादिश्रुतिप्रसिद्धिं च सूचयति । तर्हि उत्साहस्य का गतिरिति शङ्कामपि पूर्वेषामुग्राणां दैत्यनां सख्या स्वस्मिन् क्रियमाणानि सख्यानि भक्त्यादिसाधनानि इति यावत् । परावृणक्ति छिनत्ति इति वदन्ती श्रुतिरेव धिक्कुरते । इदमपि शूर्पणख्यादिषु प्रसिद्धमिति हिशब्देन सूचितम् ।।३५।।

**वरदराजीया–** तदेव स्पष्टयति– **भवेदिति** ।। हि यस्मात् सुराणां नियतं नियमेन मोक्षो भवेत् । तथा स मोक्षो असुराणां कथञ्चन केनापि प्रकारेण न स्यादेव । मोक्षार्थं उत्साहेनोद्योगेन युक्तस्याप्यसुरस्य तत्प्रतीपं मोक्षविरोधिदुःखरूपं तम एव भवेत् । तत्रापि निदर्शनं राहोरिवेति । यथा राहोः अमृतार्थं उत्साहेऽपि अमृतविरोधिशिरच्छेद एव प्राप्तं तथेत्यर्थः । तस्मात् देवानामेव मोक्षो नियत इति दर्शयितुं देवेभ्य एवामृतं दत्तमिति भावः ।।३५।।

**अनन्तभट्टीया–** उत्साहयुक्तस्य मोक्षे प्रयत्नं कुर्वतो कर्मेति शेषः । तत्प्रतीपं मोक्षविरोधि । प्रतीपत्वञ्च न राज्यादिप्रापणेनेत्याशयेनोक्तम्– **दुःखरूपमिति** ।। दुःख..। तत्र दृष्टान्तः– **राहोरिवेति** ।। यथा अमृतार्थं राहुप्रयत्नः तच्छिरच्छेदहेतुरभूत् तथेत्यर्थः ।।३५।।

**जनार्दनीया—** स मोक्षः असुराणां कथञ्चन केनाप्युपायेन न स्यादेव । तस्मादमृतं न दत्तमिति भावः । ननु मोक्षप्राप्तिसाधनकर्मणि प्रयत्नवतोऽसुरस्य मोक्षः स्यादित्यत आह— **उत्साहेति** ।। उत्साहेन मोक्षप्राप्तिकर्मणि उद्योगेन युक्तस्यासुरस्य तत्कर्म प्रतीपं मोक्षप्राप्तिविरोधि भवेदिति हि प्रसिद्धिः । तां प्रसिद्धिं दृष्टान्तेन दर्शयति— **राहोरिवेति** ।। राहोरमृतार्थं कृतं तपः दुःखरूपं यथा तथेत्यर्थः ।।३५।।

**ताम्रपर्णीया—** राहोरिव अतिप्रयत्नकरणेऽपि सत्सङ्गेऽपि ज्ञानप्रसक्तावपि न मोक्षः । प्रत्युत अनर्थमेव । उत्साहकरणेऽपि देवपङ्क्तौ निवेशेऽपि अमृतप्रसक्तौ अपि देवताकृतविघ्नेन तदलाभात् प्रत्युत शिरच्छेददर्शनादिति भावः ।।३५।।

**चट्टि—** तदेव स्पष्टयति— **भवेदिति** ।। हि यस्मात् सुराणां नियतं नियमेन मोक्षो भवेत् तस्मात् अमृतं दत्तमिति भावः । सः मोक्षो असुराणां कथञ्चन केनापि प्रकारेण न स्यादेव । तस्मादमृतं न दत्तमिति भावः । मोक्षार्थमुत्साहेनोद्योगेन युक्तस्याप्यसुरस्य तत्प्रतीपं मोक्षविरोधिदुःखरूपं तम एव भवेत् । तत्र निदर्शनम्— **राहोरिवेति** ।। राहोरमृतार्थं कृतं तपः दुःखरूपं यथा तथेत्यर्थः ।।३५।।

**कलिस्त्वयं ब्रह्मवरादिदानीं विबाधतेऽस्मान् सकलाः प्रजाश्च ।**
**अज्ञानमिथ्यामतिरूपतोऽसौ प्रविश्य सज्ज्ञानविरुद्धरूपः ।।३६।।**

**वेदाङ्गतीर्थीया—** अयं कलिस्तु ब्रह्मवरात् अज्ञानमिथ्यामतिरूपतः अस्मान् सकलाः प्रजाः प्रविश्य इदानीं विबाधते । सः किं स्वरूपः ? असौ सज्ज्ञानविरुद्धरूपः । असावयं कलिरित्यादिरूपा एकैव योजना ।।३६।।

**वादिराजीया—** अवतारान्तरं विहाय यदर्थं कूर्मावातारकथैव विस्तरेण कथिता तत्फलमाहुः— **कलिस्त्वयमिति** ।। अयं कलिः तु कालकूटाख्यविषस्य सहायविशेषेण इदानीमस्मान् प्रविश्य अज्ञानमिथ्याज्ञानरूपतः अज्ञानमिथ्याज्ञानयोः रूपेण चित्तं भ्रामयित्वा कदाचित् क्वचिद्बाधते । सकलाः प्रजाश्च प्रविश्य अज्ञानमिथ्याज्ञानरूपतः चित्तं भ्रामयित्वा विशेषेण बाधत इति यथायोग्यं विभज्य योजना द्रष्टव्या । स्वयमपि पिशाचावेशेनेव परशुक्लत्रयं विना अस्माकं प्रजानां च बुद्धिभ्रंशकरणे समर्थः । इदानीं कालकूटसहाये सति उन्मत्तबीजेनेव बुद्धिं भ्रामयित्वा अस्मान् कदाचित् कदाचित् बाधते । प्रजास्तु दुर्बलचित्तत्वाद्विशेषेण बाधत इति भावः । यदाह नीतिकारः 'कपिरपि च कापिशायनमदमत्तो वृश्चिकेन सन्दष्टः । अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ।।' इति । प्रकृते वृश्चिकदंशवत् गौतमशापोऽस्तीति ज्ञेयम् ।।३६।।

**वरदराजीया–** ततः किं प्रकृत इत्यतो देवाः प्रकृतं कार्यं विज्ञापयन्तीत्याह– **कलिरिति** ।। अयं प्रकृतः कलिस्तु ब्रह्मवरात् बलादिदानीं अस्मान् देवान् सकलाः प्रजाश्च सर्वान् बाधते पीडयति । केन प्रकारेणेत्यत आह– **अज्ञानेति** ।। अज्ञानं भावरूपं मिथ्यामतिः मिथ्याज्ञानं तदुभयरूपत्वात् सज्ज्ञानस्य सम्यग्ज्ञानस्य विरुद्धरूपः प्रतिपक्षरूपः स्वरूपो असौ विबाधते इति सम्बन्धः । अज्ञानादिप्रदानेन सज्ज्ञानोत्सारणेन चास्मदादीन् बाधत इति भावः ।।३६।।

**अनन्तभट्टीया–** अज्ञानेति रूपतः रूपेण प्रविश्य ।।३६।।[१]

**भावविवृतिः–** ।। **अज्ञानमिथ्यामतिरूपः** ।। सम्यज्ज्ञानं तत्वज्ञानं तस्य विरुद्धं मिथ्याज्ञानं तदभिमानी कलिः । अज्ञानमिथ्यामतिरूपतः अज्ञानरूपतो मिथ्यामतिरूपतश्चेति । अज्ञानं भावरूपं जीवस्य अस्वातन्त्र्यादिज्ञानाजनकं ईश्वरस्वातन्त्र्यादिज्ञानाजनकश्चेति । उभयं तद्रूपतः तदभिमानित्वात् प्रेरकत्वेन मिथ्यारूपतः जीवस्य स्वातन्त्र्यादिबुद्धिजनकत्वेन ईश्वरस्यास्वातन्त्र्यादिबुद्धिजनकत्वेनेत्यर्थः । तस्य मुख्याभिमानित्वात् । तदुक्तम्– 'अज्ञानादिस्वरूपस्तु कलिर्दुर्योधनः स्मृतः । विपरीतं तु यज्ज्ञानं दुःशासन इतीरितः ।।' इति [म.ता.नि.२.१४३] ।।३६-८५।।

**जनार्दनीया–** असावयं कलिः सोऽयं कलिरित्यर्थः । अज्ञानं भावरूपाज्ञानम्, मिथ्यामतिः विपरीतज्ञानमित्युभयरूपः ।।३६।।

**ताम्रपर्णीया–** ।। **अज्ञानमिथ्यामतिरूपत इति** ।। सज्ज्ञानस्य विरुद्धं यदज्ञानं तद्रूपः मूलरूपी अज्ञानमिथ्याज्ञानाख्यावान्तररूपैः प्रविश्य बाधते इत्यर्थः ।।३६।।

**भावचन्द्रिका–** बाधते दयया चिन्तायुक्तान् करोति । 'ब्रह्मादिबुद्धिसङ्कीर्णता नाम सज्जनानुक्रोशयुक्तता एव' इति तत्वप्रकाशिकोक्तेः [सू.१.१.१] ।।३६-४१।।

**चट्टि–** देवाः प्रकृतकार्यं विज्ञापयन्तीत्याह– **कलिरिति** ।। सज्ज्ञानविरुद्धरूपः प्रतिपक्षस्वरूपः असावयं कलिः ब्रह्मवरादिदानीं अस्मान् देवान् सकलाः प्रजाश्च प्रविश्याज्ञानं भावरूपाज्ञानं मिथ्यामतिः विपरीतज्ञानं च तयोः रूपतः तद्रूपेण विबाधते । स्वयमपि पिशाचावेशेन प्रजानां बुद्धिभ्रंशकरणे समर्थः । इदानीं कालकूटविषे सहाये सति उन्मत्तबीजेनेव बुद्धिं भ्रामयित्वा सुतरां बाधते इति भावेन विबाधते इत्युक्तम् ।।३६।।

---

१. **अनन्तभट्टीया–** ।। सज्ज्ञानविरुद्धरूप इति ।। सज्ज्ञानस्य विरुद्धं यद् ज्ञानं मिथ्याज्ञानं च तद्रूपमित्यर्थः । एतच्च मूलरूपविशेषणम् । अन्यथा पौनरुक्त्यापत्तेरिति । सज्ज्ञानमिति आगमविषयमित्यर्थः ।। इदं. हो.पुस्तकस्थव्याख्यानम् ।

**त्वदाज्ञया तस्य वरोऽब्जजेन दत्तः स आविश्य शिवं चकार ।**
**कदागमांस्तस्य कुयुक्तिबाधां न हि त्वदन्यश्चरितुं[1] समर्थः ॥३७॥**

**व्यासतीर्थीया–** सर्वबाधनरूपवरं ब्रह्मा कस्मात् कलये अदादित्यत आह– **त्वदाज्ञयेति** ॥ चरितुं चर्तुम् ॥३७-३८॥

**वेदाङ्गतीर्थीया–** तस्य कलेः कुयुक्तिबाधां कुत्सितयुक्तीनां दूषणानि ॥३७-३८॥

**वादिराजीया–** कदागमान् कुत्सितागमान् शिवं प्रविश्य चकारेति सम्बन्धः । पाशुपतादिसकल-दुरागमानां शिव एव प्रवर्तक इत्यतः शिवं प्रविश्येत्युक्तम् ॥३७॥

**वरदराजीया–** तस्यापि त्वया दत्तमेव सामर्थ्यमित्याह– **त्वदाज्ञयेति** ॥ तव आज्ञया तस्य कलेः अब्जजेन ब्रह्मणा वरो अजेयत्वादिरूपो दत्तः । स कलिः शिवं रुद्रमाविश्य कदागमान् कुत्सितागमान् पाशुपतादीन् चकार । तस्य कलेः कुयुक्तिनां कुत्सितयुक्तिनां वाधा दूषणं चरितुं कर्तुं त्वदन्यः पुरुषः समर्थो नास्ति । हि प्रसिद्धम् ॥३७॥

**अनन्तभट्टीया–** तस्य कलेः । कदागमान् दुष्टागमान् चकार । चरितुं तरीतुं ॥३७॥

**जनार्दनीया–** कदागमान् कुत्सितागमान् । तस्य कलेः । कुयुक्तीनां वाधां दूषणम् । चरितुं कर्तुम् ॥३७॥

**ताम्रपर्णीया–** चरितुं तर्तुं । 'चलितु'मिति क्वचित् पाठः ॥३७-३८॥

**चट्टि–** सर्वबाधकरूपं वरं ब्रह्मा कस्मात् कलये अदादित्यत आह– **त्वदाज्ञया इति** ॥ तवाज्ञया तस्य कलेः अब्जजेन ब्रह्मणा वरो अजेयत्वादिरूपः दत्तः । सः कलिः शिवं रुद्रमाविश्य कदागमान् कुत्सितागमान् पाशुपतादीन् चकार । पाशुपतादिसकलदुरागमानां शिव एव प्रवर्तक इत्यत शिवं प्रविश्येत्युक्तम् । तस्य कलेः कुयुक्तीनां बाधां दूषणं चरितुं कर्तुं त्वदन्यः पुरुषः समर्थो नास्ति । हि प्रसिद्धः ॥३७॥

**वेदाश्च सर्वे सहशास्त्रसङ्घा उत्सादितास्तेन न सन्ति तेऽद्य ।**
**तत् साधु भूमाववतीर्य वेदानुद्धृत्य शास्त्राणि कुरुष्व सम्यक् ॥३८॥**

**वादिराजीया–** वेदाश्च सर्व इत्यत्र वैदिकशिरोमणेः गौतमस्य वेदशास्त्रोत्सादनाय शापदाने मनोऽपि कल्यावेशादेव जातमिति भावेनोक्तम्– **तेन कलिना उत्सादिता इति** ॥ अन्यथा शिष्यापराधे सति

१. 'चलितुं' इति ताम्रपर्णीये पाठान्तरम् ।

अगस्त्यो गजेन्द्रस्येव शिष्याणामेव शापं दद्यात् । निरपराधिवेदशास्त्रद्वेषस्तु कल्यावेशादेवेति भावः । सहशास्त्रसङ्घा इत्यत्र शास्त्रं पञ्चरात्रमूलरामायणादिकम् । वेदानामनादित्वात् वेदानुद्धृत्येत्युक्तम् । वेदशब्देन पञ्चरात्रादिकमपि ग्राह्यम् । पञ्चरात्रस्य सादित्वेऽपि आदिसृष्टौ भगवतैव कृतत्वेन पुनःकरणायोगात् । अत एव न सन्तीत्यस्यापि व्यक्ततया न सन्तीत्यर्थः । शास्त्राणि ब्रह्मसूत्रभारतपुराणादीनि । सम्यक् वेदाद्यर्थेऽपि संशयच्छेदो यथा भवति तथा कुरुष्वेति योजना ।।३८।।

**वरदराजीया–** तेन कलिना शास्त्रसङ्घैः सह वर्तमानाः सर्वे वेदाश्च उत्सादिताः उत्सन्नं कृताः तस्मात् ते वेदाद्याः अद्यास्मिन् काले न सन्ति । अविद्यमानप्रायाः सम्यज्ज्ञानाजनकत्वादित्यर्थः । तत् तस्मात् कारणेन साधु भूमौ अवतीर्य प्रादुर्भूत्वा उत्सन्नान् वेदानुद्धृत्य पाठयोग्यान् कृत्वा सम्यक् निर्णायकानि शास्त्राणि ब्रह्मसूत्रभारतादीनि कुरुष्व ।।३८।।

**जनार्दनीया–** तेन कलिना । ते वेदाद्याः । न सन्ति कदागमैः सम्यज्ज्ञानजनका न भवन्तीत्यर्थः । यद्यस्मात् तस्मात् साधु भूमौ पुण्यहेतुकर्मभुवि । अवतीर्य अवतारं कृत्वा, सम्यक्शास्त्राणि निर्णयरूपब्रह्मसूत्रादिशास्त्राणि ।।३८।।

**चट्टि–** तेन कलिना शास्त्रसङ्घैः सह वर्तमानाः सर्वे वेदाश्च उत्सादिताः उत्सन्नाः कृताः तस्मात् ते वेदाद्याः अस्मिन् काले न सन्ति । अविद्यमानप्रायाः सम्यग्ज्ञानाजनकत्वादित्यर्थः । यद्यस्मात् तस्मात् साधु भूमौ पुण्यहेतुकर्मभुवि अवतीर्य प्रादुर्भूत्वा उत्सन्नान् वेदान् उद्धृत्य पाठयोग्यान् कृत्वा सम्यक् शास्त्राणि निर्णयरूपब्रह्मसूत्रभारतादीनि कुरुष्व ।।३८।।

**अदृश्यमज्ञेयमतर्क्यरूपं कलिं निलीनं हृदयेऽखिलस्य ।**
**सच्छास्त्रशस्त्रेण निहत्य शीघ्रं पदं निजं देहि महाजनस्य ।।३९।।**

**व्यासतीर्थीया–** चक्षुराद्यदृश्यं अज्ञेयमागमेन । तत्वतो जानतो वाक्यं ह्यागमः । तस्यैवाभावात् आगमाभावेनाज्ञेयमित्यर्थः । अतर्क्यं तर्काविषयम् । तत्कार्याज्ञानादिना हि कलिरनुमातव्यः । [तत्कार्यस्यानर्थत्वात् हानिश्च स्यात्]। अतो अतर्क्यम् । महतो मुक्तियोग्यस्य जनस्य ।।३९-४०।।

**वेदाङ्गतीर्थीया–** अदृश्यं च दृशा अज्ञेयम् । अत्र स्थितोऽयमिति ज्ञातुमशक्यम् । अतर्क्यरूपं एतादृशोऽयमिति तर्कितुमशक्यरूपम् ।।३९-४०।।

**वादिराजीया–** मिथ्याज्ञानस्यापि कल्यभिमन्यमानतया कलेरपररूपत्वात् हननमपि देहहनने जीवहननवत् कलेरेव हननमिति भावेनोक्तम्– **सच्छास्त्रशस्त्रेण कलिं निहत्येति** ।। अत एव 'अज्ञानमिथ्यामतिरूपत' इति प्रागुक्तम् ।।३९।।

**वरदराजीया–** ननु सोऽप्येकोऽसुर इति भवद्भिरेव किमिति न निहन्यत इत्याहुरित्याह– **अदृश्यमिति**।। चक्षुषा द्रष्टुमयोग्यत्वादज्ञेयम् । अस्ति कलिरिति ज्ञातुमशक्यम् । अतर्क्यं एतादृश इति तर्कितुमशक्यम् । सर्वस्य जनस्य हृदये मनसि विलीनं छन्नं कलिं सच्छास्त्राख्यशस्त्रेण शीघ्रं निहत्य महाजनस्य मुक्तियोग्यजनस्य निजं स्वस्वयोग्यं पदं स्थानं देहि ।।३९।।

**अनन्तभट्टीया–** अदृश्यं प्रत्यक्षागम्यम् । अज्ञेयं सदागमाभास...[तद्वयम्] । अतर्क्यं अनुमानागम्यं अज्ञानादिकलिकार्यलिङ्गेन सोऽनुमेयः । तस्मात्...अज्ञाननामकत्वात् । आवेदकप्रमाणाभावेन अज्ञानत्वानिश्चयात् अतर्क्यरूपम् । पदं पद्यते प्राप्यते अनेन...।।३९।।

**जनार्दनीया–** अदृश्यं दृष्ट्यगोचरम् । अत एव अज्ञेयं कुत्राप्यस्तीति ज्ञातुमशक्यम् । अतर्क्यं रूपं यस्य स तथा । अनुमानेन एतादृशरूपवानिति तर्कितुमशक्यमित्यर्थः । अखिलस्य जगतः हृदये मनसि निलीनं गोप्यतया सन्तम् । महाजनस्य भक्तजनस्य ।।३९।।

**ताम्रपर्णीया–** अज्ञेयमागमेन ।।३९-४०।।

**चट्टि–** अदृश्यं द्रष्टुमगोचरम् । अत एव अज्ञेयं अत्रास्तीति ज्ञातुमशक्यम् । अतर्क्यं रूपं यस्य स तथा तम् । अनुमानेन एतादृशरूपवानिति तर्कितुमशक्यमित्यर्थः । अखिलस्य जनस्य हृदये मनसि निलीनं गोप्यतया सन्तं कलिं सच्छास्त्राख्यशस्त्रेण शीघ्रं निहत्य महाजनस्य भक्तजनस्य निजं स्वयोग्यं पदं स्थानं देहि ।।३९।।

**ऋते भवन्तं न हि [१]तं निहन्ता त्वमेक एवाखिलशक्तिपूर्णः ।**
**ततो भवन्तं शरणं गता वयं तमोनिहत्यै निजबोधविग्रहम् ।।४०।।**

**वादिराजीया–** न हि तं निहन्तेत्यत्र कल्किरूपेण कलिहननं भगवतः प्रसिद्धमिति सूचनाय हिशब्दः ।।

**वरदराजीया–** भवन्तमृते तन्निहन्ता तस्य कलेः निहन्ता । तमिति वा भिन्नं पदम् । तं कलिमित्यर्थः । नास्ति हि यस्मात् त्वमेक एवाखिलया पूर्णया शक्त्या पूर्णः ततः कारणात् वयं निजबोधविग्रहं स्वरूपभूतज्ञानैकदेहं भवन्तं त्वां शरणं गता । किमर्थं तमसो अज्ञानस्य निहत्यै परिहारार्थम् ।।४०।।

**अनन्तभट्टीया–** स्वरूपभूतज्ञानदेहम् ।।४०।।

**जनार्दनीया–** अखिलशक्तिपूर्णो हि यस्मात् तस्मात्तं निहन्ता । भवन्तं ऋते न हि । तमोनिहत्यै अज्ञाननाशाय । निजबोधः स्वरूपज्ञानं विग्रहो देहो यस्य स तथा तम् ।।४०।।

---

१. 'तन्निहन्ता' इति वरदराजीचट्टिटिप्पण्योः पाठान्तरम् ।

अगस्त्यो गजेन्द्रस्येव शिष्याणामेव शापं दद्यात् । निरपराधिवेदशास्त्रद्वेषस्तु कल्यावेशादेवेति भावः । सहशास्त्रसङ्घा इत्यत्र शास्त्रं पञ्चरात्रमूलरामायणादिकम् । वेदानामनादित्वात् वेदानुद्धृत्येत्युक्तम् । वेदशब्देन पञ्चरात्रादिकमपि ग्राह्यम् । पञ्चरात्रस्य सादित्वेऽपि आदिसृष्टौ भगवतैव कृतत्वेन पुनःकरणायोगात् । अत एव न सन्तीत्यस्यापि व्यक्ततया न सन्तीत्यर्थः । शास्त्राणि ब्रह्मसूत्रभारतपुराणादीनि । सम्यक् वेदाद्यर्थेऽपि संशयच्छेदो यथा भवति तथा कुरुष्वेति योजना ।।३८।।

**वरदराजीया–** तेन कलिना शास्त्रसङ्घैः सह वर्तमानाः सर्वे वेदाश्च उत्सादिताः उत्सन्नं कृताः तस्मात् ते वेदाद्याः अद्यास्मिन् काले न सन्ति । अविद्यमानप्रायाः सम्यज्ज्ञानाजनकत्वादित्यर्थः । तत् तस्मात् कारणेन साधु भूमौ अवतीर्य प्रादुर्भूत्वा उत्सन्नान् वेदानुद्धृत्य पाठयोग्यान् कृत्वा सम्यक् निर्णायकानि शास्त्राणि ब्रह्मसूत्रभारतादीनि कुरुष्व ।।३८।।

**जनार्दनीया–** तेन कलिना । ते वेदाद्याः । न सन्ति कदागमैः सम्यज्ज्ञानजनका न भवन्तीत्यर्थः । यद्यस्मात् तस्मात् साधु भूमौ पुण्यहेतुकर्मभुवि । अवतीर्य अवतारं कृत्वा, सम्यक्शास्त्राणि निर्णयरूपब्रह्मसूत्रादिशास्त्राणि ।।३८।।

**चट्टि–** तेन कलिना शास्त्रसङ्घैः सह वर्तमानाः सर्वे वेदाश्च उत्सादिताः उत्सन्नाः कृताः तस्मात् ते वेदाद्याः अस्मिन् काले न सन्ति । अविद्यमानप्रायाः सम्यग्ज्ञानाजनकत्वादित्यर्थः । यद्यस्मात् तस्मात् साधु भूमौ पुण्यहेतुकर्मभुवि अवतीर्य प्रादुर्भूत्वा उत्सन्नान् वेदान् उद्धृत्य पाठयोग्यान् कृत्वा सम्यक् शास्त्राणि निर्णयरूपब्रह्मसूत्रभारतादीनि कुरुष्व ।।३८।।

**अदृश्यमज्ञेयमतर्क्यरूपं कलिं निलीनं हृदयेऽखिलस्य ।**
**सच्छास्त्रशस्त्रेण निहत्य शीघ्रं पदं निजं देहि महाजनस्य ।।३९।।**

**व्यासतीर्थीया–** चक्षुराद्यदृश्यं अज्ञेयमागमेन । तत्वतो जानतो वाक्यं ह्यागमः । तस्यैवाभावात् आगमाभावेनाज्ञेयमित्यर्थः । अतर्क्यं तर्काविषयम् । तत्कार्याज्ञानादिना हि कलिरनुमातव्यः । [तत्कार्यस्यानर्थत्वात् हानिश्च स्यात्]। अतो अतर्क्यम् । महतो मुक्तियोग्यस्य जनस्य ।।३९-४०।।

**वेदाङ्गतीर्थीया–** अदृश्यं च दृशा अज्ञेयम् । अत्र स्थितोऽयमिति ज्ञातुमशक्यम् । अतर्क्यरूपं एतादृशोऽयमिति तर्कितुमशक्यरूपम् ।।३९-४०।।

**वादिराजीया–** मिथ्याज्ञानस्यापि कल्यभिमन्यमानतया कलेरपररूपत्वात् हननमपि देहहनने जीवहननवत् कलेरेव हननमिति भावेनोक्तम्– **सच्छास्त्रशस्त्रेण कलिं निहत्येति** ।। अत एव 'अज्ञानमिथ्यामतिरूपत' इति प्रागुक्तम् ।।३९।।

**वरदराजीया–** ननु सोऽप्येकोऽसुर इति भवद्भिरेव किमिति न निहन्यत इत्याहुरित्याह– **अदृश्यमिति**।। चक्षुषा द्रष्टुमयोग्यत्वादज्ञेयम् । अस्ति कलिरिति ज्ञातुमशक्यम् । अतर्क्यं एतादृश इति तर्कितुमशक्यम् । सर्वस्य जनस्य हृदये मनसि विलीनं छन्नं कलिं सच्छास्त्राख्यशस्त्रेण शीघ्रं निहत्य महाजनस्य मुक्तियोग्यजनस्य निजं स्वस्वयोग्यं पदं स्थानं देहि ।।३९।।

**अनन्तभट्टीया–** अदृश्यं प्रत्यक्षागम्यम् । अज्ञेयं सदागमाभास...[तद्वयम् ] । अतर्क्यं अनुमानागम्यं अज्ञानादिकलिकार्यलिङ्गेन सोऽनुमेयः । तस्मात्...अज्ञाननामकत्वात् । आवेदकप्रमाणाभावेन अज्ञानत्वानिश्चयात् अतर्क्यरूपम् । पदं पद्यते प्राप्यते अनेन...।।३९।।

**जनार्दनीया–** अदृश्यं दृष्ट्यगोचरम् । अत एव अज्ञेयं कुत्राप्यस्तीति ज्ञातुमशक्यम् । अतर्क्यं रूपं यस्य स तथा । अनुमानेन एतादृशरूपवानिति तर्कितुमशक्यमित्यर्थः । अखिलस्य जगतः हृदये मनसि निलीनं गोप्यतया सन्तम् । महाजनस्य भक्तजनस्य ।।३९।।

**ताम्रपर्णीया–** अज्ञेयमागमेन ।।३९-४०।।

**चट्टि–** अदृश्यं द्रष्टुमगोचरम् । अत एव अज्ञेयं अत्रास्तीति ज्ञातुमशक्यम् । अतर्क्यं रूपं यस्य स तथा तम् । अनुमानेन एतादृशरूपवानिति तर्कितुमशक्यमित्यर्थः । अखिलस्य जनस्य हृदये मनसि निलीनं गोप्यतया सन्तं कलिं सच्छास्त्राख्यशस्त्रेण शीघ्रं निहत्य महाजनस्य भक्तजनस्य निजं स्वयोग्यं पदं स्थानं देहि ।।३९।।

**ऋते भवन्तं न हि [१]तं निहन्ता त्वमेक एवाखिलशक्तिपूर्णः ।**
**ततो भवन्तं शरणं गता वयं तमोनिहत्यै निजबोधविग्रहम् ।।४०।।**

**वादिराजीया–** न हि तं निहन्तेत्यत्र कल्किरूपेण कलिहननं भगवतः प्रसिद्धमिति सूचनाय हिशब्दः ।।

**वरदराजीया–** भवन्तमृते तन्निहन्ता तस्य कलेः निहन्ता । तमिति वा भिन्नं पदम् । तं कलिमित्यर्थः । नास्ति हि यस्मात् त्वमेक एवाखिलया पूर्णया शक्त्या पूर्णः ततः कारणात् वयं निजबोधविग्रहं स्वरूपभूतज्ञानैकदेहं भवन्तं त्वां शरणं गता । किमर्थं तमसो अज्ञानस्य निहत्यै परिहारार्थम् ।।४०।।

**अनन्तभट्टीया–** स्वरूपभूतज्ञानदेहम् ।।४०।।

**जनार्दनीया–** अखिलशक्तिपूर्णो हि यस्मात् तस्मात्तं निहन्ता । भवन्तं ऋते न हि । तमोनिहत्यै अज्ञाननाशाय । निजबोधः स्वरूपज्ञानं विग्रहो देहो यस्य स तथा तम् ।।४०।।

---

१. 'तन्निहन्ता' इति वरदराजीचट्टिटिप्पण्योः पाठान्तरम् ।

अगस्त्यो गजेन्द्रस्येव शिष्याणामेव शापं दद्यात् । निरपराधिवेदशास्त्रद्वेषस्तु कल्यावेशादेवेति भावः । सहशास्त्रसङ्घा इत्यत्र शास्त्रं पञ्चरात्रमूलरामायणादिकम् । वेदानामनादित्वात् वेदानुद्धृत्येत्युक्तम् । वेदशब्देन पञ्चरात्रादिकमपि ग्राह्यम् । पञ्चरात्रस्य सादित्वेऽपि आदिसृष्टौ भगवतैव कृतत्वेन पुनःकरणायोगात् । अत एव न सन्तीत्यस्यापि व्यक्ततया न सन्तीत्यर्थः । शास्त्राणि ब्रह्मसूत्रभारतपुराणादीनि । सम्यक् वेदाद्यर्थेऽपि संशयच्छेदो यथा भवति तथा कुरुष्वेति योजना ।।३८।।

**वरदराजीया–** तेन कलिना शास्त्रसङ्घैः सह वर्तमानाः सर्वे वेदाश्च उत्सादिताः उत्सन्नं कृताः तस्मात् ते वेदाद्याः अद्यास्मिन् काले न सन्ति । अविद्यमानप्रायाः सम्यज्ज्ञानाजनकत्वादित्यर्थः । तत् तस्मात् कारणेन साधु भूमौ अवतीर्य प्रादुर्भूत्वा उत्सन्नान् वेदानुद्धृत्य पाठयोग्यान् कृत्वा सम्यक् निर्णायकानि शास्त्राणि ब्रह्मसूत्रभारतादीनि कुरुष्व ।।३८।।

**जनार्दनीया–** तेन कलिना । ते वेदाद्याः । न सन्ति कदागमैः सम्यज्ज्ञानजनका न भवन्तीत्यर्थः । यद्यस्मात् तस्मात् साधु भूमौ पुण्यहेतुकर्मभुवि । अवतीर्य अवतारं कृत्वा, सम्यक्शास्त्राणि निर्णयरूपब्रह्मसूत्रादिशास्त्राणि ।।३८।।

**चट्टि–** तेन कलिना शास्त्रसङ्घैः सह वर्तमानाः सर्वे वेदाश्च उत्सादिताः उत्सन्नाः कृताः तस्मात् ते वेदाद्याः अस्मिन् काले न सन्ति । अविद्यमानप्रायाः सम्यग्ज्ञानाजनकत्वादित्यर्थः । यद्यस्मात् तस्मात् साधु भूमौ पुण्यहेतुकर्मभुवि अवतीर्य प्रादुर्भूत्वा उत्सन्नान् वेदान् उद्धृत्य पाठयोग्यान् कृत्वा सम्यक् शास्त्राणि निर्णयरूपब्रह्मसूत्रभारतादीनि कुरुष्व ।।३८।।

**अदृश्यमज्ञेयमतर्क्यरूपं कलिं निलीनं हृदयेऽखिलस्य ।**
**सच्छास्त्रशस्त्रेण निहत्य शीघ्रं पदं निजं देहि महाजनस्य ।।३९।।**

**व्यासतीर्थीया–** चक्षुराद्यदृश्यं अज्ञेयमागमेन । तत्वतो जानतो वाक्यं ह्यागमः । तस्यैवाभावात् आगमाभावेनाज्ञेयमित्यर्थः । अतर्क्यं तर्काविषयम् । तत्कार्याज्ञानादिना हि कलिरनुमातव्यः । [तत्कार्यस्यानर्थत्वात् हानिश्च स्यात्]। अतो अतर्क्यम् । महतो मुक्तियोग्यस्य जनस्य ।।३९-४०।।

**वेदाङ्गतीर्थीया–** अदृश्यं च दृशा अज्ञेयम् । अत्र स्थितोऽयमिति ज्ञातुमशक्यम् । अतर्क्यरूपं एतादृशोऽयमिति तर्कितुमशक्यरूपम् ।।३९-४०।।

**वादिराजीया–** मिथ्याज्ञानस्यापि कल्यभिमन्यमानतया कलेरपररूपत्वात् हननमपि देहहनने जीवहननवत् कलेरेव हननमिति भावेनोक्तम्– **सच्छास्त्रशस्त्रेण कलिं निहत्येति** ।। अत एव 'अज्ञानमिथ्यामतिरूपत' इति प्रागुक्तम् ।।३९।।

**वरदराजीया–** ननु सोऽप्येकोऽसुर इति भवद्भिरेव किमिति न निहन्यत इत्याहुरित्याह– **अदृश्यमिति**।। चक्षुषा द्रष्टुमयोग्यत्वादज्ञेयम् । अस्ति कलिरिति ज्ञातुमशक्यम् । अतर्क्यं एतादृश इति तर्कितुमशक्यम् । सर्वस्य जनस्य हृदये मनसि विलीनं छन्नं कलिं सच्छास्त्राख्यशस्त्रेण शीघ्रं निहत्य महाजनस्य मुक्तियोग्यजनस्य निजं स्वस्वयोग्यं पदं स्थानं देहि ।।३९।।

**अनन्तभट्टीया–** अदृश्यं प्रत्यक्षागम्यम् । अज्ञेयं सदागमाभास...[तद्वयम् ] । अतर्क्यं अनुमानागम्यं अज्ञानादिकलिकार्यलिङ्गेन सोऽनुमेयः । तस्मात्...अज्ञाननामकत्वात् । आवेदकप्रमाणाभावेन अज्ञानत्वानिश्चयात् अतर्क्यरूपम् । पदं पद्यते प्राप्यते अनेन...।।३९।।

**जनार्दनीया–** अदृश्यं दृष्ट्यगोचरम् । अत एव अज्ञेयं कुत्राप्यस्तीति ज्ञातुमशक्यम् । अतर्क्यं रूपं यस्य स तथा । अनुमानेन एतादृशरूपवानिति तर्कितुमशक्यमित्यर्थः । अखिलस्य जगतः हृदये मनसि निलीनं गोप्यतया सन्तम् । महाजनस्य भक्तजनस्य ।।३९।।

**ताम्रपर्णीया–** अज्ञेयमागमेन ।।३९-४०।।

**चट्टि–** अदृश्यं द्रष्टुमगोचरम् । अत एव अज्ञेयं अत्रास्तीति ज्ञातुमशक्यम् । अतर्क्यं रूपं यस्य स तथा तम् । अनुमानेन एतादृशरूपवानिति तर्कितुमशक्यमित्यर्थः । अखिलस्य जनस्य हृदये मनसि निलीनं गोप्यतया सन्तं कलिं सच्छास्त्राख्यशस्त्रेण शीघ्रं निहत्य महाजनस्य भक्तजनस्य निजं स्वयोग्यं पदं स्थानं देहि ।।३९।।

**ऋते भवन्तं न हि [१]तं निहन्ता त्वमेक एवाखिलशक्तिपूर्णः ।**
**ततो भवन्तं शरणं गता वयं तमोनिहत्यै निजबोधविग्रहम् ।।४०।।**

**वादिराजीया–** न हि तं निहन्तेत्यत्र कल्किरूपेण कलिहननं भगवतः प्रसिद्धमिति सूचनाय हिशब्दः ।।

**वरदराजीया–** भवन्तमृते तन्निहन्ता तस्य कलेः निहन्ता । तमिति वा भिन्नं पदम् । तं कलिमित्यर्थः । नास्ति हि यस्मात् त्वमेक एवाखिलया पूर्णया शक्त्या पूर्णः ततः कारणात् वयं निजबोधविग्रहं स्वरूपभूतज्ञानैकदेहं भवन्तं त्वां शरणं गता । किमर्थं तमसो अज्ञानस्य निहत्यै परिहारार्थम् ।।४०।।

**अनन्तभट्टीया–** स्वरूपभूतज्ञानदेहम् ।।४०।।

**जनार्दनीया–** अखिलशक्तिपूर्णो हि यस्मात् तस्मात्तं निहन्ता । भवन्तं ऋते न हि । तमोनिहत्यै अज्ञाननाशाय । निजबोधः स्वरूपज्ञानं विग्रहो देहो यस्य स तथा तम् ।।४०।।

---

१. 'तन्निहन्ता' इति वरदराजीचट्टिटिप्पण्योः पाठान्तरम् ।

**चट्टि–** भवन्तं ऋते तन्निहन्ता तस्य कलेर्निहन्ता । तमिति भिन्नं वा पदम् । कलिमित्यर्थः । नास्ति हि यस्मात् त्वमेक एव अखिलया सम्पूर्णया शक्त्या पूर्णः । ततः कारणात् वयं निजबोधविग्रहं स्वरूपभूतज्ञानैकदेहं भवन्तं त्वां तमोनिहत्यै अज्ञाननाशाय शरणं आश्रयं गताः ।।४०।।

**इतीरितस्तैरभयं प्रदाय सुरेश्वराणां परमोऽप्रमेयः ।**
**प्रादुर्बभूवामृतभूरिलायां विशुद्धविज्ञानघनस्वरूपः ।।४१।।**

**व्यासतीर्थीया–** प्रादुरेव प्रादुर्बभूव न तु जातः । तत्र हेतुरमृतभूर्मुक्ताश्रय इति ।।४१-४७।।

**वेदाङ्गतीर्थीया–** अमृतभूः अमृततया मरणरहिततया भवति प्रादुर्भवतीति अमृतभूः । अप्राकृतदेह इति भावः । अमृतभूरित्येतदेव विवृणोति– **विशुद्धेति** ।।४१।।

**वादिराजीया–** भगवतः साक्षात् जन्माभावसूचनाय अमृतभूः प्रादुर्बभूव चेत्युक्तम् । अमृतभूः मुक्ताश्रय इत्यर्थः । भगवतो जनने तदुदरगतानां मुक्तानामपि पुनर्भवः स्यादिति भावः ।।४१-४३।।

**वरदराजीया–** परम उत्कृष्टः प्रमातुमशक्यो हरिरित्युक्तप्रकारेण तैर्देवैरुदितः प्रार्थितः सन् सुरेश्वराणां अभयं प्रदाय न भेत्तव्यमित्युक्त्वा अमृतस्य मोक्षस्य भूराश्रयः । विशुद्धविज्ञानघनं निर्दोषविज्ञानैकसंस्थं रूपं यस्य सः तादृशो हरिरिलायां भूमौ प्रादुर्बभूव न तूत्पन्नः ।।४१।।

**अनन्तभट्टीया–** अमृतभूः मुक्ताश्रयः ।।४१।।[१]

**जनार्दनीया–** तैः देवैः । अमृतानां क्षयरहितानन्दादिगुणानां, भूराश्रयः मुक्ताश्रयो वा । विशुद्धं अज्ञानलेशरहितं, विज्ञानेन विशेषज्ञानेन घनं पूर्णस्वरूपं यस्य स तथा । यद्वा विशुद्धेति विज्ञानविशेषणं आद्यन्तरहितत्वं च तस्यार्थः । इलायां भुवि प्रादुर्बभूव प्रकटोऽभूत् ।।४१।।

**ताम्रपर्णीया–** अमृतभूः मृतिजन्मरहितः मुक्ताश्रयो वा ।।४१-४२।।

**भारतश्री–** ...स कृष्णः प्रादुर्बभूवेति ।।४१।।

**चट्टि–** परमः उत्कृष्टः अप्रमेयः प्रमातुमशक्यः हरिः इति उक्तप्रकारेण तैः देवैः ईरितः प्रार्थितः सन् सुरेश्वराणां अभयं प्रदाय न भेत्तव्यमित्युक्त्वा अमृतानां क्षयरहितानन्दादिगुणानां भूराश्रयः मुक्ताश्रयो वा । विशुद्धेन अज्ञानलेशरहितेन विज्ञानेन विशेषज्ञानेन घनं पूर्णं स्वरूपं यस्य स तथा । तादृशो हरिः इलायां भूमौ प्रादुर्बभूव । 'अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने । अयाचिते जले दुग्धे मोक्षे हेम्नि च गोरसे ।।' इति यादवः ।।४१।।

---

१. **अनन्तभट्टीया–** अमृतभूरिति मृतिजन्मरहित इत्यर्थः । केचित्तु मुक्ताश्रय इत्यर्थमाहुः । अयं. हो.पुस्तकपाठः ।

**वसिष्ठनामा कमलोद्भवात्मजः सुतोऽस्य शक्तिस्तनयः [1]पराशरः ।**
**तस्योत्तमं सोऽपि तपोऽचरद्धरिः [2]सुतो मम स्यादिति तद्धरिर्ददौ ।।४२।।**

**वेदाङ्गतीर्थीया–** कुत्र प्रादुर्भाव इत्यत्र तत्पितृमातृवंशं निरूपयति– **वसिष्ठेत्यादिना** ।।४२।।

**वरदराजीया–** इलायामपि कस्य वंशे प्रादुर्भूत इत्यपेक्षायामाह– **वसिष्ठेत्यादिना ।। कमलोद्भवस्य** ब्रह्मण आत्मजः पुत्रो वसिष्ठनामा वसिष्ठाभिधेयो बभूवेत्यर्थः । अस्य वसिष्ठस्य सुतः शक्तिर्नाम, तस्य शक्तेः तनयः पराशरो नाम, सोऽपि पराशरोऽपि उत्तमं तपोऽचरत् । केनाभिप्रायेण हरिः मम सुतः स्यादित्यभिप्रायेण इत्यर्थः । तत्सुतत्वं हरिः ददौ ।।४२।।

**अनन्तभट्टीया–** अस्य सुतः शक्तिः । तस्य तनयः पराशरः ।।४२।।

**जनार्दनीया–** यथा स्तम्भे प्रादुर्भावः तथा इलायां किमित्यत आह– **वसिष्ठेति ।। कमलोद्भवात्मजः** ब्रह्मपुत्रो वसिष्ठनामा । अस्य वसिष्ठस्य सुतः शक्तिः शक्तिनामा, तस्य शक्तिनाम्नः तनयः पुत्रः परशरः, स पराशरः हरिरपि हरिरेव मम सुतः स्यादिति तपोऽचरत् । हरिः तत् तदभीष्टं ददौ ।।४२।।

**भावचन्द्रिका–** ।। **कमलेति** ।। 'ब्रह्मणो मानसः पुत्रो वसिष्ठोऽरुन्धतीपतिः' इति भारते [आदि.१९०.५] । शक्तिमत्वात् शक्तिः । परेण वसिष्ठेन अशरः असितः पराशरः । 'परासुः स यतस्तेन वसिष्ठस्स्थापितो मुनिः । गर्भस्थेन ततो लोके पराशर इति स्मृतः ।।' इति च [आदि.१९४.३] ।।

---

१. पराशरमाधवीये प्रथमाध्याये ८ श्लोकव्याख्यावसरे पराशरशब्दनिर्वचनमनेन प्रकारेण निरूपितम् । पराकृताः शराः यस्मात् राक्षसानां वधार्थिनाम् । अतः पराशरो नाम ऋषिरुक्तो मनीषिभिः ।। परस्य कामदेवस्य शराः सम्मोहनादयः । न विद्यन्ते यतस्तेन ऋषिरुक्तः पराशरः ।। परेषु पापचित्तेषु नादत्ते कोपलक्षणम् । शरं यस्मात् ततः प्रोक्तः ऋषिरेष पराशरः ।। परं मातुर्निजाया यदुदरं तदयं यतः । ऋचमुच्चार्य निर्भिद्य निरगात् स पराशरः ।।

२. 'पराशरो जजापैनं भक्त्याऽचारेण सादरम् । जातोऽसौ परमाचार्यो मुकुन्दे भक्तिमान् मुनिः ।। मुकुन्दभजनात्तस्य पुत्रो व्यासो महामुनिः । यतो धर्मो यतो ज्ञानं यतो भक्तिः प्रवर्तते ।। पाराशर्यात् प्रवृत्ताऽभूत् भक्तेः सरणिरुत्तमा । ज्ञानवैराग्यसम्पूर्णा वेदवेदान्तसम्मिता ।।' इति शाण्डिल्यसंहिता.भक्तिखण्डे.४.३६-३८ ।

पराशरऋर्षिर्भूप ध्यायन्नारायणं प्रभुम् । वर्षाणां च सहस्रं हि चचार तप उत्तमम् ।।४८।। ...श्रीभगवानुवाच- पराशर मुनिश्रेष्ठ प्रीतोऽस्मि तपसा तव । वरं वरय भद्रं ते वरदोऽहमिहागतः ।।६४।। श्रीपराशरः- देव देवारविन्दाक्ष वरान् दातुं त्वमिच्छसि । यदि तुष्टोऽसि भगवन् मत्पुत्रो भव सुव्रत ।।६५।। श्रीभगवानुवाच- वहामि तव पुत्रभावं च ऋषीणां ज्ञानसिद्धये ।... ।।६६।। ...यदा तु गौतमो नाम ऋषीणां ज्ञानलुप्तये ।।६९।। शपिष्यति तदाहं ते पुत्रभावं वहामि वै । गौतमस्य ऋषेश्शापात् ज्ञाने त्वज्ञानतां गते ।।७०।। तदा मुनीनां सर्वेषां ज्ञानदश्च भवाम्यहम् । पराशरमुनिश्रेष्ठ स्वस्ति तेऽस्तु भविष्यति ।।७१।। इति ब्रह्माण्डपुराणान्तर्गतकरिगिरिमाहात्म्ये द्वितीयाध्याये ।

**चट्टि–** इलायां कस्य वंशे प्रादुर्बभूवेत्यपेक्षायामाह– **वसिष्ठेत्यादिना** ।। कमलोद्भवात्मजः ब्रह्मपुत्रो वसिष्ठनामा । अस्य वसिष्ठस्य सुतः शक्तिः शक्तिनामा । तस्य शक्तेस्तनयः पराशरः हरिरपि हरिरेव मम सुतः स्यादित्युत्तमं तपः अचरत् । हरिः तत् तदभीष्टं ददौ ।।४२।।

**उवाच चैनं भगवान् सुतोषितो वसोर्मदीयस्य सुताऽस्ति शोभना ।**
**वने मृगार्थं चरतोऽस्य वीर्यं पपात भार्यां मनसा गतस्य ।।४३।।**

**वेदाङ्गतीर्थीया–** एनं पराशरम् । मदीयस्य मद्भक्तस्य वसोः वसुनाम्नो राज्ञः ।।४३।।

**वरदराजीया–** सुतोषितस्तपसात्यन्तं सन्तुष्टो भगवानेनं पराशरं प्रति उवाच । किमिति । मदीयस्य मद्भक्तस्य वसोः वसुनामकस्य राज्ञः शोभना पुण्याधिका सुता कन्या अस्ति । सा वसोः कथं सुतेत्यत आह– **वन इति** ।। वने मृगार्थं मृगान्वेषणार्थं चरतो गच्छतो अस्य वसोः भार्यां पत्नीं मनसा गतस्य स्मरतो वीर्यं रेतः पपात । यमुनाजल इति शेषः ।।४३।।

**अनन्तभट्टीया–** मदीयस्येत्यनेन वसोः स्वभक्तत्वं सूचितम् । वीर्यं रेतः । अस्य वसोः ।।४३।।

**जनार्दनीया–** उवाच चैनमितिश्लोकचतुष्टयस्य सम्बन्धः । सुतोषितः पराशरेण तपसा सन्तोषं प्रापितः । सन्तुष्ट इति यावत् । भगवान् एनं पराशरं उवाच । किमिति ? मदीयस्य मद्भक्तस्य वसोः वसुराजस्य शोभना पुण्यकर्मवती या सुता अस्ति । अतीवात्यन्तं सुरूपेण सुन्दररूपेण युक्ता कन्या केनापि पाणिग्रहणकर्मरहिता सा । दाशानां नाविकानां राज्ञः दाशनायकस्य इत्यर्थः । सद्मनि गृहे अवर्धत ववृधे । सा वसुसुता नाम्ना सत्यवतीति प्रसिद्धा । अहं अजोऽपि जन्मरहितोऽपि तस्यां सत्यवत्यां तवात्मजो भवितास्मि भविष्यामीति योजना । ननु वसुसुता दाशगृहे किमर्थं अवर्धतेत्यतस्तदुत्पत्तिपूर्वकं कथामाह– **वनेति** ।। वने मृगार्थं मृगहननार्थं चरतो भ्रमतः अस्य वसोः वीर्यं रेतः पपात स्कन्दितम् । कथम्भूतस्य । भार्यां मनसा गतस्य प्राप्तस्य । स राजा तस्यै भार्यायै तद्वीर्यं दातुं, श्येनस्य पक्षिविशेषस्य हस्ते प्रददौ । अन्येन श्येनेन युध्यतः युद्धं कुर्वतः वसुराजस्य श्येनात् तद्वीर्यं अपतत् । यमुनाजले इति शेषः । मत्स्यवधूः मीनस्त्री यमस्वसुर्यमुनायाः जलस्थतद्वीर्यं जग्रास । एनां मत्स्यवधूं दाशाः जगृहुः । तस्याः मत्स्यवध्वाः गर्भतः मिथुनं कन्यापुत्रात्मकं युग्मं अभूत् । स्वराज्ञे स्वस्वामिने दाशाय न्यवेदयन् समर्पयामासुः । दाशाः मिथुनमिति शेषः: । सोऽपि दाशनायकः वसोः समर्पयत् । स वसुः स्वयं पुत्रं समादाय, सुतां तस्मै दाशनायकाय ददौ । सुतः वसुसुतः मत्स्याख्यो राजा अभूदिति चतुःश्लोकान्वयः ।।४३-४६।।

**ताम्रपर्णीया–** ।। **वसोर्मदीयस्येति** ।। कार्तयुगजनवत् वसोरनन्ययाजित्वेन स्वान्तरङ्गत्वद्योतनाय मदीयस्येत्युक्तम् । तदुक्तं आथर्वणभाष्ये । 'अग्निष्टोमादिभिः यज्ञैः सर्वदेवस्थितं हरिम् । यजन्ति तांश्च कारित्वात् वसुस्तस्मात् तथाऽयजत्' इति ।।४३-४६।।

**अतिविशद–** वने मृगार्थमित्यारभ्य विव्यास वेदानित्यादौ आदिपर्ववचनम् । तथाहि–
चचार मृगयां कामी गिरिकामेव संस्मरन् । अतीव रूपसम्पन्नां साक्षाच्छ्रियमिवापराम् ।।
तस्य रेतः प्रचस्कन्द चरतो विपिने वने । स्कन्दमानं तु तद्रेतो वृक्षपत्रेण भूमिपः ।।
प्रतिजग्राह मिथ्या मे स्कन्देद्रेत इत्युत । ऋतुश्च तस्याः पत्न्या मे न मोघः स्यादिति प्रभुः ।।
सञ्चिन्त्यैवं तदा राजा विचार्य च पुनः पुनः । अमोघत्वञ्च विज्ञाय रेतसो राजसत्तमः ।।
शुक्रप्रस्थापने कालं महिष्याः प्रसमीक्ष्य सः । अभिमन्त्र्याथ तच्छुक्रं आरान्निष्ठं तमाशुगम् ।।
सूक्ष्मधर्मार्थतत्वज्ञो ज्ञात्वा श्येनमथाब्रवीत् । मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय ।।
गिरिकायै प्रयच्छाशु तस्याः ह्यर्थितमद्य वै । गृहीत्वा तु तदा श्येनः तूर्णमुत्पत्य वेगवान् ।।
जवं परममास्थाय प्रदुद्राव विहङ्गमः । तमपश्यत्तथा यान्तं श्येनं श्येनस्तथापरः ।।
अभ्यद्रवच्च संहृष्टो दृष्ट्वैवाम..शङ्कया । तुण्डयुद्धं तदाकाशे तावुभौ तु प्रचक्रतुः ।।
युध्यतोरपतद्रेतस्तच्चापि यमुनाम्भसि । तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सरा ।।
मीनभावमनुप्राप्ता बभूव यमुनाचरी । श्येनेनाथ परिभ्रष्टं तद्वीर्यमथ वासवम् ।।
जग्राह तरसोपेत्य अद्रिका मत्स्यरूपिणम् । कदाचिदथ मत्सीं तां बबन्धुर्मत्स्यजीविनः ।।
मासेऽथ दशमे प्राप्ते तदा भरतसत्तम । उज्जहुरुदरात्तस्याः स्त्रीपुमांसञ्च मानुषम् ।।
आश्चर्यभूतं मत्वा च राज्ञस्ते प्रत्यवेदयन् । काये मत्स्याविमौ राजन् सम्भूतौ मानुषाविति ।।
तयोः पुमांसं जग्राह राजोपरिचरस्तदा । स मत्स्यो नाम राजासीत् धार्मिकः सत्यसङ्गरः ।।
साप्सरा मुक्तशापा च क्षणेन समपद्यत । पुरोक्ता या भगवता तिर्यग्योनिं गता शुभा ।।
मानुषो जनयित्वा च शापमोक्षमवाप्स्यसि । अतः सा जनयित्वा तौ विशस्ता मत्स्यघातिना ।।
सन्त्यज्य मत्स्यरूपं सा दिव्यरूपमवाप च । सिद्धर्षिचारणपथं जगामाथ वराप्सराः ।।
सा कन्या दुहिता मत्स्या तस्याः सम्भूतगन्धिनी । राज्ञा दत्ताऽथ दाशाय इयं तव भवत्विति ।।
रूपसत्वसमायुक्ता सर्वैः समुदिता गुणैः । सा तु सत्यवती नाम मत्स्यघाताभिसंश्रयात् ।।
आसीन्मत्स्यसगन्धैव किञ्चित्कालं शुचिस्मिता । शुश्रूषार्थं पितुर्नावं तां तु वाहयती जले ।।
तीर्थयात्रां परिभ्रमन् अपश्यद्वै पराशरः । अतीवरूपसम्पन्नां सिद्धानामपि काङ्क्षिताम् ।।
दृष्ट्वैव च स तां चकमे चारुहासिनीम् । विद्वांस्तां कामिनीं कन्यां..मुनिपुङ्गवः ।।
सङ्गमं मम कल्याणी कुरुष्वेत्यभ्यभाषत । साऽब्रवीत् पश्य भगवन् पारावरमुपस्थितान् ।।

आवयोर्दृश्यते एभिः कथं तु स्यात् समागमः । एवं तयोक्तो भगवान् नीहारमसृजत्ततः ।।
येन देशः स सर्वस्तु तमोभूत इवाभवत् । दृष्ट्वा सृष्टं तु नीहारं ततस्तं परमर्षिणा ।।
विस्मिता चाब्रवीत् कन्या व्रीडिता च मनस्विनी । विद्धि मां भगवन् कन्यां सदा पितृवशानुगाम् ।।
त्वत्संयोगात्तु दुष्येत कन्याभावो ममानघ । कन्यात्वे दूषिते चापि कथं शक्ये द्विजोत्तम ।।
गन्तुं पितृगृहे चाहं धीमन्न स्थातुमुत्सहे । एतत्सञ्चिन्त्य भगवन् विधत्स्व यदनन्तरम्।।
एवमुक्तवतीं तां तु प्रीतिमानृषिसत्तमः । उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि ।।
वृणीष्व च वरं भीरु यत्त्वमिच्छसि भामिनि । वृथाहि न प्रसादो मे भूतपूर्वः शुचिस्मिता ।।
एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् । स चास्यै भगवान् प्रादान्मनसा काङ्क्षितं प्रभुः ।।
ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता । जगाम सह संसर्गं ऋषिणाद्भुतकर्मणा ।।
तेन गन्धवतीत्येव नामास्याः प्रथितं भुवि । तस्यास्तु योजनागन्धं आजिघ्रंस्तु नरो भुवि ।।
अतो योजनगन्धेति नाम तस्याः परिश्रुतम् । पराशरोऽपि भगवान् जगाम स्वं निवेशनम् ।।
इति सत्यवती हृष्टा सा लब्ध्वा वरमुत्तमम् । पराशरेण संयुक्ता सद्योगर्भमवाप सा ।।
जज्ञे च यमुना द्वीपे पाराशर्यः सः वीर्यवान् । स मातरमुपास्थाय तपस्येव मनो दधे ।।
स्मृत्वाहं दर्शयिष्यामि कृत्वेष्विति वचोऽब्रुवन् । एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ।।
द्वीपे न्यस्तः स यद्बालः तस्मात् द्वैपायनोऽभवत् । पादापसारिणं धर्मं विद्वांस्तत्र युगे युगे ।।
आयुः शक्तिं च मर्त्यानां युगावस्थामवेक्ष्य च । ब्राह्मणो ब्राह्मणानाश्च तथानुग्रहकाम्यया ।।
विव्यास वेदान् यस्मात् स तस्मात् व्यास इति स्मृतः ।। इति ।।४३-७६।।

**भावचन्द्रिका–** चेदीनामधिपो इन्द्रदत्तविमानेनान्तरिक्षादिचर इत्युपरिचरवसुः ।। **पपातेति** ।। अयं ऋतुकाल इति गिरिकाया भार्याया प्रेषणेऽपि मृगयासक्त्या गृहानागमनेन ।।४३।।

**चट्टि–** उवाच चैनमिति श्लोकचतुष्टयस्य सम्बन्धः । भगवान् सुतोषितः पराशरेण तपसा सन्तोषं प्रापितः, सन्तुष्ट इति यावत् । एनं पराशरं उवाच । किमिति । मदीयस्य मद्भक्तस्य वसोः वसुनामकस्य राज्ञः शोभना गुणाधिका या सुता अस्ति अतीवात्यन्तं सुरूपेण सुन्दररूपेण युक्ता कन्या केनापि पाणिग्रहणकर्मरहिता नाम्ना सत्यवती इति प्रसिद्धा सा दाशराजस्य सद्मन्यवर्धत ववृधे । अहमजोऽपि जन्मरहितोऽपि तस्यां सत्यवत्यां तवात्मजः भवितास्मि भविष्यामीति योजना । ननु वसुसुता दाशराजगृहे किमर्थमवर्धतेत्यतस्तदुत्पत्तिपूर्वककथामाह– **वनेति** ।। वने मृगार्थं मृगहननार्थं चरतः भ्रमतः मनसा भार्यां गतस्य प्राप्तस्य अस्य वसोः वीर्यं रेतः पपात स्कन्दितम् ।।४३।।

**तच्छ्येनहस्ते प्रददौ स तस्यै दातुं तदन्येन तु युद्ध्यतोऽपतत् ।**
**जग्रास तन्मत्स्यवधूर्यमस्वसुर्जलस्थमेनां जगृहुः स्म दाशाः ।।४४।।**

**वेदाङ्गतीर्थीया–** तस्यै स्वभार्यायै । अन्येन युध्यतः तद्वीर्यमपतत् । यमस्वसुर्जले इति शेषः । यमस्वसुर्जलस्थं तन्मत्स्यवधूर्जग्रास ।।४४-४९।।

**वादिराजीया–** तदन्येन तु युध्यत इत्यत्र अन्येन श्येनेन तु विशेषेण युध्यतः तुण्डमात्रयुद्धं विना हस्तपक्षाभ्यां सह युध्यत इत्यर्थः । यमस्वसुः यमुनायाः । जलस्थं तद्वीर्यं मत्स्यवधूर्जग्रासेति सम्बन्धः । अनेन श्येनश्येनयोर्युद्धमपि यमुनाजलस्योपरिस्थाम्बरप्रदेश इति सूचितम् ।।४४।।

**मधुसूदनीया–** ।। **जग्राह तन्मत्स्यवधूरिति** ।। मत्स्यवधू पूर्वं अद्रिकेति ज्ञेयम् । तदुक्तम्– 'तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सरा । मीनभावमनुप्राप्ता बभूव यमुनाचरी ।। मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि ।।' इति हरिवंशे[1] ।। **दाशा इति** ।। निषादायां ब्राह्मणाज्जाताः दारूपजीविनो दाशा इत्यर्थः । तदुक्तम्– 'निषादायां ब्रह्मजातं दाशं दारूपजीविनम् । भृतचेतः प्रतिच्छन्नं हीनभाजनभोजनम्।।' इत्याद्यनुशासनपर्वणि ।।४४-५३।।

**वरदराजीया–** ननु वनस्थितस्य राज्ञो रेतः जले कथं पपात इत्यतस्तद्वदते– **तदिति** ।। स राजा तस्यै स्वभार्यायै तद्रेतो दातुं श्येनपक्षिणो हस्ते ददौ । तद्रेतो अन्येन श्येनेन सह युद्ध्यतो युद्धं कुर्वतो अस्य श्येनस्य हस्तात् जले पपात । यमस्वसुः भगिन्याः यमुनाया जले स्थितं तद्रेतो मत्स्यवधूः कस्यचिन्मत्स्यस्य स्त्रीजग्राह निजगार ।।४४।।

**अनन्तभट्टीया–** तद्वीर्यं अन्येन श्येनेन । जलस्थं तत् ।।४४।।

**भावचन्द्रिका–** युध्यतः रक्ताशोकपुष्पाच्छादितं मांसबुद्ध्या युद्ध्यतः ।'तत्राद्रिकेत्यभिमता ब्रह्मशापाद्वराप्सराः । मीनभावमनुप्राप्ता बभूव यमुनाचरी ।।'[आदि.६४.७३-७४] 'पुरोक्ता सा भगवता तिर्यग्योनिगता तु वै । मानुषौ जनयित्वा तु मुक्तशापा भविष्यसि ।।' [आदि.६४.७९-८०] इति भारतवचनात् मत्स्यवधूस्वरूपं ज्ञेयम् । अद्रिका प्रागप्युपरिचरवसुसहचारिणी विमाने । अतो रेतःपात्रत्वम् । जगृहुः दशमे मासि ।।४३।।

**चट्टि–** स राजा तद्वीर्यं तस्यै भार्यायै दातुं श्येनस्य पक्षिविशेषस्य हस्ते प्रददौ । अन्येन श्येनेन युद्धतो युद्धं कुर्वतः वसुराजश्येनात् तद्वीर्यं अपतत् । यमुनाजल इति शेषः । मत्स्यवधूः मीनस्त्री यमस्वसुर्यमुनायाः जलस्थं तद्वीर्यं जग्रास निजगार । मत्स्यवधूः पूर्वमद्रिकेति ध्येयम् । तदुक्तम्– 'तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सरा । मीनभावमनुप्राप्ता बभूव यमुनाचरी ।। मानुषो जनयित्वा त्वं शापमोक्षमवाप्स्यसि ।।' इति हरिवंशे । एनां मच्छवधूं दाशाः नाविका जगृहुः धृतवन्तः । दाशा

---

१. एतत्समानानुपूर्वीकश्लोकाः महाभारते.१.६४.१११. उपलभ्यन्ते न तु हरिवंशे ।

इत्यत्र निषादायां ब्राह्मणाज्जाताः दारूपजीविनो दाशा इत्यर्थः । तदुक्तम्– 'निषादायां ब्रह्मजातं दाशं दारूपजीविनम् । भृतचेतः प्रतिच्छन्नं हीनभाजनभोजनम् ।।' इत्याद्यनुशासने ।।४४।।

**तद्गर्भतोऽभून्मिथुनं स्वराज्ञे न्यवेदयन् सोऽपि वसोः समर्पयत् ।**
**पुत्रं समादाय[१] सुतां स तस्मै ददौ सुतोऽभूदथ मत्स्यराजः ।।४५।।**

**वादिराजीया–** स्वराज्ञे न्यवेदयन्नित्यत्र ते दाशाः स्वराज्ञे दाशराजाय न्यवेदयन्निति योजना । राजत्वमुपचरितमिति सूचनाय स्वराज्ञ इति छान्दसप्रयोगः । अथ तस्मात् कारणात् मत्स्यवधूदेहोत्पन्नत्वादित्यर्थः । मत्स्यराजः मत्स्यसम्बन्धी राजा मत्स्यराज इति मध्यमपदलोपी समासः ।।४५।।

**वरदराजीया–** एनां मत्स्यवधूं दाशाः नाविकाः जगृहुः धृतवन्तः । तस्य मत्स्यवध्वा गर्भतो मिथुनं यमजमभूत् तन्मिथुनं स्वराज्ञे दाशराजाय न्यवेदयन् दाशाः समर्पयामासुः । सोऽपि दाशराजोऽपि वसोः राज्ञः समर्पयत् समर्पयामास दत्तवान् । सः वसुः तयोः मध्ये पुत्रं पुमांसं स्वयं समादायावशिष्टां सुतां तस्मै दाशराजाय ददौ । अथानन्तरं स वसोः सुतो मत्स्यराज इति प्रसिद्धोऽभूदित्यर्थः ।।४५।।

**अनन्तभट्टीया–** न्यवेदयन् दाशा इति शेषः । ...तस्मै दाशराजाय सुतां ददौ ।।४५।।

**भावचन्द्रिका–** मत्स्यजातित्वात् मत्स्यः स चासौ राजा च ।।४५।।

**चट्टि–** तस्याः मत्स्यवध्वाः गर्भतो मिथुनं कन्यापुत्रात्मकं युग्ममभूत् । स्वराज्ञे स्वामिने दाशाय न्यवेदयन् समर्पयामासुः दाशाः । मिथुनमिति शेषः । सोऽपि दाशराजः वसोः राज्ञः समर्पयत् । सः वसुः स्वयं पुत्रं समादाय सुतां तस्मै दाशराजाय ददौ । अथानन्तरं सुतो वसुसुतः मत्स्याख्यो राजा अभूत् । इति श्लोकचतुष्टयस्यान्वयः ।।४५।।

**कन्या तु सा दाशराजस्य सद्मन्यवर्द्धतातीव [२]सुरूपयुक्ता ।**
**नाम्ना तु सा सत्यवतीति तस्यां तवाऽऽत्मजोऽहं भविताऽस्म्यजोऽपि ।।**

**वादिराजीया–** कन्या तु सेत्यत्र तुशब्देन दाशकन्या न भवति किन्तु राजकन्येति विशेषं सूचयति ।।

---

१. तयोः पुमांसं जग्राह राजोपरिचरस्तदा । स मत्स्यो नाम राजासीत् धार्मिकः सत्यसङ्गरः ।। आदि.६४.७८ ।

२. सुरूपयुक्ता शोभनगुणयुक्तरूपसहिता । शुभगुणयुक्ततैव रूपस्य शोभनता नाम । तथाहि भारते 'रूपसत्वसमायुक्ता सर्वैः समुदिता गुणैः' इत्यादिपर्वणि ६४.८३ । 'अतीवरूपसम्पन्नां सिद्धानामपि काङ्क्षिताम्' इत्यादिपर्वणि ६४.८५। 'कृष्णद्वैपायनो व्यासो विष्णुर्नारायणः स्वयम् । अवातरत्स सम्पूर्णं स्वेच्छया भगवान् हरिः ।। अनाद्यनन्तं परं ब्रह्म न देवा ऋषयो विदुः । एकोऽयं वेद भगवान् व्यासो नारायणः प्रभुः ।। इत्येतद्विष्णुमाहात्म्यं कथितं मुनिसत्तमाः । एतत्सत्यं पुनः सत्यं एवं ज्ञात्वा न मुह्यति ।।' इति कूर्मपुराणे पूर्वार्धे ५०.४८-५० ।

**वरदराजीया–** अतीवात्यन्तं सुरूपेण सुन्दररूपेण युक्ता कन्या दाशानां राज्ञः सद्मनि अवर्धत ववृधे । सा च कन्या सत्यवतीति नाम्ना प्रसिद्धा अस्ति । तस्यां सत्यवत्यां अजोऽपि जननरहितोऽपि अहं तवात्मज इति भविष्यामि । इत्युवाच इति पूर्वेणान्वयः ।।४६।।

**इतीरितश्चक्रधरेण तां मुनिर्जगाम [1]मार्ताण्डसुतां [2]समुद्रगाम् ।**
**उत्तारयन्तीमथ[3] तत्र विष्णुः [4]प्रादुर्बभूवाशु विशुद्धचिद्घनः ।।४७।।**

**वादिराजीया–** उत्तारयन्तीमथेत्यत्र अथशब्देन वसिष्ठयाज्ञवल्क्यादीनां सदसि विवाहहोमे कृते सति पित्रा वसुचक्रवर्तिना धारापूर्वकं दानानन्तरमिति भारते प्रसिद्धकथां स्मारयति । एवं च समुद्रगां मार्ताण्डसुतां यमुनां उत्तारयन्तीं कन्यां अथ जगामेति योजना । तस्मात् कानीनो व्यास इति यदविदुषां वचनं तद्भारतकथापरिज्ञानशून्यत्वनिमित्तम् । व्यासस्य तु जन्म भारतोक्तरीत्या परमसुशोभनमेवेति महाभारततात्पर्यनिर्णयकृतो भावः ।।४७।।

**वरदराजीया–** मुनिः पराशरः चक्रधरेण हरिणा इत्युक्तप्रकारेणेरितः उक्तः सन् मार्ताण्डसुतां सूर्यकन्यां समुद्रगां समुद्रगामिनीं यमुनां नावा लोकान् उत्तारयन्तीं परतीरं प्रापयन्तीं सत्यवतीं जगाम । तया रेमे वेति भावः । अथानन्तरं तत्र सत्यवत्यां विशुद्धचिद्घनः विशुद्धचित् ज्ञानैकदेहः आशु प्रादुर्बभूव गर्भवासादिकं विनैवाभिव्यक्तोऽभूत् ।।४७।।

---

१. मार्कण्डेयपुराण.७४.३-७ सञ्ज्ञा च रविणा दृष्टा निमीलयति लोचने । यतस्ततः सरोषोऽर्कः सञ्ज्ञां निष्ठुरमब्रवीत्।। मयि दृष्टे सदा यस्मात् कुरुषे नेत्रसंयमम् । तस्माज्जनिष्यसे मूढे प्रजासंयमनं यमम् ।। ततः सा चपलां दृष्टिं देवी चक्रे भयाकुला । विलोलितदृशं दृष्ट्वा पुनराह च तां रविः ।। यस्माद्विलोलिता दृष्टिर्मयि दृष्टे त्वयाधुना । तस्मात् विलोलां तनयां नदीं त्वं प्रसविष्यसि ।। ततस्तस्यां तु सञ्जज्ञे भर्तृशापेन तेन वै । यमश्च यमुना चेयं प्रख्याता सुमहानदी ।।

२. 'अत्र समुद्रगामिति विशेषणदानेन कालिन्दी व्यावृत्ता भवति । यमुना हि समुद्रगा न कालिन्दी' इति केचित् । तत्तु 'स जगामाथ कालिन्दीं ...तेनेयं दूषिता सर्वा यमुना सागरसङ्गमा ।।' [ब्र.पु.७७.२-७] इत्यादिपुराणवचनविरुद्धम् । 'कलिन्दशैलतनये पृथक्सागरगामिनी । ग्रहणार्घ्यं मया दत्तं यमुने फलदा भव ।।' इति यमुनार्घ्यमन्त्रे यमुना गङ्गया सङ्गतापि तस्याः विभिन्ना प्रत्येकं सागरं गमिष्यति इत्यभिप्रायः पृथक् सागरगामिनीशब्देन द्योत्यते । तेन 'मार्तण्डसुतां समुद्रगाम्' इत्युक्तं साधु ।

३. अथ पूर्वमेव 'भगवता प्राप्तवरात् मत्सकाशात् अस्यां श्रीहरिः सम्भविता इति हरेः सम्भवं सम्यक्जन्म शुक्रशोणितसम्बन्धरहितं जन्म चिन्तयित्वा अथ अनन्तरम्' इति अथशब्दार्थः । तथाहि भारते 'सम्भवं चिन्तयित्वा तां ज्ञात्वा प्रोवाच शक्तिजः' इति आदिपर्वणि ६४.८७ ।

४. कन्यैव सत्यवती वेदव्यासं प्राप । तथाहि– जनयामास यं काली शक्तेः पुत्रात् पराशरात् । कन्यैव यमुनाद्वीपे पाण्डवानां पितामहम् ।। आदि.६०.२

**अनन्तभट्टीया–** उत्तारयन्तीं जनानिति शेषः । तां सत्यवतीम् ।।४७।।

**जनार्दनीया–** मुनिः समुद्रगां समुद्रगामिनीं, मार्तण्डः सूर्यः, तस्य सुतां यमुनां उत्तारयन्तीं उडुपेन जनान् परकूलं प्रापयन्तीं तां सत्यवतीं जगाम रमयामासेत्यर्थः । अथ रमणानन्तरं तत्र तस्याम् । विशुद्धचिता सज्ज्ञानेन, घनः पूर्ण इत्यर्थः ।।४७।।

**ताम्रपर्णीया–** ।। **समुद्रगामिति** ।। गङ्गासङ्गमानन्तरं पुनः विश्लिष्य समुद्रं यान्तीमित्यर्थः । अत एव तात्पर्यचन्द्रिकायां 'प्रसिद्धश्च लोके सङ्गतानां कृष्णादिसप्तनदीनां गङ्गादिसहस्रनदीजलानां पुनः प्रत्येकं समुद्रगमनार्थं विभक्तानां विलक्षणपूर्वरसादिमत्तया भेदः' इति । उक्तं च गीताभाष्यनरहरितीर्थीये 'महानद्योऽपि परस्परमेकीभूय पुनर्वियुज्य समुद्रं गच्छन्ति' इति ।। **उत्तारयन्तीमथेति** ।। अथशब्देन वसिष्ठयाज्ञवल्क्यादिमुनीनां सदसि पित्रा वसुना धारापूर्वकं दानानन्तरमिति विवक्षितम् । भारते तथोक्तत्वादिति ज्ञेयम्[१] ।।४७।।

**भावचन्द्रिका–** पितुः वृद्धस्य अनपत्यत्वात् तदर्थं स्वयमुत्तारयन्तीम् । सहस्रनरा नौर्वाह्या । त्वं तु एक एव इत्युक्ते 'अहं पञ्चशतायितः कमण्डलुश्च तथा' इत्युक्ते वाहिते प्लवे कामनायामपि उदयकाले इतस्ततो ऋषिदर्शनेन लज्जितायां ऋषिणा तदैव महत्तम इव सृष्टे नीहारे स्मृतविश्वकर्मणा द्वीपे वितानशोभिते पर्यङ्के च पर्णशालायां निर्मितायां स्मृतेनागतेनारुन्धतीसहितवसिष्ठेन तादृशैः पितृभिश्च तदाज्ञाप्राप्तवसुना अत्र ब्राह्मविवाहे कृते बभूव व्यासः । तस्यै पुनः कन्यात्ववरं ददौ पराशरः । अतः शन्तनोः विवाहे न दोष इति ज्ञेयम् ।।४७।।

**चट्टि–** मुनिः पराशरश्चक्रधरेण हरिणा इति उक्तप्रकारेणेरितः उक्तः सन् समुद्रगां समुद्रगामिनीं मार्ताण्डसुतां सूर्यसुतां यमुनां उत्तारयन्तीं नावा जनान् अपरकूलं प्रापयन्तीं तां सत्यवतीं जगाम । तया रेमे इति भावः । अथानन्तरं तत्र तस्यां विशुद्धचिदा सज्ज्ञानेन घनः पूर्णः विष्णुः प्रादुर्बभूव । गर्भवासादिकं विनैवाभिव्यक्तोऽभूत् । अथशब्देन वसिष्ठयाज्ञवल्क्यादिमुनीनां सदसि विवाहहोमानन्तरं पित्रा चक्रवर्तिना धारापूर्वकं दानानन्तरमिति भारते प्रसिद्धां कथां स्मारयतीति वादिराजतीर्थाः । अनन्तरं दाशराजेन शन्तनोः कथं दत्तेति शङ्का... [इदं वाक्यं अपरिपूर्णम् इति भाति] ।।४७।।

**विदोषविज्ञानसुखैकरूपोऽप्यजो जनान् मोहयितुं मृषैव ।**
**योषित्सु पुंसो ह्यजनीव दृश्यते न जायते क्वापि बलादिविग्रहः ।।४८।।**

---

१. महाभारतस्य औत्तरयपाठे एते श्लोकाः न सन्त्येव । दाक्षिणात्यपाठे आदिपर्वणि ६४ अध्याये एतत्प्रसङ्गवर्णन-परश्लोकाः प्रक्षिप्तत्वेन निवेशिताः ।

**व्यासतीर्थीया–** प्रादुर्भाव एव चेत् गमनादावपि तस्य सुलभत्वात् स्त्रीषु किमर्थं प्रादुर्भवतीत्यतः प्रयोजनमाह– **विदोषेति** ।।४८।।

**वादिराजीया–** मृषैव वृथैव । ह्यजनीव दृश्यत इत्यत्र हिशब्देन 'नित्यो नित्यानाम्' इत्यदिश्रुतिप्रसिद्धिं सूचयति । बलादिविग्रह इत्यनेन पितृद्वारा मातुरुदरप्रवशोऽपि यथा शुक्लशोणितादिसम्बन्धो न भवति तादृशं सामर्थ्यमस्तीति सूचयति । अन्यथा चिदादिविग्रह इत्यवक्ष्यत् ।।४८-४९।।

**वरदराजीया–** नन्वितरवज्जात एव किं न स्यादित्यत आह– **विदोषेति** ।। दोषरहित ज्ञानानन्दैकदेहेति । एषो अजो जननरहितो हरिः जनान् दुष्टजनान् मोहयितुं मृषैव मिथ्यैव योषित्सु स्त्रीषु पुंसः पुरुषाज्जीवजात इव दृश्यते । वस्तुतस्तु बलादिविग्रहो बलानन्दादिरूपदेहः क्वापि कुत्रपि न जायते ।।४८।।

**जनार्दनीया–** ननु पराशरात् सत्यवत्यां प्रादुर्बभूवेति किमर्थमुक्तम् ? लोकवत् शुक्ररक्तसम्बन्धादुत्पन्न इति किं न स्यात् ? इत्यत आह– **विदोषेति** ।। विदोषे निर्दुष्टे, विज्ञानसुखे एकं केवलं रूपं यस्य स तथा । अजोऽपि जन्मरहितोऽपि जनानयोग्यजनान् मोहयितुं मृषैव पुंसः पुरुषाद्योषित्सु स्त्रीषु अजनीव उत्पन्न इव दृश्यते हि यस्मात् तस्मात् । बलादयः बलज्ञानानन्दादयो गुणाः विग्रहो देहो यस्य स तथा । एतादृशो हरिः क्वापि कस्मिंश्चित् अपि अवतार इत्यर्थः । न जायते ।।४८।।

**ताम्रपर्णीया–** प्रादुर्बभूवैव नोत्पन्न इत्यत्र हेतुमाह– **विशुद्धेति** ।। निर्दोषज्ञानानन्दात्मकविग्रहत्वात् अवततारैव नोत्पन्न इत्यर्थः । ननु निर्दोषविज्ञानसुखैकरूपत्वमसिद्धं बाधितं च तत्साध्यमजत्वं पितृद्वारा मातृशरीरादुत्पत्तेः प्रत्यक्षसिद्धत्वादित्यत आह– **विदोषेति** ।। पुंसो योषित्सु अजनीव मृषैव मिथ्यैव दृश्यते इत्यर्थः । भ्रान्तं प्रत्यक्षमिति भावः । उक्तन्यायमन्यत्राप्यादिशति– **न जायते क्वापीति** ।। क्वापि दशरथादौ । तत्र हेतुः– **बलादिवग्रह इति** ।। रामकृष्णादेः बलकार्यप्रवर्तकत्वात् । व्यासस्य ज्ञानकार्ये प्रवृत्तत्वात् 'विशुद्धचिज्ज्ञान' इति 'बलादिविग्रहः' इति चोक्तम् ।।४८।।

**चट्टि–** ननु पराशरात् सत्यवत्यां प्रादुर्बभूवेति किमर्थमुच्यते । लोकवत् शुक्लशोणितसम्बन्धादेवोत्पन्न इति किं न स्यादित्यत आह– **विदोषेति** ।। विदोषे निर्दुष्टे विज्ञानसुखे एकं केवलं रूपं यस्य तथा । एतादृशः हरिः क्वपि कस्मिंश्चिदवतारेऽपीत्यर्थः । न जायते ।।४८।।

**यथा नृसिंहाकृतिराविरासीत् स्तम्भात् तथा नित्यतनुत्वतो विभुः ।**
**आविर्भवेद् योषिति नो मलोत्थस्तथाऽपि मोहाय निदर्शयेत् तथा ।।४९।।**

**व्यासतीर्थीया–** तदेव दृष्टान्तेन विशदयन्नाह– **यथेति** ।।४९।।

**वरदराजीया–** ननु नियमेन स्त्रीपुंप्रयोगादेः जननदर्शनादितरसाधारणमयमेवेत्याशंक्य नियम एवासिद्ध इत्याह– **यथेति** ।। यथा नृसिंहाद्याकृतिः नृसिंहरूपो हरिः स्तंभादाविरासीत् तथा । नित्यतनुत्वतो नित्या तनुर्देहो यस्य स नित्यतनुस्तस्य भावस्तत्वम् । तस्माद्धेतोर्विभुः समर्थो योषिति स्त्रियां स्तंभस्थानीयायामाविर्भवेत् अभिव्यक्तो भवति । तावता स्त्रीपुंमलोत्थो रेतःशोणितप्रभावदेहो नो भवति । तथापि स्त्रीणां स्तंभस्थानीयत्वेऽपि मोहाय दुष्टानां मिथ्याज्ञानजननार्थं तथा स्त्रीषु जात इति निदर्शयेत् प्रदर्शयति ।।४९।।

**जनार्दनीया–** उक्तार्थं दृष्टान्तपूर्वकमाह– **यथेति** ।। तथा नृसिंहरूपवत् विभुः सर्वत्र व्यापको हरिः । नित्या अविनाशिनी तनुः स्वरूपं यस्य स तथा, नित्यतनोः भावः नित्यतनुत्वं तद्धेतोः । योषिति स्त्रियामाविर्भवेत् । मलोत्थो न शुक्रशोणिताख्यमलादुत्पन्नो नेत्यर्थः । यद्यपि तथापि तथा मलोत्थवत् ।।४९।।

**ताम्रपर्णीया–** उक्तानुमानस्य दृष्टान्तकथनपूर्वकं प्रत्यक्षविरोधपरिहारमुपसंहरति– **यथेति** ।।४९।।

**चट्टि–** उक्तार्थं दृष्टान्तपूर्वकमाह– **यथेति** ।। यथा नृसिंहाकृतिः नृसिंहरूपो हरिः स्तम्भादाविरभूत् तथा । नित्यतनुत्वतः नित्या अविनाशी तनुर्देहो यस्य स नित्यतनुः । नित्यतनोर्भावः नित्यतनुत्वं तस्माद्धेतोः विभुः समर्थो हरिः योषिति स्त्रियां आविर्भवेत् । मलोत्थो नो शुक्रशोणिताख्यमलोत्पन्नो नेत्यर्थः । यद्यपि तथापि मोहाय तथा मलोत्थवत् निदर्शयेत् ।।४९।।

**स्त्रीपुम्प्रसङ्गात् परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनम् ।**
**अतो मलोत्थोऽयमिति स्म मन्यते जनोऽशुभः पूर्णगुणैकविग्रहम् ।।५०।।**

**व्यासतीर्थीया–** ननु यदि भगवतो भवो न वास्तवस्तर्हि कुतो मोहोऽपि जायेतेत्याशङ्कायामाह– **स्त्रीपुंप्रसङ्गादिति** ।।५०।।

**वेदाङ्गतीर्थीया–** पुंसो योषित्सु जात इत्यज्ञप्रतीतौ कारणमाह– **स्त्रीपुंप्रसङ्गादिति** ।। स्त्रीपुंप्रसङ्गात् परतः अनन्तरः ।।५०-५२।।

**वादिराजीया–** 'अनित्यत्वात् समासान्तविधेः' इति वचनात् स्त्रीपुंप्रसङ्गादिति साधुः ।।५०।।

**वरदराजीया–** ननु कचित् स्त्रीभ्यः प्रादुर्भावे कथं दुष्टानां मोह उत्पद्यत इत्यत आह– **स्त्रीति** ।। स्त्रीपुंप्रसङ्गात् स्त्रीपुरुषसंयोगात् परतोऽनन्तरं ततो जनं विमोहयन् एषः हरिः प्रादुर्भवति । अतः कारणादशुभो दुष्टो जनः पूर्णगुणैकविग्रहमेनं हरिं स्त्रीपुंमलोत्थोऽयं हरिरिति मन्यते भ्रान्तो भवति ।।५०।।

**अनन्तभट्टीया–** स्त्रीपुंप्रसङ्गात् परतः उत्तरकालतः ।।५०।।

**जनार्दनीया–** मोहकारणं दर्शयति– **स्त्रीति** ।। स्त्रियः पुंसेति उभयोः प्रसङ्गात् सम्बन्धात् परतः सम्बन्धोत्तरकाले यतः कारणात् देवो हरिः । अतः कारणात् अयं हरिः मलोत्थ इति अशुभो जनः पापजनः मन्यते स्म जानाति ।।५०।।

**ताम्रपर्णीया–** पुंसो योषित्सु जायत इति अज्ञप्रतीतौ हेतुमाह– **स्त्रीपुम्प्रसङ्गादिति** ।। परतः अनन्तरं यतः प्रादुर्भवत्यतो अशुभो जनः पूर्णगुणैकविग्रहं मलोत्थोऽयमिति मन्यत इत्यर्थः । ननु प्रत्यक्षोपजीवकत्वेन अनुमानेन कथमुपजीव्यं प्रत्यक्षं बाध्यते इत्यतो बलवत्प्रत्यक्षविरोधं दर्शयति– **जन इति** ।। शुभो जनः पूर्णगुणैकविग्रहं मन्यते इत्यर्थः ।।५०।।

**चट्टि–** मोहकारणं दर्शयति– **स्त्रीति** ।। स्त्रीपुंप्रसङ्गात् स्त्रीपुरुषसम्बन्धात् परतः सम्बन्धोत्तरकाले यतः कारणादेषो हरिः जनमज्ञजनं विमोहयन् प्रादुर्भवति । अतः कारणात् अशुभो जनः दुष्टो जनः पूर्णसुखैकविग्रहं हरिं अयं हरिः मलोत्थः स्त्रीपुंमलोत्थ इति मन्यते स्म जानाति ।।५०।।

**द्वीपे[1] भगिन्यास्तु यमस्य विश्वकृत् प्रकाशते ज्ञानमरीचिमण्डलः ।**
**प्रभासयन्नण्डबहिस्तथाऽन्तः [2]सहस्रलक्षामितभानुदीधितिः ।।५१।।**

**व्यासतीर्थीया–** प्रादुर्भावस्थलनिर्देशपूर्वं उत्पत्त्यभावे हेतुमाह– **द्वीप इति** ।।५१-५२।।

**वादिराजीया–** अधममध्यमोत्तमाधिकारिणां क्रमेण सहस्रलक्षामितसूर्यसमानदीधितिदर्शनयोग्यतेति सूचनाय सहस्रलक्षामितसूर्यदीधितिरित्युक्तम् ।।५१-५२।।

**वरदराजीया–** प्रादुर्भावस्थलविशेषनिर्देशपूर्वकं इतरसाधारण्येनोत्पत्त्यभावहेतूनाह– **द्वीप इत्यादिना ।।** विश्वकृत् सर्वकर्ता स हरिः यमस्य भगिन्याः स्वसुः यमुनायाः द्वीपे मध्यस्थतीरे । ज्ञानान्येव मरीचयो यत्र तच्च तन्मण्डलं स्वरूपं यस्य स तथा । अण्डस्य ब्रह्माण्डस्य बहिरन्तश्च प्रभासयन् प्रकाशयन् । सहस्राणां लक्षाणां अमितानां सूर्याणां दीधितिरिव दीधितिः यस्य स तथा । तत्तदधिकारिणां तथा तथा दृश्यत इति भावः ।।५१।।

**अनन्तभट्टीया–** अण्डबहिः अण्डस्य बहिः ।।५१।।

**जनार्दनीया–** प्रादुर्भावस्थलकथनपूर्वकं हरेर्जननाभावद्योतकदृष्टान्तं दर्शयति– **द्वीप इत्यादिना** ।। विश्वकृत् सर्वजगज्जनक इत्यर्थः । ज्ञानानि मरीचय इव, तेषां मण्डलं समूहो यस्य स तथा । अण्डस्य बहिस्तथा अन्तः अण्डान्तः प्रभासयन् । सहस्रलक्षामिताश्च ते भानवश्च तथा, तेषां दीधितिरिव

१. 'द्विरापत्वात् स्मृता द्वीपाः सर्वतश्चोदकावृताः' इति वायु.पूर्व.४९.१३१ ।

२. 'सूर्यदीधितिः' इति वादिराजतीर्थीयवरदराजीयपाठः ।

दीधितिः दीप्तिर्यस्येति स तथा । यमस्य भगिन्याः द्वीपे जलावृतप्रदेशे प्रकाशते । सहस्रलक्षामितेति नीचमध्योत्तमाधिकारियोग्यतां अपेक्ष्योक्तमित्यवगन्तव्यम् ।।५१।।

**ताम्रपर्णीया–** भगवतः प्राकृतशिशुवैलक्षण्यं उपपादयन् तत्कालस्थस्य भगवतः स्मर्तव्यत्वमाह– **द्वीप इति** ।।५१-५२।।

**चट्टि–** प्रादुर्भावस्थलकथनपूर्वकं हरेर्जननाभावे हेतुमाह– **द्वीपे इत्यादिना** ।। विश्वकृत् सर्वजगज्जनक इत्यर्थः । ज्ञानानि मरीचयः इव तेषां मण्डलं समूहो यस्य स तथा । अण्डस्य ब्रह्माण्डस्य वहिस्तथा अन्तः ब्रह्माण्डान्तः प्रभासयन् दीप्यन् । सहस्रलक्षामिताश्च ते भानवश्च तेषां दीधितिरिव दीधितिः यस्य स तथा सः । हरिः यमस्य भगिन्याः स्वसुः यमुनायाः द्वीपे जलावृतप्रदेशे प्रकाशते । सहस्रलक्षामितेति नीचमध्योत्तमाधिकारियोग्यतां अपेक्ष्योक्तमित्यवगन्तव्यम् ।।५२।।

**अगण्यदिव्योरुगुणार्णवः प्रभुः समस्तविद्याधिपतिर्जगद्गुरुः ।**
**अनन्तशक्तिर्जगदीश्वरेश्वरः समस्तदोषातिविदूरविग्रहः ।।५२।।**

**वरदराजीया–** अगण्यैरनन्तैः दिव्यैरप्राकृतैरुरुभिर्गुणैरर्णव इव । प्रभुः समस्तानां विद्यानां अधिपतिः, जगतो मुख्यगुरुः, अनन्ता परिपूर्णा शक्तिर्यस्य स तथा । जगदीश्वराणां ब्रह्मादीनां ईश्वरः स्वामी । समस्तैः पारतन्त्र्यादिभिः दोषैः अतिविदूरविग्रहो देहो यस्य स तथा ।।५२।।

**जनार्दनीया–** अवतीर्णस्य हरेः स्वरूपं सामर्थ्यं च वर्णयति– **अगण्येत्यादिना** ।। अगण्याः दिव्याः लोकविलक्षणाः, उरवः उत्तमाः, ये गुणास्तैः अर्णव इवार्णवः । प्रभवति अस्माज्जगदिति प्रभुः समर्थो वा । जगतामीश्वराणां ब्रह्मादीनां, ईश्वरः स्वामी । समस्तदोषेभ्यः अतिविदूरः विग्रहो यस्य स तथा ।।

**चट्टि–** अवतीर्णस्य हरेस्स्वरूपं सामर्थ्यं च वर्णयति– **अगण्येत्यादिना** ।। अगण्याः अनन्ताः दिव्याः लोकविलक्षणाः उरवः उत्तमाः ये गुणास्तैः अर्णव इव । प्रभवत्यस्माज्जगदिति प्रभुः समर्थो वा । समस्तानां विद्यानां अधिपतिः जगतो मुख्यगुरुः । अनन्ता परिपूर्णा शक्तिः यस्य स तथा । जगतामीश्वराणां ब्रह्मादीनामीश्वरः स्वामी । समस्तदोषैः अतिविदूरः विग्रहो देहो यस्य स तथा ।।५२।।

**शुभमरकतवर्णो रक्तपादाब्जनेत्राधरकरनखरसनाग्रश्चक्रशङ्खाब्जरेखः ।**
**रविकरवरगौरं चर्म चैणं वसानः तटिदमलजटासन्दीप्तचूडं दधानः ।।५३।।**

**व्यासतीर्थीया–** असाधारणधर्मविशिष्टत्वजिज्ञासायामाह– **शुभेति** ।।५३-६३।।

**वेदाङ्गतीर्थीया–** रविकरवरगौरं सूर्यरश्मिवत् हरिद्राभम् ।।५३।।

**वादिराजीया–** 'न वा एकेन वाऽक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' इति वचनात् शुभमरकतेति श्लोकस्य द्वितीयपादे वर्णद्वयाधिक्यं छन्दस्समानत्वद्योतकत्वात् गुण एव ।।५३-५४।।

**वरदराजीया–** शुभस्योत्तमस्य मरकतस्येन्द्रनीलस्य वर्णा इव वर्णो यस्य स तथा । रक्तरूपाणि पादाब्जादीनामग्राणि यस्य स तथा । चक्रादीनां रेखा यस्य पदे स तथोक्तः । रवेः सूर्यस्य करवरवत् श्रेष्ठकिरणवत् गौरं पीतं ऐणं रौरवं चर्म वसानः परिदधानश्च । तटिद्वद् अमलाभिर्निर्मलाभिः सन्दीप्तं प्रकाशं चूडं चूडां मध्यशिखां दधानः । चूडाशब्दस्य नपुंसकत्वं छान्दसम् । अध्याहृतस्य शिर इत्यस्य वा । तडिदित्यादिवहुव्रीहिपदं विशेषणम् । तेनान्यपदार्थविशेषणत्वात् नपुंसकत्वनिर्वाह इति द्रष्टव्यम् ।।

**अनन्तभट्टीया–** चक्रशङ्खाब्जरेखः । चूडः केशपाशम् ।।५३।।

**जनार्दनीया–** शुभमरकतवत् शुद्धनीलेन्द्ररत्नवत् वर्णो यस्य स तथा । पादाब्जे च नेत्रे च अधरः अधरोष्ठश्च करौ च नखानि च रसनायाः जिह्वायाः, 'रसज्ञा रसना जिह्वा' इत्यमरः । अग्रं च । रक्तानि आरक्तानि पादाब्जादीनि यस्य स तथा । चक्रं च शङ्खश्च अब्जं पद्मं च तद्वत् रेखा यस्य स तथा । हस्तपादेषु चक्रादिरेखाः सन्तीति भावः । वराश्च ते कराश्चेति करवराः, रवेः श्रेष्ठकिरणाः, तद्वद्गौरम् । यद्वा रविकरवदुत्तमगौरवर्णम् । ऐणं एणसम्बन्धि चर्म वसानः दधानः । 'एणः कुरङ्गो हरिणः' इति हलायुधः । तडिद्वत् विद्युद्वत् अमलजटाभिः सन्दीप्ता चूडा शिखा यस्मिन् मूर्ध्नि स तथा, तं मूर्धानं दधानः । मूर्ध्नि परिवर्तमानाभिः जटाभिः दीप्यमानां मध्यशिखां दधान इति भावः । 'शिखा चूडा केशपाशी' इत्यमरः ।।५३।।

**ताम्रपर्णीया–** गुणध्यानमुक्त्वा रूपध्यानमाह– **शुभेति** ।। 'गारुत्मतं मरकतमश्मगर्भं हरिन्मणिः' इत्यभिधानात् । मरकतहरिन्मणिशब्दयोः पर्यायत्वात् न 'हरितोपलाभं ' [४.४४] इति तन्त्रसारविरोधः इति ज्ञेयम् ।।५३-५४।।

**चट्टि–** असाधारणधर्मविशिष्टत्वजिज्ञासायामाह– **शुभेति** ।। शुभमरकतवच्छुभेन्द्रनीलरत्नवत् वर्णो यस्य स तथा । पदाब्जे च नेत्रे चाधरो अधरोष्ठश्च करौ च नखानि च रसनायाः जिह्वायाः अग्रश्च रक्तानि आरक्तानि पदाब्जनेत्राधरकरनखरसनाग्राणि यस्य स तथा । चक्रं च शङ्खश्चाब्जं पद्मं च चक्रशङ्खाब्जानि तेषां रेखा हस्तपादेषु यस्य स तथोक्त । 'नवा एकेनाक्षरेण छन्दासि वियन्ति न द्वाभ्याम्' इति वचनात् अस्मिन् श्लोके द्वितीयपादे वर्णद्वयाधिक्यं छन्दस्समानत्वद्योतकत्वात् गुण एव । रवेः सूर्यस्य करवराः श्रेष्ठकिरणाः तद्वत् अतिगौरं पीतवर्णं ऐणं एणसम्वन्धि चर्म वसानो दधानः । तटिद्वत् अमलाभिः निर्मलाभिः जटाभिः सन्दीप्ता चूडा शिखा यस्मिन् मूर्ध्नि स तथा । तं मूर्धानं सन्दधानः मूर्ध्नि परितो वर्तमानाभिः जटाभिः दीप्यमानां मध्यशिखां दधान इति भावः ।।५३।।

**विस्तीर्णवक्षाः कमलायताक्षो बृहद्भुजः कम्बुसमानकण्ठः ।**
**समस्तवेदान् मुखतः समुद्गिरन् अनन्तचन्द्राधिककान्तिसन्मुखः ।।५४।।**

**वेदाङ्गतीर्थीया–** कम्बुसमनानकण्ठं रेखात्रयोपेतगलः ।।५४।।

**मधुसूदनीया–** ।। **कम्बुसमानकण्ठ इति** ।। वलित्रयाङ्कितग्रीव इत्यर्थः । 'रेखात्रयाङ्कितग्रीवा कम्बुग्रीवेति कथ्यते' इत्यभिधानात् ।।५४-५५।।

**वरदराजीया–** विस्तीर्णं वक्षो यस्य स तथा । कमलवद्दायते अक्षिणी यस्य सः । बृहन्तौ पीनौ भुजौ यस्य स तथा । कम्बुना शङ्खेन समानः त्रिरेखाभिः साम्यमापन्नः कण्ठः यस्य स तथा । समस्तान् अनन्तान् वेदान् मुखतो सम्यगुद्गिरन् निष्कासयन् । अनन्तचन्द्रेभ्यः अधिककान्तिर्यस्य तच्च सन्मुखं यस्य स तथा ।।५४।।

**जनार्दनीया–** कम्बुना शङ्खेन समानः कण्ठो यस्य स तथा । रेखात्रयोपेतमध्योन्नतकण्ठ इत्यर्थः । सम्यक् उद्गिरन् उदीरयन् । अनन्तचन्द्रेभ्यः अधिका कान्तिर्यस्य तत्तथा, तच्च तत् सत् निर्दुष्टं मुखं यस्य स तथा ।।५४।।

**चट्टि–** विस्तीर्णं वक्षो यस्य स तथा । कमलदलवदायते अक्षिणी यस्य स तथा । बृहन्तौ पीनौ भुजौ यस्य स तथा । कम्बुना शङ्खेन समानः कण्ठो यस्य स तथा । रेखात्रयोपेतकण्ठ इत्यर्थः । 'रेखात्रयाङ्कितग्रीवा कम्बुग्रीवेति कथ्यते' इत्यभिधानात् । समस्तवेदान्मुखतः सम्यगुद्गिरन् अनन्तचन्द्रेभ्योऽधिका कान्तिर्यस्य तत्तथा तच्च तत्सन्निर्दुष्टं मुखं यस्य स तथा ।।५४।।

**प्रबोधमुद्राभयदोर्द्वयाङ्कितो यज्ञोपवीताजिनमेखलोल्लसन् ।**
**दृशा महाज्ञानभुजङ्गदष्टमुज्जीवयानो जगदत्यरोचत ।।५५।।**

**वादिराजीया–** यज्ञोपवीताजिनेत्यत्र अजिनं उपवीतेन सह ध्रियमाणं कृष्णाजिनम् ।।५५।।

**वरदराजीया–** ज्ञानमुद्रया अभयमुद्रया युक्तदोर्द्वयं हस्तयोर्युग्मं तेनान्वितः यज्ञोपवीतेनाजिनेन मेखलया च उल्लसन् रोचमानः । दृशा ज्ञानेन महता अज्ञानाख्यसर्पेण दष्टं जगदुज्जीवयानः स हरिरत्यरोचत अत्यन्तमुल्ललास ।।५५।।

**अनन्तभट्टीया–** मेखलया उल्लसत् । दष्टं जनम् ।।५५।।

**जनार्दनीया–** प्रबोधमुद्रा ज्ञानमुद्रा, अभयं अभयमुद्रा ते यस्मिन् तत्तथा, तच्च तत् दोर्द्वयं च हस्तद्वयं, तेन अङ्कितः चिह्नितः । मेखला मौञ्जी, यज्ञोपवीतादिभिः उल्लसन् शोभमानम् । दृशा

प्रसन्नदृष्ट्या महाज्ञानाख्यभुजङ्गेन सर्पेण दष्टं जगत् भक्तसमूहमित्यर्थः । उज्जीवयतीत्युज्जीवयानः श्रीवेदव्यासः अत्यरोचत । रमादिसर्वं अतिक्रम्य शुशुभे । 'दृशा महाज्ञान' इत्यनेन सामर्थ्यं दर्शितम् ।।५५।।

**ताम्रपर्णीया–** यज्ञोपवीताजिनेत्यत्र यज्ञोपवीतेन सह धार्यमाणं कृष्णाजिनं अपि विवक्षितम् ।।५५।।

**चट्टि–** प्रबोधमुद्रा ज्ञानमुद्रा अभयं अभयमुद्रा ते यस्मिन् तत्तथा । तच्च तद्दोर्द्वयं हस्तद्वयं च तेनान्वितः । यज्ञोपवीतं च अजिनं उपवीतेन सह ध्रियमाणं कृष्णाजिनं च मेखला मौञ्जी च ताभिरुल्लसन् शोभमानः । दृशा ज्ञानेन महाज्ञानाख्यभुजङ्गेन सर्पेण दष्टं जगद्भक्तसमूहमित्यर्थः । उज्जीवयतीति उज्जीवयानः श्रीवेदव्यासः अत्यरोचत रमादिसर्वमतिक्रम्य शुशुभे ।।५६।।

**स लोकधर्माभिरिरक्षया [1]पितुर्द्विजत्वमाप्याऽशु पितुर्ददौ निजम् ।**
**ज्ञानं तयोः [2]संस्मृतिमात्रतः सदा प्रत्यक्षभावं वरमात्मनो ददौ ।।५६।।**

**वेदाङ्गतीर्थीया–** तयोः पित्रोः ।।५६-६०।।

**वादिराजीया–** द्विजत्वमाप्याश्वित्यत्र आशु जननान्तरं दिनसप्तकात् प्रागेवेत्यर्थः । तयोः संस्मृतिमात्रत इत्यत्र तयोः मातापित्रोः आत्मनः स्मृतिमात्रतः प्रत्यक्षभावं प्रत्यक्षत्वं वरं ददौ । यदा मम स्मरणं क्रियते तदा युवयोः प्रत्यक्षो भविष्यामीति मातरं प्रति मातृवियोगकाले इदानीं वरं ददाविति विवेकः ।।५६-५७।।

**मधुसूदनीया–** ।। **द्विजत्वमाप्येति** ।। लोकधर्माऽभिरिरक्षयैव वेदं साङ्गमधीत्य च । तथाचोक्तम्– 'कृतोपनयनो व्यासो याज्ञवल्क्येन भारत । वेदानधिजगौ साङ्गानोङ्कारेण समन्वितान् ।।' इत्यादिपर्वणि ।।५६-५७।।

**वरदराजीया–** सः हरिर्लोकस्य धर्ममभिरक्षितुं इच्छया आशु पितुः पराशरात् द्विजत्वमुपनयनं प्राप्य पराशरस्य निजं स्वविषयं ज्ञानं ददौ । तयोः पित्रोरात्मनः स्वस्य संस्मृतिमात्रतः स्मरणमात्रेण प्रत्यक्षभावं प्रत्यक्षत्वं वरं ददावित्यर्थः ।।५६।।

**अनन्तभट्टीया–** प्रत्यक्षभावं तयोर्वरमदात् ।।५६।।

---

१. 'जनयामास यं काली शक्तेः पुत्रात् पराशरात् । कन्यैव यमुनाद्वीपे पाण्डवानां पितामहम् ।। जातमात्रश्च यः सद्य इष्ट्या देहमवीवृधत् । वेदांश्चाधिजगे साङ्गान् सेतिहासान् महायशाः ।। यं याति तपसा कश्चित् न वेदाध्ययनेन च । न व्रतैर्नोपवासैश्च न प्रसूत्या न मन्युना ।।' इति आदिपर्वणि ६०.२-४ ।

२. स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ।' इति आदिपर्वणि ६४.७३ ।

**जनार्दनीया–** स व्यासः । रिरक्षया रक्षणेच्छया । निजं ज्ञानं ददौ । तयोः मातापित्रोः संस्मृतिमात्रतः भक्तिपूर्वकस्मरणमात्रादेव सदा आत्मनः प्रत्यक्षभावं रूपगोचरप्रत्यक्षत्वं वरं ददौ ।।५६।।

**भावचन्द्रिका–** सः गर्भाष्टम इव स्थितः । आशु उत्पत्त्यनन्तरमेव ।।५६।।

**चट्टि–** सः व्यासः लोकधर्मस्य अभिरिरक्षया रक्षणेच्छया आशु पितुः पराशरात् द्विजत्वं उपनयनं आप्य लोकधर्माभिरिरक्षयैव साङ्गं वेदं चाधीत्य । तथा चोक्तम्– 'कृतोपनयनो व्यासो याज्ञवल्क्येन भारत । वेदानधिजगौ साङ्गान् ओंकारेण समन्वितान् ।।' इत्यादिपर्वणि ।। पितुः पराशरस्य निजं स्वविषयं ज्ञानं ददौ । तयोः पित्रोरात्मनः स्वस्य संस्मृतिमात्रतः स्मरणमात्रेणात्मन इत्यस्यावृत्तिः । सदा प्रत्यक्षभावं प्रत्यक्षत्वं वरं ददौ ।।५६।।

**द्वैपायनः सोऽथ जगाम मेरुं चतुर्मुखाद्यैरनुगम्यमानः ।**
**उद्धृत्य वेदानखिलान् सुरेभ्यो ददौ मुनिभ्यश्च यथाऽऽदिसृष्टौ ।।५७।।**

**वरदराजीया–** अथानन्तरं स द्वैपायनो व्यासश्चतुर्मुखाद्यैर्देवैरनुगम्यमानः सन् मेरुगिरिं जगाम । तत्राखिलान् वेदानुद्धृत्य सुरेभ्यो मुनिभ्यश्च आदिसृष्टौ यथा तथा ददौ उपदिदेश ।।५७।।

**जनार्दनीया–** अनुगम्यमानः अनुगतः । यथा आदिसृष्टौ ब्रह्मणे वेदादिविद्याः यथोपदिदेश तथेत्यर्थः ।।

**ताम्रपर्णीया–** ।। उद्धृत्येति ।। अपपाठादिना तिरोहितान् उच्चारणेन व्यक्तीकृत्वेत्यर्थः । मूलवेद-विवक्षायां तु 'वेदमपारमुत्सन्नं अनभिव्यक्तं अध्यापनेन व्यञ्जयन्' इति तत्त्वप्रदीपरीत्याऽर्थो [१.१.१] बोध्यः ।।५७।।

**चट्टि–** अथानन्तरं सः द्वैपायनः व्यासः चतुर्मुखाद्यैः देवैः अनुगम्यमानः अनुगतस्सन् मेरुं जगाम । तत्राखिलान् वेदान् उद्धृत्य सुरेभ्यो मुनिभ्यश्च आदिसृष्टौ यथा तथा वेदादिविद्याः ददौ उपदिदेश ।।५७।।

**सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्णयं [१]ब्रह्मसूत्रं चकार ।**
**तच्छुश्रुवुर्ब्रह्मगिरीशमुख्याः सुरा मुनीनां प्रवराश्च तस्मात् ।।५८।।**

१. 'आश्रमात्मा पुराणर्षिः व्यासः शाखासहस्रकृत् । महाभारतनिर्माता कवीन्द्रो बादरायणः ।। कृष्णद्वैपायनः सर्वपुरुषार्थैकबोधकः । वेदान्तकर्ता ब्रह्मैकव्यञ्जकः पुरुवंशकृत् ।।'इति पाद्मे उत्तर.७१.२७५-२७६ । 'वेदव्यासमहं वन्दे वेदव्यासकरं हरिम् । पराशरसुतं सत्यवतीपुत्रं महामुनिम् ।। प्राचीनगर्भं प्रवदन्ति यं वै ज्ञानावतारं प्रथमं मुरारेः । आचार्यसिंहासनमाश्रितो यो वेदान्तसूत्राण्यवदच्च मन्त्रान् ।। अपान्तरतमा मुनिर्निगमदेशिकश्चादिमः वदन्ति परमर्षयोऽपरविधिं षष्ठं विधेः । चतुर्मुखमुखोदितं निगदितश्च यत्पश्चमं जगद्धितकृते निजहितस्य वेदं नुमः ।। व्यासाम्भोधिज्ञानविज्ञानलीनं तस्मिन् जातं भारताम्भोजपुष्पम् । हंसा हंसा मोदिता यस्य मोदात् त्यक्त्वासारां संसृतिं

**वादिराजीया–** विनिर्णयं ब्रह्मसूत्रमित्यत्र विशेषेण निर्णयो यस्मादिति विग्रहः ॥५८॥

**मधुसूदनीया–** ॥ **तच्छुश्रुवुर्ब्रह्मगिरीशमुख्या इति** ॥ अत्र ब्रह्मणः श्रवणादिकं विष्णोः प्रीत्यर्थमेव । किञ्चिदप्राप्तलाभार्थं वा विद्यमानस्यैव ज्ञानस्य दृढीकरणार्थं वा । 'यावद्ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम् । विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो हरेः ॥ अन्येषां श्रवणात् ज्ञानं क्रमशो मानुषोत्तरम् ॥' इति [१३.२६] गीतातात्पर्योदाहृतप्रमाणवचनात् 'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा । पृच्छन्ति साधवो यस्मात् तेन पृच्छसि पार्थिव ॥' इत्याग्नेयवचनाच्च [गी.ता.४.४] । 'एवं ज्ञानं पुनः प्रापुः' [म.ता.नि.१०.८४] इत्यादेश्चायमर्थः । विरिञ्चेतरेषां तिरोहितलाभो वा । 'ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य' [१.१.१] इत्यादि भाष्योदाहृतप्रमाणस्याप्ययमेवार्थ इति न तद्विरोध इति ध्येयम् ॥५८-७०॥

**वरदराजीया–** तथैवानन्तरमेव सर्वाणि ब्रह्मतर्कादीनि कृत्वा विनिर्णीयन्ते अनेनेति विनिर्णयं विशेषतो वेदनिर्णायकं ब्रह्मसूत्रम् । जात्यपेक्षया एकवचनम् । चकार कृतवान् । ब्रह्मगिरीशौ आद्यौ येषां ते सुराः तथा मुनीनां ऋषीणां प्रवराश्च जैमिन्याद्याश्च तस्मात् द्वैपायनात् तद्ब्रह्मसूत्रं शुश्रुवुः अशृण्वन् ॥५८॥

**अनन्तभट्टीया–** विनिर्णयं विशेषेण निर्णयो यस्मिन् तत्तथोक्तः । तद्धि आसीत् ॥५८॥

**जनार्दनीया–** तथैव वेदानुसारेण । शास्त्राणि कृत्वा, विनिर्णयं विशेषनिर्णयो यस्मिन् तत् तथा । ब्रह्मसूत्रं चकार । तस्मात् व्यासात् । तत् ब्रह्मसूत्रम् ॥५८॥

**ताम्रपर्णीया–** ॥ **सर्वाणि शास्त्राणीति** ॥ पुराणभारतभागवतवेदमीमांसादिसर्वशास्त्राणीत्यर्थः । 'इत एव पुराणगौरगौः समहाभारतपारिजातके । सति जातवति व्यजायत प्रवरं सूत्रगणामृतं स्वयम् ॥' इति मध्वविजयोक्तेः । 'वेदमुत्सन्नं व्यञ्जयन् चतुर्धा व्यभजत् । तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार' इति श्रीमद्भाष्ये शास्त्रकरणं सूत्रात् पूर्वं नोक्तम् । अतो न विरोधः ॥५८॥

**चट्टि–** सर्वाणि शास्त्राणि ब्रह्मतर्कादीनि तथैव वेदानुसारेणैव कृत्वा, विनिर्णीयते अनेन इति विनिर्णयं अशेषवेदनिर्णायकं ब्रह्मसूत्रम् । जात्यपेक्षया एकवचनम् । चकार कृतवान् । ब्रह्मगिरीशमुख्याः सुराः मुनीनां ऋषीणां प्रवराश्च जैमिन्यादयस्तस्मात् व्यासात् तत् ब्रह्मसूत्रं शुश्रुवुः ॥५८॥

---

...यान्ति पारम् ॥ 'मानं यस्य वचः सुरासुरगणैः सद्भिर्नरैर्मन्यते ज्ञानं येन च भण्यते भ्रमहरं शान्तिप्रदं चामृतम् । यद्वाच्यार्थचतुष्टयं तदृषयः प्राहुर्नृणां तुष्टये यस्मिन्नास्ति न चास्य तत्क्वचिदपि व्यासं तमेनं भजे ॥' इति शाण्डिल्यसंहितायाम् । भक्तिखण्डे.४अंश.११अ.४७-५१ ।

**समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयम् ।**
**वेदोत्तमं तच्च विधातृशङ्करप्रधानकैस्तन्मुखतः सुरैः श्रुतम् ॥५९॥**

**वादिराजीया–** समस्तशास्त्रार्थनिदर्शनात्मकमित्यस्य समस्तशास्त्रार्थदृष्टान्तरूपमित्यर्थः । राजसूये अग्रपूजया कृष्णश्रैष्ठ्यस्य निदर्शितत्वात् । बाललीलामारभ्य भीमे सर्वेभ्यो बलातिशयस्य, विषभक्षणसर्पदंशनादिना मरणाभावसामर्थ्यस्य, लाक्षगृहात् कुन्तीयुधिष्ठिरादीन् सर्वानुदूह्य गमनेन, सर्वासाध्यजरासन्धादिवधेन च सकलदेवोत्तमत्वस्य च निदर्शितत्वादिति भावः ॥५९-६०॥

**वरदराजीया–** समस्तशास्त्रं निर्णयं निदर्शनात्मकं दृष्टान्तरूपं महाभारतं नामधेयं ग्रन्थं चकार । वेदेभ्यो अप्युत्तमं तद्भारतम् । विधातृशङ्करौ ब्रह्मरुद्रौ प्रमुखौ येषां ते तैः । सुरैः तस्य वेदव्यासस्य मुखतो मुखाच्छ्रुतं अर्थतः पाठतोऽभ्यस्तम् ॥५९॥

**अनन्तभट्टीया–** वेदोत्तमं वेदेभ्यो उत्तमम् । तच्च वेदानुक्तार्थयुक्तत्वेन ॥५९॥

**जनार्दनीया–** समस्तशास्त्रार्थनिदर्शनात्मकं दृष्टान्तरूपम् । वेदेभ्यः उत्तमं तद्भारतम् । तस्य वेदव्यासस्य मुखतः ॥५९॥

**ताम्रपर्णीया–** समस्तशास्त्राणीत्युक्तं क्रमेण विवृणोति– **समस्तेति** ॥ भारतस्य सर्वशास्त्रार्थ-निदर्शनात्मकत्वं च भगवत्पादैरेव 'निर्णयः सर्वशस्त्राणां सदृष्टान्तो हि भारते' इत्यादिना द्वितीयाध्याये निरूपितम् ॥५९-६१॥

**चट्टि–** समस्तशास्त्रार्थस्य निदर्शनात्मकं दृष्टान्तरूपं महाभारतनामधेयं ग्रन्थं चकार । वेदेभ्यः उत्तमं तद्भारतम् । विधातृशङ्करौ प्रधानकौ मुख्यौ प्रमुखौ येषां तैः । सुरैः तन्मुखतः तस्य वेदव्यासस्य मुखतः मुखात् श्रुतं पाठतः अर्थतश्च अभ्यस्तम् । समस्तशास्त्रार्थनिदर्शनात्मकमित्यत्र दृष्टान्तरूपत्वं च राजसूये अग्रपूजया कृष्णस्य श्रैष्ठ्यस्य निदर्शितत्वात्, बाललीलामारभ्य भीमस्य सर्वेभ्यो बलातिशयस्य, विषभक्षणसर्पदंशादिना मरणाभावसामर्थ्यस्य, कारागृहात् कुन्तीयुधिष्ठिरादीनां सर्वानूह्य गमनेन, सर्वासाध्यजरासन्धादिवधेन च सकलदेवोत्तमत्वस्य च निदर्शितत्वादिति भावः ॥५९॥

**अथो गिरीशादिमनोऽनुशायी कलिर्ममाराऽशु सुवाङ्मयैः शरैः ।**
**निकृत्तशीर्षो भगवन्मुखेरितैः सुराश्च सज्ज्ञानसुधारसं पपुः ॥६०॥**

**वरदराजीया–** अथानन्तरं गिरिशादीनां मनोऽनुशायी मनःसु सञ्चरणशीलः कलिः भगवन्मुखेनेरितैः प्रयुक्तैः सुवाङ्मयैर्ब्रह्मसूत्रादिसुवाग्रूपैः शरैः बाणैः । निकृत्तं छिन्नं शीर्षमज्ञानाख्यमस्तकं यस्य स तथाभूतः । सन् ममार देवापेक्षया मृतप्रायोऽभूत् । देवाः सज्ज्ञानाख्यसुधारसं पपुः सम्यज्ज्ञानामृतमास्वादितवन्तः ॥

**जनार्दनीया–** गिरीशादीनां रुद्रादिदेवानां मनस्सु अनुशेते सः तथा । वसतीत्यर्थः । भगवन्मुखेन श्रीवेदव्यासमुखेन ईरितैः प्रयुक्तैः सुवाङ्मयैः वेदभारतब्रह्मसूत्रादिसद्वाक्यात्मकैः । निकृत्तं छिन्नं शीर्षं शिरः यस्य स तथा । ममार मृत इवाभूत् । सुराः सञ्ज्ञानं समीचीनज्ञानं सुधारसमिव तं पपुः ॥६०॥

**चट्टि–** अथो अनन्तरं गिरीशादिनां रुद्रादीनां देवानां मनस्सु अनुशेते वसतीति तथा । कलिः भगवन्मुखेन श्रीवेदव्यासमुखेन ईरितैः प्रयुक्तैः सुवाङ्मयैः वेदभारतब्रह्मसूत्रादिसद्वाक्यात्मकैः शरैः । निकृत्तं छिन्नं शीर्षं अज्ञानाख्यशिरो यस्य स तथाभूतः । सन् आशु ममार । देवापेक्षया मृतप्रायोऽभूत् । सुराः देवाश्च सज्ज्ञानं सुधारस इव तं पपुः ॥६०॥

**अथो मनुष्येषु तथाऽसुरेषु रूपान्तरैः कलिरेवावशिष्टः ।**
**ततो मनुष्येषु च सत्सु संस्थितो विनाश्य इत्येव हरिर्व्यचिन्तयत् ॥६१॥**

**वेदाङ्गतीर्थीया–** कलिरवशिष्ट एव । विनाश्य एव इत्यचिन्तयत् ॥६१-६३॥

**वादिराजीया–** रूपान्तरैः कलिरेवावशिष्ट इत्यादेः देवर्ष्यादिस्थितमिथ्याज्ञानाख्यरूपाणां वाङ्मयैः निकृत्तशीर्षत्वेऽपि उत्तममध्यमाधमाख्यमनुष्येष्वसुरेषु च स्थितमिथ्याज्ञानाख्यरूपाण्यनिकृत्तशीर्षाण्येवावशिष्टानि । तत्र तन्मुखादेवानन्तवेदश्रवणासमर्थसन्मनुष्यस्थितमिथ्याज्ञानाख्यरूपाणां शिरश्छेदः कथं कार्यं इत्यचिन्तयदिति भावः ॥६१॥

**वरदराजीया–** अथानन्तरं मनुष्येषु कलिरवशिष्टः सर्वात्मनेत्यर्थः । सुरेषु च रूपान्तरैरेवावशिष्ट एवास्ति । ततः कारणेन मनुष्येषु सत्सु मुक्तियोग्येषु संस्थितः कलिर्विनाश्यो हन्तव्य एवेति हरिर्व्यासो व्यचिन्तयत् ॥६१॥

**अनन्तभट्टीया–** असुरेष्वेव रूपान्तरैः रूपविशेषैः उपलक्षितः कलिः ॥६१॥

**जनार्दनीया–** अथो देवमनसः निर्गमनानन्तरं मनुष्येषु त्रिविधमनुष्येषु तथा असुरेषु रूपान्तरैः रूपविशेषैः कलिरवशिष्ट एव । ततः अवशिष्टत्वात् सत्सु मनुष्येषु मनुष्योत्तमेषु संस्थितः कलिर्विनाश्यः मया नाशनीय इति हरिः व्यासः अचिन्तयत् ॥६१॥

**चट्टि–** अथो अनन्तरं मनुष्येषु त्रिविधमनुष्येषु तथा असुरेषु रूपान्तरैः रूपविशेषैः कलिरवशिष्टः एव । ततः अवशिष्टत्वात् सत्सु मनुष्येषु मनुष्योत्तमेषु संस्थितः कलिश्च विनाश्यः मया नाशनीयः एव इति हरिः व्यासः व्यचिन्तयत् ॥६१॥

**ततो [१]नृणां कालबलात् सुमन्दमायुर्मतिं कर्म च वीक्ष्य कृष्णः ।**
**विव्यास वेदान् स विभुश्चतुर्धा चक्रे तथा भागवतं पुराणम् ॥६२॥**

**वादिराजीया–** भागवतं पुराणमित्यत्र भगवत्सम्बन्धि भागवतं वैष्णवपुराणानि इत्यर्थः । जातावेकवचनम् ॥६२-६३॥

**वरदराजीया–** ततस्तदनन्तरं कालबलात् कालसमर्थेन नृणां मनुष्याणां अल्पमायुः तथा मन्दां मतिं प्रज्ञां कर्म च वीक्ष्य कृष्णद्वैपायनो विभुः समर्थः वेदान् ऋगादिभेदेन विद्यमानान् मूलवेदान् चतुर्धा विव्यास विभक्तानकरोत् । ऋगादिराशिभ्यो ऋगादिवेदान् पृथक्कृत्वा अवान्तरऋगादिसञ्ज्ञां चकारेति भावः । तथा भागवतं नामकं पुराणं चक्रे ॥६२॥

**अनन्तभट्टीया–** चतुर्धा ऋगादिनाम्ना ॥६२॥

**जनार्दनीया–** ततः विभुः स कृष्णः व्यासः नृणां कालबलात् युगसामर्थ्येन सुमन्दं अत्यल्पं आयुः मतिं प्रज्ञां कर्म वर्णाश्रमोचितकर्माचरणं च वीक्ष्य विचार्य वेदान् मूलवेदान् चतुर्धा ऋगादिचतुःप्रकारभेदेन विव्यास विभागान् चकार । पुराणं चक्रे ॥६२॥

**ताम्रपर्णीया–** ॥ **ततो नृणामिति** ॥ यद्यपि वेदविभागो भारतात् प्राचीनः । 'तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् । इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः' [१.१.३८] इति भारते । 'वेदमुत्सन्नं व्यञ्जयन् चतुर्धा व्यभजद्' इति भाष्योक्तेः । तथाऽपि भागवतेन साकमेकप्रयोजनोक्तिलाघवायात्रोक्तिः ॥६२-६३॥

**भावचन्द्रिका–** द्वीपायनस्य ऋषेः अपत्यं द्वैपायनः, मरकतश्यामत्वात् कृष्णः, विव्यास वेदान् तस्मात् वेदव्यासः । प्रागेव चतुर्धा विभक्तवेदं ऋङ्निगदादिरूपमेकीकृत्य एकस्मादेको भाग इति चतुर्धा व्यभजदिति भावः ॥६२॥

**चट्टि–** ततस्तदनन्तरं विभुः सः कृष्णः व्यासः कालबलात् युगसामर्थ्येन नृणां सुमन्दमत्यल्पं आयुः तथा मन्दां मतिं प्रज्ञां मन्दं कर्म वर्णाश्रमोचितकर्माचरणं च वीक्ष्य विचार्य वेदान् मूलवेदान् चतुर्धा ऋगादिचतुःप्रकारभेदेन विव्यास विभक्तानकार्षीत् । तथा भागवतं तन्नामकं पुराणं चक्रे ॥६२॥

---

१. परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा । युगधर्मव्यतिकरं प्राप्तं भुवि युगेयुगे ॥ भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् । अश्रद्दधानान् निःसत्वान् दुर्मेधान् ह्रसितायुषः ॥ दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा । सर्ववर्णाश्रमाणां यद्दध्यौ चिरममोघदृक् ॥ चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् । व्यदधाद् यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥ ऋग्यजुसामथर्वाख्या वेदाश्चत्वार उद्धृताः । इतिहासपुराणं च पञ्चमो वेद उच्यते ॥ भा.१.४.१५-१९

**ये ये च सन्तस्तमसाऽनुविष्टास्तांस्तान् सुवाक्यैस्तमसो विमुञ्चन् ।**
**चचार लोकान् स पथि प्रयान्तं कीटं व्यपश्यत् तमुवाच कृष्णः ।।६३।।**

**वरदराजीया–** तत्र तत्र ये सन्तः सज्जनाः तमसा अज्ञानेन अनुविष्टा संपृक्ताः तान् तान् लोकान् सज्जनान् सुवाक्यैः उपदेशरूपैः तमसोऽज्ञानाद्विमुञ्चन् मोचयन् चचार । तत्र तत्र लोकेषु सञ्चचार । स कृष्णद्वैपायनः पथि मार्गे प्रयान्तं गच्छन्तं कीटं व्यपश्यत् दृष्टवान् । ततस्तदनन्तरं तत्कीटमुवाच ।।६३।।

**जनार्दनीया–** स व्यासः तमसा अज्ञानेन । सुवाक्यैः ब्रह्मसूत्रादिषु उक्तनिर्णयरूपसद्वाक्यैः । तमसः अज्ञानात् । लोकान् सज्जनाक्रान्तप्रदेशान् चचार । कृष्णः पथि प्रायान्तं गच्छन्तं कीटं कञ्चन कीटस्वरूपं प्राप्तं पुरुषं अपश्यत् । तं कीटकं उवाच ।।६३।।

**चट्टि–** सः व्यासः ये ये सन्तः सज्जनास्तमसा अज्ञानेन अनुविष्टाः सम्पृक्ताः तान् लोकान् सज्जनान् सुवाक्यैः उपदेशरूपवाक्यैस्तमसः अज्ञानाद्विमुञ्चन् मोचयन् चचार । कृष्णः व्यासः पथि मार्गे प्रयान्तं गच्छन्तं कीटं कीटस्वरूपं प्राप्तं कञ्चन पुरुषं व्यपश्यत् । तं कीटमुवाच ।।६३।।

**भवस्व राजा कुशरीरमेतत् त्यक्त्वेति नैच्छत् तदसौ ततस्तम् ।**
**अत्यक्तदेहं नृपतिं चकार पुरा स्वभक्तं वृषलं सुलुब्धम् ।।६४।।**

**व्यासतीर्थीया–** कीटं राजानं कस्मादकरोत् ? स पूर्वं कः ? केन कीटो जात इत्यत उक्तम्- **पुरेति** ।।६४-६५।।

**वेदाङ्गतीर्थीया–** कीटं तं किमर्थं राजानमकरोत् । स च पूर्वं कः ? केन वा कारणेन तस्य कीटत्वमित्यत उक्तम्– **पुरेत्यादिना ।।** कुतो राजानमकरोत् इत्यस्योत्तरम्– **पुरा स्वभक्तमिति ।।** पूर्वं कः इत्यस्योत्तरम्– **वृषलमिति ।।** केन कारणेन जात इत्यस्योत्तरम्– **लुब्धमिति** ।।६४-६५।।

**वादिराजीया–** वृषलं सुलुब्धमित्यत्र वृषलं शूद्रम् ।।६४-६५।।

**वरदराजीया–** किमिति । एतत् कुशरीरं कीटशरीरं त्यक्त्वा उत्तमदेहं प्राप्य च राजा भवस्वेति । असौ कीटस्तत्कीटशरीरं त्यक्तुं नैच्छत् । ततस्तदनन्तरं कीटं अत्यक्तदेहं नृपतिं राजानं चकार । कीटं किमिति राजानं चकारेत्यत उक्तम्– **पुरेति ।।** पूर्वजन्मनि स्वस्य भक्तम् । पूर्वं क इत्यत उक्तम्– **वृषलमिति ।।** शूद्र इत्यर्थः । भक्तः शूद्रः किमिति कीटयोनिं प्राप्त इत्यत उक्तम्– **सुलुब्धमिति ।।** धनादिषु अत्यन्तलोभयुक्तं ।।६४।।

**अनन्तभट्टीया–** राजा भवस्व । सुलुब्धं अतिलोभयुक्तम्[१] ।।६४।।

**जनार्दनीया–** किमिति ? कुशरीरं निन्द्यदेहम् । असौ कीटः । तत् देहसन्त्यजनम् । कीटं नृपतिं चकार । नृपतिकरणे हेतुमाह– **पुरेति** ।। तद्वर्णमप्याह– **वृषलमिति** ।। वृषलं शूद्रम् । भक्तस्य कीटयोनिप्राप्तौ कारणमाह – **सुलुब्धमिति** ।। अतिलोभाख्यदोषयुक्तमित्यर्थः ।।६४।।

**ताम्रपर्णीया–** ।। **अत्यक्तदेहेति** ।। कीटदेहमेव मनुष्यदेहं कृत्वा राजानं चकारेत्यर्थः । केचित्तु 'कीटेनैव राज्यं कारयामास' इत्याहुः ।।६४-६५।।

**चट्टि–** किमिति । एतत् कुशरीरं निन्द्यदेहं त्यक्त्वा राजा भवस्वेति । असौ कीटः तद्देहसन्त्यजनं नैच्छत् । ततस्तदनन्तरं अत्यक्तदेहं तं कीटं कीटस्वरूपं नृपतिं राजानं चकार । कीटं नृपतिं किमर्थं चकारेत्यत आह– **पुरेति** ।। पुरा पूर्वजन्मनि स्वभक्तम् ।तद्वर्णमप्याह– **वृषलमिति** ।। वृषलं शूद्रम् । भक्तस्य कीटयोनिप्राप्तौ कारणमाह– **सुलुब्धमिति** ।। अतिलोभाख्यदोषयुक्तमित्यर्थः ।।६४।।

**लोभात् स कीटत्वमुपेत्य कृष्णप्रसादतश्चाऽशु बभूव राजा ।**
**तदैव तं सर्वनृपाः प्रणेमुर्ददुः करं चास्य यथैव वैश्याः ।।६५।।**

**वरदराजीया–** अतो लोभात् कीटत्वमुपेत्य श्रीकृष्णस्य वेदव्यासस्य प्रसादतः आशु राजा बभूवेत्यर्थः । तदैव तस्मिन् राज्ञि समेत्यैव सर्वे नृपाः तं कीटं प्रणेमुः नमस्कृतवन्तः । अस्य कीटस्य यथा वैश्याः प्रजास्तथा करं दण्डं च ददुः ।।६५।।

**जनार्दनीया–** तं कीटस्वरूपं राजानम् । यथा वैश्याः बलिष्ठस्य राज्ञः करं ददति । तथा अस्य कीटस्वरूपराजस्य इत्यर्थः ।।६५।।

**भारतश्री–** सर्वेषां जनानां राजेव दृश्यते व्यवहारादि च करोति इत्याहुः । भारते स एव कीटत्वं [त्यक्त्वा] राजा बभूवेति उक्तिर्वर्तते । यथैव यथावदेव ।।६५।।

**चट्टि–** सः वृषलः लोभात् कीटत्वं उपेत्य कृष्णस्य वेदव्यासस्य प्रसादतः प्रसादादाशु राजा बभूव ।।

**उवाच तं भगवान् मुक्तिमस्मिंस्तव क्षणे दातुमहं समर्थः ।**
**तथाऽपि सीमार्थमवाप्य विप्रतनुं विमुक्तो भव मत्प्रसादात् ।।६६।।**

**व्यासतीर्थीया–** यः स्वभावतो ब्राह्मणः तस्य ब्राह्मणजन्मन्येव मुक्तिरिति सीमार्थम् ।।६६।।

---

१. **अनन्तभट्टीया–** अत्यक्तदेहमिति कीटदेहमेव मनुष्यदेहं कृत्वा राजानं चकारेत्यर्थः । न चैवं इच्छानुसारित्वं स्यादिति वाच्यम् । तद्देहं त्यक्त्वा देहान्तरप्राप्तेरनिच्छितत्वात् । केचित्तु कीटदेहेनैव राजानं चकारेत्यर्थमाहुः ।। अयं हो. पुस्तकपाठः।

**वेदाङ्गतीर्थीया–** सीमार्थं स्वभावतश्चतुर्वर्णस्थजीवेषु यः ब्राह्मणः तस्य ब्राह्मणजन्मन्येव मुक्तिरिति मर्यादार्थम् ।।६६-६८।।

**वादिराजीया–** तथापि सीमार्थमित्यत्र सीमा मर्यादा तद्रक्षणार्थमित्यर्थः । स्वरूपतो ब्राह्मणेन ब्राह्मणत्वमवाप्यैव मोक्षः प्राप्यः न तु रूपान्तरेणेति । मर्यादारक्षणार्थमिति भावः ।।६६-६९।।

**वरदराजीया–** भगवान् व्यासः तं कीटं उवाच । किमिति । अस्मिन्नेव क्षणे तव मुक्तिं मोक्षं दातुमहं समर्थोऽस्मि । तथापि सीमार्थं स्वभावतश्चतुर्वर्णगतेषु जीवेषु यः स्वभावतः ब्राह्मणः तस्य ब्राह्मणजन्मन्येव मुक्तिरिति मर्यादारक्षणार्थं विप्रतनुं ब्राह्मणतनुं समवाप्य मत्प्रसादात् मुक्तो भवेत्युवाचेति सम्बन्धः ।।६६।।

**अनन्तभट्टीया–** सीमार्थं यः स्वभावतो ब्राह्मणः तस्य ब्राह्मणजन्मन्येव मुक्तेरिति सीमार्थम्[१]।।६६।।

**जनार्दनीया–** तं कीटम् । यद्यपि समर्थः तथापि सीमार्थं स्वभावतः चतुर्वर्णजीवेषु यः स्वभावतो ब्राह्मणः तस्य ब्राह्मणजन्मन्येव मुक्तिरिति मर्यादां अभिरक्षितुम् इत्यर्थः ।।६६।।

**ताम्रपर्णीया–** ।। **सीमार्थमिति** ।। 'अन्त्यदेहो यथा निजः' इति वचनात् [गी.ता.९.३२] चरमदेहस्य स्वरूपानुसारित्वादिति मर्यादार्थमित्यर्थः ।।६६-६९।।

**चट्टि–** तदैव तस्मिन् काल एव क्षणे तव मुक्तिं दातुमहं समर्थोऽस्मि । तथापि सीमार्थं स्वभावतश्चतुर्वर्णस्थजीवेषु यः स्वभावतो ब्राह्मणः तस्य ब्राह्मणजन्मन्येव मुक्तिरिति मर्यादामभिरक्षितुमित्यर्थः । विप्रतनुं ब्राह्मणदेहमवाप्य मत्प्रसादात् विमुक्तो भवेत्युवाचेति सम्बन्धः ।।६६।।

**ज्ञानं च तस्मै विमलं ददौ स महीं च सर्वां बुभुजे तदन्ते ।**
**त्यक्त्वा तनुं विप्रवरत्वमेत्य[२] पदं हरेश्चाप सुतत्त्ववेदी ।।६७।।**

**वरदराजीया–** तस्मै कीटाय विमलं शुद्धं ज्ञानं ददौ व्यासः । स कीटः सर्वां सप्तद्वीपवतीं महीं बुभुजे अनुशशासेत्यर्थः । तदन्ते राज्यपरिपालनान्ते तनुं कीटदेहं त्यक्त्वा विप्रवरत्वं ब्राह्मणश्रेष्ठत्वमेत्य प्राप्य तत्रापि सुतत्वानि परमात्मादितत्वानि वेत्तीति तथा तत्वमपरोक्षज्ञानी भूत्वा हरेः पादं स्थानमाप प्राप्तवान् ।।६७।।

---

१. अनन्तभट्टीया– ।। सीमार्थमिति ।। चरमदेहस्य स्वरूपानुसारित्वमिति या मर्यादा तदर्थमिथ्यर्थः । अयं हो.पुस्तकपाठः ।

२. भगवद्वचनात् कीटो ब्राह्मण्यं प्राप्य दुर्लभम् । अकरोत् पृथिवीं राजन् यज्ञयूपशताङ्किताम् ।। ततः सालोक्यमगमद्ब्रह्मणो ब्रह्मवित्तमाः ।। अनुशासन.१८१.१२ ।

**अनन्तभट्टीया–** तदन्ते भोगान्ते ।।६७।।

**जनार्दनीया–** तस्मै कीटाय सर्वां महीम्, चक्रवर्तित्वं इत्यर्थः । तदन्ते राज्यान्ते तनुं कीटदेहं त्यक्त्वा विसृज्य विप्रवरत्वं ब्राह्मणोत्तमत्वं एत्य, तत्रापि सुतत्त्ववेदी हरिस्वरूपाभिज्ञस्वभावः सन् हरेः पदं स्थानं आप ।।६७।।

**चट्टि–** व्यासस्तस्मै कीटाय विमलं शुद्धं ज्ञानं च ददौ । सः कीटः सर्वां सप्तद्वीपवतीं महीं च बुभुजे । शशासेत्यर्थः । तदन्ते राज्यान्ते तनुं कीटदेहं त्यक्त्वा विसृज्य विप्रवरत्वं ब्राह्मणश्रेष्ठत्वमेत्य तत्रापि सुतत्त्ववेदी हरिस्वरूपाभिज्ञस्वभावः सन् हरेः पदं स्थानं अवाप ।।६७।।

**एवं बहून् संसृतिबन्धतस्स व्यमोचयद् व्यासतनुर्जनार्दनः ।**
**बहून्यचिन्त्यानि च तस्य कर्माण्यशेषदेवेशसदोदितानि ।।६८।।**

**वरदराजीया–** एवमुक्तरीत्या व्यासतनुः व्यासरूपी जनार्दनो बहूनन्यान् संसृतिसम्बन्धात् अमोचयत् वियुक्तांश्चकार । तस्य श्रीवेदव्यासस्य अशेषैः सर्वैः देवेशैः ब्रह्मादिभिः सदोदितानि कीर्तनीयानि बहूनि अत एव साकल्येनाचिन्त्यानि स्मर्तुमशक्यानि च कर्माणि सन्तीत्यर्थः ।।६८।।

**जनार्दनीया–** एवं कीटवत् बहून् स्वभक्तान् संसृतिबन्धतः संसारबन्धनात् । तस्य श्रीवेदव्यासस्य । अशेषदेवेशैः ब्रह्माद्यैः, सदा संसारे मुक्त्यवस्थायां, उदितानि उपात्तानीत्यर्थः । तथाप्यचिन्त्यानि मनसा स्मर्तुं अशक्यानि बहूनि कर्माणि, सन्तीति शेषः ।।६८।।

**चट्टि–** एवमुक्तरीत्या व्यासतनुः व्यासरूपी सः जनार्दनः बहून् स्वभक्तान् संसृतिबन्धतः संसारबन्धनात् व्यमोचयत् । मुक्तांश्चकार । तस्य श्रीवेदव्यासस्य अशेषदेवेशैः ब्रह्माद्यैः सदोदितानि स्तुतानीत्यर्थः । तथाप्यचिन्त्यानि मनसा स्मर्तुमशक्यानि बहूनि कर्माणि सन्तीति शेषः ।।६८।।

**अथास्य पुत्रत्वमवाप्तुमिच्छंश्चचार रुद्रः सुतपस्तदीयम् ।**
**ददौ च तस्मै भगवान् वरं तं स्वयं च तस्त्वेव तपो विमोहयन् ।।६९।।**

**वेदाङ्गतीर्थीया–** स्वयं च तपस्तस्वैव रुद्रं सुतमवृणोदिति अयोग्यजनान् विमोहयन् ।।६९।।

**सत्याभिनवतीर्थीया–** तत्रैव अथास्य पुत्रत्वमवाप्तुमिच्छन्... इति श्लोकः । तस्यार्थः । रुद्रः ज्ञानविशेषादिकमवाप्तुं अस्य व्यासस्य पुत्रत्वमिच्छन् तदीयं व्याससम्बन्धि व्यासप्रीतिकरमिति यावत् । सुतपः चचार । भगवान् व्यासः तस्मै रुद्राय तं वरं ददौ । अथ वरदानानन्तरं व्यासः स्वयं च स्वतन्त्रोऽपि तपः तस्त्वेव तस्त्वैव पुत्रं प्रापेति विमोहयंश्च बभूवेति । एतेन अथेत्येतत् व्यर्थमिति दूषणं

परास्तम् । 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत्' इति प्रमाणानुसारेण व्यवधानेनान्वयमङ्गीकृत्य वरदानानन्तरं इत्यर्थस्य उक्तत्वात् । एतेनैव 'पुत्रत्वमिच्छन्' इत्यनेनैव पूर्णत्वात् 'अवाप्तुम्' इत्येतत् व्यर्थमिति दूषणं परास्तम् । ज्ञानविशेषादिकमित्यस्य विशेषेण ज्ञानविशेषादिकं अवाप्तुं इत्यर्थस्य उक्तत्वात् । एतेनैव 'तपः तप्त्वैव' इति वक्तव्यम् । 'तपस्तप्त्वेव' इति कथनमनुपपन्नमिति दूषणं परास्तम् । इवशब्दः एवार्थे वर्तते इत्यङ्गीकारात् । एतेनैव 'तपः तप्त्वैव' इत्येतदनन्वितमिति दूषणं निरस्तम् । 'पुत्रं प्राप' इति अध्याहृतेन अन्वयस्य उक्तत्वात् । एतेनैव 'विमोहयन्' इत्येतदनन्वितमिति दूषणं प्रत्युक्तम् । अध्याहृतेन वभूवेत्यनेनान्वय इत्यभ्युपगमात् ।।६९।।

**वरदराजीया–** अथानन्तरं रुद्रोऽस्य श्रीव्यासस्य पुत्रत्वं पुत्रभावमवाप्तुं इच्छन् तदीयं व्यासविषयं सुतपश्चकार कृतवान् । भगवान् व्यासस्तस्मै रुद्राय तं वरं ददौ च । स्वयं व्यासः तपस्तप्त्वा रुद्रं पुत्रं लेभे इति तु अपप्रथामात्रमित्याह– **स्वयमिति** ।। विमोहयन् असुरान् मोहायन् स्वयं व्यासस्तपस्तप्त्वैव रुद्रं पुत्रमवाप्येति शेषः ।।६९।।

**अनन्तभट्टीया–** तदीयं वैष्णवं तपः ।।६९।।

**जनार्दनीया–** अस्य व्यासस्य । तदीयं व्याससम्वन्धि सुतपः महत्तपः । भगवान् तस्मै रुद्राय तं वरं स्वपुत्रत्वप्राप्तिरूपं वरं ददौ । किं कृत्वा ? स्वयं तपस्तप्त्वा, रुद्रं पुत्रं प्रापेति विमोहयन्, दैत्यानिति शेषः । स्वयं व्यासः तपः शैवं तपः तप्त्वेव रुद्रः मम पुत्रो भवेदिति तथैव वरं ददाविति सम्वन्धः ।।६९।।

**चट्टि–** अथानन्तरं रुद्रः श्रीवेदव्यासस्य पुत्रत्वं अवाप्तुं इच्छन् तदीयं व्याससम्वन्धि सुतपो महातपश्चकार कृतवान् । भगवान् व्यासस्तस्मै रुद्राय तं वरं स्वपुत्रत्वप्राप्तिरूपं वरं ददौ च । किं कृत्वा? स्वयं तपस्तप्त्वा पुत्रं प्रापेत्यसुरानपि मोहयन् स्वयं व्यासस्तपः शैवं तपस्तप्त्वैव रुद्रः मम पुत्रो भवेदिति तप्त्वैव वरं ददाविति सम्बन्धः ।।६९।।

**विमोहनायासुरसर्गिणां प्रभुः स्वयं करोतीव तपः प्रदर्शयेत् ।**
**कामादिदोषांश्च मृषैव [१]दर्शयेन्न तावता तस्य हि सन्ति कुत्रचित् ।।७०।।**

**व्यासतीर्थीया–** न केवलमेकवारं मोहयंस्तपस्तेप इत्याह– **विमोहनायेति** ।।७०।।

**वादिराजीया–** विमोहयन्नित्यत्रोक्तविमोहः कस्येत्यत आह– **विमोहनायेति** ।। 'सर्गः स्वभावनिर्मोकनिश्चयाध्यायसृष्टिषु' इति वचनात् असुरसर्गिणां असुरस्वभाविनां इत्यर्थः । न तावता

१. 'दर्शयन्' इति चेट्टिटिप्पण्यां पाठान्तरम् ।

**अनन्तभट्टीया–** तदन्ते भोगान्ते ।।६७।।

**जनार्दनीया–** तस्मै कीटाय सर्वां महीम्, चक्रवर्तित्वं इत्यर्थः । तदन्ते राज्यान्ते तनुं कीटदेहं त्यक्त्वा विसृज्य विप्रवरत्वं ब्राह्मणोत्तमत्वं एत्य, तत्रापि सुतत्ववेदी हरिस्वरूपाभिज्ञस्वभावः सन् हरेः पदं स्थानं आप ।।६७।।

**चट्टि–** व्यासस्तस्मै कीटाय विमलं शुद्धं ज्ञानं च ददौ । सः कीटः सर्वां सप्तद्वीपवतीं महीं च बुभुजे । शशासेत्यर्थः । तदन्ते राज्यान्ते तनुं कीटदेहं त्यक्त्वा विसृज्य विप्रवरत्वं ब्राह्मणश्रेष्ठत्वमेत्य तत्रापि सुतत्त्ववेदी हरिस्वरूपाभिज्ञस्वभावः सन् हरेः पदं स्थानं अवाप ।।६७।।

**एवं बहून् संसृतिबन्धतस्स व्यमोचयद् व्यासतनुर्जनार्दनः ।**
**बहून्यचिन्त्यानि च तस्य कर्माण्यशेषदेवेशसदोदितानि ।।६८।।**

**वरदराजीया–** एवमुक्तरीत्या व्यासतनुः व्यासरूपी जनार्दनो बहूनन्यान् संसृतिसम्बन्धात् अमोचयत् वियुक्तांश्चकार । तस्य श्रीवेदव्यासस्य अशेषैः सर्वैः देवेशैः ब्रह्मादिभिः सदोदितानि कीर्तनीयानि बहूनि अत एव साकल्येनाचिन्त्यानि स्मर्तुमशक्यानि च कर्माणि सन्तीत्यर्थः ।।६८।।

**जनार्दनीया–** एवं कीटवत् बहून् स्वभक्तान् संसृतिबन्धतः संसारबन्धनात् । तस्य श्रीवेदव्यासस्य । अशेषदेवेशैः ब्रह्माद्यैः, सदा संसारे मुक्त्यवस्थायां, उदितानि उपात्तानीत्यर्थः । तथाप्यचिन्त्यानि मनसा स्मर्तुं अशक्यानि बहूनि कर्माणि, सन्तीति शेषः ।।६८।।

**चट्टि–** एवमुक्तरीत्या व्यासतनुः व्यासरूपी सः जनार्दनः बहून् स्वभक्तान् संसृतिबन्धतः संसारबन्धनात् व्यमोचयत् । मुक्तांश्चकार । तस्य श्रीवेदव्यासस्य अशेषदेवेशैः ब्रह्माद्यैः सदोदितानि स्तुतानीत्यर्थः । तथाप्यचिन्त्यानि मनसा स्मर्तुमशक्यानि बहूनि कर्माणि सन्तीति शेषः ।।६८।।

**अथास्य पुत्रत्वमवाप्तुमिच्छंश्चचार रुद्रः सुतपस्तदीयम् ।**
**ददौ च तस्मै भगवान् वरं तं स्वयं च तस्यैव तपो विमोहयन् ।।६९।।**

**वेदाङ्गतीर्थीया–** स्वयं च तपस्तस्यैव रुद्रं सुतमवृणोदिति अयोग्यजनान् विमोहयन् ।।६९।।

**सत्याभिनवतीर्थीया–** तत्रैव अथास्य पुत्रत्वमवाप्तुमिच्छन्... इति श्लोकः । तस्यार्थः । रुद्रः ज्ञानविशेषादिकमवाप्तुं अस्य व्यासस्य पुत्रत्वमिच्छन् तदीयं व्याससम्बन्धि व्यासप्रीतिकरमिति यावत् । सुतपः चचार । भगवान् व्यासः तस्मै रुद्राय तं वरं ददौ । अथ वरदानानन्तरं व्यासः स्वयं च स्वतन्त्रोऽपि तपः तस्यैव तस्यैव पुत्रं प्रापेति विमोहयंश्च बभूवेति । एतेन अथेत्येतत् व्यर्थमिति दूषणं

परास्तम् । 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत्' इति प्रमाणानुसारेण व्यवधानेनान्वयमङ्गीकृत्य वरदानानन्तरं इत्यर्थस्य उक्तत्वात् । एतेनैव 'पुत्रत्वमिच्छन्' इत्यनेनैव पूर्णत्वात् 'अवाप्तुम्' इत्येतत् व्यर्थमिति दूषणं परास्तम् । ज्ञानविशेषादिकमित्यस्य विशेषेण ज्ञानविशेषादिकं अवाप्तुं इत्यर्थस्य उक्तत्वात् । एतेनैव 'तपः तस्वैव' इति वक्तव्यम् । 'तपस्तस्वेव' इति कथनमनुपपन्नमिति दूषणं परास्तम् । इवशब्दः एवार्थे वर्तते इत्यङ्गीकारात् । एतेनैव 'तपः तस्वैव' इत्येतदनन्वितमिति दूषणं निरस्तम् । 'पुत्रं प्राप' इति अध्याहृतेन अन्वयस्य उक्तत्वात् । एतेनैव 'विमोहयन्' इत्येतदनन्वितमिति दूषणं प्रत्युक्तम् । अध्याहृतेन बभूवेत्यनेनान्वय इत्यभ्युपगमात् ।।६९।।

**वरदराजीया–** अथानन्तरं रुद्रोऽस्य श्रीव्यासस्य पुत्रत्वं पुत्रभावमवाप्तुं इच्छन् तदीयं व्यासविषयं सुतपश्चकार कृतवान् । भगवान् व्यासस्तस्मै रुद्राय तं वरं ददौ च । स्वयं व्यासः तपस्तप्त्वा रुद्रं पुत्रं लेभे इति तु अपप्रथामात्रमित्याह– **स्वयमिति** ।। विमोहयन् असुरान् मोहायन् स्वयं व्यासस्तपस्तस्वैव रुद्रं पुत्रमवाप्येति शेषः ।।६९।।

**अनन्तभट्टीया–** तदीयं वैष्णवं तपः ।।६९।।

**जनार्दनीया–** अस्य व्यासस्य । तदीयं व्याससम्बन्धि सुतपः महत्तपः । भगवान् तस्मै रुद्राय तं वरं स्वपुत्रत्वप्राप्तिरूपं वरं ददौ । किं कृत्वा ? स्वयं तपस्तप्त्वा, रुद्रं पुत्रं प्रापेति विमोहयन्, दैत्यानिति शेषः । स्वयं व्यासः तपः शैवं तपः तस्वेव रुद्रः मम पुत्रो भवेदिति तथैव वरं ददाविति सम्बन्धः ।।६९।।

**चट्टि–** अथानन्तरं रुद्रः श्रीवेदव्यासस्य पुत्रत्वं अवाप्तुं इच्छन् तदीयं व्याससम्बन्धि सुतपो महातपश्चकार कृतवान् । भगवान् व्यासस्तस्मै रुद्राय तं वरं स्वपुत्रत्वप्राप्तिरूपं वरं ददौ च । किं कृत्वा? स्वयं तपस्तप्त्वा पुत्रं प्रापेत्यसुरानपि मोहयन् स्वयं व्यासस्तपः शैवं तपस्तस्वैव रुद्रः मम पुत्रो भवेदिति तस्वैव वरं ददाविति सम्बन्धः ।।६९।।

**विमोहनायासुरसर्गिणां प्रभुः स्वयं करोतीव तपः प्रदर्शयेत् ।**
**कामादिदोषांश्च मृषैव [1]दर्शयेन्न तावता तस्य हि सन्ति कुत्रचित् ।।७०।।**

**व्यासतीर्थीया–** न केवलमेकवारं मोहयंस्तपस्तेप इत्याह– **विमोहनायेति** ।।७०।।

**वादिराजीया–** विमोहयन्नित्यत्रोक्तविमोहः कस्येत्यत आह– **विमोहनायेति** ।। 'सर्गः स्वभावनिर्मोकनिश्चयाध्यायसृष्टिषु' इति वचनात् असुरसर्गिणां असुरस्वभाविनां इत्यर्थः । न तावता

१. 'दर्शयन्' इति चट्टिटिप्पण्यां पाठान्तरम् ।

तस्य हि सन्तीत्यत्र हिशब्देन 'न कर्मणा लिप्यते पापकेन' [बृ.६.४.शारीरब्राह्मण.२२] 'न स्त्रीकृतं कश्मलमश्नुवीत' इत्यादिश्रुतिस्मृतिप्रसिद्धिं सूचयति । तेन अरण्योर्मथनसमये रेतःपातो जात इति कथा असुरजनमोहनार्था । रेतस्तु प्राकृतं सृष्टमेव न स्वरेत इति सिद्धम् । अन्यथा 'स्त्रीकृतं कश्मलं नाश्नुवीत' इति स्पष्टवचनव्याघातादिति भावः ।।७०।।

**वरदराजीया–** अन्यत्राप्येवमेवेत्याह– **विमोहनायेति** ।। असुरसर्गिणां असुरसृष्टिमतां दुष्टानां विमोहनाय भ्रान्तिजननाय विभुः समर्थोऽपि स्वयं तपःकरोतीवेति प्रदर्शयन्न तु वस्तुतः सन्तापात्मकं तपश्चरतीत्यर्थः । ननु पुत्रादिफलाकाङ्क्षया तपः करोतीति किं न स्यादित्यत आह– **कामेति** ।। कामादीन् फलाकाङ्क्षादीन् दोषान् मृषा अविद्यमानानेव मोहनाय प्रदर्शयत् । तावता दर्शनमात्रेण तस्य हरेः कुत्रचित्काले देशे च दोषा न सन्ति । अवाप्तसकलपुरुषार्थत्वादिति भावः ।।७०।।

**अनन्तभट्टीया–** तं सुतदानरूपम् ।।७०।।

**जनार्दनीया–** व्यासः एवमन्यत्रापि तथा अवतारान्तरेऽपि तपः करोतीव प्रदर्शयतीत्याह– **विमोहनायेति** ।। असुरसर्गिणां दैत्यसृष्टिमताम् । 'सर्गः स्वभावनिर्मोकनिश्चयाध्यायसृष्टिषु' इत्यमरः । विमोहनाय विपरीतज्ञानार्थं कामादिदोषान् पुत्रेच्छादिदोषान् मृषैव अविद्यमानानेवेत्यर्थः । दर्शयेत् । तावता दर्शनमात्रादेव ते दोषाः अस्य हरेः कुत्रचित् देशकालेऽपि न सन्तीति हि निर्णयग्रन्थेषु प्रसिद्धिः ।।

**ताम्रपर्णीया–** 'विमोहयन्' इत्युक्तो मोहः केषामित्यत उक्तं विवृणोति– **विमोहनायेति** ।। असुरसर्गिणामसुरस्वभावानाम् । 'सर्गः स्वभावनिर्मोकनिश्चयाध्यायसृष्टिषु' इत्यभिधानात् ।।७०।।

**चट्टि–** अन्यत्राप्येवमेवत्याह– **विमोहनायेति** ।। 'सर्गः स्वभावनिर्मोकनिश्चयाध्यायसृष्टिषु' इति वचनात् । असुरसर्गिणामसुरस्वभावानामित्यर्थः । असुरसृष्टिमतां वा । विमोहनाय विपरीतज्ञानार्थं विभुः समर्थोऽपि हरिः स्वयं तपः करोतीव प्रदर्शयेत् । न तु वस्तुतः सन्तापात्मकं तपः करोतीत्यर्थः । ननु पुत्रादिफलाकाङ्क्षया तपः करोतीति किं न स्यादित्यत आह– **कामेति** ।। कामादिदोषान् फलाकाङ्क्षादिदोषांश्च मृषैव अविद्यमानानेवेत्यर्थः । दर्शयेत् । 'दर्शयन्' इति पाठे कामादिदोषान् मृषैव दर्शयन् तपः करोतीव प्रदर्शयेदित्येकान्वयः । तावता दर्शनमात्रेण ते दोषास्तस्य हरेः कुत्रचिद्देशे कालेऽपि न सन्ति । हिशब्देन 'न कर्मणा लिप्यते पापकेन' 'न स्त्रीकृतं कश्मलमश्नुवीत' इत्यादिश्रुतिप्रसिद्धिं सूचयति ।।७०।।

**ततस्त्वरण्योः स बभूव पुत्रकः शिवोऽस्य सोऽभूच्छुकनामधेयः ।**
**शुकी हि भूत्वा ह्यगमद् घृताची व्यासं विमथ्नन्तमुतारणिं तम् ।।७१।।**

**व्यासतीर्थीया–** शुकनामकरणे निमित्तमाह– **शुकी हीति** ।।७१।।

**वेदाङ्गतीर्थीया–** शुकनामधेयत्वं कुत इत्यत आह– **शुकीति** ।।७१।।

**वादिराजीया–** शुकी हि भूत्वा इति हिशब्देन मनुष्याणां मनुष्यस्त्रीरूपदर्शनात् कामसम्भवेऽपि शुकजातीयस्त्रीरूपदर्शने मानुषाणामपि कामस्य अदृष्टचरत्वादिति युक्तिप्रसिद्धिं सूचयति ।।७१-७२।।

**मधुसूदनीया–** ।। **ततस्त्वरण्योरिति** ।। शिवोऽस्य पुत्रो बभूवेति कुत्र प्रसिद्धमित्येतच्छङ्कापरिहार-रूपविशेषार्थस्तुशब्दः । तथाचोक्तम्– 'पराशरकुलोद्भूतश्शुको नाम महायशाः । भविष्यति युगे तस्मिन् महायोगी द्विजर्षभः ।। व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव ज्वलन् । स तस्यां पितृकन्यायां पीवर्यां जनयिष्यति ।। कन्यां पुत्रांश्च चतुरो योगवीर्यान् महाव्रतान् । श्रुत्वा स्वजनकाद्धर्मं व्यासादमितबुद्धिमान् ।। महायोगी तदा गन्ता न पुनरावर्तनीं गतिम् ।।' इति हरिवंशे [१.१८.५०-५५] । उक्तं च मोक्षधर्मे [३४१.२३-२५] । 'ततो हरिजटस्स्थाणुः वेषधारपतिश्शिवः । ततश्शुकेति दीर्घेण शब्देनाक्रन्दितस्तदा ।। स्वयं पित्रा स्वरेणोच्चैः त्रिलोकाननुनाद्य वै । शुकस्सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ।। प्रत्यभाषत सर्वात्मा भोशब्देनाऽनुनादयन् । तत एकाक्षरं नाम भोरित्येव समीरयन् ।। प्रत्याहरज्जगत्सर्वं उच्चैः स्थावरजङ्गमम् ।।' इति । 'शक्तिः पराशरः श्रीमान् सर्वज्ञस्तपतां वरः । आराध्य देवदेवेशमीशानं त्रिपुरान्तकम् ।। लेभे त्वप्रतिमं पुत्रं कृष्णद्वैपायनं प्रभुम् । द्वैपायनसुतो जज्ञे भगवानेव शङ्करः ।। अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पदम् । शुकस्याप्यभवन् पुत्राः पञ्चात्यन्ततपस्विनः ।।' इति कौर्मे च [पूर्वभागे.१८.२३-२६ ] । तत्रैव–'व्यासः स्वयं हृषीकेशो येन वेदाः पृथक्कृताः । यस्य देवो महादेवः साक्षादेव पिनाकधृक् ।। अंशांशेनाभवत् पुत्रो नाम्ना शुक इतीरितः।।' इति कौर्मे एव [पूर्वभागे.३२.११-१२] ।।७१-७६।।

**वरदराजीया–** ततो वरदानानन्तरं अरण्योरग्निमथनकाष्ठयोः शिवो रुद्रः व्यासस्य पुत्रो बभूव । अग्न्यर्थमरण्योः मथने क्रियमाणे सति रुद्र उदभूदिति भावः । स पुत्रः शुक इति नामधेयं संज्ञा यस्य स तथाभूतः । शुक इति नामकरणे निमित्तमाह– **शुकीति** ।। घृताची अप्सराः शुकी भूत्वा उतानन्तरमरणी-मथ्नन्तं व्यासमगमद्धि ।।७१।।

**अनन्तभट्टीया–** अरण्योः अग्निमथनकाष्ठयोः । शिवः शुकनामधेयः अस्य पुत्रकोऽभूत् । तं व्यासम् ।।

**जनार्दनीया–** ततः रुद्रः मम पुत्रो भवेदिति वरप्रदानात् अरण्योः अग्निमथनकाष्ठयोः । अस्य व्यासस्य पुत्रः । ननु अरण्योरुत्पन्नस्य शुकनामधेयत्वं कुत इत्यत आह– **शुकेति** ।। घृताची घृताचीति नामवती अप्सराः शुकीभूत्वा शुकपक्षिरूपं धृत्वेत्यर्थः । अरणीं विमथ्नन्तं तं व्यासं अगमत् प्राप ।।७१।।

**ताम्रपर्णीया–** कामादिदोषांश्चेत्युक्तं विवृण्वन् शुकनामकरणे निमित्तमाह– **शुकीति** ।।७१।।

**चट्टि–** ततो रुद्रस्य वरदानानन्तरं अरण्योरग्निमथनकाष्ठयोरस्य व्यासस्य सः शिवः पुत्रकः पुत्रो बभूव । अग्न्यर्थमरण्योः मथने क्रियमाणे सति रुद्रः उदभूदिति भावः । सः पुत्रः शुक इति नामधेयं सञ्ज्ञा यस्य स तथा अभूत् । अरण्योर्मथनसमये रेतःपातो जात इति कथा असुरजनमोहनार्थम् । रेतस्तु प्राकृतमेव सृष्टं न स्वरेत इति प्रसिद्धम् । अन्यथा 'न स्त्रीकृतकश्मलं अश्नुवीत' इति स्पष्टवचनव्याघातादिति भावः । ननु अरण्योरुत्पन्नस्य शुकनामधेयत्वं कुत इत्यत आह– **शुकीति** ।। घृताची इत्यप्सराः शुकी भूत्वा शुकपक्षिरूपं धृत्वेत्यर्थः । उतानन्तरं अरणीं विमथ्नन्तं व्यासमगमत् प्राप । ननु शिवोऽस्य पुत्रो बभूवेति कुत्र प्रसिद्धं इत्येतच्छङ्कापरिहाररूपविशेषार्थः तुशब्दः । तथाचोक्तम्– पराशरकुलोद्भूतश्शुको नाम महायशाः । भविष्यति युगे तस्मिन् महायोगी द्विजर्षभः ।। व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव ज्वलन् । स तस्यां पितृकन्यायां पीवर्यां जनयिष्यति ।। कन्यां पुत्रांश्च चतुरो योगवीर्यान् [योगाचार्यान्] महाव्रतान् । श्रुत्वा स्वजनकाद्धर्मं व्यासादमितबुद्धिमान् । महायोगी तदा गन्ता न पुनरावर्तनीं गतिम् ।। इति हरिवंशे [१.१८.५०-५५] । प्रत्यभाषत सर्वात्मा भोशब्देनाऽनुनादयन् । तत एकाक्षरं नाम भोरित्येव समीरयन् । प्रत्याहरज्जगत्सर्वं उच्चैः स्थावरजङ्गमम् ।। इति । [शक्तिः] शक्तेः पराशरः श्रीमान् सर्वज्ञस्तपतां वरः । आराध्य देवदेवेशमीशानं त्रिपुरान्तकम् ।। लेभे त्वप्रतिमं पुत्रं कृष्णद्वैपायनं प्रभुम् । द्वैपायनसुतो जज्ञे भगवानेव शङ्करः ।। अंशांशेनावतीर्याथ व्यासात् प्राप परं पदम् । शुकस्याप्यभवन् पुत्राः पञ्चात्यन्ततपस्विनः ।। इति कौर्मे [पूर्वभागे.१८.२३-२६ ] । तत्रैव– व्यासः स्वयं हृषीकेशो येन वेदाः पृथक् कृताः । यस्य देवो महादेवः साक्षादेव पिनाकधृक् ।। अंशांशेनाऽभवत् पुत्रो नाम्ना शुक इतीरितः ।। इति च [पूर्वभागे.३२.११-१२]।। ७१-७२ ।।

**अकामयन् कामुकवत् स भूत्वा तयाऽर्थितस्तं शुकनामधेयम् ।**
**चक्रे ह्यरण्योस्तनयं च सृष्ट्वा विमोहयंस्तत्त्वमार्गेष्वयोग्यान् ।।७२।।**

**व्यासतीर्थीया–** एवमपि शुकनामधेयकरणे किं निमित्तमित्यत आह– **अकामयन्निति** ।। अरण्योस्तनयं सृष्ट्वा तयार्थितस्तं शुकनामधेयं चक्रे ।।७२।।

**वेदाङ्गतीर्थीया–** अरण्योस्तनयं सृष्ट्वा तया शुकिरूपया घृताच्या प्रार्थितः शुकीरूपमन्नामधेयोऽयं भवेदिति प्रार्थितः अरण्योः सृष्टं शुकनामधेयं चक्रे ।।७२-७३।।

**वरदराजीया–** तदा अकामयन् आकाङ्क्षारहितोऽपि स व्यासः कामुकवत् स्त्रैणवत् भूत्वा तया शुकिरूपया घृताच्या अर्थितः अयं मत्पुत्रः स्यादिति प्रार्थितो व्यासः अरण्योः सकाशात् तनयं पुत्रं

सृष्ट्वा उत्पाद्यापि तत्वमार्गेषु अयोग्यानसुरान् मोहयन् तं पुत्रं शुकनामधेयं चक्र इत्यर्थः । शुक्यामुतन्नोऽतः शुकनामधेयमिति प्रथां उत्पादयामासेत्यर्थः ।।७२।।

**अनन्तभट्टीया–** तया अर्थितः । अयं कुमारो मन्नामको भवत्विति प्रार्थितः । तत्वमार्गेषु अयोग्यान् विमोहयन् शुकनामधेयं चक्रे ।।७२।।

**जनार्दनीया–** उत अनन्तरं अकामयन् अपेक्षारहितो व्यासः कामुकवत् स्त्रैणपुरुषवत् भूत्वा, तया घृताच्या अर्थितः स्वयं शुकीरूपवत्याः मम नामधेयो भवेदिति प्रार्थितः व्यासः अरण्योः तनयं सृष्ट्वा उत्पाद्य, तत्त्वमार्गेषु अयोग्यान् दैत्यान् विमोहयन् तं अरण्योरुत्पन्नं पुत्रं शुकनामधेयं चक्रे ।।७२।।

**ताम्रपर्णीया–** ।। **कामुकवदिति** ।। रेतोविसर्जनेन कामुकवद्भूत्वेत्यर्थः ।।७२-७३।।

**चट्टि–** अकामयन् आकाङ्क्षारहितोऽपि सः व्यासः कामुकवत् स्त्रैणवद् भूत्वा तया घृताच्या अर्थितो अयं शुकरूपवत्याः मम नामधेयो भवेदिति प्रार्थितः सन्नरण्योस्सकाशात् तनयं सृष्ट्वा उत्पाद्य तत्वमार्गेषु मोक्षमार्गसाधनमार्गेषु अयोग्यान् दैत्यान् विमोहयन् तं पुत्रं शुकनामधेयं चक्रे ।।७२।।

**शुकं तमाशु प्रविवेश वायुर्व्यासस्य सेवार्थमथास्य सर्वम् ।**
**ज्ञानं ददौ भगवान् सर्ववेदान् सभारतं भागवतं पुराणम् ।।७३।।**

**व्यासतीर्थीया–** ज्ञानकार्यान्तरङ्गभूतानन्यानाह– **शुकमित्यादिना** ।।७३।।

**वादिराजीया–** भागवतं पुराणमित्यत्र भागवतं भगवत्सम्बन्धि पुराणं– 'वैष्णवं नारदीयं च तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शने' [उत्तरखण्ड.२३६.१९] इति पाद्मपुराणोक्त-सात्विकपुराणषट्कम् । जातावेकवचनं इति भावः ।।७३।।

**वरदराजीया–** वायुः मुख्यप्राणो व्यासस्य सेवार्थं शुकायोग्यसेवाकरणार्थं तं शुकं प्रविवेश प्रविष्टवान् । अथ वायुप्रवेशानन्तरं सर्वं सर्वतत्वविषयं ज्ञानं ददौ । तदेव विशदयति– **सर्वेति** ।। सर्वान् वेदान् तथा भारतेन सहितं पुराणं च ददौ उपदिदेशेत्यर्थः ।।७३।।

**अनन्तभट्टीया–** वायुः मुख्यप्राणः ।।७३।।

**जनार्दनीया–** सर्वज्ञानं सर्वविषयज्ञानम् । सभारतं भागवतं पुराणं भागवताख्यपुराणम् । अस्य वायोः शुकस्य वा । व्यासमुखाच्छ्रोतुं मुख्याधिकारी वायुरेवेति भावः ।।७३।।

**चट्टि–** वायुर्मुख्यप्राणः व्यासस्य सेवार्थं तं शुकं आशु प्रविवेश प्रविष्टवान् । अथ वायुप्रवेशानन्तरं अस्य वायोः शुकस्य वा व्यासस्य मुखादुपदेशं प्राप्तुं वायुरेव मुख्याधिकारीति भावः । सर्वं ज्ञानं

सर्वविषयकज्ञानं ददौ । तदेव विशदयति– **सर्वेति** ।। सर्वान् वेदान् तथा भारतेन सहितं भागवतं पुराणं ददौ उपदिदेशेत्यर्थः । यद्वा भागवतं भगवत्सम्बन्धिपुराणं– 'वैष्णवं नारदीयं च तथा भागवतं शुभम् । गारुडं चैव पाद्मं च वाराहं शुभदर्शने ।।' इति पद्मपुराणोक्तसात्विकपुराणषट्कम् । जातावेकवचनमिति भावः ।।७३।।

**शेषोऽथ पैलं मुनिमाविशत् तदा वीशः सुमन्तुमपि [१]वारुणिं मुनिम् ।**
**ब्रह्माऽविशत् तमुत वैशम्पायनं शक्रश्च जैमिनिमथाऽविशद् विभुः ।।७४।।**

**व्यासतीर्थीया–** वारुणिं भृगुम् ।।७४।।

**वेदाङ्गतीर्थीया–** वीशः सुमन्तुमपि वारुणिं मुनिं वरुणपुत्रं भृगुमपि उभावप्यविशत् । तमुत वारुणिं च वैशम्पायनमुत इत्युभौ ब्रह्माविशत् ।।७४-७५।।

**वादिराजीया–** शेषोऽथ पैलमित्यत्र वीशोऽपि वारुणिं वरुणपुत्रं सुमन्तुं आविशत् । प्रवर्तकविभागकथने भृगोरकथनात् चतुर्णां देवानां चतुर्ष्वेव प्रवेशस्योचितत्वाच्चोक्तैव योजना ग्रन्थकारस्याभिमता । 'अथर्वाङ्गिरसां आसीत् सुमन्तर्वारुणो मुनिः' इति भागवते 'वारुणो वरुणपुत्रः सुमन्तुर्नाम मुनिः' इति तट्टीकायां च स्पष्टमुदितत्वादपि सुमन्तुरेव वारुणिः । न तु भृगुरित्यर्थः । सूर्यनारदाद्यास्तु साक्षाव्द्यासमुखात् शुकमुखाद्वा पाठयित्वा प्रवर्तका इत्यतो न तेषामावेशः कथितः । अत एव 'नारदं पाठयित्वा' इत्यत आकृष्य सूर्यं पाठयित्वेति योज्यम् । ब्रह्मा उत ब्रह्मा च । तं भारतप्रवर्तकत्वेन प्रसिद्धं वैशम्पायनम् । साक्षाद् व्यासमुखादेव ब्रह्मादिभिर्मूलरूपेणैव अविभक्तसकलवेदानां श्रुतत्वात् पुनर्विभक्तवेदश्रवणाय कुतो मुनिषु प्रवेश इति चेत् सत्यं, आदिवेदे सङ्कलय्यैकत्र स्थितर्ग्यजुःसामथर्वभ्यः एकान्तविजातीयवाक्यान्युद्धृत्य ऋगादिशाखाकरणकौशलाभ्यासार्थं मुनीनां प्रत्येकशाखाप्रवर्तकत्वशक्तिदानाय च प्रवेशसम्भवात् इत्यस्य विवेकिभिर्बोद्धुं शक्यत्वात् ।।७४।।

**वरदराजीया–** अथ पैलादिव्यासशिष्येषु तत्तदयोग्यसेवाफलं प्राप्तुं तत्र तत्र देवावेशप्रकारमाह– **शेष इत्यादिना** ।। अथानन्तरं तदा उपदेशे क्रियमाणे पैलं मुनिं शेष आविशत् । वीशो गरुडः सुमन्तुं वारुणिं वरुणस्यापत्यं भृगुमुनिमपि इत्युभौ आविशत् । ब्रह्मा तमुत तं वारुणिमपि वैशंपायनं चेत्युभौ आविशत् । शक्रो विभुः ब्रह्मा चोभौ जैमिनिमृषिं आविशतामिति टिप्पणिकाराः । द्वौ वीशः सुमन्तुमविशत्, वारुणिं ब्रह्मा अविशत्, वैशंपायनं शक्र आविशत्, विभुर्ब्रह्मा जैमिनिं आविशत् एकैव तत्र एकैकस्यावेशः । शेषोऽथ पैलमिति एकत्रैकावेशप्रक्रमानुरोधात् । 'तमाविशत् कामदेवः' इति वक्ष्यमाणत्वाच्चेति द्रष्टव्यम् ।।७४।।

१. 'वारुणं' इति ताम्रपर्णीये पाठान्तरम् ।

**अनन्तभट्टीया–** शेषः पैलम् । वीशो गरुडः सुमन्तुम् । वारुणिं भृगुमपि । ब्रह्मा तं वारुणिं उत वैशम्पायनमपि । शक्रो जैमिनिम् ।।७४।।

**जनार्दनीया–** व्यासस्य मुखादुपदेशं प्राप्तुं देवानामेव योग्यतानुसारेण मुख्याधिकार इति सूचयितुं देवाः मुनीन् प्राविशन्नित्याह– **शेष इति** ।। अथशब्दः प्रकारान्तरेण उपदेशारम्भः । तदोपदेशकाले वीशो गरुडः सुमन्तुं ऋषिं वारुणिं मुनिमपि वरुणपुत्रभृगुऋषिमपि इत्युभावपि आविशत् । ब्रह्मा तमुत गरुडाविष्टवारुणिमुनिमपि वैशम्पायनऋषिं चेत्युभावपि आविशत् । विभुः शक्रः जैमिनिऋषिं आविशत् ।।७४।।

**ताम्रपर्णीया–** ।। **वारुणमिति** ।। एतच्च सुमन्तुविशेषणम् । 'अथर्वाङ्गीरसामासीत् सुमन्तुर्वारुणो मुनिः' [१.४.२१] इति भागवतोक्तेः । 'वारुणो वरुणपुत्रः सुमन्तुनामा मुनिः' इति तट्टीकायां व्याख्यातत्वाच्च । 'वारुणिं भृगुम्' इत्यप्याहुः । 'भृग्वादीन् कर्मयोगस्य' इति वक्ष्यमाणत्वात् ।।७४-७५।।

**भावचन्द्रिका–** वारुणिरथर्वाङ्गिरसामासीत् । 'सुमन्तुर्वारुणो मुनिः' इति प्रथमस्कन्धे चतुर्थाध्याये

**भारतश्री–** वारुणिं भृगुम् ।।७४।।

।। इति डम्वलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दशमोऽध्यायः ।।

**चट्टि–** व्यासमुखादुपदेशं प्राप्तुं देवानामेव योग्यतानुसारेण मुख्याधिकारित्वमिति सूचयितुं देवा मुनिं प्राविशन्नित्याह– **शेष इति** ।। अथ अनन्तरं तदा उपदेशकाले शेषः पैलं मुनिमाविशत् । वीशो गरुडः सुमन्तुं मुनिं वारुणिं वरुणपुत्रं भृगुऋषिं चेत्युभावप्यविशत् । ब्रह्मा तमुत गरुडाविष्टवारुणिं मुनिमपि वैशम्पायनऋषिं चेत्युभावप्याविशत् । विभुः शक्रश्च जैमिनिमृषिमाविशत् । यद्वा शेषः पैलमाविशत् । वीशः सुमन्तुमाविशत् । वारुणिं ब्रह्माविशत् । वैशम्पायनं शक्र आविशत् । विभुः ब्रह्मा जैमिनिमाविशदिति ।

वादिराजतीर्थास्तु वीशो गरुडोऽपि वारुणिं वरुणपुत्रं सुमन्तुं आविशत् । प्रत्येकविभागकथने भृगोरकथनाच्चतुर्णां देवानाञ्च चतुर्वेदप्रवेशस्योचितत्वाच्च उक्तैव योजना ग्रन्थकारस्याभिमता । 'अथर्वाङ्गिरसामासीत् सुमन्तुर्वारुणो मुनिः' इति भागवते । 'वारुणो वरुणपुत्रः सुमन्तुर्नाम मुनिः' इति तट्टीकायां स्पष्टमुदितत्वादपि सुमन्तुरेव वारुणिः । सूर्यनारदाद्यास्तु साक्षात् व्यासमुखात् शुकमुखाद्वा पाठयित्वैव प्रवर्तका इत्यतो न तेषामावेशः कथितः । अत एव नारदं पाठयित्वा इत्यतः आकृष्य सूर्यं पाठयित्वेत्यपि योज्यम् । ब्रह्मा उत ब्रह्मा च तं भारतप्रवर्तकत्वेन प्रसिद्धं वैशम्पायनमिति व्याचक्षते ।।७४।।

**कृष्णस्य पादपरिसेवनोत्सुकाः सुरेश्वरा विविशुराशु तान् मुनीन् ।**
**समस्तविद्याः प्रतिपाद्य तेष्वसौ प्रवर्तकांस्तान् विदधे हरिः पुनः ॥७५॥**

**वादिराजीया–** फलान्तरमस्तीत्याह– **कृष्णस्य पादपरिसेवनोत्सुका इति** ॥ समस्तविद्याः प्रतिपाद्येत्यत्रापि प्रतिपाद्य 'पद गतौ' इति धातोः प्रापयित्वा उपदिश्येत्यर्थः ॥७५॥

**वरदराजीया–** एते सुरेश्वराः किमर्थमाविशन्नित्यत आह– **कृष्णस्येति** ॥ श्रीवेदव्यासस्य पादयोः परिसेवने उत्कृष्टयुक्ताः सुरेश्वराः शेषाद्यास्तान् मुनीन् पैलादीन् विविशुरित्यर्थः । असौ हरिः व्यासः तेषु पैलादिमुख्यशिष्येषु समस्तविद्याः ब्रह्ममीमांसाद्याः प्रतिपाद्य उपादिश्य पुनरनन्तरं तद्विद्याप्रवर्तकान् विदधे चकार ॥७५॥

**जनार्दनीया–** देवानां ऋषिप्रवेशने कारणान्तरमाह– **कृष्णस्येति** ॥ परिसेवने परिचर्यायां, उत्सुकाः उत्कण्ठावन्तः । तान् पैलादीन् । असौ व्यासः तेषु देवेषु मुनिषु वा । पुनः विद्याप्रतिपादनानन्तरं हरिः तान् शेषाद्याविष्टान् पैलादीन् प्रवर्तकान् भूरादिलोकेषु विद्याप्रवर्तकान् विदधे चक्रे ॥७५॥

**भावचन्द्रिका–** ॥ **कृष्णस्येति** ॥ एषामृषीणां प्रवर्तनसामर्थ्याभावेन स्वयमाविश्य प्रवर्तनोत्सुकाः ॥

**चट्टि–** देवानां मुनिप्रवेशने कारणान्तरमाह– **कृष्णस्येति** ॥ कृष्णस्य वेदव्यासस्य पादयोः परिसेवने उत्सुकाः उत्कण्ठावन्तः सुरेश्वराः शेषाद्याः तान् मुनीन् पैलादीन् आशु विविशुः । असौ हरिः व्यासः तेषु देवेषु मुनिषु वा समस्तविद्याः ब्रह्ममीमांसाद्याः प्रतिपाद्य । 'पदल गतौ' इति धातोः प्रापयित्वा उपदिश्येत्यर्थः । पुनरनन्तरं तान् शेषाद्याविष्टान् पैलादीन् प्रवर्तकान् भूरादिलोकेषु विद्याप्रवर्तकान् विदधे चक्रे ॥७५॥

**ऋचां प्रवर्तकं पैलं यजुषां च प्रवर्तकम् ।**
**वैशम्पायनमेवैकं द्वितीयं [१]सूर्यमेव च ॥७६॥**

---

१. भाविवृत्तान्तमाज्ञाय व्यासः सत्यवतीसुतः । दश पञ्चाथ याः शाखाः सूर्यायोपदिदेश ह ॥ इति विष्णुपुराणे । वराहपुराणे च । हयग्रीवः कदाचित्तु सुरद्वेषी महाबलः । सुराणामपकाराय वेदानाहृत्य चौर्यतः ॥ भक्षयित्वा बहून् वेदान् स पातालं समाविशत् । दैत्यं विदार्य तान् वेदान् ब्रह्मणे स ददौ हरिः ॥ द्वापरादौ ततो योगी पाराशर्यो महातपाः । अवतीर्याथ तान् वेदान् स्वशिष्येभ्यश्च उवाच ह ॥ भाविवृत्तान्तमाज्ञाय त्रिकालज्ञो मुनिस्तदा । यजूंष्ययातयामानि सूर्यमध्याप्य निक्षिपत् ॥ छर्दित्वा याज्ञवल्क्योथ छन्दांस्यथ गवेषयन् । गुरांरविद्यमानानि उपतस्थे दिवाकरम् ॥ सूर्यं प्रसाद्य कालेन प्राप तस्मात् यजुर्गणम् । शुक्लान्ययातयामानि यजूँषि प्राप्य भास्वतः ॥ शाखा शुक्ले पञ्चदश कण्वाद्याश्च महामुनिः ॥ इति । इति पारस्करगृह्यसूत्रव्याख्याने संस्कारगणपतौ उदाहृतानि वाक्यानि ।

**व्यासतीर्थीया–** कं कस्य प्रवर्तकं चक्र इति जिज्ञासायामाह– **ऋचामिति** ।। कृष्णयजुषां वैशंपायनं शुक्लयजुषां सूर्यम् ।।७६।।

**वेदाङ्गतीर्थीया–** कं कस्य प्रवर्तकमकरोदित्यतो विविच्य दर्शयति– **ऋचामित्यादिना** ।। शाखाभेदात् ऋचामिति बहुवचनम् । एवमुत्तरत्रापि बहुवचनाभिप्रायः । यजुषां कृष्णत्वशुक्लत्वभेदेन द्वैविध्यम् । कृष्णयजुषां वैशम्पायनं शुक्लयजुषां सूर्यं प्रवर्तकं चक्रे इति विभागः । यजुषां उभयेषां यजुष्ट्वसाम्यात् एकं वैशम्पायनं द्वितीयं सूर्यं चक्रे इत्युक्तिर्घटते ।।७६।।

**वादिराजीया–** यजुषां च प्रवर्तकमित्यत्र शुक्लकृष्णभेदेन द्विविधयजुषां मध्ये यजुषां कृष्णयजुषां एकं वैशम्पायनं प्रवर्तकं चक्रे । यजुषां शुक्लयजुषां द्वितीयं सूर्यमेव प्रवर्तकं चक्रे इत्यावृत्त्या योजना । सर्वत्रापि शाखाभेदसद्भावात् बहुवचनम् ।।७६।।

**वरदराजीया–** तदेव विशदयति– **ऋचामित्यादिना** ।। ऋचां ऋग्वेदस्य प्रवर्तकं पैलं चक्रे । यथा यजुषां यजुर्वेदस्यैकं वैशंपायनं द्वितीयं सूर्यं चक्रे । यजुषां शुक्लकृष्णभेदेन द्वैविध्यं कृष्णयजुषां वैशंपायनं शुक्लयजुषां सूर्यं प्रवर्तकं चकारेति भावः । अत एव एकमिति द्वितीयमिति चोक्तं द्रष्टव्यम् ।।

**अनन्तभट्टीया–** पैलं ऋचां प्रवर्तकम्, वैशम्पायनं कृष्णयजुषां सूर्यं द्वितीयं शुक्लयजुषां शुक्लयजुषोऽपि । यजुषो द्वि...मित्युक्तम् ।।७६।।

**जनार्दनीया–** कं कस्य कुत्र प्रवर्तकं चक्रे ? इत्यत आह– **ऋचामित्यादिना** ।। सप्तशाखाभेदादृचामिति सर्वत्र बहुवचनम् । ऋचां ऋग्वेदस्य पैलं प्रवर्तकम् । चक्रे इति सर्वत्रानुषङ्गः । षडशीतिभेदाद्यजुषाम्, सहस्रभेदात् साम्नाम्, नवभेदादथर्वाङ्गिरसामिति सर्वत्र बहुवचनम् । यजुषां यजुर्वेदस्य कृष्णत्वशुक्लत्वभेदेन द्वैविध्यात्, कृष्णयजुषां वैशम्पायनं, शुक्लयजुषां सूर्यं प्रवर्तकं चक्र इति विभागः । तत्रोभयेषां साम्यादेकं वैशम्पायनं, द्वितीयं सूर्यं चक्र इत्युक्तिः घटते ।।७६।।

**ताम्रपर्णीया–** ।। **यजुषामिति** ।। कृष्णयजुषां वैशम्पायनं शुक्लयजुषां सूर्यम् । अत एवेकं द्वितीयमित्युक्तम् । ऋगादीनां शाखाभेदेन बहुत्वात् ऋचामित्यादिबहुवचनम् ।।७६।।

**चट्टि–** कं कस्य प्रवर्तकं चक्रे इत्यत आह– **ऋचामित्यादिना** ।। सप्तशाखाभेदाद् ऋचामिति बहुवचनम् । ऋचां ऋग्वेदस्य पैलं प्रवर्तकं चक्रे इति सर्वत्रानुषङ्गः । षडशीतिभेदाद् यजुषाम्, सहस्रभेदात् साम्नाम्, नवभेदाद् अथर्वाङ्गिरसामिति सर्वत्र बहुवचनम् । शुक्लकृष्णभेदेन द्विविधयजुषां मध्ये यजुषां कृष्णयजुषां एकं वैशम्पायनं प्रवर्तकं चक्रे । यजुषां शुक्लयजुषां द्वितीयं सूर्यं सूर्यमेव प्रवर्तकं चक्रे इत्यावृत्त्या योज्यम् ।।७६।।

**चक्रेऽथ जैमिनिं साम्नामथर्वाङ्गिरसामपि ।**
**सुमन्तुं भारतस्यापि वैशम्पायनमादिशत् ।**
**प्रवर्तने मानुषेषु गन्धर्वादिषु चाऽत्मजम् ॥७७॥**

**वेदाङ्गतीर्थीया–** जैमिनिं साम्नां प्रवर्तकं चक्रे । अथर्वाङ्गिरसां अथर्ववेदानां सुमन्तुं प्रवर्तकं चक्रे । मनुष्येषु भारतस्य प्रवर्तने वैशम्पायनमादिशत् । गन्धर्वादिषु भारतस्य प्रवर्तने आत्मजं शुकं मुनिमादिशत् ॥

**वादिराजीया–** अथर्वाङ्गिरसामपि अथर्वाङ्गिसां च सुमन्तुं प्रवर्तकं चक्रे । वैशम्पायनस्य यजुषां भारतस्य च प्रवर्तकत्वाद्भारतस्यापीत्युक्तम् । प्रवर्तने मानुषेषु गन्धर्वादिषु चात्मजमित्यत्र आत्मजं शुकं वेदादीनां प्रवर्तनायाऽऽदिशत् । शुकशिष्यपरीक्षिदादिचक्रवर्तिनां मानुषेष्वन्तर्भावात् मानुषेष्वित्युक्तम् ॥

**मधुसूदनीया–** ॥ **भारतस्यापि वैशंपायनमिति** ॥ मानुषेषु भारतस्यापि एकशतसहस्रस्य भारतस्य प्रवर्तने वैशंपायनमादिशत् ॥ **गन्धर्वादिषु** ॥ आदिशब्देन पितृमाणिभद्रादियक्षनिर्ऋत्यादि-राक्षसाश्च ग्राह्याः । चशब्देनासितदेवलाख्यऋषी ग्राह्यौ । गन्धर्वेषु चतुर्दशसहस्रस्य भारतस्य प्रवर्तने आत्मजं शुकं आदिशत् । आदिशब्दगृहीतपित्रादिलोके पञ्चदशसहस्रस्य भारतस्य प्रवर्तने असितदेवलौ प्रादिशत् । पाठयित्वा त्रिंशच्छतं भारतं पाठयित्वा नारदं देवलोकप्रवर्तये आदिशत् । तथाचोक्तम्– 'उत्पाद्य धृतराष्ट्रं च पाण्डुं विदुरमेव च । जगाम तपसा धीमान् पुनरेवाश्रमं प्रति ॥ तेषु जातेषु नृपेषु स्वगतिं परमां गतिम् । अब्रवीद्भारतं लोके मानुषेऽस्मिन् महानृषिः ॥ जनमेजयेन पृष्टस्सन् ब्राह्मणैश्च सहस्रशः । [१.१.७१-७३] इदं शतसहस्राख्यं श्लोकानां पुण्यकर्मणाम् । उपाख्यानैस्सह ज्ञेयं श्राव्यं भारतमुत्तमम् ॥ चतुर्विंशतिसाहस्रं चक्रे भारतसंहिताम् । उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः । ततोऽप्यर्धशतं भूयः सङ्क्षेपं कृतवानृषिः । [१.१.७७-७९] षष्टिं शतसहस्राणि चकाराऽन्यां तु संहिताम् । त्रिंशच्छतसहस्रं च देवलोके प्रतिष्ठितम् ॥ पितृलोके पञ्चदशं गन्धर्वेषु चतुर्दश । एकं शतसहस्रं च मानुषेषु प्रतिष्ठितम् ॥ नारदोऽश्रावयद्देवान् असितो देवलः पितृन् । गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ॥ अस्मिंस्तु मानुषे लोके वैशम्पायनमादिशत् ॥ इत्यादिपर्वणि [१.१.१२२-१२७] ॥७८-८३॥

**वरदराजीया–** अथानन्तरं साम्नां सामवेदस्य प्रवर्तकं जैमिनिं चक्रे । अथर्वाङ्गिरसां अथर्वणवेदस्य प्रवर्तकं सुमन्तुं चक्र इत्यर्थः । मानुषेषु मनुष्येषु भारतस्य प्रवर्तने आत्मजं शुकमादिशत् ॥७७॥

**अनन्तभट्टीया–** जैमिनिं साम्नाम्, सुमन्तुं अथर्वाङ्गिरसाम् । मानुषेषु भारतस्य प्रवर्तने वैशम्पायनमादिशत् । गन्धर्वादिषु भारतस्य प्रवर्तने आत्मजं शुकम् ॥७७॥

**जनार्दनीया–** साम्नां सामवेदस्य जैमिनिम् । अथर्वाङ्गिरसां अथर्वणवेदस्य सुमन्तुमपि सन्तौ आविष्टं गरुडम् । मानुषेषु भारतस्यापि शुक्लयजुषां प्रवर्तकं वैशम्पायनम् । भारतस्यापि प्रवर्तने तमेवादिशदित्यर्थः । उभयप्रवर्तको वैशम्पायन इति भावः । गन्धर्वादिषु आदिपदेन सिद्धचारणादयः । आत्मजं शुकं भारतस्य प्रवर्तने, आदिशदिति शेषः ।।७७।।

**ताम्रपर्णीया–** ।। **भारतस्यापीति** ।। न केवलं यजुषामप्यपेरर्थः । आत्मजं शुकम् ।।७७।।

**अतिविशद–** गन्धर्वादिषु चात्मजमित्यत्र शुकस्य गन्धर्वादिषु भारतप्रवर्तनं प्रतीयते । भागवतप्रवर्तनमपि परीक्षिद्द्वारा मानुषेषु ज्ञेयम् ।।७७।।

**चट्टि–** अथानन्तरं साम्नां सामवेदस्य जैमिनिं प्रवर्तकं चक्रे । अथर्वाङ्गिरसामपि अथर्ववेदानां च सुमन्तुं प्रवर्तकं चक्रे । मानुषेषु भारतस्यापि प्रवर्तने वैशम्पायनमादिशत् । वैशम्पायनस्य कृष्णयजुषां भारतस्य प्रवर्तकत्वात् भारतस्यापीत्युक्तम् । गन्धर्वादिष्वादिपदेन सिद्धचारणादयः । आत्मजं सुतं शुकं भारतस्य प्रवर्तने आदिशदिति शेषः ।।७७।।

**नारदं पाठयित्वा च देवलोकप्रवृत्तये ।**
**आदिशत् ससृजे सोऽथ रोमाश्वाद् [१]रोमहर्षणम् ।।७८।।**

**वेदाङ्गतीर्थीया–** देवलोकप्रवृत्तये देवलोके भारतस्य प्रवृत्तये नारदं पाठयित्वा भारतं आदिशत् ।।७८-८०।।

**वादिराजीया–** देवलोकप्रवृत्तय इत्यत्र देवलोके स्वर्गे वायुशेषगरुडब्रह्मशक्रसूर्यादिव्यतिरिक्तदेवेषु वेदादिप्रवर्तनाय नारदं पाठयित्वाऽऽदिशत् इति योजना । तेषां साक्षाच्छ्रोतृषु ऋषिष्वप्रवेशात् साक्षाद्व्यासमुखादश्रवणाच्च तेषु प्रवर्तनाय नारदस्याऽऽज्ञेति भावः । ससृजे सोऽथेत्यत्र सः वेदव्यासः अथ ऋषीणामादेशानन्तरं रोमाश्वात् रोमहर्षणं ससृजे । ससृज इत्युक्त्या रोमाश्वात् सूतजातेरप्यस्य पङ्क्त्यां शूद्रस्येव सृष्टिरिति गम्यते । अत एव अथ सृष्ट्यनन्तरं रोमहर्षणं वेदव्यतिरिक्तभारतादिपौरुषेयग्रन्थप्रवृत्त्यर्थमादिशदिति योजना ।।७८-८०।।

---

१. 'पित्राऽहं तु समादिष्टो व्यासशिष्येण धीमता । शुश्रूषस्व मुनीन् गत्वा यत्ते पृच्छन्ति तद्वद ।।१५।। 'धर्म एष तु सूतस्य सद्भिर्दृष्टः सनातनः । देवतानामृषीणाञ्च राज्ञां चामिततेजसाम् ।। वंशानां धारणं कार्यं स्तुतीनाञ्च महात्मनाम् । इतिहासपुराणेषु दृष्टा ये ब्रह्मवादिनः ।। न हि वेदेष्वधीकारः कश्चित् सूतस्य दृश्यते । वैन्यस्य हि पृथोर्यज्ञे वर्तमाने महात्मनः ।। मागधश्चैव सूतश्च तमस्तौतां नरेश्वरम् । तुष्टेनाथ तयोर्दत्तो वरो राज्ञा महात्मना ।।

**मधुसूदनीया–** ।। **ससृजे सोऽथ रोमाश्वाद्रोमहर्षणम्** ।। सूतमसृजदित्यर्थः । तथाचोक्तम्–'तस्य ते सर्वरोमाणि वचसा हृषितानि यत् । द्वैपायनस्य भगवान् सूतो वै रोमहर्षणः ।।' इति कौर्मे [पूर्वभागे.१.३-४]।।७८।।

**वरदराजीया–** अथानन्तरं व्यासो रोमाश्वात् स्वानन्दोद्रेकेण सञ्जाताद् रोमाश्वात् रोमहर्षणं नाम मुनिं ससृजे सृष्टवान् ।।७८।।

**अनन्तभट्टीया–** देवलोके भारतप्रवृत्तये इत्यर्थः । नारदम् । रोमाश्वाद्रोमहर्षणं ससर्ज[१] ।।७८।।

**जनार्दनीया–** नारदं भारतं पाठयित्वा उपदिश्येत्यर्थः । देवलोकप्रवृत्तये देवलोकप्रवृत्त्यर्थं आदिशत् । स व्यासः रोमाश्वात् स्वरोमकूपात् रोमहर्षणं ससृजे ।।७८।।

**ताम्रपर्णीया–** ।। **रोमाश्वादिति** ।। रोमाश्वान्निमित्तात् रोमहर्षणं सूतात् असृजत् । तदुक्तं कौर्मे– "त्वया सूत महाबुद्धे भगवान् ब्रह्मवित्तमः । इतिहासपुराणार्थं व्यासस्सम्यगुपासितः ।। तस्य ते सर्वरोमाणि वचसा हर्षितानि यत् । द्वैपायनेन भवान् कथितो रोमहर्षण" इति[२] । स्वातन्त्र्यद्योतनाय अन्तर्णीतणिच्प्रयोगः । 'स्वातन्त्र्यात् लुप्तयो भवेत्' इति वचनात् । केचित् व्यासः स्वरोमाश्वात् रोमहर्षणं असृजत् । सूतत्वं तु पादोत्पन्नानां शूद्रत्वमिवेत्याहुः ।।७८-७९।।

**अतिविशद–** रोमाश्वात्...अथादिशत् इत्यत्र शौनकेषु प्रवर्तनं ज्ञेयं रोमहर्षणस्य ।।७८-८३।।

**चर्द्रि–** नारदं भारतं पाठयित्वा उपदिश्येत्यर्थः । देवलोकप्रवृत्तये देवलोके भारतस्य प्रवृत्त्यर्थं आदिशत् । अथानन्तरं सः व्यासः रोमाश्वात् स्वानन्दोद्रेकेण सञ्जाताद् रोमाश्वात् रोमहर्षणं नाम सूतं ससृजे सृष्टवान् । तथा चोक्तम् – तस्य ते सर्वरोमाणि वचसा हृषितानि यत् । द्वैपायनस्य भगवान् सूतो वै रोमहर्षण ।। इति कौर्मे [पूर्वभागे.१.३-४] ।।७८।।

---

....सूताय सूतविषयो मगधो मागधाय च । तत्र सूत्यां समुत्पन्नः सूतो नामेह जायते ।। ऐन्द्रे सत्रे प्रवृत्ते तु ग्रहयुक्ते बृहस्पतौ । तमेवेन्द्रं बार्हस्पत्ये तत्र सूतो व्यजायत ।। शिष्यहस्तेन यत्पृक्तं अभिभूतं गुरोर्हविः । अधरोत्तरधारेण जज्ञे तद्वर्णसङ्करम् ।। येऽत्र क्षत्रात् समभवन् ब्राह्मण्याश्चैव योनितः । पूर्वेणैव तु साधर्म्यात् वैधर्मास्ते प्रकीर्तिताः ।। मध्यमो ह्येष सूतस्य धर्मः क्षेत्रोपजीविनः । पुराणेष्वधिकारो मे विहितो ब्राह्मणैरिह ।।' इति पाद्मे १सृ.१.२७-३५।

१. अनन्तभट्टीया– रोमाश्वान्निमित्तात् रोमहर्षनामानं सूतादसृजत् । अन्तर्भावितण्यर्थोऽयम् । स्वातन्त्र्यादेवमुक्तिः । केचित्तु व्यासः स्वस्य रोमाश्वात् रोमहर्षणमसृजत् । सूतत्वं पादोत्पन्नानां शूद्रत्ववत् उपपन्नमित्याहुः ।। इति हो.पुस्तकपाठः ।

२. स्कान्देऽपि प्रभासखण्डे १अ ५-६ एते श्लोकाः दृश्यन्ते ।

**तं भारतपुराणानां[१] महारामायणस्य च ।**
**पञ्चरात्रस्य कृत्स्नस्य प्रवृत्त्यर्थमथाऽदिशत् ॥७९॥**

**वरदराजीया–** अथानन्तरं रोमहर्षणं भारतस्य इतरपुराणानां तथा महारामायणस्य मूलरामायणस्य कृत्स्नस्य पञ्चरात्रस्य प्रवृत्त्यर्थमादिशत् आज्ञप्तवान् ॥७९॥

**जनार्दनीया–** तं रोमहर्षणम् । कृत्स्नस्य सर्वशास्त्रसमूहस्येत्यर्थः । कृत्स्नस्य पञ्चरात्रस्येति वा सम्बन्धः ॥७९॥

**चट्टि–** अथानन्तरं रोमहर्षणं भारतस्येतरपुराणानां महारामायणस्य मूलरामायणस्य च कृत्स्नस्य सर्वशास्त्रसमूहस्य, कृत्स्नस्य पञ्चरात्रस्य इति वा प्रवृत्त्यर्थं आदिशदिति सम्बन्धः ॥७९॥

**तमाविशत् कामदेवः कृष्णसेवासमुत्सुकः ।**
**स तस्मै ज्ञानमखिलं ददौ द्वैपायनः प्रभुः ॥८०॥**

**वादिराजीया–** स तस्मै ज्ञानमखिलमित्युक्त्या पौरुषेयग्रन्थोपदेशमुखेन वेदादिसकलज्ञानमपि ददाविति लभ्यते । तस्मै कामदेवाय ॥८१-८२॥

**वरदराजीया–** कृष्णस्य व्यासस्य सेवायां समुत्सुकः उत्कण्ठः कामदेवस्तं रोमहर्षणं आविशत् । प्रभुः समर्थो द्वैपायनः व्यासः अखिलं तत्त्वविषयं ज्ञानं तस्मै रोमहर्षणाय ददौ ॥८०॥

**जनार्दनीया–** कृष्णसेवायां समुत्सुकः अत्युत्कण्ठतायुक्तः । तं रोमहर्षणम् । तस्मै कामदेवाय रोमहर्षणाय वा ॥८०॥

**चट्टि–** कृष्णस्य व्यासस्य सेवायां समुत्सुकः सोत्कण्ठः कामदेवः तं रोमहर्षणं आविशत् । प्रभुः समर्थः सः द्वैपायनो व्यासः तस्मै कामदेवाय रोमहर्षणाय वा अखिलं तत्त्वविषयं ज्ञानं ददौ ॥८०॥

**सनत्कुमारप्रमुखांश्चक्रे योगप्रवर्तकान् ।**
**भृग्वादीन् कर्मयोगस्य ज्ञानं दत्वाऽमलं शुभम् ॥८१॥**

---

१. त्रय्यारुणिः काश्यपश्च सावर्णिरकृतव्रणः । शिंशापायनहारीतौ षड् वै पौराणिका इमे ॥ अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् । एकैकामहमेतेषां शिष्यः सर्वां समध्यगाम् ॥ भा.१२.६.४९-५० इति शौनकादीन् प्रति रोमहर्षणपुत्रस्य उग्रश्रवसः वचनम् । किञ्च शुकाचार्योऽपि पुराणप्रवर्तकः । तथा चोक्तं- भा.१२.६.५१- काश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः । अधीमहि व्यासपुत्राच्चतस्रो मूलसंहिताः ॥ इति ।

**व्यासतीर्थीया–** कर्मयोगः कर्मपद्धतिः ।।८१।।

**वेदाङ्गतीर्थीया–** योगप्रवर्तकान् योगशास्त्रप्रवर्तकान् । कर्मयोगस्य [प्रवर्तकानिति वर्तते] ।।८१।।

**वरदराजीया–** सनत्कुमारादीन् योगशास्त्रप्रवर्तकांश्चक्र इत्यर्थः । ध्यानयोगप्रवर्तकानिति वा । भृग्वादीन् सप्तऋषीन् कर्मयोगस्य प्रवर्तकांश्चक्रे । नैतावता तेषां ज्ञानाभावो मन्तव्य इत्याह– **ज्ञानमिति** ।। अमलं दोषरहितं शुभं मोक्षसाधनमित्यर्थः ।।८१।।

**जनार्दनीया–** सनत्कुमारः प्रमुखो येषां ते सनकसनन्दनादीनां तान् । योगशास्त्रस्य प्रवर्तकान् । भृग्वादीनां अमलं संशयरहितं शुभं ज्ञानं हरिस्वरूपप्रकाशकं ज्ञानं दत्वा, कर्मयोगस्य प्रवर्तकान् भृग्वादीन् चक्रे ।।८१।।

**ताम्रपर्णीया–** योगप्रवर्तकान् ध्यानयोगप्रवर्तकानित्यर्थः ।।८१-८२।।

**भावचन्द्रिका–** धर्मस्य वचनेन करणेन च लोकप्रवृत्तिर्भवति । अत्र वक्तॄन् उक्त्वा कर्तॄनाह– **सनत्कुमारेति** ।।८१।।

**चट्टि–** सनत्कुमारः प्रमुखो येषां ते सनकसनन्दनादयः तान् योगशास्त्रस्य प्रवर्तकान् चक्रे । ध्यानयोगप्रवर्तकानिति वा । भृग्वादीनाममलं संशयरहितं शुभं ज्ञानं हरिस्वरूपप्रकाशज्ञानं दत्वा भृग्वादीन् सप्तऋषीन् कर्मयोगप्रवर्तकान् चक्रे ।।८१।।

**जैमिनिं कर्ममीमांसाकर्तारमकरोत् प्रभुः ।**
**[१]देवमीमांसकाद्यन्तं कृत्वा पैलमथाऽदिशत् ।**
**शेषं च मध्यकरणे पुराणान्यथ चाकरोत् ।।८२।।**

**वेदाङ्गतीर्थीया–** कर्ममीमांसा देवमीमांसा ब्रह्ममीमांसेति मीमांसात्रयम् । तत्र कर्ममीमांसा जैमिनिना कृता । ब्रह्ममीमांसा स्वयमेव कृता । देवमीमांसिकाद्यन्तं देवमीमांसिकायाः आद्यन्तौ भागौ कृत्वा स्वयमिति शेषः । अथ मध्यकरणे मध्यभागकरणे शेषं पैलमादिशत् ।।८१-८३।।

**वादिराजीया–** देवमीमांसकाद्यन्तमित्यत्र 'अथातो दैवीमीमांसा' इत्यादिसूत्रं 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते' इत्यन्तिमं सूत्रद्वयं च कृत्वेत्यर्थः ।।८२-८४।।

**वरदराजीया–** प्रभुः व्यासो जैमिनिं कर्ममीमांसायाः आद्यन्तौ भागौ कृत्वा मध्यभागस्य करणे पैलं शेषं च उभौ आदिशत् । ब्रह्ममीमांसाकर्ता स्वयमेवेति प्रसिद्धमेवेति भावः । अथानन्तरं पुराणानि च अकरोत् ।।८२।।

---

१. 'देवमीमांसिकाद्यन्तं' इति वेदाङ्गतीर्थपाठः ।

**अनन्तभट्टीया–** देवमीमांसकाद्यन्तं अयं कृत्वा मध्यकरणे मध्यकरणे पैलं शेषञ्च आदिशत् ।।८२।।

**जनार्दनीया–** कर्ममीमांसायाः कर्तारम् । जैमिनिना वा कर्ममीमांसा कृतेति भावः । देवमीमांसकायाः आद्यन्तमित्यत्रैकवद्भावः । आद्यन्तभागौ कृत्वा, स्वयं व्यास इति शेषः । अथ अनन्तरं मध्यकरणे देवमीमांसकायाः मध्यभागं कर्तुमित्यर्थः । पैलं ऋषिं शेषं च पैलाविष्टं शेषं च आदिशत् । एवं ऋषिं ऋष्याविष्टदेवमिति सर्वत्र ज्ञातव्यम् । अथ पुराणानि अकरोत् ।।८२।।

**ताम्रपर्णीया–** ।। **देवमीमांसाकाद्यन्तमिति** ।। देवमीमांसाया आदिसूत्रमेकं अन्त्यसूत्रद्वयं च ब्रह्मसूत्रकृतेः प्रागेव शेषं पैलं च मध्यकरणे आदिशदित्यर्थः । तदुक्तमनुव्याख्याने । 'स्वयं भगवता विष्णुः ब्रह्मेत्येतत्पुरोदितम् । स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि । आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् । मध्यं तदाज्ञया पैलशेषाभ्यां कृतमञ्जसा । अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ।' [जिज्ञासाधिकरण] इति । सुधायां च 'यतो देवमीमांसान्तिमसूत्रद्वयं भगवतैव कृतम् । अथातो दैवीत्यादि उदाहृतः । 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते' इति सूत्रद्वयेन विष्णुर्ब्रह्मेत्युदितः । तदनन्तरमेव अथातो ब्रह्मजिज्ञसा इति सूत्रितत्वात्' [१०१५] इति । शेषपैलयोः मध्यकर्तृत्वं नाम केषाञ्चित् सूत्राणां साङ्कर्षणत्वमन्येषां पैलकर्तृत्वमिति बोध्यम् । अन्यथा छन्दोगोपनिषद्भाष्ये 'देवेषु चर्मादिनामानि संवादादेः इति देवमीमांसायाम् । 'अचेतनासत्यायोग्यानि अनुपास्यानि अफलत्वविपर्ययाभ्याम्' इति साङ्कर्षणं सूत्रम्' [छा.भा.७] इति निरन्तरवाक्यद्वये नामभेदे निरूपणं न स्यात् ।। **पुराणान्यथेति** ।। ननु नात्राथशब्दः देवमीमांसानन्तर्यवाची ब्रह्मसूत्रस्यैव तदनन्तरभावित्वे प्रमाणस्योक्तत्वात् । नापि ब्रह्मसूत्रव्यवधानेन देवमीमांसानन्तर्यपरः ब्रह्मसूत्रात् पूर्वभाविभारतपूर्वभावित्वात्। तदुक्तं भारते– 'अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भाराताख्यानमकरोत्' इति । गीताभाष्यनरहरितीर्थीये च ''सर्वं वेदाद्यर्थोपबृंहित-मित्यत्र आदिपदेन पुराणानि । तदुक्तं मात्स्ये । 'अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहितम् । लक्षणैकेन तत्रोक्तवेदार्थपरिबृंहितम् ।।' इति [अ ५३.६९]। न च भारतस्य सूत्रात् पूर्वभावित्वमेवासिद्धमिति वाच्यम् । 'इत एव पुराणगौरगौ' इति मध्वविजयवाक्येन तत्सिद्धेरुक्तत्वादिति चेत् अत्रोच्यते । 'पुराणान्यथ' इत्यथशब्दस्य बुद्धिस्थवेदविभागाद्यानन्तर्यपरस्योपपत्तेः। अथ च 'तस्मादेव वक्ष्माणरीत्या असुरादिजनमोहनाद्यर्थत्वादेः वेत्यर्थोपपत्तेश्च' । केचित्तु 'ब्रह्मसूत्रनन्तर्यमेव पुराणभारतयोः मध्वविजयवचनं तु 'भारतपारिजातमधुभूताम्' इति भारतस्य पारिजातसाम्योक्तेः सूत्रगणस्य न्यायामृतत्वस्य* भगवत्पादोक्तेः । अमृतसारूप्यलाभाय श्लेषरूपेण सूत्रस्य भारतानन्तर्यमाह । न वस्तुगत्या' इत्याहुः ।।

*. 'अहं तु तत्प्रसादैकमहास्पदबलोद्धतः । न्यायामृतार्णवमिममवगाह्य विभज्य च । सङ्क्षेपविस्तराभ्यां च चकार व्याकृतिं कृतिम् ।।' इति न्यायविवरणे अन्तिममङ्गलाचरणे ।

**भावचन्द्रिका–** पैलं तदाविष्टं शेषं च । तथोक्तत्वात् ।।८२।।

**चट्टि–** प्रभुः व्यासः जैमिनिं कर्ममीमांसायाः कर्तारमकरोत् । देवमीमांसायाः आद्यन्तभागौ कृत्वा स्वयं व्यास इति शेषः । अथानन्तरं मध्यकरणे देवमीमांसाया मध्यभागं कर्तुमित्यर्थः । पैलमृषिं शेषं च पैलाविष्टमादिशत् । एवं ऋषिं ऋष्याविष्टदेवं चेति सर्वत्र ज्ञातव्यम् । अथ पुराणानि च अकरोत् ।।

**शैवान् [1]पाशुपताच्चक्रे संशयार्थं सुरद्विषाम् ।**
**वैष्णवान् पञ्चरात्राच्च यथार्थज्ञानसिद्धये ।**
**ब्राह्मांश्च वेदतश्चक्रे पुराणग्रन्थसङ्ग्रहान्[2] ।।८३।।**

**व्यासतीर्थीया–** संशयार्थं विपर्ययार्थं च प्रातीतिकार्थम् ।।८३-८४।।

**वेदाङ्गतीर्थीया–** पुराणान्यकरोदित्युक्तम् । तेषां पुराणानां किं किं मूलमित्यत आह– **शैवानित्यादिना** ।। संशयार्थं विपर्ययार्थं च ।।८३-८५।।

**वादिराजीया–** ब्राह्मांश्च वेदतश्चक्र इत्यत्र ब्राह्मान् वेदापातार्थभूतदेवसम्बन्धिनः । 'प्रजापतिं कृशानुं च तथा देवीं सरस्वतीम् । परत्वेन वदच्छास्त्रं राजसं परिकीर्तितम् ।।' इति वचनात् 'प्रजापते न

---

१. पाशुपतान् इति सत्याभिनवतीर्थीयचट्टिटिप्पण्योः पाठान्तरम् ।

२. पुराणमेकमेवासीत् तदा कल्पान्तरेऽनघ । त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।। निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया । अङ्गानि चतुरो वेदान् पुराणं न्यायविस्तरम् ।। मीमांसां धर्मशास्त्रं च परिगृह्य मया कृतम् । मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे ।। अशेषमेतत् कथितमुदकान्तर्गतेन च । श्रुत्वा जगाद च मुनीन् प्रति देवांश्चतुर्मुखः ।। प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत् ततः । कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ।। व्यासरूपमहं कृत्वा संहरामि युगे युगे । चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।। तथाष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रकाश्यते । अद्यापि देवलोकेऽस्मिन् शतकोटिप्रविस्तरम् ।। तदर्थोऽत्र चतुर्लक्षं संक्षेपेण निवेशितम् । पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते ।। मत्स्य.५३.४-११ ....स्कान्दे. प्रभासखण्ड. २ अध्याय– एकमेव पुरा ह्यासीत् ब्रह्माण्डं शतकोटिधा । ततोऽष्टादशधा कृत्वा वेदव्यासो युगे युगे ।। प्रख्यापयति लोकेस्मिन् साक्षान्नारायणांशजः ।। ८-९ पुराणमेकमेवासीत् तस्मिन् कल्पान्तरं तथा । त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।। विनिर्दग्धेषु लोकेषु कृष्णेनानन्तरूपिणा । साङ्गांश्च चतुरो वेदान् पुराणन्यायविस्तरम् ।। मीमांसां धर्मशास्त्रं च परिगृह्यात्मसात्कृतम् । मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे ।। अशेषमेव कथितं ब्रह्मणे दिव्यचक्षुषे । ब्रह्मा जगाद च मुनींस्त्रिकालज्ञानदर्शनः ।। प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत् ततः । ततः कालक्रमेणासौ व्यासरूपधरो हरिः ।। अष्टादशपुराणानि सङ्क्षेप्स्यति युगे युगे । चतुर्लक्षप्रमाणानि द्वापरे द्वापरे सदा ।। तदाष्टादशधा कृष्णो भूर्लोकेऽस्मिन् प्रभाषते ।। अद्यापि देवलोके तु शतकोटिप्रविस्तरम् । तदर्थोऽत्र चतुर्लक्षः सङ्क्षेपेण निवेशितः ।।१९-२६।।

त्वदेतानि' [ऋ.१०.१२१.१०]'अग्निमीळे पुरोहितम्' [ऋ.१.१.१] 'देवीं वाचमजनयन्त' [ऋ.८.१००.११] इत्यादिवेदापातार्थभूतानिति यावत् । उपलक्षणं चैतत् । 'सविता पश्चात्तात्' [ऋ.१०.३६.१४] 'अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः' [ऋ.८.१४.१३] 'गणानां त्वा गणपतिं हवामहे' [ऋ.२.२३.१] 'यो वः सेनानीर्महतो महस्य' [ऋ.१०.३४.१२] इत्यादिवेदापातार्थभूतदेवसम्बन्धिन इत्यपि द्रष्टव्यम् । पुराणग्रन्थसङ्ग्रहान् । वेदतः वेदानामापातार्थात् चक्रे । यथा वेदमध्यस्थिता हिरण्यगर्भाग्नीन्द्रादिसूक्तेष्वापाततः तस्य तस्योत्कर्षः प्रतीयते तथा क्वचिद्भागे ब्रह्मणः क्वचिदग्नेः क्वचिदिन्द्रादेः क्वचिल्लक्ष्मीसरस्वत्यादेश्च परत्वं प्रतिपादयतः पुराणग्रन्थसङ्ग्रहान् चक्र इति भावः । अत एव सर्वसङ्ग्राहकत्वात् सङ्ग्रहानित्युक्तम् ।।

**सत्याभिनवतीर्थीया–** तत्रैव शैवान् पाशुपतांश्चक्रे इति श्लोके 'संशयार्थं सुरद्विषां' इत्यस्य सुरद्विषां मिथ्याज्ञानार्थं मुक्त्ययोग्यमनुष्याणां संशयार्थमित्यर्थः । एतेन सुरद्विषां मिथ्याज्ञानार्थमिति वक्तव्यम् । संशयार्थमिति कथनमनुपपन्नमिति दूषणं परिहृतम् । मिथ्याज्ञानार्थमित्यस्य मुक्त्ययोग्यमनुष्याणामित्यस्य च अध्याहारेण सुरद्विषां मिथ्याज्ञानार्थं, मुक्त्ययोग्यमनुष्याणां संशयार्थं इत्यर्थस्योक्तत्वात् ।

तदनन्तरमेव ब्राह्मांश्च वेदतश्चक्रे पुराणग्रन्थ... इति श्लोके 'पुराणग्रन्थसङ्ग्रहान्' इत्यत्र पुराणग्रन्थानिति वक्तव्ये पुराणग्रन्थसङ्ग्रहानित्युक्त्या पूर्वं विद्यमानानां पुराणानामन्यथाकरणमेव न त्वन्यपुराणकरणमिति सूचयति । पुराणानामन्यथाकरणमेव न त्वन्यकरणमित्येतत् प्रमेयं 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तत् । क्रियन्तेऽऽतस्त्वनित्यानि' इत्यादिप्रमाणसिद्धम् ।।८४-८५।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां दशमोऽध्यायः ।।

**वरदराजीया–** पुराणानां त्रिभागत्वात् कस्य भागस्य किं मूलमित्यपेक्षायामाह– **शैवानिति** ।। शैवप्रतिपादकान् पुराणग्रन्थसङ्ग्रहान् पाशुपतात् पाशुपतागमात् मूलात् चक्रे । कुतः ? सुरद्विषां दैत्यानां संशयार्थं च । वैष्णवान् विष्णुप्रतिपादकान् पुराणग्रन्थसङ्ग्राहकान् पञ्चरात्रात् मूलाच्चक्रे । कुतः ? सज्जनानां यथार्थज्ञानसिध्यर्थं तथा ब्रह्मा चतुर्मुखप्रतिपादकान् पुराणग्रन्थसङ्ग्रहान् वेदतः यथाश्रुतार्थकात् 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिरूपवेदतो वेदात् मूलाच्चक्रे । संशयार्थमित्यत्रापि सम्बन्धः ।।८३।।

**अनन्तभट्टीया–** पाशुपतात् शैवात् पाशुपतोक्तप्रमेयं मूलीकृत्य तदनुसारेण शैवान् चक्रे । पञ्चरात्रात् वैष्णवान् । वेदतः वेदस्य प्रातीतिकार्थतः ब्राह्मान् पुराणग्रन्थसङ्ग्रहान् चक्रे[1] ।।८३।।

१. अनन्तभट्टीया– ।।वेदत इति।। वेदेषु प्रतीयमानमनुसृत्येत्यर्थः । इति हो.पुस्तकपाठः ।

**जनार्दनीया–** पुराणानां मूलं दर्शयति– **शैवानित्यादिना** ।। पाशुपतात् पाशुपतागमात् शैवान् शिवसर्वोत्तमत्वप्रतिपादकतामसपुराणग्रन्थसङ्ग्रहान् संशयार्थं विपरीतज्ञानार्थं । पञ्चरात्रात् वैष्णवान् विष्णोः सर्वोत्तमत्वप्रतिपादकान् सात्त्विकपुराणग्रन्थसङ्ग्रहान् । वेदतः प्रतीयमानकर्मादिप्रतिपादकार्थम् । वेदानुसारेण ब्राह्मान् राजसपुराणग्रन्थसङ्ग्रहान् चक्रे । संशयार्थमिति शेषः ।।८३।।

**ताम्रपर्णीया–** ।। **शैवानिति** ।। ननु शैवपुराणानां प्रामाण्ये शिवाद्युत्तमत्वप्राप्तिः अप्रामाण्ये व्यासस्यानृतभाषित्वप्रसङ्गः । तथा च 'मयोदितं क्वापि न हेयमस्ति' इति वचनविरोध इत्यत आह– **पाशुपतादिति** ।। स्वार्थे प्रामाण्याभावेऽपि भारते कलिङ्गोपदेशवत् पाशुपतानुवादित्वेन प्रामाण्याभ्युपगमात् नानुपपत्तिरिति भावः । वेदतः वेदे आपातप्रतीतमर्थमनुस्मृत्य । पुराणग्रन्थसङ्ग्रहानित्येतत् शैवान् वैष्णवान् ब्राह्मानिति त्रितयविशेषणम् । पुराणग्रन्थाश्च ते पाशुपताद्यर्थसङ्ग्रहरूपतया सङ्ग्रहाश्च तानित्यर्थः । यद्वा पुराणानि च ब्रह्मतर्कादिग्रन्थसङ्ग्रहाश्च तानित्यर्थः । तदुक्तमनुव्याख्याने । 'पञ्चाशत्कोटिविस्तारात् नारायणतनौ कृतात् । उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः' इति* । शैवब्राह्मा अपि सङ्ग्रहग्रन्थाः वर्तन्त इति भावः । नन्वीश्वरप्रणीतानां वैष्णवपुराणानां तदीयं ज्ञानमेव मूलम् । सत्यम् । ईश्वरप्रणीत-पुराणानामपि प्रामाण्यावधारणय पञ्चरात्रसंवादोऽपेक्षितः । अन्यथा उत्प्रेक्षामूलशङ्कनादित्यदोषः ।।८३।।

**चट्टि–** पुराणानां मूलं दर्शयति– **शैवानित्यादिना** ।। पाशुपतात् पाशुपतागमं मूलीकृत्य शैवान् शिवसर्वोत्तमत्वप्रतिपादकान् तामसपुराणग्रन्थसमूहान् । 'पाशुपतान्' इति पाठे पाशुपतागमार्थानुकूलान् शैवान् पुराणग्रन्थसमूहान् सुरद्विषां दैत्यानां संशयार्थं चक्रे । पञ्चरात्रात् वैष्णवान् विष्णुसर्वोत्तमत्व-प्रतिपादकसात्त्विकपुराणग्रन्थसमूहान् भक्तानां यथार्थज्ञानसिद्धये चक्रे । वेदतः यथाश्रुतार्थकात् 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिरूपाद् वेदतो वेदात् ब्राह्मान् राजसान् पुराणग्रन्थसङ्ग्रहान् चक्रे । संशयार्थमिति शेषः ।।८४।।

**एवं ज्ञानं पुनः प्रापुर्देवाश्च ऋषयस्तथा ।**
**सनत्कुमारप्रमुखा योगिनो मानुषास्तथा ।**
**कृष्णद्वैपायनात् प्राप्य ज्ञानं ते मुमुदुः सदा ।।८४।।**

**वेदाङ्गतीर्थीया–** देवाः सनत्कुमारप्रमुखाश्च ज्ञानं पुनः पुनः विशेषज्ञानं प्रापुः । ऋषयो मनुष्योत्तमाश्च गौतमशापात् नष्टज्ञानाः पुनः ज्ञानं प्रापुरिति भावः ।।८५।।

* जिज्ञासाधिकरणम् ।

**मधुसूदनीया–** ।। **एवं ज्ञानमिति** ।। देवाः रुद्रादयः ।।८४-८६।।

।। इति श्रीमद्विद्याधीशतीर्थश्रीपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारतातात्पर्यनिर्णयार्थप्रेमाणसङ्ग्रहे दशमोऽध्यायः ।।

**वरदराजीया–** एवं उक्तरीत्या देवर्षयश्च सर्वे सनत्कुमारादयश्च पूर्वं ज्ञानिनोऽपि पुनः ज्ञानं प्रापुः । ते देवादयः सदा कृष्णद्वैपायनात् व्यासात् ज्ञानं प्राप्य मुमुदुः ।।८४।।

**अनन्तभट्टीया–** पूर्वं पुरुषाविष्टकलेः ...पुनरित्युक्तम् । उक्तमेव विशदयति– **सनत्कुमारेति** ।।८४।।

**जनार्दनीया–** एवमनेन प्रकारेण देवादिमानुषान्ताः हरिभक्ताः वैवस्वतमन्वन्तरप्रथमद्वापरापेक्षया पञ्चविंशतिद्वापरे युगे कृतव्यासावतारापेक्षया च पुनः अष्टाविंशतिद्वापरे ज्ञानं प्रापुः । व्यासादिति शेषः । देवाः पुनः पृथगाविष्टरूपेण च विशेषज्ञानं प्रापुः । ऋषयो मनुष्याश्च गौतमशापात् नष्टज्ञानाः पुनर्ज्ञानं प्रापुरिति भावः । ते पूर्वोक्ता देवादयः कृष्णद्वैपायनात् श्रीवेदव्यासात् ज्ञानं प्राप्य, सदा इहामुत्रेत्यर्थः । मुमुदुः ।।८४।।

**ताम्रपर्णीया–** ।। **एवं ज्ञानं पुनश्चापु इति** ।। अत्र ब्रह्मादीनां ज्ञानप्राप्तिर्नाम पूर्वस्थितस्य विशेषयुक्त्यादिभिः दृढीकरणं किञ्चिदप्राप्तलाभश्च । ''जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा । पृच्छन्ति साधवः'' [गी.ता.४] इत्यादेः । विरिञ्चेतरेषां तिरोहितलाभो वा ।।८४-८६।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां
प्रमेयमणिमालायां [प्रमाणमालायां] दशमोऽध्यायः ।।

**अतिविशद–** एवं ज्ञानं पुनः प्रापुः देवाश्च ऋषयस्तथा इत्यत्र देवानां गौतमापेक्षया उत्तमानां ऋषीणाञ्च अप्राप्तस्य प्राप्तिः प्राप्तस्य ज्ञानस्य दृढीकरणं ज्ञातव्यम् । नतु तिरोहितस्य लाभः । गौतमशापस्य तत्सम्बन्धित्वाभावात् । यथोक्तं तत्वप्रकाशिकायां जयतीर्थश्रीमच्चरणैः 'एवं ज्ञानं पुनः प्रापुः' इत्यादेश्चायमर्थ इति । पूर्वं हयग्रीवात् प्राप्तत्वेन पुनरित्युक्तम् । यथोक्तं बृहद्भाष्ये–

सर्वं विष्णौ स्थितं विष्णोर्जातं विष्णोर्वशे सदा । तस्माद्वेदाः समुत्पन्ना विद्याख्या मूलिकाश्रुतिः ।।
सर्वोपनिषदश्चैव पञ्चरात्राख्यसंहिता । ब्रह्मसूत्राणि वेदानां व्याख्या तासाञ्च विस्तरः ।।
सर्वमेतज्जगच्चैव निःसृतं तुरगाननात् ।। इति ।।८४।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
अतिविशदवाक्यार्थविवृतौ दशमोऽध्यायः ।।

**भावचन्द्रिका–** ।। **एवमिति** ।। 'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा । पृच्छन्ति साधवो लोका... ।।' इति वचनात् । 'प्राङ्निश्चितस्यैव पुनर्विशेषयुक्त्यादिभिः दृढीकरणम् । क्वचिदप्राप्तलाभश्च उच्यते । यत आहुः 'ब्रह्मणस्तु प्रायो नाप्रातिभासितम्' इति वचनात् विरिञ्चेतरेषां तिरोहितलाभो वा' । पद्मनाभमूर्त्यादौ अपरोक्षतिरोधानसत्वात् प्राय इत्युक्तम् ।।८४।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां दशमोऽध्यायः ।।

**चर्द्रि–** एवमुक्तरीत्या देवा ऋषयश्च देवादिमानुषान्ता हरिभक्ताः पुनः वैवस्वतमन्वतरप्रथमद्वापरापेक्षया पञ्चविंशतिद्वापरयुगे कृतव्यासावतारापेक्षया पुनः अष्टाविंशतिद्वापरे ज्ञानं प्रापुः । व्यासादिति शेषः । ते पूर्वोक्ताः देवादयः सनत्कुमारप्रमुखाः योगिनः मानुषास्तथा मनुष्याश्च कृष्णद्वैपायनात् ज्ञानं प्राप्य सदा इहामुत्रेत्यर्थः । मुमुदुः ।।८७।।

**समस्तविज्ञानगभस्तिचक्रं वितायं विज्ञानमहादिवाकरः ।**
**निरस्य चाज्ञानतमो जगत्ततं प्रभासते भानुरिवावभासयन् ।।८५।।**

**व्यासतीर्थीया–** वेदतः व्यासं स्तुवंस्तत्कथामुपसंहरति– **समस्तेति** ।।८५-८६।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां दशमोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** व्यासावतारकथामुपसंहरति– **समस्तेति** ।।८५-८६।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
तात्पर्यदीपिकायां दशमोऽध्यायः ।।

**वादिराजीया–** विज्ञानमयः महान् सर्वोत्तमः व्यासाख्यो दिवाकरः ।।८५-८६।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां दशमोऽध्यायः ।।

**वरदराजीया–** इदानीं व्यासस्वरूपं वर्णयन् तदवतारकथामुपसंहरति– **समस्तेति** ।। भानुः सूर्य इव अवभासयन् प्रकाशयन् विज्ञानेन महान् दिवाकरो व्यासः समस्तविषयज्ञानलक्षणानां गभस्तीनां चक्रं समूहं विताय विस्तार्य जगति ततं व्याप्तं अज्ञानाख्यं तमः अन्धकारं निरस्य च प्रभासते ।।८५।।

**अनन्तभट्टीया–** विताय विस्तार्य । ...॥८५॥

**जनार्दनीया–** व्यासावतारलीलां सङ्क्षेपादुक्त्वा उपसंहरति– **समस्तेति** ॥ विज्ञानेन महादिवाकरः अभिनवसूर्यो व्यासः । समस्तविज्ञानानि सर्वविशेषज्ञानानि, तान्येव गभस्तयः किरणाः, तासां चक्रं समूहम् । विताय विस्तार्य जगति ततं व्याप्तं अज्ञानाख्यं तमो अन्धकारं निरस्य तिरस्कृत्य भानुरिवावभासयन् सज्ज्ञानेन प्रकाशयन्, जगदिति शेषः । प्रभासते उत्कृष्टत्वेन प्रकाशते ॥८५॥

**भावविवृतिः–** समस्तविज्ञानगभस्तिचक्रं इत्यत्र समस्तानां मुक्तियोग्यानां स्वविषयकतत्तद्योग्यता-पूर्तिसम्पादकानि विज्ञानानि तान्येव गभस्तयः तासां चक्रं समूहम् । विताय विस्तार्य उपदिश्येत्यर्थः । 'विज्ञानमात्मयोग्यं स्यात् ज्ञानं साधारणं स्मृतम् ।' [भा.ता.१.१८.३] 'प्रति जीवं येन मुक्तिः तद्विज्ञानं विदो [विदां] मतम् ।' [भा.ता.५.५.१२] इत्युक्तेः ॥८५-८७॥

॥ इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ दशमोऽध्यायः ॥

**चट्टि–** व्यासावतारलीलां सङ्क्षेपादुक्त्वा उपसंहरति– **समस्तेति** ॥ विज्ञानेन महान् दिवाकरो व्यासः । समस्तविज्ञाननि सर्वविशेषज्ञानानि तान्येव गभस्तयः किरणास्तासां चक्रं समूहम् । विताय विस्तार्य जगति ततं व्याप्तं अज्ञानाख्यं तमोऽन्धकारं निरस्य तिरस्कृत्य भानुरिव अवभासयन् ज्ञानेन प्रकाशयन्, जगदिति शेषः । प्रभासते उत्कृष्टत्वेन प्रकाशते ॥८५॥

**चतुर्मुखेशानसुरेन्द्रपूर्वकैः सदा सुरैः सेवितपादपल्लवः ।**
**प्रकाशयंस्तेषु सदात्मगुह्यं मुमोद मेरौ च तथा बदर्याम् ॥८६॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये दशमोऽध्यायः ॥

**वरदराजीया–** तथा ब्रह्मसुरेन्द्रपूर्वकैः सुरैः । संसेवितं पादपल्लवं यस्य स तथा । तेषु ब्रह्मादिषु, सत् निर्दोषं आत्माख्यं गुह्यं, अयोग्यान् प्रति गोप्यं स्वरूपमिति वा प्रकाशयत् सदा आत्मगुह्यमिति वा मेरौ पर्वते तथा बदर्यां च स्थित्वा मुमोद आनन्दोद्रिक्तोऽभूदित्यर्थः ॥८६॥

श्रीमद्भारततात्पर्यनिर्णयाध्याय एव हि । दशमो व्याकृतस्तावत् प्रीत्यै माधवमध्वयोः ॥

॥ इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
मन्दसुबोधिन्यां दशमोऽध्यायः ॥

**अनन्तभट्टीया–** आत्मगुह्यं आत्मसम्बन्धि अतिरहस्यगुणादिकम् ।।८६।।

।। इति श्रीमुष्णं अनन्ताचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
तन्त्रमालायां [सत्तत्त्वमालायां] दशमोऽध्यायः ।।

**जनार्दनीया–** तेषु चतुर्मुखादिषु । आत्मगुह्यं स्वसम्बन्धिगुणादिरहस्यं प्रकाशयन्, मेरौ तथा वदर्यां मुमोद इत्यखिलमतिमङ्गलम् ।।८६।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात्
पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात् ।
पूर्तिं तस्य कृतौ सदैव दशमोऽध्यायः सतां तुष्टिदः
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां दशमोऽध्यायः ।।

**चट्टि–** चतुर्मुखेशानसुरेन्द्रपूर्वकैः सुरश्रेष्ठैः सुरैः देवैः सदा सेवितपादपल्लवौ यस्य स तथा । तेषु ब्रह्मादिषु सन्निर्दुष्टं आत्मगुह्यं स्वसम्वन्धि गुणादिरहस्यं प्रकाशयन् मेरौ तथा वदर्यां च मुमोदेत्यखिल-मतिमङ्गलम् ।।८९।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दशमोऽध्यायः ।।

★★★

# ।। अथ एकादशोऽध्यायः ।।

**शशाङ्कपुत्रादभवत् [1]पुरूरवास्तस्याऽयुरायोर्नहुषो [2]ययातिः ।**
**तस्याऽस पत्नीयुगलं सुताश्च पञ्चाऽभवन् विष्णुपदैकभक्ताः ।।१।।**

**व्यासतीर्थीया–** अथ कृष्णकथां कथयन् हरेर्भूभारसंहारान्तरङ्गभूतपुरुषोत्पत्तिं तद्वंशं प्रकाशयन्नाह– **शशाङ्केति** ।। ब्रह्मणः पुत्रो अत्रिः, अत्रेः पुत्रः शशाङ्कः, शशाङ्कपुत्रात् बुधात् पुरूरवाः अभवत् ।।१।।

**वेदाङ्गतीर्थीया–** अथ भारतकथां विवदिषुः आनन्दतीर्थभगवानाचार्यवर्यः सोमवंशे कृष्णपाण्डवाद्यवतारान् वक्तुं तद्वंशमाह– **शशाङ्कपुत्रादित्यादिना** ।। ब्रह्मपुत्रो अत्रिः, अत्रिपुत्रः शशाङ्कः, शशाङ्कपुत्रो बुधः, तस्मात् पुरूरवा अभवत् ।।१।।

---

१. 'बुधपुत्रे समुत्पन्ने तत्राजग्मुः सुरेश्वराः । अहमप्यागमं तत्र मुदा युक्तो महामते ।। जातमात्रः सुतो रावमकरोत् स पृथुस्वरम् । तेन सर्वेऽप्यवोचन् वै सङ्गता ऋषयः सुराः ।। यस्मात् पुरू रवोऽस्येति तस्मादेष पुरूरवाः ।।' इति ब्रह्मपुराणे, गौतमीमाहात्म्ये,३८.७७-७९ । अथ पुराणेषु बहुत्र कथिता पुरूरवसो महिमा किञ्चिदेव सङ्गृह्यते– पुरूरवा इति ख्यातः सर्वलोकनमस्कृतः । हिमवच्छिखरे रम्ये समाराध्य पितामहम् ।। लोकैश्वर्यमगाद्राजा सप्तद्वीपपतिस्तदा ।।५२।। ब्रह्मप्रसादाद्देवेन्द्रो ददौ अर्धासनं तदा ।।५६।। अहन्यहनि देवेन्द्रं द्रष्टुं याति पुरूरवाः । कदाचिदारुह्य रथं दक्षिणाम्बरचारिणा ।। सार्धं शक्रेण सोऽपश्यत् नीयमानमथाम्बरे । केशिना दानवेन्द्रेण चित्रलेखामथोर्वशीम् ।। तं विनिर्जित्य समरे विविधायुधपातनैः । पुरा शक्रोऽपि समरे येन वज्री विनिर्जितः ।। मित्रत्वमगमत्तेन प्रादादिन्द्राय चोर्वशीम् । ततः प्रभृति मित्रत्वमगमत् पाकशासनः ।। सर्वलोकेऽतिशयितं पुरूरवसमेव तम् । प्राह वज्री तु सन्तुष्टो नीयतामियमेव च ।। इत्यादि पाद्मे १.सृष्टि.१२.६५-६९ ।

२. सर्वधर्मपरो नित्यं विष्णुभक्तश्च नाहुषिः । अब्दानां तत्र लक्षं हि तस्याप्येवं गतं भुवि ।। इति पाद्मे.२भूमि.७५ अ.२१ । 'अस्मांश्च सर्वे जानन्ति चन्द्रवंश्यांश्च वैष्णवान् । देवमन्यं न सेवन्ते चन्द्रवंश्या हरिं विना ।। इति ब्रह्मवैवर्ते [४खं.५९.१२८] इन्द्राणीं प्रति नहुषवचनम् । सुस्वधा नाम पितरो कर्दमस्य प्रजापतेः । ...तेषां वै मानसी कन्या विरजा नाम विश्रुता । ययातेः जननी ब्रह्मन् महिषी नहुषस्य च ।। हरिवंश. हरिवंश.१८.६४,६६

**वादिराजीया–** शशाङ्कपुत्रादभवत् पुरूरवा इत्यत्र विवस्वतः वैवस्वतो नाम मनुरभवत् । तस्य पुंवंशात् सूर्यवंशः । तदपत्यस्य ऐलाख्यस्य इलावृतखण्डप्रवेशात् स्त्रीभावे सति तस्यां शशाङ्कपुत्रात् बुधात् सोमवंश इति विवेकः । एवं च द्वावपि वंशौ वैवस्वतसमानकालीनावेव न तु सूर्यवंशादनन्तरं सोमवंशारम्भ इति ज्ञेयम् ॥१॥

**मधुसूदनीया–** ॥ **शशाङ्कपुत्रादिति** ॥ शशो लोकच्छायैवाङ्कं लक्ष्म यस्य सः शशाङ्कश्चन्द्रः । तस्य पुत्रो बुधः तस्मादित्यर्थः । तथाचोक्तम्– 'लोकच्छायामयं लक्ष्म तवाङ्के शशसञ्ज्ञितम्' इत्यादि हरिवंशे [१.४५.५]। तथाच शशाङ्कपुत्रादित्यारभ्य नहुष इत्यन्तेर्न 'प्रथितः पञ्चमः सोमयदोर्वंशकरस्मृतः' इति[1] आरण्यपर्ववचनाभिप्रायोऽपि सूचित इति ज्ञेयम् ॥१॥

**वरदराजीया–** एवं व्यासवतारं निरूप्येदानीं 'पश्चात्तनत्वात् कृष्णस्य वैशेष्यादत्र निर्णय' इत्युक्तं दर्शयिष्यन् श्रीकृष्णपाण्डवकथां वक्तुं तद्वंशधौरेयानाह– **शशाङ्कपुत्रादित्यादिना** ॥ शशाङ्कस्य सोमस्य पुत्रात् बुधात् पुरूरवा अभवत् । तस्य पुरूरवस आयुरभवत् । आयोर्नहुषः, नहुषाद्ययातिः, तस्य ययातेः पत्नीयुगलमास । विष्णुपदैकभक्ताः पञ्चसुता अभवन् ॥१॥

**अनन्तभट्टीया–** अथ भारतकथामारभते– **शशाङ्केति** ॥ चतुर्मुखादत्रिः, अत्रेः शशाङ्कः, शशाङ्कात् बुधः, ...पुरूरव... ॥१॥

**जनार्दनीया–** क्रमप्राप्तां श्रीकृष्णपाण्डवकथां वक्तुं तदुपयुक्तं सोमवंशमाह– **शशाङ्केत्यादिना** ॥ 'अत्रिस्तु ब्रह्मणः पुत्रः शशाङ्कस्तत्सुतः स्मृतः' इति वचनात् शशाङ्कपुत्रो बुधः, तस्मात् पुरूरवाः, तस्य पुरूरवसः आयुः, आयोः नहुषः, नहुषस्य ययातिः, तस्य ययातेः पत्नीयुगलं आस । 'अस गतिदीप्त्यादानेषु' इत्यस्य लिटि रूपम् । द्वे स्त्रियो बभूवतुरित्यर्थः । पञ्च सुताश्चाभवन् । कथम्भूताः ? विष्णुपदे एकभक्ताः मुख्यभक्ताः ॥१॥

**ताम्रपर्णीया–** अथ श्रीकृष्णावतारचरितं वक्तुं आदिपर्वोक्तवंशावलिमुपक्रमते– **शशाङ्कपुत्रात् बुधादिति** ॥१-२॥

**अतिविशद–** नहुषो ययातिः तस्यास पत्नीयुगलं...भक्ता इत्यत्र शर्मिष्ठाया देवयानीदासीत्वेन पत्नीत्वानुपपत्तेः । तथा सुतानां विष्णुपदैकभक्तत्वमुच्यते । तदनुपपन्नम् । तत्रैकभक्तत्वस्य दुर्लभत्वात् । नच चन्द्रकुलोत्पन्नत्वापेक्षया तत् इति न । भरतकार्तवीर्यार्जुनापेक्षया तदभावात् । नच पञ्चस्वेव तदिति । तदपि न । पितुः जराग्राहिणां चतुर्णां तदनुपपत्तेः । तस्मादेतत्कथमिति । उच्यते । 'प्रायः

---

१. 'प्रथितः पञ्चमः सोमादायोः पुत्रो नराधिप' इति इदानीन्तनपाठः.१८२.११ ।

सतां न मनः पापमार्गे गच्छेत्' इत्युक्तत्वात् । ययातिना गान्धर्वविवाहेन गृहीतत्वात् तस्याश्चादुष्टत्वाच पत्नीत्वमुपपन्नम् । विष्णुपदैकः प्रधानश्च भक्ताश्चेति द्वन्द्वाश्रयेण विष्णुपदं एकः प्रधानो येषां ते इति वहुव्रीहेराश्रयेण च उपपत्तेः न कश्चिद्दोष इति ।।१।।'

**भावचन्द्रिका**– ।। **तस्येति** ।। 'ब्राह्मणस्त्रीविवाहेऽपि तव दोषो न क्षत्रिय एवात्र भविष्यति' इति विप्रेण शुक्रेण वरदानात् । ययातिस्तु पुत्रीं देवयानीं उवाह । तस्याश्चासवर्णविवाहः । यं वृहस्पतिज्येष्ठपुत्रकचशापात् ।।१-३।।

**चट्टी**– एवं व्यासावतारं निरूप्य अथ श्रीकृष्णपाण्डवकथां वक्ष्यन् भगवानाचार्यः तदुपयुक्तं सोमवंशमाह– **शशाङ्केत्यादिना** ।। ब्रह्मणः पुत्रः अत्रिः, तस्य पुत्रः शशाङ्कः, तस्य चन्द्रस्य पुत्राद् बुधात् पुरूरवाः अभवत् । शशः लोकच्छायैव अङ्कः लक्ष्म यस्य स इति विग्रहः । तथाचोक्तम्– 'लोकच्छायामयं लक्ष्म तवाङ्के शशसञ्ज्ञितम्' इत्यादि हरिवंशे । तस्य पुरूरवसः आयुरायोः नहुषः, नहुषस्य ययातिः, तस्य ययातेः पत्नीयुगलं आस । द्वे भार्ये वभूवतुरित्यर्थः । विष्णुपदे एकभक्ताः मुख्यभक्ताः पञ्चसुताश्चाभवन् ।।१।।

**यदुं च तुर्वसुं चैव [1]देवयानी व्यजायत ।**
**द्रुह्युं चाऽनुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ।।२।।**

**व्यासतीर्थीया**– का कानजनयदिति जिज्ञासायामाह– **यदुमिति** ।। देवयानी शुक्रपुत्री व्यजायत व्यजनयत् ।।२।।

**वेदाङ्गतीर्थीया**– कस्यां के जाता इत्यत तद्विवेकमाह– **यदुमित्यादिना** ।। देवयानी शुक्रपुत्री व्यजायत जनयामास । वार्षपर्वणी वृषपर्वणः दानवस्य सुता ।।२।।

**वादिराजीया**– देवयानी व्यजायत इत्यत्र व्यजायत अन्तर्णीतो णिच् । जनयामासेत्यर्थः ।।२।।

**मधुसूदनीया**– ।। **यदुश्चेति** ।। ननु देवयान्याः शुक्रपुत्रीत्वेन कथं क्षत्रपत्नीत्वं इत्यत उक्तम्– **चेति** ।। विशेषार्थकतुशब्दार्थेन द्वितीयचशव्देन कचशापस्तत्र निमित्तमिति सूचयति । तच्चोक्तम्– 'ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति' इत्यादिपर्वणि [७१.१९] । यद्वा देवयानीति नामग्रहणेन विप्रपुत्र्या अपि शापवशात् क्षत्रपत्नीत्वं उक्तमिति सूचयति ।।२।।

---

१. दुहितरमूर्जस्वतीं नामोशनसे प्रायच्छद् यस्यामासीत् देवयानी नाम काव्यसुता ।। इति भागवतोक्तेः [५.१.३४] देवयानीमाता प्रियव्रतस्य सुता, शुक्रस्य भार्या ।। वृषपर्वा कश्यपभार्यायां दनुनाम्न्यां जातः । दनुपुत्रत्वात् दानवः । तथा चोक्तं भागवते.६.६.३०

**वरदराजीया–** एतदेव विशदयति– **यदुश्चेत्यादिना** ।। देवयानी शुक्रस्य सुता व्यजायत जनयामास । वार्षपर्वणी वृषपर्वराज्ञः पुत्री च अजायतेत्यनुवर्तते ।।२।।

**जनार्दनीया–** पत्नीयुगलं पञ्चसुता इत्युक्तं तर्हि एकस्याः द्वौ पुत्रौ अन्यस्याः द्वौ पुत्रौ एकस्तूभयोः पुत्रः यथा देवकीरोहिणीजो बलभद्रः तथा किमित्यत आह– **यदुमित्यादिना** ।। शुक्रकन्या नाम्ना देवयानी ययातिभार्या यदुं च तुर्वसुं चेत्युभौ व्यजायत जनयामास । वार्षपर्वणी वृषपर्वणो दानवस्य पुत्री नाम्ना शर्मिष्ठा ययातिभार्या द्रुह्युं च अनुं च पूरुं चेति त्रीन् पुत्रान् व्यजायत इत्यनुवर्तते ।।२।।

**चट्टी–** कस्यां के जाता इत्यतस्तद्विवेकमाह– **यदुमित्यादिना** ।। शुक्रपुत्री नाम्ना देवयानी ययातिभार्या यदुं तुर्वसुं चेत्युभौ व्यजायत जनयामास । ननु देवयान्याः शुक्रपुत्रीत्वेन कथं क्षत्रपत्नीत्वमित्यत उक्तम्– **चेति** ।। अनेन द्वितीयचशब्देन कचशापस्तत्र कारणमिति सूचयति । तथा चोक्तम्– 'ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति' इत्यादिपर्वणि । वार्षपर्वणी वृषपर्वणो दानवस्य पुत्री नाम्ना शर्मिष्ठा ययातिभार्या द्रुह्युं चानुं च पूरूं चेति त्रीन् पुत्रान् व्यजायतेत्युवर्तते ।।२।।

**यदोर्वंशे [1]चक्रवर्ती [2]कार्तवीर्यार्जुनोऽभवत् ।**
**विष्णोर्दत्तात्रेयनाम्नः प्रसादाद् योगवीर्यवान् ।**
**तस्यान्ववाये यदवो बभूवुर्विष्णुसंश्रयाः ।।३।।**

---

१. चक्रवर्तिलक्षणान्युक्तानि मत्स्यपुराणे । 'यदा धर्मस्य ह्रसते शाखाऽधर्मस्य वर्धते । जायन्ते च तदा शूरा आयुष्मन्तो महाबलाः ।। न्यस्तदण्डा महायोगा यज्वानो ब्रह्मवादिनः । पद्मपत्रायताक्षाश्च पृथुवक्त्राः सुसंहताः ।। सिंहोरस्का महासत्वा मत्तमातङ्गगामिनः । महाधनुर्धराश्चैव त्रेतायां चक्रवर्तिनः ।। सर्वलक्षणपूर्णास्ते न्यग्रोधपरिमण्डलाः । न्यग्रोधौ तु स्मृतौ बाहू व्यामो न्यग्रोध उच्यते ।। व्यामेन तूच्छ्र्यो यस्य अत ऊर्ध्वं तु देहिनः । समुच्छ्र्यः परीणाहो न्यग्रोधपरिमण्डलः ।। चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा । प्रोक्तानि सप्तरत्नानि पूर्वं स्वायम्भुवेन्तरे ।। विष्णोरंशेन जायन्ते पृथिव्यां चक्रवर्तिनः । मन्वन्तरेषु सर्वेषु ह्यतीतानागतेषु वै ।। भूतभव्यानि यानीह वर्तमानानि यानि च । त्रेतायुगानि तेष्वत्र जायन्ते चक्रवर्तिनः ।। भद्राणीमानि तेषाञ्च विभाव्यन्ते महीक्षिताम् । अत्यद्भुतानि चत्वारि बलं धर्मं सुखं धनम् ।। अन्योन्यस्याविरोधेन प्राप्यन्ते नृपतेः समम् । अर्थो धर्मश्च कामश्च यशो विजय एव च ।। ऐश्वर्येणाणिमाद्येन प्रभुशक्तिबलान्विताः । श्रुतेन तपसा चैव ऋषींस्तेऽभिभवन्ति हि ।। बलेनाभिभवन्त्येते तेन दानवमानवान् । लक्षणैश्चैव जायन्ते शरीरस्थैरमानुषैः ।। केशाः स्थिता ललाटेन जिह्वा च परिमार्जनी । श्यामप्रभाश्चतुर्दंष्ट्राः श्रवसाश्चोर्ध्वरेतसः ।। आजानबाहवश्चैव तालहस्तौ वृषाकृती । परिणाहप्रमाणाभ्यां सिंहस्कन्धाश्च मेधिनः ।। पादयोश्चक्रमत्स्यौ तु शङ्खपद्मे च हस्तयोः । पञ्चाशीतिसहस्राणि जीवन्ति ह्यजरामयाः ।। असङ्गा गतयस्तेषां चतस्रश्चक्रवर्तिनाम् । अन्तरिक्षे समुद्रेषु पाताले पर्वतेषु च ।।' इत्यादि ।

२. 'तेन दत्तेन लोकेऽस्मिन् दत्तं राज्यं महीतले । कार्तवीर्याय कौन्तेय योगाभ्यासः सविस्तरः ।। चक्रवर्तिपदं चैव

**व्यासतीर्थीया–** योगवीर्यं अणिमादिः ।।३-४।।

**वेदाङ्गतीर्थीया–** योगवीर्यवान् अणिमाद्यष्टैश्वर्यबलवान् ।।३-५।।

**वादिराजीया–** यदोर्वंशे चक्रवर्तीत्यत्र साक्षाद्यदुकुमारत्वाभावात् मध्ये राजपरम्परासद्भावाच्च वंश इत्युक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् । तस्यान्ववाय इत्यत्र रघुवंशीयानां सर्वेषां रघुरितिवद्यदुवंशीयानामपि यदुरिति नामेति भावेनोक्तं यदव इति ।।३।।

**मधुसूदनीया–** ।। **दत्तात्रयेनाम्नः प्रसादादिति** ।। तच्चोक्तम्– 'एतद्बाहुद्वयं यत्ते मृधे मम कृतेऽनघ । शतानि दश बाहूनां भविष्यन्ति न संशयः ।।' इति हरिवंशे [१.४१.१०८] ।।३-६।।

**वरदराजीया–** यदोः देवयानीज्येष्ठपुत्रस्य वंशे कृतवीर्यस्य पुत्रः कार्तवीर्यः स चासावार्जुनश्चेति । चक्रवर्ती चक्रवर्तिषु प्रियव्रतादिषु परिगणितः । तदेव विशदयति– **विष्णोरिति** ।। योगवीर्यवान् अणिमाद्यष्टसामर्थ्यवान् । तस्य कार्तवीर्यार्जुनस्यान्ववाये वंशे विष्णुसंश्रयाः कृष्णाश्रयाः ।।३।।

**अनन्तभट्टीया–** योगवीर्यवान् अणिमादियोगवीर्यवान् ।।३।।

**जनार्दनीया–** तत्र तावद्यदुवंशमाह– **यदोरित्यादिना** ।। योगवीर्यवान् अणिमाद्यष्टयोगवीर्यवान् । तस्य कृतवीर्यपुत्रार्जुनस्य अन्ववाये वंशे । विष्णुः कृष्णः संश्रयः मुख्याश्रयो येषां । यदवो यादवाः ।।३।।

**ताम्रपर्णीया–** योगवीर्यवान् योगो ध्यानयोगकर्मयोगौ, वीर्यं चास्यास्तीति योगवीर्यवान् ।।३।।

**चट्टी–** तत्र तावद्यदुवंशमाह– **यदोरित्यादिना** ।। यदोः देवयानीज्येष्ठपुत्रस्य वंशे चक्रवर्ती । कृतवीर्यस्य पुत्रः कार्तवीर्यः स चासौ अर्जुनश्चेति कार्तवीर्यार्जुनो अभवत् । तमेव विशिनष्टि– **विष्णोरिति**।। सः दत्तात्रेयनाम्नो विष्णोः प्रसादाद्योगवीर्यवान् अणिमाद्यष्टैश्वर्यबलवान् । तच्चोक्तम्– 'एतद्बाहुद्वयं यत्ते तत्ते मम कृतेऽनघ । शतानि दश बाहूनां भविष्यन्ति न संशयः ।।' इत्यादि हरिवंशे । तस्य कार्तवीर्यार्जुनस्य अन्ववाये वंशे । विष्णुः श्रीकृष्णः संश्रयः मुख्याश्रयः येषां ते । यदवो यादवाः बभूवुः ।।३।।

---

....अष्टसिद्धिसमन्वितम् ।। ३०...तस्य बाहुसहस्रं तु प्रभावात्किल धीमतः । यागाद्रथो ध्वजश्चैव प्रादुर्भवति मायया ।।३२।। इति भविष्योत्तरपुराणे उत्तरपर्वणि ५८ अ । 'तस्य बाहुसहस्रेण क्षोभ्यमाणे महोदधौ । भवन्ति लीना निश्चेष्टाः पातालस्था महासुराः ।। तदूरुक्षोभचकिता अमृतोत्पादशङ्किताः । नता निश्चलमूर्धानो भवन्ति च महोरगाः ।।' इति पाद्मे.सृष्टि.१२.१२२-१२३ ।।

**पूरोर्वंशे तु [1]भरतश्चक्रवर्ती हरिप्रियः ।**
**तद्वंशजः [2]कुरुर्नाम प्रतीपोऽभूत् तदन्वये ॥४॥**

**वरदराजीया–** पुरोः शर्मिष्ठाकनिष्ठपुत्रस्य वंशे भरतः दुष्यन्तपुत्रः । सोऽपि कार्तवीर्यार्जुनतुल्य इत्याह– **चक्रवर्ती इति** ।। तत्सम्भावयति– **हरिप्रिय इति** ।। तद्वंशजः तस्य भरतस्य वंशे जातः कुरुर्नाम राजा । तदन्वये तस्य कुरोरन्वये वंशे प्रतीपो नामाभूत् जातः ।।४।।

**जनार्दनीया–** अथ पुरुवंशमाह– **पुरोरिति** ।। तस्य भरतस्य वंशजः । तस्य कुरोः अन्वये वंशे । प्रतीपो राजा ।।४।।

**भावचन्द्रिका–** इदं भारते 'अशरीरवाचा एनं भरस्व दुष्यन्त' इत्युक्तवात् दौष्यन्तो भरतनामा ।।४।।

**चट्टी–** अथ शर्मिष्ठाकनिष्ठपुत्रस्य पूरोर्वंशमाह– **पूरोरिति** ।। पूरोः वंशे हरिप्रियः चक्रवर्ती भरतः पुत्रो बभूव । तस्य भरतस्य वंशजः कुरुर्नाम राजा । तदन्वये तस्य कुरोरन्वये वंशे प्रतीपो नामाभूत् ।।४।।

**प्रतीपस्याभवन् पुत्रास्त्रयस्त्रेताग्निवर्चसः ।**
**देवापिरथ बाह्लीको गुणज्येष्ठश्च शन्तनुः ॥५॥**

**व्यासतीर्थीया–** आहवनीयगार्हपत्यान्वाहार्यपचनानामिवेति । शन्तनुः ज्येष्ठ इति क्वचिदुक्तिरत उक्तम्– **गुणज्येष्ठ इति** ।।५-६।।

**वेदाङ्गतीर्थीया–** शन्तनुर्ज्येष्ठ इति क्वचिदुक्तिः । तदभिप्रायमाह– **गुणज्येष्ठ इति** ।।५-९।।

**वरदराजीया–** तस्य प्रतीपस्य । कथंभूताः पुत्राः? त्रेताग्निवर्चसः आहवनीयगार्हपत्यान्वाहार्यपचनेति नामत्रयोपेताग्नित्रयकान्तयः । त्रीन् पुत्रान् दर्शयति– **देवापिरिति** ।। अथेत्यनेन निर्देशक्रमेणैव तेषामुत्पत्तिरिति दर्शयति । क्वचित् शन्तनोर्ज्येष्ठत्वोक्तिः गुणज्येष्ठत्वापेक्षया घटत इत्याह– **गुणज्येष्ठ इति** ।।५।।

---

१. 'नित्यकालं वध्यमाना दैतेया राक्षसैस्सह । कुमारस्य भयादेव नैव जग्मुस्तदाश्रमम् ।। अस्त्वयं सर्वदमनः सर्वं हि दमयत्यसौ । स सर्वदमनो नाम कुमारः समपद्यत ।। शास्त्राणि सर्ववेदाश्च द्वादशाब्दस्य चाभवन् ।।' इत्यादिवाक्यैः भरतमाहात्म्यमवगम्यते ।

२. संवरणस्य सूर्यकन्यायां तपत्यां जातः कुरुः । तदुक्तम्– '...संवरणस्ततः । तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः।।' इति भागवते.९.१९.४

**अनन्तभट्टीया–** त्रेताग्निवर्चसः आहवनीयगार्हपत्यअन्वाहार्यपचननामकाग्निकान्तयः । शन्तनुः ज्येष्ठपुत्र इति क्वचिदुक्तः । अत आह– **गुणज्येष्ठ इति** ।।५।।

**जनार्दनीया–** त्रेताग्नीनां आहवनीयगार्हपत्यदक्षिणाग्नीनां वर्च इव वर्चः तेजः कान्तिः येषां ते तथा । 'तेजः पुरीषयोः वर्चः' इत्यमरः । 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः । अग्नित्रयमिदं त्रेता...।।' इत्यमरः । तेषां नामानि उत्पत्तिक्रमं चाह– **देवापिरिति** ।। देवापिः ज्येष्ठः अथ देवाप्यनन्तरं बाह्लीकश्चानन्तरं शन्तनुः । कथम्भूतः शन्तनुः ? गुणज्येष्ठः देवापिबाह्लीकाभ्यां ज्ञानभक्त्यादिगुणैः उत्तमः । न तु वयसा । 'गुणज्येष्ठः' इत्यनेन शन्तनुर्ज्येष्ठ इति ग्रन्थान्तरविरोधः परिहृतः ।।५।।

**भावचन्द्रिका–** 'प्रतीपस्तु खलु शैब्यामुपयेमे सुनन्दां नाम । तस्यां त्रीन् पुत्रानुत्पादयामास । देवापिं शन्तनुं बाह्लीकञ्च' इत्यत्र [६३.४७] कनिष्ठस्य शन्तनोः कथं मध्ये प्रवेश इत्यतः बाह्लीकाद्गुणज्येष्ठ इत्याह ।।५।।

**चट्टी–** प्रतीपस्य त्रेताग्नीनां आहवनीयगार्हपत्यदक्षिणाग्नीनां वर्च इव वर्चः कान्तिर्येषां ते तथा । 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः । अग्नित्रयमिदं त्रेता...।।' इत्यमरः । त्रयः पुत्राः अभवन् । तेषां नामान्युत्पत्तिक्रमं चाह– **देवापिरिति** ।। देवापिः ज्येष्ठः अथानन्तरं बाह्लीकः अनन्तरं देवापिबाह्लीकाभ्यां भक्त्यादिगुणैः ज्येष्ठः उत्तमः शन्तनुश्च । अनेन शन्तनुः ज्येष्ठ इति ग्रन्थान्तरविरोधः परिहृतः ।।५।।

**त्वग्दोषयुक्तो [१]देवापिर्जगाम तपसे वनम् ।**
**विष्णोः प्रसादात् स कृते युगे राजा भविष्यति ।।६।।**

---

१. 'देवापिः पौरवो राजा पुरुश्चेक्ष्वाकुवंशजः । महायोगबलोपेतौ कलापग्रामसंश्रितौ ।। कृते युगे त्विहागम्य क्षत्रप्रावर्त्तकौ हि तौ । भविष्यतो मनोर्वंशबीजभूतौ व्यवस्थितौ ।।' इति विष्णुपुराणे । ४.२४.११८-११९।

देवपिरभवत् श्रेष्ठो बाह्लीकस्तदनन्तरम् । तृतीयः शन्तनुस्तात धृतिमान् मे पितामहः ।। देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः । धार्मिकः सत्यवादी च पितुः शुश्रूषणे रतः ।। पौरजानपदानां च संमतः साधुसत्कृतः । सर्वेषां बालवृद्धानां देवापिर्हृदयङ्गमः ।। वदान्यः सत्यसन्धश्च सर्वभूतहिते रतः । वर्तमानः पितुः शास्त्रे ब्राह्मणानां तथैव च ।। बाह्लीकस्य प्रियो भ्राता शन्तनोश्च महात्मनः । सौभ्रात्रं च परं तेषां सहितानां महात्मनाम् ।। अथ कालस्य पर्याये वृद्धो नृपतिसत्तमः । संभारानभिषेकार्थं कारयामास शास्त्रतः ।। कारयामास सर्वाणि मङ्गलार्थाणि वै विभुः । तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह ।। सर्वे निवारयामासुर्देवापेरभिषेचनम् । स तच्छ्रुत्वा तु नृपतिरभिषेकनिवारणम् ।। अश्रुकण्ठोऽभवद्राजा पर्यशोचत चात्मजम् । एवं वदान्यो धर्मज्ञः सत्यसन्धश्च सोऽभवत् ।। प्रियः प्रजानामपि संस्त्वग्दोषेण प्रदूषितः । हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः ।। इति कृत्वा नृपश्रेष्ठं प्रत्यषेधन् द्विजर्षभाः । ततः प्रव्यथिताङ्गोऽसौ पुत्रशोकसमन्वितः ।।

**वादिराजीया–** अनुजत्वेऽपि स्वपितृवंशप्रवर्तकत्वाद्वरुणावतारत्वाच्च शन्तनुर्गुणज्येष्ठ इति भावः ।।

**वरदराजीया–** तत्र देवापेः तदानीं वंशो नास्तीत्याह– **त्वग्दोषयुक्त इति** ।। तपसः फलमाह– **विष्णोरिति** ।। सः देवापिः ।।६।।

**जनार्दनीया–** तेषां प्रवृत्तिमाह– **त्वगिति** ।। त्वग्दोषेण कुष्ठेन युक्तः ।।६।।

**चट्टी–** तेषां प्रवृत्तिमाह– **त्वगिति** ।। त्वग्दोषयुक्तो देवापिः तपसे वनं जगाम । सः देवापिः विष्णोः प्रसादाद् कृते युगे राजा भविष्यति ।।६।।

**पुत्रिकापुत्रतां यातो [1]बाह्लीको राजसत्तमः ।**
**हिरण्यकशिपोः पुत्रः प्रह्लादो [2]भगवत्प्रियः ।।७।।**

**व्यासतीर्थीया–** बाह्लीकः पूर्वं क इति जिज्ञासायामाह– **हिरण्यकेति** ।।७-११।।

**वादिराजीया–** पुत्रिकापुत्रतां यात इत्यत्र पुत्रिकाया पुत्र एव मम पुत्र इति सङ्केतं कृत्वा या कन्या दीयते तत्पुत्रः पुत्रिकापुत्रः । योगरूढोऽयं शब्दः । तस्य भावः पुत्रिकापुत्रता । बाह्लीकाधिपतिना राज्ञा प्रतीपायैवं सङ्केतं कृत्वा दत्ता । तादृशपुत्रिकायाः पुत्रोऽयं बाह्लीक इति हेतोः बाह्लीकेष्वेव नृपोऽभवत् । न तु स्वपितुः प्रतीपस्य राज्ये इति भावः ।।७-१०।।

**मधुसूदनीया–** ।। **पुत्रिकामिति** ।। पुत्रिकापुत्रत्वलक्षणमुच्यते । 'अपुत्रेण मया कन्या दीयते तव भो वर । यस्यां तु जायते पुत्रः स मे पुत्रो भविष्यति ।।' इति भारते । 'वरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तम । जायमानेन येनेयं अभवद्दारिता मही ।।' इति सभापर्वणि [६७.८] ।।७।।

---

.... ममार तं मृतं दृष्ट्वा देवापिः संश्रितो वनम् ।। उद्योगपर्वणि.१४९.१६-२६ । देवापिः शन्तनुस्तस्य बाह्लीकः इति चात्मजाः । पितृराज्यं समुत्सृज्य देवापिस्तु वनं गतः ।। अभवच्छन्तनू राजा प्राङ् महाभिषजसञ्ज्ञितः । यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ।। शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः । तथा तत्रैव- देवापिर्योगमास्थाय कलापग्राममास्थितः । सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ।। भागवते.९.१९.१२-१७ । किञ्च देवापेः कथा निरुक्तौ [२.१०] किञ्चिद् व्यत्यासेन निरुच्यते । तथाहि- देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शन्तनुः कनीयानभिषेचयांचक्रे । देवापिस्तपः प्रतिपेदे । इति ।। यथा देवापिः कलौ नष्टं चन्द्रवंशं कृतादौ प्रवर्तयति तथा सूर्यवंशीयः मरुद्राजोऽपि सूर्यवंशं प्रवर्तयति । सोऽपि कलापग्रामे वर्तते इति भागवते ९.१०.६ 'सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुत् सुतः । योऽसावास्ते योगसिद्धः कलापग्राममास्थितः । कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ।। इति ।

१. प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः ।। आदिपर्वणि ६८-३१

२. 'भगवत्परः' इति चट्टीपाठः ।

**वरदराजीया–** बाह्लिकः पुत्रिकापुत्रतां यातः 'अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति' इति न्यायेन मातामहपुत्रतां यात इति यावत् । राजसत्तम इत्यनेन इतरराजापेक्षया महान् विशेषोऽस्तीति सूचितम् । स कुत इत्यत आह– **हिरण्येति** ।। वाह्लीकस्य प्रह्लादत्वायुक्तं राजसत्तमत्वमिति भावः ।।७।।

**ताम्रपर्णीया–** ।। **पुत्रिकापुत्रतामिति** ।। 'अस्यां यो जायते पुत्रः सः मे पुत्रो भविष्यति' इति न्यायविषयत्वं यात इत्यर्थः ।।७-१८।।

**जनार्दनीया–** पुत्रिकापुत्रतां मातामहपुत्रत्वं यातः । पुत्रिकापुत्रत्वलक्षणं अन्यत्रोक्तम्– 'अपुत्रेण मया कन्या दीयते तव भो वर । एतस्यां जायते पुत्रः स मे पुत्रो भविष्यति ।।' इति । सः पूर्वं क इत्यत आह– **हिरण्यकशिपोरिति** ।। प्रह्लाद इत्यर्थः ।।७।।

**चट्टी–** राजसत्तमो राजश्रेष्ठः वाह्लीकः पुत्रिकापुत्रतां मातामहपुत्रत्वं यातः । पुत्रिकापुत्रलक्षणम्– 'अपुत्रेण मया कन्या दीयते भव भो वर । एतस्यां जायते पुत्रः स मे पुत्रो भविष्यति ।।' इति भारते । सः पूर्वं क इत्यत आह– **हिरण्यकशिपोरिति** ।। हिरण्यकशिपोः पुत्रः । भगवान् परो यस्य सः भगवत्परः । प्रह्लादः पूर्वमिति शेषः ।।७।।

**वायुना च समाविष्टो महाबलसमन्वितः ।**
**येनैव जायमानेन तरसा भूर्विदारिता ।।८।।**

**वरदराजीया–** अन्योऽपि विशेषोऽस्तीत्याह– **वायुनेति** ।। तत्फलमाह– **महाबलेति** ।। तस्य ज्ञापकमाह– **येनेति** ।। जायमानेन निमित्तेन तरसा वेगेन ।।८।।

**जनार्दनीया–** वाह्लीकस्य मूलस्वरूपं उक्त्वा तत्सामर्थ्यं चाह– **वायुनेति** ।। यतः वायुना समाविष्टः अत एव महाबलः । महाबलत्वं दर्शयति– **येनेति** ।। जायमानेन येनैव वाह्लीकेनैव तरसा बलेन । 'तरसी बलरंहसि' इत्यमरः । उक्तश्च सभापर्वणि– 'वरदं स्तुहि वाह्लीकमिमं पार्थिवसत्तमम् । जायमानेन येनेयमभवद्दारिता मही ।।'[६७.८] ।।८।।

**चट्टी–** वाह्लीकस्य पूर्वरूपमुक्त्वा तत्सामर्थ्यमाह– **वायुनेति** ।। यतो वायुना समाविष्टः अत एव महाबलसमन्वितः । महाबलत्वं दर्शयति– **येनेति** ।। जायमानेन येनैव वाह्लीकेनैव तरसा वेगेन भूर्विदारिता । तच्चोक्तम्– 'वरदं स्तुहि वाह्लीकमिमं पार्थिवसत्तम । जायमानेन येनैव अभवद्दारिता मही ।।' इति सभापर्वणि ।।८।।

**भावचन्द्रिका–** येन बाह्लीकेन । 'वरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तमम् । जायमानेन येनेयं तरसा भूर्विदारिता ।।'[२.६७.८.] इति भीष्मं प्रति शिशुपालवचनात् ।।८।।

**भूभारक्षपणे विष्णोरङ्गतामाप्तुमेव सः ।**
**प्रतीपपुत्रतामाप्य [१]बाह्लीकेष्वभवत् पतिः ।**
**रुद्रेषु पत्रतापाख्यः सोमदत्तोऽस्य चाऽत्मजः ।।९।।**

**वेदाङ्गतीर्थीया–** अस्य बाह्लीकस्य सोमदत्तः आत्मजः । स पूर्वं रुद्रेषु पत्रतापाख्यः ।।९।।

**वरदराजीया–** प्रह्लादः किमर्थमत्र जात इत्यत आह– **भूभारेति** ।। भूमेर्भारस्य क्षपणे संहरणे कर्तव्ये प्रतीपपुत्रतां प्राप्य बाह्लीकेषु राजा अभवदित्यर्थः । मातामहाय दत्तत्वात् दत्तदेशेषु राजाभवदित्यर्थः । अस्य बाह्लीकस्य सोमदत्तः आत्मजो जातः । स पूर्वं क इत्यत आह– **रुद्रेष्विति** ।। रुद्रेषु मध्ये पत्रतापनामा रुद्रः पूर्वमित्यर्थः ।।९।।

**अनन्तभट्टीया–** अस्य बाह्लीकस्य आत्मजः सोमदत्तः पत्रतापाख्यो रुद्रः ।।९।।

**जनार्दनीया–** प्रह्लादः किं कर्तुं जात इत्यत आह– **भूभारेति** ।। सः प्रह्लादः । भुवः भाररूपदैत्य-समूहस्य क्षपणे निरसनकर्मणि । विष्णोः श्रीकृष्णस्य अङ्गतां सहायत्वं प्राप्तुं एव प्रतीपस्य पुत्रतां प्राप्य बाह्लीकेषु विषयेषु पतिः राजा अभवत् । मातामहपुत्रत्वात् इति शेषः । अस्य बाह्लीकस्य आत्मजः सोमदत्तः । सः पूर्वं रुद्रेषु मध्ये पत्रतापाख्यरुद्रः ।।९।।

**चट्टी–** प्रह्लादः किमर्थमत्र जात इत्यत आह– **भूभारेति** ।। सः प्रह्लादः । भुवो भारस्य भाररूपदैत्य-समूहस्य क्षपणे निरसनकर्मणि विष्णोः श्रीकृष्णस्य अङ्गतां सहायत्वं प्राप्तुमेव प्रतीपस्य पुत्रतां प्राप्य बाह्लीकेषु मातामहाय दत्तत्वात् तद्देशेषु पतिः राजा अभवत् । रुद्रेषु मध्ये पत्रतापाख्यरुद्रः सोमदत्तनामा सन् अस्य बाह्लीकस्य चात्मजो बभूवेति शेषः ।।९।।

**अजैकपादहिर्बुध्निर्विरूपाक्ष इति त्रयः ।**
**रुद्राणां सोमदत्तस्य बभूवुः प्रथिताः सुताः ।**
**विष्णोरेवाङ्गतामाप्तुं [२]भूरिभूरिश्रवाः शलः ।।१०।।**

१. 'बाह्लीको मातुलकुलं त्यक्त्वा राज्यं समाश्रितः । पितृभ्रातॄन् परित्यज्य प्राप्तवान् परमर्धिमत् ।। बाह्लीकेन त्वनुज्ञातः शन्तनुर्लोकविश्रुतः । पितर्युपरते राजन् राजा राज्यमकारयत्' ।। इति उद्योगपर्वणि.१४९.२७-२८ ।

२. 'बाह्लिकस्य सुतश्चैव सोमदत्तो महायशाः । जज्ञिरे सोमदत्तस्य भूरिर्भूरिश्रवाः शलः ।।' इति हरिवंशे. हरि.३२.१०८

**वेदाङ्गतीर्थीया–** रुद्राणां मध्ये अजैकपादादयस्त्रयो रुद्राः सोमदत्तस्य प्रथिताः आत्मजाः बभूवुरित्यन्वयः ।।१०-१४।।

**वादिराजीया–** रुद्राणां सोमदत्तस्येत्यत्र रुद्राणामिति निर्धारणे षष्ठी । रुद्राणां मध्ये अजैकपादहिर्बुध्निर्विरूपाक्ष इति त्रयः सोमदत्तसुता बभूवु इति योजना ।।१०।।

**वरदराजीया–** सोमदत्तस्य त्रयः प्रथिताः प्रसिद्धाः सुता बभूवुः । ते त्रयः पूर्वं क इत्यत आह– **अजैकपादिति** ।। रुद्राणां मध्ये इति त्रयो रुद्रा इत्यर्थः । त्रयो रुद्राः किमर्थं उत्पन्ना इत्यत आह– **विष्णोरिति** ।। भूभारक्षपण इत्यनुवर्तते । आप्तुमेवेति सम्बन्धः । तेषां नामधेयान्याह– **भूरिरिति** ।।१०।।

**अनन्तभट्टीया–** रुद्राणां मध्ये अजैकपादहिर्बुध्निविरूपाक्ष इति त्रयः सोमदत्तस्य सुता बभूवुः ।।१०।।

**जनार्दनीया–** रुद्राणां मध्ये अजैकपादादय इति त्रयो रुद्राः सोमदत्तस्य प्रथिताः प्रसिद्धाः भूर्यादयः सुताः बभूवुः । किं कर्तुं इत्याह– **विष्णोरिति** ।।१०।।

**चट्टी–** रुद्राणां मध्ये अजैकपादहिर्बुध्निर्विरूपाक्ष इति त्रयः विष्णोरङ्गतां भूभारक्षपणे सहायत्वमाप्तुमेव भूरिः भूरिश्रवाः शल इति नामवन्तः सोमदत्तस्य प्रथिताः प्रसिद्धाः सुता बभूवुः ।।१०।।

**शिवादिसर्वरुद्राणामावेशाद् वरतस्तथा ।**
**भूरिश्रवा अतिबलस्तत्राऽसीत् परमास्त्रवित् ।।११।।**

**वरदराजीया–** ननु त्रयाणां रुद्रत्वाविशेषे तेषु भूरिश्रवस एव भारतयुद्धे अतिबलत्वं कथं श्रूयत इत्यत आह– **शिवादीति** ।। स्वातिरिक्तशिवादिसर्वरुद्राणां आवेशात् तथा वरतो वरेण । शिवस्येति शेषः । तत्र तेषु मध्ये अतिवलो जातः । परमास्त्रविज्जातः । रुद्रत्वाविशेषेऽपि अन्यावेशादिनिमित्तं अतिवलत्वं भूरिश्रवसो जातमिति भावः ।।११।।

**जनार्दनीया–** भूर्यादयः त्रयः यद्यपि रुद्राः तथापि भूरिश्रवसि विशेषं आह– **शिवादीति** ।। तत्र त्रिषु मध्ये ।।११।।

**चट्टी–** ननु त्रयाणां रुद्रत्वाविशेषे तेषु भूरिश्रवसः एव भारतयुद्धे महाबलत्वं कथं श्रूयते इत्यत आह– **शिवादीति** ।। तत्र तेषु पुत्रेषु मध्ये भूरिश्रवाः शिवादिसर्वरुद्राणां आवेशात् तथा वरतः वरेणातिबलः आसीत् । परमास्त्रविच्चासीत् ।।११।।

**तदर्थं हि तपश्चीर्णं सोमदत्तेन शम्भवे ।**
**दत्तो वरश्च तेनास्य त्वत्प्रतीपाभिभूतिकृत् ।**
**बलवीर्यगुणोपेतो नाम्ना भूरिश्रवाः सुतः ॥१२॥**

**व्यासतीर्थीया–** भूरिश्रवसः शम्भुवरतोऽतिबलवत्त्वं विशदयन्नाह– **तदर्थमिति** ॥ तेनातिबली जातः ॥१२-१३॥

**वादिराजीया–** वरतस्तथेत्यस्य कस्य तपसा कस्माद्वर इत्यतस्तात्पर्यमाह– **तदर्थमिति** ॥ त्वत्प्रतीपाभिभूतिकृदित्यस्य तव ये प्रतीपाः वैरिणः तेषामभिभूतिः पराभवः तस्याः कर्ता इत्यर्थः ॥१२-१३॥

**मधुसूदनीया–** ॥ **त्वत्प्रतीपाभिभूतिकृदिति** ॥ त्वत्प्रतीपस्य त्वद्विरोधिनः शिनेस्तद्वंशजस्य चाभिभूतिकृत् पराभवकृदित्यर्थः । नतु तत्प्रतीपानां तद्विरोधिनां सर्वेषां तिरस्कारकृदित्यर्थः । तथात्वे 'ससोमदत्तः सौमदत्तिर्विराटः पाञ्चालराजश्च जरासुतस्य । भयात् कृष्णं शरवर्षैरवर्षन् कारागृहे वासिता मागधेन ॥' इति षोडशाऽध्याये सोमदत्ततत्सुतभूरिश्रवसोः जरासन्धात् पराभवोक्तिविरोधात् । नच जरासन्धं विना तद्विरोधिनां सर्वेषां तिरस्कारकृदिति वाच्यम् । विनिगमकाभावात् । न चाऽस्मदुक्तार्थे मानाभावः । कर्णदुर्योधनादिभिरजेयस्य सात्यकेर्भूरिश्रवसः सकाशात् कथं पराजयोऽभूदिति धृतराष्ट्रेन पृष्टेन सञ्जयेन भूरिश्रवसः शिनितत्पुत्रपौत्रपराभवार्थं रुद्रवरादुत्पन्नत्वेन तत्सकाशात् सात्यकेः पराजयोऽभूदित्युक्तत्वात् । तथाचोक्तम्–

'तदवस्थः कृतस्तेन सोमदत्तो[ऽथ मारिष]नरर्षभः । प्रसादयन् महादेवं अमर्षवशमास्थितः ॥
तस्य तुष्टो महादेवो वरदानां वरः प्रभुः । वरेण छन्दयामास स तु वव्रे वरं तदा ॥
भगवन् पुत्रमिच्छामि शिनेर्हन्तारमाहवे । मध्ये राजसहस्राणां पदा हन्याच्च संयुगे ॥
तस्य तद्वचनं श्रुत्वा सोऽवदत्तस्य पार्थिव । एवमस्त्विति देवेशः तत्रैवान्तरधीयत ॥
स तेन वरदानेन लब्धवान् भूरिदक्षिणाम् । अपातयच्च समरे सौमदत्तिश्शिनेस्सुतम् ॥'

इति द्रोणपर्वणि [१४४.१५-१९]। ननु रुद्रवरापेक्षया कृष्णवरस्योत्तमत्वेन कृष्णवरतस्सात्यकेः भूरिश्रवसः सकाशात् कथं पराजय इति सत्यम् । कृष्णेन भूरिश्रवसं विनैव अजेयत्ववरदानादुपपत्तेः । तत्र मानं तु उत्तरत्र वक्ष्यते ॥१२-१३॥

**वरदराजीया–** वरतस्तथेत्युक्तं विवृणोति– **तदर्थं हीत्यादिना** ॥ तदर्थं भूरिश्रवसोऽतिबलत्वार्थम् । तेन शम्भुना अस्य अस्मै सोमदत्ताय वरो दत्तश्च । किमिति तत्राह– **त्वदिति** ॥ तव शत्रूणां अभिभवकर्ता भविष्यति ॥१२॥

**अनन्तभट्टीया–** एतदर्थं स्वप्रतीपहन्तृपुत्रसिद्ध्यर्थं भविष्यतीति वरो दत्तः । तेन वरेण बली जातः ।।

**जनार्दनीया–** कुत इत्यत आह– **तदर्थमिति** ।। तदर्थं भूरिश्रवसोऽर्थे । तेन रुद्रेण अस्य सोमदत्तस्य वरो दत्तः । किमिति? तव प्रतीपस्य प्रतिपक्षिणो शिनेः, अभिभूतिं पराभवं करोति इति तथा ।।१२।।

**चट्टी–** वरतस्तथेत्युक्तं विवृणोति– **तदर्थं हीत्यादिना** ।। तदर्थं स्वप्रतीपहन्तृपुत्रसिद्ध्यर्थं सोमदत्तेन शम्भवे तपश्चीर्णम् । तेन शम्भुना अस्य अस्मै सोमदत्ताय वरो दत्तश्च । किमिति । तव प्रतीपानां प्रतिपक्षिणां अभिभूतिं पराभवं करोतीति तथा । बलवीर्यगुणोपेतो मया आविष्टः प्रविष्टः । यज्ञेषु शीलं स्वभावो यस्य स तथा । नाम्ना भूरिश्रवाः सुतो भविष्यति स्मेति वरो दत्त इति पूर्वेण सम्बन्धः । तेन वरादिकारणेन सोमदत्तसुतो भूरिश्रवाः बली जातः ।।१२-१३।।

**भविष्यति मयाऽऽविष्टो यज्ञशील इति स्म ह ।**
**तेन भूरिश्रवा जातः सोमदत्तसुतो बली ।।१३।।**

**वेदाङ्गतीर्थीया–** तेन रुद्रावेशादित्यादिना कारणेन । सोमदत्तसुतः बली जातः ।।१३।।

**वरदराजीया–** तदर्थं बलवीर्यगुणोपेतः तदर्थं च मयाविष्टो भविष्यति यज्ञशीलश्च भविष्यति इति स्म वरो दत्त इति पूर्वेण सम्बन्धः । भूरिश्रवसोऽतिवलत्वे कारणमुक्त्वा उपसंहरति– **तेनेति** ।। सोमदत्तसुतो भूरिश्रवास्तेन वरादिनिमित्तेन बली जातः ।।१३।।

**जनार्दनीया–** मया आविष्टः प्रविष्टः । यज्ञेषु शीलं स्वभावो यस्य स तथा । नाम्ना भूरिश्रवाः सुतो भविष्यति । 'स्म' इति 'वरो दत्त' इति पूर्वेण सम्बन्धः । तेन वरादिकारणेन सोमदत्तसुतो भूरिश्रवाः बली जातः ।।१३।।

**पूर्वोदधेस्तीरगतेऽब्जसम्भवे[1] गङ्गायुतः पर्वणि घूर्णितोऽब्धिः ।**
**अवाक्षिपत् तस्य तनौ निजोदबिन्दुं शशापैनमथाऽब्जयोनिः ।।१४।।**

**व्यासतीर्थीया–** प्रतीपपुत्रः शन्तनुः पूर्वं क इति जिज्ञासायां तत्स्वरूपं तदुत्पत्तिप्रकारं च प्रदर्शयन्नाह– **पूर्वोदधेरिति** ।।१४-१९।।

---

१. इयं कथा हरिवंशे १.५३.१५-४०श्लोकपर्यन्तं द्रष्टव्या । पूर्वोदधेः तीरे ब्रह्मा कश्यपेन संवादं कुर्वन्नास इति हरिवंशे । 'समुद्रेऽहं पुरा पूर्वे वेलामासाद्य पश्चिमाम् । आसे सार्धं तनूजेन कश्यपेन महात्मना ।।' इति हरिवंशे.हरि.५१.१५ वसिष्ठेन संवादं कुर्वन्नासीत् इति महाभारते । अत्र ब्रह्मणा सह अवस्थितः अविवक्षितः । ब्रह्मणः तनौ सागरः स्वजलबिन्दून् चिक्षेप । तदेव प्रधानकारणं शापस्य, तच्च उभयत्र अविरोधेन निरूपितमस्ति ।

**वेदाङ्गतीर्थीया–** प्रतीपपुत्रः शन्तनुः पूर्वं क इति जिज्ञासायां तत्स्वरूपं उत्पत्तिप्रकारं प्रपञ्चयन्नाह– **पूर्वोदधेरित्यादिना** ।। गङ्गायुतः इत्यादि गङ्गासमुद्रसङ्गमप्रवेशसम्बन्ध्यभिप्रेतः ।।१४-१९।।

**सत्याभिनवीया–** पूर्वोदधेस्तीरगते इति श्लोके निजोदबिन्दुमित्यत्र गङ्गोदबिन्दुव्यावृत्त्यर्थं निजेत्युक्तम् । एतेन उदबिन्दुमित्यनेनैव पूर्णत्वात् 'निज' इत्येतत् व्यर्थमिति दूषणं परिहृतम् । स्वकीयलवणोद-बिन्दुमेवाक्षिपत् । न तु गङ्गासम्बन्धिमधुरोदबिन्दुमिति ज्ञापयितुं 'निजे'त्युक्तमिति स्वीकरणात् ।।१४।।

**मधुसूदनीया–** ।। **घूर्णित इति** ।। 'दशोत्तराणि पञ्चैव त्वङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ।।' इति विष्णुपुराणे [२.४.९१] ।।१४।।

**वरदराजीया–** एवं बाह्लीकवंशमुक्त्वा शन्तनोर्वंशं वक्तुमाह– **पूर्वोदधेरित्यादिना** ।। पूर्वस्यां दिशि विद्यमानस्योदधेः समुद्रस्य तीरं प्रति गते प्राप्ते सति । नित्यसापेक्षत्वात् समासः । पर्वणि अमावास्यायाम् । गङ्गायुत इत्यनेन गङ्गासागरसङ्गम इति सूचयति । घूर्णितः उच्चलितः अत एव अस्य अब्जसम्भवस्य तनौ देहे निजोदबिन्दून् स्वोदकबिन्दून् अवाक्षिपत् प्राक्षिपत् । अथ बिन्दुप्रक्षेपानन्तरं एनं अब्धिं शशाप ।।१४।।

**अनन्तभट्टीया–** शन्तनु... वक्तुमाह– **पूर्वेति** ।। पूर्वस्यां दिशि समुद्रः तस्य घूर्णितः उच्चलितः ।।१४।।

**जनार्दनीया–** पूर्वं शन्तनुः कः? किमर्थमुत्पन्नः? इत्याशङ्कायां तत्स्वरूपं उत्पत्तिकारणं च विविच्याह– **पूर्वोदधेरिति** ।। अब्जसम्भवे ब्रह्मणि पूर्वोदधेः पूर्वस्यां प्राच्यां दिशि विद्यमानस्योदधेः । 'पूर्वोऽन्यलिङ्गः प्रागाह' इत्यमरः । समुद्रस्य तीरं गते पश्चिमतीरं प्राप्ते सति । 'समुद्रेऽहं पुरा पूर्वे वेलामासाद्य पश्चिमाम्' इति हरिवंशेषु [हरिवंशपर्व.५३.१५]। पर्वणि पूर्णिमायाम् । 'उद्धूतैश्च महावातैः प्रवृद्धैश्च बलाहकैः । पर्वणा चेन्दुयुक्तेन त्रिभिः क्षुब्धोऽस्मि कारणैः ।।' इति हरिवंशे । [हरिवंशपर्व.५३.३२] गङ्गया युतः गङ्गासमुद्रसङ्गम इति भावः । घूर्णितः उच्चलितः तादृशोऽब्धिः तस्य ब्रह्मणः तनौ देहे निजोदबिन्दुं स्वजलबिन्दुं अवाक्षिपत् । अथ उदकक्षेपणानन्तरं एनमब्धिम् ।।१४।।

**चट्टी–** पूर्वं शन्तनुः किमर्थमुत्पन्न इत्याशङ्कायां तत्स्वरूपं उत्पत्तिप्रकारं च विविच्याह– **पूर्वोदधेरिति** ।। अब्जसम्भवे ब्रह्मणि पूर्वोदधेः पूर्वस्यां दिशि विद्यमानस्योदधेः समुद्रस्य तीरं गते तीरं प्राप्ते सति पर्वण्यमावास्यायां गङ्गया युतः । गङ्गासागरसङ्गम इत्यर्थः । घूर्णितः उच्चलितः अब्धिः तस्य ब्रह्मणः तनौ देहे निजोदबिन्दुं स्वजलबिन्दुं अवाक्षिपत् । अथ बिन्दुप्रक्षेपणानन्तरं अब्जयोनिः ब्रह्मा एनं अब्धिं शशाप । घूर्णित इत्यत्र 'दशोत्तराणि पञ्चैव त्वङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महाघन ।।' इति विष्णुपुराणे ।।१४।।

**महाभिषङ् नाम नरेश्वरस्त्वं भूत्वा पुनः शन्तनुनामधेयः ।**
**जनिष्यसे विष्णुपदी[१] तथैषा तत्रापि भार्या भवतो भविष्यति ॥१५॥**

**वादिराजीया–** विष्णुपदी तथैषेत्यत्र एषा विष्णुपदी गङ्गा मूलरूपेणैव । तत्रापि देवानां गर्हितमनुष्यजन्मन्यपि भवतो भार्या भविष्यति ॥१५॥

**मधुसूदनीया–** ॥ **महाभिषगिति** ॥ मम त्वया अभिषेकः [महाभिषेकः इति क्वचित्] कृत इत्युक्तत्वात् महाभिषगिति राजाऽभवत् । शान्तो भवेति च ब्रह्मणोक्तत्वात् शन्तनुश्चाऽऽसेति भावः ॥

**वरदराजीया–** शापप्रकारमाह– **महाभिषगिति** ॥ प्रसिद्धो नरेश्वरो नृपतिः राजा भूत्वा पुनः तद्देहपातानन्तरं शन्तनुनामधेयो भविष्यसि । तथा एषा विष्णुपदी गङ्गा तत्रापि देहद्वये भवतः तव भार्या भविष्यति ॥१५॥

**जनार्दनीया–** किमिति? त्वं महाभिषगिति नाम प्रसिद्धः नरेश्वरो भूत्वा, पुनः महाभिषगाख्यदेह-वियोगानन्तरं शन्तनुनामधेयः सन् जनिष्यसे उत्पत्स्यसे । एषा विष्णुपदी गङ्गा तत्र शन्तनुजन्मनि तथाऽपि देवतादेहेनापि भवतस्तव भार्या भविष्याति ॥१५॥

**भारतश्री–** ॥१-१४॥ ...तत्रापि द्वितीयजन्मनीति ग्राह्यम् ॥१५॥

**चट्टी–** किमिति शशापेत्यत आह– **महाभिषगिति** ॥ मम त्वया महाभिषेकः कृत इति हेतोः महाभिषगिति नाम प्रसिद्धो नरेश्वरो राजा भूत्वा पुनस्तद्देहपातानन्तरं शन्तनुनामधेयस्सन् जनिष्यसे । तथा एषा विष्णुपदी गङ्गा तत्रापि शन्तनुजन्मन्यपि भवतस्तव भार्या भविष्यति ॥१५॥

**शान्तो भवेत्येव मयोदितस्त्वं तनुत्वमाप्नोषि ततश्च शन्तनुः ।**
**इतीरितः सोऽथ नृपो बभूव महाभिषङ् नाम हरेः पदाश्रयः ॥१६॥**

**वादिराजीया–** ततश्च शन्तनुरित्यत्र निरुक्ते 'द्वौ चापरौ वर्णविकारनाशौ' इति वर्णविकारनाशयोरुक्त-त्वात् आकारस्य अकाराख्यवर्णविकारे सति तकारनाशे च सति शान्ततनुरित्यर्थे शन्तनुरिति पदम् । शान्तो भवेति ब्रह्मणोक्ते आटोपशान्तिं प्राप्य तनुत्वमल्पत्वं च प्राप्तस्य मूलरूपसमुद्रस्य नाम भवतु । ततश्च शन्तनुरिति शन्तनुचक्रवर्तिनः कथं नाम? मूलरूपस्य नाम अवतारेऽपि भवति चेत् महाभिषगाख्यप्रथमरूपे कुतो नाभूदिति चेत् सत्यं द्वितीयतनौ मानुषत्वानुभवसमये तस्यां तनौ मय्याचरितापराधस्य शान्तत्वात् सापि तनुः शन्तनुरित्युच्यत इति ब्रह्मणो भावसद्भावात् ॥१६॥

---

१. 'इयमप्यायतापाङ्गी गङ्गा सर्वाङ्गशोभना । रूपिणी च सरिच्छ्रेष्ठा तत्र त्वामुपयास्यति ॥' इति हरिवंशे.हरि-५३-२७

**वरदराजीया–** ननु द्वितीयदेहे शन्तनुरिति किमर्थं नामेत्याह– **शान्त इति** ।। यतो मया शान्तो भवेत्युक्तः अत एव त्वं शन्तनुत्वमाप्तः शान्तश्चेति द्रष्टव्यम् । ततश्च तस्मादेव शन्तनुः जनिष्यसे इति पूर्वेण सम्बन्धः । इति उक्तप्रकारेण ईरितः शप्तः । अथ शापानन्तरम् ।।१६।।

**अनन्तभट्टीया–** तनुत्वं लघुत्वम् ।।१६।।

**जनार्दनीया–** ननु जलाभिषेचनात् महाभिषगिति नाम भवतु । जन्मान्तरे शन्तनुरिति नाम कुतः? इत्यत आह– **शान्त इति** ।। 'शान्तो भव' इत्येव अनेन प्रकारेण मया उदितः त्वं तनुत्वं सङ्क्षेपत्वम् । शान्तत्वमित्यर्थः । आप्तोऽसि यतः ततः शन्तनुश्च शन्तनुनामा सन् । जनिष्यस इति पूर्वेणान्वयः । अथ शापानन्तरं समुद्रः ।।१६।।

**ताम्रपर्णीया–** ।। **ततश्च शन्तनुरिति** ।। 'शान्तोऽस्त्विति मयोक्तस्त्वं यच्चापि तनुतां गतः' [हरिवंशपर्व.५३.२६] इति हरिवंशवचनादिति भावः । 'यं यं कराभ्यां स्पृशति जीर्णः स सुखमश्नुते । पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुः' इति भारतोक्तिनिमित्तात् [आदि.६३.४९] 'शान्तस्य जज्ञे सन्तानः तस्मात् आसीत् स शन्तनुः' [आदि.१०३.२२] इति भारतोक्तनिमित्तान्तराच्चेति चार्थः ।।१६।।

**अतिविशद–** तनुत्वमाप्नोषि ततश्च शन्तनुरित्यत्र शन्तनुत्वेन जनने न केवलं तनुत्वप्राप्तिरेव कारणम् । किन्तु 'यं यं कराभ्यां स्पृशति' इति भारतोक्तमपि ज्ञातव्यमित्यभिप्रेत्य ततश्च इति चशब्दः । तथैव नवमे [१९.१४] 'यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः । शान्तिमेति तथैवाग्र्यां कर्मणा तेन शन्तनुः ।। इति ।।१६।।

**भारतश्री– ततश्चेत्यनेन** 'यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते । पुनर्युवा च भवति तस्मात् त्वां शन्तनुं विदुः ।।' इति भारतात् तन्निरुक्तिं समुच्चिनोति ।।१६।।

**भावचन्द्रिका–** 'यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते । पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुः ।।' [६३.४९] इति वचनात् 'शान्तस्य जज्ञे सन्तानः तस्मादासीत् स शन्तनुः' इति [आदि.१०३.२२] वचनात्– **ततश्चेत्याह** ।। शान्तस्य वृद्धस्य । 'महाभिषक्तु राजर्षिरशङ्को दृष्टवान्नदीम्' [आदि.१०२.५] इति वचनात् । तदा न वरुणत्वं प्राप ।।१६-२०।।

**चट्टी–** शन्तनुरिति नाम कुत इत्यत आह– **शान्त इति** ।। शान्तो भवेत्येवमनेन प्रकारेण मयोदितस्त्वं तनुत्वं शान्तत्वमित्यर्थः । आप्तोऽसि यतः ततश्च तस्मादेव शन्तनुनामा सन् जनिष्यसीति पूर्वेण सम्बन्धः । शन्तनुरित्यत्र निरुक्तत्वात् 'वर्णागमो वर्णविकारनाशौ' इति वर्णविकारयोरुक्तत्वात् आकारस्याकाराख्यवर्णविकारे तकारनाशे सति शान्ततनुरित्यर्थे शन्तनुरिति । इत्युक्तप्रकारेणेरितः शप्तः समुद्रः अथ शापानन्तरं महाभिषगिति प्रसिद्धः हरेः पदाश्रयो नृपो बभूव ।।१६।।

**स तत्र भुक्त्वा चिरकालमुर्वीं तनुं विहायाऽऽप सदो विधातुः ।**
**तत्राऽपि तिष्ठन् सुरवृन्दसन्निधौ ददर्श गङ्गां श्लथिताम्बरां स्वकाम् ।।१७।।**

**वरदराजीया–** सः महाभिषक् तत्र जन्मनि चिरकालं उर्वीं भुक्त्वा, तनुं देहं विहाय त्यक्त्वा, विधातुः ब्रह्मणः सदः सभां आप प्राप्तवान् । तत्र सदसि सुराणां देवानां वृन्दस्य समूहस्य सन्निधौ समीपे तिष्ठन्नपि श्लथिताम्बरां श्लथितं किञ्चिचलितं अम्बरं वस्त्रं यस्या सा ताम् । स्वकां भार्यां गङ्गां ददर्श ।।१७।।

**जनार्दनीया–** सः महाभिषक् तत्र तस्मिन् जन्मनि उर्वीं भुक्त्वा पालयित्वा सदः सभामाप । तत्रापि सभायाम् । श्लथितं अम्बरं वस्त्रं यस्याः सा ताम् । स्वकां स्वभार्यां गङ्गां ददर्श ।।१७।।

**भारतश्री–** श्लथिताम्बराम् । वातेनेति शेषः ।।१७।।

**चट्टी–** सः महाभिषक् तत्र तस्मिन् जन्मनि चिरकालं बहुकालं उर्वीं भूमिं भुक्त्वा तनुं देहं विहाय त्यक्त्वा विधातुः ब्रह्मणः सदः सभां आप प्राप्तवान् । तत्र सदसि सुराणां देवानां वृन्दस्य समूहस्य सन्निधौ समीपे तिष्ठन् अपि । श्लथिमम्बरं वस्त्रं यस्याः सा तथा ताम् । स्वकां भार्यां गङ्गां ददर्श ।।

**अवाङ्मुखेषु[1] द्युसदस्सु [2]रागान्निरीक्षमाणं पुनरात्मसम्भवः ।**
**उवाच भूमौ नृपतिर्भवाऽऽशु शप्तो यथा त्वं हि पुरा मयैव ।।१८।।**

**वेदाङ्गतीर्थीया–** भूमौ नृपतिर्भवेति नेदं शापान्तरमित्याह– **शप्तो यथा त्वं हि पुरा मयेति** ।। इदानीन्तनापराधस्य पृथक् फलमनुक्त्वा 'शप्तो यथा' इति पुनः 'शन्तनुनामधेयो जनिष्यसे' इति प्रागुक्तमेव कथं फलत्वेनाप्यत इति चेन्न एतदपराधस्य पूर्वापराधविपाकजत्वेन अपराधान्तराभावात् ।।

**वादिराजीया–** नृपतिर्भवाश्विति वदता पूर्वाब्धौ ब्रह्मदत्तशापस्य मानुषजन्मद्वयं फलम् । रागेन गङ्गादर्शने सति स्वसभायां ब्रह्मदत्तशापस्य शन्तनुजन्मन्याशु भवनमेव फलमिति सूचितम् । अत एव 'तत्क्षणतो बभूव' इति उत्तरश्लोके प्रकटितम् ।।१८-२१।।

**वरदराजीया–** तत्र द्युसदस्सु ब्रह्मसदनस्यसभासु अवाङ्मुखेषु नग्नस्त्रीनिरीक्षणमनुचितमिति बुद्ध्या अधोमुखेषु सत्सु रागात् स्नेहातिशयात् स्वकां स्वभार्यां निरीक्षमाणं प्रति आत्मसम्भवो ब्रह्मा पुनरुवाच । किमिति । यथा त्वं मयैव पुरा शप्तः तथैव नृपतिः आशु कालक्षेपमन्तरेण भव । अनेनापराधेन पूर्वं दत्तः शापः शीघ्रमेव फलप्रदोऽस्त्विति भावः ।।१८।।

---

१. इयं कथा भारतगत आदिपर्वतः सङ्गृहीता [१०२अध्याय.१-९] ।

२. 'गङ्गां निरीक्षमाणं' इति जनार्दनीये पाठान्तरम् ।

**जनार्दनीया–** द्युसदस्सु देवेषु । अवाक् अधः कृतं मुखं येषां ते तथा तेषु सत्सु । 'न नग्नां स्त्रियमीक्षेत' इति वचनात् अवाङ्मुखेषु इति भावः । आत्मनः परमात्मनः सकाशात् सम्भवः उत्पत्तिर्यस्य ब्रह्मणः स तथा । ब्रह्मा गङ्गां निरीक्षमाणं वरुणं प्रति उवाच । पूर्वशापापेक्षया पुनरित्युक्तम् । 'रागान्निरीक्षमाणम्' इति पाठे रागात् स्नेहवशादित्यर्थः । किमिति ? पुरा निजोदबिन्दुप्रक्षेपकाले मयैव यथा पुनः शन्तनुनामधेयः जनिष्यसे इति शप्तो हि यस्मादाशु भूमौ नृपतिः शन्तनुनामधेयो राजा भव । इममेव अपराधं जानता ब्रह्मणा एतदर्थं पुरैव शप्त इति भावः ।।१८।।

**भारतश्री–** ।। **शप्तो यथा त्वं हि पुरा मयैवेति** ।। हि यस्मात् पुरैव मया शप्तः अत यथा पुरा शप्तस्तथैव नृपतिर्भवेति योजना । अत्र पूर्वदत्तशापस्यानुवादो वा दृढीकरणं वा बोद्धव्यम् ।।१८।।

**चट्टी–** द्युसदस्सु देवेषु अवागधः कृतं मुखं येषां ते तथा तेषु सत्सु 'न नग्नां स्त्रियमीक्षेत' इति वचनात् अवाङ्मुखेषु इति भावः । रागात् स्नेहात् स्वकां भार्यां निरीक्षमाणं वरुणं प्रति । आत्मसम्भवः आत्मनः परमात्मनः सकाशात् सम्भवः उत्पत्तिः यस्य ब्रह्मणः स तथा । ब्रह्मा पुनरुवाच । पूर्वशापापेक्षया पुनरित्युक्तम् । किमिति । यथा त्वं मयैव पुरा निजोदबिन्दुप्रक्षेपणकाले शप्तः तथैव भूमौ आशु अविलम्बेन नृपतिः शन्तुनामधेयो राजा भवेति । इममेवापराधं जानता ब्रह्मणा एतदर्थं पुरैव शप्त इति भावः ।।१८।।

**इतीरितस्तत्क्षणतः प्रतीपाद् बभूव नाम्ना नृपतिश्च[१] शन्तनुः ।**
**अवाप्य गङ्गां दयितां स्वकीयां तया मुमोदाऽब्दगणान् बहूंश्च ।।१९।।**

**वरदराजीया–** इतीरितो वरुणः तत्क्षणतः तदुत्तरक्षण एव नाम्ना शन्तनुः नृपतिर्बभूव । तत्रापि गङ्गां स्वकीयां दयितामाप्य तया गङ्गया बहून् अब्दगणान् वर्षपूगान् मुमोद हृष्टवानित्यर्थः ।।१९।।

**जनार्दनीया–** तत्क्षणतः शापोत्तरक्षणतः । तया गङ्गया ।।१९।।

**भावचन्द्रिका–** ।। **अवाप्येति** ।। गङ्गायुक्तत्वोक्त्या तस्यापि निमित्तत्वात् तत एव ब्रह्मणा 'तत्रापि' इत्यादिना शप्तत्वात् ।।१९।।

**चट्टी–** इतीरितः सः वरुणः तत्क्षणतस्तदुत्तरक्षण एव प्रतीपात् नाम्ना शन्तनुनृपतिः बभूव । तत्रापि स्वकीयां दयितां गङ्गामवाप्य तया गङ्गया बहूनब्दगणान् वर्षपूगान् मुमोद । हृष्टवानित्यर्थः ।।

---

१. 'नृपतिः सः' इति चट्टिपाठः ।

**अथाऽष्टमो वसुरासीद् द्युनामा वराङ्गिनाम्न्यस्य बभूव भार्या ।**
**बभूव तस्याश्च सखी नृपस्य सुविन्दनाम्नो दयिता सनाम्नी ॥२०॥**

**व्यासतीर्थीया–** नन्विदं शापान्तरमित्युक्तम् । शप्तो यथेति तस्योपयोगं दर्शयन् शन्तनोर्भीष्मोत्पत्तिप्रकारं दर्शयति– **अथाष्टम इत्यादिना** ॥२०-२१॥

**वेदाङ्गतीर्थीया–** शन्तनोर्गङ्गायां भीष्मोत्पत्तिं वक्ष्यन् तत्कारणं गङ्गागमनं प्रकारं चाह– **अथाष्टम इत्यादिना** ॥ सनाम्नी समाननाम्नी ॥२०-२३॥

**वादिराजीया–** 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इति वचनात् कथान्तरारम्भसूचनाय अथाष्टमो वसुरित्युक्तम् ॥२०-२३॥

**वरदराजीया–** अथ शन्तनोः गङ्गायां पुत्रोत्पत्तिप्रकारमाह– **अथाष्टम इत्यादिना** ॥ द्युरिति प्रतिपादकं नाम यस्यासौ तथा । अस्य द्युनाम्नो वसोर्वराङ्गिनाम्नी भार्या बभूव आसीत् । तस्या वराङ्गिनाम्न्याः सखी बभूव आसीत् । सा केत्यत आह– **नृपस्येति** ॥ सुविन्दनाम्नो नृपस्य दयिता सनाम्नी वराङ्गिनामसमाननामधेययुक्ता सापि वराङ्गिनाम्नीति यावत् । सखी बभूव अभूत् ॥२०॥

**अनन्तभट्टीया–** सनाम्नी वराङ्गी नामेत्यर्थः ॥२०॥

**जनार्दनीया–** अथ भीष्मोत्पत्तिं वक्तुं गङ्गागमनप्रकारं दर्शयति– **अथेत्यादिना** ॥ अथशब्दः कथान्तरद्योतकः । द्युनामा अष्टमो वसुः आसीत् । अस्य द्युनाम्नः वराङ्गिनाम्नी वराङ्गिनामवती । 'नञा निर्दिष्टमनित्यम्' [पा.सू.४.४.११] इत्यनेन 'मनः' [सि.कौ.४५९] इति ङीप् प्रतिषेधो न प्रवर्तते । भार्या बभूव । तस्याः वराङ्ग्याः सुविन्दनाम्नः नृपस्य सनाम्नी समाननामा । वराङ्गीति यावत् । दयिता सखी बभूव ॥२०॥

**ताम्रपर्णीया–** ॥ **अथाष्टमो वसुरासीत् द्युनामेति** ॥ विभावसुरिति तस्यैव नामान्तरमित्यविरोधः ॥२०-२१॥

**अतिविशद–** अथाष्टमो वसुरासीत् द्युनामा इत्यत्र द्युनामकवसुरित्युच्यते 'द्रोणः प्राणो ध्रुवोऽर्कोऽग्निः दोषो वसुर्विभावसुः' इति वसुनामप्रतिपादकवाक्ये द्युनाम्नो अदर्शनादिति चेत् विभावसोरेव द्युनामकत्वात् । नच प्रसिद्धनाम विहाय अप्रसिद्धनामकथनं निष्प्रयोजनमिति वाच्यम् । विभावसुरित्युक्तौ विशेषणभावस्य असौ विभावसुरिति प्रतीतिः स्यात् । सा तु प्रमाणबाधिता । सर्वेषु वसुषु अविद्यमानप्रभाया अस्मिन्नभावात् । किन्तु अतिनीचापेक्षया अतिप्रभावत्वेऽपि स्वोत्तमापेक्षया अश्वकर्णादिवत् रूढिरेव इति सूचनार्थमेवमुक्तम् । एतद्भार्याया वराङ्गिनामत्वे समाधानं द्रष्टव्यम् । एतेन 'यन्मूर्खप्रलपितं

पुराणादौ द्युनाम्नो वसोरश्रवणात् आनन्दतीर्थेन अष्टमो वसुरासीद्द्युनामा' इत्यादौ मिथ्येत्येवोक्तमिति निरस्तम् । विभावसोः द्युनामत्वोक्तेः ।।२०।।

**भावचन्द्रिका–** द्यौरिति नाम यस्य तस्येति विग्रहे विभक्तिलोपे दिवनामेति स्थिते पदान्तत्वेन दिव उदिति उकारादेशे द्युनामेति युक्तम् । 'एवं शप्तास्ततस्तेन मुनिना यामुनेन वै । अष्टौ समस्ता वसवो दिवो दोषेण सत्तम ।।' [आदि.१०६.३५] इति वाक्यात् अस्मादेव वरुणादेव यमुनायां वरुणाज्जातोऽयं वसिष्ठः ।।२०।।

**चट्टी–** शन्तनोः गङ्गायां भीष्मोत्पत्तिं वक्ष्यन् तत्कारणं गङ्गागमनप्रकारं चाह– **अथाष्टम इत्यादिना** ।। 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इति वचनात् कथान्तरारम्भसूचनाय अथशब्दः । द्युनामाष्टमो वसुरासीत् । अस्य द्युनाम्नो वराङ्गी नाम्नी भार्या बभूव । तस्याः वराङ्ग्याः सुविन्दनाम्नो नृपस्य नाम्नी समाननाम्नी वराङ्गीति यावत् । दयिता सखी बभूव ।।२०।।

**तस्या जरामृतिविध्वंसहेतो[१]र्वसिष्ठधेनुं स्वमृतं क्षरन्तीम् ।**
**जरापहां [२]नन्दिनिनामधेयां बद्धुं पतिं चोदयामास देवी ।।२१।।**

**वरदराजीया–** तस्याः सखिभूतायाः, जरायाः मृतेश्च विध्वंसहेतोः नाशार्थं, स्वमृतं शुद्धं अमृतं क्षरन्तीं वसिष्ठधेनुं बद्धुं तस्य गृहे बद्धुं बद्ध्वा आनेतुं वा देवी वसुभार्या पतिं द्युनामानं वसुं चोदयामास प्रेरितवती । किं सामर्थ्या? किं नामिका च सा धेनुरित्यत उक्तम्– **जरापहां नन्दिनिनामधेयामिति** ।।२१।।

**अनन्तभट्टीया–** देवी वसुभार्या । तस्याः सख्याः जरामृतिविध्वंसहेतोः वसिष्ठधेनुं बद्धुम् ।।२१।।

**जनार्दनीया–** देवी द्युभार्या वराङ्गी तस्याः वराङ्ग्याः सख्याः । जरा च मृतिश्च तथा, तयोर्विध्वंसहेतोः विनाशाय । स्वमृतं शोभनामृतं क्षरन्तीं स्रुवन्तीम्, दुहन्तीमित्यर्थः । जरापहां जरानाशिनीं नन्दिनिनामधेयां वसिष्ठधेनुं बद्धुं बद्ध्वा आनेतुमित्यर्थः । पतिं द्युनामानं चोदयामास प्रेरयामास ।।२१।।

**भारतश्री–** बद्धुं बध्वा आनेतुम् ।।२१।।

**चट्टी–** देवी द्युनामकवसोर्भार्या वराङ्गी तस्याः सखीभूतायाः । जरायाः मृतेश्च विध्वंसहेतोः विनाशार्थम् ।

---

१. 'इन्द्रियाणां वशकरो वशिष्ठ इति चोच्यते' इति भारते वसिष्ठनामनिर्वचनम् १.१९०.६।

२. 'षडुन्नतां सपार्श्वोरुं पृथुपश्चसमावृताम् । मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ।। सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमाम् । पुष्टायतशिरोग्रीवां विस्मितः...' इति नन्दिन्याः लक्षणमुच्यते आदिपर्वणि.१९१.१५-१७ ।

स्वमृतं शुद्धममृतं क्षरन्तीं दुहन्तीं जरापहां नन्दिनिनामधेयां वसिष्ठधेनुं बद्धुं बद्ध्वा आनेतुमित्यर्थः । पतिं द्युनामानं वसुं चोदयामास ।।२१।।

**तया द्युनामा स वसुः प्रचोदितो भ्रातृस्नेहात् सप्तभिरन्वितोऽपरैः ।**
**बबन्ध तां गामथ ताञ्छशाप वसिष्ठसंस्थः कमलोद्भवः प्रभुः ।।२२।।**

**व्यासतीर्थीया–** कचिद्वसिष्ठः शशापेत्युक्तिः अतः उक्तम्– **वसिष्ठसंस्थ इति** ।।२२-२६।।

**वेदाङ्गतीर्थीया–** कचित् वसिष्ठः शशापेत्युक्तं तद्विरोधपरिहारायोक्तम्– **वसिष्ठसंस्थ इति** ।।२२।।

**वादिराजीया–** अष्टवसूनां मध्ये अग्नेरपि सत्वात् तस्मादवरस्य वसिष्ठस्य शापदाने कथं शक्तिरित्यतः तात्पर्यमाह– **वसिष्ठसंस्थः कमलोद्भव इति** ।।२२।।

**सत्याभिनवीया–** तया द्युनामा स वसुः इति श्लोके भ्रातृस्नेहात् सप्तभिरन्वितः अपरैः बबन्ध तां **गामित्यस्य भ्रातृस्नेहात् भ्रातरि स्वस्मिन् स्नेहात् अपरैः स्वस्मात् अनन्यैः स्वाधीनैः** इति यावत् । सप्तभिः भ्रातृभिः अन्वितः सन् तां गां बबन्धेत्यर्थः । एतेन भ्रातॄणामन्यत्वस्य सिद्धत्वात् 'अपरैः' इति अन्यत्वकथनं व्यर्थमिति दूषणं परास्तम् । 'अपरैः' इत्यस्य अनन्यैरित्यर्थ इत्यनङ्गीकारात् ।।२२।।

**वरदराजीया–** तया स्वभार्यया । भ्रातरि स्वस्मिन् स्नेहान्निमित्तात् अपरैः सप्तभिः स्वभ्रातृभिः अन्वितः । अथ गोबन्धनानन्तरम् । तान् वसून् । कचित् वसिष्ठः शशापेत्युक्तं अत उक्तम्– **वसिष्ठसंस्थ इति** ।। प्रभुरिति हेतुगर्भविशेषणम् ।।२२।।

**अनन्तभट्टीया–** कचित् वसिष्ठः शशापेत्युक्तं अत उक्तम्– **वसिष्ठसंस्थ इति** ।।२२।।

**जनार्दनीया–** स्नेहान्निमित्तात् अपरैः सप्तभिः पृथ्वादिसप्तवसुभिः । कचित् 'वसिष्ठः शशाप' इत्युक्तम् । अत एव अस्मिन् निर्णयग्रन्थे 'वसिष्ठसंस्थः' इत्युक्तम् ।।२२।।

**ताम्रपर्णीया–** ।। **वसिष्ठसंस्थ इति** ।। वसिष्ठः शशाप कमलोद्भवः शशापेति विरोधपरिहाराय वसिष्ठसंस्थ इति । वसुषु अग्नेः प्रविष्टत्वात् कमलोद्भव इत्युक्तम् ।।२२-२६।।

**अतिविशद–** बबन्ध तां गामथ ताच्छशाप वसिष्ठसंस्थः कमलोद्भवः प्रभुः इत्यत्र वसिष्ठः शशापेत्यनुक्त्वा वसिष्ठसंस्थः कमलोद्भवः प्रभुरिति किमर्थमुक्तमिति चेत् अत्र केचिदाहुः 'वसुषु अग्नेरपि सत्वात् वसिष्ठापेक्षया तस्योत्तमत्वात् एतदभिप्रायेणैवमुक्तम्' इति । तथा सति उत्तमानां नीचशापः क्वापि न स्यात् । दृश्यते च [?] क एव सौभर्यादिशापो वायुगरुडादौ तस्मात् कथमेतदिति चेन्न । अयत्नेनापरिहारार्थत्व-सूचनार्थमेवमुक्तम् । तथाहि । शापो द्विविधः उत्तमनीचभेदात् । उत्तमैर्नीचेषु प्रयुक्ताः सार्वकालिकाः

यत्नादिना परिहार्याश्च । नीचैरुत्तमेषु प्रयुक्ताः असार्वकालिकाः यत्नेनापि परिहार्याः । तदुक्तं षष्ठतात्पर्ये 'न तु ते सार्वकालिका । यत्नेनापोहितुं शक्या' इत्यादिना ।।२२।।

**भारतश्री–** वसिष्ठः शशापेति कचित् ग्रन्थेषु वर्तते । कचिच्चतुर्मुख इति च अतस्तयोर्विरोधं परिहरति– **वसिष्ठसंस्थः कमलोद्भव इति** ।। केचित्तु 'वसुषु अग्नेः उत्तमस्य विद्यमानत्वात् वसिष्ठस्य तदपेक्षया नीचत्वात् शापाद्यशक्तमाशङ्क्य परिहरति' इति व्याचक्षते । 'अशक्ता अपि शक्तानां शक्ताः शापादिषु स्फुटम्' [६.१७.३७] इति षष्ठस्कन्धतात्पर्योक्तेः । 'विष्णुना विष्णुभक्तैश्च ब्रह्मशापोऽनुवर्तते' [१०.१५.११] इति दशमस्कन्धतात्पर्योक्तेश्च एवमस्माभिः व्याख्यातमिति वोध्यम् ।।२२-२६।।

**चट्टी–** द्युनामा सः वसुः तया भार्यया प्रचोदितः सन् भ्रातृस्नेहान्निमित्तादपरैः सप्तभिः वसुभिः अन्वितः सन् तां गां वसिष्ठधेनुं ववन्ध । अष्टवसूनां मध्ये अग्नेरपि सत्वात् तस्मादवरस्य वसिष्ठस्य कथं शापदानशक्तिरित्यत आह– **वसिष्ठसंस्थः कमलोद्भव इति** ।। प्रभुः वसिष्ठसंस्थः कमलोद्भवः ब्रह्मा तान् वसून् शशाप ।।२२।।

**अधर्मवृत्ताः प्रतियात मानुषीं योनिं द्रुतं यत्कृते सर्व एव ।**
**धर्मच्युतास्स तथाऽष्टायुराप्यतामन्ये पुनः क्षिप्रमथो विमोक्ष्यथ ।।२३।।**

**वेदाङ्गतीर्थीया–** यत्कृते यदर्थे । सर्वे अन्येति सप्तापि । अतः मानुष्यात् ।।२३।।

**वादिराजीया–** देवानां मनुष्ययोनिप्राप्तिरेव निरयप्राप्तिरित्युच्यिते । तेन कारणेन निरयप्राप्तिमतः अष्टमवसोर्बहुकालं मनुष्यदेहे अवस्थितिरस्त्विति भावेनाह– **स तथाष्टायुरिति** ।। स द्युनामा वसुः तथा यथा पापमधिकं तथा अष्टायुः स्वेन सहाष्टानामायुराप्यताम् । 'व्यत्ययो बहुलम्' इति वचनात् आप्नोतु । यद्वा अष्टानां आयुर्यस्य तादृशो भूत्वा स्वकृतपापफलेनाप्यतामिति योजना ।।२३-२५।।

**वरदराजीया–** किमिति शशापेत्यत आह– **अधर्मेति** ।। अधर्मेण वृत्तं वर्तनं येषां ते तथा । हेतुगर्भविशेषणमेतत् । यत्कृते कनिष्ठवसुकृते सर्व एव धर्मच्युताः स कनिष्ठो द्युनामा वसुः अष्टायुः अष्टानामायुराप्यतां प्राप्नुयात् । अन्ये तु सप्त क्षिप्रमविलम्बेन जननानन्तरमेव ततः शापाद्विमोक्ष्यथ मुक्ता भविष्यथ ।।२३।।

**अनन्तभट्टीया–** यत्कृते कनिष्ठवसुकृते । अष्टायुः अष्टानां भवतामायुः । अतः देहात् ।।२३।।

**जनार्दनीया–** किमिति? अधर्मे गोवन्धनरूपाधर्मकर्मणि वृत्ताः प्रवृत्ताः यूयं मानुषीं योनिं द्रुतं शीघ्रं प्रतियात । यत्कृते यदर्थं द्युनाम्नः प्रीत्यर्थं धर्मच्युताः स द्युः तथा मुख्यकर्तृत्वात् अष्टानामायुः आप्यतां प्राप्नुयात् । अन्ये सप्तवसवः क्षिप्रं पुनः शीघ्रमेव । जन्ममात्रादेवेत्यर्थः । 'पुनरप्रथमे प्रश्ने व्यावृत्तावधारणे' इति यादवः । अतः मनुष्यदेहात् विमोक्ष्यथ मुक्ता भविष्यथ ।।२३।।

**अतिविशद**– अधर्मयुक्ताः प्रतियात मानुषीं योनिं द्रुतं यत्कृते सर्व एव । धर्मच्युताः स तथाष्टायुराप्यतामित्यत्र यत्कृत सर्व एव धर्मच्युताः सः अष्टायुः । अन्ये तां योनिं प्राप्य क्षिप्रमतो योन्या विमोक्षमाप्यतामित्येकं पदं वा ।।२३।।

**चट्टी**– किमिति । यत्कृते यदर्थं द्युनाम्नः प्रियार्थं अधर्मेण बन्धनरूपाधर्मकर्मणि प्रवृत्ताः अत एव धर्मच्युताः यूयं सर्वे सप्त मानुषीं योनिं द्रुतं प्रतियात । देवानां मनुष्ययोनिरेव निरयप्राप्तिरुच्यते । तेन कारणेन बहुपापकृतः अष्टमवसोः बहुकालं मनुष्यदेहे अवस्थितिरस्त्विति भावेनाह– **स तथाष्टायुरिति** ।। सः द्युनामा वसुः तथा यथा सर्वेषां अधर्मप्रवृत्तिहेतुस्तथेत्यर्थः । स्वेन सहाष्टानामायुः आप्यतां प्राप्नुयात् । अन्ये सप्त क्षिप्रं अविलम्बेन जननानन्तरमेव अतः शापाद्देहाद्वा विमोक्ष्यथ मुक्ता भविष्यथ ।।२३।।

**प्रचोदयामास च या कुमार्गे पतिं हि साऽम्बेति नरेषु जाता ।**
**अभर्तृका पुंस्त्वसमाश्रयेण पत्युर्मृतौ कारणत्वं व्रजेत ।।२४।।**

**वरदराजीया**– या वराङ्गिनाम्नी पतिं द्युनामानं कुमार्गे अधर्ममार्गे चोदयामास प्रेरितवती सा च नरेषु मनुष्येषु अम्बेति नाम्ना जाता अभर्तृका स्यादिति शेषः । तथा पत्युः स्वभर्तुः द्युनाम्नो वसोः भीष्मजन्मनि मृतौ मरणे कारणत्वं व्रजेत प्राप्नुयात् । ननु स्त्री कथं पुरुषस्य मरणहेतुरित्यत उक्तम्– **पुंस्त्वेति** ।। गन्धर्वप्राप्तपुंस्त्वशक्तिवलेनेत्यर्थः ।।२४।।

**जनार्दनीया**– वसूनां शापप्रकारमुक्त्वा, द्युपत्न्याः शापप्रकारं दर्शयति– **प्रचोदयामासेति** ।। या द्युभार्या । कुमार्गे गोचौर्यरूपदुर्मार्गे । अम्बेति अम्बानाम्नी । अभर्तृका पतिरहिता सती पुंस्त्वसमाश्रयेण पुरुषत्वाश्रयेण पत्युर्मृतौ मरणे ।।२४।।

**भावचन्द्रिका**– नरेषु स्वयमप्येकाज्जाता अम्बात्वे अभर्तृका शिखण्डित्वेन पुंस्त्वेति । अनेन जन्मद्वयं शापनिमित्तकमिति ज्ञायते । कण्टकशस्त्रादिना गोताडनात् । 'गोताडनात् गर्भवासः' इत्यादि । ब्रह्मणो लोकशिक्षकत्वात् देवाज्ञया शशापेति ज्ञेयम् ।।२४।।

**चट्टी**– वसूनां शापप्रकारमुक्त्वा द्युपत्न्याः शापप्रकारं दर्शयति– **प्रचोदयामासेति** ।। या द्युभार्या वराङ्गी पतिं द्युनामकं वसुं कुमार्गे गोहरणरूपाधर्ममार्गे प्रचोदयामास प्रेरयामास । सा च नरेषु मनुष्येषु अम्बेत्यम्बा नाम्नी सती जाता अभर्तृका पतिरहिता सती पुंस्त्वसमाश्रयेण गन्धर्वप्राप्तपुंस्त्वशक्तिवलेनेत्यर्थः । पत्युः स्वभर्तुः द्युनामकवसोः भीष्मजन्मनि मृतौ मरणे कारणत्वं व्रजेत प्राप्नुयात् ।।२४।।

**भवत्वसौ ब्रह्मचर्यैकनिष्ठो महान् विरोधश्च तयोर्भवेत ।**
**स गर्भवासाष्टकदुःखमेव समाप्नुतां शरतल्पे शयानः ।।२५।।**

**वादिराजीया–** स गर्भवासाष्टकदुःखमित्यत्र द्युनामा स एव शरतल्पे शयानः सन् गर्भवासाष्टके यद्दुःखं तदाप्नोतु । अष्टवारं गर्भवासे सति यावद्दुःखं तावद्दुःखं शय्याभूतबहुशराणां घातेनाप्नोत्वित्यर्थः ।।२५।।

**वरदराजीया–** असौ द्युनामा वसुः ब्रह्मचर्ये नैष्ठिकब्रह्मचर्ये एकनिष्ठः एका निष्ठा यस्य स तथोक्तः । तयोर्दम्पत्योः महान् मरणपर्यन्तं विरोधश्च भवेत स्यात् । स द्युनामा अष्टानामायुषः आप्तत्वात् गर्भवासाष्टकदुःखं गर्भवासाष्टकेन निमित्तेन प्राप्तव्यं दुःखं एक एव आप्यताम् । तथा शरतल्पे शयानः ।।२५।।

**अनन्तभट्टीया–** तयोः अम्बाभीष्मयोरित्यर्थः । दम्पत्योरिति वा ।।२५।।

**जनार्दनीया–** द्युवसोः शापविशेषमाह– **भवत्विति** ।। असौ द्युवसुः । ब्रह्मचर्ये एका मुख्या निष्ठा नियमो यस्य स तथा । भवतु । तयोर्वराङ्गीद्युवसोः महान् विरोधः भवेत भवेत् । मनुष्यजन्मनीति शेषः । स वसुः गर्भवासानामष्टकं तेन यावद्दुःखं तावदित्यर्थः । समाप्नुताम् । एकस्यैव भवेदिति भावः ।।२५।।

**भारतश्री–** तयोः अम्बादेवव्रतयोः ।।२५।।

**चट्टी–** द्युवसोः शापविशेषमाह– **भवत्विति** ।। असौ द्युनामा वसुः । ब्रह्मचर्ये एका निष्ठा नियमो यस्य स तथा भवतु । तथा तयोः वराङ्गीद्युवसोः महान् विरोधश्च भवेत । मनुष्यजन्मनि इति शेषः । सः द्युनामा वसुः गर्भवासानामष्टकेन अष्टवारं गर्भवासेन यावद्दुःखं तावदित्यर्थः । एक एव समाप्नुताम् । सः शस्त्रैः बहुधा बहुप्रकारेण निकृत्तस्सन् शराणां तल्पे शयानः सन् मृतीनामष्टकेन उत्थां वेदनां दुःखमपि प्राप्नोतु इति शशापेति पूर्वेण सम्बन्धः । इतीरितास्ते वसवः तं शापप्रदं कमलोद्भवं ज्ञात्वा वद्धां गां समुत्सृज्य प्रणेमुः विज्ञापनां चक्रुरिति चार्थः ।।२५-२६।।

**मृत्यष्टकोत्थामपि वेदनां सः प्राप्नोतु शस्त्रैर्बहुधा निकृत्तः ।**
**इतीरितास्ते कमलोद्भवं तं ज्ञात्वा समुत्सृज्य च गां प्रणेमुः ।।२६।।**

**वेदाङ्गतीर्थीया–** तं शपन्तम् ।।२६।।

**वादिराजीया–** मृतीनामष्टकेनोत्थां मृत्यष्टकोत्थां वेदनामपि युद्धे शस्त्रैः बहुधा निकृत्तः सन्नाप्नोतु । एकदेहेनैवाष्टवारं जननदुःखमष्टवारं मरणदुःखं च शरतल्पशयनेन युद्धे शस्त्रसङ्घातेन चाप्नोतु इति भावः ।।२६-३०।।

**वरदराजीया–** अत एव शस्त्रैः बहुधा निकृत्तः स एक एव, मृत्यष्टकोत्थां मृतीनां अष्टकेनोत्थां तदुत्पादितां, वेदनां दुःखं प्राप्नोतु इति शशापेति पूर्वेण सम्वन्धः । इतीरितास्ते वसवः तं शापप्रदम् । बद्धां गां समुत्सृज्य प्रणेमुः प्रह्वीभावपूर्वं विज्ञापितवन्तः ।।२६।।

**अनन्तभट्टीया–** मृत्यष्टकोत्थां वेदनां अष्टानां मृतिकाले वेदनां तावतीत्यर्थः ।।२६।।

**जनार्दनीया–** शस्त्रैर्वहुधा वहुप्रकारेण निकृत्तः । शराणां तल्पे शयनीये शयानः, स्थित इत्यर्थः । एतादृशः सः, मृतीनां अष्टकं, तेन उत्थां जातां वेदनां व्यथामपि प्राप्नोतु इति शशापेति पूर्वेणान्वयः । ते वसवः प्रणेमुः । विज्ञापनं चक्रुरिति चार्थः ।।२६।।

**न [१]मानुषं गर्भमवाप्नुमो वयं भवत्वयं सर्ववित् कीर्तिमांश्च ।**
**महास्त्रवेत्ता भवदंशयुक्तस्तथा बलं नोऽखिलानामुपैतु ।।२७।।**

**व्यासतीर्थीया–** गर्भमवाप्नुमः । मानुषीं योनिं नावाप्नुमः ।।२७-२८।।

**वेदाङ्गतीर्थीया–** गर्भमाप्नुमः । मानुषीं योनिं नावाप्नुमः ।।२७।।

**मधुसूदनीया–** ।। **न मानुषीमिति** ।। मानुषीं योनिं न चाप्नुमः । किन्तु गर्भमवाप्नुमः । देवतायोनौ जायेमेति भावः । 'त्वमस्मान्मानुषी भूत्वा सूष्व पुत्रान् वसून् भुवि । न मानुषीणां जठरं प्रविशेम कथञ्चन[२] ।।' इत्यादिपर्वोक्तेः [१०२.१५-१६] ।।२७-२९।।

**वरदराजीया–** किमिति ते वयं मानुषीं, योनिमिति शेषः । नावाप्नुमः न प्राप्नुमः । गर्भं तु अवाप्नुमः । तावतैव शापस्य सार्थकत्वादिति भावः । अयं द्युनामा सर्ववित् सर्वज्ञः भवतः तव अंशेन युक्तश्च भवेत् । तथा अखिलानां सर्वेषां नोऽस्माकं वलमुपैतु प्राप्नोतु ।।२७।।

**अनन्तभट्टीया–** वयं अष्टौ अपि । मानुषीं योनिमिति...नाप्नुमः । मानुषदेहयुक्तस्त्रियां जननं माभूदित्यर्थः । गर्भं त्ववाप्नुमः देवतादेहयुक्तस्त्रियां जननं भूयादित्यर्थः... ।।२७।।

**जनार्दनीया–** विज्ञापनं दर्शयति– **नेति** ।। वयं मानुषं मनुष्यसम्वन्धिनं गर्भं नावाप्नुमः न प्राप्नुमः । मनुष्यवीर्यं देवतागर्भं अवाप्नुम इति भावः । 'न मानुषीम्' इति पाठे मानुषीं योनिं न आप्नुम इत्यर्थः । गर्भं अवाप्नुमः । देववध्वा इति शेषः । अयं द्युवसुः भवतः ब्रह्मणः अंशेन आवेशेन युक्तो भवतु । तथा अखिलानां नः सप्तानां अस्माकं बलं उपैतु प्राप्नोतु ।।२७।।

---

१. 'मानुषीं' इति जनार्दनीयचट्टिटिप्पण्योः पाठान्तरम् ।

२. 'न मानुषीं जठरं प्रविशेम वयं शुभे' आदिपर्वणि.१०२.१६ । इति इदानीन्तनपाठः ।

**ताम्रपर्णीया–** ।। **न मानुषमिति** ।। गर्भं देवगर्भमवाप्नुमः । मानुषीं योनिं नावाप्नुम इत्यर्थः ।।२७-२९।।

**भारतश्री–** न मानुषीं गर्भमवाप्नुमो वयं किन्तु देवताया गर्भमवाप्नुमः ।।२७।।

**चट्टी–** विज्ञापनाप्रकारं दर्शयति– **नेति** ।। वयं मानुषं मनुष्यसम्बन्धिनं गर्भं न अवाप्नुमः । न प्राप्नुमः । मनुष्यवीर्यं देवतागर्भमवाप्नुम इति भावः । 'न मानुषीम्' इति पाठे मानुषीं योनिं न प्राप्नुमः किन्तु गर्भमवाप्नुमः । तावतैव शापस्य सार्थकत्वाद्देवतायोनौ जायेम इति भावः । अयं द्युनामा सर्ववित् सर्वज्ञः, कीर्तिमान् महास्त्रवेत्ता, भवतस्तवांशेन आवेशेन युक्तश्च भवतु । तथाखिलानां सर्वेषां नो अस्माकं बलमुपैतु प्राप्नोतु ।।२७।।

**इतीरितेऽस्त्वित्युदिताः स्वयम्भुवा वसिष्ठसंस्थेन सुरापगां ययुः ।**
**ऊचुस्तथैनामुदरे वयं ते जायेमहि क्षिप्रमस्मान् हन त्वम् ।।२८।।**

**वरदराजीया–** इत्येवमीरिते वसुभिरिति शेषः । वसिष्ठसंस्थेन स्वयम्भुवा तथास्त्विति उदिता वसवः सुरापगां गङ्गां प्रति ययुः । तथा एनां गङ्गां ऊचुः । किमिति । ते उदरे वयं जायेम हि जनिष्याम । अस्मान् क्षिप्रमविलम्बेन हन जहीत्यर्थः ।।२८।।

**जनार्दनीया–** वसुभिः इतीरिते सति स्वयम्भुवा ब्रह्मणा अस्त्वित्युदिता वसवः सुरापगां देवनदीं गङ्गां प्रति ययुः । एनां गङ्गाम् । जायेम जनिष्याम । क्षिप्रं तत्क्षणे अस्मान् सप्त हन । एकं मा हनेति भावः ।।२८।।

**भावचन्द्रिका–** मेरुपार्श्वे स्वाश्रमस्थवसिष्ठेन शप्ता स्वर्गं गच्छतः ब्रह्मणा महाभिषजि आज्ञप्तेन तदर्थमेव भुवमापतन्तीं गङ्गामन्तरिक्ष एव दैवाद्ययुः प्राप्ताः । किं वैवर्ण्यमिति पृष्टा ऊचुः । तद्भारते ।।२८।।

**चट्टी–** इतीरिते सति वसुभिरिति शेषः । वसिष्ठसंस्थेन स्वयम्भुवा ब्रह्मणा अस्त्वित्युदिताः वसवः सुरापगां देवनदीं गङ्गां प्रति ययुः । तथा एनां गङ्गां ऊचुः । किमिति । ते उदरे वयं जायेम जनिष्यामः । त्वमस्मान् क्षिप्रं अविलम्बेन हन जहीति ।।२८।।

**इतीरिता सा वरमाशु वव्रे तेभ्योऽप्यपापत्वमथ प्रियत्वम् ।**
**तेषां [१]सदैवात्मन एकमेषां दीर्घायुषं तान् सुषुवेऽथ शन्तनोः ।।२९।।**

---
१. 'तथैव' इति जनार्दनीये पाठान्तरम् ।

**व्यासतीर्थीया–** तान् सुषुवे अहन् च ।।२९।।

**वेदाङ्गतीर्थीया–** इति ईरिता सा तेभ्यो आत्मनः अपापत्वं शिशुवधजपापाभावं तेषामात्मनोऽपि परस्परं सदा प्रियत्वं वरमपि वव्रे । अथ तान् असौ शन्तनोः सुषुवे । एतेषां मध्ये एकमष्टमं दीर्घायुषं सुषुवे इति सम्बन्धः ।।२७।।

**वादिराजीया–** इतीरिता सा वरमाशु वव्र इत्यत्र तेषां स्वया मारितानां पुत्राणां प्रियत्वं हन्त्र्यामपि स्वस्यां प्रेमवत्वं, अथ हननानन्तरं आत्मनः अपापत्वं भ्रूणहत्याख्यपापरहितत्वं, एषां कुमाराणां मध्ये एकं दीर्घायुषमपि दीर्घायुषं चेति वरं त्रिविधं वरं तेभ्यः वव्र इति योजना ।।२९।।

**वरदराजीया–** इतीरिता सा गङ्गापि एभ्यो वसुभ्यो वरं वव्रे । कथम्भूतं जातमात्रशिशुहननेऽपि अपापत्वं पापराहित्यं, तेषां आत्मनः स्वस्य सदा प्रियत्वं, भवतां हननेऽपि प्रेमनाशो माभूत् इति यावत् । तथैषामेकं दीर्घायुषं वरं वव्र इति सम्वन्धः । तान् वसून् शन्तनोः सकाशात् सुषुवे ।।२९।।

**अनन्तभट्टीया–** अपापत्वं तेषामात्मनश्च प्रियत्वमेषां मध्ये एकं दीर्घायुषं तेभ्यो वरं वव्रे ।।२९।।

**जनार्दनीया–** इतीरिता सा गङ्गा अथ प्रार्थनानन्तरं अपि शिशूनां वधे कृतेऽपि आत्मनः अपापत्वं शिशुवधप्राप्तदोषाभावं तथैव आत्मनः, तेषां सप्तवसूनां प्रियत्वं परस्परप्रीतिभावं वरं तेभ्यः सप्तभ्यः वव्रे । आत्मन इत्युभयत्रानुषङ्गः । 'तेषां सदैवात्मन' इति वा पाठः । अथ गङ्गा तान् अष्टवसून् शन्तनोः सकाशात् सुषुवे । तेषां अष्टानां मध्ये एकं कनीयसं दीर्घायुषं सुषुवे इति सम्बन्धः ।।२९।।

**भारतश्री–** तेभ्योऽप्यपापत्वं तस्यास्ततो अधमत्वात् ।।२९।।

**चट्टी–** इतीरिता सा गङ्गा अथ प्रार्थनानन्तरमपि शिशूनां वधे कृतेऽपि आत्मनः अपापत्वं पापराहित्यम्, तथैव आत्मनः तेषां वसूनां च सदैव प्रियत्वं परस्परप्रीतिभावम्, एषां मध्ये एकं दीर्घायुषं च तेभ्यः वसुभ्यः आशु वरं वव्रे । अथ गङ्गा तानष्टवसून् शन्तनोः सकाशात् सुषुवे । एषामष्टानां मध्ये एकं कनीयांसं दीर्घायुषं सुषुवे इति वा सम्वन्धः ।।२९।।

**अविघ्नतस्तान् विनिहन्तुमेव पुरा प्रतीपस्य हि दक्षिणोरुम् ।**
**समाश्रिता कामिनीवत् त्वकामा तत्पुत्रभार्या भवितुं विडम्बात् ।।३०।।**

**व्यासतीर्थीया–** अविघ्नेन कथं पुत्रानजीघनदिति जिज्ञासायामाह– **अविघ्नत इति** ।।३०-३३।।

**वेदाङ्गतीर्थीया–** विडम्बात् स्नुषाभावाश्रयणात्मकविडम्बात् ।।३०-३५।।

**वादिराजीया–** अविघ्नतस्तान् विनिहन्तुमित्यत्र पूर्वमेव शन्तनुप्राप्तौ देवस्त्रीगमनं त्वया न कार्यमिति पुत्रं प्रति पित्रोक्ते विघ्नः स्यादिति शङ्कया अविघ्नत एव विघ्नाभावादेव तान् विनिहन्तुम् । तु वरुणपत्न्याः स्वस्याः तदितरपत्नीत्वस्यायोग्यत्वाख्यविशेषेण अकामा प्रतीपे कामरहिता विडम्बात् मनुष्यनार्यनुकरणात् कामिनीव पुरा शन्तनुविवाहात् पूर्वमेव प्रतीपस्य दक्षिणोरुं समाश्रिता हि । दक्षिणोरुगतायाः स्नुषात्वप्रसिद्धिसूचनाय हिशब्दः । [अनियतपतिकामना मनुष्यस्त्रीविडम्बनात्] दक्षिणोरुगतायाः स्नुषात्वनियमात् दक्षिणोरुगता त्वं मम पुत्रभार्या भवेति पितैव वाक्यं वदेदिति भावेन भाविविघ्नपरिहाराय दक्षिणोरुसमाश्रयणमिति भावः । मे सुतस्य भार्या भवेति तेनैव येन विघ्नः कार्यः तेनैवेत्यन्वयः ।।३०।।

**मधुसूदनीया–** ।। **पुरा प्रतीपस्येति** ।। पुरा शन्तनूत्पत्तेः पूर्वमित्यर्थः । 'प्रतीपस्तु महाराजा सर्वभूतहिते रतः । निषसाद महाबाहुः गङ्गातीरे जितेन्द्रियः ।।' इत्यादिना गङ्गाप्रतीपयोः संवादमुक्त्वा 'तथेत्युक्त्वा तु सा राजन् तत्रैवान्तरधीयत' इत्यादिना मध्ये गङ्गायाः अन्तर्धानमुक्त्वा, 'पुत्रजन्म प्रतीक्षंश्च स राजा तदधारयत् । एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः ।। तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन । प्रतीपस्य तु भार्यायां गर्भः श्रीमानवर्धत ।।' इत्यादिना शन्तनूत्पत्तिमुक्त्वा, तदनन्तरं 'प्रतीपश्शन्तनुं पुत्रं यौवनस्थमबोधयत् । पुरा मां स्त्री समभ्यागात् शन्तनो भूतये तव ।।' इत्यादिना 'स राजा रतिसक्तोऽभूत्' इत्यन्तेन द्विनवतितमाध्याये [आदि.१०३-१०४अ] शन्तनूत्पत्तितः प्रागेव गङ्गायाः प्रतीपदक्षिणोर्वस्थानकथनात् ।। ३०-३३ ।।

**वरदराजीया–** ननु तावतां शिशूनां क्रमेण हनने क्रियमाणे कथं शन्तनुना न निवारितमित्यत आह– **अविघ्नत इत्यादिना** ।। अविघ्नतः निर्विघ्नात् शिशून् हन्तुमेव नत्वन्यथा बुद्ध्या प्रतीपस्य शन्तनुपितुः दक्षिणोरुं समाश्रिता तत्रोपनिविष्टेति यावत् । ननु अन्यथाबुद्ध्यैव समाश्रिता किं न स्यादित्यत आह– **कामिनीवदिति** ।। अकामात् कामरहितापि विडम्बात् विनोदात् कामिनीवत् । किं प्रयोजनमित्यत उक्तम्– **तत्पुत्रेति** ।। तस्य प्रतीपस्य पुत्रः शन्तनुः तस्य भार्या भवितुं दक्षिणोरुं समाश्रितेति पूर्वेण सम्बन्धः ।।३०।।

**अनन्तभट्टीया–** विडम्बात् विनोदात् । कामिनीवेति सम्बन्धः ।।३०।।

**जनार्दनीया–** गङ्गाकृतहननस्य भीष्मानुकूल्यप्रकारं दर्शयति– **अविघ्नत इति** ।। पुरा शन्तनोत्पत्तेः पूर्वं अकामा तु प्रतीपेच्छारहितापि गङ्गा कामिनीवत् कामवतीव विडम्बात् वञ्चनाहेतोः तस्य प्रतीपस्य, पुत्रस्य शन्तनोर्भार्या भवितुं, प्रतीपस्य दक्षिणोरुं समाश्रिता । दक्षिणाङ्के उपविष्टेति भावः । तदुक्तमादिपर्वणि 'तथेत्युक्त्वा तु राजानं तत्रैवान्तरधीयत' [१०३.१७] इति । 'एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः ।

तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन ॥' [१०३.१८] इति । 'शान्तस्य जज्ञे सन्तानस्तस्मादासीत् स शान्तनुः' [१०३.२२] इति च ॥३०॥

**ताम्रपर्णीया–** ॥ **विडम्बादिति** ॥ 'कामये त्वां नरव्याघ्र त्वं कौरव्य भजस्व माम्' [आदि.१०३.५] इति भारतोक्तरीत्या कामिन्यनुकरणात् कामिनीव विद्यमानेत्यर्थः ॥ ३०-३३ ॥

**भारतश्री–** पुरा शन्तनुसम्बन्धात् पुरा ॥३०-४८॥

**भावचन्द्रिका–** पुरा शन्तनूत्पत्ते पुरा । गङ्गाप्राप्त्यनन्तरं कालविलम्बेन शन्तनूत्पत्त्यर्थं दम्पत्योः तपसश्च उक्तेः भारते । गङ्गातीरे पितॄंस्तर्पयतः प्रतीपस्य दक्षिणोरौ स्थितायाः गङ्गायाः त्वं पतिर्भवेति बहुधोक्तस्य वचनस्य विरुद्धस्य पुत्रभार्यात्वं तेनैव वाचयितुं प्रवृत्तिरित्याह– **दक्षिणोरुमित्यादिना** ॥३०-३४॥

**चट्टी–** ननु गङ्गया क्रमेण शिशुहनने क्रियमाणे कथं शन्तनुना न निवारितमित्यत आह– **अविघ्नत इत्यादिना** ॥ अविघ्नतः निर्विघ्नतस्तान् शिशून् विनिहन्तुमेव न त्वन्यथा । पुरा शन्तनूत्पत्तेः पूर्वं प्रतीपस्य शन्तनुपितुः दक्षिणोरुं समाश्रिता । तत्रोपविष्टा सतीति यावत् । ननु अन्यथाबुद्ध्यैव समाश्रितेति किं न स्यादित्यत आह– **कामिनीवेति** ॥ अकामा कामरहितापि विडम्बात् स्नुषाभावाश्रयणात्मकविडम्बात् कामिनीव तत्पुत्रभार्या तस्य प्रतीपस्य पुत्रः शन्तनुः तस्य भार्या भवितुं दक्षिणोरुं समाश्रितेति पूर्वेण सम्बन्धः । तथा चोक्तम्– 'पुरा मां स्त्री समभ्यागात् शन्तनोऽभूत एव च । न प्रष्टव्या त्वया सा वै कासि कस्य सुता त्विति ॥ एवं सन्दिश्य तनयं प्रतीपः शन्तनुस्तथा । स्वे च राज्येऽभिषिच्यैनं वनं राजा जगाम ह ॥ स कदाचिन्महाराजो ददर्श परमां स्त्रियम् । [१]स्नातमात्रामधोवस्त्रां गङ्गातीरे महावने ॥ यासि कासि सुरप्रख्ये महिषी मे भवानघे । प्रजार्थिनी राजपुत्रं शन्तनुं पृथिवीपतिम् ॥ प्रतीपवचनं चैव संस्मृत्यैव स्वयं नृपम् ॥' इत्यादिपर्वणि । [१०३-१०४] । प्रथमार्धे अभूते इत्यस्यार्थः अभूते त्वय्यनुत्पन्न एव, त्वदुत्पत्तेः पूर्वमित्यर्थः ॥३०॥

**तेनैव चोक्ता भव मे सुतस्य भार्या यतो [२]दक्षिणोरुस्थिताऽसि ।**
**भागो हि दक्षो दुहितुः स्नुषाया भार्याभागो वाम इति प्रसिद्धः ॥३१॥**

**वादिराजीया–** दुहितुः स्नुषायाः इत्यत्र दुहितुर्वा स्नुषाया वेत्यन्वयः ॥३१॥

---

१. 'स्नातमात्रां धौतवस्त्रां गङ्गातीररुहे वने' इति इदानींतनपाठः ।

२. 'प्राप्य दक्षिणमूरुं मे समाश्लिष्टा वरानने । अपत्यानां स्नुषाणाञ्च भीरु विद्ध्येतदासनम् ॥ सव्योरुः कामिनीभोग्यस्त्वया स च विवर्जितः ॥' इति । १.१०३.१०-११

**वरदराजीया–** तेन प्रतीपेनैव मे सुतस्य भार्या भवेति उक्ता । तत्र हेतुमाह– **य इति** ।। दक्षिणोरुस्थितत्वेऽपि कथं सुतस्य भार्येत्यत आह– **भागो हीति** ।। दक्षो दक्षिणो भागो दुहितुः पुत्र्याः तथा स्नुषायाश्च भागः । तथा वामो भागो भार्याभाग इति प्रसिद्धः शास्त्रे । तथा दुहितृत्वाभावे सिद्धे परिशेषात् स्नुषात्वं प्रसिद्धमिति सुतस्य भार्या भवेत्यर्थः ।।३१।।

**अनन्तभट्टीया–** दक्षः दक्षिणः । स्नुषायाश्चेति शेषः ।।३१।।

**जनार्दनीया–** तेन प्रतीपेन दक्षिणोरौ स्थितासि । कामिन्नी च यतः अतो मे सुतस्य भार्या भवेति उक्ताभूदिति शेषः । तत्र प्रमाणमाह– **भाग इति** ।। दक्षो दक्षिणः । इति स्मृतिषु प्रसिद्धः ।।३१।।

**चट्टी–** तेन प्रतीपेन यतस्त्वं दक्षिणोरौ स्थितासि अतः मे सुतस्य भार्या भवेत्युक्ताऽभूदिति शेषः । तत्र प्रमाणमाह । दक्षिणभागः दुहितुः पुत्र्याः तथा स्नुषायाश्च भागः । वामो वामभागो भार्याभाग इति वा स्मृतिषु प्रसिद्धः । अतः सुतस्य भार्या भवेति प्रतीपेनोक्तमिति भावः ।।३१।।

**उवाच सा तं न तु मां सुतस्ते काऽसीति पृच्छेन्न तु मां निवारयेत् ।**
**अयोग्यकर्त्रीमपि कारणं च मत्कर्मणो नैव पृच्छेत् कदाचित् ।।३२।।**

**वादिराजीया–** न तु मां सुतस्ते इत्यादिकमपि अविघ्नतस्तान् विनिहन्तुमेव पित्राज्ञां पुत्रो नोल्लङ्घयेदेव तदाहं सुखनैव तान् हन्मि इत्याशया इमान् शपथान् पितृमुखेनैव कारयितुं च तस्य दक्षिणोरुं श्रितेति भावः । न तु मां निवारयेदित्यत्र तु विशेषेण अयोग्यभ्रूणहत्याख्यकर्मकर्त्रीमपि इति सम्बन्धः । निषिद्धदिने शय्यां प्रत्यागमनादिकिञ्चिदयोग्यकर्मकर्त्र्याः निवारणेऽपि न दोष इति भावः । तु विशेषेण न निवारयेत् इदं न कुर्विति वचसा न निवारयेदिति वा । मनसा निवारणेऽपि न दोष इति भावः ।।३२-३५।।

**वरदराजीया–** सा गङ्गा तं प्रतीपं ते सुतः मां कासिति त्वं कासीति न पृच्छेत् । अयोग्यकर्मणः कर्त्रीमपि मां इदं न कर्तव्यमिति न निवारयेत् । मत्कर्मणः मया क्रियमाणस्य कर्मणः कारणं नैव पृच्छेत् ।।३२।।

**अनन्तभट्टीया–** मत्कर्मणः कारणम् ।।३२।।

**जनार्दनीया–** विडम्वादित्युक्तं विवृणोति– **उवाचेत्यादिना** ।। सा गङ्गा तं प्रतीपं प्रत्युवाच । किमिति ? ते सुतः माम्, त्वमिति शेषः । का असीति नैव पृच्छेत् । अयोग्यकर्त्रीमपि मामिदं मा कुर्विति न निवारयेत् । मम कर्मणः क्रियायाः कारणं हेतुं कदाचित् नैव पृच्छेत् ।।३२।।

**चट्टी–** विडम्बादित्युक्तं विवृणोति– **उवाचेत्यादिना** ।। सा गङ्गा प्रतीपं प्रत्युवाच । किमिति । ते सुतः मां त्वं कासीति नैव पृच्छेत् । अयोग्यकर्मकर्त्रीमपि मामिदं मा कुरु इति न निवारयेत् । मत्कर्मणः मया क्रियमाणस्य कर्मणः कारणं हेतुं कदाचिन्नैव पृच्छेत् ।।३२।।

**यदा त्रयाणामपि चैकमेष करोति गच्छेयमहं विसृज्य ।**
**तदा त्वदीयं सुतमित्युदीरिते तथेति राजाऽप्यवदत् प्रतीपः ।।३३।।**

**वरदराजीया–** यदा तु कदाचिदपि त्रयाणां कासीत्याद्युक्तानां मध्ये एकमपि करोति एषः तव पुत्रः तदाहं त्वदीयं सुतं विसृज्य गच्छेयमित्यर्थः । इति गङ्गयोदीरिते सति प्रतीपो राजापि तथास्त्विति अवदत् ।।३३।।

**अनन्तभट्टीया–** स्वरूपप्रश्ननिवारणकर्मकारणप्रश्नानाम् ।।३३।।

**जनार्दनीया–** एषः ते सुतः त्रयाणां कासीत्यादित्रयाणां मध्ये एकमपि यदा करोति तदा अहं त्वदीयं सुतं विसृज्य विहाय गच्छेयं इतीरिते सति प्रतीपो राजापि तथेति तथास्त्वित्यवदत् ।।३३।।

**चट्टी–** एषः ते सुतः त्रयाणां कासीत्यादित्रयाणां मध्ये एकमपि यदा करोति तदा अहं त्वदीयं सुतं विसृज्य गच्छेयम् । इति गङ्गया ईरिते सति प्रतीपो राजापि तथेति तथास्त्विति अवदत् ।।३३।।

**भावचन्द्रिका–** ।। **अवदत्** ।। अतस्तत्रैवान्तर्दधे इत्युक्तम् । शन्तनौ राज्यभारं निधाय वनगमनसमये । तुशब्दो मृगयां गते गङ्गातीरे रूपवतीं तां दृष्ट्वा तया च प्रतीपवचने स्मारिते च तां प्राप्त इति विशेषमाह– 'उवाच स धर्मात्मा सप्त राजन् ध्रुवादिकान् । अनुसंवत्सरान् शापात् मोक्ष्यध्वमिति भारत ।।' [शप्ता यूयं धरादयः । अनुसंवत्सरात् सर्वे शापमोक्षमवाप्स्यथ ।।] भारते [आदि.१०६.३९] सः वसिष्ठः । 'जातं जातं क्षिपेत्यूचुः स्वयं गङ्गे त्वदम्भसि' इति वचनात् हनने विशेषो द्रष्टव्यः ।।३३-४५।।

**तथैव पुत्राय च तेन तद्वचो वधूक्तमुक्तं वचनाद् द्युनाद्याः ।**
**कनीयसे सा ह्यवदत् सुतस्ते नान्यः पतिः शन्तनुरेव मे वृतः ।।३४।।**

**व्यासतीर्थीया–** त्वत्पुत्रोऽप्येतत् त्रयं ज्ञात्वा तिष्ठत्विति द्युनद्याः वचनात् । तेन कनीयसे पुत्रायोक्तम् । कनीयसे किमित्यवोचदित्यत आह– **सा हीति** ।। ते सुतः शन्तनुरेव मे पतिर्वृतो नान्य इति । सा यस्मादवददिति ततः कारणादविघ्नेन न्यहनत् ।।३४-३५।।

**वेदाङ्गतीर्थीया–** द्युनद्याः वचनात् शन्तनुरेव मे पतिर्भवेत्, तं प्रत्येव ब्रूहि [इति] गङ्गावचनात् । द्युनद्याः वचनात् इत्येतद्विवृणोति– **सा हीति** ।।३४।।

**वादिराजीया–** तद्वचो वधूक्तमित्यत्र वधूक्तं तत् त्रिरूपं वच इति सम्बन्धः । ते सुतः शन्तनुरेव वृतो हीति हिशब्देन वरुणरूपत्वात्तस्यैव पतित्वेन वरणयोग्यताप्रसिद्धिं सूचयति ।।३४।।

**मधुसूदनीया–** ।। **तथैव पुत्रायेति** ।। तेन प्रतीपेन कनीयसे पुत्राय शन्तनवे वधूक्तं गङ्गायोक्तं तद्वच उक्तमित्यन्वयः । किमर्थं प्रत्युक्तमित्यत आह– **वचनादिति** ।। द्युनद्याः गङ्गायाः त्वत्पुत्रं प्रति मद्वाक्यं वदेत्येवं रूपाद्वचनादित्यर्थः ।। **सा ह्यवददिति** ।। भाविकार्यं सर्वं ज्ञात्वा गङ्गायास्तव कनीयान् पुत्रश्शन्तनुरेव मया वृत इत्याद्युक्तम् । नतु तदा शन्तनुरुत्पन्नः । एतत्सर्वमप्यादिपर्वणि द्रष्टव्यमिति भावः ।।३४-३५।।

**वरदराजीया–** तथैव तेनैव प्रकारेण तत् वधूक्तं वध्वा गङ्गयोक्तं वचः तेन प्रतीपेन कनीयसे कनिष्ठाय पुत्राय शन्तनवे उक्तम् । कस्मात् द्युनद्याः गङ्गायाः वचनात् त्वत्पुत्राय इमं प्रसङ्गं कथयेत्येवं रूपात् । ननु कनीयस एव किमर्थमुक्तमित्यत आह– **सा हीति** ।। हि यस्मात् ते सुतः शन्तनुरेव मे मया वृतः पतित्वेनाङ्गीकृतः । नान्यो बाह्लीकादिर्वृतः इत्यवदत् । तस्मात् कनीयसे उक्तमित्यर्थः ।।

**अनन्तभट्टीया–** द्युनद्याः वचनात् त्वत्पुत्राय इमं प्रसङ्गं कथय इत्येवंरूपात् । तेन प्रतीपेन वधूक्तं वचनं कनीयसे पुत्रायोक्तम् । वधूक्तमित्यत्र वधुशब्देन प्रकृतत्वात् द्युनद्युच्यते । कनीयसे किमित्यत आह– **सा हीति** ।। हि यत इत्यवदत् ।।३४।।

**जनार्दनीया–** तेन प्रतीपेन द्युनद्याः गङ्गायाः वचनात् त्वं मदुक्तं पुत्राय वदेत्येवंरूपवचनात् वध्वा भाविस्नुषया नार्या उक्तं तत्पूर्वोक्तं कासीत्यादिवचः तथैव यथा गङ्गयोक्तं तथैवेत्यर्थः । कनीयसे कनिष्ठाय शन्तनवे पुत्राय उक्तम् । 'वधूर्नारी वधूः भार्या वधूः पुत्रवधूरपि' इत्यनेकार्थध्वनिपदञ्जर्याम् । कनिष्ठाय किमर्थमुक्तमित्यत आह– **सा हीति** ।। यस्मात् सा गङ्गा ते तव सुतः शन्तनुरेव मे मया पतित्वेन वृतः अन्यः पतिर्नेत्यवदत् । तस्मात् कनीयसे उक्तमित्यर्थः ।।३४।।

**ताम्रपर्णीया–** ।। **तथैवेति** ।। तेन प्रतीपेन वधूक्तं तद्वचः 'कासीति पृच्छेत्' इत्यादि गङ्गोक्तं वचः 'मद्वचनं त्वत्पुत्राय ब्रूहि' इति द्युनद्या वचनात् कनीयसे पुत्राय तया यथोक्तं तथैवोक्तमित्यर्थः । कनीयसे पुत्राय इतरपरित्यागेन कुतः उक्तमित्यत आह– **सा हीति** ।। हि यस्मात् मे मया शन्तनुरेव पतिः वृतः नान्यः इत्यवदत् । ततस्तु तत एव कनीयसे पुत्राय उक्तमित्यन्वयः । यद्वा कनीयसे पुत्राय कुत उक्तमित्यत उक्तम्– **वचनाद् द्युनद्या इति** ।। तद्वचनप्रकरमाह– **सा हीति** ।। द्वितीययोजनायां ततोऽनन्तरं सा शन्तनुरित्यादि योज्यम् ।।३४।।

**अतिविशद**– तथैव पुत्राय च तेन तद्वचो वधूक्तमुक्तं वचनाद्युनद्या इत्यत्र तस्याः वच इत्यर्थत्वे तेन प्रतीपेन तद्वचो तस्याः वचः तथैव व्यत्यासादिराहित्येन पुत्रायोक्तमित्यन्वयः । परिपूर्तेः व्यर्थं वधूक्तमित्यादेः । यदिच तद्वच इत्यस्य तच्च तद्वचश्च इत्येवमर्थत्वं तर्हि वधूक्तं तद्वच इत्यनेनैवोपपत्तेः पुनर्द्युनद्या वचनादित्यादेर्वैय्यर्थ्यमिति । अत्रैवमक्षरयोजना । तेन प्रतीपेन वध्वाः स्नुषायाः उक्तवचनं अहं तव स्नुषा भवानीत्यादिरूपं यस्मिन् तत् वधूक्तं तद्वचः तस्याः द्युनद्या वचनात् कनीयसे पुत्रायोक्तमिति । एवञ्च न कस्यापि वैय्यर्थ्यम् । 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः । 'वधूर्नारी वधूर्भार्या वधूः पुत्रवधूः' इति । तद्वचः तथैवोक्तमित्युक्तम् । कीदृशं तद्वच इत्यतः पूर्वं सामान्येनोक्तत्वात् तत्प्रपश्नार्थमुत्तरं वाच्यम् । तस्यैवं योजना । सा नदी हि प्रतीप ते शन्तनुः सुत एव मे वृतः । अन्यः पतिः नेत्यवददिति ।।३४।।

**चट्टी**– तेन प्रतीपेन द्युनद्याः गङ्गायाः वचनात् त्वं मदुक्तं तव पुत्राय वदेत्येवं रूपवचनात् वध्वा भाविस्नुषया भार्यया वा उक्तं कासीत्यादिवचः तथैव यथा गङ्गयोक्तं तथैवेत्यर्थः । कनीयसे कनिष्ठाय पुत्रायोक्तम् । ननु कनियस एव किमर्थमुक्तमित्यत आह– **सा हीति** ।। हि यस्मात् सा गङ्गा ते तव सुतः शन्तनुरेव मया पतिः पतित्वेन वृतः । अन्यः सुतः पतित्वेन न वृतः इत्यवदत् । तस्मात् कनीयसे उक्तमित्यर्थः ।।३६।।

**ततस्तु सा शन्तनुतोऽष्टपुत्रानवाप्य सप्त न्यहनत् तथाऽष्टमम् ।**
**गन्तुं ततो मतिमाधाय हन्तुमिवोद्योगं सा हि मृषा चकार ।।३५।।**

**वेदाङ्गतीर्थीया**– ततः एवं शन्तनुप्राप्त्यनन्तरम् ।।३५।।

**वादिराजीया**– ततस्तु सा शन्तनुत इत्यत्र उत्पत्तौ हनने च क्रमाख्यविशेषं सूचयितुं तुशब्दः । मृषा चकार हीति हिशब्देन गङ्गया एव एकस्य दीर्घायुष्ट्वेन वरणप्रसिद्धिं सूचयति ।।३५।।

**सत्याभिनवीया**– तत्रैव ततस्तु सा शन्तनुतोऽष्टपुत्रान् इति श्लोकः । तस्यार्थः । ततः तदनन्तरं सा प्रसिद्धा सा गङ्गा शन्तनुतस्तु शन्तनोरेव अष्टपुत्रानवाप्य सप्तपुत्रान् न्यहनत् । ततः तदनन्तरं गन्तुमिव गन्तुमेव मतिमाधाय तथा अष्टमपुत्रं हन्तुं मृषा उद्योगं चकारेत्येतत् हि प्रसिद्धमिति । एतेनैकेन सेत्यनेन पूर्णत्वात् द्वितीयः सेतिशब्दो व्यर्थ इति दूषणं निरस्तम् । एकस्य सेतिशब्दस्य प्रसिद्ध्यर्थकत्वाङ्गीकारात् । एतेनैव अष्टमं हन्तुं मृषोद्योगं चकारेत्यनेनैव पूर्णत्वात् हन्तुमिवेति इवशब्दो व्यर्थ इति दूषणं परास्तम् । हन्तुमिवेति इवशब्दस्य एवार्थत्वमङ्गीकृत्य गन्तुमिवेत्यनेनान्वयस्योक्तत्वात् ।।३५।।

**वरदराजीया–** ततः पतित्वेन शन्तनुवरणानन्तरं सा गङ्गा शन्तनुतः शन्तनोः सकाशादष्टपुत्रान् क्रमेणाप्य सप्त न्यहनत् । न तु एकम् । 'एषां दीर्घायुषम्' इति स्वयं वरस्य प्रार्थितत्वात् कथमष्टममपि हन्तुमुद्युक्तं चेत्यत आह– **गन्तुमिति** ।। ततः शन्तनोः सकाशात् गन्तुं मतिमाधाय निश्चयं कृत्वा सा गङ्गा मृषैव हन्तुं इवोद्योगं चकार । हि यस्मात् तस्मात् वरप्रार्थनं युक्तमिति भावः ।।३५।।

**अनन्तभट्टीया–** गन्तुं शन्तनुं विहाय गन्तुम् । अष्टमं हन्तुमिव ।।३५।।

**जनार्दनीया–** सा गङ्गा ततः शन्तनुगृहात् गन्तुं मतिं आधाय धृत्वा । तथा सप्तवद् अष्टमं पुत्रं हन्तुमिव वधार्थमिव मृषा उद्योगं प्रयत्नं चकार ।।३५।।

**ताम्रपर्णीया–** ।। **हन्तुमिति** ।। सप्त हन्तुमिव हन्तुं यथा हन्तुं यादृशमिति यावत् । [तथा उद्योगं चकार] । पूर्वान् सप्त हन्तुं यादृश उद्योगः ईदृशमेव उद्योगं भीष्मविषये मृषा वृथैव चकारेत्यर्थः । [उद्योगे न न्यूनता । परन्तु मृषा वृथा इत्याशयः] ।।३५।।

**चट्टी–** ततः अनन्तरं सा गङ्गा शन्तनुतः शन्तनोः सकाशाद् अष्टपुत्रान् क्रमेण अवाप्य सप्त पुत्रान् न्यहनत् । सा गङ्गा शन्तनोः सकाशाद् गन्तुं मतिं आधाय धृत्वा तथा सप्तपुत्रवत् अष्टमं पुत्रं हन्तुमिव वधार्थमिव मृषा उद्योगं प्रयत्नं चकार ।।३५।।

**अवस्थितिर्नातिसुखाय मानुषे यतः सुराणामत एव गन्तुम् ।**
**ऐच्छन्न तस्या हि बभूव मानुषो देहो नरोत्थो हि [१]तदाऽऽस शन्तनोः ।।३६।।**

**व्यासतीर्थीया–** पतिं विहाय किमिति गन्तुं मतिं चकारेत्यत आह– **अवस्थितिरिति** ।। मा भूदमानुषदेहिनो मानुषेष्ववस्थितिः सुखाय । अस्यास्तु किमित्यत आह– **न तस्या इति** ।। शन्तनोरप्यमानुषदेहत्वेऽवस्थितिः सुखाय स्यादित्यत आह– **नरोत्थ इति** ।।३६-३७।।

**वेदाङ्गतीर्थीया–** पतिं विहाय किमर्थं गन्तुं मतिं चकारेत्यतः गमने कारणमाह– **अवस्थितिरिति** ।। माभूदमानुषे देहिनो मानुषेष्वस्थितिः सुखाय । अस्यास्तु किमित्यत आह– **न तस्या इति** ।।३६।।

**वादिराजीया–** नातिसुखाय मानुषे इत्यत्र मानुषे मानुषदेहवतां समीपे अवस्थितिः दृश्यतया अवस्थितिः । तस्याः मानुषो देहो न बभूव हीति हिशब्देन मनुष्यदेहाप्राप्तौ 'न मानुषं गर्भमवाप्नुमो वयम्' इति वसूनां प्रार्थनाख्यकारणस्य प्रसिद्धिं सूचयति । अन्यथा पत्युर्मानुषदेहप्राप्तौ भार्याया मानुषदेहप्राप्तिः सुतरां उचितेति भावः ।।३६-४१।।

**मधुसूदनीया–** ।। **अत एवेति** ।। पितावदत्सर्वमिति वक्ष्यते । सर्वं भूतं भवत् भविष्यच्चेत्यर्थः ।।

---

१. 'तयास' इति जनार्दनीये पाठान्तरम् ।

**वरदराजीया–** पतिपरित्यागेन गन्तुं किमर्थं निश्चितवतीत्यत आह– **अवस्थितिरिति** ।। यतः कारणात् सुराणां देवानां देवदेहयुक्तानां सतां मानुषे मनुष्यसमीपे । सामीपिकाधिकरणे सप्तमी । अवस्थितिः अवस्थानं अतिसुखाय न भवति । अत एव कारणात् गन्तुमैच्छत् । हि यस्मात् तस्याः गङ्गायाः मानुषो देहो न बभूव । मूलरूपेणैव शन्तनोः समीपे स्थितवतीत्यर्थः । शन्तनोर्हि प्रतीपपुत्रत्वेन नरोत्थो मनुष्यादुत्पन्नो देह आस आसीत् तस्मात् गन्तुं निश्चितवतीत्यर्थः ।।३६।।

**अनन्तभट्टीया–** तस्याः मानुषो देहो न बभूव । शन्तनोः नरोत्थो देहः ।।३६।।

**जनार्दनीया–** पतिं हित्वा गमने कारणमाह– **अवस्थितिरिति** ।। सुराणां मानुषेषु मनुष्यसम्बन्धिगृहादौ अवस्थितिः संवासः अतिसुखाय न न भवेत् यतः अत एव गन्तुं ऐच्छत । गमने अन्यदपि कारणमाह– **न तस्या इति** ।। तस्याः गङ्गायाः देहः मानुषः मनुष्यसम्बन्धि, मनुष्यादुत्पन्न इत्यर्थः । न बभूव । शन्तनोः सः शापसम्बन्धिदेहः तथा गङ्गादेहवत् न । किन्तु नरोत्थो हि मनुष्यादुत्पन्न एव हि यस्मात् तस्माद् गन्तुं ऐच्छत इति सम्बन्धः । अत्र नञध्याहारः । 'तदास' इति पाठे तदा शापोत्पत्तिकाले । शन्तनोर्देहः नरोत्थो हि आस ।।३६।।

**ताम्रपर्णीया–** मानुषे नरे [मानुषदेहवति] ।।३६-३७।।

**चट्टी–** पतिं विहाय किमिति गन्तुं मतिं चकारेत्यत आह– **अवस्थितिरिति** ।। यतः कारणात् सुराणां देवदेहयुक्तानां सतां मानुषे मनुष्यसमीपे अवस्थितिः अवस्थानं अतिसुखाय न भवति । अत एव कारणात् गन्तुं पतिं मुक्त्वा गन्तुं ऐच्छत् । पतिं मुक्त्वा गमने कारणमाह– **न तस्या इति** ।। तस्याः गङ्गायाः देहः मानुषः मनुष्यसम्बन्धि मनुष्यादुत्पन्न इत्यर्थः । न बभूव । शन्तनोर्देहः नरोत्थो बभूव । शन्तनुदेहस्य शापेन नरोत्यत्वात् गङ्गादेहवन्न भवति । अतः तं विहाय गन्तुमैच्छदिति भावः ।।

**तां पुत्रनिधनोद्युक्तां न्यवारयत शन्तनुः ।**
**काऽसि त्वं हेतुना केन हंसि पुत्रान् नृशंसवत् ।।३७।।**

**वरदराजीया–** मृषोद्योगेन मतं सम्पन्नमित्याह– **तामिति** ।। पुत्रस्य निधने मरणे उद्युक्तां शन्तनुर्न्यवारयत निवारितवान् । नैनं जहीति निवारणे 'न तु मां निवारयेत्' इति समयो भग्नः । त्वं कासीति स्वरूपप्रश्ने 'कासीति न पृच्छेत्' इति समयो भग्नः । तथा नृशंसवत् हिंसकवत् केन हेतुना पुत्रान् हंसीति प्रश्नकरणे च 'मत्कर्मणो नैव पृच्छेत्' इति तृतीयोऽपि समयो भग्न इति भावः।।

**अनन्तभट्टीया–** तां न्यवारयत । त्वं कासि केन हंसीति । केन इत्येकम् । कासीति द्वितीयम् । एवमकर्तव्यं त्रितयमपि कृतम् । नृशंसवत् हिंसकवत् ।।३७।।

**जनार्दनीया**– शन्तनुः त्वं का असि? स्वरूपेण इति शेषः । केन हेतुना पुत्रान् नृशंसवत् राक्षसवत् हंसि हनिष्यसि । इत्युक्तेति शेषः । पुत्रस्य निधने हननविषये उद्युक्तां उद्योगयुक्तां तां गङ्गां न्यवारयत । 'तां पुत्र' इति पद्येन गङ्गया उक्तमकर्तव्यत्रयमपि अनेन कृतमिति सूचितं भवति ।।

**चट्टी**– शन्तनुस्त्वं कासि स्वरूपेणेति शेषः । केन हेतुना पुत्रान् नृशंसवत् नृहिंसकवत् हंसि हनिष्यसि, इत्युक्त्वेति शेषः । पुत्रस्य निधने हननविषये उद्युक्तां उद्योगयुक्तां तां गङ्गां न्यवारयत । गङ्गयोक्तमकर्तव्यत्रयमप्यनेन कृतमिति सूचितं भवति ।।३७।।

**रूपं सुरवरस्त्रीणां तव तेन न [१]पापकम् ।**
**भवेत् कर्म त्वदीयं तन्महत् कारणमत्र हि ।।३८।।**

**व्यासतीर्थीया**– राक्षसित्वद्योतके नृशंसित्वे दृश्यमानेऽपि कासीति प्रश्ने निमित्तमाह– **रूपमिति** ।।३८-४०।।

**वेदाङ्गतीर्थीया**– राक्षसीत्वप्रतीतिजनके नृशंसत्वे दृश्यमानेऽपि कासीति प्रश्ने निमित्तमाह– **रूपमिति** ।। तेन सुरवरस्त्रीरूपत्वेन त्वदीयं कर्म पापकं न । तत् तस्मात् अत्र हनने महत्कारणं भवेद्धि भवेदेव इति योज्यम् ।।३८-४१।।

**वरदराजीया**– ननु जातमात्रशिशुहननेन राक्षसित्वे सिद्धे कथं कासीति संशययुक्तप्रश्न इत्याह– **रूपमिति** ।। तव रूपं सुरवरस्त्रीणां रूपमिव प्रतीयत इत्यर्थः । तेन कारणेन त्वदीयं त्वया क्रियमाणं कर्म पापकं पापसाधकं न भवेत् । हि यस्मात् तस्मादत्र शिशुहनने कर्मणि भवेत् महत्कारणं स्यादिति तत्कारणप्रश्नो घटत इत्यर्थः ।।३८।।

**अनन्तभट्टीया**– राक्षसित्वद्योतके नृशंसित्वे सिद्धे कासीति प्रश्ने कारणमाह– **रूपमिति** ।। तव रूपं सुरवरस्त्रीणां तेन त्वदीयं कर्म पापं न भवेत् । तत् ततः अत्र महत्कारणमस्ति ।।३८।।

**जनार्दनीया**– नन्वेतस्याः पुत्रहननकर्मणा राक्षसीत्वे प्रसिद्धे कासीति प्रश्नः कुत इत्यत आह– **रूपमिति** ।। सुरवरस्त्रीणां रूपम्, इव इति शेषः । तव रूपम् । तेन कारणेन त्वदीयं त्वत् कर्म पुत्रवधरूपकर्म पापकं पापस्वरूपं न भवेत् हि यस्मात् तस्मात् अत्र पुत्रहिंसायां महत्कारणम्, अस्तीति शेषः ।।३८।।

**ताम्रपर्णीया**– ।। **रूपमिति** ।। '... अथ रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्यवपुष्षु श्लोकशब्दयोः' इति केशवः । तथा च ते रूपं आकृतिः सौन्दर्यं देहश्च सुरवरस्त्रीणां रूपमिव वर्तते । तेन कारणेन

१. 'पातकम्' इति ताम्रपर्णीपाठः ।

त्वदीयं तत्कर्म पातकं न भवेदिति योजना । अपरोक्षज्ञानोत्तरपापस्यालेपकत्वात् । अपरोक्षज्ञानित्वं च देवत्वादेव ज्ञायते इति भावः । ननु अपरोक्षज्ञानिकृतपापस्य अशुचित्वाद्यनापादकत्वेऽपि आनन्दह्रासकरत्वं स्यादित्यतोऽपि सुरवरस्त्रीणामित्युक्तम् । तेषां क्लृप्तसुखत्वादिति भावः । स्वरूपह्रासकरत्वाभावेऽपि प्रामव्यह्रासकरत्वं स्यादेवेत्यत आह– **महदिति** ।।३८-३९।।

**चट्टी–** नन्वेतस्याः पुत्रहननकर्मणा राक्षसीत्वे दृश्यमानेऽपि कासीति प्रश्नः कुत इत्यत आह– **रूपमिति** ।। तव रूपं सुरवरस्त्रीणां रूपमिव प्रतीयते । तेन कारणेन त्वदीयं त्वया क्रियमाणं तत्कर्म पुत्रवधरूपकर्म पापकं पापसाधनं न भवेत् । हि यस्मात् तस्मात् अत्र हिंसायां महत्कारणमस्तीति शेषः ।।३८।।

**तत् कारणं वद शुभे यदि मच्छ्रोत्रमर्हति ।**
**इतीरिताऽवदत् सर्वं प्रययौ च सुरापगा ।।३९।।**

**वरदराजीया–** तस्मात् सामान्यतो निश्चितमपि तत्कारणं यदि मच्छ्रोत्रं मम श्रवणेन्द्रियं श्रोतुमर्हति वदेत्यर्थः । शुभे इति सम्बोधनेन इदं शिशुहननं पापसाधनं न भवेदिति निश्चितमेवेति सूचयति । इतीरिता सुरापगा गङ्गा सर्वं वसूनां शापप्रकारं तत्कृतं स्वप्रार्थनमित्यादि सर्वं पूर्ववृत्तं अवदत् । इत्युक्त्वा प्रययौ चेत्यर्थः ।।३९।।

**अनन्तभट्टीया–** मच्छ्रोत्रं मया श्रोतुमित्यर्थः ।।३९।।

**जनार्दनीया–** नृशंसत्वव्यावृत्त्यर्थं शुभेति सम्बोधनम् । यदि मच्छ्रोत्रं मम श्रोत्रेन्द्रियं तत्कारणमर्हति । श्रोतुमिति शेषः । तर्हि वद सर्वं वसुकृतं कर्मादि ।।३९।।

**चट्टी–** नृशंसत्वव्यावृत्त्यर्थं शुभेति सम्बोधनम् । यदि मच्छ्रोत्रं मम श्रोत्रेन्द्रियं तत्कारणं श्रोतुमिति शेषः । अर्हति तर्हि वद तेन इतीरिता सुरापगा गङ्गा वसूनां शापप्रकारं तत्कृतस्वप्रार्थनमित्यादिसर्वं पूर्ववृत्तं अवदत् । प्रययौ च ।।३९।।

**न धर्मो देवतानां हि ज्ञातवासश्चिरं नृषु ।**
**कारणादेव हि सुरा नृषु वासं प्रकुर्वते ।**
**कारणापगमे यान्ति धर्मोऽप्येषां तथाविधः ।।४०।।**

**व्यासतीर्थीया–** स्वरूपकारणनिरूपणानन्तरमेव कस्माद् गतेति जिज्ञासायामाह– **न धर्म इति** ।। यदि ज्ञातवासो धर्मो न चेत् । केचन देवत्वेन ज्ञाता अपि नृषु वासं प्रकुर्वते तत्कथमित्यत आह– **कारणादेवेति** ।। देवत्वेन ज्ञातेऽपि वासो धर्मश्च स्यादित्याह– **धर्म इति** ।।४०।।

**वेदाङ्गतीर्थीया–** स्वरूपशिशुहननकारणनिरूपणानन्तरमेव कस्मात् गतेति जिज्ञासायाह– **नृधर्म इति** ।। नृषु ज्ञातवासो न धर्मो । धर्मो न चेत् केचित् ज्ञाता अपि कथं नृषु वासं प्रकुर्वते इत्यत उक्तम्– **कारणादेवेति** ।। धर्मरतानां देवानां कारणविशेषादपि कथमधर्माचरणमित्यत आह– **धर्मोऽप्येषामिति** ।। एषां देवानां धर्मोऽपि तथाविधः । यावत् कारणमवस्थानं तदपगमेऽपगम इत्येवंविधः धर्मः देवानां स्वाभाविकः ।।४०।।

**वादिराजीया–** ज्ञातवासश्चिरं नृषु इत्यत्र प्रत्यक्षेण स्वमूर्तेः ज्ञाततया वासः ज्ञातवासः । तत्वाभिमानितया अज्ञातदेवनां नृषु वासं व्यावर्तयितुं ज्ञातिपदम् । चिरमित्यनेन वरदानाद्यर्थं कदाचिदावासोऽस्तीति सूचयति । नृष्वित्यनेन देवर्ष्यादिभिस्सह ज्ञाततया चिरं वासोऽस्तीति सूचयति ।।

**वरदराजीया–** ननु सर्वकथनानन्तरमेव कुतो ययावित्यत आह– **न धर्म इति** ।। देवतानां देवदेहस्थितानां नृषु नृदेहं प्राप्तेषु चिरं बहुकालं ज्ञातवासः ज्ञातत्वेन वासो न धर्मो हि यस्मात्तस्मात् प्रययावित्यर्थः । नन्वितः पूर्वं कथं नृषु वासः कृत इत्यत आह– **कारणादिति** ।। कस्माच्चित् कारणादेव हि सुरा विद्यमानदेवतादेहा अपि नृषु समीपे वासं प्रकुर्वते । तत्कारणापगमे च स्वलोकं यान्ति । कुतः? कारणापगमे सति अत्रानवस्थानं एषां धर्मोऽपीत्यर्थः । न केवलमनवस्थानं धर्मः । अवस्थाने प्राप्तेऽपि तादृशो धर्मोऽस्तीत्याह– **तथाविध इत्यादिना** ।। एषां देवानां धर्मोऽपि तथाविधः तादृश इत्यर्थः । यावत्प्रयोजनं तावत् नृषु वासः प्रयोजने जाते सति निर्गमः इत्येवं विधो देवानां स्वाभाविको धर्म इति भावः ।।४०।।

**अनन्तभट्टीया–** ज्ञातवासः स्वरूपे ज्ञाते सति वासः ।।४०।।

**जनार्दनीया–** ननु कारणं उक्त्वा किञ्चित् कालं कुतो न स्थिता इत्यत आह– **नेति** ।। ज्ञाते सति वासः धर्मो न हि यस्मात् तस्मात् प्रययाविति सम्बन्धः । ननु पूर्वं कथं स्थिता इत्यत आह– **कारणादेवेति** ।। कारणस्य अपगमे अतिक्रमे सति यान्ति गच्छन्ति । ननु देवाः कारणविशेषेणापि अधर्मं कथं चरन्तीत्यत आह– **धर्मोऽपीति** ।। एषां देवानां धर्मोऽपि तथाविधः तादृश इत्यर्थः । यावत् प्रयोजनं तावन्नृषु संवासः । प्रयोजने जाते, ततो निर्गमः इत्येवं विधो देवानां स्वाभाविको धर्म इति भावः ।।४०।।

**ताम्रपर्णीया–** ननु मानुषेष्ववस्थितेः अतिसुखकारणत्वाभावेऽपि स्वरूपकारणप्रकटनानन्तरमेव कस्माद् गतेति जिज्ञासायामाह– **न धर्म इति** ।। हि यस्मात् न धर्मो अतः प्रययौ इति सम्बन्धः । वासहेतुमाह– **कारणादेवेति** ।। तथाविधः कारणापगमे यान्तीत्येवं रूप इत्यर्थः ।।४०।।

**चट्टी–** ननु कारणमुक्त्वा कुतो न स्थितेत्यत आह– **नेति** ।। देवतानां देवदेहे स्थितानां नृषु नृदेहं प्राप्तेषु चिरं बहुकालं ज्ञातवासः स्वरूपे ज्ञाते सति वासः न धर्मो । हि यस्मात् तस्मात् प्रययाविति सम्बन्धः । ननु पूर्वं कथं स्थितेत्यत आह– **कारणादेवेति** ।। देवतादेहा अपि सुराः कारणादेव नृषु वासं प्रकुर्वते । कारणस्यापगमे सति यान्ति गच्छन्ति । ननु देवाः कारणविशेषेणाप्यधर्मं कथं चरन्तीत्यत आह– **धर्मोऽपीति** ।। एषां देवानां धर्मोऽपि तथाविधः तादृश इत्यर्थः । यावत्प्रयोजनं तावत् नृषु संवासः । प्रयोजने जाते निर्गमनमित्येवं विधो देवानां स्वाभाविको धर्म इति भावः ।।४०।।

**अदृश्यत्वमसंस्पर्शो ह्यसम्भाषणमेव च ।**
**सुरैरपि नृजातैस्तु गुह्यधर्मो दिवौकसाम् ।।४१।।**

**व्यासतीर्थीया–** धर्मं विवृण्वन् आह– **अदृश्यत्वमिति** ।।४१-४७।।

**वेदाङ्गतीर्थीया–** रहस्यधर्ममप्याह– **अदृश्यत्वमिति** ।।४१।।

**वादिराजीया–** असंस्पर्शो हीति हिशब्देन तत्र प्रमाणप्रसिद्धिं सूचयति । नृजातैस्तु इत्यत्र मानुषजंननाख्यविशेषेण नृजातैरित्यर्थः । यथाकथञ्चित् नृजातत्वमात्रेण त्यागे रामकृष्णादीनामपि त्यागप्रसङ्गादिति भावः ।।४१।।

**वरदराजीया–** देवानां गुह्यधर्ममप्याह– **अदृश्यत्वमिति** ।। दिवौकसां देवानामेव सतां नृजातैः प्राप्तमनुष्यदेहैः सुरैरप्यदृश्यत्वं अनुपलभ्यत्वं असंस्पर्शः स्पर्शाभावः असम्भाषणं सम्भाषणाभावः इत्यादि गुह्यधर्म एव यतः ।।४१।।

**अनन्तभट्टीया–** देवधर्मान्तराण्याह– **अदृश्यत्वमिति** ।। दिवौकसां... । जातैः सुरैरपि अदृश्यत्वमसंस्पर्शः असम्भाषणञ्च गुह्यधर्मः ।।४१।।

**जनार्दनीया–** देवानां गुह्यं धर्ममप्याह– **अदृश्यत्वमिति** ।। दिवौकसां देवानां नृषु जातैः सुरैरपि अदृश्यत्वादि गुह्यधर्मः रहस्यधर्मः ।।४१।।

**ताम्रपर्णीया–** न तु देवानां नरेष्वावासस्य धर्मत्वे शन्तनोः पूर्वभर्तृत्वात् देवांशत्वात् कथं भर्तृत्यागो धर्मः स्यादित्यत आह– **अदृश्यत्वमिति** ।। अदृश्यत्वाद्येव धर्मो न तु दृश्यत्वादीत्येवार्थः । अत एवेति वा सम्बन्धः ।।४१-६२।।

**चट्टी–** देवानां गुह्यधर्ममप्याह– **अदृश्यत्वमिति** ।। दिवौकसां देवानां नृषु जातैः सुरैरपि अदृश्यत्व-मसंस्पर्शो असम्भाषणञ्च गुह्यधर्मः रहो धर्मः ।।४१।।

**अतः सा वरुणं देवं पूर्वभर्तारमप्यमुम् ।**
**नृजातं शन्तनुं त्यक्त्वा प्रययौ वरुणालयम् ॥४२॥**

**वेदाङ्गतीर्थीया–** अतः नृजातैः सुरैरपि अदृश्यत्वादेर्धर्मत्वात् ॥४२-४६॥

**वरदराजीया–** अतः कारणात् सा गङ्गा पूर्वभर्तारं वरुणदेहे भर्तारमपि अमुं नृषु जातं शन्तनुं त्यक्त्वा वरुणस्यालयं लोकं ययावित्यर्थः ॥४२॥

**जनार्दनीया–** अतः कारणात् सा गङ्गा देवं वरुणं वरुणस्वरूपम् । पूर्वभर्तारमप्यमुम् । नरि नरे जातं शन्तनुं त्यक्त्वा, आज्ञया तत्सुतमादाय प्रययौ ॥४२॥

**चट्टी–** अतः कारणात् सा गङ्गा देवं वरुणं वरुणस्वरूपं पूर्वभर्तारमपि अमुं, नरि नरे जातं शन्तनुं त्यक्त्वा वधोद्योगात् अष्टमपुत्रवधप्रयत्नात् निवृत्ता सति भर्तुरभ्यनुज्ञयैव उर्वरितमष्टमं सुतमादाय वरुणस्यालयं गृहं प्रति ययौ । सा गङ्गा पुत्रं बृहस्पतौ तद्वशे ददौ ॥४२-४३॥

**सुतमष्टममादाय भर्तुरेवाप्यनुज्ञया ।**
**वधोद्योगान्निवृत्ता सा ददौ पुत्रं बृहस्पतौ ॥४३॥**

**वादिराजीया–** वधोद्योगान्निवृत्ता सा भागीरथी भर्तुरनुज्ञयैवाष्टमं सुतमादाय गता सती तं पुत्रं बृहस्पतौ ददाविति योग्यपदाध्याहारेण योजना ॥४३-४९॥

**वरदराजीया–** किं स्वयमेव गतवती नेत्याह– **सुतमिति** ॥ भर्तुरनुज्ञयैव वधोद्योगात् पुत्रवधप्रयत्नात् निवृत्ता सा गङ्गा अष्टमं उर्वरितं सुतमादायेति । पुत्रं नीत्वा किं कृतवतीत्याह– **ददाविति** ॥ बृहस्पतौ बृहस्पतिवशे ॥४३॥

**अनन्तभट्टीया–** वधोद्योगान्निवृत्ता सा भर्तुः भर्तुरेवाभ्यनुज्ञया अष्टमं सुतमादाय ॥४३॥

**जनार्दनीया–** कथम्भूता? वधोद्योगात् अष्टमपुत्रवधप्रयत्नात् निवृत्ता परावृत्ता । सा पुत्रं बृहस्पतौ तद्वशे ददौ ॥४३॥

**देवव्रतोऽसावनुशासनाय मात्रा दत्तो [१]देवगुरौ शतार्द्धम् ।**
**संवत्सराणामखिलांश्च वेदान् समभ्यसत् तद्वशगान्तरात्मा ॥४४॥**

---

१. 'साक्षाद्ददर्श यो देवान् सर्वानिन्द्रपुरोगमान् । बृहस्पतिपुरोगांस्तु देवर्षीनसकृत्प्रभुः ॥ तोषयित्वोपचारेण राजनीतिं अधीतवान् । उशना वेद यच्छास्त्रं देवासुरगुरुर्द्विजः । स च धर्मं सवैयाख्यं प्राप्तवान् कुरुसत्तमः ॥' इति शान्तिपर्वणि.३६.८-१०।

**वरदराजीया–** किमर्थं ददावित्यत आह– **देवव्रत इति** ।। असौ देवव्रतो देवव्रतनामा अष्टमपुत्रो मात्रा गङ्गया अनुशासनाय वेदविद्याशिक्षणाय देवगुरौ बृहस्पतौ तद्वशे दत्तः संवत्सराणां शतार्धं पञ्चाशद्वर्षपर्यन्तमिति यावत् । अखिलान् स्वयोग्यान् वेदान् समभ्यसत् । तत्र इतिकर्तव्यतामाह– **तद्वशगेति** ।। तद्वशगः तस्य देवगुरोः वशे स्थितः तत्प्रवणः अन्तरात्मा मनो यस्यासौ तथा । एवंभूतः सन् समभ्यसदित्यर्थः ।।४४।।

**अनन्तभट्टीया–** अनुशासनान्निमित्तात् अनुशासनायेत्यर्थः । अन्तरात्मा चित्तम् । शतार्धं पञ्चाशत् ।।

**जनार्दनीया–** मात्रा देवगुरौ बृहस्पतिवशे अनुशासनाय वेदशिक्षणार्थं दत्तः स्थापित इत्यर्थः । देवव्रतः देवव्रतनामासौ गङ्गापुत्रः संवत्सराणां शतार्धम्, पञ्चाशद्वर्षाणीत्यर्थः । तावत्कालपर्यन्तं तस्य बृहस्पतेः वशगः वश्यवर्ती इत्यर्थः, अन्तरात्मा चित्तं यस्य स तथा सन् । अखिलान् खिलरहितान्, अनन्तरितानिति यावत् । वेदान् । सम्यगर्थपूर्वकम् इत्यर्थः । अभ्यसत् अध्ययनं कृतवान् इत्यर्थः ।।

**भावचन्द्रिका–** देवे बृहस्पतौ व्रतवत्त्वात् देवव्रतः ।।४४-४८।।

**चट्टी–** देवानां व्रतमिव व्रतं यस्य सः देवव्रतनामासौ गङ्गापुत्रः मात्रा देवगुरौ बृहस्पतिवशे अनुशासनाय वेदशिक्षणार्थं दत्तः स्थापितः सन् संवत्सराणां शतार्धं पञ्चाशद्वर्षाणीत्यर्थः । तावत्कालपर्यन्तं तस्य बृहस्पतेः वशगः वशवर्ती अन्तरात्मा चित्तं यस्य सः तथाभूतः, सन् अखिलान् वेदान् सम्यगर्थपूर्वकं अभ्यसत् अध्ययनं कृतवानित्यर्थः ।।४४।।

**ततश्च मात्रा जगतां गरीयस्यनन्तपारेऽखिलसद्गुणार्णवे ।**
**रामे[१] भृगूणामधिपे प्रदत्तः शुश्राव तत्त्वं च शतार्द्धवर्षम् ।।४५।।**

**वेदाङ्गतीर्थीया–** ।। **अखिलसद्गुणार्णव इति** ।। गुर्णाणवत्वोक्त्या अर्णवस्य पारवत्वाद् अस्यापि पारप्रतीतेः तां निरस्यति– **अनन्तपार इति** ।। निरवधिकपूर्णगुण इत्यर्थः । तत्वं भगवत्स्वरूपप्रतिपादक-शास्त्रम् ।।४५-४९।।

**वरदराजीया–** ततो वेदाभ्यासानन्तरं स्वस्य देवव्रतस्य मात्रा गङ्गया, जगतां लोकानां गरीयसि श्रेष्ठे, अनन्तपारे न विद्यते अन्तः विनाशः पारः परिमितश्च यस्यासौ तथा । अखिलाः पूर्णाश्च ते सन्तो निर्दोषाश्च गुणाश्च तैरर्णव इव तस्मिन् । भृगूणामधिपे रामे भार्गवराम इति यावत् । दत्तः तद्वशे प्रदत्तः शतार्धवर्षं पञ्चाशद्वर्षपर्यन्तं तत्वं परमात्मादितत्वं शुश्राव ।।४५।।

---

१. 'भार्गवाच्यवनाच्चापि वेदानङ्गोपबृंहितान् । प्रतिपेदे महाबुद्धिः वसिष्ठाच्चरितव्रतः ।। मार्कण्डेयमुखात् कृत्स्नं यतिधर्ममवाप्तवान् । रामादस्त्राणि शक्राच्च प्राप्तवान् पुरुषर्षभः ।।' इति शान्तिपर्वणि.३६.११-१३ ।

**अनन्तभट्टीया–** अनन्तपारे अपारे ।।४५।।

**जनार्दनीया–** ततः अध्ययनानन्तरं गरीयसि श्रेष्ठे । अखिलसद्गुणैः अर्णव इव अर्णवः । उभयकूलावधिसमुद्रवत् हरेरपि पारः प्रतीयते तं निवारयति– **अनन्तेति** ।। अनन्तः अन्तरहितः, पारः अवधिर्यस्य स तथा तस्मिन् । अनेन निरवधिकपरिपूर्णगुण इत्युक्तं भवति । रामे परशुरामे प्रदत्तो देवव्रतः तत्त्वं हरिस्वरूपप्रतिपादकशास्त्रम् ।।४५।।

**चट्टी–** ततोऽनन्तरं सः देवव्रतः मात्रा गङ्गया जगतां लोकानां गरीयसि श्रेष्ठे अखिलसद्गुणैरर्णव इव तस्मिन् । उभयकूलावधिसमुद्रवद् हरेरपि पारः प्रतीयते तं निवारयति– **अनन्तेति** ।। अनन्तो अन्तरहितः पारः अवधिर्यस्य स तथा तस्मिन् । अनेन निरवधिकपरिपूर्णगुण इत्युक्तं भवति । भृगूणां अधिपे रामे परशुरामे प्रदत्तस्सन् शतार्धवर्षं पञ्चाशद्वर्षपर्यन्तं तत्त्वं हरिस्वरूपप्रतिपादकशास्त्रं शुश्राव ।।

**स पञ्चविंशत् पुनरब्दकानामस्त्राणि चाऽभ्यस्य पतेर्भृगूणाम् ।**
**मात्रा समानीय निजे तटे तु संस्थापितः प्रार्पयितुं स्वपित्रे ।।४६।।**

**वरदराजीया–** स देवव्रतः पुनः तत्वश्रवणानन्तरं [अस्मिन्नेव] रामसमीपे निवसन् भृगूणां पतेः सकाशात् अब्दकानां वर्षाणां पञ्चविंशत् पञ्चविंशतिपर्यन्तं अस्त्राणि च अभ्यस्य आगत इत्यध्याहारः । तेनाभ्यस्य स्थापित इति समानकर्तृत्वम् । मात्रा गङ्गया समानीय निजे तटे संस्थापितः । किमर्थं स्थापित इत्यत उक्तम्– **प्रार्पयितुमिति** ।। स्वस्य पित्रे शन्तनवे प्रार्पयितुं समर्पयितुम् ।।४६।।

**अनन्तभट्टीया–** पञ्चविंशत् पञ्चविंशद्भिः ।।४६।।

**जनार्दनीया–** स देवव्रतः पुनः शतार्धवर्षानन्तरम् । पतेः 'षष्ठीयुक्तः छन्दसि वा' [सि.कौ.३३८९] इति घिसञ्ज्ञा । अभ्यस्य, तत्रस्थोऽभूदिति शेषः । स्वपित्रे देवव्रतस्य पित्रे शन्तनवे प्रार्पयितुं दातुं मात्रा समानीय, रामाश्रमादिति शेषः । निजे तटे स्वतीरे संस्थापित इत्यर्थः ।।४६।।

**चट्टी–** सः देवव्रतः पुनः तत्त्वश्रवणानन्तरं भृगूणां पतेः सकाशादेव अब्दकानां संवत्साराणां पञ्चविंशत् पञ्चविंशतिं अस्त्राणि चाभ्यस्य स्वपित्रे देवव्रतपित्रे शन्तनवे प्रार्पयितुं दातुं मात्रा समानीय आदाय, आश्रमादिति शेषः । निजे तटे स्वतीरे संस्थापितः ।।४६।।

**स तत्र बद्ध्वा शरपञ्जरेण गङ्गां विजह्रेऽस्य पिता तदैव ।**
**व्रजन् मृगार्थी तृषितो विलोकयन् गङ्गामतोयामभवत् सुविस्मितः ।।४७।।**

**मधुसूदनीया–** ।। **गङ्गामतोयामिति** ।। अतोयामल्पजलामित्यर्थः । तथाचोक्तम्– 'भागीरथीमल्पजलां ददर्श सरितां वरः । स्पन्दते किन्त्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा ।।' इत्यादिपर्वणि [१०७.२४-२५]। अल्पस्वे निःस्वप्रयोगात् अल्पजलविवक्षया अतोयामित्युक्तिस्सम्भवतीति ध्येयम् । यत्तु 'अतोयां न विद्यते उदकं यस्यां सा ताम्' इति वरदराजीयव्याख्यानं तन्न । उक्तमानविरोधात् ।।४७-५०।।

**वरदराजीया–** स देवव्रतः तत्र तटे गङ्गां विष्णुपदीं शरपञ्जरेण शरैः कृतेन पञ्जरेण बद्ध्वा विजह्रे जलक्रीडां चकार । अस्य देवव्रतस्य पिता शन्तनुः तदैव जलक्रीडासमये मृगार्थी मृगयुः व्रजन् मध्ये तृषितो गङ्गां प्राप्तः गङ्गाम् । अतोयां न विद्यते तोयमुदकं यस्यां सा तथोक्ता ताम् । विलोकयन् पश्यन् सुविस्मितो अभवदित्यर्थः ।।४७।।

**जनार्दनीया–** स देवव्रतः । शरपञ्जरेण गङ्गां बध्वा गङ्गाप्रवाहस्य निरोधं कृत्वेत्यर्थः । तत्र तीरे विजह्रे चिक्रीडे । तदैव काले अस्य देवव्रतस्य पिता मृगार्थी मृगानिच्छन् व्रजन् गच्छन् तृषितः अतोयां अल्पजलाम् । अनूदरा कन्येतिवत् । तदुक्तं आदिपर्वणि 'भागीरथीमल्पजलां शन्तनुर्दृष्टवान् नृपः' [१०७.२४] इति । गङ्गां विलोकयन् पश्यन् सुविस्मितः अतिविस्मययुक्तो, अभूदिति शेषः ।।

**अतिविशद्–** गङ्गामतोयामित्यत्र अतोयामल्पजलामित्यर्थः । 'भागीरथीमल्पजलां शन्तनुर्दृष्टवान्नृपः' इति ।।४७।।

**भारतश्री–** अतोयां अल्पतोयाम् । 'अल्पतोयाभवत् गङ्गा' इति भारतोक्तेः ।।४७-५१।।

**भावचन्द्रिका–** 'भागीरथीं अल्पजलां ददर्श सरितां वराम्' इति वचनात् अल्पस्वे निःस्वव्यपदेशवत् अतोयामित्याह ।।४७-५६।।

**चट्टी–** सः देवव्रतः शरपञ्जरेण गङ्गां बद्ध्वा, प्रवाहस्य निरोधं कृत्वेत्यर्थः । तत्र तीरे विजह्रे चिक्रीडे । तदैव काले अस्य देवव्रतस्य पिता शन्तनुः मृगार्थी गच्छन् व्रजन् तृषितो अतोयामल्पजलाम् । अनुदरा कन्येतिवत् । तथा चोक्तम्– 'भागीरथीमल्पजलां ददर्श सरितांवरः । [शन्तनुः दृष्टवान् नृपः] स्यन्दते किन्त्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा ।।' इत्यादिपर्वणि । अल्पस्वेऽपि निस्व इति प्रयोगात् अल्पजलविवक्षया अतोयामित्युक्तिस्सम्भवतीति बोध्यम् । एतादृशीं गङ्गां विलोकयन् सुविस्मितो अतिविस्मययुक्तो अभवत् ।।४७।।

**स मार्गयामास ततोऽस्य [१]हेतुं ज्ञप्त्यै तदा स्वं च ददर्श सूनुम् ।**
**क्रीडन्तमस्त्रेण बभूव सोऽपि क्षणाददृश्यः पितृदर्शनादनु ।।४८।।**

१. 'हेतुज्ञप्त्यै' इति व्यासतीर्थवरदराजचट्टीपाठः । 'हेतुं ज्ञप्त्यै' इति अनन्तभट्टजनार्दनपाठः ।

**व्यासतीर्थीया–** अस्य प्रवाहाभावस्य हेतुज्ञप्त्यै ॥४८-५१॥

**वेदाङ्गतीर्थीया–** अस्य अतोयत्वस्य । मार्गयामास, न तत्कर्तारमिति शेषः ॥५०-५३॥

**वादिराजीया–** क्षणाददृश्य इत्यत्र परमोपकर्त्र्या मात्रैवाहं पित्रे देया इति मनसा अदृश्योऽभूदिति भावः ॥५०-५१॥

**वरदराजीया–** ततस्तदनन्तरं स शन्तनुः अस्या गङ्गाया निरुदकस्य हेतुज्ञप्त्यै कारणज्ञानार्थं मार्गयामास विचारितवान् । तदा मार्गणे कृते सति स्वं स्वकीयं सूनुं सुतं देवव्रतं अस्त्रेण क्रीडन्तं ददर्श अपश्यदित्यर्थः । सोऽपि देवव्रतोऽपि पितृदर्शनात् शन्तनुदर्शनात् अनु अनन्तरमेव क्षणात् क्षणमात्रेण अदृश्यो बभूवेत्यर्थः ॥

**अनन्तभट्टीया–** अस्य प्रभावस्य हेतुं ज्ञप्त्यै ॥५०॥

**जनार्दनीया–** ततः स शन्तनुः अस्य अतोयत्वस्य हेतुं ज्ञप्त्यै ज्ञातुं मार्गयामास । तदा तत्तीरे अस्त्रेण क्रीडन्तं स्वं स्वकीयं सुतं ददर्श । सोऽपि पितृदर्शनात् क्षणात् अनु, ल्यब्लोपे पञ्चमी । अदृश्यो बभूव ॥४८॥

**चट्टी–** ततो अनन्तरं सः शन्तनुः अस्य अल्पतोयस्य हेतुज्ञप्त्यै कारणज्ञानाय मार्गयामास । तदा तत्र तीरे अस्त्रेण क्रीडन्तं स्वं स्वकीयं सूनुं ददर्श । सोऽपि देवव्रतोऽपि पितृदर्शनाद् अनु अनन्तरं अदृश्यो वभूव ॥५०॥

**मीमांसमानं तमवाप गङ्गा सुतं समादाय पतिं जगाद च ।**
**अयं सुतस्ते परमास्त्रवेत्ता समर्पितो वीर्यबलोपपन्नः ॥४९॥**

**वरदराजीया–** मीमांसमानं कोऽयमिति विचारयन्तं शन्तनुम् । सुतं भीष्मम् । पतिं शन्तनुं जगाद । किमिति । अयं देवव्रतः परमाणि अस्त्राणि जानातीति तथा । वीर्यं पराक्रमः बलं शक्तिः, ताभ्यां उपपन्नो युक्तः ॥४९॥

**जनार्दनीया–** मीमांसमानं तं कोऽसौ? क्व गतः? इति विचारयन्तम् ॥४९॥

**चट्टी–** गङ्गा सुतं भीष्मं समादाय मीमांसमानं कोऽसौ ? क्व गतः ? इति विचारयन्तं तं शन्तनुमवाप । परमास्त्रवेत्ता । वीर्यं पराक्रमो वलं शक्तिः ताभ्यां उपपन्नः । अयं ते सुतः तव समर्पितः ॥४९॥

**अस्याग्रजाः स्वां स्थितिमेव याता हरेः पदाम्भोजसुपाविते जले ।**
**तनूर्मदीये प्रणिधाय तस्मात् तान् मा शुचोऽनेन च मोदमानः ॥५०॥**

**वादिराजीया–** अस्य भीष्मस्याग्रजाः अग्रे मयि जाताः सप्त कुमारा इत्यर्थः ।।५०-५५।।

**वरदराजीया–** ते अस्य सुतस्याग्रजाः स्वां स्थितिं स्वस्वरूपसंस्थितिं याताः प्राप्ताः । विष्णोः पादारविन्दसंस्पर्शेन अत्यन्तपवित्रे मदीये मयि विद्यमाने विष्णुपदीजले तनूः देहान् प्रणिधाय त्यक्त्वा । त्वश्च अनेन सुतेन मोदमानः सन् मृतान् सुतान् प्रति मा शुचः शोकं मा कार्षीः ।।५०।।

**अनन्तभट्टीया–** मदीये जले तनूः देहान् प्रणिधाय ।।५०।।

**जनार्दनीया–** अस्य अग्रजाः सप्त । हरेः पदाम्भोजेन पादकमलेन सुपाविते पवित्रीकृते । मदीये, गङ्गासम्बन्धिनि इत्यर्थः । जले तनूः देहान् प्रणिधाय स्वां स्थितिं मूलरूपस्थितिं याताः प्राप्ताः । यस्मात् तस्मात् अनेन पुत्रेण मोदमानः सन् तान् स्वमूलरूपं प्राप्तान् प्रति मा शुचः शोकं मा कुर्वित्यर्थः ।।५०।।

**चट्टी–** अस्य देवव्रतस्य अग्रजाः सप्त हरेः पदाम्भोजेन पादकमलेन सुपाविते अतिपवित्रीकृते मदीये गङ्गासम्बन्धिनि इत्यर्थः । जले तनूः देहान् प्रणिधाय स्वां स्थितिं मूलरूपस्थितिं याताः प्रयाताः यस्मात् तस्मात् अनेन पुत्रेण मोदमानः सन् तान् स्वमूलरूपं प्राप्तान् प्रति मा शुचः शोकं मा कुरु इत्यर्थः ।।५०।।

**इति प्रदायामुमदृश्यतामगाद् गङ्गा तमादाय ययौ स्वकं गृहम् ।**
**राजाऽभिषिच्याऽथ च यौवराज्ये मुमोद तत्सद्गुणतर्पितो भृशम् ।।५१।।**

**वरदराजीया–** इत्युक्त्वा गङ्गा अमुं देवव्रतं प्रदाय शन्तनवे स्वयमदृश्यतामप्रत्यक्षतां अगात् । राजा शन्तनुः तं समादाय स्वकं गृहं ययौ । अथ गृहं प्रति गमनानन्तरम् । युवराजस्य भावो यौवराज्यं तस्मिन् । अभिषिच्य स्थापयित्वा । तत्सद्गुणतर्पितः तस्य देवव्रतस्य ये सन्तः गुणास्तैस्तर्पितः सन्तोषितः ।।५१।।

**जनार्दनीया–** अमुं पुत्रम् । राजा तं देवव्रतम् । अथ गृहप्रवेशानन्तरं भृशं तस्य पुत्रस्य, सद्गुणैः ज्ञानभक्त्यादिगुणैः तर्पितः तृप्तिं प्रापितः शन्तनुः यौवराज्ये युवराजपदे अभिषिच्य मुमोद ।।५१।।

**भारतश्री–** अथ चेति चशब्देन विवाहान्तरमकृत्वेति सूच्यते ।।५१-५४।।

**चट्टी–** गङ्गा इत्युक्त्वा अमुं देवव्रतं शन्तनवे प्रदाय स्वयमदृश्यतां अप्रत्यक्षतामगात् । राजा शन्तनुः तं सुतमादाय स्वकं गृहं ययौ । अथ गमनानन्तरं तं यौवराज्ये अभिषिच्य तस्य सद्गुणैः तर्पितस्सन् भृशं मुमोद ।।५१।।

**पुनः स पित्राऽनुमतो बृहस्पतेरवाप वेदान् पुरुषायुषोऽर्द्धतः ।**
**रामात् तथाऽस्त्राणि पुनस्त्ववाप तावद्भिरब्दैस्त्रिशतैश्च तत्त्वम् ॥५२॥**

**व्यासतीर्थीया–** तावद्भिः पञ्चविंशद्भिः ॥५२-५४॥

**वेदाङ्गतीर्थीया–** पुरुषायुषोऽर्धतः पुरुषायुषं नाम शतवर्षाणि । तदर्धतः पञ्चाशदब्दतः । तावद्भिः पञ्चाशद्भिः ॥५२॥

**मधुसूदनीया–** ॥ **रामात्तथेति** ॥ 'सपञ्चविंशत् पुनरब्दकानां अस्त्राणि' इति पूर्वोक्तप्रकारेण यथा पूर्वं पञ्चविंशत्यब्दपर्यन्तं अस्त्राणि तावद्भिरब्दैः पञ्चविंशतिसङ्ख्याकैरित्यर्थः । यत्तु 'पुनरपि रामात् भार्गवरामात् तावद्भिः पञ्चाशदब्दैः' इति वरदराजीयव्याख्यानं तन्न । महाभारतविरोधापत्तेः । तत्र हि भीष्मस्य पञ्चाशदब्दानां अस्त्राभ्यासकालत्वेनोक्तेः । एवं व्याख्याने पञ्चविंशत्यब्दानां आधिक्यलाभेन तद्विरोधो सुस्थिरः स्यात् ॥५२-५५॥

**वरदराजीया–** पुनः पुनरपि स्वस्य पित्रा शन्तनुना अनुमतः संमतः तेन आज्ञप्त इति यावत् । पुरुषायुषः शतवर्षैः समितस्यार्धतः पञ्चाशद्भिर्वर्षैः तथा पुनरपि रामात् भार्गवरामात् तावद्भिः पञ्चाशद्भिः अब्दैः वर्षैः अस्त्राणि अवाप प्राप्तवान् । पुनः त्रिशतैः वर्षैश्च तत्वं परमात्मादितत्वं शुश्रावेति शेषः ॥५२॥

**अनन्तभट्टीया–** तस्मात् पुरुषायुषार्धतः पञ्चाशद्वर्षेभ्यः । तावद्भिः पञ्चविंशत्या । तत्वं परमात्मादितत्वम् ॥५२॥

**जनार्दनीया–** अनुमतः सम्मतः । पुरुषायुषस्य अर्धतः, पञ्चदशाब्दैः इत्यर्थः । 'शतायुर्वै पुरुषः शतेन्द्रियः' इति श्रुतिः । तावद्भिः पूर्वोक्तैः पञ्चविंशद्भिः ॥५२॥

**भारतश्री–** तत्त्वमिति । तत् त्वमिति विच्छेदः ॥५२॥

**चट्टी–** पुनरपि स्वपित्रा शन्तनुनानुमतः सम्मतः तेनानुज्ञप्तस्सन् इति यावत् । पुरुषायुषोऽर्धतः पञ्चाशदब्दैरित्यर्थः । बृहस्पतेस्सकाशात् वेदान् अवाप ॥ **रामात् तथेति** ॥ 'सः पञ्चविंशत् पुनरब्दकानामस्त्राणि चाभ्यस्य' इति पूर्वोक्तप्रकारेण यथा रामादस्त्राण्यवाप तथा तावद्भिः अब्दैः पञ्चविंशतिसङ्ख्याकैरब्दैरित्यर्थः । 'तावद्भिः पञ्चाशदब्दैः' इति व्याख्यानं भारतविरुद्धम् । तत्र हि भीष्मस्य पञ्चाशदब्दानामस्त्राभ्यासकालत्वेनोक्तेः । एवं व्याख्याने पञ्चविंशत्यब्दानामाधिक्यं भवतीति । त्रिशतैः वर्षैः तत्त्वं चावाप ॥५२॥

**स सर्ववित्त्वं समवाप्य रामात् समस्तविद्याधिपतेर्गुणार्णवात् ।**
**पितुः समीपं समवाप्य तं च शुश्रूषमाणः प्रमुमोद वीरः ॥५३॥**

**वरदराजीया–** स देवव्रतः सर्ववित्त्वं सर्वज्ञत्वम् । नेदमाश्चर्यमित्यभिप्रायेण रामस्य विशेषणद्वयम् । पितुः शन्तनोः । तं पितरं शुश्रूषमाणः सेवमानः ॥५३॥

**अनन्तभट्टीया–** शुश्रूषमाणः सेवमानः ॥५३॥

**जनार्दनीया–** स देवव्रतः । सर्वविदो भावः सर्ववित्वम् । सर्वज्ञत्वम् इत्यर्थः । तं पितरं शुश्रूषमाणः सेवमानः ॥५३॥

**भारतश्री–** समवाप्य तं चेति तदा पञ्चविंशदधिकपञ्चशतवर्षः देवव्रतः पितरं शुश्रूषमाणः प्रमुमोद ॥

**चट्टी–** वीरः सः देवव्रतः समस्तविद्याधिपतेः गुणार्णवात् परशुरामात् । सर्वविदो भावः सर्ववित्वम् । सर्वज्ञत्वमित्यर्थः । समवाप्य पितुः शन्तनोः समीपं समवाप्य तं पितरञ्च शुश्रूषमाणः सन् प्रमुमोद ॥५३॥

**यदैव गङ्गा सुषुवेऽष्टमं सुतं तदैव यातो मृगयां स शन्तनुः ।**
**शरद्वतो जातमपश्यदुत्तमं वने विसृष्टं मिथुनं त्वयोनिजम् ॥५४॥**

**वेदाङ्गतीर्थीया–** कृपाद्युत्पत्तिं वदिष्यन् उपोद्घातमाह– **यदैवेति** ॥५४॥

**वादिराजीया–** तु शन्तनुः परिपालयिष्यतीति कार्यविशेषेण वने विसृष्टं मिथुनमिति सम्बन्धः । अतो मुनेर्न नैर्घृण्यमिति भावः । तु वक्ष्यमाणोर्वशीदर्शनमात्रेण रेतःपाताख्यकारणविशेषात् अयोनिजं मातृयोनावजातमिति वा ॥५४-५९॥

**वरदराजीया–** देवव्रतसमानकालीनोत्पत्तिकराजान्तरं वक्तुमाह– **यदैवेत्यादिना** ॥ अष्टमं सुतं देवव्रतम् । शरद्वतो ऋषेः सकाशात् जातं मिथुनं स्त्रीपुरुषयुग्मम् । पुरुषादेवोत्पत्तिं सम्भावयति– **अयोनिजमिति** ॥ तुशब्देनेतरमिथुनापेक्षया विशेषमाह । अत एवोत्तममित्युक्तम् ॥५४॥

**जनार्दनीया–** कृपाद्युत्पत्तिं वक्तुं तदुपोद्घातमाह– **यदैवेति** ॥ शरद्वतः शरद्वानिति नामवान् ऋषिः तस्मात् जातं, विसृष्टं त्यक्तम् । तुशब्दो विशेषद्योतकः । तं विशेषमाह– **अयोनिजमिति** ॥ योन्यां न जातम् इत्यर्थः । अत एवोत्तमं मिथुनं कन्या पुत्र इति द्वन्द्वं अपश्यत् ॥५४॥

**भारतश्री–** यदा यस्मिन् दिवसे । तदा तस्मिन् दिवसे । जातमपश्यत् ॥५४॥

**चट्टी**– कृपोत्पत्तिं वक्तुं तदुपोद्घातमाह– **यदैवेति** ।। यदैव गङ्गा अष्टमं सुतं देवव्रतं सुषुवे तदैव सः शन्तनुः मृगयां यातस्सन् शरद्वतस्तन्नामकात् ऋषेः जातं वने विसृष्टं त्यक्तं अयोनिजं उत्तमं मिथुनं स्त्रीपुरुषयुगलं अपश्यत् ।।५४।।

**शरद्वांस्तु[1] तपः कुर्वन् ददर्श सहसोर्वशीम् ।**
**चस्कन्द रेतस्तस्याऽथ शरस्तम्बे ततोऽभवत् ।।५५।।**

**व्यासतीर्थीया**– शरद्वतो मिथुनोत्पत्तिं स्पष्टयन्नाह– **शरद्वानिति** ।।५५।।

**वेदाङ्गतीर्थीया**– शरद्वतो जातमित्युक्तमेव विवृणोति– **शरद्वानिति** ।। शरस्तम्बे चस्कन्द इति सम्बन्धः । ततः रेतसः ।।५५।।

**वरदराजीया**– शरद्वतो जातमित्युक्तं विवृणोति– **शरद्वानिति** ।। सहसा दैवात् । उर्वशीं अप्सरसम् । अथ दर्शनमात्रानन्तरं तस्य शरद्वतो रेतः चरमधातुविशेषः, शराणां वेणुविशेषाणां स्तम्बे गुल्मे चस्कन्द पपात । ततो रेतसो अभवत्, मिथुनमिति शेषः ।।५५।।

**अनन्तभट्टीया**– ततः... ।।५५।।

**जनार्दनीया**– अयोनिजत्वं विशदयति– **शरद्वानिति** ।। सहसा अकस्मात् । अथ उर्वशीदर्शनानन्तरं तस्य शरद्वतः रेतः शुक्रं, शराणां तृणविशेषाणां स्तम्बे गुल्मे चस्कन्द सृतम् । ततो रेतसः ।।५५।।

**भावचन्द्रिका**– तुशब्देन धनुर्विद्यातिशयार्थं तप इत्याह । तपोविघ्नाय इन्द्रप्रेषितत्वात् तदाह– **सहसेति** ।। पितैव ध्यानबलेन ज्ञात्वा आगत्य उपनयनादिसंस्कारं कृतवान् कृपस्य सः [आदि.१४०.१५-२४] ।।५५-६४।।

**चट्टी**– अयोनिजत्वं दर्शयति– **शरद्वानिति** ।। शरद्वान् तपः कुर्वन् सहसा अकस्मादुर्वशीं ददर्श । अथ उर्वशीदर्शनानन्तरं तस्य शरद्वतो रेतः शुक्रं, शराणां तृणविशेषाणां स्तम्बे गुल्मे चस्कन्द सृतम् । ततो रेतसः रुद्राणां मध्ये य इति शेषः । विष्कम्भ इति नाम प्रसिद्धः सः भूभारस्य हरणे संहारविषये हरेरङ्गतां सहायतां प्राप्तुमभवत् । तथा बृहस्पतेः भार्या या तारा साप्यभवदिति श्लोकद्वयस्य सम्बन्धः । तारायाः हर्यङ्गत्वं तु अश्वत्थामार्थं गवार्थं द्रोणप्रेरणादिनेति मन्तव्यम् ।।५५-५६।।

---

१. 'शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात् किल । शरस्तम्बेऽपतद् रेतो मिथुनं तदभूच्छुभम् ।। तद् दृष्ट्वा कृपया गृह्णञ्छन्तनुर्मृगयां चरन् । कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी ।।' भागवते ९.१८.३६-३७ महाभारते जालवतीनाम्नीं अप्सरसं दृष्ट्वा शरद्वान् मनसा चलितोऽभूत् इत्यस्ति । जालवतीशब्दं यौगिकमङ्गीकृत्य अविरोधेन योजयितुं शक्यते । अन्यवशीकरणोपयोगिसौन्दर्याख्यजालः अस्या अस्तीति उर्वशी जालवती इति नामवती इति वक्तुं शक्यत्वात् ।।

**विष्कम्भो नाम [1]रुद्राणां भूभारहरणेऽङ्गताम् ।**
**हरेः प्राप्तुं तथा तारा भार्या या हि बृहस्पतेः ॥५६॥**

**व्यासतीर्थीया–** मिथुनं पूर्वं किमाह– **विष्कम्भेति** ॥५६-५७॥

**वेदाङ्गतीर्थीया–** रुद्राणां मध्ये विष्कम्भो नाम रुद्रः हरेः भूभारहरणे सहायतामाप्तुमभवदिति योजना ॥५५-६३॥

**मधुसूदनीया–** ॥ **हरेः प्राप्तुं तथा तारेति** ॥ तारायाः हर्यङ्गत्वमश्वत्थामार्थं गवार्थं द्रोणप्रेरणादिनेति मन्तव्यम् ॥५६-६२॥

**वरदराजीया–** तत्र मिथुने पुरुषः पूर्वं कः? का च स्त्री? इति जिज्ञासायामाह– **विष्कम्भ इति** ॥ रुद्राणां मध्ये विष्कम्भो नाम प्रसिद्धः । किमर्थमत्रोत्पन्न इत्यत उक्तम्– **हरेरिति** ॥ हरेर्भूभारहरणे कार्ये कर्तव्ये अङ्गातां सहकारितां प्राप्तुमुत्पन्न इत्यर्थः । तथा या पूर्वं बृहस्पतेर्भार्या तारा सा अत्र मिथुने अस्तीति भावः ॥५६॥

**जनार्दनीया–** रुद्राणां मध्ये य इति शेषः । विष्कम्भ नाम इति प्रसिद्धः सः, भूभारस्य हरणे संहारविषये अङ्गतां सहायतां प्राप्तुं अभवत् । तथा बृहस्पतेः भार्या या तारा सा अपि अभवदिति श्लोकद्वयस्य सम्वन्धः ॥५६॥

**तावुभौ शन्तनुर्दृष्ट्वा कृपाविष्टः स्वकं गृहम् ।**
**निनाय नाम[2] चक्रेऽथ कृपाया विषयौ यतः ।**
**कृपः कृपीति स कृपस्तपो विष्णोश्चकार ह ॥५७॥**

**वरदराजीया–** तावुभौ तन्मिथुनम् । कृपाविष्टः कृपायुक्तः स्वकं स्वस्य विद्यमानं गृहं प्रति निनाय अनयत् । अथानन्तरं यथाक्रमं कृपः कृपीति नाम चक्रे । अन्वर्थमिदं नामेत्याह– **कृपाया इति** ॥ यतः कृपाया विषयौ कृपाविषयत्वात् कृपः पुरुषः कृपी स्त्रीति नाम चक्रे । कृपः कृपीति नाम चक्रेत्यर्थः । विष्णोः सम्वन्धि तपः ॥५७॥

---

१. यस्तु राजन् कृपो नाम ब्रह्मर्षिरभवत् क्षितौ । रुद्राणां तु गणाद् विद्धि सम्भूतमतिपौरुषम् ॥ आदि.६८.७७

२. उपलक्षणश्चैतत् । ब्राह्मणयोग्यसंस्कारानपि चक्रे । तथाहि आदिपर्वणि- 'ततः संवर्धयामास संस्कारैश्चाप्ययोजयत् । प्रातिपेयो नरश्रेष्ठो मिथुनं गौतमस्य तत् ॥' इत्यादिपर्वणि.१४०.१८ । 'कृपया यन्मया बालाविमौ संवर्धिताविति। तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः ॥ तस्मात् कृप इति ख्यातः कृपी कन्या च साऽभवत् ॥' इत्यादिपर्वणि.१४०.१९-२०।

**जनार्दनीया–** तौ उभौ कन्यापुत्रौ दृष्ट्वा, कृपया अनुकम्पया आविष्टः प्रविष्टः सन् स्वकं गृहं प्रति निनाय अनयत् । अथ गृहप्राप्त्यनन्तरं कृपाया विषयौ गोचरावित्यर्थः । यतः अतः पुत्रस्य कृपः कन्यकायाः कृपीति नाम चक्रे ।।५७।।

**अतिविशद–** 'गोपितो गौतमस्तत्र तपसा तावविन्दत । आगम्य तस्मै गौप्यादि सर्वमाख्यातवांस्तदा।।' इति आदिपर्ववचनं 'निनाय नाम चक्रेऽथ' इत्यत्र प्रमाणम् ।।५७।।

**चट्टी–** शन्तनुस्तावुभौ कन्यापुत्रौ दृष्ट्वा कृपया अनुकम्पया आविष्टः प्रविष्टः सन् स्वकं गृहं प्रति निनाय अनयत् । अथ गृहप्राप्त्यनन्तरं कृपाया विषयौ गोचरावित्यर्थः । यतः अतः पुत्रस्य कृप इति पुत्र्याः कृपीति नाम चक्रे । सः कृपः विष्णोस्सम्बन्धि तपश्चचार ।।५७-६०।।

**तस्य प्रीतस्तदा विष्णुः सर्वलोकेश्वरेश्वरः ।**
**प्रादादेष्यत्सप्तर्षित्व[१]मायुः कल्पान्तमेव च ।**
**स शन्तनुगृहे तिष्ठन् देवव्रतसखाऽभवत् ।।५८।।**

**व्यासतीर्थीया–** एष्यत्सप्तर्षित्वप्रश्ने सामर्थ्यमुक्तम्– **सर्वलोकेति** ।।५८-६०।।

**वादिराजीया–** एष्यत्सप्तर्षित्वमित्यत्र सप्तसु ऋषिः सप्तर्षिः तस्य भावः सप्तर्षित्वम् । सप्तर्षीणां मध्ये एकर्षित्वमित्यर्थः ।।५८-६३।।

**वरदराजीया–** तस्य कृपस्य सर्वलोकेश्वराणां ब्रह्मादीनामीश्वरः । एष्यत् भविष्यत् सप्तर्षित्वं सप्तर्षिषु मध्ये अन्यतमत्वम् । कल्पान्तं मन्वन्तरकल्पान्तम् ।।५८।।

**भावविवृतिः–** प्रादादेष्यत्सप्तर्षित्वमेव च इत्यत्र एष्यत्सावर्ण्यमनुकल्पपर्यन्तमायुः प्रदाय तदा सप्तर्षित्वं च प्रदायेत्यर्थः । 'कृपोऽथ पाण्डवान् प्राप्य गुरुत्वात् पूजितश्च तैः । अभूदाचार्य एवासौ राज्ञां तत्तन्तुभाविनाम् ।। बादरायणशिष्यत्वं पुनः प्राप्य भजन्नमुम् । साकं स्वभागिनेयेन भाव्येको मुनिसप्तके ।।' इत्यष्टाविंशाध्यायोक्तेः ।।५८-६५।।

**अनन्तभट्टीया–** सप्तर्षित्वं सप्तर्षिष्वन्यतमत्वम् ।।५८।।

**जनार्दनीया–** एष्यत्सप्तर्षित्वं भाविसप्तर्षिषु मध्ये एकर्षित्वं प्रादात् । कल्पान्तमेव वैवस्वत-मनुकल्पपर्यन्तं आयुश्च प्रादादित्यर्थः । अन्यथा भाविसप्तर्षित्वं न स्यात् । स कृपः ।।५८।।

---

१. 'गालवो दीप्तिमान् रामो द्रोणपुत्रः कृपस्तथा । ऋष्यशृङ्गः पितास्माकं भगवान् बादरायणः ।। इमे सप्तर्षयस्तस्मिन् ...।।' इति भागवते [८.१३.१५] सार्वणिमन्वन्तरे सप्तर्षिषु एकः ।

**चट्टी–** सर्वलोकेश्वराणां ब्रह्मादीनामीश्वरो विष्णुस्तस्य तस्मै कृपाय प्रीतः सन्, सप्त ऋषिः सप्तर्षिस्तस्य भावः सप्तर्षित्वं एष्यच्च तत्सप्तर्षित्वञ्च एष्यत्सप्तर्षित्वम् । कल्पान्तमेव वैवस्वतमनुकल्पपर्यन्तमायुश्च प्रादादित्यर्थः । सः कृपः शन्तनुगृहे तिष्ठन् देवव्रतरक्षा अभवत् ।।५८।।

**पुत्रवच्छन्तनोश्चाऽसीत् स च पुत्रवदेव तत् ।**
**मिथुनं[1] पालयामास कृपोऽप्यस्त्राण्यवाप च ।।५९।।**

**वरदराजीया–** सः कृपः शन्तनोः पुत्रवदासीत् । स च शन्तनुः पुत्रवदेव पुत्रं यथा तथा तत् मिथुनं पालयामास । स च कृपोऽस्त्राणि पितुः सकाशात् अवाप ।।५९।।

**जनार्दनीया–** स च शन्तनुः पुत्रवत् पुत्रसाम्येन तं मिथुनं पालयामास । स कृपः अस्त्राणि चशब्दात् गोत्रादि अवाप । गौतमादिति शेषः । तदुक्तं आदिपर्वणि– 'गोपितो गौतमस्तत्र तपसा तावविन्दत । आगम्य तस्मै गोत्रादिसर्वमाख्यातवांस्तदा । चतुर्विधं धनुर्वेदम् अस्त्राणि विविधानि च ।।' इति [१४०.२०-२१]।।५९।।

**चट्टी–** सः कृपः शन्तनोः पुत्रवदासीत् । स च शन्तनुः पुत्रवत् पुत्रसाम्येन तन्मिथुनं पालयामास । सः कृपो अस्त्राणि । चशब्दात् गोत्रादि अवाप । गौतमादिति शेषः । तदुक्तमादिपर्वणि–[१४०.२०-२१] गोपितो गौतमस्तत्र तपसा तावविन्दत । आगम्य तस्मै गोत्रादि सर्वमाख्यातवान् तदा ।। चतुर्विधं धनुर्वेदमस्त्राणि विविधानि च' इति ।।५९।।

**सर्ववेदानधिजगौ[2] सर्वशास्त्राणि कौशिकात् ।**
**तत्त्वज्ञानं तथा व्यासादाप्य सर्वज्ञतां गतः ।।६०।।**

**व्यासतीर्थीया–** कौशिकाद्विश्वामित्रात् ।।६०।।

**वरदराजीया–** सर्वान् वेदान् सर्वशास्त्राणि च कौशिकात् विश्वामित्रात् अधिजगौ अध्यगीष्ट । व्यासात् तत्वज्ञानं च आप्य सर्वज्ञतां गतः सर्वज्ञोऽभूदित्यर्थः ।।६०।।

**अनन्तभट्टीया–** कौशिकात् विश्वामित्रात् ।।६०।।

**जनार्दननीया–** कौशिकात् विश्वामित्रात् सर्ववेदान् सर्वशास्त्राणि अधिजगौ अध्यगीष्ट ।।६०।।

---

१. 'स तदादाय मिथुनं राजा च कृपयान्वितः । आजगाम गृहानेव मम पुत्राविति ब्रुवन् ।।' इत्यादिपर्वणि १४०.१७

२. 'कृपोऽपि च तदा राजन् धनुर्वेदपरोऽभवत् । चतुर्विधं धनुर्वेदं शास्त्राणि विविधानि च ।। निखिलेनास्य तत्सर्वं गुह्यमाख्यातवान् पिता ।।' इति आदिपर्वणि १४०.२१-२२ ।

**चट्टी**– सः कृपः कौशिकात् विश्वामित्रात् सर्ववेदान् सर्वशास्त्राणि चाधिजगौ अध्यगीष्ठ । तथा व्यासात् तत्त्वज्ञानं चाप्य सर्वज्ञतां सर्वज्ञत्वं गतः ।।६०।।

**यदा हि जातः स कृपस्तदैव बृहस्पतेः [१]सूनुरगाच्च गङ्गाम् ।**
**स्नातुं घृताचीं स ददर्श तत्र श्लथद्दुकूलां सुरवर्यकामिनीम् ।।६१।।**

**व्यासतीर्थीया**– बृहस्पतेः सूनुः भरद्वाजः ।।६१–६६।।

**वेदाङ्गतीर्थीया**– द्रोणोत्पत्तिं वक्तुं तत्सङ्गतिमाह– **यदाभिजात इति** ।। बृहस्पतेः [सूनुः] भरद्वाजः ।।

**वादिराजीया**– बृहस्पतेः सूनुः भरद्वाजः । बृहस्पतेः सूनुश्चेति चशब्दसम्बन्धः ।।६१।।

**वरदराजीया**– द्रोणोऽपि समानवयस्क एवेति वक्तुमाह– **यदेति** ।। बृहस्पतेः सूनुः भरद्वाजः । स भरद्वाजः तत्र गङ्गायां, श्लथत् वल्गितं दुकूलं वस्त्रं यस्याः सा तां, सुरवर्यकामिनीं देवश्रेष्ठोपभोग्यां घृताचीं ददर्शेति सम्बन्धः ।।६१।।

**जनार्दनीया**– द्रोणोत्पत्तिं वदिष्यन् तदुपोद्घातमाह– **यदेति** ।। बृहस्पतेः सूनुः पुत्रो भरद्वाजः । तत्र गङ्गातीरे । श्लथितं स्रस्तं दुकूलं कौशेयवस्त्रं यस्याः सा ताम् । सुरवर्याणां कामिनीं भोगस्त्रियं घृताचीं ददर्श ।।६१।।

**चट्टी**– द्रोणोत्पत्तिं वदिष्यन् तदुपोद्घातमाह– **यदा हीति** ।। सः कृपः यदा जातः तदैव बृहस्पतेस्सूनुः भरद्वाजः स्नातुं गङ्गामवाप । सः भरद्वाजस्तत्र गङ्गातीरे । श्लथत् दुकूलं पट्टवस्त्रं यस्याः सा ताम् । सुरवर्याणां कामिनीं भोगस्त्रियं घृताचीं ददर्श ।।६१।।

**तद्दर्शनात् स्कन्नमथेन्द्रियं स द्रोणे[२] दधाराऽशु ततोऽभवत् स्वयम् ।**
**अम्भोजजावेशयुतो बृहस्पतिः कर्तुं हरेः कर्म भुवो भरोद्धृतौ ।।६२।।**

**वादिराजीया**– 'अस्त्रियां माठरो द्रोणः' इति वचनात् व्रीह्यादीनां मानविशेषो द्रोण इत्युच्यते । 'कोळग' इत्यपभ्रष्टभाषा । विरक्तत्वात् जलसङ्ग्रहाय तमपि सहैव नीतवानिति ज्ञेयम् । बृहस्पतेरयोग्यं

---

१. 'भरद्वाज इति ख्यातः सततं संशितव्रतः । सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।।' इति आदि. १४०.३४ । श्लथद्दुकूलां वायुना व्यपकृष्टाम्बराम् । तथाहि- 'तस्या वायुर्नदीतीरे वसनं पर्यवर्तत । व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ।। इत्यादिपर्वणि १४०.३७ । ददर्शाप्सरसं साक्षाद् घृताचीमाप्लुतामृषिः । आदि.१४०.३६ बृहस्पतेः बृहत्कीर्तेर्देवर्षेर्विद्धि भारत । अंशाद् द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् ।।' आदिपर्वणि.६८.६९

२. 'द्रोणे द्रोणकलशाख्ये यज्ञियपात्रविशेषे' इति केचित् ।

भीमार्जुनादीनां गुरुत्वं शिरसा वोढुं ब्रह्मा तत्र सन्निहितो बभूवेति भावेनोक्तम्– **अम्भोजजावेशयुत इति** ।।६२।।

**सत्याभिनवीया–** तत्रैव तद्दर्शनात् स्कन्नमथेन्द्रियं इति श्लोकः । तस्यार्थः । सः बृहस्पतेः सूनुः तद्दर्शनात् तस्याः घृताच्याः दर्शनात् स्कन्नं इन्द्रियं आशु द्रोणे दधार । ततो वीर्यात् बृहस्पतिः अम्बोजजावेशयुतः सन् हरेः भुवो भरोद्धृतौ भुवो भारोद्धृत्यर्थं भुवो भारोद्धृतेः उपयुक्तमिति यावत् । कर्म पाण्डवसेनासंहारादिरूपं कर्म कर्तुं स्वयं अथ स्वयमेव अभवत् । न त्वन्याविष्टः अभवदिति । एतेन भुवो भरोद्धृत्यर्थमिति वक्तव्यम् । भुवो भरोद्धृताविति कथनमनुपपन्नमिति दूषणं परास्तम् । भुवो भरोद्धृताविति सप्तमी तादर्थ्ये इत्यङ्गीकारात् । एतेनैव अथशब्दो व्यर्थ इति दूषणं निरस्तम् । अथशब्दस्य एवार्थत्वं अङ्गीकृत्य स्वयमित्यनेनान्वयं इत्यभ्युपगमात् ।।६२।।

**मधुसूदनीया–** ।। **द्रोणे दधारेति** ।। द्रोणे कलशे । तथाचोक्तम्– 'आचार्यः कलशाज्जातो द्रोणश्शस्त्रभृतां वर' इति आदिपर्वणि [१४७.१५]। एतेन 'द्रोणे पत्रपुटे' इति व्याख्यानं निरस्तं वेदितव्यम् ।।६२-७०।।

**वरदराजीया–** स भरद्वाजः तद्दर्शनात् तस्याः घृताच्याः दर्शनादवलोकनात् स्कन्नं स्खलितमिन्द्रियं रेतः द्रोणे पात्रविशेषे दधार स्थापितवान् । ततो रेतसः स्वयं साक्षाद्बृहस्पतिः अम्भोजजस्य ब्रह्मणः आवेशेन युक्तः सन् हरेः भुवः भूम्या जातस्य भारस्य उद्धृतौ संहृतौ कर्तव्यतया कर्म कतिपयभारोद्धरण-सेवारूपं कर्म कर्तुं अभवत् जात इत्यर्थः ।।६२।।

**अनन्तभट्टीया–** द्रोणो घटः । बृहस्पतिः स्वयं दधार स्थापितवान् ।।६२।।

**जनार्दनीया–** तस्याः श्लथद्दुकूलायाः घृताच्याः दर्शनात् स्कन्नं पतितं इन्द्रियं रेतः द्रोणे कलशे । दधार न्यधात् । 'आचार्यः कलशाज्जातो द्रोणः शस्त्रभृतां वरः' इत्यादिपर्वणि [१४७.१५] शिक्षासंदर्शनप्रकरणे भीमं प्रति दुर्योधनवचनम् । ततः द्रोणात् रेतसो वा । अम्भोजजो ब्रह्मा । स्वयं बृहस्पतिः अभवत् । किं कर्तुम् ? भरस्य भाररूपासुरसङ्घस्य, उद्धृतौ संहरणविषये कर्म संहाररूपं कर्म कर्तुं दैत्यहननरूपसेवां कर्तुमिति भावः ।।६२।।

**ताम्रपर्णीया–** द्रोणे द्रोणाख्ययज्ञकलशे 'अतिथिर्दुरोणसद्' इति श्रुतौ 'स द्रोणकलशे' इति [कठ.भा] भगवत्पादीयवचने च द्रोणशब्दस्य यज्ञपात्रे द्रोणकलशे [रुढत्वात्] प्रसिद्धत्वात् । 'आचार्यः कलशाज्जातः' [आदिपर्व.१४७.१५] इति स्पष्टं भारतोक्तेश्च । केचित् ''अस्त्रियां माठरो द्रोण' इति अभिधानात् अपभ्रष्टभाषया कोळगापरनामके विरक्तत्वात् जलसङ्ग्रहाय सहानीते द्रोणे दधार' इत्यर्थमाहुः ।।६३-६४।।

**भारतश्री–** द्रोणे कलशे । आशु सद्यः ।।६२।।

**भावचन्द्रिका–** 'तदृषिर्द्रोण आदधे' इति [आदि.१४०.३८] वचनात् द्रोणे द्रोणनामके कलशे 'आचार्यः कलशाज्जात' इति वचनात् ।।६२-६६।।

**चट्टी–** सः भरद्वाजः तद्दर्शनात्तस्याः घृताच्याः दर्शनात् स्कन्नं पतितमिन्द्रियं रेतः द्रोणे कलशे दधार । 'आचार्यः कलशाज्जातो द्रोणः शस्त्रभृतां वरः' इत्यादिपर्वणि । ततो रेतसः स्वयं साक्षात् बृहस्पतिः अम्भोजजावेशयुतो अम्भोजजस्य ब्रह्मणः आवेशेन युतो युक्तस्सन् भुवो भारस्य भाररूपासुरसङ्घस्य उद्धृतौ संहारविषये हरेः कर्म कतिपयासुरहननरूपसेवाकर्म कर्तुं अभवत् जातः ।।६२।।

**द्रोणेति नामास्य चकार तातो मुनिर्भरद्वाज उतास्य वेदान्[1] ।**
**अध्यापयामास सशास्त्रसङ्घान् सर्वज्ञतामाप च सोऽचिरेण ।।६३।।**

**वादिराजीया–** वेदानुत वेदांश्च । द्रोणे ब्रह्मणः सन्निधानादचिरेणेत्युक्तम् ।।६३-६७।।

**वरदराजीया–** अस्य कुमारस्य तातः पिता भरद्वाजो मुनिरस्य द्रोणेति नाम चकार । उत अनन्तरं अस्य द्रोणस्य । सः द्रोणः अचिरेण अविलम्बेन ।।६३।।

**भावविवृतिः–** द्रोणेति नामास्येत्यत्र द्रोण इति भिन्नं पदम् । अविभक्तिकनिर्देशः ।।६३-११५।।

**जनार्दनीया–** अचिरेण शीघ्रम् । द्रोणेत्यस्य सञ्ज्ञा । शब्दत्वेन सतोऽप्यर्थवत्त्वस्याविवक्षितत्वात् विभक्त्यभावः । यद्वा द्रोणेति नामेति एकं पदम् । द्रोण इति नाम चकार ।।६३।।

**चट्टी–** तातः पिता भारद्वाजः मुनिरस्य द्रोणेति नाम चकार । उतानन्तरमस्य द्रोणस्य शास्त्रसङ्घैः सहितान् वेदान् अध्यापयामास । सः द्रोणो अचिरेण शीघ्रं सर्वज्ञतां चाप ।।६३।।

**काले च तस्मिन् पृषतोऽनपत्यो वनेषु पाञ्चालपतिश्चचार ।**
**तपो महत् तस्य तथा वराप्सरावलोकनात् स्कन्दितमाशु रेतः ।।६४।।**

**वेदाङ्गतीर्थीया–** द्रुपदोत्पत्तिप्रकारमाह– **काले तु तस्मिन्नित्यादिना** ।।६४।।

**वरदराजीया–** तत्समानवयस्क एव द्रुपद इति वक्तुमाह– **काले चेति** ।। द्रोणोत्पत्तिकाल इत्यर्थः । पृषतो राजा पाञ्चालपतिः पाञ्चालदेशानां पतिः, न विद्यते अपत्यं पुत्रो यस्येति स तथा । महत्तपश्चचारेति सम्बन्धः । तस्य राज्ञः, वराया उत्तमायाः अप्सरसोऽवलोकनात् तथा पूर्ववत् रेतः स्कन्दितं स्खलितम् ।।

१. 'अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः । अग्नेरस्त्रमुपादाय यदृषिर्वेद काश्यपः ।। अध्यगच्छद्भरद्वाजः तदस्त्रं देवकार्यतः ।।' इत्यादिपर्वणि१४०.३९-४०।

**जनार्दनीया**– तस्मिन् काले द्रोणोत्पत्तिकाले अनपत्यः अपत्यरहितः । पृषतः पृषतनामा राजा । तस्य पृषतस्य वराप्सरावलोकनात् उत्तमाप्सरास्त्रीदर्शनात् तथा रेतः स्कन्दितं श्लथितमभूत् ।।६४।।

**ताम्रपर्णीया**– ।। **वराप्सरावलोकनादिति** ।। मेनकावलोकनादित्यर्थः । तदुक्तं भारते– 'सङ्गता चाप्सरा राजन् मेनकेति परिश्रुता'[आदिपर्व.१५०.१०] इति ।।६४-६८।।

**भारतश्री**– तस्मिन् काले पृषतः सूनुः बभूवेत्युत्तरत्रान्वयः ।।६४।।

**भावचन्द्रिका**– वराप्सरा मेनका । 'सम्प्राप्ता सहसा राजन् मेनकेति प्रतिश्रुता'[आदि.१५०.१०] इति वचनात् ।।६४-६९।।

**चट्टी**– द्रुपदोत्पत्तिप्रकारमाह– **कालेति** ।। तस्मिन् काले द्रोणोत्पत्तिकाले पाञ्चालदेशानां पतिः पृषतनामा राजा, न विद्यन्ते अपत्यानि यस्य स अनपत्यः, सन् महत्तपश्चकार । तस्य पृषतस्य वराप्सरावलोकनात् उत्तमाप्सरस्त्रीदर्शनात् तदा रेतः स्कन्दितं स्कन्नं च्युतमभूदित्यर्थः ।।६४।।

**स तद् विलज्जावशतः पदेन समाक्रमत् तस्य बभूव सूनुः ।**
**हूहूस्तु नाम्ना स विरिञ्चगायको नाम्नाऽवहो यो मरुतां तदंशयुक् ।।६५।।**

**वादिराजीया**– हूहू तु नाम्ना स विरिञ्चगायक इत्यत्र तु विशेषेण विरिञ्चगायक इति तुशब्दसम्बन्धः । इन्द्रादिसभायामपि कदाचिद्गानं करोति ब्रह्मसभायामेव विशिष्य गायक इति भावः ।।६५-६९।।

**वरदराजीया**– स राजा तत् रेतः लज्जापरवशत्वात् पदेन पादेन समाक्रमत् निरस्तवान् । तस्य रेतसः सकाशात् तस्य पृषतस्य तस्य सूनुः पुत्रो बभूव जातः । स पूर्वं क इत्यत आह– **हूहू इति** ।। अविभक्तिकोऽयं निर्देशः । स कुमारः हूहू इति नाम्ना विरिञ्चस्य ब्रह्मणो गायको गन्धर्वश्रेष्ठ इति यावत् । यो मरुतां मध्ये आवहो नाम्ना तस्यांशेन युक्तश्च ।।६५।।

**जनार्दनीया**– स पृषतः विशेषलज्जावशतः तद्रेतः पदेन पादतलेन समाक्रमत् आच्छादितवान् । तस्य रेतसः सकाशात् । तस्य पूर्वस्वरूपमाह– **हूहूस्त्विति** ।। स सूनुः विरिञ्चगायकः ब्रह्मणो गन्धर्वः । 'हाहाहूहू इत्यव्ययम्' इति शृङ्गारप्रकाशे । तुशब्द इत्यर्थः । अव्ययस्यानेकार्थत्वात् । हूहू इति नाम्ना प्रसिद्धः । तुनाम्ना विशेषनाम्ना । हूहूनामक इत्यर्थः इति वा । अत्रापिशब्दस्य रूपवाचकस्य तद्वाच्ये लक्षणा । यद्वा हूहूतुनाम्नेत्येकं पदम् । तुशब्दो विशेषार्थः । हूहू च तत् तुनाम च हूहूतुनाम तेन । हूहूनाम्ना प्रसिद्धः । मरुतां मध्ये यो नाम्ना यो आवहोऽस्तीति शेषः । तस्यावहस्य अंशयुक् ।।

**चट्टी**– सः पृषतः विशेषलज्जवशतस्तद्रेतः पदेन पादतलेन समाक्रमत् आच्छादितवान् । तस्य रेतसः सकाशात् तस्य पृषतस्य सूनुः पुत्रो बभूव जातः । स पूर्वं क इत्यत आह– **हूहूत्विति** ।।

अविभक्तिकोऽयं निर्देशः । सः कुमारः हूहू इति नाम्ना युतः विरिञ्चिगायकः यो मरुतां मध्ये नाम्ना आवहः तस्यावहस्य अंशयुक् सूनुः बभूवेति पूर्वेण सम्बन्धः ।।६५।।

**स द्रोणतातात् समवाप वेदानस्त्राणि विद्याश्च तथा समस्ताः ।**
**द्रोणेन[1] युक्तः स तदा गुरोः सुतं सहैव नौ राज्यमिति ह्यवादीत् ।।६६।।**

**व्यासतीर्थीया–** गुरोः सुतं भरद्वाजस्य सुतम् ।।६६-६८।।

**वेदाङ्गतीर्थीया–** गुरोर्भरद्वाजस्य ।।६६।।

**वरदराजीया–** स कुमारो द्रोणस्य तातात् पितुः भरद्वाजात् । द्रोणेन युक्त एव वेदादीनवापेत्यर्थः । सः कुमारः तदा द्रोणेन साकं वेदाद्यभ्याससमये नौ आवयोः सहैव राज्यं मिलितयोरेव राज्याधिपत्यं स्यादिति गुरोर्भरद्वाजस्य सुतं द्रोणं प्रत्यवादीत् प्रतिज्ञातवानित्यर्थः ।।६६।।

**अनन्तभट्टीया–** गुरोः सुतं द्रोणम् । नौ आवयोः ।।६६।।

**जनार्दनीया–** स पृषतपुत्रः द्रोणेन युक्तः सन् द्रोणतातात् भरद्वाजात् वेदादिविद्याः समवाप प्राप । स कुमारः गुरोः भरद्वाजस्य सुतं द्रोणं नौ आवयोः सहैव राज्यं मम राज्यं उभयोः स्यादिति तदा विद्याभ्यासकाले अवादीद्धि ।।६६।।

**चट्टी–** सः पृषतपुत्रः द्रोणेन युक्तः सन् द्रोणतातात् द्रोणस्य पितुः भरद्वाजात् वेदानस्त्राणि च तथा समस्ताः विद्याश्च समवाप सम्यक्प्राप । सः कुमारः गुरोः भरद्वाजस्य सुतं द्रोणं प्रति नौ आवयोः सहैव राज्यं स्यादिति तदा विद्याभ्यासकाले अवादीत् हि प्रतिज्ञातवानित्यर्थः ।।६६।।

**पदे द्रुतत्वाद् द्रुपदभिधेयः स राज्यमापाऽथ निजां कृपीं सः ।**
**द्रोणोऽपि [2]भार्यां समवाप्य सर्वप्रतिग्रहोज्झश्च पुरेऽवसत् सुखी ।।६७।।**

**वेदाङ्गतीर्थीया–** पदे पादे द्रुतत्वात् [स्खलितत्वात्] ।।६७।।

**वादिराजीया–** पदे द्रुतत्वादित्यत्र पदे रेतोऽन्तर्गततया अस्यापि द्रुतत्वादिति भावः । निरुक्तत्वात् अग्न्याहितादिवत् विशेषणस्योपरि निपात इति भावः । अथ निजां कृपीमित्यत्र कथारम्भसूचनायाथशब्दः ।।

---

१. 'बाल्यात्प्रभृति कौरव्य सहाध्ययनमेव च । स मे सखा तदा तत्र प्रियवादी प्रियङ्करः ।। अब्रवीदिति मां भीष्म वचनं प्रीतिवर्धनम् । अहं प्रियतमः पुत्रः पितुर्द्रोण महात्मनः ।। अभिषेक्ष्यति मां राज्ये स पाञ्चाल्यो यदा तदा । तद्भोज्यं भवता राज्यमर्धं सत्येन ते शपे ।।' इत्यादिपर्वणि १४१.४५-४७ ।

२. 'शारद्वतीं ततो भार्यां कृपीं द्रोणोऽन्वविन्दत । अग्निहोत्रे च धर्मे च दमे च सततं रताम् ।।' इत्यादिपर्वणि १४०.४८

**वरदराजीया–** तस्य कुमारस्य किं नामेत्यत आह– **पद इति** ।। पदे पदेन दृतत्वात् आक्रान्तत्वात् रेतसः द्रुपदाभिधेयो जात इत्यर्थः । स द्रुपदो राज्यं पाञ्चालदेशाधिपत्यमापेत्यर्थः । अथानन्तरं द्रोणोऽपि निजां भार्यां बृहस्पतिरूपे भार्यां तारां अत्रोत्पन्नां कृपीं समवाप्य लब्ध्वा सर्वप्रतिग्रहोज्झः प्रतिग्रहमात्ररहितः सन् पुरे पुर्यां अवसत् उवास ।।६७।।

**अनन्तभट्टीया–** पदे द्रुतत्वात् पदेन आक्रान्तत्वात् । रेतस इति शेषः ।।६७।।

**जनार्दनीया–** तस्य नाम किमित्यतो अर्थपूर्वकमाह– **पद इति** ।। पदे तृतीयार्थे सप्तमी । पादेन द्रुतत्वादाक्रान्तत्वात् रेतस इति शेषः । द्रुपदाभिधेयः स पृषतपुत्रो राज्यं पितृदत्तराज्यं आप । अथ स द्रोणोऽपि द्रुपदस्य अर्धराज्याधिकारयोग्योऽपि निजां स्वकीयां भार्यां पूर्वभार्यां कृपीं समवाप्य ब्राह्मविवाहेन स्वीकृत्य सर्वप्रतिग्रहैः उज्झितः रहितः, अत एव सुखी पुरे नागपुरे अवसत् ।।६७।।

**भावचन्द्रिका–** पदेति समुदायैकवचनम् । पदे इति द्वितीयाद्विवचनम् । दृतत्वात् प्राप्तत्वात् । 'पद्भ्यां आक्रमतायुष्मन् ततस्तु द्रुपदोऽभवत्' इति वचनात् [आदि.१५०.१२]।। ६७-७२ ।।

**चट्टी–** तस्य कुमारस्य नाम किमित्यतोऽन्वर्थपूर्वकमाह– **पद इति** ।। तृतीयार्थे सप्तमी । पदे पादेन दृतत्वात् पादाक्रान्तत्वात् रेतस इति शेषः । द्रुपदाभिधेयः सः पृषतपुत्रः राज्यं पितृदत्तराज्यमाप । अथ सः द्रोणोऽपि निजां स्वकीयां भार्यां पूर्वभार्यां कृपीं समवाप्य ब्राह्मविवाहेन स्वीकृत्य सर्वप्रतिग्रहैरुज्झः रहितः अत एव सुखी पुरे हस्तिनपुरे अवसच्च ।।६७।।

> **शिलोञ्छवृत्त्यैव हि वर्तयन् स धर्मं महान्तं विरजं जुषाणः ।**
> **उवास नागाख्यपुरे सखा स देवव्रतस्याऽथ कृपस्य चैव ।।६८।।**

**व्यासतीर्थीया–** शिलं च उञ्छं च शिलोञ्छे । ताभ्यां वृत्तिः शिलोञ्छवृत्तिः तया शिलोञ्छवृत्त्या ।।६८-७२।।

**वेदाङ्गतीर्थीया–** शिलं च उञ्छं च शिलोञ्छे ताभ्यां वृत्तिः जीवनम् । शिलोञ्छवृत्या वर्तयन् जीवधारकराद्धर्मं धर्मनामकं महान्तं विरजं रजोगुणरहितम् । उपलक्षणमेतत् त्रिगुणरहितमिति यावत् । एवं भूतं हरिं जुषाणः सात्विकं [स्वं] धर्मं इति वा ।।६८-७२।।

**वादिराजीया–** शिलोञ्छवृत्त्यैव हीति हिशब्देनोत्तमब्राह्मणानां सैव वृत्तिः योग्येति सूचयति । देवव्रतस्याथ कृपस्य चैवेत्यत्र देवव्रतस्यैव सखा अथ कृपस्य च सखेति सम्बन्धः । द्रोणभीष्मयोरुभयोरपि परशुरामशिष्यत्वात् ब्रह्मणोंशयुक्तत्वादुभयोरपि विरक्तत्वाच्च भीष्मे यादृशं सख्यं तादृशं सख्यं कृपे नास्ति इत्यर्थे अथेत्युक्तम् । अत एव देवव्रतस्यैवेत्येवकारश्च ।।६८।।

**वरदराजीया**– सर्वप्रतिग्रहोज्झस्यापि जीवनोपायमाह– **शिलेति** ।। शिलश्च उञ्छं च, तद्रूपवृत्त्या वर्तयन् देहादिधारणं कुर्वन् विरजं शुद्धं महान्तं वैष्णवत्वात् श्रेष्ठं धर्मं निवृत्तधर्मं जुषाणः सेवमानः अनुतिष्ठन्नित्यर्थः । पुरेऽवसदित्युक्तमेव विवृणोति– **उवासेति** ।। नागाख्यपुरे हस्तिनपुरे स द्रोणो देवव्रतस्य कृपस्य च सखा बभूवेत्यर्थः ।।६८।।

**अनन्तभट्टीया**– शिलोञ्छेन जीवनोपायग्रहः ।।६८।।

**जनार्दनीया**– तस्य जीवनोपायः कुतोऽभवदित्यत आह– **शिलेति** ।। शिलं च उञ्छं च शिलोञ्छे, ताभ्यां वृतिर्जीवनोपायः तयैव वर्तयन् प्राणधारणं कुर्वन् विरजं निर्दोषं काम्यकर्मरहितमित्यर्थः । 'शिरोवाची शिरोदन्तो रजोवाची रजस्तथा । निचकर्त शिरान् द्रौणिरधाः पादरजोपमा ।।' इति कविकण्ठाभरणे । अत एव महान्तं उत्तमं धर्मं विष्णुप्रीतिकरं धर्मं जुषाणः सेवमानः स द्रोणः नागाख्यपुरे उवास ।।६८।।

**ताम्रपर्णीया**– ।। **शिलोञ्छवृत्त्येति** ।। 'उञ्छो धान्यांशकादानं कणिकांशार्जनं शिलम्' इति यादवः । तथा च उलूखलाधःपतितकणिकषष्टांशार्जनं शिलावृत्तिः, खलादौ विकीर्णधान्यषष्टांशार्जनमुञ्छ-वृत्तिरिति ज्ञेयम् । वर्तयन् शरीरमिति शेषः ।।६८।।

**चट्टी**– सर्वप्रतिग्रहोज्झस्य तस्य जीवनोपायमाह– **शिलेति** ।। शिलं शालिक्षेत्रादौ स्वामित्यक्त-कणिकांशोपादानम् । उञ्छं आपणादिपतितकणोपादानम् । शिलश्च उञ्छं च शिलोञ्छे ताभ्यां वृत्तिः जीवनोपायः, तयैव वर्तयन् देहधारणं कुर्वन् विरजं निर्दोषं काम्यकर्मरहितमित्यर्थः । अत एव महान्तमुत्तमं धर्मं विष्णुप्रीतिकरं निवृत्तधर्मं जुषाणः सेवमानः । यद्वा जीवधारकत्वात् धर्मं धर्मनामकं महान्तं विरजं रजोगुणरहितं उपलक्षणमेतत् । त्रिगुणरहितमिति यावत् । एवं भूतं हरिं जुषाणः सः द्रोणः नागाख्यपुरे हस्तिनपुरे उवास । अथ देवव्रतस्य कृपस्य च सखा आस ।।६८।।

**तेषां समानो वयसा विराटस्त्वभूद्धहा नाम विधातृगायकः ।**
**मरुत्सु यो विवहो नाम तस्याप्यंशेन युक्तो निजधर्मवर्ती ।।६९।।**

**वादिराजीया**– गन्धर्वौ द्वौ हाहा हूहू इति प्रयोगसद्भावात् हाहेति हहेति च तस्यैव नाम ।।६९।।

**वरदराजीया**– तत्समानवयस्क एव विराडित्याह– **तेषामिति** ।। तेषां देवव्रतकृपद्रोणद्रुपदानां वयसा समानः समानकालीनोत्पत्तिको विराटो जात इत्यर्थः । विराटः पूर्वं क इत्यत आह– **हाहानामेति** ।। हाहा इति प्रसिद्धो विधातुः ब्रह्मणो गायको गन्धर्वश्रेष्ठ इत्यर्थः । तथा मरुत्सु यो विवहो नाम मरुत् तस्याप्यंशेन युक्तोऽभूदिति पूर्वेण सम्बन्धः । सोऽपि प्रजापालनादिस्वधर्मनिरत इत्युक्तम्– **निजेति** ।।

**जनार्दनीया–** तेषां देवव्रतादिचतुर्णां समानोऽभूत् । विराटस्य पूर्वस्वरूपमाह– **हाहा इति** ।। पूर्वह्रस्वशब्दोऽप्यस्ति । विधातृगायकः ब्रह्मगन्धर्वः हहानाम हहा इति प्रसिद्धः । मरुत्सु मध्ये यो विवहो नाम तस्यापि निजधर्मवर्ती स्ववर्णाश्रमोचितधर्मवर्तनशीलो विराटोऽभूदिति पूर्वेण सम्बन्धः ।।६९।।

**ताम्रपर्णीया–** ।। **हहानामेति** ।। एकस्यैव हाहेति हहेति च नामेति ज्ञेयम् ।।६९।।

**भारतश्री–** तेषां भीष्मकृपकृपिद्रोणानाम् ।।६९।।

**चट्टी–** तत्समानवयस्को विराट इत्याह– **तेषामिति** ।। हाहानामा हाहा इति प्रसिद्धः विधातृगायकः ब्रह्मणो गन्धर्वः मरुत्सु यो विवह इति प्रसिद्धः तस्याप्यंशेन युक्तो निजधर्मवर्ती स्ववर्णाश्रमोचित-धर्मवर्तनशीलः विराटः विराटनामकस्सन् वयसा तेषां देवव्रतकृपद्रोणद्रुपदानां समानोऽभूत् ।।६९।।

**ततः कदाचिन्मृगयां गतः स ददर्श कन्याप्रवरां तु शन्तनुः ।**
**या पूर्वसर्गे पितृपुत्रिका सती चचार विष्णोस्तप उत्तमं चिरम् ।।७०।।**

**वेदाङ्गतीर्थीया–** अथ पाण्डवोत्पत्तिं वक्तुं उपयुक्तं शन्तनुसत्यवतीसम्बन्धमाह– **ततः कदाचिदित्यादिना** ।। पूर्वसर्गे पूर्वजन्मनि पितृपुत्रिका पितृनाम्नां देवानां सुता ।।७०-७६।।

**मधुसूदनीया–** ।। **या पूर्वसर्ग इति** ।। पूर्वसर्गे पूर्वजन्मनि । ननु पितृकन्यकायाः वसुराजस्य सकाशात् मत्स्ययोन्युत्पत्तौ किं कारणं इत्याशङ्कापरिहारस्तु

'त्वया न दृष्टपूर्वास्तु पितरः ते कदाचन । पितरो दिवि वर्तन्ते देवास्तान् वरवर्णिनि ।।
सा दृष्ट्वा पितरं वव्रे वसुं नामान्तरिक्षगम् । अमावसुरिति ख्यातं आयोः पुत्रं यशस्विनम् ।।
अद्रिकाऽप्सरसायुक्तं विमानेऽधिष्ठितं दिवि । सा तेन व्यभिचारेण मनसः कामरूपिणी ।।
पितरं प्रार्थयित्वाऽन्यं योगभ्रष्टा पपात ह । त्रीण्यपश्यद्विमानानि पतमाना दिवश्च्युता ।।
त्रसरेणुप्रमाणानि नाऽपश्यत्तेषु तान् पितॄन् । सुसूक्ष्मानपरित्यक्तान् अग्निष्वग्नीनिवाहितान् ।।
त्रायध्वमित्युवाचार्ता पतन्ती तानवाक्शिराः । तैरुक्ता सा तु मा भैषीरिति व्योम्नि व्यवस्थिता।।
ततः प्रसादयामास स्वान् पितॄन् दीनया गिरा । ऊचुस्ते पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् ।।
भ्रष्टैश्वर्या स्वदोषेण पतसि त्वं शुचिस्मिते । यैः क्रियन्ते हि कर्माणि भोक्ष्यते प्राप्य मानुषम् ।।
तस्मात्त्वं तपसः पुत्री प्रेत्येह प्राप्स्यसे फलम् ।
इत्युक्त्वा पितृभिस्सा तु पितॄन् स्वान् सम्प्रसादयन् ।।
ध्यात्वा प्रसादं वै चक्रुः तस्यास्सर्वेऽनुकम्पया ।
अवश्यं भाविनं ज्ञात्वा तेऽर्थमूचुस्ततस्तु ताम् ।।

अस्य राज्ञो वसोः कन्या त्वमपत्यं भविष्यसीति ।
कन्यैव भूत्वा लोकान् स्वान् पुनराप्स्यसि दुर्लभान् ।।
मत्स्ययोनौ समुत्पन्ना शुभा राज्ञो भविष्यसि ।
... स वेदमेकं ब्रह्मर्षिः चतुर्धा वै करिष्यति ।।
महाभिषक्सुतौ द्वौ च शन्तनोः कीर्तिवर्धनौ ।
विचित्रवीर्यं धर्मज्ञं तथा चित्राङ्गदं नृपम् ।।
व्यतिक्रमात् पितॄणां च जन्म प्राप्स्यसि कुत्सितम् ।
तस्यैव राज्ञस्त्वं कन्या अद्रिकायां भविष्यसि ।।
अद्रिका मत्स्यभूता सा गङ्गायमुनसङ्गमे ।
अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा ।।'

इत्यादि हरिवंशवाक्येन कर्तव्यः [१.१८.२९-४४] ।।७०-७६।।

**वरदराजीया–** ततस्तदनन्तरं कदाचित् कालान्तरे मृगयां मृगान्वेषणक्रीडां कर्तुं इति शेषः । कन्याप्रवरा कन्याश्रेष्ठा । सा केत्यत आह– **येति** ।। या पूर्वसर्गे पूर्वजन्मनि पितृपुत्रिका सती नाम्ना । चिरं बहुकालं विष्णोः सम्बन्धि तपः । अत एवोत्तमं चचार कृतवती ।।७०।।

**अनन्तभट्टीया–** या वसोः सुता जाता ।।७०।।

**जनार्दनीया–** पाण्डवोत्पत्तिं वदिष्यन् तदुपोद्घातमाह– **ततः कदाचिदित्यादिना** ।। ततः देवव्रतस्य यौवराज्याभिषेकानन्तरम् । प्रवरां भक्त्यादिगुणैरुत्तमाम् । सा केत्यत आह– **येति** ।। या कन्या पूर्वसर्गे पूर्वजन्मनि पितॄणां अग्निष्वात्ताख्यदेवपितॄणां पुत्रिका । तत्रापि अमूर्तानां इति ज्ञेयम् । अच्छोदानाम्नी पुत्री सती विष्णोः सम्बन्धि तपश्चचार । इयं देवपितॄणां अग्निष्वात्तानां पुत्री इत्यादि हरिवंशे उक्तम् । तथाहि– 'पितरो दिवि वर्तन्ते देवास्तान् भावयत्युत । अग्निष्वात्ता इति ख्याताः सर्व एवामितौजसः ।। एतेषां मानसी कन्या अच्छोदा नाम निम्नगा ।।' इति [हरिवंशपर्व.१८.२५-२६] ।।७०।।

**ताम्रपर्णीया–** ।। **पितृपुत्रिकेति** ।। 'बर्हिषा इति विख्याता पितरः सोमपास्तु ये । तेषां त्वं मानसी कन्या अच्छोदा नाम विश्रुता ' [आदिपर्व.६४.९४] इति भारतवचनात् बहूनां पितॄणां एकेयं मानसी पुत्रीत्यर्थः ।।७०-७६।।

**भावचन्द्रिका–** तुशब्देन योजनगन्धित्वात् दूरे गन्धमाघ्राय ज्ञातुं प्रवृत्तो ददर्शेत्याह । 'बर्हिषा इति विख्याताः पितरः सोमपाश्च ते । तेषां च मानसी कन्या अच्छोदा नाम विश्रुता ।। अच्छोदं नाम तद्दिव्यं सरो यस्मात्समुत्थितम् ।।' इत्येतत् पितृपुत्रिका इत्यनेन सूचयति ।।७०।।

**चट्टी–** अथ पाण्डवोत्पत्तिं वदिष्यन् तदुपोद्घातमाह– **ततः कदाचिदित्यादिना** ।। ततः देवव्रतस्य यौवराज्याभिषेकानन्तरं कदाचित् कालान्तरे सः शन्तनुः मृगयां गतस्सन् कन्याप्रवरां कन्याश्रेष्ठां ददर्श । सा केत्यत आह– **येति** ।। या कन्या पूर्वसर्गे पूर्वजन्मनि पितॄणां अग्निष्वात्ताख्यदेवपितॄणां पुत्रिका । तत्राप्यमूर्तानामिति ज्ञेयम् । अच्छोदानाम्नी पुत्री सती विष्णोः सम्बन्धि उत्तमं तपः चिरं चचार । तदुक्तम्– पितरो दिवि वर्तन्ते देवास्तान् भावयन्त्युत । अग्निष्वात्ता इति ख्याता सर्व एवामितौजसः ।। एतेषां मानसी कन्या अच्छोदा नाम निम्नगा ।।' इत्यादि हरिवंशे ।।७०।।

**यस्यै वरं विष्णुरदात् पुराऽहं सुतस्तव स्यामिति या वसोः सुता ।**
**जाता पुनर्दाशगृहे विवर्द्धिता व्यासात्मना विष्णुरभूच्च यस्याम् ।।७१।।**

**सत्याभिनवीया–** तत्रैव यस्यै वरो विष्णुरदात्पुराऽहं इति श्लोके पुनः दाशगृहे विवर्धिता इत्यस्य दाशगृहे पुनः पुनः क्षणे क्षणे अपेक्षितार्थदानेन विवर्धिता विशेषेण वर्धितेत्यर्थः । एतेन पुनरित्येतत् व्यर्थमिति दूषणं परास्तम् । पुनरित्यस्यावृत्तिं आवृत्तस्य पुनःशब्दस्य क्षणे क्षणे इत्यर्थे तात्पर्यं, 'अपेक्षितार्थदानेन' इत्यस्य शेषं चाङ्गीकृत्य, क्षणे क्षणे अपेक्षितार्थदानेन विवर्धितेत्यर्थलाभार्थं पुनरित्युक्तमिति स्वीकरणात् ।।७१।।

**वरदराजीया–** यस्यै पितृपुत्रिकायै विष्णुः पुरा पूर्वजन्मनि वरमादात् । कीदृशं वरम्? तवाहं सुतः पुत्रः स्यामिति । या च तदर्थमेव वसोः राज्ञः सुता जाता । पुनः वसोः सकाशात् जननानन्तरं दाशस्य जातिविशेषविशिष्टस्य नद्युत्तारकस्य गृहे विवर्धिता विवृद्धा । यस्याश्च विष्णुः व्यासात्मना व्यासरूपेण अभूत् प्रादुर्बभूवेत्यर्थः ।।७१।।

**जनार्दनीया–** विष्णुः यस्यै पितृकन्यायै अहं तव सुतः स्यामिति पुरा पितृपुत्रिकाजन्मनि वरं अदात् । सा पितृपुत्रिका वसोः वसुराजस्य सुता सती जाता पुनः जननानन्तरं दाशस्य नाविकस्य गृहे विवर्धिता ववृधे । यस्यां वसुसुतायां विष्णुः व्यासात्मना व्यासस्वरूपेण अभूत् प्रकटोऽभूदित्यर्थः ।।

**भावचन्द्रिका–** त्रसरेणुसमानान् पितॄन् अविचार्य अज्ञानात् उपरिचरं वसुमेव पितृत्वेन वव्रे । स्वपित्रतिरिक्तक्रमणदोषेण पापात् अधोमुखी पतमाना सा दैवात् पितृन् ददर्श । ततो तातेत्युवाच । त ऊचुः मा भैषीरनेन दोषेण भूमौ वसुवीर्यजाता तत्रापि पितरमजानती अन्यगृहे वर्धिता कालान्तरे पुनरस्मान् एष्यसीति इदं भारते । इदमाह– **या वसोः सुता दाशगृहे विवर्धिता इति** ।।७१-७५।।

**चट्टी–** विष्णुः यस्यै अहं तव सुतः स्यामिति पुरा पितृपुत्रिकाजन्मनि वरमदात् । या वसोः वसुराजस्य सुता जाता पुनर्जननानन्तरं दाशस्य नाविकस्य गृहे विवर्धिता विवृद्धा । यस्यां च विष्णुः व्यासत्माना व्यासस्वरूपेण अभूत् प्रकटोऽभूदित्यर्थः ।।७१।।

**तद्दर्शनान्नृपतिर्जातहृच्छ्रयो[१] वव्रे प्रदानाय च दाशराजम् ।**
**ऋते स तस्यास्तनयस्य राज्यं नैच्छद् दातुं तामथाऽयात् गृहं स्वम् ।।७२।।**

**व्यासतीर्थीया–** श्रयः कामः ।।७२।।

**वेदाङ्गतीर्थीया–** जातहृच्छयः जातकामः । प्रदानाय आत्मने दातुं वव्रे प्रार्थयामास ।।७२।।

**वरदराजीया–** ततः किं वृत्तमित्यत आह– **तद्दर्शनादिति** ।। तस्याः कन्यकायाः दर्शनात् जातः उद्भूतः हृच्छ्रयः कामः आकाङ्क्षा यस्य स, नृपतिः शन्तनुः प्रदानाय स्वस्य दातुं दाशराजं दाशानां जातिविशेषाणामधिपं वव्रे ययाचे । स दाशराजः तस्याः कन्यकायाः तनयस्य राज्यं साम्राज्यं ऋते देवव्रते विद्यमाने एतस्याः पुत्रस्य राज्यं न भविष्यतीति बुद्ध्या तां दातुं नैच्छत् । अथानन्तरं स्वगृहं प्रत्ययात् गतवान् शन्तनुः ।।७२।।

**अनन्तभट्टीया–** जातहृच्छ्रयः उद्भूतकामः प्रदानाय आत्मन इति शेषः । वव्रे उवाच ... आयात् शन्तनुरिति शेषः ।।७२।।

**जनार्दनीया–** तस्याः दाशगृहस्थवसुसुतायाः दर्शनात् जातहृच्छयः आविर्भूतकामो नृपतिः शन्तनुः प्रदानाय दातुम्, आत्मन इति शेषः । दाशराजं दाशनायकं वव्रे प्रार्थयामास इत्यर्थः । स दाशराजः तस्याः कन्यकायाः तनयस्य राज्यं साम्राज्यं ऋते विना तां दातुं नैच्छत् । राज्यार्हस्य ज्येष्ठस्य राज्यं दास्यतीति बुद्ध्या तां दातुं नैच्छदिति भावः । अथ स्वगृहं प्रति आयात् प्रत्यगच्छत् ।।७२।।

**चट्टी–** तद्दर्शनात् तस्याः दाशगृहस्थवसुसुतायाः दर्शनात्, जातः आविर्भूतः हृच्छ्रयः कामो यस्य सः, नृपतिः शन्तनुः प्रदानाय दातुमात्मन इति शेषः । दाशराजं दाशाधिपं वव्रे ययाचे । सः दाशराजः तस्याः कन्यकायाः तनयस्य राज्यमृते विना तां दातुं नैच्छत् । अथ शन्तनुः स्वं गृहं प्रत्ययात् अगात् ।।

**तच्चिन्तया [२]म्लानमुखं जनित्रं दृष्ट्वैव देवव्रत आश्वपृच्छत् ।**
**तत्कारणं सारथिमस्य तस्माच्छ्रुत्वाऽखिलं दाशगृहं जगाम ।।७३।।**

**व्यासतीर्थीया–** तत्कारणं मुखम्लानकारणम् ।।७३-७६।।

**वादिराजीया–** जनिधातोः हेत्वर्थे त्रच् प्रत्यये कृते खनित्रमितिवत् जनित्रमित्यपि जनकवाचिपदं भवतीति भावेनोक्तं म्लानमुखं जनित्रमिति ।।७३-७७।।

---

१. 'जातहृच्छयः' इति वेदाङ्गतीर्थजनार्दनीयपाठः ।

२. 'ग्लानमुखं' इति चट्टिपाठः ।

**वरदराजीया–** तस्याः कन्यकायाः चिन्तया, म्लानं कृशं मुखं यस्य स तं, जनित्रं पितरं दृष्ट्वैव दर्शनानन्तरमेव अस्य शन्तनोः सारथिं प्रति तत्कारणं तस्य म्लानमुखत्वस्य कारणं अपृच्छत् । तस्मात् सारथेः सकाशात् अखिलं कारणं पूर्ववृत्तं श्रुत्वा देवव्रतो दाशगृहं जगाम । कन्यां प्रार्थयितुमित्यर्थः ।।

**अनन्तभट्टीया–** जनित्रं पितरम् । अस्य सारथिम् ।।७३।।

**जनार्दनीया–** तस्याः कन्यकायाः चिन्तया । म्लानं शुष्कं मुखं यस्य स तथा तम् । जनित्रं जनकं दृष्ट्वा तस्य म्लानमुखत्वस्य कारणं अस्य शन्तनोः सारथिं अपृच्छत् । तस्मात् सारथेः सकाशात् अखिलं शन्तनुदाशसंवादम् ।।७३।।

**भावचन्द्रिका–** एवकारेण पित्रा श्रुत्वापि स्पष्टमश्रुतेत्याह तद्वारते ।।७३-७७।।

**चट्टी–** तस्याः कन्यकायाः चिन्तया, ग्लानं शुष्कं मुखं यस्य स तथा । 'म्लानमुखम्' इति वा पाठः । तं जनित्रं पितरं दृष्ट्वैव देवव्रतः तत्कारणं तस्य ग्लानमुखत्वस्य कारणं अस्य शन्तनोः सारथिं आश्वपृच्छत् । तस्मात् सारथेः सकाशात् अखिलं शन्तनुदाशसंवादं श्रुत्वा दाशगृहं जगाम ।।७३।।

**स तस्य विश्वासकृते प्रतिज्ञां चकार नाऽहं करवाणि राज्यम् ।**
**तथैव मे सन्ततितो भयं ते व्येतूर्ध्वरेताः सततं भवानि ।।७४।।**

**वरदराजीया–** स देवव्रतः तस्य दाशराजस्य विश्वासकृते विश्वासार्थं प्रतिज्ञां चकार । किमिति अहं राज्यं राज्यपरिपालनं न करवाणि न करोमि । ननु त्वत्पुत्रात् भयं तथैवानुवर्तत इत्यत आह– **तथैवेति** ।। यथा मत्तो भयं नास्ति तथा मे सन्ततितोऽपि भयं ते त्वत्सकाशात् व्येतु गच्छतु । कथमित्यत आह– **ऊर्ध्वेति** ।। सततं सन्ततं यावज्जीवं ऊर्ध्वरेता नैष्ठिकब्रह्मचर्यवान् भवानि भवामि इति प्रतिज्ञां चकारेति सम्बन्धः ।।७४।।

**अनन्तभट्टीया–** विश्वासकृते तत्तनयस्य सन्ततेः राज्ञा प्रदाने विश्वासाय ।।७४।।

**जनार्दनीया–** स देवव्रतः तस्य दाशस्य विश्वासकृते विश्वासार्थं प्रतिज्ञां चकार । किमिति ? न करवाणि न करोमि । तथैव मे सन्ततितः सन्तानात् ते भयं व्येतु न प्राप्नोतु । भयं व्येत्वित्युक्तं विशदयति– **ऊर्ध्वेति** ।। सन्ततं देहपातपर्यन्तं ऊर्ध्वरेताः रेतोविसर्जनरहितः । नैष्ठिकब्रह्मचर्यवान् इत्यर्थः । भवानि भवामि इति प्रतिज्ञां चकारेति सम्बन्धः ।।७४।।

**चट्टी–** सः देवव्रतः तस्य दाशराजस्य विश्वासकृते विश्वासार्थं प्रतिज्ञां चकार । किमिति । अहं राज्यं राज्यपरिपालनं न करवाणि न करोमि । तथैव मे सन्ततितो ते भयं व्येतु गच्छतु । तदेव

विशदयति– **ऊर्ध्वेति** ।। सततं देहपातपर्यन्तं ऊर्ध्वरेताः रेतोविसर्जनरहितः नैष्ठिकब्रह्मचर्यवानित्यर्थः । भवानि भवामि इति प्रतिज्ञां चकारेति सम्बन्धः ।।७४।।

**भीमव्रतत्वाद्धि तदाऽस्य नाम कृत्वा देवा भीष्म इति ह्यचीक्लृपन् ।**
**प्रसूनवृष्टिं स च दाशदत्तां कालीं समादाय पितुः समर्पयत् ।।७५।।**

**वादिराजीया–** भीमव्रतत्वाद्धीति हिशब्देन ऊर्ध्वरेतस्कत्वाख्यव्रतस्य इतरासाध्यत्वात् भयङ्करत्वं प्रसिद्धमिति सूचयति । प्रसूनवृष्टिं ह्यचीक्लृपन्नित्यत्र हिशब्देन ईदृशस्य भीष्मस्य पुष्पवृष्टिरुचितेति प्रसिद्धिं सूचयति ।।७५-७९।।

**वरदराजीया–** तदा प्रतिज्ञाकाले देवा अस्य देवव्रतस्य भीमव्रतत्वात्, भीमं भयङ्करं व्रतं यस्यासौ तथा, तस्य भावस्तत्त्वं तस्मात् । भीष्म इति नाम कृत्वा प्रसूनवृष्टिं पुष्पवृष्टिं देवव्रतस्योपरीति शेषः । अचीक्लृपन् कृतवन्तः । स च भीष्मः कालीं सत्यवतीम् । पितुः शन्तनवे ।।७५।।

**अनन्तभट्टीया–** प्रसूनवृष्टिं अचीक्लृपन् ।।७५।।

**भावचन्द्रिका–** उत्पलवर्णत्वात् काली ।।७५-८०।।

**चट्टी–** तदा प्रतिज्ञाकाले देवाः । भीमं दुष्करत्वात् भयङ्करं व्रतं यस्य स तथा, तस्य भावः तत्त्वं तस्मात् । अस्य देवव्रतस्य भीष्म इति नाम कृत्वा प्रसूनवृष्टिं देवव्रतस्य उपरीति शेषः । अचीक्लृपन् ववृषुः । स च भीष्मः दाशेन दत्तां कालीं कालीनाम्नीं वसुकन्यां समादाय पितुः समर्पयत् ।।७५।।

**ज्ञात्वा तु तां राजपुत्रीं गुणाढ्यां सत्यस्य विष्णोर्मातरं नामतस्तत् ।**
**लोके प्रसिद्धां सत्यवतीत्युदारां विवाहयामास पितुः स भीष्मः ।।७६।।**

**व्यासतीर्थीया–** तत् सत्यस्य मातृत्वात् । नामतः सत्यवतीति लोके प्रसिद्धाम् ।।७६।।

**वेदाङ्गतीर्थीया–** भीष्मोऽपि दाशगृहे स्थितां तां कथं विवाहयामासेत्यत आह– **ज्ञात्वेति** ।।७६।।

**मधुसूदनीया–** ।। **ज्ञात्वा तु तामिति** ।। तुशब्देनायं जानातीत्यत्र प्रमाणविशेषं सूचयति । तच्चोक्तम्– 'चेदिराजसुतां कन्यां ज्ञात्वा दाशराजेन पोषिताम्' [१०८.१] इत्यादिपर्वणि । चेदिराजो वसुरित्यर्थः ।।७६।।

**वरदराजीया–** ननु दाशगृहे विवृद्धां क्षत्रियायोग्यां कथं भीष्मः समर्पयदित्यत आह– **ज्ञात्वेति** ।। तां कालीं राजपुत्रीं राज्ञो वसोः पुत्रीम् । तत्कथं ज्ञातम्? गुणाढ्यां सौशील्यादिगुणोत्कृष्टां तथा

सत्यस्य विष्णोः मातरम् । तदपि कथम्? तत् तस्मात् सत्यमातृत्वात् लोके नामतः सत्यवतीति प्रसिद्धां उदारां रूपोदारां ज्ञात्वा पितुः पित्रे विवाहयामास प्रदत्तवानित्यर्थः ।।७६।।

**अनन्तभट्टीया–** तत् सत्यमातृत्वात् नामतः सत्यवतीति लोके प्रसिद्धाम् ।।७६।।

**जनार्दनीया–** तदा भीमं भयङ्करं व्रतं यस्य स तथा, तस्य भावस्तत्त्वं तस्मात् । अस्य देवव्रतस्य भीष्म इति नाम कृत्वा, प्रसूनानां पुष्पाणां वृष्टिं अचीक्लृपन् ववृषुः । स च भीष्मनामको देवव्रतः दाशेन दत्तां कालीं कालीनाम्नीं कन्यां वसुकन्यां पितुः समर्पयत् ।।७६।।

**ताम्रपर्णीया–** पराशरसङ्गेन कन्यात्वलोपात् कथं विवाहयामासेत्यत उदारां निर्दोषामित्युक्तम् । अत एव भारते 'त्वत्सम्पर्कात् प्रदुष्येत कन्याभावो ममानघ' इति [आदिपर्व.६४.११८] सत्यवतीप्रश्ने 'उवाच मत्प्रियं कृत्वा पुनः कन्या भविष्यसि' [आदि.६४.१२०] इति ऋषिणोत्तरं दत्तमित्युक्तं ज्ञेयम् ।।

**चट्टी–** ननु दाशगृहे स्थितां कन्यां भीष्मः कथं पितुः समर्पयदियत आह– **ज्ञात्वेति** ।। सः भीष्मः तां कालीं राजपुत्रीं वसुराजस्य पुत्रीं गुणाढ्यां सत्यस्य विष्णोर्मातरं तत् तस्मात् सत्यमातृत्वात् लोके नामतः सत्यवतीति प्रसिद्धां उदारां श्रेष्ठां ज्ञात्वा तु ज्ञात्वैव पितुर्विवाहयामास ।।७६।।

**प्रायः सतां न मनः पापमार्गे गच्छेदिति ह्यात्ममनश्च सक्तम् ।**
**ज्ञात्वाऽपि तां दाशगृहे विवर्द्धितां जग्राह सद्धर्मरतश्च शन्तनुः ।।७७।।**

**व्यासतीर्थीया–** सहसा दाशगृहस्थितां कथं जग्राहेत्यत आह– **प्राय इति** ।। राजपुत्रीं दाशगृहे विवर्धितामिति ।।७७-८०।।

**वेदाङ्गतीर्थीया–** शन्तनुस्तां दाशगृहे स्थितां स्वयं दृष्ट्वा कथं जगृहेत्यत आह– **प्राय इति** ।।७७।।

**वादिराजीया–** सतां मनः पापमार्गे प्रायः न गच्छेत् । चन्द्रस्य स्वोच्चबृहस्पतेर्दारपरिग्रहात्, सुग्रीवस्य स्वोच्चवालिवधूपरिग्रहदर्शनाच्च प्राय इत्युक्तम् । तर्हि तद्वदेव स्वस्यापि कदाचित् पापप्रवृत्तिः स्यादिति न शङ्कनीयम् । आकल्पान्तं मेरुमभितः पर्यटनेन लब्धस्वयोग्यतातिरिक्तपुण्यस्य सुग्रीवस्य च स्वयोग्यतातिरेकेण रामसेवार्जितपुण्यस्य च नाशाय कदाचित् पापे प्रवृत्तिसम्भवात् । मम तु तदभावात् न तादृशी प्रवृत्तिरिति भावसम्भवात् । अत एव सतामित्युक्तम् । स्वस्वयोग्यता यावती तावत्येव च सतां वर्तमानानां सतां सज्जनानामित्यावृत्त्या योजनीयम् । इति हेतोः आत्ममनश्च सक्तमिति हेतोश्च तां दाशकन्यात्वेन प्रसिद्धामपि दाशगृहे विवर्धितामपि विशेषेण राजकन्यायोग्यान्नपानविशेषेण वर्धिताम् । 'सर्वं वाक्यं सावधारणम्' इति न्यायेन विवर्धितामेव न उत्पन्नामित्यर्थः । ज्ञात्वा जग्राहेति योजना ।।७७।।

**मधुसूदनीया–** ।। **जग्राह सद्धर्मरतस्त्विति** ।। अनेन तस्या पूर्वं नदीरूपत्वेन तद्ग्रहणे न दोषस्तस्यैवेति सूचयति । तच्चोक्तम् – 'एतेषां मानसी कन्या अच्छोदा नाम निम्नगा । अच्छोदं नाम तद्दिव्यं सरो यस्याः समुत्थितम् ।।' इति हरिवंशे [१.१८.२७]। शन्तनोर्वरुणत्वेन नदीपत्वाच्च । तस्य तद्ग्रहणं सतां ज्ञानिनां मनः पापमार्गे नैवाभिगच्छेत् । क्वचिद्गच्छतीत्यर्थः । 'निषिद्धं मनसा कल्प्य भीतो विहितमाचरेत् । अज्ञो ज्ञस्य तु सङ्कल्पः स्वभावाद्विहितानुगः ।। शरीरधर्मिणः क्वापि निषिद्धेऽपि मनो व्रजेत् । तथापि तस्य नानर्थो मोक्षे नैवान्यथा व्रजेत्।।' [भा.ता.११.१८.३८] इति वचनात् ।।७७-८९।।

**वरदराजीया–** शन्तनुनापि अन्यथानुपपत्त्यैव अस्या विवाहयोग्यत्वं ज्ञातमित्याह– **प्राय इति** ।। सतां सज्जनानां मनः पापमार्गे न गच्छेत् न प्रवर्तते । अहल्याधर्षणादौ इन्द्रादिमनःप्रवृत्तिव्यावृत्त्यर्थं प्राय इत्युक्तम् ।आत्मनः स्वस्य मनश्च तस्यां सक्तं प्रवृत्तमभूत् हि यस्मात् तस्मात् सद्धर्मरतोऽपि शन्तनुः दाशगृहे विवर्धितां तां ज्ञात्वापि नायं अधर्म इति निश्चित्यैव जग्राह परिगृहीतवान् ।।७७।।

**अनन्तभट्टीया–** शन्तनुः हीनकुलानां गृहे स्थितां कथं जग्राहेत्यत आह– **प्राय इति** ।। इतीति प्रसिद्धम् ।।७७।।

**जनार्दनीया–** ननु शन्तनुः दाशगेहस्थामपि कन्यां कथं जग्राह इत्याशङ्कायामाह– **प्राय इति** ।। सतां मनः पापमार्गे न गच्छेद्धि । इन्द्रचन्द्रादिव्यावृत्त्यर्थं 'प्राय' इत्युक्तम् । आत्ममनश्च सक्तं तस्यामासक्तं इति हेतोः ज्ञात्वा तस्याः कुलीनत्वं ज्ञात्वेत्यर्थः । दाशगृहे विवर्धितामपि तां जग्राह । 'सद्धर्मरत' इति हेतुगर्भविशेषणम् । ननु भीष्मः अवर्णस्य गृहस्थां कन्यां कथं पितुः समर्पयत् इत्यत आह– **ज्ञात्वेति** ।। स भीष्मः राजपुत्रीं वसुपुत्रीं गुणाढ्यां, सत्यस्य विष्णोः मातरं उदारां श्रेष्ठां तत् तस्मात् विष्णुमातृत्वात् नामतः सत्यवतीति लोके प्रसिद्धां तां दाशदत्तां ज्ञात्वा ।।७७।।

**ताम्रपर्णीया–** ।। **प्राय इति** ।। सतां मनः पापमार्गे प्रायो न गच्छेत् । आत्ममनश्च सक्तमिति हेतोः । दाशगृहे विवर्धितामेव ज्ञात्वेति योज्यम् । न तूत्पन्नामिति भावः ।।७७-८०।।

**चट्टी–** ननु शन्तनुः दाशगृहे स्थितां कन्यां कथं जग्राहेत्यत आह– **प्राय इति** ।। सतां मनः पापमार्गे न गच्छेत् न प्रवर्तते हि । अहल्याधर्षणादौ इन्द्रादिमनःप्रवृत्तिव्यावृत्त्यर्थं प्राय इत्युक्तम् । आत्मनः स्वस्य मनश्च तस्यां सक्तं आसक्तमिति हेतोः ज्ञात्वा कुलीनत्वं ज्ञात्वेत्यर्थः । दाशगेहे विवर्धितामपि तां सद्धर्मरतः शन्तनुश्च जग्राह । सद्धर्मरत इति हेतुगर्भविशेषणम् ।।७७।।

**स्वच्छन्दमृत्युत्ववरं[1] प्रदाय तथाऽप्यजेयत्वमधृष्यतां च ।**
**युद्धेषु भीष्मस्य नृपोत्तमोऽसौ रेमे तयैवाब्दगणान् बहूंश्च ॥७८॥**

**वादिराजीया–** तथा ह्यजेयत्वमधृष्यतां चेत्यत्र अजेयत्वं परैरजेयताम् । अत एवाधृष्यतां परधर्षणायोग्यतां च प्रदायेति सम्वन्धः । धर्षणं वलात्कारेण ग्रहणम् । हीत्यनेन तादृशसामर्थ्यं भीष्मस्य प्रसिद्धमिति सूचयति ॥७८॥

**वरदराजीया–** स्वच्छन्दमृत्युत्वं स्वेच्छया मृत्युः मरणं यस्यासौ तथा, तस्य भावस्तत्वम् । तद्रूपं वरम् । तथा युद्धेषु अजेयत्वमपीति सम्वन्धः । अधृष्यतां च केनापि धर्षणानर्हत्वं च वरमिति वुद्ध्या विविच्य सम्बन्धनीयम् । प्रदाय दत्वा तया सत्यवत्या ॥७८॥

**अनन्तभट्टीया–** तथा अजेयत्वमपि ॥७८॥

**जनार्दनीया–** स नृपोत्तमः शन्तनुः, स्वच्छन्देन स्वेच्छया मृत्युत्ववरं मरणरूपवरं प्रदाय, तथा युद्धेषु अजेयत्वं अपराभवत्वं अधृष्यतां च शत्रुभिः धर्षणायोग्यत्वं प्रदाय, तया सत्यवत्या ॥७८॥

**भावचन्द्रिका–** वलवद्वधेऽपि स्वच्छन्दमृत्युत्वम् । अन्यथा तत्काले स्वतःसिद्धस्य दानं न स्यात् ।

**चट्टी–** सः नृपोत्तमः शन्तनुः भीष्मस्य, स्वच्छन्देन स्वेच्छया मृत्युर्मरणं यस्य सः स्वच्छन्दमृत्युः तस्य भावः तत्त्वम् । तद्रूपं वरं प्रदाय । तथा युद्धेषु अजेयत्वं पराभवराहित्यं अपि अधृष्यतां शत्रुभिः धर्षणानर्हत्वं च प्रदाय तया सत्यवत्या बहूनब्दगणांश्च रेमे ॥७८॥

**लेभे स चित्राङ्गदमत्र पुत्रं तथा द्वितीयं च विचित्रवीर्यम् ।**
**तयोश्च बाल्ये[2] व्यसृजच्छरीरं जीर्णेन देहेन हि किं ममेति ॥७९॥**

**वादिराजीया–** जीर्णेन देहेन हीत्यत्र हिशब्देन स्वच्छन्दमृत्युताप्रसिद्धिं सूचयति । परस्य स्वच्छन्दमृत्युतावरप्रदातुः स्वस्य स्वच्छन्दमृत्युता किं वाच्येति भावः ॥७९॥

**वरदराजीया–** अत्र सत्यवत्याम् । स शन्तनुः । तयोश्चित्राङ्गदविचित्रवीर्ययोः बाल्ये बाल्यावस्थायां शरीरं व्यसृजत् । इच्छयेति शेषः । तदेव दर्शयति– **जीर्णेनेति** ॥७९॥

**जनार्दनीया–** स शन्तनुः अत्रास्याम् । लेभे प्राप । तयोः पुत्रयोः बाल्ये बाल्यावस्थायां मम जीर्णेन देहेन किम् ? किं प्रयोजनम् ? इति शरीरं व्यसृजत् अत्यजत् ॥७९॥

---

१. 'स्वच्छन्दमरणं तुष्टो ददौ तस्मै महात्मने । न ते मृत्युः प्रभविता यावज्जीवितुमिच्छसि ॥ त्वत्तो ह्यनुज्ञां सम्प्राप्य मृत्युः प्रभवितानघ ॥' आदिपर्वणि १०७.११९ ।

२. 'अप्राप्तवति तस्मिंस्तु यौवनं पुरुषर्षभे । स राजा शन्तनुर्धीमान् कालधर्ममुपेयिवान् ॥' इत्यादिपर्वणि १०८.५ ॥

**चट्टी–** सः शन्तनुः अत्र अस्यां सत्यवत्यां चित्राङ्गदं तन्नामानं प्रथमपुत्रं तथा विचित्रवीर्यं इति द्वितीयं पुत्रं च लेभे । तयोः पुत्रयोः बाल्ये बाल्यावस्थायां मम जीर्णेन देहेन किं किं प्रयोजनमिति इच्छया इति शेषः । शरीरं व्यसृजत् ।।७९।।

**स्वेच्छया वरुणत्वं स प्राप नानिच्छया तनुः ।**
**तस्मिन् काले त्यज्यते हि बलवद्भिर्वधं विना ।।८०।।**

**व्यासतीर्थीया–** कारणान्तरं जीर्णेनेत्युक्तं विवृण्वन्नाह– **स्वेच्छयेति** ।। स्वेच्छया कथं देहत्यागो घटत इत्यत आह– **तनुरिति** ।।८०।।

**वेदाङ्गतीर्थीया–** बलवद्भिः वधं हननं विना तस्मिन् काले शरीरस्य जीर्णत्वदशायां तनुः त्यज्यते हि, स्वेच्छया त्यज्यते हि, बुद्धिमद्भिः क्षत्रियैरिति शेषः ।।८०-८४।।

**वादिराजीया–** तदेव स्पष्टयति– **स्वेच्छयेति** ।। स शन्तनुः स्वेच्छया वरुणत्वं वरुणाख्यमूलरूपत्वं प्राप । न त्वनिच्छया । अतो न स्वच्छन्दमृत्युत्वहानिः । बलवद्भिः योगबलवद्भिः तस्मिन् काले मरणेच्छाकाले वधं विना स्वेच्छयैव तनुस्त्यज्यते । हीति हिशब्देन योगैश्वर्यस्य तादृशसामर्थ्यं सतीदेव्यादौ प्रसिद्धमित्याह ।।८०।।

**सत्याभिनवीया–** तत्रैव स्वेच्छया वरुणत्वं स इति श्लोके बलवद्भिर्वधं विनेत्यस्य बलवत्कर्तृकवधविशिष्टशरीरं विनेत्यर्थः । एतेन बलवत्कर्तृकवधविशिष्टशरीरं विनेति वक्तव्यम् । 'बलवद्भिर्वधं विना' इति कथनमनुपपन्नमिति दूषणं परास्तम् । वधशब्देन वधविशिष्टशरीरस्य ग्रहणात् ।।८०।।

**वरदराजीया–** स शन्तनुः स्वेच्छया वरुणत्वं प्राप । तस्मिन् काले हि अनिच्छया इच्छाभावेन तनुः शरीरं न त्यज्यते । चित्राङ्गदे व्यभिचारपरिहारार्थमाह– **बलवद्भिरिति** ।। तस्य बलवता गन्धर्वेण हतत्वान्न नियमभङ्ग इत्यर्थः ।।८०।।

**अनन्तभट्टीया–** तस्मिन् काले बलवद्भिर्वधं विना अनिच्छया तनुः न त्यज्यते ।।८०।।

**जनार्दनीया–** तदेव विशदयति– **स्वेच्छेति** ।। तस्मिन् काले देहस्य जीर्णत्वावस्थायां बलवद्भिः वधं हननं विना अनिच्छया तनुर्न त्यज्यते, किन्त्विच्छयैवेत्यर्थः । तपोनिष्ठैरिति शेषः । हि यतो अतः स शन्तनुः स्वेच्छया वरुणत्वं प्रापेति अन्वयः । चित्राङ्गदादिव्यावृत्त्यर्थं बलवद्भिः इत्युक्तम् ।।

**ताम्रपर्णीया–** कथं शन्तनोः शरीरत्यागे स्वातन्त्र्यमित्यत उपपादयति– **स्वेच्छयेति** ।। तत्र कैमुत्यं हेतुमाह– **नानिच्छयेति** ।। तस्मिन् काले कैरप्यनिच्छया तनुर्न त्यज्यते हि यस्मात् अतो वरुणावतारः शन्तनुः स्वेच्छयैव वरुणत्वमापेति किमु वाच्यमित्यर्थः । अत्रापवादमाह– **बलवद्भिरिति** ।। बलवद्भिर्वधे तु अनिच्छयाऽपि तनुस्त्यज्यते । यथा चित्राङ्गद इति भावः । एतेनैतदपि प्रत्युक्तम् ।

स्वच्छन्दमृत्युत्वस्य कालधर्मत्वात् भीष्माय शन्तनुदत्तः स्वच्छन्दमृत्युत्वरः व्यर्थ इति बलवद्भिर्वधे प्रसक्तेऽपि स्वच्छन्दमृत्युत्वस्य वरविषयत्वात् । अत एव 'प्राणान् दधाराशु तथोत्तरायणात्' [ता.नि.२५.१२८] इति वक्ष्यतीति ज्ञेयम् । 'स शन्तनुः स्वेच्छयां वरुणत्वं प्राप अनिच्छया न प्राप । बलवद्भिः योगबलवद्भिः तस्मिन् काले मरणेच्छाकाले वधं विना तनुः स्वेच्छयैव त्यज्यते इत्यर्थः' इति केचित् ॥८०॥

**भारतश्री–** तत् तस्मात् । सः शन्तनुः स्वेच्छया वरुणत्वं प्राप । तर्हि चित्राङ्गदः कथं मृत इत्यत आह– **बलवद्भिरिति** ॥८०॥

**चट्टी–** तदेव विशदयति– **स्वेच्छयेति** ॥ तस्मिन् काले बलवद्भिः वधं हननं विना अनिच्छया तनुः न त्यज्यते किन्तु इच्छयैवेत्यर्थः । तपोनिष्ठैरिति शेषः । हि यस्मात् अतः सः शन्तनुः स्वेच्छया वरुणत्वं प्रापेत्यन्वयः । चित्राङ्गदादिव्यवृत्त्यर्थं बलवद्भिरित्युक्तम् ॥८०॥

**अतिसक्तास्तपोहीनाः[१] कथञ्चिन्मृतिमाप्नुयुः ।**
**अनिच्छयाऽपि हि यथा मृतश्चित्राङ्गदानुजः ॥८१॥**

**व्यासतीर्थीया–** कथञ्चिदनिच्छया ॥८१॥

**वादिराजीया–** अनिच्छयापि हीत्यत्र हिशब्देन विचित्रवीर्यस्य विषयासक्तता तपोहीनता च प्रसिद्धेति सूचयति ॥८१-८९॥

**वरदराजीया–** तथापि विचित्रवीर्यादौ व्यभिचारपरिहारार्थं व्याप्तिसङ्कोचमाह– **अतिसक्ता इति** ॥ विषयेषु अत्यन्तमासक्ताः अत एव तपसा हीना रहिता कथञ्चित् यक्ष्मादिरोगवशात् अनिच्छयापि मृतिमाप्नुयुः । अत्र तावदुदाहरणमाह– **यथेति** ॥ चित्राङ्गदस्यानुजो विचित्रवीर्यः । तथा च वक्ष्यति 'रेमेऽब्दगणान् सुसक्तः' इति 'तत्याज देहं च स यक्ष्मणार्दितः' इति च ॥८१॥

**अनन्तभट्टीया–** अतिसक्ताः । विषयेष्विति शेषः । कथञ्चित् कुत्रचिदिति शेषः ॥८१॥

**जनार्दनीया–** उक्तस्यापवादमाह– **अतिसक्ता इति** ॥ अतिसक्ताः विषयेष्वत्यासक्ताः तपोहीनाः बलवद्भिः स्वस्मात् बलिष्ठैः वधं विना अनिच्छया इच्छाभावेनैव कथञ्चित् मृतिहेतुरोगाद्यैः मृतिं आप्नुयुः । तत्र दृष्टान्तमाह– **यथेति** ॥ चित्राङ्गदस्य अनुजो विचित्रवीर्यः यक्ष्मणार्दितः सन् मृतः यथा तथेत्यर्थः । हि प्रसिद्धिः । बलवद्भिरित्यादेरुभयत्र अनुषङ्गः ॥८१॥

---

१. 'तपसा दानधर्मेण योगाभ्यासेन वर्धते । आयुर्धनं सुखं चेह चिकीत्सा नेह विद्यते ॥' इति भागवतव्याख्याने [९.११.१८] वंशीधरः ।

**चट्टी–** सः शन्तनुः अत्र अस्यां सत्यवत्यां चित्राङ्गदं तन्नामानं प्रथमपुत्रं तथा विचित्रवीर्यं इति द्वितीयं पुत्रं च लेभे । तयोः पुत्रयोः बाल्ये बाल्यावस्थायां मम जीर्णेन देहेन किं किं प्रयोजनमिति इच्छया इति शेषः । शरीरं व्यसृजत् ।।७९।।

**स्वेच्छया वरुणत्वं स प्राप नानिच्छया तनुः ।**
**तस्मिन् काले त्यज्यते हि बलवद्भिर्वधं विना ।।८०।।**

**व्यासतीर्थीया–** कारणान्तरं जीर्णेनेत्युक्तं विवृण्वन्नाह– **स्वेच्छयेति** ।। स्वेच्छया कथं देहत्यागो घटत इत्यत आह– **तनुरिति** ।।८०।।

**वेदाङ्गतीर्थीया–** बलवद्भिः वधं हननं विना तस्मिन् काले शरीरस्य जीर्णत्वदशायां तनुः त्यज्यते हि, स्वेच्छया त्यज्यते हि, बुद्धिमद्भिः क्षत्रियैरिति शेषः ।।८०-८४।।

**वादिराजीया–** तदेव स्पष्टयति– **स्वेच्छयेति** ।। स शन्तनुः स्वेच्छया वरुणत्वं वरुणाख्यमूलरूपत्वं प्राप । न त्वनिच्छया । अतो न स्वच्छन्दमृत्युत्वहानिः । बलवद्भिः योगबलवद्भिः तस्मिन् काले मरणेच्छाकाले वधं विना स्वेच्छयैव तनुस्त्यज्यते । हीति हिशब्देन योगैश्वर्यस्य तादृशसामर्थ्यं सतीदेव्यादौ प्रसिद्धमित्याह ।।८०।।

**सत्याभिनवीया–** तत्रैव स्वेच्छया वरुणत्वं स इति श्लोके बलवद्भिर्वधं विनेत्यस्य बलवत्कर्तृक-वधविशिष्टशरीरं विनेत्यर्थः । एतेन बलवत्कर्तृकवधविशिष्टशरीरं विनेति वक्तव्यम् । 'बलवद्भिर्वधं विना' इति कथनमनुपपन्नमिति दूषणं परास्तम् । वधशब्देन वधविशिष्टशरीरस्य ग्रहणात् ।।८०।।

**वरदराजीया–** स शन्तनुः स्वेच्छया वरुणत्वं प्राप । तस्मिन् काले हि अनिच्छया इच्छाभावेन तनुः शरीरं न त्यज्यते । चित्राङ्गदे व्यभिचारपरिहारार्थमाह– **बलवद्भिरिति** ।। तस्य बलवता गन्धर्वेण हतत्वान्न नियमभङ्ग इत्यर्थः ।।८०।।

**अनन्तभट्टीया–** तस्मिन् काले बलवद्भिर्वधं विना अनिच्छया तनुः न त्यज्यते ।।८०।।

**जनार्दनीया–** तदेव विशदयति– **स्वेच्छेति** ।। तस्मिन् काले देहस्य जीर्णत्वावस्थायां बलवद्भिः वधं हननं विना अनिच्छया तनुर्न त्यज्यते, किन्त्विच्छयैवेत्यर्थः । तपोनिष्ठैरिति शेषः । हि यतो अतः स शन्तनुः स्वेच्छया वरुणत्वं प्रापेति अन्वयः । चित्राङ्गदादिव्यावृत्त्यर्थं बलवद्भिः इत्युक्तम् ।।

**ताम्रपर्णीया–** कथं शन्तनोः शरीरत्यागे स्वातन्त्र्यमित्यत उपपादयति– **स्वेच्छयेति** ।। तत्र कैमुत्यं हेतुमाह– **नानिच्छयेति** ।। तस्मिन् काले कैरप्यनिच्छया तनुर्न त्यज्यते हि यस्मात् अतो वरुणावतारः शन्तनुः स्वेच्छयैव वरुणत्वमापेति किमु वाच्यमित्यर्थः । अत्रापवादमाह– **बलवद्भिरिति** ।। बलवद्भिर्वधे तु अनिच्छयाऽपि तनुस्त्यज्यते । यथा चित्राङ्गद इति भावः । एतेनैतदपि प्रत्युक्तम् ।

स्वच्छन्दमृत्युत्वस्य कालधर्मत्वात् भीष्माय शन्तनुदत्तः स्वच्छन्दमृत्युत्वरः व्यर्थ इति बलवद्भिर्वधे प्रसक्तेऽपि स्वच्छन्दमृत्युत्वस्य वरविषयत्वात् । अत एव 'प्राणान् दधाराशु तथोत्तरायणात्' [ता.नि.२५.१२८] इति वक्ष्यतीति ज्ञेयम् । 'स शन्तनुः स्वेच्छया वरुणत्वं प्राप अनिच्छया न प्राप । बलवद्भिः योगबलवद्भिः तस्मिन् काले मरणेच्छाकाले वधं विना तनुः स्वेच्छयैव त्यज्यते इत्यर्थः' इति केचित् ।।८०।।

**भारतश्री–** तत् तस्मात् । सः शन्तनुः स्वेच्छया वरुणत्वं प्राप । तर्हि चित्राङ्गदः कथं मृत इत्यत आह– **बलवद्भिरिति** ।।८०।।

**चट्टी–** तदेव विशदयति– **स्वेच्छयेति** ।। तस्मिन् काले बलवद्भिः वधं हननं विना अनिच्छया तनुः न त्यज्यते किन्तु इच्छयैवेत्यर्थः । तपोनिष्ठैरिति शेषः । हि यस्मात् अतः सः शन्तनुः स्वेच्छया वरुणत्वं प्रापेत्यन्वयः । चित्राङ्गदादिव्यवृत्त्यर्थं बलवद्भिरित्युक्तम् ।।८०।।

**अतिसक्तास्तपोहीनाः[1] कथञ्चिन्मृतिमाप्नुयुः ।**
**अनिच्छयाऽपि हि यथा मृतश्चित्राङ्गदानुजः ।।८१।।**

**व्यासतीर्थीया–** कथञ्चिदनिच्छया ।।८१।।

**वादिराजीया–** अनिच्छयापि हीत्यत्र हिशब्देन विचित्रवीर्यस्य विषयासक्तता तपोहीनता च प्रसिद्धेति सूचयति ।।८१-८९।।

**वरदराजीया–** तथापि विचित्रवीर्यादौ व्यभिचारपरिहारार्थं व्याप्तिसङ्कोचमाह– **अतिसक्ता इति** ।। विषयेषु अत्यन्तमासक्ताः अत एव तपसा हीना रहिता कथञ्चित् यक्ष्मादिरोगवशात् अनिच्छयापि मृतिमाप्नुयुः । अत्र तावदुदाहरणमाह– **यथेति** ।। चित्राङ्गदस्यानुजो विचित्रवीर्यः । तथा च वक्ष्यति 'रेमेऽब्दगणान् सुसक्तः' इति 'तत्याज देहं च स यक्ष्मणार्दितः' इति च ।।८१।।

**अनन्तभट्टीया–** अतिसक्ताः । विषयेष्विति शेषः । कथञ्चित् कुत्रचिदिति शेषः ।।८१।।

**जनार्दनीया–** उक्तस्यापवादमाह– **अतिसक्ता इति** ।। अतिसक्ताः विषयेष्वत्यासक्ताः तपोहीनाः बलवद्भिः स्वस्मात् बलिष्ठैः वधं विना अनिच्छया इच्छाभावेनैव कथञ्चित् मृतिहेतुरोगाद्यैः मृतिं आप्नुयुः । तत्र दृष्टान्तमाह– **यथेति** ।। चित्राङ्गदस्य अनुजो विचित्रवीर्यः यक्ष्मणार्दितः सन् मृतः यथा तथेत्यर्थः । हि प्रसिद्धिः । बलवद्भिरित्यादेरुभयत्र अनुषङ्गः ।।८१।।

---

१. 'तपसा दानधर्मेण योगाभ्यासेन वर्धते । आयुर्धनं सुखं चेह चिकीत्सा नेह विद्यते ।।' इति भागवतव्याख्याने [९.११.१८] वंशीधरः ।

**ताम्रपर्णीया–** बलवद्भिर्वधं विना अनिच्छया तनुर्न त्यज्यते इत्यत्रापवादमाह– **अतिसक्ता इति** ।। कथञ्चित् अनिच्छया । तत्रोदाहरणमनिच्छयेत्यादि ।।८१-८७।।

**भारतश्री–** विचित्रवीर्यमिति आशङ्क्य परिहरति– **अतिसक्ता इत्यादिना** ।। कथञ्चित् बलवत्कारणेन । नानिच्छया तनुस्त्यज्यते इत्येतत् प्राय इत्युक्तं भवति ।।८१-९३।।

**चट्टी–** तस्यापवादमाह– **अतिसक्ता इति** ।। अतिसक्ताः विषयेष्वत्यन्तं समासक्ताः । अत एव तपोहीनाः बलवद्भिः तस्मात् बलिष्ठैः वधं विना अनिच्छयापि ईच्छाभावेनैव कथञ्चित् मृतिहेतुरोगाद्यैर्मृतिं आप्नुयुः । तत्र दृष्टान्तमाह– **यथेति** ।। चित्राङ्गदस्य अनुजः विचित्रवीर्यः यक्ष्मणार्दितस्सन् यथा मृतः तथेत्यर्थः । हि प्रसिद्धः बलवद्भिरित्यस्य उभयत्रानुषङ्गः ।।८१।।

**अथौर्ध्वदैहिकं कृत्वा पितुर्भीष्मोऽभ्यषेचयत् ।**
**राज्ये चित्राङ्गदं वीरं यौवराज्येऽस्य चानुजम् ।।८२।।**

**व्यासतीर्थीया–** देहादूर्ध्वं भवं और्ध्वदैहिकम् ।।८२-८७।।

**वेदाङ्गतीर्थीया–** देहाद् यदूर्ध्वं तदौर्ध्वदैहिकम् । देहत्यागादनन्तरिकं कर्मेति भावः ।।८२-९०।।

**वरदराजीया–** अथ शन्तनुमरणानन्तरं पितुः शन्तनोः और्ध्वदेहिकं प्रेतकार्यम् । राज्येऽभ्यषेचयदिति सम्वन्धः । अस्य चित्राङ्गदस्यानुजं विचित्रवीर्यं यौवराज्ये कुमारराज्ये ।।८२।।

**जनार्दनीया–** प्रकृतमनुसरति– **अथेति** ।। अथ शन्तनोः स्वमूलरूपप्राप्त्यनन्तरं, और्ध्वदैहिकं देहात् यत् ऊर्ध्वं तदौर्ध्वदैहिकम् । प्रेतसंस्कारकर्म इति यावत् । अस्य चित्राङ्गदस्य अनुजं विचित्रवीर्यम् ।।

**चट्टी–** अथ शन्तनोः स्वमूलरूपप्राप्त्यनन्तरं भीष्मः पितुः शन्तनोः और्ध्वदैहिकं प्रेतसंस्कारं कर्म कृत्वा वीरं चित्राङ्गदं राज्ये अभ्यषेचयत् । अस्य चित्राङ्गदस्य अनुजं विचित्रवीर्यं यौवराज्ये चाभ्यषेचयत् ।।

**चित्राङ्गदेन निहतो [१]नाम स्वं त्वपरित्यजन् ।**
**चित्राङ्गदोऽकृतोद्वाहो गन्धर्वेण महारणे ।**
**विचित्रवीर्यं राजानं कृत्वा भीष्मोऽन्वपालयत् ।।८३।।**

---

१. 'त्वं वै सदृशनामासि युद्धं देहि नृपात्मज । नाम वान्यत्प्रगृह्णीष्व यदि युद्धं न दास्यसि ।। त्वयाहं युद्धमिच्छामि त्वत्सकाशं तु नामतः । आगतोऽस्मि वृथाऽभाष्य न गच्छेन्नाम ते मम ।।' इत्यादिपर्वणि । १०८.९-१० । 'तेनास्य सुमहद्युद्धं कुरुक्षेत्रे बभूव ह' 'नद्यास्तीरे हिरण्वत्याः समास्तिस्रोऽभवद्रणः' इत्यादि वाक्याभिप्रायमाह– महारण इति ।।

**वरदराजीया–** बलवद्भिर्वधं विनेत्येतन्निदर्शयति– **चित्राङ्गदेनेति** ।। अकृतोद्वहः न कृत उद्वाहो विवाहो यस्य स तथा । चित्राङ्गदेन गन्धर्वेण किमर्थं निहत इत्यत उक्तम्– **नामेति** ।। मदीयं चित्राङ्गदेति नाम परित्यज इत्युक्तोऽपि स्वनाम अपरित्यजन् निहत इति सम्बन्धः । अनु अनन्तरं विचित्रवीर्यं पूर्वं युवराजं राजानं कृत्वा ।।८३।।

**अनन्तभट्टीया–** अकृतोद्वाहः चित्राङ्गदः स्वनाम अपरित्यजन् चित्राङ्गदनामकगन्धर्वेण मन्नाम त्वं धारयसि तत्त्यजेत्युक्तेऽपि न अत्यजत् । चित्राङ्गदेन गन्धर्वेण ।।८३।।

**जनार्दनीया–** अकृतः उद्वाहः विवाहो येन स तथा । चित्राङ्गदः गन्धर्वेण चित्राङ्गदेन महारणे निहतः । किं कुर्वन् ? चित्राङ्गदाख्यं स्वं नाम अपरित्यजन् अत्यजन् । गन्धर्वचित्राङ्गदेन मदीयचित्राङ्गदाख्यं नाम तवायोग्यं तस्मात् त्वं चित्राङ्गदाख्यं नाम त्यजेत्युक्तः शन्तनुपुत्रः चित्राङ्गदः गन्धर्वोक्तमकुर्वन् गन्धर्वेण निहत इति भावः । अनु चित्राङ्गदमृत्यनन्तरम् ।।८३।।

**भावचन्द्रिका–** गन्धर्वाणां वलेन उपद्रवे प्राप्ते वली चित्राङ्गदो नाम आगत्य स्वं नाम त्यज युद्धं वा कुरु इत्युक्ते 'नाम' इत्यादि 'महारणे' इत्यन्तेन कुरुक्षेत्रे त्रिवर्षकृतयुद्धमाह ।।८३-८८।।

**चट्टी–** अकृतोद्वाहः न कृतः उद्वाहः विवाहो येन स तथा, चित्राङ्गदः महारणे चित्राङ्गदनामकेन गन्धर्वेण निहतः । किं कुर्वन् चित्राङ्गदाख्यं स्वं नाम अपरित्यजन् चित्राङ्गदाख्यगन्धर्वेण मदीयं नाम तवायोग्यं तस्मात् त्वं चित्राङ्गद इति नाम त्यजेत्युक्तः शन्तनुपुत्रः चित्राङ्गदः गन्धर्वोक्तमकुर्वन् गन्धर्वेण निहत इति भावः । अनु अनन्तरं भीष्मः विचित्रवीर्यं राजानं कृत्वा अपालयत् ।।८३।।

**अथ काशिसुतास्तिस्रस्तदर्थं भीष्म आहरत् ।**
**अम्बामप्यम्बिकानाम्नीं तथैवाम्बालिकां पराम् ।।८४।।**

**वरदराजीया–** अथ अनन्तरं काशिसुताः काशिराजस्य कन्याः । तदर्थं विचित्रवीर्यार्थम् । ताः सुताः निर्दिशति– **अम्बामिति** ।। अपितथाशब्दौ समुच्चयार्थौ ।।८४।।

**अनन्तभट्टीया–** तदर्थं विचित्रवीर्यार्थम् ।।८४।।

**जनार्दनीया–** अथ काशिनः काशिराजस्य इत्यर्थः, सुताः । तदर्थं विचित्रवीर्यार्थं आहरत् अपहृतवान्।।

**चट्टी–** अथ भीष्मः तिस्रः काशिराजतनयाः कन्याः तदर्थं विचित्रवीर्यविवाहार्थं आहरत् अपहृतवान्।।

**पाणिग्रहणकाले तु ब्रह्मदत्तस्य वीर्यवान् ।**
**विजित्य तं साल्वराजं समेतान् क्षत्रियानपि ।।८५।।**

**वरदराजीया–** कदा आहरदित्यत आह– **पाणीति** ।। ब्रह्मदत्तस्य साल्वपितुः पाणिग्रहणकाले । क्षत्रियानपि विजित्य ।।८५।।

**जनार्दनीया–** तदेव विविच्याह– **पाणीति** ।। वीर्यवान् भीष्मः ब्रह्मदत्ताख्यासुरस्य पाणिग्रहणकाले उद्वाहसमये तं साल्वराजं ब्रह्मदत्तं समेतान् तत्र मिलितान् क्षत्रियानपि विजित्य, अम्बिकानाम्नीं तथैव परां द्वितीयां अम्बालिकां अम्बामपि विवाहस्यानर्हां अम्बानाम्नीमपि आहरदिति सम्बन्धः ।।८५।।

**चट्टी–** तदेव विविच्याह– **पाणीति** ।। वीर्यवान् भीष्मः ब्रह्मदत्ताख्यासुरस्य पाणिग्रहणकाले विवाहसमये तं साल्वराजं ब्रह्मदत्तं समेतान् तत्र मिलितान् क्षत्रियानपि विजित्य अम्बिकानाम्नीं तथैव परां द्वितीयां अम्बालिकाम्, अम्बामपि विवाहस्य अनर्हामम्बामपि आहरदिति सम्बन्धः ।।८५।।

**अम्बिकाम्बालिके तत्र संवादं चक्रतुः शुभे ।**
**अम्बा सा भीष्मभार्यैव पूर्वदेहे तु नैच्छत ।।८६।।**

**वादिराजीया–** पूर्वदेहे वराङ्गित्वदेहे भीष्मभार्या भीष्ममूलरूपद्युनाम्नो भार्या । तु देवपत्नीनां मनुष्यपत्नीत्वायोग्यताख्यविशेषेण नैच्छदेवेत्यन्वयः । हिरण्यगर्भस्य शापात् अभर्तृका भवेति शापात् अहं साल्वकामेत्यपि गर्हितं वाक्यमुवाच । स भीष्मस्तां विरुद्धभाषिणीं तत्याज । सा साल्वमेवागमच्च ।।८६।।

**वरदराजीया–** तत्र तासां मध्ये संवादं सम्प्रतिपत्तिम् । तत्र हेतुः– **शुभ इति** ।। गुणाधिक इत्यर्थः ।।८६।।

**अनन्तभट्टीया–** संवादं अङ्गीकारम् ।।८६।।

**जनार्दनीया–** तत्र तासु मध्ये शुभे शापादिदोषाभावादुत्तमे अम्बिकाम्बालिके उभे संवादं विचित्रवीर्यस्य भार्यात्वे अङ्गीकारम् । सा अम्बा पूर्वदेहे भीष्मभार्यैव वराङ्गिनाम्नी द्युवसोः भार्या हिरण्यगर्भस्य ब्रह्मणः शापात् सा अम्बेति नरेषु जातेत्यादिशापनिमित्तान्नैच्छत । विचित्रवीर्यमिति शेषः ।।८६।।

**ताम्रपर्णीया–** ।। **शुभेति** ।। अयोग्यसाल्वकामनात्यागाच्छुभत्वमिति भावः । शापात् अभर्तृका भवेति शापात् ।।८६।।

**भावचन्द्रिका–** तत्र विचित्रवीर्यस्य विवाहसमये भीष्मभार्यैव । न त्वन्यभार्या । ततः अन्यगात्व-शापाभावाच्च संवादं न चकार । तुशब्देन वसिष्ठापराधो योगविशेषं स्मारयति । नैच्छत् भीष्ममपि । तथोक्तं भारते ।।८६।।

**चट्टी–** तत्र तासां मध्ये शुभे शापादिदोषाभावादुत्तमे अम्बिकाम्बालिके उभे संवादं विचित्रवीर्यस्य भार्यात्वार्थे अङ्गीकारं चक्रतुः । पूर्वदेहे भीष्मभार्यैव वराङ्गीनाम्नी इदानीं अम्बानाम्नी सा हिरण्यगर्भस्य ब्रह्मणः शापात् सा अम्बेति नरेषु जातेत्यादिशापनिमित्तात् नैच्छत् । विचित्रवीर्यमिति शेषः ।।८६।।

**शापाद्धिरण्यगर्भस्य साल्वकामाऽहमित्यपि ।**
**उवाच तां स तत्याज साऽगमत् साल्वमेव च ।।८७।।**

**व्यासतीर्थीया–** इच्छाभावे निमित्तमुक्तम्– **शापादिति** ।।८७-८९।।

**वरदराजीया–** तत्र अम्बा पूर्वं वसुत्वे भीष्मभार्या वराङ्गिनाम्नी हिरण्यगर्भस्य शापात् 'प्रचोदयामास' इत्यादिना पूर्वमुक्तात् । अहं साल्वकामा ब्रह्मदत्तकामा । साल्वस्य पितुः ब्रह्मदत्तस्य साल्वेति नाम । इत्युवाचेति पूर्वेण सम्बन्धः । स भीष्मस्तां अम्बां तत्याज परित्यक्तवान् । सा अम्बा साल्वं ब्रह्मदत्तम् ।।८७।।

**अनन्तभट्टीया–** साल्वजनकब्रह्मदत्तकामा इत्युवाच ।।८७।।

**जनार्दनीया–** अहं साल्वकामापि ब्रह्मदत्तकामा इत्युवाच । ब्रह्मदत्तस्य साल्वविषयपतित्वात् साल्व इति नाम । स भीष्मः तामम्बां तत्याज अत्यजत् ।।८७।।

**चट्टी–** अहं साल्वकामापि ब्रह्मदत्तकामैव इत्युवाच । ब्रह्मदत्तस्य साल्वदेशपतित्वात् साल्व इति नाम । सः भीष्मः तामम्बां तत्याज । साम्बा च साल्वमेवागमत् ।।८७।।

**ताम्रपर्णीया–** ।। **साल्वकामेति** ।। अपि गर्हितं वाक्यं उवाचेत्यर्थः । 'गर्हासमुच्चये प्रश्ने अपिः' इत्यभिधानात् ।।८७-८९।।

**तेनाऽपि सम्परित्यक्ता परामृष्टेति सा पुनः ।**
**भीष्ममाप स नो गृह्णात् प्रययौ साऽपि भार्गवम् ।।८८।।**

**व्यासतीर्थीया–** भार्गवं गत्वा भीष्मेणात्मस्वीकारं तदभावे तद्वधं च वव्रे इति शेषः ।।८८।।

**वेदाङ्गतीर्थीया–** भार्गवं प्रययौ । तं प्राप्य चात्मनो भीष्मस्वीकारं तदभावे तस्य वधं च वव्रे इति शेषः ।।८८।।

**वादिराजीया–** स नो गृह्णादित्यत्र गृह्णादगृह्णादित्यर्थः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति सूत्रात् ओदन्तनिपातस्य प्रकृतित्वेनाडागमाभावो न दोषः ।।८८-९३।।

**वरदराजीया–** कदा आहरदित्यत आह– **पाणीति** ।। ब्रह्मदत्तस्य साल्वपितुः पाणिग्रहणकाले । क्षत्रियानपि विजित्य ।।८५।।

**जनार्दनीया–** तदेव विविच्याह– **पाणीति** ।। वीर्यवान् भीष्मः ब्रह्मदत्ताख्यासुरस्य पाणिग्रहणकाले उद्वाहसमये तं साल्वराजं ब्रह्मदत्तं समेतान् तत्र मिलितान् क्षत्रियानपि विजित्य, अम्बिकानाम्नीं तथैव परां द्वितीयां अम्बालिकां अम्बामपि विवाहस्यानर्हां अम्बानाम्नीमपि आहरदिति सम्बन्धः ।।८५।।

**चट्टी–** तदेव विविच्याह– **पाणीति** ।। वीर्यवान् भीष्मः ब्रह्मदत्ताख्यासुरस्य पाणिग्रहणकाले विवाहसमये तं साल्वराजं ब्रह्मदत्तं समेतान् तत्र मिलितान् क्षत्रियानपि विजित्य अम्बिकानाम्नीं तथैव परां द्वितीयां अम्बालिकाम्, अम्बामपि विवाहस्य अनर्हामम्बामपि आहरदिति सम्बन्धः ।।८५।।

**अम्बिकाम्बालिके तत्र संवादं चक्रतुः शुभे ।**
**अम्बा सा भीष्मभार्यैव पूर्वदेहे तु नैच्छत ।।८६।।**

**वादिराजीया–** पूर्वदेहे वराङ्गित्वदेहे भीष्मभार्या भीष्ममूलरूपद्युनाम्नो भार्या । तु देवपत्नीनां मनुष्यपत्नीत्वायोग्यताख्यविशेषेण नैच्छदेवेत्यन्वयः । हिरण्यगर्भस्य शापात् अभर्तृका भवेति शापात् अहं साल्वकामेत्यपि गर्हितं वाक्यमुवाच । स भीष्मस्तां विरुद्धभाषिणीं तत्याज । सा साल्वमेवागमच्च ।।८६।।

**वरदराजीया–** तत्र तासां मध्ये संवादं सम्प्रतिपत्तिम् । तत्र हेतुः– **शुभ इति** ।। गुणाधिक इत्यर्थः ।।८६।।

**अनन्तभट्टीया–** संवादं अङ्गीकारम् ।।८६।।

**जनार्दनीया–** तत्र तासु मध्ये शुभे शापादिदोषाभावादुत्तमे अम्बिकाम्बालिके उभे संवादं विचित्रवीर्यस्य भार्यात्वे अङ्गीकारम् । सा अम्बा पूर्वदेहे भीष्मभार्यैव वराङ्गिनाम्नी द्युवसोः भार्या हिरण्यगर्भस्य ब्रह्मणः शापात् सा अम्बेति नरेषु जातेत्यादिशापनिमित्तान्नैच्छत । विचित्रवीर्यमिति शेषः ।।८६।।

**ताम्रपर्णीया–** ।। **शुभेति** ।। अयोग्यसाल्वकामनात्यागाच्छुभत्वमिति भावः । शापात् अभर्तृका भवेति शापात् ।।८६।।

**भावचन्द्रिका–** तत्र विचित्रवीर्यस्य विवाहसमये भीष्मभार्यैव । न त्वन्यभार्या । ततः अन्यगात्व-शापाभावाच्च संवादं न चकार । तुशब्देन वसिष्ठापराधो योगविशेषं स्मारयति । नैच्छत् भीष्ममपि । तथोक्तं भारते ।।८६।।

**चट्टी–** तत्र तासां मध्ये शुभे शापादिदोषाभावादुत्तमे अम्बिकाम्बालिके उभे संवादं विचित्रवीर्यस्य भार्यात्वार्थे अङ्गीकारं चक्रतुः । पूर्वदेहे भीष्मभार्यैव वराङ्गीनाम्नी इदानीं अम्बानाम्नी सा हिरण्यगर्भस्य ब्रह्मणः शापात् सा अम्बेति नरेषु जातेत्यादिशापनिमित्तात् नैच्छत् । विचित्रवीर्यमिति शेषः ।।८६।।

**शापाद्धिरण्यगर्भस्य साल्वकामाऽहमित्यपि ।**
**उवाच तां स तत्याज साऽगमत् साल्वमेव च ।।८७।।**

**व्यासतीर्थीया–** इच्छाभावे निमित्तमुक्तम्– **शापादिति** ।।८७-८९।।

**वरदराजीया–** तत्र अम्बा पूर्वं वसुत्वे भीष्मभार्या वराङ्गिनाम्नी हिरण्यगर्भस्य शापात् 'प्रचोदयामास' इत्यादिना पूर्वमुक्तात् । अहं साल्वकामा ब्रह्मदत्तकामा । साल्वस्य पितुः ब्रह्मदत्तस्य साल्वेति नाम । इत्युवाचेति पूर्वेण सम्बन्धः । स भीष्मस्तां अम्वां तत्याज परित्यक्तवान् । सा अम्वा साल्वं ब्रह्मदत्तम् ।।८७।।

**अनन्तभट्टीया–** साल्वजनकब्रह्मदत्तकामा इत्युवाच ।।८७।।

**जनार्दनीया–** अहं साल्वकामापि ब्रह्मदत्तकामा इत्युवाच । ब्रह्मदत्तस्य साल्वविषयपतित्वात् साल्व इति नाम । स भीष्मः तामम्वां तत्याज अत्यजत् ।।८७।।

**चट्टी–** अहं साल्वकामापि ब्रह्मदत्तकामैव इत्युवाच । ब्रह्मदत्तस्य साल्वदेशपतित्वात् साल्व इति नाम । सः भीष्मः तामम्वां तत्याज । साम्वा च साल्वमेवागमत् ।।८७।।

**ताम्रपर्णीया–** ।। **साल्वकामेति** ।। अपि गर्हितं वाक्यं उवाचेत्यर्थः । 'गर्हासमुच्चये प्रश्ने अपिः' इत्यभिधानात् ।।८७-८९।।

**तेनाऽपि सम्परित्यक्ता परामृष्टेति सा पुनः ।**
**भीष्ममाप स नो गृह्णात् प्रययौ साऽपि भार्गवम् ।।८८।।**

**व्यासतीर्थीया–** भार्गवं गत्वा भीष्मेणात्मस्वीकारं तदभावे तद्वधं च वव्रे इति शेषः ।।८८।।

**वेदाङ्गतीर्थीया–** भार्गवं प्रययौ । तं प्राप्य चात्मनो भीष्मस्वीकारं तदभावे तस्य वधं च वव्रे इति शेषः ।।८८।।

**वादिराजीया–** स नो गृह्णादित्यत्र गृह्णादगृह्णादित्यर्थः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति सूत्रात् ओदन्तनिपातस्य प्रकृतित्वेनाडागमाभावो न दोषः ।।८८-९३।।

**मधुसूदनीया–** ।। **भीष्ममापेति** ।। षड्वर्षाणि तमन्वगाच्चेति द्रष्टव्यम् । 'एवमन्वगमद्भीष्मं षट्समा पुष्करेक्षणा' इत्यादिपर्वणि [१०९.८६] ।।८८-९५।।

**वरदराजीया–** तेन ब्रह्मदत्तेन परामृष्टा परैरिति शेषः । परै आमृष्टा अशुद्धीकृतेति वा । इति हेतोः सा अम्बा पुनः भीष्ममाप । स भीष्मः । नो इति निषेधार्थे अव्ययम् । अगृह्णत् परिगृहीतवान् । सापि अम्बापि भार्गवं परशुरामं प्रययौ ।।८८।।

**अनन्तभट्टीया–** परामृष्टा परैरिति शेषः । भार्गवं प्रययौ ।।८८।।

**जनार्दनीया–** तेन साल्वेन परामृष्टा स्पृष्टेत्यर्थः । अन्यपुरुषेणेति शेषः । सम्परित्यक्ता सा अम्बा भीष्मं पुनराप । स भीष्मः नो अगृह्णात् नाङ्गीचकार । गृह्णात् अगृह्णादिति वा । सापि भार्गवं रामं प्रति ययौ ।।८८।।

**ताम्रपर्णीया–** ।। **भीष्ममापेति** ।। आप च । त्वमेव मद्भर्ता भवेत्युवाचेति शेषः । तदुक्तं भारते । 'इत्युक्ता सा समागम्य भीष्मं पुनरथाब्रवीत् । भीष्म त्वयाऽहं सहसा हृता चैव स्वयंवरे । क्षत्रधर्ममवेक्ष्यस्व त्वं भर्ता मम धर्मतः' [आदि.१०९.८२-८३] इति । अगृह्णत् अगृह्णात् भार्गवं नत्वा भीष्मेणात्मस्वीकारं तदभावे तद्वधं च वव्रे । सोऽपि वरं दत्तवानिति वाक्यशेषः ।।८८।।

**भावचन्द्रिका–** परामृष्टा क्षत्रियान्तरलब्धा 'मनोवचश्शरीरतो यतो हि ताः पतिव्रता' इत्युक्तत्वेन स्वपतीतरकामनाभावः स्वभावत एव । साल्वादिकामना तु शापादिप्रयुक्ता इति ज्ञेयम् ।।८८-९२।।

**चट्टी–** तेन साल्वेनापि परामृष्टेति सा सम्परित्यक्ता सती पुनः भीष्ममाप । सा षड्वर्षाणि तमन्वगमच्चेति द्रष्टव्यम् । 'एवमन्वगमद् भीष्मं षट्समाः पुष्करेक्षणा' इत्यादिपर्वणि । स भीष्मस्तां नोगृह्णत् । 'बहुलं छन्दसि' इति सूत्रात् ओदन्तनिपातस्य प्रकृतित्वेन अडागमाभावे न दोषः । सापि भार्गवं रामं प्रययौ ।।८८।।

**भ्रातुर्विवाहयामास सोऽम्बिकाम्बालिके ततः ।**
**भीष्माय तु यशो दातुं युयुधे तेन भार्गवः ।।८९।।**

**वरदराजीया–** सः भीष्मः भ्रातुर्विचित्रवीर्यस्य । भीष्मो यथा मां गृह्णीयात् तथा कुरु नो चेत्तं जहीति अम्बया प्रार्थितो ।।८९।।

**अनन्तभट्टीया–** भीष्मेण स्वस्वीकारं...तेन रामेण...इति शेषः ।।८९।।

**जनार्दनीया–** ततः अम्बागमनानन्तरं स भीष्मः अम्बिकाम्बालिके भ्रातुः विचित्रवीर्यस्य । तेन भीष्मेण मत्स्वीकारं कारय तदभावे तस्य वधं कुर्विति प्रार्थित इति कथानुसन्धेया । भार्गवः भीष्माय यशः तद्वाक्यसत्यकारणरूपं यशः दातुं, तेन भीष्मेण ॥८९॥

**चट्टी–** सः भीष्मः ततः अनन्तरं अम्बिकाम्बालिके भ्रातुर्विचित्रवीर्यस्य विवाहयामास । भार्गवः परशुरामः भीष्माय यशः तद्वाक्यसत्यकरणरूपं यशो दातुं तेन भीष्मेण युयुधे । अत्र भीष्मः यथा मां गृह्णीयात् तथा कुरुष्व । तदभावे तस्य वधं कुर्विति तया अम्बया भार्गवं रामं प्रत्युक्तमिति कथा अनुसन्धेया ॥८९॥

**अनन्तशक्तिरपि सन् न भीष्मं निजघान ह ।**
**न चाम्बां ग्राहयामास भीष्मकारुण्ययन्त्रितः ॥९०॥**

**व्यासतीर्थीया–** असामर्थ्यात् न जघान न ग्राहयामासेति सम्भवे भीष्मस्य कारुण्ययन्त्रितत्वं तत्र निमित्तं कुतः कल्प्यत इत्यत उक्तम्– **अनन्तशक्तिरिति** ॥९०॥

**वरदराजीया–** अनन्तशक्तिः सन्नपि भार्गवो भीष्माय यशो दातुं तेन भीष्मेण केवलं युयुधे । न तु जघानेत्यर्थः । अत एव अम्वां न ग्राहयामास भीष्मस्य [भीष्मेण] च न विवाहयामास । सः भीष्मस्य कारुण्येन दयया यन्त्रितो बद्धः ॥९०॥

**जनार्दनीया–** ननु अशक्तत्वान्न जघानेति किं न स्यादित्यत आह– **अनन्तशक्तिरिति** ॥ अनन्तशक्त्यादिविशेषवान् यः, यस्य समः अन्यो नास्ति । तस्य परमस्य सर्वोत्कृष्टस्य रामस्य कथञ्चन केनापि प्रकारेण कुत्रचित् देशे काले च अशक्तिः कथम् ? न हीत्यर्थः । भीष्मे विद्यमानं यत्कारुण्यं कृपा तया यन्त्रितो बद्धो रामः अम्बां न ग्राहयामास । भीष्मेण इति शेषः ॥९०॥

**ताम्रपर्णीया–** ॥ **अनन्तशक्तिरिति** ॥ अनन्तशक्तिरपि सन् अशक्त्यादिदोषरहितोऽपि भीष्मकारुण्ययन्त्रितः भीष्माय यशो दातुं केवलं तेन ययुधे । न भीष्मं निजघान । न चाम्बां ग्राहयामासेति योजना ॥९०॥

**चट्टी–** अनन्तशक्तिरपि सन् भीष्मं न निजघान । भीष्मे विद्यमानं यत्कारुण्यं कृपा तया यन्त्रितो बद्धः रामः एतामम्बां न ग्राहयामास । भीष्मेणेति शेषः ॥९०॥

**अनन्तशक्तिः सकलान्तरात्मा यः सर्ववित् सर्ववशी च सर्वजित् ।**
**न यत्समोऽन्योऽस्ति कथञ्च कुत्रचित्कथं ह्यशक्तिः परमस्य तस्य ॥९१॥**

**व्यासतीर्थीया–** तदेव विवृणोति– **अनन्तेति** ।।९१।।

**वादिराजीया–** कथं ह्यशक्तिरित्यत्र हिशब्देन 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुतिप्रसिद्धिं सूचयति ।।९१।।

**वरदराजीया–** अशक्त एनं न जघानेति किं न स्यादित्यत आह– **अनन्तशक्तिरिति** ।। अनन्ता अपरिमिता शक्तिः यस्य सः । सकलस्य चेतनाचेतनसमुदायस्य अन्तरात्मा अन्तर्नियामकः, सर्ववित् सर्वज्ञः, सर्वं वशे यस्य स तथा । सर्वं जेतुं शीलं अस्य अस्तीति तथा । अस्य कथञ्चन केनापि प्रकारेण कुत्रचित् देशे काले च अशक्तिः कथञ्च कथमपीत्यर्थः ।।९१।।

**ताम्रपर्णीया–** अत्र पुराणवाक्यं पठति– **अनन्तशक्तिरिति** ।। तस्य परमस्य कुत्रचिदपि विषये भीष्मसंहारे अम्बाग्रहणे च कथमशक्तिः स्यादित्यर्थः । कुतो नाशक्तिरित्यत आह– **न यदिति** ।। कुत्रचिदपि देशे काले वा कस्मिंश्चिदपि विषये कथञ्च केनापि प्रकारेण यस्यान्यः समो नास्तीत्यर्थः । निस्सीमशक्तित्वाच्च नाशक्तिरित्याह– **अनन्तशक्तिरिति** ।। सर्वान्तरात्मतया सर्ववशित्वात् सर्वजयित्वाच्च नाम्बाग्रहणे अशक्तिरित्याह– **सकलान्तरात्मा सर्ववशी सर्वजिदिति** ।। तर्हि कुतो न भीष्मं निजघान न चाम्बां ग्राहयामासेत्यतो हेतुमाह– **सर्वविदिति** ।। हिरण्यगर्भशापाद्यखिलदेवकार्यविदित्यर्थः ।।९१।।

**भावचन्द्रिका–** असामर्थ्यं नेत्याह– **अनन्तेति** ।। शापोऽपि स्वेनैव दापित इत्याह– **सकलान्तरात्मा इति** ।। तदिदानीं जानातीत्याह– **सर्वेति** ।। अस्यैव स्वतन्त्रत्वेन भीष्मस्य चेष्टायां च सामर्थ्यं नेत्याह– **सर्वं वशे यस्य इति** ।। नास्य पराभावोऽपीत्याह– **सर्वेति** ।।९१।।

**चट्टी–** ननु अशक्तत्वात् न जघानेति किं न स्यादित्यत आह– **अनन्तशक्तिरिति** ।। अनन्ता अपरिमिता शक्तिः यस्य सः अनन्तशक्तिः । सकलस्य चेतनाचेतनसमुदायस्य अन्तरात्मा अन्तर्नियामकः। सर्ववित् सर्वज्ञः । सर्वं वशे अस्यास्तीति सर्ववशी । सर्वं जेतुं शीलमस्यास्तीति सर्वजित् । यत्समो यस्य समो अन्यो नास्ति । तस्य परमस्य सर्वोत्कृष्टस्य रामस्य कथञ्चन केनापि प्रकारेण कुत्रचित् देशे काले चाशक्तिः कथम्? न हीत्यर्थः ।।९१।।

**भीष्मं स्वभक्तं यशसाऽभिपूरयन् विमोहयन्नासुरांश्चैव रामः ।**
**जित्वैव भीष्मं न जघान देवो वाचं च सत्यामकरोत् स तस्य ।।९२।।**

**व्यासतीर्थीया–** अनन्तशक्तिश्चेद्रामः कस्मात् भीष्मं न जघानेत्यतः तत्कारुण्ययन्त्रितत्वं निमित्तमुक्तम् । निमित्तान्तरमाह– **भीष्मं इति** ।। एवं सङ्कटे जातेऽपि नाम्बां जग्राहेति यशसाभिपूरयन् । सर्वथाऽम्बां न ग्रहीष्ये इति वाचम् ।।९२।।

**वेदाङ्गतीर्थीया–** एवं सङ्कटे जातेऽपि नाम्बां जग्राहेति यशसाभिपूरयन् । तस्य भीष्मस्य वाचं अम्बां न गृह्णीयामिति प्रतिज्ञारूपां वाचम् ।।९२।।

**वादिराजीया–** विमोहयन्नासुरांश्चैव राम इत्यत्र आसुरानेव विमोहयंश्चेति पदसम्बन्धः । जित्वैव भीष्ममिति वस्तुस्थितिकथनम् । लोकदृष्ट्या तु मामप्यजयदयं भीष्मः । अतो मया किं कार्यमित्यम्बां वञ्चयितुं पराजितवदभूदिति चोह्यम् । 'वाचं च सत्याम्' इत्यत्र वाचं ऊर्ध्वरेताः सततं भवानीति वाचम् ।।९२।।

**वरदराजीया–** तस्मादुक्तमेव युक्तमित्याह– **भीष्ममिति** ।। आसुरान् जनान् । स रामः तस्य भीष्मस्य वाचं त्वां न परिगृहीष्यामीत्येवं रूपाम् ।।९२।।

**जनार्दनीया–** यशसा अम्बां न जग्राहेत्येवंरूपयशसा अभिपूरयन्, असुरान् विमोहयन्, भीष्मं जित्वैव न जघान । स देवो रामः तस्य भीष्मस्य वाचं अम्बां न गृह्णीयामिति प्रतिज्ञारूपां वाचं सत्यामकरोत् ।।९२।।

**ताम्रपर्णीया–** हेत्वन्तरमाह– **भीष्ममिति** ।। अन्यदप्याह– **विमोहयन्निति** ।।९२।।

**भारतश्री–** जित्वैव जितवद्दर्शयामासेति शेषः ।।९२।।

**चट्टी–** तस्मादुक्तमेव युक्तमित्याह– **भीष्ममिति** ।। रामः स्वभक्तं भीष्मं यशसा अम्बां न जग्राहेत्येवंरूपयशसा अभिपूरयन् असुरांश्चैव असुरानेव विमोहयन् भीष्मं जित्वैव न जघान । सः देवो रामः तस्य भीष्मस्य वाचं अम्बां न गृह्णामीति प्रतिज्ञारूपवाचं सत्यामकरोत् ।।९२।।

**'विद्धवन्मुग्धवच्चैव केशवो वेदनार्तवत् ।**
**दर्शयन्नपि मोहाय नैव विष्णुस्तथा भवेत् ।'**
**एवमादिपुराणोत्थवाक्याद् रामः सदा जयी ।।९३।।**

**व्यासतीर्थीया–** अनन्तशक्तित्वाद्युपपत्तिभी रामस्य पराजयाभावं प्रसाध्यागमेनापि प्रसाधयन्नाह– **विद्धवदिति** ।।९३।।

**वेदाङ्गतीर्थीया–** अनन्तशक्तित्वाद्युपपत्त्या रामस्य पराजयाभावं प्रसाध्यागमेनापि साधयति– **विद्धवदिति** ।। केशवः विद्धादिवत् दर्शयतीति शेषः । विष्णुरेवं दर्शयन्नपि न तथा भवेदिति योजना ।।

**वादिराजीया–** वस्तुगत्या पराभवः कुतो नेतीति शङ्कां पुराणवाक्येनैव परिहरति– **विद्धवदिति** ।।९३।।

**वरदराजीया–** ननु अस्मिन्नर्थे किं प्रमाणमित्यत आह– **विद्धवदिति** ।। विद्धवत् शस्त्रैर्विद्धवत्, मुग्धवत् अज्ञ इव, वेदनया आर्तः दुःखित इव, स्वात्मानं दुष्टमोहाय दर्शयन्नपि विष्णुः तथा विद्धादिवन्नैव भवेत् । केशवः केशौ ब्रह्मरुद्रौ सृष्ट्यादिना वर्तयति प्रवर्तयति इति उक्तार्थे हेतुः । एवमादि च तत्पुराणोत्थं पुराणस्थितं वाक्यं च तस्मात् प्रमाणात् ।।९३।।

**जनार्दनीया–** स्वोक्तार्थे प्रमाणमुदाहरति– **विद्धवदिति** ।। केशवः विद्धवत् भल्लेन विद्धवत् मुग्धवत् अज्ञवत् वेदनया व्यथया आर्तवत् पीडितवत् । दर्शयति इति शेषः । विष्णुः मोहाय दर्शयन् अपि तथा विद्धादिवत् न भवेत् । एवमादि उक्तपुराणवाक्यादि च तत् पुराणोत्थवाक्यं च तस्मात् ।।९३।।

**ताम्रपर्णीया–** उक्तहेतूनां वेधादिग्राहकप्रत्यक्षविरोध इत्यतः प्रत्यक्षं भ्रान्तमित्याह– **विद्धवदिति** ।। दर्शयन्नपि कुतो न भवेदित्यतः भार्गवस्य विष्णुत्वात् विष्णोश्च दोषग्राहिप्रत्यक्षं धर्मिग्राहकागमबाधितत्वात् अप्रमाणमेवेति भावेन विष्णुरित्युक्तम् । भार्गव इति वाच्ये केशव इति चोक्तम् । कश्च ईशश्च केशौ तौ सृष्ट्यादिना वर्तयतीति केशव इत्यर्थः ।।९३।।

**चट्टी–** अनन्तशक्तित्वाद्युपपत्तिभी रामस्य पराजयाभावं प्रसाध्यागमेनापि साधयति– **विद्धवदिति** ।। केशवो विद्धवत् शस्त्रैः विद्ध इव, मुग्धवत् अज्ञ इव, वेदनया व्यथया आर्तवत् दुःखित इव स्वात्मानं दुष्टमोहाय दर्शयन्नपि विष्णुस्तथा विद्धादिवन्नैव भवेत् । एवमादि च तत् पुराणोत्थं पुराणस्थितश्च वाक्यं तस्मात् रामः सदा जयी ।।९३।।

**यशो भीष्मस्य दत्वा तु सोऽम्बां च शरणागताम् ।**
**उन्मुच्य भर्तृद्वेषोत्थपापात् तेनाऽऽश्वयोजयत् ।।९४।।**

**व्यासतीर्थीया–** त्वां भीष्मं ग्राहयिष्येऽन्यथा हनिष्ये इति प्रतिज्ञाभङ्ग इत्यत आह– **यश इति** ।। जन्मान्तरेऽपि भर्तृसम्बन्धविघटकात् भर्तृद्वेषोत्थपापादुन्मुच्य शिखण्डित्वादनन्तरं तेनायोजयत् ।।९४।।

**वेदाङ्गतीर्थीया–** त्वां भीष्मेण ग्राहयिष्ये अन्यथा भीष्मं हनिष्य इति रामप्रतिज्ञा तर्हि भग्नेत्यत आह– **यश इत्यादिना** ।। शिखण्डित्वादनन्तरं भर्तृद्वेषोत्थात् पापात् अम्बामुन्मुच्य मोचयित्वा तेन देहान्तरं गतेन भीष्मेण आशु अविलम्बेन अयोजयदिति सम्बन्धः । जन्मान्तरे तत्सम्बन्धघटनात् न रामप्रतिज्ञा भग्नेत्येतच्छ्लोकाभिप्रायः ।।९४।।

**वादिराजीया–** तर्हि शरणागताया अम्बायाः अभीष्टाकरणात् शरणागतवज्रपञ्जर इति भगवन्महिम्नो हानिरित्यत आह– **अम्बां च शरणागतामिति** ।। शिखण्डित्वात् अम्बाया एव शिखण्डिनाम्ना यज्जननं तस्य भावः शिखण्डित्वं तस्मात् । अनेनाम्बाया एव द्रुपदगेहे शिखण्डिनाम्ना यत् जन्माभूदिति

वक्ष्यमाणकथापि सूचिता । तस्मात् शिखण्डित्वादनन्तरं भर्तृभूतभीष्माचार्यस्य द्वेषः वधहेतुताख्यद्वेषः तस्मादुत्थपापात् उन्मुच्य मोचयित्वा तेन मूलरूपं गतेन भीष्मेणाशु तस्य मूलप्रवेशसमय एवायोजयत् । बहुजन्मस्वनुभोक्तव्यमपि भर्तृहननाख्यं भविष्यन्महापाप स्वशरणागमनाख्यमहापुण्येन शीघ्रं मोचयित्वा पत्या सहायोजयदिति भावः । अम्बाजन्मनि प्रायः भीष्मपाणिग्रहणायैव भार्गवं प्रति प्रार्थितत्वेन पापाभावात् शिखण्डित्वादनन्तरं भर्तृद्वेषोत्थपापादित्युक्तम् ।।९४।।

**वरदराजीया–** ननु अम्बाया अपि भक्तत्वाविशेषात् शरणं गतायास्तस्या नोपेक्षोचितेति तत्राह– **सोऽम्बाश्चेति** ।। भीष्माय यशो दत्वा भर्तुः भीष्मस्य द्वेषेण उत्थात् जातात् पापात् उन्मुच्य मोचयित्वा शिखण्डित्वादनन्तरं शिखण्डिजन्मानन्तरं तेन भीष्मेण अम्बां आशु अयोजयत् योजितवान् ।।९४।।

**अनन्तभट्टीया–** भर्तृद्वेषोत्थपापात् जन्मान्तरेऽपि भर्तृसंयोगविघटनात् पापात् उन्मुच्य । भार्गवः शिखण्डित्वादनन्तरमेव वसुना अयोजयत् ।।९४।।

**जनार्दनीया–** भीष्मेण त्वां ग्राहयिष्ये इति रामप्रतिज्ञायाः सार्थक्यं दर्शयति– **सोऽम्बामित्यादिना** ।। स रामः यशो दत्वा, अम्बां च भर्तुः भीष्मस्य द्वेषात् वधकारणरूपद्वेषात् उत्थं च तत् पापं च तस्मात् । उन्मुच्य ।।९४।।

**ताम्रपर्णीया–** त्वां भीष्मं ग्राहयिष्ये अन्यथा हनिष्ये इति प्रतिज्ञाविरोध इत्यत आह– **यश इत्यादिना** ।। अम्बारूपांशस्य शिखण्डिदेहापायानन्तरमपि भर्तृसंयोगविघटकभर्तृद्वेषोत्थपापात् उन्मुच्य शिखण्डित्वोनन्तरं शिखण्डिभावापायानन्तरं तेन भर्त्राश्वयोजयदित्यर्थः ।।९४।।

**चट्टी–** भीष्मः यथा त्वां ग्रहीष्यति तथा कुर्यामिति रामोक्तप्रतिज्ञायाः भङ्ग इत्यत तस्याः सार्थक्यं दर्शयति– **यश इत्यादिना** ।। सः रामः भीष्मस्य तु तद्वचः परिपालनेन यशो दत्वा शरणागतां अम्वां च, भर्तृद्वेषोत्थपापाद् भर्तुः भीष्मस्य द्वेषात् वधकारणभूतद्वेषाद् उत्थं च तत्पापं च तस्मात्, उन्मुच्य मोचयित्वा शिखण्डित्वादनन्तरं शिखण्डीस्वरूपानन्तरं तेन द्युरूपेण भीष्मेणाशु अविलम्बेनायोजयत् योजयामास ।।९४।।

**अनन्तरं शिखण्डित्वात् तदा सा शाङ्करं तपः ।**
**भीष्मस्य निधनार्थाय पुंस्त्वार्थं च चकार ह ।।९५।।**

**वादिराजीया–** तदा भार्गवसमीपात् प्रत्यागमनानन्तरं सा अम्बा शाङ्करं तपश्चकारेति योजना ।।९५-१००।।

**मधुसूदनीया**– ।। **शाङ्करं [दुष्करं] तप इति** ।। भीष्मस्य निधनार्थाय पुंस्त्वार्थं च सा अम्बा शाङ्करं तपश्चचार । द्वादशवर्षाणि चचार हीत्यनेन सूचयति । 'सा ततो द्वादश समा बाहुदामभितो नदीम्' इत्यादिपर्वणि [१०९.९४] ।।९५-१०६।।

**वरदराजीया**– सा अम्बा शाङ्करं शङ्करसम्बन्धि । तपसः फलमाह– **भीष्मेति** ।। तथा पुरुषत्वप्राप्त्यर्थं च ।।९५।।

**अनन्तभट्टीया**– पुंस्त्वार्थं स्वस्येति शेषः । भीष्मेण त्वां गृहीष्यामि तं...इत्युक्तस्य रामवचसो भङ्गो जात इत्याशङ्क्याह– **भीष्म इति** ।। अस्मिन्नेव...।।९५।।

**जनार्दनीया**– शिखण्डित्वात् अनन्तरं शिखण्डिस्वरूपानन्तरं तेन युरूपेण भीष्मेण आशु अविलम्बेन अयोजयत् योजयामास । जन्मान्तरे भर्तृसम्बन्धघटनात् न रामप्रतिज्ञाभङ्ग इत्येतत् श्लोकाभिप्रायः । तदा सा अम्बा भीष्मस्य निधनार्थाय प्रयोजनाय पुंस्त्वार्थं पुरुषत्वप्राप्त्यर्थं । स्वस्येति शेषः । शाङ्करं रुद्रसम्बन्धि ।।९५-९६।।

**ताम्रपर्णीया**– भर्तृद्वेषातिशयमुपपादयन्नाह– **तदेति** ।। केचित्तु 'भीष्मपाणिग्रहणायैव भार्गवप्रार्थनात् तदानीं पापाभावात् शिखण्डित्वानन्तरं शिखण्डिदेहप्राप्त्यनन्तरं भर्तृद्वेषोत्थपापादिति सम्बन्धः' इत्याहुः ।।

**भारतश्री**– शिखण्डित्वानन्तरं अशु अयोजयत् शिखण्डित्वादनन्तरमपि शीघ्रभर्तृयोगप्रतिबन्धकं भतृद्वेषोत्थपापं तस्मादुन्मुच्य संयोजनमाशु संयोजनम् । यदा न ग्राहयामास ।।९५।।

**चट्टी**– तदा सा अम्वा भीष्मस्य निधनार्थाय निधनाख्यप्रयोजनाय पुंस्त्वार्थं पुरुषत्वप्राप्त्यर्थं च आत्मन इति शेषः । शाङ्करं रुद्रसम्बन्धि तपश्चकार । द्वादशवर्षाणि चकार हीत्यनेन सूचयति । तदुक्तम्– 'ततोऽम्बा द्वादशसमा' इत्याद्यरण्यपर्वणि ।।९५।।

**भीष्मो यथा त्वां गृह्णीयात् तथा कुर्यामितीरितम् ।**
**रामेण सत्यं तच्चक्रे भीष्मे देहान्तरं गते ।।९६।।**

**व्यासतीर्थीया**– ननु भीष्मेण योजयितव्येति याचितत्वाज्जन्मान्तरे योजनेऽपि कथं न प्रतिज्ञाभङ्ग इत्यतो याचनानुसारेण भीष्मेण योजयिष्ये इति सामान्येन प्रतिज्ञातम् । तच्च कृतमतो न प्रतिज्ञाभङ्ग इत्याह– **भीष्म इति** ।।९६-१०१।।

**वेदाङ्गतीर्थीया**– तस्मिन् जन्मन्ययोजनात् कथं न प्रतिज्ञाभङ्ग इत्यत उक्तम्– **[भीष्म इत्यादि]** रामेणास्मिन् जन्मन्येव योजयामीति विशिष्यानुक्तत्वात् । भीष्मेण योजयिष्ये इति सामान्योक्तेश्च । जन्मान्तरविषयत्वाभिप्रायसम्भवात् तस्य च कृतत्वात् न रामप्रतिज्ञाभङ्ग इति भावः ।।९६।।

**वरदराजीया–** ननु भीष्मो यथा मां गृह्णीयादित्यम्बया प्रार्थितो रामस्तथा करिष्यामीत्युक्तवान् तथा च तत्प्रतिज्ञाया असत्यत्वं प्राप्तमित्यतः प्रतिज्ञाया अभिप्रायमाह– **भीष्म इति** ।। वसुत्वे प्राप्ते सति तथा करिष्यामीत्यभिप्रायेण प्रतिज्ञा कृतेति भावः ।।९६।।

**जनार्दनीया–** ननु देहान्तरगतभीष्मेण सह शिखण्ड्याः संयोजनात् रामप्रतिज्ञाभङ्ग इत्यतः प्रतिज्ञाभिप्रायमाह– **भीष्म इति** ।। रामेण इतीरितं तत् वाक्यं भीष्मे देहान्तरं गते वसुत्वं प्राप्ते सति सत्यं चक्रे । राम इति शेषः । रामेण 'अस्मिन् जन्मन्येव योजयिष्ये' इति विशिष्यानुक्तत्वात् 'भीष्मेण योजयिष्ये' इति सामान्योक्तेश्च जन्मान्तरविषयत्वाभिप्रायसम्भवात् तस्य च कृतत्वात् न रामप्रतिज्ञाभङ्ग इति भावः ।।९६।।

**ताम्रपर्णीया–** शिखण्डित्वानन्तरमपि भीष्मेण योजनाभावात् तेनाश्वयोजयदित्ययुक्तमिति शङ्कां परिहर्तुं तेनाश्वयोजयदित्युक्तं विवृणोति– **भीष्मेति** ।।९६।।

**भारतश्री–** तथा सत्यं तच्चक्रे न त्वनेनैव शरीरेण भीष्मो यथा त्वां गृह्णीयात् तथा कुर्यामित्युक्तं रामेण ।।९६।।

**चट्टि–** ननु भीष्मेण योजयितव्येति याचितत्वात् जन्मान्तरे योजनेऽपि कथं न प्रतिज्ञाभङ्गः रामस्येत्यतो याञ्चानुसारेण भीष्मेण योजयितव्येति सामान्येन प्रतिज्ञातम् । तच्च कृतम् । अतो न प्रतिज्ञाभङ्ग इत्याह– **भीष्म इति** ।। भीष्मो यथा त्वां गृह्णीयात् तथा कुर्यामिति रामेणेरितं तद्वाक्यं भीष्मे देहान्तरं गते वसुत्वं प्राप्ते सति सत्यं चक्रे । राम इति शेषः । यद्वा रामेण सत्यं चक्रे । कर्मणि लट् । रामेण 'अस्मिन् जन्मन्येव योजिष्ये' इति विशिष्यानुक्तत्वात् 'भीष्मेण योजयिष्ये' इति सामान्योक्तेश्च जन्मान्तरविषयत्वाभिप्रायसम्भवात् तस्य च कृतत्वान्न रामप्रतिज्ञाभङ्ग इति भावः ।।

**रुद्रस्तु तस्यास्तपसा तुष्टः प्रादाद् वरं तदा ।**
**भीष्मस्य मृतिहेतुत्वं कालात् पुंदेहसम्भवम् ।।९७।।**

**वादिराजीया–** कालात् पुंदेहसम्भवमित्यत्र कालात् देहान्तरप्राप्त्यनन्तरकालात् स हनिष्यति । भीष्ममित्येवेत्यत्र स एव भीष्मं हनिष्यति इत्युक्त्वा मालां प्रादादिति योग्यपदाध्याहारेण सम्बन्धः ।।९७।।

**वरदराजीया–** तस्याः अम्बायाः वरं वरद्वयं भीष्मस्य मृतिहेतुत्वम्, कालात् स्त्रीत्वेन जननानन्तरं पुंदेहसम्भवं पुरुषदेहप्राप्तिः । स्त्रियः पुरुषत्वेन जन्माभावादिति भावः ।।९७।।

**अनन्तभट्टीया–** पुंदेहसम्भवं पुरुषदेहे अवस्थानम् । मालाञ्च प्रादात् ।।९७।।

**जनार्दनीया–** तस्याः अम्बायाः मृतौ मरणे हेतुत्वं कालात् स्त्रीत्वोत्पत्तिकालोत्तरकालात् पुंदेहस्य पुरुषदेहस्य सम्भवं प्राप्तिं च इति वरद्वयम् । पुंदेहसम्भवं मृतिहेतुत्वं वरं वा प्रादात् ।।९७।।

**चट्टी–** रुद्रस्तु तदा तस्याः अम्बायाः तपसैव तुष्टस्सन् भीष्मस्य मृतौ मरणे हेतुत्वम्, कालात् स्त्रीत्वेनोत्पत्त्यनन्तरकालात् पुंदेहस्य पुरुषदेहस्य सम्भवं प्राप्तिं चेति वरद्वयम् । पुंदेहसम्भवं मृतिहेतुत्वं वरं वा प्रादादिति भावः ।।९७।।

**ताम्रपर्णीया–** ननु भीष्मेण योजयितव्या इति प्रार्थितत्वात् भीष्ममूलरूपेण योजने कथं न प्रतिज्ञाभङ्ग इति शङ्कां परिहरन् तेनाश्वयोजयदित्युक्तं विवृणोति– **भीष्म इति** ।।९७।।

**मालां च य इमां मालां गृह्णीयात् स हनिष्यति ।**
**भीष्ममित्येव तां मालां गृहीत्वा सा नृपान् ययौ ।।९८।।**

**वेदाङ्गतीर्थीया–** मालां च प्रादात् ।।९८।।

**वरदराजीया–** मालां च प्रादादिति भावः । मालां प्रयच्छतो रुद्रस्याभिप्रायमाह– **य इति** ।। यः कश्चित् इमां मया दत्तां मालां गृह्णीयात् स भीष्मं हनिष्यत्येवेत्यभिप्रायेणेत्यर्थः । सा अम्बा ।।९८।।

**जनार्दनीया–** य इमां मालां गृह्णीयात् गृहीष्यति स भीष्मं हनिष्यति इत्येव इति वदन्नेव मालां च प्रादादिति सम्बन्धः । सा अम्बा तां मालां गृहीत्वा, नृपान् प्रति ययौ । भीष्मवधार्थं दातुमिति शेषः ।।९८।।

**ताम्रपर्णीया–** मृतिहेतुत्वं मृतिप्रयोजकत्वम् । कालादित्यस्योभयत्र सम्बन्धः– **मालां चेति** ।। न च पुंदेहसम्भवे स्वस्यैव मृतिहेतुत्वोपपत्तौ मालादानं कथमिति वाच्यम् । अम्बया भीष्मघातनार्थं स्वस्यैवंविधनानाक्लेशहेतुभूतस्त्रीत्वापगमेन पुंस्त्वार्थं तपःकरणेन स्वस्यैव तद्धन्तृत्वस्य अननुसंहितत्वात् मालास्वीकारोपपत्तेः । शिवेन तु सामान्यतः स्वदत्तस्य भीष्मनिधनरूपवरस्योपपत्तये मालाप्रदानादिति ।। **नृपानिति** ।। 'अपतिः क्षत्रियान् सर्वानाक्रन्दामि समन्ततः । इयं वः क्षत्रिया माला या भीष्मं निहनिष्यति । अहं च भार्या तस्य स्यां...' [आदि.११०.२-३] इति भारतवचनात् पत्यर्थं भीष्मघातनार्थं मालां दातुं नृपान् ययावित्यर्थः ।।९८।।

**भारतश्री–** भीष्मनिधने त्वरमाणायाः मालाञ्च ददौ । अयं विशेषो भारतादवगन्तव्यः ।।९८।।

**चट्टी–** यः इमां मालां गृह्णीयात् ग्रहीष्यति सः भीष्मं हनिष्यतीत्येवेति वदन्नेव मालां प्रादादिति सम्बन्धः । साम्बा तां मालां गृहीत्वा नृपान् प्रति ययौ । भीष्मवधार्थं दातुमिति शेषः ।।९८।।

**तां न भीष्मभयात् केऽपि जगृहुस्तां हि सा ततः ।**
**द्रुपदस्य गृहद्वारि न्यस्य योगात् तनुं जहौ ॥९९॥**

**वादिराजीया–** तां हीति हिशब्दस्य न जगृहुर्हीति सम्बन्धः । भीष्मस्य सामर्थ्यातिशयप्रदर्शनं तत्फलम् । द्रुपदस्य गृहद्वारीति वदता अम्लानपद्ममयीं तां मालां द्रुपदः स्वकोशे निक्षिप्य द्रौपदीस्वयंवरकाले तामेव मालां भीष्महन्तुरर्जुनस्य कण्ठे द्रौपदीकरेणार्पयिष्यति इति सूचितम् । अन्यथा 'य इमां मालां गृह्णीयात् स हनिष्यति भीष्मम्' इति शिवदत्तवरस्य वैयर्थ्यप्रसङ्गात् ॥९९-१०६॥

**वरदराजीया–** तां रुद्रदत्तमालां दातुमिति शेषः । केऽपि नृपाः न जगृहुः । कुतः? भीष्मस्य भयात् । तां मालाम् । सा अम्बा ततोऽनन्तरं न्यस्य स्थापयित्वा योगाद्योगमार्गेण तनुं अम्बाशरीरं जहौ त्यक्तवती ॥९९॥

**जनार्दनीया–** केऽपि नृपाः तां मालां न जगृहुः । ततः सा अम्बा तां मालां न्यस्य निधाय ॥

**ताम्रपर्णीया–** ॥ **द्रुपदस्येति** ॥ न च 'य इमां मालां गृह्णीयात् स हनिष्यति' इत्युक्त्या माला मोघा इति वाच्यम् । 'य इमां मालां गृह्णीयात् स हनिष्यति' इति रुद्रवचनस्य अम्बायामेव पर्यवसन्नत्वात् । शिखण्डित्वावस्थायां तयैव मालाग्रहणात् । अम्बया च तदजानन्त्या राजसमीपगमनात् । तदुक्तं भारते 'इत्युक्त्वा स्रजमासज्य द्वारि राज्ञो व्यपाद्रवत् ।... [आदि.११०.१६] तां स्रजं द्रुपदो राजा किञ्चित्कालं ररक्ष सः । तदा विस्रम्भमास्थाय तूष्णीमेतामुपैक्षत । तां शिखण्डिन्यवध्नात्तु बालाऽपि पितुरवज्ञया ॥' [आदि.११०.२१-२२] इत्यादिना ॥९९-१००॥

**भावचन्द्रिका–** हिशब्देन भीष्मभयात् द्रुपदेन चागृहीतायां गृहद्वारि न्यस्य गमनसमये अनुगतेन द्रुपदेन एनां परित्यजामि इत्युक्ते परित्यागेऽपि त्वं भीष्महन्ता इत्युक्ते तस्य भयाद्रक्ष । सैवास्य पुत्री भूत्वा जानती तां बध्ने इति भारतप्रसिद्धिं सूचयति । अतो न रुद्रवरस्य मोघता ॥९९॥

**चट्टी–** केऽपि नृपास्तां मालां भीष्मभयान्न जगृहिरे । ततः साम्बा तां मालां द्रुपदस्य गृहद्वारि न्यस्य निधाय योगात् योगमार्गेण तनुं अम्बाशरीरं जहौ त्यक्तवती ॥९९॥

**एतस्मिन्नेव काले तु सुतार्थं द्रुपदस्तपः ।**
**चकार शम्भवे चैनं सोऽब्रवीत् कन्यका तव ॥१००॥**

**वरदराजीया–** एतस्मिन् अम्बायाः शरीरत्यागकाले सुतार्थं स्वस्य पुत्रोत्पत्त्यर्थं शम्भवे रुद्राय । सः शम्भुः एनं द्रुपदमब्रवीत् । किमिति । कन्यका भूत्वा अनन्तरं सैव कन्यका पुमान् भविष्यतीति ॥१००॥

**जनार्दनीया–** स शम्भुः । एनं द्रुपदं अब्रवीत् ।।१००।।

**चट्टी–** एतस्मिन् एव काले अम्बायाः शरीरपरित्यागकाल एव द्रुपदः सुतार्थं शम्भवे रुद्राय तपश्चकार । सः शम्भुः एनं द्रुपदमब्रवीत् ।।१००।।

**भूत्वा[1] भविष्यति पुमानिति साम्बा ततोऽजनि ।**
**नाम्ना शिखण्डिनी तस्याः पुंवत् कर्माणि चाऽकरोत् ।।१०१।।**

**वरदराजीया–** ततो द्रुपदात् शिखण्डिनी इति नाम्ना अजनि जाता । पुंवत् पुरुषवत् पुरुषस्य यथा तथा तस्याः शिखण्डिन्याः कर्माणि जातकर्माद्युपनयनान्तानि कर्माण्यकरोत् ।।१०१।।

**अनन्तभट्टीया–** तस्याः पुंवत् पुरुषवत् जातकर्मादि... ।।१०१।।

**जनार्दनीया–** किमिति ? तवादौ कन्यका भूत्वा, सैव कन्यका कालान्तरे पुमान् भविष्यतीति सम्बन्धः । ततः वरप्राप्त्यनन्तरं साम्बा नाम्ना शिखण्डिनीति अजनि । द्रुपदादिति शेषः । पाञ्चालराजो द्रुपदः तस्याः शिखण्डिन्याः पुंवत् पुत्रवदित्यर्थः । कर्माणि चौलोपनयनादिकर्माणि अकरोत् ।।१०१।।

**ताम्रपर्णीया–** ।। **नाम्ना शिखण्डिनीति** ।। ननु शिखण्डिनीति स्त्रीनामकरणे सर्वैरपि स्त्रीत्वज्ञानात् 'माता पित्रोरन्यत्र न विज्ञाता' इति कथम्? । कथं वा पुंवत्कर्मकरणमिति चेन्न । अन्तरङ्गे मातापितृभ्यां शिखण्डिनीति व्यवहारात् तदनुसारेणाचार्यैः एवं प्रयुक्तत्वात् । अत एव 'स शिखण्डिनी नामतोऽभूत्' इत्यत्रापि मातापितृव्यवहारमपेक्ष्यैव वक्ष्यतीति बोध्यम् ।।१०१-१०३।।

**अतिविशद–** 'भूत्वा भविष्यति पुमानिति साम्बा ततोऽजनि' इति वाक्यपर्यालोचनायां तथा प्रतीतेः । नच भारते तथोक्तमस्तीति तदभिप्रायेणैवमुक्तमिति वाच्यम् । भारते तथानुक्तत्वात् । तथाहि-[उद्योग.१८७.४-१६]

यत्कृते दुःखवसतीमिमां प्राप्तास्मि शाश्वतीम् । पतिलोकाद्विहीना च नैव स्त्री न पुमानिह ।।
नाहत्वा युधि गाङ्गेयं निवर्तिष्ये तपोधनाः । एष मे हृदि सङ्कल्पो यदिदं कथितं मया ।।
स्त्रीभावे परिनिर्विण्णा पुंस्त्वार्थे कृतनिश्चया । भीष्मे प्रतिचिकीर्षामि नास्मि वार्येति वै पुनः ।।

---

१. 'भार्या तु तस्य राजेन्द्र द्रुपदस्य महीपतेः । महिषी दयिता ह्यासीदपुत्रा च विशांपते ।। एतस्मिन्नेव काले तु द्रुपदो वै महीपतिः । अपत्यार्थे महाराज तोषयामास शङ्करम् ।। अस्मद्वधार्थे निश्चित्य ततो घोरं समास्थितः । ऋते कन्यां महादेव पुत्रो मे स्यादिति ब्रुवन् ।। भगवन् पुत्रमिच्छामि भीष्मं प्रतिचिकीर्षया । इत्युक्तो देवदेवेन स्त्रीपुमांस्ते भविष्यति ।' उद्योगपर्वणि.१८८.५ 'कृतो यत्नो महादेवस्तपसाराधितो मया । कन्या भूत्वा पुमान् भावी इति चोक्तोऽस्मि शम्भुना ।।' उद्योगपर्वणि.१८८.७

तां देवो दर्शयामास शूलपाणिरुमापतिः । मध्ये तेषां महर्षीणां स्वेन रूपेण तापसीम् ।।
छन्द्यमाना वरेणाथ सा वव्रे मत्पराजयम् । हनिष्यसीति तां देवः प्रत्युवाच मनस्विनीम् ।।
ततः सा पुनरेवाथ कन्या रुद्रमुवाच ह । उपपद्येत्कथं देव स्त्रिया युधि जयो मम ।।
स्त्रीभावेन च मे गाढं मनः शान्तमुमापते । प्रतिश्रुतश्च भूतेश त्वया भीष्मपराजयः ।।
यथा स सत्यो भवति तथा कुरु वृषध्वज । यथा हन्यां समागम्य भीष्मं शान्तनवं युधि ।।
तामुवाच महादेवः कन्यां किल वृषध्वजः । न मे वागनृतं प्राह सत्यं भद्रे भविष्यति ।।
हनिष्यसि रणे भीष्मं पुरुषत्वञ्च लप्स्यसे । स्मरिष्यसि च तत्सर्वं देहमन्यं गता सती ।।
द्रुपदस्य कुले जाता भवितासि महारथः । शीघ्रास्त्रश्चित्रयोधी च भविष्यसि सुसंमतः ।।
यथोक्तमेव कल्याणि सर्वमेतद्भविष्यति । भविष्यसि पुमान् पश्चात् कस्माच्चित्कालपर्ययात् ।।
एवमुक्त्वा महादेवः कपर्दी वृषभध्वजः । पश्यतामेव विप्राणां तत्रैवान्तरधीयत ।।

इति । कथमेतदिति चेत् । इत्थमस्य वाक्यस्य योजना । एषा त्वम्बा जज्ञे भविष्यति पुमानिति शिववरेऽपि योषैव नान्यथा पश्चादपि पुमान्न जातेत्यर्थ इति । नच रुद्रवाक्यस्य मिथ्यात्वं कथमिति वाच्यमिति वाच्यम् । अयोग्यविषयत्वेन मिथ्यात्वेऽप्यनिष्टाभावात् । यथोक्तम्– 'अयोग्येषु तु रुद्रादिवाक्यं तौ कुरुते मृषा' इत्यादिना । अथवा कन्या भूत्वा पुमान् भविष्यतीत्यत्र पश्चात् पुंभावनमेव शिववर इति प्रतीयते । तन्मा विज्ञायि । किन्तु विशिष्टस्य शिववरत्वमित्यभिप्रेत्य 'अतः शिववरेऽप्येषा जज्ञे योषैव' इत्युक्तम् । तेन विशेष्यभाग एव मिथ्यात्वं न सर्वस्येत्युक्तं भवति । एतदप्युक्तं 'एकदेशेन सत्यम्' इत्यादिना ।।१०१।।

**भावचन्द्रिका–** स्त्रीत्वलोपे स्त्रीप्रत्ययलोपात् शिखिण्डिनी ।।१०१।।

**चट्टी–** किमिति । तवादौ कन्यका भूत्वा अनन्तरं सैव कन्यका पुमान् भविष्यतीत्यब्रवीदिति पूर्वेण सम्बन्धः । ततो वरप्राप्त्यनन्तरं साम्बा नाम्ना शिखण्डिनीत्यजनि जाता । द्रुपदादिति शेषः । सः द्रुपदः तस्याः शिखण्डिन्याः पुंवत् पुरुषवत् पुरुषस्य यथा तथा कर्माणि जातकर्माद्युपनयनान्तानि कर्माण्यकरोत् ।।१०१।।

**तस्यै पाञ्चालराजः स दशार्णाधिपतेः सुताम् ।**
**उद्वाहयामास सा तां पुंवेषेणैव गूहिताम् ।**
**अन्यत्र मातापित्रोस्तु न विज्ञातां बुबोध ह ।।१०२।।**

**व्यासतीर्थीया–** सा दशार्णाधिपतेः सुता ।।१०२-१०६।।

**वरदराजीया–** सः पाञ्चालदेशस्य राजा द्रुपदः दाशार्णाधिपतेः दशार्णानां देशानां अधिपतेः राज्ञः सुतां शिखण्डिन्यै उद्वाहयामास । सा कन्या पुंवेषेणैव पुरुषवेषेणैव गूहितां आच्छादितां मातापित्रोरन्यत्र द्रुपदतद्भार्याभ्यां अन्यत्र स्त्रीत्वेन न विज्ञातां बुबोध ह । इयं स्त्रीति ज्ञातवतीत्यर्थः ।।१०२।।

**अनन्तभट्टीया–** ...वधूः तां शिखण्डिनीं बुबोध ज्ञातवती ।।१०२।।

**जनार्दनीया–** स राजा तस्यै शिखण्डिन्यै दशार्णाधिपतेः दशार्णविषयभूपतेः हिरण्यवर्मणः सुतां उद्वाहयामास । सा हिरण्यवर्मणः सुता पुंवेषेणैव गूहितां आच्छादितां मातापित्रोरन्यत्र अन्यैः नविज्ञातां अज्ञातां शिखण्डिनीं बुबोध । एषापि कन्या न तु पुमानिति ज्ञातवती ।।१०२।।

**ताम्रपर्णीया–** मातापित्रोरन्यत्र न विज्ञातां स्त्रीत्वेन अविज्ञातां तां पुंवेषेणैव गूहितां बुबोधेत्यर्थः ।।

**चट्टी–** सः पाञ्चालराजो द्रुपदस्तस्यै शिखण्डिन्यै, दशार्णाधिपतेः दशार्णानां देशानां अधिपतेः राज्ञः हिरण्यवर्मणः सुतां उद्वाहयामास । सा हिरण्यवर्मसुता पुंवेषेण पुरुषवेषेणैव गूहितां आच्छादितां मातापित्रोरन्यत्र द्रुपदभार्याभ्यामन्यैः स्त्रीत्वेन न विज्ञातां तां शिखण्डिनीं बुबोध । स्त्रीति ज्ञातवतीत्यर्थः ।।

**धात्र्यै न्यवेदयत् साऽथ तत्पित्रे सा न्यवेदयत् ।**
**स क्रुद्धः प्रेषयामास निहन्मि त्वां सबान्धवम् ।**
**इति पाञ्चालराजाय निर्जगाम च सेनया ।।१०३।।**

**वादिराजीया–** स क्रुद्धः प्रेषयामासेत्यत्र दूतमिति योग्यपदाध्याहारः ।।१०३-११०।।

**वरदराजीया–** अथ अनन्तरं सा कन्या धात्र्यै स्वस्या धात्र्यै न्यवेदयत् विज्ञापयामास । सा धात्री तस्याः पित्रे राज्ञे न्यवेदयत् विज्ञापयामास । स दशार्णाधिपतिः प्रेषयामास । दूतमिति शेषः । किमिति? त्वां सबान्धवं निहन्मीति । स दशार्णाधिपतिः स्वसेनया ।।१०३।।

**जनार्दनीया–** 'धात्री स्यादुपमाता' इत्यमरः । अथ सा धात्री तत्पित्रे हिरण्यवर्मणे न्यवेदयत् । स हिरण्यवर्मा त्वां हन्मीति पाञ्चालराजाय, द्रुपदं प्रतीत्यर्थः । प्रेषयामास काञ्चनवर्माणम्, दूतमिति शेषः । सेनया सह निर्जगाम च निःसृतोऽभूत् ।।१०३।।

**ताम्रपर्णीया–** बोधोपायमाह– **धात्र्या इति** ।। **स इति** ।। सः दशार्णाधिपतिः ।।१०३।।

**चट्टी–** सा धात्र्यै उपमात्रे न्यवेदयत् । अथ सा धात्री तत्पित्रे हिरण्यवर्मणे न्यवेदयत् । स हिरण्यवर्मा क्रुद्धस्सन् सबान्धवं बन्धुभिः सहितं त्वां निहन्मि इति पाञ्चालराजाय द्रुपदं प्रति इत्यर्थः । प्रेषयामास । काञ्चनवर्माणम् । दूतमिति शेषः । सेनया सह निर्जगाम निसृतोऽभूत् ।।१०३।।

**विश्वस्य वाक्यं रुद्रस्य पुमानेवेति पार्षतः ।**
**प्रेषयामास धिग् बुद्धिर्भिन्ना ते बालवाक्यतः ।**
**अपरीक्षकस्य ते राष्ट्रं कथमित्येव नर्मकृत् ।।१०४।।**

**व्यासतीर्थीया–** धिक् ।।१०४।।

**वेदाङ्गतीर्थीया–** ते बुद्धिः बालवाक्यतः भिन्ना । त्वया अविचार्य बालवाक्ये विश्वासः कृतः इति यावत् । अत एव नर्मकृत् हास्यकृत् ।।१०४।।

**वरदराजीया–** पार्षतः पृषतस्यापत्यं द्रुपदोऽपि 'पुमानेव पुरुषो भविष्यत्येव' इति रुद्रस्य वाक्यं विश्वस्य यथार्थमिति निश्चित्य प्रेषयामास । दूतमिति शेषः । किमिति अपरीक्षकस्य परीक्षामकुर्वतस्ते बुद्धिः बालवाक्यतः बालायाः कन्यायाः वाक्यात् भिन्ना विरुद्धा अभूत् । अतो धिगित्यर्थः । धिगित्यव्ययं निन्दार्थे । एवं भूतस्य ते राष्ट्रं कथमेव? न कथमपि इति नर्मकृत् परिहासकृत् प्रेषयामासेति पूर्वेण सम्बन्धः ।।१०४।।

**अनन्तभट्टीया–** विश्वस्य यथार्थमिति मत्वा । धिक् त्वामिति शेषः । अपरीक्षकस्य अविवेकिनः । वश इति सतीति शेषः [?]। नर्मकृत् परिहासकृत् ।।१०४।।

**जनार्दनीया–** पार्षतः पृषतपुत्रो द्रुपदः । विश्वस्य विश्वासं कृत्वा ते तव बुद्धिः बालवाक्यतः भिन्ना नष्टा । अत एव धिक्, त्वामिति शेषः । अपरीक्षकस्य परीक्षते अवधारयति प्रमाणैः अर्थमिति ण्वुल् परीक्षकः, स न भवतीत्यपरीक्षकः तस्य । 'परीक्षकः कारुणिकः' इत्यमरः । परीक्षारहितस्य ते राष्ट्रं कथं योग्यमित्यर्थः । इत्येव नर्म हास्यं करोतीति नमर्कृत् सन् । पुमानेव शिखण्डिनी पुरुष एवेति । प्रेषयामास दूतमिति शेषः ।।१०४।।

**ताम्रपर्णीया–** धिक् त्वामिति शेषः ।।१०४-१०९।।

**चट्टी–** पार्षतः द्रुपदः रुद्रस्य वाक्यं विश्वस्य विश्वासं कृत्वा पुमान् एवेति । ते तव बुद्धिः बालवाक्यातः भिन्ना नष्टा । अत एव धिक् अपरीक्षकस्य परीक्षारहितस्य ते राष्ट्रं कथं योग्यमिति नर्मकृत् परिहासकृदेव प्रेषयामास । दूतमिति शेषः ।।१०४।।

**अथ भार्यासमेतं तं पितरं चिन्तयाऽऽकुलम् ।**
**दृष्ट्वा शिखण्डिनी दुःखान्मन्निमित्तान्न नश्यतु ।।१०५।।**

**वरदराजीया–** अथ भार्यया स्वमात्रा समेतं पितरं द्रुपदं मन्निमित्तात् दुःखात् न नश्यतु । पितेति शेषः ।।१०५।।

**अनन्तभट्टीया–** मन्निमित्तात् दुःखात् न नश्यतु । पितेति शेषः ।।१०५।।

**जनार्दनीया–** अथ दूतप्रेषणानन्तरम् । शिखण्डिनी पितरं दृष्ट्वा मन्निमित्तात् मदर्थं न नश्यतु । पितेति शेषः । इति मत्वा ज्ञात्वा । दुःखात् ।।१०५।।

**चट्टी–** अथ दूतप्रेषणानन्तरं शिखण्डिनी भार्यासमेतं तं पितरं चिन्तया आकुलं दृष्ट्वा मन्निमित्ताद् दुःखान्न नश्यतु । पितेति शेषः ।।१०५।।

**इति मत्वा वनायैव ययौ यत्र च तुम्बुरुः ।**
**स्थूणाकर्णाभिधेयस्तामपश्यद् दृढकर्णतः ।।१०६।।**

**व्यासतीर्थीया–** स्थूणाकर्णमपश्यदिति निबन्धान्तरे तदुक्तम्– **स्थूणेति** ।।१०६-१०८।।

**वेदाङ्गतीर्थीया–** स्थूणाकर्णो अपश्यदिति निबन्धान्तरे उक्तम् । अत उक्तम्– **स्थूणाकर्णेति** ।।१०६-११२।।

**वादिराजीया–** क्वचित् स्थूणाकर्णाख्यः शिखण्डिन्यै देहं दत्तवानिति कथास्ति । तस्यास्तात्पर्यमाह– **दृढकर्णत इति** ।। दृढकर्णतः निमित्तात् स्थूणाकर्णाभिधेय इति ।।१०६।।

**मधुसूदनीया–** ।। **इति मत्वा वनायेति** ।। यत्र यस्मिन् वने तुम्बुरुरस्ति तस्मै वनायेत्यन्वयः ।। **ययौ यत्र च तुम्बुरुरिति** ।। नन्वादिपर्वण्येव [६४.१६७] 'शिखण्डी द्रुपदाज्जज्ञे कन्या पुत्रत्वमागता । यां यक्षः पुरुषं चक्रे स्थूणप्रियचिकीर्षया ।।' इति तथैव उद्योगपर्वणि पञ्चनवतितमाध्याये[१९१.२०] 'यक्षेणार्द्धिमता राजन् स्थूणाकर्णेन पालितम्' इत्यादिना स्थूणाकर्णाच्छिखण्डिन्याः पुंस्त्वप्राप्तिकथनात् 'ययौ यत्र च तुम्बुरुः' इति कथमुच्यत इत्यत आह– **स्थूणाकर्णाभिधेय इति** ।। तथाचादिपर्वण्येव– 'तत्र गन्धर्वराजानं तुम्बुरं प्रियदर्शनम् । आराधयितुमीहस्व साम्नैव परिबोधितम् ।।' [सम्यक् परिचरस्व तम्] इति [११०.२५] पुंस्त्वप्राप्त्यर्थं तुम्बुर्वाराधनविधानात् । अत्र स्थूणाकर्णशब्देन तुम्बुरुरेव विवक्षित इति भावः । ननु तुम्बुरोः स्थूणाकर्णाऽभिधेयत्वं कथमित्यत आह– **दृढकर्णत इति** ।। दृढकर्णत्वलक्षणा-साधारणधर्मेण तुम्बुरोरेव स्थूणाकर्णाभिधेयत्वमिति भावः । एतेन 'स्थूणाकर्णाभिधेयस्तुम्बुरुः दृढकर्णतः दृढकर्णाख्यात् स्वभृत्यादखिलं वृत्तान्तं श्रुत्वा कृपां चक्रे' इति व्याख्यानं निरस्तं वेदितव्यम् ।।१०६।।

**वरदराजीया–** सा कन्या इति मत्वा वनाय ययौ । तत्र वने यत्र तुम्बुरुः तत्रैव ययौ इति सम्बन्धः । ननु भारते स्थूणाकर्णनामा तामपश्यत् इत्युक्तम् । तत्कथम्? इत्यत तत्रापि तुम्बुरुरेव तन्नाम्ना उच्यत इत्याह– **स्थूणेति** ।। दृढकर्णतः दृढकर्णत्वात् प्रवृत्तिनिमित्तात् स्थूणाकर्णाभिधेय-स्तुम्बुरुरित्यर्थः ।।१०६।।

**अनन्तभट्टीया–** दृढकर्णतः दृढकर्णत्वात् । स्थूणाकर्णाभिधसम्बन्धः ।।१०६।।

**जनार्दनीया–** यत्र यस्मिन् वने तुम्बुरुनामा गन्धर्वः, तिष्ठतीति शेषः । तस्मै वनाय ययौ ।।१०६-१०७।।

**भावचन्द्रिका–** एतस्मिन्नेतदन्तरे शिखिण्डिनी चिन्ताकुला ऋचीकं ब्राह्मणमपृच्छत् कथं कुर्यामिति । स उवाच । गङ्गाद्वारे गन्धर्वाणां परस्परदेहप्रवेशेन जाते द्वाववशिष्टौ । तत्र तुम्बुरुः स्त्रीबुभूषुः तामपश्यदिति भारते [आदि.११०.२१-३१] । सदृशसमयस्य समुच्चयाय तवेत्याह ।।१०६।।

**चट्टी–** इति मत्वा ज्ञात्वा यत्र यस्मिन् वने तुम्बुरुः तुम्बुरुनामा गन्धर्वः तिष्ठतीति शेषः । तस्मै वनाय ययौ । ननु ग्रन्थान्तरे स्थूणाकर्णवनं ययावित्युच्यते तत्कथं तुम्बुरुवनं ययावित्यत आह– **स्थूणाकर्णाभिधेय इति** ।। दृढकर्णतः दृढकर्णवत्वात् स्थूणाकर्णाभिधेयस्तुम्बुरुः तां शिखण्डिनीमपश्यत् । तुम्बुरोरेव स्थूणाकर्ण इति नामान्तरं अतो न विरोध इति भावः ।।१०६।।

**स तस्या अखिलं श्रुत्वा कृपां चक्रे महामनाः ।**
**स तस्यै स्वं वपुः प्रादात् तदीयं जगृहे तथा ।**
**अंशेन पुंस्त्वभावार्थं पूर्वदेहे समास्थितः ।।१०७।।**

**वादिराजीया–** पूर्वदेहे शिखण्डिन्यै दत्तस्वपूर्वदेहे पुंस्त्वभावार्थं पुंस्त्वस्य भावः प्राप्तिस्तदर्थमंशेन समास्थितः । नार्याः पुंभावः पुमांसं विना न भवति । पुंसस्तु स्त्रीत्वं स्त्र्यंशाभावेऽपि अर्जुनादेरिव स्वभावादेव घटत इति भावः ।।१०७-११३।।

**वरदराजीया–** स तुम्बुरुः तस्याः सकाशादखिलं पूर्ववृत्तकथां श्रुत्वा कृपां चक्रे । यतो महामनाः तस्यै शिखण्डिन्यै स्वं वपुः पुरुषशरीरम् । तदीयं तस्याः विद्यमानं वपुः स्वयं जगृहे । स्वशरीरस्य दाने विशेषमाह– **अंशेनेति** ।। पुंस्त्वभावार्थं पूर्वदेहे शिखण्डिन्यै प्रदत्ते स्वकीये देहे अंशेन स्वांशेन समास्थितः अवस्थानमकरोत् । न तु सर्वथा प्रादात् । शिखण्डिनीवपुस्तु तदनधिष्ठितमेव जगृह इति भावः ।।१०७।।

**जनार्दनीया–** स तुम्बुरुः स्वं वपुः स्वपुरुषदेहम् । ततः तदीयं शिखण्डिनीसम्बन्धिशरीरं पुंस्त्वभावार्थं पुरुषत्वस्वभावार्थं अंशेन एकभागेन पूर्वदेहे तद्दत्तगन्धर्वदेहे समास्थितः अधिष्ठितोऽभूत् । गन्धर्व इति शेषः ।।१०७।।

**भारतश्री–** पूर्वदेहे स्वेन दत्तदेहे ।।१०७।।

**चट्टि–** सः तुम्बुरुः तस्याः शिखण्डिन्याः सकाशादखिलं श्रुत्वा कृपां दयां चक्रे । यतो महामनाः । सः तुम्बुरुः तस्यै शिखण्डिन्यै स्वं वपुः स्वपुरुषदेहं प्रादात् । ततस्तदीयं शिखण्डिनीसम्बन्धिशरीरं स्वयं जगृहे । स्वशरीरप्रदाने विशेषमाह– **अंशेनेति** ।। पुंस्त्वभावार्थं पुरुषत्वसिद्ध्यै पूर्वदेहे शिखण्डिन्यै प्रदत्ते स्वकीये देहे अंशेन समास्थितः अवस्थानमकरोत् ।।१०७।।

**पुंसां[१] स्त्रीत्वं भवेत् क्वाऽपि तथाऽप्यन्ते पुमान् भवेत् ।**
**स्त्रीणां नैव हि पुंस्त्वं स्याद् बलवत्कारणैरपि ।।१०८।।**

**व्यासतीर्थीया–** प्रसङ्गप्राप्तायां वरादिना स्त्रियोऽपि किं पुमांसो भवन्तीति जिज्ञासायां, शिववरादम्बा पुमान् जाता किमिति च जिज्ञासायां तत्वमाह– **पुंसामिति** ।। अन्ते देहावसाने ।।१०८।।

**वेदाङ्गतीर्थीया–** प्रसङ्गप्राप्तां वरादिना स्त्रियोऽपि किं पुमांसो भविष्यन्तीति जिज्ञासां पूरयन् शिववरादम्बा पुमान् जाता किमिति जिज्ञासां च तत्त्वकथनेन पूरयति– **पुंसामिति** ।। अन्ते स्त्रीत्वप्राप्तिकारणावसाने ।।

**मधुसूदनीया–** ।। **पुंसां स्त्रीत्वमिति** ।। पुंसां स्त्रीत्वं क्वापि पापतः कामतो वा भवेत् । पापतस्सुद्युम्नस्य इलात्वं कामतोऽग्निपुत्राणामप्सरत्वं यथेति द्रष्टव्यम् । स्त्रीणां स्वभावतः स्त्रीणामेव बलवत्कारणैरपि वरादिवलवत्कारणैरपीत्यर्थः । पुंस्त्वं न स्यादित्यर्थः । अन्यथा इलायाः सुद्युम्नत्वदर्शनेन असाङ्गत्यापत्तेरिति ध्येयम् । तथाचोक्तम्–'यान्ति स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा । न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव या स्त्रियः ।।' [गी.ता.९.३४] इति भविष्यत्पर्वणि ।।१०८-११०।।

**वरदराजीया–** तत्कुत एवं विशेषः कल्प्यत इत्यत एवमेव अनादिनियमादित्याह– **पुंसामिति** ।। पुरुषाणां स्त्रीत्वं स्त्र्यनधिष्ठितस्त्रीदेहप्राप्तिः क्वापि क्वचित् भवेत् । तथापि अन्ते निमित्तापगमे पुमानेव भवेत् । अतो गन्धर्वस्य शिखण्डिन्यनधिष्ठितदेहप्राप्तिः कल्प्यत इति भावः ।।१०८।।

**अनन्तभट्टीया–** तदीयं वपुः जगृहे । वरादिना स्वभावतः स्त्रियोऽपि किं पुमांसो भवन्ति । शिववरादम्बा किं पुमान् जाता इति जिज्ञासायामाह– **पुंसामिति** ।। अन्ते मरणानन्तरम् ।।१०८।।

१. 'न भावं वा यद्घटितं स्त्रियः पुंस्त्वं सदैव हि' [वराह.१२५.१२७.नागपब्लिकेशन्पाठः] 'अभाषैव च कर्माणि पुंसः स्त्रीत्वं न चार्हति' सर्वभारतीयकाशिराजन्यासः, इति वाराणसीपुस्तकपाठः १२४.१२०।

**जनार्दनीया–** गन्धर्वः शिखण्डिन्यै पुंस्त्वार्थं दत्तदेहे पुनरंशेन किमर्थं समास्थित इति जिज्ञासायामाह– **पुंसामित्यादिना** ।। पुंसां पुरुषाणां क्वापि क्वचिदपि स्त्रीत्वं स्त्रीस्वरूपं भवेत् । शापवरदुष्कर्मावरणादिहेतुनेति शेषः । अन्ते स्त्रीत्वप्राप्तिकारणसमाप्तौ तथा पूर्ववत् पुमान् भवेत् । स्त्रीणां स्त्रीजीवानां बलवत्कारणैरपि देवतावरोत्कृष्टपुण्यादिकारणैरपि पुंस्त्वं नैव स्यात् हि यस्मात् तस्मात् पूर्वं संस्थित इति सम्बन्धः ।।

**चट्टी–** पुंस्त्वभावार्थं दत्ते देहे पुनः अंशेन किमर्थं समास्थित इति जिज्ञासायामाह– **पुंसामिति** ।। पुंसां पुरुषाणां क्वापि क्वचिदपि स्त्रीत्वं पापतः कामतो वा भवेत् । पापतः सुद्युम्नस्य इलात्वं कामतो अग्निपुत्राणां अप्सरस्त्वं यथेति द्रष्टव्यम् । तथापि अन्ते पुमान् भवेत् । स्त्रीणां स्वभावतः स्त्रीणामेव बलवत्कारणैरपि वरादिबलवत्कारणैरपि पुंस्त्वं नैव स्याद् हि यस्मात् तस्मात् देहे संस्थित इति सम्बन्धः । तथा चोक्तम्– 'यान्ति स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा । न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव या स्त्रियः ।।' इति भविष्यत्पर्वणि ।।१०८।।

**अतः शिववरेऽप्येषा जज्ञे यौषैव नान्यथा ।**
**पश्चाश्च पुन्तनुं सैषा प्रविवेशैव पुंयुतम् ।।१०९।।**

**व्यासतीर्थीया–** यतः एवं नियमः अतः । ननु नैवं शिववरः किन्तु पश्चात्पुमान् भविष्यतीति पश्चात् पुमान् जाता तदुक्तमयुक्तमित्यत आह– **पश्चादिति** ।।१०९।।

**वादिराजीया–** अतः शिववरेऽप्येषेत्यत्र प्राक् तव कन्यका भूत्वा सैव पुमान् भविष्यतीति शिववरे सत्यपि । अतः स्त्रीणां पुंस्त्वाभावान्निमित्तात् एषा योषैव जज्ञे । एवकारव्यावर्त्यं दर्शयति– **अन्यथा नेति** ।। अस्याः पुंस्त्वं शिववरादपि नाभूदिति भावः । नापि भविष्यतीत्याह– **पश्चाच्चेति** ।। पश्चात् भविष्यत्कालेऽपि सा पुमान् भविष्यतीति शिववरप्रसादवती एषा कन्यका पुंयुतां पुंतनुं प्रविवेशैव । न तु स्वयमेव पुमाञ्जाता ।।१०९।।

**वरदराजीया–** स्त्रीणां स्वभावतः स्त्रीणां पुंस्त्वं पुरुषानधिष्ठितपुंदेहप्राप्तिर्बलवद्भिः कारणैः समर्थदेवतावरादिरूपैरपि नैव स्यादिति नियमे ज्ञापकं इदमेवेत्याह– **अत इति** ।। अतः कारणात् शिववरे विद्यमानेऽपि एषा अम्बा योषैव स्त्रीदेहयुक्तैव जज्ञे उत्पन्ना । नान्यथा पुरुषदेहयुक्तत्वेन जातेत्यर्थः । तर्हि पश्चादपि कथं पुंस्त्वमित्यत आह– **पश्चाच्चेति** ।। पुंयुतां पुरुषस्य गन्धर्वस्यांशेन युतां अत एव पुंतनुं प्रविवेशैव नतु पुरुषत्वेन जातेत्यर्थः ।।१०९।।

**अनन्तभट्टीया–** पश्चाद... ।।१०९।।

**जनार्दनीया–** अतः उक्तनियमहेतोः शिववरे सत्यपि 'कन्यका तव भूत्वा भविष्यति पुमान्' इत्येवं रूपे शिववरे सत्यपि योषैव जज्ञे स्त्रीदेहसम्बन्धमेवाप । नान्यथा पुरुषदेहसम्बन्धं नैवापेत्यर्थः । जननोत्तरकाले पुंस्त्वप्राप्तिः श्रूयते तत्कथमित्यत आह– **पश्चादिति** ।। पश्चात् स्त्रीत्वेन उत्पत्त्यनन्तरं एषा शिखण्डिनी पुंसा गन्धर्वेण युतां अत एव पुंतनुं पुरुषदेहमेव प्रविवेश । न तु स्वयं पुंदेहं प्रापेति भावः । निषेधस्तु केवलस्य । न त्वन्याधिष्ठितप्रवेशस्य निषेधः । पूर्वांशस्य जातत्वेऽप्युत्तरांशस्याभावात् 'शिववर' इत्युक्तमिति भावः ।।१०९।।

**ताम्रपर्णीया–** ।। **अतः शिववरेऽपीति** ।। ननु कथं 'कन्यका भूत्वा पुमान् भविष्यति' इति शिववरानुसारेण स्त्रीत्वेन जननात् । शिववरेऽपि योषैव जज्ञे इति कथमुच्यते इति चेन्न । पुमान् भविष्यतीत्येव शिववरः । कन्यका भूत्वेति पर्यवसानं शिवतात्पर्यं चापेक्ष्याचार्यैरुक्तम् । अत एवाम्बां प्रति वरदानप्रस्तावे भीष्मस्य मृतिहेतुत्वं कालात् पुंदेहसम्भवमित्येवोक्तम् । कालादिति तु अम्बात्वावस्थाव्यावृत्यर्थमिति । यद्वा कन्यका भूत्वा पश्चात् पुमान् भविष्यतीति द्विदलशिववरे सत्यपि योषैव जज्ञे सदा योषैव भावात् । नान्यथा । पश्चादपि न पुमानभवदित्यर्थः । [यद्वा शिववरेऽपि या जज्ञे सैषा योषैव । नान्यथा न कदाऽपि पुमानित्यर्थः।] तदेव स्पष्टयति– **पश्चादिति** ।। न च शिववरस्य मोघता, भ्रान्तिश्च तस्य स्यादिति वाच्यम् । शिवेन पुंदेहोत्पत्तिर्वा पुंशरीरप्रवेशो वेति विवेकमकृत्वा पुमान् भविष्यतीति संमुग्धतया दत्तस्य वरस्य प्रवेशपर्यवसानत्वेन मोघताभ्रान्त्योरभावात् । संमुग्धतया शिववरे सत्यपि वरस्य पुंदेहोत्पत्तिपर्यवसानं नाभूत् । किन्तु प्रवेशपर्यवसानमेवेति भावेनातः शिववरेऽपीति ग्रन्थप्रवृत्तिरिति ज्ञेयम् ।।१०९-१११।।

**अतिविशद–** अतः शिववरेप्येषा जज्ञे योषैव नान्यथा इत्यत्र शिववरे विद्यमानेऽपि एषा ....स्त्रीत्वेनैव जज्ञे । नतु पुंस्त्वेन जातेत्युच्यते ।।१०९।।

**भारतश्री–** शिववरेऽपि 'सोऽब्रवीत् कन्यका तव भूत्वा भविष्यति पुमान्' इति शिववरेऽपि । या जज्ञे सैषा शिववरेऽपि योषैव नान्यथा पुमान्न भविष्यतीत्युक्तप्रकारेण पुमान् न जाता किन्तु पुंदेहे पुंयुते प्रविवेश । तद्विवृणोति– **पुंदेहमपीत्यादिना** ।। वरः पुंसा सह पुंदेहे स्थित्यैवोपयुक्तोऽभूत् । तदुक्तं गीतातात्पर्ये 'पुंसा सहैव पुंदेहे स्थितिः स्यात् वरदानतः' इति । यद्वा शिववरेऽपि शिवप्रसादेऽपि शिवोऽपि प्रसन्नः तां अन्यथाकर्तुं समर्थो नाभूत् । अत एवं वरं दत्तवान् तस्यै न तु सैव पुमान् बभूव [च] । वरस्तथा कर्तुमशक्तः । सर्वात्मना स्ववैय्यर्थपरिहारार्थं एवं वरः । एवंभावस्यापि वरसापेक्षत्वात् ।।

**चट्टी–** अतः स्त्रीणां वलवत्कारणैरपि पुंस्त्वं न स्यादित्युक्तनियमहेतोः शिववरे सत्यपि आदौ तव कन्यका भूत्वा अनन्तरं सैव देहेन पुमान् भविष्यतीत्येवंरूपे शिववरे सति चेत्यपेरर्थः । शिववरेऽपि

शिववरस्य सत्वात् तदनुसारेण एषा योषैव स्त्रीभूत्वैव जज्ञे जाता । नान्यथा पुरुषदेहेन नैवेत्यर्थः । जननोत्तरकालेऽपि पुंस्त्वप्राप्तिः कथमित्यत आह– **पश्चादिति** ।। पश्चात् स्त्रीत्वेनोत्पत्त्यनन्तरं एषा शिखण्डिनी पुंसा गन्धर्वेण युतामत एव पुंतनुं पुरुषदेहमेव प्रविवेश ।।१०९।।

**नास्या देहः पुंस्त्वमाप न च पुंसाऽनधिष्ठिते ।**
**पुंदेहे न्यवसत् साऽथ गन्धर्वेण त्वधिष्ठितम् ।**
**गान्धर्वं देहमाविश्य स्वकीयं भवनं ययौ ।।११०।।**

**व्यासतीर्थीया–** प्रविवेशैवेत्युक्तावधारणार्थमाह– **नेति** ।।११०-११४।।

**वादिराजीया–** नाप्यस्याः पुंरूपार्जुनस्य देहः शापात् स्त्रीत्वमिव शिववरादपि पुंस्त्वमाप । किन्तु स्वस्त्रीदेहमन्यस्मै दत्वा तस्य पुंदेहमेव स्वयं प्राप । पुंसानधिष्ठिते तस्मिन् पुंदेहे स्वशक्त्या न न्यवसत् । किन्तु तदंशमादायैव न्यवसच्च । तस्माद्बलवत्कारणैरपि स्त्रीणां पुंस्त्वं न स्यादेवेति नियमः सुस्थः । स्त्रियाः स्त्रीत्वे वरस्यानपेक्षणात् स्त्रियाः पुम्भावस्य च कदाप्यजातत्वात् पुमधिष्ठितपुंदेहप्रवेशस्य च गन्धर्वप्रसादादेव जातत्वात् बलवान् शिववरोऽपि स्त्रीणां पुंस्त्वं न भवतीति येन नियमेन व्यर्थीकृतः । तस्य नियमस्य कदापि केनापि न भङ्ग इति वाक्यसमुदायस्याभिप्रायः ।

अत एव श्रुतिः– 'स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न विचेतदन्धः । कविर्यः पुत्रः स इमाः चिकेत यस्ता विजानात्स पितुः पितासत् ।।' [ऋ.सं.१.१६४.१६] इति श्रुतिः स्त्रीरूपाणामेव पुम्भावं भगवन्महिमत्वेन स्तौति । अस्यार्थः– हे वामन तव सतीः सत्यः स्त्रियः स्त्रीणां विम्वरूपतया ये स्त्रीदेहाः पृथक्च वागीश्वरीनारायणीप्रभृतयः ये स्त्रीदेहाः सन्ति तान् उ तानेव आहुः वेदार्थतत्वज्ञा व्यासादयः आहुः । 'ब्रूञ् व्यक्तायां वाचि' इति धातोः । 'आत्मनि चैव विचित्राश्च हि' इत्यादिना स्पष्टं वदन्ति । सौत्रहिशब्देन 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिश्रुतीनां सङ्गृहीतत्वात् । अमृतपरिवेषकनारायणीरूपस्य राहुशिरच्छेदाय तत्क्षणादेव पुम्भावस्य स्पष्टमुक्तत्वाच्चाहुरित्युक्तम् । अत एव कटाक्षविक्षेपमात्रेण जगत्सृष्ट्यादौ समर्थाया अपि ममाक्षर इति पुल्लिङ्गवाच्यत्वे 'पुंवच्छक्तियुता यतः' इति शक्तिरेवोक्ता न तु पुंरूपम् । ननु स्त्रीणां पुंरूपाभावेऽपि पुंसामर्जुनादीनां स्त्रीरूपमपि तत्र तत्रोच्यते । तस्मात् स्त्रीरूपाणामेव पुंरूपत्वं कथं भगवत एवेति चेत् । सत्यम् । शापाद्वा वराद्वा पुंसां स्त्रीपरूपत्वं न तु स्वशक्त्या । भगवतस्तु स्वभावतः एव शक्तिद्वयमप्यस्तीति श्रुतेरभिप्रेतत्वात् । अत एव दैत्यान् मोहयित्वा अमृतमाहर्तुं शापवरयोरभावेऽपि तत्क्षण एव नारायणीरूपं धृतवान् । अतः सहजशक्त्या पुम्भावः स्त्रीभावश्च भगवतो एव महिमा इति कथं न सिद्ध्येत् । एतदप्युक्तम् । सतीः सत्यः सर्वदा स्वशक्त्यैव विद्यमाना इति । मे रमणयोग्याः पुंस इति च । न तु शिखण्डिवत्

वाङ्मात्रेण पुंस आहुः । किं बहुना । यतो मम भर्तुः ब्रह्माण्डभेदनसमर्थं वामापादाङ्गुष्ठनखाग्रमप्यसदृशम् । कृष्णरूपेण भूभारभूतबहुतरदैत्यसंहरणसमर्थो भगवतः केशोऽप्यसदृशः । अतः सुरनरोरगादिचेतनराशिषु कस्तस्य सदृश इति भावः । एवम्भूतानि स्त्रीरूपाणि पश्यत् पश्यन् पुरुषः अक्षण्वान् अक्षवान् इन्द्रियवानिति यावत् । तद्दर्शने सत्येव इन्द्रियाणां साफल्यं भवतीति भावः । न विचेतत् 'चिति सञ्ज्ञाने' इति धातोः कर्तरि शतृप्रत्यये कृते ताः तव स्त्रीरूपाणि जीवेष्वघटितपुम्भावशक्त्याख्यविशेषेण युक्तानि अपश्यन्नन्धः । कविः सर्वज्ञो यः पुत्रः तव मम च पुत्राः ब्रह्मा स एव इमा इमाश्चिकेत जानीयात् ज्ञातुं समर्थ इत्यर्थः । यः ब्रह्मा ताः विजानात् वि उक्तविशेषणघटिततया अजानात् । अन्तर्णीतो णिच् । लोकान् प्रत्याज्ञापयच्च । स ब्रह्मा पितुस्तव पिता असत् आसीत् । पितृत्वमौपचारिकमिति द्योतनाय असदित्युक्तम् । जगति असद्भिर्निराकारत्वादिना अविद्यमानप्रायतया कृतं भगवन्तं स्वापररूपमध्वाख्यावतारेण 'भगवान् दिव्यप्रमदात्मकं वपुर्बभूव' इति 'ततः पुमान् क्षणेन भूत्वा' इति स्त्र्यात्मकपुमात्मकविचित्राकारवन्तं निरूप्य भगवत्यसाधारणस्त्रीपुंरूपग्रहणशक्तिमुक्तवधिया जीवेषु सर्वथा अविद्यमानां च प्रकटीचकार । इदमप्युक्तम् । वि विशेषेण असाधराणतया अजानात् इति । अतस्तव कीर्तिपोषकत्वात् पितेवासीदिति भावेन वेदाभिमानिनी लक्ष्मीर्भगवतः स्त्रीरूपाणां महिमानमेव पुनः पुनः वर्णयित्वा स्वभर्तारं स्तौति । जीवेष्वपि ईदृशसामर्थ्यसत्वे कथं भगवतः एव इयं स्तुतिः स्यात् । तस्माद् ब्रह्मादिजीवेष्वघटितैव शक्तिरिति लक्ष्म्याः भावः ।

गन्धर्वेण त्वधष्ठितमित्यत्र गन्धर्वेण तु पुंवत् स्थैर्यधैर्यगम्भीरस्वरोद्धतवचनादिकार्यविशेषो यथा भवति तथा तु गुह्येन्द्रियव्यापाराभावाख्यकार्यविशेषश्च यथा भवति तथा इति तुशब्दावृत्त्या व्याख्येयम् । अन्यथा 'शिखण्डी च महारथः' इत्यत्रोक्तशिखण्डित्वमहारथित्वयोरयोगप्रसङ्गात् । तस्माद् ग्रन्थलाघवाय अव्ययैरेव सकलशङ्काशूकानां व्ययं कुर्वन् ग्रन्थकारोऽपि स्वगुरुव्यासवत् अघटितघटक इति ज्ञेयम् । अधिष्ठितं गान्धर्वदेहमाविश्य भवनं ययाविति सम्बन्धः । अतो असौ पुंदेहो गन्धर्वस्यैव । अस्यास्तु गृहस्थगृहप्रविष्टभिक्षुकवदवस्थामात्रम् । तस्मात् भिक्षोः गृहस्थत्ववन्नास्याः पुंस्त्वमिति भावः । तस्यास्तद्देहसादृश्यमित्यत्र तस्या शिखण्डिन्याः तद्देहसादृश्यं स्वकीयपूर्वदेहस्य यथा ममता एवं परकीयदेहेऽपि ममता गन्धर्वस्य प्रसादादभूत् । तयाधिष्ठितः गन्धर्वदेहोऽपि पश्चात् शिखण्डिन्या प्रयोजनानन्तरं गन्धर्वमेव प्रापेति योजना ।।११०-११८।।

**मधुसूदनीया–** ।। **नास्या देह इति** ।। अस्याः शिखण्डिन्याः देहः पुंस्त्वं नाप । पुंसानधिष्ठितदेहे सा शिखण्डिनी न न्यवसत् । किन्तु पुंसाधिष्ठितदेह एव न्यवसदित्यर्थः । स्त्रीणां वरदानादिना पुंदेहवासेऽपि तज्जन्मन्येव पुंदेहवासः । नतु जन्मान्तरेऽपीति विशिष्यद्योतकतुशब्दार्थश्चकारः । तथाचोक्तम्– 'पुंसा सहैव पुंदेहे स्थितिः स्याद्वरदानतः । तज्जन्मनि वरा पापजातिभ्यो निजसस्त्रियः ।। सर्वेषामपि जीवानां

अन्त्यदेहो यथा निजः । मुक्तौ तु निजभावस्स्यात् कर्मभोगान् ततोऽपि च ।।' [गी.ता.९.३४]इति भविष्यत्पर्वणि ।।११०-११३।।

**वरदराजीया–** ननु तस्याः पुरुषत्वेन जननाभावेऽपि तद्देहस्य गन्धर्वेणाधिष्ठितस्य पुंस्त्वप्राप्तिः ज्ञाता किमित्याह– **नास्या देह इति** ।। अस्या शिखण्डिन्याः देहोऽपि पुंस्त्वं नाप । किन्तु स्तनकेशादिस्त्रीलक्षणयुक्ते तस्या देहे गन्धर्वस्यावस्थानमात्रमभूदिति भावः । तस्मात् स्वभावतः स्त्रीणां देहतां वा पुरुषान्तरानधिष्ठितदेहान्तरप्राप्त्या च पुरुषत्वं नैवास्तीत्युपसंहरति– **नचेति** ।। पुंसा पुरुषेण अनधिष्ठिते देहे सा शिखण्डिनी न न्यवसत् । किन्तु गन्धर्वेण पुंसा अधिष्ठितं गान्धर्वं गन्धर्वस्य विद्यमानं देहमाविश्य स्वकीयं भवनं गृहं ययौ ।।११०।।

**जनार्दनीया–** अस्याः शिखण्डिन्याः देहः गन्धर्वेण स्वीकृतस्त्रीदेहः पुंस्त्वं नाप । पुंसा अनधिष्ठिते अवस्थानरहिते पुंदेहे न च न्यवसत् । किन्तु सा शिखण्डिनी गन्धर्वेण अधिष्ठितं गान्धर्वं देहं गन्धर्वसम्बन्धि पुरुषदेहं आविश्य । अथशब्दः समुच्चयार्थः ।।११०।।

**चट्टी–** अस्याः शिखण्डिन्याः देहो गन्धर्वेण स्वीकृतः स्त्रीदेहः पुंस्त्वं नाप । पुंसा अनधिष्ठिते अवस्थानरहिते पुंदेहे च सा न न्यवसत् । किन्तु पुंसा अधिष्ठितदेह एव सा न्यवसदित्यर्थः । स्त्रीणां वरदानादिना पुंदेहवासेऽपि तज्जन्मन्येव पुंदेहवासो न तु जन्मान्तरेऽपीति विशेषाद्योतकतुशब्दार्थश्चकारः । तथा चोक्तम्– पुंसा सहैव पुंदेहे स्थितिः स्याद्वरदानतः । तज्जन्मनि वराः पापजाताभ्यो निजसत्स्त्रियः ।। सर्वेषामपि जीवानां अन्त्यदेहो यथा निजः । मुक्तौ च निजभावः स्यात् कर्मभोगान् ततोऽपि च ।।' इति भविष्यत्पर्वणि । अथ सा शिखण्डिनी गन्धर्वेणाधिष्ठितं अधिष्ठानयुक्तं गान्धर्वं देहं गन्धर्वसम्बन्धिनं पुरुषदेहं आविश्य स्वकीयं भवनं गृहं ययौ ।।११०।।

**तस्यास्तद्देहसादृश्यं गन्धर्वस्य प्रसादतः ।**
**प्राप गन्धर्वदेहोऽपि तया पश्चादधिष्ठितः ।।१११।।**

**वरदराजीया–** ननु तस्मिन् गन्धर्वदेहे स्थितायाः शिखण्डिनीति प्रतीतिः कथं जातेत्यत आह– **तस्या इति** ।। तया शिखण्डिन्या अधिष्ठितः अत एव तस्याः शिखण्डिन्याः सम्बन्धि गान्धर्वदेहोऽपि तद्देहसादृश्यं तस्याः शिखण्डिन्याः देहेन सादृश्यं गन्धर्वस्य तुम्बुरोः प्रसादतः वरप्रसादात् प्राप । पश्चात् सादृश्यप्राप्त्यनन्तरं सर्वेषां तत्र शिखण्डिनीति बुद्धिर्जातेत्यर्थः ।।१११।।

**भावविवृतिः–** प्राप गन्धर्वदेहोऽपि तया पश्चादधिष्ठित इत्यत्र तयाम्बया अधिष्ठतो प्रापेत्यर्थः। अन्यथा एतदर्थोदाहरणं व्यर्थं स्यात् । 'यदा युद्धे मृतिं याति सा कन्या पुंतनुस्थिता । तदा पुंस्त्वं पुनर्यासि...।।' इति धनदोक्तिरपि व्यर्था स्यात् ।।१११-१३६।।

**अनन्तभट्टीया–** गन्धर्वदेहोऽपि गन्धर्वस्य प्रसादतः । तस्यास्तद्देहसादृश्यं प्राक्तनस्वीयदेहसादृश्यम् ।।

**जनार्दनीया–** ननु गन्धर्वदेहमाविश्य ययावित्युक्तम् । तर्हि श्वशुरादीनां शिखण्डिनीति प्रतीतिः कथमभूदित्यत आह– **तस्या इति** ।। तया शिखण्डिन्या पश्चादनन्तरं अधिष्ठितः प्रविष्टः गन्धर्वदेहोऽपि गन्धर्वस्य प्रसादतः तस्याः शिखण्डिन्याः । स चासौ देहश्च तद्देहः शिखण्डिनीपूर्वदेहः, तेन सादृश्यं सदृशत्वं प्राप । गन्धर्वांशयुक्तो गन्धर्वदेहः शिखण्डिन्या पश्चात् अधिष्ठित इति भावः ।।१११।।

**ताम्रपर्णीया–** ।। **तस्यास्तद्देहसादृश्यमिति** ।। औत्पत्तिकपूर्वदेहसादृश्यं तया पश्चादधिष्ठितो गन्धर्वदेहप्राप्तेरित्यर्थः ।।१११-११३।।

**चट्टी–** ननु गन्धर्वदेहमाविश्य स्थितायाः शिखण्डिनीति प्रतीतिः कथं जातेत्यतः आह– **तस्या इति** ।। तया शिखण्डिन्या पश्चादनन्तरं प्रविष्टो गन्धर्वदेहोऽपि गन्धर्वस्य प्रसादतः तस्याः शिखण्डिन्याः । स चासौ देहश्च तद्देहः शिखण्डिनीपूर्वदेहस्तेन सादृश्यं सदृशत्वं प्राप । तस्मात् सर्वेषां तत्र शिखण्डिनीति बुद्धिः जातेत्यर्थः ।।१११।।

**श्वो देहि मम देहं मे स्वं च देहं समाविश ।**
**इत्युक्त्वा स तु गन्धर्वः कन्यादेहं समास्थितः ।**
**उवासैव वने तस्मिन् धनदस्तत्र चाऽगमत् ।।११२।।**

**वरदराजीया–** श्वः उत्तरदिवसे मम देहं मे मह्यं देहि । स्वं स्वकीयं देहं त्वं समाविशेति शिखण्डिनीं प्रत्युक्त्वा गन्धर्वः कन्यायाः शिखण्डिन्याः देहं समास्थितः तस्मिन्नेव वने उवास । धनदः कुबेरः तत्र वने आगमत् ।।११२।।

**जनार्दनीया–** कन्यादेहं शिखण्डिनीदेहं समास्थितः । वने उवास अवसत् । धनदो देवः कुबेरः ।।

**चट्टी–** श्वः उत्तरदिवसे मम देहं मे मह्यं देहि । स्वं स्वकीयं देहं त्वं समाविशेति शिखण्डिनीं प्रत्युक्त्वा सः गन्धर्वः कन्यकायाः खिखण्डिन्याः देहं समास्थितः सन् तस्मिन्नेव वने उवास । धनदः कुबेरश्च तत्रागमत् ।।११२।।

**अप्रत्युत्थायिनं तन्तुलीयमानं विलज्जया ।**
**शशाप धनदो देवश्चिरमित्थं भवेति तम्[1] ।।११३।।**

१. 'इत्थं भवदिति' इति वरदराजीय-जनार्दनीययोः पाठान्तरम् । 'चिरं कथं भवेत्' इति अनन्तभट्टीये पाठान्तरमिति भाति ।

**व्यासतीर्थीया–** तं पूर्वं पुरुषत्वेन जातम् ।।११३।।

**वेदाङ्गतीर्थीया–** पश्चात् गन्धर्वेण स्वदेहदानानन्तरं विलज्जया तन्तुषु गुल्मेषु लीयमानं निरीक्ष्य । 'तन्तुः स्तम्बे तथोर्णायां सूत्रसङ्घे च सन्ततौ' इत्यभिधानम् ।।११३-१२२।।

**वादिराजीया–** तन्तुलीयमानं तन्तुषु स्थूलतृणगुल्मेषु लीयमानम् । दत्तपुंस्त्वं तं तुम्बुरुं शशापेति योजना । अन्यथा तच्छब्दद्वयस्य पौनरुक्त्यं स्यात् । 'तन्तुः स्तम्भे तथोर्णायां सूत्रे सङ्घे च सन्ततौ' इत्यभिधानम् ।।११३।।

**मधुसूदनीया–** ।। **तन्तुषु लीयमानम्** ।। तन्तुषु तृणविशेषेषु लीयमानं उपगूहमानम् । 'तन्तुः स्तम्बे तथोर्णायां सूत्रसङ्घे च सन्ततौ' इत्यभिधानम् ।।११३-१२५।।

**वरदराजीया–** अप्रत्युत्थायिनं स्वात्मानं दृष्ट्वा प्रत्युत्थानमकुर्वन्तम् । कुतः ? विलज्जया । स्त्रीदेहे स्थितत्वात् तन्तुषु लतासु लीयमानं तं गन्धर्वं चिरमित्थं स्त्रीदेहं प्राप्तो भवेति धनदो देवः शशापेति सम्बन्धः । 'इत्थं भवेदिति' इति पाठे तु 'तन्तु लीयमानम्' इत्यत्र तमिति पदच्छेदः । 'भवेति तम्' इति पाठे पौनरुक्त्यात् 'तन्तुलीयमानम्' इत्येकं पदम् । तं धनदं प्रति अप्रत्युत्थायिनं इति वा भिन्नं पदं व्याख्यातव्यम् ।।११३।।

**अनन्तभट्टीया–** तन्तुलीयमानं तन्तुषु सु..लतादिषु लीयमानम् । 'चिरं कथं भवेत्' इति पाठे तमिति पदच्छेदः ।।११३।।

**जनार्दनीया–** अप्रत्युत्थायिनं प्रत्युत्थानरहितं विलज्जया तन्तुषु स्तम्बेषु, गुल्मेष्विति यावत्, लीयमानं तं तुम्बुरुं इत्थं स्त्रीरूपी भवेति शशाप । 'इत्थं भवेदिति' इति वा पाठः । 'तन्तुः स्तम्बे तथोर्णायां सूत्रसङ्घे च सन्ततौ' इत्यभिधानम् ।।११३।।

**ताम्रपर्णीया–** तन्तुलीयमानं गुल्मे लीयमानम् । 'तन्तुः स्तम्बे तथोर्णायां सूत्रसङ्घे च सन्ततौ' इत्यभिधानात् ।।११३-११९।।

**अतिविशद–** कन्यादेहं समास्थितः..विलज्जयेत्यत्र 'तन्तुलीयमानं' इत्यत्र एकं 'तं' मिति पदम् । 'चिरमित्थं भवेति तं' इत्यत्र एकं 'तं' इति पदम् । तत्रैकेनालमित्याशङ्क्य उभयोरपि सार्थक्यमान्याः तन्तुषु लीयमानमिति वदन्ति । 'तन्तुः स्तम्भे तथोर्णायां सूत्रसङ्घे च सन्ततौ' इत्यभिधानम् । भारते गृह एव लीयमानत्वोक्तेः । तथाहि–[उद्योग.१९२.३३-४७]

कस्यचित्त्वथ कालस्य कुबेरो नरवाहनः । लोकयात्रां प्रकुर्वाणः स्थूणस्यागान्निवेशनम् ।।
स तद्गृहस्योपरि वर्तमान आलोकयामास धनाधिगोप्ता ।

स्थूणस्य यक्ष्मस्य विवेश स्वलङ्कृतं माल्यगुणैर्विचित्रैः ।।
लाजैश्च गन्धैश्च तथा वितानैरभ्यर्चितं धूपनधूपितञ्च ।
ध्वजैः पताकाभिरलङ्कृतञ्च भक्ष्यान्नपेयामिषदत्तमोदम् ।।
तत्स्थानं तस्य दृष्ट्वा तु सर्वतः समलङ्कृतम् । मणिरत्नसुवर्णानां मालाभिः परिपूरितम् ।।
नानाकुसुमगन्धाढ्यं सिक्तसंमृष्टशोभितम् । अथाब्रवीद् यक्षपतिः तान् यक्षाननुगांस्तदा ।।
स्वलङ्कृतमिदं वेश्म स्थूणस्यामितविक्रमाः । नोपसर्पति मां चैव कस्मादद्य स मन्दधीः ।।
यस्माज्जानन् स मन्दात्मा मामसौ नोपसर्पति ।
तस्मात्तस्मै महादण्डो धार्यः स्यादिति मे मतिः ।।

यक्षा ऊचुः-

द्रुपदस्य सुता राजन् राज्ञो जाता शिखण्डिनी । तस्या निमित्ते कस्मिंश्चित् प्रादात् पुरुषलक्षणम् ।।
अग्रहील्लक्षणं स्त्रीणां स्त्रीभूता तिष्ठते गृहे । नोपसर्पति तेनासौ सव्रीडः स्त्रीसरूपवान् ।।
एतस्मात् कारणाद् राजन् स्थूणो न त्वाद्य सर्पति । श्रुत्वा कुरु यथान्यायं विमानमिह तिष्ठताम् ।।
आनीयतां स्थूण इति ततो यक्षाधिपोऽब्रवीत् । कर्तास्मि निग्रहं तस्येत्यभाषत स तांस्ततः ।।
सोऽभ्यगच्छत यक्षेन्द्रमाहूतः पृथिवीपते । तस्याग्रतो महाराज तस्थौ व्रीडासमन्वितः ।।
तं शशापाथ संक्रुद्धो धनदः कुरुनन्दन । एवमेव भवत्वद्य स्त्रीत्वं पापस्य गुह्यकाः ।।
ततोऽब्रवीद्यक्षपतिर्महात्मा यस्माददेयं भवता हि दत्तम् ।
शिखण्डिने लक्षणं पुंस्त्वसञ्ज्ञं स्त्रीलक्षणं त्वग्रहीत् पापबुद्धे ।।
अप्रवृद्धं सुदुर्धर्ष यस्मादेतत्कृतं त्वया । तस्मादद्य प्रभृत्येव स्त्री त्वं सा पुरुषस्तथा ।।

इत्यादिना । तस्मात्कथमेतदिति चेन्न । एकस्य धनदस्तत्र चागमदित्यनेनान्वयोपपत्तेः । अथवा तं कुबेरं अप्रत्युत्थायिनं लीयमानं विलज्जयेत्यत्र एकस्य तमित्यस्यान्वयोपपत्तेः । अन्यस्या द्वितीयान्तस्याध्याहार्यत्वात् । तेन विलीयमानत्वादेर्निर्वियत्वात्[?] धनदः तं यक्षं प्रत्यगादित्याद्ययोजना । यो धनदस्तत्रागमत् तं प्रत्यप्रत्युत्थायिनं विलज्जया लीयमानं तं यक्षं धनदो देवः हे पाप यक्ष त्वं चिरमित्थं भवेति शशापेति द्वितीययोजना ।।११३।।

**भारतश्री–** तन्तुषु लीयमानं तन्तुलीयमानम् ।।११३-१२६।।

**चट्टि–** धनदो देवः कुबेरः अप्रत्युत्थायिनं स्वात्मानं दृष्ट्वा प्रत्युत्थानरहितं विलज्जया तन्तुषु स्तम्भेषु गुल्मेषु इति यावत् । लीयमानं तं तुम्बुरुं चिरमित्थं स्त्रीरूपी भवेति शशाप । 'इत्थं भवेत्' इति वा पाठः । 'तन्तुः स्तम्बे तथोर्णायां सूत्रसङ्घे च सन्ततौ' इत्यभिधानम् ।।११३।।

**यदा युद्धे मृतिं याति सा कन्या पुन्तनुस्थिता ।**
**तदा पुंस्त्वं पुनर्यासि चपलत्त्वादितीरितः ॥११४॥**

**व्यासतीर्थीया–** शापनिमित्तमाह– **चपलत्वादिति** ॥११४-११९॥

**वादिराजीया–** तदा पुंस्त्वं पुनर्यासीत्यत्र सा कन्यका युद्धे शिबिरे रात्रौ अश्वत्थाम्ना सह युद्धे यदा खड्गेन मृतिं याति । तदा तत्क्षण एव चपलत्वात् शिखण्डिन्यै त्वया दत्तदेहस्य चञ्चलत्वात् स्वभावतः तदीयत्वाभावात् इति यावत् । यद्वा चपलत्वात् तव चाटुत्वात् देहदानादानदिसामर्थ्य-विशेषवत्वादित्यर्थः । पुंस्त्वं तव पुंदेहवत्त्वं पुनर्यासि । स्वस्व[स्य]योगसामर्थ्यात् तस्या स्वभावभूते अस्मिन् देहे तां प्रवेश्य तव स्वभावभूतं गान्धर्वं पुंदेहं स्वयोगशक्त्या पुनरादाय त्वं तत्र सुखेन तिष्ठेति भावः । अन्यथा 'प्राप गन्धर्वदेहोऽपि तया पश्चादधिष्ठितः' इति प्रागुक्तविरोधः स्यात् । यदा युद्धे सा कन्यका मृतिं याति तदा पुंस्त्वं यासीत्यस्यासङ्गतत्वप्रसङ्गात् । नूतनदेहान्तरप्राप्तौ 'श्वो देहि मम देहं मे' इति स्वोक्तविरोधाच्च उक्तैव योजना ॥११४-१२३॥

**वरदराजीया–** सा कन्या शिखण्डिनी पुंतनुस्थिता पुरुषदेहस्थिता युद्धे समाप्ते सति यदा मृतिं मरणं याति यास्यति अश्वत्थाम्ना तदा पुस्त्वं पुंशरीरं यासि यास्यसि । केनापराधेन? चपलत्वात् धृष्टत्वात् मया सह अविचार्य स्वातन्त्र्येणैव तत्कार्यानुष्ठानादिति भावः । इति उक्तरीत्या धनदेनेरितः ॥११४॥

**अनन्तभट्टीया–** शापे निमित्तमाह– **चपलेति** ॥ चपलत्वात् मया अविचार्य कृतत्वादित्यर्थः ॥११४॥

**जनार्दनीया–** याति यास्यति । चपलत्वादकार्यकर्मकरणत्वादित्यर्थः । इतीरितः ॥११४॥

**चट्टि–** पुंतनुस्थिता सा कन्या युद्धे समाप्ते सति यदा अश्वत्थाम्नः खड्गेन मृतिं मरणं याति यास्यति । तदा पुंस्त्वं पुरुषशरीरं पुनर्यासि यास्यसि । केनापराधेन चपलत्वाच्चञ्चलत्वात् अकार्यकर्मकरणत्वादित्यर्थः ॥११४॥

**तथाऽवसत् स गन्धर्वः कन्या पित्रोरशेषतः ।**
**कथयामासानुभूतं तौ भृशं मुदमापतुः ॥११५॥**

**वरदराजीया–** स गन्धर्वः तुम्बुरुः तथा स्त्रीदेहेन अवसत् उवास । कन्या शिखण्डिनी च पित्रोः स्वमातापित्रोः अशेषतः सर्वं अनुभूतं स्वानुभूतं गन्धर्वदर्शनादिरूपं कथयामास अकथयत् । तौ मातापितरौ तच्छ्रुत्वा भृशमत्यन्तं मुदं सन्तोषं आपतुः ॥११५॥

**जनार्दनीया–** स गन्धर्वः तुम्बुरुः । तथा स्त्रीशरीरेण कौरवपाण्डवयुद्धावसानपर्यन्तं अवसत् । कन्या शिखण्डिनी पित्रोरशेषतः सर्वं अनुभूतं कथयामास । तौ पितरौ ।।११५।।

**चट्टि–** इतीरितः सः गन्धर्वः तुम्बुरुः तथा स्त्रीदेहेन कौरवपाण्डवयुद्धावसानपर्यन्तं अवसत् । कन्या शिखण्डिनी पित्रोरशेषतः सर्वमनुभूतं कथयामास । तौ पितरौ भृशं अत्यन्तं मुदं सन्तोषं आपतुः ।।११५।।

**परीक्ष्य तामुपायैस्तु श्वशुरो लज्जितो ययौ ।**
**श्वोभूते सा तु गन्धर्वं प्राप्य तद्वचनात् पुनः ।।११६।।**

**सत्याभिनवीया–** तत्रैव श्वोभूते सा तु गन्धर्वं इति श्लोके श्वोभूते यस्मिन् दिने श्वशुरो लज्जितो ययौ । तस्मिन् दिने श्वः इति व्यवह्रियमाणे दिने प्राप्ते सति तत्परदिन इत्यर्थः । एतेन यस्मिन् दिने श्वशुरो लज्जितो ययौ तत्परदिने इति वक्तव्यम् । न तु श्वोभूते इति । अतीतदिनस्य श्व इति शब्दवाच्यत्वाभावात् । भूतशब्दस्य वैय्यर्थ्याच्चेति दूषणं परास्तम् । यस्मिन् दिने इत्यादिना शेषेण यस्मिन् दिने श्वशुरो लज्जितो ययौ तस्मिन् दिने श्व इति व्यवह्रियमाणे दिने प्राप्ते सतीत्यर्थमुक्त्वा तत्परदिने इति तात्पर्यार्थस्योक्तत्वात् ।।११६।।

**वरदराजीया–** श्वशुरश्च दशार्णाधिपतिः तां शिखण्डिनीमुपायैः पुंस्त्वनिश्चयोपायैः परीक्ष्य पुस्त्वं निश्चित्यैव लज्जितो लज्जायुक्तो ययौ स्वनगरं प्रतीति शेषः । श्वोभूते सति उत्तरदिवसे प्राप्ते सतीति यावत् । सा शिखण्डिनी गन्धर्वं प्राप्य तद्वचनात् तस्य गन्धर्वस्य वचनात् अनेन देहेन सुखं तिष्ठेत्येवं रूपात् वचनात् तेनैव गन्धर्वेणैव देहेन पुनः परावृत्य ययौ ।।११६।।

**अनन्तभट्टीया–** वीक्ष्य पुंस्त्वं निश्चित्येत्यर्थः । [श्वो] भूते सति अनेनैव देहेन तिष्ठेत्येवं रूपात् ।।११६।।

**जनार्दनीया–** उपायैः पुंस्त्वज्ञापकोपायैः परीक्ष्य, पुमानिति परीक्षां कृत्वा ययौ । तद्वचनात् मरणपर्यन्तं मम पुंदेहः तवास्तु त्वदीयं स्त्रीवपुः ममास्त्वित्येवंरूपगन्धर्ववचनात् तेनैव देहेन पुंदेहेनैव ययौ । स्वगृहं प्रतीति शेषः ।।११६।।

**चट्टि–** श्वशुरश्च तां शिखण्डिनीमुपायैः पुरुषत्वज्ञापकोपायैः परीक्ष्य परीक्षां कृत्वा पुरुषत्वं निश्चित्येत्यर्थः । लज्जितो लज्जया युक्तः सन् ययौ । स्वपुरं प्रतीति शेषः । श्वोभूते सति उत्तरदिवसे प्राप्ते सति शिखण्डिनी गन्धर्वं प्राप्य तद्वचनात् तस्य गन्धर्वस्य वचनात् मरणपर्यन्तं मम पुंदेहः तवास्तु त्वदीयं स्त्रीदेहं मास्त्वित्येवं रूपवचनात्तेनैव गान्धर्वेणैव देहेन ययौ । स्वगृहं प्रतीति शेषः ।।११६।।

**ययौ तेनैव देहेन पुंस्त्वमेव समाश्रिता ।**
**स शिखण्डी नामतोऽभूदस्त्रशस्त्रप्रतापवान्[1] ।।११७।।**

**वरदराजीया–** यतः पुंस्त्वमेव समाश्रिता अतः शिखण्डीति नामतः प्रसिद्धोऽभूत् । अस्त्राणि शस्त्राणि प्रतापः पौरुषं च विद्यते अस्येति तद्वांश्चाभूदित्यर्थः ।।११७।।

**जनार्दनीया–** पुंस्त्वं पुरुषत्वं समास्थिता प्राप्ता एव । अत एव सः शिखण्डिन्या अभिमन्यमानः गन्धर्वांशयुक्तो गन्धर्वदेहः नामतः शिखण्डीति अभूत् ।।११७।।

**चट्टि–** यतः पुंस्त्वं पुरुषत्वं समाश्रिता प्राप्ता एव अत एव सः नामतः शिखण्डीति प्रसिद्धोऽभूत् । अस्त्रशस्त्रप्रतापवान् अस्त्राणि शस्त्राणि प्रतापः पौरुषञ्च विद्यन्ते अस्येति तद्वान् चाभूदित्यर्थः ।।११७।।

**विचित्रवीर्यः प्रमदाद्वयं तत् सम्प्राप्य रेमेऽब्दगणान् सुसक्तः ।**
**तत्याज देहं स च यक्ष्मणाऽर्दितस्ततोऽस्य माताऽस्मरदाशु कृष्णम् ।।११८।।**

**वेदाङ्गतीर्थीया–** यक्ष्मणा रोगेण अर्दितः पीडितः ।।११८-१२९।।

**वादिराजीया–** यक्ष्मणार्दित इत्यत्र यक्ष्मणा याति देहः क्षयमनेननेति यक्ष्म, क्षयव्याधिः तेन ।।

**वरदराजीया–** एवं अम्बावृत्तान्तमुक्त्वा अम्बिकाम्बालिकयोः वृत्तान्तमाह– **विचित्रवीर्य इत्यादिना** ।। विचित्रवीर्यः सत्यवत्या द्वितीयः सुतः तत्पूर्वोक्तं प्रमदाद्वयं अम्बिकाम्बालिकाह्वयस्त्रीयुग्मं सम्प्राप्य अब्दगणान् वहून् संवत्सरान् रेमे । कथम्? सुसक्तः अत्यन्तविषयासक्तः । अत एव यक्ष्मणा क्षयरोगेणार्दितः पीडितो अनिच्छया देहं शरीरं तत्याज त्यक्तवान् । अत एवोक्तं पूर्वं 'अतिसक्तास्तपोहीना' इत्यादि । ततोऽनन्तरं अस्य विचित्रवीर्यस्य माता सत्यवती कृष्णं श्रीवेदव्यासं अस्मरत् आगन्तव्यमिति चिन्तितवतीत्यर्थः ।।११८।।

**अनन्तभट्टीया–** यक्ष्मणा क्षयरोगेन ।।११८।।

**जनार्दनीया–** प्रसङ्गात् प्राप्तकथां निर्णयेनोक्त्वा प्रकृतमनुसरति– **विचित्रवीर्य इति** ।। विचित्रवीर्यः शन्तनुपुत्रः तत् प्रमदाद्वयं पूर्वोक्ताम्बिकाम्बालिकात्मकस्त्रीद्वन्द्वम् । यक्ष्मणा क्षयरोगेण अर्दितः पीडितः स विचित्रवीर्यः देहं तत्याज अत्यजत् । ततः अस्य विचित्रवीर्यस्य माता सत्यवंती श्रीकृष्णं वेदव्यासं अस्मरत् ।।११८।।

---

१. 'शिष्यार्थं प्रददौ चाथ द्रोणाय कुरुपुङ्गव । शिखण्डिनं महाराज पुत्रं स्त्रीपूर्विणं तथा ।। प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः । शिखण्डी सह युष्माभिः धृष्टद्युम्नश्च पार्षतः ।।' इति उद्योगपर्वणि.१९२.६०-६१ ।

**चट्टि–** एवमम्बावृत्तान्तमुक्त्वा अम्बिकाम्बालिकायोरपि वृत्तान्तमाह– **विचित्रवीर्य इत्यादिना** ।। विचित्रवीर्यः शन्तनोः द्वितीयः पुत्रः तत्प्रमदाद्वयं पूर्वोक्ताम्बिकाम्बालिकारूपं स्त्रीद्वयं सम्प्राप्य अब्दगणान् बहून् संवत्सरान् रेमे । सुसक्तः तयोरत्यन्तासक्तः सः विचित्रवीर्यः यक्ष्मणा क्षयरोगेणार्दितः पीडितस्सन् देहं तत्याज । ततोऽस्य विचित्रवीर्यस्य माता सत्यवती कृष्णं वेदव्यासं आश्वस्मरत् ।।११८।।

**आविर्बभूवाऽशु जगज्जनित्रो जनार्दनो जन्मजराभयापहः ।**
**समस्तविज्ञानतनुः सुखार्णवः सम्पूजयामास च तं जनित्री ।।११९।।**

**व्यासतीर्थीया– जगज्जनित्र** इति सुतार्थं स्मृतत्वात् प्रसङ्गानुगुणं विशेषणम् । मातुर्दुःखापनोदन-सामर्थ्ये कैमुत्यमुक्तम्– **जन्मेति** ।। तस्याः स्मरणं स्वयं कथं व्यजानदित्यत उक्तम्– **समस्तेति** ।। दूरादागमनेन दुःखप्राप्तिः परिहृता– **सुखार्णव इति** ।।११९ ।।

**वरदराजीया–** जगज्जनित्रः जगज्जनयितुं शीलमस्यास्तीति तथा । जन्मजरयोर्भयमपहन्तीति तथा । समस्तं सम्पूर्णं विज्ञानमेव तनुर्यस्य स तथा । सुखेनार्णव इव । एवंभूतो जनार्दनो व्यासः आशु कालक्षेपमन्तरेण आविर्बभूव प्रत्यक्षोऽभूदित्यर्थः । अत्र 'अपान्तरतमो नाम मुनिः व्यासो बभूव' इति प्रवादो अन्धपरम्परैवेति प्रदर्शनाय व्यासस्य एतानि विशेषणानीति द्रष्टव्यम् । जनित्री माता सत्यवती तं व्यासं सम्पूजयामास ।।११९।।

**जनार्दनीया–** जगज्जनित्रः जगदुत्पादकः । अपहन्ति नाशयतीति तथा । जनित्री माता सत्यवती । तं व्यासं पूजयामास ।।११९।।

**ताम्रपर्णीया–** माताऽस्मरदित्युक्तं मातृत्वमौपचारिकमिति सूचयितुं जगज्जनित्र इत्यादिविशेषणम् । यद्वा सुतोत्पादनार्थं अविर्भूतत्वात् प्रसङ्गानुकूल्येन विशिनष्टि– **जगज्जनित्र इति** ।। मातृदुःखापनोदन-सामर्थ्योपपादनायाह– **जन्मेति** ।। तस्याः स्मरणं कथं व्यजानदित्यतः उक्तम्– **समस्तेति** ।। मातृकृत-सभाजनेन न तस्य कश्चिल्लाभः इत्याह– **सुखार्णव इति** ।।११९-१२१।।

**चट्टि–** जगज्जनित्रो जगतामुत्पादकः । जन्म जरा च जन्मजरे तयोर्भयं अपहन्तीति जन्मजराभयापहः । समस्तं सम्पूर्णं विज्ञानमेव तनुर्यस्य स तथा । सुखेन अर्णव एवंभूतो जनार्दनो व्यासः आशु आविर्बभूव । प्रत्यक्षोऽभूत् । जनित्री माता सत्यवती च तं व्यासं सम्पूजयामास ।।११९।।

**तं भीष्मपूर्वैः परमादरार्चितं स्वभिष्टुतं चावददस्य माता ।**
**पुत्रौ मृतौ मे न तु राज्यमैच्छद् भीष्मो मया नितरामर्थितोऽपि ।।१२०।।**

**वरदराजीया–** भीष्मपूर्वैः भीष्मादिभिः परेणादरेणार्चितः सम्यक् स्तुतं व्यासं प्रति अस्य व्यासस्य माता सत्यवती अवदत् । मे पुत्रौ चित्राङ्गदविचित्रवीर्यौ मृतौ । भीष्मस्तु मया नितरामत्यन्तं अर्थितोऽपि राज्यं नैच्छत् ।।१२०।।

**जनार्दनीया–** अस्य व्यासस्य माता परमादरेण सर्वस्मादधिकप्रीत्या अर्चितं स्वभिष्टुतं सम्यक्स्तुतं व्यासं प्रत्यवदत् । किमिति ? पुत्रौ चित्राङ्गदविचित्रवीर्यौ ।।१२०।।

**चट्टि–** भीष्मपूर्वकैः परमेण आदरेण भक्त्या अर्चितं स्वभिष्टुतं सम्यक्स्तुतं तं व्यासं प्रति अस्य व्यासस्य माता सत्यवती अवदत् । किमिति । मे पुत्रौ चित्राङ्गदविचित्रवीर्यौ मृतौ । भीष्मस्तु मया नितरां अत्यन्तं अर्थितोऽपि राज्यं नैच्छत् ।।१२०।।

**क्षेत्रे तथा भ्रातुरपत्यमुत्तममुत्पादयास्मत्परमादरार्चितः ।**
**इतीरितः प्रणतश्चाप्यभिष्टुतो भीष्मादिभिश्चाऽह जगद्गुरुर्वचः ।।१२१।।**

**व्यासतीर्थीया–** भ्रातुः क्षेत्रे अपत्योत्पत्तिरयुक्तेत्यतो बन्धुभिः प्रार्थितेनापत्योत्पत्तिः कार्येति स्मृतिं सूचयन्नाह– **अस्मदिति** ।।१२१-१२७।।

**वरदराजीया–** ततः कारणात् भ्रातुर्विचित्रवीर्यस्य क्षेत्रे भार्यायां उत्तमं गुणाधिकं अपत्यं पुत्ररूपं उत्पादय जनय । यतोऽस्माभिः परेणादरेणार्चितः इति ईरितः । न केवलमीरितः किन्तु प्रणतः नमस्कृतश्च अभिष्टुतः संस्तुतश्च । न केवलं मात्रा किन्तु भीष्मादिभिश्चेत्यर्थः । जगद्गुरुर्व्यासो वचो वाक्यं जगाद ।।

**अनन्तभट्टीया–** ....व्रतयोग्यतासिद्ध्यर्थमिति भावः ।।१२१।।

**जनार्दनीया–** ततः तस्मात् अस्माभिः परमादरेण विशेषभक्त्या अर्थितः प्रार्थितः त्वं भ्रातुः क्षेत्रे भार्यायां उत्पादयेत्यवददिति सम्बन्धः । 'न क्षेत्रजा अपि मृते पितरि स्वकीयैः सम्यङ् नियोगमनवाप्य भवाय योग्याः' इति स्मृत्युक्तदोषं परिहर्तुं अस्मत्परमादरार्थित इत्युक्तम् । इतीरितः प्रणतः अभिष्टुतः भीष्मादिभिः प्रणतो अभिष्टुतश्च व्यासः वचः आह ।।१२१।।

**ताम्रपर्णीया–** भ्रातृक्षेत्रे अपत्योत्पत्तिरयुक्त इत्यतो बन्धुभिः प्रार्थितेनापत्योत्पत्तिः कार्या इति स्मृतिं सूचयन्नाह– **अस्मदिति** ।।१२१।।

**भावचन्द्रिका–** पितृभेदेऽपि एकमातृप्रसूतत्वात् भ्रातुः ।।१२१।।

**चट्टि–** ततः कारणाद् भ्रातुः विचित्रवीर्यस्य क्षेत्रे भार्यायां उत्तमं गुणाधिकं अपत्यं पुत्रं अस्मत्परमादरार्चितः अस्माभिः परमेणादरेणातिभक्त्यार्चितः सन् उत्पादय जनय । इतीरितः प्रणतो

नमस्कृतश्च अभिष्टुतः संस्तुतश्च । न केवलं मात्रा अपि तु भीष्मादिभिश्च प्रणतः जगद्गुरुः व्यासः वचो वाक्यं प्राह ।।१२१।।

**ऋते रमां जातु [1]ममाङ्गसङ्गयोग्याऽङ्गना नैव सुरालयेऽपि ।**
**तथाऽपि ते वाक्यमहं करिष्ये सांवत्सरं सा चरतु व्रतं मे ।।१२२।।**

**वादिराजीया–** 'ऋते रमाम्' इति वदता अप्सरोरूपगोप्यादीनामपि लक्ष्मीसन्निधानादेवाङ्गे सङ्ग इति सूचितम् ।।१२२-१२९।।

**वरदराजीया–** किमिति? रमां लक्ष्मीमृते मम जातु कदाचित् अङ्गसङ्गयोग्या संभोगयोग्या अङ्गना स्त्री सुरालयेऽपि सत्यादिलोकेष्वपि नास्ति । किमु पृथिव्यादिषु । यद्यपि तथापि ते वाक्यं अपत्यं जनयेति वचनं करिष्ये । सा अम्बिका संवत्सरं संवत्सरपरिसमाप्यं व्रतं मदङ्गसङ्गयोग्यतासिद्ध्यर्थमिति शेषः । चरतु करोतु ।।१२२।।

**जनार्दनीया–** किमिति? रमां ऋते जातु कदाचित् मम अङ्गसङ्गाय अङ्गसम्बन्धाय, सम्भोगायेत्यर्थः । योग्या अङ्गना स्त्री सुराणां आलये लोकेऽपि नैव । यद्यपि तथापि वाक्यं पुत्रोत्पत्त्यर्थमुक्तं वाक्यम् । सा ते स्नुषा सांवत्सरं संवत्सरसम्बन्धि मे व्रतं वैष्णवव्रतमित्यर्थः । चरतु करोतु ।।१२२।।

**ताम्रपर्णीया–** 'ऋते रमाम्' इति वदता अप्सरोरूपगोप्यादीनामपि रमासन्निधानादेवाङ्गसङ्ग इति सूचितम् । सा चरतु रमावेशसिद्ध्यर्थमिति शेषः ।।१२२।।

**अतिविशद–** ऋते रमां जातु ममाङ्गसङ्गयोग्याङ्गना नैव सुरालयेऽपि इत्यत्र साक्षाद्रमा हरेरङ्गसङ्गयोग्येति प्रतिभाति । तत्तु 'रमाया रमणं' इति पदं 'तत्स्थेनैव' इत्यनेन विरुद्धं स्वस्त्रीरूपद्वारेणेति योज्यम् । भगवतः स्त्रीरूपेण युक्तरमां ऋते सुरालयेऽपि जातु कदाचिदपि ममाङ्गयोगः देहसम्बन्धः तद्योग्या अङ्गना नैवेति योजना ।।१२२।।

**भारतश्री–** रमां ऋते रमावेशं ऋते । अत्र तु रमावेशो नास्ति । तथापि रमावेशमपि सम्पाद्य । सा पूतदेहा सम्यग् रमावेशयोग्यदेहा ।।१२२।।

**चट्टि–** किमिति । रमां ऋते जातु कदाचिदपि ममाङ्गयोगाय सम्भोगायेत्यर्थः । योग्याङ्गना स्त्री सुराणां आलये लोकेऽपि नैव । किमु पृथिव्यादिषु । यद्यपि तथापि ते वाक्यं अपत्यं जनयेति वचनं अहं करिष्ये । सा अम्बिका सांवत्सरं संवत्सरपरिसमाप्यं मे व्रतं वैष्णवमित्यर्थः । चरतु करोतु ।।

---

१. 'ममाङ्गयोगयोग्या' इति चट्टिपाठः ।

**सा पूतदेहाऽथ च [1]वैष्णवव्रतान्मत्तः समाप्नोतु सुतं वरिष्ठम् ।**
**इतीरिते राष्ट्रमुपैति नाशमिति ब्रुवन्तीं पुनराह वाक्यम् ॥१२३॥**

**वरदराजीया–** व्रताचरणस्य फलमाह– **सा पूतदेहेति** ॥ वैष्णवव्रतात् संवत्सरपर्यन्तं अनुष्ठितात् विष्णुसम्बन्धिव्रतात् पूतः पवित्रो देहो यस्याः सा तथा । अनन्तरं मदङ्गसङ्गयोग्यत्वात् मत्तः सकाशाद्वरिष्ठं उत्तमं सुतं सा अम्बिका समाप्नोतु प्राप्नुयात् । इतीरिते सति राष्ट्रं राज्यं नाशमुपैति । पालकस्याभावादित्यर्थः। इति ब्रुवन्तीं व्यासो वाक्यं वचनमाह ॥१२३॥

**जनार्दनीया–** ततः किमित्यत आह– **सेति** ॥ अथ व्रताचरणानन्तरम् । सा अम्बिका । राष्ट्रं नाशमुपैति । अराजकत्वादिति शेषः । इति ब्रुवन्तीं मातरं पुनराह ॥१२३॥

**ताम्रपर्णीया–** ॥ **वरिष्ठमिति** ॥ अन्यथा वरिष्ठपुत्रलाभो नेति भावः ॥१२३॥

**चट्टि–** व्रताचरणस्य फलमाह– **सेति** ॥ वैष्णवव्रतात् संवत्सरपर्यन्तमनुष्ठितात् विष्णुसम्बन्धिव्रतात् पूतः पवित्रो देहो यस्याः सा अम्बिका । अथनन्तरं मदङ्गयोगयोग्यत्वात् मत्तः सकाशात् वरिष्ठं उत्तमं सुतं समाप्नोतु प्राप्नुयात् । इतीरिते सति राष्ट्रं नाशमुपैति । पालकाभावादित्यर्थः । इति ब्रुवन्तीं व्यासः पुनः वाक्यमाह ॥१२३॥

**सौम्यस्वरूपोऽप्यतिभीषणं मृषा तच्चक्षुषो रूपमहं प्रदर्शये ।**
**सहेत सा तद् यदि पुत्रकोऽस्या भवेद् गुणाढ्यो बलवीर्ययुक्तः ॥१२४॥**

**वादिराजीया–** सौम्यस्वरूपोप्यतिभीषणं रूपं मृषा वृथा दर्शये । कस्यचिद्वधे सति दर्शयितुं योग्यं रूपं तदभावेऽपि दर्शयामीत्यर्थः ॥१२४॥

**वरदराजीया–** सौम्यस्वरूप इति सौम्यस्वरूपोऽपि शुभरूपोऽपि तच्चक्षुषः तस्याः अम्बिकायाश्चक्षुषः अतिभीषणमत्यन्तभयङ्करं मृषैव अविद्यमानमेव रूपं प्रदर्शये प्रदर्शयिष्यामि । सा अम्बिका तद्रूपं सहेत द्रष्टुं शक्नुयात् यदि तर्हि अस्याः अम्बिकाया, गुणैराढ्यः श्रेष्ठः तथा बलवीर्याभ्यां युक्तः पुत्रो भवेत् ॥१२४ ॥

**अनन्तभट्टीया–** तच्चक्षुषः स्त्रीनयनस्य । तत् रूपम् ॥१२४॥

**जनार्दनीया–** किमिति? अहं सौम्यं शान्तं स्वरूपं यस्य स तथा । अपि यद्यपि तथापि तस्याः

१. 'व्रतं चरेतां ते देव्यौ निर्दिष्टमिह यन्मया । संवत्सरं यथान्यायं ततः शुद्धे भविष्यतः ॥ नहि मामव्रतोपेता उपेयात् काचिदङ्गना ॥' इत्यादिपर्वणि ११४.६४ ।

तव स्नुषायाः, चक्षुषो लोचनयोः मृषा अविद्यमानमेव अतिभीषणं अतिभयङ्करं रूपं प्रदर्शयिष्ये । सा तत् भयङ्करमिव दृश्यमानं रूपं यदि सहेत तत् द्रष्टुं शक्नुयात् तर्हि अस्याः ते स्नुषायाः ।।१२४।।

**ताम्रपर्णीया–** मृषा मिथ्या । न च 'दृष्ट्वाद्भुतं रूपमुग्रं तवेदम्' इति उग्रत्वस्य भगवदीयत्वोक्त्या विरोधः । तत्राप्युग्रमिवेति विवक्षितत्वात् । 'तस्मिन् काले तु भूमेर्भारहारार्थमुद्यमात् । उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शनात्'[११.२०] इति गीतातात्पर्यनिर्णयवचनात् ।।१२४।।

**अतिविशद–** 'सौम्यस्वरूपोऽप्यतिभीषणं मृषा' इत्यत्र मायामयं रूपं प्रदर्श्य इति नार्थः । व्यासस्य मायामयरूपप्रदर्शकत्वायोगात् । 'सत्यसृष्टावशक्ता हि मायासृष्टिं वितन्वते' इत्युक्तत्वात् । किन्तु 'भीत्या मृषाश्रुः' इत्यादिवत् मृषा वृथेत्यर्थः ।।१२४।।

**भारतश्री–** सम्यग् रमावेशाभावात् अतिभीषणं प्रदर्शये ।।१२४।।

**भावचन्द्रिका–** भीषणाकारस्य सत्यत्वेऽपि तत्र कृशत्वदुर्गन्धत्वादेरसत्वात् मृषेत्याह । 'विरूपो हि जटी चापि दुर्वर्णः परुषः कृषः । सुगन्धेतरगन्धश्च सर्वथा दुष्प्रधर्षणः ।।' इति भारते [आदि.११५.७] ।। प्रदर्शयेच्च... एतदेव तत्समानं भविष्यतीति भावः ।।१२४।।

**चट्टि–** अहं सौम्यं शान्तं स्वरूपं यस्य सः सौम्यस्वरूपोऽपि, तच्चक्षुषस्तस्याः अम्बिकायाः चक्षुषो लोचनस्य मृषा अविद्यमानमेव अतिभीषणं अतिभयङ्करं रूपं प्रदर्शये प्रदर्शयिष्यामि । साम्बिका तद्रूपं यदि सहेत द्रष्टुं शक्नुयात् तर्हि अस्याः अम्बिकायाः गुणैराढ्यः श्रेष्ठः तथा बलवीर्याभ्यां युक्तः पुत्रको भवेत् ।।१२४।।

**इतीरितेऽस्त्वित्युदितस्तयाऽगमत् कृष्णोऽम्बिकां सा तु भयान्न्यमीलयत् ।**
**अभूच्च तस्यां धृतराष्ट्रनामको गन्धर्वराट् पवनावेशयुक्तः ।।१२५।।**

**वादिराजीया–** 'अभूच्च तस्यां धृतराष्ट्रनामक' इत्यत्र 'अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः । स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ।। धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः ।।' [आदिपर्व.६७.८३] इति भारतोक्तेः हंसनामको गन्धर्वराट् पवनावेशयुक्तः सन् तस्यामम्बिकायां कृष्णद्वैपायनात्मजः कुरुवंशविवर्धनः धृतराष्ट्रनामको पुत्रोऽभूदिति पूर्वार्धस्य योजना । मरुतावेशवशाद्बलाधिकः स धृतराष्ट्रनामा बभूवेति उत्तरार्धस्य योजना ।।१२५।।

**मधुसूदनीया–** ।। **सा तु भयात् न्यमीलयदिति** ।। तुशब्देन भयहेतुं सूचयति । तदुक्तम्– 'तस्य दीप्तस्य कपिलजटादीप्तविलोचने । श्मश्रुःशोचिस्फुलिङ्गानि दृष्ट्वा देवी न्यमीलयत् ।।' इत्यादिपर्वणि [११५.८] ।।१२५-१४०।।

**वरदराजीया–** तया सत्यवत्या इत्युक्तप्रकारेण ईरितः कृष्णः अम्बिकां प्रत्यगमत् । अतिभीषणेन रूपेणेति शेषः । सा अम्बिका भयात् भयेन न्यमीलयत् । नेत्रे इति शेषः । तस्यां अम्बिकायां धृतराष्ट्र इति नाम यस्य स तथा गन्धर्वराट् गन्धर्वश्रेष्ठः पवनस्य मुख्यप्राणस्यांशेन युक्तः ।।१२५।।

**अनन्तभट्टीया–** न्यमीलयत् । चक्षुषीति शेषः । धृतराष्ट्रनामको गन्धर्वराट् अभूत् ।।१२५।।

**जनार्दनीया–** व्यासेन इतीरिते सति तया सत्यवत्या तथास्त्वित्युदितः कृष्णः अम्बिकामगमत् । सा अम्बिका भयाद् अविद्यमानभयङ्कररूपदर्शनभयात् न्यमीलयत् । नयन इति शेषः । तस्यां अम्बिकायां पूर्वं धृतराष्ट्रनामको गन्धर्वराट् गन्धर्वश्रेष्ठः अत्रापि धृतराष्ट्रनामा बभूव ।।१२५।।

**ताम्रपर्णीया–** ।। **अभूच्च तस्यामिति** ।। गन्धर्वराट् हंसनामको गन्धर्वश्रेष्ठः पवनावेशयुक्तः सन् तस्यां धृतराष्ट्रनामकोऽभूत् ।।१२५।।

**भावचन्द्रिका–** एतदुक्तं भारते । हंसो नाम गन्धर्वो धृतराष्ट्रो जातः । 'अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः । स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ।। धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनादपि ।।' [आदि.६७.८२-८३] इति भारते । तस्मात् राजा तस्मात् धृतं राष्ट्रं अस्मिन्निति धृतराष्ट्रः ।।१२५।।

**चट्टि–** स्वेन इतीरिते सति तया सत्यवत्या तथास्त्वित्युदितः कृष्णः अम्बिकामगमत् । साम्बिका भयादविद्यमानभयङ्कररूपप्रदर्शनभयात् न्यमीलयत् । नेत्रे इति शेषः । तुशब्देन भयहेतुं सूचयति । तदुक्तम्– 'तस्य दीप्तस्य कपिलजटादीप्तविलोचने । श्मश्रुशोचिःस्फुलिङ्गानि दृष्ट्वा देवी न्यमीलयत् ।।' इत्यादिपर्वणि । तस्यां अम्बिकायां धृतराष्ट्रनामको गन्धर्वराट् गन्धर्वश्रेष्ठः पवनस्य मुख्यप्राणस्य आवेशेन युक्तस्सन् अभूत् ।।१२५।।

**स मारुतावेशवशाद् बलाधिको बभूव राजा धृतराष्ट्रनामा ।**
**अदाद्वरं[1] चास्य बलाधिकत्वं कृष्णोऽन्ध आसीत्स तु मातृदोषतः।।१२६।।**

**वरदराजीया–** पवनावेशफलमाह– **स इति** ।। मारुतावेशनिमित्तात् बलेनाधिकः । अस्मिन्नपि जन्मनि धृतराष्ट्रनामा बभूव । कृष्णश्च तस्य बलाधिकत्वं वरमदात् । मातुरम्बिकायाश्चक्षुर्निमीलनदोषात् स कुमारोऽन्ध आसीत् ।।१२६।।

**जनार्दनीया–** कृष्णः अस्य धृतराष्ट्रस्य । स धृतराष्ट्रः । दोषतः नेत्रमीलनदोषात् अन्धः ।।१२६।।

---

१. '...व्यासः सत्यवतीसुतः । प्रोवाचातीन्द्रियज्ञानो विधिना सम्प्रचोदितः ।।११।। नागायुतसमप्राणो विद्वान् राजर्षिसत्तमः । महाभागो महावीर्यो महाबुद्धिर्भविष्यति ।।१२।। तस्य चापि शतं पुत्रा भविष्यन्ति महात्मनः । किन्तु मातुः स वैगुण्यादन्ध एव भविष्यति ।।' आदि.११५.१२-१३ ।

**ताम्रपर्णीया–** स धृतराष्ट्रनामा मरुतावेवशवशात् बलाधिकोऽभूदिति योजना । तदुक्तं भारते 'अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः । स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः । धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः ।।' [आदि.६८.८३] इति ।।१२६।।

**भारतश्री–** ।। **मातृदोषत इति** ।। तदुक्तं जयद्रथयामले– 'ऋतुस्नाता तु या नारी यं निरीक्षेत कामतः । सेककाले च मनसा स्त्री यद्रूपसंस्थिता ।। तद्रूपं जनयेत् पुत्रमिति वेदविदां मतम्' ।।१२६।।

**चट्टि–** पवनावेशफलमाह– **स इति** ।। सः मारुतावेशस्य वशात् सामर्थ्यात् बलेन अधिकः । अत्रापि धृतराष्ट्रनामा राजा बभूव । कृष्णो वेदव्यासः अस्य धृतराष्ट्रस्य बलाधिकत्वं वरं अदात् । सः धृतराष्ट्रः मातुरम्बिकायाश्चक्षुर्निमीलनदोषतः दोषादन्ध आसीत् ।।१२६।।

**ज्ञात्वा तमन्धं पुनरेव कृष्णं माताऽब्रवीज्जनयान्यं गुणाढ्यम् ।**
**अम्बालिकायामिति तत्तथाऽकरोद् भयात्तु सा पाण्डुरभून्मृषादृक् ।।१२७।।**

**व्यासतीर्थीया–** मृषादृगविद्यमानद्रष्ट्री । पाण्डुः शुक्लरूपम् ।।१२७-१३०।।

**वेदाङ्गतीर्थीया–** मृषादृगविद्यमानं पश्यन्ती ।।१२७-१३७।।

**वादिराजीया–** 'भयात्तु सा पाण्डुरभून्मृषादृक्' इत्यत्र तु अम्बिकापुत्रवत् मम पुत्रस्य अन्धता न भवेदिति कार्यविशेषात् । मृषा वृथा व्यासेन प्रदर्शितभयङ्कररूपं पश्यन्तीति मध्यमपदलोपीसमासः । नतु तद्वत् चक्षुर्निमीलनं कुर्वन्तीति भावः । सा अम्बालिका भयात् भयङ्कररूपदर्शननिमित्तभयात् पाण्डुः पाण्डुरवर्णाभूत् । स्वसौवर्णवर्णं विहाय भीता पाण्डुरोगग्रस्तवत् हरिद्रावर्णाभूदिति भावः । 'नमः शान्ताय घोराय मूढाय गुणकर्मणे' इति भागवतोक्तेः भयङ्कररूपमपि भगवतो अस्त्येव । तेनाविद्यमानं पश्यन्तीत्यर्थो न यौक्तिकः ।।१२७-१३६।।

**वरदराजीया–** माता सत्यवती तं कुमारं अन्धं ज्ञात्वा कृष्णं व्यासं पुनरब्रवीत् । किमिति? अन्यं द्वितीयं गुणैः आढ्यं सुतमिति शेषः । अम्बालिकायां जनय उत्पादय । अथानन्तरं तद्वाक्यं तथा यथा पूर्वमकरोत् कृष्णः । सा तु अम्बालिका मृषादृक् अविद्यमानमेव भयङ्करं रूपं पश्यन्ती अतिभयात् पाण्डुः शुभ्रा अभूत् ।।१२७।।

**अनन्तभट्टीया–** अन्यं सुतम् । मृषादृक् मिथ्याभूतभयङ्काराकारदृशी ।।१२७।।

**जनार्दनीया–** अम्बालिकायां अन्यं जनयेत्यब्रवीत् । ततः अन्यं जनयेत्येवं रूपं मातृवाक्यम् । तथा पूर्ववदकरोत् । व्यास इति शेषः । मृषादृक् मृषा मिथ्याभूतं भयङ्कररूपं दृक् पश्यतीति । सा अम्बालिका भयात् पाण्डुः श्वेतवर्णाऽभूत् ।।१२७।।

**ताम्रपर्णीया–** ।। **भयात्तु सा पाण्डुरिति** ।। पाण्डुवर्णवती बभूवेत्यर्थः । तदुक्तं भारते 'अम्बालिका-मथाभ्यगात् ऋषिं दृष्ट्वा तु सापि तम् । विषण्णा पाण्डुसङ्काशा समपद्यत भारत । व्यासः सत्यवतीपुत्र इदं वचनमब्रवीत् । यस्मात् पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामिति । तस्मादेव सुतस्तस्याः पाण्डुरेव भविष्यति ।।' [आदि.११५.२२-२५] इति । मृषादृक् अविद्यमानविरूपद्रष्ट्री । यद्वा वृथादृक् भक्तिं विना पश्यन्तीत्यर्थः ।।१२७।।

**भावचन्द्रिका–** ज्ञात्वा व्यासवचनादेव रात्रौ अम्बिकया सह शयित्वा प्रातरागमनसमये कीदृशो भविष्यतीति सत्यवत्या पृष्टे अन्धो भविष्यतीति उवाचेति भारते ।। १२७ ।।

**चट्टि–** माता सत्यवती तं कुमारमन्धं ज्ञात्वा अम्बालिकायां गुणाढ्यमन्यं सुतं जनयेति कृष्णं व्यासं पुनरेव पुनरप्यब्रवीत् । तन्मातृवाक्यं तथा पूर्ववदकरोत् । व्यास इति शेषः । साम्बालिका मृषादृङ् मिथ्याभूतं भयङ्करं रूपं दृक् पश्यतीति मृषादृग् । अविद्यमानदृष्टिरिति वा । भयात् पाण्डुः श्वेतवर्णा अभूत् । वादिराजतीर्थास्तु एवं व्याचक्षते । तु विशेषेण भयात् मृषादृक् मृषा वृथा दृक् भक्तिं विना पश्यन्तीति इतस्ततः पश्यन्तीति सती पाण्डुः पाण्डुरवर्णा बभूव । स्वसौवर्णं विहाय भीत्या पाण्डुरोगग्रस्तवद् हरिद्रावर्णा अभूदिति भावः । 'नमः शान्ताय घोराय मूढाय गुणकर्मणे' इति भागवतोक्तेः भयङ्कररूपमपि भगवतो अस्त्येव । तेनाविद्यमानं पश्यन्तीत्यर्थो न यौक्तिक इति ।।१२७।।

**परावहो नाम मरुत् ततोऽभवद् वर्णेन पाण्डुः स हि नामतश्च ।**
**स चाऽस वीर्याधिक एव वायोरावेशतः सर्वशस्त्रास्त्रवेत्ता ।।१२८।।**

**वरदराजीया–** ततस्तस्याः सकाशात् परावह इति प्रसिद्धो मरुत् अभवत् उत्पन्नः । सः कुमारः वर्णेन पाण्डुरिति कृत्वा नामतश्च नाम्नापि पाण्डुरित्यर्थः । स च सोऽपि वायोः आवेशतः आवेशात् बलवान् आस बभूव । तथा सर्वाणि शस्त्राणि वेत्तीति तथा ।।१२८।।

**जनार्दनीया–** ततः अम्बालिकायाः । स अम्बालिकापुत्रः हि यस्मात् वर्णेन पाण्डुः तस्मात् नामतश्च नाम्ना पाण्डुरित्यर्थः । स च पाण्डुः । आवेशतः आवेशहेतोः ।।१२८।।

**ताम्रपर्णीया–** ।। **तत इति** ।। अम्बालिकाया इत्यर्थः । यद्वा ततो मातृदोषादेव वर्णेन पाण्डुरभवदित्यर्थः ।।१२८-१३१।।

**चट्टी–** ततस्तस्या अम्बालिकायाः सकाशात् परावहो नाम परावह इति प्रसिद्धो मरुदभवत् । सः पुत्रः हि यस्मात् वर्णेन पाण्डुः तस्मान्नामतः नाम्ना च पाण्डुरभवदित्यर्थः । सः पाण्डुः वायोरावेशतः आवेशादेव वीर्याधिको बलाधिकः, सर्वाणि शस्त्रास्त्राणि वेत्तीति सर्वशस्त्रास्त्रवेत्ता चास ।।१२८।।

**तस्मै तथा बलवीर्याधिकत्ववरं [१]प्रादात् कृष्ण एवाथ पाण्डुम् ।**
**विज्ञाय तं प्राह पुनश्च माता निर्दोषमन्यं जनयोत्तमं सुतम् ।।१२९।।**

**वरदराजीया–** तस्मै पाण्डवे तथा पूर्ववदेव बलवीर्याभ्यामधिकत्वं वरं कृष्णः प्रादात् । अथानन्तरं माता सत्या तं पुत्रं पाण्डुं शुभ्रं विज्ञाय पुनश्च कृष्णं प्राह । किमिति? अन्यं तृतीयं निर्दोषं दोषरहितं पुत्रं उत्तमम् । गुणैरिति शेषः ।।१२९।।

**जनार्दनीया–** तस्मै पाण्डवे वरं प्रादात् । माता तं अम्बालिकायां उत्पन्नं पाण्डुं श्वेतवर्णं विज्ञाय प्राह । किमिति ? निर्दोषं अन्धपाण्डुत्वादिदोषरहितं अन्यम् ।।१२९।।

**भावचन्द्रिका–** विज्ञाय व्यासवचनादेव पूर्ववदुक्तेर्भारते ।।१२९।।

**चट्टि–** तस्मै पाण्डवे तथा धृतराष्ट्रस्येव बलवीर्याधिकत्वं वरं कृष्णः व्यास एव प्रादात् । अथ माता सत्यवती तमम्बालिकायामुत्पन्नं पाण्डुं श्वेतवर्णं विज्ञाय माता पुनश्च कृष्णं प्राह । किमिति । निर्दोषं दोषरहितं उत्तममन्यं सुतं जनय उत्पादयेति कृष्णं उक्त्वा पुनरेव पुनरपि स्नुषां अम्बिकां प्राह ।।१२९।।

**उक्त्वेति कृष्णं पुनरेव च स्नुषामाह त्वयाऽक्ष्णोर्हि निमीलनं पुरा ।**
**कृतं ततस्ते सुत आस चान्धस्ततः पुनः कृष्णमुपास्व भक्तितः ।।१३०।।**

**वरदराजीया–** इति कृष्णं व्यासं प्रति उक्त्वा च पुनरेव पुनरपि स्नुषामम्बिकां प्रत्याह । किमिति । पुरा पूर्वं त्वया अक्ष्णोर्निमीलनं कृतं हि यस्मात् ते तव सुतः अन्ध आस । अतः पुनः कृष्णं भक्तितः भक्त्या उपास्व भजस्व ।।१३०।।

**जनार्दनीया–** पुनर्जनय उत्पादय इति कृष्णं प्रत्युक्त्वा, स्नुषां अम्बिकां पुनराह । किमिति ? पुरा त्वया अक्ष्णोः नेत्रयोः निमीलनं आच्छादनं यतः कृतं ततः ते सुतः अन्धः आस । ततः तदर्थं निर्दोषपुत्रोत्पत्त्यर्थं पुनः भक्तितः कृष्णं उपास्व भजस्व ।।१३०।।

**चट्टि–** किमिति । त्वया पुरा अक्ष्णोः नेत्रयोः निमीलनमाच्छादनं हि यस्मात् कृतं ततस्ते सुतः अन्धः आस । ततस्तदर्थं दोषरहितपुत्रोत्पत्त्यर्थं पुनः कृष्णं भक्तितः भक्त्या उपास्व भज ।।१३०।।

---

१. 'शशंस स पुनर्मात्रे तस्य बालस्य पाण्डुताम् । भविष्यति सुविक्रान्तः कुमारो दिक्षु विश्रुतः ।। पाण्डुत्वं वर्णतस्तस्य मातृदोषाद्भविष्यति ।।' इत्यादिपर्वणि११५.२७-२८ ।

**इतीरिताऽप्यस्य हि मायया सा भीता भुजिष्यां [१]कुमतिर्न्ययोजयत् ।**
**सा तं परानन्दतनुं गुणार्णवं सम्प्राप्य भक्त्या परयैव रेमे ॥१३१॥**

**व्यासतीर्थीया–** भुजिष्यां विलासिनीम् । तस्याः ज्ञानं निरूपयति– **परानन्दतनुं गुणार्णवमिति** ॥१३१॥

**वरदराजीया–** इतीरितापि सा अम्बिका अस्य कृष्णस्य मायया मोहकशक्त्या कुमतिः दुर्बुद्धिः भयात् भुजिष्यां शूद्रवर्णां स्वपरिचारकां न्ययोजयत् त्वं गच्छेति नियुक्तवती । सा भुजिष्या तं कृष्णं परानन्द एव तनुः शरीरं यस्य स तथा तम्, गुणैरर्णव इव तं, प्राप्य परया निर्दोषया भक्त्या रेमे ॥

**अनन्तभट्टीया–** भुजिष्यां परिचारिकायाम् ॥१३१॥

**जनार्दनीया–** भुजिष्यां परिचारिकीं ऊढां शूद्रीं न्ययोजयत् । अत एव कुमतिः । सा भुजिष्या ॥

**चट्टि–** इतीरिता साम्बिका अस्य कृष्णस्य मायया महिम्ना भीता सती भुजिष्यां परिचारिकां न्ययोजयत् । अत एव कुमतिः । सा भुजिष्या, परः आनन्द एव तनुः शरीरं यस्य सः तथा तं, गुणैरर्णव इव तं, एतादृशं तं श्रीवेदव्यासं प्राप्य परया निर्दोषया भक्त्यैव रेमे ॥१३१॥

**ताम्रपर्णीया–** मायया इच्छया । भुजिष्याः तत्कालवृत्तिज्ञानप्रकारमाह– **परानन्देति** ॥१३१-१३३॥

**तस्यां स देवोऽजनि धर्मराजो माण्डव्यशापाद् य उवाह शूद्रताम् ।**
**वसिष्ठसाम्यं समभीप्समानं प्रच्यावयन्निच्छया शापमाप ॥१३२॥**

**व्यासतीर्थीया–** उवाह प्राप । केन निमित्तेन माण्डव्यशाप इति जिज्ञासायामाह– **वसिष्ठेति** ॥१३२॥

**वेदाङ्गतीर्थीया–** [माण्डव्यशापात् स शूद्रतां] उवाह । वसिष्ठसाम्यं समभीप्समानं माण्डव्यं प्रच्यावयन् वसिष्ठसाम्यप्राप्त्यर्थे कृततपसः मोचयन् स्वयं शापग्रहणेन तं तपोबलहीनं कुर्वन्निति भावः ॥१३२॥

**वादिराजीया–** ननु नीचऋषेः सकाशादत्युच्चो यमः कुतः शापमवापेत्याशङ्कायां उच्चे स्वस्मिन् शापदानेन तदीयतपसः प्रच्यावनार्थमिति भावेनाह– **वसिष्ठसाम्यमिति** ॥ प्रच्यावयन् ॥१३२॥

१. 'सा तु रूपं च गन्धं च महर्षेः प्रविचिन्त्य तम् । नाकरोद् वचनं देव्या भयात् सुरसुतोपमा ॥' इति आदिपर्वणि. ११५.३७ ।

**वरदराजीया–** तस्यां भुजिष्यायां सः प्रसिद्धः धर्मराजः यमदेवो अजनि जातः । यमस्य शूद्यां जनने निमित्तमाह– **माण्डव्य इति** ।। यो धर्मराजो माण्डव्यस्य ऋषेः शापात् शूद्रतां शूद्रीपुत्रतां उवाह अङ्गीकृतवान् । ननु देवस्य कथमृषेः शाप इत्यत आह– **वसिष्ठेति** ।। वसिष्ठसाम्यं वसिष्ठस्य समः स्यामिति समभीप्समानं आकाङ्क्षमाणं माण्डव्यं प्रच्यावयन् तपस इति शेषः । इच्छया स्वेच्छया शापमाप प्राप्तवान् ।।१३२।।

**भावविवृतिः–** शापात् शापं निमित्तीकृत्य । शापकारणमाह– **वसिष्ठसाम्यमिति** ।। समभीप्समानं '**मम भवेत्**' इति तपः कुर्वाणं प्रच्यावयन् विमुञ्चन्, तपस इति शेषः । शापमाप । ननु माण्डव्यतपोविघ्नं कुरु इति अन्येन प्रेरितो यमः तत्कृतवान् किमित्यतो नेत्याह– **इच्छयेति** ।। ईश्वरेच्छयेत्यर्थः । 'ईश्वरेच्छा प्राथमिकी तां विना नहि किञ्चन' [भा.ता.२.९.१] इत्युक्तेः । सर्वस्यैव ईश्वरेच्छया एव कारणत्वात् । मुख्यस्य निर्विशेषेति निरुपचरितेच्छाशब्देन ईश्वरेच्छाया गृहीतत्वात् । अदृष्टोद्बोधकेश्वरेच्छया प्रेरितो यमस्तत्कृतवानित्यर्थः । तदेतदुक्तम्–

'यद्यद्भगवता क्लृप्तं तदेव नियतं भवेत् । अतोऽन्येषां वरः शापो गुणदोषप्रकर्तृता ।।
स्वतः प्राप्ताद्भेदकृति वासनारूपिणो यथा । विद्यमानानि मनसि पुनः स्वप्नेऽपि दर्शनम् ।।
भगवद्वशता यस्मात् सर्वेषां ज्ञेयमेव तत् ।। इति ।
'प्रारब्धकर्मणैवेषां क्लृप्तदुःखस्य सूचकम् । इदानीन्तन कर्म स्यात् व्रणहेतुर्यथा रणः ।।'

'ब्रह्मापरोक्षेऽपि विकर्मसूचकं प्ररब्धपापस्य विषाशनं यथा ।' [म.ता.नि.३२.१००] इति च । 'तद्विघाताय जायन्ते शक्राद्याः परिपन्थिनः' इति च । 'यत्र देवैः कृते विघ्ने न पुमान् खण्डितो भवेत् । तत्र तद्यशसे विघ्नं कुर्युर्नतु विघातने ।। यत्र खण्डितता तत्र खण्डनायैव केवलम् । सत्यकामा यतो देवास्ते चित्ताद्यभिमानिनः।।' इति चतुर्थतात्पर्ये । [९.८०] 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं मनश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तिम् ।।' इति भारते ।।

**अनन्तभट्टीया–** उवाह दधार । माण्डव्यं प्रच्यावयन् । तपस इति शेषः । इच्छया बुद्धिपूर्वकम् ।।

**जनार्दनीया–** तस्यां स धर्मराजो देवः अजनि जातः । स क इत्यत आह– **माण्डव्येति** ।। यो धर्मराजः माण्डव्यस्य ऋषेः शापात् शूद्रतां शूद्रीपुत्रत्वात् शूद्रत्वं उवाह प्राप । 'पितुर्गुणाः मातृजातिः सुतानां यस्मात् सतां प्रायशः' इति स्मरणात् शूद्रोत्पन्नत्वात् शूद्रत्वं प्रापेत्यर्थः । ननु यमस्य शूद्रत्वप्राप्तौ किं कारणमित्यत आह– **वसिष्ठेति** ।। वसिष्ठेन साम्यं सदृशत्वं सम्यगभीप्समानं इच्छन्तं माण्डव्यं प्रच्यावयन् वसिष्ठसाम्यप्राप्त्यर्थं कृततपसो विमोचयन् इच्छया स्वेच्छया । धीपूर्वकम् इत्यर्थः । शापं शूद्रत्वप्रापकं शापं आप ।।१३२।।

**चट्टि–** तस्यां भुजिष्यां सः प्रसिद्धः देवः धर्मराजः यमः अजनि जातः । यमस्य शूद्र्यां जनने निमित्तमाह– **माण्डव्येति** ।। यः धर्मराजः माण्डव्यस्य ऋषेः शापात् शूद्रतां शूद्रीपुत्रत्वं उवाह प्राप । 'गुणाः पितुर्मातृजातिः सुतानां यस्मात् सतां प्रायश' इत्युक्तत्वात् । शूद्र्यामुत्पन्नत्वात् शूद्रत्वं प्रापेत्यर्थः । ननु यमदेवस्य कथमृषेः शाप इत्यत आह– **वसिष्ठेति** ।। वसिष्ठेन साम्यं सदृशत्वं सम्यगभीप्समानं इच्छन्तं माण्डव्यं प्रच्यावयन् वसिष्ठसाम्यप्राप्त्यर्थं कृततपसो विमोचयन् इच्छया स्वेच्छया बुद्धिपूर्वकमित्यर्थः । शापं शूद्रत्वप्रापकं शापं आप ।।१३२।।

**अयोग्यसम्प्राप्तिकृतप्रयत्नदोषात् समारोपितमेव शूले ।**
**चोरैर्हृतेऽर्थेऽपि तु चोरबुद्ध्या मक्षीवधादित्यवदद् यमस्तम् ।।१३३।।**

**व्यासतीर्थीया–** प्रच्यावनप्रकारमाह– **अयोग्येति** ।। दोषादेव । अयोगव्यवच्छेदार्थः ।।१३३।।

**वेदाङ्गतीर्थीया–** शापप्राप्तिप्रकारमाह– **अयोग्येत्यादिना** ।। अयोग्यसम्प्राप्तिकृतप्रयत्नदोषादेव । अयोग्यव्यवच्छेदक एवकारः । अर्थे धने चोरैर्हृते सत्यपि चोरबुद्ध्या असम्प्रज्ञातसमाधिस्थस्यास्य पुरस्तात् धनं निधाय चोरेषु पलायितेषु धनस्वामिभिः धनमपहृत्येदानीं पलायितुमशक्तो निमीलिताक्षो वर्तते अयमेव चोर इति बुद्ध्या वधार्होऽयमिति मत्वा शूले समारोपितम्, कालान्तरे कुतो दोषात् मम शूलप्राप्तिरिति तेन पृष्टः सन् यमो मक्षीवधात् मक्षिकावधात् दोषात् प्राक् त्वया मक्षिकाः कण्टकाग्रं समारोप्य हताः । तस्माद् दोषात् तव शूलप्राप्तिरित्यवदत् इति सम्बन्धः । एवं शूलप्राप्त्यनन्तरं कुपितेन माण्डव्येन मिथ्यावादी त्वं शूद्रो भवेति यमः शप्त इति भावः ।।१३३।।

**वादिराजीया–** अयोग्यसम्प्राप्तिकृतप्रयत्नदोषादेव शूले समारोपितमिति एवकारसम्बन्धः । अथवा चोरैरेवेत्येवकारसम्बन्धः । चोरैरेवापहृतेऽपि इत्यपिपदेन अर्थापहरणस्य शूलारोपणहेतुतां गर्हयति । अत एव अविवेकमूलत्वाच्छूलमारोपयेति राजाज्ञापि न तत्र कारणमिति सूचितम् । तस्मात् अयोग्यकामाख्यदोषादेव शूलारोपणमिति भावः । तदा तत्र गतो यमो मम शूलारोपणं कस्मादिति ऋषिणा पृष्टे सति वसिष्ठसाम्यापेक्षया तपःकरणरूपमुख्यदोषमनुक्त्वा ऋषेः कोपजननाय मक्षीवधात् तत्क्षुद्रपापरूपमक्षीवधादिति तं ऋषिमवददिति योजना ।।१३३।।

**वरदराजीया–** प्रच्यावनप्रकारमाह– **चोरैरिति** ।। तस्करैः अर्थे धने हृते अपहृतेऽपि चोरबुद्ध्या अयमेव चोर इति वुद्धिपूर्वं चोरत्वमारोप्य शूले समारोपितम् । ननु दोषारोपणेन शूले समारोपणे प्रत्यवायः स्यादित्यतो वास्तवं दोषमाह– **अयोग्येति** ।। अयोग्यस्य स्वायोग्यस्य वसिष्ठसाम्यस्य सम्प्राप्त्यर्थं कृतात् तपोरूपात् प्रयत्नात् तद्रूपाद्दोषात् शूलं आरोपितमित्यर्थः । तं माण्डव्यम् । केन

दोषेण मम शूलप्राप्तिर्जातेति माण्डव्येन पृष्टो यमो मक्षीवधात् मक्षिकायाः शूलारोपेण वधात् शूलप्राप्तिरित्यवदत् ।।१३३।।

**भावविवृतिः–** स्वस्यायोग्यसाम्यापेक्षया शूले समारोपितं माण्डव्यं मक्षीवधात् शूलारोप इत्युवाचेत्यर्थः ।।१३३।।

**अनन्तभट्टीया–** अयोग्यस्य वसिष्ठत्वसम्प्राप्तये कृतप्रयत्नदोषजातनिमित्तात् अर्थे धने चोरैर्हृतेऽपि चोरबुद्ध्या अयमेव चोर इति बुद्ध्या शूले समारोपितं, तं यमः केन दोषेण शूलारोपणं ममाभूदिति माण्डव्येण पृष्ट इति शेषः । मक्षीवधादित्यवदत् । त्वया मक्षिका हता तेन दोषेणेदं शूलारोपणमभूदिति उवाचेत्यर्थः ।।१३३।।

**जनार्दनीया–** शापकारणं स्पष्टयति– **अयोग्येति** ।। अयोग्यस्य स्वायोग्यवसिष्ठसाम्यत्वस्य, संप्राप्तौ विषये कृतश्चासौ प्रयत्नश्च, तज्जन्यदोषान्निमित्तादेव । अयोगव्यवच्छेदक एवकारः । कस्यचिद्धनिकस्य अर्थे द्रव्ये चोरैः हृते अपहृते सत्यपि चोरबुद्ध्या अयमेव चोर इति बुद्ध्या शूलोपरि समारोपितं तं माण्डव्यं प्रति यमः मक्षीवधादिति मक्षिकापुच्छेषीकाप्रवेशनात् तव शूलप्राप्तिरित्यवदत् । अत्र–

'अनुसार्यमाणा बहुभी रक्षिभिः भरतर्षभ । तामेव वसतिं जग्मुः ते ग्रामाल्लोप्त्रहारिणः ।।
ते तस्य पुरतो लोप्त्रं निदधुः कुरुसत्तम । निधाय च भयाल्लीना तत्रैवानागते बले ।।
तेषु लीनेष्वथो शीघ्रं ततः तद्रक्षिणां बलम् । आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः ।।
तमपृच्छत् ततो राजन् यथा वृत्तं तपोधनम् । कतरेण पथा याताः दस्यवो द्विजसत्तम ।।
तेन गच्छामहे ब्रह्मन् यथा शीघ्रतरं वयम् । तथा तु रक्षिणां तेषां ब्रुवतां स तपोधनः ।।
न किञ्चिद्वचनं राजन्नब्रवीत् साध्वसाधु वा । ततस्ते राजपुरुषा विचिन्वानाः तथाऽश्रमम् ।।
ददृशुः तत्र लीनांस्तान् चोरान् तद्द्रव्यमेव च । ततः शङ्का समभवद्रक्षिणां तं मुनिं प्रति ।।
संयम्यैनं ततो राज्ञे दस्यून् सर्वान् न्यवेदयन् । स वध्यघातैः राज्ञाप्तैः शूले प्रोतो महातपः।।'

[आदि.११६.६-१४] इत्यादि । तथा 'स गत्वा सदनं विप्रो धर्मस्य परमार्थवित्' [आदि.११७.९] इत्यादि । तथा 'पतङ्गकानां पुच्छेषु त्वयेषीका प्रवेशिता' [आदि.११७.१२] इत्यादि आदिपर्वतः कथा ज्ञेया । चोरैः धनिकस्य धने हृते सति धनिकदूतैः अनुगमे कृते सति असम्प्रज्ञातसमाधिस्थस्य माण्डव्यस्य अग्रे धनं संस्थाप्य चोरेषु पलायितेषु अनुयाता दूताः पुरस्थद्रव्यं माण्डव्यं दृष्ट्वा अयमेव चोरः पलायने त्वशक्तः सन् निमीलिताक्षो वर्तते अत एव वधार्ह इति मत्वा शूले समारोपितः । ततः कस्मात् दोषान्मे शूलप्राप्तिरिति पृष्टो यमः त्वया मक्षिका कण्टकाग्रं समारोप्य हता तेन दोषेण शूलप्राप्तिरिति उदितो माण्डव्यः असत्यवादात् त्वं शूद्रो भवेति यमं शशापेति भावः ।।१३३।।

**ताम्रपर्णीया**– ।। **अयोग्येति** ।। दोषादेवेत्यन्वयः । चौरैरेवार्थे हृतेऽपीति वा एवकारसम्बन्धः ।।

**भारतश्री**– शूलप्रापकं किं कर्मेति माण्डव्येन पृष्टो यमः मक्षीवधात् शूलप्राप्तिरित्युवाच । तस्य च मक्षीवधस्य । माण्डव्यस्य तु मक्षीवधः शूलप्राप्तिकारणं न किन्तु अयोग्यकामनैव । यमस्तु शापं गृहीतुं तथैवोक्त्वा विविच्य नोक्त्वा शूद्रत्वमवापेति ।।१३३-१५९।।

**भावचन्द्रिका**– अणिमाण्डव्यः शूलादवरोपितः निर्दुःखः लोकान् सञ्चरन् संयमनीं प्राप । तेन शूलारोपणं कुतः प्राप्तं इति पृष्टो यम इति भारते ।।१३३।।

**चट्टि**– शापप्रकारं स्पष्टयति– **अयोग्येति** ।। अयोग्यस्य स्वायोग्यवसिष्ठसमत्वस्य सम्प्राप्तौ विषये कृतश्चासौ प्रयत्नश्च तज्जन्यदोषान्निमित्तादेव । अयोगव्यवच्छेदकः एवकारः । कस्यचिद्धनिकस्य अर्थे द्रव्ये चोरैर्हृते अपहृते सत्यपि चोरबुद्ध्या शूले शूलोपरि समारोपितं तं माण्डव्यं प्रति यमः मक्षीवधात् मक्षिकावधात् तव शूलप्राप्तिरित्यवदत् । धनिकस्य धने चोरैः हृते सति धनिकदूतैरनुगमे कृते असम्प्रज्ञातसमाधिस्थस्य माण्डव्यस्य अग्रे धनं संस्थाप्य चोरेषु पलायितेषु सत्सु अनुयातैः पुरस्थद्रव्यं माण्डव्यं दृष्ट्वा अयमेव चोरः पलायने त्वशक्तः सन्निमीलिताक्षो वर्तते । अत एव वधार्ह इति मत्वा शूले समारोपितः । ततः कस्माद्दोषात् मे शूलप्राप्तिरिति पृष्टो यमस्तु त्वया मक्षिकाकण्टकाग्रे समारोप्य हतो तेन दोषेण शूलप्राप्तिरित्युवाच । इत्युदितो माण्डव्यः असत्यवादी त्वं शूद्रो भवेति यमं शशापेति भावः ।।१३३।।

**नासत्यता तस्य च तत्र [1]हेतुतः शापं गृहीतुं स तथैव चोक्त्वा ।**
**अवाप शूद्रत्वमथास्य नाम चक्रे कृष्णः सर्ववित्त्वं तथाऽदात् ।।१३४।।**

**व्यासतीर्थीया**– अत निमित्तान्तरमपि वदन्नसत्यवाणी स्यादित्यत आह– **नेति** ।। तस्य च मक्षीवधस्यापि तत्र शूलारोपे हेतुत्वान्नासत्यता धर्मस्य । ननु निमित्तद्वये सत्यपि महत् विहायाल्पं कारणं कस्मादुक्तवानित्यत आह– **शापमिति** ।।१३४-१४०।।

**वेदाङ्गतीर्थीया**– *...जानन् यमः मक्षीवधादित्यसत्यं कथमवददित्यत आह– **नासत्यतेति** ।। तस्य एवं वदतो यमस्य तत्र स्ववचनविषये असत्यता न । तदपि कारणं भवत्येवेति भावः । ननु निमित्तद्वये सम्भवति महद्विहायाल्पं कारणं कस्मात् उक्तवान् इत्यत आह– **हेतुत इति** ।। सम्भावितेन बलवत्कारणोक्तौ तस्य कोपानुदयात् यत्किञ्चित् तदल्पकारणोक्तौ कुपितोऽयं शपेत् ततश्च तपोहानिर्भवेत् इति हेतुतः शापं गृहीतुं तथैवोक्त्वा मक्षीवधादित्येवोक्त्वा शूद्रत्वमवाप । तेन शप्तः इति भावः ।।१३४।।

---

१. 'हेतुता' इति भावविवृतौ पाठान्तरम् । * मुद्रितपुस्तके एतद्वाक्यत्रयं नास्ति ।

**वादिराजीया–** नासत्यतेत्यत्र तस्य च मक्षीवधाख्यपापस्य च तत्र शूलारोपणे हेतुतः ईषद्धेतुत्वात् असत्यता न यमवाक्यस्यासत्यत्वं नेति योजना । अकृतप्रायश्चित्तस्य तस्य मक्षीवधोऽपि तत्र कारणमभूदिति भावः ।।१३४।।

**वरदराजीया–** नन्वनिमित्तं तन्निमित्तत्वेन शूलारोपणं वदन् यमः असत्यवचनः स्यादित्यत आह– **नासत्यतेति** ।। यमस्य नासत्यता अनृतभाषिता नास्ति । कुतः? तस्य च मक्षीवधस्यापि माण्डव्यकृतस्य तत्र शूलप्राप्तौ हेतुतः हेतुत्वात्, अयोग्यसम्प्राप्तिकृतप्रयत्नो मक्षीवधश्चेत्युभयमपि शूलप्राप्तौ कारणमिति तन्मध्ये एकं कारणं वदतो यमस्य नासत्यभाषिता स्यादिति भावः । ननु बलवत्कारणं विहाय अल्पमेव कारणं किमित्यवददित्यत आह– **शापमिति** ।। अत्यल्पेन कारणेन एतावद्दुःखं कथं स्यात् तस्मादसत्यवचनोऽयं यम इति कोपोत्पादनेन माण्डव्यात् शापं गृहीतुं तथैव मक्षीवधादित्येवोक्ता । शूद्रत्वं शूद्र्यां जननमवाप । अनेन 'इच्छया शापमाप' इत्येतद्विवृतं भवति । अथानन्तरं अस्य पुत्रस्य शूद्र्यां जातस्य कृष्णो व्यासः नाम चक्रे । सर्ववित्त्वं सर्वज्ञत्वश्च अदात् ।।१३४।।

**भावविवृतिः–** अनृतं कथमुक्तवानित्यत आह– **नासत्यता तस्य च तत्र हेतुत इति** ।। तस्य च मक्षीवधस्य शूलारोपणे हेतुतो निमित्तत्वात् नासत्यत्वं अनृतत्वम् । ननु अपरोक्षज्ञानिनो माण्डव्यस्य अल्पस्य मक्षीवधस्य लेपाभावात् कथं तस्यापि कारणत्वम् । 'श्रेष्ठापराधान्नान्यदोषस्य लेपः' इत्युक्तेः । सत्यम् । तेजीयसामित्यस्य देवानामित्यङ्गीकारात् माण्डव्यस्यापरोक्षित्वेऽपि मक्षीवधोऽपि तत्र कारणं भवतीति । यद्वा तेजीयसामित्यस्य अपरोक्षिणामित्यङ्गीकारे 'नान्यदोषस्य लेप' इत्यनेन कारकत्वेन कारणत्वं निषिध्यते । सूचकत्वं तु सम्भवतीति भावः । 'ब्रह्मापरोक्ष्येऽपि विकर्मसूचकं प्रारब्धपापस्य विषाशनं यथा' इत्युक्तेः । 'नासत्यता तस्य च तत्र हेतुता' इति पाठे यत्तच्छब्दौ अध्याहृत्य योजना ।।

**अनन्तभट्टीया–** अतन्निमित्तं तन्निमित्तं वदन् असत्यवचनः स्यादित्यत आह– **नेति** ।।.. मक्षीवधस्यापि शूलारोपणहेतुतः कारणत्वात् असत्यता असत्यवादिता न धर्मस्येति शेषः । ननु निमित्तद्वये सत्यपि महन्निमित्तं विहाय अल्पं कथमुक्तवानित्यत आह– **शापमिति** ।।...मिति उक्ते सति अल्प..तावद्दुःखस्य कारणं स्यादिति शापदाने बुद्धिजननसम्भवादिति भावः ।।१३४।।

**जनार्दनीया–** ननु अयोग्यसम्प्राप्तिकृतप्रयत्नदोषः शूलारोपणे हेतुश्चेत् यमो मक्षीवधादित्यसत्यं किमर्थमवदित्यत आह– **नासत्येति** ।। तस्य च मक्षीवधस्यापि तत्र शूलारोपणे हेतुतः कारणत्वात् असत्यता मक्षीवधादिति ब्रुवतो धर्मस्यासत्यत्वं न । वसिष्ठसाम्येच्छया कृततपः मक्षीवधश्चेत्युभयमपि शूलारोपणे कारणमिति भावः । ननु निमित्तद्वये सत्यपि प्रबलनिमित्तं विहायाल्पनिमित्तं कुतोऽवददित्यत आह– **शापमिति** ।। सम्भवत् बलवत् कारणोक्त्या तस्य कोपानुदयात्, यत्किञ्चित् तदल्पकारणोक्त्या

कुपितोऽयं शपेत् । ततो वसिष्ठसाम्यत्वप्राप्त्यै कृततपोहानिः भवेदिति भावेन शापं गृहीतुं स धर्मः तथैव मक्षीवधादिति उक्त्वा शूद्रत्वमवाप । अथो उत्पत्त्यनन्तरम् । अस्य भुजिष्यायां जातस्य ।।१३४।।

**ताम्रपर्णीया–** ।। **नासत्यतेति** ।। तस्य च मक्षीवधस्यस्यापि तत्र शूलारोपणहेतुत्वात् तस्य यमवचनस्य नासत्यतेत्यर्थः । ननु अपरोक्षज्ञानोत्तरपापस्य अशुचित्वासम्भाष्यत्वनरकजन्मान्तरादिदुःख-लेपहेतुत्वाभावस्य तदधिगमसूत्रनिर्णीतत्वात् कथं शूलारोपणहेतुत्वमिति चेत् । उत्तरभाविनः स्वातन्त्र्येण हेतुत्वाभावेऽपि प्रारब्धकर्मणैव प्राप्ते शूलारोपणे प्रारब्धोपोद्बलकत्वलक्षणसूचकत्वेन हेतुत्वोपपत्तेः । यद्वक्ष्यति 'ब्रह्मापरोक्षेऽपि विकर्मसूचकं प्रारब्धपापस्य विषाशनं यथा' इति । अत एव द्रौणेः दुर्योधनस्त्रीकामनेनास्त्रोपसंहारसामर्थ्यवैकल्यमिति ज्ञेयम् । ननु वृत्रहत्यादिवत् महत्कर्मणां एव प्रारब्धानर्थसूचकत्वं न क्षुद्रपापस्य मक्षीवधस्येति चेन्न । इन्द्रादीन् प्रति वृत्रहत्यादेः महत्कर्मत्ववत् माण्डव्यऋषिं प्रति मक्षीवधस्यैव महत्त्वोपपत्तेः । एतेन 'ज्ञानादिव्यक्तिरव्यक्तिः सुखदुःखादिकं तथा । सुदृष्टब्रह्मतत्त्वानां भवत्यारब्धकर्मणा' [भा.ता.१.१५.२] इति वाक्यविरोधः इत्यपास्तम् । प्रारब्धकर्मणां भावे शूलारोपणे अयोग्यसम्प्राप्ति-कृतयत्नदोषमक्षीवधयोः उपोद्बलकत्वलक्षणसूचकत्वाङ्गीकारात् । ननु मक्षीवधस्यापि शूलारोपणहेतुत्वे अयोग्यसम्प्राप्तिकृतप्रयत्नदोषादेवेति एवकारविरोध इति चेन्न । तस्यैव शूलारोपे मुख्यकारणत्वेन मुख्यकारणनिषेधविवक्षया अवधारणोपपत्तेः । अवधारणस्यायोगव्यवच्छेदकत्वोपपत्तेश्च । चोरैरेव हृतेऽर्थेपीतीत्यन्वयस्योक्तत्वाच्च इति दिक् । तथैव चोक्त्वा प्रधानं निमित्तमनुक्त्वेत्येवकारार्थः ।।१३४।।

**चट्टि–** ननु अयोग्यसम्प्राप्तिकृतप्रयत्नदोषः शूलारोपणे हेतुः चेत् यमः मक्षिवधादित्यसत्यवाक्यं किमर्थं अवददित्यत आह– **नासत्यतेति** ।। तस्य च मक्षीवधस्यापि तत्र शूलारोपणे हेतुतः कारणत्वात् मक्षीवधादिति ब्रुवतो यमस्य असत्यता असत्यवचनत्वं नास्ति । वसिष्ठसाम्येच्छा मक्षीवधश्चेत्युभयमपि शूलारोपणे कारणमिति भावः । ननु निमित्तद्वये सत्यपि प्रबलनिमित्तं विहायाल्पनिमित्तं कुतो अवददित्यत आह– **शापमिति** ।। सम्भावितबलवत्कारणोक्त्या तस्य कोपानुदयात् अल्पकारणोक्त्या कुपितोऽयं शपेत् । ततो वसिष्ठसाम्यप्राप्त्यै कृततपोहानिर्भवेदिति भावेन शापं गृहीतुं सः यमः तथैव मक्षीवधादित्युक्त्वा शूद्रत्वं अवाप । अथोत्पत्त्यनन्तरं कृष्णः वेदव्यासः अस्य कुमारस्य नाम चक्रे । तथा सर्ववित्त्वं सर्वज्ञत्वं चादात् ।।१३४।।

**विद्यारतेर्विदुरो नाम चायं भविष्यति ज्ञानबलोपपन्नः ।**
**महाधनुर्बाहुबलाधिकश्च सुनीतिमानित्यवदत्[1] स कृष्णः ।।१३५।।**

१. 'उत्तिष्ठन्नब्रवीदेनां अभुजिष्या भविष्यसि । अयं च ते शुभे गर्भः श्रेयानुदरमागतः ।। धर्मात्मा भविता लोके सर्वबुद्धिमतां वरः ।।' इत्यादिपर्वणि ११५.४२ ।

**वेदाङ्गतीर्थीया–** भविष्यतीत्येतत् ज्ञानबलोपपन्नः इत्यनेन सम्बध्यते ।।१३५-१४५।।

**वादिराजीया–** 'विद ज्ञाने' इति धातोः विदि ज्ञाने उ ताच्छील्येन रतत्वात् विदुर इति भावेनोक्तम्– **विद्यारतेर्विदुरो नामेति** ।। 'रमु क्रीडायाम्' इति धातोः कर्त्रर्थे डप्रत्यये कृते सति रत इत्यर्थः । सेत्स्यतीति व्यासस्य हृदयम् ।।१३५-१४६।।

**सत्याभिनवीया–** तत्रैव विद्यारतेर्विदुरो नाम चायं... इति श्लोकः । 'विदुरो नाम चायम्' इत्यस्य यस्य विद्यारतेश्च विद्यारतेरेव विदुर इति नाम सोऽयमित्यर्थः । एतेन 'विद्यारतेः' इत्यादिकमनन्वितमिति दूषणं परास्तम् । यस्येत्यादेः शेषेणान्वयस्योक्तत्वात् ।।१३५।।

**वरदराजीया–** किन्नाम चक्र इत्यत आह– **विद्यारतेति** ।। विद्यायां रतेः रतत्वात् निमित्तात् विदुरो नाम प्रसिद्धो भविष्यति । तथा ज्ञानेत्यादि विशेषणचतुष्टयवान् भविष्यतीति सः सत्यवतीसुतः कृष्णो अवददित्यर्थः ।।१३५।।

**अनन्तभट्टीया–** विदुरो नाम विदुर इति प्रसिद्धः ।।१३५।।

**जनार्दनीया–** किन्नामेत्यतो निरुक्तिपूर्वकं तदाह– **विद्येति** ।। स कृष्णो व्यासः विद्यायां तत्त्वविद्यायां रतेः रतत्वात् विदुर इति नाम प्रसिद्धो अयं बालः, ज्ञानबलेन सज्ज्ञानाधिक्येन उपपन्नो युक्तः, महाधनुः अतिधनुष्मान्, बाह्वोः बलेनाधिकः श्रेष्ठः, सुनीतिमान् उत्तमनीतिज्ञः भविष्यतीत्यवदत् ।।१३५।।

**ताम्रपर्णीया–** ज्ञानबलोपपन्नः ज्ञानमेव बलं ज्ञानबलम् । तेन युक्तः ।।१३५-१४०।।

**चट्टि–** किं नाम चक्र इत्यत आह– **विद्यारतेरिति** ।। अयं कुमारः विद्यायां रतेः रतत्वाद् विदुरो नाम विदुर इति प्रसिद्धो भविष्यति । ज्ञानबलेन सज्ज्ञानाधिक्येन उपपन्नः युक्तश्च महाधनुः, अत एव धनुष्मान् । बाह्वोर्बलेन अधिकः श्रेष्ठः सुनीतिमान् उत्तमनीतिज्ञश्च भविष्यतीति सः कृष्णः अवददिति पूर्वेण सम्बन्धः ।।१३५।।

**ज्ञात्वाऽस्य शूद्रत्वमथास्य माता पुनश्च कृष्णं प्रणता ययाचे ।**
**अम्बालिकायां जनयान्यमित्यथो नैच्छत्स कृष्णोऽभवदप्यदृश्यः[1] ।।१३६।।**

**वरदराजीया–** अस्य कृष्णस्य माता अस्य विदुरस्य शूद्रत्वं ज्ञात्वा पुनश्च प्रणता नमस्कुर्वन्ती ययाचे प्रार्थितवती । किमिति? अम्बालिकायां अन्यं द्वितीयं सुतमिति शेषः । जनय उत्पादय । अथानन्तरं स कृष्णो नैच्छत् । अन्यं सुतं जनयितुमिति शेषः । अदृश्योऽप्रत्यक्षश्चाभवदित्यर्थः ।।१३६।।

१. 'तस्यै गर्भं समावेद्य तत्रैवान्तरधीयत' इति आदिपर्वणि.११५.४६ ।

**अनन्तभट्टीया–** अस्य श्रीकृष्णस्य माता ।।१३६-१४३।।

**जनार्दनीया–** अथ विदुरोत्पत्त्यनन्तरं अस्य कृष्णस्य माता सत्यवती अस्य विदुरस्य । अथो त्रयाणां उत्पत्त्यनन्तरं नैच्छत् । अदृश्योऽपि अप्रत्यक्षोऽप्यभवत् ।।१३६।।

**चट्टि–** अथ विदुरोत्पत्त्यनन्तरं अस्य कृष्णस्य माता सत्यवती अस्य विदुरस्य शूद्रत्वं ज्ञात्वा पुनश्च प्रणता नमस्कुर्वती सती कृष्णं ययाचे प्रार्थितवती । किमिति? अम्बालिकायां अन्यं द्वितीयं सुतमिति शेषः । जनय उत्पादयेति । अथो त्रयाणामुत्पत्त्यनन्तरं सः कृष्णः नैच्छत् । अन्यं जनयितुमिति शेषः । अदृश्यः अप्रत्यक्षोऽप्यभवत् ।।१३६।।

**योग्यानि कर्माणि ततस्तु तेषां चकार [१]भीष्मो मुनिभिर्यथावत् ।**
**विद्याः समस्ता अददाच्च कृष्णस्तेषां पाण्डोरस्त्रशस्त्राणि भीष्मः ।।१३७।।**

**वरदराजीया–** योग्यानि क्षत्रिययोग्यानि जातकर्मादीनि तेषां धृतराष्ट्रादीनां मुनिभिः सह यथावत् विध्युक्तप्रकारेण । तेषां तेभ्यो धृतराष्ट्रादिभ्य समस्ता ऋगादिविद्याः । तेषां मध्ये पाण्डोरस्त्रशस्त्राणि भीष्मो अदादित्यर्थः ।।१३७।।

**जनार्दनीया–** भीष्मो मुनिभिः सह तेषां धृतराष्ट्रादित्रयाणां योग्यानि क्षत्रशूद्रवर्णयोग्यानि कर्माणि जातकर्मादिसंस्कारकर्माणि । यथावत् यथाक्रमेण विध्युक्तमार्गेण वा चकार । धृतराष्ट्रपाण्ड्वोः क्षत्रयोग्यसंस्कारकर्माणि, विदुरस्य शूद्रयोग्यसंस्कारकर्माणि चकारेति भावः । कृष्णः तेषां विद्याः, भीष्मः पाण्डोः अस्त्रशस्त्राणि च अदादित्यर्थः ।।१३७।।

**भावचन्द्रिका–** कुन्तीपाण्डवसंवादे ब्राह्मणस्य क्षत्रसन्तानार्थं त्रिवारमेव गमनस्य धर्मत्वेनोक्तत्वात् नैच्छदित्याह– **ततस्त्विति** ।। तुशब्देन दशमे मासि तेषां उत्पत्तिलक्षणविशेषमाह । 'तस्य पुत्रा महेश्वासा भविष्यन्तीह पञ्च वै । इत्युक्त्वा मातरं तत्र सोऽभिवाद्य जगाम ह ।।' 'निर्याते त्वम्बिका पुत्रं महाभागमसूयत । अनुजाम्बलिका तत्र पुत्रं काले व्यजायत ।।' इति भारते । [आदि.११५.२९] तृतीयवरयाचनं धृतराष्ट्रोत्पत्त्यनन्तरम् 'अन्धं दृष्ट्वाऽम्बिकापुत्रं जातं सत्यवतीसुतम् । कौसल्यार्थे समाहूय पुत्रमन्यमयाचत ।।' इति भारते [आदि.११५.३४] । [देवादन्यस्य] सद्योगर्भत्वेऽपि मानुषवदाचरणात् व्यासस्य गर्भविलम्बो न दोषाय । नचाविलम्बप्रार्थनाविरोधः । एकस्मिन् व्रताचरणं ततो दशमे मासि जननमिति विलम्बापेक्षया दशममासजननस्याविलम्बात् ।।१३७।।

---

१. 'धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः । जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ।। संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।' इत्यादिपर्वणि ११८.१७-१८ ।

**चट्टि–** ततो अनन्तरं भीष्मो मुनिभिः सह तेषां धृतराष्ट्रादित्रयाणां योग्यानि क्षत्रियशूद्रवर्णयोग्यानि कर्माणि जातकर्मादिसंस्कारकर्माणि यथावत् यथाक्रमेण विध्युक्तप्रकारेण वा चकार । धृतराष्ट्रपाण्ड्वोः क्षत्रिययोग्यसंस्कारकर्माणि विदुरस्य शूद्रयोग्यसंस्कारकर्माणि चकारेति भावः । कृष्णः श्रीवेदव्यासः तेषां समस्ताः विद्याः ऋगादिविद्याः अददात् । तेषां मध्ये पाण्डोः भीष्मः अस्त्रशस्त्राणि चादात् ॥१३७॥

**ते सर्वविद्याप्रवरा[1] बभूवुर्विशेषतो विदुरः सर्ववेत्ता ।**
**पाण्डुः [2]समस्तास्त्रविदेकवीरो जिगाय पृथ्वीमखिलां धनुर्धरः ॥१३८॥**

**वरदराजीया–** ते त्रयः सर्वविद्यासु प्रवराः प्रवीणाः । सर्ववेत्ता सर्वज्ञः । एकवीरः अप्रतिद्वन्द्वी अखिलां पृथ्वीं भूमिं जिगाय जितवान् ॥१३८॥

**जनार्दनीया–** प्रवराः चतुराः । एकवीरः अप्रतिवीरः । जिगाय जितवान् ॥१३८॥

**चट्टि–** ते त्रयः सर्वविद्यासु प्रवराः चतुरा बभूवुः । विदुरो विशेषतः सर्ववेत्ता सर्वज्ञः । समस्तानि च तान्यस्त्राणि च, तानि वेत्तीति वित् । एकवीरः अप्रतिवीरः पाण्डुः धनुर्धरस्सन् अखिलां पृथ्वीं जिगाय जितवान् ॥१३८॥

**गवद्गणादास[3] तथैव सूतात् समस्तगन्धर्वपतिः स तुम्बुरुः ।**
**य उद्वहो नाम मरुत् तदंशयुक्तो वशी सञ्जयनामधेयः ॥१३९॥**

**वरदराजीया–** तथैवेति समुच्चये । गवद्गणात् तन्नामकात् सूतात् समस्तगन्धर्वपतिः सः प्रसिद्धः तुम्बुरुः । य उद्वहो नाम प्रसिद्धो मरुत् तस्य मरुतो अंशेन युक्तश्च सञ्जयनामधेयो अभवदित्यर्थः । इन्द्रियाणि अस्य वशे सन्तीति वशी ॥१३९॥

**अनन्तभट्टीया–** गवद्गणात् गव[द्गण]...नामकात् सूतात् ॥१३९॥

**जनार्दनीया–** पूर्वं समस्तगन्धर्वपतिः यः तुम्बुरुः स उद्वहो नाम यो मरुत्तदंशयुक्तः सन् । वशी जितेन्द्रिय इत्यर्थः । अत एव सञ्जय इति नामधेयः सन् सूतात् विचित्रवीर्यसारथेः गवल्गणात् गवल्गणनाम्नः आस अजनि । तथाशब्दः समुच्चयार्थः ॥१३९॥

---

१. 'धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि । तथैव गजशिक्षायां नीतिशास्त्रेषु पारगाः ॥ इतिहासपुराणेषु नानाशिक्षासु बोधिताः । वेदवेदाङ्गतत्वज्ञाः सर्वत्र कृतनिश्चयाः ॥' इत्यादिपर्वणि ११८.१९-२० ।

२. 'पाण्डुर्धनुषि विक्रान्तो नरेष्वभ्यधिकोऽभवत्' इति ११८.२४ । 'शन्तनो राजसिंहस्य भरतस्य च धीमतः । प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनराहृतः ॥ ये पुरा कुरुराष्ट्राणि जह्रुः कुरुधनानि च । ते नागपुरसिंहेन पाण्डुना करदीकृताः ॥' इत्यादिपर्वणि १२२.३७-३८ । ३.'गवल्गणादु' इति जनार्दनीयपाठः ।

**चट्टि–** समस्तगन्धर्वपतिः यः तुम्बुरुः सः उद्वहो नाम यो मरुत् तदंशयुक्तस्सन् वशी जितेन्द्रियः । अत एव सञ्जय इति नामधेयं यस्य स तथाभूतः सन् गवद्गणात् गवद्गणनाम्नः सूतात् विचित्रवीर्यसारथेः सकाशात् आस अजनि । तथाशब्दः समुच्चये ॥१३९॥

**विचित्रवीर्यस्य स सूतपुत्रः सखा च तेषामभवत् प्रियश्च ।**
**समस्तविन्मतिमान् व्यासशिष्यो विशेषतो धृतराष्ट्रानुवर्ती ॥१४०॥**

**वेदाङ्गतीर्थीया–** ॥ **विचित्रवीर्यस्य सूतपुत्र इति** ॥ विचित्रवीर्यस्यायं सूतो गवल्गणः तस्य पुत्र इति भावः । मतिमान् विवेकवान् ॥१४०॥

**वरदराजीया–** पूर्वं विचित्रवीर्यस्य सखा सूतपुत्रः स सञ्जयः तेषां धृतराष्ट्रादीनां सखा प्रियश्चाभवत् । तथा समस्तवित् सर्वज्ञः । तत्र हेतुद्वयं मतिमान् व्यासशिष्य इति । तेष्वपि विशेषतो धृतराष्ट्रस्यानुवर्ती अनुवर्तनशीलोऽभवदित्यर्थः ॥१४०॥

**अनन्तभट्टीया–** सूतस्य पुत्रः । तेषां धृतराष्ट्रादीनाम् ॥१४०॥

**जनार्दनीया–** विचित्रवीर्यस्य राज्ञः सूतस्य गवल्गणस्य पुत्रः समस्तवित् सर्वज्ञः मतिमान् विवेकवान् व्यासशिष्यः सञ्जयः तेषां धृतराष्ट्रादित्रयाणां सखा प्रियश्चाभवत् । विशेषतः धृतराष्ट्रस्य अनुकूलं वर्तितुं शीलं यस्य स तथा अभवत् ॥१४०॥

**चट्टि–** विचित्रवीर्यस्य राज्ञः सूतस्य गवद्गणस्य पुत्रः समस्तवित् सर्वज्ञः मतिमान् विवेकवान् व्यासशिष्यः सः सञ्जयः तेषां धृतराष्ट्रादित्रयाणां सखा च प्रियश्चाभवत् । विशेषतः धृतराष्ट्रमनुवर्तितुं शीलमस्यास्तीति तथा अभवत् ॥१४०॥

**गान्धारराजस्य [१]सुतामुवाह गान्धारिनाम्नीं सुबलस्य राजा ।**
**ज्येष्ठो ज्येष्ठां शकुनेर्द्वापरस्य नास्तिक्यरूपस्य कुकर्महेतोः ॥१४१॥**

**व्यासतीर्थीया–** नास्तिक्यरूपस्य नास्तिक्याभिमानिनः ॥१४१॥

**वेदाङ्गतीर्थीया–** उवाह ज्येष्ठो राजा सुबलस्य सुतामुवाह । कीदृशीम्? नास्तिक्यरूपस्य नास्तिक्याभिमानिनः द्वापरस्य पूर्वं द्वापराख्यदैत्यस्य कुकर्महेतोः कुत्सितकर्मणां कारणस्य शकुनेः ज्येष्ठामिति योजना ॥

---

१. 'धृतराष्ट्रः दशगान्धारीसहोदरीरपि उवाह । तथाहि– 'तस्याः सहोदरीः कन्याः पुनरेव ददौ दश । गान्धारराजः सुबलो भीष्मेण च वृतस्तदा ॥ सत्यव्रतां सत्यसेनां सुदेष्णां चापि संहिताम् । तेजःश्रवां सुश्रवाञ्च तथैव निकृतिं शुभाम् ॥ शंभ्वठां च दशार्णां च गान्धारीर्दश विश्रुताः । एकाह्ना प्रतिजग्राह धृतराष्ट्रो जनेश्वरः ॥' इति भारते १.११९.२२-२४॥

**चट्टि–** ततो अनन्तरं भीष्मो मुनिभिः सह तेषां धृतराष्ट्रादित्रयाणां योग्यानि क्षत्रियशूद्रवर्णयोग्यानि कर्माणि जातकर्मादिसंस्कारकर्माणि यथावत् यथाक्रमेण विध्युक्तप्रकारेण वा चकार । धृतराष्ट्रपाण्ड्वोः क्षत्रिययोग्यसंस्कारकर्माणि विदुरस्य शूद्रयोग्यसंस्कारकर्माणि चकारेति भावः । कृष्णः श्रीवेदव्यासः तेषां समस्ताः विद्याः ऋगादिविद्याः अददात् । तेषां मध्ये पाण्डोः भीष्मः अस्त्रशस्त्राणि चादात् ।।१३७।।

**ते सर्वविद्याप्रवरा[1] बभूवुर्विशेषतो विदुरः सर्ववेत्ता ।**
**पाण्डुः [2]समस्तास्त्रविदेकवीरो जिगाय पृथ्वीमखिलां धनुर्धरः ।।१३८।।**

**वरदराजीया–** ते त्रयः सर्वविद्यासु प्रवराः प्रवीणाः । सर्ववेत्ता सर्वज्ञः । एकवीरः अप्रतिद्वन्द्वी अखिलां पृथ्वीं भूमिं जिगाय जितवान् ।।१३८।।

**जनार्दनीया–** प्रवराः चतुराः । एकवीरः अप्रतिवीरः । जिगाय जितवान् ।।१३८।।

**चट्टि–** ते त्रयः सर्वविद्यासु प्रवराः चतुरा बभूवुः । विदुरो विशेषतः सर्ववेत्ता सर्वज्ञः । समस्तानि च तान्यस्त्राणि च, तानि वेत्तीति वित् । एकवीरः अप्रतिवीरः पाण्डुः धनुर्धरस्सन् अखिलां पृथ्वीं जिगाय जितवान् ।।१३८।।

**गवल्गणादास[3] तथैव सूतात् समस्तगन्धर्वपतिः स तुम्बुरुः ।**
**य उद्वहो नाम मरुत् तदंशयुक्तो वशी सञ्जयनामधेयः ।।१३९।।**

**वरदराजीया–** तथैवेति समुच्चये । गवल्गणात् तन्नामकात् सूतात् समस्तगन्धर्वपतिः सः प्रसिद्धः तुम्बुरुः । य उद्वहो नाम प्रसिद्धो मरुत् तस्य मरुतो अंशेन युक्तश्च सञ्जयनामधेयो अभवदित्यर्थः । इन्द्रियाणि अस्य वशे सन्तीति वशी ।।१३९।।

**अनन्तभट्टीया–** गवल्गणात् गव[ल्गण]...नामकात् सूतात् ।।१३९।।

**जनार्दनीया–** पूर्वं समस्तगन्धर्वपतिः यः तुम्बुरुः स उद्वहो नाम यो मरुत्तदंशयुक्तः सन् । वशी जितेन्द्रिय इत्यर्थः । अत एव सञ्जय इति नामधेयः सन् सूतात् विचित्रवीर्यसारथेः गवल्गणात् गवल्गणनाम्नः आस अजनि । तथाशब्दः समुच्चयार्थः ।।१३९।।

---

१. 'धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि । तथैव गजशिक्षायां नीतिशास्त्रेषु पारगाः ।। इतिहासपुराणेषु नानाशिक्षासु बोधिताः । वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः ।।' इत्यादिपर्वणि ११८.१९-२० ।

२. 'पाण्डुर्धनुषि विक्रान्तो नरेष्वभ्यधिकोऽभवत्' इति ११८.२४ । 'शन्तनो राजसिंहस्य भरतस्य च धीमतः । प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनराहृतः ।। ये पुरा कुरुराष्ट्राणि जह्रुः कुरुधनानि च । ते नागपुरसिंहेन पाण्डुना करदीकृताः ।।' इत्यादिपर्वणि १२२.३७-३८ । ३.'गवल्गणाद्' इति जनार्दनीयपाठः ।

**चट्टि–** समस्तगन्धर्वपतिः यः तुम्बुरुः सः उद्बहो नाम यो मरुत् तदंशयुक्तस्सन् वशी जितेन्द्रियः । अत एव सञ्जय इति नामधेयं यस्य स तथाभूतः सन् गवद्गणात् गवद्गणनाम्नः सूतात् विचित्रवीर्यसारथेः सकाशात् आस अजनि । तथाशब्दः समुच्चये ।।१३९।।

**विचित्रवीर्यस्य स सूतपुत्रः सखा च तेषामभवत् प्रियश्च ।**
**समस्तविन्मतिमान् व्यासशिष्यो विशेषतो धृतराष्ट्रानुवर्ती ।।१४०।।**

**वेदाङ्गतीर्थीया–** ।। **विचित्रवीर्यस्य सूतपुत्र इति** ।। विचित्रवीर्यस्यायं सूतो गवल्गणः तस्य पुत्र इति भावः । मतिमान् विवेकवान् ।।१४०।।

**वरदराजीया–** पूर्वं विचित्रवीर्यस्य सखा सूतपुत्रः स सञ्जयः तेषां धृतराष्ट्रादीनां सखा प्रियश्चाभवत् । तथा समस्तवित् सर्वज्ञः । तत्र हेतुद्वयं मतिमान् व्यासशिष्य इति । तेष्वपि विशेषतो धृतराष्ट्रस्यानुवर्ती अनुवर्तनशीलोऽभवदित्यर्थः ।।१४०।।

**अनन्तभट्टीया–** सूतस्य पुत्रः । तेषां धृतराष्ट्रादीनाम् ।।१४०।।

**जनार्दनीया–** विचित्रवीर्यस्य राज्ञः सूतस्य गवल्गणस्य पुत्रः समस्तवित् सर्वज्ञः मतिमान् विवेकवान् व्यासशिष्यः सञ्जयः तेषां धृतराष्ट्रादित्रयाणां सखा प्रियश्चाभवत् । विशेषतः धृतराष्ट्रस्य अनुकूलं वर्तितुं शीलं यस्य स तथा अभवत् ।।१४०।।

**चट्टि–** विचित्रवीर्यस्य राज्ञः सूतस्य गवद्गणस्य पुत्रः समस्तवित् सर्वज्ञः मतिमान् विवेकवान् व्यासशिष्यः सः सञ्जयः तेषां धृतराष्ट्रादित्रयाणां सखा च प्रियश्चाभवत् । विशेषतः धृतराष्ट्रमनुवर्तितुं शीलमस्यास्तीति तथा अभवत् ।।१४०।।

**गान्धारराजस्य [१]सुतामुवाह गान्धारिनाम्नीं सुबलस्य राजा ।**
**ज्येष्ठो ज्येष्ठां शकुनेर्द्वापरस्य नास्तिक्यरूपस्य कुकर्महेतोः ।।१४१।।**

**व्यासतीर्थीया–** नास्तिक्यरूपस्य नास्तिक्याभिमानिनः ।।१४१।।

**वेदाङ्गतीर्थीया–** उवाह ज्येष्ठो राजा सुबलस्य सुतामुवाह । कीदृशीम्? नास्तिक्यरूपस्य नास्तिक्याभिमानिनः द्वापरस्य पूर्वं द्वापराख्यदैत्यस्य कुकर्महेतोः कुत्सितकर्मणां कारणस्य शकुनेः ज्येष्ठामिति योजना ।।

---

१. 'धृतराष्ट्रः दशगान्धारीसहोदरीरपि उवाह । तथाहि– 'तस्याः सहोदरीः कन्याः पुनरेव ददौ दश । गान्धारराजः सुबलो भीष्मेण च वृतस्तदा ।। सत्यव्रतां सत्यसेनां सुदेष्णां चापि संहिताम् । तेजःश्रवां सुश्रवाञ्च तथैव निकृतिं शुभाम् ।। शंभ्वठां च दशार्णां च गान्धारीर्दश विश्रुताः । एकाह्ना प्रतिजग्राह धृतराष्ट्रो जनेश्वरः ।।' इति भारते १.११९.२२-२४।।

**वादिराजीया**– शकुनेर्द्वापरस्येत्यत्र द्वयोः विरुद्धकोट्योः परं तात्पर्यवज्ज्ञानं द्विपरम्, तत्त्वसंशय इति यावत् । प्रायस्तद्धेतुभूतत्वात् तृतीयो युगोऽपि द्वापर इत्युच्यते । तदभिमानी तत्त्वनिश्चयविरोधी शकुनिरपि मूलरूपे द्वापरनामधेयः । नास्तिक्यमेव रूपयति प्रकाशयतीति नास्तिक्यरूपः । नास्ति परदेवता इति मिथ्याज्ञानरूपी वा । अत एव कुकर्मणां हेतुः स एव शकुनिरभूत् । तस्य शकुनेर्ज्येष्ठाम्। धृतराष्ट्रस्य बुद्धौ सन्देहमुत्पाद्य अन्ततस्तां नास्तिक्ये स्थिरीकृत्य दुर्द्यूतादिकर्मणि रुचिमुत्पादयतीति सूचनाय विशेषणत्रयम् । तथाच ज्येष्ठो राजा धृतराष्ट्रः सुबलस्य सुबलनाम्नः गान्धारराजस्य सुतां, द्वापरस्य मूलरूपे द्वापरनामधेयस्य नास्तिक्यरूपस्य कुकर्महेतोः शकुनेर्ज्येष्ठां गान्धारीनाम्नीमुवाहेति योजना ।।१४१।।

**मधुसूदनीया**– ।। **शकुनेर्द्वापरस्येति** ।। द्वापरस्य द्वापराख्यदैत्यांशस्य शकुनेरित्यर्थः । तथाचोक्तम्– 'द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकम्' इति स्वर्गारोहणपर्वणि [५.२०]। 'शकुनिर्नाम यस्त्वासीद्राजस्वेको महायशाः । द्वापरं विद्धि तं राजन् सम्भूतमरिमर्दनम् ।।' इत्यादिपर्वणि [६८.७८] । केचित्तु 'द्वापरस्संशयः तदभिमानिन इत्यर्थः' इति व्याचक्षते ।।१४१।।

**वरदराजीया**– गान्धारराजस्य गान्धारदेशाधिपतेः सुबलस्य सुतां गान्धारिनाम्नीं गान्धारीति नाम यस्याः सा तथा ताम् । शकुनेः ज्येष्ठां भगिनीं ज्येष्ठो भ्राता राजा धृतराष्ट्रः उवाह विवाहयामास । शकुनिर्नाम क इत्यत उक्तम्– **द्वापरस्येत्यादि** ।। द्वापरः संशयः तदभिमानी । 'महतश्चतुर्मखत्वात्' इतिवत् अभिमान्यभिमन्यमानयोरभेदव्यपदेशः । नास्तिक्यं नास्ति परलोकादिरिति मिथ्याज्ञानं रूपं अभिमन्यमानं यस्य स तथा । तच्चोक्तं पूर्वं 'नास्तिक्यं शकुनिर्नाम' इति । तादृशस्य अत्रोत्पत्तौ निमित्तमाह– **कुकर्महेतोरिति** ।। भविष्यद्द्यूताचरणादिकुकर्मकारणस्य ।।१४१।।

**अनन्तभट्टीया**– गान्धारराजस्य सुबलनामकस्य सुताम् । ज्येष्ठो राजा । नास्ति परलोक इत्यादि दुष्टबुद्धेः अभिमानिनः शकुनेः ज्येष्ठाम् ।।१४१।।

**जनार्दनीया**– धृतराष्ट्रादीनां विवाहमाह– **गान्धारेत्यादिना** ।। ज्येष्ठः, पाण्डोः सकाशादिति शेषः । राजा धृतराष्ट्रः गान्धारराजस्य गान्धाराख्यविषयाणां राज्ञः सुबलस्य सुबलनाम्नः सुतां नास्तिक्यस्य नास्ति परलोक इत्यादिदुर्बुद्धेरभिमानिनः । कुकर्मणां कुत्सितकर्मणां हेतोः कारणभूतस्य । द्वापरस्य पूर्वं द्वापराख्यासुरस्य ज्येष्ठां ज्येष्ठभगिनीं गान्धारीनाम्नीं उवाह प्राप । 'शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः । द्वापरं विद्धि तं राजन् सम्भूतमरिमर्दनम् ।।' [६८.७८] इत्यादिपर्वणि । तथा गान्धारीं पूर्वं मतिनाम्नीम् ।।१४१।।

**ताम्रपर्णीया–** द्वापरस्य द्वापरयुगाभिमानिनः । नास्तिक्यरूपस्य नास्तिक्याभिमानिनः । यद्वा नास्ति परदेवता इत्यादिज्ञानस्वरूपस्येत्यर्थः । कुकर्महेतोः द्रौपदीवस्त्रापहारादिकुत्सितकारणस्य ।।

**चट्टि–** धृतराष्ट्रादित्रयाणां विवाहमाह– **गान्धारेति** ।। ज्येष्ठः पाण्डुविदुराभ्यामिति शेषः । राजा धृतराष्ट्रः गान्धारराजस्य गान्धारदेशाधिपतेः सुवलस्य सुबलनाम्नः सुताम् । नास्तिक्यमेव रूपयति प्रकाशयतीति नास्तिक्यरूपः । तस्य नास्ति परदेवतेत्यादिदुर्बुद्धेरभिमानिन इति वा । अत एव कुकर्मणां कुत्सितकर्मणां हेतोः कारणस्य द्वापरस्य द्वापराख्यदैत्यांशयुक्तस्य शकुनेः ज्येष्ठां ज्येष्ठभगिनीं गान्धारीनाम्नीं उवाह । तथाचोक्तम् – 'द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकम्' इति स्वर्गारोहणपर्वणि । 'शकुनिर्नाम यस्त्वासीत् राजस्वेको महायशाः । द्वापरं विद्धि तं राजन् सम्भूतमरिमर्दनम्' इत्यादिपर्वणि । तथा गान्धारी पूर्वं मतिनाम्नी । द्वापरस्य द्वापरः संशयः तदभिमानिन इत्यर्थः इति वरदराजाचार्याणां व्याख्यानम् ।।१४१।।

**शूरस्य पुत्री गुणशीलरूपयुक्ता [१]दत्ता सख्युरेव स्वपित्रा ।**
**नाम्ना पृथा कुन्तिभोजस्य तेन कुन्ती भार्या पूर्वदेहेऽपि पाण्डोः ।।१४२।।**

**व्यासतीर्थीया–** कर्णोत्पत्तिपूर्वं पाण्डोर्विवाहमाह– **शूरस्येत्यादिना** ।।१४२-१४४।।

**वेदाङ्गतीर्थीया–** सख्युः कुन्तिभोजस्य । तेन कुन्तिभोजस्य दत्तत्वेन निमित्तेन ।।१४२।।

**वादिराजीया–** या पाण्डोः पूर्वदेहेऽपि परावहाख्यमूलरूपदेहेऽपि कुन्ती कुन्तीसञ्ज्ञावती भार्या । अपिपदेन अत्रापि कुन्ती नामवतीति सूचयति । सा नाम्ना पृथा शूरस्य पुत्री तेन स्वपित्रैव सख्युः कुन्तीभोजस्य दत्ता । अपुत्रस्त्विमां पुत्रीत्वेन परिपालयेति दत्तेति योजना ।।१४२-१४९।।

**वरदराजीया–** धृतराष्ट्रस्य भार्यापरिग्रहमुक्त्वा पाण्डोरपि वक्तुमाह– **शूरस्येति** ।। शूरनाम्नो यादवस्य पुत्री कन्या नाम्ना पृथा गुणैः शीलेन रूपेण च युक्ता स्वपित्रा शूरेण सख्युः कुन्तिभोजस्य स्वमित्राय कुन्तिभोजाय दत्ता यतः तेन नाम्ना कुन्ती । पूर्वदेहे मरुत्वेऽपि पाण्डोर्भार्या ।।१४२।।

**अनन्तभट्टीया–** सख्युः स्वसखस्य कुन्तीभोजस्य नाम्ना पृथा कुन्तिभोजपालितत्वेन कुन्तीशब्दवाच्या इत्यर्थः । पाण्डोः पूर्वदेहेऽपि मरुत्वेऽपि भार्या ।।१४२।।

---

१. 'शूरो नाम यदुश्रेष्ठो वसुदेवपिताभवत् । तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि ।। पितृष्वसीयाय स तामनपत्याय भारत । अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यं स सत्यवाक् ।। अग्रजामथ तां कन्यां शूरो ग्रहणकाङ्क्षिणे । प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ।।' आदिपर्वणि.१२०.१-३ । इति वचनात् कुन्तिभोजः पितृष्वसीयः अपि आस । 'वृष्णीनां च कुले जाता शूरस्य दयिता सुता । दत्ता प्रीतिमता मह्यं पित्रा बाला पुरा स्वयम् ।। वसुदेवस्य भगिनी सुतानां प्रवरा मम । अग्र्यमग्रे प्रतिज्ञाय तेनासि दुहिता मम ।।' वनपर्वणि.३०४.२३-२४

**जनार्दनीया–** शूरस्य राज्ञः पुत्री गुणाद्यैर्युक्ता नाम्ना पृथा स्वपित्रा पृथायाः पित्रा शूरेण सख्युः स्वस्य सख्युः अनपत्यस्य कुन्तिभोजस्य । दत्ता पुत्रीत्वेन पालनार्थं दत्तेत्यर्थः । तेन कुन्तिभोजाय दत्तत्वेन कारणेन कुन्तीति नाम्ना कुन्तीत्यर्थः । पूर्वदेहेऽपि पूर्वजन्मन्यपि पाण्डोर्भार्या, कुन्तीति शेषः । पूर्वदेहे परावहनाम्नो मरुतः सिद्धिनाम्नी भार्येति भावः । 'सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ च ते । कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा ।।' इत्यादिपर्वणि [६८.१६०] ।।१४२।।

**अतिविशद–** कुन्ती भार्या पूर्वदेहेऽपि पाण्डोरित्यत्र 'सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ च ते । कुन्ती माद्री च जज्ञाते...।।' इत्यादिपर्ववचनम् ।।१४२।।

**भावचन्द्रिका–** आद्यसन्तानं तव ददानीति प्रतिज्ञातत्वेन आद्या पृथा सख्युरनपत्यस्य दत्तेति भारते । गान्धारीकुन्तीमाद्रीस्वरूपं 'सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते । कुन्ती माद्री च जज्ञाते सुमतिः सुबलात्मजा ।।' इति भारते[आदि.६८.१६०] ।।१४२।।

**चट्टि–** कर्णोत्पत्तिपूर्वकं पाण्डोः विवाहमाह– **शूरस्येत्यादिना** ।। शूरस्य राज्ञः पुत्री गुणैः शीलेन रूपेण च युक्ता नाम्ना पृथा स्वपित्रा शूरराजेनैव सख्युः स्वसखस्य अनपत्यस्य कुन्तिभोजस्य दत्ता पुत्रीत्वेन पालनार्थं दत्तेत्यर्थः । तेन कुन्तीभोजाय दत्तत्वेन कारणेन कुन्ती नाम्ना कुन्तीत्यर्थः । पाण्डोः पूर्वदेहे परावहनामकमरुद्देहेऽपि सिद्धिनाम्नी भार्या । 'सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ च ते । कुन्ती माद्री च जज्ञाते मतिश्च सुबलात्मजा ।।' इत्यादिपर्वणि ।।१४२।।

**कूर्मश्च नाम्ना मरुदेव कुन्तिभोजोऽथैनां वर्द्धयामास सम्यक् ।**
**तत्राऽगमच्छङ्करांशोऽतिकोपो दुर्वासास्तं प्राह मां वासयेति ।।१४३।।**

**वेदाङ्गतीर्थीया–** वासय चातुर्मास्यमिति शेषः ।।१४३-१६०।।

**वरदराजीया–** अथानन्तरं एनां कुन्तीं कुन्तिभोजः वर्द्धयामास सम्यगवर्धयत् । कुन्तिभोजः पूर्वं क इत्यत उक्तम्– **कूर्म इति** ।। नाम्ना कूर्मो मरुदेव कुन्तिभोज इत्यर्थः । तत्र कुन्तिभोजगृहे शङ्करस्य अंशावतारो दूर्वासाः तत्र अगमत् । अत्यन्तं कोपो यस्य स तथा तम् । कुन्तिभोजं प्राह । किमिति? मां वासय स्वगृहे अवस्थापयेति ।।१४३।।

**अनन्तभट्टीया–** कुन्तिभोजः पूर्वमिति शेषः । नाम्ना कूर्मो मरुत् । तत्स्वरूप इति शेषः ।।१४३।।

**जनार्दनीया–** कुन्तिभोजस्वरूपमाह– **कूर्म इति** ।। कुन्तिभोजः पूर्वं नाम्ना कूर्मेति मरुदेव । अथ कुन्तिभोजः एनां कुन्तीं सम्यक् प्रीतिपूर्वकं वर्धयामास । कुन्तिभोज इत्यस्य उभयत्र अनुषङ्गः । शङ्करस्यांश अवतारः । अत्यन्तं कोपो यस्य स तथा । दूर्वासर्षिः तत्र कुन्तिभोजगृहं प्रति अगमत् । मां चातुर्मास्यं वासय वासं कारयेति । तं कुन्तिभोजं प्राह ।।१४३।।

**चट्टि**– कुन्तिभोजः पूर्वं कः इत्यत आह– **कूर्म इति** ।। कुन्तीभोजश्च पूर्वं नाम्ना कूर्म इति मरुद्देवः । अथ कुन्तिभोजः एनां कुन्तीं सम्यग्वर्धयामास । कुन्तीभोज इत्युभयत्रानुषङ्गः । शङ्करस्य अंशो अवतारः अधिकः कोपो यस्य स अतिकोपः । दुर्वासास्तन्नामा ऋषिः तत्र कुन्तीभोजं प्रत्यगमत् । मां चातुर्मास्यं वासय वासं कारयेति तं कुन्तीभोजं प्राह ।।१४३।।

**तमाह राजा यदि कन्यकायाः [१]क्षमिष्यसे शक्तितः कर्म कर्त्र्याः ।**
**सुखं वसेत्योमिति तेन चोक्तः शुश्रूषणायाऽदिशदाशु कुन्तीम् ।।१४४।।**

**वादिराजीया**– शक्तितः कर्मकर्त्र्याः कर्म यदि क्षमष्यिसे इति सम्बन्धः । कदाचित् किञ्चिन्न्यूनं चेदपि सोढव्यमिति भावः ।।१४४।।

**वरदराजीया**– राजा कुन्तिभोजस्तं दूर्वाससं प्राह । किमिति? शक्तितः शक्त्यनुसारेण कर्मकर्त्र्याः सेवां कुर्वन्त्याः कन्यकायाः यदि क्षमिष्यसे सेवाविलम्वापराधमिति शेषः । तर्हि सुखं वसेति । तेन दूर्वाससा ओमिति तथास्त्विति चोक्ते सति शुश्रूषणाय सेवायै कुन्तीमदिशत् राजा ।।१४४।।

**अनन्तभट्टीया**– शक्तितः कर्मकर्त्र्याः कन्यकायाः । ..मिति शेषः । यदि क्षमिष्यसे अङ्गीकृत्य तुष्यसि चेत् तर्हि सुखं वसेत्यर्थः ।।१४४।।

**जनार्दनीया**– शक्तितः स्वशक्त्यनुसारेण । कर्म सेवारूपं कर्म करोतीति कर्त्री तस्याः । कन्यकायाः यदि क्षमिष्यसे क्षमां करोषि तर्हि सुखं यथा स्यात् तथा, वस वासं कुर्वित्यर्थः । तेन दूर्वाससा ओमिति तथास्त्विति उक्ते सति शुश्रूषणाय यतिसेवार्थं कुन्तीं आदिशत् आज्ञापयामास । राजेति शेषः ।।१४४।।

**ताम्रपर्णीया**– ।। **शक्तितः कर्मकर्त्र्याः** ।। कर्म यदि क्षमिष्यसेत्यर्थः । कदाचित् किञ्चित् किञ्चिन्न्यूनं चेदपि सोढव्यमेव तत्कर्मेति भावः ।।१४४।।

**चट्टि**– शक्तितः स्वशक्त्यनुसारेण, कर्म सेवारूपं कर्म करोतीति कर्त्री तस्या, कन्यकायाः यदि क्षमिष्यसे क्षमां करोषि कदाचित् किञ्चिन्न्यूनं चेदपि सोढव्यमिति भावः । तर्हि सुखं यथा स्यात् तथा वस इति तं मुनिं राजा आह । तेन मुनिना ओमिति तथास्त्विति उक्ते सति च शुश्रूषणाय मुनिसेवार्थं कुन्तीमादिशत् । आज्ञापयामास राजेति शेषः ।।१४४।।

---

१. 'इयं ब्रह्मन् मम सुता बाला सुखविवर्धिता । अपराध्येत यत्किञ्चिन्न कार्यं हृदि तत् त्वया ।। सुमहत्यपराधेपि क्षान्तिः कार्या द्विजातिभिः । यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम ।।' वनपर्वणि.३०५.१४,१६

**चकार [1]कर्म सा पृथा मुनेः सुकोपनस्य हि ।**
**यथा न शक्यते परैः शरीरवाङ्मनोनुगा ॥१४५॥**

**व्यासतीर्थीया–** सुकोपनस्य कोपिष्ठस्य ॥१४५-१४९॥

**वरदराजीया–** सा पृथा कुन्ती सुकोपनस्य कोपिष्ठस्य मुनेः कर्म सेवारूपं चकार । कथं यथा परैः स्वव्यतिरिक्तैः कर्तुं न शक्यते तथेत्यर्थः । तदेवाह– **शरीरेति** ।। कायवाङ्मनोभिः करणैः तमनुगच्छतीति तथा ॥१४५॥

**अनन्तभट्टीया–** सुकोपनस्य कोपिष्ठस्य ॥१४५॥

**जनार्दनीया–** शरीरवाङ्मनोभिः अनुगा । अनुतिष्ठती इत्यर्थः । पृथा अपरैः स्वान्यैः यथा कर्तुं न शक्यते तथा सुकोपनस्य कोपिष्ठस्य मुनेः दुर्वाससः कर्म सेवां चकार ॥१४५॥

**ताम्रपर्णीया–** शरीरवाङ्मनोभिरनुगच्छति अनुसरतीति शरीरवाङ्मनोनुगा ॥१४५॥

**चट्टि–** सा पृथा कुन्ती शरीरवाङ्मनोभिस्तमनुगच्छतीति तथा अपरैः स्वान्यैर्यथा कर्तुं न शक्यते तथा सुकोपनस्य अतिकोपिष्ठस्यापि मुनेः दूर्वाससः कर्म सेवारूपं कर्म चकार ॥१४५॥

**स [2]वत्सरत्रयोदशं तया यथावदर्चितः ।**
**उपादिशत् परं मनुं समस्तदेववश्यदम् ॥१४६॥**

**वादिराजीया–** 'कालाध्वनोरत्यन्तसंयोगे' इति वचनात् वत्सरत्रयोदशमिति द्वितीया । त्रयोदशवर्षपर्यन्तमर्चित इति तात्पर्यम् । 'उपादिशत्परं मनुम्' इत्येकवचनेन एक एव मनुः । तेन यस्य यस्य देवस्य आह्वानं करोति स सर्वोऽपि मन्त्रशक्त्या आयातीति सूचितम् । 'समस्तदेववश्यदम्' इत्यत्र वशे भवतीति वश्यम् । वश्यमिति भावप्रधानो निर्देशः । वशीकरणशक्तिरित्यर्थः ॥१४६॥

**वरदराजीया–** सः मुनिः वत्सराणां त्रयोदशं तावत्कालपर्यन्तं कुन्त्या यथावत् सम्यगर्चितः पूजितः सन् । समस्तानां देवानां वशत्वं ददातीति । अत एव परं उत्तमं मनुं मन्त्रं उपादिशत् उपदिदेश । कुन्त्यै इति शेषः ॥१४६॥

---

१. 'तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् । दध्याज्यकादिभिर्नित्यं व्यञ्जनैः प्रत्यहं शुभा । सहस्रसङ्ख्यैर्योगीन्द्रं उपाचरदनुत्तमा ।।' इत्यादिपर्वणि.१२०.५-६ ।

२. 'दुर्वासा वत्सरस्यान्ते ददौ मन्त्रमनुत्तमम्'- आदिपर्वणि.१२०.७ । तथा- 'ततः संवत्सरे पूर्णे यदासौ जपतां वरः । नापश्यद् दुष्कृतं किञ्चित् पृथायाः सौहृदे रतः । ततः प्रीतमनाः भूत्वा स एनां ब्राह्मणोऽब्रवीत् ।।' वनपर्वणि.३०६.१२-१३ । अत्र आचार्यचरणैः त्रयोदशाब्दमिति निरूपितम् । परंतु इदानीमुपलभ्यमानकोशेषु संवत्सरमित्येव पठ्यते ।

**अनन्तभट्टीया–** मनुं मन्त्रम् ।।१४६।।

**जनार्दनीया–** यथावत् प्रथमदिनमारभ्य अन्त्यदिनपर्यन्तं एकप्रकारेण अर्चितो मुनिः परं मनुं मन्त्रं उपादिशत् उपदिदेश ।।१४६।।

**ताम्रपर्णीया–** ।। **समस्तदेववश्यदम्** ।। समस्तदेवानां स्ववशत्वदमित्यर्थः ।।१४६-१४९।।

**चट्टि–** 'कालाध्वनोरत्यन्तसंयोगे' इति वचनात् वत्सराणां त्रयोदशमिति द्वितीया । त्रयोदशवर्षपर्यन्तं तया कुन्त्या यथावत् प्रथमदिनमारभ्य अन्तिमदिनपर्यन्तं एकप्रकारेण सः मुनिः अर्चितः पूजितः सन् । समस्तदेववश्यदं समस्तानां देवानां वश्यं वशत्वं ददातीति तथा । भावप्रधानो निर्देशः । परमुत्तमं मनुं मन्त्रं उपादिशत् उपदिदेश । 'मनुम्' इत्येकवचनेनैक एव मनुः । तेन तु यस्य देवस्य आह्वानं करोति स सर्वोऽपि मन्त्रशक्त्या आयातीति सूचितम् ।।१४६।।

**ऋतौ तु सा समाप्लुता परीक्षणाय तन्मनोः ।**
**समाह्वयद् दिवाकरं स चाऽजगाम तत्क्षणात् ।।१४७।।**

**मधुसूदनीया–** ।। **समाह्वयदिति** ।। 'अन्तर्हर्म्यतलस्थाहं रविमुद्यतमीक्षती । संस्मृत्य तदृषेर्वाक्यं स्पृहयन्ती दिवाकरम्।।' इत्यादिपर्वणि [वन.३०७.४] ।।१४७।।

**वरदराजीया–** सा कुन्ती ऋतौ समाप्लुता ऋतुस्नातेति यावत् । तन्मनोस्तस्य मन्त्रस्य परीक्षणाय परीक्षणार्थं दिवाकरं सूर्यं समाह्वयत् प्रार्थितवती । मन्त्रेणेति शेषः । स च दिवाकरः । तत्क्षणादिति मन्त्रस्य वीर्यं दर्शयति ।।१४७।।

**अनन्तभट्टीया–** मनोः परीक्षणाय ।।१४७।।

**जनार्दनीया–** ऋतौ तु ऋतुकाले समाप्लुता सुस्नाता सा कुन्ती । स चासौ मनुश्च तथा तस्य । प्रसिद्धमन्त्रस्य परीक्षणाय 'समस्तदेववश्यदम्' इत्युक्तस्य परीक्षां कर्तुं दिवाकरं समाह्वयत् मन्त्रेण आह्वानं चकार । स सूर्यः । तत्क्षणाच्च क्षणमात्रादेवेति मन्त्रप्रभावो वर्णितः । आजगाम ।।१४७।।

**चट्टि–** सा कुन्ती ऋतौ ऋतुकाले समाप्लुता स्नाता सती । स चासौ मनुश्च तन्मनुः, तस्य परीक्षणाय परीक्षां कर्तुं दिवाकरं समाह्वयत् मन्त्रेणाह्वानं चकार । स सूर्यः तत्क्षणाच्च क्षणमात्रादेवेति मन्त्रप्रभावो वर्णितः । आजगाम । तदुक्तम् 'अन्तर्हर्म्यतलस्था सा रविमुद्यन्तमीक्षती । संस्मृत्य तदृषेः वाक्यं स्पृहयन्ती दिवाकरम् ।।' इत्यादिपर्वणि ।।१४७।।

**ततो न सा विसर्जितुं शशाक तं विना रतिम् ।**
**[१]सुवाक्प्रयत्नतोऽपि तामथाऽससाद भास्करः ॥१४८॥**

**वादिराजीया–** 'सुवाक्प्रयत्नतोऽपि' इत्यत्र मयि मा रमस्वेति वाक् सुवाक् करग्रहणपादग्रहणादिकं प्रयत्नः । ताभ्यां सुवाक्प्रयत्नतोऽपि ताभ्यामङ्गीकारितां रतिं विना तं विसर्जयितुं न शशाकेत्यन्वयः ॥१४८॥

**मधुसूदनीया– ॥ सुवाक्प्रयत्नतोऽपीति** ॥ स भास्करः द्वितीयरूपकस्सन् एकं रूपं गगने स्थापयित्वा एकेन रूपेण भूमावागत्य तां कुन्तीं आससादेत्यर्थः । कुन्ती गर्भं च दधार । अथ तदनन्तरं कालान्तरे स सूर्यः तत्र जग्मिवानित्यन्वयः । तथाचोक्तम्– 'सा बान्धवभयाद्भीता तं गर्भं विनिगूहितम् । धारयामास सुश्रोणी न चैतां बुबुधे जनः ॥ ततः कालेन सा गर्भं सुषुवे वरवर्णिनी ॥' इत्यादिपर्वणि [वनपर्व.३०९.२-४] । स गर्भो धात्रीं मातरं च विनाऽन्यैर्न ज्ञातं इति द्रष्टव्यम् । 'सा चाग्रवचनाद्बाला गर्भं तं विनिगूहती । धारयामास सुश्रोणी न चैतां बुबुधे जनः । न हि तां वेद नार्यन्या काचिद्धात्रेयिकामृते ॥' इत्यादिपर्वणि [वन.३०९.२-३] ॥१४८॥

**वरदराजीया–** ततोऽनन्तरं सा कुन्ती रतिं विना तेन सह रमणं विना तं दिवाकरं सुवाक्ययत्नतोऽपि रतिर्मास्त्विति प्रार्थनारूपवाक्यप्रयत्नादपि विसर्जितुं परित्यक्तुं न शशाक शक्ता नाभूत् । अथ तां कुन्तीं भास्करः आससाद रेम इत्यर्थः ॥१४८॥

**अनन्तभट्टीया–** रतिं संयोगं विना । सुवाक्प्रयत्नतोऽपि विसर्जितुम् ॥१४८॥

**जनार्दनीया–** ततः सूर्यस्यागमनानन्तरं सा पृथा रतिं सूर्येण सह रमणं विना अकृत्वा सुवाक्प्रयत्नतोऽपि रतिं विना गच्छेति, सुवाग्भिः स्तुतिरूपवाग्भिः यः प्रयत्नः प्रार्थना तस्मादपि । तं सूर्यं विसर्जितुं परावृत्य प्रेषणायेत्यर्थः । न शशाक न समर्थाऽभूत् । अथ तां कुन्तीं आससाद रमयामासेत्यर्थः । 'सुवाक्प्रयत्नतोषिताम्' इति पाठे सुवाग्भिः तवापयशो न भविष्यतीत्यादिवाक्प्रयत्नेन सन्तोषं प्रापितामित्यर्थः ॥१४८॥

**भावचन्द्रिका–** आगतः सूर्य उवाच रतिं करवाणीति । कुन्त्युवाच नाहं रतिमिच्छामि । रमणे च कन्यात्वं भङ्गमेष्यति । अयशश्च भविष्यति । एवमजानन्त्या अत्र परीक्षार्थमाहूतः । त्वं गच्छेति । सूर्य उवाच । न च । मत्प्रसादात् कन्यात्वं पुनः । यशश्च भविष्यति । रतिमिच्छामि । आगतस्य ममावमानं कर्तुं नार्हसि । अरमणे च तव कुलं धक्ष्यामीति । ततोऽङ्गीचकारेति भारते ॥१४८॥

---

१. 'सुवाक्प्रयत्नतोषिताम्' इति जनार्दनीये पाठान्तरम् ।

**चट्टि–** ततः रवेरागमनानन्तरं सा कुन्ती रतिं सूर्येण सह रमणं विना अकृत्वा सुवाक्प्रयत्नतोऽपि रतिर्मास्त्विति प्रार्थनारूपवाक्यप्रयत्नादपि तं विसर्जितुं परित्यक्तुं न शशाक शक्ता नाभूत् । अथ भास्करः तां कुन्तीमाससाद । द्वितीयरूपकः सन् एकं रूपं गगने स्थापयित्वा एकेन रूपेण भूमावागत्य तां कुन्तीमाससादेत्यर्थः । तथा चोक्तम्– 'द्विधा कृत्वात्मनो देहं भूमौ च गगनेऽपि च । तताप लोकानेकेन द्वितीयेनागमच्च ताम् ॥' इत्यादिपर्वणि ॥१४८॥

**स तत्र जज्ञिवान् स्वयं द्वितीयरूपको विभुः ।**
**सवर्मदिव्यकुण्डलो[१] ज्वलन्निव स्वतेजसा ॥१४९॥**

**वादिराजीया–** वर्मणा दिव्यकुण्डलाभ्यां सति सवर्मदिव्यकुण्डलः इत्यर्थः ॥१४९-१५७॥

**वरदराजीया–** स भास्करस्तत्र तस्यां कुन्त्यां द्वितीयरूपकः स्वयं स्वयमेव वर्मणा दिव्यकुण्डलाभ्यां च सह वर्तमानः स्वतेजसा ज्वलन्निव जज्ञिवान् जज्ञे । सद्य इति शेषः ['जात इति यावत्' इति क्वचित्] ॥१४९॥

**अनन्तभट्टीया–** विभुः सवर्मदिव्यकुण्डलः स्वतेजसा ज्वलन्निव सः रवि .. अद्वितीयरूपकस्सन् जज्ञिवान् अजायत ॥१४९-१५६॥

**जनार्दनीया–** वर्मणा कवचेन दिव्यकुण्डलाभ्यां सहितः द्वितीयरूपकः मूलरूपादवताररूपकः स विभुः सूर्यः । स्वयं स्वतेजसा ज्वलन्निव दीप्यन्निव सन् । तत्र कुन्त्यां जग्मिवान् जातः । 'द्वितीयरूपक' इत्यत्र कप्रत्ययः कुत्सितसम्वन्धवाची ॥१४९॥

**ताम्रपर्णीया–** ॥ **सवर्मदिव्यकुण्डलः** ॥ वर्मणा दिव्यकुण्डलाभ्यां च सहितः सवर्मदिव्यकुण्डलः ।

**चट्टि–** कुन्त्या गर्भधारणानन्तरं कालान्तरे सः द्वितीयरूपकः विभुः सूर्यः स्वयमेव वर्मणा कवचेन दिव्यकुण्डलाभ्यां सहितः स्वतेजसा ज्वलन् दीप्यन्निव तत्र कुन्त्यां जज्ञिवान् जातः । तथा चोक्तम्– 'सा वान्धवभयाद्भीता तं गर्भं विनिगूहितम् । धारयामास सुश्रोणी न चैतां वुबुधे जनः ॥ ततः कालेन सा गर्भं सुषुवे वरवर्णिनी ॥' इत्यादिपर्वणि । स गर्भो धात्रीं मातरं च विनाऽन्यैर्न ज्ञायत इति द्रष्टव्यम् । तथा चोक्तम्– 'सा चाथ वचनाद्बाला गर्भं तं विनिगूहितम् । धारयामास सुश्रोणी न चैतां बुबुधे जनः ॥ न हि तां वेद नार्यन्या काचिद्धात्रेयिकामृते ॥' इत्यादिपर्वणि ॥१४९॥

---

१. 'अमुक्तकवचः श्रीमान् देवगर्भः श्रियान्वितः । सहजं कवचं बिभ्रत् कुण्डलोद्योतिताननः ॥ अजायत सुतः कर्णः सर्वलोकेषु विश्रुतः ॥' इत्यादिपर्वणि १२०.३०-३१ ।

**पुरा स वालिमारणप्रभूतदोषकारणात् ।**
**[१]सहस्रवर्मनामिनाऽसुरेण वेष्टितोऽजनि ।।१५०।।**

**व्यासतीर्थीया–** किं तद्धर्मः कस्माच्च तेन वेष्टितोऽजनिरित्यताह– **पुरेति** ।।१५०।।

**वरदराजीया–** तत्र रूपे असुरावेशकारणमाह– **पुरेति** ।। स दिवाकरः पुरा रामावतारे सुग्रीवरूपेण वालिनो मारणेन प्रभूतो जातो दोषस्तस्मात् कारणात् । सहस्रवर्मेति नाम यस्येति तथा । तेनासुरेण वेष्टितो व्याप्तो अजनि जात इत्यर्थः ।।१५०।।

**भावविवृतिः–** पुरा तु वालिमारणप्रभूतदोषकारणात् इत्यत्र पुरा सुग्रीवदेहे वालिवधादुत्पन्नदोष-निमित्तादित्यत्र तु असुरेणावेष्टितः आवेशितः । ननु– 'स्वीयपुन्नियतिः स्त्रीणां स्वदारनियतिर्नृणाम् । धर्मो गुणोत्तमानाञ्च स्मृत्यैवान्धं तमो व्रजेत् ।।' इत्यादिना सुग्रीवस्य तमस्स्यादिति चेन्न तस्य भिन्नविषयत्वात् । देवांशयोश्चन्द्रसुग्रीवयोः क्लृप्तानन्दस्य क्लृप्तौत्पत्तिकानन्दवैचित्र्यस्य केनचिद्विकर्मणा हानिर्नास्ति । किन्तु स्वयोग्यादधिकसाधनफलत्वेन प्रसक्तानन्दवैचित्र्यस्य हानिर्भवति । तदुक्तम्– 'चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् । प्राप्तहानिरभून्नैव क्लृप्तहानिः कथञ्चन ।।' इति [अनु.३.४.स्तुत्यधिकरण] । '...वृद्धिह्रासौ विमुक्तिगौ । नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ।।' [अणु.४]

अत्रायं विवेकः । आपरोक्षिणां आनन्दवैचित्र्यं च द्विविधम् । स्वविहितसाधनानुष्ठानप्राप्यं स्वाविहिताकरणेन प्राप्यश्चेति । तत्र देवानां स्वविहितानुष्ठानप्राप्यानन्दवैचित्र्यस्य स्वोच्चदारपरिग्रहादिनापि हानिर्नास्ति । किन्तु स्वाविहिताकरणेन प्राप्यानन्दवैचित्र्यस्य स्वोच्चदारधर्षणादिना हानिर्भवति । किञ्च स्वयोग्याधिकसाधनफलत्वेन प्रसक्तानन्दवैचित्र्यस्यापि हानिर्भवति । ऋष्यादीनां तु स्वोच्चदारपरिग्रहादिना स्वविहितसाधनेन प्राप्यानन्दवैचित्र्यस्यापि नाशः । क्षितिपानां तु श्रेष्ठापराधादिना अपरोक्षज्ञानव्यङ्ग्य-क्लृप्तसुखेष्वपि किञ्चिन्न स्यादिति । तदुक्तं पञ्चमतात्पर्ये [५.६] – 'शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः । देवानां त्वशुभात् ह्रासः शुभात् काचित् सुखोन्नतिः ।। अशुभाभावजोन्नाहो महाधीकारिणामपि । अशुभे कृते न भवति तारतम्याच्च स स्मृतः ।।' इत्यादिना । 'स्वीय पुन्नियतिः स्त्रीणां स्वदारनियतिर्नृणाम्' इत्यस्याभिप्रायस्तु उत्तरत्रोच्यते ।

---

१. कश्यपभार्या दनायुषा । दनायुषायाः पुत्रास्तु स्मृताः पञ्चमहाबलाः । अरूरुर्बलिजन्मौ च विरुक्षश्च विषस्तथा ।। अरूरोस्तनयः क्रूरो धुन्धुर्नाम महासुरः । निहतः कुवलाश्वेन उत्तङ्कवचनात् किल ।। बलेः पुत्रौ महावीर्यौ तेजसाप्रतिमावुभौ । कुम्भिलश्चक्रवर्मा च स कर्णः पूर्वजन्मनि ।। वायु.६८.३०-३२

'इति तस्यां समादाय गर्भं सूर्यो दिवङ्गतः । सद्यः कुमारो सञ्जज्ञे द्वितीय इव भास्करः।।' [९.२१.३५] इति नवमस्कन्धे कर्णस्सद्यो जात इत्युच्यते । आदिपर्वणि तु– 'सा बान्धवभयाद्भीता तं गर्भं विनिगूहितम् । धारयामास सुश्रोणि न चैतां बुबुधे जनः ।। ततः कालेन सा देवी सुषुवे वरवर्णिनी ।' इति कालान्तरे जात इत्युच्यते । अतो विरोध इति चेदुच्यते । नवमस्कन्धकथायाः सङ्क्षेपेण प्रवृत्तत्वात् मोहनार्थं क्वचिदन्यथोक्तिस्सम्भवति । अतो विस्तारेण प्रवृत्तभारतकथानुसारेणैव कालान्तरे जात इति वक्तव्यम् । 'पूर्वाः कथाः परं ब्रूयुः पराः पूर्वं तथैव च । मोहनार्थाय दुष्टानां सर्वव्यत्यास इष्यते ।। विस्तारे तु यदुक्तं स्यात् तद्ग्राह्यमविरोधतः । सङ्क्षेपोक्तं विरोधे तु गुणोक्तिश्च सतां यथा ।।' इति दशमतात्पर्ये [८०.१५]।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ एकादशोऽध्यायः ।।

**जनार्दनीया–** कुत्सितसम्बन्धं हेतुपूर्वकमाह– **पुरेति** ।। पुरा त्रेतायुगे स सूर्यः वालिनः मारणं तेन, प्रभूतः जातो यो दोषस्तस्य कारणाद्धेतोः । सहस्रवर्मेति नाम विद्यते यस्येति विग्रहः । तेनासुरेण वेष्टितः आविष्टः सन् । अजनि अजायत ।।१५०।।

**चट्टि–** कर्णे असुरावेशं सहेतुकमाह– **पुरेति** ।। पुरा त्रेतायुगे सः सूर्यः, वालिनः मारणं तेन, प्रभूतः जातो दोषः स एव कारणं तस्मात् सहस्रवर्मनामिना असुरेण वेष्टितः सन् व्याप्तस्सन् अजनि जातः ।।१५०।।

**यथा ग्रहैर्विदूष्यते मतिर्नृणां तथैव हि ।**
**अभूच्च दैत्यदूषिता[1] मतिर्दिवाकरात्मनः ।।१५१।।**

**व्यासतीर्थीया–** वर्मवेष्टनं रक्षायै भवति । कथमिदमनिष्टहेतुर्जातमित्यत आह– **यथेति** ।।१५१।।

**वरदराजीया–** असुरेण वेष्टित इत्यस्याभिप्रायमाह– **यथेति** ।। नृणां मनुष्याणां ग्रहैः वेष्टितानां मतिः बुद्धिः ग्रहैः विदूष्यते विदूषिता भवेत् यथा तथैव दिवाकरात्मनोऽस्य कुमारस्य मतिर्दैत्यदूषिताऽभूदित्यर्थः ।।१५१।।

**जनार्दनीया–** असुरावेष्टितस्य फलमाह– **यथेति** ।। विदूष्यते दूषिता भवेत् यथा तथा । दिवाकरात्मनः सूर्यावतारस्य मतिरभूद्यद्यपि ।।१५१।।

१. कर्णमतिदूषणे कुन्तिकृतधर्मलोपोऽपि निमित्तमभूत् इति भीष्मपर्वणि [१२२.१२] । 'धर्मलोपेन जातोऽसि ततस्ते मतिरीदृशी' इति भीष्मवचनम् ।

**चट्टि**– असुरावेष्टितत्वस्य फलमाह– **यथेति** ।। नृणां मनुष्याणां मतिः बुद्धिः यथा ग्रहैः विदूष्यते दूषिता भवेत् तथैव दिवाकरात्मनः सूर्यावतारस्य कुमारस्य मतिः दैत्यदूषिता अभवत् ।।१५१।।

**तथाऽपि रामसेवनाद्धरेश्च सन्निधानयुक् ।**
**सुदर्शनीयकर्णतः स कर्णनामकोऽभवत् ।।१५२।।**

**वादिराजीया**– 'तथापि रामसेवनात्' इत्यत्र तथापि पापनिमित्तकासुरावेष्टितत्वेऽपि रामसेवनात् प्राकृतरघुरामसेवनादित्यर्थः । 'सुदर्शनीयकर्णतः स कर्णनामकोऽभवत्' इत्यत्र 'अर्श आदिभ्यो अच्' इति सूत्रात् प्राशस्त्यार्थे मतुबः स्थाने अचो विधानात् प्रशस्तकर्णवान् कर्ण इत्यर्थो अनुसन्धेयः ।।

**वरदराजीया**– यद्यपि दैत्यदूषिता मतिः तथापि रामस्य श्रीरामचन्द्रस्य सुग्रीवरूपेण सेवनान्निमित्तात् हरेः सन्निधानयुक् च जात इत्यर्थः । सुदर्शनीयौ सुन्दरौ कर्णौ यस्य स तथा भावप्रधानो निर्देशः । सुन्दरकर्णत्वान्निमित्तात् स कुमारः कर्णनामकोऽभवत् ।।१५२।।

**अनन्तभट्टीया**– रामसेवनात् सेवानिमित्तात् सुदर्शनीयकर्णतः सुन्दरकर्णत्वात् ।।१५२।।

**जनार्दनीया**– तथापि रामस्य राघवस्य सेवनात् शुश्रूषणनिमित्तात् हरेः सन्निधानेन युक् युक्तः सन्नजनीति सम्बन्धः । सुदर्शनीयौ द्रष्टुं योग्यौ, सुन्दरावित्यर्थः, तौ च तौ कर्णौ च तथा ताभ्यां तथा सुन्दरकर्णत्वान्निमित्तात् । स कौन्तेयः ।।१५२।।

**ताम्रपर्णीया**– ।। **सुदर्शनीयकर्णत इति** ।। 'अर्श आदिभ्योऽच्' इति सूत्रे प्राशस्त्यार्थे मतुबः स्थाने अचो विधानात् । प्रशस्तकर्णवान् कर्ण इत्यर्थो लभ्यते इति भावः ।।१५२-१५५।।

**चट्टि**– यद्यपि मतिर्दैत्यदूषिता तथापि श्रीरामस्य सुग्रीवरूपेण सेवनात् शुश्रूषणात् निमित्तात् हरेः सन्निधानेन युक् युक्तः सन् जात इत्यर्थः । सुदर्शनीयकर्णतः सुष्ठु दर्शनीयौ द्रष्टुं योग्यौ सुन्दरावित्यर्थः । तौ कर्णौ यस्य स तथा । भावप्रधानो निर्देशः । सुन्दरकर्णत्वान्निमित्तात् सः कुमारः कर्णनामकोऽभवत् ।।

**स रत्नपूर्णमञ्जुषागतो विसर्जितो जले ।**
**जनापवादभीतितस्तया यमस्वसुर्द्रुतम् ।।१५३।।**

**वादिराजीया**– 'षदॢ विशरणगत्यवसादनेषु' इति धातोः मञ्जूनि मनोहराणि रत्नानि द्रव्याणि सीदन्ति तिष्ठन्ति अस्यामिति व्युत्पत्त्या मञ्जूषैव मञ्जुषा । एवं च सर्वज्ञग्रन्थकारप्रयोगे न क्लिष्टकल्पना । यथास्थितवर्णविन्यासेनैवार्थलाभात् । लौकिकप्रयोग इव निरुक्तत्वादिना वर्णविकारादिकं बलादानेयम् ।।१५३-१६०।।

**मधुसूदनीया–** ।। **स रत्नपूर्णमञ्जुषेति** ।। तया कुन्त्या जनापवादभीतितः रत्नपूर्णमञ्जूषागतस्सन् जले अश्वनदी जले विसर्जितः । तदनन्तरं अश्वनद्या चर्मण्वतीं प्राप्तः ततो यमुनां प्राप्तः ततो यमुनायास्सकाशात् नदीप्रवाहतः गङ्गाप्रवाहतः गतं गच्छन्तं सूतनन्दनो ददर्शेत्यन्वयः । तथाचोक्तम्– 'मञ्जूषा त्वश्वनद्यास्सा ययौ चर्मण्वतीं नदीम् । चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह ।। गङ्गायास्सूतविषयं चम्पामभ्यगमत् पुरीम् ।।' इत्यरण्यपर्वणि [३०९.२६-२७] । अत एव एतावदर्थसूचनाय 'नदीप्रवाहतः' इति सामान्यत उक्तं आचार्यैः ।।१५३।।

**वरदराजीया–** स कुमारो रत्नैः पूर्णायां मञ्जूषायां गतः स्थापितः यमस्वसुः यमस्य स्वसुः भगिन्याः यमुनायाः जले तया कुन्त्या द्रुतं वेगेन विसर्जितः । कुतः? जनापवादभीतितः जनानामपवादस्य कन्यायाः पुत्रो जात इत्येवंरूपस्य भीतितो भयादित्यर्थः ।।१५३।।

**अनन्तभट्टीया–** यः रत्नपूर्णमञ्जुषागतः यमस्वसुर्जले ।।१५३।।

**जनार्दनीया–** तया कुन्त्या जनानामपवादस्य कन्यकायां जात इति निन्दायाः, भीतितः । जले अश्वनद्यां इति शेषः । रत्नैः पूर्णा च सा मञ्जुषा च तस्यां गतो विद्यमानः । स कुमारको विसर्जितः यमस्वसुः सकाशात् द्रुतं शीघ्रम् ।।१५३।।

**चट्टि–** स कुमारस्तया कुन्त्या जनानामपवादस्य कन्यायां पुत्रो जात इति निन्दायाः भीतितः, रत्नैः पूर्णा च सा मञ्जुषा च तस्यां गतो विद्यमानः सन् जले अश्वनदीजले विसर्जितः ।।१५३।।

**नदीप्रवाहतो गतं ददर्श सूतनन्दनः ।**
**तमग्रहीत् सरत्नकं चकार पुत्रकं निजम् ।।१५४।।**

**मधुसूदनीया–** ।। **ददर्श सूतनन्दन इति** ।। 'एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा । सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ ।।' इति च [वन.३१०.१] । एतेन कर्णस्य दुर्योधनसख्ये निमित्तं च सूचितं इति वेदितव्यम् । केचित्तु 'यमस्वसुर्जले विसर्जितः' इति व्याचक्षते । तच्चिन्त्यम् । उक्तमानविरोधात् ।।१५४-१६९।।

**वरदराजीया–** नद्याः यमुनायाः प्रवाहतो प्रवाहेण गतं प्राप्तं सूतस्य नन्दो अधिरथनामा ददर्श । स रत्नकं रत्नैः सह वर्तमानं तं कुमारं अग्रहीत् । निजपुत्रकं पुत्रं चकार पुत्रत्वेन स्वीकृतवानित्यर्थः ।।१५४।।

**जनार्दनीया–** नदीप्रवाहतो गङ्गाप्रवाहतो गतं प्राप्तम्, चम्पामिति शेषः । यमस्वसुरित्युपलक्षणं अश्वनद्याः चर्मण्वतीं ततो यमुनां ततो गङ्गामिति भावः । तदुक्तं आरण्यके पर्वणि– 'मञ्जूषा त्वश्वनद्याः

सा ययौ चर्मण्वतीनदीम् । चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह ।। गङ्गायां सूतविषयं चम्पामभ्यगमत् पुरीम् ।।' [३०९.२६-२७] इति ।। रत्नैः सहितं बालं समग्रहीत् ।।१५४।।

**चट्टि–** तदनन्तरं अश्वनद्याश्चर्मण्वतीं प्राप्तस्ततो यमुनां प्राप्तः ततो यमस्वसुः यमुनायाः सकाशात् द्रुतं नदीप्रवाहतः गङ्गाप्रवाहतः गतं प्राप्तं चम्पामिति शेषः । एतादृशं कुमारं सूतनन्दनः अधिरथनामा ददर्शेत्यन्वयः । तथा चोक्तम्– 'मञ्जूषा त्वश्वनद्यास्सा ययौ चर्मण्वतीं नदीम् । चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह ।। गङ्गायास्सूतविषयं चम्पामभ्यगमत् पुरीम् ।।' इत्यादिपर्वणि [इत्यारण्यपर्वणि]। 'एतस्मिन् एव काले तु धृतराष्ट्रस्य वै सखा । सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ ।।' इति च । एतेन कर्णस्य दुर्योधनसख्ये निमित्तं सूचितम् । सरत्नकं रत्नैः सहितं तं बालकं सोऽधिरथः समग्रहीत् निजं पुत्रकं पुत्रं चकार । पुत्रत्वेन स्वीकृतवानित्यर्थः ।।१५४।।

**सूतेनाधिरथेन[१] लालिततनुस्तद्भार्यया राधया**
**संवृद्धो निखिलाः श्रुतीरधिजगौ शास्त्राणि सर्वाणि च ।**
**बाल्यादेव महाबलो निजगुणैः सम्भासमानोऽवसन्**
**नाम्नाऽसौ[२] [३]वसुषेणतामगमदस्याऽसीद्ध्यमा तद् वसु ।।१५५।।**

**व्यासतीर्थीया–** वसुना सह स्थितत्वात् वसुः क्षत्रियत्वात् सेनः । वसुना सह स्थितत्वात् वा वसुसेनः ।।१५५-१५६।।

**वेदाङ्गतीर्थीया–** बाल्यादेवाधिजगौ बाल्यादेव महाबल इत्युभयत्र सम्बन्धः । नाम्ना वसुषेणतामगमत् । कुत इत्यत आह– **आसीदिति** ।। तद्वसु स्वाश्रयमञ्जूषागतरत्नजातं अमा सह आसीदिति । हि यस्मादिति सम्बन्धः । वसुना सह सम्बन्धत्वात् वसुषेणः । 'षिञ् सम्बन्धे' इति धातुः ल्युडन्तः ।।

**वादिराजीया–** नाम्नाऽसौ वसुषेणतामगमदप्यासीद्ध्यमा तद्वसु इत्यत्र हि यस्मात् कारणात् मञ्जूषागतं वसु द्रव्यं अस्य कर्णस्य अमा समीपे सह वा आसीत् । 'अमा सह समीपे च' इत्यमरः । तस्मात्

---

१. ननु अधिरथस्य रोमपादादिपुण्यजनभूषिताङ्गवंशीयत्वात् कथं सूतत्वं इत्यतः । पूर्वं अधिरथवंशीयः जयद्रथः ब्रह्मक्षत्रान्तरालसम्भूतां कन्यां उवाह । तस्यां कर्णप्रपितामहं विजयं नाम पुत्रं अजीजनत् । अतो विजयाद्याः जयद्रथोत्तरभवाः सूता इत्युच्यन्ते । तदुक्तं विष्णुपुराणे-'जयद्रथो ब्रह्मक्षत्रान्तरालसम्भूत्यां पत्न्यां विजयं नाम पुत्रमजीजनत् ।' इत्यादि विष्णु.४.१८ ।

२. 'नामधेयं च चक्राते तस्य बालस्य तावुभौ । वसुना सह जातोऽयं वसुषेणो भवत्विति ।।' आदिपर्वणि१२०.३६ ।

३. 'वसुसेनः' इति व्यासतीर्थीयजनार्दनीयताम्रपर्णीयपाठः ।

कारणात् नाम्ना वसुषेणतामगमत् । 'षिञ् बन्धने' इति धातोः कर्मणि ल्युट्प्रत्यये कृते 'युवोरनाकौ' [कौ.१२४७] इति यकारस्यानादेशे च कृते 'सार्वधातुकार्धधातुकयोः' [कौ.२१६८] इति गुणे च कृते 'एङः पदान्तादति' [कौ.८६] इति अकारस्य पूर्वरूपादेशे च कृते, 'रषाभ्यां नो णः समानपदे' [कौ.२३५] इति णत्वे च कृते वसुषेण इति रूपसिद्धिर्भवति । निरुक्तत्वात् सकारस्य षत्वं न भवति । वसुना षेणः सम्बद्ध इत्यर्थः ।।१५५-१६२।।

**सत्याभिनवीया–** तत्रैव सूतेनाधिरथेन लालिततनुस्तद्भार्यया...इति श्लोकः । नाम्ना असौ वसुषेणतामगमदप्यासीत् हि अमा तत् वसु इत्यस्य हि यस्मात् तत् वसु । अपिशब्दः अवधारणे । अमा अपि सहैव आसीत् । तस्मात् असौ वसुषेणतां वसुषेणताशब्दवाच्यतामगमत् । अतो बहुलप्रयोगात् वसुषेणेति नाम्ना विशिष्ट आसीदित्यर्थः । एतेन नाम्ना इत्येतदनन्वितमिति दूषणं परास्तम् । विशिष्ट इति शेषपूरणेनान्वयस्योक्तत्वात् । 'वसुषेणतामगमत्' इत्यनेन योगेन वसुषेणशब्दवाच्यत्वमुच्यते नाम्ना विशिष्ट इत्यनेन रूढ्या वसुषेणशब्दवाच्यत्वमुच्यते इति भेदो द्रष्टव्यः ।।१६१।।

**वरदराजीया–** अधिरथेन तन्नाम्ना सूतेन लालितः तोषिता तनुर्यस्य स तथा । तस्य अधिरथस्य भार्यया राधया तन्नाम्न्या संवृद्धः सम्यग्वर्धितः, निखिलाः श्रुतीः सर्वान् वेदानधिजगौ अधिगतवान् । बाल्यात् बाल्यमारभ्य महद्बलं यस्य स तथा । निजैः स्वीयैः गुणैरौदार्याद्यैः सम्यक् भासमानोऽवसत् सूतगृहे । असौ कर्णः नाम्ना वसुषेणतां वसुषेणनामत्वं अगमत् प्राप्तवान् । तत्र निमित्तमाह– **अस्येति** ।। अस्य कर्णस्य अमा सह तत् रत्नादिरूपं वसु सेनारूपमासीत् हि यस्मात् तस्मादित्यर्थः । वसु द्रव्यं सेनावद्यस्य स वसुषेण इति नामवानभूदित्यर्थः ।।१५५।।

**अनन्तभट्टीया–** अधिरथेन अधिरथनामकेन । वसुषेणतां वसु रत्नादिना... स्येति वसुषेणः । तदेवाह– **अस्येति** ।। अमा सह वसु रत्नादि आसीत् स्थितः । [वसुना सह स्थितत्वात् वसुनः क्षत्रियत्वात् सेन इत्येवं वसुषेण इति टिप्पणीकारः] ।।१५५।।

**जनार्दनीया–** तस्य अधिरथस्य भार्यया । बाल्यादेव बाल्यावस्थामारभ्य महाबलः निजगुणैः स्वशौर्यवदान्यादिगुणैः सम्यक् भासमानः शोभमानः कर्णः निखिलाः श्रुतीः वेदान् अधिजगौ अध्यगीष्ट । सर्वाणि शास्त्राणि च । असौ कर्णः नाम्ना वसुषेणत्वमप्यगमत् । ननु वसुषेणत्वं कुत इत्यत आह– **आसीदिति** ।। तत् मञ्जूषागतं वसु रत्नादिद्रव्यं अमा सह आसीत् । वसुना सह स्थित इत्यर्थः । हि यस्मात् तस्मादिति सम्बन्धः । वसुना सेनत्वात् सम्बद्धत्वात् वसुषेणः । 'षिञ् बन्धने' इति धातुः । नप्रत्यय औणादिकः । यद्वा वसु सेना यस्येति । 'वसु रत्नं वसु द्रव्यं वसवोऽष्टौ ध्रुवादयः' इत्यनेकार्थपदमञ्जर्याम् ।।१५५।।

**ताम्रपर्णीया–** ।। **वसुषेणतामिति** ।। हि यस्माद् तत् वसु मञ्जुषागतं रत्नरूपं द्रव्यं अस्य कर्णस्य अमा समीपे सह वा आसीत् । 'अमा सहसमीपयोः' इत्यमरः । तत् तस्मात् कारणात् नाम्ना वसुषेणातामगमत् । वसु सेनावत् यस्य परितो वर्तते स वसुषेण इत्यर्थः । तदुक्तं भारते 'समावृतोऽयं वसुना वसुषेणेति नामतः' । यद्वा वसुना षेणः सम्बन्धः वसुषेणः । 'षीञ् बन्धने' इति धातोः कर्मणि ल्युट् कृते 'युवोरनाकौ' इति यकारस्यानादेशे च कृते 'सार्वधातुकार्धधातुकयोः' इति गुणे च कृते 'एङः पदान्तादति' इति अकारस्य पूर्वरूपादेशे च कृते 'रषाभ्यां णो नः समानपदे' इति णत्वे च कृते वसुषेणेति रूपसिद्धिरिति भावः । वसुना सहितश्चासौ इनस्सूर्यश्च वसुसेनेत्यप्याहुः ।।१५५।।

**भारतश्री–** हि यस्मात् । वसु अमा सह आसीत् । तत् तस्मात् वसुषेणः ।।१५५।।

**चट्टि–** सः कुमारः अधिरथेन तन्नाम्ना सूतेन । लालिता पोषिता तनुर्यस्य स तथा भूतस्सन् । तस्याधिरथस्य भार्यया राधया संवृद्धः सम्यग्विवर्धितस्सन् निखिलाः श्रुतीः सर्वान् वेदान् सर्वाणि शास्त्राणि अधिजगौ अध्यगीष्ट । बाल्यादेव बाल्यमारभ्यैव महत् बलं यस्य स तथा । निजैः स्वकीयैः गुणैः औदार्याद्यैः सम्यग्भासमानः शोभमानः वसन्, सूतगृह इति शेषः । असौ कर्णः नाम्ना वसुषेणतां वसुषेणत्वमप्यगमत् । ननु वसुषेणत्वं कुत इत्यत आह– **अस्येति** ।। हि यस्मात् तत् मञ्जुषागतं सुवर्णरत्नरूपं वसु अस्य कर्णस्य अमा सह अभूत् आसीत् । तस्मादिति सम्बन्धः । वसुना सेनत्वात् सम्बद्धत्वाद् वसुषेणः । 'षीञ् बन्धने' इति धातुः । वसु द्रव्यं सेनावद्यस्य सः वसुषेण इति वा ।।

**अथ कुन्ती दत्ता सा पाण्डोः सोऽप्येतया चिरं रेमे ।**
**शूराच्छूद्र्यां जातां विदुरोऽवहदारुणीं[1] गुणाढ्यां च ।।१५६।।**

**वरदराजीया–** अथानन्तरं सा या कर्णप्रसूतवती सेत्यर्थः । पाण्डोः पाण्डवे दत्ता । कुन्तिभोजेनेति शेषः । सोऽपि पाण्डुरपि तया कुन्त्या चिरं रेमे क्रीडयामास । विदुरस्यापि भार्या स्वीकारमाह– **शूरादिति** ।। शूराद् वसुदेवपितुः सकाशात् शूद्र्यां ऊढायां भार्यायां जातां आरुणीं तन्नाम्नीं स विदुरोऽवहत् विवाहयामास ।।१५६।।

**अनन्तभट्टीया–** शूरात् वसुदेवपितुः । दूतायामिति शेषः ।।१५६।।

---

१. 'अथ पारसवीं कन्यां देवकस्य महीपतेः । रूपयौवनसम्पन्नां स शुश्रावापगासुतः ।। ततस्तु वरयित्वा तामानीय भरतर्षभः । विवाहं कारयामास विदुरस्य महामतेः ।। तस्यां चोत्पादयामास विदुरः कुरुनन्दन । पुत्रान् विनयसम्पन्नानात्मनः सदृशान् गुणैः ।।' आदिपर्वणि.१२६.१-३ [अत्र देवकसुतामुवाह इति व्यत्यासेन दृश्यते]

**जनार्दनीया–** अथ कर्णस्योत्पत्त्यनन्तरम् । एतया कुन्त्या । विदुरस्य विवाहप्रकारमाह– **शूरादिति** ।। शूरात् पृथा पितुः शूरात् शूद्र्यां पाणिग्रहणधर्मेण स्वीकृतशूद्र्यां जातां आरुणीं आरुणिनाम्नीं अवहत् उद्वाहमकरोत् ।।१५६।।

**ताम्रपर्णीया–** ।। **शूद्र्यामिति** ।।१५६-१६१।।

**चट्टि–** अथ कर्णोत्पत्त्यनन्तरं सा कुन्ती पाण्डोः दत्ता, कुन्तीभोजेनेति शेषः । सा पाण्डुरप्येतया कुन्त्या चिरं बहुकालं रेमे । विदुरस्य विवाहप्रकारमाह– **शूरादिति** ।। शूरात् पृथा पितुः सकाशात् शूद्र्यां ऊढायां भार्यायां जातां गुणाढ्यां आरुणीं तन्नाम्नीं सः विदुरः अवहत् उद्वाहयामास ।।१५६।।

**अथ चर्तायननामा[1] मद्रेशः शक्रतुल्यपुत्रार्थी ।**
**कन्यारत्नं चेच्छंश्चक्रे ब्राह्मं तपो वरं चाऽप ।।१५७।।**

**व्यासतीर्थीया–** पाण्डोर्भूभारहरणानन्तरङ्गत्वं स्पष्टयन् विवाहान्तरं सविशेषमाह– **अथ चर्तायनेति** ।।

**वादिराजीया–** अथशब्देन कथान्तरारम्भं सूचयति । मद्रेशः ऋतायननामा चेति चशब्दसम्बन्धः ।।

**वरदराजीया–** अथ पाण्डोर्द्वितीयभार्यास्वीकारं वक्तुमाह– **अथेत्यादिना** ।। अथानन्तरं ऋतायननामा मद्रेशो मद्रदेशस्य राजा इन्द्रेण तुल्यं पुत्रं अर्थयत इति तथा । कन्यारत्नं प्राप्तुं ब्राह्मं ब्रह्मसम्बन्धि तपश्चक्रे । वरं च ब्रह्मणः सकाशादाप प्राप्तवान् ।।१५७।।

**अनन्तभट्टीया–** ऋतायननामा सुतोऽभूत् ।।१५७-१६५।।

**जनार्दनीया–** पाण्डोर्द्वितीयभार्यास्वीकारं वदिष्यन् तदुपोद्घातमाह– **अथेत्यादिना** ।। अथशब्दः कथान्तरद्योतकः शक्रतुल्यपुत्रार्थी इन्द्रसदृशपुत्राकाङ्क्षी । ऋतायन इति नाम यस्य स तथा । मद्राणां विषयाणां ईशो राजा । कन्याश्रेष्ठं च 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । आप्तुं ब्राह्मं ब्रह्मसम्बन्धि तपश्चक्रे । वरं ईप्सितं वरमाप । पुत्रार्थं तपश्चक्रे वरमापेति चार्थः ।।१५७।।

**भारतश्री–** ऋतायननामेति छेदः ।।१५७।।

**चट्टि–** पाण्डोः द्वितीयभार्यास्वीकारं वदिष्यन् तदुपोद्घातमाह– **अथेत्यादिना** ।। अथशब्दः कथान्तरद्योतकः । ऋतायन इति नाम यस्य स तथा । मद्राणां विषयाणां ईशो राजा शक्रतुल्यपुत्रार्थी इन्द्रसदृशपुत्राकाङ्क्षी सन् कन्यालक्षणरत्नं चापि प्राप्तुं ब्राह्मं ब्रह्मसम्बन्धि तपश्चक्रे । वरं ईप्सितवरं चाप ।।१५७।।

---

१. 'ऋतमेव हि पूर्वास्ते वदन्ति पुरुषोत्तमाः । तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ।।'[कर्णपर्वणि.२३.६२]

**प्रह्लादावरजो यः [1]सह्लादो नामतो हरेर्भक्तः ।**
**सोऽभूद् ब्रह्मवरान्ते वायोरावेशयुक् सुतो राज्ञः ॥१५८॥**

**वरदराजीया–** वरश्च सफलो जात इत्याह– **प्रह्लादेति** ॥ पूर्वं यः प्रह्लादस्यावरजोऽनुजः नामतो नाम्ना सह्लादो हरेर्विष्णोः भक्तः सः ब्रह्मणो वरस्य अन्ते वरदानानन्तरं वायोः मुख्यवायोः आवेशेन युतो भूत्वा राज्ञः ऋतायननाम्नः सुतोऽभूत् ॥१५८॥

**जनार्दनीया–** यः प्रह्लादस्यावरजः 'प्रह्लादः पूर्वजस्तेषां संह्लादस्तदनन्तरम्' [६६.१८] इत्यादिपर्वणि । नामतः सह्लादः, पूर्वमिति शेषः । ब्रह्मवरस्य अन्ते समाप्तौ वरप्राप्त्यनन्तरम् । राज्ञः ऋतायनस्य ॥१५८॥

**चट्टि–** यः पूर्वं प्रह्लादस्यावरजो अनुजः हरेर्भक्तः नामतः सह्लादः सः ब्रह्मणो वरस्य अन्ते वरदानादनन्तरं वायोर्मुख्यवायोरावेशेन युग् युतः सन् राज्ञः ऋतायननाम्नः सुतोऽभूत् ॥१५८॥

**स मारुतावेशवशात् पृथिव्यां बलाधिकोऽभूद् वरतश्च धातुः ।**
**शल्यश्च नाम्नाऽखिलशत्रुशल्यो[2] बभूव कन्याऽस्य च माद्रिनाम्नी ॥१५९॥**

**वरदराजीया–** वाय्वावेशफलमाह– **स इति** ॥ मरुतस्य वायोरावेशवशान्निमित्तात् पृथिव्यां बलेनाधिकोऽभूत् । धातुर्ब्रह्मणो वरतश्च बलाधिकोऽभूत् । नाम्ना शल्यश्चाभूत् । तत्र निमित्तं अखिलानां शत्रूणां शल्यः शङ्कुरिव तस्माच्छल्य इत्यर्थः । कन्यारत्नप्रदानरूपं वरं दर्शयति– **बभूवेति** ॥ अस्य ऋतायननस्य माद्रिनाम्नी माद्रीति नामवती कन्या च बभूव ॥१५९॥

**जनार्दनीया–** स आर्तायनिः । आवेशवशात् वरतश्चेत्युभयहेतुभ्यां बलाधिकोऽभूत् । अखिलशत्रूणां शल्यः शल्यरूपश्च यतः अत एव नाम्ना शल्यो बभूव । अस्य ऋतायनस्य कन्या च बभूव ॥१५९॥

**चट्टि–** सः सुतः मारुतस्य वायोरावेशवशात् आवेशसामर्थ्याद्धातुः ब्रह्मणो वरतश्च पृथिव्यां बलाधिको अभूत् । अखिलानां शत्रूणां शल्यः शरप्रायः सः कुमारः नाम्ना शल्यश्चाभूत् । अस्य ऋतायनस्य माद्री नाम्नी कन्या बभूव ॥१५९॥

**सा पाण्डुभार्यैव च पूर्वजन्मन्यभूत् पुनश्च प्रतिपादिताऽस्मै ।**
**शल्यश्च राज्यं पितृदत्तमञ्जो जुगोप धर्मेण समस्तशास्त्रवित् ॥१६०॥**

---

१. 'संह्लाद इति विख्यातः प्रह्लादानुजस्तु यः । स शल्य इति विख्यातो जज्ञे वाह्लीकपुङ्गवः ॥'[आदि ६८-६]

२. 'शल्यभूतस्तु शत्रूणां यस्मात् त्वं युधि मानद । तस्माच्छल्येति ते नाम कथ्यते पृथिवीतले ॥'[कर्ण २३-६३]

**वरदराजीया–** सा पूर्वं केत्यत आह– **सेति** ।। पूर्वजन्मनि मरुज्जन्मनि पाण्डोर्भार्यैव द्वितीया स्त्री अभूत् । पुनश्च पाण्डुजन्मन्यपि अस्मै पाण्डवे प्रतिपादिता दत्ता तत्पित्रेति शेषः । शल्योऽपि पित्रा ऋतायनेन दत्तं राज्यं अञ्जः अञ्जसा । तस्यैव विवरणम्– **धर्मेणेति** ।। जुगोप रक्षितवान् यतः समस्तशास्त्रवित् ।।१६०।।

**जनार्दनीया–** कन्यकायाः मूलस्वरूपं स्पष्टयति– **सेति** ।। पुनश्च अवतारेऽपि अस्मै पाण्डवे प्रतिपादिता भार्यात्वेन दत्ता, भ्रात्रेति शेषः । तदुक्तमादिपर्वणि– 'तत्प्रगृह्य धनं सर्वं शल्यः सम्प्रीतमानसः । ददौ तां समलंकृत्य स्वसारं कौरवर्षभ ।।' [१२२.१६] इति । समस्तशास्त्रवित्, यत इति शेषः । अत अञ्जः सम्यक् धर्मेण जुगोप ररक्ष ।।१६०।।

**चट्टि–** सा पूर्वं केत्यत आह– **सेति** ।। पूर्वजन्मनि मरुज्जन्मनि च पाण्डोः भार्यैव द्वितीया भार्या अभूत् । पुनश्च अवतारेऽपि अस्मै पाण्डवे प्रतिपादिता भार्यात्वेन दत्ता । भ्रात्रेति शेषः । तथाचोक्तम्– 'तत्प्रगृह्य धनं सर्वं शल्यः सम्प्रीतमानसः । ददौ तां समलङ्कृत्य स्वसारं कौरवर्षभ ।।' इत्यादिपर्वणि । समस्तशास्त्रवित् शल्यश्चापि पित्रा दत्तं राज्यमञ्जः सम्यक् धर्मेण जुगोप ररक्ष ।।१६०।।

**अथाङ्गनारत्नमवाप्य तद्द्वयं पाण्डुस्तु भोगान् बुभुजे यथेष्टतः ।**
**अपीपलद् धर्मसमाश्रयो महीं ज्येष्ठापचायी विदुरोक्तमार्गतः ।।१६१।।**

**व्यासतीर्थीया–** ज्येष्ठादपचयो अपकर्षो यस्यासौ ज्येष्ठापचायी ज्येष्ठानुसारीत्यर्थः ।।१६१-१६६।।

**वेदाङ्गतीर्थीया–** ज्येष्ठापचायी धृतराष्ट्रानुसारी ।।१६१-१७२।।

**वादिराजीया–** 'अपीपलद्धर्मसमाश्रयः' इत्यत्र अपीपलत् पालयामास । ज्येष्ठापचायी 'चीञ् चयने' इति धातोः ज्येष्ठमपचिनोति धनवन्तं करोतीति ज्येष्ठापचायी । स्वोपार्जितद्रव्यं ज्येष्ठगृह एव पुञ्जीकरोतीति भावः ।।१६१-१७१।।

**वरदराजीया–** अथानन्तरं पाण्डुः द्वयं अङ्गनारत्नं स्त्रीरत्नं कुन्तीमाद्रीरूपं अवाप्य यथेष्टतः यथेष्टान् भोगान् विषयान् बुभुजे भुक्तवान् । धर्मसमाश्रयो धर्मं समाश्रित इति यावत् । अत एव ज्येष्ठस्य धृतराष्ट्रस्यापेक्षया अपचायी नीचत्वभाववान् । विदुरोक्तमार्गतः विदुरोक्तेन नीतिमार्गेण महीं भूमिं अपीपलत् पालयामास ।।१६१।।

**अनन्तभट्टीया–** ज्येष्ठापचायी ज्येष्ठापेक्षया अन्यभागवान् ।।१६१-१६७।।

**जनार्दनीया–** अथ माद्री स्वीकारानन्तरं तत्पूर्वोक्तद्वयं कुन्तीमाद्र्यावित्युभयात्मकं अङ्गनारत्नं स्त्रीरत्नम् । यथेष्टतः इच्छानुसारात् भोगान् । धर्मः सम्यगाश्रयो यस्य स तथा । अत एव ज्येष्ठं धृतराष्ट्रं अपचायी

अनतिक्रमशीलः । धृतराष्ट्रापेक्षया स्वस्मिन्नीचबुद्धिमानित्यर्थः । एतादृशः पाण्डुः विदुरोक्तेन मार्गतः नीतिमार्गेण महीं अपीपलत् अपात् ।।१६१।।

**ताम्रपर्णीया–** ज्येष्ठात् अपचयोऽपकर्षोऽस्यास्तीति ज्येष्ठापचायी ज्येष्ठानुसारीति यावत् ।।१६१-१६५।।

**भावचन्द्रिका–** भोगान् स्नेहेन धृतराष्ट्रप्रेषितान् ।।१६१।।

**चट्टि–** अथ माद्रीस्वीकारानन्तरं पाण्डुश्च तत्पूर्वोक्तं द्वयं कुन्तीमाद्रीत्युभयात्मकं अङ्गनारत्नं स्त्रीरत्नं अवाप्य यथेष्टतः यथेष्टान् भोगान् बुभुजे भुक्तवान् । धर्मः सम्यगाश्रयो यस्य स तथा । अत एव ज्येष्ठापचायी अपचेतुं शीलमस्यास्तीत्यपचायी । ज्येष्ठस्य धृतराष्ट्रस्य अपेक्षया अपचायी नीचत्वभाववान् विदुरोक्तेन मार्गतः नीतिमार्गेण महीं अपीपलत् पालयामास ।।१६१।।

**भीष्मो हि [1]राष्ट्रे धृतराष्ट्रमेव संस्थाप्य पाण्डुं [2]युवराजमेव ।**
**चक्रे तथाऽप्यन्ध इति स्म राज्यं चकार [3]नासावकरोच्च पाण्डुः ।।१६२।।**

**वरदराजीया–** ननु ज्येष्ठापचायित्वे स्वयं कथं महीं अपीपलदित्यत आह– **भीष्मो हीति** ।। यद्यपि भीष्मो धृतराष्ट्रमेव राष्ट्रे राज्यपालनविषये संस्थाप्य पाण्डुं युवराजं कुमारराजमेव चक्रे । तथापि असौ धृतराष्ट्रः अन्धोऽहमिति राज्यं राष्ट्रपरिपालनादिरूपं न चकार नाकरोत् । हि यस्मात् तस्मात् पाण्डुरेवाकरोदित्यर्थः ।।१६२।।

**जनार्दनीया–** ननु धर्मसमाश्रयो ज्येष्ठापचायी पाण्डुश्चेत् तर्हि ज्येष्ठे सति स्वयं महीं कथमपीपलदित्यत आह– **भीष्मो हीति** ।। भीष्मः यद्यपि राष्ट्रे संस्थाप्य राजानं कृत्वेति भावः । पाण्डुं युवराजमेव चक्रे । न तु राजानमित्येवकारार्थः । तथाप्यसौ धृतराष्ट्रः अन्ध इति अहमन्ध इति बुद्ध्या राज्यं न चकार । हि यस्मात् तस्मात् पाण्डुश्चाकरोत् ।।१६२।।

**चट्टि–** ननु पाण्डुर्ज्येष्ठापचायी चेत् तर्हि ज्येष्ठे सति स्वयं कथं महीमपीपलदित्यत आह– **भीष्मो हीति** ।। यद्यपि भीष्मो धृतराष्ट्रमेव राष्ट्रे संस्थाप्य राजानं कृत्वेत्यर्थः । पाण्डुं युवराजमेव चक्रे । न तु राजानमित्येवकारार्थः । तथाप्यसौ धृतराष्ट्रः अहमन्ध इति बुद्ध्या राज्यं न चकार । हि यस्मात् तस्मात् पाण्डुश्च पाण्डुरेवाकरोत् ।।१६२।।

---

१. 'भीष्मेण राजा कौरव्यो धृतराष्ट्रोऽभिषेचितः' ।।२१।।

२. 'गतः पारं यदा पाण्डुः तदा सेनापतिः कृतः' ।।२३।। इत्यादिपर्वणि ११८ ।

३. 'धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत । पारसवत्वाद्विदुरो राजा पाण्डुर्बभूव ह ।। इति ११८.३०आदिपर्व ।

**भीष्माम्बिकेयोक्तिपरः सदैव पाण्डुः शशासावनिमेकवीरः ।**
**अथाऽम्बिकेयो [1]बहुभिश्च यज्ञैरीजे स पाण्डुश्च महाधनौघैः ॥१६३॥**

**वरदराजीया–** भीष्मस्य आम्बिकेयस्य धृतराष्ट्रस्य च उक्तौ वचने परः तात्पर्यवान् । एकवीरः अप्रतिद्वन्द्वी अवनिं भूमिं शशास पालितवान् । आम्बिकेयो धृतराष्ट्रः सः पाण्डुश्च बहुभिः कथम्भूतैः महाधनानां ओघा राशयो येषु ते तथा तैः । ईजे इति प्रत्येकं सम्बन्धः ॥१६३॥

**अनन्तभट्टीया–** पाण्डुश्च ईजे । ..घैः राशिभिः ॥१६३॥

**जनार्दनीया–** एकवीरः अप्रतिवीरः एतादृशोऽपि पाण्डुः भीष्मस्य आम्बिकेयस्य अम्बिकापुत्रस्य उक्तौ आज्ञारूपवाक्ये परस्तात्पर्यवान् सन् अवनिं पृथ्वीं शशास । आम्बिकेयो धृतराष्ट्रः । महाधनानां अनर्घ्यरत्नाद्युत्तमधनानां ओघाः समूहाः येषु तैर्यज्ञैः । ईजे अयजत् । प्रसिद्धः पाण्डुश्च ईज इत्यर्थः ॥१६३॥

**चट्टि–** एकवीरः पाण्डुः भीष्मस्याम्बिकेयस्य धृतराष्ट्रस्य उक्तौ आज्ञारूपवाक्ये सदैव परः तात्पर्यवान् अवनीं पृथ्वीं शशास । अथ आम्बिकेयः धृतराष्ट्रः महाधनानामनर्घ्यरत्नाद्युत्तमधनानामोघा येषु तैः यज्ञैरीजे अयजत् । सः पाण्डुश्च ईजे ॥१६३॥

**नैषा [2]विरोधे कुरुपाण्डवानां तिष्ठेदिति व्यास उदीर्णसद्गुणः ।**
**स्वमातरं स्वाश्रममेव निन्ये स्नुषे च तस्या ययतुः स्म तामनु ॥१६४॥**

**वरदराजीया–** उदीर्णा नित्याभिव्यक्ता सन्तो निर्दोषा गुणा यस्य स तथा । वेदव्यासः स्वमातरं सत्यवतीं स्वाश्रमं बदरिकाश्रमं निन्ये नीतवान् । केनाभिप्रायेण? एषा सत्यवती कुरुपाण्डवान् कौरवाणां पाण्डवानां च विरोधे प्राप्ते सति तत्र न तिष्ठेदित्यभिप्रायेणेत्यर्थः । तस्याः सत्यवत्याः स्नुषे विचित्रवीर्यभार्ये अम्बिकाम्बालिके तां सत्यवतीं अनु तया सहेत्यर्थः । ययतुः गतवत्यौ ॥१६४॥

**अनन्तभट्टीया–** एषा सत्यवती । विदुरस्य माता अम्बिकामनुगता । नगरनिर्गमनसमय इति शेषः ॥१६४॥

---

१. 'तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः । अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः॥ इत्यादिपर्वणि १२३.५

२. 'अतिक्रान्तसुखाः कालाः पर्युपस्थितदारुणाः । श्वः श्वः पापिष्ठदिवसाः पृथिवी गतयौवना ॥६॥ कुरूणामनयाच्चापि पृथिवी न भविष्यति । गच्छ त्वं योगमास्थाय युक्ता वस तपोवने ॥८॥ वनं ययौ सत्यवती स्नुषाभ्यां सह भारत ॥१२॥ आदिपर्वणि.१३७ ।

**जनार्दनीया**– तस्मिन् काले प्रवृत्तं कथान्तरमाह– **नैषेत्यादिना** ।। उदीर्णाः उत्कृष्टाः सन्तः निर्दुष्टाः गुणाः यस्येति विग्रहः । व्यासः कुरूणां कौरवाणां पाण्डवानां विरोधे प्राप्ते सति एषा सत्यवती न तिष्ठेत् । नागपुर इति शेषः । इति भावेन स्वमातरं सत्यवतीं स्वस्य आश्रमं बदरिकाश्रमं निन्ये प्रापयामास । तस्याः सत्यवत्याः स्नुषे वध्वौ अम्बिकाम्बालिके तां सत्यवतीं अनु अन्वाययतुः ।।१६४।।

**चट्टि**– तस्मिन्नेव काले प्रवृत्तं कथान्तरमाह– **नैषेत्यादिना** ।। उदीर्णाः उत्कृष्टाः सन्तः निर्दुष्टाः गुणाः यस्येति विग्रहः । व्यासः कुरूणां कौरवाणां पाण्डवानां विरोधे प्राप्ते सति एषा सत्यवती न तिष्ठेत् । नागपुर इति शेषः । इत्यभिप्रायेण स्वमातरं सत्यवतीं स्वमाश्रमं वदरिकाश्रममेव निन्ये नीतवान् । तस्याः सत्यवत्याः स्नुषे अम्बिकाम्बालिकके च तां सत्यवतीं अनु ययतुः ।।१६४।।

**सुतोक्तमार्गेण विचिन्त्य तं हरिं सुतात्मना ब्रह्मतया च सा ययौ ।**
**परं पदं[1] वैष्णवमेव कृष्णप्रसादतः स्वर्ययतुः स्नुषे च ।।१६५।।**

**सत्याभिनवीया**– तत्रैव 'सुतोक्तमार्गेण विचिन्त्य तं'... इति श्लोके सुतात्मनेत्यस्य सुतत्वनिमित्त-संलग्नान्तःकरणेनेत्यर्थः । एतेन 'सुतात्मना' इत्येतत् व्यर्थमिति दूषणं निरस्तम् । सुतत्वेन निमित्तेन भगवति अन्तःकरणं सम्यक् लग्नं जातं, अतो भगवद्ध्यानं सम्यक् जातमिति ज्ञापयितुं सुतात्मनेत्युक्तमिति स्वीकरणात् ।।१६५।।

**वरदराजीया**– सत्या सुतोक्तेन व्यासोक्तेन मार्गेण तं व्यासात्मकं हरिं सुतात्मना सुतत्वेन सम्बन्धेन ब्रह्मात्मतया परब्रह्मकत्वेन च विचिन्त्य ध्यात्वा वैष्णवं विष्णुसम्बन्धि परं उत्तमं पदं स्थानं विष्णुलोकमिति यावत् । ययौ च प्राप । कृष्णप्रसादत इत्येतदुभयत्र सम्बध्यते । कृष्णस्य श्रीवेदव्यासस्य प्रसादतः प्रसादात् स्नुषे अम्बिकाम्बालिके तु स्वः स्वर्गं ययतुः ।।१६५।।

**जनार्दनीया**– सा सत्यवती सुतोक्तमार्गेण व्यासोदितप्रकारेण तं हरिं श्रीवेदव्यासं सुतात्मना पुत्रत्वेन ब्रह्मतया परब्रह्मत्वेन विचिन्त्य ध्यात्वा कृष्णप्रसादात् परं पदं ययौ । 'सुतात्मना' इत्यनेन हरौ प्रीतिविशेषः सूचितः । स्नुषे च कृष्णप्रसादात् स्वः स्वर्गं ययतुः ।।१६५।।

**ताम्रपर्णीया**– ।। **सुतात्मनेति** ।। ननु एकादशतात्पर्ये 'अतोऽशरीरो भगवान् पुत्रताभिमतिस्तु या । वसुदेवादिकानां च सैव मिथ्यामतिर्भवेत्' [११.११.२७] इति पुत्रत्वबुद्धेः भ्रमत्वमुक्तम् । तत्कथं तस्याः मोक्षहेतुत्वमिति चेत् परिहृतोऽयं विरोधो विरोधोद्धारे । 'मतिस्तु द्विविधा प्रोक्ता

१. 'ताः सुघोरं तपस्तप्त्वा देव्यो भरतसत्तम । देहं त्यक्त्वा महाराज गतिमिष्टां ययुस्तदा ।।' इत्यादिपर्वणि १३७.१३।

शुक्लशोणितजो ह्ययम् । अमन्दानन्दरूपोऽसौ मय्याविर्भूतः इत्यपि' इति ।। **परं पदं वैष्णवमेवेति** ।। 'विष्णोर्लोकं तदैवैके यान्ति' [भा.ता.२.२.३०] इति वचनात् इयमपि तदन्तर्भूतेति भावः ।।१६५।।

**चट्टि–** सा सत्यवती सुतोक्तमार्गेण व्यासोदितप्रकारेण तं हरिं वेदव्यासं सुतात्मना पुत्रत्वेन ब्रह्मतया परब्रह्मत्वेन च विचिन्त्य ध्यात्वा श्रीकृष्णस्य वेदव्यासस्य प्रसादतः प्रसादात् परमुत्तमं वैष्णवं विष्णुसम्वन्ध्येव पदं स्थानं ययौ । स्नुषे अम्बिकाम्बालिके च कृष्णप्रसादात् स्वः स्वर्गं ययतुः ।।

**माता च सा विदुरस्याऽप लोकं वैरिञ्चमन्वेव गताऽम्बिकां सती ।**
**व्यासप्रसादात् सुतसद्गुणैश्च कालेन मुक्तिं च जगाम सन्मतिः ।।१६६।।**

**वादिराजीया–** अम्बिकां स्वस्वामिनीं अनु अनुसृत्य गता व्यासाश्रमं गता सती विदुरस्य माता च व्यासप्रसादात् रमणकाले भक्तिकरणेन जातव्यासानुग्रहात् सुतसद्गुणैश्च सुतस्यापि तस्य यमरूपतया इतराधिकैः सद्गुणैः उत्तमभक्त्यादिगुणैः वैरिञ्चं लोकमाप । व्यासस्तु मातृभक्त्या स्वमातरं स्वाश्रमं निन्ये । अन्ते वैष्णवस्थानं च ददौ । अम्बिकाम्बालिके तु रमणसमये व्यासे अतिशयितभक्तेरकरणात् अन्यथाभक्तिकरणाच्च स्वर्गमेव गते । विदुरमाता तु दासीत्वेऽपि भक्तेराधिक्यात् वैरिञ्चं लोकमाप । मुक्तिकाले तु सर्वाश्च मुक्तिं यास्यन्तीति भावः ।।१६६।।

**वरदराजीया–** विदुरस्य माता सा भुजिष्या अम्बिकामनु अम्बिकया सह गता बदर्याश्रममिति शेषः । तदनन्तरं वैरिञ्चं विरिञ्चसम्वन्धिनं सत्यलोकमाप प्राप्तवती । यतः सती सद्गतियोग्या । तत्र कारणान्तरमाह– **व्यासेति** ।। व्यासस्य प्रसादात् तत्सम्भोगजन्यात् प्रसादात् सुतस्य विदुरस्य सद्गुणैश्च कालेन कालक्रमेण परान्ते मुक्तिं च जगाम । यतः सन्मतिः स्वयोग्यसम्यज्ज्ञाना ।।१६६।।

**जनार्दनीया–** या सती शुभा अम्बिकापरिचारिकी अम्बिकामनु अन्वेव गता । नागपुराद्बदरीं प्रतीति शेषः । सा विदुरस्य माता वैरिञ्चं ब्रह्मलोकं आप । सति निर्दुष्टे हरौ मतिर्मनो यस्याः सा । अत एव 'व्यासप्रसादात्' 'सुतसद्गुणैः' इति हेतुद्वयाभ्याम् । कालेन योग्यतापूर्तिकालेन ।।१६६।।

**ताम्रपर्णीया–** कालेन कालक्रमेण मुक्तिं वैकुण्ठादि । 'विष्णोर्लोकं तदैवैके यान्ति कालान्तरे परे'[भा.ता.२.२.३०] इति वचनादिति भावः । न चान्त्यदेहस्य शूद्रयोनिजत्वे मुक्तावपि तथात्वं स्यादिति वाच्यम् । वाधकाभावात् । अंशेन ब्राह्मणीत्वेन पुनर्जननोपपत्तेर्वा ।।१६६।।

**चट्टि–** सती शुभा सा विदुरस्य माता चाम्बिकामन्वेव गता सती, बदरीं प्रतीति शेषः । वैरिञ्चं विरिञ्चिसम्वन्धिनं लोकं सत्यलोकं आप । सती निर्दुष्टा मतिर्यस्याः सा । विदुरमाता श्रीव्यासस्य प्रसादादनुग्रहात् सुतस्य विदुरस्य सद्गुणैश्च कालेन योग्यतापूर्तिकालेन मुक्तिश्च जगाम ।।१६६।।

**जनार्दनीया–** तस्मिन् काले प्रवृत्तं कथान्तरमाह– **नैषेत्यादिना** ।। उदीर्णाः उत्कृष्टाः सन्तः निर्दुष्टाः गुणाः यस्येति विग्रहः । व्यासः कुरूणां कौरवाणां पाण्डवानां विरोधे प्राप्ते सति एषा सत्यवती न तिष्ठेत् । नागपुर इति शेषः । इति भावेन स्वमातरं सत्यवतीं स्वस्य आश्रमं बदरिकाश्रमं निन्ये प्रापयामास । तस्याः सत्यवत्याः स्नुषे वध्वौ अम्बिकाम्बालिके तां सत्यवतीं अनु अन्वाययतुः ।।१६४।।

**चट्टि–** तस्मिन्नेव काले प्रवृत्तं कथान्तरमाह– **नैषेत्यादिना** ।। उदीर्णाः उत्कृष्टाः सन्तः निर्दुष्टाः गुणाः यस्येति विग्रहः । व्यासः कुरूणां कौरवाणां पाण्डवानां विरोधे प्राप्ते सति एषा सत्यवती न तिष्ठेत् । नागपुर इति शेषः । इत्यभिप्रायेण स्वमातरं सत्यवतीं स्वमाश्रमं वदरिकाश्रममेव निन्ये नीतवान् । तस्याः सत्यवत्याः स्नुषे अम्बिकाम्बालिकके च तां सत्यवतीं अनु ययतुः ।।१६४।।

**सुतोक्तमार्गेण विचिन्त्य तं हरिं सुतात्मना ब्रह्मतया च सा ययौ ।**
**परं पदं[1] वैष्णवमेव कृष्णप्रसादतः स्वर्ययतुः स्नुषे च ।।१६५।।**

**सत्याभिनवीया–** तत्रैव 'सुतोक्तमार्गेण विचिन्त्य तं'... इति श्लोके सुतात्मनेत्यस्य सुतत्वनिमित्त-संलग्नान्तःकरणेनेत्यर्थः । एतेन 'सुतात्मना' इत्येतत् व्यर्थमिति दूषणं निरस्तम् । सुतत्वेन निमित्तेन भगवति अन्तःकरणं सम्यक् लग्नं जातं, अतो भगवद्ध्यानं सम्यक् जातमिति ज्ञापयितुं सुतात्मनेत्युक्तमिति स्वीकरणात् ।।१६५।।

**वरदराजीया–** सत्या सुतोक्तेन व्यासोक्तेन मार्गेण तं व्यासात्मकं हरिं सुतात्मना सुतत्वेन सम्वन्धेन ब्रह्मात्मतया परब्रह्मकत्वेन च विचिन्त्य ध्यात्वा वैष्णवं विष्णुसम्बन्धि परं उत्तमं पदं स्थानं विष्णुलोकमिति यावत् । ययौ च प्राप । कृष्णप्रसादत इत्येतदुभयत्र सम्बध्यते । कृष्णस्य श्रीवेदव्यासस्य प्रसादतः प्रसादात् स्नुषे अम्बिकाम्बालिके तु स्वः स्वर्गं ययतुः ।।१६५।।

**जनार्दनीया–** सा सत्यवती सुतोक्तमार्गेण व्यासोदितप्रकारेण तं हरिं श्रीवेदव्यासं सुतात्मना पुत्रत्वेन ब्रह्मतया परब्रह्मत्वेन विचिन्त्य ध्यात्वा कृष्णप्रसादात् परं पदं ययौ । 'सुतात्मना' इत्यनेन हरौ प्रीतिविशेषः सूचितः । स्नुषे च कृष्णप्रसादात् स्वः स्वर्गं ययतुः ।।१६५।।

**ताम्रपर्णीया–** ।। **सुतात्मनेति** ।। ननु एकादशतात्पर्ये 'अतोऽशरीरो भगवान् पुत्रताभिमतिस्तु या । वसुदेवादिकानां च सैव मिथ्यामतिर्भवेत्' [११.११.२७] इति पुत्रत्वबुद्धेः भ्रमत्वमुक्तम् । तत्कथं तस्याः मोक्षहेतुत्वमिति चेत् परिहृतोऽयं विरोधो विरोधोद्धारे । 'मतिस्तु द्विविधा प्रोक्ता

१. 'ताः सुघोरं तपस्तप्त्वा देव्यो भरतसत्तम । देहं त्यक्त्वा महाराज गतिमिष्टां ययुस्तदा ।।' इत्यादिपर्वणि १३७.१३।

शुक्लशोणितजो ह्ययम् । अमन्दानन्दरूपोऽसौ मय्याविर्भूतः इत्यपि' इति ।। **परं पदं वैष्णवमेवेति** ।। 'विष्णोर्लोकं तदैवैके यान्ति' [भा.ता.२.२.३०] इति वचनात् इयमपि तदन्तर्भूतेति भावः ।।१६५।।

**चट्टि–** सा सत्यवती सुतोक्तमार्गेण व्यासोदितप्रकारेण तं हरिं वेदव्यासं सुतात्मना पुत्रत्वेन ब्रह्मतया परब्रह्मत्वेन च विचिन्त्य ध्यात्वा श्रीकृष्णस्य वेदव्यासस्य प्रसादतः प्रसादात् परमुत्तमं वैष्णवं विष्णुसम्बन्ध्येव पदं स्थानं ययौ । स्नुषे अम्बिकाम्बालिके च कृष्णप्रसादात् स्वः स्वर्गं ययतुः ।।

**माता च सा विदुरस्याऽप लोकं वैरिञ्चमन्वेव गताऽम्बिकां सती ।**
**व्यासप्रसादात् सुतसद्गुणैश्च कालेन मुक्तिं च जगाम सन्मतिः ।।१६६।।**

**वादिराजीया–** अम्बिकां स्वस्वामिनीं अनु अनुसृत्य गता व्यासाश्रमं गता सती विदुरस्य माता च व्यासप्रसादात् रमणकाले भक्तिकरणेन जातव्यासानुग्रहात् सुतसद्गुणैश्च सुतस्यापि तस्य यमरूपतया इतराधिकैः सद्गुणैः उत्तमभक्त्यादिगुणैः वैरिञ्चं लोकमाप । व्यासस्तु मातृभक्त्या स्वमातरं स्वाश्रमं निन्ये । अन्ते वैष्णवस्थानं च ददौ । अम्बिकाम्बालिके तु रमणसमये व्यासे अतिशयितभक्तेरकरणात् अन्यथाभक्तिकरणाच्च स्वर्गमेव गते । विदुरमाता तु दासीत्वेऽपि भक्तेराधिक्यात् वैरिञ्चं लोकमाप । मुक्तिकाले तु सर्वाश्च मुक्तिं यास्यन्तीति भावः ।।१६६।।

**वरदराजीया–** विदुरस्य माता सा भुजिष्या अम्बिकामनु अम्बिकया सह गता बदर्याश्रममिति शेषः । तदनन्तरं वैरिञ्चं विरिञ्चसम्बन्धिनं सत्यलोकमाप प्राप्तवती । यतः सती सद्गतियोग्या । तत्र कारणान्तरमाह– **व्यासेति** ।। व्यासस्य प्रसादात् तत्सम्भोगजन्यात् प्रसादात् सुतस्य विदुरस्य सद्गुणैश्च कालेन कालक्रमेण परान्ते मुक्तिं च जगाम । यतः सन्मतिः स्वयोग्यसम्यज्ज्ञाना ।।१६६।।

**जनार्दनीया–** या सती शुभा अम्बिकापरिचारिकी अम्बिकामनु अन्वेव गता । नागपुराद्बदरीं प्रतीति शेषः । सा विदुरस्य माता वैरिञ्चं ब्रह्मलोकं आप । सति निर्दुष्टे हरौ मतिर्मनो यस्याः सा । अत एव 'व्यासप्रसादात्' 'सुतसद्गुणैः' इति हेतुद्वयाभ्याम् । कालेन योग्यतापूर्तिकालेन ।।१६६।।

**ताम्रपर्णीया–** कालेन कालक्रमेण मुक्तिं वैकुण्ठादि । 'विष्णोर्लोकं तदैवैके यान्ति कालान्तरे परे'[भा.ता.२.२.३०] इति वचनादिति भावः । न चान्त्यदेहस्य शूद्रयोनिजत्वे मुक्तावपि तथात्वं स्यादिति वाच्यम् । बाधकाभावात् । अंशेन ब्राह्मणीत्वेन पुनर्जननोपपत्तेर्वा ।।१६६।।

**चट्टि–** सती शुभा सा विदुरस्य माता चाम्बिकामन्वेव गता सती, बदरीं प्रतीति शेषः । वैरिञ्चं विरिञ्चिसम्बन्धिनं लोकं सत्यलोकं आप । सती निर्दुष्टा मतिर्यस्याः सा । विदुरमाता श्रीव्यासस्य प्रसादादनुग्रहात् सुतस्य विदुरस्य सद्गुणैश्च कालेन योग्यतापूर्तिकालेन मुक्तिश्च जगाम ।।१६६।।

**अम्बालिकाऽपि क्रमयोगतोऽगात् परां गतिं नैव तथाऽम्बिका ययौ ।**
**यथा यथा विष्णुपरश्चिदात्मा तथातथा ह्यस्य गतिः परत्र ॥१६७॥**

**व्यासतीर्थीया–** नन्वम्बिकायाः प्रथममहिषीत्वात् कथं 'नैव तथाऽम्बिका ययौ' इत्यम्बिकापेक्षया अम्बालिकायां प्रकृष्टगतिरित्यत आह– **यथेति** ॥१६७-१६९॥

**वेदाङ्गतीर्थीया–** क्रमयोगतः क्रमेण परिपक्वमोक्षोपायः ॥१६७-१७६॥

**वादिराजीया–** अम्बालिका तु क्रमयोगतः परां गतिं वैकुण्ठादिगतिमगात् । अम्बिका तु स्वयमगत्वा दासीप्रेषणापराधेन तथा श्वश्रूवदनुजावद्दासीवच्च वैकुण्ठादिरूपां परां गतिं नैवाप । किन्तु सारूप्यमोक्षमात्रं गता वैकुण्ठादितरत्रैव अधममुक्तवत् सञ्चरन्ती बभूव । न तु तद्वत् सालोक्यमोक्षो लब्ध इति तथेति वदतो ग्रन्थकारस्याभिप्रायः । अन्यथा 'परां गतिं नैव ययौ' इत्यवक्ष्यत् । एतदेवाभिप्रेत्य प्रागस्माभिः सर्वाश्च मुक्तिं यास्यन्तीत्युक्तम् । मुक्तियोग्यतां विना व्यासाङ्गसङ्गस्यायोगात् । 'यथा यथा विष्णुपरश्चिदात्मा' इत्यत्र चिदात्मा जीवः ॥१६७-१७६॥

**वरदराजीया–** एवं अम्बालिकापि क्रमयोगतः क्रमेनानुष्ठितात् योगात् परां गतिं स्वयोग्यां मुक्तिं अगात् आप । यथा अम्बालिका मुक्तिमगात् तथा अम्बिका नैव ययौ । गुणैस्ततोऽवरत्वादिति भावः । कुतः सत्यवत्यादीनां गतिवैचित्र्यमित्यत आह– **यथा यथेति** ॥ चिदात्मा चिद्रूपो जीवः यथा यथा स्वस्वयोग्यतया विष्णुपरः विष्णुभक्त्यादिगुणवान् तथा तथा तत्तद्योग्यतानुसारेण अस्य चिदात्मनः परत्र परलोके गतिः स्थानं भवति । हि यस्मात् तस्मात् तासां गतिवैचित्र्यं युक्तमित्यर्थः ॥१६७॥

**अनन्तभट्टीया–** अम्बिका तथा अम्बालिकामुक्तिसदृशीं गतिं न ययौ किन्तु ततोऽपकृष्टां मुक्तिं ययावित्यर्थः । तत्र कारणमाह– **यथेति** ॥ परत्र गतिः स्थानम् ॥१६७॥

**जनार्दनीया–** अम्बालिकापि क्रमयोगतः क्रमेण कालक्रमेण, योगतः सम्पादितमोक्षोपायतः परां उत्तमां गतिं स्थानं अगात् । अम्बिका तथा अम्बालिकावत् परां गतिं नैव ययौ । किन्तु ततोऽपि नीचां गतिं ययावित्यर्थः । ननु चेतनानां विविधा गतिः कुतः ? इत्यत आह– **यथेति** ॥ चिदात्मा ज्ञानस्वरूपो जीवः यथा यथा स्वस्वरूपयोग्यानुसारेण विष्णौ परः तात्पर्यवान् तथा तथा स्वस्वयोग्यतानुसारेण अस्य जीवस्य परत्र परलोके गतिर्भवतीति शेषः ॥१६७॥

**ताम्रपर्णीया–** क्रमयोगतः क्रमभाविज्ञानेन ध्यानेन उपायेन वा । तदुक्तं एकादशतातात्पर्ये 'ज्ञानं तु योगशब्दोक्तं युज्यतेऽनेन यत्सुखम् । क्वचिद्योग उपायः स्यात् क्वचिच्चित्तनिरोधनम् '[११.७.१४] इति । परां गतिं वैकुण्ठादिकम् ॥ **नैवेति** ॥ अम्बिकाम्बालिके च क्रमयोगतः परां गतिं ययौ ।

किन्तु ततोऽपि बहुतरसाधनेन बहुकालव्यवधानेन ययौ इति भावः । सत्यवती तदैव परां गतिमगात् । विदुरमाता सत्यलोके सान्तानिके स्थित्वा कालक्रमेण परां गतिमाप । अम्बालिका स्वर्गे स्थित्वा तत्रैव ध्यानज्ञानयोगौ प्राप्य क्रमेण परां गतिमवाप । अम्बिका तु तथा नागात् । किन्तु बहुसाधनेनेति । विष्णुगतिप्राप्तितारतम्यं कुत इत्यत आह– **यथा यथेति** ।। चिदात्मा चित्स्वरूपो जीवः ।।१६७-१७०।।

**भारतश्री–** चिदात्मा जीवः । यथा विष्णुपरः ज्ञानादिसाधनवान् ।।१६७-२३४।।

**चट्टि–** अम्बालिकापि क्रमयोगतः क्रमेण कालक्रमेण योगतः सम्पादितमोक्षोपायतः परां गतिमुत्तमां मुक्तिमगात् । अम्बिका तथाम्बालिकावत् परां गतिं नैव ययौ । किन्तु ततोऽपि नीचां गतिं ययावित्यर्थः । सत्यवत्यादीनां गतिवैचित्र्यं कुत इत्यत आह– **यथेति** ।। चिदात्मा ज्ञानस्वरूपो जीवः यथा स्वयोग्यतानुसारेण विष्णौ परस्तात्पर्यवान् तथा स्वस्य योग्यतानुसारेणास्य जीवस्य परत्र परलोके गतिः भवतीति शेषः ।।१६७।।

**पाण्डुस्ततो राज्यभरं निधाय ज्येष्ठेऽनुजे चैव वनं जगाम ।**
**पत्नीद्वयेनानुगतो [1]बदर्यामुवास नारायणपालितायाम् ।।१६८।।**

**वरदराजीया–** ततस्तदनन्तरं पाण्डुः ज्येष्ठे धृतराष्ट्रे अनुजे विदुरे च राज्यस्य भरं भारं निधाय स्वयं वनं तपोवनं जगाम । पत्नीद्वयेन कुन्तीमाद्रिभ्यां अनुगतः सह प्राप्तो नारायणेन पालितायां बदर्यां उवास । नारायणाश्रमे उवासेति यावत् । अनेन वनं जगामेत्येतद्विवृतं भवति ।।१६८।।

**अनन्तभट्टीया–** ...भोगाद्वनं जगाम । वैराग्यादिति भावः ।।१६८-१७४।।

**जनार्दनीया–** ततः सत्यवत्यदीनां परलोकप्राप्त्यनन्तरम् । ज्येष्ठे धृतराष्ट्रे भरं भारं निधाय, अनुजे विदुरेऽपि निधाय, अनुगतो युक्तः वदरिकाश्रमे उवास ।।१६८।।

**चट्टि–** ततोऽनन्तरं पाण्डुः ज्येष्ठे धृतराष्ट्रे अनुजे विदुरे च राज्यस्य भरं भारं निध य पत्नीद्वयेनानुगतस्सन्नेव वनं तपोवनं जगाम । नारायणेन पालितायां बदर्यां उवास ।।१६८।।

**गृहाश्रमेणैव वने निवासं कुर्वन् स [2]भोगान् बुभुजे तपश्च ।**
**चक्रे मुनीन्द्रैः सहितो जगत्पतिं रमापतिं भक्तियुतोऽभिपूजयन् ।।१६९।।**

---

१. 'सम्प्रयुक्तस्तु कुन्त्या च माद्र्या च भरतर्षभ । जिततन्द्रिस्तदा पाण्डुः बभूव वनगोचरः ।। स चरन् दक्षिणं पार्श्वं रम्यं हिमवतो गिरेः । उवास गिरिपृष्ठेषु महाशालवनेषु च ।।' इति आदिपर्वणि.१२३.७-८ ।

२. 'तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः । उपजह्रुर्वनान्तेषु धृतराष्ट्रेण चोदिताः ।।' आदिपर्वणि.१२३.११

**वरदराजीया–** वने नारायणाश्रमे गृहाश्रमेण गृहस्थाश्रमधर्मेणैव वने निवासं कुर्वन् । न तु वानप्रस्थाश्रमेणेत्यर्थः । अत एव तत्र भोगान् विषयांश्च बुभुजे । तपश्चक्रे । तपश्चरणप्रकारमाह– **मुनीन्द्रैः सहित इति** ।। अभिपूजयन् तपश्चक्रे इति सम्बन्धः ।।१६९।।

**जनार्दनीया–** गृहाश्रमेण गृहस्थाश्रमेण वने बदर्यां भोगान् बुभुजे । मुनीन्द्रैः सहितः रमापतिं व्यासं अभिपूजयन् तपश्चक्रे ।।१६९।।

**चट्टि–** सः पाण्डुः गृहाश्रमेण गृहस्थाश्रमेणैव वने बदर्यां निवासं कुर्वन् भोगान् बुभुजे । मुनीन्द्रैः सहितः भक्तियुतः जगत्पतिं रमापतिं श्रीवेदव्यासं अभिपूजयन् तपश्चक्रे ।।१६९।।

**स कामतो हरिणत्वं प्रपन्नं दैवादृषिं ग्राम्यकर्मानुषक्तम् ।**
**विद्ध्वा शापं प्राप तस्मात् स्त्रिया युङ्मरिष्यसीत्येव बभूव चाऽर्तः ।।१७०।।**

**व्यासतीर्थीया–** दिवा कथं ऋषिः स्त्रीकामो हरिणत्वं प्रपन्न इत्यत उक्तम्– **दैवादिति** ।। ग्राम्यकर्म मैथुनम् । तस्मादृषेः ।।१७०।।

**मधुसूदनीया–** ।। **विध्वा शापमिति** ।। ननु ब्रह्महननेन पाण्डोर्ब्रह्महत्या न किं । नैव । कुतः तद्वरात् । तत्र किं मानम् । 'न हि ते ब्रह्महत्येयं भविष्यत्यविजानतः । मृगरूपधरं हत्वा मां द्विजं काममोहितम् ।।' इत्यादिपर्ववाक्यमेव [१२३.३६-३७]। किन्दमाख्यऋषिर्मनुष्यस्य दिवामैथुनं निषिद्धमिति मत्वा हरिणरूपं धृत्वा रेम इति भावः ।।१७०-१७२।।

**वरदराजीया–** स पाण्डुः कामतः इच्छया हरिणत्वं तद्रूपत्वं प्राप्तं ऋषिमपि दैवात् यदृच्छया ग्राम्ये कर्मणि स्त्रीसङ्गाख्येऽनुषक्तं विद्ध्वा वाणेनेति शेषः । तस्मादृषेः शापमाप हि । किमिति त्वमपि स्त्रिया युक् स्वभार्यया सम्भोगार्थं युक्तश्चेत्तर्हि मरिष्यस्येवेति तच्छ्रुत्वा आर्तो दुःखितो बभूव ।।१७०।।

**अनन्तभट्टीया–** दैवात् दैवेच्छया । कामतः हरिणत्वं प्रपन्नं ग्राम्यकर्मानुषक्तं स्त्रीसम्भोगं कुर्वन्तं विध्वा वाणेन प्रहृत्य स्त्रियायुङ्मरिष्यसीति शापं प्रा..त्यर्थः ।।१७०।।

**जनार्दनीया–** स पाण्डुः दैवात् हरीच्छया हरिणत्वं हरिणरूपं कामतः इच्छया, न तु शापेनेत्यर्थः । प्रपन्नं प्राप्तं ग्राम्यकर्मणि रतिकर्मणि अनुसक्तं आसक्तम्, प्रवृत्तमित्यर्थः । किन्दमऋषिं विध्वा वाणेन हत्वा तस्मादृषेः शापं प्राप । किमिति ? स्त्रियायुक् युक्तः रतिस्थ एवेति भावः । मरिष्यस्येव मरणं यास्यस्येवेति सम्बन्धः । आर्तो दुःखितो बभूव । पाण्डुरिति शेषः ।।१७०।।

**ताम्रपर्णीया–** ननु कथं किन्दमो नाम तपसा प्रथितो मुनिः स्त्रीकामतो हरिणत्वं प्रपन्न इत्यत उक्तम्– **दैवादिति** ।। यद्वा दैवाद्विध्वेति सम्बन्धः ।।१७०।।

**भावचन्द्रिका**– दिवारमणनिषेधशास्त्रस्य मनुष्याधिकारत्वात् मृगरूपी ऋषिरित्याह– **स इति** ।।१७०।।

**चट्टि**– सः पाण्डुः दैवात् हरीच्छया हरिणत्वं हरिणरूपं कामतः इच्छया न तु शापेनेत्यर्थः । प्रपन्नं प्राप्तं ग्राम्यकर्मणि रतिकर्मणि अनुषक्तं आसक्तं प्रवृत्तमित्यर्थः । ऋषिं किन्दमऋषिं विध्वा हत्वा बाणेनेति शेषः । तस्मात् ऋषेः शापं प्राप । किमिति । स्त्रिया युक् युक्तः रतिस्थ एवेति भावः । मरिष्यसि मरणं यास्यसीत्येव शापं प्रापेति पूर्वेणान्वयः । तच्छ्रुत्वा आर्तो दुःखितो बभूव । अज्ञानतः मृगरूपधरब्राह्मणहननेन पाण्डोः तद्वधात् ब्रह्महत्यादोषो नास्तीत्यत्र मानम्– 'न हि ते ब्रह्महत्येयं भविष्यत्यविजानतः । मृगरूपधरं हत्वा मां द्विजं काममोहितम् ।।' इत्यादिपर्वणि । किन्दमाख्यो ऋषिः मनुष्यस्य दिवारतिर्निषिद्धेति मत्वा हरिणरूपं धृत्वा रेम इति भावः ।।१७०।।

**न्यसिष्णुरुक्तः पृथया स नेति प्रणामपूर्वं न्यवसत् तथैव ।**
**ताभ्यां समेतः [१]शतशृङ्गपर्वते नारायणस्याऽश्रममध्यगे पुरः ।।१७१।।**

**व्यासतीर्थीया**– न्यसिष्णुः सन्यस्यन् ।।१७१-१७२।।

**वेदाङ्गतीर्थीया**– न्यसिष्णुः स पृथया प्रणामपूर्वं नेत्युक्तः । तथैव गार्हस्थ्येनैव ।।१७१-१७८।।

**वादिराजीया**– शतशृङ्गपर्वते नारायणस्याश्रममध्यगे पुरा इत्यत्र सपादलक्षशृङ्गवत्त्वात् पूर्वापरवारिधि-पर्यन्तं महान् सपादलक्षाख्यः पर्वतोऽस्ति । तन्मध्ये शतशृङ्गाख्यावान्तरपर्वतः । तस्य मध्ये पूर्वतः पश्चिमतश्च नरनारायणशृङ्गाभ्यां मध्ये अलकनन्दया चालङ्कृतः बदरिकाख्यनारायणाश्रमस्तिष्ठति । तस्य दक्षिणभागे योजनप्रमाणादधस्तात् पाण्डुचक्रवर्तिना अधिष्ठितत्वात् पाण्डुकेश्वराख्यं पुण्यक्षेत्रं च वर्तत इति वस्तुस्थितिः । एवं च दक्षिणतः बदरिकाश्रमयात्रायां क्रियमाणायां यस्मादाश्रमात् पुरः पुरतः उत्तरतः इति यावत् । नारायणस्याश्रमः मध्यग इति शतशृङ्गपर्वतमध्यस्थस्तिष्ठति । तस्मिन् शतशृङ्गपर्वते शतशृङ्गप्रदेशे न्यवसदिति सम्बन्धः । अग्न्याहितादिवत् विशेषणस्योपरि निपातः । 'षष्ठ्या आक्रोशे अलुक्' इति वचनात् नारायणस्येति षष्ठ्या अलुक्समासः । तस्मिन्नाश्रमे नारायणस्य लोपाभावसूचनं तत्फलम् । नारायणाश्रमे हिमकाले षण्मासपर्यन्तं आकाशात् पतमानगिरिशृङ्गोपमशिलीभूतहिमानीभयात् तत्रस्थाः पशवः पक्षिणो मृगा मनुष्याश्च पाण्डुकक्षेत्रं प्रत्यायान्ति । अतो भार्याभ्यां परिजनैश्च सह निरन्तरवासाय इदमेव स्थलं योग्यमिति ऋषीणां वचनादत्रैव न्यवसदिति भावः ।।१७१।।

---

१. 'राजपुत्रस्तु कौरव्य पाण्डुर्मूलफलाशनः । जगाम सह पत्नीभ्यां ततो नागशतं गिरिम् ।। स चैत्ररथमासाद्य कालकूटमतीत्य च । हिमवन्तमतिक्रम्य प्रययौ गन्धमादनम् ।। रक्ष्यमाणो महाभूतैः सिद्धैश्च परमर्षिभिः । उवास स महाराज समेषु विषमेषु च ।। इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च । शतशृङ्गे महाराज तापसः समतप्यत ।।' इति आदिपर्वणि.१२४.५१ ।

**वरदराजीया–** पाण्डुः न्यसिष्णुः सन्यासं कर्तुमिच्छुः स पाण्डुः पृथया कुन्त्या प्रणामपूर्वकं नमस्कारपूर्वं नेति सन्यासो न कर्तव्य इत्युक्तः प्रार्थितः तथैव गृहस्थ एव न्यवसत् । तदेव विवृणोति– **ताभ्यां समेत इति** ।। पत्नीभ्यां समेतो नारायणस्य पुरः पुरस्तात् विद्यमाने तथा नारायणाश्रममध्यगे बदर्याश्रममध्यवर्तिनि शतभृङ्गपर्वते । न्यवसदिति सम्बन्धः ।।१७१।।

**अनन्तभट्टीया–** न्यसिष्णुः सन्यासं स्वीचिकीर्षुः । नारायणस्य पुरः अग्रे आश्रममध्यगे आश्रम... पुरस्येति विग्रहः । स्वमध्यप्रदेशवृत्ते नारायणाश्रमे... त्तेन ।।१७१।।

**जनार्दनीया–** न्यसिष्णुर्न्यासमिच्छुः सन्यासस्वीकारेच्छुः पाण्डुः पृथया प्रणामपूर्वं नतिपूर्वं यथा स्यात्तथा। सः सन्यासस्वीकारः नेति मास्त्विति उक्तः याचितः सन् तथैव गृहस्थधर्मेणैव ताभ्यां कुन्तीमाद्रीभ्यां समेतः पाण्डुः आश्रमस्य बदरिकाश्रमस्य मध्यगे मध्यप्रदेशे विद्यमाने शतभृङ्गाख्यपर्वते विद्यमाननारायणस्य दोषदूरगुणाश्रयस्य श्रीवेदव्यासस्य पुरः अग्रे अभिमुखप्रदेश इत्यर्थः । 'स्यात् पुरः पुरतोऽग्रतः' इत्यमरः । न्यवसत् ।।१७१।।

**ताम्रपर्णीया–** आश्रममध्यगे शतशृङ्गे पुरः पुरोभागे उवासेत्यर्थः ।।१७१-१७३।।

**भावचन्द्रिका–** संन्यासवदेव वानप्रस्थाश्रमः स भूयात्ततो न्यासे च आवयोः परित्यागेन प्राणत्याग एव भवेदित्युक्त्वा नेत्युक्तः गृहस्थाश्रम एव स्थितः ।।१७१।।

**चट्टि–** न्यसिष्णुः न्यासमिच्छुः न्यासस्वीकारेच्छुः सः पाण्डुः पृथया प्रणामपूर्वं यथा स्यात् तथा नेति सन्यासो न कर्तव्य इत्युक्तः प्रार्थितः सन् तथैव गृहस्थधर्मेणैव ताभ्यां कुन्तीमाद्रीभ्यां समेतः सन् आश्रमस्य बदरिकाश्रमस्य मध्यगे मध्यप्रदेशे विद्यमाने शतशृङ्गाख्यपर्वते विद्यमानस्य नारायणस्य श्रीवेदव्यासस्य पुरः अग्रे अभिमुखप्रदेशे इत्यर्थः न्यवसत् ।।१७१।।

**तपो नितन्तं स चकार ताभ्यां समन्वितः कृष्णपदाम्बुजाश्रयः ।**
**तत्सङ्गपूतद्युसरिद्वराम्भःसदावगाहातिपवित्रिताङ्गः ।।१७२।।**

**वरदराजीया–** ताभ्यां पत्नीभ्यां सहितः कृष्णपादारविन्दाश्रयो भूत्वा नितान्तं तीव्रं तपश्चकार । तस्य नारायणस्य सङ्गेन पूताया अतिपवित्राया द्युसरितो गङ्गाया वराम्भसि पवित्रोदके सदा त्रिकालं अवगाहः स्नानं तेन अतिपवित्रितं पवित्रीकृतं अङ्गं शरीरं यस्य तत्तथा । तपश्चक्र इति सम्बन्धः ।।

**अनन्तभट्टीया–** ।। **तत्सङ्गेति** ।। नारायणसङ्गेन पूते द्युसरिद्वराम्भसि सदावगाहेन पवित्रिताङ्गः पापा...कृतमिति शेषः ।।१७२।।

**जनार्दनीया–** तस्य त्रिविक्रमावतारस्य हरेः, सङ्गेन नखसम्बन्धेन, पूतं च तत् द्युसरितः गङ्गायाः वराम्भश्च उत्तमजलं, तस्मिन् सदा नियतकालेषु अवगाहः स्नानं, तेन अतिपवित्रितं पूर्वं पवित्रमपि अतिशयेन पवित्रीकृतं अङ्गः यस्य स तथा । सः पाण्डुः । नितान्तं दुष्करं तपश्चकार ॥१७२॥

**चट्टि–** सः पाण्डुः ताभ्यां पत्नीभ्यां समन्वितः कृष्णपदाम्बोजाश्रयः सन् । त्रिविक्रमावतारस्य हरेस्सङ्गेन नखसम्बन्धेन तस्य बदरीनारायणस्य सङ्गेन वा पूतं च तत् द्युसरितः गङ्गायाः वराम्भः उत्तमजलं च तस्मिन् सदा नियतकालेषु अवगाहः स्नानं तेन अतिपवित्रितं पूर्वं पवित्रमेव अतिशयेन पवित्रीकृतं अङ्गं यस्य स तथाभूतः सन् । नितान्तं दुष्करं तपश्चकार ॥१७२॥

**एतस्मिन्नेव काले कमलभवशिवाग्रेसराः शक्रपूर्वा**
**भूम्या पापात्मदैत्यैर्भुवि कृतनिलयैराक्रमं चासहन्त्या ।**
**ईयुर्देवाधिदेवं [1]शरणमजमुरुं पूर्णषाड्गुण्यमूर्तिं**
**क्षीराब्धौ[2] नागभोगे शयितमनुपमानन्दसन्दोहदेहम् ॥१७३॥**

**व्यासतीर्थीया–** कृष्णावतारसङ्गतिं कुर्वन् पितृपक्षमाह– **एतस्मिन्निति** ॥ भगवत एव शरणप्राप्तौ निमित्तमुक्तम्– **देवाधिदेवमजमित्यादिना** ॥१७३॥

**वेदाङ्गतीर्थीया–** अथ कृष्णावतारं वक्तुं तत्कारणतया ब्रह्मादीनां भगवच्छरणागतिप्रकारमाह– **एतस्मिन्नित्यादिना** ॥१७३-१८०॥

**वादिराजीया–** भक्ताग्रेसरो ब्रह्मैव पूर्वं गच्छति । तदनन्तरं रुद्रः । ततः परं सर्वे देवाः शक्रं पुरस्कृत्य गच्छन्तीति क्रमसूचनाय 'कमलभवशिवाग्रेसराः शक्रपूर्वा' इत्युक्तम् । यद्वा कमलभवशिवौ स्वसेवकदैत्यानां स्वयमेव घातकौ । तस्माद्बुभूषुणा हरिं विना तौ पृथङ् न सेव्यौ इति सूचनाय

---

१. 'वैचित्रवीर्यौ द्वावेव पार्थिवौ भुवि साम्प्रतम् । धृतराष्ट्रश्च पाण्डुश्च विख्यातौ पुरुषर्षभौ ॥ तत्र पाण्डोः श्रिया धृष्टे द्वे भार्ये सम्बभूवतुः । शुभे कुन्ती च माद्री च देवयोषोपमे तु ते ॥ धृतराष्ट्रस्य राज्ञस्तु भार्यैका तुल्यचारिणी । गान्धारी भुवि विख्याता भर्तुर्नित्यं व्रते स्थिता ॥' हरिवंशे हरिवंशपर्वणि [५३.५०-५२] इति देवताप्रार्थनसमये मेरुशिखरे सभायां विष्णुं प्रति ब्रह्मा सभार्ययोः धृतराष्ट्रपाण्ड्वोः भुवि अवस्थानं अवोचत् । तदनन्तरं- 'धर्मस्यांशस्तु कुन्त्यां वै माद्र्यां च विनियुज्यताम् । विग्रहस्य कलिर्मूलं गान्धार्यां विनियुज्यताम् ॥' इति हरिवंशे हरिवंशपर्वणि [५३.६३] इति देवान् आज्ञापयामास च । तथा च यतः ब्रह्मा धृतराष्ट्रस्य पाण्डोश्च अवस्थानमुक्त्वा तयोः अवतारार्थं आज्ञापयति तेन धृतराष्ट्रपाण्डुविवाहानन्तरं देवताः श्रीहरिं अवतारार्थं प्रार्थयामास इति ज्ञायते ।

२. वंशीधरोऽप्याह 'ब्रह्माणं मेरुमूर्धस्थं नतु सत्यलोकस्थम् । 'जगाम धरणी मेरोः समाजे त्रिदिवौकसाम्' इति पराशरोक्तेः' इति ।

तावेवाग्रेसरौ पृथगुक्त्वा पश्चाच्छक्रादीनां गतिमाह– **कमलभवेति** ।। तदुक्तं भागवते– 'शापप्रसादयोरीशाः ब्रह्मविष्णुशिवादयः । सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः ।।' इति [भागवते.१०.९२.१२]। भगवतोऽनन्तगुणानामुपासकः आचार्यः यत्र यत्र स्वग्रन्थे भगवत्प्रसङ्गस्तत्र तत्र तद्गुणाननन्तानपि स्वयोग्यान् सहैव स्मरति इति वस्तुतत्वम् । तावतामपि ग्रन्थे निबन्धने ग्रन्थस्याप्यनन्तत्वप्रसङ्गभिया पञ्चषान् दिव्यान् गुणान् स्वभक्तजनेषु स्वस्वभावं दर्शयितुं यत्र यत्र श्लोके विशिष्य हरेः प्रसङ्गस्तत्र नियमेनानुवर्णयतीति सर्वत्रानुसन्धेयम् । अत एव 'एतस्मिन्नेव काले' इति पद्येऽपि देवाधिदेवमित्यादीनि विशेषणानि ।।१७३।।

**मधुसूदनीया–** ।। **आक्रमं चासहन्त्येति** ।। ननु जगद्धात्र्याः भूम्याः दैत्यभारः कियान् अतः किमर्थं दैत्यभारं न सेह इत्यतः तेषां स्वपतिनारायणनिन्दकत्वात् तद्भारं न सेहे । पतिव्रतास्त्रीणां स्वपतिनिन्दकानां अतिभारत्वात् । 'तथाहि लोके पतिनिन्दकेभ्यः पतिव्रतानामपरः क्व भारः' इति वचनात् इति [रुक्मिणीशविजय.१.१२] विशेषार्थतुशब्दार्थश्चकारः ।।१७३-१७५।।

**वरदराजीया–** कृष्णावतारार्थं ब्रह्मादिदेवताप्रार्थनप्रकारमाह– **एतस्मिन्नित्यादिना** ।। एतस्मिन् काल एव पाण्डोः तपश्चरणकाल एव कमलभवो ब्रह्मा शिवश्चाग्रेसरौ पुरो गन्तारौ येषां ते तथा । शक्रः पूर्वः आदिर्येषां ते तथा देवा इति शेषः । देवानामधि अधिकं देवं प्रति ईयुरिति सम्बन्धः । कथम्भूताः? भूम्या च सहिताः । कथम्भूतायाः? आक्रमं स्वस्मिन् सञ्चारं असहन्त्या सोढुमशक्तया तैः कृतमाक्रमं पापात्मभिः पापस्वरूपैर्दैत्यैः कृतमिति शेषः । पुनः कथम्भूतैः भुवि पृथिव्यां कृतनिलया आश्रयाः यैस्ते तथा तैः । देवाधिदेवस्य विशेषणानि शरण्यमित्यादीनि । शरणं रक्षितारं, अजस्य ब्रह्मणो गुरुं, षड्गुणा एव षाड्गुण्यं 'ऐश्वर्यस्य समग्रस्य' इत्याद्युक्तं पूर्णषाड्गुण्यं मूर्तिर्देहो यस्य स तथा । क्षीरसमुद्रे विद्यमाने नागस्य मुक्तशेषस्य भोगे शरीरे शयितं शयानम् । न केवलं षाड्गुण्यदेहं किन्तर्ही इत्यत आह– **अनूपमेति** ।। अनूपमस्य असदृशस्य आनन्दस्य सन्दोहः समूहो देहो यस्येति ।।१७३।।

**अनन्तभट्टीया–** षड्गुणा एव षाड्गुण्यम् । नागभोगे शेषदेहे ।।१७३।।

**जनार्दनीया–** अथ कृष्णावतारं वदिष्यन् तदुपोद्घातमाह– **एतस्मिन्नित्यादिना** ।। एतस्मिन्नेव काले पाण्डोस्तपश्चरणकाले । कमलभवो ब्रह्मा शिवश्च तौ अग्रेसरौ पुरःसरौ येषां ते तथा । शक्रपूर्वाश्चेन्द्रादिदेवाः । पापमेव आत्मा स्वरूपं येषां ते तथा, ते च ते दैत्याश्च तैः । भुवि कृतैः निर्मितैः निलयैः गृहैः, आक्रमं आक्रमणं असहन्त्या सोढुमशक्तया तया भूम्या सह । देवानां अधिदेवं श्रेष्ठदेवं सर्वाधिकमित्यर्थः । श्रीहरिं ईयुः प्रापुः । कथम्भूतम्? शरणं रक्षकम् । आत् परब्रह्मणः सकाशाज्जातः अजः ब्रह्मा तस्य गुरुम् । ऐश्वर्यादिषड्गुणा एव षाड्गुण्यं, पूर्णं च तत् षाड्गुण्यं च,

तदेव मूर्तिः स्वरूपं यस्य स तथा । तस्मिन् क्षीराब्धौ नागस्य शेषस्य भोगे देहे शयितं शयानं, अनुपमस्यासदृशस्यानन्दस्य सन्दोहः समूहो देहो यस्य स तथा तम् । 'कृतनिलयैराक्रमम्' इत्यनेन गृहनिर्माणतया दैत्यानां अक्रमणमभूदित्यवगन्तव्यम् ।।१७३।।

**ताम्रपर्णीया**– भूम्या सह ।।१७३-१७५।।

**भारतश्री**– ।। **क्षीराब्धाविति** ।। यद्यपि भीष्मपर्वणि भीष्मेणोक्तमित्युक्तमाचार्यैः । 'मानसोत्तरशैले हि पुरा ब्रह्मपुरःसराः । स्थिता देवास्तदापश्यत् ब्रह्मैको हरिमम्बरे ।। स्तुत्वा सम्पूज्य भूमेस्स भारावतरणाय च । प्रार्थयामास तेनोक्तं देवानामवद्विभुः ।। अयं नारायणो देवः पूर्णानन्तगुणार्णवः । आज्ञापयति वः सर्वान् प्रादुर्भावाय भूतले ।। स्वयं च देवकीपुत्रो भविष्यति जगत्पतिः ।।' इति ।।

तथापि प्रथमं क्षीराब्धौ ब्रह्मणा सह देवाः नारायणमुपाश्रितवन्तः । तथैव द्वितीयं मानसोत्तरे प्रार्थितवन्तः इत्यविरोधः ।। 'जगाम सत्रिनयनः तीरं क्षीरपयोनिधेः' इति भागवते [१०.१.१९]। विष्णुपुराणे च 'तथा गच्छत गच्छामः क्षीराब्धे उत्तरं तटम्' इत्युक्तत्वात् प्रथमं क्षीरसमुद्रमित्युक्तमेव । अथवा क्षीरसमुद्रतीरेऽपि कश्चन मानसोत्तरनामको गिरिरस्ति । तत्र स्थिता देवा इति वक्तव्यम् । यद्वा क्षीराब्धौ प्रार्थनां कृत्वा आगत्य मानसोत्तरे स्थिताः तत्र गगने ब्रह्मापश्यत् तत्रापि विज्ञापयामास देवोक्तं देवान् प्रत्युक्तवानिति ।।१७३।।

**भावचन्द्रिका**– सर्वेषामपि तत्प्राप्तिः कुत इत्यत आह– **देवेति** ।। ब्रह्मापि तादृश इत्याह– **अजेति** ।। तदपि कुत इत्यत आह– **पूर्णेति** ।। ब्रह्मणोऽपि षाड्गुण्यसद्भावात्– **पूर्णेति** ।। अजगुरुत्वोक्त्या स्वगुरुत्वसूचनेन गुरुनामग्रहणमनुचितमिति ज्ञापनाय नारायणपदार्थमाह– **क्षीराब्धाविति** ।। शयनं न श्रमपरिहारायेत्याह– **अनुपमेति** ।।१७३।।

**चट्टि**– अथ कृष्णावतारार्थं ब्रह्मादिदेवताप्रार्थनाप्रकारमाह– **एतस्मिन्नित्यादिना** ।। एतस्मिन् काले पाण्डोः तपश्चरणकाले कमलभवो ब्रह्मा शिवश्च तावग्रेसरौ पुरस्सरौ एषां ते तथा । शक्रः पूर्वो एषां ते शक्रपूर्वाः देवाः भुवि कृताः निलयाः गृहाः यैस्ते तथा तैः । पापमेव आत्मा स्वरूपं येषां ते । ते च ते दैत्याश्च तैः कृतमिति शेषः । आक्रमं आक्रमणं असहन्त्याः सोढुमशक्तया भूम्या सह देवानामधिदेवं सर्वाधिकमित्यर्थः । शरणं रक्षकं अजगुरुं आद् ब्रह्मणः सकाशाज्जातो जः ब्रह्मा तस्य गुरुमैश्वर्यादिषड्गुणा एव षाड्गुण्यं पूर्णं च तत् षाड्गुण्यं च तदेव मूर्तिः स्वरूपं यस्य स तथा तम् । क्षीराब्धौ नागस्य शेषस्य भोगे देहे शयितुं शयानम् । अनुपमस्य असदृशस्यानन्दस्य सन्दोहः समूहः देहो यस्य स तथा तं हरिमीयुः । 'भुविकृतनिलयैराक्रमम्' इत्यनेन गृहनिर्माणतया दैत्यानामाक्रमण-मभूदित्यवगन्तव्यम् ।।१७३।।

**ऊचुः परं पुरुषमेनमनन्तशक्तिं**
**सूक्तेन तेऽब्जजमुखा अपि पौरुषेण ।**
**स्तुत्वा धराऽसुरवराक्रमणात्परेश**
**[1]खिन्ना यतो हि विमुखास्तव तेऽतिपापाः ॥१७४॥**

**वादिराजीया–** 'अब्जजमुखा अपि' इत्यत्र अपिशब्दस्तेषां सर्वोत्तमत्वं गर्हयितुम् ॥१७४॥

**वरदराजीया–** न केवलमीयुः । किन्तु अब्जजमुखाः ब्रह्माद्याः देवाः ऊचुरपीत्यर्थः । किं कृत्वा? परं पुरुषं पुरुषोत्तमं अनन्तं देशतः कालतश्चापरिच्छिन्ना शक्तिः यस्य तम् । पौरुषेण पुरुषप्रतिपादकेन पुरुषसूक्तविदयेति यावत् । स्तुत्वा संस्तुत्य । किमित्यूचुः? हे परेश परेषां ब्रह्मादीनां ईश परश्चासावीशश्चेति वा । धरा भूमिः असुरवराणां दैत्याधिपानां आक्रमणात् सङ्क्रमणात् खिन्ना खेदं प्राप्ता । नन्वन्येषु भूधरादिषु सत्सु असुरसञ्चारेणैव किमिति धरायाः खिन्नत्वमित्यत आह– **यत इति** ॥ यतः कारणात् दैत्याः तव विमुखाः । यतो अत्यन्तपापाः ततः खिन्नत्वं युक्तमिति भावः ॥१७४॥

**अनन्तभट्टीया–** पौरुषेण परमपुरुषप्रतिपादकेन सूक्तेन । खिन्ना धरावाक्य... वचनम् ॥१७४॥

**जनार्दनीया–** देवाधिदेवं प्राप्य किं चक्रुरित्यत आह– **ऊचुरिति** ॥ ते देवाः पौरुषेण परमपुरुषप्रतिपादकेन, पुरुषसूक्तेनेति यावत् । परं पुरुषं उत्तमं पुरुषं एनं नारायणं स्तुत्वा ऊचुः । किमिति? हे परेश! ते असुराः अतिपापाः पापरूपाः । अत एव विमुखाः यतः अतः धरा भूः असुरवराणां दैत्यश्रेष्ठानां अक्रमणात् संक्रमणात् खिन्ना हि खेदयुक्ता हि ॥१७४॥

**चट्टि–** देवाधिदेवं प्राप्य देवाः किं चक्रुरित्यत आह– **ऊचुरिति** ॥ अब्जजमुखाः ते देवाः परं पुरुषं उत्तमं पुरुषम् । अनन्ता देशतः कालतश्च अपरिच्छिन्ना शक्तिर्यस्य तमेनं श्रीनारायणं पौरुषेण परमपुरुषप्रतिपादकेन सूक्तेन पुरुषसूक्तेनेति यावत् । स्तुत्वा ऊचुः । किमिति? हे परेश परेषां ब्रह्मादीनां ईश यतः असुराः पापाः तवातिविमुखाः अपि अत्यन्तं विमुखाश्च अतः धरा भूः असुरवराणां दैत्यश्रेष्ठानां आक्रमणात् सङ्क्रमणात् खिन्ना खेदयुक्ता ॥१७४॥

**दुस्सङ्गतिर्भवति भारवदेव देव**
**नित्यं सतामपि हि नः शृणु वाक्यमीश ।**

---

१. 'खिन्ना ह्यतोऽतिविमुखा' इति चट्टिपाठः ।

**पूर्वं हता दितिसुता भवता रणेषु[१]**
**ह्यस्मत्प्रियार्थमधुना भुवि तेऽभिजाताः ॥१७५॥**

**व्यासतीर्थीया–** भारे हि खेदः स्यात् सुराणां मद्गिमुखादिभावेऽपि कथं तदाक्रमणेन खेदः स्यादित्यत आह– **दुःसङ्गतिरिति** ॥ असुराणां पातालादिषु विद्यमानत्वात् कथं तदाक्रमणेन खेदः स्यादित्यत आह– **अथापीति** ॥१७५॥

**वेदाङ्गतीर्थीया–** सतां नित्यं दुःखं गतिः भारवदेव भवति । असुराणां पाताले स्थितत्वात् कथं भुवो भार इत्यत आह– **अपीति** ॥ तथापीत्यर्थः । भुवि ते अभिजाता इत्युक्त्या असुराणां भुवि जातत्वं भुवो भारकारणमित्युक्तं भवति ॥१७५॥

**वादिराजीया–** दुःसङ्गतिर्भवति भारवदेव नित्यं सतामपि हीत्यत्र हिशब्देन शिष्टाया गोर्दुष्टगृष्टिप्रसङ्गेन कण्ठे काष्ठभारवन्धनप्रसिद्धिं सूचयति । ह्यस्मत्प्रियार्थमित्यत्र हिशब्देन 'आप्तकामस्य का स्पृहा' इति श्रुतेः [माण्डूक्य.१खं.१५] दैत्यवधेन हरेः स्वप्रयोजनाभावप्रसिद्धिं सूचयति ॥१७५॥

**सत्याभिनवीया–** तत्रैव दुस्सङ्गतिर्भवति भारवदेव....इति श्लोकः । दुस्सङ्गतिर्भवति भारवदेव इत्यस्य दुस्सङ्गतिः भारवत् भवत्येव । पाषाणादिभारो यथा दुःखप्रदो भवति तथा दुःखप्रदो भवतीत्यर्थः । एतेन भारो भवतीत्यनेन पूर्णत्वात् भारवदिति वतिप्रत्ययो व्यर्थ इति परिहृतम् । दुस्सङ्गतेः प्रसिद्धपाषाणादिवत् भाररूपत्वस्य वाधितत्वात् ॥१७५॥

**वरदराजीया–** तदेव विवृणोति– **दुःसङ्गतिरिति** ॥ हे देव सतामपि सहिष्णुनामपि नित्यं दुष्टानां सङ्गतिः भारवदेव भवति । हि यस्मात् तस्मादित्यर्थः । हे ईश स्वामिन् नोऽस्माकं वाक्यं वक्ष्यमाणं श्रुणु । किं तद्वाक्यम् । पूर्वं पुरा भवता त्वया दितिसुता दैत्याः रणेषु युद्धेषु अस्माकं प्रियार्थं सुखार्थं हताः । ते अधुना इदानीं भुवि जाताः ॥१७५॥

**जनार्दनीया–** हे देव! नित्यं दुःसङ्गतिः दुष्टानां समागमः सतामपि सन्तः सहिष्णवः तेषामपि भारवदेव भवति । हि यस्मात् तस्मात् हे ईश! नोऽस्माकं वाक्यं वक्ष्यमाणं वचनं श्रुणु । भवता त्वया पूर्वं अस्माकं प्रियार्थं सन्तोषार्थं ये हताः ते अधुना इदानीं प्रजाताः ॥१७५॥

---

१. 'बलवान् वै विवादोऽयं सम्प्रवृत्तः सुदारुणः । देवासुराणाञ्च तदा घोरक्षयकरो महान् ॥ तेषां दायनिमित्तं वै सङ्ग्रामा बहवोऽभवन् । वाराहेऽस्मिन् दश द्वौ च षण्डामर्कोत्तराः स्मृताः ॥ नामतस्तु समासेन श्रुणुध्वं तान् विवक्षतः । प्रथमो नारसिंहस्तु द्वितीयश्चापि वामनः ॥ तृतीयः स तु वाराहश्चतुर्थोऽमृतमन्थनः । सङ्ग्रामः पञ्चमश्चैव सुघोरस्तारकामयः ॥ षष्ठो ह्याडीबकस्तेषां सप्तमस्त्रैपुरः स्मृतः । अन्धकारोऽष्टमस्तेषां ध्वजश्च नवमः स्मृतः ॥ वार्तश्च दशमो ज्ञेयस्ततो हालाहलः स्मृतः । स्मृतो द्वादशमस्तेषां घोरकोलाहलोऽपरः ।..' इति वायुपुराणे.उत्तरखं.३५.७१ ।

**ताम्रपर्णीया–** ।। **सतामपीति** ।। 'तितिक्षवः कारुणिका'[भा.३.२६.] इत्याद्युक्तसहिष्णुत्वादि-सल्लक्षणवतामपीत्यर्थः ।।१७५।।

**चट्टि–** तदेव विवृणोति– **दुस्सङ्गतिरिति** ।। हे देव दुस्सङ्गतिः दुष्टानां समागमः सतामपि सन्तः सहिष्णवस्तेषामपि भारवदेव भवति । हि यस्मात् तस्मात् हे ईश स्वामिन् नो अस्माकं वाक्यं वक्ष्यमाणं वचनं श्रुणु । भवता त्वया पूर्वं रणेष्वस्माकं प्रीत्यर्थं ये दितिसुताः हतास्ते अधुना इदानीं भुव्यखिलाः प्रजाताः ।।१७५।।

**आसीत् पुरा दितिसुतैरमरोत्तमानां सङ्ग्राम उत्तमगजाश्वरथद्विपद्भिः ।**
**अक्षोहिणीशतमहौघमहौघमेवं सैन्यं सुरात्मकमभूत् परमास्त्रयुक्तम् ।**
**तस्मान्महौघगुणमास महासुराणां सैन्यं शिलागिरिमहास्त्रधरं सुघोरम् ।।१७६।।**

**व्यासतीर्थीया–** हीति प्रकृतं देवासुरसङ्ग्रामं विवृण्वन्नाह– **आसीदिति** ।।१७६।।

**वेदाङ्गतीर्थीया–** अक्षौहिणीशतमहौघमहौघं अक्षौहिणीशतमहौघमिति सङ्ख्यया उत्तरोत्तरगणने महौघसङ्ख्यापरिमितम् । महौघगुणं महौघादधिकं तदेषां देवासुराणाम् ।।१७६।।

**वादिराजीया–** अक्षौहिणीशतमहौघमहौघमित्यत्र अक्षौहिणीशतेन सहितं महौघानां महौघं यस्मिन् तत्तथोक्तम् । यद्वा अक्षौहिणीशतेन सहितमेकं महौघं पुनरेकं महौघं चेति सङ्ख्या यस्मिंस्तत्तथोक्तम् ।।१७६।।

**मधुसूदनीया–** ।। **आसीत्पुरेति** ।। पुरा कृतेऽतीते सतीत्यर्थः । सङ्ग्रामः तारकामयरण इत्यर्थः । तथाचोक्तं कृष्णावतारप्रसङ्गे 'वृत्ते वृत्रवधेऽतीव वर्तमाने कृते युगे । आसीत् त्रैलोक्यविख्यातः सङ्ग्रामस्तारकामयः ।।' इति हरिवंशे [१.४२.१०] ।।१७६।।

**वरदराजीया–** उक्तमेव विवेचयन्तीत्याह– **आसीदिति** ।। दितिसुतैः सह अमरोत्तमानां सङ्ग्रामो युद्धमासीत् । तत्र उत्तमगजाश्वरथद्विपद्भिः उत्तमैः हस्त्यश्वरथपदातिभिः चतुर्भिरङ्गैर्युक्तं सुरासुरात्मकं सैन्यम् । तत्र देवसम्बन्धिसैन्यं कियत्सङ्ख्याकम् ? तत्र अक्षौहिणीशतोत्तरश्च तन्महौघश्च तेन गुणितं महौघं सङ्ख्याविशेषो यत्र तत्सैन्यम् । पुनः कथम्भूतं परमैरस्त्रैर्युक्तम् । तथा असुराणां सैन्यं तस्मात् सुरसैन्यात् तदपेक्षया महौघेन गुणितम् । पुनः कथम्भूतं शिलाः गिरीन् महास्त्राणि धरत इति तथा । अत एव सुघोरं अतिभयङ्करम् ।।१७६।।

**अनन्तभट्टीया–** पूर्वं हता इत्येतद्विवृणोति– **अक्षौहिणीति** ।। अक्षोहिणीशतोत्तरं महोघगुणितं महौघसङ्ख्याकम् ।।१७६।।

**जनार्दनीया**– पूर्वं हता इत्येतद्विवृणोति– **असीदिति** ।। पुरा दितिसुतैः सह अमरोत्तमानां सङ्ग्रामः युद्धं आसीत् । तत्र देवासुराणां सैन्यसङ्ख्यामाह– **उत्तमेत्यादिना** ।। द्विपदः पदातयः, उत्तमाश्च ते गजाश्च रथद्विपदश्च तैः, सहितम् । अक्षौहिणीशतमहौघमहौघं अक्षौहिणीनां शतं अक्षौहिणीशतं, अक्षौहिणीशतेन गुणितं च तत् महौघं च, तादृशमहौघेन गुणितं महौघम् । एतत्सङ्ख्याविशेषपरिमितं परमास्त्रैः दिव्यमन्त्रैः युक्तं सुरात्मकं दैवसम्बन्धि सैन्यं अभूत् । तस्मात् देवसैन्यसङ्ख्यायाः महौघेन गुणितम् ।।१७६।।

**ताम्रपर्णीया**– उत्तमाः गजाश्वरथद्विपदा येषां तैरिति सुतैरित्यन्वयः– **अक्षौहिणीति** ।। अक्षौहिणीनां यत् शतं महौघं तस्य महौघसङ्ख्यात्मकमित्यर्थः । गन्धर्वादिदेवानुचरविवक्षया तद्गणीयानां तत्पुत्रत्वेन जननात् तद्विवक्षया वा देवानां एतत्सङ्ख्यावत्त्वं बोध्यम् । [देवानां नवकोटित्वेऽपि तद्गणनीयानां तत्र जननोपपत्तेः इयमुक्तिरिति ध्येयम् । यद्वा स गन्धर्वादिदेवानुचराणां बहुत्वादियमुक्तिरिति] ।।१७६।।

**चन्द्रि**– पूर्वं हता इत्येतद्विवृणोति– **आसीदिति** ।। पुरा कृते अतीते सतीत्यर्थः । दितिसुतैः सहामरोत्तमानां देवोत्तमानां सङ्ग्रामः तारकामयः रणः आसीत् । तथा चोक्तं कृष्णावतारप्रसङ्गे– 'वृत्ते वृत्रवधेऽतीते वर्तमाने कृते युगे । आसीत् त्रैलोक्यविख्यातः सङ्ग्रामः तारकामयः ।।' इति हरिवंशे । तत्र देवासुराणां सैन्ये सङ्ख्यामाह– **उत्तमेति** ।। द्विपदः पदातयः उत्तमाश्च ते गजाश्च रथद्विपदश्च तैस्सहितं, परमास्त्रैः दिव्यमन्त्रैः युक्तं, सुरात्मकं देवसम्बन्धि सैन्यम् । अक्षौहिणीशतमहौघमहौघं अक्षौहिणीनां शतं अक्षौहिणीशतम्, अक्षौहिणीशतेन गुणितं च तन्महौघं च, तादृशमहौघेन गुणितं महौघम् । एतत्सङ्ख्याविशेषपरिमितमेवाभूत् । अक्षौहिणीसङ्ख्या भारते उक्ता– अक्षौहिण्यः प्रसङ्ख्यानं रथानां दन्तिनां तथा । एकविंशतिसाहस्रं शतान्यष्टौ च सप्ततिः ।। ज्ञेयं शतसहस्रं तु सहस्राणि तथा नव । नराणामपि पञ्चाशच्छतानि त्रीणि चैव हि ।। पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च । दशोत्तराणि षट्षष्ठीरेवमक्षौहिणीं बुधाः ।। इति ।।१७६।।

**तेषां रथाश्च बहुनल्वपरिप्रमाणाः देवासुरप्रवरकार्मुकबाणपूर्णाः ।**
**नानाम्बराभरणवेषवरायुधाढ्या देवासुराः ससृपुराशु परस्परं ते ।।१७७।।**

**व्यासतीर्थीया**– तेषां देवासुराणाम् । नल्वः किष्कुचतुःशतम् । किष्कुर्हस्तः ।।१७७।।

**वेदाङ्गतीर्थीया**– 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुष्टयम्' । परस्परं ससृपुः ।।१७७।।

**वादिराजीया**– तेषां रथाश्चेत्यत्र तेषां देवासुराणां रथाः बहुनल्वपरिमाणाः । 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम्' इत्यभिधानात् चतुःशतहस्तपरिमाणं नल्व इत्युच्यते । तादृशबहुनल्वानां परितः प्रमाणं येषां ते तथोक्ताः ।।१७७-१८४।।

**मधुसूदनीया–** ।। **बहुनल्वपरिप्रमाण इति** ।। किष्कुचतुश्शतं नल्व इत्यर्थः । किष्कुस्तु वितस्तिरित्यर्थः । हस्त इति वा । 'किष्कुर्हस्ते वितस्तौ च' इत्यभिधानम् । 'चतुर्विंशाङ्गुलं किष्कुः नल्वः किष्कुचतुश्शतम्' इत्यभिधानम् ।।१७७-२०२।।

**वरदराजीया–** तेषां देवासुराणां रथाः बहुनल्वपरिमाणाः । हस्तात्मकानां वितस्त्यात्मकानां वा किष्कूणां चतुश्शतं शतचतुष्टयं नल्व इत्युच्यते । 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम्' इत्याभिधानात् । बहवो नल्वा परिप्रमाणं येषामिति तथोक्ताः । देवासुरैस्तदीयैः श्रेष्ठैः कार्मुकबाणैश्च पूर्णाश्चासन्नित्यर्थः । देवाश्चासुराश्च देवासुराः ते परस्परं ससृपुः युद्धार्थं सङ्घटितवन्तः । कथम्भूताः नानाविधैः वस्त्रालङ्कारवेषोत्तमास्त्रैः आढ्याः श्रेष्ठा इत्यर्थः ।।१७७।।

**अनन्तभट्टीया–** नल्वः किष्कुचतुःशतम् ।।१७७।।

**जनार्दनीया–** देवासुराणां सैन्यसङ्ख्यामुक्त्वा रथपरिमाणमाह– **तेषामिति** ।। तेषां देवासुराणाम् । बहवश्च ते नल्वाश्च तथा, तेषां परिमाणं येषां तथा । देवासुराणां प्रवरैः श्रेष्ठैः कार्मुकैश्चापैर्बाणैः पूर्णाः । रथा असन्निति शेषः । 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम्' इत्याभिधानात् । नाना बहुप्रकारैः अम्बरैः वस्त्रैः आभरणैर्भूषणैः वेषो येषां ते तथा, वरायुधैः आढ्याः श्रेष्ठाः, नानाम्वराभरणवेषाश्च ते वरायुधाढ्याश्चेति । ते देवासुराः परस्परं अन्योन्यं ससृपुः युद्धं कर्तुं प्रापुः ।।१७७।।

**ताम्रपर्णीया–** नल्वं किष्कुचतुःशतम् । किष्कुर्हस्तः । ससृपुः सङ्गता अभवन्निति सम्बन्धः ।।१७७।।

**चट्टि–** शिलागिरिमहास्त्रधरं सुघोरमतिभयङ्करं महासुराणां सैन्यं तस्माद् देवसैन्यसङ्ख्यायाः महौघेन गुणितमास । देवासुराणां सैन्यसङ्ख्यामुक्त्वा रथपरिमाणमाह– **तेषामिति** ।। तेषां देवासुराणां प्रवरैः श्रेष्ठैः कार्मुकैश्चापैः बाणैश्च पूर्णास्तेषां देवासुराणां रथाश्च । बहुनल्वपरिमाणाः हस्तात्मकानां वितस्त्यात्मकानां वा । किष्कूणां चतुःशतं नल्व इत्युच्यते । 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम्' इत्यभिधानम् । बहवश्च ते नल्वाश्च बहुनल्वाः । बहुनल्वानां परिप्रमाणं एषां ते बहुनल्वपरिप्रमाणाः, आसन्नतिति शेषः । नाना बहुप्रकारैः अम्बरैः वस्त्रैः आभरणैः भूषणैः वेषो येषां ते तथा । वरायुधैराढ्याः श्रेष्ठाः नानाम्बराभरणवेषाश्च ते वरायुधाढ्याश्चेति तथा । ते देवासुराः परस्परं अन्योन्यं आशु ससृपुः युद्धं कर्तुं प्रापुः ।।१७७।।

**जघ्नुर्गिरीन्द्रतलमुष्टिमहास्त्रशस्त्रैश्चक्रुर्नदीश्च रुधिरौघवहा महौघम् ।**
**तत्र स्म देववृषभैरसुरेशचम्वा युद्धे निषूदित उतौघबलैः शतांशः ।।१७८।।**

**व्यासतीर्थीया–** ओघः समूहः । ओघवलैः समूहवलैः बलसमूहैरित्यर्थः ।।१७८-१८७।।

**वेदाङ्गतीर्थीया–** ओघबलैः वृन्दस्थितबलैः 'ओघो वृन्दे अम्भसां रये' इत्यभिधानम् ।।१७८।।

**वादिराजीया–** रुधिरौघवहा महौघमित्यत्र महान्नौघः प्रवाहो यथा भवति तथा महौघम् । रुधिरौघवहाः रुधिरसमूहेन प्रवहन्तीः । ओघवलाच्छतांश इत्यत्र ओघवलात् पुञ्जीभूयबलात् ओघसङ्ख्याकबलाद्वा ।।

**वरदराजीया–** गिरीन्द्रैः पर्वतश्रेष्ठैः तलैः करतलैः मुष्टिभिः महास्त्रैः शस्त्रैश्च जघ्नुः ताडितवन्तः । महौघं महौघसङ्ख्याका रुधिरौघवहा रक्तसमूहवाहाः नदीश्चक्रुः । तत्र युद्धे [अथ अनन्तरं] ओघबलैः महाबलैः देववृषभैः देवश्रेष्ठैः असुरेशानां असुरश्रेष्ठानां चम्वा सेनायाः शतांशः शततमो अंशः निषूदितः संहृतः ।।१७८।।

**अनन्तभट्टीया–** ।। **गिरीन्द्रेति** ।। गिरीन्द्रवत् दृढैरस्त्रमुष्टिभिः महास्त्रशस्त्रैश्च रुधिरौघवहाः रक्तसमुद्रवहाः महौघं महौघसङ्ख्याकं चक्रुः ।...बलैर्देववृषभैः असुरेशचम्वाः शतांशः ।।१७८-१८४।।

**जनार्दनीया–** गिरीन्द्रैः महापर्वतैः तलैः करपादतलैः मुष्टिभिः महास्त्रैः मन्त्रयुक्तायुधैः शस्त्रैः खड्गादिभिः । निजघ्नुः परस्परं ताडयामासुः । महौघं महौघसङ्ख्याकाः । रुधिरौघं रक्तसमूहं वहाः नदीश्चक्रुः । तत्र युद्धे ओघबलैर्महाबलैः परम्परायुक्तसेनावद्भिः । 'ओघः परम्परायां स्यात्' इत्यभिधानम् । देववृषभैः देवश्रेष्ठैः असुरेशानां चम्वाः सेनायाः शतांशः शतभागेषु एकभाग इत्यर्थः । निषूदितः निहतः ।।१७८।।

**ताम्रपर्णीया–** महौघाः महौघसङ्ख्याकाः ओघः समूहः पुञ्जीभूतबलैरिति यावत् [ओघबलैः ओघः समूहः । समूहबलैः बलसमूहैरिति] ।।१७८।।

**चट्टि–** गिरीन्द्रैः पर्वतश्रेष्ठैः, तलैः करपादतलैः, मुष्टिभिः, महास्त्रैः मन्त्रयुक्तायुधैः, शस्त्रैः खड्गादिभिः जघ्नुः परस्परं ताडयामासुः । महौघं महौघसङ्ख्याकाः रुधिरस्य रक्तस्य ओघं समूहं वहन्तीति वहाः नदीश्च नदीः चक्रुः । तत्र युद्धे ओघबलैर्महाबलैः बलसमूहवद्भिः वा देवर्षभैः देवश्रेष्ठैः असुरेशानामसुरश्रेष्ठानां चमूः सेना तस्याः शतांशः शतभागेष्वेकभाग इत्यर्थः । निषूदितः निहतः ।।१७८।।

**अथाऽत्मसेनामवमृद्यमानां वीक्ष्यासुरः शम्बरनामधेयः ।**
**ससार मायाविदसह्यमायो वरादुमेशस्य सुरान् विमोहयन् ।।१७९।।**

**वरदराजीया–** अथानन्तरं शम्बरनामधेयः असुरः आत्मनः स्वस्य सेनां अवमृद्यमानां हन्यमानां वीक्ष्य उमेशस्य वरात् मायावित् अत एव । असह्या सोढुं अशक्या माया इन्द्रजालमाया यस्यासौ तथोक्तः । सुरान् देवान् विमोहयन् मूर्च्छयन् मायासहस्रेण इति अत्रापि सम्बध्यते । ससार प्राप्तवान् ।।१७९।।

**मधुसूदनीया–** ।। **बहुनल्वपरिप्रमाण इति** ।। किष्कुचतुश्शतं नल्व इत्यर्थः । किष्कुस्तु वितस्तिरित्यर्थः । हस्त इति वा । 'किष्कुर्हस्ते वितस्तौ च' इत्यभिधानम् । 'चतुर्विंशाङ्गुलं किष्कुः नल्वः किष्कुचतुश्शतम्' इत्यभिधानम् ।।१७७-२०२।।

**वरदराजीया–** तेषां देवासुराणां रथाः बहुनल्वपरिमाणाः । हस्तात्मकानां वितस्त्यात्मकानां वा किष्कूणां चतुश्शतं शतचतुष्टयं नल्व इत्युच्यते । 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम्' इत्याभिधानात् । बहवो नल्वा परिप्रमाणं येषामिति तथोक्ताः । देवासुरैस्तदीयैः श्रेष्ठैः कार्मुकबाणैश्च पूर्णाश्चासन्नित्यर्थः । देवाश्चासुराश्च देवासुराः ते परस्परं ससृपुः युद्धार्थं सङ्घटितवन्तः । कथम्भूताः नानाविधैः वस्त्रालङ्कारवेषोत्तमास्त्रैः आढ्याः श्रेष्ठा इत्यर्थः ।।१७७।।

**अनन्तभट्टीया–** नल्वः किष्कुचतुःशतम् ।।१७७।।

**जनार्दनीया–** देवासुराणां सैन्यसङ्ख्यामुक्त्वा रथपरिमाणमाह– **तेषामिति** ।। तेषां देवासुराणाम् । बहवश्च ते नल्वाश्च तथा, तेषां परिमाणं येषां तथा । देवासुराणां प्रवरैः श्रेष्ठैः कार्मुकैश्चापैर्बाणैः पूर्णाः । रथा असन्निति शेषः । 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम्' इत्याभिधानात् । नाना बहुप्रकारैः अम्बरैः वस्त्रैः आभरणैर्भूषणैः वेषो येषां ते तथा, वरायुधैः आढ्याः श्रेष्ठाः, नानाम्बराभरणवेषाश्च ते वरायुधाढ्याश्चेति । ते देवासुराः परस्परं अन्योन्यं ससृपुः युद्धं कर्तुं प्रापुः ।।१७७।।

**ताम्रपर्णीया–** नल्वं किष्कुचतुःशतम् । किष्कुर्हस्तः । ससृपुः सङ्गता अभवन्निति सम्बन्धः ।।१७७।।

**चट्टि–** शिलागिरिमहास्त्रधरं सुघोरमतिभयङ्करं महासुराणां सैन्यं तस्माद् देवसैन्यसङ्ख्यायाः महौघेन गुणितमास । देवासुराणां सैन्यसङ्ख्यामुक्त्वा रथपरिमाणमाह– **तेषामिति** ।। तेषां देवासुराणां प्रवरैः श्रेष्ठैः कार्मुकैश्चापैः बाणैश्च पूर्णास्तेषां देवासुराणां रथाश्च । बहुनल्वपरिमाणाः हस्तात्मकानां वितस्त्यात्मकानां वा । किष्कूणां चतुःशतं नल्व इत्युच्यते । 'किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम्' इत्यभिधानम् । बहवश्च ते नल्वाश्च बहुनल्वाः । बहुनल्वानां परिप्रमाणं एषां ते बहुनल्वपरिप्रमाणाः, आसन्नितिति शेषः । नाना बहुप्रकारैः अम्बरैः वस्त्रैः आभरणैः भूषणैः वेषो येषां ते तथा । वरायुधैराढ्याः श्रेष्ठाः नानाम्बराभरणवेषाश्च ते वरायुधाढ्याश्चेति तथा । ते देवासुराः परस्परं अन्योन्यं आशु ससृपुः युद्धं कर्तुं प्रापुः ।।१७७।।

**जघ्नुर्गिरीन्द्रतलमुष्टिमहास्त्रशस्त्रैश्चक्रुर्नदीश्च रुधिरौघवहा महौघम् ।**
**तत्र स्म देववृषभैरसुरेशचम्वा युद्धे निषूदित उतौघबलैः शतांशः ।।१७८।।**

**व्यासतीर्थीया–** ओघः समूहः । ओघबलैः समूहबलैः बलसमूहैरित्यर्थः ।।१७८-१८७।।

**वेदाङ्गतीर्थीया–** ओघबलैः वृन्दस्थितबलैः 'ओघो वृन्दे अम्भसां रये' इत्यभिधानम् ।।१७८।।

**वादिराजीया–** रुधिरौघवहा महौघमित्यत्र महानोघः प्रवाहो यथा भवति तथा महौघम् । रुधिरौघवहाः रुधिरसमूहेन प्रवहन्तीः । ओघबलाच्छतांश इत्यत्र ओघबलात् पुञ्जीभूयबलात् ओघसङ्ख्याकबलाद्वा ।।

**वरदराजीया–** गिरीन्द्रैः पर्वतश्रेष्ठैः तलैः करतलैः मुष्टिभिः महास्त्रैः शस्त्रैश्च जघ्नुः ताडितवन्तः । महौघं महौघसङ्ख्याका रुधिरौघवहा रक्तसमूहवाहाः नदीश्चक्रुः । तत्र युद्धे [अथ अनन्तरं] ओघबलैः महाबलैः देववृषभैः देवश्रेष्ठैः असुरेशानां असुरश्रेष्ठानां चम्वा सेनायाः शतांशः शततमो अंशः निषूदितः संहृतः ।।१७८।।

**अनन्तभट्टीया–** ।। गिरीन्द्रेति ।। गिरीन्द्रवत् दृढैरस्त्रमुष्टिभिः महास्त्रशस्त्रैश्च रुधिरौघवहाः रक्तसमुद्रवहाः महौघं महौघसङ्ख्याकं चक्रुः ।...बलैर्देववृषभैः असुरेशचम्वाः शतांशः ।।१७८-१८४।।

**जनार्दनीया–** गिरीन्द्रैः महापर्वतैः तलैः करपादतलैः मुष्टिभिः महास्त्रैः मन्त्रयुक्तायुधैः शस्त्रैः खड्गादिभिः । निजघ्नुः परस्परं ताडयामासुः । महौघं महौघसङ्ख्याकाः । रुधिरौघं रक्तसमूहं वहाः नदीश्चक्रुः । तत्र युद्धे ओघबलैर्महाबलैः परम्परायुक्तसेनावद्भिः । 'ओघः परम्परायां स्यात्' इत्यभिधानम् । देववृषभैः देवश्रेष्ठैः असुरेशानां चम्वाः सेनायाः शतांशः शतभागेषु एकभाग इत्यर्थः । निषूदितः निहतः ।।१७८।।

**ताम्रपर्णीया–** महौघाः महौघसङ्ख्याकाः ओघः समूहः पुञ्जीभूतबलैरिति यावत् [ओघबलैः ओघः समूहः । समूहबलैः बलसमूहैरिति] ।।१७८।।

**चट्टि–** गिरीन्द्रैः पर्वतश्रेष्ठैः, तलैः करपादतलैः, मुष्टिभिः, महास्त्रैः मन्त्रयुक्तायुधैः, शस्त्रैः खड्गादिभिः जघ्नुः परस्परं ताडयामासुः । महौघं महौघसङ्ख्याकाः रुधिरस्य रक्तस्य ओघं समूहं वहन्तीति वहाः नदीश्च नदीः चक्रुः । तत्र युद्धे ओघबलैर्महाबलैः बलसमूहवद्भिः वा देवर्षभैः देवश्रेष्ठैः असुरेशानामसुरश्रेष्ठानां चमूः सेना तस्याः शतांशः शतभागेष्वेकभाग इत्यर्थः । निषूदितः निहतः ।।१७८।।

**अथाऽत्मसेनामवमृद्यमानां वीक्ष्यासुरः शम्बरनामधेयः ।**
**ससार मायाविदसह्यमायो वरादुमेशस्य सुरान् विमोहयन् ।।१७९।।**

**वरदराजीया–** अथानन्तरं शम्बरनामधेयः असुरः आत्मनः स्वस्य सेनां अवमृद्यमानां हन्यमानां वीक्ष्य उमेशस्य वरात् मायावित् अत एव । असह्या सोढुं अशक्या माया इन्द्रजालमाया यस्यासौ तथोक्तः । सुरान् देवान् विमोहयन् मूर्च्छयन् मायासहस्रेण इति अत्रापि सम्बध्यते । ससार प्राप्तवान् ।।१७९।।

**जनार्दनीया–** मायाः इन्द्रजालमायाः वेत्तीति तथा । उमेशस्य वरादसह्या सोढुमशक्या माया यस्य तथा । अवमृद्यमानां पीड्यमानाम् । वीक्ष्य, मायानां सहस्रेण सुरान् विमोहयन् । ससार प्राप ।।

**चट्टि–** अथानन्तरं उमेशस्य वरात् माया इन्द्रजालमाया वेत्तीति मायावित् । अत एव असह्या सोढुमशक्या माया यस्य स तथा । शम्बरनामधेयो असुरः स्वसेनामवमृद्यमानां पीड्यमानां वीक्ष्य मायानां सहस्रेण सुरान् विमोहयन् ससार प्राप ।।१७९।।

**मायासहस्रेण सुराः [1]समर्दिताः रणे विषेदुः शशिसूर्यमुख्याः ।**
**तान् वीक्ष्य वज्री परमां तु विद्यां स्वयम्भुदत्तं प्रयुयोज वैष्णवीम् ।।१८०।।**

**वरदराजीया–** रणे युद्धे मायासहस्रेण बहुमायाभिः समर्दिताः पीडिताः शशिसूर्यमुख्याः चन्द्रादित्यपूर्वाः सुराः विषेदुः विषादं प्राप्ताः । तान् शशिसूर्यमुख्यान् वीक्ष्य दृष्ट्वा वज्री इन्द्रः स्वयम्भुदत्तां वैष्णवीं विष्णुदेवताकां अत एव परमाख्यविद्यां परमविद्यां प्रयुयोज प्रयुक्तवान् ।।१८०।।

**अनन्तभट्टीया–** विद्यां विज्ञानास्त्रम् ।।१८०-१८६।।

**जनार्दनीया–** रणे मायासहस्रेण विमर्दिताः शशिसूर्यमुख्याः सुराः विषेदुः श्रान्ता बभूवुः । वज्री इन्द्रः तान् देवान् वीक्ष्य, वैष्णवीं विष्णुदेवताकां परमाख्यविद्यां पराह्वयविद्यां, वैष्णवीमायामिति यावत् । प्रयुयोज प्रयोगं कृतवान् ।।१८०।।

**ताम्रपर्णीया–** वैष्णवीं विष्णुदेवताकाम् ।।१८०-१८६।।

**चट्टि–** शशिसूर्यमुख्याः सुराः रणे मायासहस्रेण समर्दितास्सन्तः विषेदुः श्रान्ताः बभूवुः । वज्री इन्द्रः तान् देवान् वीक्ष्य स्वयम्भुदत्तां ब्रह्मदत्तां वैष्णवीं विष्णुदेवताकां अत एव परमाख्यविद्यां परमाह्वयविद्यां प्रयुयोज प्रयुक्तवान् ।।१८०।।

**समस्तमायापहया तयैव वराद् रमेशस्य सदाऽप्यसह्यया ।**
**माया विनेशुर्दितिजेन्द्रसृष्टा [2]वारीशवह्नीन्दुमुखाश्च मोचिताः ।।१८१।।**

**वादिराजीया–** माया विनेशुरित्यत्र विनेशुः । 'नश् अदर्शने' इति धातोः नष्टा बभूवुः ।।१८१।।

**वरदराजीया–** समस्तमायाः अपहन्तीति तथोक्ता तया । रमेशस्य वरात् सर्वदापि असह्यया वैष्णवाख्यया मायया दितिजेन्द्रेण शम्बरेण सृष्टा प्रयुक्ताः माया विनेशुः विनाशं प्राप्ताः । वारीशो वरुणः, वह्नीन्द्रः प्रधानवह्निश्च मुख्यः येषां ते तथा । ते मोचिताः । मायाबन्धादिति शेषः ।।१८१।।

---

१. 'विमर्दिताः' इति जनार्दनीयपाठः । २. 'वारीशवह्नीन्द्रमुखाश्च' इति वरदराजीयपाठः ।

**जनार्दनीया–** समस्तमायाः अपहन्ति नाशयतीति तथा, तया । वरादप्यसह्यया अविषह्यया तया वैष्णवमायया मायाः विनेशुः नाशं प्रापुः । वारीशो वरुणः ।।१८१।।

**चट्टि–** समस्तमायाः अपहन्ति नाशयतीति समस्तमायापहा तया । रमेशस्य वरात् सदापि असह्यया अविषह्यया तया वैष्णव्या माययैव दितिजेन्द्रेण दैत्येन सृष्टाः मायाः समस्तमायाः विनेशुः नाशं प्रापुः । वारीशवह्नीन्दुमुखाश्च मोचिताः मायाबन्धादिति शेषः ।।१८१।।

**यमेन्दुसूर्यादिसुरास्ततोऽसुरान् निजघ्नुराप्यायितविक्रमास्तदा ।**
**सुरेश्वरेणोर्जितपौरुषा बहून् वज्रेण वज्री निजघान शम्बरम् ।।१८२।।**

**वेदाङ्गतीर्थीया–** सुरेश्वरेणाप्यायितविक्रमाः वर्धितविक्रमाः अत एव ऊर्जितपौरुषाः ।।१८२।।

**वादिराजीया–** निजघान शम्वरमित्यत्र इन्द्रेण हतः शम्वरः आदिशम्वरः कृष्णावतारे हनिष्यमाणः शम्बरः अन्य इति विवेकः ।।१८२-१९०।।

**वरदराजीया–** ततोऽनन्तरं यमेन्दुसूर्याः आदयो येषां ते सुरास्तदा असुरमायाविनाशे स्वतः ऊर्जितपौरुषाः वा सुरेश्वरेण इन्द्रेण आप्यायितविक्रमाः उद्बोधितपराक्रमाः बहून् असुरान् निजघ्नुः । वज्री इन्द्रो वज्रेण स्वायुधेन शम्वरं निजघान घातितवान् ।।१८२।।

**अनन्तभट्टीया–** आप्यायितविक्रमाः उपोद्बलितविक्रमाः । स्वतः ऊर्जितपौरुषाः स्वतोऽप्यूर्जितपौरुषाः ।।

**जनार्दनीया–** ततः मायाबन्धात् मोचनानन्तरं सुरेश्वरेण आप्यायिताः विक्रमाः वर्धितपराक्रमाः । ऊर्जितपौरुषाः स्वतोऽपि उत्कृष्टपराक्रमाः यमादयः बहून् असुरान्निजघ्नुः । वज्री इन्द्रः वज्रेण ।।१८२।।

**चट्टि–** ततोऽनन्तरं सुरेश्वरेणेन्द्रेण आप्यायितविक्रमाः वर्धितपराक्रमाः ऊर्जितपौरुषाः स्वतोऽप्युत्कृष्टपराक्रमाः यमादयाः सुराः तथा बहूनसुरान् निजघ्नुः । वज्री इन्द्रः वज्रेण शम्वरं निजघान ।।

**तस्मिन् हते दानवलोकपाले दितेः सुता दुद्रुवुरिन्द्रभीषिताः**
**तान् विप्रचित्तिर्विनिवार्य धन्वी ससार शक्रप्रमुखान् सुरोत्तमान् ।।१८३।।**

**वरदराजीया–** दानवलोकपाले असुरजनस्य पालके तस्मिन् शम्वरे हते सति । इन्द्रेण भीषिता भयं प्रापिताः दितेः सुता दैत्याः दुद्रुवुः पलाय्य गताः । विप्रचित्तिः तन्नामासुरः धन्वी धनुर्धरस्तान् पलायमानान् असुरान् विनिवार्य न गन्तव्यमिति निवार्य इन्द्रादीन् देवश्रेष्ठान् ससार योद्धुं प्राप्तवान् ।।

**जनार्दनीया–** दानवलोकपाले दैत्यजनरक्षके तस्मिन् शम्बरे हते सति इन्द्रेण भीषिताः भयं प्रापिताः । विप्रचित्तिनामा असुरः । तान् असुरान् विनिवार्य संस्थाप्येत्यर्थः ।।१८३।।

**चट्टि–** दानवलोकपाले असुरजनपालके तस्मिन् शम्बरे हते सति दितेः सुताः दैत्याः इन्द्रेण भीताः भयं प्रापिताः सन्तः दुद्रुवुः पलाय्य गताः । विप्रचित्तिस्तन्नामासुरः धन्वी धनुर्धरस्सन् पलायमानानसुरान् निवार्य शक्रप्रमुखान् सुरेश्वरान् देवश्रेष्ठान् ससार प्राप्तवान् ।।१८३।।

**वरादजेयेन [१]विधातुरेव सुरोत्तमांस्तेन शरैर्निपातितान् ।**
**निरीक्ष्य शक्रं च विमोहितं द्रुतं न्यवारयत् तं पवनः शरौघैः ।।१८४।।**

**वादिराजीया–** विमोहितं द्रुतमित्यत्र द्रुतं पलायितम् ।।१८४-१९३।।

**वरदराजीया–** विधातुः ब्रह्मणो वरादजेयेन जेतुमशक्येन अत एव तेन विप्रचित्तिना शरैः बाणैर्निपातितान् देवश्रेष्ठान् निरीक्ष्य शक्रं च मोहितं निरीक्ष्य दृतं वेगेन पवनो मुख्यप्राणः शरौघैः बाणसमूहैः तं विप्रचित्तिं न्यवारयत् निवारितवान् ।।१८४।।

**जनार्दनीया–** तेन विप्रचित्तिना निपातितान् सुरोत्तमान् वीक्ष्य, विमोहितं शक्रं च वीक्ष्य, पवनो वायुः तं विप्रचित्तिम् ।।१८४।।

**चट्टि–** विधातुः ब्रह्मणः वरादेव अजेयेन जेतुमशक्येन तेन विप्रचित्तिना शरैः वाणैः निपातितान् सुरोत्तमान् विमोहितं शक्रं च निरीक्ष्य द्रुतं वेगेन पवनो वायुः शरौघैः बाणसमूहैः तं विप्रचित्तिं न्यवारयत् निवारितवान् ।।१८४।।

**अस्त्राणि तस्यास्त्रवरैर्निवार्य चिक्षेप तस्योरसि काञ्चनीं गदाम् ।**
**विचूर्णितोऽसौ[२] निपपात मेरौ महाबलो वायुबलाभिनुन्नः ।।१८५।।**

**वरदराजीया–** अस्त्रवरैः तस्य विप्रचित्तेरस्त्राणि निवार्य परिहृत्य तस्य विप्रचित्तेः उरसि हृदये काञ्चनीं स्वर्णमयीं गदां चिक्षेप प्रक्षिप्तवान् । महाबलोऽपि असौ विप्रचित्तिः विचूर्णितः चूर्णीकृतो वायोर्बलेन अभिनुन्नः प्रेरितः मेरौ मेरुपर्वतस्य मूर्ध्नि पपात ।।१८५।।

**अनन्तभट्टीया–** काञ्चनीं स्वर्णमयीम् ।।१८५।।

---

१. 'विप्रचित्तिस्तु तत्रैव दनोर्वंशविवर्धनः । कश्यपस्यात्मजः श्रीमान् ब्रह्मणस्तेजसा समः ।। यष्टा क्रतुसहस्राणां वेदवित्तपसान्वितः । स्वयम्भुवा दत्तवरो वरदश्च स्वयम्भुवः ।। ईशित्वञ्च महत्वञ्च वशित्वञ्च महाद्युतेः ।।' इति हरिवंशे.३.५१.५०-५१ । अत्र टिप्पणीकाराः 'वरदश्च स्वयंभुवः' इत्यस्य ब्रह्मणो मान्यः इत्याहुः । लोकनाशाय प्रवृत्तः ब्रह्मवचनेन निवृत्तः इति पौराणिकी कथामनुसन्धाय एवमुक्तम् । इति वदन्ति ।

२. 'विप्रचित्तिं दुराधर्षं देवतानां भयङ्करम् । येन लोकत्रयं क्रोधात् त्रासितं स्वेन तेजसा ।। स रुद्रेण जितो पूर्वं निहतो मातरिश्वना ।।' इति भीष्मपर्वणि.९४.३२ ।

**जनार्दनीया**– तस्य विप्रचित्तेर्निवार्य । तस्य विप्रचित्तेः उरसि वक्षसि काञ्चनीं हेममयीं गदां चिक्षेप । नुन्नः प्रेरितः असौ विप्रचित्तिः ।।१८५।।

**भावचन्द्रिका**– वायोरपीश्वराज्ञया अस्त्रयुद्धस्य धर्मत्वेन वक्ष्यमाणत्वात् उपपन्नमस्त्राणीति ।।१८५।।

**चट्टि**– वायुस्तस्य विप्रचित्तेः अस्त्राणि अस्त्रवरैः निवार्य तस्य विप्रचित्तेः उरसि वक्षसि काञ्चनीं स्वर्णमयीं गदां चिक्षेप । महाबलोऽसौ विप्रचित्तिः विचूर्णितः सन् वायोः बलेन अभिनुन्नः प्रेरितः सन् मेरौ पर्वते निपपात ।।१८५।।

**अथाऽससादाऽऽशु स कालनेमिस्त्वदाज्ञया यस्य वरं ददौ पुरा ।**
**सर्वैरजेयत्वमजोऽसुरः[1] [2]ससहस्रशीर्षो द्विसहस्रबाहुयुक् ।।१८६।।**

**वेदाङ्गतीर्थीया**– सः असुरः सहस्रशीर्ष इत्यादिरूपकथनम् ।।१८६।।

**वरदराजीया**– अथ अनन्तरं स प्रसिद्धः कालनेमिः तन्नामा सर्वैरजेयत्वं वरं त्वदाज्ञया अजो ब्रह्मा यस्य यस्मै ददौ सोऽसुरः कालनेमिः सहस्राणि शीर्षाणि शिरांसि यस्यासौ तथा । द्विसहस्रैः बाहुभिर्युक्तश्च जात इत्यर्थः ।।१८६।।

**अनन्तभट्टीया**– अजः वरं ददौ ।।१८६।।

**जनार्दनीया**– अथ विप्रचित्तिनिपातानन्तरं अजः ब्रह्मा पुरा त्वदाज्ञया यस्य कालनेमिनः अजेयत्वं वरं ददौ । सहस्रशीर्षैः सहितः ससहस्रशीर्षः, द्विसहस्रबाहुभिर्युग् युक्तः, स असुरः कालनेमिः आशु आससाद प्राप । वायुमिति शेषः ।।१८६।।

**ताम्रपर्णीया**– ।। **अथाससादेति** ।। अत्रैकस्य सेत्यस्य प्रसिद्धेत्यर्थः । सोऽसुरः सहस्रशीर्षः द्विसहस्रबाहुयुक् इति कारकक्रियात्वमाश्रित्य पृथगन्वयो वा ।।१८६।।

**चट्टि**– अथानन्तरं सः प्रसिद्धः अजो ब्रह्मा पुरा त्वदाज्ञया यस्य कालनेमिनः सर्वैरजेयत्वं वरं ददौ । सहस्रं शीर्षाणि शिरांसि यस्य स तथा । द्विसहस्रबाहुभिरुद्युक्तः सोऽसुरः कालनेमिराशु आससाद । 'अजोऽसुरस्य' इति क्वचिद् पाठः ।।१८६।।

**तमापतन्तं प्रसमीक्ष्य मारुतस्त्वदाज्ञया दत्तवरस्त्वयैव ।**
**हन्तव्य इत्यस्मरदाशु हि त्वां तदाऽविरासीस्त्वमनन्तपौरुषः ।।१८७।।**

---

१. 'अजोऽसुरस्य' इति चट्टिटिप्पण्यां पाठान्तरम् ।

२. 'कालनेमिरिति ख्यातः शतशीर्षोऽनुदृश्यते । शतबाहुर्महाकायः पर्वताकारदर्शनः ।। ब्रह्मलब्धवरो रौद्रो दग्धशैलसमच्छविः । एकोदरो पादश्च एकग्रीवः सुरान्तकः ।।' इति वि.ध.पु.१.१२५.३-५

**वादिराजीया–** आशु त्वामस्मरद्धीति हिशब्देन अच्छिन्नधर्मतया मुख्यप्राणस्य विष्णुविषये विस्मृतिराहित्यप्रसिद्धिं सूचयति ॥१८७॥

**वरदराजीया–** मारुतः मुख्यप्राणः त्वदाज्ञया ब्रह्मणा दत्तो वरो यस्य सः । किमिति त्वयैव हरिणा हन्तव्य इति हेतोस्त्वां अस्मरत् वायुः । तदा तत्क्षण एव आविरासीः आविर्भूतोऽसि अनन्तपौरुषं पराक्रमो यस्य स तथा ॥१८७॥

**अनन्तभट्टीया–** दत्तवरः ब्रह्मदत्तवरः ॥१८७॥

**जनार्दनीया–** मारुतो वायुः तं कालनेमिं प्रसमीक्ष्य दृष्ट्वा, त्वदाज्ञया 'कालनेमये अवध्यत्वं देहि' इत्येवं रूपया तवाज्ञया । दत्तः वरो यस्य स तथा कालनेमिः । ब्रह्मणेति शेषः । त्वयैव हन्तव्य इति त्वदाज्ञया यो वरो दत्तः सोऽपि त्वदीय एव । हि यतः अत एव त्वयैव हन्तव्यः हन्तुं योग्यः इति भावेन यदा त्वां अस्मरत् सस्मार । तदा त्वं आशु अविलम्बेन आविः प्रकटः असीः अभवः । [ममापि इति स्यात्] तवापि तद्धनने शक्तिः कुत इत्यत आह– **अनन्तेति** ॥ अत एवेत्यर्थः ॥१८७॥

**ताम्रपर्णीया–** ॥ **त्वदाज्ञयेति** ॥ विप्रचित्तेः ब्रह्मवरसद्भावेऽपि प्रत्यक्षहर्याज्ञाया तत्राभावात् । अत्र सत्वात् त्वयैव हन्तव्य इत्यर्थः ॥१८७॥

**चट्टि–** मारुतो वायुरापतन्तं कालनेमिं प्रसमीक्ष्य दृष्ट्वा त्वदाज्ञया ब्रह्मणा दत्तः वरो यस्य सः कालनेमिः । त्वयैव हन्तव्यः हन्तुं योग्य इति भावेन त्वां अस्मरत् । तदा अनन्तपौरुषः त्वं आशु अविलम्बेन आविरासीः आविर्भूतोऽसि ॥१८७॥

**तमस्त्रशस्त्राणि बहूनि बाहुभिः प्रवर्षमाणं भुवनाप्तदेहम् ।**
**चक्रेण बाहून् विनिकृत्य कानि च न्यवेदयश्चाऽशु यमाय पापम् ॥१८८॥**

**व्यासतीर्थीया–** भुवनाप्तदेहं भुवनव्याप्तदेहम् ॥१८८-१८९॥

**वेदाङ्गतीर्थीया–** कानि च शिरांसि च ॥१८८॥

**वादिराजीया–** 'आप्लृ व्याप्तौ' इति धातोः भुवनव्याप्तदेहमित्यर्थः । विनिकृत्य कानि चेत्यत्र कानि शिरांसि ॥१८८-१९६॥

**वरदराजीया–** बाहुभिः बहूनि अस्त्राणि प्रवर्षमाणं विकीर्यमाणम् । भुवने लोके आप्तो प्राप्तः देहः यस्य स तथा । बाहून् कानि शिरांसि च विनिकृत्य छित्वा पापं पापरूपं यमाय मृत्यवे न्यवेदयः प्रापितवानसि ॥१८८॥

**अनन्तभट्टीया–** भुवनाप्तदेहं भुवनव्यापि देहम् ॥१८८॥

**जनार्दनीया–** बाहुभिः प्रवर्षमाणम् । भुवनं भूप्रदेशं आप्तः व्याप्तः देहो यस्य स तथा । तं कालनेमिं चक्रेण सुदर्शनेन बाहून् कानिचिच्छिरांसि च विनिकृत्य छित्वा यमाय मृत्यवे न्यवेदयः प्रार्पयः ॥१८८॥

**ताम्रपर्णीया–** कानि च शिरांसि च ॥१८८॥

**चट्टि–** बाहुभिः द्विसहस्रबाहुभिः बहूनि अस्त्रशस्त्राणि प्रवर्षमाणम् । भुवनं भूप्रदेशं आत्तो व्याप्तो देहो यस्य सः तथा तम् । पापं पापरूपमसुरं चक्रेण बाहून् कानि शिरांसि च विनिकृत्य छित्वा आशु शीघ्रं यमाय मृत्यवे न्यवेदयः प्रार्पयः ॥१८८॥

**ततोऽसुरास्ते निहता [१]अशेषास्त्वया त्रिभागा निहताश्चतुर्थम् ।**
**जघान वायुः पुनरेव जातास्ते [२]भूतले धर्मबलोपपन्नाः ॥१८९॥**

**वेदाङ्गतीर्थीया–** ततः कालनेमिवधानन्तरं ते असुराः अशेषाः [नि] हताः । केन के हता इत्यतस्तद्विभागमाह– **त्वयेत्यादिना** ॥१८९॥

**वरदराजीया–** एवं ते असुराः अशेषाः सर्वेऽपि निहताः । तद्विभागमाह– **त्वयेति** ॥ चतुर्धा विभक्तेषु त्रिभागाः त्रयो भागाः त्वया निहताः । चतुर्थं भागं वायुर्जघान । तर्हि भवदीयं कार्यं सम्पन्नमेवेत्यत आहुरित्याह– **पुनरेवेति** ॥ एतेषु निहता एव पुनः भूमितले प्रजाताः । तत्र धर्मैः बलैश्चोपपन्नाः ॥१८९॥

**अनन्तभट्टीया–** त्रिभागा हताः । असुराणां भागत्रयं निहतमित्यर्थः । चतुर्थं भागम् ॥१८९॥

**जनार्दनीया–** ततः कालनेमिवधानन्तरं अशेषाः सर्वे ते असुराः निहताः त्वया, वायुनेति शेषः । तत्र विभागं विविच्याह– **त्वयेत्यादिना** ॥ त्वया त्रिभागाः चतुर्षु भागेषु मध्ये त्रिभागा इत्यर्थः, निहताः । चतुर्थं अवशिष्टभागं वायुर्जघान । प्रकृते किमित्यत आह– **पुनरिति** ॥ ते असुराः धर्मेण बलेन उपपन्नाः युक्ताः सन्तः प्रजाताः ॥१८९॥

**ताम्रपर्णीया–** चतुर्थं भागं इति शेषः ॥१८९॥

---

१. 'ततो मुहूर्तमात्रेण पद्मानि दश केशवः । चकर्त मार्गे बहुभिर्विचरन् दैत्यसत्तमान् ॥' इति स्कान्दे.मा.खं.२कौ.खं. २०.५१ ।

२. 'देवासुरे हता ये च त्वसुरा ये महाबलाः । इहोत्पन्ना मनुष्येषु बाधन्ते सर्वमानवान् ॥' इति मत्स्यपुराणे.४७.२६

**चट्टि–** ततः कालनेमिवधानन्तरं अशेषाः सर्वे ते असुराः निहताः त्वया वायुनेति शेषः । तत्र विभागं विविच्याह– **त्वयेत्यादिना** ।। त्वया त्रिभागाः चतुर्भागेषु मध्ये त्रिभागा इत्यर्थः । निहताः । चतुर्थं भागं वायुर्जघान । प्रकृते किमित्यत आह– **पुनरिति** ।। ते असुराः धर्मेण बलेन उपपन्नाः युक्ताः सन्तः पुनर्भूतले एव प्रजाताः ।।१८९।।

**राज्ञां [1]महावंशसुजन्मनां तु तेषामभूद् धर्ममतिर्विपापा ।**
**शिक्षामवाप्य द्विजपुङ्गवानां त्वद्भक्तिरप्येषु हि काचन स्यात् ।।१९०।।**

**व्यासतीर्थीया–** काचन अल्पा ।।१९०।।

**वेदाङ्गतीर्थीया–** काचन अल्पा ।।१९०-१९७।।

**वादिराजीया–** महावंशसुजन्मनामित्यत्र सुपदेन विशिष्टमातापितृभ्यो जन्म सूचयति । तच्च तपोविशेषेणेति तुशब्दः । एवं च वंशोचितपुरुषाः वंशानुसारेण मन्त्रं पाठयन्ति । तदा 'विष्णुप्रेरणया विष्णुप्रीत्यर्थम्' इत्येव सर्वकर्माण्यारभन्ते । अन्ते 'नारायणायेति समर्पयेत्तत्' [भा.११.२.३६] इति वचनात् । 'सर्वदेवनमस्कारः केशवं प्रति गच्छति' इति मन्त्रबलाच्च कृष्णे समर्पणमपि कुर्वन्ति । 'अमुकशर्माहं भो अभिवादये' इति हरिं गुरुं च नमस्कुर्वते । देवर्षिपित्रादीनां तर्पणं च कुर्वन्ति । अतः संसर्गोपाधिना धर्मे मतिरपि जायते । हरावीषद्भक्तिरपि भवति । एवं धर्मरतानां त्वयीषद्भक्तिगतानां चान्धन्तमो भवितुं नार्हति । किन्तु परं पदमेव भवेत् । तथाच 'शृण्वे वीर उग्रमुग्रं दमायन्' [ऋ.६.४७.१६] इत्यादिश्रुतीनां 'मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिं' इत्यादिस्मृतीनां चाप्रामाण्यं स्यादिति वाक्यसमुदायस्याभिप्रायः । त्वद्भक्तिरप्येषु हीत्यत्र हिशब्देन स्फटिके जपाकुसुमोपाधिरिव सत्समागमोपाधेरपि शक्तिः प्रसिद्धेति सूचयति ।।१९०-१९८।।

**वरदराजीया–** कुतः राज्ञां क्षत्रियाणां महति वंशे शोभनं जन्म येषां ते तथा । तेषां विपापा पापरहिता धर्मे मतिर्जातास्ति । द्विजपुङ्गवानां ब्राह्मणोत्तमानां शिक्षामनुशासनं अवाप्य स्थितानां तेषामिति सम्बन्धः । अत एव एषूत्पन्नेषु असुरेषु काचन अल्पा भक्तिरपि स्यात् सम्भाव्यत इत्यपेरर्थः ।।१९०।।

**अनन्तभट्टीया–** काचन अल्पा ।। १९० ।।

---

१. 'तत्साम्प्रतममी दैत्याः कालनेमिपुरोगमाः । मर्त्यलोकं समाक्रम्य बाधन्तेऽहर्निशं प्रजाः ।। कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना । उग्रसेनसुतः कंसः सम्भूतस्स महासुरः ।। अरिष्टो धेनुकः केशी प्रलम्बो नरकस्तथा । सुन्दोऽसुरस्तथाऽत्युग्रो बाणश्चापि बलेस्सुतः ।। तथान्ये च महावीर्या नृपाणां भवनेषु ये । समुत्पन्ना दुरात्मानः तान्न सङ्ख्यातुमुत्सहे ।।' इति विष्णुपुराणे ५.१.२२-२५ ।

**जनार्दनीया–** राज्ञां महावंशे प्रसिद्धतन्तौ सुजन्मनां शोभनजन्मवताम् । तेषां असुराणां विपापा दोषरहिता धर्ममतिः धर्मबुद्धिरभूत् । द्विजपुङ्गवानां ब्राह्मणोत्तमानां शिक्षां दीक्षामवाप्य, एष्वप्ययोग्येष्वप्य-सुरेषु काचन ईषत् त्वद्भक्तिः स्यादिति सम्भाव्यते ।।१९०।।

**ताम्रपर्णीया–** काचन अल्पा ।।१९०-१९२।।

**चट्टि–** राज्ञां महावंशे प्रसिद्धतन्तौ सुजन्मनां शोभनजन्मवतां तेषां असुराणां विपापा दोषरहिता धर्ममतिः धर्मबुद्धिश्चाभूत् । द्विजपुङ्गवानां ब्राह्मणोत्तमानां शिक्षामनुशासनमवाप्य एषु अपि अयोग्येष्वपि काचन ईषत् त्वद्भक्तिः स्यात् सम्भाव्यत इत्यर्थः ।।१९०।।

**त्वद्भक्तिलेशाभियुतः सुकर्मा व्रजेन्न पापां तु गतिं कथञ्चित् ।**
**दैत्येश्वराणां च तमोऽन्धमेव त्वयैव क्लृप्तं ननु सत्यकाम ।।१९१।।**

**व्यासतीर्थीया–** आस्तां नामासुराणामपि मद्भक्तिधर्मौ को बाध इत्यतो न्यायमाह– **त्वद्भक्तीति** ।। न व्रजेत् । त्वद्भक्तिलेशाभियुतः पापगतिम् । तथा च को बाध्यत इत्यत आह– **दैत्येश्वराणामिति** ।। सा मृषा स्यादित्यत उक्तम्– **सत्यकाम इति** ।।१९१।।

**वरदराजीया–** भवतु को दोष इत्यत आह– **त्वदिति** ।। त्वयि भक्तिलेशेन युक्तः तथा सुकर्मा सत्कर्मानुष्ठता पापां हीनां गतिं कथञ्चित् न व्रजेत् न प्राप्नुयात् । मास्तु तेषां हीना गतिरित्यत आहुरित्याह– **दैत्येश्वराणामिति** ।। अन्धन्तमस्त्वयैव क्लृप्तः । क्लृप्तस्य त्यागो माभूदिति भावेन सत्यकामेति सम्बोधनम् ।।१९१।।

**जनार्दनीया–** भक्तिश्चेत् किमित्यत आह– **त्वदिति** ।। त्वद्भक्तिलेशेन अभियुतः युक्तः । सुकर्मा शोभनकर्मा पुरुषः पापां निरयरूपां गतिं कथञ्चिन्न व्रजेत् । तेषां सद्गतिर्भवत्वित्यत आह– **दैत्येश्वराणामिति**।। हे सत्यकाम ! अमोघेच्छ ! दैत्येश्वराणां अन्धन्तमः त्वयैव क्लृप्तं न तु कल्पितम् । निश्चितमित्यर्थः ।।

**चट्टि–** भवतु को दोष इत्यत आहुरित्याह– **त्वदिति** ।। त्वयि भक्तिलेशेन अभियुतो युक्तः सुकर्मा सत्कर्मानुष्ठाता पुरुषः पापां निरयरूपां गतिं कथञ्चिन्न व्रजेत् न प्राप्नुयात् । मास्तु तेषां हीनगतिरित्यत आह– **दैत्येश्वराणामिति** ।। हे सत्यकाम सत्यसङ्कल्प दैत्येश्वराणां अन्धन्तम एव त्वयैव क्लृप्तं न तु कल्पितम्, निश्चितमित्यर्थः ।।१९१।।

**धर्मस्य मिथ्यात्वभयाद् वयं त्वामथापि वा दैत्यशुभाभिभीषा ।**
**सम्प्रार्थयामो दितिजान् सुकर्मणः त्वद्भक्तितश्चालयितुं[1] च शीघ्रम् ।।१९२।।**

---

१. 'च्यावयितुं' इति वेदाङ्गतीर्थीयपाठः ।

**व्यासतीर्थीया–** प्रार्थनस्य सफलत्वं प्रसाध्य तत्स्पष्टयन् उपसंहरति– **धर्मस्येति** ।। धर्मादिमतामपि सद्गत्त्यभावे धर्मादेर्वैफल्यभयात् वा तथापि धर्मादेर्मिथ्यात्वपरिहारार्थं सद्गतिदानपक्षे दैत्यशुभाप्तिभीषा ।।

**वेदाङ्गतीर्थीया–** धर्मादिमतामपि सद्गत्याभावेऽपि । धर्मस्य मिथ्यात्वभयात् मोघत्वभयात् अथापि धर्मस्य मिथ्यात्वपरिहारार्थं तेषां सद्गतिदाने दैत्यशुभाप्तिभीषा दैत्यानां सद्गतिर्भवेदिति भिया वा । च्यावयितुं मोचयितुम् ।।१९२।।

**वादिराजीया–** धर्मस्य मिथ्यात्वभयादित्यत्र मिथ्यात्वं वृथात्वम् । 'भीषास्माद्वातः पवते' इतिवत् भीषेति वैदिकं पदम् । दैत्यशुभाप्तिभयेनेत्यर्थः । दैत्यशुभाप्तिभीत्येति वक्तुं शक्यत्वेऽपि यद्भीषेत्याह तेन वैदिकपदप्रयोगप्रियत्वं स्वस्य स्फोरयति । धर्मस्य फलादाने वैयर्थ्यं स्यात् फलदाने दैत्यानां शुभगतिः स्यादिति उभयतः पाशारज्जुरिति भावः । त्वं तु कृष्णावतारसमय एव तव मृत्युर्गोकुले जात इति दुर्गावचनेन स्वस्मिन् द्वेषमुत्पाद्य कंसादीनां भक्तिलेशमपि नाशयिष्यसि । पूतनादीनां ग्रामे ग्रामे शिशूनां हिंसादावतिदेशेन प्राक्तनधर्मरतिं च नाशयिष्यसि । बह्वधर्मसम्पादनं च स्वकौशलेनैव कारयिष्यसीति भावेन सुकर्मणस्त्वद्भक्तितश्च दितिजान् शीघ्रं चालयितुं त्वामेव सम्प्रार्थयाम इत्याहुः ।।१९२-२००।।

**वरदराजीया–** ननु मम सत्यसङ्कल्पादेव सुकर्मणामपि तेषां सद्गतिः न स्यात् तम एव स्यादित्यत आहुरित्याह– **धर्मस्येति** ।। सद्धर्मस्य मिथ्यात्वभयात् वैय्यर्थ्यभयात् । अथ वैय्यर्थ्यपरिहारार्थं तेषां सद्गतिः दैत्यानां शुभलोकावाप्तिर्भविष्यतीति भीषा भीत्या वयं सम्प्रार्थयामः । किं कर्तुं सुकर्मणः सकाशात् त्वद्भक्तितश्च सकाशात् शीघ्रं च चालयितुं भ्रंशयितुम् ।।१९२।।

**अनन्तभट्टीया–** धर्मस्य...त्मकस्य मिथ्यात्वभयात् निष्फलवेदाप्रामाण्यशङ्कोदयभयात् ।।१९२।।

**जनार्दनीया–** स्वप्रार्थनस्य फलवत्त्वं प्रसाध्य तत्स्पष्टयन्नुपसंहरति– **धर्मस्येति** ।। धर्मस्य त्वद्भक्त्यात्मकधर्मस्य । धर्मादिमतामपि पुंसां सद्गत्यभावे धर्मस्य मिथ्यात्वभयात् विपरीतफलजननभयात् । अथापि धर्मस्येति मिथ्यात्वपरिहारार्थं तेषां सद्गतिदानपक्षे दैत्यानां शुभाप्तेः सद्गतिप्राप्तेः भीषा भिया । दितिजान् त्वद्भक्तितः तव भक्तिजनकात् सुकर्मणः सत्कर्मणः सकाशात् । त्वद्भक्तितश्च शीघ्रं चालयितुं मोचयितुं वयं त्वां सम्प्रार्थयामः ।।१९२।।

**ताम्रपर्णीया–** मिथ्यात्वभयात् फलव्यभिचारभयात् फलव्यभिचारे वेदाप्रामाण्यापत्तेरित्यर्थः । तर्हि भवतु फलमित्यत आह– **अथापि वेति** ।। अपिशब्दः पूर्वं सम्बध्यते । अथ वेति व्यवस्थितो विकल्पः ।।१९२-१९४।।[1]

---

१. **ताम्रपर्णीया–** स्वप्रार्थनस्य स्वफलत्वमभिधाय तत्स्पष्टयन्त उपसंहरति– **धर्मस्य मिथ्यात्वभयादिति** ।। धर्मादिमतामपि सद्गत्यभावे धर्मादेः फलव्यभिचारित्वभयात् । ततश्च वेदप्रामाण्यभयात् । अथवा धर्मादिमतां सद्गतिदानपक्षे दैत्यशुभाप्तिभीषाऽपि प्रार्थयाम इत्यर्थः । इति हो.पुस्तकपाठः ।

**चट्टि**– ननु मम सत्यसङ्कल्पत्वादेव सुकर्मणामपि तेषां सद्गतिर्न स्यात्, तम एव स्यात् इत्यत आहुरित्याह– **धर्मस्येति** ।। धर्मस्य मिथ्यात्वभयात् विपरीतफलजननभयात् अथापि धर्मस्य मिथ्यात्वपरिहारार्थं तेषां सद्गतिदानपक्षे दैत्यानां शुभलोकप्राप्तिः भविष्यतीति भीषा भीत्या वा दितिजान् सुकर्मणः सत्कर्मणः त्वद्भक्तितश्च शीघ्रं चालयितुं वयं त्वां सम्प्रार्थयामः ।।१९२।।

**य उग्रसेनः सुरगायकः स जातो यदुष्वेष तथाऽभिधेयः ।**
**तवैव सेवार्थममुष्य पुत्रो जातोऽसुरः कालनेमिः स ईश ।।१९३।।**

**व्यासतीर्थीया**– कोऽसुरः कुत्र जात इति जिज्ञासायामाह– **य उग्रसेन इत्यादिना** ।। जातोऽसुर इत्युक्तं विवृण्वन्नाह– **यस्त्विदिति** ।। तस्योत्पत्तिप्रकारमाह– **स इति** ।।१९३-२०९।।

**वेदाङ्गतीर्थीया**– कोऽसुरः कुत्र जात इत्यत तद्विविच्याह– **य उग्रसेन इत्यादिना** ।। तथाभिधेयः अत्राप्युग्रसेननामा ।।१९३।।

**वरदराजीया**– ते कुत्र जाताः किं नामान इत्यतो देवास्तं प्रकारं विज्ञापयन्तीत्याह– **य उग्रसेन इत्यादिना** ।। य उग्रसेनः तन्नामा सुरगायको गन्धर्वः तथाऽभिधेयः उग्रसेननामाऽभिधेयः सन् यदुषु जातः । किमर्थं तव सेवार्थमेव । अमुष्योग्रसेनस्य पूर्वं कालनेमिः असुरो यस्त्वया हतः स पुत्रो जातः।।

**जनार्दनीया**– भुवि ते प्रजाता इत्युक्तं विवेचयन्नाहुरित्याह– **य उग्रसेन इत्यादिना** ।। यः पूर्वं उग्रसेनाख्यः सुरगायको गन्धर्वः स उग्रसेनः यदुषु यादवेषु तथाभिधेयः पूर्वं यथाभिधेयस्तथेत्यर्थः । अत्राप्युग्रसेनाःभिधेय इति यावत् । तव सेवार्थमेव जातः । हे ईश! सः वायुना न हत इति यः प्रसिद्धः स इत्यर्थः । असुरः कालनेमिः अमुष्य उग्रसेनस्य पुत्रः सन् जातः ।।१९३।।

**चट्टि**– 'भुवि ते प्रजाता' इत्युक्तं विवेचयन्नाहुरित्याह– **य उग्रसेन इत्यादिना** ।। यः पूर्वं उग्रसेनः उग्रसेनाख्यः सुरगायकः देवगन्धर्वस्स यदुषु यादवेष्वेव तथाभिधेयः पूर्वं यथाभिधेयस्तथेत्यर्थः । अत्राप्युग्रसेनाभिधेय इति यावत् । तव सेवार्थमेव जातः । हे ईश सः वायुना अहत इति यः प्रसिद्धः स इत्यर्थः । असुरः कालनेमिः अमुष्य उग्रसेनस्य पुत्रः सन् जातः ।।१९३।।

**यस्त्वत्प्रियार्थं न हतो हि वायुना भवत्प्रसादात् [१]परमीशिताऽपि ।**
**स एष भोजेषु पुनश्च जातो [२]वरादुमेशस्य परैरजेयः ।।१९४।।**

---

१. 'ईशित्रा' इति अनन्तभट्टीयपाठः । 'ईशता' इति जनार्दनीयचट्टिपाठः ।

२. 'शूलिदत्तवरोन्मत्तः कंसो राजा दुरासदः । वरं दत्वा पुराप्यग्रे मायया तु प्रवञ्चितः ।। भागिनेयं विना शम्भो मरणं भविता न मे ।।' इति पाद्मपुराणे.ब्राह्म.१३.२३-२४ ।

**वेदाङ्गतीर्थीया–** परं सम्यक् ।।१९४।।

**वादिराजीया–** परं केवलं भवत्प्रसादात् यो वायुरीशिता तेनापि वायुना न हत इति सम्बन्धः ।।१९४।।

**वरदराजीया–** स इति परामृष्टं दर्शयति– **यस्त्विदिति** ।। भवत्प्रसादात् ईशिता ईशनशीलेन समर्थेनापि वायुना परं केवलं त्वत्प्रियार्थमेव न हतः यः । स एषः कालनेमिः पुनः भोजेषु यादवकुलविशेषे उमेशस्य वरात् परैः त्वत्तोऽन्यैः अजेयो भूत्वा जातः ।।१९४।।

**अनन्तभट्टीया–** ईशित्रा समर्थेन ।।१९४।।

**जनार्दनीया–** 'स' इत्युक्तं विवेचयन्नाह– **यस्त्वदिति** ।। भवत्प्रसादात् परं अलं ईशता समर्थेन, अतिसमर्थेनेत्यर्थः । वायुना त्वत्प्रियार्थं हि तव प्रीत्यर्थमेव यः न हतः । पुरेति शेषः । ईशतेति तृतीयैकवचनम् । तकारान्तशब्दः प्रथमैकवचने ईशन्निति रूपं ज्ञेयम् । स एषः कालनेमिः भोजेषु भोजाख्यविशेषणवत्वेन प्रसिद्धेषु यादवेषु पुनर्जातः ।।१९४।।

**ताम्रपर्णीया–** ।। **यस्त्वत्प्रियार्थमिति** ।। ईशिता ईशित्रा ।।१९४-१९८।।

**चट्टि–** स इत्युक्तं विवेचयन्नाह– **य इति** ।। भवत्प्रसादात् परमलं ईशता समर्थेन अतिसमर्थेनेत्यर्थः । वायुना त्वत्प्रीत्यर्थं तव प्रीत्यर्थमेव यः न हतः, पुरेति शेषः । स एषः कालनेमिः भोजेषु भोजाख्ययादवेषु उमेशस्य वरात् परैरजेयो भूत्वा पुनश्च जातः ।।१९४।।

**स औग्रसेने जनितोऽसुरेण क्षेत्रे हि तद्रूपधरेण मायया ।**
**गन्धर्वजेन द्रमिलेन [1]नाम्ना कंसो जितो येन वराच्छचीपतिः ।।१९५।।**

**वेदाङ्गतीर्थीया–** औग्रसेने क्षेत्रे असुरेण कंसः कंसनामा जनितः ।।१९५।।

**वादिराजीया–** कंसस्य जन्मप्रभृति कृष्णद्वेषाय दुर्बीजत्वमपि कारणमस्तीत्याह– **स औग्रसेन इति** ।।१९५।।

**सत्याभिनवीया–** तत्रैव स औग्रसेने जनितोऽसुरेण इति श्लोके द्रुमिलेन नाम्नेत्यस्य द्रुमिलशब्दात्मकेन नाम्ना युक्तेनेत्यर्थः । एतेन द्रुमिलेन नाम्नेत्येतदनन्वितमिति दूषणं परास्तम् । युक्तेनेत्यत्यध्याहारेणा-

१. 'कस्य त्वमिति यच्चाहं त्वयोक्तो मत्तकाशिनी । कंसस्तस्माद्रिपुध्वंसी तव पुत्रो भविष्यति ।।' इति कंसमातरं प्रति द्रुमिळोक्तिः । विष्णुपर्वणि.२८.१०३ । 'तस्य पुत्रत्वमापन्नो योऽसौ विष्णो त्वया हतः । कालनेमिर्महादैत्यः सङ्ग्रामे तारकामये ।। कंसो नाम विशालाक्षो भोजवंशविवर्धनः ।' इति हरिवंशे.हविवंशपर्वणि.५४.६४-६५

न्वयस्योक्तत्वात् । न च नाम्ना द्रुमिलेनेत्यन्वयसम्भवात् युक्तेनेत्यध्याहारो व्यर्थ इति वाच्यम् । नाम्ना द्रुमिलेनेत्यत्र द्रुमिलशब्देनात्र किं द्रुमिलशब्दो गृह्यते किं वा द्रुमिलरूपार्थो गृह्यते । नाद्यः । असुरेणेत्यनेनान्वयानुपपत्तेः । न द्वितीयः नाम्नेत्यनेनान्वयानुपपत्तेः ।।१९५।।

**वरदराजीया–** स उग्रसेनस्य क्षेत्रजः पुत्रो न त्वौरसः इति विज्ञापयन्तीत्याह– **स इति** ।। औग्रसेने उग्रसेनसम्बन्धिनि क्षेत्रे भार्यायां मायया छद्मना तद्रूपधरेणासुरेण कालनेमिः कंसो नाम्ना जनितः उत्पादितः । केनासुरेण? गन्धर्वाज्जातेन नाम्ना द्रमिलेनेत्यर्थः । येन कंसेन वरात् उमेशवरात् शचीपतिः इन्द्रो जितः पराजितः ।।१९५।।

**अनन्तभट्टीया–** औग्रसेने क्षेत्रे उग्रसेनपत्न्याम् । तद्रूपधरेण उग्रसेनरूपसदृशेन । गन्धर्वजेन नाम्ना द्रमिलेन असुरेण जनितः ।।१९५।।

**जनार्दनीया–** अमुष्य पुत्रो जात इत्युक्तेः औरसः क्षेत्रजो वेति प्राप्तां शङ्कां परिहरन्नाह– **स औग्रसेन इति** ।। मायया गन्धर्वमायया तस्य उग्रसेनस्य रूपधरेण गन्धर्वजेन गन्धर्वकुलोत्पन्नेन नाम्ना द्रुमिलेन असुरेण औग्रसेने उग्रसेनसम्बन्धिनि क्षेत्रे धर्मपत्न्यां स कालनेमिः नाम्ना कंस इति जनितः उत्पादितः । येन कंसेन वराच्छिववरनिमित्तात् शच्याः पतिः पुरन्दरः जितः पराजितः ।।१९५।।

**चट्टि–** स उग्रसेनस्य क्षेत्रजः पुत्रः न तु औरस इति ज्ञापयन्तीत्याह– **स इति** ।। मायया गन्धर्वमायया तस्य उग्रसेनस्य रूपधरेण गन्धर्वेण गन्धर्वाज्जातेन नाम्ना द्रमिळेन असुरेण औग्रसेने उग्रसेनसम्बन्धिनि क्षेत्रे भार्यायां सः कालनेमिः नाम्ना कंस इति जनितः उत्पादितः । येन कंसेन वरात् शिववरात् शचीपतिः इन्द्रः पराजितः ।।१९५।।

**जित्वा[1] जलेशं च हृतानि येन रत्नानि यक्षाश्च जिताः शिवस्य ।**
**कन्यावनार्थं मगधाधिपेन प्रयोजितास्ते च [2]हृते बलेन ।।१९६।।**

**वेदाङ्गतीर्थीया–** येन कंसेन । ते कन्यके च बलेन हृते ।।२०१-२१५।।

---

१. 'हत्वा जरासन्धबलं जित्वा यक्षांश्च संयुगे । कथं मानुषमात्रेण हतस्त्वं जगतीतले ।। इन्द्रेण सह सङ्ग्रामं कृत्वा सायकविग्रहम् । अमर्त्यैरजितो युद्धे मर्त्येनासि कथं हतः ।। त्वया सागरमक्षोभ्यं विक्षोभ्य शरवृष्टिभिः । रत्नसर्वस्वहरणं जित्वा पाशधरं कृतम् ।। त्वया पौरजनस्यार्थे मन्दं वर्षति वासवे । सायकैर्जलदान् जित्वा बलाद्वर्षं प्रवर्तितम् ।।' इत्यादि विष्णुपर्वणि.३१.२६-२९ ।

२. 'उग्रसेनसुतः कंसः पुरा निर्जित्य बान्धवान् । बार्हद्रथसुते देव्यौ उपागच्छत् वृथामतिः ।। अस्तिः प्राप्तिश्च नाम्ना ते सहदेवानुजे बले । बलेन तेन स्वज्ञातीन् अभिभूय वृथामतिः ।। श्रैष्ठ्यं प्राप्तः स तस्यासीत् अतीवापनयो महान् ।।' इति सभापर्वणि १४.३१-३३ ।

**वादिराजीया–** ते च हृते बलेनेत्यत्र ते अस्तिप्रास्तिनामके जरासन्धकन्यके च बलेन हृते इत्यर्थः ।।१९६।।

**वरदराजीया–** येन कंसेनैव जलेशं वरुणं जित्वा रत्नानि तदीयानि हृतानि शिवस्य यक्षाश्च जिताः । कुत्रत्या यक्षाः मगधाधिपेन जरासन्धेन कन्ययोः स्वपुत्र्योः अस्तिप्रास्त्योः अवनार्थं रक्षणार्थं प्रयोजिताः विनियुक्ताः । ते कन्ये च बलेन हृते अपहृते ।।१९६।।

**अनन्तभट्टीया–** जलेशं वरुणम् । मगधाधिपेन कन्यावनार्थं अस्तिप्रास्त्याख्यस्वकन्यारक्षणार्थं प्रयोजिता नियुक्ताः शिवस्य यक्षाः जिताः । ते कन्ये ।।१९६।।

**जनार्दनीया–** येन कंसेन जलेशं वरुणं जित्वा समुद्रस्य रत्नानि हृतानि अपहृतानि । येन कंसेन मगधाधिपेन जरासन्धेन कन्ययोः अवनार्थं रक्षणार्थं प्रयोजिताः नियुक्ताः शिवस्य यक्षाः जिताः निर्जिताः । ते अस्तिप्रास्तीति नाम्न्यौ कन्ये बलेन हृते च ।।१९६।।

**चट्टि–** येन कंसेन जलेशं वरुणं जित्वा रत्नानि समुद्रस्थानि रत्नानि हृतानि अपहृतानि । येन कंसेन मगधाधिपेन जरासन्धेन कन्ययोरवनार्थं रक्षणार्थं प्रयोजिताः विनियुक्ताः शिवस्य यक्षाश्च जिताः । ते अस्तिप्रास्तीति कन्ये ते च बलेन हृते ।।१९६।।

**स विप्रचित्तिश्च जरासुतोऽभूद् वराद् [1]विधातुर्गिरिशस्य चैव ।**
**सर्वैरजेयो बलमुत्तमं ततो ज्ञात्वैव कंसस्य मुदा सुते ददौ ।।१९७।।**

**वादिराजीया–** वराद्विधातुर्गिरिशस्य चैव इत्यत्र विधातुर्गिरिशस्य च वरादेव सर्वैरजेयो जरासुतो अभूदिति योजना ।।१९७।।

**वरदराजीया–** ननु मगधाधिपः क इत्यतो विज्ञापयन्तीत्याह– **स इति** ।। स पूर्वं हतो विप्रचित्तिश्च अत्र जरासुतोऽभूत् जातः । विधातुः ब्रह्मणो गिरिशस्य च वरात् सर्वैरजेयश्चाभूत् । तदुत्तमं सर्वाधिकं कंसस्य बलं ज्ञात्वा मुदा सन्तोषेण सुते अस्तिप्रास्ती पूर्वमपहृते पुनः स्वयमेव ददावित्यर्थः ।।१९७।।

**अनन्तभट्टीया–** सः...विधातुर्गिरीशस्य च वरात् सर्वैरजेयः जरासन्धेति शेषः । कंसस्य तद्बलं उत्तमं ज्ञात्वा जरासुते पूर्वं तेनापहृते सुते दत्ते । कंसायेति शेषः ।।१९७।।

**जनार्दनीया–** मगधाधिपः पूर्वं क इत्यत आह– **स इति** ।। अजेयः जेतुं अशक्योऽभूत् । ईशोऽपि जरासन्धः कंसस्य तत् इन्द्रादिजयेन प्रसिद्धं उत्तमं बलं ज्ञात्वा, मुदैव सुते कंसेनापहृते अस्तिप्रास्ती पुनर्ददौ । कंसायेति शेषः ।।१९७।।

१. 'नात्मनात्मवतां मुख्य इयेष मधुसूदनः । ब्राह्मीमाज्ञां पुरस्कृत्य हन्तुं हलधरानुजः ।।' इति सभापर्वणि २२.४६ । इदं भारतवाक्यं जरासन्धे ब्रह्मवरसद्भावे मानम् ।

**चट्टि–** मगधाधिपः पूर्वं कः इत्यत आह– **स इति** ।। सः पूर्वहतो विप्रचित्तिश्च जरासुतः अभूत् जातः । विधातुः ब्रह्मणः गिरिशस्य च वरात् सर्वैरजेयः जरासुतः कंसस्य तदिन्द्रादिजयेन प्रसिद्धं उत्तमं वलं ज्ञात्वैव मुदा सन्तोषेण सुते पूर्वमेव कंसेनापहृते अस्तिप्राप्ती पुनर्ददौ । कंसायेति शेषः ।।

**निवारयामास न कंसमुद्धतं शक्तोऽपि यो यस्य बलेन कश्चित् ।**
**तुल्यं पृथिव्यां विवरेषु वा क्वचिद् वशे [1]बलाद् यो नृपतींश्च चक्रे ।।१९८।।**

**वेदाङ्गतीर्थीया–** विवरेषु पातालेषु ।।१९८।।

**वादिराजीया–** पृथिव्यां विवरेष्वित्यत्र विवरेषु सप्तपातालाख्यभूविवरेषु ।।१९८-२०६।।

**वरदराजीया–** उद्धतं कन्यापहारित्वेन उद्धतमपि कंसं शक्तोऽपि यो जरासन्धो न निवारयामास न निषेधितवान् । यस्य जरासन्धस्य वले विषये तुल्यः समोऽपि न पृथिव्यां लोके कश्चिदपि नास्तीत्यर्थः । विवरेषु भूविवरेषु अतलादिषु वा नास्ति । अतो वलाढ्यः स नृपतीन् नृपान् वशे स्ववशे चक्रे चकार ।।

**अनन्तभट्टीया–** यः जरासन्धः शक्तोऽपि उद्धतं कन्याहरणादिकारित्वादिति भावः । न निवारयामास । अस्य जरासन्धस्य विवरेषु...जरासन्धः वलात् नृपतीन् वशे चक्रे ।।१९८।।

**जनार्दनीया–** यस्य जरासन्धस्य वले वलविषये पृथिव्यां विवरेषु पातालादिसप्तलोकेषु वा क्वचित् काले कश्चित् पुरुषः तुल्यो न नास्ति । अत एव वलाढ्यो जरासन्धः नृपतीन् शल्यवाह्लीकादीन् । वशे स्ववशे, स्थितानिति शेषः । वशवर्तिन इत्यर्थः, चक्रे । जरासन्धः शक्तोऽपि कंसात् कन्ये मोचयितुं समर्थोऽपि उद्धतं स्वतोऽपि वलिष्ठस्य कन्याहरणोन्मत्तं कंसं न निवारयामास । किन्तु कंसस्य वलं ज्ञात्वा, तस्मै ददाविति पूर्वेणान्वयः ।।१९८।।

**ताम्रपर्णीया–** बलेन ते कन्ये हृते इत्युक्तत्वात् कथं मुदा सुते ददावित्युच्यत इत्यत आह– **निवारयामासेति** ।।१९८-२०१।।

**अतिविशद–** तुल्यः पृथिव्यां विवरेषु वा क्वचित् वशी बलाढ्यो नृपतींश्च चक्रे इत्यत्र पृथिव्यां विवरेषु पातालादिषु क्वचित्प्रदेशे तुल्यः नास्तीत्युच्यते । तत्र वकव्यतिरिक्तः अन्यो नास्तीत्यङ्गीकार्यम् । 'यो राक्षसो न वश आस जरासुतस्य' इत्युत्तरवाक्यात् । अन्यथा तद्विरोधापत्तेरिति भावः ।।१९८।।

**चट्टि–** यस्य जरासन्धस्य वले वलविषये पृथिव्यां विवरेषु अतलादिसप्तलोकेषु वा क्वचित् काले कश्चिद् पुरुषः तुल्यः समो नास्ति । अत एव बलाढ्यो जरासन्धः शक्तोऽपि कंसात् कन्ये मोचयितुं

---

१. 'बलाढ्यः' इति वरदराजीयपाठः ।

शक्तोऽपि उद्धतं स्वतोऽपि बलिष्ठस्य कन्याहरणोन्मत्तं कंसं न निवारयामास । किन्तु कंसस्य बलं ज्ञात्वा तस्मै सुते ददाविति पूर्वेणान्वयः । नृपतींश्च स्ववशे चक्रे ।।१९८।।

**हतौ पुरा यौ मधुकैटभाख्यौ त्वयैव हंसो डिभकश्च जातौ ।**
**वरादजेयौ गिरिशस्य वीरौ भक्तौ जरासन्धमनु स्म तौ शिवे ।।१९९।।**

**वरदराजीया–** पुरा पूर्वं त्वयैव हतौ यौ मधुकैटभाख्यौ असुरौ तौ हंस इति डिभिक इति नाम्ना जातौ । गिरिशस्य वरात् अजेयौ वीरौ च जातौ । जरासन्धमनु जरासन्धानन्तरं तौ शिवभक्तौ प्रसिद्धौ ।।१९९।।

**अनन्तभट्टीया–** जरासन्धमनु जरासन्धानन्तरम् । शिवे भक्तौ ।।१९९।।

**जनार्दनीया–** पुरा त्वयैव हयग्रीवावतारेण त्वयैवेत्यर्थः । हयग्रीवस्य श्रीनारायणस्याभेदसूचक एवकारः । यौ हतौ नाम्ना हंसडिभिकश्चेति जातौ, ब्रह्मदत्तादिति शेषः । तौ हंसडिभिकौ जरासन्धं अनु अनन्तरं शिवे भक्तौ स्म । अन्वित्यनेन तारतम्यं ज्ञेयम् ।।१९९।।

**चट्टि–** पुरा पूर्वं त्वयैव हयग्रीवावतारेण । मूलरूपावताररूपयोरभेदसूचक एवकारः । यौ मधुकैटभाख्यौ असुरौ हतौ तौ नाम्ना हंसो डिभिकश्चेति जातौ । ब्रह्मदत्तादिति शेषः । गिरिशस्य वरादजेयौ वीरौ तौ हंसडिभिकौ जरासन्धमनु अनन्तरं शिवे भक्तौ स्म । अन्वित्यनेन तारतम्यं ज्ञेयम् ।।१९९।।

**अन्येऽपि भूमावसुराः प्रजातास्त्वया हता ये सुरदैत्यसङ्गरे ।**
**अन्ये तथैवान्धतमः प्रपेदिरे कार्या तथैषां च तमोगतिस्त्वया ।।२००।।**

**वरदराजीया–** त्वया सुरदैत्यसङ्गरे युद्धे हता अन्येऽपि असुरा भूमौ प्रजाताः । तदन्ये च । तथाशब्दः समुच्चये । अन्धन्तम एव प्रपेदिरे । यथा ते प्रपेदिरे तथैषां अवशिष्टानामपि तमोगतिः कार्या ।।२००।।

**जनार्दनीया–** सङ्गरे युद्धे येऽन्ये उक्तेभ्यो अन्ये हतास्ते असुराः तथा अन्ये अन्धन्तमः प्रपेदिरे । केचित्तमः प्राप्ताः । केचिद्भूमौ प्रजाता इति भावः । त्वया एषां भूमौ जातानाम् । तथा यथा ते प्रपेदिरे तथेत्यर्थः । तमोगतिः कार्या ।।२००।।

**चट्टि–** सुरदैत्यसङ्गरे देवासुरयुद्धे उक्तेभ्यो अन्ये त्वया हता ते असुराश्च भूमौ प्रजाताः । अन्ये अन्धंतमः प्रपेदिरे । केचिद्भूमौ प्रजाताः । केचित्तमः प्राप्ता इति भावः । त्वया एषां भूमौ जातानां, तथा यथा ते प्रपेदिरे तथेत्यर्थः । तमोगतिः कार्या ।।२००।।

**व्यासावतारे निहतस्त्वया यः कलिः सुशास्त्रोक्तिभिरेव चाद्य ।**
**श्रुत्वा त्वदुक्तीः पुरुषेषु तिष्ठन्नीषच्चकारेव मनस्त्वयीश ॥२०१॥**

**वादिराजीया–** व्यासावतारे निहतास्त्वयेत्यत्र व्यासावतारे मिथ्याज्ञानरूपी यः कलिः सुशास्त्रोक्तिभिरेव निहतः न तु तव चक्राद्यायुधैः कालनेमिवत् सर्वथा निहतः स कलिराविष्टनिजरूपेणाद्य पुरुषेषु सत्पुरुषेषु तिष्ठति । तिष्ठन् सन् त्वदुक्तीः पठ्यमानाः ब्रह्ममीमांसादिनिर्णायकोक्तीः श्रुत्वा मिथ्याज्ञानस्य प्रायशस्त्वयैव नाशितत्वात् तत्रैव दार्ढ्यं कर्तुमशक्नुवन् हरिः सर्वोत्तमो भवति न वा इति सन्दिहानस्तिष्ठति । अतस्तस्यापि तमो न भविष्यति । शुभपदमेव भविष्यति । किमन्येषां दैत्यानाम् । तस्मात् स दुर्योधनरूपेण भूमौ जातः भीमगदया सर्वात्मना हननीय इति भावः । अत एव दुर्योधनवधस्य न पृथक्प्रार्थनेति ज्ञेयम् ॥२०१॥

**वरदराजीया–** व्यासावतारे सुशास्त्राख्योक्तिभिः यः कलिर्निहतः तिरस्कृतः स एव अद्य त्वदुक्तीः सच्छास्त्रोक्तीः श्रुत्वा पुरुषेषु सत्पुरुषेषु तिष्ठन् त्वयि मन ईषच्चकारेव दृश्यते । त्वयि आदरं करोतीव दृश्यत इति भावः ॥२०१॥

**अनन्तभट्टीया–** एषामुत्पन्नानां कलिः त्वयि मनः ईषच्चकार । त्वयि किञ्चिदादरं करोतीव दृश्यत इत्यर्थः ॥२०१॥

**जनार्दनीया–** सुशास्त्रोक्तिभिः सच्छास्त्रात्मकवचनैः निहतो निरस्तः स कलिः अद्य पुरुषेषु सज्जनेषु तिष्ठन् सन् वसन् त्वदुक्तीः सच्छास्त्ररूपवाक्यानि श्रुत्वा, त्वयि त्वद्विषये ईषत् किञ्चिन्मनः चकारेवेति सम्भाव्यते । मनसि आदरं चकारेवेति भावः ॥२०१॥

**ताम्रपर्णीया–** ॥ **व्यासावतारेति** ॥ 'अथो गिरीशादिमनोनुशायी कलिर्ममाराशु सुवाङ्मयैश्शरैः । निकृत्तशीर्षो भगवन्मुखेरितैः' इत्युक्तत्वादिति भावः । न च 'ततो मनुष्येषु च सत्सु संस्थितो विनाश्य इत्येव हरिर्व्यचिन्तयत्' इति हरिसङ्कल्पानुसारेण मनुष्यस्थितस्यापि नाश्यत्वात् 'अद्य श्रुत्वा त्वदुक्तीः' इत्युक्तिः कथमिति वाच्यम् । क्रमेण नाश्यः इत्येव हरिसङ्कल्पसद्भावेन भा।वतकरणानन्तरमेव नाश्य इत्यविवक्षितत्वात् । अत एव 'ये ये च सन्तः तमसानुविष्टाः तान् तान् सुवाक्यैः तमसो विमुञ्चन् । चचार लोकान्' इति तमसोऽज्ञानरूपात् कलेर्व्यमुञ्चयन् [व्यमोचयन्] क्रमेण सत्सु विद्यमानकलिं नाशयन्नित्युक्तम् ॥२०१-२०६॥

**चट्टि–** व्यासावतारे सुशास्त्रोक्तिभिः सच्छास्त्रात्मकवचनैरेव यः कलिर्निहतो निरस्तः सः कलिः अद्य पुरुषेषु तिष्ठन् त्वदुक्तीः सच्छास्त्ररूपवाक्यानि श्रुत्वा हे ईश त्वयि त्वद्विषये मनः ईषत् किञ्चित् चकारेव दृश्यते । त्वय्यादरं करोतीव दृश्यत इति भावः ॥२०१॥

**[1]रामात्मना ये निहताश्च राक्षसा दृष्ट्वा बलं तेऽपि तदा तवाद्य ।**
**समं तवान्यं नहि चिन्तयन्ति सुपापिनोऽपीश तथा हनूमतः ॥२०२॥**

**सत्याभिनवीया–** रामावतारे निहताश्च राक्षसा... इति श्लोकः । तस्यार्थः । हे ईश रामावतारे त्वया निहता ये राक्षसाः ते सुपापिनोऽपि तदा रामावतारकाले दृष्टं तव हनूमतश्च बलं अद्य अस्मिन् काले तु विशेषतः दृष्ट्वा स्मृत्वा तव समं अन्यं न चिन्तयन्ति । तथा हनूमतः समं अन्यं न चिन्तयन्ति इत्येतत् हि प्रसिद्धमिति । एतेन रामावतारे निहताश्चेति चशब्दो व्यर्थ इति दूषणं परास्तम् । निहताश्चेति चशब्दस्य हनूमते इत्यनेनान्वय इत्यङ्गीकारात् । एतेन रामावतारकाले दृष्टस्य बलस्य इदानीन्तनसाम्यचिन्तनाभावं प्रति कारणत्वायोगात् तदा तव बलं दृष्ट्वा अद्य तव सममन्यं न चिन्तयन्तीति कथनमयुक्तमिति दूषणं परिहृतम् । दृष्टमित्यस्य शेषं दृष्ट्वेत्यस्य स्मृत्वेत्यर्थकत्वं चाङ्गीकृत्य तदा दृष्टं तव बलं अद्य स्मृत्वा तव सममन्यं न चिन्तयन्तीत्यर्थस्योक्तत्वात् । दृष्ट्वेत्यौपचारिकप्रयोगेण स्मरणस्यातिदृढत्वं सूचयति ॥२०२॥

**वरदराजीया–** रामावतारे ये निहताः राक्षसास्ते सुपापिनोऽपि तदा रामावतारे बलं दृष्ट्वा ते इदानीं तव सममन्यं न विचिन्तयन्ति न मन्यन्ते । तथा हनूमतोऽपि बलं दृष्ट्वा तस्य समं अन्यं न विचिन्तयन्तीत्यर्थः ॥२०२॥

**अनन्तभट्टीया–** अन्यं तव समं न विचिन्तयन्तीति । हनुमतः अन्यं समं न विचिन्तयन्ति ॥

**जनार्दनीया–** रामात्मना राघवस्वरूपेण । तेऽपि तदा रामावतारे तव बलं दृष्ट्वा, अद्य अस्मिन्काले सुपापिनोऽपि तव समं अन्यं पुरुषं न हि चिन्तयन्ति न मन्यन्ते । तथा हनुमत्समं अन्यं त्वदन्यं न चिन्ततयन्ति ॥२०२॥

**चट्टि–** श्रीरामावतारे निहता राक्षसाश्च सुपापिनोऽपि हे ईश तदा श्रीरामावतारे ते बलं दृष्ट्वा अद्येदानीं तव सममन्यं पुरुषं न हि चिन्तयन्ति न मन्यन्ते । तथा हनूमतोऽपि बलं दृष्ट्वा तस्य समं अन्यं न हि चिन्यन्तीत्यर्थः ॥२०२॥

**ये केशव त्वद्बहुमानयुक्तास्तथैव वायौ नहि ते तमोऽन्धम् ।**
**योग्याः प्रवेष्टुं तदतो हि मार्गाच्चाल्यास्त्वया जनयित्वैव भूमौ ॥२०३॥**

**वादिराजीया–** तदतो हि मार्गादित्यत्र तत् तस्मात् कारणात् अतः पूर्वोक्तात् मार्गात् सन्मार्गात् ॥२०३-२१६॥

१. 'रामावतारे निहताः' इति सत्यभिनवतीर्थीयचट्टिटिप्पण्योः पाठः ।

**मधुसूदनीया**– ।। **त्वया जनयित्वैव भूमाविति** ।। भूमौ जनयितव्यान् उर्वरितान् कल्यादीन् असुरान् जनयित्वा त्वया मार्गाच्चाल्या इत्यन्वयः ।।२०३-२०४।।

**वरदराजीया**– ततः किमित्यत आहुरित्याह– **य इति** ।। हे केशव त्वयि बहुमानयुक्ताः त्वत्समो नास्तीति मन्यमानाः तथा वायावपि बहुमानयुक्ताः ते अन्धन्तमः प्रवेष्टुं न योग्याः । तत्तस्मात् अतो मार्गादुक्तसन्मार्गात् त्वया चाल्याः प्रच्यावनीयाः । चालनप्रकारं विज्ञापयन्तीत्याहुरित्याह– **जनयित्वेति** ।। भूमौ जनयित्वा अवतीर्य ।।२०३।।

**अनन्तभट्टीया**– मार्गात् सम्यज्ज्ञानात् ।।२०३।।

**जनार्दनीया**– हे केशव! त्वयि बहुमानेन महत्वाभिमानेन युक्ताः, तथैव वायौ बहुमानेन युक्ताः प्राणिनः ते तमोऽन्धं प्रवेष्टुं न योग्याः । हि यस्मात् तस्मात् त्वया भूमौ जनयित्वा स्वीयं रूपं प्रादुर्भाव्य । हि प्रसिद्धाद् अतो मार्गात् अस्मात् सज्ज्ञानमार्गात् चाल्याः चालनीयाः ।।२०३।।

**चट्टि**– ततः किमित्यत आह– **ये इति** ।। हे केशव त्वयि बहुमानेन युक्ताः त्वत्समो नास्तीति मन्यमानाः तथैव वायावपि बहुमानयुक्ताः ते तमोन्धं प्रवेष्टुं न योग्याः । हि यस्मात् तस्मात् त्वया भूमौ जनयित्वा अवतीर्य हि प्रसिद्धादतो मार्गात् अस्मात् सज्ज्ञानमार्गाच्चाल्याः चालनीयाः । यद्वा भूमौ जनयितव्यानुर्वरितान् कल्यादीन् असुरान् जनयित्वा त्वया मार्गाच्चाल्या इत्यन्वयः ।।२०३।।

**नितान्तमुत्पाद्य भवद्विरोधं तथैव वायौ बहुभिः प्रकारैः ।**
**सर्वेषु देवेषु च पातनीयास्तमस्यथान्धे कलिपूर्वकासुराः ।।२०४।।**

**वरदराजीया**– बहुभिः अनेकैः प्रकारैः भवति त्वयि विरोधं तथा वायौ च विरोधं उत्पाद्य जनयित्वा तथा सर्वेषु देवेषु च वैरं उत्पाद्य कलिपूर्वकाश्च ते असुराश्च ते अन्धेतमसि पातनीयाः निपात्याः ।।२०४।।

**अनन्तभट्टीया**– वायौ सर्वेषु देवेषु विरोधमुत्पाद्य ।।२०४।।

**जनार्दनीया**– चालनोपायं दर्शयन्तीत्याह– **नितान्तमिति** ।। नितान्तं भवति विरोधः तथैव वायौ सर्वेषु देवेषु च विरोधं वैरं बहुभिः अनेकैः प्रकारैः उपायैः उत्पाद्य ।।२०४।।

**चट्टि**– चलनोपायं दर्शयति– **नितान्तमिति** ।। नितान्तं भवति विरोधं तथैव वायौ सर्वेषु देवेषु च विरोधं बहुभिः प्रकारैरुपायैरुत्पाद्य अथानन्तरं कलिपूर्वकाश्च ते असुराश्च कलिपूर्वकासुराः अन्धे तमसि पातनीयाः ।।२०४।।

**हतौ च यौ रावणकुम्भकर्णौ त्वया त्वदीयौ प्रतिहारपालौ ।**
**महासुरावेशयुतौ हि शापात् त्वयैव तावद्य विमोचनीयौ ।।२०५।।**

**मधुसूदनीया–** ।। **हतौ च यौ रावणकुम्भकर्णाविति** ।। रावणकुम्भकर्णजन्मवन्तावित्यर्थः । महासुरावेशयुतावित्यनेन रावणकुम्भकर्णदेहौ जयविजयकर्मनिर्मितौ जयविजयभोग्यावेव । परन्तु रावणकुम्भकर्णाख्यावसुरौ तत्राविष्टौ तौ देहौ न तदीयौ । अन्यथा पिशाचाविष्टपुरुषदेहोऽपि पिशाचकर्मनिमित्तस्तदीयश्च स्यात् । एवं हिरण्याक्षहिरण्यकशिपुशिशुपालादावपि द्रष्टव्यं इति सूचयति ।।२०५-२१८।।

**वरदराजीया–** त्वया रामावतारे रावणकुम्भकर्णौ हतौ तौ त्वदीयौ त्वत्सम्बन्धिनौ प्रतिहारपालौ द्वारपालकौ शापात् सनकादीनां शापात् महासुरयोः आवेशयुतौ त्वयैव अद्य अस्मिन् जन्मनि विमोचनीयौ शापादिति शेषः ।।२०५।।

**अनन्तभट्टीया–** प्रतिहारपालौ द्वाररक्षकौ... ।।२०५।।

**जनार्दनीया–** त्वदीयौ त्वद्भक्तौ प्रतिहारपालौ द्वारपालौ शापात् सनकादीनां शापात् महासुरावेशयुतौ रावणकुम्भकर्णाविति जातौ यौ हतौ तौ जयविजयौ अद्य शिशुपालदन्तवक्रजन्मनि विमोचनीयौ । शापादिति शेषः ।।२०५।।

**चट्टि–** रावणकुम्भकर्णौ रावणकुम्भकर्णजन्मवन्तावित्यर्थः । यौ त्वया श्रीरामावतारे हतौ त्वदीयौ त्वद्भक्तौ प्रतिहारपालौ शापात् सनकादिशापात् महासुरावेशयुतौ जयविजयौ त्वया अद्य शिशुपालदन्तवक्रजन्मनि विमोचनीयौ शापादिति शेषः । महासुरावेशयुतौ इत्यनेन रावणकुम्भकर्णदेहौ जयविजयकर्मनिर्मितौ जयविजयभोग्यौ एव परन्तु रावणकुम्भकर्णाख्यावसुरौ तत्राविष्टौ तौ देहौ न तदीयौ । अन्यथा पिशाचाविष्टपुरुषदेहोऽपि पिशाचकर्मनिर्मितः तदीयश्च स्यात् । एवं हिरण्याक्षहिरण्यकशिपुशिशुपालादौ अपि द्रष्टव्यमिति सूचयति हिशब्देन ।।२०५।।

**यौ तौ तवारी ह तयोः प्रविष्टौ दैत्यौ तु तावन्धतमः प्रवेश्यौ ।**
**यौ तौ त्वदीयौ भवदीयवेश्म त्वया पुनः प्रापणीयौ परेश ।।२०६।।**

**वरदराजीया–** यौ तवारी शत्रू प्रतिहारपालयोः प्रविष्टौ दैत्यौ तौ अन्धे तमसि प्रवेश्यौ प्रवेशनीयौ । यौ तु त्वदीयौ प्रतिहारपालौ तौ भवदीयवेश्म वैकुण्ठाख्यं भवनं त्वया पुनः प्रापणीयौ ।।२०६।।

**अनन्तभट्टीया–** प्रविष्टौ स्थितौ । अरी शत्रू ।।२०६।।

**जनार्दनीया–** इह शिशुपालदन्तवक्रजन्मनि तयोः द्वारपालयोः । तवारी इति तौ प्रसिद्धौ यौ दैत्यौ शिशुपालदन्तवक्रनामानौ दैत्यौ प्रविष्टौ । 'ब्रह्मजा असुरा ये तु ते विष्णोः पार्षदौ गताः' इति तत्त्वनिर्णयोक्तेः । त्वदीयौ तव सम्वन्धिनौ जयविजयौ भवदीयवेश्म त्वदीयलोकम् ।।२०६।।

**ताम्रपर्णीया–** यौ तौ तवारीह इत्यत्र इह इत्यस्मिन् अवतारेत्यर्थः ।।२०६-२०९।।

**चट्टि–** तयोः द्वारपालकयोः प्रविष्टौ तवारी शत्रू यौ दैत्यौ तौ अन्धंतमः प्रवेश्यौ प्रवेशनीयौ । हे परेश यौ त्वदीयौ त्वद्भक्तौ प्रतिहारपालौ तौ पुनः त्वया भवदीयवेश्म त्वदीयं लोकं प्रापणीयौ ।।२०६।।

**आविश्य यो बलिमज्ञश्चकार प्रतीपमस्मासु तथा त्वयीश ।**
**स चासुरो बलिनामैव भूमौ साल्वो नाम्ना ब्रह्मदत्तस्य जातः ।।२०७।।**

**वरदराजीया–** यश्च पूर्वं वलिमाविश्य अस्मासु तथा त्वयि च अज्ञः सम्यक् प्रतीपं विरोधं चकार । स एव वलिनामा असुरो ब्रह्मदत्तस्य सकाशात् साल्वो नाम्ना जात इत्यर्थः ।।२०७।।

**अनन्तभट्टीया–** नाम्ना साल्व इति ब्रह्मदत्तस्य जातः ।।२०७।।

**जनार्दनीया–** यः वलिनामासुरः । बलिं कर्मदेवं प्रह्लादपौत्रं वलिं आविश्य । स च बलिनामासुरः नाम्ना साल्व इति ब्रह्मदत्तस्य सकाशाज्जातः ।।२०७।।

**चट्टि–** हे ईश यः वलिनामा असुरः बलिं कर्मदेवं प्रह्लादपौत्रं वलिमाविश्य अस्मासु तथा त्वयि च अज्ञः सम्यक् प्रतीपं विरोधं चकार । स एव वलिनामा असुर एव नाम्ना साल्व इति भूमौ ब्रह्मदत्तस्य सकाशात् जातः ।।२०७।।

**मायामयं तेन विमानमग्र्यमभेद्यमाप्तं सकलैर्गिरीशात् ।**
**विद्रावितो यो बहुशस्त्वयैव रामस्वरूपेण भृगूद्वहेन ।।२०८।।**

**वरदराजीया–** तेन साल्वेन मायामयं ऐन्द्रजालमायात्मकं अत एवाग्र्यं सकलैरभेद्यं विमानं पुष्पकं गिरीशात् रुद्रात् प्राप्तम् । यश्च भृगूद्वहेन भृगुकुले प्रादुर्भूतेन रामस्वरूपेण परशुरामावतारेण त्वयैव बहुशो वहुवारं विद्रावितः एव ।।२०८।।

**अनन्तभट्टीया–** विमानं सौभम् ।।२०८।।

**जनार्दनीया–** तेन साल्वेन । मायामयं इन्द्रजालमायाप्रचुरं सकलैरभेद्यं विमानम् । यः साल्वः भृगूद्वहेन भृगुकुले अवतीर्णेन रामस्वरूपेण परशुरामात्मनैव त्वया बहुशः वहुवारं युद्ध्यन् विद्रावितो, अभूदिति शेषः ।।२०८।।

**चट्टि–** तेन साल्वेन मायामयं इन्द्रजालमायाप्रचुरम् । अत एवाग्र्यं सकलैरभेद्यं विमानं गिरीशात् रुद्राद् आप्तं प्राप्तम् । यः साल्वः भृगूद्वहेन रामस्वरूपेण परशुरामात्मना त्वयैव बहुशो बहुवारं विद्रावितः अभूदिति शेषः ।।२०८।।

**नासौ हतः शक्तिमताऽपि तत्र कृष्णावतारे स मयैव वध्यः ।**
**इत्यात्मसङ्कल्पमृतं विधातुं स चात्र वध्यो भवताऽतिपापी ।।२०९।।**

**वरदराजीया–** परन्तु शक्तिमतापि त्वया तत्रावतारे न हतः स साल्वः कृष्णावतारे एव मया वध्य इत्यात्मसङ्कल्पं ऋतं विधातुं कर्तुं न हत इति सम्बन्धः । अत एव करिष्यमाणे कृष्णावतारे वध्यः यतोऽतिपापी ।।२०९।।

**अनन्तभट्टीया–** अवध्य इति न हतः । आत्मसङ्कल्पं ऋतमिति शेषः ।।२०९।।

**जनार्दनीया–** ननु रामेण हन्तुं अशक्यत्वात् विद्रावितः किमित्यत आह– **नासाविति** ।। मयैव कृष्णात्मना मयैवेत्यर्थः । स साल्वः कृष्णावतारे वध्यः वधार्हः इति आत्मसङ्कल्पं ऋतं सत्यं विधातुं कर्तुं शक्तिमतापि हन्तुं समर्थेनापि परशुरामेण तत्र परशुरामावतारे असौ साल्वो न हतो, यत इति शेषः । अतः स चातिपापी साल्वः अत्र अस्मिन् कृष्णावतारे भवता वध्यः ।।२०९।।

**ताम्रपर्णी–** ।। **अतिपापीति** ।। तथा चेदानीं साधनसम्पूर्तेः भवतात्रैव वध्य इति भावः ।।२०९।।

**चट्टि–** सः साल्वः श्रीकृष्णावतारे त्वयैव वध्यः वधार्हः इत्यात्मसङ्कल्पं ऋतं सत्यं विधातुं कर्तुं शक्तिमता हन्तुं समर्थेनापि त्वया तत्र परशुरामावतारे असौ साल्वो न हतः । अतो अतिपापी सः साल्वश्च करिष्यमाणे कृष्णावतारे भवता वध्यः ।।२०९।।

**यदीयमारुह्य विमानमस्य पिताऽभवत् सौभपतिश्च नाम्ना ।**
**यदा स भीष्मेण जितः पिताऽस्य तदा स साल्वस्तपसि स्थितोऽभूत् ।।२१०।।**

**व्यासतीर्थीया–** ननु सौभपतिः ब्रह्मदत्तः तत्कथं तेन मायामयं विमानं गिरिशादवाप्तमित्युक्तमित्यत आह– **यदीयमिति** ।। यस्य इदं अग्र्यं विमानमारुह्य सः । ननु ब्रह्मदत्तस्याभेद्यं विमानमस्ति चेत्कथं तर्हि पूर्वं स्वयंवरावसरे भीष्मेण जित इत्यत आह– **यदेति** ।। तपसि स्थितः, सौभार्थमिति शेषः ।।२१०-२१२।।

**वादिराजीया–** साल्वस्यातिसमर्थत्वे भीष्मेण तत्पिता कथं जित इत्यत आह– **यदेति** ।।२१०-२२१।।

**वरदराजीया–** ननु साल्वेन सौभस्याप्तत्वात् सौभपतित्वं साल्वस्य युक्तम् । भारते तत्पितुः ब्रह्मदत्तस्यापि कचित् सौभपतित्वव्यपदेशः कथमिति जिज्ञासायामाह भगवानाचार्यः– **यदीयमिति** ।। यस्य साल्वस्य विद्यमानं विमानं आरुह्य अस्य साल्वस्य पिता ब्रह्मदत्तश्च नाम्ना सौभपतिर्जातो । अतः व्यपदेशः तथा घटत इत्यर्थः । कथं तर्हि पूर्वं भीष्मेण पराजितो ब्रह्मदत्त इत्यत आह– **यदेति** ।। यदाऽसौ अस्य साल्वस्य पिता ब्रह्मदत्तो भीष्मेण पराजितः तदा स साल्वः तपसि स्थितः । सौभप्राप्त्यर्थमिति शेषः । तस्मात् दुर्बलत्वात् ब्रह्मदत्तो भीष्मेण पराजित इति भावः ।।२१०।।

**अनन्तभट्टीया–** यदीयं साल्वसम्बन्धि । अस्य साल्वस्य पिता ब्रह्मदत्तः । कथं भीष्मेण...जित इत्यत आह– **यदेति** ।।२१०।।

**जनार्दनीया–** ननु साल्वेन सौभं विमानं प्राप्तं तर्हि ब्रह्मदत्तः सौभपतिरिति कथमुच्यत इत्यत आह– **यदीयमिति** ।। अस्य पिता साल्वस्य पिता ब्रह्मदत्तः यदीयं साल्वसम्बन्धि विमानं आरुह्य, नाम्ना सौभपतिरभवत् । ननु एतादृशे पुत्रे सति कथं भीष्मेण जित इत्यत आह– **यदेति** ।। यदा अस्य साल्वस्य पिता स ब्रह्मदत्तः जितः तदा साल्वः तपसि स्थितः अभूत्, सौभार्थमिति शेषः । तदानीं पुत्रासान्निध्याज्जित इति भावः ।।२१०।।

**ताम्रपर्णीया–** ननु ब्रह्मदत्तः सौभपतिः प्रसिद्धः । कथं एवं सति तत्साल्वेन गिरीशादवाप्तं तत्राह– **यदीयमिति** ।। तस्याभेद्यं विमानमस्ति चेत् कथमम्बादिस्वयंवरे भीष्मेण जितः । कथं अतिप्रबलसाल्वसाहाय्यं नाभूत् तत्पितुरित्यत आह– **यदेति** ।। तपसि स्थितः सौभार्थमिति शेषः ।।२१०-२१२।।

**चट्टि–** ननु साल्वेन सौभविमानस्याप्तत्वात् सौभपतित्वं साल्वस्य युक्तम् । भारते तत्पितुः ब्रह्मदत्तस्यापि सौभपतित्वव्यपदेशः कथमिति जिज्ञासायामाह भगवानाचार्यः– **यदीयमिति** ।। अस्य साल्वस्य पिता ब्रह्मदत्तः यदीयं साल्वसम्बन्धि विमानं आरुह्य नाम्ना सौभपतिरभवत् । कथं तर्हि पूर्वं स्वयंवरावसरे ब्रह्मदत्तः भीष्मेण जित इत्यत आह– **यदेति** ।। यदा अस्य साल्वस्य पिता ब्रह्मदत्तः भीष्मेण जितः आस । तदा साल्वः तपसि स्थितः अभूत् । सौभप्राप्त्यर्थमिति शेषः । तदा सौभप्राप्त्यभावात् दुर्बलत्वात् ब्रह्मदत्तो भीष्मेण जित इति भावः ।।२१०।।

**स चाद्य तस्मात् तपसो निवृत्तो जरासुतस्यानुमते स्थितो हि ।**
**अनन्यवध्यो[1] भवताऽद्य वध्यः स प्रापणीयश्च तमस्यथोग्रे ।।२११।।**

---

१. 'चिरजीवी नृपः सोऽपि प्रसादात् पद्मजन्मनः ।' इति वनपर्वणि.१४.७ ।

**वरदराजीया–** स च साल्वोऽपि इदानीं तस्मात् तपसो निवृत्तः तपः समाप्य आगतः जरासुतस्य अनुमते कार्ये स्थितः । जरासन्धानुवर्ती वर्तत इत्यर्थः । अनन्यवध्यो भवदन्येन न वध्योऽतो भवता त्वयाद्यावतारे वध्यः उग्रे तमसि प्रापणीयश्च ।।२११।।

**अनन्तभट्टीया–** सौभमास्थितमिति शेषः ।।२११।।

**जनार्दनीया–** स च साल्वः अद्य इदानीं तस्मात् सौभार्थं कृतात्तपसः निवृत्तः परावृत्तः सन् तपसा तुष्टेन रुद्रेण विमानं प्राप्य निवृत्त इति भावः । जरासुतस्य अनुमते स्थितः, अनुकूलवर्तीत्यर्थः । अनन्यवध्यो हि यस्मात् तस्मात् भवता अद्य इदानीं कृष्णावतारे वध्यो वधार्हः । अथ स साल्वः उग्रतमसि प्रापणीयः पातनीय इत्यर्थः ।।२११।।

**चट्टि–** स च साल्वः अद्य इदानीं तस्मात् सौभार्थं कृतात् तपसः निवृत्तः परावृत्तः सन् तपसा तुष्टेन रुद्रेण विमानं प्राप्य निवृत्त इति भावः । जरासुतस्य अनुमते कार्ये स्थितः अनुकूलवर्तीत्यर्थः । हि यस्मात् अनन्यवध्यस्तस्मात् भवता अद्येदानीं कृष्णावतारे वध्यः वधार्हः । अथ सः साल्वः उग्रे तमसि प्रापणीयः पातनीय इत्यर्थः ।।२११।।

**यो बाणमाविश्य महासुरोऽभूत् स्थितः [१]स नाम्ना प्रथितोऽपि बाणः[२] ।**
**स कीचको नाम बभूव रुद्रवरादवध्यः स तमः प्रवेश्यः ।।२१२।।**

**वरदराजीया–** यो बाणं बाणासुरमाविश्य महासुरः स्थितोऽभूत् । सोऽपि बाण इति नाम्ना प्रथितः प्रसिद्धः । सोऽत्र कीचक इति नाम प्रसिद्धो बभूव जातः । सोऽपि रुद्रवरादवध्यो बभूव । स कीचकः तमसि प्रवेश्यः प्रवेशनीयः ।।२१२।।

**जनार्दनीया–** यो बाणं कर्मदेवबलिपुत्रं बाणं आविश्य, सनाम्ना समाननाम्ना, बाण इति नाम्नेति यावत् । प्रथितः प्रसिद्धो महासुरः स्थितोऽभूत् । सनाम्नेत्येकं पदम् । सोऽपि असुरात्मको बाणः कीचको नाम प्रसिद्धो बभूव ।।२१२।।

**ताम्रपर्णीया–** ।। **यो बाणमिति** ।। यो बाणमाविश्य नाम्नाऽपि बाण इति प्रथितोऽसुरः स्थितोऽभूत् स च कीचको नाम बभूव । स च कीचक तमः प्रवेश्य इति योजना ।।२१२।।

**चट्टि–** यो बाणं कर्मदेवं बलिपुत्रं बाणमाविश्य सनाम्ना समाननाम्ना बाणनाम्नेति यावत् । प्रथितः

१. 'सनाम्ना' इति जनार्दनीयचट्टिटिप्पण्योः पाठः ।
२. 'कालकेया नाम ते दैत्याः प्रायशो भुवि विश्रुताः । जज्ञिरे कीचका राजन् बाणो ज्येष्ठस्तथाभवत् ।।' विराटपर्वणि.२१.२२ इति वचनात् अयं बाणः बलिपुत्रबाणाद्भिन्नः इति स्पष्टं प्रतीयते ।

प्रसिद्धः महासुरः स्थितोऽभूत् । सनाम्नेत्येकं पदम् । सोऽपि असुरात्मको बाणश्च कीचको नाम प्रसिद्धः बभूव । रुद्रवराद् अवध्यः सः कीचकः तमसि प्रवेश्यः प्रवेशनीयः ।।२१२।।

**अतस्त्वया भुव्यवतीर्य देवकार्याणि कार्याण्यखिलानि देव ।**
**त्वमेव देवेश [1]गतिः सुराणां ब्रह्मेशशक्रेन्दुयमादिकानाम् ।।२१३।।**

**वरदगजीया–** देवाः स्वाभिप्रेतं विज्ञाप्य उपसंहरन्ति इत्याह– **अत इति** ।। हे देव अतः त्वया भुवि अवतीर्य प्रादुर्भूत्वा देवानामस्माकं कार्याणि कर्माणि अखिलानि कार्याणि कर्तव्यानि । ननु अन्येषु सत्सु मत्प्रार्थनमेव किमर्थं क्रियत इत्यत आहुरित्याह– **त्वमेवेति** ।। हे देवानामीश स्वामिन् सुराणामस्माकं ब्रह्म ईशः शक्रो इन्द्रश्च आदयो येषां ते तेषां त्वमेव गतिः ।।२१३।।

**अनन्तभट्टीया–** कार्याणि च प्रयोजनानि ।।२१३।।

**जनार्दनीया–** स्वाभिप्रेतमुक्त्वोपसंहरन्तीत्याह– **अत इति** ।। हे देव! अवतीर्य अवतारं कृत्वा, अखिलानि देवकार्याणि देवानां कर्तुं योग्यानि कर्माणि कार्याणि कर्तव्यानि । मयैव कुतः कार्याणीत्यत आह– **त्वमिति** ।। हे देवेशेति हेतुगर्भसम्बोधनमेतत् । ब्रह्मादीनां गतिः प्राप्यस्त्वमेव नान्योऽस्तीत्यर्थः ।।२१३।।

**ताम्रपर्णीया–** मत्प्रार्थने किं कारणमिति जिज्ञासायामाह– **त्वमेवेति** ।।२१३।।

**चट्टि–** देवाः स्वाभिप्रेतं विज्ञाप्योपसंहरन्तीत्याह– **अत इति** ।। हे देव त्वया भुव्यवतीर्य अवतारं कृत्वा अखिलानि देवकार्याणि देवानां कर्तुं योग्यानि कर्माणि कार्याणि कर्तव्यानि । ननु अन्येषु सत्सु मयैव कुतः कार्याणि इत्यत आह– **त्वमेवेति** ।। हे देवेश इति हेतुगर्भसम्बोधनम् । ब्रह्मेशशक्रेन्दुयमादिकानां सुराणां त्वमेव गतिः प्राप्यः नान्योऽस्तीत्यर्थः ।।२१३।।

**त्वमेव [2]नित्योदितपूर्णशक्तिस्त्वमेव नित्योदितपूर्णचिद्घनः ।**
**त्वमेव नित्योदितपूर्णसत्सुखस्त्वादृङ्[3] न कश्चित् कुत एव तेऽधिकः ।।२१४।।**

---

१. 'देवेषु वर्तते यद्धि तद्धि सर्वं जनार्दनात् । यत्प्रवृत्तश्च देवेभ्यः तद्विद्धि मधुसूदनात् ।।' इति हरिवंशे१.४९.१९ ।

२. 'सर्वज्ञः सर्ववित्सर्वशक्तिज्ञानबलर्धिमान् । अन्यूनश्चाप्यवृद्धिश्च स्वाधीनो नादिमान् वशी ।। क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः । निरवद्यः परः प्राप्तेः निरधिष्ठोऽक्षरः क्रमः ।। सर्वेश्वरः पराधारो धाम्नां धामात्मकोऽक्षयः ।।' इति कृष्णावतारप्रसङ्गे ब्रह्मकृता विष्णुस्तुतिः । [विष्णुपुराणे.५.१.४७-४९]

३. 'एष देवमयश्चैव देवाश्चैतन्मया दिवि । तस्य पारं न पश्यन्ति बहवः पारचिन्तकाः ।। एष पारं परश्चैव लोकानां वेद माधवः ।।' इत्यादि हरिवंशपर्वणि ४९.९-१० ।

**व्यासतीर्थीया–** मत्प्रार्थने किं कारणमिति जिज्ञासायामाह– **त्वमेवेति** ।।२१४-२२०।।

**वरदराजीया–** तदेव कुतः? यतो नित्यं उदिता पूर्णा शक्तिः यस्य सः । त्वमेव नित्योदिताया: पूर्णायाश्रितो ज्ञानस्य घनः एकरसः त्वमेव । तथा नित्यं उदितं अभिव्यक्तं पूर्णं परिपूर्णं सत् निर्दुष्टं सुखं यस्य स । त्वमेव तस्मात् त्वादृक् त्वत्सदृशः कश्चिन्नास्ति । ते अधिकः कुत एव न कुतोऽपीत्यर्थः ।।

**जनार्दनीया–** देवेशेत्युक्तं विवृण्वन्नाहुरित्याह– **त्वमेवेति** ।। नित्यं सर्वदा उदिता अभिव्यक्ता पूर्णशक्तिर्यस्य स तथा । त्वमेव नित्योदितया पूर्णया चिता ज्ञानेन घनः निबिडः । त्वमेव नित्योदितं पूर्णं सत् दुःखास्पृष्टं सुखं आनन्दो यस्य सः । त्वमेव यतः अतः त्वादृक् त्वत्सदृशः कश्चित् पुमान्नास्ति । तेऽधिकः त्वदुत्तमः कुत एव ? नैवेत्यर्थः ।।२१४।।

**ताम्रपर्णीया–** यद्वा ब्रह्मादेः विष्ण्वाधिक्याद् साम्यात् ऐक्याद् वा कथं तस्य तद्गतत्वमित्यत आह– **त्वमेवेति** ।। त्वादृङ् न कश्चित् इति साध्यम् । त्वमेव इत्यादिहेतुत्रयम् । व्यभिचारपरिहाराय एवकारः । यद्वा नित्योदितेति तृतीयविशेषणं प्रधानहेतुः । न चासिद्धो हेतुः । तत्प्रेप्सुत्वे सति तत्र शक्तत्वादित्याशयेनाह– **त्वमेवत्यादिविशेषणेन** ।। प्रेप्सायां प्रेप्सावत्त्वं हेतुरिति भावेन द्वितीयम् ।।२१४।।[१]

**भावचन्द्रिका–** तवावतारे सामर्थ्यज्ञापनसुखतिरोधानाभावहननोपायान् ज्ञात्वा अनायासेन शत्रून् जहीति भावेनाह– **त्वमेवेति** ।।२१४।।

**चट्टि–** देवेशेत्युक्तं विवृण्वन्नाहुरित्याह– **त्वमेवेति** ।। नित्यं सर्वदा उदिता अभिव्यक्ता पूर्णा शक्तिर्यस्य सः । त्वमेव नित्योदितया पूर्णया चिता ज्ञानेन घनो निबिडः । त्वमेव नित्यं उदितं अभिव्यक्तं पूर्णं सद् दुःखास्पृष्टं सुखमानन्दो यस्य सः त्वमेव यतः अतः । त्वादृक् त्वत्सदृशः कश्चित् पुमान्नास्ति । ते अधिकः त्वदुत्तमः कुत एव न कुतोऽपीत्यर्थः ।।२१४।।

**इतीरितो देववरैरुदारगुणार्णवोऽक्षोभ्यतमामृताकृतिः ।**
**उत्थाय तस्मात् प्रययावनन्तसोमार्ककान्तिद्युतिरन्वितोऽमरैः ।।२१५।।**

**वादिराजीया–** अक्षोभ्यतमामृताकृतिः 'क्षुभु चित्तविक्षेपे' इति धातोः केनापि क्षोभयितुं अशक्या अमृता मृतिरहिता आकृतिर्यस्य स तथोक्तः ।।२१५।।

---

१. **ताम्रपर्णीया–** ननु 'ब्रह्मविष्णुमहेश्वराणां साम्यम्' इति केचित् । अन्ये शिवादेरेव विष्ण्वपेक्षयोत्तमत्वमित्यास्थिषत तत्कथं ब्रह्मादीनां त्वमेव गतिरित्युच्यते इत्यतो उपलक्षणत्वेन समराहित्ये हेतुत्रयमाह– **त्वमेवेति** ।। व्यभिचारवारणाय त्वमेवेति अवधारणम् । यद्वा नित्योदितपूर्णसत्सुखत्वं समराहित्ये हेतुः ।।२१५।। इति हो पुस्तकपाठः ।

**वरदराजीया–** इति उक्तरीत्या देववरैः ईरितः उदारगुणैरर्णव इव अक्षोभ्यतमा अत्यन्तमनवगाह्या अमृता नित्यमुक्ता आकृतिः स्वरूपं यस्य स तथा.। तस्मान्नागभोगात् उत्थाय अनन्तानां सोमार्काणां कान्तिरिव द्युतिर्यस्यासौ तथा । अमरैः देवैरन्वितो मेरुं प्रति ययौ ।।२१५।।

**अनन्तभट्टीया–** तस्मात् शेषभोगादुत्थाय ।।२१५।।

**जनार्दनीया–** उदारैः उत्कृष्टैः गुणैः ज्ञानानन्दादिगुणैः अर्णव इवार्णवः । समुद्रदृष्टान्तेन समुद्रवत् परिमाणह्रासवान् स्यादित्यत आह– **अक्षोभ्येति** ।। अक्षोभ्यतमा अत्यगाधा, परिच्छेदरहितेति यावत् । अमृता नित्या आकृतिः स्वरूपं यस्य स तथा । तस्मात् नागभोगात् उत्थाय अमरैः देवैः अन्वितः युक्तः प्रययौ । मेरुं प्रतीति शेषः । ननु असुरवलं श्रुत्वा विच्छविः किमभूदित्याशङ्क्याह– **अनन्तेति** ।। अनन्तसोमार्काणां कान्तिः शोभा द्युतिः प्रकाशो यस्य । कान्तिद्युत्योः पर्यायत्वेऽपि चन्द्रगतशोभासूर्यगत-प्रतापरूपावान्तरविशेषवाचित्वेन सह प्रयोगः ।।२१५।।

**भावचन्द्रिका–** न केवलमेतावत् । सकलगुणतिरोधानश्चेत्याह– **उदारेति** ।। देहस्यापि तदात्मकत्वात् ह्रासो मरणश्च नेत्याह– **अक्षोभ्य इति** ।। युद्धं करिष्यामीति प्राप्तेऽपि अयं न मुखवैवर्ण्यवानित्याह– **अनन्तेति** ।।२१५।।

**चट्टि–** देववरैः देवश्रेष्ठैरित्युक्तरीत्या । ईरितः उदारैः उत्कृष्टै गुणैः ज्ञानानन्दादिगुणैः अर्णव इव अर्णवः । समुद्रदृष्टान्ते समुद्रवत् परिमाणह्रासवान् स्यादित्यत आह– **अक्षोभ्येति** ।। अक्षोभ्यतमा अत्यगाधा अन्तरहितेति यावत् । अमृता क्षयरहिता आकृतिः स्वरूपं यस्य स तथा । तस्मात् नागभोगादुत्थाय अनन्तानां सोमार्काणां कान्तिरिव द्युतिः प्रकाशो यस्य स तथा । अमरैः देवैः अन्वितः सन् ययौ । मेरुं प्रतीति शेषः ।।२१५।।

**स मेरुमाप्याऽह चतुर्मुखं प्रभुर्यत्र त्वयोक्तोऽस्मि हि तत्र सर्वथा ।**
**प्रादुर्भविष्ये भवतो हि भक्त्या वशस्तवाहं स्ववशोऽपि चेच्छया ।।२१६।।**

**वादिराजीया–** तत्र प्रादुर्भविष्ये हीति हिशब्देन जन्माभावप्रसिद्धिं सूचयति । तु विशेषेण भवतो भक्त्या इच्छया तव वशे वर्ते हीति हिशब्देन 'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।' [भा.९.६.५१] 'वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ।।'[भा.९.६.५५] इति प्रमाणप्रसिद्धिं सूचयति । 'ब्रह्मा तदुपधार्याथ सह देवैस्तया सह । जगाम सत्रिनयनः तीरं क्षीरपयोनिधेः ।।' इति भागवतोक्तेः [भा.१०.१.१९] सत्यलोकस्थितो ब्रह्मा विष्णोः सर्वोत्तमत्वप्रदर्शनाय स्वस्य तस्मिन् निरवधिकभक्ति-प्रकटनाय च देवैः सह प्राक् श्वेतद्वीपं जगाम । तत्रापि सर्वैरदृश्यः सन् ब्रह्मणः एव स्ववाचः श्रावयामास ।

**व्यासतीर्थीया–** मत्प्रार्थने किं कारणमिति जिज्ञासायामाह– **त्वमेवेति** ।।२१४-२२०।।

**वरदराजीया–** तदेव कुतः? यतो नित्यं उदिता पूर्णा शक्तिः यस्य सः । त्वमेव नित्योदितायाः पूर्णायाश्रितो ज्ञानस्य घनः एकरसः त्वमेव । तथा नित्यं उदितं अभिव्यक्तं पूर्णं परिपूर्णं सत् निर्दुष्टं सुखं यस्य स । त्वमेव तस्मात् त्वादृक् त्वत्सदृशः कश्चिन्नास्ति । ते अधिकः कुत एव न कुतोऽपीत्यर्थः ।।

**जनार्दनीया–** देवेशेत्युक्तं विवृण्वन्नाहुरित्याह– **त्वमेवेति** ।। नित्यं सर्वदा उदिता अभिव्यक्ता पूर्णशक्तिर्यस्य स तथा । त्वमेव नित्योदितया पूर्णया चिता ज्ञानेन घनः निबिडः । त्वमेव नित्योदितं पूर्णं सत् दुःखास्पृष्टं सुखं आनन्दो यस्य सः । त्वमेव यतः अतः त्वादृक् त्वत्सदृशः कश्चित् पुमान्नास्ति । तेऽधिकः त्वदुत्तमः कुत एव ? नैवेत्यर्थः ।।२१४।।

**ताम्रपर्णीया–** यद्वा ब्रह्मादेः विष्णवाधिक्याद् साम्यात् ऐक्याद् वा कथं तस्य तद्गतत्वमित्यत आह– **त्वमेवेति** ।। त्वादृङ् न कश्चित् इति साध्यम् । त्वमेव इत्यादिहेतुत्रयम् । व्यभिचारपरिहाराय एवकारः । यद्वा नित्योदितेति तृतीयविशेषणं प्रधानहेतुः । न चासिद्धो हेतुः । तत्प्रेप्सुत्वे सति तत्र शक्तत्वादित्याशयेनाह– **त्वमेवत्यादिविशेषणेन** ।। प्रेप्सायां प्रेप्सावत्त्वं हेतुरिति भावेन द्वितीयम् ।।२१४।।[१]

**भावचन्द्रिका–** तवावतारे सामर्थ्यज्ञापनसुखतिरोधानाभावहननोपायान् ज्ञात्वा अनायासेन शत्रून् जहीति भावेनाह– **त्वमेवेति** ।।२१४।।

**चट्टि–** देवेशेत्युक्तं विवृण्वन्नाहुरित्याह– **त्वमेवेति** ।। नित्यं सर्वदा उदिता अभिव्यक्ता पूर्णा शक्तिर्यस्य सः । त्वमेव नित्योदितया पूर्णया चिता ज्ञानेन घनो निबिडः । त्वमेव नित्यं उदितं अभिव्यक्तं पूर्णं सद् दुःखास्पृष्टं सुखमानन्दो यस्य सः त्वमेव यतः अतः । त्वादृक् त्वत्सदृशः कश्चित् पुमान्नास्ति । ते अधिकः त्वदुत्तमः कुत एव न कुतोऽपीत्यर्थः ।।२१४।।

**इतीरितो देववरैरुदारगुणार्णवोऽक्षोभ्यतमामृताकृतिः ।**
**उत्थाय तस्मात् प्रययावनन्तसोमार्ककान्तिद्युतिरन्वितोऽमरैः ।।२१५।।**

**वादिराजीया–** अक्षोभ्यतमामृताकृतिः 'क्षुभु चित्तविक्षेपे' इति धातोः केनापि क्षोभयितुं अशक्या अमृता मृतिरहिता आकृतिर्यस्य स तथोक्तः ।।२१५।।

---

१. **ताम्रपर्णीया–** ननु 'ब्रह्मविष्णुमहेश्वराणां साम्यम्' इति केचित् । अन्ये शिवादेरेव विष्णवपेक्षयोत्तमत्वमित्यास्थिषत तत्कथं ब्रह्मादीनां त्वमेव गतिरित्युच्यते इत्यतो उपलक्षणत्वेन समराहित्ये हेतुत्रयमाह– **त्वमेवेति** ।। व्यभिचारवारणाय त्वमेवेति अवधारणम् । यद्वा नित्योदितपूर्णसत्सुखत्वं समराहित्ये हेतुः ।।२१५।। इति हो पुस्तकपाठः ।

**वरदराजीया–** इति उक्तरीत्या देववरैः ईरितः उदारगुणैरर्णव इव अक्षोभ्यतमा अत्यन्तमनवगाह्या अमृता नित्यमुक्ता आकृतिः स्वरूपं यस्य स तथा । तस्मान्नागभोगात् उत्थाय अनन्तानां सोमार्काणां कान्तिरिव द्युतिर्यस्यासौ तथा । अमरैः देवैरन्वितो मेरुं प्रति ययौ ।।२१५।।

**अनन्तभट्टीया–** तस्मात् शेषभोगादुत्थाय ।।२१५।।

**जनार्दनीया–** उदारैः उत्कृष्टैः गुणैः ज्ञानानन्दादिगुणैः अर्णव इवार्णवः । समुद्रदृष्टान्तेन समुद्रवत् परिमाणह्रासवान् स्यादित्यत आह– **अक्षोभ्येति** ।। अक्षोभ्यतमा अत्यगाधा, परिच्छेदरहितेति यावत् । अमृता नित्या आकृतिः स्वरूपं यस्य स तथा । तस्मात् नागभोगात् उत्थाय अमरैः देवैः अन्वितः युक्तः प्रययौ । मेरुं प्रतीति शेषः । ननु असुरबलं श्रुत्वा विच्छविः किमभूदित्याशङ्क्याह– **अनन्तेति** ।। अनन्तसोमार्काणां कान्तिः शोभा द्युतिः प्रकाशो यस्य । कान्तिद्युत्योः पर्यायत्वेऽपि चन्द्रगतशोभासूर्यगत-प्रतापरूपावान्तरविशेषवाचित्वेन सह प्रयोगः ।।२१५।।

**भावचन्द्रिका–** न केवलमेतावत् । सकलगुणतिरोधानश्चेत्याह– **उदारेति** ।। देहस्यापि तदात्मकत्वात् ह्रासो मरणश्च नेत्याह– **अक्षोभ्य इति** ।। युद्धं करिष्यामीति प्राप्तेऽपि अयं न मुखवैवर्ण्यवानित्याह– **अनन्तेति** ।।२१५।।

**चट्टि–** देववरैः देवश्रेष्ठैरित्युक्तरीत्या । ईरितः उदारैः उत्कृष्टै गुणैः ज्ञानानन्दादिगुणैः अर्णव इव अर्णवः । समुद्रदृष्टान्ते समुद्रवत् परिमाणह्रासवान् स्यादित्यत आह– **अक्षोभ्येति** ।। अक्षोभ्यतमा अत्यगाधा अन्तरहितेति यावत् । अमृता क्षयरहिता आकृतिः स्वरूपं यस्य स तथा । तस्मात् नागभोगादुत्थाय अनन्तानां सोमार्काणां कान्तिरिव द्युतिः प्रकाशो यस्य स तथा । अमरैः देवैः अन्वितः सन् ययौ । मेरुं प्रतीति शेषः ।।२१५।।

**स मेरुमाप्याऽह चतुर्मुखं प्रभुर्यत्र त्वयोक्तोऽस्मि हि तत्र सर्वथा ।**
**प्रादुर्भविष्ये भवतो हि भक्त्या वशस्तवाहं स्ववशोऽपि चेच्छया ।।२१६।।**

**वादिराजीया–** तत्र प्रादुर्भविष्ये हीति हिशब्देन जन्माभावप्रसिद्धिं सूचयति । तु विशेषेण भवतो भक्त्या इच्छया तव वशे वर्ते हीति हिशब्देन 'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।' [भा.९.६.५१] 'वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ।।'[भा.९.६.५५] इति प्रमाणप्रसिद्धिं सूचयति । 'ब्रह्मा तदुपधार्याथ सह देवैस्तया सह । जगाम सत्रिनयनः तीरं क्षीरपयोनिधेः ।।' इति भागवतोक्तेः [भा.१०.१.१९] सत्यलोकस्थितो ब्रह्मा विष्णोः सर्वोत्तमत्वप्रदर्शनाय स्वस्य तस्मिन् निरवधिकभक्ति-प्रकटनाय च देवैः सह प्राक् श्वेतद्वीपं जगाम । तत्रापि सर्वैरदृश्यः सन् ब्रह्मणः एव स्ववाचः श्रावयामास ।

ततस्तैर्देवैः सह राजा कोशरक्षकमिव भुवो रक्षणाय मेरौ स्थितं ब्रह्माणमपि दयया अनुकूलयितुं तेन काश्यपस्य दत्तशापं च तन्मुखादेव श्रुत्वा मानयितुं 'वसुन्धरातलोद्भवोन्मुखं श्रुतं दितेः सुतैः' इति वक्ष्यमाणत्वात् । असुरागम्यश्वेतद्वीपं विहाय असुरगमनार्हं मेरुं प्राप्य असुरान् प्रत्यपि सुराणामवतारोद्योगं श्रावयितुं च मेरावागत्य दृश्य एव सन् तद्वचनादेव सर्वं कार्यं कृतवानिति विवेकः । अतो भागवतहरिवंशोक्त्योर्न विरोध इति ज्ञेयम् ।।२१६।।

**वरदराजीया–** सः प्रभुः मेरुं आप्य प्राप्य चतुर्मुखमाह । किमिति । यत्र कुले प्रादुर्भावः कर्तव्य इति त्वयोक्तोऽस्मि हि तत्र कुले सर्वथा प्रादुर्भविष्ये । यतः स्ववशोऽपि भवतो भक्त्या स्वेच्छया वश इव अहमस्मि तत इत्यर्थः ।।२१६।।

**अनन्तभट्टीया–** भक्त्या तव वश इव ।।२१६।।

**जनार्दनीया–** यत्र यस्मिन्कुले त्वया उक्तोऽस्मि अवतारं कुर्वित्युक्तोऽस्मि तत्र सर्वथा अवश्यं प्रादुर्भविष्ये । हि यस्मात् कारणात् अहं स्ववशोऽपि स्वतन्त्रोऽपि भवतो भक्त्या तव वश इव । अत इति सम्बन्धः ।।२१६।।

**ताम्रपर्णीया–** भक्त्या भवतो वश इति सम्बन्धः ।।२१६।।

**चट्टि–** प्रभुः सः विष्णुर्मेरुं आप्य चतुर्मुखं ब्रह्माणमाह । किमिति । यत्र यस्मिन् कुले अवतारं कुर्विति त्वया उक्तोऽस्मि तत्र सर्वथा अवश्यं प्रादुर्भविष्ये । हि यस्मात् अहं स्ववशोऽपि स्वतन्त्रोऽपि भवतो भक्त्या ममेच्छया तव वशः अथवा वश इव । लुप्तोपमा ।।२१६।।

**ब्रह्मा[1] प्रणम्याह तमात्मकारणं प्रादां पुराऽहं वरुणाय गाः शुभाः ।**
**जहार तास्तस्य पिताऽमृतस्रवाः स कश्यपो द्राक् सहसाऽतिगर्वितः ।।२१७।।**

**वादिराजीया–** सहसातिगर्वित इत्यत्र सहसा बलेन इत्यर्थः ।।२१७-२२७।।

**वरदराजीया–** तं आत्मनः कारणं जनकं नारायणं प्रणम्य ब्रह्माह । किमिति । पुरा अहं वरुणाय शुभाः उत्तमाः गाः प्रादां दत्तवानस्मि । तस्य वरुणस्य पिता कश्यपः । अमृतं स्रवन्ति दुहन्तीत्यमृतस्रवाः ताः । मया दत्ताः गाः सहसा बलेनातिगर्वितो द्राक् आशु जहार अपहृतवान् ।।२१७।।

**अनन्तभट्टीया–** आत्मकारणं स्वजनकम् । सहसा बलेन गर्वितः ।।२१७।।

---

१. हरिवंशे.हविवंशपर्व. ५५-२१ श्लोकमारभ्य ३८ श्लोकपर्यन्तम् ।

**जनार्दनीया–** आत्मनः स्वस्य कारणं उत्पत्तिकारणं हरिं प्राह । किमिति ? पुरा अहं वरुणाय गाः प्रादां दत्तवानस्मि । तस्य वरुणस्य पिता स देवपितेति प्रसिद्धः । कश्यपः सहसा पितृत्वबलेन गर्वितः सन् द्राक् शीघ्रम् । अमृतं स्रवन्ती दुहन्तीत्यमृतस्रवाः । मद्दत्तगाः जहार अपहृतवान् ।।२१७।।

**ताम्रपर्णीया–** द्राक् जहार । विचारमकृत्वेति यावत् ।।२१७-२१९।।

**चट्टि–** आत्मनः स्वस्य कारणं जनकं तं नारायणं ब्रह्मा प्रणम्याह । किमिति । पुरा अहं वरुणाय शुभाः उत्तमाः गाः प्रादां दत्तवानस्मि । तस्य वरुणस्य पिता सः देवानां पितेति प्रसिद्धः । कश्यपः सहसा बलेन अतिगर्वितः सन् । अमृतं स्रवन्ति दुहन्तीत्यमृतस्रवाः ताः । गाः द्राक् शीघ्रं जहार अपहृतवान् ।।२१७।।

**मात्रा त्वदित्या च तथा सुरभ्या प्रचोदितेनैव हृतासु तासु ।**
**श्रुत्वा जलेशात् स [1]मया तु शप्तः [2]क्षत्रेषु गोजीवनको भवेति ।।२१८।।**

**वरदराजीया–** मात्रा वरुणस्य इति शेषः । तथा सुरभ्या प्रचोदितेन प्रेरितेन कश्यपेन तासु गोषु हृतासु सतीषु जलेशात् वरुणात् श्रुत्वा, गवापहारमिति शेषः । स कश्यपो मया अभिशप्तः । किमिति । क्षेत्रेषु वनेषु । 'क्षत्रेषु' इति पाठे क्षत्रियेष्वित्यर्थः । [गोजीवनकः गो जीवनकः तादृशो भवेति] ।।

**अनन्तभट्टीया–** सः प्रसिद्धः । जलेशात् श्रुत्वा तत्प्रसङ्गमिति...। क्षत्रेषु क्षत्रियेषु गोजीवनकः गोक्षीरादि विक्रीय कृतजीवनोपाय इत्यर्थः ।।२१८।।

**जनार्दनीया–** मात्रा वरुणमात्रा अदित्या तथा सुरभ्या च मात्रा । अदित्याः सपत्नीत्वात् सुरभ्याः मातृत्वमुक्तमिति भावः । प्रचोदितेन कश्यपेन तासु गोषु हृतासु सतीषु जलेशाच्छ्रुत्वा । कश्यपकर्मेति शेषः । मया स कश्यपः शप्तः । किमिति ? क्षत्रेषु क्षत्रियेषु । गोभिर्जीवनकं जीवनोपायो यस्य स तथा । भवेति सम्बन्धः । गोरसगोमयगोवृषविक्रयात् कृतजीवनोपाय इत्यर्थः । क्षत्रियेषूत्पन्नानां गोजीवनकं नीचवर्तनं तस्माद्गोजीवनको भवेति शप्त इति भावः । क्षेत्रेष्विति पाठे गोसञ्चरणयोग्यस्थानेषु ।।

**चट्टि–** मात्रा वरुणमात्रा अदित्या तथा सुरभ्या च सापत्नीमात्रा प्रचोदितेन प्रेरितेन कश्यपेन तासु गोषु हृतासु सतीषु जलेशाद् वरुणात् श्रुत्वा कश्यपकर्मेति शेषः । मया सः कश्यपः शप्तः । किमिति । क्षत्रेषु क्षत्रियेषु गोजीवनकः गोभिः जीवनं जीवनोपायो यस्य स तथा । भवेति शप्तः इति सम्बन्धः । गोरसादिविक्रयकृज्जीवनोपाय इत्यर्थः । क्षत्रियेषूत्पन्नानां गोजीवनं नीचवर्तनम् । तस्मात् गोजीवनको भवेति शप्त इति भावः । 'क्षेत्रेषु' इति पाठे गोचारणयोग्यस्थानेषु ।।२१८।।

---

१. 'मयाभिशप्तः' इति वरदराजीयपाठः । २. 'क्षेत्रेषु' इति वरदराजीये पाठान्तरम् ।

**शूरात् स जातो बहुगोधनाढ्यो भूमौ यमाहुर्वसुदेव[१] इत्यपि ।**
**तस्यैव भार्या त्वदितिश्च देवकी बभूव चान्या सुरभिश्च रोहिणी ।।२१९।।**

**मधुसूदनीया–** ।। **वसुदेव इत्यपीति** ।। अपिशब्देनानकदुन्दुभिरित्यप्याहुरिति बोध्यम् ।।२१९-२२०।।

**वरदराजीया–** स कश्यपः शूरात् तन्नामकात् बहुगोरूपधनाढ्यो भूमौ जातः । यं अत्र जातं वसुदेव इत्याहुः । लोका इति शेषः । अदितिस्तु तस्य कश्यपस्यैव भार्या देवकी इति अभूत् । अन्या द्वितीया भार्या सुरभिरेव रोहिणीत्येवाभूदित्यर्थः ।।२१९।।

**अनन्तभट्टीया–** गोधनाढ्यः । अन्या अपरा भार्याः ।।२१९।।

**जनार्दनीया–** स कश्यपः शूरात् तन्नामयादवात् । बहुगोरूपधनेन आढ्यः श्रेष्ठः सन् जातः । भूमौ वसूनां गोधनानां देवः स्वामी । अत एव वसुदेव इति यं शूरपुत्रं आहुः । जना इति शेषः । तस्य कश्यपस्य । अन्या द्वितीया सुरभिः ।।२१९।।

**ताम्रपर्णीया–** ।। **बहुगोधनाढ्य इति** ।। वसुना गोधनेन दीव्यतीति वसुदेव इति अनेन व्युत्पत्तिः सूचिता ।।२१९-२२१।।

**चट्टि–** सः कश्यपः बहुगोरूपधनेनाढ्यः श्रेष्ठः सन् शूरात् तन्नामकयादवात् भूमौ जातः । यं वसूनां गोधनानां देवः स्वामीति वसुदेव इत्यप्याहुः । जना इति शेषः । अपिशब्देन आनकदुन्दुभिरित्याहुरिति बोध्यम् । तस्य कश्यपस्य भार्या अदितिरेव देवकी बभूव । अन्या द्वितीया भार्या सुरभिश्च रोहिणीति बभूव ।।२१९।।

**तत्त्वं भवस्वाऽशु च देवकीसुतस्तथैव यो [२]द्रोणनामा वसुः सः ।**
**स्वभार्यया धरया त्वपितृत्वं प्राप्तुं तपस्तेप उदारमानसः ।।२२०।।**

---

१. 'पुरा हि कश्यपो विष्णो वरुणस्य महात्मनः । जहार यज्ञिया गा वै पयोदास्तु महामखे ।। अदितिः सुरभिश्चैते द्वे भार्ये कश्यपस्य तु । प्रदीयमाना गास्तास्तु नैच्छतां वरुणस्य वै ।।' इति हरिवंशे.हरि.५५.२१-२२ 'इत्यम्बुपतिना प्रोक्तो वरुणेनाहमच्युत । गवां करणतत्त्वज्ञः कश्यपं शापमुत्सृजम् ।। येनांशेन हृता गावः कश्यपेन महर्षिणा । स तेनांशेन जगति गत्वा गोपत्वमेष्यति ।। या च सा सुरभिर्नाम अदितिश्च सुरारणिः । तेप्युभे तस्य भार्ये वै तेनैव सह यास्यतः ।।' इति हरिवंशे.हरि.५५.३२-३४

२. 'द्रोणो वसूनां प्रवरो धरया सह भार्यया । करिष्यमाण आदेशं ब्रह्मणस्तमुवाच ह ।। जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ । भक्तिः स्यात् परमा लोके ययाञ्जो दुरितं तरेत् ।। अस्त्वित्युक्तः स एतेन व्रजे द्रोणो महायशाः । जज्ञे नन्दः इति ख्यातो यशोदा सा धराभवत् ।।' इति भागवते १०.९.४८-५०

**वरदराजीया–** ततः किमिति तत्राह– **तदिति** ।। तत्तस्मात् त्वमाशु देवकीसुतो भवस्व । अन्यदपि विज्ञापनीयमस्तीत्याह– **तथैवेति** ।। तथा यो द्रोणो नामा वसुः स एव धरया धरानाम्न्या स्वभार्यया सह त्वत्पितृत्वं तव पितृत्वं प्राप्तुं तपस्तेपे । मां प्रतीति शेषः । उदारं मानसं यस्य स तथा ।।

**अनन्तभट्टीया–** स त्वञ्च ।।२२०।।

**जनार्दनीया–** तत् तस्मात् त्वं तथैव यथा देवकीपुत्रत्वे कारणं तथैव अन्यदपि कारणमस्तीत्यर्थः। पूर्वं यो द्रोणनामा वसुः सः स्वभार्यया धरानाम्न्या सह तव पितृत्वं प्राप्तुं, तपः मदीयं तपः तेपे । अत एव उदारं उत्तमं मानसं अन्तःकरणं यस्य ।।२२०।।

**चट्टि–** ततः किमित्यत आह– **तदिति** ।। तत् तस्मात् त्वं आशु देवकीसुतः भवस्व । तथैवान्यकारणमस्तीत्यर्थः । पूर्वं यः द्रोणनामा वसुः सः स्वभार्यया धरानाम्न्या सह तव पितृत्वं प्राप्तुं तपस्तेपे । मां प्रतीति शेषः । अत एवोदारमुत्तमं मानसं अन्तःकरणं यस्य स तथा ।।२२०।।

**तस्मै वरः स मया सन्निसृष्टः स चास नन्दाख्य उतास्य भार्या ।**
**नाम्ना यशोदा स च शूरतातसुतस्य वैश्याप्रभवोऽथ गोपः ।।२२१।।**

**व्यासतीर्थीया–** शूरस्य तातः शूरतातस्तस्य सुतः शूरस्तस्य शूरस्येति केचित् । शूरतातसुतस्य शूरादन्यस्य सुतस्येति केचित् ।।२२१।।

**वेदाङ्गतीर्थीया–** शूरतातसुतस्य शूरस्य तातः शूरतातः तस्य पुत्रः शूरः ।।२२१।।

**वादिराजीया–** शूरतातसुतस्य शूरस्य तातः पिता शूरपिता तस्य सुतः शूर एव तस्येत्यर्थः । शूरस्येति वक्तव्ये छन्दोभङ्गपरिहारार्थमेवमुक्तिः । घटस्येति वक्तव्ये घटाभावाभावस्येतिवत् तर्कमुद्रया इति ज्ञेयम् । अथ गोप इत्यत्राव्ययानामनेकार्थत्वात् अथ तस्मात् वैश्यापुत्रत्वात् गोप इत्यर्थः ।।२२१।।

**सत्याभिनवीया–** तत्रैव तस्मै वरः स मया सन्निसृष्टस्स इति श्लोकः । शूरतातसुतस्य वैश्याप्रभवो हि गोप इत्यस्य गोपः तातसुतस्य तातोद्धारकसुतस्य । शूरः शूरस्य सकाशात् । वैश्याप्रभवः इत्येतत् हि प्रसिद्धमित्यर्थः । एतेन शूरस्येत्यनेनैव पूर्णत्वात् शूरस्य शूरतातसुतस्येति शूरतातसुतत्वकथनं व्यर्थमिति दूषणं परिहृतम् । शूरस्येति षष्ठ्याः लोप इत्यङ्गीकारात् । एतेनैव सर्वेषां तातसुतत्ववत् । शूरस्यापि तातसुतत्वस्य सिद्धत्वात् तातसुतस्येति शूरस्य तातसुतत्वकथनं व्यर्थमिति दूषणं प्रत्युक्तम् । तातसुतस्येत्यस्य तातोद्धारकसुतस्येत्यर्थे तात्पर्यमित्यङ्गीकारात् ।।२२१।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां एकादशोऽध्यायः ।।

**मधुसूदनीया**– ।। **शूरतातसुतस्येति** ।। शूरपितुः पुत्रः शूर एव तस्येत्यर्थः ।।२२१-२२३।।

**वरदराजीया**– तस्मै द्रोणनाम्ने सः वरः त्वत्पितृत्वलक्षणो मया सन्निसृष्टः प्रदत्तः । स च द्रोणो नन्द इत्याख्या यस्य स तथा आस बभूव । उतानन्तरं अस्य द्रोणस्य भार्या धरा नाम्ना यशोदा च आस । स च नन्दः शूरतातसुतस्य शूरस्य तातः शूरतातः तस्य सुतः शूर एव । तस्य सकाशात् वैश्याप्रभवः शूरात् वैश्यस्त्रीप्रभवः । अतस्तस्मात् गोपालकः आसेति सम्बन्धः ।।२२१।।

**अनन्तभट्टीया**– शूरतातसुतस्य शूरस्य यस्तातः तस्य सुतस्य । स शूर इति केचित् । तस्य शूरतातसुतस्य । पञ्चम्यर्थे षष्ठी । शूरतातसुतस्य सुतात् वैश्याप्रभवः स्वेन भुक्तायां वैश्यायां जातः ।।२२१।।

**जनार्दनीया**– तस्मै वसवे स वरः त्वत्पितृत्वप्राप्तिरूपवरः सन्निसृष्टः प्रदत्तः । स द्रोणः नन्दाख्यः आस । उत नन्दोत्पत्त्यनन्तरं अस्य द्रोणस्य भार्या धरानाम्नी यशोदा, आसेति शेषः । स च नन्दः । शूरस्य तातः तस्य सुतः शूरभ्राता तस्य सकाशात् शूरस्य वा । वैश्यायां विवाहधर्मेण स्वीकृतवैश्यस्त्रियां प्रभवः उत्पन्नः । यतः अतः गोपः गोपालः ।।२२१।।

**ताम्रपर्णीया**– ।। **शूरतातसुतस्येति** ।। 'शूरतातसुतः शूर एव' इति केचित् । 'शूरादन्यसुतस्य' इति केचित् ।।२२१-२२४।।

**भावचन्द्रिका**– असवर्णविवाहस्याश्रेष्ठत्वात् शूरस्यान्यक्षेत्रोत्तमत्वात् तस्याश्रैष्ठ्यमनुक्त्वा शूरतातसुतस्येत्युक्तम् ।।२२१।।

**चट्टि**– तस्मै द्रोणनामकवसवे सः वरः त्वत्पितृत्वप्राप्तिलक्षणो वरः मया सन्निसृष्टः प्रदत्तः । सः द्रोणः नन्द इत्याख्या यस्य स तथा आस । उतानन्तरं अस्य द्रोणस्य भार्या धरा नाम्नी यशोदा च आस । सः नन्दश्च शूरस्य तातः शूरपिता तस्य सुतः शूर एव तस्येत्यर्थः । शूरस्येति वक्तव्ये छन्दोभङ्गपरिहारार्थमेवमुक्तिः । घटस्येति वक्तव्ये घटाभावाभावस्येतिवत् । तस्य सकाशात् वैश्यायां विवाहधर्मेण स्वीकृतायां वैश्यायां प्रभवः उत्पन्नो यस्मात् । अथ तस्मात् गोपालः आसीदिति सम्बन्धः । 'तस्मात् अथो अथेत्येतत् हेत्वर्थे समुदीरितम्' इति शब्दनिर्णये । यद्वा शूरतातस्य सुतः शूरस्य भ्राता तस्य सकाशादिति ।।२२१।।

**तौ देवकीवसुदेवौ च तेपतुस्तपस्त्वदीयं सुतमिच्छमानौ ।**
**त्वमेव तस्मात् प्रथमं प्रदर्श्य तत्र स्वरूपं हि ततो व्रजं व्रज ।।२२२।।**

**व्यासतीर्थीया–** वसुदेवादुत्पत्तौ निमित्तं वदन् उभयपुत्रः कथं स्यामिति शङ्कायां तद्घटनप्रकारमाह- **ताविति** ।।२२२।।

**वेदाङ्गतीर्थीया–** वसुदेवादुत्पत्तौ निमित्तं अनुवर्णयन् उभयपुत्रः कथं स्यामिति शङ्कायां शङ्कां च पूरयन्नाह– **ताविति** ।।२२२।।

**वादिराजीया–** तत्र स्वरूपं प्रदर्श्य हीति हिशब्देन दर्शनमेव भगवतो जननं नापरमिति सूचयति ।।

**वरदराजीया–** तौ अदितिकश्यपात्मकौ देवकीवसुदेवौ च त्वदीयं त्वत्सम्वन्धि तपस्तेपतुः चक्रतुः । किमर्थम्? त्वामेव सुतं पुत्रमिच्छमानौ आकाङ्क्षमाणौ । भवान् पुत्रो भूयादिति त्वां प्रति तपश्चक्रतुरिति भावः । तत्तस्मात्कारणात् तत्र देवकीवसुदेवयोः स्वरूपं कृष्णरूपं प्रदर्श्य प्रादुर्भाव्य ततो अनन्तरं गोकुलं व्रज गच्छ । तथा च तयोरुभयविधमपि वरप्रदानं सम्पादितं स्यादिति भावः ।।२२२।।

**अनन्तभट्टीया–** त्वामेव सुतम् । तत्र वसुदेवदेवक्योः ।।२२२।।

**जनार्दनीया–** 'स त्वं भवस्वाशु च देवकीसुत' इत्युक्तस्य कारणं विशदयन् वसुदेवनन्दयोः पितृत्वं घटयन्नाह– **ताविति** ।। कथं भूतौ ? सुतं पुत्रस्वरूपं त्वां इच्छमानौ इच्छन्तौ । तस्मात् त्वं प्रथमं तत्र देवक्यां स्वरूपं प्रदर्श्य, ततः प्रादुर्भावानन्तरं व्रजं नन्दगोपगोष्ठं प्रति व्रज गच्छ ।।

**चट्टि–** वसुदेवाद् देवक्यामुत्पत्तौ निमित्तं वदन् वसुदेवनन्दयोरुभयोः पितृत्वं घटयन्नाह– **ताविति** ।। तौ देवकीवसुदेवौ च त्वामेव सुतमिच्छमानौ इच्छन्तौ त्वदीयं तव सम्वन्धि तपः हि यस्मात् तेपतुः चक्रतुः । तस्मात् प्रथमं तत्र देवक्यां स्वरूपं प्रदर्श्य ततोऽनन्तरं व्रजं नन्दगोपगोष्ठं प्रति व्रज गच्छ । तदा तयोरुभयोः विषयमपि वरप्रदानं सम्पादितं स्यादिति भावः ।।२२२।।

**इतीरितः सोऽब्जभवेन केशवस्तथेति चोक्त्वा पुनराह देवताः ।**
**सर्वे भवन्तो भवताऽशु मानुषे कार्यानुसारेण यथानुरूपतः ।।२२३।।**

**व्यासतीर्थीया–** यथानुरूपतः योग्यतानुसारेण ।।२२३।।

**वादिराजीया–** यथानुरूपत इत्यत्र भागवतहरिवंशादिग्रन्थे अयमस्माज्जात अयमस्माज्जात इति निरूपितं तदनुकूलरूपवतः । मानुषेष्वनुकूलरूपतः इति वदता यस्य ब्राह्मणेषु जन्मोक्तं बृहस्पत्यादेः स ब्राह्मणरूपतया अवतरतु । यस्य क्षत्रियेषु जन्मोक्तं धर्मराजादेः स क्षत्रियरूपतया अवतरतु । यस्य पुनः शापादिनिमित्ताच्छूद्रतया जन्मोक्तं विदुरादेः स शूद्रतया अवतरतु इत्यादिकं सूचितम् ।।२२३।।

**मधुसूदनीया–** ।। **शूरतातसुतस्येति** ।। शूरपितुः पुत्रः शूर एव तस्येत्यर्थः ।।२२१-२२३।।

**वरदराजीया–** तस्मै द्रोणनाम्ने सः वरः त्वत्पितृत्वलक्षणो मया सन्निसृष्टः प्रदत्तः । स च द्रोणो नन्द इत्याख्या यस्य स तथा आस बभूव । उतानन्तरं अस्य द्रोणस्य भार्या धरा नाम्ना यशोदा च आस । स च नन्दः शूरतातसुतस्य शूरस्य तातः शूरतातः तस्य सुतः शूर एव । तस्य सकाशात् वैश्याप्रभवः शूरात् वैश्यस्त्रीप्रभवः । अतस्तस्मात् गोपालकः आसेति सम्बन्धः ।।२२१।।

**अनन्तभट्टीया–** शूरतातसुतस्य शूरस्य यस्तातः तस्यं सुतस्य । स शूर इति केचित् । तस्य शूरतातसुतस्य । पञ्चम्यर्थे षष्ठी । शूरतातसुतस्य सुतात् वैश्याप्रभवः स्वेन भुक्तायां वैश्यायां जातः ।।२२१।।

**जनार्दनीया–** तस्मै वसवे स वरः त्वत्पितृत्वप्राप्तिरूपवरः सन्निसृष्टः प्रदत्तः । स द्रोणः नन्दाख्यः आस । उत नन्दोत्पत्त्यनन्तरं अस्य द्रोणस्य भार्या धरानाम्नी यशोदा, आसेति शेषः । स च नन्दः । शूरस्य तातः तस्य सुतः शूरभ्राता तस्य सकाशात् शूरस्य वा । वैश्यायां विवाहधर्मेण स्वीकृतवैश्यस्त्रियां प्रभवः उत्पन्नः । यतः अतः गोपः गोपालः ।।२२१।।

**ताम्रपर्णीया–** ।। **शूरतातसुतस्येति** ।। 'शूरतातसुतः शूर एव' इति केचित् । 'शूरादन्यसुतस्य' इति केचित् ।।२२१-२२४।।

**भावचन्द्रिका–** असवर्णविवाहस्याश्रेष्ठत्वात् शूरस्यान्यक्षेत्रोत्तमत्वात् तस्याश्रैष्ठ्यमनुक्त्वा शूरतातसुतस्येत्युक्तम् ।।२२१।।

**चट्टि–** तस्मै द्रोणनामकवसवे सः वरः त्वत्पितृत्वप्राप्तिलक्षणो वरः मया सन्निसृष्टः प्रदत्तः । सः द्रोणः नन्द इत्याख्या यस्य स तथा आस । उतानन्तरं अस्य द्रोणस्य भार्या धरा नाम्नी यशोदा च आस । सः नन्दश्च शूरस्य तातः शूरपिता तस्य सुतः शूर एव तस्येत्यर्थः । शूरस्येति वक्तव्ये छन्दोभङ्गपरिहारार्थमेवमुक्तिः । घटस्येति वक्तव्ये घटाभावाभावस्येतिवत् । तस्य सकाशात् वैश्यायां विवाहधर्मेण स्वीकृतायां वैश्यायां प्रभवः उत्पन्नो यस्मात् । अथ तस्मात् गोपालः आसीदिति सम्बन्धः । 'तस्मात् अथो अथेत्येतत् हेत्वर्थे समुदीरितम्' इति शब्दनिर्णये । यद्वा शूरतातस्य सुतः शूरस्य भ्राता तस्य सकाशादिति ।।२२१।।

**तौ देवकीवसुदेवौ च तेपतुस्तपस्त्वदीयं सुतमिच्छमानौ ।**
**त्वमेव तस्मात् प्रथमं प्रदर्श्य तत्र स्वरूपं हि ततो व्रजं व्रज ।।२२२।।**

**व्यासतीर्थीया–** वसुदेवादुत्पत्तौ निमित्तं वदन् उभयपुत्रः कथं स्यामिति शङ्कायां तद्घटनप्रकारमाह– **ताविति** ।।२२२।।

**वेदाङ्गतीर्थीया–** वसुदेवादुत्पत्तौ निमित्तं अनुवर्णयन् उभयपुत्रः कथं स्यामिति शङ्कायां शङ्कां च पूरयन्नाह– **ताविति** ।।२२२।।

**वादिराजीया–** तत्र स्वरूपं प्रदर्श्य हीति हिशब्देन दर्शनमेव भगवतो जननं नापरमिति सूचयति ।।

**वरदराजीया–** तौ अदितिकश्यपात्मकौ देवकीवसुदेवौ च त्वदीयं त्वत्सम्बन्धि तपस्तेपतुः चक्रतुः । किमर्थम्? त्वामेव सुतं पुत्रमिच्छमानौ आकाङ्क्षमाणौ । भवान् पुत्रो भूयादिति त्वां प्रति तपश्चक्रतुरिति भावः । तत्तस्मात्कारणात् तत्र देवकीवसुदेवयोः स्वरूपं कृष्णरूपं प्रदर्श्य प्रादुर्भाव्य ततो अनन्तरं गोकुलं व्रज गच्छ । तथा च तयोरुभयविधमपि वरप्रदानं सम्पादितं स्यादिति भावः ।।२२२।।

**अनन्तभट्टीया–** त्वामेव सुतम् । तत्र वसुदेवदेवक्योः ।।२२२।।

**जनार्दनीया–** 'स त्वं भवस्वाशु च देवकीसुत' इत्युक्तस्य कारणं विशदयन् वसुदेवनन्दयोः पितृत्वं घटयन्नाह– **ताविति** ।। कथं भूतौ ? सुतं पुत्रस्वरूपं त्वां इच्छमानौ इच्छन्तौ । तस्मात् त्वं प्रथमं तत्र देवक्यां स्वरूपं प्रदर्श्य, ततः प्रादुर्भावानन्तरं व्रजं नन्दगोपगोष्ठं प्रति व्रज गच्छ ।।

**चट्टि–** वसुदेवाद् देवक्यामुत्पत्तौ निमित्तं वदन् वसुदेवनन्दयोरुभयोः पितृत्वं घटयन्नाह– **ताविति** ।। तौ देवकीवसुदेवौ च त्वामेव सुतमिच्छमानौ इच्छन्तौ त्वदीयं तव सम्बन्धि तपः हि यस्मात् तेपतुः चक्रतुः । तस्मात् प्रथमं तत्र देवक्यां स्वरूपं प्रदर्श्य ततोऽनन्तरं व्रजं नन्दगोपगोष्ठं प्रति व्रज गच्छ । तदा तयोरुभयोः विषयमपि वरप्रदानं सम्पादितं स्यादिति भावः ।।२२२।।

**इतीरितः सोऽब्जभवेन केशवस्तथेति चोक्त्वा पुनराह देवताः ।**
**सर्वे भवन्तो भवताऽशु मानुषे कार्यानुसारेण यथानुरूपतः ।।२२३।।**

**व्यासतीर्थीया–** यथानुरूपतः योग्यतानुसारेण ।।२२३।।

**वादिराजीया–** यथानुरूपत इत्यत्र भागवतहरिवंशादिग्रन्थे अयमस्माज्जात अयमस्माज्जात इति निरूपितं तदनुकूलरूपवतः । मानुषेष्वनुकूलरूपतः इति वदता यस्य ब्राह्मणेषु जन्मोक्तं बृहस्पत्यादेः स ब्राह्मणरूपतया अवतरतु । यस्य क्षत्रियेषु जन्मोक्तं धर्मराजादेः स क्षत्रियरूपतया अवतरतु । यस्य पुनः शापादिनिमित्ताच्छूद्रतया जन्मोक्तं विदुरादेः स शूद्रतया अवतरतु इत्यादिकं सूचितम् ।।२२३।।

**वरदराजीया–** सः केशवो अब्जभवेन ब्रह्मणा इति उक्तरीत्या ईरितो विज्ञापितः तथेति तथास्त्विति चोक्त्वा देवताः देवान् प्रति पुनः प्राह । किमिति? सर्वे भवन्तो यूयं मानुषे लोके आशु भवत । कार्यानुसारेण यथानुरूपतः यो यत्रोत्पत्तुमर्हः तथैव अवतरतेत्यर्थः ।।२२३।।

**अनन्तभट्टीया–** आशु अभवत् । कार्यानुसारेण बलकार्यानुसारेण । यथानुरूपतः योग्यतानुसारेण । [...अर्हः तथेत्यर्थः] ।।२२८।।

**जनार्दनीया–** देवताः देवान् पुनराह । किमिति ? सर्वे भवन्तः आशु मानुषे मनुष्यलोके कार्यानुसारेण सुप्रतीकहस्तिप्राप्तिरूपादिस्वकार्यानुकूलेन बलकार्यानुसारेण वा यथानुरूपतः चतुर्वर्णेषु योग्यतानुसारेण । यो यत्रोत्पत्तुमर्हः तथेत्यर्थः । भवन्तः उत्पत्स्यथ ।।२२३।।

**चट्टि–** सः केशवः अब्जभवेन ब्रह्मणा इत्येवं प्रकारेणोक्तः सन् तथेति तथैवास्त्वित्युक्त्वा देवताः देवान् प्रति पुनराह सर्वे भवन्तः यूयमाशु मानुषे मनुष्यलोके कार्यानुसारेण सुप्रतीकहस्तिप्राप्तिरूपादिस्वस्व-कार्यानुकूल्येन बलकार्यानुसारेण वा यथानुरूपतः चतुर्वर्णेषु योग्यतानुसारेण भवतेत्याहेति पूर्वेणान्वयः ।।२२३।।

**अथावतीर्णाः सकलाश्च देवता यथा यथैवाऽह हरिस्तथा तथा ।**
**वित्तेश्वरः पूर्वमभूद्धि [१]भौमाद्धरेः सुतत्वेऽपि तदिच्छयाऽसुरात् ।।२२४।।**

**व्यासतीर्थीया–** यो भगवत्पुत्रत्वेन जनयितुं योग्यः स तथेत्यादि । को देवः कुत्र किं नामा जात इति जिज्ञासायामाह– **वित्तेश्वर इति** ।। हरेः सुतः कथमसुरो जात इत्यत उक्तम्– **हरेः सुतत्वेऽपि तदिच्छयेति** ।। वित्तेश्वरो देवः कथमसुरादुत्पन्न इत्यत उक्तम्– **तदिच्छया** भगवदिच्छयेति ।।२२४।।

**वेदाङ्गतीर्थीया–** वित्तेश्वरः पूर्वं हरेः सुतत्वेऽपि तदिच्छया भगवदिच्छया भौमासुरात् नरकासुरात् अभूत् ।।२२४।।

**वादिराजीया–** हरेः सुतत्वेऽपि असुरान्नरकात् भौमात् तदिच्छया हरीच्छया पूर्वमेवाभूत् । अवतारे हरिसुतस्यासुरत्वं प्रायः गर्हितमिति सूचनायापिपदम् । पूर्वमभूद्धीति हिशब्देन तथा प्रमाणप्रसिद्धिं सूचयति । असुरादुत्पत्तौ प्रयोजनप्रसिद्धिं वा सूचयति ।।२२४।।

---

१. नरकासुरस्य भार्यापुत्रविषये कालिकापुराणे ३६ अध्याये [नरकशब्दार्थविवरणे शब्दकल्पद्रुमे] 'ततो विदर्भराजस्य पुत्रीं मायाह्वयां हरिः । पुत्रार्थे वरयामास नरकस्य समां गुणैः ।। तामुद्वाह्य हृषीकेशस्तस्मिन् पुरवरे स्वयम् । तया समं स्वतनयं राजत्वेनाभ्यषेचयत् ।। तस्य पुत्राः- ऋतुमत्याश्च जायायां कालेन नरकः क्रमात् । भगदत्तं महाशौर्यं मदवन्तं सुमालिनम् ।। चतुरो जनयामास पुत्रांस्तांश्च क्षितेः सुतः। महासत्वान् महावीर्यान् देवैरन्यैर्दुरासदान् ।।'

**मधुसूदनीया–** ।। **वित्तेश्वर इति** ।। वित्तेश्वरः कुबेरः पूर्वं देवानामवतारात् प्रागेव भौमादभूदित्यन्वयः । स भौमः क इत्यत आह– **असुरादिति** ।। ननु नरकस्य वराहसुतत्वेन कथमसुरत्वमित्यत आह– **हरेरिति** ।। हरेस्सुतत्वेऽपि असुरात् भौमादित्यन्वयः । नन्वेतादृशासुरात् नरकात् कुबेरः किमर्थमुत्पन्न इत्यत आह– **तदिच्छयेति** ।। हरेरिच्छयेत्यर्थः । वेदाङ्गतीर्थस्तु 'वित्तेश्वरः पूर्वं हरेस्सुतत्वेऽपि तदिच्छया भगवदिच्छया भौमादसुरात्' इत्याचक्षते । तन्न । कुबेरस्य हरिसुतत्वे मानाभावात् ।।२२४।।

।। इति श्रीविद्याधीशतीर्थपूज्यपादानां शिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसंग्रहे एकादशोऽध्यायः ।।

**वरदराजीया–** अथानन्तरं यथा यथा येन येन प्रकारेण हरिराह तथा तथा तेन तेन प्रकारेण सकलाः देवताः सर्वे देवाः अवतीर्णाः अवतारं कृतवन्तः । एतदेव विवृणोति– **वित्तेश्वर इत्यादिना** ।। पूर्वं पूर्वजन्मनि वित्तेश्वरः कुबेरः भौमात् भूमिपुत्रात् नरकासुरात् वभूव जातः । कथम्भूतात् भौमात् असुरात् । ननु भूम्यां श्रीवराहाज्जातत्वात् कथं तस्यासुरत्वमित्यत उक्तम्– **हरेरिति** ।। हरेः श्रीवराहस्य सुतत्वेऽपि पुत्रत्वे प्राप्तेऽपि तदिच्छया तस्य हरेः इच्छया असुरात् असुरत्वं प्राप्तात् हरेः पुत्रोऽपि तत्सङ्कल्पानुसारेण असुरो जात इति भावः ।।२२४।।

**अनन्तभट्टीया–** वित्तेश्वरः पूर्वं हरेस्सुतत्वेऽपि स्वयं हरिपुत्रत्वेन सञ्जीवोऽपीत्यर्थः । भौमान्नरकात् । [आस जातः] भौमस्य स्वरूपमाह– **असुरादिति** ।। ननु असुरात् किमर्थं जात इत्यत आह– **तदिच्छया हरीच्छया** ।। यद्वा वित्तेश्वरः वराहस्य सुतत्वेऽपि तदिच्छया ....असुराद्भौमात् ।।२२४।।

**जनार्दनीया–** अथ हर्याज्ञानन्तरं हरिः यथा यथा कार्यानुसारेण यथानुरूपत इति यथा आह तथा तथा तदनुसारेण सकलाः देवताः अवतीर्णाः । तदेव उत्पत्तिक्रमपूर्वकं विवृणोति– **वित्तेश्वर इत्यादिना** ।। वित्तेश्वरः कुबेरः असुराद् भौमात् भूमिपुत्रात् नरकात् पूर्वं हर्याज्ञानन्तरं उत्पन्नेभ्यो देवेभ्यः पूर्वं अभूत् जातः । ननु श्रीवराहाद् भूम्यां जातस्य नरकस्यासुरत्वं कथमित्यत आह– **हरेरिति** ।। हरेः श्रीवराहस्य सुतत्वे सत्यपि तस्य हरेरिच्छया असुरादसुरत्वं प्राप्तादभूदिति सम्बन्धः । असुरोऽपि हरीच्छया हरेः सुतत्वं प्रापेति भावः ।।२२४।।

**ताम्रपर्णीया–** ।। **हरेस्सुतत्वेऽपीति** ।। हरेर्वराहस्य सुतत्वेऽपि तदिच्छया वराहस्येच्छयाऽसुरात् भौमात् । वित्तेश्वरः पूर्वं हरेर्देवानां च संवादाद्देवतावतारात् पूर्वं त्वाऽभूदित्यर्थः । टीकायां तु 'वित्तेश्वरः स्वयं पूर्वं हरेः सुतत्वेऽपि भगवदिच्छया भौमादभूत्' इत्यर्थ उक्तः ।।२२४-२३०।।

**भावचन्द्रिका–** वराहमूर्तिसुतस्य कथमसुरत्वमित्यतः हरेः सुतत्वेऽपि तदिच्छया । असुराद्भौमादिति ।।२२४।।

**चट्टि**– अथानन्तरं हरिः यथा येन प्रकारेणाह तथा तथा तेन प्रकारेणैव सकलाः देवताः सर्वदेवाश्चावतीर्णाः अवतारं कृतवन्तः । उत्पत्तिक्रमपूर्वकं तदेव विवृणोति– **वित्तेश्वर इत्यादिना** ।। वित्तेश्वरः कुबेरः असुराद् भौमात् भूमिपुत्रात् नरकात् पूर्वं हर्याज्ञानन्तरं उत्पन्नेभ्यो देवेभ्यः पूर्वमभूज्जातः । ननु श्रीवराहाद् भूम्यां जातस्य नरकस्य असुरत्वं कथमित्यत आह– **हरेरिति** ।। हरेः श्रीवराहस्य सुतत्वेऽपि तस्य हरेरिच्छया असुरादसुरत्वं प्राप्तादभूदिति सम्बन्धः । असुरोऽपि हरीच्छया हरेः सुतत्वं प्राप्त इति भावः ।।

**पापेन तेनापहृतो हि हस्ती शिवप्रदत्तः सुप्रतीकाभिधानः ।**
**तदर्थमेवास्य सुतोऽभिजातो धनेश्वरो भगदत्ताभिधानः ।।२२५।।**

**व्यासतीर्थीया**– निमित्तान्तरमाह– **पापेनेति** ।।२२५।।

**वेदाङ्गतीर्थीया**– भगवदिच्छयापि तत्सुतत्वे कारणमाह– **पापेनेति** ।।२२५-२२६।।

**वादिराजीया**– तदेव प्रयोजनं विशदयति– **पापेनेति** ।।२२५-२३३।।

**वरदराजीया**– तर्हि कुबेरः तस्मात् किमर्थं जात इत्यत आह– **पापेनेति** ।। पापस्वरूपेण तेन नरकासुरेण शिवेन दत्तः कुबेराय इति शेषः । सुप्रतीकाभिधानः सुप्रतीकः इति अभिधानं नाम यस्यासौ हस्ती गजः अपहृतो हि यस्मात्तस्मात् तदर्थं धनेश्वरः कुबेरः भगदत्ताभिधानो भगदत्तनामा अस्य नरकासुरस्य सुतोऽभिजातो बभूव ।।२२५।।

**अनन्तभट्टीया**– अत्र निमित्तान्तरमाह– **पापेनेति** ।।२२५।।

**जनार्दनीया**– ननु वित्तेश्वरः असुरात् किमर्थं जात इत्यत आह– **पापेनेति** ।। पापेन पापात्मना । तेन कारणेन । हस्ती कुबेरस्य गजः । तदर्थमेव सुप्रतीकाख्यहस्त्यर्थमेव ।।२२५।।

**चट्टि**– ननु वित्तेश्वरः असुरात् किमर्थं जात इत्यत आह– **पापेनेति** ।। पापेन पापात्मना तेन नरकेन शिवेन प्रदत्तः, कुबेरायेति शेषः । सुप्रतीकाभिधानः सुप्रतीक इत्यभिधानं नाम यस्य सः हस्ती । कुबेरगजो अपहृतः । हि यस्मात् तस्मात् तदर्थमेव सुप्रतीकाख्यहस्त्यर्थमेव धनेश्वरः कुबेरः । भगदत्त इत्यभिधानं यस्य स तथा । सन् अस्य नरकासुरस्य सुतोऽभिजातः ।।२२५।।

**महासुरस्यांशयुतः स एव रुद्रावेशाद् बलवानस्त्रवांश्च ।**
**शिष्यो [१]महेन्द्रस्य हते बभूव ताते स्वधर्माभिरतश्च नित्यम् ।।२२६।।**

**व्यासतीर्थीया**– ताते हते सति महेन्द्रशिष्यो बभूव ।।२२६-२२८।।

१. 'प्रियमिन्द्रस्य सततं सखायममितौजसम् । हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्तत ।।' इति द्रोणपर्वणि.३०.१ ।

**वरदराजीया–** स एव सोऽपि भगदत्तो महासुरस्यांशेन युतोऽभिजात इति सम्बन्धः । रुद्रस्यावेशात् बलवान् अधिकबलवान् अस्त्रवांश्च जातः । तत्र हेतुः– **शिष्य इति** ।। महेन्द्रस्य पुरन्दरस्य । ताते स्वपितरि भौमे हते सति नित्यं स्वधर्माभिरतश्च जात इति भावः । भौमवधानन्तरं असुरावेशो गतः । अत एव श्रीकृष्णेन राज्ये स्थापित इति भावः ।।२२६।।

**जनार्दनीया–** स भगदत्तः महासुरस्य वाष्कलनाम्नोऽसुरस्य अंशेन कलया युतः रुद्रावेशान्निमित्तान् बलवान् । महेन्द्रस्य शिष्यो यतः अतश्च अस्त्रवान् अस्त्रज्ञः । ताते नरके हते सति नित्यं स्वधर्माभिरतः देवावताराणां योग्यधर्मे अभिरतो बभूवेत्यस्य सर्वत्र सम्बन्धः । नरकवधानन्तरं असुरावेशो नष्ट इति भावः ।।२२६।।

**चट्टि–** सः भगदत्त एव महासुरस्य बाष्कलनाम्नोऽसुरस्यांशेन युतः रुद्रावेशान्निमित्तात् बलवान् महेन्द्रस्य शिष्यो यतः अतः अस्त्रवान् अस्त्रज्ञश्च, ताते पितरि भौमे हते सति नित्यं स्वधर्माभिरतः देवावताराणां धर्मे अभिरतो बभूवेति सर्वत्र सम्बन्धः । नरकवधानन्तरं असुरावेशो नष्टः । अत एव श्रीकृष्णेन राज्ये स्थापित इति भावः ।।२२६।।

**अभूच्छिनिर्नाम यदुप्रवीरस्तस्याऽत्मजः सत्यक आस तस्मात् ।**
**कृष्णः पक्षो युयुधानाभिधेयो गरुत्मतोंऽशेन युतो बभूव ।।२२७।।**

**वेदाङ्गतीर्थीया–** कृष्णपक्षः कृष्णपक्षाभिमानिदेवः ।।२२७।।

**वादिराजीया–** कृष्णःपक्षः कृष्णपक्षाभिमानी देवः ।।२२७-२३५।।

**वरदराजीया–** शिनिर्नाम प्रसिद्धो यदुप्रवीरो यादवश्रेष्ठः आसीत् । तस्य शिनेरात्मजः सत्यकः नाम आसीत् । तस्मात् सत्यकात् कृष्णः पक्षः कृष्णपक्षाभिमानी देवो गरुत्मतो गरुडस्यांशेन युतः सन् बभूव जातः ।।२२७।।

**अनन्तभट्टीया–** कृष्णः पक्षः कृष्णपक्षाभिमानी ।।२२७।।

**जनार्दनीया–** तस्य शिनेः । तस्मात् सत्यकात् कृष्णः पक्षः कृष्णपक्षाभिमानी देवः गरुत्मतः गरुडस्य अंशेन युतः युयुधानाभिधेयो बभूव ।।२२७।।

**चट्टि–** शिनिर्नाम शिनिरिति प्रसिद्धः यदुषु प्रवीरः श्रेष्ठोऽभूत् । तस्य शिनेः सत्यकः आत्मजः आस । तस्मात् सत्यकात् कृष्णः पक्षः कृष्णपक्षाभिमानी देवः गरुत्मतः गरुडस्यांशेन युतः युयुधानाभिधेयो बभूव । सत्यकपुत्रत्वात् सात्यकिरिति ज्ञेयम् ।।२२७।।

**यः संवहो नाम मरुत् तदंशश्चक्रस्य विष्णोश्च बभूव तस्मिन् ।**
**यदुष्वभूद्धृदिको भोजवंशे सितः पक्षस्तस्य सुतो बभूव ।।२२८।।**

**वेदाङ्गतीर्थीया–** तस्मिन् युयुधाने मरुदंशः विष्णुचक्रांशश्च बभूवतुः ।।२२८-२३५।।

**वरदराजीया–** तस्मिन् युयुधाने यः संवहो नाम संवह इति प्रसिद्धो मरुत् तस्य अंशः तथा विष्णोश्चक्रस्य सुदर्शनस्यांशश्च बभूव । यदुषु तत्रापि भोजवंशे हृदिको नाम यादवोऽभूत् । तस्य हृदिकस्य सितः पक्षः शुक्लपक्षाभिमानी देवः सुतो बभूव ।।२२८।।

**अनन्तभट्टीया–** तस्मिन् युयुधाने विष्णोश्चक्रस्यांशो बभूव ।।२२८।।

**जनार्दनीया–** तस्मिन् युयुधाने तदंशः संवहांशः चक्रस्य अंशः बभूव । यदुषु मध्ये भोजख्यवंशे हृदिकः तन्नाम्ना कश्चित् अभूत् । सितः पक्षः शुक्लपक्षाभिमानी देवः तस्य हृदिकस्य ।।२२८।।

**चट्टि–** तस्मिन् युयुधाने यः संवहो नाम संवह इति प्रसिद्धो मरुत् तदंशस्तस्यांशः, विष्णोश्चक्रस्यांशश्च बभूव । यदुषु मध्ये भोजाख्यवंशे हृदिकः हृदिकनामा कश्चिदभूत् । सितः पक्षः शुक्लपक्षाभिमानिदेवस्तस्य हृदिकस्य सुतो बभूव ।।२२८।।

**स पाञ्चजन्यांशयुतो मरुत्सु तथांशयुक्तः प्रवहस्य वीरः ।**
**नामास्य चाभूत् कृतवर्मेत्यथान्ये ये [1]यादवास्तेऽपि सुराः सगोपाः ।।२२९।।**

**व्यासतीर्थीया–** न केवलं यदुषु युयुधानादयो देवा इत्याह– **अथान्य इति** ।। अन्येऽपि ये सगोपाः यादवास्तेऽपि सुराः ।।२२९।।

**वादिराजीया–** अथ गोपाः अन्ये ये यादवाश्च जाता तेऽपि सुरा इति सम्बन्धः ।।२२९।।

**वरदराजीया–** स सुतः पाञ्चजन्यस्य शङ्खस्यांशेन युतः । तथा मरुत्सु मध्ये प्रवहस्य मरुतो अंशेन युतश्च तस्माद्वीरो बभूवेति भावः । अस्य हृदिकस्य कृतवर्मेति नामाऽभूत् । कृतवर्मा हृदिकपुत्रत्वात् हार्दिक्य इत्युच्यते । पूर्वोक्तो युयुधानोऽपि सत्यकपुत्रत्वात् सात्यकिश्चोच्यते इति द्रष्टव्यम् । अथानन्तरं ये यादवाः सगोपाः गोपैः सह वर्तमानाः ते सर्वेऽपि सुराः सुरावताराः ।।२२९।।

**अनन्तभट्टीया–** तस्य हृदिकस्य । मरुत्सु प्रवहस्य । अन्ये स्वभावतः ।।२२९।।

**जनार्दनीया–** सः हृदिकसुतः । तथा मरुत्सु प्रवहस्य । अत एव वीरः । अस्य हृदिकपुत्रस्य।।

**अतिविशद–** ये यादवास्तेऽपि सुरा इत्यत्र शतधन्वानं विना इति ग्राह्यम् । पूर्वदेहे दैत्यो यतस्तदकरोत् इत्युत्तरवाक्यात् ।।२२९।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ एकादशोऽध्यायः ।।

---

१. 'तिस्रः कोट्यः प्रवीराणां यादवानां महात्मनाम् । षष्टिः शतसहस्राणि वीर्यवन्तो महाबलाः ।। देवांशाः सर्व एवेह ह्युत्पन्नास्ते महौजसः ।।' इति मात्स्यपुराणे ४७.२५-२६ ।

**चट्टि–** सः हृदिकसुतः पाञ्चजन्यस्य शङ्खस्यांशेन युतस्तथा मरुत्सु प्रवहस्यांशेन युतस्तस्मात् वीरो वभूव इति शेषः । अस्य हृदिकसुतस्य कृतवर्मेति नाम चाभूत् । हृदिकपुत्रत्वात् हार्दिक्य इति ज्ञेयम् । अथानन्तरं अन्ये उक्तेभ्यो अन्ये ये यादवाः सगोपाः गोपैस्सहितास्ते सर्वेऽपि सुराः ।।२२९।।

**ये पाण्डवानामभवन् सहाया देवाश्च देवानुचराः समस्ताः ।**
**अन्ये तु सर्वेऽप्यसुरा हि मध्यमा ये मानुषास्ते चलबुद्धिवृत्तयः ।।२३०।।**

**व्यासतीर्थीया–** न केवलं यादवाः सुरा इत्याह– **य इति** ।। ते समस्ता देवादयः । अन्ये हरिपाण्डवप्रतीपाः ये चलबुद्धिवृत्तयः ते मध्यमा मानुषाः ।।२३०।।

**वेदाङ्गतीर्थीया–** भुवि जातानां देवादीनां विभागं वदन् मानुषान् अपि विविच्य दर्शयति– **य इत्यादिना** ।। अन्ये हरिपाण्डवप्रतीपाः । ये मध्यमाः न प्रतीपाः न चानुकूलाः चलबुद्धिवृत्तय ते मानुषाः ।।२३०।।

**वादिराजीया–** ये पाण्डवानामित्यत्र भीष्मद्रोणादीनां कौरवसेनास्थत्वेऽपि मनसा पाण्डवसहायत्वात् देवत्वमिति ज्ञेयम् । अथ चलबुद्धिवृत्तयो ये मानुषास्तेऽपि मध्यमा इति सम्वन्धः ।।२३०।।

**वरदराजीया–** ये पाण्डवानां सहायाः युद्धे सहकारिणस्ते समस्ताः सर्वे केचिद्देवाः केचिद्देवानां अनुचराः देवगन्धर्वादयः । अन्ये उक्तेभ्यो पाण्डवादिप्रतिकूलास्ते सर्वे असुराः । ये मध्यमाः देवासुरपक्षसाधारणाः मानुषाः ते तदानीं चलबुद्धिवृत्तयः चला चञ्चला बुद्धिवृत्तयः अन्तःकरणवृत्तयो येषां ते तथोक्ता । एवं त्रिविधाः जीवाः तदोत्पन्ना इति भावः ।।२३०।।

**जनार्दनीया–** उत्पन्नानां देवादीनां विभागं वदन् मानुषानपि विविच्याह– **य इति** ।। अथशब्दः समुच्चये । अन्ये उक्तेभ्योऽन्ये ये यादवाः गोपैः सहितास्तेऽपि सुराः देवावताराः देवानुचराः देवानुकूलवर्तिनः, गन्धर्वादय इति यावत् । अन्ये पाण्डवप्रतिकूलाः ये ते असुराः । ये मध्यमाः पाण्डवानां उदासीनाः ते मानुषाः । चला चञ्चला बुद्धेः वृत्तिः वर्तनं येषां ते तथा । संशयज्ञानिन इत्यर्थः ।।२३०।।

**ताम्रपर्णीया–** अन्ये ये सर्वे पाण्डवविमुखाः । ये चलबुद्धिवृत्तयस्ते मध्यमा मानुषा ।।२३०।।

**भावचन्द्रिका–** अन्येत्वित्यत्र तुशब्देन भीष्मादीन् कांश्चिद्विहायेत्याह । अत एव प्राक् 'सहाया देवा' इत्येवोक्ताः ।।२३०।।

**चट्टि–** ये पाण्डवानां सहायाः सहकारिणो अभवन् ते तु समस्ताः सर्वे केचिद्देवाः केचिद्देवानामनुचराः देवगन्धर्वादयश्च । अन्ये पाण्डवप्रतिकूलाः ये ते सर्वेऽपि असुराः । ये मध्यमाः पाण्डवेषूदासीनाः ते

मानुषाः चञ्चला बुद्धेः वृत्तिः वर्तनं येषां ते तथा । संशयज्ञानिन इत्यर्थः । एवं त्रिविधा अपि जीवास्तदोत्पन्ना इति भावः ।।२३०।।

**लिङ्गं [१]सुराणां हि परैव भक्तिर्विष्णौ तदन्येषु च तत्प्रतीपता ।**
**अतोऽत्र ये ये हरिभक्तितत्परास्ते ते सुरास्तद्धरिता विशेषतः ।।२३१।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये श्रीकृष्णचरिते अंशावतरणं नाम एकादशोऽध्यायः ।।

**व्यासतीर्थीया–** ये हरिपरास्ते सुराः तत्प्रतीपा असुराः इति कथमवगतमित्यत आह– **लिङ्गमिति** ।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां एकादशोऽध्यायः ।।

---

१. पुराणेषु क्वचित् क्वचित् मनुष्येष्ववतीर्णानां सुरासुराणां लक्षणमुक्तं पाद्मे [सृष्टिखण्डे.७८.१०७-१४४] 'सुराणां लक्षणं ब्रूमो नररूपं व्यवस्थितम् । द्विजदेवातिथीनाञ्च गुरुसाधुतपस्विनाम् ।। पूजा तपो रतो नित्यं धर्मशास्त्रेषु नीतिषु । क्षमाशीलो जितक्रोधः सत्यवादी जितेन्द्रियः ।। अलुब्धः प्रियवाक् शान्तो धर्मशास्त्रार्थसम्प्रियः । दयालुर्दयितो लोके रूपवान् मधुरस्वरः ।। वागीशः सर्वकार्येषु गुणी दक्षो महाबलः । साक्षरश्चापि विद्वांश्च गीतनृत्यार्थतत्ववित् ।। आत्मविद्यादिकार्येषु सर्वतन्त्रीस्वरेषु च । हविष्येषु च सर्वेषु गव्येषु च निरामिषे ।। सद्योगास्वादद्रव्ये च प्रत्यग्रे चातिशोभने । गन्धमाल्येषु वस्त्रेषु शास्त्रेष्वाभरणेषु च ।। सम्प्रीतिश्चातिथौ दाने पार्वणादिषु कर्मसु । स्नानदानादिभिः कार्ये व्रतैर्यज्ञैः सुरार्चनैः ।। कालो गच्छति पाठैश्च न क्लीबं वासरं भवेत् । अयमेव मनुष्याणां सदाचारो निरन्तरम् ।। देववन्मानवाचारो गीयते मुनिसत्तमैः । किन्तु सत्वाधिको देवो मनुष्यो भीत एव च ।। गम्भीरः सर्वदा देवः सदैव मानवो मृदुः । द्वयोस्तुल्या च सम्प्रीतिः न दैत्यादौ भवेत्किल ।। प्रीतिभावं परं सौख्यं सौहृदं सुकृतं शुभम् ।। दैवमानुषयोरेव दैत्यराक्षसयोस्तथा ।। प्रेतादीनां च प्रेतेषु पशौ प्रीतिः पशोरपि । काकादयः स्वजातौ च तथान्ये च स्वजातिषु ।। प्रीता भवन्ति चाप्रीता विद्यात् तेषाञ्च लक्षणम् । एवं पुण्यविशेषेण सविशेषासु जातिषु ।। प्रियाप्रियं विजानीयात् पुण्यापुण्यं गुणागुणम् । ...**ये ते दुर्योधनस्यैव योधाः सैन्यादयस्तथा ।। ते च दैत्यादयः सर्वे** ये च कर्णादयो भुवि । गाङ्गेयो वसुमुख्यश्च द्रोणो देवमुनिः प्रभुः ।। अश्वत्थामा हरः साक्षात् हरिर्नन्दकुलोद्भवः । पञ्चेन्द्राः पाण्डवा जाता विदुरो धर्म एव च ।। गान्धारी द्रौपदी कुन्ती चैता देव्यो धरातले । देवदैत्याः कलेर्मध्ये दैत्याश्शेषे च मानवाः ।। उत्पत्स्यन्ते सदा प्रेताः क्रव्यादाः पशुपक्षिणः । तेषाञ्च कुलटा दासी नित्यकष्टा यवीयसी ।। नित्यं द्वन्द्वेषु सम्प्रीत्या तेषामाचारभाषिणी । किल्बिषेषु च सर्वेषु कलहेऽन्यायकर्मणि ।। रता दैत्यादयो ये ते सर्वे निरयगामिनः।।

वैशम्पायन उवाच– **दैत्यादीनां मृषाभावात् सुरत्वं न सुरालयम् । कथं भोग्यं कथं सौख्यं आरोग्यं बलसञ्चयम् ।।** राज्यमायुस्तथा कीर्तिः अभीष्टं दयितं बलम् । नीतिविद्यादिकं भाव्यं जन्मवृद्धं सनातनम् ।। दानाध्ययनकर्माणि यज्ञादि च कथं प्रभो । एतदाप्ताय शिष्याय मह्यं भो वक्तुमर्हसि ।। व्यास उवाच- **दैत्यानां साहसादेव तपो भवति निश्चितम् ।**

**वेदाङ्गतीर्थीया–** देवासुरनिश्चायकलिङ्गमाह– **लिङ्गमिति** ।। तद्भरिताः विशेषतः सुराः उत्तमा इति भावः ।।२३१।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां एकादशोऽध्यायः ।।

**वादिराजीया–** तदन्येषु च तत्प्रतीपतेत्यत्र तदन्येषु तेषां सुराणामन्येषु विरोधिषु दैत्येषु तत्प्रतीपता तस्मिन् विष्णौ प्रतीपता विरुद्धता लिङ्गमित्यर्थः । चशब्देन भक्त्यभावं समुच्चिनोति । लिङ्गं सुराणामित्यत्र सुराणां देवानां 'रै कै गै' इति धातोः सुष्ठु रायन्ति गायन्ति इति सुराः गन्धर्वाः । तेषां सर्वेषां विष्णौ परा भक्तिरेव लिङ्गम् । ततोऽन्येष्वसुरादिषु तत्प्रतीपता तस्य विष्णोः तेषां देवानां च प्रतीपता विरुद्धता लिङ्गम् । ततः कारणात् । अत्र कुरुपाण्डवसेनयोः ये ये हरिभक्तितत्पराः युधिष्ठिरभीमार्जुनद्रोण-कर्णभीष्माद्याः ये ये धृतराष्ट्रद्रुपदविराटाद्याश्च ते तु पूर्वोक्ताः सर्वेऽपि सुराः साक्षात् सुराः । उत्तरोक्तास्तु विशेषतस्तद्भरिताः तैः सुरैराविष्टाः । 'रै कै गै' इति धातोः सुष्ठु रायन्ति गायन्ति इति सुराः गन्धर्वाः इत्येका योजना । अतो विष्णुप्रतीपतायाः असुरलिङ्गत्वात् ये ये अहरिभक्तितत्पराः हरिभक्तितत्पराः न भवन्तीति अहरिभक्तितत्पराः । नञो विरुद्धार्थकत्वात् । हरौ भक्तितत्परेषु च विरुद्धाश्च दुर्योधनादयः ते सर्वे असुरा इत्यर्थः इत्यावृत्त्या योजना । तस्मादारब्धार्थद्वयोपसंहारेऽपि निगमनात् न सर्वज्ञाचार्यवाक्ये न्यूनता शङ्कनीयेति सर्वमवदातम् ।।२३१।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां एकादशोऽध्यायः ।।

**वरदराजीया–** कथं तेषां स्वरूपं ज्ञातव्यमित्यतो मध्यमानां चलबुद्धिवृत्तित्वमुक्तमेव उत्तमानां अधमानाञ्च स्वरूपस्य ज्ञापकमाह– **लिङ्गमिति** ।। सुराणां मानुषोत्तमादीनां विष्णौ परा उत्कृष्टा भक्तिः तथा ब्रह्मादिषु तारतम्येन स्थिता भक्तिरेव लिङ्गं ज्ञापकं लक्षणम् । तदन्येषु असुरेषु मनुष्याधमास्तेषु तत्प्रतीपता तस्मिन् विष्णौ तत्र देवेषु च तत्प्रतीपो द्वेषो येषां ते तत्प्रतीपाः तेषां भावः तत्प्रतीपता ।

---

...व्रतं यज्ञादिकं चैव सम्प्रीतिः स्वजनस्य च ।। यो दान्तो विगुणैर्मुक्तो नीतिशास्त्रार्थतत्त्वगः । एतैश्च विविधैः पूतः स भवेत्सुरलक्षणः ।। पुराणागमकर्माणि नाकेष्वत्र च वै द्विज । स्वयमाचरते पुण्यं स धरोद्धरणक्षमः ।। विशेषाद्वैष्णवं दृष्ट्वा प्रीयते पूजयेच्च यः । विमुक्तः सर्वपापेभ्यः स धरोद्धरणक्षमः ।। षट्कर्मनिरतो विप्रः सर्वयज्ञरतस्सदा । धर्माख्यानप्रियो नित्यं स धरोद्धरणक्षमः ।। विश्वसघातिनो ये च कृतघ्ना व्रतलोपिनः । द्विजदेवेषु विद्विष्टा शातयन्ति धरां नराः ।। निजवृत्तिं परित्यज्य कुर्वन्ति चाधमां च ये । गुरुनिन्दारता द्वेषात् शातयन्ति धरां नराः ।। दातारं ये रोधयन्ति पातके प्रेरयन्ति च । दीनानाथान् पीडयन्ति शातयन्ति धरां नराः ।। एते चान्ये च बहवः पापकर्मकृतो नराः । पुरुषान् पातयित्वा तु शातयन्ति धरां नराः ।।' इति ।

अतः कारणात् ये ये हरिभक्तितत्पराः हरिभक्तौ तात्पर्यवन्तः ते ते सुराः तया भक्त्या भरिताः पूर्णाः विशेषतः उत्कृष्टा उत्तमाः ज्ञातव्याः । भक्तितारतम्येन तेषां तारतम्यं ज्ञातव्यमिति भावः । एवं असुरेष्वपि द्वेषाख्यलिङ्गतारतम्येन तारतम्यं द्रष्टव्यमित्यशेषमतिमङ्गलम् ।।२३१।।

श्रीमद्भारततात्पर्यनिर्णयाध्याय आदरात् । एकादशो व्याकृतोऽथ प्रीत्यै माधवमध्वयोः ।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
मन्दसुबोधिन्यां एकादशोऽध्यायः ।।

**अनन्तभट्टीया–** हरिपाण्डवविरोधिनः । असुरा ये चलबुद्धिवृत्तयः तद्विषये सन्दिहानाः ते मध्यममानुषाः । कथं पाण्डवसहायत्वादिना जीवस्वभावो निर्णीयत इत्यत आह– **लिङ्गमिति** ।। विष्णौ पराभक्तिः सुराणाम् । असुरत्वलिङ्गं लक्षणम् ।।२३१।।

।। इति श्रीमुष्णं अनन्ताचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
तन्त्रमालायां [सत्तत्त्वमालायां] एकादशोऽध्यायः ।।

**जनार्दनीया–** देवासुरनिश्चायकलिङ्गमाह– **लिङ्गमिति** ।। सुराणां विष्णौ परा सर्वोत्कृष्टा भक्तिरेव लिङ्गं लक्षणम् । तेभ्यो देवेभ्यः अन्येषु असुरेषु तस्मिन् हरौ प्रतीपता द्वेषित्वं लिङ्गम् । हि यतः अतः अत्र उत्पन्नेषु ये ये हरिभक्तौ तत्पराः तात्पर्यवन्तः ते ते सुराः । विशेषतः क्षितिपादिभ्यो विशेषात् तया भक्त्या भरिताः पूर्णाः । असुराः द्वेषभरिता इति पूरणीयम् ।।२३१।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात्
पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात् ।
पूर्तिं तस्य कृतौ सतां सुखकरोऽध्यायः किलैकादशः
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां एकादशोऽध्यायः ।।

**ताम्रपर्णीया–** तद्भरिता भक्तिभरिताः । परमैकान्तिनस्तु विशेषतः सुराः सुरोत्तमा इति यावत् ।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना
श्रीनिवासेन विरचितायां प्रमेयमणिमालायां [प्रमाणमालायां] एकादशोऽध्यायः ।।

**भारतश्री–** ये पाण्डवानामभवन् सहाया इति मनसा वाचा वा सहाया इति ग्राह्यम् ।।२३१।।

।। इति डम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां एकादशोऽध्यायः ।।

**भावचन्द्रिका**– सावधारणं पराभक्तिरेव सुरत्वे लिङ्गमित्याह– **लिङ्गमिति** ।। विशेषतः सुराः देवश्रेष्ठाः ।।२३१।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां एकादशोऽध्यायः ।।

**चट्टि**– तेषां स्वरूपं कथं ज्ञातव्यमित्यतो मध्यमानां चलबुद्धिवृत्तित्वम् । उत्तमानां अधमानां च स्वरूपनिश्चायकलिङ्गमाह– **लिङ्गमिति** ।। सुराणां विष्णौ परा सर्वोत्कृष्टा भक्तिरेव लिङ्गं लक्षणम् । तेभ्यः अन्येष्वसुरेषु च तत्प्रतीपता तस्मिन् हरौ प्रतीपता द्वेषवत्त्वं लिङ्गम् । हि यतः अतः अत्रोत्पन्नेषु ये ये हरिभक्तौ तत्पराः तात्पर्यवन्तः ते ते सुराः । ये विशेषतः तद्भरिताः तया भक्त्या पूर्णास्ते विशेषतः सुराः अत्युत्तमदेवा इति आवृत्त्या योज्यम् । हरिद्वेषयुताः असुराः हरिद्वेषभरिताः असुरोत्तमा इति च पूरणीयम् ।

'नामास्य चाभूत् कृतवर्मेत्यथान्ये ये यादवा' इत्यारभ्य 'ते ते सुराः तद्भरिताः विशेषतः' इत्यन्तस्य सार्धद्वयस्यायमर्थः । उक्तेभ्यो अन्ये ये सुरास्ते सर्वेऽपि सगोपाः गां भूमिं गाः पशूंश्च पान्तीति राजानो गोपालाश्च तैः सहिता यादवाः । बभूवुरित्यस्यानुकर्षणार्थो अपिशब्दः । अन्ये इत्येतदावर्तनीयम् । देवेभ्यो अन्ये असुरा मध्यमा मानुषाश्च अन्ये यादवादिभ्यो अन्ये बभूवुरित्यर्थः । नन्वेतेषां विशिष्य नामनिर्देशाभावात् कथं देवादित्वेन तत्स्वरूपं ज्ञातव्यमित्यतो लक्षणमाह– **ये पाण्डवानामिति** ।। पाण्डवानामनुकूलाः प्रतिकूला चलचित्ताश्च यथाक्रमं देवादित्वेन ज्ञेया इत्यर्थः । आगन्तुकलिङ्गमुक्त्वा स्वाभाविकमाह– **लिङ्गमिति** ।। मुक्तियोग्यानां विष्णुभक्तिर्लिङ्गं लक्षणम् । सा चेत् परा सर्वोत्कृष्टा तर्हि सुराणां लिङ्गम् । तत्प्रतीपता हरिद्वेषस्तमोयोग्यानां लक्षणम् । सा चेत् परा तर्हि तदन्येष्वसुरेषु लिङ्गम् । मध्यमानां पूर्वोक्तचलबुद्धिवृत्तित्वस्यैव स्वभाविकत्वेन अत्र पुनस्तदनुक्तिरित्यर्थः । लक्षणेन च तत्स्वरूपं ज्ञातव्यमित्याह– **अत इति** ।। अतः विविच्य लक्षणकथनाद् अत्र पुरुषेषु ये हरिभक्ताः ते मुक्तियोग्याः । हरिभक्तितत्परास्तु सुराः विशेषतस्तत्पराः विशेषतस्सुराः देवोत्तमाः । अहरिभक्तितत्परा असुरा इति च अकारप्रश्लेषेणापि पदच्छेदः कर्तव्यः । ये अहरिभक्ताः हरिभक्तेभ्यो अन्ये हरिद्वेषिणः इति यावत् । ते तमोयोग्याः हरिद्वेषतत्पराः ते असुराः विशेषतस्तद्भरितास्तु विशेषतः असुराः असुरोत्तमा इत्यदि ज्ञेयमित्यर्थ इति ।।२३१।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां एकादशोऽध्यायः ।।

★★★

# अथ द्वादशोऽध्यायः

**बभूव गन्धर्वमुनिस्तु देवकः स आस सेवार्थमथाऽऽहुकाद्धरेः।**
**स उग्रसेनावरजस्तथैव नामास्य तस्मादजनि स्म देवकी ॥१॥**

**व्यासतीर्थीया–** कृष्णावतारस्योपयुक्तमातृपक्षमाह– **बभूवेत्यादिना** ॥१॥

**वेदाङ्गतीर्थीया–** प्रसङ्गात् कृष्णस्य पितृवंशमुक्त्वेदानीं मातृवंशमुपक्रमते– **बभूवेत्यादिना** ॥ देवकः देवकनामगन्धर्वमुनिः गन्धर्वर्क्षषिः बभूव स्थितः आदाविति शेषः । अस्य नाम तथैव देवक इत्येव ॥१-२॥

**मधुसूदनीया–** गन्धर्वमुनिः गन्धर्वश्रेष्ठः । तथाचोक्तम्– 'यस्त्वासीद्देवको नाम देवराजसमद्युतिः । स गन्धर्वपतिः श्रेष्ठः क्षितौ जज्ञे नराधिप ॥' इत्यादिपर्वणि [६८.६८] । मुनिशब्दस्य श्रेष्ठेऽपि प्रयोगसद्भावादेवं वचनं युक्तम् । वेदाङ्गतीर्थास्तु 'गन्धर्वमुनिः गन्धर्वर्क्षषिः' इति व्याकृतवन्तः । तच्चिन्त्यम् । गन्धर्वमध्ये ऋष्यभावात् । भावे वा एतस्य उक्तमाने राजत्वस्योक्तत्वादिति ॥१-५॥

**वरदराजीया–** बभूवेत्यादिना देवको नाम गन्धर्वमुनिश्रेष्ठः मुनिगन्धर्वः बभूव आसीत् । अथानन्तरं स गन्धर्वमुनिः हरेः सेवार्थं सेवां कर्तुं आहुकात् यादवादास जातः । स देवकः उग्रसेनादवरजः उग्रसेनस्य अनुजः उग्रसेनोऽपि आहुकस्य पुत्र इति भावः । अस्य देवकस्य तथैव नाम गन्धर्वमुनित्वे यन्नाम तदेव अत्रापि देवक इति नाम आसीदिति भावः । तस्माद्देवकात् देवकी अजनि जाता ॥१॥

**अनन्तभट्टीया–** देवक इति गन्धर्वमुनिर्बभूव । प्रावर्तिष्ट । सः आहुकात् आस जज्ञे । सः आहुकपुत्रः उग्रसेनावरजः उग्रसेनकनीयभ्राता । अस्य आहुकपुत्रस्य तथैव नाम । यथा गन्धर्वमुनित्वे देवकनामेत्यर्थः । तस्मात् देवकात् ॥१॥

**जनार्दनीया–** श्रीमद्भगवत्पादाचार्यः श्रीकृष्णस्य पितृवंशं सङ्क्षेपादुक्त्वा मातृवंशं वक्तुं उपोद्घातमाह– **बभूव गन्धर्वमुनिरित्यादिना** ॥ देवकः देवकनामा गन्धर्वमुनिः गन्धर्वर्षिः पूर्वं यः बभूव । सः हरेः

सेवार्थं आहुकात् उग्रसेनपितुः आहुकाद्यादवात् आस जज्ञे । सः उग्रसेनस्य अवरजः अनुजः न तु ज्येष्ठः । अस्य उग्रसेनावरजस्य तथैव नाम पूर्वजन्मनि यन्नाम तदेवेत्यर्थः । तस्मात् देवकात् देवकी अजनि जाता स्म ।।१।।

**ताम्रपर्णीया– ।। गन्धर्वमुनिरिति ।।** गन्धर्वत्वे सति मुनिः ऋषिरित्यर्थः ।।१।।

**चन्द्रि–** श्रीकृष्णस्य पितृवंशं सङ्क्षेपादुक्त्वा मातृवंशं वक्तुं भगवानाचार्यस्तदुपोद्घातमाह– **बभूवेत्यादिना** ।। देवकः देवकनामा यः गन्धर्वमुनिः यो गन्धर्वश्रेष्ठः बभूव । सः हरेः सेवार्थं आहुकाद्यादवादास जज्ञे । तदुक्तम्– 'यस्त्वासीत् देवको नाम देवराजसमद्युतिः । स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिप ।।' इत्यादिपर्वणि । सः उग्रसेनस्यावजो अनुजः । उग्रसेनोप्याहुकस्य पुत्र इति भावः । अस्य उग्रसेनावरजस्य तथैव नाम पूर्वजन्मनि देवक इति यन्नाम तदेवेत्यर्थः । तस्माद् देवकात् देवकी अजनि जाता ।।१।।

**अन्याश्च याः [1]कश्यपस्यैव भार्या ज्येष्ठां तु तामाहुक आत्मपुत्रीम् ।**
**चकार तस्माद्धि [2]पितृष्वसा सा स्वसा च कंसस्य बभूव देवकी ।।२।।**

**व्यासतीर्थीया–** ताश्च बभूवुः । तस्मादाहुकेन देवकी पुत्रीत्वेन स्वीकृतत्वादिति देवकी कंसस्यापि स्वसा बभूव । कश्यपरूपस्यैव वसुदेवस्यैव ।।२।।

**वादिराजीया–** अन्याश्च काश्यपस्यैव भार्या इत्यत्र 'कश्यपाय त्रयोदश' इति भागवतोक्तेः काश्यपस्य त्रयोदशभार्यास्सन्ति । तास्वदितेर्देवकीत्वेन जन्मन उक्तत्वात् । सुरभिदितिदनूनां काश्यपपत्नीनां वाह्लीकेश्वरकाशिराजकरवीरेश्वराणां कन्यात्वेन जन्मनः वसुदेवपत्नीत्वस्य वक्ष्यमाणत्वात् । सुरभ्यदितिदितिदनुभ्योऽन्याः षट् भार्याः देवकादेव देवक्या अवरजात्वेनाजनिषत । एवं वसुदेवपत्नीनां दशानां भूमौ जन्मास्ति । तिसृणां तु कार्याभावाज्जन्म नास्तीति ज्ञेयम् । तस्माद्धि पितृष्वसा इत्यत्र उग्रसेनावरजदेवकपुत्रीत्वात् उग्रसेनसुतकंसस्य स्वसा । उग्रसेनपित्रा आहुकेन स्वपुत्रीत्वेन परिग्रहात् पितृष्वसा चेति विवेकः ।।२-३।।

**वरदराजीया–** कश्यपस्य या अन्याः भार्याः ताश्च देवकादेवोत्पन्नाः । तासु ज्येष्ठां देवकीं आहुकः आत्मपुत्रीं चकार नप्त्रीमेव स्वपुत्रीत्वेन स्वीकृतवान् । तस्माद्देवकी कंसस्य पितृष्वसा स्वसा च बभूव । आहुकपुत्रीत्वात् पितुः उग्रसेनस्य स्वसा उग्रसेनावरजपुत्रीत्वात् स्वस्य स्वसा चेति भावः ।।

---

१. 'काश्यपस्य' इति वादिराजीयपाठः ।

२. 'यस्यार्थे दारुणं कर्म कृतं लोकविगर्हितम् । पितृस्वस्रात्मजान् वीरान् षडेवाहं न्यपोथयम् ।।' इति कंसवचनं हरिवंशे.विष्णु.२८.३ ।

**अनन्तभट्टीया–** कश्यपस्य अन्या भार्या ता अपि जाता इति शेषः । ज्येष्ठां तां देवकीं आत्मपुत्रीं चकार । तस्मादाहुकेन... स्वीकृतत्वात् सा देवकी कंसस्य पितृष्वसा उग्रसेनभगिनीत्वादिति भावः । स्वसा च उग्रसेनानुजत्वादिति भावः ॥२॥

**जनार्दनीया–** अन्याश्च याः कश्यपस्यैव भार्याः ताश्च देवकाज्जाता इत्यर्थः । ज्येष्ठां तां देवकीं आहुकः देवकपिता आत्मपुत्रीं चकार । पौत्रीं पुत्रीत्वेन पालयामास इत्यर्थः । हि यस्मात् तस्मात् सा देवकी कंसस्य पितृष्वसा स्वसा च बभूव । आहुकस्य दत्तपुत्रीत्वात् उग्रसेनस्य स्वसा, तेन कंसस्य पितृष्वसा उग्रसेनभ्रातृपुत्रीत्वात् स्वसेति भावः ॥२॥

**ताम्रपर्णीया–** याः कश्यपस्य अन्याः भार्याः ताश्च बभूवुरिति शेषः ॥२॥

**भावचन्द्रिका–** ॥१॥ कंसस्य मातुलत्वं वक्तुम्– **स्वसेति** ॥ गुरुपुत्रवधतुल्यः पितृभगिनीसुतवधः कंसेन कृत इति वक्तुम्– **पितृष्वसेति** ॥२॥

**चट्टि–** कश्यपस्यैव अन्याः सुरभ्यदितिदनुरित्याख्या अन्याः भार्याः सन्ति । ताश्च देवकाज्जाताः । तासु ज्येष्ठां तां देवकीं आहुकः पुत्रीत्वेन पालयामासेत्यर्थः । हि यस्मात् तस्मात् सा देवकी कंसस्य पितृष्वसा स्वस्वसा च बभूव । आहुकस्य दत्तपुत्रीत्वादुग्रसेनस्य स्वसा । तेन कंसस्य पितृष्वसा । उग्रसेनभ्रातृपुत्रीत्वात् स्वसेति भावः ॥२॥

**सैवादितिर्वसुदेवस्य दत्ता तस्या रथं [१]माङ्गलं कंस एव ।**
**संयापयामास तदा हि वायुर्जगाद वाक्यं गगनस्थितोऽमुम् ॥३॥**

**व्यासतीर्थीया–** माङ्गलिकं वैवाहिकम् ॥३॥

**वेदाङ्गतीर्थीया–** वैवाहिकं रथम् ॥३॥

**वरदराजीया–** सा देवकी अदितिरेव पूर्वमिति शेषः । वसुदेवस्य वसुदेवाय दत्ता । तस्याः देवक्याः माङ्गलं वैवाहिकं गृहप्रवेशोत्सवसम्बन्धिनं रथं कंसः स्वयमेव संयापयामास वसुदेवगृहं प्रति प्रयापितवान् । तदा संयापनसमये गगने आकाशे स्थितो वायुः अमुं कंसं प्रति वाक्यं वक्ष्यमाणं जगाद ॥३॥

**अनन्तभट्टीया–** मङ्गलं विवा... कंसम् ॥३॥

**जनार्दनीया–** सैव देवकी पूर्वं अदितिः । पूर्वाध्याये 'तस्यैव भार्या त्वदितिश्च देवकी बभूव'

१. 'माङ्गलिकं स एव' इति व्यासतीर्थीयपाठः । 'मङ्गलम्' इत्यनन्तभट्टीयपाठः ।

इत्युक्तमपि अल्पज्ञमतिमपेक्ष्य, अत्रापि 'सैवादितिः' इत्याचार्यैः कृपयोक्तमित्यवगन्तव्यम् । उत्तरत्राप्येवमेव । सैवादितिर्वसुदेवस्य दत्ता कन्यादानरूपेण दत्तेत्यर्थः । कंस एव स्वयमेव तस्याः देवक्याः माङ्गलं गृहप्रवेशोत्सवसम्बन्धिनं रथं संयापयामास प्रापितवान् । वरगृहमिति शेषः । तदा गृहप्रवेशोत्सवकाले गगने आकाशे स्थितः । अमुं कंसं प्रति ।।३।।

**ताम्रपर्णीया–** ।। **सैवेति** ।। सा देवकी कश्यपरूपस्य वसुदेवस्यैव दत्तेत्यर्थः ।।३।।

**चट्टि–** सैव देवकी पूर्वमदितिः वसुदेवस्य दत्ता कन्यादानरूपेणेत्यर्थः । कंसः स्वयमेव तस्याः देवक्याः माङ्गलं गृहप्रवेशोत्सवसम्बन्धिनं रथं संयापयामास प्रापितवान् । वसुदेवगृहं प्रतीति शेषः । तदा तस्मिन् समये वायुः गगने आकाशे स्थितस्सन् अमुं कंसं प्रति वाक्यं जगाद ।।३।।

**[१]विनापराधाद्धि [२]ततो गरीयसो न मातुलो वध्यतामेति विष्णोः ।**
**लोकस्य धर्माननुवर्ततोऽतः पित्रोर्विरोधार्थमुवाच वायुः ।।४।।**

**व्यासतीर्थीया–** किमर्थं वाक्यं विरोधकरं वायुर्जगादेति जिज्ञासायामाह– **विनेति** ।। विष्णोर्मातुलः । ततः कंसात् । गरीयसः अधिकपुरुषस्यापराधात् विना वध्यतां नैति । पित्रोः विरोधार्थं वायुरुवाच । गरीयसः तत अपराधादिति वा । विरोधेन विना हननेऽपि भगवतो दोषाभावाद्विरोधार्थमपि किमर्थमुवाचेत्यत आह– **लोकस्येति** ।।४-५।।

**वेदाङ्गतीर्थीया–** मातुलो वध्यतां नैति । गुरुत्वात् मातुलवधः कस्यापि न धर्मः यस्मादिति भावः । अतः तस्मात् विष्णोः विधिनिषेधबन्धरहितस्यापि लोकस्य धर्माननुवर्ततः लोकसंग्रहार्थं लोकधर्माननुवर्तमानस्य । हेतुगर्भमेतत् विशेषणम् । लोकधर्माननुवर्तमानत्वात् । ततः मातुलात् गरीयसः अतिशयितगुरोः अपराधं विना वध्यतां नेति मातुल इति शेषः ।।३-६।।

**वादिराजीया–** विनापराधमित्यत्र मातुलो वध्यतां नैतीति लोकधर्मोऽस्ति । अत तत्कारणात् लोकधर्माननुवर्ततो विष्णोः कृष्णस्यापि मातुलः कंसः ततः मातुलात् कंसात् गरीयसः वसुदेवस्य पुरुषस्य अपराधं विना वध्यतां नैति । अतो नञ्द्वयस्य न वैयर्थ्यम् । अतः कारणात् पित्रोः कृष्णपित्रोः देवकीवसुदेवयोः विषये विरोधार्थं कंसस्य विरोधार्थं वायुरुवाचेति यथायोग्यं पदानामावृत्त्या योजना । ननु देवकी कंसस्यावरजा । अतः कंसादपि लघीयसी । वसुदेवस्तु कंसस्य भावुकः । अतो

---

१. 'विनापराधं न' इति वेदाङ्गतीर्थीयवादिराजतीर्थीयपाठः ।

२. "गुरवः पञ्च सर्वेषां चतुर्णां श्रुतिचोदिताः । माता पिता तथाचार्यो मातुलः श्वशुरस्तथा ।। एषां मुख्यास्त्रयः प्रोक्ताः आचार्यः पितरौ तथा । एषां मुख्यतमस्त्वेकः आचार्यः परमार्थवित् ।। इति दक्षवचनम्" इति तन्त्रसारव्याख्याने [४.१३६] छलार्याचार्याः । तथाच दक्षवचनेन मातुलादपि पिता मुख्यो गुरुरिति सिद्ध्यति ।

लोकन्यायेन द्वावपि समौ । एवं च देवकीवसुदेवयोरपराधः मातुलाद्गरीयोऽपराधः कथमिति चेत्सत्यम् । स्वसम्बन्धविवक्षायां मातुलादपि मातापितरौ गरीयसौ । अतः स्वस्वमुख्यसम्बन्धिनोः मातापित्रोः विरोधे सति तदपेक्षया स्वामुख्यसम्बन्धिनो मातुलस्य लघीयस्त्वात् वधो योग्य इति ग्रन्थकारस्याभिप्रेतत्वात् ।।४-६।।

**वरदराजीया–** ननु वायुः किमर्थं जगादेत्यतस्तात्पर्यमाह– **विनेति** ।। ततः कंसात् गरीयसः उत्तमस्यापराधात् अपराधं विना मातुलो विष्णोर्वध्यतां नैति । ततः वधकर्तुः गरीयसः पूज्यस्यापराधादिति वा । स्वोत्तमापराधं विना मातुलो वध्यो न भवतीत्यर्थः । हि यस्मात् तस्मात् तस्य स्वोत्तमापराधं घटयितुं पित्रोर्देवकीवसुदेवयोर्विरोधार्थं विरोधं कर्तुं वायुरुवाचेत्यर्थः । ननु भगवतः कर्मलेपाभावाच्छ्रेष्ठापराधं विना कंसहननेऽपि दोषो न स्यादतो वायोर्वचनं व्यर्थमिव भातीत्यत उक्तम्– **लोकस्य धर्माननुवर्तत इति** विष्णोर्विशेषणम् । जनस्य धर्मान् शिक्षयत इत्यर्थः । अपराधं विना हनने 'यद्यदाचरति' इति न्यायेन जनस्यापि तथैव प्रवृत्तौ दोषः स्यात् तस्माद्विरोधार्थमुवाचेति भावः ।।४।।

**अनन्तभट्टीया–** ।। **मातुलेति** ।। ..कंस्य.....। विरोधार्थमपि किमर्थमुवाचेत्यत आह– **लोकस्येति**।।

**जनार्दनीया–** कुतो जगादेत्यत आह– **विनेति** ।। लोकस्य धर्माननुवर्ततः प्रवर्तकस्य विष्णोस्ततः वधानर्हात् मातुलात् गरीयसः श्रेष्ठपुरुषस्य अपराधात् द्रोहं विना मातुलः वध्यतां वधार्हत्वं नैति । हि यतः अतः वायुः मातुलाद्गरीयसोः पित्रोः मातापित्रोः विरोधार्थं विरोधोत्पादनार्थं उवाच ।।४।।

**ताम्रपर्णीया–** ।। **विनेति** ।। ततः कंसाद् गरीयसो अधिकपुरुषस्य गरीयसो अपराधात् विना विष्णोः मातुलः विष्णोर्न वध्यतामेति । अतः विष्णोः पित्रोः विरोधार्थमुवाच वायुरित्यर्थः ।।४-८।।

**अतिविशद–** विनापरादाद्धि ततो गरीयसो न मातुलो वध्यतामेति विष्णोः । लोकस्य धर्माननुवर्ततोऽत इत्यत्र अतःशब्दो न हेत्वर्थः । तत इत्यनेन पौनरुक्त्यापत्तेः । किन्तु अतः अस्मात् कृष्णात् गरीयसः श्रेष्ठात् अस्य वसुदेवादेरपराधात् विनेत्युक्तं भवति । अक्षरयोजना तु अतः कृष्णात् गरीयसो वसुदेवादेरपराधात् विना लोकस्य धर्माननुवर्ततः विष्णोर्मातुलो वध्यतां नैति । ततः पित्रेर्विरोधार्थं वायुरुवाचेति ।।४।।

**भारतश्री–** ।।१-३।। ततो मातुलात् गरीयसः श्रेष्ठस्य गरीयसो अपराधादिना वधो भविष्यतीति ।।

**चट्टि–** ननु वायुः किमर्थं विरोधकरं वाक्यं जगादेत्यतः तात्पर्यमाह– **विनेति** ।। हि यस्मात् लोकस्य धर्माननुवर्ततः प्रवर्तकस्य विष्णोः ततो मातुलात् गरीयसः श्रेष्ठादपराधाद् विना मातुलो वध्यतां वधार्हत्वं नैति । ततस्तस्माद्वायुः पित्रोः देवकीवसुदेवयोः विरोधार्थं विरोधोत्पादनार्थं उवाच ।।४।।

**मृत्युस्तवास्या भविताऽष्टमः सुतो मूढेति चोक्तो जगृहे कृपाणम् ।**
**पुत्रान् समर्प्यास्य च शूरसूनुर्विमोच्य तां तत्सहितो गृहं ययौ ॥५॥**

**वरदराजीया–** हे मूढ अस्याः देवक्याः अष्टमः सुतः तव मृत्युर्भवितेत्युक्तः कंसः कृपाणं खड्गं जगृहे । देवकीं हन्तुमिति शेषः । असौ शूरसूनुः वसुदेवो अस्य पुत्रान् देवक्यामुत्पत्स्यमानान् पुत्रान् हन्तुं दास्यामीत्युक्त्वा समर्प्य तां देवकीं विमोच्य मोचयित्वा तया सहितो गृहं ययौ ॥५॥

**अनन्तभट्टीया–** अस्याः अष्टमः सुतः तव मृत्युः हन्ता । पुत्रान् समर्प्य, इयं तावत्तव न मृत्युः किन्तु अस्याः पुत्राः । एवं ते अस्यां उत्पन्नान् पुत्रान् ते दास्यामीत्युक्त्वेत्यर्थः ॥५॥

**जनार्दनीया–** विरोधोत्पादकप्रकारमाहेत्युक्तं दर्शयति– **मृत्युरिति** ॥ हे मूढ! अस्याः देवक्याः । इत्युक्तः कंसः तां हन्तुं कृपाणं खड्गम् । शूरसूनुः 'इमां मा जहि । अस्याष्टमो गर्भः मृत्युरिति यदि मन्यसे तर्हि अस्यामुत्पत्स्यमानान् सर्वान् पुत्रान् ते दास्यामि' इत्युक्त्वा इति शेषः पूरणीयः । अस्य कंसस्य पुत्रान् समर्प्य, उत्पत्स्यमानान् इति शेषः । तां देवकीं मृत्योर्विमोच्य मोचयित्वा । तया देवक्या सहितः ॥५॥

**भावचन्द्रिका–** इयं न शत्रुः तत्पुत्रान् त्वं जहीति समर्प्य ॥५॥

**चट्टि–** विरोधोत्पादनार्थमुक्तं वायोर्वचनं दर्शयति– **मृत्युरिति** ॥ हे मूढ मन्द अस्याः देवक्याः अष्टमः सुतः अष्टमो गर्भः तव मृत्युः मारको भविता । वायुनेति शेषः । इत्युक्तः कंसः कृपाणं खड्गं जगृहे । देवकीं हन्तुमिति शेषः । शूरसूनुर्वसुदेवः इमां मा जहि अस्याः अष्टमो गर्भः मृत्युरिति यदि मन्यसे तर्हि अस्यामुत्पस्यमानान् पुत्रान् ते दास्यामि इत्युक्त्वा इति शेषः पूरणीयम् । अस्य कंसस्य पुत्रान् समर्प्य उत्पस्यमानानिति शेषः । तां देवकीं विमोच्य मोचयित्वा तया देवक्या सहितस्सन् गृहं प्रययौ ॥५॥

**षट् [१]कन्यकाश्चावरजा गृहीतास्तेनैव ताभिश्च मुमोद शूरजः ।**
**बाह्लीकपुत्री च पुरा गृहीता पुराऽस्य भार्या सुरभिस्तु रोहिणी ॥६॥**

**व्यासतीर्थीया–** अवरजा देवक्याः ॥६-८॥

---

१. 'कुमार्यः सप्त चाप्यासन् वसुदेवाय ता ददौ । देवकी शान्तिदेवा च सुदेवा देवरक्षिता । वृकदेव्युपदेवी च सुनाम्नी चैव सप्तमी ॥' इति हरिवंशे १.३७.२८,२९ । '...धृतदेवादयो नृप ॥ शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता । सहदेवा देवकी च वसुदेव उवाह ताः ॥' इति भागवते.९.२१.२४ । 'रोहिणी च महाभागा पत्नी चानकदुन्दुभेः । पौरवी बाह्लीकसुता संपूज्यासीत् सुरैरपि ॥' इति लिङ्गपुराणे.१.६९.४४ । 'पौरवी रोहिणी भद्रा मदिरा रोचना इळा । देवकीप्रमुखा आसन् पत्न्य आनकदुन्दुभेः ॥' इति भागवते ९.२१.४६

**मधुसूदनीया–** ।। **बाह्लीकपुत्री च पुरा गृहीतेति** ।। पुरा देवकीतदवरजाविवाहात् पूर्वमित्यर्थः । नतु काशिराजकरवीरराजपुत्रीविवाहात् पूर्वमिति । भागवतादौ रोहिणीविवाहात् पूर्वमेव तद्विवाहस्योक्तत्वात् तद्विरोधापत्तेरिति ध्येयम् । तथाचोक्तम्– 'ज्येष्ठपत्नी महाराज दयितानकदुन्दुभेः । लेभे ज्येष्ठं सुतं रामं सारणं शठमेव च ।।' इति हरिवंशे [१.३५.४-५]।।६-८।।

**वरदराजीया–** षट्कन्यका देवक्या अवरजा वसुदेवेन पत्नीत्वेन गृहीताः स्वीकृता । शूरजो वसुदेवो ताभिर्देवक्यादिभिः मुमोद । बाह्लीकस्य राज्ञः पुत्री पुरा देवक्यादिविवाहात् पूर्वं गृहीता स्वीकृता । सा का रोहिणी, सा पूर्वं का? अस्य वसुदेवस्य पुरा कश्यपजन्मनि भार्या सुरभिरेवेत्यर्थः ।।६।।

**अनन्तभट्टीया–** [षट्] अवरजाः देवकीकनिष्ठभगिन्यः । गृहीताः पत्नीत्वेनेत्यर्थः । तेनैव शूरजेनैव । सा पुरा कश्यपस्य भार्या सुरभिः । बाह्लीकपुत्री रोहिणी पुरा देवक्यवरजग्रहणात् पुरा गृहीता । अथवा पुरा गृहीता बाह्लीकपुत्री रोहिणी तु पुरास्य भार्या सुरभिः ।।६।।

**जनार्दनीया–** तेन वसुदेवेन अवरजाः देवक्यनन्तरमुत्पन्नाः षट् षट्सङ्ख्याकाः कन्यकाः देवकपुत्र्यः गृहीताः वृताः । पत्नीत्वेनेति शेषः । बाह्लीकस्य पुत्री च पुरा षट्कन्यकाभ्यः पुरा । देवक्यनन्तरमित्यर्थः । 'पौरवी रोहिणी नामा बाह्लीकस्यात्मजाभवत् । ज्येष्ठा पत्नी महाराज दयितानकदुन्दुभेः ।।' इति हरिवंशे [हरिवंशपर्व.३५.४]। गृहीता वृता । तस्या मूलस्वरूपमाह– **पुरेति** ।। पुरा पूर्वजन्मनि अस्य वसुदेवस्य भार्या या सुरभिः सा रोहिणी गृहीतेति सम्बन्धः ।।६।।

**चट्टि–** अवरजाः देवक्यनन्तरमुत्पन्नाः षट्सङ्ख्याकाः कन्यकाः देवकपुत्र्यः तेन वसुदेवेनैव गृहीताः पत्नीत्वेन स्वीकृताः । शूरजो वसुदेवश्च ताभिः देवक्यादिभिः मुमोद । पुरा पूर्वजन्मन्यस्य वसुदेवस्य भार्या या सुरभिः सा इदानीं रोहिणीनाम्नी सती बाह्लीकपुत्री जाता । सा च वसुदेवेन पुरा देवकी तदवरजाविवाहात् पूर्वमित्यर्थः । गृहीता पत्नीत्वेन स्वीकृता । न तु काशिराजकरवीरराजपुत्रीविवाहात् पूर्वमिति । भागवतादौ रोहिणीविवाहात् पूर्वमेव तद्विवाहोस्योक्तत्वात् तद्विरोधापत्तेरिति ज्ञेयम् ।।६।।

**राज्ञश्च काशिप्रवरस्य[१] कन्यां स पुत्रिकापुत्रकधर्मतो बहून् ।**
**कन्यां तथा करवीरेश्वरस्य धर्मेण तेनैव दितिं दनुं पुरा ।।७।।**

---

१. 'अपुत्रः काशिराजो वै कन्यां सुतनुसञ्ज्ञिताम् । प्रायच्छत् वसुदेवाय राज्यशुल्कां कुरूद्वह ।। तत्र जज्ञे महाबाहुर्दिवाकरसमद्युतिः । कुमारः पौण्ड्रको नाम बलवीर्यमदान्वितः ।। वसुदेवसुतत्वाच्च वासुदेवेति शब्दितः । जाते तस्मिन् महाराजो वसुदेवो महाद्युतिः ।। राज्यं तस्मिन् समारोप्य सकोशबलवाहनम् । उवाह कंसावरजां देवकीं देवतोपमाम् ।। निरुद्धो भोजराजेन कंसेनानकदुन्दुभिः । कदाचिदपि न प्रायाद् करवीरपुरीमपि ।। असह्यं मातृसापत्न्यमभ्रातृत्वं तथात्मनः । स्मरमाणः स काशीशो यदूनुद्विजतेऽनिशम् ।।' इति भागवते.१०.६९.५-१०

**वेदाङ्गतीर्थीया**– पुरा दितिं काशिप्रभवस्य कन्याम् । पुरा दनुं करवीरेश्वरस्य कन्यामवहत् इति सम्बन्धः ।।७-८।।

**वादिराजीया**– पुरा दितिं काशिप्रवरस्य कन्याम्, पुरा दनुं करवीरेश्वरस्य कन्यामिति विभागेनान्वयः । तेनैव धर्मेण पुत्रिकापुत्रकधर्मेण ।।७-११।।

**वरदराजीया**– वसुदेवः काशिप्रभवस्य काश्यां प्रभवः उत्पत्तिर्यस्य तस्य राज्ञः काशिराजस्य कन्यकां पुत्रीम् । पुत्रिकापुत्रकधर्मतः 'अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति' इति नियमबन्धेन पुत्रिकापुत्रधर्मेण कन्यादानं पुत्रिकापुत्रधर्मः । तेन धर्मेणावहत् विवाहयामास । स तथा करवीरेश्वरस्य राज्ञः कन्यां तेनैव धर्मेण पुत्रिकापुत्रधर्मेणावहदिति सम्बन्धः । ते उभे पूर्वं के इत्याकाङ्क्षायां पूर्वं कश्यपस्य भार्यैवेत्युक्तम् । दितिं दनुं पुरेति यथाक्रमं सम्बन्धः ।।७।।

**अनन्तभट्टीया**– तेन धर्मेण पुत्रिकापुत्रधर्मेण । दितिं दनुम् । यथाक्रममिति द्रष्टव्यम् ।।७।।

**जनार्दनीया**– स वसुदेवः । काश्यां प्रभवः जन्म यस्य स तथा तस्य । राज्ञः काशिराजस्य कन्यकां पुरा दितिम्, पुत्रिकापुत्रधर्मतः 'अस्यां जातः पुत्रो मम पुत्रः स्यात्' इति कन्याप्रदानधर्मेण अवहत् उवाह । तेनैव धर्मेण पुत्रिकापुत्रधर्मेण करवीरपुरेश्वरस्य कन्यां पुरा दनुम् । अवहदिति सम्बन्धः ।।

**चट्टि**– सः वसुदेवः, काशिप्रभवस्य काश्यां प्रभवः उत्पत्तिर्यस्य स तथा तस्य, राज्ञः काशिराजस्य कन्यां पुरा दितिम्, पुत्रिकापुत्रकधर्मतः 'अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति' इति कन्याप्रदानधर्मेणावहत् विवाहयामास । तथा करवीरेश्वरस्य कन्यां पुरा दनुं तेनैव धर्मेण पुत्रिकापुत्रकधर्मेणैव अवहदिति सम्बन्धः ।।७।।

**यो मन्यते विष्णुरेवाहमित्यसौ पापो वेनः पौण्ड्रको वासुदेवः ।**
**जातः पुनः शूरजात् काशिजायां नान्यो मत्तो विष्णुरस्तीति वादी ।।८।।**

**वरदराजीया**– तत्र भार्याद्वये वसुदेवस्य पुत्रोत्पत्तिमाह– **यो मन्यत इत्यादिना** ।। अहमेव विष्णुरिति यो मन्यते सो पापः पापरूपो वेनः । पूर्वमिति शेषः । पुनः अत्र काशिजायां कन्यकायां शूरजात् वसुदेवात् पौण्ड्रको वासुदेवः तन्नाम्ना जातः । अत्रापि मत्तः सकाशात् अन्यो विष्णुर्नास्तीति वादी जात इति सम्बन्धः ।।८।।

**जनार्दनीया**– यः पापः पापात्मा वेनः 'अहमेव विष्णुः' इति मन्यते असौ वेनः । शूरजात् वसुदेवात् काशिराजपुत्र्यां पौण्ड्रकवासुदेवः इति नाम्ना जातः । पुनः सत्कुलोत्पत्त्यनन्तरमपीत्यर्थः । मत्तः अन्यो विष्णुर्नास्ति, अहमेवेत्यर्थः इति वादी, बभूवेति शेषः ।।८।।

**भावचन्द्रिका–** [१]पुण्ड्रदेशाधिपतित्वात् पौण्ड्रकः । भारतस्य अध्यात्मपरत्वमुक्तमुपपादयितुं दैत्यवाचकशब्देन तन्नियम्यदोषाः ग्राह्या इति ज्ञापयितुं पूर्वत्रोत्तरत्र च दैत्यस्वरूपमुच्यत इति ज्ञेयम् ॥८॥

**चट्टि–** तत्र भार्याद्वये वसुदेवस्य पुत्रद्वयोत्पत्तिमाह– **य इत्यादिना** ॥ यः पापः पापात्मा वेनः अहमेव विष्णुरिति मन्यते । असौ वेनः शूरजाद् वसुदेवात् काशिजायां काशिराजस्य पौण्ड्रको वासुदेव इति नामा सन् जातः । पुनस्तत्कुलोत्पत्त्यनन्तरं मत्तोऽन्यो विष्णुर्नास्ति इति वादी बभूवेति शेषः ॥

**[२]धुन्धुर्हतो यो हरिणा मधोः सुत आसीत् सुतायां करवीरेश्वरस्य ।**
**सृगालनामा वासुदेवोऽथ देवकीमुदूह्य शौरिर्न ययावुभे ते ॥९॥**

**व्यासतीर्थीया–** धुन्धुमारनृपस्थितेन हरिणा ॥९॥

**वेदाङ्गतीर्थीया–** धुन्धोः धुन्धुमाराख्यनृपतिना हतत्वे हरिणा हत इति तदन्तर्गतहर्यपेक्षया युज्यते ॥

**मधुसूदनीया–** ॥ **धुन्धुर्हत इति** ॥ हरिणा कुवलयाश्वराजप्रविष्टेण हरिणा । तथाहि– [वन.२०७.८-९] 'मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः । शेते लोकविनाशाय तपोबलमुपाश्रितः॥' इत्यादिना धुन्धुसामर्थ्यमुक्त्वा तद्वधार्थं 'एतस्मिन्नेव काले तु सभृत्यबलवाहनः । कुवलाश्वक्षितिपतिरन्वितो बलशालिनाम् ॥' [वन.२०७.१०] इत्यादिना कुवलयाश्वः प्रययौ इत्युक्ता । ननु ब्रह्मवराद्देवदानवगन्धर्व-रक्षोभिरवध्यस्य धुन्धोर्वधार्थं कुवलाश्वस्य कथं प्रयत्नो घटते इत्याशङ्कायां 'तमाविशत्ततो विष्णुः भगवान् तेजसां प्रभुः । उदङ्कस्य नियोगेन लोकानां हितकाम्यया ॥' इत्याद्यारण्यपर्वणि [२०७.१२] कुवलाश्वप्रविष्टेन हरिणा धुन्धुवधोक्तेः ॥९-१३॥

**वरदराजीया–** यः पूर्वं मधोरसुस्य सुतो धुन्धुः नामा हरिणा धुन्धुमारनृपान्तर्गतेन हरिणा हतः । स एव करवीरेश्वरस्य सुतायां शूरजात् सृगालनामा आसीत् जातः । वसुदेवो देवकीमुदूह्य विवाह्य अथानन्तरं ते उभे भार्ये न ययौ न स्वीकृतवान् । परित्यक्तवानिति यावत् ॥९॥

**अनन्तभट्टीया–** हरिणा हतः धुन्धुः पुनः जातः ॥९॥

---

१. 'वङ्गपुण्ड्रकिरातेषु राजा बलसमन्वितः । पौण्ड्रको वासुदेवेति योऽसौ लोकेऽभिविश्रुतः ॥' इति सभापर्वणि.१४.२० । 'ततः पुण्ड्राधिपं वीरं वासुदेवं समाययौ' इति सभापर्वणि.३१.२२ ।

२. कश्यपभार्या दनायुषा । 'दनायुषायाः पुत्रास्तु स्मृताः पञ्चमहाबलाः । अरूरुर्बलिजन्मौ च विरुक्षश्च विषस्तथा ॥ अरूरोस्तनयः क्रूरो धुन्धुर्नाम महासुरः । निहतः कुवलाश्वेन उत्तङ्कवचनात् किल ॥' इति वायुपुराणे.६८.३०-३२

**जनार्दनीया–** हरिणा कुवलाश्वराजस्थहरिणा । 'नारायणेन कौरव्य तेजसाप्यायितस्तदा । अर्णवं खनयामास कुवलाश्वो महीपतिः ॥' [२०७.१८] इत्याद्यरण्यपर्ववचनात् । अत एव कुवलाश्वको धुन्धुमार इति नाम्ना प्रसिद्धोऽभूदित्यवगन्तव्यम् । यः मधोः मधुनाम्नोऽसुरस्य सुतः धुन्धुनामा हतः । करवीरेश्वरस्य सुतायां वसुदेवपुत्रत्वाद्वा वासुदेवः सृगालनाम्ना आस जातः । अथ तयोरुत्पत्त्यनन्तरं शौरिर्वसुदेवः देवकीमुदूह्य उद्वाह्य, ते उभे काशिकरवीरेश्वरसुते न ययौ न रेमे इत्यर्थः ॥९॥

**ताम्रपर्णीया–** ॥ **हरिणेति** ॥ धुन्धुमारनृपतिस्थेन हरिणेत्यर्थः । 'कुवलाश्वः सुतस्तस्य राजा परमधार्मिकः । यः स धुन्धुवधाद्राजा धुन्धुमारत्वमागतः ॥ [हरिवंशपर्व.११.२३] तमाविशत्तदा विष्णुः तेजसा भगवान् प्रभुः'' [हरिवंशपर्व.११.४५] इति हरिवंशोक्तेः ॥९॥

**अतिविशद–** धुन्धुर्हतो यो हरिणा मधोः सुत इत्यत्र हरिणा मधोः सुत हत इति प्रतीयते । तत्तु नवमभागवतवचनेन [७.२१-२३] विरुद्धमिव प्रतीयते । तथाहि– [बृहदश्वस्तु] पृषदश्वस्तु शावस्तेस्तत्सुतः कुवलाश्वकः । यः प्रियार्थमुदङ्कस्य धुन्धुनामासुरं बली ॥ सुतानामेकविंशत्या सहस्रैरहनद् वृतः । धुन्धुमार इति ख्यातः तत्सुतास्ते प्रजज्वलुः ॥ धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥ इति । तस्मात्कथमेतदिति चेन्न । तदन्तर्गतहरिणा हत इत्यङ्गीकारात् न विरोधः । अथवा अत्र मधोः सुत इत्युक्तत्वात् तत्र तथानुक्तत्वात् अन्य एवायं यो मधुर्हरिणा हतः । तस्य मधोः सुतः धुन्धुः करवीरेश्वरस्य सुतायामासीदिति वा ॥९॥

**भावचन्द्रिका–** यस्माज्जायमानः शृगालध्वनिं चकार तस्मात् सृगालः ॥९॥

**चट्टि–** यो मधोः मधुनाम्नो असुरस्य सुतः धुन्धुः हरिणा कुवलाश्वराजस्थहरिणा हतः । सः करवीरेश्वरस्य सुतायां वसुदेवपुत्रत्वात् वासुदेवः सृगालनामा आसीत् । अथ तयोरुत्पत्त्यनन्तरं शौरिः वसुदेवः देवकीमुदूह्य उद्वाह्य उभे काशिराजकरवीरेश्वरसुते न ययौ न स्वीकृतवान् । परित्यक्तवान् इति यावत् । 'नारायणेन कौरव्य तेजसाप्यायितस्तदा' इत्यरण्यपर्ववचनात् कुवलयाश्वराजस्थितहरिणा धुन्धुः हतः । अत एव कुवलयाश्वः धुन्धुमार इति नाम्ना प्रसिद्धोऽभूदित्यवगन्तव्यम् ॥९॥

**ततस्तु तौ वृष्णिशत्रू बभूवतुर्ज्येष्ठौ सुतौ शूरसुतस्य नित्यम् ।**
**अन्यासु च प्राप सुतानुदारान् देवावतारान् वसुदेवोऽखिलज्ञः ॥१०॥**

**व्यासतीर्थीया–** ततः स्वमात्रोर्वसुदेवेन परिहृतत्वान्निसर्गतो भगवद्वेषित्वाच्च । वसुदेवस्य गोपालत्वात् कथं देवास्तत्सूनुतामापुरित्यत उक्तम्– **अखिलज्ञ इति** ॥ वसुदेवोऽपि किमर्थं विज्ञायात्रैव पुत्रोत्पत्तिमकृतेत्यतो भगवतो भूभारहरणे प्रवृत्तत्वात्तदङ्गभूतदेवतादिसृष्टिरेव मया कार्येति विदितत्वादिति चाह ॥१०॥

**वेदाङ्गतीर्थीया–** ततः सा वसुदेवेन स्वमात्रोः परित्यागात् स्वभावतो भगवद्द्वेषित्वात् वृष्णीनां भागवतत्वाच्च वसुदेवद्वारा वृष्णिशत्रू बभूवतुः ।।१०।।

**वरदराजीया–** ततः स्वमातृपरित्यागात् शूरसुतस्य ज्येष्ठौ सुतौ पौण्ड्रकसृगालौ नित्यं वृष्णिशत्रू यादवानां वैरिणो बभूवतुः । अन्यासु च भार्यासु अखिलज्ञो वसुदेवो देवावतारान् देवांशान् अत एव उदारान् सुतान् प्राप ।।१०।।

**अनन्तभट्टीया–** ततः स्वमात्रोर्वसुदेवेन गृहीतत्वात् स्वभावतो वैष्णवद्वेषाद्वा वृष्णिशत्रू ।।१०।।

**जनार्दनीया–** ततः स्वस्वमातृपरित्यागात् तौ पौण्ड्रकसृगालौ नित्यं वृष्णीनां यादवानां शत्रू । वसुदेवः अन्यासु भार्यासु देवावतारान् अत एव उदारान् उत्तमान् सुतान् प्राप । अत एवाखिलज्ञः सर्वज्ञः ।।१०।।

**ताम्रपर्णीया–** ततः स्वमात्रोः वसुदेवेन त्यक्तत्वात् निसर्गतो भगवद्वेषित्वाच्च । 'अखिलज्ञ' इत्यनेन पौण्ड्रकसृगालयोरयोग्यत्वात् तन्मातृसंव्यवहारे दुस्सङ्गतिर्भविष्यतीत्यभिप्रेत्य ते उभे न ययावित्युपपादितं भवति ।।१०-११।।

**भावचन्द्रिका–** उदारो सङ्ख्यातो गुणतश्च । कस्यां कति जाता इत्यस्योत्तरं नवमस्कन्धचरमाध्याये द्रष्टव्यः ।।१०।।

**चट्टि–** ततः स्वस्य मातृपरित्यागात् शूरसुतस्य वसुदेवस्य ज्येष्ठौ सुतौ तौ पौण्ड्रकसृगालौ नित्यं वृष्णीनां यादवानां शत्रू वैरिणौ बभूवतुः । अखिलज्ञः वसुदेवः अन्यासु भार्यासु देवावतारान् देवांशान् अत एव उदारान् सुतान् प्राप ।।१०।।

**ये ये हि देवाः पृथिवीं गतास्ते सर्वे शिष्याः सत्यवतीसुतस्य ।**
**[1]विष्णुज्ञानं प्राप्य सर्वेऽखिलज्ञास्तस्माद् यथायोग्यतया बभूवुः ।।११।।**

**व्यासतीर्थीया–** भुवि जाताः देवाः किं शिक्षिता आसन्नित्यपेक्षायामाह– **य इति** ।। तस्मात् व्यासाद्विष्णोर्ज्ञानं प्राप्य ।।११।।

**वेदाङ्गतीर्थीया–** तस्मात् व्यासात् यथायोग्यतया विष्णुज्ञानं प्राप्याखिलज्ञाः बभूवुः ।।११।।

**सत्याभिनवतीर्थीया–** ये ये हि देवाः पृथिवीं इति श्लोके सर्वेऽखिलज्ञा यथायोग्यतया बभूवुरित्यस्य सर्वे यथा योग्यतया विशिष्टाः तथा अखिलज्ञाः बभूवुरित्यर्थः । एतेन 'यथायोग्यतया' इत्येतदनन्वितमिति दूषणं परास्तम् । विशिष्टाः तथेत्यनयोः शेषेणान्वयस्योक्तत्वात् ।।११।।

१. 'विष्णोः ज्ञानम्' इति व्यासतीर्थीयचट्टिटिप्पण्योः पाठः ।

**वरदराजीया–** ये ये देवाः पृथिवीं गताः पृथिव्यामुत्पन्नाः ते सर्वे सत्यवतीसुतस्य व्यासस्य शिष्याः अत एव तस्मात् कारणात् यथायोग्यतया योग्यताननतिक्रमेण विष्णोः सकाशात् ज्ञानं प्राप्य अखिलज्ञाः सर्वज्ञाः । यथायोग्यतयेत्यत्रापि सम्बन्धः । बभूवुर्जाताः ।।११।।

**अनन्तभट्टीया–** तस्मात् व्यासात् विष्णोर्ज्ञानं प्राप्य ।।११।।

**जनार्दनीया–** शिष्याः आसन्निति शेषः । सर्वे तस्माद् व्यासात् ज्ञानं प्राप्य, यथायोग्यतया योग्यतामनतिक्रम्य इति यथायोग्यं, तस्य भावस्तथा । स्वस्वरूपयोग्यतानुसारेणेति यावत् । अखिलज्ञाः सर्वज्ञा बभूवुः ।।११।।

**चट्टि–** ये ये देवाः पृथ्वीं गताः पृथिव्यामुत्पन्नाः ते सर्वे सत्यवतीसुतस्य विष्णोः शिष्या आसन्निति शेषः । सर्वे तस्मात् व्यासात् ज्ञानं प्राप्य यथायोग्यतया स्वस्वरूपयोग्यतानुसारेण अखिलज्ञाः सर्वज्ञाः बभूवुः ।।११।।

**मरीचिजाः षण्मुनयो[1] बभूवुस्ते देवलं प्राहसन् कार्श्यहेतोः ।**
**तच्छापतः कालनेमिप्रसूता अवध्यतार्थं तप एव चक्रुः ।।१२।।**

**व्यासतीर्थीया–** कृष्णज्येष्ठानामुत्पत्तिमाह– **मरीचिजा इत्यादिना** ।।१२।।

**वेदाङ्गतीर्थीया–** कृष्णज्येष्ठोत्पत्तिं वक्तुं तत्स्वरूपं तदुत्पत्तिकारणं चाह– **मरीचिजा इत्यादिना** ।। तच्छापतः असुरा भवतेति शापतः । अवध्यतार्थमेव ।।१२।।

**वादिराजीया–** ते देवलं प्राहसन् कार्श्यहेतोरित्यत्र कार्श्यं कामज्वरेण कृशाङ्गत्वम् । न चैवं 'सुतान् शपितुमुद्यतम्' इति भागवतवचनस्य विरोधः । 'तच्छापतः कालनेमिप्रसूता'[भाग.१०.७४.४७] इत्यस्य 'हिरण्यकशिपोर्जाता' [१०.७४.४८] इति भागवतोक्तेश्च विरोध इति चेन्न । हिरण्यकशिपोः पुत्रत्वे पुनर्देवक्यां जन्मनि कारणाभावात् शापो अवश्यं वक्तव्यः । पित्रा तेनैव हिरण्यकशिपुना अहङ्कारवशात् आत्मान्यतो वरलिप्सून् प्रति कुपितेन शापो दत्तश्चेत् भूमौ जायतां कंसेनैव हनने न

१. 'हंसः सुविक्रमः क्राथो दमनो रिपुमर्दनः । क्रोधहन्तेति विख्याताः षड्गर्भाः नाम दानवाः ।।' इति हरिवंशटिप्पणी. विष्णु.२.११ । 'कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः। ऋजुं सम्मर्दनं भद्रं... ।।' इति देवकीपुत्रत्वेन जातानां नामानि भागवते.९.२१.५५ । 'श्रीभगवानुवाच– आसन् मरीचेः षट् पुत्रा ऊर्जाया प्रथमेन्तरे । देवलं जहसुर्वीक्ष्य सुताञ्छपितुमुद्यतम् ।। तेनासुरीमगुर्योनिमगुनावद्यकर्मणा । हिरण्यकशिपोः शापात् पुत्रास्ते योगमायया ।। देवक्या जठरे जाता राजन् कंसविहिंसिताः ।' इति भागवते १०.७४.१-३ । तेषां नामानि- 'स्मरो गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृत् घृणी । षडिमे मत्प्रसादेन पुनर्यास्यन्ति मद्गतिम् ।।' इति भागवते १०.७४.५१ [मरीचिपुत्रत्वेन जातानां षड्गर्भानां एतानि नामानि इति भाति]

किञ्चित्कारणम् । स्वस्यैव पुत्रत्वे तु स्वतातो भवतां हन्तेति स्वस्यापि जन्मघटकं शापं न दद्यादेव । क्रोधवशाद्दद्याच्चेदपि भूमौ जातेन हिरण्यकशिपुनैव हन्तव्याः न तु कंसेन । कालनेमिजातत्वे तु 'तत्र स्वतातो भवतां निहन्ता' इति हिरण्यकशिपोः शापोऽपि अहङ्कारवशात् आत्मान्यतो वरलिप्साया कारणेन घटेतैव । कंसेनैव हननमपि भागवतोक्तं सुतरां घटेत । अतस्तात्पर्यकारोक्तमेव तत्त्वम् । तर्हि 'तेनासुरीमगुर्योनिं अमुनाऽवद्यकर्मणा । हिरण्यकशिपोर्जाताः पुत्रास्ते योगमायया ।। देवक्या जठरे जाता राजन् कंसविहिंसिताः । सा ताञ्छोचत्यात्मजान् स्वांस्त इमेऽध्यासतेऽन्तिके । इत एतान् प्रणेष्यामो मातृशोकापनुत्तये ।।' [१०.७४.४८-५०] इति भागवतोक्तेः का गतिरिति चेदित्थम् । अमुना अवद्यकर्मणा देवलपरिहासाख्यावद्यकर्मणा जातेन तेन कुपितदेवलशापेन आसुरीं कालनेम्याख्यासुरसम्बन्धिनीं योनिं तद्भार्यायोनिमगुः । एवं जातास्ते पुत्राः हिरण्यकशिपोर्निमित्ताच्छापादिति यावत् । योगमायया दुर्गया देवक्याः जठरे जाताः । कंसेन विहिंसिताः पुनर्ब्रह्मवरादेवावध्ये स्वस्वशरीरे तयैव दुर्गया प्रवेशिताः सन्तः त इमे हे बले, अद्य तेऽन्तिके आसत इति योजनया उभयोरप्यविरोधसम्भवादिति । योगमाययेति वदता 'प्रस्वापयित्वा प्रचकर्ष कायात्' इति तात्पर्योक्तं प्रमेयं सूचितम् । अन्यथा कंसकरान्मरणानन्तरं स्वमूलमुनिरूपप्राप्तिरेव स्यात् पुनर्दानवदेहं प्रविश्य महाबलिनिकटे अवस्थाने किं कारणम् । कथञ्च तद्घटते । अत उभयसम्पादनाय दानवदेहे स्थितानां तेषामवध्यत्वरूपब्रह्मवरोऽप्यावश्यकः । तद्घटनाय अविनष्टप्रसुप्तपूर्वदेहाद्देवकीदेहं प्रत्याकर्षणाय पुनरत्र मृतानामविनष्टपूर्वदेह एव प्रवेशनाय योगमायाप्यावश्यकी। तस्माद्योगमायेति वदता भागवतकारेणापि तात्पर्यकारोक्तं सर्वं प्रमेयं सूचितम् । प्रस्वापनस्य च वत्सरपर्यन्तं स्वगृहे असम्भवात् कस्याञ्चित् गिरिगुहायां दुर्गेव स्वशक्त्या क्रमेणैकैकं नीत्वा स्वशक्त्या ब्रह्मवरशक्त्या च जीवतामेव तेषां कायानां प्रस्वापनं कारयति । कंसेन निहतानां पुनस्तेष्वेव कायेषु प्रवेशञ्च कारयति । भगवांस्तु स्वाघटितघटकशक्त्या दानवदेहं विनाश्य स्वमातुरुदरजातशिशुरूपेणैव तान् परिणमय्य स्वमात्रे दर्शयित्वा पुनस्तस्माच्छिशुरूपाद्विमोच्य दिव्यदेहं दत्वा स्वलोकं प्रापयामासेत्यतो भारततात्पर्यकारः भागवतस्यापि तात्पर्यकार इति सर्वमवदातम् ।।१२।।

**अनन्तभट्टीया–** कार्श्यहेतोः कार्श्यं निमित्तीकृत्य ।।१२।।

**वरदराजीया–** मरीचिजाः मरीचेर्जाताः षण्मुनयो बभूवुः आसन् । ते देवलं ऋषिं कार्श्यहेतोः शरीरस्य कृशत्वाद्धेतोः प्राहसन् हासं कृतवन्तः । तस्य देवलस्य शापतः शापात् कालनेमिनामकादसुरात् प्रसूताः । ते स्वस्य अवध्यतार्थमेव तपश्चक्रुः ।।१२।।

**जनार्दनीया–** मरीचिजाः मरीचिऋषेः पुत्राः षण्मुनयः बभूवुः । ते मरीचिपुत्राः देवलं ऋषिं कार्श्यहेतोः तपोव्रतादिनियमैः शरीरकृशत्वनिमित्तात् प्राहसन् जहसुः । तस्य देवलस्य शापतः कालनेमेः असुरात् प्रसूताः जाताः सन्तः ।।१२।।

**ताम्रपर्णीया—** तच्छापत इत्यनेन 'तेनासुरीमगुर्योनिममुनावद्यकर्मणा । हिरण्यकशिपोर्जाताः पुत्रास्ते योगमायया ।।'[१०.७४.४८] इति भागवते हिरण्यकशिपोरित्यस्य हिरण्यकशिपुशापादित्यर्थ उक्तो भवति । तेन न विरोधः ।।१२-१३।।

**भावचन्द्रिका—** देवल एव देवकः । 'देवलं जहसुः' इति भागवतोक्तेः ।।१२।।

**चद्रि—** मरीचिजाः मरीचेः जाताः षण्मुनयः बभूवुः । ते मरीचिपुत्राः देवलं ऋषिं कार्श्यहेतोः शरीरकृशत्वाद्धेतोः प्राहसन् जहसुः । तस्य देवलस्य शापतः कालनेमेरसुरात् प्रसूताः जातास्सन्तः अवध्यतार्थमेव तपश्चक्रुः । मरीचिजाः षण्मुनयः इत्यत्र– 'तेनासुरीमगुर्योनिममुनावद्यकर्मणा । हिरण्यकशिपोर्जाताः पुत्रास्ते योगमायया ।। देवक्या जठरे जाताः राजन् कंसेन हिंसिताः ।।' इति भागवतविरोधो नास्ति । 'हिरण्यकशिपोः पुत्राः षड्गर्भा इति श्रुताः' इति विष्णुपुराणवचनविरोधो नास्ति । तथा हि एते षड्गर्भाः पूर्वं मरीचेः पुत्राः बभूवुः । तदा देवलपरिहसननिमित्तेन आसुरीं योनिं प्राप्स्यथेति देवलेन शप्ताः कालनेमिपुत्राः जाताः । अत्र ब्रह्माणं प्रत्यवध्यतार्थं तपश्चक्रुः । तदा हिरण्यकशिपुः मामनादृत्य यस्मात् ब्रह्माणं प्रति तपः कृतं तस्मात् यूयं भूतले जन्म प्राप्य स्वपित्रा कालनेमिना हता भविष्यथेति शप्तवान् । ततस्ते भीत्या हिरण्यकशिपुमेव वयं तव पुत्राः स्मेति शरणं प्राप्ताः । तेन हिरण्यकशिपोः पुत्रा इत्युपचर्यन्त इति ।।१२।।

**[१]धाता प्रादाद् वरमेषां तथैव शशाप तान् क्ष्मातले सम्भवध्वम् ।**
**तत्रं स्वतातो भवतां निहन्तेत्यात्मान्यतो वरलिप्सून् हिरण्यः ।।१३।।**

---

१. 'यत्र ते गर्भशयनाः षड्गर्भा नाम दानवाः । विक्रान्तवपुषो दीप्तास्तेऽमृतप्राशनोपमाः । अमरप्रतिमा युद्धे पुत्रा वै कालनेमिनः ।। ते ताततातं सन्त्यज्य हिरण्यकशिपुं पुरा । उपासाञ्चक्रिरे दैत्या पुरा लोकपितामहम् ।। तप्यमानस्तपस्तीव्रं जटामण्डलधारिणः । तेषां प्रीतोऽभवद् ब्रह्मा षड्गर्भाणां वरं ददौ ।। ब्रह्मोवाच– भो भो दानवशार्दूलास्तपसाहं सुतोषितः । ब्रूत वो यस्य यः कामस्तस्य तं तं करोम्यहम् ।। ते तु सर्वे समानार्था दैत्या ब्रह्माणमब्रुवन् । यदि नो भगवान् प्रीतो दीयतां नो वरो वरः ।। अवध्याः स्याम भगवन् दैवतैः समहोरगैः । शापप्रहरणैश्चैवं स्वस्ति नोस्तु महर्षिभिः ।। यक्षगन्धर्वपतिभिस्सिद्धचारणमानवैः । मा भूद्वधो नो भगवन् ददासि यदि नो वरम् ।। तानुवाच ततो ब्रह्मा सुप्रीतेनान्तरात्मना । भवद्भिर्यदिदं प्रोक्तं सर्वमेतद्भविष्यति ।। षड्गर्भाणां वरं दत्त्वा स्वयम्भूस्त्रिदिवं गतः । ततो हिरण्यकशिपुः सरोषो वाक्यमब्रवीत् ।। मामुत्सृज्य वरो यस्माद् धृतो वः पद्मसम्भवात् । तस्माद् वस्त्याजितः स्नेहः शत्रुभूतांस्त्यजाम्यहम् ।। षड्गर्भा इति योऽयं वः शब्दः पित्राभिवर्धितः । स एव वो गर्भगतान् पिता सर्वान् वधिष्यति ।। षडेव देवकीगर्भाः षड्गर्भा वै महासुराः । भविष्यथ ततः कंसो गर्भस्थान् वो वधिष्यति ।।' इति हरिवंशे.विष्णुपर्वणि.२.११-२३

**व्यासतीर्थीया–** स्वतातः कालनेमिः । कंसेन हताः कालनेमिप्रसूतदेहान् प्रापुरतो ब्रह्मणो अवध्यतावरश्च सत्यो जात इत्यभिप्रायः ।।१३-१४।।

**वेदाङ्गतीर्थीया–** तथैव अवध्यतार्थः यथा तथैव । हिरण्यः हिरण्यकशिपुः ।।१३।।

**वादिराजीया–** आत्मान्यतो वरलिप्सून् हिरण्य इत्यत्र हिरण्यः हिरण्यकशिपुः आत्मान्यतः स्वस्मादन्यतः ब्रह्मणः वरलिप्सूनिति सम्बन्धः । तर्हि स्वयं चतुर्मुखात् कथं वरं जग्राहेति चेत् सत्यम् । तदा महानहङ्कारो हिरण्यकशिपोर्नासीत् । ब्रह्मणो वरदानानन्तरम्-'यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः । क्वासौ यदि स सर्वत्र स्तम्भे कस्मान्न दृश्यते ।।' [७.८.१३] इति भागवतोक्तेः दृप्तस्सन् भगवन्तमप्यवजानानो ब्रह्माणमपि तृणीकृत्याहङ्कारवशाच्छशापेति भावः ।।१२-१३।।

**वरदराजीया–** तपसा तुष्टो धाता ब्रह्मा यथा एषां षण्णां अवध्यता स्यात्तथैव वरं प्रादात् । हिरण्यो हिरण्यकशिपुः तान् शशाप । यूयं क्ष्मातले भूतले सम्भवध्वं सम्भवत । तत्रापि जन्मनि स्वतातः भवतां पिता कालनेमिः भवतां निहन्ता स्यादिति । केनापराधेन शशापेत्यत उक्तम्– **आत्मान्यत इति** ।। आत्मनः स्वस्मादन्यस्माद्वरं लिप्सन्तीति तथा तान् । लोकनाथे मयि विद्यमाने कथं धातुर्वरप्रार्थनमिति कोपेनेति भावः ।।१३।।

**अनन्तभट्टीया–** हिरण्यः हिरण्यकशिपुः । आत्मान्यतः वरलिप्सून् शशाप । स्वतातः कालनेमिः ।।१३।।[१]

**जनार्दनीया–** धाता ब्रह्मा एषां कालनेमिप्रसूतानां मरीचिपुत्राणां तथैव यथा अवध्यता स्यात् तथैव वरं प्रादात् । हिरण्यः हिरण्यकशिपुः आत्मना स्वस्मादन्यतः अन्यस्मात् । ब्रह्मण इत्यर्थः । वरं लिप्सन्तीति तथा तान् प्राप्तवरान् शशाप । किमिति ? यूयं क्ष्मातले भूतले सम्भवध्वं उत्पत्स्यत । तत्र जन्मनि स्वतातः भवत्पिता कालनेमिः । भवतां मच्छापात् जातानां भवतां निहन्ता भवेत इति शशापेति सम्बन्धः ।।१३।।

**भारतश्री–** कोपादुक्तवानिति द्वितीयशापस्योपयोगः । स चापि नान्येन भवत्पितेति । केचित्तु 'चतुर्मुखवरस्य कालनेमिप्रसूतदेहविषयत्वात् न दोषः' इति वदन्ति । तच्चिन्त्यं हिरण्यशापस्यैव वधत्वात् । तदुक्तम्– 'अवध्ययोः शम्भुवरादवध्यानकृतोः सताम् । मच्छापोऽपि तयोर्मोघः स्यादग्निहृदयोरिव ।।' इति शापादिनापि मरणं वध एव । अत्रापि उत्तरत्र 'वरात् स्वसम्भवादसौ न शापशक्तिमानभूत्'[१७.२४०] इति । अस्तु को दोष इत्यत आह इति चेत् 'नान्यः कश्चित् तद्वराणां शापानामप्यतिक्रमी' इत्युक्तेरिति ।।१३-१४।।

१. अनन्तभट्टीया– स्वतातः कालनेमिः । तथेति ।।१३।। इति हो.पुस्तकपाठः ।

**चट्टि–** धाता ब्रह्मा एषां मरीचिपुत्राणां तथैव यथा अवध्यता स्यात् तथैव वरं प्रादात् । हिरण्यः हिरण्यकशिपुः आत्मनः स्वस्मादन्यतो अन्यस्मात् ब्रह्मणः इत्यर्थः । वरं लिप्सन्तीति तथा तान् प्राप्तवरान् शशाप । किमिति । यूयं क्ष्मातले सम्भवध्वं उत्पत्स्यथ । तत्र जन्मनि स्वतातः भवत्पिता कालनेमिः भवतां मच्छापजातानां निहन्ता स्यादिति शशापेत्यन्वयः ।।१३।।

**[1]दुर्गा तदा तान् भगवत्प्रचोदिता प्रस्वापयित्वा प्रचकर्ष कायात् ।**
**क्रमात् समावेशयदाशु देवकीगर्भाशये तान् न्यहनच्च कंसः ।।१४।।**

**वेदाङ्गतीर्थीया–** कालनेमिप्रसूतानामवध्यत्वं ब्रह्मवरस्यामोघत्वं क्ष्मातले सम्भवध्वमित्यादि हिरण्यशापस्यामोघत्वं चाविरोधेन घटयन्नाह– **दुर्गेत्यादि** ।। तान् कालनेमिप्रसूतान् प्रस्वपयित्वा कायात् प्रचकर्षेत्यादिनानेन देहहननाभावात् हिरण्यशापात् जातानां स्वसुतानां कालनेमिना कंसेन हतानां पुनः कालनेमिप्रसूतशरीरप्रवेशात् ब्रह्मवरामोघत्वं हिरण्यशापामोघत्वं च जातमित्युक्तं भवति ।।१४।।

**वादिराजीया–** इदानीं ब्रह्मणो वरं हिरण्यकशिपोः शापश्च घटयितुमाह– **दुर्गेति** ।। तथाच अस्य श्लोकस्य एवं योजना । तदा हिरण्यकशिपुशापदशायां भगवत्प्रचोदिता दुर्गा तान् असुरदेहेषु स्थितकालनेमिपुत्रान् प्रस्वापयित्वा क्रमेण वत्सरपर्यन्तं प्रस्वापयित्वा कायात् जीवमानादेव तदीयदेहात् प्रचकर्ष जीवमात्रं प्रचकर्ष । क्रमात् तान् देवकीगर्भाशये आशु समावेशयत् । कंसस्तान्यहनच्चेति चशब्देन तदैव दुर्गा पुनश्च सुप्तदेहेषु प्रावेशयदिति समुच्चिनोति । 'प्रस्वापयित्वा प्रचकर्ष कायात्' इति वचनात् दुर्गा एकैकपुत्रं देवकीगर्भे संवत्सरमात्रं स्थापयित्वा ततः एकैकशिशोः कंसेन हनने कृते सति पुनः क्रमेण तान् स्वस्वपूर्वदेहेषु प्रवेशयति । एवञ्च ब्रह्मणा येषु देहेष्ववध्यत्ववरो दत्तः तेषां देहानां वधाभावात् ब्रह्मवरोऽपि सार्थकः । देहान्तरेण भूमौ जातानां कंसाख्यस्वपितृभूतकालनेमिकरेणैव वधाद्धिरण्यकशिपोः शापोऽपि सार्थकः । इदमुभयमपि अघटितघटकशक्तिमती विष्णोर्माया दुर्गैव घटयामासेति भावः । अत एव देवक्या द्वार्वत्यां षट्कुमारा द्रष्टव्या इति प्रार्थिते सति कृष्णेन वलिलोके ब्रह्मदत्तवरेणावध्यपूर्वदेहे स्थितांस्तान् बलिसदनात्तेषां पूर्वदेहान्नाशयित्वा शिशुरूपेणानीय मात्रे दर्शयित्वा ब्रह्मवरं देवलशापश्च दुर्बलत्वात्स्वशक्त्या उल्लङ्घ्य तेषां दिव्या गतिर्दत्ता इति भागवती कथाप्युपन्नैव

---

१. 'जगामाथ ततो विष्णुः पातालं यत्र तेऽसुराः । षड्गर्भाः संयताः सन्ति जले गर्भगृहेशयाः ।। स ददर्श जले सुप्तान् षड्गर्भान् गर्भसंस्थितान् । निद्रया कालरूपिण्या सर्वानन्तर्हितान् स वै ।। स्वप्नरूपेण तेषां वै विष्णुर्देहानथाविशत् । प्राणेश्वरांश्च निष्कृष्य निद्रायै प्रददौ तदा ।।' इत्यादि हरिवंशे २.२.२४-२६ । 'वसुदेवाच्च देवक्यामादौ जातः सुसेनकः । कीर्तिमान्भद्रसेनश्च जारुख्यो विष्णुदासकः । भद्रदेहः कंस एतान् षड्गर्भान्निजघान ह ।' इति अग्निपुराणे.२७५.४९-५०

जाता । 'पीतशेषं गदाभृतः' इति [१०.७४.५५] भागवतोक्त्या कृष्णेन चतुर्भुजरूपप्रदर्शनानन्तरं शिशुरूपं धृत्वा तदैव देवकीस्तनञ्च पीत्वा पुनर्गोकुलं प्रति जगामेति प्रमेयं च सूचितम् ।

'तान्यहनच्च कंस' इत्यत्र करस्थवराहाणां एकैकमारभ्य सङ्ख्यायां सर्वेऽपि यथा दशमा भवन्ति । एवं क्रममविवक्षयित्वा स्वरूपमात्रगणनायां सर्वेऽप्यष्टमा भवन्तीति सर्वत्राप्यष्टमत्वशङ्कया कंसस्तान् न्यहनदिति शङ्कासमुच्चयार्थश्चशब्दः । अत एवोक्तं भागवते-[१०.२.१३]'जातं जातं तयोः पुत्रं अहन्नजनिशङ्कया' इति । स्ववधं प्रति देवक्या गर्भसम्भूतं विष्ण्वंशं नारदवाक्येन विष्णोरन्यो मां हन्तुं न समर्थ इति युक्त्या जानन् कंसः तयोर्देवकीवसुदेवयोः जातं जातं पुत्रं अजनिशङ्कया जननरहितपरमात्मैव जात इति शङ्कया अहन्नित्यर्थः । अन्यथा 'अस्यास्त्वामष्टमो गर्भो हन्ता यां नयसेऽबुध'[१०.१.३४] इति सामान्योक्ते विष्ण्वंशत्वज्ञानासम्भवादिदमेव हृदयं व्यासस्येति भावः । 'बुद्धिः कर्मानुसारिणी' इत्युक्तेः हिरण्यकशिपुशापजनितदुरदृष्टञ्च ईदृशबुद्धिजनकमिति ज्ञेयम् ।।१४।।

**मधुसूदनीया–** ।। **दुर्गा तदा तानिति** ।। तथाचोक्तम्–
'योगनिद्रा महामाया वैष्णवी मोहितं यया । अविद्यया जगत्सर्वं तामाह भगवान् हरिः ।।
निद्रे गच्छ महादैत्यान् पातालतलसंश्रयान् । एकैकत्वेन षड्गर्भान् देवकीजठरं नय ।।
विष्णुप्रयुक्ता तान्निद्रा क्रमाद्गर्भानयोजयत् ।।' इति विष्णुपुराणे [५.१.७१-७२]।।१४-१७।।

**वरदराजीया–** विधातृहिरण्ययोर्वरशापौ घटयन्नाह– **दुर्गेति** ।। भगवता प्रचोदिता दुर्गा तान् कालनेमिप्रसूतान् प्रस्वापयित्वा निद्रां प्रापय्य कायात् तच्छरीरात् प्रचकर्ष जीवं निष्कासितवती । आशु देवक्या गर्भाशये जरायौ क्रमात् आदावेकं ततो द्वितीयमित्यादिक्रमेण समावेशयत् प्रवेशयामास । तांश्च तेनैव क्रमेण कंसो न्यहनत् हतवांश्चेत्यर्थः । हताश्च ते पुनः कालनेमिप्रसूतदेहान् प्रापुरिति द्रष्टव्यम् । अनेन तद्देहनाशाभावात् ब्रह्मणोऽवध्यत्ववरो, देहान्तरेण कालनेमिरूपेण कंसेन हतत्वात् हिरण्यकशिपुशापश्चेति द्वयं सम्पादितमित्युक्तं भवति ।।१४।।

**अनन्तभट्टीया–** क्रमात् कंसेन हताः । कालनेमिप्रसूतदेहान् । अतो अवध्यतावचस्सत्यः । हिरण्यकस्य वरशापप्रदाने सामर्थ्यं ब्रह्मणा दत्तमिति । तच्छापतो लग्नः । गर्भाशये जरायौ ।।१४।।

**जनार्दनीया–** वरशापयोरव्यर्थत्वं घटयन्नाह– **दुर्गेति** ।। तदा भगवता हरिणा, प्रचोदिता प्रेरिता दुर्गा तान् कालनेमिपुत्रान् प्रस्वापयित्वा निद्रितान् कृत्वा, कायात् कालनेमिप्रसूतदेहात् क्रमाज्ज्येष्ठादिक्रमात् प्रथमवत्सरे एकं, द्वितीयवत्सरे द्वितीयं, तृतीयवत्सरे तृतीयमित्यादिक्रमाद्वा षड्जीवान् चकर्ष । देवक्याः गर्भाशये जरायौ । 'गर्भशयो जरायुः स्यात्' इत्यभिधानम् । यद्वा देवक्याः गर्भे उदरे, आशये स्थानविशेषे । 'कुक्षिभ्रूणाभ्रकागर्भाः स्थानाभिप्राय आशयः' इत्यमरः । जननायेति यावत् । समावेशयत्

प्रवेशयामास । कंसः तान् देवकीगर्भजातान् आशु जन्ममात्रादेव न्यहनत् । कंसहताः ते कालनेमिजात-देहानविशन्निति द्रष्टव्यम् । कालनेमिप्रसूतदेहानां चेतनवियोगादपि निर्विकारत्वात्, देवकीगर्भोत्पत्त्यनन्तरकाले चेतनसंयोगाच्च ब्रह्मणोऽवध्यत्ववरः । तथा कालनेमिप्रसूतानां देवकीगर्भजननात्, तत्र देहान्तरप्राप्त-कालनेम्यात्मककंसेन हतत्वाच्च ब्रह्मणः प्राप्तसामर्थ्यवतः हिरण्यकशिपोः शापश्चेत्युभयमपि सम्पादितमित्युक्तं भवति ॥१४॥

**भावविवृतिः–** ॥१-१३॥ दुर्गा तदा तान् भगवत्प्रचोदिता... तान्यहनच्च कंसः इत्यत्र भगवत्प्रचोदिता दुर्गा । तानिति द्वितीया षष्ठ्यर्थे । 'षट्सु द्वितीया यस्माच्च' इति छान्दोग्यभाष्योक्तेः । तेषां मध्ये एकैकं प्रस्वापयित्वा स्वप्नावस्थां प्रापयित्वा । 'स्वापो द्विविधः स्वप्नसुषुप्तिभेदात्' इति षट्प्रश्नटीकोक्तेः । कायात् स्थूलदेहात् प्रचकर्ष । वासनादेहं प्रापयत् तद्देहविशिष्टान् देवकीगर्भाशये गर्भान्तः प्रवेशे समावेश्य पुनः कंसहननानन्तरं पूर्वशरीरं प्रापयित्वा पुनरुत्थापयत् । एवं द्वितीयसंवत्सरे द्वितीयमिति वक्तुं क्रमादिति । तावत्पर्यन्तं यथा जाग्रदाद्यभावः तस्य तथा कृत्वेति वक्तुं प्रेत्युपसर्गः । अत्रायं विवेकः । जीवो हृद्येवावतिष्ठते । 'हृदि ह्येष आत्मा' इति श्रुतेः । ते द्विविधाः सांशाः निरंशाश्चेति । विरिञ्चाद्याजानजान्ताः सांशाः । अन्ये निरंशाः । तदुक्तं प्रथमतात्पर्ये– 'न देवानां न देवीनां सामस्त्येन जनिर्भुवि । अशांशेनैव जायन्ते सर्वे त्वाजानजादयः ॥ अस्यार्थस्तु यदुपतीये स्पष्टः । सांशजीवानां अंशिनां सूक्ष्मपरिमाणवत्वेन हृद्यवस्थानेऽपि अंशतः सर्वशरीरव्याप्तिः । तदुक्तं सूत्रकृता अविरोधश्चन्दवत् इति[२.३.२४] । उक्तञ्च भाष्ये– 'अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति । यथा व्याप्य शरीराणि हरिचन्दनविप्रुषः ॥ इति । तत्वप्रकाशिकायाञ्च 'नाणुत्वेऽपि जीवस्य तत्र तत्र परिज्ञानायोगः । अंशैः सर्वशरीरे व्याप्तत्वात् एकदेशपतितचन्दनविन्दोः अंशैः सर्वशरीरे व्याप्तिवदेवेति भावः' इति । अत्रापि च विशेषो बोद्धव्यः । हृद्यवस्थितानां अंशिनामेव शिरःपाण्यादिमत्वम्, देहे व्याप्तानामंशानां तु शिरःपाण्यादिमत्वं नास्ति इति । किञ्च देहे व्याप्तानां जीवानां इतरत्र सन्निधानापेक्षया जाग्रदाद्यवस्थायां अक्ष्यादिषु विशेषतः सन्निधानमिति । तदेदुक्तं ऐतरेयभाष्ये– 'न हि जीवस्याक्षिणि पृथक् शिरोबाह्वादिकं विद्यते । हृद्यवस्थितमेव तस्य रूपं जागरितेऽपि अक्ष्यादिषु विशेषतः सन्निहितं भवति प्रकाशवत्' इति । विश्वेशतीर्थीये च– जीवोऽक्षिस्थो न चेत् कुत्र तिष्ठति इत्यत आह– हृदीति ॥ जागरेति ॥ जाग्रदवस्थायां अक्ष्यादिषु विशेषतः सन्निहितः । जीवस्य हृद्यवस्थानं चक्षुषि सन्निधानमात्रं सूत्रेणोपपादयतीति । अनेन– 'हृदयस्थात् पराज्जीवो दूरस्थो जाग्रदेष्यति । समीपस्थस्तथा स्वप्नं स्वपित्यस्मिन् लयं व्रजन् ॥' इति भाष्योक्तेः[३.२.१०]। 'दूरस्थोऽक्षिस्थः समीपस्थः कण्ठस्थ' इति तत्वप्रकाशिकायाम् । 'जीवश्च चारयेत्तत्र यदा विष्णुस्सनातनः । स्वप्नं पश्यति जीवोऽयं सदा विज्ञानरूपिणम् ॥ सुषुम्नासंस्थितं एति तत्सुप्तिमेष्यति ।' इति 'सर्वदा जीवमादाय नियमाद्विष्णुरेव

हि । जाग्रदादिषु संयाति नान्यथा तु कथञ्चन ।। एवं नियमविज्ञप्त्यै जीवास्वातन्त्र्यवित्तये । परिवृत्तिमवस्थासु साभ्यासा वक्ति हि श्रुतिः ।।' [बृ.भा.६.३] इति चोक्तेः । चक्षुरादौ गमनादियुक्तस्यैव जीवस्य जाग्रदादिज्ञानं भवतीति वक्तव्यत्वेऽपि जाग्रदादौ जीवांशविशेषाणामेव चक्षुरादौ गमनागमनं अंशिनो जीवस्य हृद्येवावस्थानं इत्यवश्यमङ्गीकर्तव्यम्। अन्यथा उदाहृतैतरेयभाष्यविरोधः स्यात् । एवं सति भगवत्प्रचोदिता दुर्गा हृदिस्थं सूक्ष्ममंशिनं कालनेमिजातदेहे स्वापयित्वा तस्य योंऽशविशेषः जाग्रदाद्यवस्थायां अक्ष्यादिषु प्रचरति तमंशं वासनामयदेहे प्रस्थाप्य तद्देहविशिष्टं तमंशं देवकीगर्भे प्रावेशयदिति भावः । ननु वासनामयपदार्थस्य अन्तरेवावस्थानात् कथं वहिर्गमनमपि सम्भवतीति । तदुक्तं वृहद्भाष्ये षष्ठाध्याये– 'अंशेन जीवमादाय क्वचिदीशो वहिर्नयेत् । स्वप्नेषु फल्गुनं यद्वत् कृष्णः कैलासमानयत् ।। वासनामात्रकान् प्रायस्त्वन्तरेव प्रदर्शयेत् । अतो बहिः कुलायादित्यपि वाङ् न विरुध्यते ।।' इति ।।१४-८६।।

**ताम्रपर्णीया–** ब्रह्मवरहिरण्यकशापयोरमोघत्वं वक्तुमाह– **दुर्गेति** ।। जाग्रत्येव प्रचकर्षे मरणज्ञानेन देहदाहप्रसक्त्या ब्रह्मवरमोघता स्यात् । अतः प्रस्वापयित्वेत्युक्तम् । तथा च हिरण्यकशिपुशापात् भुवि जातानां कंसेन हतानां पुनः प्रसुप्तवत् स्थिते दुर्गासामर्थ्येनाक्षीणे कालनेमिप्रसूतदेहे प्रवेशोपपत्तेः । ब्रह्मवरामोघत्वं हिरण्यशापामोघत्वं चेति भावः । असुराणां दीर्घकालनिद्रास्वभावत्वात् तदीयानां निद्रिता एते इति प्रतीत्युपपत्तेः । यद्वा दुर्गा कायादंशेन प्रचकर्ष तेन वरशापोभयोपपत्तिः । हिरण्योक्तस्य क्ष्मातले सम्भवमात्रस्यांशेनोपपत्तेः । 'मृत्वा सम्भवध्वं' इत्यनुक्तत्वात् । न चैषामंशविभागयोग्यत्वे प्रमणाभाव इति वाच्यम् । अंशविभागस्य दुर्गासामर्थ्येन युक्तत्वात् ।।१४-१६।।

**अतिविशद–** देवकीगर्भाशये तान्यहनच्च कंस इत्यत्र गर्भाशये जरायौ । 'गर्भाशयो जरायुः स्यात्' इत्यभिधानात् ।।१४।।

**भावचन्द्रिका–** प्रचकर्ष अंशेन ।।१४।।

**चट्टि–** विधातृहिरण्ययोः वरशापौ घटयन्नाह– **दुर्गेति** ।। तदा भगवता हरिणा प्रचोदिता प्रेरिता दुर्गा तान् कालनेमिसुतान् प्रस्वापयित्वा निद्रितान् कृत्वा कायात् कालनेमिप्रसूतदेहात् क्रमात् ज्येष्ठादिक्रमात् प्रथमवत्सरे एकं द्वितीयवत्सरे द्वितीयं इत्यादिक्रमेण वा षड्जीवान् प्रचकर्ष । देवक्याः गर्भलक्षणाशये स्थानविशेषे जरायौ इति यावत् । समावेशयत् प्रवेशयामास । कंसस्तान् देवकीगर्भजातान् आशु जन्ममात्रादेव न्यहनत् । कंसहतास्ते कालनेमिजातदेहान् प्राविशन्निति द्रष्टव्यम् । कालनेमिप्रसूतदेहानां चेतनवियोगादपि निर्विकारत्वात् देवकीगर्भोत्पत्त्युत्तरकाले चेतनसंयोगाच्च ब्रह्मणो अवध्यत्ववरः, तथा कालनेमिप्रसूतानां देवकीगर्भजननात् तत्र देहान्तरप्राप्तकालनेम्यात्मककंसहतत्वाच्च वरशापदाने ब्रह्मणः

सकाशात् प्राप्तसामर्थ्यवतो हिरण्यकशिपोः शापश्चेत्युभयमपि सम्पादितमित्युक्तं भवति । तथा चोक्तम्– योगनिद्रा महामाया वैष्णवी मोहितं यया । अविद्यया जगत्सर्वं तामाह भगवन् हरिः ।। निद्रे ततो गच्छ महादैत्यान् पातालतलसंश्रयान् । एकैकत्वेन षड्गर्भान् देवकीजठरं नय ।। विष्णुप्रयुक्ता तान् निद्रा क्रमाद् गर्भान् अयोजयत् ।। इति विष्णुपुराणे ।।१४।।

**तदा मुनीन्द्रसंयुतः सदो विधातुरुत्तमम् ।**
**स पाण्डुराप्तुमैच्छत न्यवारयंश्च ते तदा ।।१५।।**

**व्यासतीर्थीया–** सप्रसक्तिं पाण्डवाद्युत्पत्तिमाह– **तदेत्यादिना** ।।१५।।

**वेदाङ्गतीर्थीया–** अथ पाण्डवोत्पत्तिं वक्तुं उपोद्घातमाह– **तदेति** ।।१५।।

**वादिराजीया–** अथ कृष्णावतारात् पूर्वं धर्मराजस्योत्पन्नत्वात् कृष्णकथां मध्ये स्थापयित्वा तदुत्पत्तिमादौ वक्तुं पाण्डोः कथां प्रक्रमते– **तदेति** ।। तदा देवकीषष्ठगर्भपातावसानसमये मुनीन्द्रैः सह पाण्डोः ब्रह्मलोकगमनोद्योगाभावात् मुनीन्द्रसंयुत इत्यस्य 'यू मिश्रणामिश्रणयोः' इति धातोः मुनीन्द्रैः सह तत्सभायां मिश्रित इत्यर्थः । यद्वा मुनीन्द्रैरमिश्रित एव तान्विहायेति यावत् ।।१५।।

**वरदराजीया–** इदानीं पाण्डवानामुत्पत्तिं वक्तुं उपोद्घातमाह– **तदेत्यादिना** ।। तदा तस्मिन्काले मुनीन्द्रैः संयुतः स पाण्डुः विधातुः ब्रह्मणः उत्तमं सर्वोत्कृष्टं सदः सभां आप्तुं तद्देहत्यागानन्तरमिति शेषः । ऐच्छत् विचारयामास । तदा ते मुनीन्द्राः न्यवारयन् न गन्तव्यमिति वारितवन्तः ।।१५।।

**अनन्तभट्टीया–** आप्तुं देहत्यागेन आप्तुम् ।।१५।।

**जनार्दनीया–** अथ पाण्डवोत्पत्तिं वक्तुं तत्सङ्गतिमाह– **तदिति** ।। तदा तस्मिन् काले मुनीन्द्रैः संयुतः सहितः सन् तपश्चरन् स पाण्डुः योगेन मानुषं देहं त्यक्त्वा विधातुः सदः सभां सेवार्थं आप्तुम्, यदा ऐच्छत् इति बहुपदाध्याहारेण योज्यम् । ते मुनयः तदा न्यवारयन् । पाण्डुमिति शेषः ।।१५।।

**भारतश्री–** ।। **तदा मुनीन्द्रसंयुत इति** ।। आचार्यैः भारतकथाहरिवंशकथा च सङ्कलय्योच्यते । अन्योन्यसम्बन्धत्वात् । 'शशाङ्कपुत्रात्' इत्यारभ्य 'सदावगाहातिपवित्रिताङ्गः' इत्यन्तं भारतकथोदिता । 'एतस्मिन्नेव काले' इत्यारभ्य 'तान् न्यहनच्च कंसः' इत्यन्तं हरिवंशकथा । पुनः भारतकथानुसन्धानपूर्वकं आह– **तदा मुनीन्द्रसंयुत इत्यादिना** ।। तत्सङ्गपूतद्युसरिद्वराम्भः सदावगाहातिपवित्रिताङ्गः शतशृङ्गपर्वते न्यवसत् । तदा मुनीन्द्रसंयुत इत्यन्वयः । अपुत्रत्वात् तव अधिकारो नास्ति इति न्यवारयन्निति भारताद्युक्तेरभिप्रायमाह– **यदर्थमित्यादिना** ।।१६।।

हि । जाग्रदादिषु संयाति नान्यथा तु कथञ्चन ।। एवं नियमविज्ञप्त्यै जीवास्वातन्त्र्यवित्तये । परिवृत्तिमवस्थासु साभ्यासा वक्ति हि श्रुतिः ।।' [बृ.भा.६.३] इति चोक्तेः । चक्षुरादौ गमनादियुक्तस्यैव जीवस्य जाग्रदादिज्ञानं भवतीति वक्तव्यत्वेऽपि जाग्रदादौ जीवांशविशेषाणामेव चक्षुरादौ गमनागमनं अंशिनो जीवस्य हृद्येवावस्थानं इत्यवश्यमङ्गीकर्तव्यम्। अन्यथा उदाहृतैतरेयभाष्यविरोधः स्यात् । एवं सति भगवत्प्रचोदिता दुर्गा हृदिस्थं सूक्ष्ममंशिनं कालनेमिजातदेहे स्वापयित्वा तस्य योंऽशविशेषः जाग्रदाद्यवस्थायां अक्ष्यादिषु प्रचरति तमंशं वासनामयदेहे प्रस्थाप्य तद्देहविशिष्टं तमंशं देवकीगर्भे प्रावेशयदिति भावः । ननु वासनामयपदार्थस्य अन्तरेवावस्थानात् कथं बहिर्गमनमपि सम्भवतीति । तदुक्तं बृहद्भाष्ये षष्ठाध्याये– 'अंशेन जीवमादाय क्वचिदीशो बहिर्नयेत् । स्वप्नेषु फल्गुनं यद्वत् कृष्णः कैलासमानयत् ।। वासनामात्रकान् प्रायस्त्वन्तरेव प्रदर्शयेत् । अतो बहिः कुलायादित्यपि वाङ् न विरुध्यते ।।' इति ।।१४-८६।।

**ताम्रपर्णीया**– ब्रह्मवरहिरण्यकशापयोरमोघत्वं वक्तुमाह– **दुर्गेति** ।। जाग्रत्येव प्रचकर्षे मरणज्ञानेन देहदाहप्रसक्त्या ब्रह्मवरमोघता स्यात् । अतः प्रस्वापयित्वेत्युक्तम् । तथा च हिरण्यकशिपुशापात् भुवि जातानां कंसेन हतानां पुनः प्रसुप्तवत् स्थिते दुर्गासामर्थ्येनाक्षीणे कालनेमिप्रसूतदेहे प्रवेशोपपत्तेः । ब्रह्मवरामोघत्वं हिरण्यशापामोघत्वं चेति भावः । असुराणां दीर्घकालनिद्रास्वभावत्वात् तदीयानां निद्रिता एते इति प्रतीत्युपपत्तेः । यद्वा दुर्गा कायादंशेन प्रचकर्ष तेन वरशापोभयोपपत्तिः । हिरण्योक्तस्य क्ष्मातले सम्भवमात्रस्यांशेनोपपत्तेः । 'मृत्वा सम्भवध्वं' इत्यनुक्तत्वात् । न चैषामंशविभागयोग्यत्वे प्रमणाभाव इति वाच्यम् । अंशविभागस्य दुर्गासामर्थ्येन युक्तत्वात् ।।१४-१६।।

**अतिविशद**– देवकीगर्भाशये तान्यहनच्च कंस इत्यत्र गर्भाशये जरायौ । 'गर्भाशयो जरायुः स्यात्' इत्यभिधानात् ।।१४।।

**भावचन्द्रिका**– प्रचकर्ष अंशेन ।।१४।।

**चट्टि**– विधातृहिरण्ययोः वरशापौ घटयन्नाह– **दुर्गेति** ।। तदा भगवता हरिणा प्रचोदिता प्रेरिता दुर्गा तान् कालनेमिसुतान् प्रस्वापयित्वा निद्रितान् कृत्वा कायात् कालनेमिप्रसूतदेहात् क्रमात् ज्येष्ठादिक्रमात् प्रथमवत्सरे एकं द्वितीयवत्सरे द्वितीयं इत्यादिक्रमेण वा षड्जीवान् प्रचकर्ष । देवक्याः गर्भलक्षणाशये स्थानविशेषे जरायौ इति यावत् । समावेशयत् प्रवेशयामास । कंसस्तान् देवकीगर्भजातान् आशु जन्ममात्रादेव न्यहनत् । कंसहतास्ते कालनेमिजातदेहान् प्राविशन्निति द्रष्टव्यम् । कालनेमिप्रसूतदेहानां चेतनवियोगादपि निर्विकारत्वात् देवकीगर्भोत्पत्त्युत्तरकाले चेतनसंयोगाच्च ब्रह्मणो अवध्यत्ववरः, तथा कालनेमिप्रसूतानां देवकीगर्भजननात् तत्र देहान्तरप्राप्तकालनेम्यात्मककंसहतत्वाच्च वरशापदाने ब्रह्मणः

सकाशात् प्राप्तसामर्थ्यवतो हिरण्यकशिपोः शापश्चेत्युभयमपि सम्पादितमित्युक्तं भवति । तथा चोक्तम्– योगनिद्रा महामाया वैष्णवी मोहितं यया । अविद्यया जगत्सर्वं तामाह भगवन् हरिः ।। निद्रे ततो गच्छ महादैत्यान् पातालतलसंश्रयान् । एकैकत्वेन षड्गर्भान् देवकीजठरं नय ।। विष्णुप्रयुक्ता तान् निद्रा क्रमाद् गर्भान् अयोजयत् ।। इति विष्णुपुराणे ।।१४।।

**तदा मुनीन्द्रसंयुतः सदो विधातुरुत्तमम् ।**
**स पाण्डुराप्तुमैच्छत न्यवारयंश्च ते तदा ।।१५।।**

**व्यासतीर्थीया–** सप्रसक्तिं पाण्डवाद्युत्पत्तिमाह– **तदेत्यादिना** ।।१५।।

**वेदाङ्गतीर्थीया–** अथ पाण्डवोत्पत्तिं वक्तुं उपोद्घातमाह– **तदेति** ।।१५।।

**वादिराजीया–** अथ कृष्णावतारात् पूर्वं धर्मराजस्योत्पन्नत्वात् कृष्णकथां मध्ये स्थापयित्वा तदुत्पत्तिमादौ वक्तुं पाण्डोः कथां प्रक्रमते– **तदेति** ।। तदा देवकीषष्ठगर्भपातावसानसमये मुनीन्द्रैः सह पाण्डोः ब्रह्मलोकगमनोद्योगाभावात् मुनीन्द्रसंयुत इत्यस्य 'यू मिश्रणामिश्रणयोः' इति धातोः मुनीन्द्रैः सह तत्सभायां मिश्रित इत्यर्थः । यद्वा मुनीन्द्रैरमिश्रित एव तान्विहायेति यावत् ।।१५।।

**वरदराजीया–** इदानीं पाण्डवानामुत्पत्तिं वक्तुं उपोद्घातमाह– **तदेत्यादिना** ।। तदा तस्मिन्काले मुनीन्द्रैः संयुतः स पाण्डुः विधातुः ब्रह्मणः उत्तमं सर्वोत्कृष्टं सदः सभां आप्तुं तद्देहत्यागानन्तरमिति शेषः । ऐच्छत् विचारयामास । तदा ते मुनीन्द्राः न्यवारयन् न गन्तव्यमिति वारितवन्तः ।।१५।।

**अनन्तभट्टीया–** आप्तुं देहत्यागेन आप्तुम् ।।१५।।

**जनार्दनीया–** अथ पाण्डवोत्पत्तिं वक्तुं तत्सङ्गतिमाह– **तदिति** ।। तदा तस्मिन् काले मुनीन्द्रैः संयुतः सहितः सन् तपश्चरन् स पाण्डुः योगेन मानुषं देहं त्यक्त्वा विधातुः सदः सभां सेवार्थं आप्तुम्, यदा ऐच्छत् इति बहुपदाध्याहारेण योज्यम् । ते मुनयः तदा न्यवारयन् । पाण्डुमिति शेषः ।।१५।।

**भारतश्री–** ।। **तदा मुनीन्द्रसंयुत इति** ।। आचार्यैः भारतकथाहरिवंशकथा च सङ्कलय्योच्यते । अन्योन्यसम्बन्धत्वात् । 'शशाङ्कपुत्रात्' इत्यारभ्य 'सदावगाहातिपवित्रिताङ्गः' इत्यन्तं भारतकथोदिता । 'एतस्मिन्नेव काले' इत्यारभ्य 'तान् न्यहनच्च कंसः' इत्यन्तं हरिवंशकथा । पुनः भारतकथानुसन्धानपूर्वकं आह– **तदा मुनीन्द्रसंयुत इत्यादिना** ।। तत्सङ्गपूतद्युसरिद्वराम्भः सदावगाहातिपवित्रिताङ्गः शतशृङ्गपर्वते न्यवसत् । तदा मुनीन्द्रसंयुत इत्यन्वयः । अपुत्रत्वात् तव अधिकारो नास्ति इति न्यवारयन्निति भारताद्युक्तेरभिप्रायमाह– **यदर्थमित्यादिना** ।।१६।।

**भावचन्द्रिका**– ।। **तदा मुनीन्द्रेति** ।। अत्रैवं भारतकथा । पाण्डुना सह स्थिता ऋषयः अमावास्यायां मेरुस्थब्रह्माणं द्रष्टुं सम्प्रतस्थुः । तान् दृष्ट्वा तैः सभार्यः प्रतस्थे । ततो गिरिशृङ्गादौ गन्तुं असमर्थे पाण्डुभार्ये बभूवतुः । ते दृष्ट्वा ऋषय ऊचुः । ते विहाय गच्छेति । स उवाच । अप्रजस्य मे लोका न सन्ति तथाप्युग्रेण तपसा सभार्यो लोकं विन्देयं इति । एवं दुःखितं पाण्डुं ऋषयो दिव्यदर्शनेन प्रजाधिकारं प्रजावन्तं च विज्ञाय प्रजोत्पत्तये सभार्यस्त्वमत्रैव तिष्ठेति गमनं निवारयामासुः इति सभापर्वणि एकोनषष्ठितमेऽध्याये । [आदि.१२५.५-१८];

अमावास्यां तु सहिता ऋषयः संशितव्रताः । ब्रह्माणं द्रष्टुकामास्ते सम्प्रतस्थुर्महर्षयः ।।

तत्रैव–

उत्थाय सहसा पाण्डुं गन्तुकामं महर्षिभिः । समागतं तितीर्षन्तं शतशृङ्गादुदङ्मुखम् ।।
सम्प्रस्थितं स्वभार्याभ्यां अब्रुवन् ते च तापसाः । उपर्युपरि गच्छन्तो शैलराजमुखं प्रति ।।
प्रपश्यामो गिरौ तस्मिन् दुर्गान् देशान् बहून् वयम् । यक्षराक्षसगुप्तानि गन्धर्वचरितानि च ।।
आक्रीडितान्यप्सरोभिः सह देवगणैस्तथा । सदनानि कुबेरस्य हृद्यानि च मृदूनि च ।।
देशान् नदीनितम्बाश्च घोराश्च गिरिगह्वराः । सन्ति नित्यं हिमाक्रान्ताः निवृत्तमृगपक्षिणः ।।
सन्ति केचित्सदावर्षाः घोररूपा दुरासदाः । पक्षिणोऽत्र न गच्छन्ति कथमेवापरे मृगाः ।।
वायुरेवात्र संयाति सिद्धयक्षाश्च चारणाः । गच्छन्ति शैलराजेऽस्मिन् राजपुत्र्यौ कथं त्विति ।।
न सीदेतां दुःखार्ते दुर्मार्गे भरतर्षभम् ।

पाण्डुः–

अप्रजस्य कुतः स्वर्गद्वारं सम्प्रति चक्षते । येन सन्तानतप्तोऽहं अप्रजश्च ब्रवीमि वः ।।
सोऽहमुग्रेण तपसा सभार्यस्त्यक्तजीवितः । अनपत्योऽपि विन्देयं स्वर्गमुग्रेण कर्मणा ।।

तापसाः–

अस्ति वै तव धर्मात्मन् दिवि देवोपमं शुभम् । अपत्यमनुसन्दिष्टं पश्यामो दिव्यचक्षुषा ।। इति

**चट्टि**– अथ पाण्डवानामुत्पत्तिं वक्तुं तदुपोद्धातमाह– **तदेत्यादिना** ।। तदा तस्मिन् काले बदर्यां मुनीन्द्रैः सहितः सः तपश्चरन् पाण्डुः योगेन मानुषं देहं त्यक्त्वा विधातुरुत्तमं सदः सभां सेवार्थं आप्तुम्, यदा ऐच्छत् इति बहुपदाध्याहारेण योज्यम् । ते मुनयः तदा न्यवारयन् । पाण्डुमिति शेषः ।।१५।।

**यदर्थमेष जायते पुमान् हि तस्य सोऽकृतेः ।**
**शुभां गतिं न तु व्रजेद् ध्रुवं ततो न्यवारयत् ।।१६।।**

**व्यासतीर्थीया–** निवारणे निमित्तमाह– **यदर्थमिति** ।।१६।।

**वेदाङ्गतीर्थीया–** निवारणे निमित्तमाह– **यदर्थमिति** ।।१६-१८।।

**वादिराजीया–** तस्या सोऽकृतेरित्यत्र सः तस्य कार्यस्य अकृतेः अकारणादित्यर्थः ।।१६-१७।।

**वरदराजीया–** किमिति न्यवारयन् इत्यतस्तेषामभिप्रायमाह– **यदर्थमिति** ।। एषः पुमान् जीवो यदर्थं यत्कार्यकारणार्थं जायते पृथिव्यां स पुमान् तस्य कार्यस्य अकृतेः अकारणान्निमित्तात् शुभां उत्तमां गतिं न व्रजेदित्येतत् ध्रुवं निश्चितं हि यस्मात् ततः कारणात् न्यवारयन् मुनीन्द्राः ।।१६।।

**अनन्तभट्टीया–** अकृतेः अकरणात् ।।१६।।

**जनार्दनीया–** कुतो न्यवारयन्? इत्यत आह– **यदर्थमिति** ।। एषः यः कश्चन पुमान् यदर्थं जायते यत्प्रयोजनार्थं जायते । स पुरुषः तस्य प्रयोजनस्य अकृतेः अकरणात् शुभां गतिं ध्रुवं न तु व्रजेत् न प्राप्नुयात् । हि यस्मात् ततः न्यवारयन्नित्यर्थः ।।१६।।

**चट्टि–** कुतो न्यवारयन्नित्यतः तेषामभिप्रायमाह– **यदर्थमिति** ।। एषः यः कश्चन पुमान् यदर्थं यत्प्रयोजनार्थं जायते । स पुमान् तस्य प्रयोजनस्य अकृतेः अकरणात् शुभां उत्तमां गतिं ध्रुवं न तु व्रजेत् न प्राप्नुयात् । हि यस्मात् कारणात् ततो न्यवारयन्नित्यर्थः ।।१६।।

**[1]प्रधानदेवताजनौ[2] नियोक्तुमात्मनः प्रियाम् ।**
**बभूव पाण्डुरेष तद् विना न तस्य सद्गतिः ।।१७।।**

**व्यासतीर्थीया–** ननु यदर्थमित्युक्तः सामान्यन्यायः । पाण्डोः कर्तव्यः कः । यदकरणे सद्गत्यभाव इति जिज्ञासायामाह– **प्रधानेति** ।। जने चेतने ।।१७।।

**वरदराजीया–** ननु किं कार्यं कर्तुं एषः पाण्डुरुत्पन्नो यस्मात् कारणान्न्यवारयन्नित्यत आह– **प्रधानेति** ।। प्रधानानां मुख्यानां देवतानां देवानां जनौ उत्पत्तौ विषये आत्मनः स्वस्य प्रियां कुन्तीं नियोक्तुं आज्ञापयितुं एषः पाण्डुर्बभूव जातः । तस्मात्तद्विना प्रियानियोजनेन प्रधानदेवताजननाख्यकार्यं विना तस्य पाण्डोः सद्गतिः विधातृसभाप्राप्तिरूपा नास्ति तस्मात् न्यवारयन्निति सम्बन्धः ।।१७।।

---

१. 'प्रधानदेवताजने' इति व्यासतीर्थीयताम्रपर्ण्योः पाठः । 'प्रधानदेवताजनेः' इति ताम्रपर्णीये पाठान्तरम् ।

२. 'स्वर्गलोकं गन्तुकामं तापसा सन्निवार्य तम् ।। उद्यन्तं सह पत्नीभ्यां विप्रा वचनमब्रुवन् । अनपत्यस्य राजेन्द्र पुण्या लोका न सन्ति ते ।। तस्माद्धर्मश्च वायुं च महेन्द्रं च तथाश्विनौ । आराधयस्व राजेन्द्र पत्नीभ्यां सह देवताः ।। प्रीताः पुत्रान् प्रदास्यन्ति ऋणमुक्तो भविष्यसि ।।' इति आदिपर्वणि.१३५.२५-२८

**जनार्दनीया–** तर्हि पाण्डुः किं प्रयोजनार्थं उत्पन्नः? इत्यत आह– **प्रधानेति** ।। एषः पाण्डुः प्रधानदेवतानां वाय्वाद्युत्तमदेवतानां, जनौ जननविषये । आत्मनः प्रियां भार्यां कुन्तीं नियोक्तुं आज्ञापयितुं बभूव अजनि । तत् कुन्त्याः प्रधानदेवताजनौ आज्ञादानरूपकार्यं विना तस्य पाण्डोः । सद्गतिर्नास्तीति न्यवारयन्निति सम्बन्धः ।।१७।।

**ताम्रपर्णीया–** प्रधानदेवताजने देवताख्यजने । यद्वा जने जननार्थम् । 'जनेः' इत्यपि पाठः ।।

**चट्टि–** तर्हि पाण्डुः किं प्रयोजनार्थं उत्पन्न इत्यत आह– **प्रधानेति** ।। एषः पाण्डुः प्रधानदेवतानां वाय्वाद्युत्तमदेवतानां जनौ जननविषये आत्मनः स्वस्य प्रियां भार्यां कुन्तीं नियोक्तुं आज्ञापयितुं बभूव अजनि । तत् कुन्त्याः प्रधानदेवताजनौ आज्ञादानरूपार्थं विना तस्य पाण्डोः सद्गतिः नास्तीति न्यवारयन्निति पूर्वेण सम्बन्धः ।।१७।।

**अतोऽन्यथा सुतानृते व्रजन्ति सद्गतिं नराः ।**
**यथैव धर्मभूषणो जगाम सन्ध्यकासुतः ।।१८।।**

**व्यासतीर्थीया–** ननु 'नापुत्रस्य लोकोऽस्ति' [ऐ.ब्रा.७पं.अ३.१खं] इति वचनादपुत्रस्य सद्गत्यभावात् न्यवारयन्निति किं न स्यादित्यतो यः पुत्रार्थं जातः तद्विषयं तद्वाक्यमित्यभिप्रेयन् प्रतीतार्थाङ्गीकारे बाधकमाह– **अतोऽन्यथेति** ।। अतोऽस्मदुक्तार्थात् अन्यथा योऽपुत्रकः शुभां गतिं न व्रजेदित्यङ्गीकारे न कोप्यपुत्रकः शुभां गतिं व्रजेत् । व्रजन्ति च सद्गतिं सुतानृते । सन्तो नरा इत्यर्थः । कोऽपुत्रकः सद्गतिमव्रजत् येन श्रुतिः सङ्कुचितार्थः स्यादित्यत आह– **यथेति** ।।१८-२२।।

**वादिराजीया–** अतोऽन्यथा इत्यत्र अतः स्वस्य साक्षात्सन्तानाभावेऽपि सन्तानार्थं भार्यां प्रति नियोगाख्यपुण्यकरणेनापि पाण्डोः सद्गतिप्राप्तितः कारणात् । सुतानृते सर्वात्मना सुतानृते । उपलक्षणं चैतत् । सुतार्थं नियोगाख्यपुण्यमप्यृते । अन्यथा प्रबलपुण्यान्तरकरणेनापि नराः सद्गतिं व्रजन्तीति योजना । यथा सन्ध्यकासुतः सन्ध्यावलीसुतः धर्मभूषणः धर्माङ्गदः साक्षात्सन्तानं पाण्डुवत्सन्तानार्थं नियोगं च विना एकादशीव्रतं त्यज वा स्वसुतशिरो वा दिशेति मोहिन्योक्तः स्वपित्रा पृष्टे सति एकादशीं सभार्यस्त्वं न त्यज अहं च न त्यजामि मम शिर एव दिशेति एकादशीव्रते परमादाराख्यपुण्य-करणात् मात्रा पित्रा च सह प्रसन्नहरिणादिष्टविमानस्थः सन् सद्गतिं वैकुण्ठगतिं जगाम । तथेति पूर्वेणान्वयः ।।१८-१९।।

**मधुसूदनीया–** ननु सन्तानेनैव सद्गतिरिति किं सर्वेषां नियतं उत एकस्यैवेत्यत आह– **अतोऽन्यथेति** ।। अतः सन्तानेनैव सद्गतिरिति नियमवत्पुरुषादन्यथा ऋते इत्यर्थः । सन्तानेनैव सद्गतिरिति नियमवत्पुरुषं

विहायेति यावत् । नरास्सन्तो मनुष्याः सद्गतिं व्रजन्ति गच्छन्तीत्यर्थः । ननु सन्तानं विनापि साधनान्तरैः केषां सद्गतिर्दृष्टेत्यत आह– **अतोऽन्यथेति** ।। यद्वा एवं योजना ऋतशब्दोऽत्रावृत्त्याऽन्वेतव्यः । अतो नियमवत्पुरुषात् ऋते सुतानृतेऽपि अन्यथा साधनान्तरैरेव नरास्सज्जनाः सद्गतिं व्रजन्ति । तत्र दृष्टान्तः– **यथेति** ।।१८-२३।।

**वरदराजीया–** अतोऽन्यथा उक्तात् प्रकारात् अन्यथा सुतान् पुत्रान् ऋतेऽपि सद्गतिं सतां गतिं व्रजन्ति । पुत्राहित्यमात्रं सद्गतिप्रतिवन्धकं न भवतीति भावः । अपुत्रस्यापि सद्गतिमुदाहरति– **यथैवेति** ।। धर्मभूषणो धर्माङ्गदः सन्ध्यकायाः सुतो जगाम सद्गतिमिति शेषः । अनेन 'नापुत्रस्य लोकोऽस्ति' इत्यादिकं 'यदर्थमेष जायत' इत्युक्तविषयम् । न पुत्ररहितमात्रविषयम् । अन्यथा धर्माङ्गदे व्यभिचारादित्युक्तं भवति ।।१८।।

**अनन्तभट्टीया–** ननु 'नापुत्रस्य लोकोऽस्ति' इति वचनात् न्यवारयन्निति किं न स्यादित्यतो यः पुत्रार्थं जातः तद्विषयं तद्वाक्यमित्यभिप्रेत्य सर्वविषययत्वाङ्गीकारे वाधकमाह– **अत इति** ।। अतः उक्तार्थादन्यथा यो अपुत्रकः स सर्वोऽपि शुभां गतिं न व्रजेदित्यङ्गीकारे न कोऽप्यपुत्रकः शुभां गतिं व्रजेत् । व्रजन्त्यपुत्रकास्सद्गतिं इत्यर्थः । को अपुत्रकः.. येन..त्यर्थसङ्कोचः स्यादित्यत आह– **यथेति** ।। धर्मभूषणो रुक्माङ्गदपुत्रः ।।१८।।

**जनार्दनीया–** ननु 'नापुत्रस्य लोकोऽस्ति' इति वचनात्, पाण्डोस्तदभावादेव न्यवारयन्निति किं न स्यादित्यत आह– **अत इति** ।। अतोऽन्यथेत्यस्यैव व्याख्यानम्– **सुतानृत इति** ।। यतः सुतान् ऋते नराः सद्गतिं व्रजन्ति । अतः कारणात् 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः, यः पुत्रजननार्थं उत्पन्नः स पुत्रोत्पत्तिं विना सद्गतिं न यातीति श्रुत्यर्थो ज्ञातव्य इति भावः । नन्वपुत्रकः को वा सद्गतिं गतः येन श्रुत्यर्थसङ्कोचः कृत इत्यत आह– **यथैवेति** ।। रुक्माङ्गदाज्जातः सन्ध्यकायाः सुतः धर्मभूषणः यथैव जगाम । सद्गतिमिति शेषः ।।१८।।

**ताम्रपर्णीया–** 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः अपुत्रस्य सद्गत्यभावादेव न्यवारयन्निति किं न स्यात् इत्यतो यः पुत्रार्थं जातः तद्विषयं तद्वाक्यमित्यभिप्रेरयन् सर्वविषयत्वे बाधकं विपर्यये पर्यवसानमुखेनाह– **अतोऽन्यथेति** ।। अतः उक्तव्यवस्थातः अन्यथा चेत् श्रुतेः सर्वविषयत्वाङ्गीकारेति यावत् । न कोऽप्यपुत्रकः शुभां गतिं व्रजेत् । व्रजन्ति च सद्गतिं नराः । अतोऽस्मदुक्त एवार्थ इति । सुतानृते सद्गतिं व्रजन्ति तन्न स्यादित्यध्याहारो वा । सन्ध्यकासुतः सन्ध्यावलिपुत्रः धर्मभूषणो धर्माङ्गदः । तस्मिन् काले सर्वेषामपि पुत्रनैयत्यात् विशिष्य धर्माङ्गदग्रहणम् ।।१८-१९।।

**भारतश्री–** ।। **अतोऽन्यथेति** ।। पुत्रा न सन्ति तस्मात् शुभयोग्यो नेति न्यवारयदिति चेत् नराः सुतान् ऋते सद्गतिं व्रजन्ति तन्न स्यादित्यर्थः । अतः ग्रन्थान्तरे सुताभावात् न्यवारयन् इत्युक्तिसद्भावेऽपि एवमेव तदुक्तेस्तात्पर्यमवगन्तव्यमितिभावेन यदर्थमेष इत्याद्युक्तम् । सुताभावे सद्गतिः कुत्र दृष्टेत्यत आह– **यथैवेति** ।।१८।।

**भावचन्द्रिका–** ।। **यथैवेति** ।। नारदीये रुक्माङ्गदचरित्रे इक्ष्वाकुवंशजो रुक्माङ्गदो नाम राजा एकादशीव्रतं सर्वथा कार्यं अन्यथा हन्मीति पटहघोषेण स्वदेशजनैः व्रतं कारयामास । स्वयञ्च चकार । तेन सर्वे स्वर्गताः । तदा नरके च शून्ये यमः ब्रह्माणं गतः । तेन च मोहिनीमुत्पाद्य तस्यां प्रेषितायां रुक्माङ्गदो मोहितो धर्माङ्गदे सन्ध्यापुत्रे स्वतनये राज्यभारं निधाय एकादशीव्रतञ्च पटहघोषादिना कारयेदित्युक्त्वा च मोहिनीं बहुवर्षं रमयामास । कदाचित् पटहं श्रुत्वा अद्यैकादशीति ज्ञात्वा नियमेन निराहारो भवानीत्युक्ते अद्यैव रमणार्थं भोक्तव्यं इति तयोक्ते राज्ञा च निराकृता गृहान्निर्गता मोहिनी । धर्माङ्गदः तां दृष्ट्वा तव यदपेक्षितं तत्सर्वं ददामीति पित्रर्थमुवाच । सन्ध्यावल्या तथैव याचिते [तयोक्ते मोहिनीमात्रं] पित्रा छेद्यमानं तव शिरो भूयादित्ययाचत । एकादशीव्रतार्थं तथा धर्मभूषणेन स्वीकृते पित्रा असिना छेद्यमाने शिरसि हरिरागत्य कृपाणं जगृहे । धर्मभूषणस्य लोकांश्च ददौ इति कथा ।।१८।।

**चट्टि–** ननु सन्तानेनैव सद्गतिरित्येतत् किं सर्वेषां नियतमुतैकस्यैवेत्यत आह– **अत इति** ।। अतो अन्यथेत्यस्यैव व्याख्यानं सुतान् ऋत इत्यादि । यतः सुतान् ऋते नराः सद्गतिं प्रयान्ति । अतः कारणात् 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः यः पुत्रजननार्थमुत्पन्नः स पुत्रोत्पत्तिं विना सद्गतिं न यातीति श्रुत्यर्थो ज्ञातव्यः । ननु अपुत्रकः को वा सद्गतिं गतः । येन श्रुत्यर्थसङ्कोचः कृत इत्यत आह– **यथैवेति** ।। रुक्माङ्गदाज्जातः सन्ध्यकायाः सुतः धर्मभूषणो धर्माङ्गदः यथैव जगाम सद्गतिमिति शेषः ।।१८।।

**तदा कलिश्च राक्षसा बभूवुरिन्द्रजिन्मुखाः ।**
**विचित्रवीर्यनन्दनप्रियोदरे हि गर्भगाः ।।१९।।**

**वेदाङ्गतीर्थीया–** तदा एव मुनिपाण्ड्वोः विवादकाले । गर्भगाः बभूवुः ।।१९।।

**वरदराजीया–** तदा तस्मिन् काले कलिरिन्द्रजिन्मुखा राक्षसाश्च विचित्रवीर्यनन्दनस्य धृतराष्ट्रस्य प्रियायाः गान्धार्याः उदरे गर्भजरायुगता बभूवुः ।।१९।।

**अनन्तभट्टीया–** जरायुगाः ।।१९।।

**जनार्दनीया–** तदा तस्मिन्काले कलिः इन्द्रजिन्मुखाः राक्षसाः विचित्रवीर्यस्य नन्दनः धृतराष्ट्रः, तस्य प्रिया भार्या गान्धारी, तस्या उदरे गर्भगाः जरायुगाः गर्भस्थानं प्राप्ताः वभूवुः ।।१९।।

**भारतश्री–** तदा यदा न्यवारयन् तदा गर्भगाः वभूवुः । न तु पृथिव्याम् ।।१९।।

**चट्टि–** तदा तस्मिन् काले कलिरिन्द्रजिन्मुखाः राक्षसाश्च विचित्रवीर्यस्य नन्दनः धृतराष्ट्रस्तस्य प्रिया भार्या गान्धारी तस्याः उदरे जरायुगाः गर्भगाः गर्भस्थानं प्राप्ताः बभूवुः ।।१९।।

**तदस्य[१] सोऽनुजोऽशृणोन्मुनीन्द्रभाषितं च तत् ।**
**विचार्य च प्रियामिदं जगाद वासुदेवधीः ।।२०।।**

**वेदाङ्गतीर्थीया–** अस्य धृतराष्ट्रस्य अनुजः पाण्डुः तेषां गर्भगतत्वं अशृणोत् । तन्मुनीन्द्रभाषितं पुत्रोत्पादनार्थं जातस्य तव तद्विना न सद्गतिरिति मुनीन्द्रोक्तं विचार्य परामृश्य प्रियामिदं जगादेति योजना ।।२०-२३।।

**वादिराजीया–** तदस्य सोऽनुज इत्यत्र अस्य धृतराष्ट्रस्य अनुजः सः पाण्डुः, तत् गान्धर्याः गर्भप्रापणम् ।।२०-२३।।

**वरदराजीया–** तत् तां स्थितिं मुनीन्द्रैः भाषितं उक्तं अस्य धृतराष्ट्रस्य सोऽनुजः पाण्डुः अशृणोत् । तच्च विचार्य वासुदेवे धीः वुद्धिः यस्य स तथा । प्रियां कुन्तीं इदं वक्ष्यमाणं वचनं जगाद ।।२०।।

**अनन्तभट्टीया–** अस्य धृतराष्ट्रस्य । तत् गान्धारीगर्भप्रसङ्गम् । मुनीन्द्रभाषितं पुत्रार्थमुत्पन्नः पुत्रान् विना सद्गतिं व्रजेदित्येतद्विचार्य ।।२०।।

**जनार्दनीया–** अस्य धृतराष्ट्रस्य अनुजः पाण्डुः मुनीन्द्रैः नागपुरादागतैः ऋषिभिः, भाषितं उदितं तत् कल्यादीनां गर्भगत्वं अशृणोत् । वासुदेवधीः हरिसेवाबुद्धिः । पुत्रोत्पादनं हरिसेवैवेति वुद्धिमानित्यर्थः। मुनीन्द्रैः व्रह्मसदः प्रति मा याहीति यैर्निवारितः, तैः ऋषिभिः भाषितं पुत्रोत्पादनार्थं उत्पन्नस्य तद्विना न सद्गतिः इत्युक्तं तद्वाक्यं विचार्य विमृश्य प्रियां कुन्तीं प्रति इदं वक्ष्यमाणं वाक्यं जगाद इति योजना । 'मुनीन्द्रभाषितम्' इत्युभयत्र सम्वध्यते ।।२०।।

**ताम्रपर्णीया–** ।। **तदिति** ।। अस्य धृतराष्ट्रस्यानुजः सः पाण्डुः तत् गान्धारीगर्भप्रापणं मुनीन्द्रभाषितं तच्च अपुत्रस्योर्ध्वगतिर्नास्तीति एतच्च युगपदशृणोदित्यर्थः । 'तदास्य सोऽनुजोऽशृणोत्' इति क्वचित् पाठः ।।२०-२४।।

---

१. 'तदास्य' इति ताम्रपर्णिटिप्पण्यां पाठान्तरम् । चट्टिटिप्पण्यां 'तदास्य' इत्येवपाठः ।

**भारतश्री–** ।। **अतोऽन्यथेति** ।। पुत्रा न सन्ति तस्मात् शुभयोग्यो नेति न्यवारयदिति चेत् नराः सुतान् ऋते सद्गतिं व्रजन्ति तन्न स्यादित्यर्थः । अतः ग्रन्थान्तरे सुताभावात् न्यवारयन् इत्युक्तिसद्भावेऽपि एवमेव तदुक्तेस्तात्पर्यमवगन्तव्यमितिभावेन यदर्थमेष इत्याद्युक्तम् । सुताभावे सद्गतिः कुत्र दृष्टेत्यत आह– **यथैवेति** ।।१८।।

**भावचन्द्रिका–** ।। **यथैवेति** ।। नारदीये रुक्माङ्गदचरित्रे इक्ष्वाकुवंशजो रुक्माङ्गदो नाम राजा एकादशीव्रतं सर्वथा कार्यं अन्यथा हन्मीति पटहघोषेण स्वदेशजनैः व्रतं कारयामास । स्वयञ्च चकार । तेन सर्वे स्वर्गताः । तदा नरके च शून्ये यमः ब्रह्माणं गतः । तेन च मोहिनीमुत्पाद्य तस्यां प्रेषितायां रुक्माङ्गदो मोहितो धर्माङ्गदे सन्ध्यापुत्रे स्वतनये राज्यभारं निधाय एकादशीव्रतञ्च पटहघोषादिना कारयेदित्युक्त्वा च मोहिनीं बहुवर्षं रमयामास । कदाचित् पटहं श्रुत्वा अद्यैकादशीति ज्ञात्वा नियमेन निराहारो भवानीत्युक्ते अद्यैव रमणार्थं भोक्तव्यं इति तयोक्ते राज्ञा च निराकृता गृहान्निर्गता मोहिनी । धर्माङ्गदः तां दृष्ट्वा तव यदपेक्षितं तत्सर्वं ददामीति पित्रर्थमुवाच । सन्ध्यावल्या तथैव याचिते [तयोक्ते मोहिनीमात्रं] पित्रा छेद्यमानं तव शिरो भूयादित्ययाचत । एकादशीव्रतार्थं तथा धर्मभूषणेन स्वीकृते पित्रा असिना छेद्यमाने शिरसि हरिरागत्य कृपाणं जगृहे । धर्मभूषणस्य लोकांश्च ददौ इति कथा ।।१८।।

**चट्टि–** ननु सन्तानेनैव सद्गतिरित्येतत् किं सर्वेषां नियतमुतैकस्यैवेत्यत आह– **अत इति** ।। अतो अन्यथेत्यस्यैव व्याख्यानं सुतान् ऋत इत्यादि । यतः सुतान् ऋते नराः सद्गतिं प्रयान्ति । अतः कारणात् 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः यः पुत्रजननार्थमुत्पन्नः स पुत्रोत्पत्तिं विना सद्गतिं न यातीति श्रुत्यर्थो ज्ञातव्यः । ननु अपुत्रकः को वा सद्गतिं गतः । येन श्रुत्यर्थसङ्कोचः कृत इत्यत आह– **यथैवेति** ।। रुक्माङ्गदाज्जातः सन्ध्यकायाः सुतः धर्मभूषणो धर्माङ्गदः यथैव जगाम सद्गतिमिति शेषः ।।१८।।

**तदा कलिश्च राक्षसा बभूवुरिन्द्रजिन्मुखाः ।**
**विचित्रवीर्यनन्दनप्रियोदरे हि गर्भगाः ।।१९।।**

**वेदाङ्गतीर्थीया–** तदा एव मुनिपाण्ड्वोः विवादकाले । गर्भगाः बभूवुः ।।१९।।

**वरदराजीया–** तदा तस्मिन् काले कलिरिन्द्रजिन्मुखा राक्षसाश्च विचित्रवीर्यनन्दनस्य धृतराष्ट्रस्य प्रियायाः गान्धार्याः उदरे गर्भजरायुगता बभूवुः ।।१९।।

**अनन्तभट्टीया–** जरायुगाः ।।१९।।

**जनार्दनीया–** तदा तस्मिन्काले कलिः इन्द्रजिन्मुखाः राक्षसाः विचित्रवीर्यस्य नन्दनः धृतराष्ट्रः, तस्य प्रिया भार्या गान्धारी, तस्या उदरे गर्भगाः जरायुगाः गर्भस्थानं प्राप्ताः बभूवुः ।।१९।।

**भारतश्री–** तदा यदा न्यवारयन् तदा गर्भगाः बभूवुः । न तु पृथिव्याम् ।।१९।।

**चट्टि–** तदा तस्मिन् काले कलिरिन्द्रजिन्मुखाः राक्षसाश्च विचित्रवीर्यस्य नन्दनः धृतराष्ट्रस्तस्य प्रिया भार्या गान्धारी तस्याः उदरे जरायुगाः गर्भगाः गर्भस्थानं प्राप्ताः बभूवुः ।।१९।।

**तदस्य[१] सोऽनुजोऽशृणोन्मुनीन्द्रभाषितं च तत् ।**
**विचार्य च प्रियामिदं जगाद वासुदेवधीः ।।२०।।**

**वेदाङ्गतीर्थीया–** अस्य धृतराष्ट्रस्य अनुजः पाण्डुः तेषां गर्भगतत्वं अशृणोत् । तन्मुनीन्द्रभाषितं पुत्रोत्पादनार्थं जातस्य तव तद्विना न सद्गतिरिति मुनीन्द्रोक्तं विचार्य परामृश्य प्रियामिदं जगादेति योजना ।।२०-२३।।

**वादिराजीया–** तदस्य सोऽनुज इत्यत्र अस्य धृतराष्ट्रस्य अनुजः सः पाण्डुः, तत् गान्धर्याः गर्भप्रापणम् ।।२०-२३।।

**वरदराजीया–** तत् तां स्थितिं मुनीन्द्रैः भाषितं उक्तं अस्य धृतराष्ट्रस्य सोऽनुजः पाण्डुः अशृणोत् । तच्च विचार्य वासुदेवे धीः बुद्धिः यस्य स तथा । प्रियां कुन्तीं इदं वक्ष्यमाणं वचनं जगाद ।।२०।।

**अनन्तभट्टीया–** अस्य धृतराष्ट्रस्य । तत् गान्धारीगर्भप्रसङ्गम् । मुनीन्द्रभाषितं पुत्रार्थमुत्पन्नः पुत्रान् विना सद्गतिं व्रजेदित्येतद्विचार्य ।।२०।।

**जनार्दनीया–** अस्य धृतराष्ट्रस्य अनुजः पाण्डुः मुनीन्द्रैः नागपुरादागतैः ऋषिभिः, भाषितं उदितं तत् कल्यादीनां गर्भगत्वं अशृणोत् । वासुदेवधीः हरिसेवाबुद्धिः । पुत्रोत्पादनं हरिसेवैवेति बुद्धिमानित्यर्थः। मुनीन्द्रैः ब्रह्मसदः प्रति मा याहीति यैर्निवारितः, तैः ऋषिभिः भाषितं पुत्रोत्पादनार्थं उत्पन्नस्य तद्विना न सद्गतिः इत्युक्तं तद्वाक्यं विचार्य विमृश्य प्रियां कुन्तीं प्रति इदं वक्ष्यमाणं वाक्यं जगाद इति योजना । 'मुनीन्द्रभाषितम्' इत्युभयत्र सम्बध्यते ।।२०।।

**ताम्रपर्णीया–** ।। **तदिति** ।। अस्य धृतराष्ट्रस्यानुजः सः पाण्डुः तत् गान्धारीगर्भप्रापणं मुनीन्द्रभाषितं तच्च अपुत्रस्योर्ध्वगतिर्नास्तीति एतच्च युगपदशृणोदित्यर्थः । 'तदास्य सोऽनुजोऽशृणोत्' इति क्वचित् पाठः ।।२०-२४।।

---

१. 'तदास्य' इति ताम्रपर्णिटिप्पण्यां पाठान्तरम् । चट्टिटिप्पण्यां 'तदास्य' इत्येवपाठः ।

**भारतश्री–** तत् गान्धारीगर्भोत्पत्तिवचनं मुनीन्द्रभाषितं पुत्रोत्पादनविषयम् ।।२०।।

**चट्टि–** अस्य धृतराष्ट्रस्य अनुजः पाण्डुस्तदा मुनीन्द्रभाषितं मुनीन्द्रैः नागपुरादागतैः ऋषिभिः आभाषितमुदितं तत्कल्यादीनां गान्धारीगर्भगत्वमशृणोत् । वासुदेवधीः हरिसेवाबुद्धिः पुत्रोत्पादनं हरिसेवेति बुद्धिमानित्यर्थः । मुनीन्द्रैः ब्रह्मसदः मा याहीति यैः निवारितः तैः मुनीन्द्रैः भाषितं पुत्रोत्पादनार्थमुत्पन्नस्य तद्विना न सद्गतिरित्युक्तम् । तद्वाक्यं विचार्य विमृश्य च प्रियां कुन्तीं प्रतीदं वक्ष्यमाणं वाक्यं जगाद इति योजना । 'मुनीन्द्रभाषितम्' इत्युभयत्र सम्बन्ध्यते ।।२०।।

**य एव [१]मद्गुणाधिकस्ततः सुतं समाप्नुहि ।**
**सुतं विना न नो गतिं शुभां वदन्ति साधवः ।।२१।।**

**वरदराजीया–** यो मत्तो गुणाधिकः ततः पुरुषात् सुतं समाप्नुहि । साधवो मुनीन्द्राः नः अस्माकं सुतं विना शुभां गतिं न वदन्ति । पुत्रोत्पत्तिं विना शुभगतिप्राप्तिर्नास्तीति वदन्तीति भावः ।।२१।।

**अनन्तभट्टीया–** मत् मत्तः ।।२१।।

**जनार्दनीया–** ततः तस्मात् पुरुषात् । कुत इत्यत आह– **सुतमिति** ।। साधवः समीचीनाः मुनीन्द्राः । नः अस्माकम् ।।२१।।

**भारतश्री–** सुतं विनेत्यादिकं अनुवादः ।।२१।।

**चट्टि–** यो मत्तो गुणाधिकस्ततस्तस्मात् पुरुषादेव सुतं समाप्नुहि प्राप्नुहि । कुत इत्यत आह– **सुतमिति** ।। साधवः सज्जनाः मुनीन्द्राः अस्माकं सुतं विना शुभां गतिं न वदन्ति । पुत्रोत्पत्तिं विना शुभा गतिर्नास्तीति वदन्तीति भावः ।।२१।।

**तदस्य कृच्छ्रतो वचः पृथाऽग्रहीज्जगाद च ।**
**ममास्ति देववश्यदो मनूत्तमः सुताप्तिदः ।।२२।।**

**वरदराजीया–** पृथा कुन्ती अस्य पाण्डोः तत् उक्तं वचः कृच्छ्रेण असह्यतया अग्रहीत् अङ्गीकृतवती जगाद च । कुन्ती सुतानां आप्तिं प्राप्तिं ददातीति तथा देववश्यदो देवानां वशत्वदः अत एव मनूत्तमो मन्त्रोत्तमो ममास्ति ।।२२।।

**अनन्तभट्टीया–** कृच्छ्रतः प्रयासेन । अधिकाः सुराः कथमायास्यन्ति इत्यत उक्तम्– **ममास्तीति** ।।

१. 'उत्तमादवराः पुंसः काङ्क्षन्तो पुत्रमापदि । अपत्यं धर्मफलदं श्रेष्ठादिच्छन्ति साधवः ।।' इति आदिपर्वणि .१२६.२३

**जनार्दनीया–** अस्य पाण्डोः तद्वचः अग्रहीदङ्गीचकार । जगाद । किमिति? सुरान् ऋते ते तव समो न । सुरेषु केचित्समाः सन्तीत्यर्थः । अधिकाः सन्तीति चार्थः । तेषां प्राप्तिः कथं स्यादित्यत उक्तम्– **ममास्तीति** ।। मनूत्तमः उत्तममन्त्रः ममास्ति, यतः अतः तव सकाशात् कमधिकं सुरं आनेतुं आज्ञापयसि, तं त्वदाज्ञया आनये आनयिष्यामि इति योजना ।।२२-२३।।

**चट्टि–** पृथा कुन्ती अस्य पाण्डोस्तद्वचः कृच्छ्रतः कृच्छ्रेण असह्यतया अग्रहीत् अङ्गीचकार । किमिति । ते तव सुरान् ऋते समः कोऽपि नास्ति । सुरेष्वपि केचिदेव समाः । अधिका अपि सन्तीति चार्थः । तेषां प्राप्तिः कथं स्यादित्यत आह– **ममास्तीति** ।। देववश्यदः देवानां वश्यत्वदः सुतानामाप्तिं प्राप्तिं ददातीति सुताप्तिदः मनूत्तमः उत्तममन्त्रः ममास्ति यतः अतः त्वदाज्ञया तव सकाशादधिकं सुरं कं आनये आनयिष्यामि तं वदेति शेषः ।।२२-२३।।

**न ते[1] सुरानृते समः सुरेषु केचिदेव च ।**
**अतस्तवाधिकं सुरं कमाह्वये त्वदाज्ञया ।।२३।।**

**व्यासतीर्थीया–** अस्य धृतराष्ट्रस्य मुनीन्द्रभाषितं च तत्पुत्रार्थमुत्पन्नस्तदसम्पादे शुभां गतिं न व्रजेदिति परिदृश्यमानेषु मदधिकतः सुतं प्राप्नुहीत्युक्तमिति भावयन्त्याह– **न त इति** ।।२३।।

**वरदराजीया–** ते तव सुरान् ऋते समः कोऽपि नास्ति । सुरेष्वपि केचिदेव समाः सन्ति अधिका सन्तीति भावः । यतो अधिकाः वहवः सन्ति अतस्त्वदाज्ञया तव सकाशात् अधिकं सुरं कं आह्वये आनयिष्यामि तं वदेत्यर्थः ।।२३।।

**अनन्तभट्टीया–** परिदृश्यमानेषु अपाप... स्थितः सुतमाप्नुहीत्युक्त इति मन्वान आह– **न त इति** ।। ते सुरानृते ...सुरेषु केचिदेव ...उत्तमाः... भावः ।।२३।।

**वरं समाश्रिता पतिं व्रजेत या ततोऽधमम् ।**
**न काचिदस्ति निष्कृतिर्न भर्तृलोकमृच्छति ।।२४।।**

**व्यासतीर्थीया–** [आह्वानेऽपि मदधिकाः सुराः कुतः समायास्यन्तीत्यत उक्तं] देवादिपर्यन्तं किं परिदृश्यमानेषु मदधिकात्सुतं समाप्नुहीत्यत आह– **वरमिति** ।।२४।।

**वेदाङ्गतीर्थीया–** तस्मात् निष्कृतिः प्रायश्चित्तं नास्ति । तस्मात् सा भर्तृलोकं न ऋच्छति न प्राप्नोतीति योजना ।।२४।।

---

१. न ह्यहं मनसाप्यन्यं गच्छेयं त्वदृते नरम् । त्वत्तः प्रति विशिष्टश्च कोऽन्योऽस्ति भुवि मानवः ।। आदि.१२७.५

**वादिराजीया**– ततोऽधममित्युपलक्षणम् । तत्समश्च ।।२४-२७।।

**मधुसूदनीया**– ।। **न काचिदस्ति निष्कृतिरिति** ।। किञ्चिदपि प्रायश्चित्तं नास्तीत्यर्थः ।।२४।।

**वरदराजीया**– यं कमपि समानयेति न वक्तव्यमित्याह– **वरमिति** ।। वरं उत्तमं पतिं समाश्रिताया तत उत्तमात् अधमं पुरुषं व्रजेत प्राप्नुयात् । तस्या इति शेषः । न कदाचिदपि निष्कृतिः प्रायश्चित्तं नास्ति । सा च कदापि भर्तृलोकं न ऋच्छति न गच्छति ।।२४।।

**अनन्तभट्टीया**– देवादिपर्यन्तं किं परिदृश्यमानेष्वेव वर्णादीनामधिकारात् पुत्रमाप्नुहीत्यत आह– **वरमिति** ।।२४।।

**जनार्दनीया**– 'अतस्तवाधिकं सुरं कमाह्वये' इत्युक्तेः हेतुं विशदयन्नाह– **वरमिति** ।। ततः पत्युः अधमं नीचपुरुषम् । तस्याः काचिन्निष्कृतिः प्रायश्चित्तं नास्ति । सा भर्तृलोकं पतिप्राप्तलोकं भर्त्रा सह न ऋच्छति न प्राप्नोति । 'ऋ गतौ' इति धातुः । 'हुत्वात्मदेहमुरुपापमदः कृतं च' इत्यग्रे वक्ष्यमाणत्वादिदं देहहानिरूपप्रायश्चित्तराहित्यं इति द्रष्टव्यम् ।।२४।।

**चट्टि**– तवाधिकं सुरं कमानये इत्युक्तेः हेतुं विशदयन्नाह– **वरमिति** ।। वरमुत्तमं पतिं समाश्रिता या नारी ततः पत्युः सकाशाद् अधमं गुणाधमं पुरुषं व्रजेत प्राप्नुयात् । तस्याः काचिन्निष्कृतिः प्रायश्चित्तं नास्ति । भर्तृलोकं पतिप्राप्तलोकं भर्त्रा सह न ऋच्छति न प्राप्नोति । ऋ गताविति धातुः ।।२४।।

**कृते पुरा सुरास्तथा सुराङ्गनाश्च केवलम् ।**
**निमित्ततोऽपि ताः क्वचिन्न तान् विहाय रेमिरे ।।२५।।**

**व्यासतीर्थीया**– ननु सुरस्त्रियो वरं पतिं समाश्रिताः अवरं व्रजन्त्यतः कथमवरपत्याश्रयणमनर्थायेत्यतः कृतादौ वरं पतिमाश्रिताः अवरं व्रजन्ति कृतान्ते वेति विकल्पौ हृदि निधाय न तावदाद्य इत्याह– **कृत इति** ।। पुरा आदौ केवलं सुराः सुराङ्गनाश्च बभूवुः ।।२५-२६।।

**वेदाङ्गतीर्थीया**– ननु च वरं पतिं समाश्रितानां सुरस्त्रीणां अवरपतिप्राप्तिदर्शनात् वरं समाश्रिता इत्यादिना दोषोक्तिः कथमित्यत आह– **कृतेति** ।। पुरा कृते कृतयुगे सुराः सुराङ्गनाश्च केवलं अविमिश्रिताः व्यभिचाररहिताः इति भावः । अनेन कृते व्यभिचार एव नास्तीत्युक्तं भवति । ताः सुराङ्गनाः निमित्ततोऽपि स्वतो व्यभिचाराभावे कुतश्चिद् कारणादपि तान् स्वपतीन् विहाय न रेमिरे । अन्यानिति शेषः । कृत इति योज्यम् । उपलक्षणमेतत् सुराश्च एवमेवेति ।।२५-२७।।

**मधुसूदनीया**– ।। **कृते पुरेति** ।। कृते युगे पुरा आदिभागे । अन्यथा पुराशब्दस्य वैय्यर्थ्यात् । कृतान्तमाप्य चेत्युत्तरवाक्यविरोधापत्तेश्च । कृतशब्देन तदन्तस्यापि ग्रहणसम्भवात् कृतयुगान्त्यभागमित्यर्थः ।।२५-३४।।

**वरदराजीया**– पुरा कृतयुगे सुराः सुराङ्गनाश्च केवलं निमित्ततोऽपि प्रबलनिमित्तेनापि तान् सुरान् विहाय ताः सुराङ्गनाः अन्यं न रेमिरे मनसापि नाप्नुयुः । सुराश्च ताः सुराङ्गनाः स्वाङ्गनाः विना न रेमिर इत्यर्थः ।।२५।।

**अनन्तभट्टीया**– ननु सुरस्त्रियः वरं पतिं समाश्रिताः अवरं व्रजन्त्यः...इदं कृतयुगे कृतयुगान्तरे चेति विकल्पौ हृदि निधाय आद्यमनुवदति– **कृत इति** ।। सुराः पुमांसः स्वस्त्रीनियता इति द्रष्टव्यम् ।।२५-२६।।

**जनार्दनीया**– ननु वरं पतिं समाश्रितानां सुरस्त्रीणां अवरपतिप्राप्तिदर्शनात् 'वरं समाश्रिताः' इत्यादिना दोषोक्तिः कथमित्याशङ्क्य, सुरस्त्रीणामवरपतिप्राप्तिदर्शनं किं कृतयुगे उत कृतान्ते इत्याशङ्क्य, आद्यं निषेधयति– **कृत इति** ।। पुरा कृते कृतयुगे सुराः केवलं अत्यन्तं निमित्ततोऽपि कुतश्चित्कारणात् अपि क्वचित्ताः नियतस्वाङ्गनाः विहाय न रेमिरे । अनियताङ्गना इति शेषः । तथा सुराङ्गनाश्च देवनियतस्त्रियः निमित्ततोऽपि क्वचित्तान् स्वनियतपतीन् विहाय न रेमिरे । अन्यपुरुषमिति शेषः । इत्यावृत्त्या योज्यम् ।।२५।।

**ताम्रपर्णीया**– पत्यन्यसम्बन्धो न कार्यमित्येतत् कैमुत्येनोपपादयति– **कृते पुरा** ।। पुरा कृते आदिकृतयुगे केवलं निमित्ततोऽपि बलवत्कारणैरपि । इदमुक्तं भवति । आदिकृतयुगे इन्द्रादिनाम्नां केवलभगवत्परत्वेन तानुद्दिश्य विशिष्यविधिनिषेधयोरप्रवृत्तावपि सुराः स्वपत्नीर्विना न रेमिरे । इदानीं तु 'यद्वाचि तन्त्यां गुणकर्मनामभिः' [भा.५.१.१४] इत्युक्तरीत्या इन्द्रादिनामबद्धाः स्वपतिपत्नीः विना न रमन्त इति किमु वाच्यम् । यदैवमनियतनामपि देवानां पत्नीनैय्यत्यं तदा किमु वाच्यं विधिनियतानां मनुष्याणामिति । तदुक्तमाथर्वणभाष्ये 'पञ्चरात्रमृगाद्या इत्यादिना' ।।२५।।

**चट्टि**– ननु वरं पतिं समाश्रितानां सुरस्त्रीणां अवरपतिप्राप्तिदर्शनात् 'वरं समाश्रिता' इत्यादिना दोषोक्तिः कथमित्याशङ्क्य सुरस्त्रीणामवरपतिप्राप्तिदर्शनं किं कृतयुगादिभागे वा उत कृतान्ते वा इत्याशङ्क्य आद्यं निषेधयति– **कृते इति** ।। कृते कृतयुगे पुरा आदिभागे । अन्यथा पुराशब्दस्य वैयर्थ्यात् । सुराः केवलं अत्यन्तं निमित्ततोऽपि कुतश्चित् कारणादपि क्वचित् ताः नियतस्वाङ्गनाः विहाय न रेमिरे । मनसापि नाप्नुयुः । इतरस्त्रिय इति शेषः । तथा सुराङ्गनाश्च देवनियतस्त्रियः निमित्ततोऽपि क्वचित् तान् स्वनियतपतीन् विहाय न रेमिरे । अन्यपुरुषमिति शेषः । इत्यावृत्त्या योज्यम् ।।२५।।

**मनोवचःशरीरतो यतो हि ताः पतिव्रताः ।**
**अनादिकालतोऽभवंस्ततः सभर्तृकाः सदा[1] ॥२६॥**

**वरदराजीया–** यतः ताः मनोवचःशरीरतः मनोवाक्कायैः पतिव्रताः भर्त्रेकनिष्ठाः सुराश्च स्वस्त्रीरताः इति द्रष्टव्यम् । अनादिकालमारभ्य सभर्तृकाः सदा अभवन् ॥२६॥

**जनार्दनीया–** ताः सुराङ्गनाः अनादिकालतः मन आदिभिः यतो पतिव्रताः पतिधर्मनिष्ठाः । हि श्रुत्यादौ प्रसिद्धाः । ततः सदा भर्तृभिः सहिता अभवन् ॥२६॥

**ताम्रपर्णीया–** कृते पुरेति विशिष्योक्त्या युगान्तरे अनियतिरिति प्रतीयते । तां प्रतीतिं निवारयन् तासां नियतपतित्वे ज्ञापकमाह– **मन इत्यादिना** ॥ यतो मनआदिभिरनादिकालतः पतिव्रताः अत एव सदा सभर्तृकाः स्वभर्तृभिः सह विमुक्तिगाश्च भवन्तीत्यर्थः । एतेन सुरस्त्रियो अनादितः पतिव्रताः अनादितः सभर्तृकत्वात् स्वभर्तृभिर्विमुक्तत्वाच्चेत्युक्तं भवति ॥२६॥

**चट्टि–** यतस्ताः सुराङ्गनाः अनादिकालतः मनोवाक्कायैः पतिव्रताः पतिधर्मनिष्ठा इति हि श्रुत्यादौ प्रसिद्धास्ततः सदा भर्तृभिः सहिताः अभवन् ॥२६॥

**स्वभर्तृभिर्विमुक्तिगाः सहैव ता भवन्ति हि ।**
**कृतान्तमाप्य चाप्सरः स्त्रियो बभूवुरूर्जिताः ॥२७॥**

**व्यासतीर्थीया–** कृतान्ते परं पतिमाश्रिताः अवरं व्रजन्तीति द्वितीयं पक्षं दूषयन्नाह– **कृतान्तमाप्य कृतान्त उत्पन्ना इति** ॥ न ताः नियतस्त्रियः कित्वप्सरसः अतो न मदुक्तभङ्ग इत्यर्थः ॥२७-२८॥

**वरदराजीया–** अत एव स्वस्वभर्तृभिः मुक्तिगाः सदैव भवन्ति । 'देवाः सजाया मुच्यन्त' इति नियमवचनादिति भावः । यत्र देवानां ऋषीणां राज्ञां वा स्वस्त्रीपरिहारेणान्यत्र व्यभिचारो दृश्यते ता अप्सरस एव । तासां भर्तृनियमो नास्तीत्याह– **कृतान्तमिति** ॥ कृतस्य अन्तं समाप्तिं समाप्य त्रेतादिष्वित्यर्थः । अप्सरस्त्रियः ऊर्जिताः असङ्ख्याता बभूवुः ॥२७॥

**अनन्तभट्टीया–** द्वितीयं दूषयन्नाह– **कृतान्तमिति** ॥ कृतान्तमाप्य कृतान्त उत्पन्ना इत्यर्थः ॥

**जनार्दनीया–** ताः देवाङ्गनाः स्वस्वभर्तृभिः सहैव विमुक्तिगाः भवन्ति हि । मोक्षं प्राप्नुवन्तीत्यर्थः । ननु एवं चेत्तर्हि देवानां ऊर्वश्यादिभोगः कथमित्याशङ्कायां तास्त्वप्सरस इत्याह– **कृतान्तमिति** ॥

१. 'नैतास्तु विजहत्येतान् भर्तॄन् देव्यः कथञ्चन । आवर्तमानकल्पेषु पुनर्जायन्ति तैः सह ॥' वायु.पूर्वा.३०.७३ इति देवस्त्रीणां स्वपतिनियतत्वमुच्यते ।

कृतान्तं कृतयुगस्य पूर्तिमाप्य, कृतयुगानन्तरमित्यर्थः । ऊर्जिता बह्व्यः बहुसङ्ख्याका इत्यर्थः । या अप्सरस्त्रियः भोगाङ्गना वभूवुः ।।२७।।

**ताम्रपर्णीया–** वह्निमत एव धूमवत्त्वमिति यथाऽनुमानस्य व्यतिरेकव्याप्तिमाह– **कृतान्तमिति** ।। ऊर्जिताः सौन्दर्यादिगुणोन्नद्धाः अप्सरस्त्रियः कृतान्तमाप्य अनावृताः आवरणरहिता बभूवुः ।।२७।।

**चट्टि–** ताः देवाङ्गनाः स्वस्वभर्तृभिः सहैव विमुक्तिगाः भवन्ति मोक्षं प्राप्नुवन्ति हि । नन्वेवं चेत् तर्हि देवानामूर्वश्यादिभोगः कथमित्याशङ्कायां तास्त्वप्सर इत्याह– **कृतान्तमिति** ।। कृतान्तं कृतयुगान्तभागमित्यर्थः । कृतयुगस्य पूर्तिं वा आप्य, कृतयुगानन्तरमित्यर्थः । ऊर्जिताः असङ्ख्याका या अप्सरस्त्रियः भोगाङ्गना वभूवुः ।।२७।।

**[1]अनावृताश्च तास्तथा यथेष्टभर्तृकाः सदा ।**
**अतस्तु ता न भर्तृभिर्विमुक्तिमापुरुत्तमाम् ।।२८।।**

**वेदाङ्गतीर्थीया–** तासामप्सरस्त्वमेव विवृणोति– **अनावृता इति** ।। अनावृताः निर्लज्जा इति भावः ।।२८।।

**वादिराजीया–** अतस्तु ता इत्यत्र ताः अप्सरसः भर्तृभिः सह नियतभर्तृकशच्यादिस्त्रीवत् कश्चन स्वभर्तारं पुरो निधाय तेन सह मुक्तिं नापुः । किन्तु मुक्तावपि देवाः सर्वे जारा एव न भर्तारः । स्वयं च स्वैरिण्यः । अन्यथा ब्रह्मणा सह तासामपि मुक्तेर्जातत्वात् असङ्गतिः स्यात् । अतः उक्तप्रकारेणैव योजना ।।२८।।

**वरदराजीया–** ताश्च अनावृताः कैरपि भार्यात्वेन अनावृताः तथा तस्मात् यथेष्टभर्तृका एव सदा भवन्ति । अत एव भर्तृभिः सह उत्तमां मुक्तिं नापुः ।।२८।।

**अनन्तभट्टीया–** या अनावृताः पाणिग्रहणरहिताः अप्रतिबद्धाः ताः यथेष्टभर्तृकाः अप्सरस्त्रियः ।।२८।।

**जनार्दनीया–** ताः अनावृताः पाणिग्रहणधर्मेणास्वीकृताः । निर्लज्जा इति वा । तथा अनावृतत्वादित्यर्थः। सदा नित्यं यथेष्टभर्तृकाः वहुभर्तृकाः स्वमनोऽभीष्टभर्तृका वा यतः अतः ताः अप्सरसः उत्तमां देवस्त्रीयोग्योत्तमां विमुक्तिं भर्तृभिः सह नापुः ।।२८।।

**ताम्रपर्णीया–** तथा यथेष्टभर्तृका बभूवुः । अत एव भर्तृभिः सह उत्तमां विमुक्तिं नापुरित्यर्थः । कृतान्तमित्युक्त्या कृतयुगे अनियतिर्नेति सूचयति ।।२८।।

---

१. 'पतिरप्सरसां नास्ति न चैकस्त्रीपरिग्रहः' रामायणे.उ.का.२६.४०।

**चट्टि–** ताः अनावृताः कैरपि भार्यात्वेन न स्वीकृताः । तथा तस्मात् सदा नित्यं यथेष्टभर्तृका बहुभर्तृका स्वमनोभीष्टभर्तृकाः यतः अतस्ताः अप्सरसः उत्तमां देवस्त्रीयोग्यां विमुक्तिं भर्तृभिः सह नापुः ।।२८।।

**सुरस्त्रियोऽतिकारणैर्यदन्यथा स्थितास्तदा ।**
**दुरन्वया सुदुःसहा विपत् ततो भविष्यति ।।२९।।**

**व्यासतीर्थीया–** ननु परं पतिमाश्रिताः नियता अपि देवस्त्रियः ताराद्या अवरं सुग्रीवाद्यमाश्रिता श्रूयन्ते । अतः कथमवरगमनमन्याय्यमित्यतः तदप्यनिष्टहेतुत्वादन्याय्यमित्याह– **सुरस्त्रिय इति** । दुरन्वया अघटितसम्बन्धाः ।।२९।।

**वेदाङ्गतीर्थीया–** ननु अनियतस्त्रीणामेव व्यभिचारः न नियतस्त्रीणामित्येतत्कथम्? तारादीनां व्यभिचारदर्शनादित्यत आह– **सुरस्त्रिय इति** ।। अतिकारणैः बलवन्निमित्तैः अन्यथा स्थिताः । अनियतभर्तृकाः स्थिताः । दुरन्वयाः अतर्कितसम्बन्धाः । ततः अन्यथावस्थानात् ।।२९-३५।।

**वादिराजीया–** सुरस्त्रियोऽतिकारणैरित्यत्र सुरस्त्रियः नियतदेवस्त्रिय अति स्वपतीन् अतिक्रम्य कारणैः बलात्कारणैरपीत्यर्थः । दुरन्वया दुःखप्रदः अन्वयः सम्बन्धो यस्याः सा तथोक्ता । ततः स्वयोग्यपातिव्रत्य-भङ्गजनितपापात् । अतो नियतसुरस्त्रीणामपि स्वपतिभ्यो अधिकपुरुषपरिग्रहेऽपि परलोकपरिपन्थिपापाभावेऽपि ऐहिकदुःखदायकपापं पत्युः पुत्राणां मातुश्च भवतीति भावः ।।२९-३१।।

**सत्याभिनवतीर्थीया–** तत्रैव सुरस्त्रियोऽतिकारणैः...इति श्लोके 'दुरन्वया सुदुस्सहा' इत्यस्य दुःखप्रदः अन्वयः अन्वयसाधनं संवन्धसाधनं यस्याः सा दुरन्वया, अतिशयेन सोढुमशक्या सुदुस्सहेत्यर्थः । एतेन विपदः अतिशयदुःखप्रदत्वप्रतिपादनस्य 'सुदुस्सहा' इत्यनेनैव ज्ञातत्वात् 'दुरन्वया' इत्येतत् व्यर्थमिति दूषणं परिहृतम् । 'दुरन्वया' इत्यस्य विपत्प्राप्तेः पूर्वमेवातिशयेन दुःखं भवतीत्यत्र तात्पर्यम्, 'सुदुस्सहा' इत्यस्य विपत्प्राप्त्यनन्तमपि अतिशयेन दुःखं भवतीत्यत्र तात्पर्यमित्यङ्गीकारात् ।।२९।।

**वरदराजीया–** ननु ताराअहल्यादीनां कथमन्यपुरुषसङ्गः? न हि ता अपि अप्सरस इत्यत आह– **सुरस्त्रिय इति** ।। प्रबलैः कारणैः प्रारब्धकर्मरूपैः उत्तमदेवताशापादिरूपैः च सुरस्त्रियो अन्यथा परपुरुषसङ्गेन स्थिताः । तदा दुरन्वया बहुकालभर्तृयोगरहिता । अत एव दुःसहा अत्यन्तं सोढुमशक्यं विपत् आपतत्ततः परपुरुषसङ्गात् भविष्यति भवत्येव ।।२९।।

**अनन्तभट्टीया–** अतिकारणैः प्रवलप्रारब्धादिना...टितसम्वन्धाः । अतो वर्णादिना अधिका[रा]त् पुत्रप्राप्तिरयुक्तेति भावः ।।२९।।

**जनार्दनीया–** ननु नियताङ्गनानां तारादीनां व्यभिचारप्रसङ्गः कथमिति द्वितीयपक्षमाशङ्क्याह– **सुरस्त्रिय इति** ।। यदा सुरस्त्रियः अतिकारणैः प्रारब्धकर्मानुरूपोत्तमशापादिवलवत्कारणैः । अन्यथा अन्यपुरुषसंयोगेन स्थिताः । तदा दुरन्वयाः वहुकालं स्वमूलरूपप्राप्त्यादिरहिताः स्युरिति शेषः । ततः अन्यथा स्थितत्वात् । सुदुःसहा अन्यन्तं सोढुं अशक्या विपत् भूलोकेऽपि स्वभर्तुः असामीप्याद्यापद्भविष्यति भवति । 'दुरन्वया वहुकालभर्तृयोगरहिता विपत्' इति केचित् ।।२९।।

**ताम्रपर्णीया–** देवतास्त्रीणां सदा पातिव्रत्ये कृते पुरेति विशिष्योक्तिरप्युक्ता इत्यतः त्रेतादियुगे वलवत्कारणैः कदाचिदनियतिभावात् विशिष्यग्रहणमित्यभिप्रेत्य ताराद्युत्तमस्त्रीणां सुग्रीवाद्यधमपत्याश्रयणात् कथं अवरगमनमन्याय्यमित्यतः तदपि महानिष्टहेतुत्वात् अन्याय्यमित्याह– **सुरस्त्रिय इति** ।। दुरन्वया मूलरूपसंयोगविघटिका । यद्वक्ष्यति 'तारादेहे सूर्यजस्याङ्गसङ्गात् स्वर्गं नागात् अन्तरिक्षादिहासीत्' इति ।।२९-४५।।

**भारतश्री–** अपुत्रत्वात् तव अधिकारो नास्तीति न्यवारयन्निति भारताद्युक्तेरभिप्रायमाह । सुरास्तथा उत्तमं स्त्रियं विहाय स्वयोग्याभिः रेमिरे । कृते आदिकृतयुगेति । तान् विहाय उत्तमान् विहायाधमे न रेमिरे । सुरस्त्रियोऽपि यदा कृतान्तादौ अतिकारणैः अन्यथा स्थिताः उक्तादन्यथा स्थिताः ताराद्याः दुरन्वयाः दुःखेन स्वभर्तृन्वयाः [?]। ततः नीचस्थात् या अधमं व्रजेत तस्या निष्कृतिः न । समे तु सा । अयमभिसन्धिः । पतिं समाश्रिता या पतिव्रता सा ततोऽधमं स्वपत्यधमं स्वतो वरमपि । इदमुपलक्षणम् । पतिसममपि व्रजेत् चेत् तस्या निष्कृतिः नास्तीति । उत्तरत्र 'भर्तुर्गुणैरनधिकौ तनयार्थमेव माद्र्या कृतौ सुरवरावधिकौ सतोऽपि' इत्युक्तेः ।।२९।।

**चट्टि–** ननु नियताङ्गनानां व्यभिचारप्रसङ्गः कथमिति द्वितीयपक्षमाशङ्क्याह– **सुरस्त्रिय इति** ।। यदा सुरस्त्रियः अतिकारणैः प्रारब्धकर्मानुरूपोत्तमशापादिवलवत्कारणैः अन्यथा अन्यपुरुषसंयोगेन स्थिताः तदा दुरन्वयाः बहुकालं स्वमूलरूपप्राप्त्यादिरहिताः स्युरिति शेषः । ततो अन्यथास्थितत्वात् सुदुस्सहा अत्यन्तं सोढुं अशक्या विपत् भूलोकेऽपि भविष्यति भवति । यद्वा दुरन्वया वहुकालं भर्तृयोगरहिता अत एव सुदुस्सहा अत्यन्तं सोढुमशक्या विपद् आपत् ततः पुरुषसङ्गाद् भविष्यति भवत्येव ।।२९।।

**अयुक्तमुक्तवांस्ततो भवांस्तथाऽपि ते वचः ।**
**अलङ्घ्यमेव मे मतो वदस्व पुत्रदं सुरम् ।।३०।।**

**व्यासतीर्थीया–** अतो वर्णादिना त्वदधिकात् पुत्राद्युत्पत्त्युक्तिरयुक्तेत्युपपाद्योपसंहरति– **अयुक्तमिति** ।। परपुरुषवरणमेवायुक्तं सुतरां त्वधमस्यातो अयुक्तमुक्तवान् । तर्हि मदाज्ञां न करोमीत्यभिप्राय इत्यत उक्तम्– **तथापीति** ।।३०-३८।।

**वरदराजीया–** ततः कारणात् अयुक्तमेव भवानुक्तवान् । तथापि ते वचः अलङ्घ्यमेव । ततः कारणात् पुत्रदं सुरं वदस्वेत्यर्थः ॥३०॥

**अनन्तभट्टीया–** उपसंहरति– **अयुक्तमिति** ॥ परपुरुषावेक्षणमेवायुक्तं सुतरां पत्यधमवरणम् । अतो अयुक्तमुक्तवान् ॥३०॥

**जनार्दनीया–** ततः कारणात् भवान् यद्यपि अयुक्तं उक्तवानसि । तथाऽपि ते वचः मे मया अलङ्घ्यमेव । ततः अलङ्घ्यत्वात् ॥३०॥

**भारतश्री–** अयुक्तमुक्तवान् 'य एव मद्गुणाधिकः ततः सुतं समाप्नुहि' इति । यथाकथञ्चित् परपुरुषसङ्गस्त्वयुक्तः । अविहितत्वादिति भावः । तथापि ते वचः अलङ्घ्यमेव । तथा [यथा] पुत्राः जायेरन् तथा करिष्य इत्यर्थः ॥३०॥

**भावचन्द्रिका–** स्वभर्तृगमनस्यैव श्रेष्ठत्वेन अन्यगमनं अमुख्यमित्याह– **अयुक्तमिति** ॥ न तु सर्वथा अयुक्तमिति । परशुरामेण क्षत्रियहनननानन्तरं ब्राह्मणैः क्षत्रियासु प्रजोत्पत्त्या क्षत्रसन्तानसम्पादन-व्यवस्थापि आपद्धर्मत्वेन च व्यवस्थापितत्वस्य भारतोक्तेः ॥३०॥

**चट्टि–** ततः कारणाद् भवान् यद्यपि अयुक्तमुक्तवानसि । तथापि ते वचः मे अलङ्घ्यमेव ततः कारणात् पुत्रदं सुरं वदस्व ॥३०॥

**इतीरितोऽब्रवीन्नृपो न धर्मतो विना भुवः ।**
**नृपोऽभिरक्षिता भवेत् तदाह्वयाऽऽशु तं विभुम् ॥३१॥**

**वरदराजीया–** नृपः पाण्डुः अवदत् । किमिति । धर्मतो धर्मेण विना नृपो राजा भुवः पृथिव्याः अभिरक्षिता न भवेत् । तत् तस्मात् तं विभुं धर्मं आशु कालक्षेपमन्तरेण आह्वय ॥ ३१ ॥

**अनन्तभट्टीया–** धर्मतो विना धर्मं विना । तस्मात् विभुं धर्मिष्ठपुत्रदाने समर्थं तं धर्मम् ॥३१॥

**जनार्दनीया–** नृपः पाण्डुरब्रवीत् । किमिति? नृपो धर्मतो धर्मं विना भुवः अभिरक्षिता न भवेत्। यद् यस्मात् तद् तस्मात्तं धर्मात्मकं विभुं सुतदाने समर्थम् । धर्ममिति यावत् । आशु आह्वय ॥३१॥

**चट्टि–** कुन्त्या इतीरितः नृपः पाण्डुरब्रवीत् । धर्मतो धर्मं विना नृपः राजा भुवः पृथिव्याः अभिरक्षिता न भवेत् । यद्यस्मात् तत् तस्मात् तं धर्मात्मकं विभुं सुतदाने समर्थं धर्ममिति यावत् । आशु आह्वय ॥३१॥

**स धर्मजः सुधार्मिको भवेद्धि सूनुरुत्तमः ।**
**इतीरिते तया यमः[1] समाहुतोऽगमद् द्रुतम् ॥३२॥**

**वादिराजीया**– ॥ **समाहुतः** ॥ 'हु दानादानयोः' इति धातोः सम्यगाहूतः आगच्छेति वचनदानं प्रापितः ॥३२॥

**वरदराजीया**– यमस्यैव आह्वाने निमित्तमाह– **स इति** ॥ यो धर्मजः धर्मादुत्पन्नः सूनुः स सुधार्मिकोऽत्यन्तं धर्मशीलः । अत एवोत्तमः सूनुः भवेत् । तस्मात् इतीरिते पाण्डुनेति शेषः । तया कुन्त्या यमः समाहूतः मन्त्रेणेति शेषः । यमो द्रुतमगमत् ॥३२॥

**जनार्दनीया**– धर्मात् यमाज्जातः स उत्तमः सूनुः सुधार्मिकः अतिधर्मनिष्ठो भवेद्धि । राज्ञा इतीरिते सति तया कुन्त्या आहूतः गान्धारीगर्भस्य संवत्सरे जाते आकारितः । 'संवत्सरे धृते गर्भे गान्धार्या जनमेजय । आह्वयामास वै कुन्ती गर्भार्थे धर्ममच्युतम् ॥' इत्यादिपर्वणि [१२९.१३] । मन्त्रेणाकारितो यमः द्रुतं शीघ्रमगमत् ॥३२॥

**अतिविशद**– इतीरिते तया यमः समाहुतोऽगमत् द्रुतम् इत्यत्र 'संवत्सरे धृते गर्भे गान्धार्या जनमेजय । आह्वयामास वै कुन्ती गर्भार्थं धर्ममच्युतम् ॥' इति भारतवाक्यात् गान्धारीधृतगर्भस्य संवत्सरे गते कुन्त्या आहूत इति ज्ञेयम् ॥३२॥

**भावचन्द्रिका**– समाहुत इत्यत्र समित्युपसर्गेण तत्पूजादिकमाह ॥३२॥

**चट्टि**– धर्माद्यमात् जातः सः उत्तमः सूनुः सुधार्मिकः अतीव धर्मिष्ठो भवेद्धि । राज्ञा इतीरिते सति तया कुन्त्या समाहूतः मन्त्रेणाकारितो यमः द्रुतं शीघ्रं अगमत् ॥३२॥

**ततश्च सद्य एव सा सुषाव [2]पुत्रमुत्तमम् ।**
**युधिष्ठिरं यमो हि स प्रपेद आत्मपुत्रताम् ॥३३॥**

---

१. मत्स्यपुराणे यमनामनिर्वचनम् 'त्वमेव जगतो नाथः प्रजासंयमनो यमः । कर्मणामनुरूपेण यस्माद्यमयसे प्रजाः ॥ तस्माद्वै प्रोच्यसे देव यम इत्येव नामतः । धर्मेणेमाः प्रजाः सर्वा यस्माद्रञ्जयसे प्रभो । तस्मात्ते धर्मराजेति नाम सद्भिर्निगद्यते । सुकृतं दुष्कृतं चोभे पुरोधाय यदा जनाः ॥ त्वत्सकाशं मृता यान्ति तस्मात् त्वं मृत्युरुच्यते ॥ कालं कलार्द्धं कलयन् सर्वेषां त्वं हि तिष्ठसि ॥ तस्मात् कालेति ते नाम प्रोच्यते तत्वदर्शिभिः ॥ सर्वेषामेव भूतानां यस्मादन्तकरो महान् तस्मात्त्वमन्तकः प्रोक्तः सर्वदेवैर्महाद्युते ॥' इति । २१३.१-६ ।

२. ऐन्द्रे चान्द्रमसा युक्ते मुहूर्तेऽभिजिदष्टमे । दिवा मध्यगते सूर्ये तिथौ पूर्णे हि पूजिते ॥ आदि.१२९.२१ इति धर्मराजावतारदिवसमाह । इन्द्रदेवताकनक्षत्रं ज्येष्ठा ।

**वादिराजीया–** ततश्च सद्य एव इत्यत्र ततः तस्माद्धर्मात् ।।३३-३९।।

**वरदराजीया–** ततो धर्मादुत्तमं पुत्रं सुषाव प्रसूतवती । स पूर्वं क इत्यत आह– **यम इति** ।। स युधिष्ठिरो यमो हि यः आत्मनः पुत्रतां प्रपेदे प्राप स्वस्मादेव स्वयं जज्ञ इति भावः ।।३३।।

**अनन्तभट्टीया–** युधिष्ठिरं युधिष्ठिरनामकम् । आत्मपुत्रतां आत्मैव पुत्र इति विग्रहः ।।३३।।

**जनार्दनीया–** सा कुन्ती ततश्च तस्मात् यमात् युधिष्ठिरं युधिष्ठिरनामकं पुत्रं सुषाव जनयामास । स युधिष्ठिरः हि यस्माद्यमः तस्मादात्मैव स्वयमेव पुत्रतां प्रपेदे प्राप ।।३३।।

**भावचन्द्रिका–** सद्य एवाहितत्वात् । 'देवात् पुत्रफलं सद्यो विप्रात् कालान्तरे भवेत्' इति भारते ।।३३।।

**चट्टि–** सा कुन्ती ततस्तु तस्मात् यमादेव युधिष्ठिरनामकं उत्तमं पुत्रं सद्यः सुषाव जनयामास । स पूर्वं क इत्यत आह– **यम इति** ।। सः युधिष्ठिरो यमो हि यतः आत्मनः पुत्रतां प्रपेदे प्राप । स्वस्मादेव स्वयं जज्ञे इति भावः ।।३३।।

**यमे सुते तु कुन्तितः प्रजात एव सौबली ।**
**[१]अदह्यतेर्ष्ययाचिरं बभञ्ज गर्भमेव च ।।३४।।**

**वरदराजीया–** कुन्तितः कुन्त्याः सकाशात् यमे सुते प्रजात एव सति सौबलस्यापत्यं स्त्री गान्धारी ईर्ष्यया मात्सर्येण अदह्यत प्रजज्वाल । तत्फलमाह– **चिरमिति** ।। चिरं वहुकालस्थितं गर्भं वभञ्ज यथा स्रवेत् तथा ताडितवती ।।३४।।

**अनन्तभट्टीया–** बभञ्ज ताडयामास ।।३४।।

**जनार्दनीया–** कुन्तितः यमे यमात्मके सुते प्रजाते सति । एव जननश्रवणमात्रादेवेति भावः । सौवली गान्धारी ईर्ष्यया 'मत्तः पूर्वं कुन्त्याः पुत्रो बभूव' इति मात्सर्येण अदह्यत । दुःखाग्निना स्वां भस्मीचकारेति भावः । तदेव दर्शयति– **अचिरमिति** ।। अचिरं यथा स्यात्तथा तत्क्षणादेवेत्यर्थः । गर्भं स्वगर्भमपि वभञ्जैव । यथा पातः स्यात्तथा मुष्टिना तताड ।।३४।।

**चट्टि–** कुन्तितः यमे सुते प्रजाते सत्येव जननश्रवणमात्रादेवेति भावः । सौवली गान्धारी ईर्षया मत्तः पूर्वं कुन्त्याः पुत्रो वभूवेति मात्सर्येण अदह्यत जज्वाल । तदेव दर्शयति । अचिरं यथा स्यात् तथा तत्क्षणादेवेत्यर्थः । गर्भं च स्वगर्भमपि वभञ्जैव । यथा पातः स्यात् तथा मुष्टिना तताड ।।

१. 'अदह्यतेर्ष्यया चिरं' इति वरदराजीयपाठः ।

**स्वगर्भपातने कृते तया जगाम केशवः ।**
**पराशरात्मजो न्यधाद् घटेषु तान् विभागशः ॥३५॥**

**वेदाङ्गतीर्थीया–** विभागशः, कृत्वेति शेषः । तान् विभागान् ॥३५॥

**मधुसूदनीया–** ॥ **घटेषु तान्विभागश इति** ॥ तान् मांसपेशानङ्गुष्ठमानपूर्वकान् शतात्मना एकाधिकशतत्वेन विभागशः विभागं कृत्वा घटेषु न्यधादित्यन्वयः । तदुक्तम्– 'एकाधिकशतं पूर्णं यथायोगविशेषतः । मांसपेशांस्ततो राजन्... ॥' इत्यादिपर्वणि [१२९.३७-३८] । स इन्द्रजित्समुत्थितः इत्यादि । तथाचोक्तम्– 'पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह । शतं दुर्योधनादीनां सर्वेषां क्रूरकर्मणाम् ॥ दुर्योधनो युयुत्सुश्च राजा दुःशासनस्तथा ॥' इत्यादिपर्वणि [६८.८९-९०]। ननु शतात्मना विभजने किं निमित्तमित्यतः 'यदि मे सहते गन्धं रूपं वेषं तथा वयः । अद्यैव गर्भं कौसल्या विशिष्टं प्रतिपद्यते ॥ तस्य चापि शतं पुत्रा भवितारो न संशयः ॥' इति व्यासेन धृतराष्ट्रस्य शतं पुत्रा भविष्यन्तीत्युदितत्वेन [आदि.११४.६८-६९] तद्वाक्यस्य सत्यत्वकरणाय शतात्माना विभागः कृत इति भावः ॥३५॥

**वरदराजीया–** तया गान्धार्या स्वगर्भपातने कृते सति पराशरस्य ऋषेः आत्मजो व्यासात्मकः केशवः आजगाम । तान् विभागशो विभागात् घटेषु शतसङ्ख्याकेषु न्यधात् स्थापयामास ॥३५॥

**अनन्तभट्टीया–** तान् मांसपिण्डान् ॥३५॥

**जनार्दनीया–** तान् मांसपेशिस्थितान् जन्तून् विभागशः अङ्गुष्ठपर्वमात्रेण एकाधिकशतत्वेन विभज्य, घटेषु न्यधात् स्थापयामास । 'अङ्गुष्ठपर्वमात्राणां भागानां पृथगेव तु । एकाधिकं शतं पूर्णं यथा योगविशेषतः ॥ मांसपेश्यस्ततो राजन्....॥' [१२९.३६-३७] इत्यादिपर्ववाक्यादुक्तोऽर्थोऽवगन्तव्यः ॥३५॥

**भावचन्द्रिका–** घटेषु घृतपूर्णेषु तान् अङ्गुष्ठपर्वमात्रान् उल्वावृतमांसविशेषान् ॥३५॥

**चट्टि–** तया गान्धार्या स्वगर्भपातने कृते सति पराशरस्य ऋषेः आत्मजो व्यासात्मा केशवः जगाम । तान् मांसपेशान् अङ्गुष्ठपर्वमात्रेण एकाधिकशतत्वेन विभागशः विभागीकृत्य घटेषु न्यधात् स्थापयामास । तदुक्तम्– अङ्गुष्ठपर्वमात्राणां भागानां पृथगेव तु । एकाधिकं शतं पूर्णं यथा योगविशेषतः ॥ मांसपेशांस्ततो राजन्... । इत्यादिपर्वणि ॥३५॥

**शतात्मना विभेदिताः शतं सुयोधनादयः ।**
**बभूवुरन्वहं ततः शतोत्तरा च दुश्शला ॥३६॥**

**वेदाङ्गतीर्थीया–** शतात्मना विभेदिताः विभागाः । ततः घटेभ्यः शतं दुर्योधनादयः शतं पुत्राः बभूवुः ॥३६-३८॥

**मधुसूदनीया–** ॥ **शतोत्तरा चेति** ॥ ननु शतपुत्रोत्पादनानन्तरं दुश्शला कथमभूदिति शतपुत्रमात्रं प्रत्येव वरसद्भावादित्यतः शतभागकरणानन्तरं देवस्य नारायणस्येच्छयैव एको भाग उर्वरितः कृतः । तथा भगवता कन्या भविष्यतीत्युक्तत्वाच्च ततः सा जज्ञे । 'अभवच्चापरं खण्डं वामहस्ते तथा किल । दैवयोगादयं भाग एको दृष्टः शतात्परः ॥ एषा ते सुभगा कन्या भविष्यति यथेप्सिता ॥' इत्यादिपर्ववचनादिति भावः [१३०.१६-१८] ॥३६-४८॥

**वरदराजीया–** शतात्मना शतत्वेन विभेदिताः पृथक्कृताः शतं शतसङ्ख्याकाः सुयोधनो दुर्योधनो आदिर्येषां ते तथा । अन्वहं एकस्मिन् दिने एक इति क्रमेण बभूवुः जाताः । शतोत्तरा शताधिका दुःशला नाम कन्या चासीत् ॥३६॥

**अनन्तभट्टीया–** शतात्मना विभेदिताः शतं सुयोधनादयः अन्वहं एकैकस्मिन् दिने एकैक इत्यर्थः ॥

**जनार्दनीया–** शतात्मना शतधा विभेदिताः विभागं प्रापिताः । एते सुयोधनादयः शतं शतसङ्ख्याका इत्यर्थः । अन्वहं प्रतिदिनं ततो घटेभ्यः बभूवुः जाताः । शतेभ्यः शतभागेभ्यः उत्तरा अधिका उर्वरिता या मांसपेशी तस्याः सकाशात्, दुःशला नाम्नी कन्या बभूव । व्यास उवाच– 'पूर्णं पुत्रशतं त्वेतन्न मिथ्या वागुदाहृता । दौहित्रयोगाय भागैकः परिशिष्टः शतात् परः ॥ एषा ते सुभगा कन्या भविष्यति यथेप्सिता ॥' [आदि.१३०.१७-१८] इति । तथा 'मांसपेश्यास्ततो राजन् क्रमशः कालपर्यायात् । जाताः' [१२९.३८] इत्यादिपर्ववाक्याद् उक्तोऽर्थोऽवगन्तव्यः ॥३६॥

**अतिविशद–** शतात्मना विभेदिता इत्यत्र एकाधिकशतात्मनेति अर्थः । 'शतोत्तरा च दुःशला' इति उत्तरवाक्यात् तथाङ्गुष्ठपरिमितत्वेनेति ज्ञेयम् । 'अङ्गुष्ठपर्वमात्रेण भागानां पृथगेव तु । एकाधिकशतम्...॥' इत्यादिपर्ववचनात् ॥३६॥

**चट्टि–** शतात्मना शतधा विभेदिताः विभागं प्रापितास्ते सुयोधनादयः शतं शतसङ्ख्याका इत्यर्थः । अन्वहं प्रतिदिनं ततो घटेभ्यो बभूवुः जाताः । शतोत्तराः शतभागेभ्यः उर्वरितभागाज्जाता दुःशला दुःशलानाम्नी कन्यका चासीत् ॥३६॥

**स देवकार्यसिद्धये ररक्ष गर्भमीश्वरः ।**
**पराशरात्मजो [१]विभुर्विचित्रवीर्यजोद्भवम् ॥३७॥**

---

१. 'प्रभुः' इति चट्टिपाठः ।

**वरदराजीया–** सः पराशरात्मजः ईश्वरो व्यासो देवकार्यसिद्धये पूर्वोक्तदैत्यसंहरणाख्यदेवकार्यसिद्धये विचित्रवीर्यजात् धृतराष्ट्रात् उद्भवतीति तं गर्भं ररक्ष ।।३७।।

**अनन्तभट्टीया–** देवकार्यसिद्धये सुयोधनादीन् निमित्तीकृत्य अनेकदुष्टनिधनलक्षणसुरकार्यसिद्धये ।।३७।।

**जनार्दनीया–** अकाले पतितं गर्भं कथं ररक्षेत्यत आह– **विभुरिति** ।।३७।।

**भावचन्द्रिका–** देवकार्यसम्पादने ईश्वरः रक्षणे प्रभुः । पुत्रगर्भत्वाच्च रक्षणमित्याह– **विचित्रेति** ।।

**चट्टि–** अकाले पतितं गर्भं कथं ररक्षेत्यत आह– **प्रभुरिति** ।। प्रभुः पराशरात्मजः ईश्वरः सः व्यासः देवकार्यसिद्धये पूर्वोक्तदैत्यसंहारणाख्यदेवकार्यसिद्धये विचित्रवीर्यात् जातात् धृतराष्ट्रात् उद्भवः उत्पत्तिर्यस्य तं गर्भं ररक्ष ।।३७।।

**कलिः सुयोधनोऽजनि प्रभूतबाहुवीर्ययुक् ।**
**प्रधानवायुसन्निधेर्बलाधिकत्वमस्य तत् ।।३८।।**

**वरदराजीया–** तत्र कलिः सुयोधनो दुर्योधननामा अजनि जातः । कथम्भूतः प्रभूतेन महता बाहुवीर्येण बाहुबलेन युक्तः । अस्य सुयोधनस्य तद्बलाधिकत्वं प्रधानवायोः बलदेवतायाः सन्निधेर्जातम् ।।

**अनन्तभट्टीया–** तत् बलाधिकत्वं प्रधानवायुसन्निधेर्निमित्तात् ।।३८।।

**जनार्दनीया–** कलिः प्रभूतेन उत्कृष्टेन, बाहुवीर्येण युक् युक्तः सन् सुयोधनः तन्नामा अजनि । अस्य सुयोधनस्य तत् पूर्वोक्तं बलाधिकत्वं प्रधानवायोः श्रीमुख्यप्राणनाथस्य सन्निधेः सन्निधाननिमित्तात् ।।

**चट्टि–** कलिः प्रभूतेनोत्कृष्टेन बाहुवीर्येण बाहुबलेन युग् युक्तस्सुयोधनः तन्नामा अजनि । अस्य सुयोधनस्य तद्बलाधिकत्वं प्रधानवायोः बलदेवतायाः सन्निधेः सन्निधाननिमित्तात् ।।३८।।

**पुरा हि मेरुमूर्धनि त्रिविष्टपौकसां वचः ।**
**वसुन्धरातलोद्भवोन्मुखं श्रुतं दितेः सुतैः ।।३९।।**

**व्यासतीर्थीया–** युगपद्भूतले कल्यादिसर्वासुरोत्पत्तौ निमित्तजिज्ञासायामाह– **पुरेति** ।।३९-४५।।

**वेदाङ्गतीर्थीया–** युगपत् भूतले कल्यादिसर्वासुरोत्पत्तौ निमित्तजिज्ञासायामाह– **पुरेत्यादिना** ।। ।।३९-४४।।

**वरदराजीया–** एतादृशस्य कलेरुत्पत्तौ निमित्तमाह– **पुरेति** ।। मेरोर्मूर्धनि शिरसि त्रिविष्टपं स्वर्गः

ओको गृहं येषां ते देवाः तेषां वसुन्धतरातले भूतले उद्भवोऽवतार तदुन्मुखं तत्कर्तव्यताविषयं वचो वाक्यं दितेः सुतैः दैत्यैः श्रुतम् ।।३९।।

**अनन्तभट्टीया–** युगपत् भुवि कल्याद्यसुरोत्पत्तौ किं निमित्तमित्यत आह– **पुरेति** ।। वसुन्धरातलोद्भवोन्मुखं भूमौ जननविषयम् ।।३९।।

**जनार्दनीया–** उक्तविशिष्टबलवतः कलेरुत्पत्तौ कारणमाह– **पुरेति** ।। पुरा मेरोः मेरुपर्वतस्य मूर्धनि उपरिभागे वसुन्धरातले भूतले उद्भवाय उत्पत्तये उन्मुखं उत्कण्ठितम् । त्रिविष्टपे स्वर्गे, ओकांसि मन्दिराणि येषां ते तथा, तेषाम् । त्रिविष्टपं ओकः आश्रयो येषामिति वा, तेषाम् । देवानां वचः श्रुतम् । 'ओकसि मन्दिराश्रयौ' इति यादवः ।।३९।।

**चट्टि–** एतादृशस्य कलेरुत्पत्तौ निमित्तमाह– **पुरेति** ।। पुरा मेरोः पर्वतस्य मूर्ध्नि शिखरे त्रिविष्टपं स्वर्गः ओकः गृहं आश्रयो वा एषां ते तथा । 'ओकसी मन्दिराश्रयौ' इति यादवः । तेषां वसुन्धरातले भूतले उद्भवायोत्पत्तये उन्मुखं तत्कर्तव्यताविषयं वचः वाक्यं दितेस्सुतैः दैत्यैः श्रुतम् ।।३९।।

**ततस्तु ते त्रिलोचनं तपोबलादतोषयन् ।**
**वृतश्च देवकण्टको ह्यवध्य एव सर्वतः ।।४०।।**

**वादिराजीया–** देवकण्टकः कलिः सर्वस्य अवध्यो भवत्विति वरः तुष्टात् त्रिलोचनात् सर्वैरसुरैः वृतश्च । कलेः दैत्यगणाग्रेसरत्वात् स्वयं तपस्तप्त्वा तच्छ्रेय एव प्रार्थयामासुरिति भावः ।।४०-४२।।

**वरदराजीया–** ततस्तच्छ्रवणानन्तरं ते दैत्याः त्रिलोचनं रुद्रं तपोबलात् तपःसामर्थ्यात् अतोषयन् तुतुषुः । तुष्टात् रुद्रात् सर्वतोऽवध्यः देवानां कण्टको विरोधी वृतः प्रार्थितः प्राप्तश्च ।।४०।।

**अनन्तभट्टीया–** देवकण्टकः सर्वतः सर्वैरवध्यः वृतः ।।४०।।

**जनार्दनीया–** ततस्ते दैत्याः । त्रिलोचनं त्र्यम्बकं अतोषयन् तोषयामासुः । दैत्यैः, रुद्रादिति वाक्यशेषः । देवकण्टकः देवद्विट् कलिः सर्वतः सर्वेभ्यः अवध्यः एव वृतः याचितः हि यस्मात्ततः ।।

**चट्टि–** ततस्तच्छ्रवणानन्तरं ते दैत्याः त्रिलोचनं रुद्रं तपोबलात् तपःसामर्थ्याद् अतोषयन् । दैत्यैः रुद्रादिति वाक्यशेषः । देवकण्टकः देवद्विट् कलिः सर्वतः सर्वेभ्यो अवध्य एव वृतो याचितः ।।४०।।

**[१]वरादुमापतेस्ततः कलिः स देवकण्टकः ।**
**बभूव वज्रकाययुक् सुयोधनो महाबलः ।।४१।।**

१. 'आराध्य वरदं देवं भगनेत्रहरं हरम् । गान्धारी किल पुत्राणां शतं लेभे वरं शुभा।।' इति भारते। १.११९.१० ।

**वरदराजीया**— ततः कारणात् उमापतेः रुद्रस्य वरात् देवकण्टकः स कलिः वज्रकाययुक् वज्रवद्दृढदेहयुक्तो वायुसन्निधेर्महाबलः सुयोधनो बभूवेत्यर्थः ॥४१॥

**अनन्तभट्टीया**— ततः अनन्तरं देवकण्टकः सः कलिः उमापतेर्वरात् अवध्यः महाबलः वज्रकाययुक् सुयोधनो बभूव ॥४१॥

**जनार्दनीया**— उमापतेर्वरात् देवकण्टकः कलिः वज्रकाययुक् वज्रवत् कठिणदेहयुक्तः ॥४१॥

**चट्टि**— हि यस्मात् ततः उमापतेः वराद् देवकण्टकः सः कलिः वज्रकाययुक् वज्रवत् कठिनदेहयुक्तः सर्वतः अवध्य एव महाबलः नाम्ना सुयोधनो बभूव । घृताभिपूर्णकुम्भत इत्यस्य सर्वत्र सम्बन्धः ॥

**अवध्य एव सर्वतः सुयोधने समुत्थिते ।**
**घृताभिपूर्णकुम्भतः स इन्द्रजित् समुत्थितः ॥४२॥**

**वरदराजीया**— एवं सुयोधने घृताभिपूर्णात् कुम्भात् घटात् उत्थिते सति उत्पन्ने सति प्रसिद्धः इन्द्रजित् तस्मादेव समुत्थितः उत्पन्नोऽभूत् ॥४२॥

**अनन्तभट्टीया**— सः प्रसिद्धः इन्द्रजित्समुत्थितः ॥४३॥

**जनार्दनीया**— सर्वतोऽवध्य इति यावत् । नाम्ना सुयोधनो बभूव । घृताभिपूर्णकुम्भत इति सर्वत्र सम्बन्धः.। प्रसिद्धो रावणपुत्र इन्द्रजित् समुत्थितः जातः ॥४२॥

**चट्टि**— एवं सुयोधने घृताभिपूर्णात् कुम्भात् घटात् उत्थिते उत्पन्ने सति सः प्रसिद्धो रावणपुत्रः इन्द्रजित् समुत्थितः ॥४१-४२॥

**स दुःखशासनोऽभवत् ततोऽतिकायसम्भवः ।**
**स वै विकर्ण उच्यते ततः खरोऽभवद् बली ॥४३॥**

**वादिराजीया**— दुःखेन शासनं शिक्षा यस्य सः दुःखशासनः । दुःशासनशब्दस्य व्याख्यानमेतत् ॥४३-४४॥

**वरदराजीया**— स दुःखशासनो दुःशासननामा अभवत् । ततोऽनन्तरं अतिकायस्य सम्भव उत्पत्तिरभवत् । सोऽतिकायो विकर्णनामा उच्यते । ततोऽनन्तरं बली बलवान् खरो नाम राक्षसोऽभवत् ॥

**अनन्तभट्टीया**— दुःखशासनमिति दुःशासनशब्दार्थकथनम् ॥४३॥

**जनार्दनीया–** स इन्द्रजित् दुःखशासनः दुःशासननामा अभवत् । ततः अतिकायस्य सम्भवः उत्पत्तिरभूत् । स इत्यादि स्पष्टोऽर्थः ।।४३।।

**चट्टि–** सः इन्द्रजित् दुःखशासनः दुःशासननामा अभवत् । ततो अतिकायस्य सम्भवः उत्पत्तिरभूत् । सः अतिकायः विकर्णनामा सन् उच्यते । ततः बली बलवान् खरः अभवत् ।।४३।।

**स चित्रसेननामकस्तथाऽपरे च राक्षसाः ।**
**बभूवुरुग्रपौरुषा विचित्रवीर्यजात्मजाः ।।४४।।**

**वरदराजीया–** स खरो चित्रसेननामको अभूत् । तथा तद्वत् अपरे राक्षसा विचित्रवीर्यजस्य धृतराष्ट्रस्य आत्मजा, उग्रं पौरुषं पराक्रमो येषां ते बभूवुरभवन् ।।४४।।

**जनार्दनीया–** तथा एवमेव । अपरे अन्ये राक्षसाः विचित्रवीर्यजस्य धृतराष्ट्रस्य आत्मजा बभूवुः ।।

**चट्टि–** सः खरः अत्र चित्रसेननामकोऽभवत् । तथा एवमेवोग्रपौरुषाः अपरे अन्ये राक्षसाः विचित्रवीर्यजस्य धृतराष्ट्रस्यात्मजाः बभूवुः ।।४४।।

**समस्तदोषरूपिणः शरीरिणो हि तेऽभवन् ।**
**मृषेति नामतो हि या बभूव दुश्शलाऽऽसुरी ।।४५।।**

**वेदाङ्गतीर्थीया–** शरीरिणः घटगतविभागेभ्यो निष्पन्नशरीराः । दुर्योधनादयः समस्तदोषरूपिणः समस्तदोषात्मकाः अभवन् । या पूर्वं नाम्ना मृषेत्यासुरी सा दुःशला बभूव ।।४५।।

**वादिराजीया–** शरीरिणो हि तेऽभवन्नित्यत्र घटस्थमांसपिण्डादुत्पन्नशरीरवन्तः येऽभवन् ते दुर्योधनादयः समस्तदोषरूपिण इति सम्बन्धः । मूलरूपे मृषेति नामतो या आसुरी सा दुःशला बभूव ।।४५।।

**वरदराजीया–** कल्याद्याः समस्ताः दोषाः अज्ञानमिथ्याज्ञानाद्याः रूपं अभिमन्यमानमेषामस्तीति तथोक्ताः । शरीरिणः शरीरधारिणोऽभवन् । शतोत्तरा दुःशलेत्युक्तं विवृणोति– **मृषेति** ।। मृषाभिमानित्वात्तन्नामधेया आसुरी असुरस्त्री या सा दुश्शला बभूव ।।४५।।

**अनन्तभट्टीया–** समस्तदोषरूपिणः समस्तदोषा इत्यर्थः । शरीरिणः दोषा एव विग्रहाः शरीरा अभूवन्नित्यर्थः । या नामतः मृषेति मृषाभिमानिनी आसुरी कुहूप्रावेशसंयुता...दुःशला ...अमावास्याभिमानिप्रवेशयुक्ता सैव दुःशला बभूव । अथवा नाम तस्याः दुःशलेति सम्बन्धः । मांसपिण्डस्य एकोत्तर...मिति द्रष्टव्यम् ।।४५।।

**जनार्दनीया–** समस्तदोषरूपिणः अज्ञानहरिद्वेषादिसर्वदोषाभिमानिनः ते दुर्योधनाद्याः शरीरिणः दोषरूपशरीरधारिणः अभवन् हि । मृषाभिमानित्वात् नामतो मृषा इति या आसुरी असुरस्त्री सा कुहूप्रवेशसंयुता । 'नष्टेन्दुकला अमावास्या कुहूः' तदभिमानिदेवताप्रवेशेन आवेशेन संयुता । दुःशला नाम्नी कन्या बभूव ।।४५।।

**भारतश्री–** शरीरिणो मनुष्याः ।।४५।।

**चर्द्दि–** समस्तदोषरूपिणो अज्ञानहरिद्वेषादिसर्वदोषाभिमानिनस्ते कल्याद्याः शरीरिणः दोषरूपशरीरधारिणो अभवन् हि । तथाचोक्तम्– पौलस्त्याः भ्रातरश्चास्य जज्ञिरे मनुजेष्विह । शतं दुर्योधनादीनां सर्वेषां कृतकर्मणाम् । दुर्योधनो युयुत्सुश्च राजा दुःशासनस्तथा ।। इत्यादिपर्वणि । मृषाभिमानित्वान्नामतो मृषेति या आसुरी असुरस्त्री सा कुहूप्रवेशसंयुता । नष्टेन्दुकला अमावास्याभिमानिनी देवता कुहूः । तस्याः प्रवेशेन संयुता युक्ता दुःशलानाम्नी कन्या बभूव । यया मृषया आर्जुनेः अर्जुनपुत्रस्य अभिमन्योः वधार्थं त्रिशूलिने रुद्राय तपः कृतम् । हि यतः ततो वधार्थं सा मृषा अत्र धृतराष्ट्रस्य गृहे जज्ञुषी जाता ।।४५-४६।।

**कुहूप्रवेशसंयुता ययाऽऽर्जुनेर्वधाय हि ।**
**तपः कृतं त्रिशूलिने ततो हि साऽत्र जज्ञुषी ।।४६।।**

**व्यासतीर्थीया–** नष्टेन्दुकलामावास्या कुहूः तस्याभिमानिनी इत्यर्थः ।।४६।।

**वेदाङ्गतीर्थीया–** कुहुप्रवेशसंयुता तदभिमानिदेवताप्रवेशसंयुता । यया मृषाख्यासुर्या आर्जुनेरभिमन्योः । ततः तद्वधार्थं अत्र भुवि जज्ञुषी जाता ।।४६।।

**वादिराजीया–** सा नष्टेन्दुकला कुहूरित्यभिधानात् कुहू अमावास्याभिमानिनी देवता । ययार्जुनेरित्यत्र यया मृषाख्यासुर्या आर्जुनेः अभिमन्योः ।।४६।।

**वरदराजीया–** कथम्भूता कुहूप्रवेशसंयुता नष्टेन्दुकला अमावास्याभिमानिनी देवता कुहूः । तस्याः प्रवेशेन युक्ता यया दुश्शलया आर्जुनेः अर्जुनपुत्रस्याभिमन्योर्वधाय त्रिशूलिने रुद्राय तपःकृतं ततः कारणादत्र भूमौ जज्ञुषी जाता ।।४६।।

**जनार्दनीया–** यया मृषया अर्जुनापत्याभिमन्योः वधाय वधार्थं त्रिशूलिने रुद्राय तपः कृतम् । हि यतस्ततो वधार्थं सा मृषाऽत्र धृतराष्ट्रगेहे जज्ञुषी जाता । 'जन जनने' क्वसुः, द्वित्वम्, 'उगितश्च' [सि.कौ.४५५] इति ङीप् । 'वसोः सम्प्रसारणम्' [सि.कौ.४३५] इति वस्य उः । 'गमहनजनखनघसां

लोपः ङ्क्त्यनङ्गि' [सि.कौ.२३६३]इति अकारस्य लोपः । 'स्तोः श्चुना श्चुः' [सि.कौ.१११] इति ञकारः । ज्ञोः ज्ञः । 'आदेशप्रत्यययोः' [कौ.२१२] इति सस्य षत्वम् ।।४६।।

**ताम्रपर्णीया–** नष्टेन्दुकलामावास्या कुहू तदभिमानिदेवतावेशयुक्तेत्यर्थः ।।४६-४७।।

**भारतश्री–** यया आर्जुनेः वधाय तपः कृतम् । तत्कारणं तु ग्रन्थान्तरादवगन्तव्यम्।।४६।।

**तयोदितो हि सैन्धवो बभूव कारणं वधे ।**
**स कालकेयदानवस्तदर्थमास भूतले ।।४७।।**

**व्यासतीर्थीया–** तदर्थमार्जुनेर्वधार्थम् ।।४७।।

**वेदाङ्गतीर्थीया–** अभिमन्योः दुःशासनपुत्रेण हतत्वात् कथं तदर्थं दुःशला जाता इत्यतः दुःशलोदितः जयद्रथेन पाण्डवनिरोधात् असहायोऽसौ दुःशासनपुत्रेण हत इति दुःशलायाः अभिमन्युवधकारणत्वमभिप्रेत्याह– **तयोदित इति** ।। कारणं बभूव व्यूहद्वारिपाण्डवनिरोधादिति भावः । सः जयद्रथः कालकेयदानवः पूर्वमिति शेषः । कालकेयगणेषु कश्चिद् दानवः ।।४७।।

**वादिराजीया–** कालकेयदानवः कालकेयगणे विद्यमानः कश्चिद्दानवः ।।४७।।

**वरदराजीया–** ननु तया कथं अभिमन्योर्वधः कृत इत्यत आह– **तयोदित इति** ।। परम्परया वधकारणमिति भावः । स सैन्धवः कालकेयगणेषु कश्चिद्दानवः तदर्थमभिमन्युवधार्थं भूतले आस जातः ।।४७।।

**अनन्तभट्टीया–** सैन्धवः आर्जुनेर्वधार्थम् ।।४७।।

**जनार्दनीया–** ननु अभिमन्योः दुःशासनपुत्रेण हतत्वात् कथं तदर्थं दुःशला जाता? इत्यतः दुःशलोदितेन जयद्रथेन पाण्डवनिरोधनादसहायोऽभिमन्युः दुःशासनपुत्रेण हत इति दुःशलायाः अभिमन्युवधकारणत्वमित्यभिप्रेत्याह– **तयोदित इति** ।। तया दुःशलया वधे अभिमन्युवधविषये कारणं बभूव । व्यूहद्वारि पाण्डवनिरोधनादिति भावः । सः सैन्धवः पूर्वं कालकेयदानवः कालकेयगणेषु कश्चित् दानवः । तदर्थं अभिमन्युवधार्थं आस जातः ।।४७।।

**चट्टि–** नन्वभिमन्युवधस्य दुश्शासनपुत्रेण कृतत्वाद् अभिमन्युवधार्थं दुश्शला जातेति कथमुच्यत इत्यतः दुश्शलोदितेन जयद्रथेन पाण्डवनिरोधने कृते असहायो अभिमन्युः दुश्शासनपुत्रेण हत इति दुश्शलायाः अभिमन्युवधकारणत्वमित्यभिप्रेत्याह– **तयोदित इति** ।। तया दुश्शलयोदितः सैन्धवः वधे अभिमन्युवधविषये कारणं बभूव । व्यूहद्वारि पाण्डवनिरोधनादिति भावः । सैन्धवः पूर्वं क इत्यत

आह– **स इति** ।। सः सैन्धवः पूर्वं कालकेयदानवः कालकेयगणेषु कश्चिद्दानवः तदर्थमभिमन्युवधार्थं भूतले आस जातः ।।४७।।

**तथाऽऽस निर्ऋताभिधोऽनुजः स निर्ऋतेरभूत् ।**
**स नासिकामरुद्युतो युयुत्सुनामकः कृती ।।४८।।**

**व्यासतीर्थीया–** यः स प्रसिद्धो निर्ऋतेरनुजो निर्ऋताभिधः स आस अभूत् । नासिकामरुद्युतश्चाभूत् ।।४८-४९।।

**वेदाङ्गतीर्थीया–** निर्ऋताभिधः निर्ऋतेरनुजः आस । तथाशब्दश्चार्थः । स च अभूत् भुव्युत्पन्नः । कीदृशः स नासिकामरुद्युतः । सः कस्य पुत्र इत्यत उक्तम्– **स चेति** ।।४८-५२।।

**वादिराजीया–** तथा निर्ऋतेः देवस्यानुजो यः सः निर्ऋताभिधः आस देवेष्वास सः अभूत् भूमावभूत् । स नासिकामरुद्युत इत्यत्र नासिकामरुत् नासिकागोलकाभिमानी मरुत् तेन युक्त इत्यर्थः ।।४८-५१।।

**वरदराजीया–** तथाशब्दः समुच्चये । पूर्वं निर्ऋताभिधो यो देव आस निर्ऋतेरनुजः । स च कृती कृतं पुण्यमस्यास्तीति कृती । अतो नासिकाश्वासाभिमानिना मरुता वायुना युक्तो युयुत्सुनामकोऽभूत् ।।

**अनन्तभट्टीया–** निर्ऋतेरमास । सः युयुत्सुनामकः युयुत्सुनाम्ना अभूत् । वैश्यकन्यकोदरोद्भवः । धृतराष्ट्र... जात इत्यर्थः । कृतं पुण्यमस्यास्तीति कृती । सञ्जीव इत्यर्थः ।।४९।।[१]

**जनार्दनीया–** तथाशब्दः कथान्तरसमुच्चयार्थः । निर्ऋतेः कोणाधिपतिनिर्ऋतिनाम्नो राक्षसस्य अनुजो यः स निर्ऋत इति अभिधा आह्वयं यस्य स तथा । आस बभूव अभूत् । सः निर्ऋतः नासिकामरुता नासिकाभिमन्यमानवायुना युतः, कृती सत्कर्मणि निपुणः युयुत्सुनामकः अभूज्जातः । भुवीति शेषः ।।४८।।

**ताम्रपर्णीया–** ।। **तथेति** ।। स प्रसिद्धो य निर्ऋतेरनुजो निर्ऋताभिध आस । स नासिकामरुद्युतस्सन् युयुत्सुनामकः कृती चाभवदित्यर्थः । यद्वा यो निर्ऋतेरनुजो निर्ऋताभिधः आस स युयुत्सुनामको अभवत् । स युयुत्सुः नासिकामरुद्युतः कृती कुशल इत्यर्थः । अथवा यो निर्ऋतस्यानुजो निर्ऋताभिधः सः युयुत्सुनामकोऽभूत् । स युयुत्सुः नासिकामरुद्युतः स युयुत्सुः कृती स युयुत्सुः आम्बिकेयवीर्यजश्चेत्यादि-योजना ।।४८-५२।।

---

१. यो नासिकामरुद्युतस्स युयुत्सुनामकोऽभूत् । युयुत्सुः यो निर्रुतेरनुजो निर्रुतः स इति योज्यम् । इति हो.पुस्तकपाठः

**अतिविशद–** तथा स निरृक्रताभिधोऽनुजः स निरृक्रतेरभूत् । स नासिकामरुद्युतो युयुत्सुनामकः कृती इत्यस्मिन् श्लोके तथा स निरृक्रतेत्यत्र स इत्येकं पदं स निरृक्रतेत्यत्र अपरम् । स नासिकामरुद्युत इत्यत्रान्यत् । एवं स स स इति त्रीणि पदानि । तत्रैकेन चरितार्थत्वात् पुनर्द्वयोर्वैय्यर्थ्यमिति चेन्न । यत्तदोर्नित्यसम्बन्धात् । यः निरृक्रताभिधः आस सः निरृक्रतेरनुजः सः नासिकामरुद्युतः सन् तथा कृती सन् युयुत्सुनामकः अभूदिति योजनायां कस्यापि वैय्यर्थ्याभावात् । एकस्य त्रिवारं गृहीतत्वेन शङ्काया एवानुपपत्तेश्च । यः निरृक्रताभिधः निरृक्रतेरनुजः सः नासिकामरुद्युतः कृती युयुत्सुनामकोऽभूदित्येकान्वये द्वयोर्वैयर्थ्याच्च । एकान्वये आद्यस्य स इत्यस्य प्रसिद्धार्थत्वं द्वितीयस्य साररूपार्थकत्वं 'नित्यं हीनोऽखिलैर्दोषैः साररूपो यतो विभुः । हंस' इत्युक्तत्वात् सज्जनस्वरूपस्य साररूपत्वात् न विरोधः ।।

**चट्टि–** तथाशब्दः कथान्तरसमुच्चयार्थः । निरृक्रतेः कोणाधिपतिनिरृक्रतिनाम्नो राक्षसस्य अनुजः निरृक्रत इत्यभिधा आह्वयं यस्य स तथा य आस पूर्वमभूत् । सः निरृक्रतः नासिकामरुद्युतः नासिकाश्वासाभिमानिना मरुता वायुना युतः कृती सत्कर्मणि निपुणः युयुत्सुनामकः अभूज्जातः, भुवीति शेषः ।।४८।।

**स चाऽम्बिकेयवीर्यजः सुयोधनादनन्तरः ।**
**बभूव वैश्यकन्यकोदरोद्भवो हरिप्रियः ।।४९।।**

**मधुसूदनीया–** ।। **स चाम्बिकेयेति** ।। वैश्यकन्याग्रहणे किं निमित्तमित्यतः 'संवत्सरद्वयं तं तु गान्धारी गर्भमाहितम् । अप्रजा धारयामास ततस्तां दुःखमाप्नुयात् ।।' इत्यादिपर्ववचनाच्च [१२९.२५] गान्धार्या वर्षद्वयपर्यन्तं गर्भस्य धृतत्वेन तस्या रमणानर्हत्वात् वैश्यकन्यारमणं कृतम् । तेन युयुत्सुरुत्पन्नः । 'तां भार्यां क्लिश्यमानां च वर्धमाने तथोदरे । वैश्या सा त्वम्बिकापुत्रं कन्या परिचचार ह ।। तया समभवद्राजा धृतराष्ट्रो यदृच्छया । तस्यामजनयत्पुत्रं युयुत्सुं नाम भारत ।।' इत्यादिपर्ववचनादिति [१२९.८५-८६] विशेषार्थतुशब्दार्थश्चकारः ।।४९-५२।।

**वरदराजीया–** सोऽपि आम्बिकेयस्य धृतराष्ट्रस्य वीर्यजः औरसः पुत्रः सुयोधनादनन्तरः सुयोधनोत्पत्त्यनन्तरमेवोत्पन्नः । एकोदरत्वभ्रान्तिं निवारयति– **वैश्येति** ।। धृतराष्ट्रात् वैश्यस्त्रीजठरोद्भवो बभूवेत्यर्थः । हरेः प्रियो भक्तः ।।४९।।

**जनार्दनीया–** स च सोऽपि युयुत्सुः आम्बिकेयस्य धृतराष्ट्रस्य वीर्याद्रेतसो जातः । स च बभूवेति सर्वत्र सम्बन्धः । सुयोधनादन्तरः सुयोधनस्यानुजः, दुःशासनस्याग्रज इत्यर्थः । वैश्यकन्यकायाः धृतराष्ट्रोढव्यवैश्यस्त्रियः उदरादुद्भवः उत्पत्तिर्यस्य स तथा । हरिः प्रियो यस्य, हरेः प्रियो वा, हरिभक्त इति यावत् ।।४९।।

**भावचन्द्रिका–** गर्भभारभृतया गान्धार्या पतिसेवार्थं संनियोजितया वैश्यकन्यया धृतराष्ट्रसङ्गः ।।४९।।

**चट्टि–** सः युयुत्सुः आम्बिकेयस्य धृतराष्ट्रस्य वीर्यात् रेतसो जातः सुयोधनादनन्तरः दुर्योधनस्यानुजः दुश्शासनस्य अग्रज इत्यर्थः । वैश्यकन्यकायाः वैश्यस्त्रियः उदराद् उद्भवः उत्पत्तिर्यस्य स तथा । हरिः प्रियो यस्य तथा, हरेः प्रियो वा, हरिभक्तः इति यावत् । बभूव । वैश्यकन्याग्रहणे किं निमित्तमित्यतः– संवत्सरद्वयं तं तु गान्धारीगर्भमाहितम् । अप्रजा धारयामास ततस्तां दुःखमाविशत् ।। इत्यादिपर्ववाक्यात् गान्धार्या वर्षद्वयपर्यन्तं गर्भस्य धृतत्वेन तस्याः रमणानर्हत्वेन वैश्यकन्यारमणं कृतम् । तत्र युयुत्सुरुत्पन्नः । 'तां भार्यां क्लिश्यमानां च वर्धमाने तथोदरे । वैश्या सा त्वम्बिकापुत्रं कन्या परिचचार ह ।। तया समभवत् राजा धृतराष्ट्रो यदृच्छया । तस्यामजनयत् पुत्रं युयुत्सुं नाम भारत ।।' इत्यादिपर्ववचनादिति विशेषार्थकस्तुशब्दार्थश्चकारः ।।४९।।

**युधिष्ठिरे जात उवाच पाण्डुर्बाह्वोर्बलाज्ज्ञानबलाच्च धर्मः ।**
**रक्ष्योऽन्यथा नाशमुपैति तस्माद् बलद्वयाढ्यं [१]प्रसुवाऽऽशु पुत्रम् ।।५०।।**

**व्यासतीर्थीया–** सर्वोत्तमत्वाद्बलद्वयाढ्यं वायुं पुत्रं प्रसुवेति ।।५०।।

**वरदराजीया–** इदानीं भीमसेनोत्पत्तिं वक्तुमाह– **युधिष्ठिर इति** ।। पाण्डुरुवाच कुन्तीं प्रतीति शेषः । किमिति बाह्वोर्बलात् ज्ञानबलाच्च धर्मो रक्ष्यो भवति । अन्यथा बलद्वयाभावे धर्मो नाशमुपैति । धर्मप्रतिपक्षनिवर्हणाभावादुपदेशकाभावाच्चेति भावः । तस्मात् कारणात् बलद्वयेन बाहुबलेन ज्ञानबलेन च आढ्यं श्रेष्ठं पुत्रं आशु प्रसुव उत्पादय ।।५०।।

**जनार्दनीया–** वाय्वतारप्रसङ्गमाह– **युधिष्ठिरेत्यादिना** ।। रक्ष्यः रक्षितुं योग्यः । अन्यथा तद्द्वयं विना धर्मः नाशमुपैति यस्मात् । तस्माद्बलद्वयेनाढ्यं सम्पन्नं पुत्रमाशु जनय प्रसुव ।।५०।।

**चट्टि–** भीमसेनोत्पत्तिं वक्तुं तदुपोद्घातमाह– **युधिष्ठिर इत्यादिना** ।। युधिष्ठिरे जाते सति पाण्डुरुवाच । कुन्तीं प्रतीति शेषः । किमिति । बाह्वोः बलात् ज्ञानबलात् च धर्मः रक्ष्यः रक्षितुं योग्यः । अन्यथा बलद्वयाभावे धर्मो नाशमुपैति । धर्मप्रतिपक्षनिबर्हणाभावात् उपदेशकाभावाच्चेति भावः । तस्मात् कारणात् बलद्वयेनाढ्यं सम्पन्नं पुत्रं आशु प्रसुव जनय ।।५०।।

**यज्ञाधिको ह्यश्वमेधो मनुष्यदृश्येषु तेजस्स्वधिको हि भास्करः ।**
**वर्णेषु विप्रः सकलैर्गुणैर्वरो देवेषु वायुः पुरुषोत्तमादृते ।।५१।।**

---

१. 'जनयाऽऽशु' इति जनार्दनीयपाठः ।

**व्यासतीर्थीया–** वायोः सर्वोत्तमत्वमुक्तं तत्कुत इत्यत्र 'अश्वमेधः क्रतुश्रेष्ठ' इत्याद्यागममर्थतः पठति– **यज्ञाधिक इति** ।।५१।।

**वरदराजीया–** कस्मादित्यपेक्षायां वायोरेवेत्याह– **यज्ञाधिक इत्यादिना** ।। हिशब्देन 'अश्वमेधः क्रतुश्रेष्ठ' इत्यादिप्रसिद्धोऽयमित्यर्थः इति सूचयति । यज्ञेषु अधिकः । चन्द्रादितेजोव्यावृत्त्यर्थं मनुष्येत्युक्तम् । मनुष्याणां दृष्टिगोचरेषु तेजस्सु तेजस्विषु भास्करोऽधिको हि । वर्णेषु चतुर्षु विप्रोऽधिकः । वायुः पुरुषोत्तमात् नारायणादृते देवेषु मध्ये सकलैः बलज्ञानादिभिर्गुणैर्वरः उत्तमः ।।५१।।

**अनन्तभट्टीया–** ...इत्यर्थम् । मनुष्यदृश्येष्वित्युक्तम् । पुरुषोत्तमादित्युपलक्षणम् । श्रीब्रह्मणो... ।।

**जनार्दनीया–** तादृशः कः? इत्यत आह– **यज्ञेत्यादिना** ।। इन्द्रादितेजोव्यावृत्त्यर्थं मनुष्यदृश्येषु इत्युक्तम् । मनुष्याणां दृश्येषु द्रष्टुं योग्येषु । वायुः पुरुषोत्तमादृते पुरुषोत्तमं विनेत्यर्थः । सकलैः गुणैः वरः श्रेष्ठः ।।५१।।

**अतिविशद–** 'अश्वमेधः क्रतुः श्रेष्ठः ज्योतिःश्रेष्ठो दिवाकरः । ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठस्तु मारुतः ।।' इति भारतश्लोके यत्र विप्रतिपत्तिः तत्र व्याख्यानं 'यज्ञाधिको अश्वमेध' इत्यनेन पद्येन कृतमिति ज्ञातव्यम् । तत्रापि प्रथमपादे व्याख्येयता नास्तीति सूचनार्थमेतत्प्रथमचरणे हिशब्दः ।।५१।।

**चट्टि–** एतादृशः क इत्यत आह– **यज्ञाधिक इत्यादिना** ।। अश्वमेधः यज्ञाधिकः यज्ञेष्वधिको हि । हिशब्देन 'अश्वमेधः क्रतुश्रेष्ठ' इत्यादिस्मृतिप्रसिद्धोऽयमर्थ इति सूचयति । इन्द्रादितेजोव्यावृत्त्यर्थं मनुष्यदृश्येष्वित्युक्तम् । मनुष्याणां दृश्येषु द्रष्टुं योग्येषु तेजस्सु भास्करः सूर्यो अधिको हि । वर्णेषु चतुर्षु विप्रः अधिकः । देवेषु वायुः पुरुषोत्तमादृते पुरुषोत्तमं विनैवेत्यर्थः । सकलैः बलज्ञानादिभिः गुणैः वरः श्रेष्ठः ।।५१।।

**विशेषतोऽप्येष पितैव मे प्रभुर्व्यासात्मना विष्णुरनन्तपौरुषः ।**
**अतश्च ते श्वशुरो नैव योग्यो दातुं पुत्रं वायुमुपैहि तं प्रभुम् ।।५२।।**

**व्यासतीर्थीया–** वायोरप्यधिको भगवान् विष्णुः ततः पुत्रं प्राप्नुयामित्यत आह– **विशेषत इति** ।। भगवतः सर्वपितृत्वाद्विशेषत इत्युक्तम् ।।५२-५३।।

**वादिराजीया–** विशेषतोऽप्येष पिता इत्यत्र विशेषतः मम मातृयोनौ वीर्यसेचकाख्यविशेषेण पिता नतु विचित्रवीर्यवत् नाममात्रेणेत्यर्थः ।।५२-५३।।

**वरदराजीया–** एषः विष्णुः मे पितैव विशेषतोऽपि व्यासात्मकः पिता । अतो मत्पितृत्वात् ते

श्वशुरः तस्मादनन्तपौरुषोऽपि व्यासः ते स्नुषायाः पुत्रं दातुं त्वयि पुत्रं उत्पादयितुं योग्यो नैव । तत्तस्मात् तं प्रभुं पूर्वोक्तबलद्वयोपेतं वायुं मुख्यप्राणं उपैहि प्रार्थय ।।५२।।

**जनार्दनीया–** तर्हि पुरुषोत्तममेव पुत्रार्थं प्राप्नुयामीत्यत आह– **विशेषत इति** ।। हरेः सर्वजगत्पितृत्वात् विशेषतः इत्युक्तम् । एषः विष्णुः विशेषतः व्यासात्मना व्यासस्वरूपेण मे मम पितैव । यतः अतः ते तव श्वशुरः पुत्रं दातुं उत्पादयितुमित्यर्थः । नैव योग्यः । अतः प्रभुं वायुमुपैहि प्राप्नुहि ।।५२।।

**चट्टि–** तर्हि पुरुषोत्तममेव पुत्रार्थं प्राप्नुयामित्यत आह– **विशेषत इति** ।। हरेः सर्वजगत्पितृत्वात् विशेषत इत्युक्तम् । अनन्तपौरुषः प्रभुः एषः विष्णुः व्यासात्मना व्यासस्वरूपेण च विशेषतः मे मम पिता । यतः अतः ते तव श्वशुरः पुत्रं दातुं उत्पादयितुमित्यर्थः । नैव योग्यः । अतः प्रभुं पूर्वोक्तबलद्वयोपेतं वायुमेव उपैहि प्राप्नुहि । पूर्वार्धस्यैवकारस्य उत्तरार्धे उत्तरार्धचशब्दस्य च पूर्वार्धे च व्यवधानेन कथमन्वयः इत्याशङ्का 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत्' इति शब्दनिर्णयवचनात् परिहार्या ।।५२।।

**इतीरिते पृथयाऽऽहूतवायुसंस्पर्शमात्रादभवद्[1] बलद्वये ।**
**समो जगत्यस्ति न यस्य कश्चिद् भक्तौ च विष्णोर्भगवद्वशः सुतः ।।५३।।**

**वेदाङ्गतीर्थीया–** अभवत् सुतः इति सम्बन्धः ।।५३।।

**मधुसूदनीया–** ।। **संस्पर्शमात्रादभवदिति** ।। ननु संस्पर्शमात्रेण कथं वायुसुतोऽभूत् । रमणादिकमन्तरेण देवानां पञ्चधा सर्जनशक्तिमत्वेन स्पर्शमात्रेणाऽपत्योत्पादनोपपत्तेः । 'सन्ति देवनिकायाश्च सङ्कल्पाज्जनयन्ति ये । वाचा दृष्ट्या तथा स्पर्शात्सङ्घर्षेणेति पञ्चधा ।।' इति भारतवचनादिति बोध्यम् ।।५३-५६।।

**वरदराजीया–** इति उक्तप्रकारेण ईरिते, पाण्डुनेति शेषः । पृथया कुन्त्या हूतः आहूतः वायुः तस्य संस्पर्शाख्यभोगविशेषात् सुतोऽभवदिति सम्बन्धः । कथम्भूतः सुतः यस्य बलद्वये बाहुबलज्ञानबलद्वये विष्णोर्भक्तौ च विषये जगति लोके कश्चित् कोऽपि समो नास्ति । यश्च भगवद्वशः भगवदधीनश्चेत्यर्थः ।।

**अनन्तभट्टीया–** अस्य जगति बलद्वये विष्णोर्भक्तौ च कश्चित् क्वचिदपि समो नास्ति ।।५३।।

**जनार्दनीया–** पाण्डुना इति पूर्वोक्तप्रकारेण ईरिते सति पृथया आहूतः मन्त्रप्रार्थनेन आकारितश्चासौ वायुश्च, तस्य संस्पर्शमात्रात् स्पर्शलक्षणरमणात् सुतोऽभवत् । तदुक्तं भारते– 'सन्ति देवनिकायाश्च संस्पर्शाज्जनयन्ति ये । वाचा दृष्ट्या तथा स्पर्शात् सङ्घर्षेणेति पञ्चधा ।।' इति [आश्र.पर्व.३२.२२]

१. 'लज्जान्विता ततः कुन्ती पुत्रमैच्छन्महाबलम् । तथास्त्विति च तां वायुः समालभ्य दिवं गतः ।।' इति आदिपर्वणि.१२९.५१

कथम्भूतः सुतः? जगति यस्य वायोः बलद्वये बाहुबलज्ञानबलमिति द्वये समः कश्चित्पुरुषः नास्ति । विष्णोर्भक्तौ भक्तिविषये च समो नास्तीत्यर्थः । भगवद्वश इत्यत्र तत्पुरुषे ऋष्यादीनामपि मुक्तामुक्तावस्थायां तन्निष्ठतैवातो न विशेषः । बहुव्रीहौ तु वायोर्भक्त्या भगवान् वायुवश इव इति विशेष अस्त्येवेत्यर्थः ।।

**ताम्रपर्णीया–** ।। **भगवद्वश इति** ।। तेन कुन्तीमन्त्रवशत्वं न मन्तव्यमित्युक्तं भवति ।। ।।५३-५४।।

**अतिविशद–** संस्पर्शमात्रादित्यत्र मात्रशब्दः गर्भवासादिव्यावर्तकः तत्क्षणादुत्पन्न इत्युक्तं भवति । संस्पर्शमात्रात् 'रमणादि विना केवलं हस्तादिस्पर्शमात्रेण बलद्वये अभवत्' इत्यपि वदन्ति । 'सन्ति देवनिकायास्ते सङ्कल्पाज्जनयन्ति ये । वाचा दृष्ट्या तथा स्पर्शात् सङ्घर्षेणेति पञ्चधा ।। इति भारतवाक्यात् । केचित्तु 'रमणव्यावृत्यर्थं संस्पर्शमात्रादित्युक्तम् । परस्त्रीसङ्गे दोषित्वं स्यात् । ऋजुत्वेन वायोर्दोषित्वानुपपत्तिः' इत्याहुः । यदि परस्त्रीरमणे दोषोऽङ्गीक्रियते तर्हि परस्त्रीस्पर्शोऽपि दोषो अपरिहार्य एव । अस्यां मत्सुतो भवत्विति स्पर्शस्यापि दोषहेतुत्वात् । यथोक्तम्– स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।। एतन्मैथुनमष्टाङ्गं प्रवदन्ति विपश्चितः ।। इति । तस्मादृजूनां परमात्माज्ञयैव कारित्वात् न दोष इति ध्येयम् ।।५३।।

**भारतश्री–** शुक्लादिव्यावृत्यर्थं संस्पर्शमात्रादित्युक्तम् । भारतेऽपि कुन्तीमालिङ्ग्य जनयामासेत्युक्तम् । तदभिप्रायोऽयम् ।।५३।।

**भावचन्द्रिका–** संस्पर्शः संयोगः [सम्भोगमात्रतः] ।।५३।।

**चट्टि–** पाण्डुना इति पूर्वोक्तप्रकारेणेरिते सति पृथया आहूतः मन्त्रप्रार्थनेनाहूतश्चासौ वायुश्च संस्पर्शमात्रात् स्पर्शलक्षणरमणात् सुतो अभवत् जज्ञे । कथंभूतः सुतः । जगति यस्य वायोः बलद्वये बाहुबले ज्ञानबलेति द्वये विष्णोर्भक्तौ भक्तिविषये च समः कश्चित् पुरुषो नास्ति । स सुतः भगवद्वशः भगवदधीनश्चेत्यर्थः । ननु संस्पर्शमात्रेण कथं वायुः सुतोऽभूत् रमणादिकमन्तरेणेति शङ्कायां देवानां पञ्चधा सर्जनशक्तिमत्वेन संस्पर्शमात्रेण अपत्योत्पादनोपपत्तेः । 'सन्ति देवनिकायाश्च सङ्कल्पाज्जनयन्ति ये । वाचा दृष्ट्या तथा स्पर्शात् सङ्घर्षेणेति पञ्चधा ।।' इति वचनात् इति बोद्धव्यम् ।।५३।।

**स वायुरेवाभवदत्र [१]भीमनामा भृता माः सकला हि यस्मिन् ।**
**स विष्णुनेशेन युतः सदैव नाम्ना सेनो भीमसेनस्ततोऽसौ ।।५४।।**

१. 'मघे चन्द्रमसा युक्ते सिंहे चाभ्युदिते रवौ । दिवा मध्यगते सूर्ये तिथौ पुण्ये त्रयोदशे ।। पित्र्ये मुहूर्ते सा कुन्ती सुषुवे भीममच्युतम् । यस्मिन्नहनि भीमस्तु जज्ञे भीमपराक्रमः ।। तामेव रात्रिं पूर्वां तु जज्ञे दुर्योधनो नृपः ।।' इति आदिपर्वणि.१२९.६६-६८ ।

**व्यासतीर्थीया–** अभवत्सुतस्ततोऽसौ नाम्ना भीमसेनः ।।५४।।

**वेदाङ्गतीर्थीया–** अत्र भुवि । भीमनामेत्यतः तन्निर्वक्ति– **भृताः इत्यादिना** ।। यस्मिन् मरुत्सुते सकलाः माः प्रमाणानि भृताः पूर्णाः तस्मात् भृतमात्वात् भीम इति भावः । इनेन सहितः सेनः, स च इनः विष्णुरेवेति स विष्णुनेति । ततः भीमत्वात् सेनत्वात् असौ नाम्ना भीमसेनः भीमश्चासौ सेनश्च इति कर्मधारयः ।।५४-५५।।

**वादिराजीया–** सकला माः विद्याः यस्मिन् भृताः पूर्णाः तेन कारणेन भृताः माः यस्मिन्निति व्युत्पत्त्या भीम इत्यर्थः । निरुक्तत्वात् ऋकाराख्यवर्णनाशः ईकाराख्यवर्णागमश्चेति भावः । इनेन प्रभुणा सहितः सेनः सच प्रभुर्विष्णुरेवेति भावेनोक्तम्– **स विष्णुनेशेनेति** ।।५४।।

**वरदराजीया–** स तु पूर्वं वायुरेव अत्र कुन्त्यां भीमनामा स्वस्मादेवाभवदित्यर्थः । [तस्मिन् बळित्थादिवेदशब्दवदेवायं शब्दः किं नाम] महायोगेनेत्याह– **भृता इति** ।। यस्मिन् सुते मां मापयन्ति प्रमापयन्तीति प्रमाः प्रमाणानि भृता पूर्णा हि यस्मात् तस्मात् भीमनामेति सम्बन्धः । न केवलं भीमः किन्तु नाम्ना सेनश्च । कथं स भीमो विष्णुना ईशेन सदैव युतो यतः । इनेन सह वर्तमानः सेन इत्युक्तं भवति । 'इनः प्रियः पतिर्भर्ता' इत्यभिधानात् इनशब्दव्याख्यानम्– **ईशेनेति** ।। ततः उभयनामवत्त्वात् । असौ सुतो भीमश्चासौ सेनश्चेति भीमसेनः नाम्ना जात इत्यर्थः ।।५४।।

**अनन्तभट्टीया–** सः भगवद्वशो वायुरेव भीमनामा सन् अत्र कुन्त्यां सुतो अभवत् । भीमसेनशब्दवाच्यत्वं तस्याह– **भृता इति** ।। यस्मिन् मा ज्ञानानि भृताः स्थिताः । सेनशब्दवाच्यत्वं वदन् भीमसेनशब्दार्थमाह– **स इति** ।। 'विष्णुनेशेन' इति वदता इनेन स्वामिना विष्णुना सह वर्तत इति सेनशब्दस्य विग्रहः सूचितः ।।५४।।

**जनार्दनीया–** सः सुतः वायुरेव अत्र भुवि भीमनामा अभवत् । भीमनाम्नो निरुक्तिमाह– **भृता इति** ।। यस्मिन् सकलाः माः प्रमाणानि भृताः पूर्णाः हि यस्मात् तस्मात् प्रमाणपूर्णत्वात् भीम इत्यर्थः । अस्य नामान्तरमप्याह– **स इति** ।। स वायुसुतः इनेन स्वामिना विष्णुना सदैव युतो यस्मात्तस्मात् नाम्ना सेनः । इनेन पत्या सहित इति विग्रहः । स वायुसुतः ततो भीमत्वात् सेनत्वाद्भीमसेनः । भीमश्चासौ सेनश्चेति कर्मधारयः ।।५४।।

**चट्टि–** सः सुतः वायुरेवात्र कुन्त्यां भीमनामा अभवत् । भीमनाम निर्वक्ति– **भृता इति** ।। यस्मिन् सकलाः माः प्रमाणानि भृताः पूर्णाः हि यस्मात् तस्मात् प्रमाणपूर्णत्वात् भीम इत्यर्थः । ऋकारस्य वर्णनाशः इकारस्य वर्णागमश्च । इनेन स्वामिना विष्णुना सदैव युतः यस्मात् तस्मात्

नाम्ना सेनः । इनेन पत्या सहित इति विग्रहः । असौ वायुसुतः ततश्च भीमत्वात् भीमसेनः । भीमश्चासौ सेनश्चेति कर्मधारयः ।।५४।।

**तज्जन्ममात्रेण धरा विदारिता शार्दूलभीताज्जननीकराद् यदा ।**
**पपात सञ्चूर्णित एव पर्वतस्तेनाखिलोऽसौ शतशृङ्गनामा ।।५५।।**

**व्यासतीर्थीया–** तेन पतनेनैवाखिलोऽसौ शतभृङ्गनाम्ना पर्वतः सञ्चूर्णितः शिथिलावयवो जातः । तेन सञ्चूर्णितत्वेनासौ शतभृङ्गनामेति वा ।।५५-५९।।

**वादिराजीया–** तेनाखिलोऽसौ शतभृङ्गनामा इत्यत्र शतभृङ्गनामा असौ पर्वतः तेन भीमसेनपातनेन चूर्णित इति योजना । नतु तेन कारणेन शतभृङ्गनामेति योजना । तथा सति 'ताभ्यां समेत शतभृङ्गपर्वते' इति शतभृङ्गनाम्नः पूर्वमेव विद्यमानत्वोक्तिरयुक्ता स्यात् ।।५५।।

**वरदराजीया–** तस्य भीमसेनस्य जन्ममात्रेण उत्पत्त्यैव धरा भूमिर्विदारिता विभागं प्राप्ता । शार्दूलेन व्याघ्रेण भीतात् भयं प्राप्तात् जनन्या मातुः कराग्रात् व्याघ्रदर्शनेन भयं प्राप्तायाः कुन्त्याः कम्पिताद्धस्तादिति यावत् । यदा पपात भीमस्तदासौ पर्वतोऽखिलोऽपि तेन भीमसेनेन सञ्चूर्णितः शतधा विभक्तोऽत एव शतशृङ्गनामाभवदित्यर्थः ।।५५।।

**अनन्तभट्टीया–** शार्दूलो व्याघ्रः । तेन पतनेन । सञ्चूर्णितः कृता...शैथिल्यो अभूदित्यर्थः ।। ।।५५-५७।।

**जनार्दनीया–** तस्य भीमस्य जन्ममात्रेण उत्पत्तिक्षण एवेत्यर्थः । धरा भूः विदारिता भेदं प्रापिता । शार्दूलेन व्याघ्रेण भीतात् सञ्चालितात् । 'भी भयसञ्चलनयोः' इति धातोः । जनन्याः करात् यदा पपात । पर्वते इति शेषः । शार्दूलं दृष्ट्वा तद्भयेन कम्पितकुन्तीकरात् पपातेति भावः । तदा तेन भीमपतनेन अखिलः असौ शतशृङ्गनामा पर्वतः सञ्चूर्णितः शिथिलावयवः कृत इत्यर्थः । भीमस्यातिबलाधिक्यसूचकोऽयं श्लोकः । अयं पर्वतः अनादितः शतशृङ्गनामा । न तु सञ्चूर्णने । तत्पूर्वमपि 'ताभ्यां समेतः शतशृङ्गपर्वते' इत्यादौ तन्नाम्ना व्यवहारात् । अत एव सञ्चूर्णित इत्यनेन पर्वतावयवानां शिथिलत्वं विवक्षितम् । 'तेन भीमेन सञ्चूर्णितः शतधा विभक्तो अत एव शतशृङ्गनामाऽभवद्' इति टीकाकारः ।।५५।।

**ताम्रपर्णीया–** ।। **पपातेति** ।। तेन पतनेन शतभृङ्गनामा गिरिः सञ्चूर्णित इत्यर्थः । केचित् 'तेन सञ्चूर्णेन गिरिः शतशृङ्गनामाभवत्' इत्यर्थमाहुः । अस्मिन् पक्षे 'शतभृङ्गपर्वते नारायणस्याश्रममध्यगे पुरः' इत्यत्र भाविनीसञ्ज्ञया व्यवहार इति द्रष्टव्यम् ।।५५-५६।।

**भारतश्री–** असौ शतशृङ्गनामा पर्वतः । यस्मिन् शतशृङ्गे पाण्डुः उवास असौ पर्वतः शतशृङ्गगिरिः प्रसूत्यां अखिलः सर्वतः तेनैव पातेनैव सञ्चूर्णित इत्यन्वयः । 'ताभ्यां समेतः शतशृङ्गपर्वते नारायणस्याश्रममध्यगे पुरः' इति [११.१७१]पूर्वोक्तेः । अनेन 'चूर्णीकृतो शतशृङ्गगिरिः प्रसूत्याम्' इति एकोनविंशोध्याये[८६] युधिष्ठिरं प्रति कुन्तीवचनाच्च । 'तेन शतशृङ्गनामा अभवत्' इत्यत्र न नियामकं पश्यामः ।।५५।।

**चट्टि–** तस्य भीमस्य जन्ममात्रेण उत्पत्त्यैव धरा भूमिः विदारिता भेदं प्राप्ता । शार्दूलेन व्याघ्रेण भीतात् भयात् त्रस्तात् [त्रस्तायाः] जनन्याः मातुः कराग्रात् यदा पपात । पर्वत इति शेषः । शार्दूलं दृष्ट्वा तद्भयेन कम्पितकुन्तीकरात् पपातेति भावः । तदा तेन भीमपतनेन अखिलः असौ शतशृङ्गनामा पर्वतः सञ्चूर्णितः शिथिलावयवः कृत इत्यर्थः । अनेन भीमस्य अतिबलाधिक्यं सूचितम् । अयं पर्वतः अनादितः शतशृङ्गनामा । तत्पूर्वमपि 'ताभ्यां समेतः शतशृङ्गपर्वते' इत्यादौ तन्नाम्ना व्यवहारात् । अत एव सञ्चूर्णित इत्यनेन पर्वतावयवानां शिथिलत्वं विवक्षितम् ।।५५।।

**तस्मिन् प्रजाते[१] रुधिरं प्रसुस्रुवुर्महासुरा वाहनसैन्यसंयुताः ।**
**नृपाश्च तत्पक्षभवाः समस्तास्तदा भीता असुरा राक्षसाश्च ।।५६।।**

**वेदाङ्गतीर्थीया–** तस्मिन् प्रजाते सति वाहनसैन्यसंयुताः भीताः महासुराः पूर्वं असुराः राक्षसाश्च सन्तः तत्पक्षभवाः महासुरपक्षीयत्वेन जाता नृपाश्च रुधिरं प्रसुस्रुवुरिति योजना । एवं अस्मात् भीत्वा रुधिरस्रावोऽसुराणां भविष्यद्विनाशसूचक उत्पात इति भावः ।।५६-५७।।

**वादिराजीया–** महासुराः मूलरूपे स्थिता आसुराः । तत्पक्षभवाः असुराः असुररूपाः राक्षसाः रक्षोरूपाश्च ये नृपाः ते च इति सम्बन्धः । मूलरूपे भूमावुत्पन्नरूपे च रुधिरं प्रसुस्रुवुरिति भावः ।।५६।।

**वरदराजीया–** तस्मिन् भीमे प्रजात एव वाहनैः गजतुरगादिभिः सैन्यैः पदातिभिश्च संयुताः महासुराः रुधिरं रक्तं प्रसुस्रुवुर्मूत्रितवन्तः । तत्पक्षभवाः महासुरपक्षविद्यमाना असुरा राक्षसाश्च समस्ता नृपाः नृपात्मकत्वेन अत्र जाता जरासन्धादयो भीताः भयं प्राप्ताः ।।५६।।

**जनार्दनीया–** तस्मिन् भीमे प्रजाते सति वाहनैः सैन्यैः संयुताः महासुराः पातालादिषु वर्तमानाः मूलरूपस्थमहासुराः । तत्पक्षभवाः महासुरपक्षीयत्वेन जाताः समस्ताः नृपाः नॄन् मनुष्याधमान् पान्ति

---

१. 'जातमात्रे कुमारे तु सर्वलोकस्य पार्थिवाः । मूत्रं प्रसुस्रुवुः सर्वे व्यथां चापि प्रपेदिरे ।। वाहनानि व्यशीर्यन्त व्यमुञ्चन्नश्रुबिन्दवः ।।' इति आदिपर्वणि.१२९.५३-५४

रक्षन्ति ते तथा, त्रिविधमनुष्याधमेषु मनुष्याधमश्रेष्ठा इत्यर्थः । यद्वा राजकुले प्रजाताः मनुष्याधमाश्च असुराः । भुव्युत्पन्नजरासन्धकीचकादयः राक्षसाः, हिडिम्बकिर्मीरादयो राक्षसाः । तदा भीमोत्पत्तिकाले भीताः सन्तः रुधिरं रक्तं प्रसुस्रुवुः । मूत्रद्वारात् गुदद्वारात् मुखाच्च रक्तस्रावः तेषां विनाशकोत्पातो जात इति भावः ॥५६॥

**चट्टि–** तस्मिन् भीमसेने प्रजाते सति वाहनैः गजतुरगादिभिः सैन्यैः पदातिभिश्च संयुताः महासुराः पातालादिषु वर्तमानाः मूलरूपस्थमहासुराः तत्पक्षभवाः महासुरपक्षीयत्वेन राजकुले जाताः समस्ताः नृपाः मनुष्याधमाश्च असुराः भुव्युत्पन्नजरासन्धादिकीचकादयः, राक्षसाः हिडिम्बवककिर्मीरादयो राक्षसाश्च तदा भीमसेनोत्पत्तिकाले भीतास्सन्तः रुधिरं रक्तं प्रसुसृवुः । मूत्रद्वारात् गुदद्वारात् मुखाच्च रक्तस्रावः तेषां विनाशकसूचकोत्पातो जात इति भावः ॥५६॥

**अवर्द्धतात्रैव वृकोदरो वने मुदं सुराणामभितः प्रवर्धयन् ।**
**तदैव शेषो हरिणोदितोऽविशद् गर्भं सुताया अपि देवकस्य ॥५७॥**

**वादिराजीया–** अवर्धतात्रैव वृकोदर इत्यत्र 'वृको नाम महावह्निः' इति वचनात् वृकनामकमहावह्निरुदरे यस्य स वृकोदरः । अत एव बह्वन्नभस्मीकरणशक्तिर्भीमस्य । 'तदैव शेषो हरिणोदित' इत्यत्र शेषोऽपीति पदसम्बन्धः ॥५७-५९॥

**मधुसूदनीया–** ॥ **तदैव शेष इति** ॥ तदैव यदा भीमसेनो मासद्वितयी समभ्यवर्धत तदैवेत्यर्थः । पृथिव्यां जात इति व्यवहितान्वय इति बोध्यम् । केचित्तु 'तदा भीमसेनोत्पत्तिसमय एव हरिणोदितश्शेषो देवकीगर्भं विवेश । तत्र मासत्रयमुषित्वा दुर्गया रोहिणीगर्भं प्रापितः सन् ततस्सप्तमासाऽनन्तरं भूम्यां जात' इति व्याचक्षते । तन्न । 'भीमसेनस्सुधीरः । यदा मास द्वितयी बभूव तदा रोहिण्यां बलदेवोऽभिजातः' इत्युत्तरग्रन्थविरोधात्। 'कृष्णात्सङ्कर्षणो ज्येष्ठस्त्रिभिर्मासैर्महाबलः । रामाद्वृकोदरो ज्येष्ठस्त्रिभिर्मासैर्महाबलः॥'[१] [१३४.९] इत्यादिपर्वविरोधाच्च । न च 'यदा स मासद्वितयी बभूव' इत्यस्य 'रामाद्वृकोदरो ज्येष्ठ' इत्यनेन विरोध इति वाच्यम् । 'मासद्वितयी बभूव' इति मासद्वयस्य भूतत्वोक्त्या तृतीयमासवृत्तस्यापि 'यदा स मासद्वितयी' इत्यस्याभिप्रेतत्वेन विरोधाभावात् । 'रामाद्वृकोदरो ज्येष्ठष्षड्भिर्मासैर्महाबलः' इति पाठे तु 'पक्षा वै मासा' इति न्यायेन मासशब्देन पक्षग्रहणे विरोधाभावात् । एवञ्च दशमासाधिक्यप्राप्तेः ॥५७॥

---

१. 'अर्जुनात् केशवो ज्येष्ठः त्रिभिर्मासैर्महाद्युतिः । कृष्णात् सङ्कर्षणो ज्येष्ठः त्रिभिर्मासैर्महाबलः ॥' इत्यर्वाचीनपाठः ।

**वरदराजीया**– वृकोदरो भीमः यत्र वने जातो अत्रैव अवर्धत ववृधे । किं कुर्वन् सुराणां देवानां अभितः सर्वतः स्वसन्दर्शनात् मुदं सन्तोषं प्रवर्धयन् अवर्धतेति सम्बन्धः । इदानीं बलभद्रावतारप्रदर्शनपूर्वकं श्रीकृष्णावतारप्रकारं दर्शयति– **यदैवेत्यादिना** ।। यदा भीमसेनोत्पत्तिसमये एव हरिणा नारायणेनोदितः प्रेरितः शेषो देवकस्य सुताया देवक्या गर्भमुदरं आविशत् प्रविवेश ।।५७।।

**जनार्दनीया**– वृकोदरः भीमः अत्रैव वने बदरिकाश्रमे सुराणां अभितः सर्वदा मुदं प्रवर्धयन् प्रकर्षेण वृद्धं कुर्वन् अवर्धत ववृधे । शेषावतारप्रकारं दर्शयति– **तदैवेति** ।। तदैव, अवतारार्थं ब्रह्मादीनां हरिप्रार्थनसमये एवेत्यर्थः । हरिणा उदितः त्वमप्यवतारं कुर्वित्याज्ञापितः शेषः देवकस्य सुतायाः देवक्याः गर्भं अविशद्विवेशेति योजना । 'तदैव भीमोत्पत्तिसमये एव' इति केषाञ्चिद्व्याख्यानं अनादरणीयम् । 'यदा स मासद्वितयी बभूव' इत्युत्तरश्लोकविरोधात् । अन्यथा भीमोत्पत्त्यनन्तरं दशमे मासि चोत्पन्न इति ब्रूयुः । तस्माद्भीमोत्पत्तेः प्राक् अष्टमे मासि शेषो देवकीगर्भमाविशत् इत्यवगन्तव्यम् ।।५७।।

**ताम्रपर्णीया**– ।। **वृकोदर इति** ।। 'वृको नाम महावह्नि' इति वचनात् वृकनामकवह्निरुदरे यस्य सः वृकोदरः । अत एव बह्वन्नभस्मीकरणशक्तिर्भीमस्य ।। **तदैवेति** ।। यदा वृकोदरो मासद्वयी ववृधे तदैव शेषोऽपि पृथिव्यां जात इति योजना । तत्प्रकारमाह– **हरिणेत्यादिना** ।। अतो न 'यदैव मासद्वितयी' इति वक्ष्यमाणविरोधः ।।५७।।

**अतिविशद**– तदैव शेषो हरिणोदितोऽविशदित्यत्र यदा भीमसेनः वने अवर्धत तदैव शेषः पृथिव्यां जात इत्यन्वयः । कथंभूत अयं जात इत्येतद्विवरणार्थं सार्धपद्यं ज्ञातव्यम् । तदैव देवानां आज्ञासमय एव इत्यादिका तु योजना अगतिकागतिकतयेति ज्ञातव्यम् ।।५७।।

**भारतश्री**– तदैव शेष इति पुनः हरिवंशकथां स्पृशति । क्रमात् समावेशयदाशु देवकीगर्भाशये तान्यहनच्च कंसः । तदैव शेषो हरिणोदितोऽविशदिति योज्यम् । तदैव कालव्यवधानमन्तरेण ।। ।।५७-९०।।

**चट्टि**– वृकोदरो भीमः अत्रैव वने बदरिकाश्रमे सुराणामभितः सर्वतः मुदं प्रवर्धयन् अवर्धत ववृधे । वृकोदर इत्यत्र 'वृको नाम महानग्निः' इति वचनात् वृकनामकवह्निरुदरे यस्य स इति विग्रहः । अत एव बह्वन्नभस्मीकरणशक्तिः भीमस्य । इदानीं शेषावतारप्रकारं दर्शयति– **तदैवेति** ।। तदैव अवतारार्थं ब्रह्मादीनां हरिप्रार्थनसमय एवेत्यर्थः । हरिणोदितः त्वमप्यवतारं कुरु इत्याज्ञापितः शेषः देवकस्य सुतायाः देवक्याः गर्भमाविशत् विवेशेति योजना । यद्वा 'तदैव यदा भीमसेनो मासद्वितयी वने अभ्यवर्धत तदैवेत्यर्थः । पृथिव्यां जात इति व्यवहितान्वय' इति बोध्यम् । 'तदैव भीमसेनोत्पत्तिसमय

एव' इति केषाञ्चित् व्याख्यानम् । तस्य व्याख्यानस्य 'यदा स मासद्वितयी बभूव । तदा रोहिण्यां बलदेवोऽभिजात' इत्युत्तरश्लोकविरोधः । अन्यथा भीमोत्पत्त्यनन्तरं दशमे मासि चोत्पन्न इति ब्रूयुः । तस्मात् भीमोत्पत्तेः प्रागष्टमे मासे देवकीगर्भमाविशत् । भीमोत्पत्त्यनन्तरं मासद्वये गते सति जात इति बोध्यम् ।।५७।।

**स तत्र मासत्रयमुष्य दुर्गयापवाहितो रोहिणीगर्भमाशु ।**
**नियुक्तया केशवेनाथ तत्र स्थित्वा मासान् सप्त जातः पृथिव्याम्।।५८।।**

**वेदाङ्गतीर्थीया–** रोहिणीगर्भं अपवाहितः देवकीगर्भान्निर्गमय्य रोहिणीगर्भं प्रापितः ।।५८-५९।।

**वरदराजीया–** स शेषो अत्र देवकीगर्भे मासत्रयं तत्कालपर्यन्तं उष्य स्थित्वा आशु रोहिणीगर्भं प्रति केशवेन नियुक्तया प्रेरितया दुर्गया देव्या प्रवाहितः प्रापितः स शेषो अथ अनन्तरं अत्र रोहिणीगर्भे सप्तमासान् स्थित्वा पृथिव्यां जातः ।।५८।।

**अनन्तभट्टीया–** केशवेन नियुक्तया दुर्गया अपवाहितः प्रापितः ।।५८-६०।।

**जनार्दनीया–** स शेषः तत्र देवकीगर्भे मासत्रयं त्रिमासपरिमितकालं उष्य वासं कृत्वा, अथ मासत्रयानन्तरं केशवेन नियुक्तया आज्ञापितया तया दुर्गया रोहिणीगर्भं अपवाहितः देवकीगर्भान्निस्सार्य प्रापितः सन् तत्र रोहिणीगर्भे सप्तमासान् स्थित्वा पृथिव्यां जातः ।।५८।।

**भावचन्द्रिका–** नात्र च सद्योगर्भमाह– **दुर्गयेति** ।। यथा स्रावे प्रसक्ते स्त्रियो रजस्वला भवन्ति एवं देवकी रजस्वला जाता । तदा दुर्गया मोहिता निद्रामाप । तदा दुर्गा रोहिण्यामदधात् ।।५८।।

**चट्टि–** सः शेषः तत्र देवकीगर्भे मासत्रयं तत्कालपर्यन्तं उष्य स्थित्वा । अथ मासत्रयानन्तरं केशवेन नियुक्तया आज्ञापितया दुर्गया आशु रोहिणीगर्भमपवाहितः देवकीगर्भान्निस्सार्य प्रापितः सन् तत्र रोहिणीगर्भे सप्तमासान् स्थित्वा पृथिव्यां जातः ।।५८।।

**स नामतो बलदेवो बलाढ्यो बभूव तस्यानु जनार्दनः प्रभुः ।**
**आविर्बभूवाखिलसद्गुणैकपूर्णः सुतायामिह[१] देवकस्य ।।५९।।**

**वरदराजीया–** स शेषो नामतः वलदेवो बभूव । यतः वलाढ्य इत्यर्थः । तस्य बलदेवस्य अनु अनन्तरं प्रभुः समर्थो अखिलैरनन्तैः सद्भिः निर्दोषैः गुणैरेव पूर्णो जनार्दनो हरिरपि देवकस्य सुतायां देवक्यामाविर्बभूव प्रकटोऽभूत् ।।५९।।

---

१. 'जातः सुतायामिह' इति जनार्दनीये पाठान्तरम् । अस्मिन् पाठे उत्तरार्धपाठः विचारणीयः ।।

**जनार्दनीया–** स रोहिणीसूनुः नामतः बलदेवो बभूव । कुतः? यतो बलाढ्यः । तस्य बलदेवस्य अनु अनन्तरम्, मासत्रयानन्तरमित्यर्थः । प्रभुः जनार्दनोऽपि देवकस्य सुतायां आविर्बभूव । 'जातः सुतायां इह' इति पाठे इह भूम्याम् । इदं कुतः? इत्यत्र अखिलसद्गुणैकपूर्ण इति हेतुगर्भविशेषणम् ।।

**ताम्रपर्णीया–** आविरेवाभून्न तूत्पन्नः इत्येतत् कुत इत्यतो अखिलसद्गुणैकपूर्ण इति हेतुरुक्तः ।।५९।।

**चन्द्रि–** सः रोहिणीसूनुः यतो बलाढ्यः अतो नामतः बलदेवो बभूव । तस्य बलदेवस्य अन्वनन्तरं मासत्रयानन्तरं इत्यर्थः । प्रभुः समर्थः अखिलैः समस्तैः सद्भिः निर्दोषैः गुणैरेकपूर्णः जनार्दनोऽपि देवकस्य सुतायां देवक्यां आविर्बभूव । न तु जातः । अखिलसद्गुणैकपूर्ण इति हेतुगर्भविशेषणम् ।।

**यः सत्सुखज्ञानबलैकदेहः समस्तदोषस्पर्शोज्झितः सदा ।**
**अव्यक्ततत्कार्यमयो न यस्य देहः कुतश्चित् क्वच स ह्यजो हरिः ।।६०।।**

**व्यासतीर्थीया–** आविरेवाभूत् न तूत्पन्न इत्येतत् कुत इत्यतोऽखिलसद्गुणैकपूर्णहेतुरुक्तः । तमेव हेतुं विशदयन्नाह– **य इति** ।। हि सत्सुखैकज्ञानबलैकदेहत्वादेः कारणात् स हरिरज इत्यर्थः ।।६०।।

**वेदाङ्गतीर्थीया–** अव्यक्ततत्कार्यमयः अव्यक्तं जडप्रकृतिः तत्कार्यमयः तदात्मकम् ।।६०-६१।।

**वादिराजीया–** अव्यक्ततत्कार्यमय इत्यत्र अव्यक्तं मूलप्रकृतिः तत्कार्यं भूतपञ्चकं तदुभयविकारस्तन्मयः। शुद्धप्राकृतः पाञ्चभौतिकश्च देहः कुतश्चित्कारणात् क्वच कस्मिन्नपि प्रदेशे नेति सम्बन्धः ।।६०।।

**वरदराजीया–** कुतः यो जनार्दनः, सन्ति निर्दोषाणि सुखज्ञानबलान्येव देहो यस्यासौ तथोक्तः । तथा समस्तानां जननादीनां दोषाणां स्पर्शेण सम्बन्धेन उज्झितः रहितः । यस्य अव्यक्ततत्कार्यमयः प्रकृतिविकाररूपः तत्कार्यभूतविकारात्मकदेहः कुतश्चित् कारणात् क्वच काले च नास्ति हि यस्मात् स हरिः अजः देहतोऽपि न जायते ।।६०।।

**जनार्दनीया–** पुनरपि हेतुगर्भविशेषणैः तमेवार्थं साधयन्नाह– **य इति** ।। यः सन्ति निर्दुष्टानि, सुखज्ञानबलानि एकः केवलं देहो यस्य स तथा । सदा सर्वदा समस्तदोषस्पर्शेन पारतन्त्र्याद्यशेष–दोषसम्बन्धेन, उज्झितो रहितो यस्य हरेर्देहः । कुतश्चित् कारणात् क्वचिद्देशे कालेऽपि अव्यक्तं जडप्रकृतिः, तत्कार्यमयः तद्विकारमहत्तत्वाद्यात्मकः महत्तत्त्वभूतादिप्रकृतिविकारात्मकदेहो नैवेति भावः । हि यस्मात्तस्मात् स हरिः अजः जननरहितः ।।६०।।

**ताम्रपर्णीया–** तमेव हेतुं विशदयति– **य इति** ।। स हरिरज इति प्रतिज्ञा कुतः इत्यतो उत्पत्तेरव्यक्ततत्कार्यमयदेहान्यतरत्वेन व्याप्यत्वेन सूक्ष्मसृष्टौ स्थूलसृष्टौ दर्शनात् व्यापकाभावात् व्याप्याभावः

इत्यभिप्रेत्योक्तम्– **अव्यक्तेति** ।। तदभावे हेतुः– **समस्तेति** ।। अव्यक्तादिविकारदेहाभावे भगवतो निराकारत्वं स्यादित्यत उक्तम्– **सदिति** ।।६०।।

**चट्टि–** पुनरपि हेतुगर्भविशेषणैः तमेवार्थं साधयन्नाह– **य इति** ।। यः सन्ति निर्दुष्टानि सुखज्ञानबलान्येकः केवलं देहो यस्य स तथा । समस्तदोषस्पर्शेन पारतन्त्र्याद्यशेषदोषसम्बन्धेन उज्झितो रहितः यस्य हरेः देहः कुतश्चित् कारणात् क्वचिद्देशे काले च अव्यक्तं जडप्रकृतिस्तत्कार्यमयः महदाद्यात्मकश्च न भवति । हि यस्मात् स हरिरजः जननरहितः ।।६०।।

**न शुक्लरक्तप्रभवोऽस्य कायस्तथाऽपि तत्पुत्रतयोच्यते मृषा ।**
**जनस्य मोहाय शरीरतोऽस्या यदाविरासीदमलस्वरूपः ।।६१।।**

**व्यासतीर्थीया–** ननु शुक्लशोणितमयदेहः सन् नोत्पन्नश्चेत् कथमयं तत्पुत्रतयोच्यते इत्यतस्तन्न वास्तवमित्याह– **तथापीति** ।। मृषा भ्रान्त्या । ननु वस्तुत तत्पुत्राभावे भ्रान्तिरपि केन स्यादित्यत आह– **जनस्येति** ।।६१।।

**वरदराजीया–** तत् तस्मादेव अस्य शुक्लाद्रक्ताच्च प्रभवतीति स तथोक्तः । तथाभूतकायो नास्तीत्यर्थः । तथापि एतादृशोऽपि तत्पुत्रतया देवकीवसुदेवपुत्रत्वेन मृषा भ्रान्त्या उच्यते अज्ञैरिति शेषः । तथा भ्रान्तौ निमित्तमाह– **जनस्येति** ।। अमलस्वरूपो निर्दोषस्वरूपो हरिः अस्याः देवक्याः शरीरतो देहात् जनस्य दुष्टजनस्य मोहाय मिथ्याज्ञानार्थं यद्यस्मादाविसासीदाविर्बभूव ।।६१।।

**अनन्तभट्टीया–** मृषा भ्रान्त्या..निमित्तमाह– **जनस्येति** ।। जनस्य मोहाय अस्याः शरीरतः.. आविर्बभूव । अतो मोह इति भावः ।।६१।।

**जनार्दनीया–** अस्य हरेः कायो देहः शुक्लात् रेतसः, रक्तात् प्रभवतीति तथा न । यद्यपि तथाऽपि तयोः मातापित्रोः पुत्रतया पुत्रत्वेन । मृषा बुद्धिमोहादुच्यते । अबुधैरिति शेषः । तत्पुत्रत्वाभावेऽपि बुद्धिमोहः कथमित्यत आह– **जनस्येति** ।। अमलं निर्दुष्टं स्वरूपं यस्य स तथा । एतादृशो हरिः । जनस्य असुरलोकस्य । मोहाय मिथ्याज्ञाननिष्पत्त्यर्थम् । अस्याः देवक्याः शरीरतः यस्मादाविरासीत् तत्तस्मात् मृषा उच्यते इति भावः ।।६१।।

**ताम्रपर्णीया–** कृष्णस्य शुक्लशोणितमयदेहेनोत्पत्त्यभावे वसुदेवदेवकीपुत्रत्वेन व्यवहारानुपपत्तिरित्यतो भ्रान्तिमूलो व्यवहार इत्याह– **न शुक्लेति** ।। यद्यपीत्यादौ उपस्कर्तव्यम् । मृषा मृषादृष्ट्या भ्रान्त्येति यावत् । भ्रान्तिकारणमाह– **जनस्येति** ।।६१।।

**चट्टि–** अस्य हरेः कायो देहो शुक्लाद्रेतसो रक्ताच्च प्रभवतीति शुक्लरक्तप्रभवः न यद्यपि तथापि तयोर्मातापित्रोः पुत्रतया पुत्रत्वे मृषा बुद्धिमोहादुच्यते । अज्ञैरिति शेषः । तथा मोहे निमित्तमाह– **जनस्येति** ।। अमलं निर्दुष्टं स्वरूपं यस्य स तथा । एतादृशो हरिः जनस्य दुष्टजनस्य मोहाय मिथ्याज्ञानार्थं अस्याः देवक्याः शरीरतः यत् यस्मात् आविरासीत् आविर्भूतस्तस्मादुच्यत इति भावः।।६१।।

**आविश्य पूर्वं वसुदेवमेव विवेश तस्मादृतुकाल एव ।**
**देवीमुवासात्र च सप्त मासान् सार्धांस्ततश्चाऽविरभूदजोऽपि ।।६२।।**

**व्यासतीर्थीया–** केन क्रमेण शरीरात् प्रादुर्भाव इति जिज्ञासायां कथामाह– **आविश्येति** ।। अपिरवधारणे ।।६२।।

**वादिराजीया–** वसुदेवमाविश्य देवीं विवेशेत्युक्त्या भूतावेशवद्वसुदेवेऽपि आवेश एव । देव्युदरेऽप्यावेश एव । नतु शुक्लद्वारा योनिस्थशोणिते सङ्कलनमिति सूचितम् ।।६२-६६।।

**मधुसूदनीया–** ।। **देवीमुवासात्रेति** ।। सार्धान् मासार्धसहितान् सप्तमासान् देवीमुवास । ततः देवक्याः सकाशादष्टमे मासि आविरभूदित्यन्वयः । तथाचोक्तम्– 'गर्भकाले त्वसम्पूर्णे अष्टमे मासि ते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदा ।।' इति हरिवंशे [२.४.११]। अष्टमे मासि असम्पूर्ण एव इत्यन्वयः । तेन सार्धान् सप्तमासान् इत्युक्तमिति बोध्यम् । तेन 'मासार्द्धे पुष्यमासान्' इति युक्तमिति बोध्यम् । 'मासान्वै पुष्यमासादीन्' इत्यादि च ।।५७-६६।।

**वरदराजीया–** उक्तमेव विवृणोति– **आविश्येति** ।। पूर्वं वसुदेवमाविश्यैव तस्माद्वसुदेवात् ऋतुकाले देवक्या इति शेषः । देवीं देवकीमाविवेश । अत्र च देवक्यां सार्धसप्तमासान् मासार्धसहितसप्तमासपर्यन्तं उवास स्थितवान् । ततश्च तदनन्तरमेव अजोऽपि आविरभूत् । अतो जनस्य भ्रान्तिर्जायतेति भावः ।।

**अनन्तभट्टीया–** आविर्भावक्रममाह– **आविश्येति** ।। देवीं विवेश । सार्धान् सार्धमाससहितान् पञ्चदश...धिवासानित्यर्थः । सप्तमासात् सूतिगलितम् ।।६२।।

**जनार्दनीया–** आविर्भावेऽपि उत्पत्तिक्रमं दर्शयतीत्याह– **आविश्येति** ।। पूर्वं आदौ वसुदेवमाविश्य, तस्मादेव वसुदेवादेव ऋतुकाल एव गर्भाधानयोग्यसमय एव । देवकीगर्भमित्यर्थः विवेश । अत्र देवकीगर्भे । सार्धान् त्रिंशद्दिनात्मको मासः, पञ्चदशदिनैः मासार्धं भवति । अर्धमासेन सहितान् सप्तमासानुवास । ततः देवक्याः सकाशात् अजोऽपि जननरहितोऽपि आविरभूत् अष्टमे मासि प्रकटोऽभूदिति भावः । 'सार्धान् अर्धेन सप्तार्धेन सार्धमासत्रयेण सहितान् सप्तमासानुवास । सार्धदशमासानुवासेत्यर्थः'

इति केषाञ्चिदाशङ्का– 'गर्भकाले त्वसम्पूर्णे अष्टमे मासि ते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदा ।।' [विष्णुपर्व.४.११] इति हरिवंशवाक्यविरोधात् निरस्ता वेदितव्या ।।६२।।

**ताम्रपर्णीया–** तदेव विवृणति– **आविश्येति** ।। अजोऽपि जनमोहनाय वसुदेवमाविश्य तस्मात् ऋतुकाले एव देवकीं विवेशेत्यादि योजना । यद्वाऽपिरवधारणे । अजत्वात् एवेति यावत् ।।६२।।

**चट्टि–** उक्तमेव विवृणोति– **आविश्येति** ।। पूर्वमादौ वसुदेवमाविश्यैव तस्मात् वसुदेवात् ऋतुकाल एव देवीं देवकीमाविश्य अत्र देवक्यां च सार्धान् अर्धमाससहितान् सप्तमासानुवास । ततः देवक्याः सकाशाद् अजोऽपि जननरहितोऽपि आविरभूत् । अष्टमे मासि प्रकटोऽभूत् इति भावः । तथा चोक्तम्– 'गर्भकाले त्वसम्पूर्णे अष्टमे मासि ते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदा ।।' इति हरिवंशे । 'अष्टमे मास्यसम्पूर्णे एव' इत्यन्वयः । तेन 'सार्धान् सप्तमासान्' इति युक्तमिति बोध्यम् । 'मासान् वै पुष्यमासादीन्' इत्यादि च ।।६२।।

**यथा पुरा स्तम्भत आविरासीदशुक्ररक्तोऽपि नृसिंहरूपः ।**
**तथैव कृष्णोऽपि तथाऽपि मातापितृक्रमादेव विमोहयत्यजः ।।६३।।**

**व्यासतीर्थीया–** ननु मातापितृक्रमादाविर्भावः शुक्रादिमयदेहत्वं ज्ञापयतीति शङ्कां सदृष्टान्तं वारयन्नाह– **यथेति** ।। कृष्णोऽप्यशुक्ररक्तश्चेत् किमर्थं मातापितृक्रममनुसृत इत्यत उक्तम्– **तथापीति** ।।६३।।

**वरदराजीया–** सज्जनानुकम्पया यथास्थितिं बोधयति भगवानाचार्यः– **यथेत्यादिना** ।। पूर्वं नारसिंहावतारे अशुक्ररक्तः शुक्ररक्तसम्बन्धरहितो नृसिंहरूपो भगवान् स्तम्भतो आविरासीत् । तथैव कृष्णोऽपि स्तम्भस्थानीयदेवक्यादेराविरासीत् । तथापि मातापितृक्रमनिमित्तात् अजोऽपि भगवान् मोहयत्येव ।।

**जनार्दनीया–** उक्तार्थं सदृष्टान्तमाह– **यथेति** ।। अशुक्ररक्तोऽपि वीर्यरक्तसम्बन्धरहित एव, नृसिंहरूपो हरिरित्यर्थः । कृष्णोऽपि यद्यपि तथैव नृसिंहावतारवदशुक्ररक्तश्च इत्यर्थः । तथापि अजः कृष्णः मातापितृक्रमादेव मातापितृक्रमानुसरणमात्रादेव विमोहयति । असुरानिति शेषः।।६३।।

**ताम्रपर्णीया–** ननु मातापितृक्रमात् आगमनेनेव शुक्रादिमयदेहत्वं ज्ञापयतीत्याशङ्क्य मातापित्रोः स्तम्भतुल्यत्वान्नानुपपत्तिः इत्याशयेन दृष्टान्तमाह– **यथेति** ।। कृष्णोऽपि तथैव मातापितृक्रमादाविरासीत् इति सम्बन्धः । तर्हि मात्राद्यनुसरणं कुत इत्यत आह– **तथाऽपीति** ।।६३।।

**चट्टि–** उक्तार्थं सदृष्टान्तमाह– **यथेति** ।। पुरा पूर्वं अशुक्ररक्तोऽपि वीर्यरक्तसम्बन्धरहित एव नृसिंहरूपो भगवान् यथा स्तम्भतः आविरासीत् । कृष्णोऽपि यद्यपि तथैव नृसिंहावतारवच्छुक्रशोणितसम्बन्धरहित एव तथाप्यजः कृष्णः मातापितृक्रमादेव मातापितृक्रमानुसारेण विमोहयति । असुरानिति शेषः ।।६३।।

**पितृक्रमं मोहनार्थं समेति न तावता शुक्लतो रक्ततश्च ।**
**जातोऽस्य देहस्त्विति दर्शनाय सशङ्खचक्राब्जगदः स दृष्टः ॥६४॥**

**व्यासतीर्थीया–** जनमोहनार्थमेव मातापितृक्रमानुसरणं कृतं न शुक्लादिमयदेहलाभायेत्येतमर्थं लिङ्गैः प्रदर्शयन्नाह– **पितृक्रममिति** ॥६४-६७॥

**वरदराजीया–** तर्ह्यनेनैव निमित्तेन सतामपि मोहः स्यादित्यतो विशेषदर्शनात्तेषां न मोहो भविष्यतीत्याह– **पितृक्रममिति** ॥ यद्यपि असतां मोहनार्थं पितृक्रमं पित्रादिक्रमं समेति प्राप्नोति । तथापि तु एतावता निमित्तेन शुक्लतो रक्तश्च जातो देहोऽस्यास्तीति न मन्तव्यमिति सज्जनान् प्रति दर्शनाय दर्शयितुं शङ्खचक्राब्जगदः शङ्खचक्रादिभिः सह वर्तमानः स कृष्णो दृष्टः सर्वैः ॥६४॥

**जनार्दनीया–** स हरिः मोहनार्थं पितृक्रमं समेति । तावता पितृक्रमानुसरणनिमित्तेन अस्य हरेः देहः शुक्लतो रक्ततश्च जातो नैवेति दर्शनाय । तु विशेषज्ञानार्थं पित्रादीनामिति शेषः । अब्जं पद्मम्, शङ्खाद्यैः सहितः सन् । दृष्टः पितृभ्यामिति शेषः । शङ्खचक्रादिभिश्चतुर्भुजत्वमवगन्तव्यम् ॥६४॥

**ताम्रपर्णीया–** उक्तमेवार्थं लिङ्गैः प्रदर्शयन्नाह– **पितृक्रमादित्यादिना** ॥६४-६६॥

**चट्टि–** सः हरिर्मोहनार्थं पितृक्रमं समेति प्राप्नोति । तावता पितृक्रमानुसरणनिमित्तेन अस्य हरेर्देहः शुक्लतो रक्तश्च जातो नेति दर्शनाय तु विशेषज्ञापनार्थं पित्रादीनामिति शेषः । सशङ्खचक्राब्जगदः शङ्खचक्रपद्मगदादिभिः सहितः सन् दृष्टः । अनेन चतुर्भुजत्वमवगन्तव्यम् ॥६४॥

**अनेकसूर्याभकिरीटयुक्तो विद्युत्प्रभे कुण्डले धारयंश्च ।**
**पीताम्बरो वनमाली स्वनन्तसूर्योरुदीप्तिर्ददृशे गुणार्णवः ॥६५॥**

**वरदराजीया–** न केवलमेतावत् । अनेकसूर्यवदाभातीति अनेकसूर्याभम् । तच्च तत्किरीटं मुकुटश्च तेन युक्तः । विद्युतः तटितः प्रभेव प्रभा ययोस्ते तथोक्ते । एतादृशे कुण्डले धारयन् । तथा पीतं अम्बरं यस्य स तथा । वनमाला विद्यतेऽस्येति तथा । समीचीनानां अनन्तानां सूर्याणां दीधितिरिव उत्कृष्टा दीप्तिर्यस्य स तथोक्तः । तथा गुणैरर्णव इव पूर्णः ददृशे दृष्टोऽभूत् ॥६५॥

**जनार्दनीया–** ननु केवलं शङ्खाद्यायुधवान् दृष्टः किमित्यत आह– **अनेकेति** ॥ अनेकानामपरिमितानां सूर्याणां आभेव आभा दीप्तिर्यस्य स तथा, तच्च तत्किरीटं च मुकुटं, तेन युक्तः । विद्युद्वत् तडिद्वत् प्रभा ययोस्ते तथा । तादृशे कुण्डले धारयन् बिभ्रन् । पीतवर्णं अम्बरं वस्त्रं यस्य । वनमालास्यास्तीति तथा । शोभनेभ्यः अभ्रतिमिरराह्वादिसम्बन्धरहितेभ्यः, अनन्तसूर्येभ्यो उर्वी उत्कृष्टा, दीप्तिः दीधितिर्यस्य । गुणार्णवो हरिः ददृशे दृष्टोऽभूत् ॥६५॥

**भावचन्द्रिका–** देवकीवसुदेवप्रत्यक्षं तु अत्र प्रमाणमित्याह– **ददृश इति** ।।६५।।

**चट्टि–** न केवलमेतावत् । अनेकानां सूर्याणां आभेवाभा दीप्तिर्यस्य तत्तथा । तच्च तत्किरीटं च तेन युक्तः । विद्युद्वत् तटिद्वत् प्रभा ययोस्ते तथा तादृशी कुण्डले धारयन् बिभ्रन् । पीतं अम्बरं यस्य पीताम्बरः । वनमाली अनन्तसूर्येभ्यः उर्वी उत्कृष्टा दीप्तिः यस्य स्वनन्तसूर्योरुदीप्तिः । गुणैः अर्णव इव पूर्णः सः हरिः ददृशे दृष्टोऽभूत् ।।६५।।

**स कञ्जयोनिप्रमुखैः सुरैः स्तुतः पित्रा च मात्रा च जगाद शूरजम् ।**
**नयस्व मां नन्दगृहानिति स्म ततो बभूव द्विभुजो जनार्दनः ।।६६।।**

**वरदराजीया–** इतोऽपि न भ्रमितव्यमित्याह– **स इति** ।। सः कृष्णः कञ्जयोनिप्रमुखैः ब्रह्माद्यैः सुरैः स्तुतः संस्तुतः । तथा पित्रा वसुदेवेन मात्रा देवक्या च स्तुत इत्यर्थः । तस्मादलौकिक एवास्य प्रादुर्भाव इति भावः । शूरजं वसुदेवं जगाद कृष्णः । किमिति मां नन्दस्य नन्दगोपस्य गृहान् प्रति नयस्व नयेति जगादेति सम्बन्धः । ततोऽनन्तरं जनार्दनः श्रीकृष्णो द्विभुजो बभूव ।।६६।।

**जनार्दनीया–** कञ्जं कमलं योनिः कारणं यस्य ब्रह्मणः स तथा, स एव प्रमुखः आद्यो येषां ते तथा तैः स्तुतः । पित्रा च मात्रा च स्तुत इत्यर्थः । कृष्णः शूरजं वसुदेवं जगाद । किमिति? मां नन्दस्य नन्दगोपस्य गृहान् । पुल्लिङ्गत्वात् बहुवचनम् । गृहं प्रति नयस्वेति सम्बन्धः । ततः जनार्दनः द्विभुजः प्रादुर्भावसमये चतुर्भुजः इदानीं द्विभुजो बभूव स्मेति भावः ।।६६।।

**चट्टि–** उत्तरकथामाह– **स कञ्जेति** ।। सः कृष्णः कञ्जं कमलं योनिः कारणं यस्य स तथा । स एव प्रमुखः आद्यो एषां ते तथा तैः सुरैः स्तुतः । पित्रा वसुदेवेन मात्रा देवक्या च स्तुतः इत्यर्थः । शूरजं वसुदेवं जगाद । किमिति । मां नन्दस्य नन्दगोपस्य गृहान् पुल्लिङ्गत्वात् बहुवचनम् । गृहं प्रति नयस्व नयेति सम्बन्धः । ततः जनार्दनः श्रीकृष्णः द्विभुजो बभूव ।।६६।।

**तदैव जाता च हरेरनुज्ञया दुर्गाभिधा श्रीरनु [१]नन्दपत्न्याम् ।**
**ततस्तमादाय हरिं ययौ स शूरात्मजो नन्दगृहान् निशीथे ।।६७।।**

**वादिराजीया–** अनु नन्दपत्न्यामित्यत्र अनु किञ्चिदनन्तरं अनुकूलतया जातेति सम्बन्धः ।।६७।।

**मधुसूदनीया–** ।। **तदैव जाता चेति** ।। तथाचोक्तम्– 'तस्मिन्काले यशोदापि मोहिता योगनिद्रया ।

१. 'वैवस्वतेऽन्तरे तौ च पुनः शुम्भनिशुम्भकौ । उत्पत्स्येते वरोन्मत्तौ देवोपद्रवकारिणौ ।। नन्दगोपकुले जाता यशोदागर्भसंभवा । तावहं नाशयिष्यामि नन्दाख्या विन्ध्यवासिनी ।।' इति लक्ष्मीवचनं लक्ष्मीतन्त्रे ९.२८-२९ ।

तामेव कन्यां मैत्रेय प्रसूता मोहितो जनः ।।' इति विष्णुपुराणे [५.३.२०] । अनेन कृष्णं यशोदायास्समीपे प्रक्षिप्य वसुदेवेन दुर्गानयने यशोदया तत्कार्यं किं विज्ञातं न वेति चोद्यं परिहृतं वेदितव्यम् ।। **ततस्तमादायेति** ।। ननु तत्समये द्वारपालकादीनां सत्त्वेन तथा मार्गे यमुनायाश्च सत्त्वेन कथं नन्दगृहं कृष्णं प्रापयामासेति चोद्यम्–

'वसुदेवोऽपि तं रात्रौ आदाय प्रययौ बहिः । मोहिताश्चाऽभवंस्तत्र रक्षिणो योगनिद्रया ।।
मधुरां द्वारपालाश्च व्रजत्यानकदुन्दुभौ । वर्षतां जलदानां च तोयमत्युल्बणं निशि ।।
संवृत्याऽनुययौ शेषः फणैरानकदुन्दुभिः । यमुनां चातिगम्भीरां नानावर्तशताकुलाम् ।।
वसुदेवोऽवहन्विष्णुं जानुमात्रवहां ययौ । कंसस्य करदानाय तत्रैवाऽभ्यागतान् तटे ।।
नन्दादिगोपवृद्धांश्च यमुनायां ददर्श स ।।' इति विष्णुपुराणवाक्येन [५.३.१५-१९]।
'सा पुरी मधुरा सर्वा मोहिता हरिमायया' इत्यादि हरिवंशवाक्येन च परिहर्तव्यम् ।।६७-७१।।

**वरदराजीया–** तदा श्रीकृष्णावतारसमये हरेरनुज्ञया दुर्गेति अभिधा यस्याः सा श्रीः लक्ष्मीः नन्दस्य पत्न्यां यशोदायां हरेरनु जाता प्रादुर्भूता । ततोऽनन्तरं स शूरात्मजो वसुदेवः तं हरिं कृष्णं समादाय गृहीत्वा निशीथे रात्र्यां नन्दगृहान् प्रति ययौ ।।६७।।

**जनार्दनीया–** तदैव कृष्णस्य प्रादुर्भावकाले । अनु कृष्णमनु । ततः द्विभुजस्वरूपप्राकट्यानन्तरम् । स शूरात्मजः । तं हरिं कृष्णं आदाय उपगृह्य, निशीथे अर्धरात्रौ नन्दगृहान् प्रति ययौ ।।६७।।

**ताम्रपर्णीया–** ।। **अनु नन्दपत्न्यामिति** ।। अनु किञ्चिदनन्तरं अनुकूलतया जातेति वा ।।६७।।

**चट्टि–** तदा श्रीकृष्णप्रादुर्भावसमय एव हरेरनुज्ञया दुर्गाभिधा श्रीः लक्ष्मीश्च नन्दस्य पत्न्यां यशोदायां अनु कृष्णमनु एकक्षण एवेति भावः । जाता प्रादुर्भूता । ततः द्विभुजप्राकट्यानन्तरं सः शूरात्मजः तं हरिं श्रीकृष्णं आदाय उपगृह्य निशीथे अर्धरात्रे नन्दगृहान् प्रति ययौ । तच्चोक्तम्– 'तस्मिन् काले यशोदापि मोहिता योगनिद्रया । तामेव कन्यां मैत्रेय प्रसूता मोहिते जने ।।' इति विष्णुपुराणे । अनेन कृष्णं यशोदायाः समीपे प्रक्षिप्य वसुदेवेन दुर्गानयने यशोदया तत्कार्यं किं ज्ञातं नो वा इति चोद्यं परिहृतं वेदितव्यम् । ततस्तमादायेत्यत्र । ननु तत्समये द्वारपालकादीनां सत्त्वेन तथा मार्गे यमुनायाश्च सत्त्वेन कथं नन्दगृहं कृष्णं प्रापयामासेति चोद्यम्–

वसुदेवोऽपि तं रात्रावादाय प्रययौ बहिः । मोहिताश्चाभवन् तत्र रक्षिणो योगनिद्रया ।।
मधुराद्वारपालाश्च व्रजत्यानकदुन्दुभौ । वर्षतां जलदानां च तोयमत्युल्बणं निशि ।।
संवृत्यानुययौ शेषः फणैरानकदुन्दुभिम् । यमुनां चातिगम्भीरां नानावर्तशताकुलाम् ।।

वसुदेवो वहन् विष्णुं जानुमात्रवहां ययौ । कंसस्य करदानाय तत्रैवाभ्यागतान् तटे ।।
नन्दादिगोपवृद्धांश्च यमुनायां ददर्श सः । इति विष्णुपुराणवाक्येन, 'सा पुरी मथुरा सर्वा मोहिता हरिमायया' इत्यादिहरिवंशवाक्येन च परिहर्तव्यम् ।।६७।।

**संस्थाप्य तं तत्र तथैव कन्यकामादाय तस्मात् स्वगृहं पुनर्ययौ ।**
**हत्वा स्वसुर्गर्भषट्कं क्रमेण मत्वाऽष्टमं तत्र जगाम कंसः ।।६८।।**

**व्यासतीर्थीया–** उत्तरकथामाह– **स कंसेति** ।।

**वादिराजीया–** तथैव कन्यकामित्यत्र तथैव कृष्णवदेव ।।६८-६९।।

**सत्याभिनवतीर्थीया–** तत्रैव संस्थाप्य तं तत्र तथैव....इति श्लोकद्वयम् । तस्यार्थः । वसुदेवः तं कृष्णं तत्र नन्दगृहे संस्थाप्य कन्यकामादाय तथैव पथा आगतं तथैव तस्मात् कृष्णात् कृष्णानुग्रहादिति यावत् स्वगृहं पुनः ययौ । सः कंसः स्वसुः गर्भषट्कं क्रमेण हत्वा हि यस्मात् लोकाः देवक्याः सप्तमं गर्भं सृतं मेनिरे । तस्मात् लोकवाक्यैः देवक्याः सप्तमं गर्भं सृतं मत्वा अष्टमं गर्भमुत्पन्नं मत्वा तत्र तत् सूतिकागृहं जगाम । ततस्तु गमनानन्तरमेव तां च तां कन्यकामेव अष्टमं गर्भं मत्वा हन्तुं पादयोः सम्प्रगृह्य शिलातले सम्पोथयामासेति । एतेन नन्दगृहे कृष्णं संस्थाप्य कन्यकामादाय गृहं ययौ इत्युक्त्यैव नन्दगृहात् ययौ इत्यर्थस्य अर्थाल्लब्धत्वात् तस्मादित्येतत् व्यर्थमिति दूषणं परिहृतम् । 'तस्मात्' इत्यस्य नन्दगृहादित्यर्थस्यानङ्गीकारात् । एतेनैव गर्भं देवक्या इत्यादिकं गर्भषट्कं हत्वेत्यनन्तरं वक्तव्यम् । मत्वा अष्टमं तत्र जगाम कंसः इत्यनन्तरं 'गर्भं देवक्या' इत्यादेः कथनमयुक्तमिति दूषणं पराकृतम् । 'गर्भं देवक्या' इत्यादेः गर्भषट्कं हत्वेत्यनन्तरमन्वय इत्यभ्युपगमात् । एतेनैव अष्टमं गर्भमुत्पन्नं मत्वेति वक्तव्यम् । उत्पन्नमिति पदाभावात् न्यूनतेत्याशङ्का परास्ता । उत्पन्नमित्यस्य शेष इति स्वीकरणात् ।।६८-६९।।

**वरदराजीया–** तत्र यशोदातल्पे तं कृष्णं संस्थाप्य तथा कन्यकां दुर्गां आदाय गृहीत्वा पुनः परावृत्य तथैव यथागतं तथैव तस्मात् नन्दगेहात् स्वस्य विद्यमानं गृहं प्रति ययौ जगाम । कंसः स्वसुर्भगिन्याः देवक्याः गर्भषट्कं गर्भजान् षट्पुत्रान् क्रमेण हत्वा इदानीं जातमष्टमं मत्वा तत्र वसुदेवगृहं प्रति जगाम ।।६८।।

**जनार्दनीया–** वसुदेवः तत्र नन्दगृहे तं कृष्णं संस्थाप्य, तथैव कन्यां यशोदायां प्रादुर्भूतां दुर्गां आदाय, तस्मान्नन्दगृहात् पुनः स्वगृहं ययौ । कंसः गर्भषट्कं षड्गर्भानित्यर्थः । क्रमेण उत्पत्तिक्रमेण हत्वा, अष्टमं उत्पन्नं अष्टमपुत्रं मत्वा ज्ञात्वा, तत्र सूतिकागृहं प्रति जगाम ।।६८।।

**ताम्रपर्णीया**– ।। **गर्भषट्कमिति** ।। यद्यप्यष्टमगर्भस्यैव मारकत्वं वायुनोक्तम् । तथापि वसुदेवेन सर्वपुत्रसमर्पणात्, कंसस्य निसर्गतो हिंसाविहारत्त्वात्, क्रमव्युत्क्रमवचनेन सर्वेषामष्टमत्वभ्रान्तेः, हन्यमानानां हिरण्यशापाच्च सर्वहननमिति द्रष्टव्यम् ।।६८-६९।।

**चट्टि**– वसुदेवस्तं कृष्णं तत्र नन्दगेहे संस्थाप्य तथैव कन्यकां दुर्गां आदाय तस्मात् नन्दगेहात् पुनः स्वगृहं ययौ । कंसः स्वसुः भगिन्याः देवक्याः गर्भषट्कं गर्भाज्जातान् षट्पुत्रानित्यर्थः । क्रमेणोत्पत्तिक्रमेण हत्वा अष्टममुत्पन्नं मत्वा तत्र सूतिकागृहं प्रति जगाम ।।६८।।

**गर्भं देवक्याः सप्तमं मेनिरे हि लोकाः सृतं त्वष्टमं तां ततः सः ।**
**मत्वा हन्तुं पादयोः सम्प्रगृह्य सम्पोथयामास शिलातले च ।।६९।।**

**व्यासतीर्थीया**– गर्भषट्कं हत्वा सप्तमं मत्वेति वक्तव्यमतः कथमष्टमं मत्वा जगामेत्युक्तिरित्यत आह– **गर्भमिति** ।। तां दुर्गाम् ।।६९।।

**वरदराजीया**– ननु षट्सु हतेषु एतस्मिन् सप्तमत्वं बुद्ध्या भवितव्यम् । कथमेनमष्टमं मेने कंस इत्यत आह– **गर्भमिति** ।। हि यस्मात् देवक्याः सप्तमं गर्भं सृतं गलितं लोका जनाः मेनिरे । शेषस्य देवकीगर्भे मासत्रयं स्थितत्वात् ततो निष्कास्य रोहिणीगर्भे दुर्गया स्थापने कृते सति देवक्याः सप्तमगर्भस्रवो जात इति कंसादीनां बुद्धिर्जातेति भावः । ततः कारणात् तां दुर्गां अष्टममपत्यं मत्वा सः कंसः हन्तुं पादयोः सम्प्रगृह्य पादौ गृहीत्वा शिलातले पोथयामास पातितवान् ।।६९।।

**जनार्दनीया**– ननु गर्भषट्कं हत्वा अस्मिन् सप्तमत्वबुद्धिमकृत्वा अष्टमं कथं मेने इत्यत आह– **गर्भमिति** ।। लोकाः देवक्याः सप्तमं गर्भं सृतं मेनिरे ज्ञातवन्तो यतः । 'कुक्षिभ्रूणार्भकार्भाः' इत्यमरः । देवकीगर्भतः शेषः दुर्गया रोहिणीगर्भे स्थापितः । अतो देवकीगर्भस्रावो जात इति लोकप्रसिद्धिरभूदिति भावः । ततः सप्तमगर्भस्रावश्रवणात् स कंसः तां दुर्गां अष्टमं अष्टमापत्यं मत्वा, हन्तुं सम्पोथयामास तताडेत्यर्थः ।।६९।।

**भावचन्द्रिका**– सम्पोथयामास सम्पोथनानुकूलव्यापारमकरोत् ।।६९।।

**चट्टि**– ननु गर्भषट्कं हत्वा अस्मिन् सप्तमत्वबुद्धिमकृत्वा अष्टमं कथं मेन इत्यत आह– **गर्भमिति** ।। हि यस्माल्लोकाः देवक्याः सप्तमं गर्भं सुतं गलितं मेनिरे ज्ञातवन्तः । देवकीगर्भगतः शेषः दुर्गया

१. 'सा तद्धस्तात् समुत्प्लुत्य सद्यो देव्यम्बरं गता । अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ।। दिव्यस्रगम्बरालेपरत्ना-भरणभूषिता । धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा ।। सिद्धचारणगन्धर्वैः अप्सरःकिन्नरोरगैः। उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ।।' इति भागवते १०.५.९-११ ।

रोहिणीगर्भे स्थापितत्वात् देवकीगर्भस्रावो जात इति लोके प्रसिद्धिरभूदिति भावः । ततः कारणात् सः कंसः तां दुर्गां अष्टमं अष्टमापत्यं मत्वा हन्तुं पादयोः सम्प्रगृह्य शिलातले सम्पोथयामास पातयामासेत्यर्थः ॥६९॥

**सा तद्धस्तात्[१] क्षिप्रमुत्पत्य देवी खेऽदृश्यतैवाष्टभुजा समग्रा ।**
**ब्रह्मादिभिः पूज्यमाना समग्रैरत्यद्भुताकारवती हरिप्रिया ॥७०॥**

**व्यासतीर्थीया–** समग्रा सम्पूर्णा ॥७०॥

**वेदाङ्गतीर्थीया–** ...समग्रा सम्पूर्णावयवाः बाल्यं विहायेति भावः । तदेवाह– **अत्यद्भुताकारवतीति** ॥ समग्रैः सर्वैः ॥७०॥

**वादिराजीया–** खेऽदृश्यतैवेत्यत्र ख एव इत्येवकारसम्बन्धः ॥७०-७७॥

**वरदराजीया–** सा देवी दुर्गा तस्य कंसस्य हस्तात् क्षिप्रं वेगेन पातनात्पूर्वमेवेत्यर्थः । उत्पत्य मोचयित्वा समग्रा पूर्णा अष्टभुजा सती खे आकाशे अदृश्यत दृष्टाऽभूत् । ब्रह्मादिभिः समग्रैः समस्तैः पूज्यमाना अत्यद्भुतः अलौकिकः आकारो अस्य अस्तीति तथा । हरेर्नारायणस्य प्रिया भार्या । अत्यद्भुताकारवतीत्यनेन दुर्गाया अनेकाभिधानरूपाणि ब्रह्मादिभिः पूज्यमानानि भागवतादौ उक्तानि सन्तीति दर्शयन्ति ॥७०॥

**अनन्तभट्टीया–** समग्रा पूर्णा । समग्रैः समस्तैः ॥७०॥

**जनार्दनीया–** सा देवी दुर्गा तस्य कंसस्य हस्तादेव । शिलास्पर्शनमनवाप्येत्यर्थः । क्षिप्रं उत्पत्य, अष्टौ भुजा यस्य सा तथा । समग्रा स्तनाद्यवयवैः सम्पूर्णा तारुण्यस्वरूपेत्यर्थः । खे वियति अदृश्यत दृष्टाऽभूत् । भूमिष्ठैरिति शेषः । ब्रह्मादिभिः समग्रैः सर्वसुरैः पूज्यमाना, अत्यद्भुतः अत्याश्चर्यकरः, लोकविलक्षण इत्यर्थः, आकारः स्वरूपं विद्यते यस्याः सा । हरेः प्रिया भार्या । अत एव आर्या सर्वोत्तमा ॥७०॥

**ताम्रपर्णीया–** समग्रा सम्पूर्णा ॥७०-७५॥

**चट्टि–** हरिप्रिया हरेः भार्या सा देवी दुर्गा तस्य कंसस्य हस्तादेव शिलास्पर्शात् प्रागेवेत्यर्थः । क्षिप्रं उत्पत्य अष्टौ भुजा यस्याः सा तथा । समग्रा स्तनाद्यवयवैः सम्पूर्णतारुण्यस्वरूपेत्यर्थः । ब्रह्मादिभिः समग्रैः सर्वैः पूज्यमाना अत्यद्भुतः अलौकिकः आकारः अस्याः अस्तीत्यत्यद्भुताकारवती सती खे आकाशे अदृश्यत दृष्टा अभूत् । भूमिष्ठैरिति शेषः ॥७०॥

**उवाच चार्या तव मृत्युरत्र क्वचित् प्रजातो हि वृथैव पाप ।**
**अनागसीं मां विनिहन्तुमिच्छस्यशक्यकार्ये तव चोद्यमोऽयम् ॥७१॥**

**व्यासतीर्थीया–** क्वचित्तिष्ठति ॥७१-७५॥

**अनन्तभट्टीया–** अत्र भूम्याम् ॥७१॥

**वरदराजीया–** आर्या श्रेष्ठा दुर्गा उवाच कंसं प्रतीति शेषः । किमिति । हे पाप पापात्मन् तव मृत्युः अत्र भूम्यां क्वचित्प्रजातोऽस्ति हि यस्मात् तस्मादनागसीं अनपराधां मां विनिहन्तुं वृथैवेच्छसि । मद्धननं तवाशक्यं चेत्याह– **अशक्येति** ॥ अशक्ये कर्तुमशक्ये कार्ये मद्धननात्मके तव अयमुद्योगः प्रयत्नः ॥७१॥

**जनार्दनीया–** दुर्गा उवाच । किमिति? हे पाप पापरूप कंस तव मृत्युः अत्र भुवि क्वचित्स्थले प्रजातो हि । अनागसीं अनपराधां मां वृथैव कार्यं विनैव हन्तुमिच्छसि । अशक्यं कर्तुं अशक्यम्, तच्च तत्कार्यं च मद्धननाख्यकार्यं तस्मिन् तव अयमुद्यमः उद्योगश्च । वृथेति पूर्वेणान्वयः ॥७१॥

**चट्टि–** आर्या श्रेष्ठा दुर्गा उवाच । किमिति । हे पापरूप कंस तव मृत्युरत्र भुवि क्वचित् स्थले प्रजातो हि । अनागसीं अनपराधां मां वृथैव कार्यं विनैव विनिहन्तुमिच्छसि । मद्धननं तवाशक्यं चेत्याह– **अशक्येति** ॥ अशक्यं कर्तुं अशक्यम्, तच्च तत्कार्यं च मद्धननाख्यकार्यं तस्मिन् तवायमुद्यमः प्रयत्नश्च ॥७१॥

**उक्त्वेति कंसं पुनरेव देवकीतल्पेऽशयद् [१]बालरूपैव दुर्गा ।**
**नाज्ञासिषुस्तामथ केचनात्र ऋते हि मातापितरौ गुणाढ्याम् ॥७२॥**

**वेदाङ्गतीर्थीया–** अत्र पुनः देवकीतल्पाशयानां नाज्ञासिषुः ॥७२-७६॥

**मधुसूदनीया–** ॥ **बालरूपैवेति** ॥ तद्वहे ववृधे चेत्यपि ग्राह्यम् । 'सा कन्या ववृधे तत्र वृष्णिसङ्घसुपूजिता' इत्यादि हरिवंशे । [२.४.४६] दुर्गा न केवलं मधुरायामेव तिष्ठति । द्वारकायामपि स्थितेति विशेषः प्रसङ्गादुक्ता इति ज्ञातव्यम् । तथाचोक्तम्– 'तथैव रामोऽतिबलं संपरिष्वज्य भागिनीम् । मूर्धन्युपाघ्राय सत्वेन परिष्वज्य च पाणिना । ददृशुश्च तयोर्मध्ये भगिनीं रामकृष्णयोः ॥' इत्यादि हरिवंशे [२.१०१.१७-१८] ॥७२-८४॥

---

१. 'सा कन्या ववृधे तत्र वृष्णिसङ्घसुपूजिता । पुत्रवत्पाल्यमाना सा वसुदेवाज्ञया तदा ॥' इति हरिवंशे. विष्णुपर्वणि ४.४६.

रोहिणीगर्भे स्थापितत्वात् देवकीगर्भस्रावो जात इति लोके प्रसिद्धिरभूदिति भावः । ततः कारणात् सः कंसः तां दुर्गां अष्टमं अष्टमापत्यं मत्वा हन्तुं पादयोः सम्प्रगृह्य शिलातले सम्पोथयामास पातयामासेत्यर्थः ।।६९।।

**सा तद्धस्तात्[१] क्षिप्रमुत्पत्य देवी खेऽदृश्यतैवाष्टभुजा समग्रा ।**
**ब्रह्मादिभिः पूज्यमाना समग्रैरत्यद्भुताकारवती हरिप्रिया ।।७०।।**

**व्यासतीर्थीया–** समग्रा सम्पूर्णा ।।७०।।

**वेदाङ्गतीर्थीया–** ...समग्रा सम्पूर्णावयवाः बाल्यं विहायेति भावः । तदेवाह– **अत्यद्भुताकारवतीति** ।। समग्रैः सर्वैः ।।७०।।

**वादिराजीया–** खेऽदृश्यतैवेत्यत्र ख एव इत्येवकारसम्बन्धः ।।७०-७७।।

**वरदराजीया–** सा देवी दुर्गा तस्य कंसस्य हस्तात् क्षिप्रं वेगेन पातनात्पूर्वमेवेत्यर्थः । उत्पत्य मोचयित्वा समग्रा पूर्णा अष्टभुजा सती खे आकाशे अदृश्यत दृष्टाऽभूत् । ब्रह्मादिभिः समग्रैः समस्तैः पूज्यमाना अत्यद्भुतः अलौकिकः आकारो अस्य अस्तीति तथा । हरेर्नारायणस्य प्रिया भार्या । अत्यद्भुताकारवतीत्यनेन दुर्गाया अनेकाभिधानरूपाणि ब्रह्मादिभिः पूज्यमानानि भागवतादौ उक्तानि सन्तीति दर्शयन्ति ।।७०।।

**अनन्तभट्टीया–** समग्रा पूर्णा । समग्रैः समस्तैः ।।७०।।

**जनार्दनीया–** सा देवी दुर्गा तस्य कंसस्य हस्तादेव । शिलास्पर्शनमनवाप्येत्यर्थः । क्षिप्रं उत्पत्य, अष्टौ भुजा यस्य सा तथा । समग्रा स्तनाद्यवयवैः सम्पूर्णा तारुण्यस्वरूपेत्यर्थः । खे वियति अदृश्यत दृष्टाऽभूत् । भूमिष्ठैरिति शेषः । ब्रह्मादिभिः समग्रैः सर्वसुरैः पूज्यमाना, अत्यद्भुतः अत्याश्चर्यकरः, लोकविलक्षण इत्यर्थः, आकारः स्वरूपं विद्यते यस्याः सा । हरेः प्रिया भार्या । अत एव आर्या सर्वोत्तमा ।।७०।।

**ताम्रपर्णीया–** समग्रा सम्पूर्णा ।।७०-७५।।

**चट्टि–** हरिप्रिया हरेः भार्या सा देवी दुर्गा तस्य कंसस्य हस्तादेव शिलास्पर्शात् प्रागेवेत्यर्थः । क्षिप्रं उत्पत्य अष्टौ भुजा यस्याः सा तथा । समग्रा स्तनाद्यवयवैः सम्पूर्णतारुण्यस्वरूपेत्यर्थः । ब्रह्मादिभिः समग्रैः सर्वैः पूज्यमाना अत्यद्भुतः अलौकिकः आकारः अस्याः अस्तीत्यत्यद्भुताकारवती सती खे आकाशे अदृश्यत दृष्टा अभूत् । भूमिष्ठैरिति शेषः ।।७०।।

**उवाच चार्या तव मृत्युरत्र क्वचित् प्रजातो हि वृथैव पाप ।**
**अनागसीं मां विनिहन्तुमिच्छस्यशक्यकार्ये तव चोद्यमोऽयम् ॥७१॥**

**व्यासतीर्थीया–** क्वचित्तिष्ठति ॥७१-७५॥

**अनन्तभट्टीया–** अत्र भूम्याम् ॥७१॥

**वरदराजीया–** आर्या श्रेष्ठा दुर्गा उवाच कंसं प्रतीति शेषः । किमिति । हे पाप पापात्मन् तव मृत्युः अत्र भूम्यां क्वचित्प्रजातोऽस्ति हि यस्मात् तस्मादनागसीं अनपराधां मां विनिहन्तुं वृथैवेच्छसि । मद्धननं तवाशक्यं चेत्याह– **अशक्येति** ॥ अशक्ये कर्तुमशक्ये कार्ये मद्धननात्मके तव अयमुद्योगः प्रयत्नः ॥७१॥

**जनार्दनीया–** दुर्गा उवाच । किमिति? हे पाप पापरूप कंस तव मृत्युः अत्र भुवि क्वचित्स्थले प्रजातो हि । अनागसीं अनपराधां मां वृथैव कार्यं विनैव हन्तुमिच्छसि । अशक्यं कर्तुं अशक्यम्, तच्च तत्कार्यं च मद्धननाख्यकार्यं तस्मिन् तव अयमुद्यमः उद्योगश्च । वृथेति पूर्वेणान्वयः ॥७१॥

**चट्टि–** आर्या श्रेष्ठा दुर्गा उवाच । किमिति । हे पापरूप कंस तव मृत्युरत्र भुवि क्वचित् स्थले प्रजातो हि । अनागसीं अनपराधां मां वृथैव कार्यं विनैव विनिहन्तुमिच्छसि । मद्धननं तवाशक्यं चेत्याह– **अशक्येति** ॥ अशक्यं कर्तुं अशक्यम्, तच्च तत्कार्यं च मद्धननाख्यकार्यं तस्मिन् तवायमुद्यमः प्रयत्नश्च ॥७१॥

**उक्त्वेति कंसं पुनरेव देवकीतल्पेऽशयद् [1]बालरूपैव दुर्गा ।**
**नाज्ञासिषुस्तामथ केचनात्र ऋते हि मातापितरौ गुणाढ्याम् ॥७२॥**

**वेदाङ्गतीर्थीया–** अत्र पुनः देवकीतल्पाशयानां नाज्ञासिषुः ॥७२-७६॥

**मधुसूदनीया–** ॥ **बालरूपैवेति** ॥ तद्गृहे ववृधे चेत्यपि ग्राह्यम् । 'सा कन्या ववृधे तत्र वृष्णिसङ्घसुपूजिता' इत्यादि हरिवंशे । [२.४.४६] दुर्गा न केवलं मधुरायामेव तिष्ठति । द्वारकायामपि स्थितेति विशेषः प्रसङ्गादुक्ता इति ज्ञातव्यम् । तथाचोक्तम्– 'तथैव रामोऽतिबलं संपरिष्वज्य भागिनीम् । मूर्धन्युपाघ्राय सत्वेन परिष्वज्य च पाणिना । ददृशुश्च तयोर्मध्ये भगिनीं रामकृष्णयोः ॥' इत्यादि हरिवंशे [२.१०१.१७-१८] ॥७२-८४॥

---

१. 'सा कन्या ववृधे तत्र वृष्णिसङ्घसुपूजिता । पुत्रवत्पाल्यमाना सा वसुदेवाज्ञया तदा ॥' इति हरिवंशे. विष्णुपर्वणि ४.४६.

**अनन्तभट्टीया–** मातापितरौ ऋते ।।७२।।

**वरदराजीया–** इति कंसं प्रत्युक्त्वा बालरूपा सती दुर्गा पुनर्देवक्यास्तल्पे शय्यायां अशयत् सुष्वाप । अथानन्तरं अत्र शयानां गुणाढ्यां तां दुर्गां मातापितरौ देवकीवसुदेवौ ऋते विना अन्ये केचन केऽपि नाज्ञाशिषुः न ज्ञातवन्तः ।।७२।।

**जनार्दनीया–** दुर्गा कंसं प्रति इत्युक्त्वा, पुनः बालरूपा सत्येव देवक्याः तल्पे शयनेऽशयत् सुश्वाप । अथ देवकीतल्पप्राप्त्यनन्तरं अत्र भुवि मातापितरौ ऋते केचन पुरुषाः गुणाढ्यां तां दुर्गां नाज्ञासिषुः नाजानन् ।।७२।।

**चट्टि–** इति कंसं प्रत्युक्त्वा सा दुर्गा पुनः बालरूपा सत्येव देवक्याः तल्पे शय्यायामेव अशयत् सुष्वाप । तद्गृहे ववृधे चेत्यपि ग्राह्यम् । 'सा कन्या ववृधे तत्र वृष्णिसङ्घसुपूजिता' इत्यादि हरिवंशे । अथ देवकीतल्पे शयनानन्तरं अत्र भुवि मातापितरौ देवकीवसुदेवौ ऋते केचन पुरुषाः गुणाढ्यां तां नाज्ञासिषुः नाजानन् ।।७२।।

**श्रुत्वा तयोक्तं तु तदैव कंसः पश्चात्तापाद् वसुदेवं सभार्यम् ।**
**प्रसादयामास पुनः पुनश्च विहाय कोपं च तमूचतुस्तौ ।**
**सुखस्य दुःखस्य च राजसिंह नान्यः कर्ता वासुदेवादिति स्म ।।७३।।**

**वरदराजीया–** कंसः तया दुर्गया उक्तं वचनं तव मृत्युः क्वचित्प्रजात इत्यादिरूपं श्रुत्वा तदैव तदनन्तरमेव पश्चात्तापात् अनुतापात् सभार्यं देवकीसहितं वसुदेवं पुनः नमस्कारादिभिः प्रसादयामास प्रसन्नमकरोत् । तौ देवकीवसुदेवौ कोपं विद्वेषं विहाय तं कंसं ऊचतुः उक्तवन्तौ । किमिति । हे राजसिंह राजश्रेष्ठ सुखस्य दुःखस्य च वासुदेवादन्यः कर्ता नास्ति । सर्वं वासुदेवाधीनम् । वयं अस्वतन्त्रा इत्युक्तवन्तावित्यर्थः ।।७३।।

**अनन्तभट्टीया–** पश्चात्तापात् अनुतापात् । कोपं विहाय प्रसादयामास । इति स्मोचतुः ।।७३।।

**जनार्दनीया–** कंसः तया दुर्गया । पश्चात्तापात् स्वसृभामयोः वृथा मया दुःखं दत्तमित्यनुतापात् । तौ देवकीवसुदेवौ कोपं विहाय तं कंसं ऊचतुः । किमिति? हे राजसिंह राजश्रेष्ठ सुखस्य दुःखस्य सुखदुःखस्य च वासुदेवादन्यः पुरुषः कर्ता नास्ति स्म । अतस्त्वत्तः आवयोः दुःखं नास्तीति भावेनोचतुरिति सम्बन्धः ।।७३।।

**चट्टि–** कंसः तया दुर्गया उक्तं वचनं तव मृत्युः क्वचित् जात इत्यादिरूपं श्रुत्वा तदैव तदनन्तरमेव पश्चात्तापात् सभार्यं देवकीसहितं वसुदेवं पुनः पुनश्च नमस्कारादिभिः प्रसादयामास प्रसन्नमकरोत् । तौ

देवकीवसुदेवौ कोपं विहाय तं कंसमूचतुः । किमिति । हे राजसिंह राजश्रेष्ठ सुखस्य दुःखस्य च वासुदेवादन्यः पुरुषः कर्ता नास्ति स्म । सर्वे वासुदेवाधीनाः । वयं त्वं च न स्वतन्त्राः इत्यूचुरित्यर्थः ।।७३।।

**आनीय कंसोऽथ गृहे स्वमन्त्रिणः प्रोवाच कन्यावचनं समस्तम् ।**
**श्रुत्वा च ते प्रोचुरत्यन्तपापाः कार्यं बालानां निधनं सर्वशोऽपि ।।७४।।**

**वरदराजीया—** अथानन्तरं गृहे स्वगृहे स्वस्य विद्यमानान् मन्त्रिणः प्रधानजनान् आनीय आनयित्वा मेलयित्वेति शेषः । तान् प्रति समस्तं कन्यावचनं 'तव मृत्युः अन्यत्र प्रजातः' इत्यादिरूपं जगाद उक्तवान् । तेऽपि कंसं प्रति प्रोचुः । किमिति सर्वशः सर्वेषां बालानां निधनं हननं कर्तव्यमिति ।।७४।।

**अनन्तभट्टीया—** आनीय मेलयित्वा । निधनं हननम् ।।७४।।

**जनार्दनीया—** अथ कंसः गृहे स्वगृहे स्वमन्त्रिणः स्वामात्यान् आनीय, आहूयेत्यर्थः । कन्यावचनं कन्योक्तं वाक्यं प्रोवाच । ते मन्त्रिणः । सर्वशोऽपि सर्वेषामपि निधनं वधः ।।७४।।

**चर्ट्टि—** अथ कंसः गृहे स्वगृहे स्वमन्त्रिणः स्वामात्यान् आनीय आनयित्वा समस्तं कन्यावचनं प्रोवाच । अत्यन्तपापास्ते मन्त्रिणः श्रुत्वा, तद्वचनमिति शेषः । सर्वशः सर्वेषामपि बालानां निधनं हननं कार्यं कर्तव्यमिति कंसं प्रति प्रोचुः ।।७४।।

**तथेति तांस्तत्र नियुज्य कंसो गृहं स्वकीयं प्रविवेश पापः ।**
**चेरुश्च ते[१] बालवधे सदोद्यता हिंसाविहाराः सततं स्वभावतः ।।७५।।**

**वरदराजीया—** तथेति तथास्त्विति तान् मन्त्रिणः तत्र बालानां हनने कार्ये नियुज्य नियुङ्क्त्वा पापः पापरूपः कंसः स्वकीयं स्वस्य विद्यमानं गृहं प्रविवेश । स्वभावतः स्वभावेणैव सततं अत्यन्तं हिंसा विहारः क्रीडा येषां ते तथा । बालानां वधे उद्यता उद्युक्ताः उद्योगवन्तः ते विनियुक्ताः चेरुः तत्र तत्र सञ्चारितवन्तः ।।७५।।

**अनन्तभट्टीया—** तत्र बालनिधने ।।७५-७६।।

१. 'सन्दिश्य साधुलोकस्य कदने कदनप्रियान् । कामरूपधरान् दिक्षु दानवान् गृहमाविशत् ।। ते वै रजःप्रकृतयस्तमसा मूढचेतसः । सतां विद्वेषमाचेरुः आरादागतमृत्यवः ।।' इति भागवते.१०.६.४४-४५ ।

**जनार्दनीया–** कंसः तथेति तथाऽस्त्विति उक्त्वेत्यर्थः । तान् मन्त्रिणः तत्र बालवधकर्मणि नियुज्य व्यापार्य, सततं निरन्तरम्, स्वभावतः, निमित्तं विनेति भावः । हिंसैव विहाराः क्रीडाः येषां ते तथा । नृशंसा इत्यर्थः । ते मन्त्रिणः बालवधे सदा उद्यताः प्रयत्नवन्तः सन्तः इतस्ततः चेरुः सञ्चारं चक्रुः ।।७५।।

**चट्टि–** पापः पापरूपः कंसस्तथेति तथास्त्विति तान् मन्त्रिणः तत्र बालवधकर्मणि नियुज्य स्वकीयं गृहं प्रविवेश । स्वभावतः स्वभावेनैव निमित्तं विनेति भावः । सन्ततं निरन्तरं हिंसैव विहारः क्रीडा एषां ते तथा । नृशंसका इत्यर्थः । ते मन्त्रिणः बालवधे सदोद्यताः प्रयत्नवन्तः सन्तस्तत्र चेरुः सञ्चारं चक्रुः ।।७५।।

**अथ प्रभाते शयने शयानमपश्यतामब्जदलायताक्षम् ।**
**कृष्णं यशोदा च तथैव नन्द आनन्दसान्द्राकृतिमप्रमेयम् ।।७६।।**

**व्यासतीर्थीया–** न लोकशिशुवद्दुःखित्वं शङ्क्यमिति भावेनोक्तम्– **आनन्दसान्द्राकृतिमिति** ।। शयने शयानमित्युक्त्या परिच्छिन्नप्रतीतिं निवारयितुमुक्तम्– **अप्रमेयमिति** ।।७६।।

**वरदराजीया–** अथ रात्र्यपगमानन्तरं प्रभाते प्रातः शयने शयानम् । अब्जदलवत् पद्मपत्रवत् आयते विशाले अक्षिणी यस्य स तथा तम् । आनन्देन सान्द्रा निरन्तरा आकृतिः मूर्तिः यस्य स तथा तम् । अप्रमेयं साकल्येन प्रमातुशक्यं कृष्णं यशोदा नन्दश्चोभौ अपश्यतां दृष्टवन्तौ ।।७६।।

**जनार्दनीया–** अथशब्दो मङ्गलवाची । अवतारानन्तरं वा । प्रभाते प्रातःकाले आनन्देन सान्द्रा निबिडा, आकृतिः प्रतिमा यस्य स तथा तम् । कृष्णमपश्यतां ददृशतुः ।।७६।।

**ताम्रपर्णीया–** ।। **अथ प्रभात इति** ।। प्रभाते प्रकाशमाने शयन इत्यर्थः । एतेन निशीथे प्रसवात् प्रातः कालपर्यन्तं कथं जातकर्माद्यकरणमिति निरस्तम् । लौकिकशिशुवैलक्षण्यज्ञापनायोक्तम्– **आनन्देति** ।। शयाने शयानमित्युक्त्या प्राप्तं मितत्वं वारयितुमुक्तम्– **अप्रमेयमिति** ।।७६-७७।।

**भावचन्द्रिका–** शयानमित्युक्त्या निद्राभ्रान्तिं वारयति– **अब्जेति** ।।७६।।

**भावचन्द्रिका–** तर्हि श्रमपरिहारार्थमित्यत आह– **आनन्देति** ।। शयनोक्त्या परिच्छेदप्रतीतौ व्याप्तिः नेति भ्रमवारणायाह– **अप्रमेयमिति** ।।७६।।

**चट्टि–** अथ रात्र्यपगमनानन्तरं प्रभाते प्रातःकाले शयने शय्यायां शयानं अब्जदलवत् पद्मपत्रवद् आयते विशाले अक्षिणी यस्य स तथा तम् । आनन्देन सान्द्रा निबिडा आकृतिः मूर्तिः यस्य स तथा तम् । अप्रमेयं साकल्येन प्रमातुमशक्यं कृष्णं यशोदा नन्दश्चोभौ अपश्यतां ददर्शतुः ।।७६।।

**मेनात एतौ निजपुत्रमेनं स्रष्टारमब्जप्रभवस्य चेशम् ।**
**महोत्सवात् पूर्णमनाश्च नन्दो विप्रेभ्योऽदाल्लक्षमितास्तथा गाः ॥७७॥**

**व्यासतीर्थीया–** लक्षमिताः लक्षसङ्ख्यामिता बहूनीति कश्चित्सङ्ख्याविशेषः ॥७७॥

**वेदाङ्गतीर्थीया–** लक्षमिताः लक्षसङ्ख्यापरिमिताः ॥७७॥

**वरदराजीया–** एतौ यशोदानन्दगोपौ अब्जप्रभवस्य ब्रह्मणः स्रष्टारं जनकं ईशं स्वामिनं एनं कृष्णं निजपुत्रं आत्मपुत्रं मेनाते ज्ञातवन्तौ । एतदाश्चर्यमित्यर्थः । महोत्सवान्निमित्तात् पूर्णमना उदारमनाः तदा कृष्णावतारे लक्षमिताः लक्षसङ्ख्यया मिता परिमिता गाः धेनूः विप्रेभ्यो ब्राह्मणेभ्यो अदात् दत्तवान् ॥७७॥

**अनन्तभट्टीया–** अब्जप्रभवस्य विरिञ्चस्य स्रष्टारं ईशश्च । लक्षमिताः लक्षसङ्ख्याकमिताः ॥७७॥

**जनार्दनीया–** एतौ यशोदानन्दगोपौ, अब्जात् प्रभवः उत्पत्तिर्यस्य ब्रह्मणः स्रष्टारं उत्पादकम् । एनं कृष्णं निजपुत्रमिति आवयोः पुत्रमित्यर्थः । मेनाते ज्ञातवन्तौ । महोत्सवात् पुत्रोत्सवनिमित्तात् पूर्णमभीप्सितकामपूर्णं मनो यस्य स तथा । लक्षमिताः लक्षाभ्यां मिताः लक्षद्वयसङ्ख्याकाः गाः अदात् । 'धेनूनां नियुते प्रादात्' [१०.६.३] इति भागवते ॥७७॥

**भावचन्द्रिका–** तज्ज्ञानजनने समर्थ इत्याह– **ईशमिति** ॥ तदपि कुत इत्यत आह– **स्रष्टारमिति** ॥७७॥

**चट्टि–** एतौ यशोदानन्दगोपौ अब्जात् प्रभव उत्पत्तिर्यस्य तस्य ब्रह्मणः स्रष्टारमुत्पादकमीशं स्वामिनं एनं श्रीकृष्णं निजपुत्रं मेनाते ज्ञातवन्तौ । एतदाश्चर्यमित्यर्थः । नन्दः महोत्सवात् पुत्रोत्सवनिमित्तात् पूर्णमभीप्सितकामपूर्णं मनो यस्य स तथा भूतस्सन्, तदा श्रीकृष्णावतारसमये लक्षमिताः लक्षसङ्ख्याकाः गाः विप्रेभ्यो अदात् दत्तवान् ॥७७॥

**सुवर्णरत्नाम्बरभूषणानां बहूनि गोजीविगणाधिनाथः ।**
**प्रादादथोपायनपाणयस्तं गोपा यशोदां च मुदा स्त्रियोऽगमन् ॥७८॥**

**व्यासतीर्थीया–** सुवर्णादीनां विशेषणत्वे द्वितीया स्यात् । पुञ्जानीति वा ॥७८॥

**वेदाङ्गतीर्थीया–** बहूनीति कश्चित् सङ्ख्याविशेषः । सुवर्णरत्नाम्बरभूषणानां बहूनि पुञ्जानीति वा ॥७८-८६॥

**वादिराजीया–** सुवर्णरत्नाम्बरभूषणानामित्यत्र सुवर्णरत्नाम्बरैः भूषणानि यासां ताः तासां गवां बहूनि वृन्दानि च प्रादादिति सम्बन्धः । तूष्णीं गवां लक्षं दत्तवान् अलङ्कृता गाश्च बह्वीर्दत्तवानिति भावः । सुवर्णरत्नाम्बरभूषणानां वृन्दानि च प्रादादिति प्रत्येकं वा सम्बन्धः ।।७८-९१।।

**वरदराजीया–** सुवर्णादीनां बहूनि पुञ्जानि प्रादात् । यतो गोजीविनां गोपानां गणस्य समूहस्य अधिनाथो राजेत्यर्थः । अथानन्तरं उपायनं पारिबर्हं पाणौ येषां ते तथा, गोपाः तं नन्दगोपं प्रति अगमन् । तथा स्त्रियो गोपिकाश्च यशोदां मुदा हर्षेणाग्रमन् ।।७८।।

**अनन्तभट्टीया–** बहूनि पुञ्जानि ।।७८।।

**जनार्दनीया–** गोभिर्गोरसाद्यैः जीवनं जीवनोपायो विद्यते येषां ते तथा, तेषां गोजीविनां गोपानां गणानां अधिनाथः । सुवर्णादीनां बहूनि अपरिमितानि सङ्ख्याविशेषो वा प्रादात् । अथ उपायनं उत्सवकाले दातुमुचितं वस्त्रादिकं उपायनं, तदेव पाणौ येषां ते । गोपाः तं नन्दं अगमन् प्रापुः । स्त्रियः गोपवध्वः उपायनपाणयः सत्यः यशोदामगमन् ।।७८।।

**ताम्रपर्णीया–** ।। **सुवर्णेति** ।। सुवर्णरत्नाम्बरैर्भूषणानि यासां ताः तासां गवां बहूनि [वृन्दानि] अर्बुदानि च प्रादादित्यर्थः । तूष्णीं गवां लक्षं दत्तवान् । अलङ्कृताश्च बह्वीर्दत्तवानित्यर्थः । यद्वा सुवर्णादीनां बहूनि वृन्दानि प्रादादित्यर्थः ।।७८-८२।।

**चट्टि–** गोभिः गोरसाद्यैः जीवनं जीवनोपाय एषां अस्तीति गोजीविनः, तेषां गणानामधिनाथः राजा नन्दः सुवर्णरत्नाम्बरभूषणानां बहूनि पुञ्जानि प्रादात् । अथ अनन्तरं उपायनमुत्सवकाले दातुमुचितं वस्त्रादिकमुपायनं तदेव पाणौ एषां ते, गोपाः तं नन्दं अगमन् प्रापुः । स्त्रियः गोपवध्वः उपायनपाणयस्सत्यः यशोदां च मुदा हर्षेणागमन् ।।७८।।

**गतेषु तत्रैव दिनेषु केषुचिज्जगाम कंसस्य गृहं स नन्दः ।**
**पूर्वं हि नन्दः स करं[1] हि दातुं बृहद्वनान्निस्सृतः प्राप कृष्णाम् ।।७९।।**

**व्यासतीर्थीया–** ननु नन्दस्यावस्थानं बृहद्वनं किमर्थमसौ यमुनामगादिति जिज्ञासायामाह– **पूर्वमिति** ।। कृष्णां यमुनाम् ।।७९-८२।।

---

१. 'नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह । वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम् । ज्ञात्वा दत्तकरं राज्ञे ययौ तदवलोकनः ।।' इति भागवते.१०.६.१९-२०। 'बृहद्वनं तदधुना यत्रास्से त्वं सहद्धुतः' इति तत्रैव २६ । 'यमुनां चातिगम्भीरां नानावर्तशताकुलाम् । वसुदेवो वहन् विष्णुं जानुमात्रवहां ययौ ।। कंसस्य करमादाय तत्रैवाभ्यागतांस्तटे । नन्दादीन् गोपवृद्धांश्च यमुनायां ददर्श सः ।।' इति ब्रह्मपुराणे ७३.२२-२३

**सत्याभिनवतीर्थीया–** तत्रैव गतेषु तत्रैव दिनेषु केषुचिज्जगाम... इति श्लोकः । तस्यार्थः । तत्रैव यत्र कृष्णस्यागमनं जातं तस्मिन्नेव स्थाने केषुचिद्दिनेषु गतेषु सत्सु सः नन्दः कंसस्य गृहं जगाम । वृहद्वने एव कृष्णस्यागमनं जातम् । तत्रैव कानिचिद्दिनानि गतानीति भ्रमं वारयति– **पूर्वमिति** । सः नन्दः पूर्वं हि यशोदाप्रसवात्पूर्वमेव करं दातुं वृहद्वनात् निस्सृतः सन् कृष्णां यमुनां प्राप इत्येतत् हि प्रसिद्धमिति । एतेन नन्दो यमुनां प्राप्येत्यर्थस्य पूर्वमनुक्तत्वात् । तत्रैवेत्यस्य यमुनातीरे एवेत्यर्थो वक्तुं न शक्यते इति दूषणं परास्तम् । तत्रैवेत्यस्य यत्र कृष्णागमनं जातं तत्रैवेत्यर्थः । यमुनातीरे एवेत्यर्थस्तु 'पूर्वं हि नन्द' इत्युत्तरवाक्यप्रदर्शनानन्तरं पर्यवसितो भवतीत्यङ्गीकारात् ॥७९-८०॥

**वरदराजीया–** तत्रैव यमुनातीर एव केषुचिद्दिनेषु गतेषु सत्सु स नन्दो नन्दगोपः कंसस्य गृहं जगाम । ननु वृहद्वनादागत्य यमुनातीरे नन्दः किमर्थं स्थित इत्यत आह– **पूर्वमिति** ॥ पूर्वं कृष्णावतारात्पूर्वं स नन्दः करं वार्षिकं कंसाय दातुं वृहद्वनान्निसृतः निर्गतः कृष्णां यमुनां प्राप ॥७९॥

**अनन्तभट्टीया–** ननु नन्दस्य वसतिः वृहद्वने तं कृष्णार्थं यमुना किमर्थमगादित्यत आह– **पूर्वमिति** ॥ तत्र व्रजे ॥७९-८२॥

**जनार्दनीया–** नन्दः तत्र यमुनातीरे केषुचिद्दिनेषु त्रिंशद्दिनेष्वित्यर्थः । गतेषु सत्सु, कंसस्य गृहं प्रति जगाम । ननु नन्दः स्ववासभूतं महावनं हित्वा, यमुनातीरे किमर्थं वसतिं कृतवानित्यत आह– **पूर्वमिति** ॥ नन्दः पूर्वं यशोदाप्रसवकालात् पूर्वं कंसाय करं दातुं वृहद्वनात् महावनात् निःसृतः निर्गतः सन् कृष्णां कालिन्दीं प्राप । वृहद्वनान्निर्गतो नन्दः वृहद्वनस्य पश्चिमदिक्स्थां क्रोशद्वयव्यवहितां मधुरां गन्तुं महावनान्तरगां यमुनां प्रापेति भावः ॥७९॥

**चट्टि–** तत्र यमुनातीरे एव केषुचिद्दिनेषु गतेषु सत्सु सः नन्दः कंसस्य गृहं प्रति जगाम । ननु नन्दः स्ववासभूतं वृहद्वनं विहाय यमुनातीरे किमर्थं वासं कृतवानित्यत आह– **पूर्वमिति** ॥ पूर्वं यशोदाप्रसवकालात् पूर्वं सः नन्दः कंसाय करं दातुं वृहद्वनान्निसृतो निर्गतः सन् कृष्णां यमुनां प्राप । वृहद्वनात् निर्गतः नन्दः वृहद्वनस्य पश्चिमदिगवस्थितां क्रोशद्वयव्यवहितां मथुरामहावनान्तरगां यमुनां प्रापेति भावः ॥७९॥

**सहाऽऽगता तेन तदा यशोदा सुषाव दुर्गामथ तत्र शौरिः ।**
**निधाय कृष्णं प्रतिगृह्य कन्यकां गृहं ययौ नन्द उवास तत्र ॥८०॥**

**वरदराजीया–** तदा तेन नन्देन सह यशोदाप्यागता यमुनामित्यर्थः । अथानन्तरं तत्र यमुनातीरे दुर्गां सुषाव प्रसूतवती । यशोदाप्रसूतिसमयं अवलोक्य नन्दो यशोदया सह तत्रैव स्थितः तत्रैव प्रसवो जात इति भावः । तत्र यमुनातीर एव शौरिर्वसुदेवः कृष्णं निधाय कन्यकां प्रतिगृह्य गृहं स्वगृहं ययौ । तत्र यमुनातीरे नन्दः उवास । कंसं प्रत्यगत्वैवेत्यर्थः ॥८०॥

**जनार्दनीया–** तेन नन्देन सह यशोदा आगता । तदा तस्मिन् दिने तत्र यमुनातीरे दुर्गां सुषाव । अथ दुर्गाप्रसवानन्तरं शौरिः वसुदेवः तत्र यशोदामञ्चे कृष्णं निधाय, कन्यां यशोदायां जातां कन्यां प्रतिगृह्य, गृहं मधुरायां विद्यमानं स्वगृहं ययौ प्राप । तत्रेत्युभयत्रानुषज्यते । नन्दस्तत्र यमुनातीरे उवासावसत् ॥८०॥

**चट्टि–** तेन नन्देन सह यशोदाप्यागता । तदा तस्मिन् दिने तत्र यमुनातीरे दुर्गां सुषाव प्रसूतवती । अथ प्रसवानन्तरं शौरिः वसुदेवः तत्र यशोदातल्पे श्रीकृष्णं निधाय, कन्यकां यशोदायां जातां कन्यां प्रतिगृह्य, मथुरायां विद्यमानं स्वगृहं ययौ । तत्रेत्युभयत्रानुषङ्गः । नन्दस्तत्र यमुनातीरे उवास ॥८०॥

**निरुष्य तस्मिन् यमुनातटे स मासं ययौ द्रष्टुकामो नरेन्द्रम् ।**
**राज्ञोऽथ तं दत्तकरं ददर्श शूरात्मजो वाक्यमुवाच चैनम् ॥८१॥**

**वरदराजीया–** स नन्दः तस्मिन् यमुनातटे मासं मासपर्यन्तं निरुष्य वासं कृत्वा अथानन्तरं नरेन्द्रं कंसं द्रष्टुकामो ययौ । अनेन कंसस्य गृहमित्येतद्विवृतं भवति । अथानन्तरं राज्ञे कंसाय दत्तः करो येन स तथा । तं नन्दं शूरात्मजो वसुदेवो ददर्श । निर्गमनसमये एनं प्रति वाक्यं प्रोवाच ॥

**जनार्दनीया–** स नन्दः तस्मिन् यमुनातटे प्रसवस्थल एवेत्यर्थः । मासं मासपर्यन्तकालं निरुष्य उषित्वा नरेन्द्रं कंसं द्रष्टुकामः ययौ । मधुरां प्रतीति शेषः । अथ मधुराप्रवेशानन्तरं राज्ञे कंसाय । तं नन्दं ददर्श । एनं नन्दं प्रति ॥८१॥

**चट्टि–** सः नन्दः तस्मिन् यमुनातटे प्रसवस्थल एवेत्यर्थः । मासं मासपरिमितकालं निरुष्य उषित्वा नरेन्द्रं कंसं द्रष्टुकामः ययौ । मथुरां प्रतीति शेषः । अथ मथुराप्रवेशानन्तरं राज्ञे कंसाय दत्तः करो येन सः तथा तं नन्दं शूरात्मजो वसुदेवो ददर्श । निर्गमनसमये वसुदेवः एनं नन्दं प्रति वाक्यमुवाच ॥८१॥

**याह्युत्पाताः[१] सन्ति तत्रेत्युदीरिते जगाम शीघ्रं यमुनां स नन्दः ।**
**रात्रावेवाऽगच्छमाने तु नन्दे कंसस्य धात्री तु जगाम गोष्ठम् ॥८२॥**

१. 'करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः । नेह स्थेयं बहुदिनं सन्त्युत्पाताश्च गोकुले ॥' इति भागवते१०.६.३१ ।

**वरदराजीया–** वसुदेवः तत्र यमुनाकूले उत्पाता अरिष्टानि सन्ति अतो याहीति उदीरितः स नन्दो यमुनां प्रति शीघ्रं वेगेन जगाम । रात्रावेव नन्दे आगच्छमाने आगच्छति सति कंसस्य धात्री पूतना गोष्ठं गोकुलं प्रति रात्रावेव जगाम ।।८२।।

**जनार्दनीया–** तव यशोदानिवासस्थले उत्पाताः सन्ति भवन्ति । हि यतः । अतो याहीत्युवाचेति सम्बन्धः । धात्री पूतना गोष्ठं व्रजं जगाम प्राप । नन्दागमनात् पूर्वमिति शेषः । 'धात्री स्यादुपमाता' इत्यमरः ।।८२।।

**चट्टि–** तत्र यशोदानिवासस्थले उत्पाताः सन्ति भवन्ति यतः अतः याहीत्युवाचेति सम्बन्धः । इत्युदीरितः सः नन्दः यमुनां प्रति शीघ्रं जगाम । रात्रावेव नन्दे आगच्छमाने आगच्छति सति कंसस्य धात्री पूतना गोष्ठं जगाम प्राप ।।८२।।

**सा पूतना नाम निजस्वरूपमाच्छाद्य रात्रौ शुभरूपवच्च ।**
**विवेश नन्दस्य गृहं बृहद्वनप्रान्ते हि मार्गे रचितं प्रयाणे ।।८३।।**

**व्यासतीर्थीया–** शुभरूपवत् शुभरूपिणीव ।।८३-८६।।

**वरदराजीया–** सा पूतना नाम प्रसिद्धा राक्षसी निजं स्वरूपं राक्षसीरूपं आच्छाद्य अन्तर्धाय शुभरूपवत् शोभनरूपवती यथा तथा नन्दस्य गृहं विवेश । बृहद्वने स्थितं मुख्यगृहं विवेश इत्यन्यथाप्रतीतिं वारयति– **बृहदिति** ।। बृहद्वनस्य प्रान्ते समीपे प्रयाणे मधुरां प्रति गमने कर्तव्ये विश्रामार्थं यमस्य भगिन्या यमुनायास्तीरे रचितं गृहमिति सम्बन्धः ।।८३।।

**अनन्तभट्टीया–** रात्रौ गोष्ठं जगाम । शुभरूपवत् शुभरूपवती च । प्रयाणे मथुरागमनकाले बृहद्वनतः बृहद्वनसमीपवर्तिना मार्गे ।।८३।।

**जनार्दनीया–** सा कंसधात्री पूतनेति नाम प्रसिद्धा निजस्वरूपं स्वराक्षसीस्वरूपं आच्छाद्य मायया पिधाय, शुभरूपवत् सुरूपमिव रूपं प्राप्येत्यर्थः । शुभरूपवतीति वा । बृहद्वनस्य प्रान्ते प्रदेशे प्रयाणे मधुराप्रयाणे मार्गे हि प्रसिद्धमार्गे, राजमार्गे इति यावत् । रचितं निर्मितं नन्दस्य गृहं विवेश ।।८३।।

**ताम्रपर्णीया–** शुभरूपवच्च शुभरूपे वा ।।८३-८८।।

**चट्टि–** पूतना नाम पूतनेति प्रसिद्धा सा कंसधात्री निजस्वरूपं स्वराक्षसीरूपं आच्छाद्य मायया पिधाय शुभरूपवच्छुभरूपिणीव बृहद्वनस्य प्रान्ते प्रयाणे मार्गे मथुरां प्रति गमनसाधने राजमार्गे रचितं निर्मितं नन्दस्य गृहं रात्रौ विवेश ।।८३।।

**तीरे भगिन्यास्तु यमस्य वस्त्रगृहे शयानं पुरुषोत्तमं तम् ।**
**जग्राह मात्रा तु यशोदया तया निद्रायुजा[1] प्रेक्ष्यमाणा शुभेव ॥८४॥**

**वरदराजीया–** तत्रापि वस्त्रगृहे वस्त्रस्थापनार्थं रचिते गृहे शयानं पुरुषोत्तमं तं कृष्णं जग्राह आददे । कथंभूता निद्रायुजा किञ्चिन्निद्रायुक्तया मात्रा तया यशोदया शुभेव शोभनरूपवतीव प्रेक्षमाणा दृश्यमाना जग्राहेति सम्बन्धः ॥८४॥

**अनन्तभट्टीया–** निद्रायुजा निद्रायुक्तया ॥८५॥

**जनार्दनीया–** मार्गेऽपि वासयोग्यस्थलं दर्शयन्नाह– **तीर इति** ॥ निद्रया युजा युक्तया मात्रा तया यशोदया शुभेव सतीव प्रेक्ष्यमाणा दृश्यमाना पूतना तीरे रचिते वस्त्रगृहे वस्त्रात्मकगृहे शयानं कृष्णं जग्राह ॥८४॥

**चट्टि–** मार्गे निवासयोग्यं स्थलं दर्शयन्नाह– **तीर इति** ॥ यमस्य भगिन्याः यमुनायाः तीरे रचिते वस्त्रगृहे शयानं तं पुरुषोत्तमं श्रीकृष्णं निद्रया युजा युक्तया मात्रा तया यशोदया शुभेव प्रेक्षमाणा दृश्यमाना पूतना जग्राह ॥८४॥

**तन्मायया धर्षिता निद्रया च न्यवारयन्नैव हि नन्दजाया ।**
**तया प्रदत्तं स्तनमीशिताऽसुभिः पपौ सहैवाऽशु जनार्दनः प्रभुः ॥८५॥**

**मधुसूदनीया–** ॥ **तया प्रदत्तं स्तनमिति** ॥ विषदिग्धमिति शेषः । तथाचोक्तम्– 'राक्षसी निहता रौद्रा शकुनीवेषधारिणी । पूतना नाम घोरा सा महाकाया महाबला ॥ विषदिग्धं स्तनं क्षुद्रा प्रयच्छन्ती जनार्दने ॥' इति च ।[२.१०१.३१-३२] 'स पूतनोच्चस्तनकुम्भचुम्बिमुखारविन्दो हरिराबभाषे। विषं बहिस्थं प्रमदान्तरङ्गे सुपूरयंस्तन्मुखवर्त्मनैव ॥' इति [रुक्मिणीशविजय.२.३५]॥८५-९९॥

**वरदराजीया–** तस्याः पूतनायाः मायया ऐन्द्रजालिकमायया निद्रया च धर्षिता परवशा नन्दस्य जाया भार्या यशोदा नैव न्यवारयत् निवारितवती । तया पूतनया दत्तं स्तनं मुखे निक्षिप्तं स्तनं असुभिः प्राणैः सहैव पपौ अपिबत् । तत्र हेतुगर्भविशेषणत्रयम् । ईशिता सर्वस्य ईशनशीलः, प्रभुः समर्थः, जनार्दनः दुष्टजनान् अर्दयतीति ॥८५॥

---

१. 'तां तीक्ष्णचित्तां अतिवामचेष्टितां वीक्ष्यान्तराकोशपरिच्छदासिवत् । वरस्त्रियं तत्प्रभया च धर्षिता निरीक्षमाणा जननी अतिष्ठत् ॥' इति भागवते १०.७.१० ।

**जनार्दनीया—** तस्याः पूतनायाः मायया मोहनशक्त्या, निद्रया च धर्षिता वशीकृता नन्दस्य जाया भार्या यशोदा शिशुग्रहणं मा कुर्विति पूतनां न न्यवारयत् । ईशिता समर्था । प्रभवति अस्मादिति प्रभुः । जनार्दनः कृष्णः तया पूतनया प्रदत्तं स्तनं असुभिः प्राणैः पपौ ॥८५॥

**चट्टि—** तन्मायया तस्याः पूतनायाः मायया मोहनशक्त्या निद्रया च धर्षिता परवशा नन्दस्य जाया भार्या यशोदा शिशुग्रहणं मा कुर्विति पूतनां न न्यवारयत् । ईशिता समर्थः, प्रभवत्यस्मादिति प्रभुः, जनान् दुर्जनान् अर्दयतीति जनार्दनः श्रीकृष्णः तया पूतनया प्रदत्तं स्तनं विषदिग्धमिति शेषः । असुभिः प्राणैः सहैव आशु पपौ । तथा चोक्तम्— 'राक्षसी निहता तत्र शकुनीवेषधारिणी । पूतना नाम घोरा सा महाकाया महाबला ॥ विषदिग्धं स्तनं क्षुद्रा प्रयच्छन्ती जनार्दने ॥' इति ॥८५॥

**मृता स्वरूपेण सुभीषणेन पपात सा[1] व्याप्य [2]वनं समस्तम् ।**
**तदाऽऽगमन्नन्दगोपोऽपि तत्र दृष्ट्वैव सर्वेऽप्यभवन् [3]सुविस्मिताः ॥८६॥**

**वरदराजीया—** मृता सती सा पूतना सुभीषणेन अतिभयङ्करेण पपात । किं कृत्वा समस्तं वनं बृहद्वनं व्याप्य । तदा तस्मिन्नेव काले नन्दगोपोऽपि तत्र यमुनातटे आगमत् । सर्वे नन्दादयो दृष्ट्वा, पूतनामिति शेषः । सुविस्मिता विस्मयं प्राप्ता अभवन् ॥८६॥

**जनार्दनीया—** सा पूतना मृता सती सुभीषणेन अतिभयङ्करेण स्वरूपेण राक्षसीस्वरूपेण समस्तं वनं महावनं व्याप्य पपात । यदा पूतना पपात तदा नन्दगोपोऽपि तत्र गोकुलं प्रत्यागमत् । सर्वे नन्दादिगोकुलवासिनः दृष्ट्वा, पूतनादेहमिति शेषः । तत्र तं पूतनादेहमिति वा । 'विलोक्य पूतनादेहं बभूवुरतिविस्मिताः' इति भागवतोक्तेः [१०.७.३२] । सुविस्मिता अभवन् ॥८६॥

**चट्टि—** सा पूतना मृता सती सुभीषणेनातिभयङ्करेण स्वरूपेण समस्तं वनं बृहद्वनं व्याप्य पपात । तदा पूतनापतनकाले नन्दगोपोऽपि तत्र यमुनातीरं प्रत्यगमत् । सर्वेऽपि नन्दादिगोकुलवासिनः दृष्ट्वा, पूतनादेहमिति शेषः । सुविस्मिताः अभवन् ॥८६॥

**सा ताटका चोर्वशीसम्प्रविष्टा कृष्णावध्यानान्निरयं सञ्जगाम ।**
**सा तूर्वशी कृष्णभुक्तस्तनेन पूता स्वर्गं प्रययौ तत्क्षणेन ॥८७॥**

---

१. 'उत्थानशायी शिशुरूपधारी पीत्वा स्तनं पूतनिकाप्रदत्तम् । व्यसुं चकाराशु जनार्दनस्तदा दनोः सुतां तामवसत् सुखं हरिः ॥' इति भविष्यत्पर्वणि.८२.२० ।

२. 'पतमानोऽपि तद्देहः त्रिगव्यूत्यन्तरद्रुमान् । चूर्णयामास राजेन्द्र महदासीत् तदद्भुतम् ॥' इति भागवते १०.७.१५।

३. 'तावन्नन्दादयो गोपा मधुराया व्रजं गताः । विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ॥ इति च१०.७.३२ ।

**व्यासतीर्थीया–** अवध्यानमवज्ञानमपराधम् ।।८७-८८।।

**वेदाङ्गतीर्थीया–** कृष्णावध्यानात् कृष्णनिमित्तात् ।।८७-८८।।

**वरदराजीया–** ननु सा दुष्टा चेत् 'अहो बकीयं स्तनकालकूटम्' [भाग.३.२.२३] इत्यादौ 'शुभां गतिं गता' इति श्रूयतेत्यतस्तत्र तात्पर्यमाह– **सेति** ।। सा पूतना पूर्वं ताटका नाम राक्षसी उर्वश्या सम्प्रविष्टा अत्र जाता । अतः कृष्णस्यावध्यानात् द्वेषाख्यापराधात् निरयं नित्यनिरयं जगाम । सा तत्र स्थिता उर्वशी च कृष्णभुक्तस्तनेन कृष्णेन पीतस्तनत्वेन पूता राक्षसीसम्पर्कजन्यदोषरहिता तत्क्षणेन स्वर्गं प्रययौ । ततश्च तत्स्थितोर्वशीसद्गतिविषयं भागवतादिवाक्यमिति तात्पर्यं वर्णितं भवति ।।८७।।

**अनन्तभट्टीया–** अवध्यानं अपराधः ।।८७।।

**जनार्दनीया–** सा पूर्वं केत्यत आह– **सेति** ।। उर्वश्या सम्प्रविष्टा सा पूतना पूर्वं ताटकानाम्नी राक्षसी । पूतनादेहे उर्वशीप्रवेशः न तु उर्वश्यां पूतनाप्रवेशः । अन्यथा उत्तरश्लोकविरोधः । कृष्णस्यावध्यानात् स्तनस्थकालकूटविषेण हननेच्छारूपापराधात् निरयं तमः । सा पूतनादेहस्था उर्वशी कृष्णेन भुक्तेन पीतेन, स्तनेन स्तन्येनेत्यर्थः । पूता तुम्बुरुरमणदोषात् पूता सती ।।८७।।

**भावविवृतिः–** सा ताटका चोर्वशीसम्प्रविष्टा जगामेत्यत्र...उर्वशीकर्मनिर्मितपूतनादेहे प्रविष्टा या ताटका सा कृष्णद्वेषात् निरयं जगामेत्यनेन तमः प्राप्स्यतीत्यर्थः । 'धात्र्यादिभिः प्रतिययौ कुमतिस्तमोऽन्धम्' इत्युक्तेः । पूतनात्वं प्राप्तोर्वशी तु स्वर्गं ययौ । अधमाधिकारित्वादिति भावः ।।८७-१३६।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ द्वादशोऽध्यायः ।।

**भावचन्द्रिका–** सा पूतना ताटका उर्वशीसम्प्रविष्टा इत्येको योजना । पूतना ताटका च उर्वशी सम्प्रविष्टा इत्येका । ताटकायामुर्वशीप्रवेशोक्त्या पद्मपुराणमनुकूलितं स्यात् । 'निहता राघवेणाथ राक्षसी घोरदर्शना । त्यक्त्वा तनुं घोररूपां दिव्यरूपा बभूव सा ।। जाज्वल्यमानवपुषा दिव्याभरणभूषिता । प्रययौ वैष्णवं लोकं प्रणम्य मुनिसत्तमम् ।।' इति ।।८७।।

**चट्टि–** पूर्वं केत्यत आह– **सेति** ।। उर्वश्या सम्प्रविष्टा सा पूतना पूर्वं ताटकानाम्नी राक्षसी । पूतनादेहे उर्वशीप्रवेशः न तु उर्वश्यां पूतनाप्रवेशः । अन्यथा उक्तश्लोकविरोधः । श्रीकृष्णस्य अवध्यानात् स्तनस्थकालकूटविषेण हननेच्छारूपापराधात् निरयं तमः जगाम । सा पूतनादेहस्था उर्वशी कृष्णेन भुक्तेन पीतेन स्तनेन स्तन्यपानेनेत्यर्थः । पूता तुम्बुरुरमणदोषात् पूता सती तत्क्षणे स्वर्गं प्रययौ ।।८७।।

**सा तुम्बुरोः सङ्गत आविवेश रक्षस्तनुं शापतो वित्तपस्य ।**
**कृष्णस्पर्शाच्छुद्धरूपा पुनर्दिवं ययौ तुष्टे किमलभ्यं रमेशे ॥८८॥**

**वरदराजीया–** ननु उर्वश्याः केनापराधेन रक्षस्तनुप्रवेश इत्यत आह– **सेति** ॥ सा तु उर्वशी तुम्बुरोः गन्धर्वस्य गतेः भोगाख्यसंसर्गात् अपराधात् वित्तपस्य कुबेरस्य शापतः राक्षसी भवेत्येवंरूपात् शापात् रक्षस्तनुं राक्षसदेहमाविवेश । कृष्णस्पर्शान्निमित्ताच्छुद्धभावा शुद्धस्वरूपा सती पुनरनन्तरं दिवं स्वर्गं ययौ । नेदमाश्चर्यमित्याह– **तुष्टेति** ॥ रमायाः ईशे स्वामिनि हरौ तुष्टे सति अलभ्यं किमस्ति सर्वं मोक्षादिकं सुलभमेवेत्यर्थः ॥८८॥

**अनन्तभट्टीया–** कृष्णभुक्तस्तनेन कृष्णपीतस्तनेनेत्यर्थः ॥८८॥

**जनार्दनीया–** उर्वश्याः रक्षस्तनुप्रवेशकारणमाह– **सेति** ॥ सङ्गतः रमणात् । वित्तपस्य कुबेरस्य । पुनः दिवं स्वर्गं ययौ । नेदं चित्रमित्यत आह– **तुष्ट इति** ॥ अलभ्यं किम्? अप्राप्यं किम्? न किमपीत्यर्थः ॥८८॥

**चट्टि–** ननु उर्वश्याः केनापराधेन रक्षस्तनुप्रवेश इत्यत आह– **सेति** ॥ सा उर्वशी तुम्बुरोः गन्धर्वस्य सङ्गतः रमणात् वित्तपस्य कुबेरस्य शापतः शापात् रक्षस्तनुं राक्षसीं देहमाविवेश । कृष्णस्य स्पर्शान्निमित्तात् शुद्धरूपा निर्दोषस्वरूपा पुनः दिवं स्वर्गं ययौ । नेदमाश्चार्यमित्याह– **तुष्टे इति** ॥ रमायाः ईशे स्वामिनि हरौ तुष्टे सति अलभ्यं अनवाप्यं किं न किमपीत्यर्थः ॥८८॥

**यदाऽऽप देवश्चतुरोऽथ मासांस्तदोपनिष्क्रामणमस्य[१] चाऽसीत् ।**
**जन्मर्क्षमस्मिन् दिन एव चासीत् प्रातः किञ्चित् तत्र महोत्सवोऽभूत्॥८९॥**

**व्यासतीर्थीया–** अस्मिन् दिन एव उपनिष्क्रमणश्च सुदिन एव प्राप्तः किञ्चिज्जन्मर्क्षमासीत् ॥८९॥

**वेदाङ्गतीर्थीया–** उपनिष्क्रामणं प्रथमं गृहात् बहिर्गमनम् ॥८९॥

**वरदराजीया–** यदा कृष्णः चतुरः चतुःसङ्ख्याकान् मासान् आप चतुर्मासपर्याप्तवयस्कोऽभूदित्यर्थः । तदा तस्मिन् काले अस्य कृष्णस्योपनिष्क्रमणं निष्क्रामणाख्यं कर्मासीत् । तस्मिन्निष्क्रमणदिवस एव प्रातः किञ्चिज्जन्मर्क्षं जन्मनक्षत्रं चासीत् । तस्मादत्र दिवसे महोत्सवोऽभूत् ॥८९॥

**अनन्तभट्टीया–** निष्क्रामणं निष्क्रामणाख्यं कर्म । प्रातः किञ्चित् जन्मर्क्षं जन्मनक्षत्रम् ॥८९॥

---

१. 'कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम्' इति भागवते १०.८.९ ।

**जनार्दनीया–** अथशब्दः कथान्तरारम्भकः, यदा देवः कृष्णः चतुरः मासान्, चतुर्थमासमित्यर्थः, आप । तदा चतुर्थे मासि मार्गशीर्षे अस्य कृष्णस्योपनिष्क्रामणं प्रथमं स्वगृहात् मातुलादिगृहं प्रति नयनकर्म निष्क्रामणमासीत् । अस्मिन् दिने एवोपनिष्क्रामणदिन एव प्रातः प्रातःकाले जन्मर्क्षं जन्मकालस्थनक्षत्रं रोहिणीनक्षत्रमित्यर्थः । किञ्चिदल्पकालवर्ति आसीत् । तत्र निष्क्रामणकर्मणि ।।८९।।

**ताम्रपर्णीया–** ।। **जन्मर्क्षमिति** ।। अस्मिन् दिने प्रातः किञ्चिदल्पं जन्मर्क्षमासीदिति योज्यम् ।।८९-९०।।

**अतिविशद–** प्रातः किञ्चित्तत्र महोत्सवोऽभूदित्यत्र किञ्चित्प्रातः अरुणोदयकाल इत्यर्थः । तत्र तस्मिन् काले महोत्सवोऽभूदित्यर्थः । प्रातः किञ्चिज्जन्मनक्षत्रमासीदिति वा ।।८९।।

**भावचन्द्रिका–** ।। **जन्मर्क्षमिति** ।। जयोत्तरसंहितायाम्–[जयाख्यसंहितायाम्] 'ऋक्षाणां पूर्वभागे ऋक्षकर्म समाचरेत् । तिथीनां पश्चिमे भागे तिथिकर्म समारभेत् ।। नक्षत्रभेदेनाधिक्ये तिथिभेदे तदन्तिमे ।।' इति ज्ञेयम् ।।८९।।

**चट्टि–** अथशब्दः कथान्तरारम्भकः । यदा देवः श्रीकृष्णः चतुरो मासान् चतुर्थमासमित्यर्थः आप । तदा चतुर्थे मासि मार्गशीर्षे अस्य श्रीकृष्णस्य, उपनिष्क्रमणं प्रथमं स्वगृहात् मातुलादिगृहं प्रति नयनकर्म निष्क्रमणम्, आसीत् । अस्मिन् निष्क्रमणदिने एव प्रातः काले जन्मर्क्षं जन्मकालस्थनक्षत्रं रोहिणीनक्षत्रमित्यर्थः । किञ्चिदल्पकालवर्ति आसीत् । तस्मात् तत्र दिवसे महोत्सवोऽभूत् ।।८९।।

**तदा शयानः शकटस्य सोऽधः पदाऽक्षिपत् तं [1]दितिजं निहन्तुम् ।**
**अनः समाविश्य दितेः सुतोऽसौ स्थितः प्रतीपाय हरेः सुपापः ।।९०।।**

**व्यासतीर्थीया–** प्रतीपाय विरोधाय ।।९०।।

**वेदाङ्गतीर्थीया–** दितिजं निहन्तुं तं शकटं पदा अक्षिपत् ।।९०।।

---

१. 'पूतनाजीवितहरः शकटासुरभञ्जनः' इति ब्रह्माण्डपुराणे ३.३६.२४ । 'प्रत्यक्षं शूरसेनानां दृश्यते महदद्भुतम् । शयानेन हतः कंसपक्षवांस्तिग्मतेजसा ।।' इति सभापर्वणि. ५२.२२ । 'शकटं मुराविष्टम् 'तदा शकटरूपेण दैत्यस्तामाश्रितो मुरः' इति हरिवंशे' इति विष्णुपुराणस्य विष्णुचित्तीयव्याख्याने ५.६.२ । ''शकटासुरभञ्जनः' इति ब्रह्माण्डोक्तेः शकटस्यासुराविष्टत्वेन भूप्रविष्टचक्रत्वमलक्ष्य तं पादाग्रेणाहन् अन्तर्धानेन आविष्टमन्तर्धानेनैव आहन् बाल्यलीलायामपि निजैश्वर्यदर्शनात् श्रीकृष्णमहिमा अद्भुततम एव । तदुक्तं विष्णुधर्मे अर्जुनेन 'तालोच्छ्रिताग्रगुरुभारसारमायामविस्तावदद्य जातः । पादाग्रविक्षेपविभिन्नभाण्डः चिक्षेप कोऽन्यः शकटं यथा त्वम् ।।' इति वंशीधरः ।
प्रत्यक्षं शूरसेनान्यं दृश्यते महदद्भुतम् । शयानेन हतः पक्षी शिशुना तिग्मतेजसा ।।' इति लक्षालंकारे श्रीवादिराजतीर्थादृतपाठः ।

**वरदराजीया–** तदा महोत्सवसमये सः कृष्णः शकटस्य अनसोऽधः छायायां शयानः तं दितिजं दैत्यं निहन्तुं तदा आक्षिपत् ताडयामास । तं कम? असौ सुपापो अत्यन्तपापो अत्यन्तपापरूपो दितेः सुतो हरेः कृष्णस्य प्रतीपाय अपकारं कर्तुं अनसि शकटे स्थितः आश्रितस्तमिति सम्बन्धः ॥९०॥

**अनन्तभट्टीया–** [शकटं] प्रतीकाराय [प्रतीपाय] अपकाराय ॥९०॥

**जनार्दनीया–** तदा तस्मिन् दिने शकटस्य अधः अधोभागे शयानः सुप्तः कृष्णः तं शकटस्थं दितिजं निहन्तुं पदा पादेनाक्षिपत् पर्यवर्तयत् । तदुक्तं हरिवंशे 'स तत्रैकेन पादेन शकटं पर्यवर्तयत्' [विष्णुपर्व.६.६] इति । सुपापोऽसौ दितेः सुतः हरेः प्रतीपाय प्रतिकूलं कर्तुं, अनः शकटं समाविश्य स्थितः अवस्थितोऽभूत् ॥९०॥

**ताम्रपर्णीया–** ॥ पदेति ॥ पदाङ्गुष्ठेनेत्यर्थः । 'अधुनोच्छकटं लोली पदाङ्गुष्ठेन'[श्लो८] इति यमकभारतोक्तेः । 'पादाङ्गुष्ठेन शकटं क्रीडमानो व्यपोहत' इति हरिवंशे पञ्चशततमोध्यायवचनाच्च । इत्वासहितः शकटेन सहितः ॥८१-९८॥

**चट्टि–** तदा महोत्सवसमये सः श्रीकृष्णः शकटस्य अनसः अधः अधोभागे छायायां शयानः सुप्तस्सन् तं शकटस्थं दितिजं दैत्यं निहन्तुं पदा पादेन आक्षिपत् ताडयामास । सः पापः असौ दितेः सुतः हरेः प्रतीपाय अपकारं कर्तुं अनः शकटं समाविश्य स्थितः अवस्थितोऽभूत् ॥९०॥

**क्षिप्तोऽनसिस्थः शकटाक्षनामा स विष्णुनेत्वासहितः पपात ।**
**ममार चाऽशु प्रतिभग्नगात्रो [1]व्यत्यस्तचक्राक्षमभूदनश्च ॥९१॥**

**व्यासतीर्थीया–** इत्वा इत्वना शकटेन सहितः ॥९१॥

**वेदाङ्गतीर्थीया–** विष्णुना क्षिप्तः स इत्वा इत्वना शकटेन ॥९१॥

**वादिराजीया–** 'अहहरेत्वा शूद्र तवैव सह गोभिरस्तु' इति छान्दोग्ये हारेण सहितः इत्वा शकटं गोभिः सह तवैवास्त्विति प्रयोगात् । इत्वना शकटेन आसमन्तात् सहितः असुरः पपातेत्यर्थः ॥ ॥९२-९३॥

**वरदराजीया–** अनसि शकटे तिष्ठतीति अनसिस्थः । अत एव शकटाक्षनामा स दितेः सुतो विष्णुना कृष्णेन आक्षिप्तः पदा ताडितः सन् इत्वा इत्वना शकटेन सहितः । 'इत्वासहित' इत्येकं वा

---

१. 'अनः शयानस्य शिरोरथाल्पकप्रवाळमृद्वङ्घ्रिहतं व्यवर्तत । विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥' इति भागवते १०.८.९

पदम् । विभक्त्यलोपः छान्दसः । पपात अपतत् । यथा प्रविभग्नं चूर्णितं गात्रं यस्यासौ तथा तस्मात् ममार च मृतोऽभूत् । अनः शकटश्च व्यत्यस्तं चक्राक्षं यस्य तत् तथा जातमित्यर्थः ।।९१।।

**अनन्तभट्टीया–** इत्वासहितः इत्वेन शकटेन सहितः ।।९१।।

**जनार्दनीया–** विष्णुना कृष्णेन क्षिप्तः ताडितः अनसि तिष्ठतीति अनसिस्थः शकटाक्षनामा पपात । विष्णुना क्षिप्तः सहितः रसकुप्यादिसम्भारोपेतः इत्वा च शकटं च पपात । उत्तरार्धस्थचकारः इत्वेति पदेन सम्बध्यते । विष्णुना क्षिप्त इत्यस्योभयत्रानुषङ्गः । सहित इत्यत्र रसकुप्यादिसम्भारोपेत इति व्याख्याने 'विध्वस्तनानारसकुप्यभाजनम्' [८.९] इत्यादि दशमस्कन्धोक्तिर्मानम् । प्रतिभग्नानि भङ्गं प्राप्तानि, गात्राणि हस्तपादाद्यङ्गानि यस्य स तथा । शकटाक्षनामा आशु तत्काल एव ममार । अनश्च व्यत्यस्तानि विपरीतानि चक्रे । अक्षं चक्रयोः रन्ध्रप्रविष्टकाष्ठविशेषो यस्य तदिति विग्रहः । अभूत् ।।

**भारतश्री–** सविष्णुनेत्वा इत्यत्र सविष्णुः विष्णुसहितः न इत्वा इत्वना शकटेन सहितः इत्वासहितः ।।

**चट्टि–** अनसि शकटे तिष्ठतीत्यनसिस्थः शकटाक्षनामा सः दितेः सुतः विष्णुना कृष्णेन क्षिप्तः पदा ताडितः सन् इत्वा इत्वना शकटेन सहितः । इत्वासहित इत्येकं वा पदम् । इत्वना आ सम्यक् सहितः सन् पपात । प्रतिभग्नं चूर्णीकृतं गात्रं शरीरं यस्य सः प्रतिभग्नगात्रः सन् आशु तत्काल एव ममार च । अनः शकटश्च व्यत्यस्तानि विपरीतानि चक्रे । अक्षं चक्रयोः रन्ध्रप्रविष्टकाष्ठविशेषः यस्य तदिति विग्रहः । अभूत् ।।९१।।

**सा सम्भ्रमात् तं प्रतिगृह्य शङ्कया कृष्णं यशोदा द्विजवर्यसूक्तिभिः ।**
**संस्नापयामास नदीतटात् तदा समागता नन्दवचोऽभितर्जिता ।।९२।।**

**वेदाङ्गतीर्थीया–** सूक्तिभिः आशीर्वचनैरिति यावत् । शङ्कया ग्रहशङ्कया ।।९२।।

**वरदराजीया–** सा यशोदा सम्भ्रमात् वैय्यग्रेण तं कृष्णं प्रगृह्य समादाय शङ्कया द्विजवर्याणां सूक्तिभिः समीचीनाभिः सूक्तिभिः वेदरूपाभिः संस्नापयामास अभिषेकं कारितवती । तदा नन्दस्य वचसा अभितर्जिता शिक्षिता यशोदा नदीतटात् यमुनातीरात् समागता बृहद्वनमिति शेषः ।।९२।।

**जनार्दनीया–** तदा नन्दस्य वचोभिः 'बालं त्यक्त्वा इतस्ततश्चरसि' इत्येवं रूपवाक्यैः अभितर्जिता भर्त्सिता नदीतटात् समागता, शकटसमीपमिति शेषः । यशोदा सम्भ्रमात् भयात् तं कृष्णं प्रतिगृह्य, शङ्कया ग्रहबाधशङ्कया द्विजवर्याणां शोभनोक्तिभिः भयपरिहारकरूपवचोभिः संस्नापयामास । 'सम्भ्रमस्त्वादरे भये' इत्यभिधानम् ।।९२।।

**चट्टि–** तदा सा यशोदा नन्दस्य वचोभिः 'बालं त्यक्त्वा इतस्ततः चरसि' इत्येवं रूपवाक्यैरभितर्जिता सती नदीतटात् समागता सती शकटसमीपमिति शेषः । सम्भ्रमाद् भयात्तं कृष्णं प्रतिगृह्य शङ्कया ग्रहबाधशङ्कया द्विजवर्याणां सूक्तिभिः वेदरूपाभिः शोभनोक्तिभिः संस्नापयामास ।।९२।।

**हत्वा तु तं कंसभृत्यं स कृष्णः शिश्ये पुनः [1]शिशुवत् सर्वशास्ता ।**
**एवं गोपान् प्रीणयन् बालकेलीविनोदतो न्यवसत् तत्र देवः ।।९३।।**

**वेदाङ्गतीर्थीया–** बालकेलिः बालक्रीडा ।।९३-९४।।

**वादिराजीया–** बालकेलीविनोदत इत्यस्य बालक्रीडाविनोदेनेत्यर्थः ।।९४-९५।।

**वरदराजीया–** स कृष्णः तं कंसभृत्यं शकटाक्षं हत्वा पुनः शिशुवत् लौकिकशिशुवत् शिश्ये शयनं कृतवान् । नेदमाश्चर्यमित्युक्तं सर्वस्य जगतः शास्ता शासनकर्ता । देवः कृष्णः बालानां केली बालकेलीति भिन्नं वा पदम् । क्रीडता तद्रूपेण विनोदेन गोपान्नन्दादीन् प्रीणयन् सन्तोषयन् तत्र बृहद्वने न्यवसत् ।।९३।।

**अनन्तभट्टीया–** बालकेलीविनोदतः प्रीणयन् ।।९३।।

**जनार्दनीया–** सर्वेषां शास्ता शिक्षकः तं शकटाक्षं एवं अनेन प्रकारेण देवः क्रीडादिगुणविशिष्टः कृष्णः बालानां केलिक्रिया तद्रूपो यो विनोदः तस्मात् । यद्वा बालकेली च विनोदश्च बालकेलीविनोदौ बालकेलीविनोदाभ्यां इति । तथा गोपान् प्रीणयन् सन्तोषयन्, तत्र गोष्ठे न्यवसत् । 'केलिः स्यात् कामुकक्रिया' इत्यमरः ।।९३।।

**चट्टि–** सः श्रीकृष्णः कंसभृत्यं शकटाक्षं हत्वा पुनः शिशुवच्छिष्ये शयनं कृतवान् । लोके पितृभ्यां शास्यतेति शिक्ष्यत इति व्युत्पत्त्या शिशुशब्दो निष्पन्नः । नात्रेयं व्युत्पत्तिः किं तर्हि इत्यत स्वाभिप्रेतशिशुशब्दार्थमाह– **सर्वशास्तेति** ।। यद्वा नास्य कंसाद् भीतिरस्तीत्याह– **सर्वशास्तेति** ।। सर्वेषां शास्ता शिक्षकः, देवः क्रीडादिगुणविशिष्टः श्रीकृष्णः, एवं अनेन प्रकारेण बालानां केली क्रिया तद्रूपो यो विनोदस्तस्मात् गोपान् प्रीणयन् सन्तोषयन् तत्र गोष्ठे न्यवसत् । 'केलिः स्यात् कामुकक्रिया' इत्यमरः ।।९३।।

**विवर्धमाने लोकदृष्ट्यैव कृष्णे पाण्डुः पुनः प्राह पृथामिदं वचः ।**
**धर्मिष्ठो नौ सूनुरग्रे बभूव बलद्वयज्येष्ठ उतापरश्च ।।९४।।**

---

१. 'अनन्तस्याप्रमेयस्य बलं तस्य न वै विदुः' इति भागवते [१०.८.१२]

**वरदराजीया–** लोकस्य पामरजनस्य दृष्ट्यैव तदपेक्षयैव कृष्णे वर्धमानेऽभिवर्धमाने सति पाण्डुः पृथां कुन्तीं प्रति इदं वक्ष्यमाणं वचः पुनराह । किं तद्वचः नौ आवयोः धर्मिष्ठः सूनुः पुत्रोऽग्रे प्रथमं बभूव । उतानन्तरं बलद्वये बाहुबले ज्ञानबले च ज्येष्ठो अपरो द्वितीयश्च सूनुर्बभूवेत्यर्थः ।।९४।।

**भावचन्द्रिका–** ।। विवर्धमान इति ।। 'अथाभ्यवर्धन्' इत्यत्र उक्तमत्रापि ज्ञेयम् ।।९४।।

**जनार्दनीया–** लोकदृष्ट्यैव अज्ञजनदृष्ट्यपेक्षयैव । नौ आवयोः अग्रे प्रथमं उत अनन्तरं अपरः द्वितीयः । बलद्वयेन बाहुबलं ज्ञानबलं चेत्युभयेन ज्येष्ठश्च सूनुः बभूवेत्यर्थः ।।९४।।

**चट्टि–** लोकदृष्ट्या अज्ञजनदृष्ट्यपेक्षया एव श्रीकृष्णे विवर्धमाने सति पाण्डुः पृथां कुन्तीं प्रतीदं वक्ष्यमाणं वचः पुनराह । किं तद्वचः? नौ आवयोः अग्रे प्रथमं धर्मिष्ठः सूनुर्बभूव । उतानन्तरं अपरः द्वितीयः बलद्वयेन बाहुबलं ज्ञानबलं चेत्युभयेन ज्येष्ठः श्रेष्ठश्च सूनुः बभूवेत्यर्थः ।।९४।।

**यदैक एवातिबलोपपन्नो भवेत् तदा तेन परावमर्दे ।**
**प्रवर्तमाने स्वपुरं हरेयुश्चौर्यात् परे तद् द्वयमत्र योग्यम् ।।९५।।**

**व्यासतीर्थीया–** अवमर्दे युद्धे । द्वयं स्वपुररक्षणपरावमर्दनम् ।।९५-९८।।

**वेदाङ्गतीर्थीया–** परावमर्दे शत्रुभिः सह युद्धे ।।९५-९६।।

**वादिराजीया–** तद्द्वयमत्र योग्यमित्यत्र अत्र राज्यपरिपालनविषये द्वयं बलाढ्यपुत्रद्वयम्, योग्यमिति सम्बन्धः ।।९६-९९।।

**वरदराजीया–** यदा यदि एक एवातिबलेनोपपन्नः सूनुः भवेत्तदा तर्हि तेन एकेन परेषां वैरिणां अवमर्दे निराकरणे दण्डयात्राप्रवर्तमाने क्रियमाणे सति स्वस्य पुरीं नगरीं परे वैरिणः चौर्याच्छद्मना हरेयुः । तत्तस्मादत्र संरक्षणे परावमर्दे च कार्ये द्वयं बलाधिकपुत्रद्वयं योग्यमुचितम् ।।९५।।

**अनन्तभट्टीया–** परावमर्दे परकर्मकहनने प्रवर्तमाने क्रियमाणे सति स्वपुरं हरेयुरिति यत् । तत् तस्मात् । अत्र राज्यरक्षणविषये पुत्रद्वयं योग्यं..मित्यर्थः ।।९५।।

**जनार्दनीया–** अतिबलोपपन्नः एक एव पुत्रः यदा यदि भवेत् । तदा तर्हि तेन बलिष्ठपुत्रेण परैः शत्रुभिः सह अवमर्दे युद्धे प्रवर्तमाने सति । यद्वा 'इत्थम्भूतलक्षणे तृतीया' तेनोपलक्षित इति यावत् । 'कमण्डलुना छात्रम्' इति यावत् । परे वैरिणः चौर्यात् स्वपुरं स्वराजधानीं हरेयुः । तत् तस्मात् अत्र परयुद्धस्वपुररक्षणात्मककार्यद्वये द्वयं बलिष्ठपुत्रद्वयं योग्यं युक्तम् ।।९५।।

**भारतश्री—** विवर्धमाने कृष्णे तस्मिन् काले पाण्डुः पृथामाह । तद्द्वयमत्र योग्यं तत् तस्मात् द्वयं पुत्रद्वयं अत्र राज्यपालने योग्यं समर्थम् ।।९५।।

**चट्टि—** यदा यद्येक एव अतिबलोपपन्नः सूनुर्भवेत् तदा तर्हि तेन बलिष्ठपुत्रेण परैः शत्रुभिः सह अवमर्दे युद्धे प्रवृत्ते सति परे वैरिणः चौर्यात् स्वपुरं स्वराजधानीं हरेयुः । तत् तस्मात् अत्र परयुद्धस्वपुररक्षणात्मककार्यद्वये द्वयं बलिष्ठपुत्रद्वयं योग्यमुचितम् ।।९५।।

**शस्त्रास्त्रविद् वीर्यवान् नौ सुतोऽन्यो भवेद् देवं तादृशमाह्वयातः ।**
**शेषस्तव भ्रातृसुतोऽभिजातस्तस्मान्नासौ सुतदानाय योग्यः ।।९६।।**

**वरदराजीया—** तत्तस्मात् शस्त्रास्त्रवित् वीर्यवांश्चान्यो सुतो नौ आवयोः भवेत् । अतस्तादृश विवक्षितपुत्रप्रदानसमर्थं देवमाह्वय प्रार्थय । स चेन्द्र एवेति निर्धारयितुं परिशेषयति— **शेष इत्यादिना** ।। वायोरनन्तरं शेषगरुडरुद्राः प्रसक्ताः । तत्र शेषः तव भ्रातुः वसुदेवस्य सुतोऽभिजातः । तस्मात् भ्रातृसुतत्वात् असौ शेषः सुतदानाय त्वयि पुत्रोत्पादनाय न योग्यः ।।९६।।

**जनार्दनीया—** तस्मान्नौ आवयोः अन्यः भीमादन्यो बलाढ्य इत्यर्थः । सुतो भवेत् । अतस्तादृशं बलिष्ठपुत्रदानयोग्यं आह्वय । तादृशः क? इत्याशङ्कायां परिशेषतः इन्द्रः एव इत्याहेत्याह— **शेष इति** ।। भ्रातुः वसुदेवस्य सुतः बलभद्राख्यसुतः सन् अभिजातो यस्मात् तस्मादसौ शेषः ।।९६।।

**भारत्तश्री—** नासौ सुतदानाय योग्यः तव जामातृत्वात् ।।९६-९९।।

**चट्टि—** तस्मात् नौ आवयोः शस्त्रास्त्रवित् वीर्यवान् अन्यो भीमादन्यः सुतो भवेत् । अतस्तादृशं बलिष्ठपुत्रप्रदानयोग्यं देवं आह्वय । तादृशः क इत्याशङ्कायां परिशेषत इन्द्र एवेत्याह— **शेष इति** ।। वायोरनन्तरं शेषगरुडरुद्राः प्रसक्ताः । तत्र शेषः तव भ्रातुः वसुदेवस्य सुतः बलभद्राख्यः सुतः सन्नभिजातः यस्मात् तस्मादसौ शेषः सुतदानाय त्वयि पुत्रोत्पादनाय न योग्यः ।।९६।।

**न वै सुपर्णः सुतदो नरेषु प्रजायते वाऽस्य यतस्तथाऽज्ञा ।**
**कृता पुरा हरिणा शङ्करस्तु क्रोधात्मकः पालने नैव योग्यः ।।९७।।**

**वेदाङ्गतीर्थीया—** नरेषु सुतदो न सुतोत्पादको न । न जायते स्वयं नरेषु नावतरति च ।। ।।९७-९८।।

**सत्याभिनवतीर्थीया—** तत्रैव न वै सुपर्णः सुतदो नरेषु..इति श्लोके प्रजायते इत्यत्र विद्यमानस्य प्रेत्यस्य हरिणेत्यनेनान्वयः । तस्यार्थः प्रकृष्टेन सर्वोत्तमेन हरिणेति । एतेन प्रजायते इत्यत्र जायते

इत्यनेन पूर्णत्वात् प्रेत्येतत् व्यर्थमिति दूषणं परिहृतम् । हर्याज्ञा कुतः कर्तव्या इत्याशङ्कापरिहारार्थं प्रशब्देन हरेः सर्वोत्तमत्वमुच्यते इत्यभ्युपगमात् ।।९७।।

**वरदराजीया–** सुपर्णः गरुडः सुतदः सुतप्रदो न भवेत् । वै यतः नरेषु मनुष्येषु न प्रजायते अतः कारणात् पुरा पूर्वं हरिणा नरेषु नोत्पादितव्यमिति आज्ञा कृता तस्मादित्यर्थः । शङ्करो रुद्रस्तु क्रोधात्मकत्वात् क्रोधकारणतमोगुणाभिमानित्वात् पालने राज्यपालने नैव योग्यः ।।९७।।

**जनार्दनीया–** सुतदः सुपर्णः नरेषु वै निश्चयेन न प्रजायते । पुरा हरिणा अस्य च गरुडस्यैव तथा नरेषु अवतारं मा कुर्विति आज्ञा कृता यतः । अतो न प्रजायत इति सम्बन्धः । क्रोधात्मकः क्रोधजनकतमोगुणाभिमानी शङ्करः पालने राज्यरक्षणे योग्यो नैव ।।९७।।

**चट्टि–** सुपर्णः गरुडः सुतदस्सन् नरेषु मनुष्येषु न प्रजायते । यतः कारणात् पुरा पूर्वं हरिणा अस्य गरुडस्य तथा नरेषु अवतारं मा कुर्वित्याज्ञा कृता अतो न प्रजायते इति सम्बन्धः । क्रोधात्मकः क्रोधजनकतमोगुणाभिमानी शङ्करः पालने राज्यरक्षणे योग्यो नैव ।।९७।।

**अतो महेन्द्रो बलवाननन्तरस्तेषां समाह्वानमिहार्हति स्वराट् ।**
**इतीरिता साऽऽह्वयदाशु वासवं ततः प्रजज्ञे स्वयमेव शक्रः ।।९८।।**

**वरदराजीया–** अतस्तेषां शेषादीनां अनन्तरं अनन्तरमेव विद्यमानो बलवान् महेन्द्रः पुरन्दरः तस्मात् स्वराट् इन्द्र एव इह पुत्रदाने आह्वानं प्रार्थनमर्हति । इतीरिता सा कुन्ती वासवं इन्द्रं आशु आह्वयत् । ततश्चाह्वानानन्तरमेव शक्रः स्वयमेव स्वस्मादेव जज्ञे ।।९८।।

**अनन्तभट्टीया–** तेषामनन्तरम् ।।९८।।

**जनार्दनीया–** अतः तेषां शेषादित्रयाणां अनन्तरः अव्यवधानवान् महेन्द्रः पुरन्दरः । बलवानस्तीति शेषः । बलमित्युपलक्षणं ज्ञानभक्तिमांश्च शेषादनन्तरं तारतम्यस्थ इन्द्र एवेति भावः । अतः स्वराट् इन्द्रः समाह्वानं अर्हति । 'जम्भभेदी हरिहयः स्वराट्' इत्यमरः । सा कुन्ती वासवं पुरन्दरं आह्वयत् पुत्रार्थं प्रार्थयामास इत्यर्थः । ततः रमणानन्तरं शक्रः स्वयमेव जज्ञे । जातः स्वस्मादिति सम्बन्धः ।।९८।।

**भावचन्द्रिका–** शक्रः आशु प्रजज्ञे ।।९८।।

**चट्टि–** अतस्तेषां शेषादित्रयाणां अनन्तरं तदनन्तरमेव विद्यमानो महेन्द्रः पुरन्दरः बलवान् । बलमित्युपलक्षणम् । ज्ञानभक्तिमांश्च शेषाद्यनन्तरं तारतम्यस्थः इन्द्र एवेति भावः । अतः स्वराडिन्द्रः

तस्य समाह्वानमर्हति । 'जम्भभेदी हरिहयः स्वराड्' इत्यमरः । इतीरिता पाण्डुनेति शेषः । सा कुन्ती वासवमिन्द्रं आह्वयत् । पुत्रार्थं प्रार्थयामासेत्यर्थः । ततः आह्वानानन्तरं शक्रः आशु स्वयमेव स्वस्मात् प्रजज्ञे जातः ।।९८।।

**स चार्जुनो[1] नाम नरांशयुक्तो विष्ण्वावेशी बलवानस्त्रवेत्ता ।**
**रूप्यन्यः स्यात् सूनुरित्युच्यमाना भर्त्रा कुन्ती नेति तं प्राह धर्मात् ।।९९।।**

**व्यासतीर्थीया–** पुत्रार्थं कश्चित् वरणीयः न तु स्वेच्छानुसारेणेति धर्मात् ।।९९।।

**वेदाङ्गतीर्थीया–** धर्मात् धर्मस्वरूपपर्यालोचनात् । नेत्याह अतः परं न युक्तमित्याह ।। ।।९९-१०१।।

**वादिराजीया–** रूप्यन्यः स्यात्सूनुरित्यत्र भीमार्जुनयो अतिमनोहरत्वेऽपि वज्रकायत्वात् मृदुकायः कश्चन रूपवान् पुत्रो इति भावं ग्रन्थकारः स्वयमेव वक्ष्यतीति ज्ञेयम् ।।९९।।

**वरदराजीया–** स चार्जुनो नाम प्रसिद्धः नरस्य शेषात्मकस्यांशेन युक्तः । तथा विष्णोः कृष्णस्य आवेशी आवेशवान् । बलाधिको शस्त्रास्त्रवेत्ता च जात इत्यर्थः । अन्यो रूपी सुन्दरः सूनुः स्यात् भवेदित्युच्यमाना पाण्डुनेति शेषः । कुन्ती तं पाण्डुं नेत्याह । न तावता अतिक्रमः शङ्कनीय इत्युक्तम्– **धर्मादिति** ।। धर्ममनतिक्रम्येत्यर्थः । अपेक्षितपुत्रप्राप्तौ पुनः परपुरुषाह्वानं धर्मो न भवतीति प्रार्थितवतीति भावः ।।९९।।

**अनन्तभट्टीया–** धर्मात् पुत्रार्थं कश्चिद्वारणीयः... धर्मादित्यर्थः ।।९९।।

**जनार्दनीया–** स च कुन्तीपुत्रः नरांशयुक्तः हरिवायुशेषांशयुक्तः, विष्णोरावेशी विशेषावेशवान्, अर्जुन इति नाम प्रसिद्धोऽभूदिति शेषः । भर्त्रा कुन्ती 'रूपी सुन्दररूपवान् अन्यः सूनुः स्यात्' इत्युच्यमाना कुन्ती, धर्मात् महत्कार्यं विना पुत्रार्थं परपुरुषसम्बन्धोऽनर्थकारीत्येवंरूपधर्मशास्त्रोक्तेः । तं पाण्डुं प्रति नेदं योग्यमिति प्राह ।।९९।।

**ताम्रपर्णीया–** धर्मात् पुत्रार्थं कश्चिद् वरणीयः न तु स्वेच्छानुसोणेति धर्मात् । भर्त्राज्ञा अविषयेऽपि कदाचित् कर्तव्येति वा धर्मात् ।।९९।।

**भावचन्द्रिका–** धर्मात् त्रिवारमेव न्याय्यम् । 'चतुर्थे पतिता पञ्चमे गणिका' इति धर्ममधिकृत्येति ल्यब्लोपनिमित्ता पञ्चमी ।।९९।।

---

१. 'उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यां ततो दिवा । जातस्तु फाल्गुने मासि तेनासौ फल्गुनः स्मृतः ।।' इत्यादिपर्वणि.१३२.१७

**चट्टि–** स च कुन्तीपुत्रः नरांशयुक्तः हरिवायुशेषांशयुक्तः, विष्णोरावेशी विशेषावेशवान्, बलवान् अस्त्रवेत्ता अर्जुन इति नाम प्रसिद्धः, अभूदिति शेषः । रूपी सुन्दररूपवान् अन्यः सूनुः स्याद् भवेदिति भर्त्रा उच्यमाना उक्ता कुन्ती धर्मात् महत्कार्यं विना पुत्रार्थं परपुरुषसम्बन्धः अनर्थकारीत्येवंरूपधर्मशास्त्रोक्तेः तं पाण्डुं नेति न कर्तव्यमिति प्राह ॥९९॥

**बृहस्पतिः पूर्वमभूद्धरेः पदं संसेवितुं पवनावेशयुक्तः ।**
**स उद्धवो नाम यदुप्रवीराज्जातो विद्वानुपगवनामधेयात् ॥१००॥**

**व्यासतीर्थीया–** मथुरायां प्रवृत्तमाह– **बृहस्पतिरित्यादिना** ॥ अभूद् द्रोणत्वेन ॥१००-१०१॥

**वादिराजीया–** बृहस्पतिः पूर्वमभूदित्यत्र युधिष्ठिरभीमादिभ्यः रामकृष्णादिभ्यश्च पूर्वमित्यर्थः ॥१००॥

**मधुसूदनीया–** ॥ **बृहस्पतिः पूर्वमिति** ॥ पूर्वं सात्यक्यादियादवोत्पत्तेः युधिष्ठिराद्युत्पत्तेश्च पूर्वं बृहस्पतिरभूत् । किं नामेत्यत उक्तम्– **स उद्धव इति** ॥१००-१०३॥

**वरदराजीया–** पूर्वं युधिष्ठिराद्युत्पत्तेः पूर्वमेवेत्यर्थः । बृहस्पतिः गुरुः हरेः कृष्णस्य पदं स्वरूपं संसेवितुं पवनस्य मुख्यप्राणस्य आवेशेन युक्तः सन् अभूत् जातः । कस्मादभूत् यदुप्रवीरात् यदुश्रेष्ठात् उपगव इति नामधेयं यस्य स तथा तस्माज्जातः । स उद्धवो नाम प्रसिद्धो विद्वान् सर्वज्ञ इत्यर्थः ॥१००॥

**जनार्दनीया–** बृहस्पतेः पुनरवतारप्रकारमाह– **बृहस्पतिरिति** ॥ पूर्वं भीष्मकृपोत्पत्तिकाले यः बृहस्पतिः हरेः पदं संसेवितुम्, अभूत् द्रोणनामाऽभूत् । स बृहस्पतिः पवनावेशयुक्तः अत एव विद्वान् ज्ञानी, उद्धव इति नाम प्रसिद्धः सन् । यदुषु प्रवीरात् श्रेष्ठात्, उपगव इति नामधेयं यस्य तस्माज्जातः ॥१००॥

**भारतश्री–** अत्र प्रकृतानां प्रसिद्धानां यादवानां पाण्डवादीनां वयःक्रममाह– **बृहस्पतिरित्यादिना** ॥ पूर्वं सात्यकियुधिष्ठिरप्रभृतीनां पूर्वम् ॥१००-१०२॥

**चट्टि–** बृहस्पतेः पुनः अवतारप्रकारमाह– **बृहस्पतिरिति** ॥ पूर्वं सात्यक्यादियादवोत्पत्तेः युधिष्ठिराद्युत्पत्तेश्च पूर्वं यो बृहस्पतिः हरेः पदं संसेवितुमभूत् द्रोणनामा अभूत् । सः बृहस्पतिः पवनस्य वायोरावेशयुक्तः अत एव विद्वान् ज्ञानी उद्धव इति नाम प्रसिद्धः सन् यदुषु प्रवीरात् श्रेष्ठात्, उपगव इति नामधेयं यस्य तस्मात् जातः ॥१००॥

**द्रोणात्मकं नातितरां स्वसेवकं कुर्याद्धरिर्मामिति भूय एव ।**
**स उद्धवात्माऽवततार यादवेष्वासेवनार्थं पुरुषोत्तमस्य ॥१०१॥**

**वादिराजीया–** द्रोणात्मकं नातितरामित्यत्र अतितरामित्यनेन भूभारहरणाख्यसेवां परं कारयेत् । विप्रत्वात् 'त्वयोपभुक्तस्रग्गन्धवासोलङ्कारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥' [भाग.११.६.४६] इत्यादिना उद्धवोक्तस्वनिर्माल्यधारणस्वोच्छिष्टभोजनाद्यन्तरङ्गसेवासु च न नियुञ्ज्यादिति सूचयति ॥१०२-१०४॥

**वरदराजीया–** ननु सेवार्थं बृहस्पतेः द्रोणात्मकत्वेनावतृतत्वात् पुन रूपान्तरेणावतरणं किमर्थमित्यत आह– **द्रोणात्मकमिति** ॥ द्रोणात्मकं द्रोणस्वरूपं मां हरिः कृष्णोऽतितरां अत्यन्तं स्वसेवकं सेवाकर्तारं न कुर्यात् । दुर्योधनपक्षपातिनं करिष्यतीत्यर्थः । इति कारणात् स बृहस्पतिर्भूय एव पुनरपि पुरुषोत्तमस्य कृष्णस्य सेवार्थं पूर्णसेवां कर्तुं अत एव यादवेषु उद्धवात्मा उद्धवरूपेणावततारेत्यर्थः ॥१०१॥

**जनार्दनीया–** ननु द्रोणस्वरूपेण जातो बृहस्पतिः पुनरपि उद्धवस्वरूपेण किमर्थमवततारेत्यत आह– **द्रोणात्मकमिति** ॥ हरिः श्रीकृष्णः द्रोणात्मकं द्रोणस्वरूपिणं मां अतितरां अत्यन्तं स्वसेवकं न कुर्यादिति भूय एव पुनरपि बृहस्पतिः पुरुषोत्तमस्य श्रीकृष्णस्य आ समन्तात् सेवनार्थं स्वयोग्यतापूर्तिरूपां सेवां कर्तुमित्यर्थः । उद्धवात्मा उद्धवस्वरूपः सन् यादवेषु अवततार ॥१०१॥

**चट्टि–** ननु हरिसेवनार्थं द्रोणस्वरूपेण जातो बृहस्पतिः पुनरप्युद्धवस्वरूपेण किमर्थमवततारेत्यत आह– **द्रोणात्मकमिति** ॥ हरिः श्रीकृष्णः द्रोणात्मकं द्रोणस्वरूपिणं मामतितरामत्यन्तं स्वसेवकं न कुर्यादिति भूय एव पुनरपि सः बृहस्पतिः पुरुषोत्तमस्य श्रीकृष्णस्य आ समन्तात् सेवनार्थं स्वयोग्यतापूर्तिरूपां सेवां कर्तुमित्यर्थः । उद्धवात्मा उद्धवस्वरूपः सन् यादवेषु अवततार । अतितरामित्यनेन भूभारहरणाख्यसेवां कृतवान् । विप्रत्वात् पादसंवहनादिसेवासु नोपयुञ्ज्यादिति सूचयति ॥१०१॥

**बृहस्पतेरेव स सर्वविद्या अवाप मन्त्री[१] निपुणः सर्ववेत्ता ।**
**वर्षत्रये तत्परतस्स सात्यकिर्जज्ञे दिने चेकितानश्च तस्मिन् ॥१०२॥**

**व्यासतीर्थीया–** एवं सर्वेषामुत्पत्तिमुक्त्वा कः कस्मात् कियतावर इति जिज्ञासायामाह– **वर्षत्रय इति** ॥१०२॥

१. 'वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा । शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥' इति भागवते १०.४४.१
'स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राक्तनयं प्रतीतम् ॥' इति भागवते ३.१.२५

**वेदाङ्गतीर्थीया–** मन्त्री सन्धिविग्रहादिस्वरूपतत्प्रयोगादिपरिज्ञानवान् ।।१०२।।

**वरदराजीया–** स उद्धवो बृहस्पतेः स्वमूलरूपादेव सर्वविद्याः वेदादिसकलविद्याः अवाप । अतो मन्त्री विचारज्ञोऽपि निपुणः कुशलः सर्ववेत्ता सर्वज्ञश्च जात इत्यर्थः । तत्परतः तस्योद्धवस्य परतः उत्पत्तेः परस्तात् वर्षत्रये जाते सति स पूर्वोक्तः सात्यकिः सत्यकसुतो युयुधानो जज्ञे । तस्मिन् दिने सात्यकेरुत्पत्तिदिने चेकितानः तन्नाम्ना जात इत्यर्थः ।।१०२।।

**जनार्दनीया–** स उद्धवः बृहस्पतेः सकाशादेव । अत एव मन्त्री सन्धिविग्रहादिकारणाभिज्ञः निपुणः चतुरः । सर्ववेत्ता सर्वज्ञोऽभूदिति शेषः । अवतीर्णानां देवानां वयसस्तारतम्यमाह– **वर्षत्रय इत्यादिना** ।। तस्योद्धवस्य परतः उत्पत्तेः परतः वर्षत्रये वर्षत्रयात्मके काले अतीते सति पूर्वोक्तः सात्यकिः जज्ञे । तस्मिन् दिने चेकितानाख्यो यादवश्च जज्ञे इत्यर्थः ।।१०२।।

**चट्टि–** सः उद्धवः बृहस्पतेः सकाशादेव सर्वविद्याः वेदादिसर्वविद्याः अवाप । अत एव मन्त्री सन्धिविग्रहादिकरणाभिज्ञः निपुणः चतुरः । सर्ववेत्ता सर्वज्ञश्चाभूदिति शेषः । एवं सर्वेषामुत्पत्तिमुक्त्वा कः कस्मात् कियताऽवर इति जिज्ञासायां वयसस्तारतम्यमाह– **वर्षत्रय इत्यादिना** ।। तस्योद्धवस्य परतः उत्पत्तेः परस्तात् वर्षत्रये वर्षत्रयात्मककाले अतीते सति सः पूर्वोक्तः सात्यकिः सत्यकसुतो युयुधानो जज्ञे । तस्मिन् दिने सात्यकेरुत्पत्तिदिने चेकितानः चेकितानाख्यो यादवश्च जज्ञे ।।१०२।।

**मरुत्सु नाम [1]प्रवहो यदुष्वभूत् स चेकितानो हरिसेवनार्थम् ।**
**तदैव जातो हृदिकात्मजोऽपि वर्षत्रये तत्परतो युधिष्ठिरः ।।१०३।।**

**व्यासतीर्थीया–** ततः परतः उद्धवावतारतः । चेकितानः पूर्वं कः किमर्थं जात इति जिज्ञासायामाह– **मरुत्स्विति** ।।१०३-१०५।।

**वेदाङ्गतीर्थीया–** चेकितानस्य प्रागुक्तत्वात् तत्स्वरूपमाह– **मरुत्स्विति** ।। प्रवहो नाम स इति सम्बन्धः ।।१०३-१०५।।

**वरदराजीया–** स पूर्वं क इत्याह– **मरुत्स्विति** ।। मरुत्सु मध्ये प्रवहो [प्रतिभो] नाम प्रसिद्धो हरेः सेवार्थं सेवां कर्तुं यदुषु चेकितान इत्यभूत् । यदा यस्मिन् काले हृदिकस्यात्मजः पूर्वोक्तः जज्ञे जातः तत्परतः तदुत्पत्त्युत्तरकाले वर्षत्रयात्मके जाते सत्येव युधिष्ठिरोऽपि जज्ञे ।।१०३।।

---

१. 'प्रतिभः' इति वरदराजीयजनार्दनीयचट्टिटिप्पणीषु पाठान्तरम् ।

**जनार्दनीया–** मरुत्सु प्रवहो नाम यः सः प्रवहः हरिसेवानार्थं यदुषु चेकितानः तन्नामा सन् अभूज्जातः । 'नाम प्रतिभः' इति कचित्पाठः । तदैव तस्मिन्नेव दिने हृदिकात्मजोऽपि कृतवर्मापि । तस्य कृतवर्मणः परतः परस्तात् ।।१०३।।

**भारतश्री–** तदैव तस्मिन् दिवसे एव ।।१०३।।

**चट्टि–** सः पूर्वं क इत्यत आह– **मरुत्स्विति** ।। मरुत्सु प्रतिभो नाम यः सः हरिसेवनार्थं यदुषु चेकितानस्तन्नामा सन् अभूज्जातः । तदैव तस्मिन्नेव दिने हृदिकात्मजोऽपि कृतवर्मापि जातः । तत्परतस्तस्य कृतवर्मणः परतः परस्मात् वर्षत्रये गते सति युधिष्ठिरो जज्ञे ।।१०३।।

**ततोऽब्दतो भूभरसंहृतौ हरेरङ्गत्वमाप्तुं गिरिशोऽजनिष्ट ।**
**अश्वत्थामा नामतोऽश्वध्वनिं स यस्माच्चक्रे जायमानो महात्मा ।।१०४।।**

**वादिराजीया–** अश्वत्थामा नामत इत्यत्र अश्वे स्थित अश्वत्थः ध्वनिः तेन अमा सह उत्पन्नत्वात् अश्वत्थामेत्यर्थः ।।१०५।।

**मधुसूदनीया–** ।। **अश्वध्वनिमिति** ।। तथाचोक्तम्– 'अलभद्गौतमी पुत्रं अश्वत्थामानमद्भुतम् । स जातमात्रो व्यनदद्यथैवोच्चःश्रवा हयः ।।' इत्यादिपर्वणि [१४०.४९] ।।१०४।।

**जनार्दनीया–** ततो युधिष्ठिरोत्पत्त्यनन्तरं अब्दतः अब्दात् परतः, द्वितीयवर्षे प्राप्ते सतीत्यर्थः । गिरिशो रुद्रः भूभरसंहृतौ भूभारविनाशरूपकर्मणि हरेः कृष्णस्याङ्गत्वं सहायत्वं आप्तुं अजनिष्ट जज्ञे । यस्मात् कारणात् जायमानः महात्मा उत्तमस्वरूपो रुद्रः अश्वस्योच्चैःश्रवसः ध्वनिं इव ध्वनिं चक्रे । तस्मान्नामतोऽश्वत्थामा ।।१०४।।

**वरदराजीया–** ततः तदुत्पत्त्यनन्तरं अब्दतः एकस्मिन् वर्षे जाते गिरिशो अजनि जातः । किं कर्तुं भुवो भरस्य संहृतौ संहारकर्तव्ये हरेरङ्गत्वं सहकारित्वं आप्तुं प्राप्तुम् । महात्मा रुद्रो जायमानः अश्वध्वनिवत् ध्वनिं चक्रे यस्मात्तस्मात् नामतो नाम्ना अश्वत्थामा जात इत्यर्थः ।।१०४।।

**अतिविशद–** अश्वत्थामेत्यत्र अश्ववत् तिष्ठतीति अश्वत्थामा शब्दः यस्यासौ अश्वत्थामेत्युक्तं भवति । 'माङ् माने शब्दे च' इति धातोः । यद्वा अश्ववत् उत्था उत्थानं उत्पत्तिर्यस्यासौ अश्वत्थामेत्यादिवदयं प्रयोगः ।।१०४।।

**भावचन्द्रिका–** ।। **अश्वत्थामेति** ।। 'आशु गतौ भोजने शब्दे' इति धातोः अश्वत्थः अश्वस्य इव थामः शब्दो यस्येति औणादिको मनिन् प्रत्ययः ।।१०४।।

**चट्टि–** ततः युधिष्ठिरोत्पत्त्यनन्तरं अब्दतः अब्दात् परतः द्वितीये वर्षे प्राप्ते सतीत्यर्थः । गिरिशः रुद्रः भूभरसंहृतौ भूमिभारभूतदैत्यविनाशकर्मणि हरेः श्रीकृष्णस्य अङ्गत्वं सहायकारित्वं आप्तुं प्राप्तुं अजनिष्ट जज्ञे । महात्मा सः रुद्रः जायमानस्सन् यस्मादश्वध्वनिं चक्रे तस्मान्नामतः नाम्ना अश्वत्थामा जात इत्यर्थः ।।१०४।।

**स सर्वविद् बलवानस्त्रवेत्ता कृपस्वसायां द्रोणवीर्योद्भवोऽभूत् ।**
**दुर्योधनस्तच्चतुर्थेऽह्नि जातस्तस्याऽपरेद्युर्भीमसेनः सुधीरः ।।१०५।।**

**वादिराजीया–** कृपस्वसायां द्रोणवीर्योद्भव इत्यत्र यां कृपस्वसेति वदन्ति तस्यां द्रोणवीर्योद्भवोऽभूदिति योजना । यद्वा 'सृ गतौ' इति धातोः औणीदिके डप्रत्यये कृते स्वेन सह निःसृता स्वसा सहोदरीत्यर्थः । 'तस्य अपरेद्युर्भीमसेनः सुधीरः' इत्यत्र तस्य दुर्योधनस्य अपरे द्युः परदिने भीमसेनोऽभूत् । एवं सति 'शतं सुयोधनादयो बभूवुरन्वहम्' इत्यनेन विरोधः इति न शङ्कनीयम् । दुर्योधनोत्पत्तेरपरदिने कुन्त्यां भीमसेनो जातः । तस्मिन्नेव दिने द्वितीयघटाद्दुःशासनस्योत्पत्तिसम्भवात् ।।१०६।।

**सत्याभिनवतीर्थीया–** तत्रैव स सर्वविद्बलवानस्त्रवेत्ता...इति श्लोके 'कृपस्वसायाम्' इत्यत्र स्वसृशब्दात् छान्दसः डाब्रूपः स्त्रीप्रत्ययो द्रष्टव्यः । तेन 'कृपस्वसरि' इति वक्तव्यं 'कृपस्वसायाम्' इति कथमिति शङ्कानवकाशः ।।१०६।।

**मधुसूदनीया–** ।। **कृपस्स्वसायामिति** ।। यां कृपस्स्वसेत्याहुस्तस्यामिति शेषः । यद्वा कृपस्स्वसायामिति आकारान्त एवायं शब्दः । 'पितृष्वसायाः पुत्रो मे भीमसेनानुजोऽर्जुन' इत्यादिपर्वणि । 'कुरूणां पश्यतां यस्मिन् पृथां द्रष्टुं पितृष्वसाम्' इत्युद्योगपर्वणि । 'पितृष्वसामनुज्ञाप्य राजानं च युधिष्ठिरम्' इति दशमस्कन्धे [६१.१४]। 'तप्तकुम्भे स्वसागामी [स्वसृगामीत्युलभ्यमान पाठः] हन्ति राजभटांश्च यः' इति विष्णुपुराणे [२.६.१०] । 'मातृस्वसां मातुलानीं तथैव च पितृष्वसाम्' इति कूर्मपुराणे च [२.३२.२५] । एवं 'पितृष्वसातनयताम्' 'अन्यमातृष्वसातनयताम्' 'पितृष्वसायाः पतिना' इत्यादौ च बोध्यम् ।।१०५-११०।।

**वरदराजीया–** सोऽश्वत्थामा सर्ववित् सर्वज्ञः बलवान् बलाधिकः अस्त्रवान् अस्त्राभिज्ञः सः कृपस्वसायां भगिन्यां कृप्यां द्रोणस्य वीर्यादुद्भवो यस्य स तथाऽभूत् जातः । तस्याश्वत्थाम्नः चतुर्थेऽह्नि तदुत्पत्तिदिनात् चतुर्थे दिवसे दुर्योधनो जातः । तस्य दुर्योधनस्य उत्पत्तिदिनस्य अपरेद्युः द्वितीये दिवसे सुधीरो भीमसेनो जात इत्यर्थः ।।१०५।।

**जनार्दनीया–** सोऽश्वत्थामा कृपस्य स्वसायां भगिन्यां कृपीनाम्न्यां द्रोणस्य वीर्याद्रेतसः उद्भवः उत्पत्तिर्यस्य स तथा । अभूत् । तस्याश्वत्थाम्नः चतुर्थेऽह्नि दिवसे सुयोधनो जातः । नन्वत्र सुयोधनः युधिष्ठिरतः चतुर्दिनाधिकवर्षात् नीच इत्युक्तम् । इदं न सङ्गच्छते । 'पूर्वं तदस्य' इत्यादिना पाण्डुः 'गान्धार्यां गर्भो धृत' इति श्रुत्वा 'कुन्तीं पुत्रोत्पत्त्यर्थं प्रेरयामास' इत्युक्तत्वात् गर्भस्य दशमास्यत्वस्य श्रुत्वा उक्तत्वाच्च इति चेत् सत्यम् । दशमास्यत्वं तु प्रायिकम् । कुत्रचित् अधिकस्यापि दृष्टत्वात् । अत्र गान्धार्यां वर्षद्वयं गर्भस्य धृतत्वाच्च चतुर्दिनाधिकवर्षान्नीचत्वं युज्यते । गान्धार्याः वर्षद्वयं गर्भस्य धारणं आदिपर्वण्युक्तम् । तथा हि– 'संवत्सरद्वयं तं तु गान्धारी गर्भमाहितम् । अप्रजा धारयामास ततस्तां दुःखमाविशत् ।।' इति [१२९.२५] । तस्य दुर्योधनस्य अपरे द्युः द्वितीयेऽह्नि । सुतरां धीरः धैर्यवान् भीमः, जात इति शेषः ।।१०५।।

**ताम्रपर्णीया–** ।। **कृपस्वसायामिति** ।। 'सृ गतौ' इति धातोः औणादिके मत्प्रत्यये 'स्वेन सह निःसृता स्वसा सहोदरी' इत्यकारान्तोऽयं शब्द इति केचित् । केचित्तु 'यां कृपस्वसेत्याहुः तस्यां द्रोणवीर्योद्भव' इत्यर्थमाहुः ।।१०५।।

**अतिविशद–** कृपस्वसायां द्रोणवीर्योद्भवोऽभूदित्यत्र यां कृपस्वसेति वदन्ति तस्यां द्रोणवीर्योद्भवोऽभूदित्यर्थः ।।१०५।।

**भारतश्री–** तस्यापरेद्युः यस्मिन् दिने दुर्योधनो जातः तस्याः परेद्युः । अनेन दुःशासनभीमसेनौ एकदिवसे जाताविति ज्ञायते । 'शतं दुर्योधनादयः' 'वभूवुरन्वहं च ते' इत्युक्तत्वात् ।।१०५।।

**चट्टि–** सो अश्वत्थामा सर्ववित् सर्वज्ञः, वलवान् वलाधिकः, अस्त्रवेत्ता अस्त्राभिज्ञः सन् । कृपस्वसायामिति पदविभागः । यां कृपस्वसेति वदन्ति तस्यां द्रोणवीर्योद्भवोऽभूदिति योजना । यद्वा सृ गतौ इति धातोः औणादिके डप्रत्यये कृते स्वेन सह निःसृता स्वसा सहोदरीत्यर्थः । तस्यां कृपस्वसायां कृपस्य भगिन्यां कृपीनाम्न्यां द्रोणवीर्याद्रेतसः उद्भूतः उत्पत्तिर्यस्य स तथाभूत् । तस्याश्वत्थाम्नः चतुर्थे अह्नि तदुत्पत्तिदिनाच्चतुर्थे दिवसे दुर्योधनो जातः । तस्य दुर्योधनोत्पत्तिदिनस्य अपरेद्युः द्वितीयदिवसे सुतरां धीरो धैर्यवान् भीमसेनो जात इति शेषः ।।१०५।।

**यदा स मासद्वितयी बभूव तदा रोहिण्यां बलदेवोऽभिजातः ।**
**बली गुणाढ्यः सर्ववेदी य एव सेवाखिन्नो[1] लक्ष्मणोऽग्रे हरेर्भूत् ।।१०६।।**

---

१. 'रवतीरमणः पूर्वभक्तिखेदाच्युताग्रजः' इति पद्मपुराणे.उत्तरखण्ड.वासुदेवसहस्रनाम.७१.२४८ ।

**व्यासतीर्थीया–** गोकुले रोहिण्याम् । रामावतारान्ते मम भगवत्सेवा सम्यङ् नाभूदिति सेवाखिन्न एव लक्ष्मणः स हरेरग्रेऽभूत् ।।१०६।।

**वेदाङ्गतीर्थीया–** स भीमः यदा मासद्वितयी । यः सेवाखिन्नः लक्ष्मणः स एव हरेः कृष्णात् अग्रे प्रथमतः भूत् अभूत् । लक्ष्मणजन्मनि अतिमत्सेवया श्रान्तोऽयमस्मिन् जन्मनि मदग्रजो भवत्विति हरीच्छया इति भावः ।।१०६।।

**वादिराजीया–** सेवाखिन्नो लक्ष्मणोऽग्रे हरेर्भूदित्यत्र रामावतारे कृतसेवया वहुसेवया खिन्नः श्रमवानहं अतः परमपि तथा कर्तुं न शक्नोमीति मनःखेदवानिति यावत् । अनुजत्वे अत्रापि तथैव सेवा कार्या अन्यथा विध्युल्लङ्घनदोषः स्यात् । अत अग्रजो भवामीति बुद्ध्या अग्रेऽभूदिति योजना । अत एव लक्ष्मणजन्मनि खेदसूचनाय लक्ष्मणपदम् । 'एधमानद्विड्' इति हि भगवतो महिमा । अधिकसेवाजनित-पुण्यनाशाय भगवानेव तादृशीं बुद्धिं ददौ । कथमन्यथा भगवद्भक्तः शक्रो गोवर्धनगिर्युद्धारणसमये कृष्णावज्ञां कृतवान् । असुरावेशवशात् तच्चेत् इदमपि तथेति सन्तोष्टव्यम् । 'रामावतारे मम सेवा सम्यङ्नाभूदिति सेवाखिन्नम्' इति व्याख्यानं पूर्वोत्तरविरुद्धम् । अग्रजन्मनि पादसंवहनादिना सेव्यत्वस्यैव सम्भवेन सेवाया असम्भवात् । 'अधिकं यैः कृतं तत्र तैरूनं कृतमत्र तत्' इति आचार्यवचनविरुद्धश्च ।।१०७।।

**सत्याभिनवतीर्थीया–** तत्रैव यदा स मासद्वितयी इति श्लोके 'सेवाखिन्नः लक्ष्मणोऽग्रे हरेर्भूत्' इत्यस्य सेवाखिन्नः भगवत्सेवायां खिन्नः अलंबुद्धिरहितः लक्ष्मणः हरेरग्रे भूत् अभूदित्यर्थः । एतेन गुणाढ्यस्य लक्ष्मणस्य भगवत्सेवार्थं अवतारकाले भगवत्सेवानिमित्तक्लेशायोगात् गुणाढ्यो लक्ष्मणः भगवत्सेवया क्लेशं प्राप्त इति कथनमनुपपन्नमिति दूषणं परास्तम् । 'सेवाखिन्न' इत्यस्य भगवत्सेवया क्लेशं प्राप्त इत्यर्थमनङ्गीकृत्य 'अतुष्टिरप्रसादश्च खेदोऽतृप्तिस्तथैव च । अनलत्वं वदन्त्येते सर्वे पर्यायवाचकाः' इति ब्राह्मवाक्यानुसारेण भगवत्सेवाविषयकालम्बुद्धिरहितः इत्यर्थस्योक्तत्वात् । लक्ष्मणस्य भगवत्सेवाविषये महानादरोऽस्तीति सूचयितुं 'हरेरग्रजोऽभूत्' इत्यनुक्त्वा 'हरेरग्रे भूत्' इत्युक्तम् ।।१०७।।

**वरदराजीया–** यदा स भीमो मासद्वितयी मासद्वयवान् बभूव तदा मासद्वये जाते सति रोहिण्यां बलदेवो बलभद्रो जातः । बली वलाधिको, गुणैः ज्ञानादिभिः आढ्यः श्रेष्ठः, सर्ववेदी सर्वज्ञः बलदेव इति सम्बन्धः । स पूर्वं कः? सेवाखिन्नः श्रीरामस्य सेवायां खिन्नो अनलम्बुद्धिमान् लक्ष्मणो अतो हरेः श्रीकृष्णस्याग्रेऽभूत् जातः ।।१०७।।

**अनन्तभट्टीया–** अभूत् लक्ष्मणत्वेन सेवाखिन्न... भगवत्सेवा सम्यङ् नाभूदिति सेवाखिन्नः यो लक्ष्मणः स हरेरग्रतोऽभूत् ।।१०६।।[१]

**जनार्दनीया–** स भीमः यदा मासद्वितयं विद्यते यस्येति मासद्वयवान् बभूव । तदा तस्मिन् दिने अग्रे पूर्वं त्रेतायामित्यर्थः । हरेः श्रीरामचन्द्रस्य सेवया खिन्नः श्रान्तः यो लक्ष्मणः स एव बली शरीरबलवान्, गुणैः हरिभक्त्यादिगुणैः आढ्यः श्रेष्ठः, सर्ववेदी सर्वज्ञः ज्ञानबलवानित्यर्थः । अत एव नाम्ना बलदेवः सन् रोहिण्यामभिजातः । यद्वा अग्रे रामावतारसमाप्तिकाले मम सेवा नाभूदिति सेवायां सेवानिमित्तं खिन्नोऽनलम्बुद्धिर्यो लक्ष्मणः स रोहिण्यामभिजातः । अत एवोक्तं 'पूर्वभक्तिखेदोऽच्युताग्रजः' [उत्तरखण्ड.७१.२४८] इति पाद्मे । 'अतुष्टिरप्रसादश्च खेदोऽतृप्तिस्तथैव च । अनलत्वं वदन्त्येते सर्वे पर्यायवाचकाः ।।' इति ब्राह्मे ।।१०६।।

**ताम्रपर्णीया–** ।। **सेवाखिन्न इति** ।। लक्ष्मणत्वावस्थायां अनुजत्वात् सेवया बहुश्रमेण किञ्चित् खेदयुक्तत्वात् हरेरग्रेऽभूदित्यर्थः । व्यासतीर्थीये तु 'रामावतारे भगवत्सेवा सम्यङ्नाभूदिति सेवाविषये खिन्नः अलम्बुद्धिरहितः' इति व्याख्यातम् । तस्मिन् पक्षे अग्र इति स्वरूपकथनम् । 'अतुष्टिरप्रसादश्च खेदो तृप्तिस्तथैव च । अनलत्वं वदन्त्येते सर्वे पर्यायवाचकाः ।।' [१.४.३१] इति प्रथमस्कन्धतात्पर्यानु-सारेण खिन्न इत्यस्य अलम्बुद्धिरहित इत्यर्थ उक्तः । ननु 'लक्ष्मणोऽग्रेऽभूत्' इति कथं लक्ष्मणस्य मूलरूपसंश्लेषात् 'तदैव शेषो हरिणोदितोऽविरासीद्' इति बलभद्रस्य मूलरूपांशत्वोक्तेः चेत् शेषस्य लक्ष्मणत्वावस्थायां खेदज्ञापनाय लक्ष्मणपदग्रहणादिति ।।१०६।।

**अतिविशद–** सेवाखिन्नो लक्ष्मणोऽग्रे हरेर्भूदित्यत्र सेवया खिन्न इति पदच्छेदः । 'श्यमन्तकार्थे रामोऽपि कृष्णस्य विमनाऽभवत्' इत्यनेन छिन्नभक्तत्वादिति भावः । अखिन्न इति वा । अखिन्नत्वेन अग्रभवने औत्सुक्यं कारणम् । एतदुक्तं भवति । रामस्य हरिसेवायामेव बुद्धिः । अतः प्रथमं हरेर्जात इति हरेरग्रजातत्वेनैव हरिसेवाभावे 'भूभरसंहृतौ हरेरङ्गत्वमाप्तुं गिरिशोऽजनिष्ट' इति गिरिशस्यापि हरिसेवा न स्यात् । 'शीघ्रं भूत्वा भूभारसंहृत्यादि तत्सेवां करिष्य' इति तत्पूर्वजात इति । एतेन 'हरेरग्रजातस्य हरिसेवाभावात् हरिसेवाखिन्न' इति वदन्तो निरस्ताः । भूभारसंहृत्यादिहरिसेवायाः सत्वात् ।।१०६।।

**भावचन्द्रिका–** सेवया अखिन्न इत्येवार्थः । 'वासुदेवकलानन्तः सहस्रवदनः स्वराट् । अग्रतो भविता देवो हरेः प्रियचिकीर्षया ।।' इति भागवतवचनात् [१०.१.२४]। खेदो अनलम्बुद्धिरिति वा ।।१०६।।

---

१. अनन्तभट्टीया– ।। सेवाखिन्न इति ।। कदाचिद्बहुसेवया श्रमेण किञ्चित् खेदयुक्तत्वादग्रे अभूदित्यर्थः । केचित्तु 'अखिन्न इति पदच्छेदः । अग्रत इति स्वरूपकथनम्' इत्याहुः । अपरे तु 'खिन्न इत्यस्य भागवततात्पर्यानुसारेण बुद्धिरहितः' इत्यर्थमाहुः । अत्र कश्चिद्वैयत्यादाह 'सेवेति भिन्नं पदं नालमिति शेषः' इति । तदसत् द्वितीयनञोऽध्याहार-प्रसङ्गात् । अथवा अध्याहारेत्युक्ते लोप इत्युत्तरम् ।।१०७।। इति हो.पुस्तकपाठः ।

**चट्टि–** यदा सः भीमः मासद्वितयं विद्यते यस्येति मासद्वितयवान् बभूव । तदा तस्मिन् दिवसे अग्रे पूर्वं त्रेतायामित्यर्थः । हरेः श्रीरामचन्द्रस्य सेवया खिन्नः श्रान्तो यो लक्ष्मणः स एव बली शारीरवान्, गुणैः हरिभक्त्यादिगुणैराढ्यः श्रेष्ठः, सर्ववेदी सर्वज्ञः ज्ञानबलवानित्यर्थः । अत एव नाम्ना बलदेवः सन् रोहिण्यां अभिजातः भूत् अभूत् । अग्रे रामवतारे सेवायां अखिन्नः अलम्बुद्धिरहितः लक्ष्मणः बलदेवोऽभूदिति वा ॥१०६॥

**यदा हि पुत्रान् विनिहन्तुमेतौ सहैव बद्धौ गतिशृङ्खलायाम् ।**
**कंसेनापापौ देवकीशूरपुत्रौ वियोजिताः शौरिभार्याः पराश्च ॥१०७॥**

**व्यासतीर्थीया–** कस्य हेतोः रोहिणी स्वगृहं विहाय गोकुले बलभद्रं सुषावेत्यत आह– **यदा हीति** ॥१०७-१०९॥

**वेदाङ्गतीर्थीया–** रोहिणी गोकुले बलभद्रं लेभ इति वक्ष्यति । तस्या गोकुलेऽवस्थानं कुत इत्यत आह– **यदा हीत्यादिना** ॥१०७-११०॥

**वादिराजीया–** सहैव बद्धौ गतिभृङ्खलायामित्यत्र गतिभृङ्खला नाम गमनायोग्या पादशृङ्खला । 'नड सङ्कोले' इत्यपभ्रष्टभाषा ॥१०७॥

**सत्याभिनवतीर्थीया–** तदनन्तरमेव यदा हि पुत्रान् विनिहन्तुमेतौ...इति श्लोकः । तस्यार्थः । कंसेन यदा पुत्रान् विनिहन्तुं अपापौ एतौ देवकीशूरपुत्रौ पुत्रोत्पत्त्यर्थमिति शेषः । पुत्रोत्पत्त्यर्थं गतिशृङ्खलायां वसुदेवस्य देवकीं प्रति गतः प्रवृत्तिः देवकीरमण इति यावत् । तदनुकूलशृङ्खलायां सहैव बद्धौ तदा पराः शौरिभार्याः वियोजिताश्चेति । एतेन कंसस्य दोषकथनावसरे गमनानुकूलशृङ्खलायां बद्धाविति गुणकथनमनुपपन्नमिति दूषणं परास्तम् । 'गतिशृङ्खलायाम्' इत्यस्य गमनानुकूलशृङ्खलायामित्यर्थः इत्यनङ्गीकारात् देवकीरमणानुकूलशृङ्खलायामित्यर्थाङ्गीकारे पुत्रोत्पत्तिं विना पुत्रहननायोगात् पुत्रहननाय पुत्रोत्पत्त्यर्थं रमणानुकूलशृङ्खलायां बन्धनं कृतमित्यर्थलाभेन दोष एव कथितो भवति ॥१०७॥

**वरदराजीया–** ननु वसुदेवेन वियुक्ता रोहिणी कथं गर्भं लेभे । कथञ्च नन्दगेहे बलभद्रं प्रसूतवतीत्यतः तत्सर्वं घटयन्नाह– **यदा हीत्यादिना** ॥ यदा यस्मिन् काले पुत्रान् देवकीपुत्रान् विनिहन्तुं एतौ देवकीवसुदेवौ सहैव गतिभृङ्खलायां गमनानुकूले निगडे भृङ्खलाबन्धेऽपि गमनागमने भवतः । सा गतिभृङ्खलेति भावः । कंसेन बद्धः अपापः अपराधरहितः अपराः अन्याः भार्याः शौरेः वसुदेवस्य भार्याः रोहिण्याद्याः वियोजिताः ॥१०७॥

**अनन्तभट्टीया–** गतेः सञ्चरणस्य अनुगुणा शृङ्खला गतिशृङ्खला ॥१०७॥

**जनार्दनीया–** रोहिणीप्रसवो गोकुले किमर्थमित्याशङ्कायामाह– **यदा हीति** ।। यदा कंसेन पुत्रान् देवकीपुत्रान् विनिहन्तुं अपापौ राजद्रोहरहितौ देवकीशूरपुत्रौ सहैव एकत्र शृङ्खलायां गतिर्गमनानुकूला तादृशा च सा शृङ्खला च तथा तस्यां वद्धौ तदा पराः देवक्याः सकाशादन्याः इत्यर्थः । शौरेः भार्याः रोहिण्याद्याः ।।१०७।।

**ताम्रपर्णीया–** ।। **सहैव वद्धौ गतिशृङ्खलायामिति** ।। सहैव युगपदेव गतिशृङ्खलायां गमनयोग्य-शृङ्खलायां वद्धावित्यर्थः । न त्वेकशृङ्खलायामिति भ्रमितव्यम् । तथात्वे रोहिण्यादिगमनायोगात् ।। ।।१०७-११६।।

**चट्टि–** रोहिणी वलभद्रं किमर्थं नन्दगेहे प्रसूतवतीत्यतस्तत्सर्वं घटयन्नाह– **यदेत्यादिना** ।। यदा कंसेन पुत्रान् देवकीपुत्रान् विनिहन्तुं अपापौ अपराधरहितौ एतौ देवकीशूरपुत्रौ सहैव एकत्र गतिशृङ्खलायां गमनयोग्यशृङ्खलायां वद्धौ । तदा पराः अपराः देवक्याः सकाशादन्याः शौरेः वसुदेवस्य भार्या रोहिण्याद्याः वियोजिताः ।।१०७।।

**विनिश्चयार्थं देवकीगर्भजानामन्या भार्या धृतगर्भाः स कंसः ।**
**स्थानान्तरे प्रसवो यावदासां संस्थापयामास सुपापबुद्धिः ।।१०८।।**

**वादिराजीया–** वियोजिता इत्यत्र न सहैव सर्वा वियोजिता इति भावेनोम्– **विनिश्चयार्थमिति** ।। देवकीव्यतिरिक्ता वसुदेवस्य भार्या सह वा तिष्ठन्ति । भ्रातृत्वान्नन्दगेहे वा तिष्ठन्ति । अतो रोहिण्यपि 'रोहिणी वसुदेवस्य भार्याऽस्ते नन्दगोकुले । तत् सन्निकृष्य रोहिण्या जठरे सन्निवेशय ।।' [भाग.१०.३.७-९] इति भागवतोक्तेः । नन्दगोकुले जातं दैविकं गर्भमजानानाः देवकीगर्भस्रावानन्तरं तां विचारयितुमागताः। गर्भचिह्ने कंसेनापि ज्ञाते पुनर्नन्दगृहं प्रति प्रेषिता तत्रैव रामं सुषुवे । तेन पतिरेकत्र भार्यान्यत्र कथं वा पुत्रसम्पत्तिरिति मन्दानामाशङ्का गर्भस्रावेणैव गतेति भावः । गर्भवत्या अपि सहवासे वर्षे वर्षे देवक्या अपि गर्भस्य जायमानत्वात् । मयि द्वेषादुत्पत्तिसमय एव पुत्रव्यत्यासे कृते सति मम मरणं स्यादेवेति भिया गर्भे जाते देवकीव्यतिरिक्ताः सर्वा अन्यत्र प्रेषयति । एतदप्युक्तं वि विशेषेण निश्चयार्थमिति ।।१०९-११०।।

**वरदराजीया–** कुत इत्यतो वियोजने कारणं वदन् उक्तमेव विविच्य दर्शयति– **विनिश्चयार्थमिति** ।। देवकीगर्भजानां शिशूनां विविक्तत्वेन निश्चयार्थम् । धृतो गर्भो याभिः ताः वसुदेवादिति शेषः । पापा दुष्टबुद्धिर्यस्य स, कंसो यावत्पर्यन्तं आसां रोहिण्यादीनां प्रसवः स्यात् तावत् स्थानान्तरे संस्थापयामास ।।१०८।।

**जनार्दनीया–** ननु आसां वसुदेवात् पुत्रोत्पत्तिः कथमित्याशङ्कायामाह– **विनिश्चयेति** ।। सुपापबुद्धिः स कंसः, धृतः वसुदेवाद्धृतः गर्भो याभिः ताः तथा, अन्याः देवक्याः । रोहिण्याद्याः भार्याः वसुदेवदाराः । आसां वसुदेवभार्याणां यावत्कालपर्यन्तं प्रसवः तावत् स्थानान्तरे स्थापयामास ।।१०८।।

**चट्टि–** ननु स्थानान्तरे स्थितानामासां वसुदेवात् पुत्रोत्पत्तिः कथमासीदित्याशङ्कायामाह– **विनिश्चयेति**।। सुपापबुद्धिः सः कंसः देवकीगर्भजानां विनिश्चयार्थम्, धृतः वसुदेवात् धृतो गर्भो याभिस्ताः धृतगर्भाः । अन्याः देवक्याः अन्याः रोहिण्याद्याः भार्याः वसुदेवदारान् आसां वसुदेवभार्याणां यावत् यावत्कालपर्यन्तं प्रसवः तावत् कालपर्यन्तं स्थानान्तरे संस्थापयामास ।।१०८।।

**हेतोरेतस्माद् रोहिणी नन्दगेहे प्रसूत्यर्थं स्थापिता तेन देवी ।**
**लेभे पुत्रं गोकुले पूर्णचन्द्रकान्ताननं बलभद्रं सुशुभ्रम् ।।१०९।।**

**वरदराजीया–** एतस्मादुक्ताद्धेतोः प्रसूत्यर्थमेव रोहिणी देवी तेन कंसेन नन्दस्य गेहे स्थापिता । तस्माद्गोकुले पूर्णचन्द्रवत् कान्तं मनोहरं आननं यस्य स तथा । तं सुशुभ्रं शुभ्रवर्णं बलभद्रं पुत्रं लेभे प्रसूतवती ।।१०९।।

**जनार्दनीया–** एतस्मात् हेतोः उक्तकारणात् तेन कंसेन स्थापिता रोहिणीदेवी । पूर्णचन्द्रवत् कान्तं रम्यं आननं मुखं यस्य स तथा तम् । सुशुभ्रं मनोहरं शुक्लवर्णं बलभद्रं पुत्रं गोकुले लेभे प्राप ।।१०९।।

**चट्टि–** एतस्माद्धेतोः उक्तकारणात् प्रसूत्यर्थमेव तेन कंसेन नन्दगेहे स्थापिता रोहिणी देवी पूर्णचन्द्रवत् कान्तं रम्यं आननं मुखं यस्य स तथा तम्, सुशुभ्रं मनोहरशुक्लवर्णं बलभद्रं पुत्रं गोकुले लेभे प्राप ।।१०९।।

**यदा त्रिमासः स बभूव देवस्तदाऽऽविरासीत् पुरुषोत्तमोऽजः ।**
**तौ कृष्णशेषावामुकामौ सुतौ हि तपश्चक्राते देवकीशूरपुत्रौ ।।११०।।**

**व्यासतीर्थीया–** प्रकृतमुत्पत्तिक्रममाह– **यदेति** ।। शेषो देवकीवसुदेवपुत्रः केन निमित्तेन बभूवेति जिज्ञासायामाह– **कृष्णेति** ।।११०।।

**वादिराजीया–** शेषाख्यगर्भस्य मासत्रयपर्यन्तं देवक्युदरे स्थित्वा पश्चात् रोहिण्या एव उदरप्रवेशे किं निमित्तमित्यत आह– **तौ कृष्णशेषाविति** ।।११०।।

**वरदराजीया–** यदा स देवो वलदेवः त्रिमासः त्रयो मासा यस्य स तथा, बभूव । तदा अजः पुरुषोत्तम आविरासीत् प्रादुर्भूतः । ननु प्रथमं देवक्युदरे मासत्रयपर्यन्तं शेषस्यावस्थाने किं निमित्तम्? तदनन्तरं रोहिणीगर्भे सप्तमासपर्यन्तं स्थितौ च किं निमित्तमित्यत उभयत्र निमित्तमाह– **कृष्णशेषावित्यादिना** ।। कृष्णशेषौ नरनारायणौ सुतौ आप्तुकामौ देवकीशूरपुत्रौ तपश्चक्राते चक्रतुः ।।११०।।

**जनार्दनीया–** यदा स देवः बलभद्रः त्रिमासः मासत्रयपरिमितवयस्कः बभूव तदा । ननु शेषस्य देवकीरोहिण्योर्गर्भप्राप्तौ किं कारणमित्यत आह– **कृष्णशेषाविति** ।। कृष्णो हरिः, शेषः प्रसिद्धः । कृष्णशेषात्मकौ सुतावाप्तुं कामो ययोस्तौ तथा । देवकीशूरपुत्रौ तपश्चक्राते चक्रतुः ।।११०।।

**चट्टि–** यदा सः देवः बलभद्रः त्रिमासः त्रयो मासाः यस्य स तथा । मासत्रयपरिमितवयस्क इत्यर्थः । बभूव । तदा अजः पुरुषोत्तमः आविरासीत् प्रादुर्भूतः । ननु शेषस्य प्रथमं देवकीगर्भप्राप्तौ अनन्तरं रोहिणीगर्भप्राप्तौ च किं कारणमित्यत आह– **कृष्णशेषाविति** ।। कृष्णशेषौ सुतौ आप्तुं कामं ययौस्तौ तथा तौ देवकीशूरपुत्रौ तपश्चक्राते ।।११०।।

**विष्ण्वावेशी बलवान् यो गुणाधिकः स मे सुतः स्यादिति रोहिणी च ।**
**तेपे तपोऽतो हरिशुक्लकेशयुतः शेषो[१] देवकीरोहिणीजः ।।१११।।**

**व्यासतीर्थीया–** रोहिणीसुतत्वेनोत्पत्तौ किं निमित्तमित्यत आह– **विष्ण्वावेशी इति** ।।१११।।

**वेदाङ्गतीर्थीया–** शुक्लकेशयुतः शुक्लकेशावेशयुतः ।।१११-११२।।

**वादिराजीया–** अतो हरिशुक्लकेशयुतः शेष इत्यत्र अतः स्पष्टं 'शेषः पुत्रो भवेत्' इति देवक्या, 'विष्ण्वावेशी बलवान् पुत्रो भवेत्' इति रोहिण्या च तपःकरणात् । हरिशुक्लकेशयुतः शेषः त्रिमासं देवक्यां सप्तमासं रोहिण्यां च जात इत्यर्थः । अतो 'दशमे मासि जात' इति श्रुतिं रक्षन् रामोऽपि दशमे मासि जातः । कृष्णोऽपि श्रौतमर्यादारक्षणाय शेषगमनान्तरं अवशिष्टसप्तमासानुषित्वा रामोत्पत्तेर्मासत्रयानन्तरं उत्पन्नत्वात् दशमे मास्येव जायत इति भावः ।।१११-११३।।

**मधुसूदनीया–** ।। **तेपे तपोऽत इति** ।। ननु शेषो रोहिणीज इत्ययुक्तम् ।
'स चापि केशौ हरिरुज्जहार शुक्लं चैकमपरं चापि कृष्णम् ।
तौ चापि केशावाविशतां यदूनां कुले स्त्रियौ रोहिणीं देवकीं च ।।

---

१. ...शेषाख्योंऽशस्ततोऽनघः । अंशांशेनोदरे तस्याः सप्तमस्सम्भविष्यति।' इति ब्रह्ममहापुराणे.७३.३९ ।

तयोरेको बलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः ।
कृष्णो द्वितीयः केशवस्सम्बभूव केशो योऽसौ वर्णतः कृष्ण उक्तः ।।'

इति महाभारते [आदि.२१४.३२-३३], 'एवं संस्तूयमानस्तु भगवान् परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महामुने ।।' इति विष्णुपुराणे च [५.१.६०] शुक्लकेशस्यैव रोहिणीसुतत्वोक्तेः इत्यतस्तद्वचनयोस्तात्पर्यमाह– **हरिशुक्लकेश इति** ।।१११-१२७।।

**वरदराजीया–** रोहिणी च विष्ण्वावेशवान् बलवान् बलाधिकः गुणाधिकश्च यो भवति स मे सुतः स्यादिति बुद्ध्या तपस्तेपे कृतवती । अतः कारणाद्धरेः शुक्लकेशेन युतः शेषः स्वयमेव देवकीरोहिण्योर्जात इत्यर्थः । तस्मादुभयपुत्रत्वसिद्ध्यर्थं उभयगर्भे स्थित इति भावः ।।१११।।

**अनन्तभट्टीया–** अतः यतः देवकीरोहिणीभ्यां शेषस्यात्मसुतत्वार्थं तपश्चीर्णं अत इत्यर्थः ।।१११।।

**जनार्दनीया–** रोहिणी विष्णोः आवेशो विद्यते यस्मिन् स तथा, गुणाधिकः ज्ञानादिगुणैरुत्तमो, यः स देवः मे सुतः स्यादिति तपस्तेपे चक्रे इत्यर्थः । हि यतः अतः शेषः हरेः शुक्लकेशेन युतः सन् देवकीरोहिणीभ्यां जात इत्यर्थः ।।१११।।

**भारतश्री–** भीमसेनात् मासद्वयन्यूनः बलदेवः । यो लक्ष्मणः शेष एव पुत्रः अभूत् । यः गुणाधिकः स्वावरापेक्षया सः शेषः विष्ण्वावेशी स मे सुतः स्यादिति रोहिणी तपस्तेपे ।।११।।

**चट्टि–** रोहिणी च विष्ण्वावेशी विष्ण्वावेशवान् बलवान् गुणाधिकः यः सः देवः मे सुतः स्यादिति तपस्तेपे इत्यर्थः । हि यतः अतः शेषः हरिः शुक्लकेशेन युतस्सन् देवकीरोहिण्योः जात इत्यर्थः । तदुक्तम्– 'स चापि केशौ हरिरुज्जहार शुक्लं चैकमपरं चापि कृष्णम् । तौ चापि केशावाविशतां यदूनां कुले स्त्रियौ रोहिणीं देवकीं च ।। तयोरेको बलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः । कृष्णो द्वितीयः केशवः सम्बभूव केशो योऽसौ वर्णतः कृष्ण एव ।।' इति महाभारते, 'एवं संस्तूयमानस्तु भगवान् परमेश्वरः । उद्बबर्हात्मनः केशौ सितकृष्णौ महामुने ।।' इति विष्णुपुराणे ।।११०।।

**अवर्द्धतासौ हरिशुक्लकेशसमावेशी गोकुले रौहिणेयः ।**
**कृष्णोऽपि लीला ललिताः प्रदर्शयन् बलद्वितीयो रमयामास गोष्ठम् ।।११२।।**

**व्यासतीर्थीया–** बलभद्रस्य शेषत्वे 'उद्बबर्हात्मनः केशौ सितः कृष्णो महामतिः । य इति...' बलभद्रस्य भगवदंशत्वोक्तेः गतिः केत्यत उक्तम्– **हरिशुक्लेति** ।। ललिताः मनोहराः ।।११२।।

**वरदराजीया–** रौहिणेयः रोहिण्याः पुत्रो बलभद्रः हरेः शुक्लकेशसमावेशवान् गोकुल एव अवर्धत ववृधे । 'उद्बबर्हात्मनः केशौ' इत्यादि प्रमाणसिद्धिं द्योतयितुं पुनः 'हरिशुक्लकेशसमावेशी' इत्युक्तम् ।

बलेन बलभद्रेण द्वितीयः बलभद्रसहित इति यावत् । ललिताः मनोहराः लीलाः क्रीडाः प्रदर्शयन् गोष्ठं तत्रत्यान् जनान् रमयामास असन्तोषयत् ।।११२।।

**जनार्दनीया–** हरेः शुक्लकेशस्य समीचीनः आवेशो विद्यते यस्मिन् स तथा असौ । रौहिणेयः बलभद्रः गोकुलेऽवर्धत । बलः बलभद्रः द्वितीयो यस्य स तथा । बलभद्रसहित इत्यर्थः । कृष्णोऽपि ललिताः मनोहराः लीलाः प्रदर्शयन्, गोष्ठं गोकुलस्थजनमित्यर्थः । रमयामास तोषयामास ।।११२।।

**चट्टि–** ।। **हरिशुक्लकेशसमावेशीति** ।। हरेः शुक्लकेशस्य समीचीन आवेशो विद्यते यस्मिन् स तथा । असौ रौहिणेयो बलभद्रः गोकुले अवर्धत । बलः बलभद्रः द्वितीयो यस्य स तथा बलभद्रसहित इत्यर्थः । कृष्णोऽपि ललिताः मनोहराः लीलाः प्रदर्शयन् गोष्ठं तत्रस्थं जनं रमयामास तोषयामास ।।

**स प्राकृतं शिशुमात्मानमुच्चैर्विजानन्त्या मातुरादर्शनाय ।**
**विजृम्भमाणोऽखिलमात्मसंस्थं प्रदर्शयामास कदाचिदीशः ।।११३।।**

**व्यासतीर्थीया–** आदर्शनाय सम्यज्ज्ञानाय ।।११३।।

**वेदाङ्गतीर्थीया–** आदर्शनाय सम्यक् स्वरूपप्रदर्शनाय ।।११३।।

**वादिराजीया–** मातुरादर्शनाय इत्यत्र आ सम्यक् दर्शनाय अप्राकृतत्वदर्शनायेत्यर्थः ।।११४।।

**वरदराजीया–** कृष्णः आत्मानं स्वं प्राकृतं लौकिकं शिशुं विजानन्त्याः मन्यमानायाः मातुः यशोदायाः आदर्शनाय सम्यज्ज्ञानाय विजृम्भमाणो जृम्भणं कुर्वन् कदाचित् ईशः समर्थः कृष्णोऽखिलं समस्तं आत्मसंस्थं आत्मनि विद्यमानं प्रदर्शयामास ।।११३।।

**अनन्तभट्टीया–** आदर्शनाय सम्यज्ज्ञानाय ।।११३।।

**जनार्दनीया–** ईशः स कृष्णः आत्मनः स्वस्य प्राकृतं प्रकृतिसम्बन्धिनं लौकिकमित्यर्थः । शिशुमिति विजानन्त्याः ज्ञातवन्त्याः मातुर्यशोदायाः उच्चैः विशेषत्वेन आदर्शनाय प्रदर्शयितुं विजृम्भमाणः सन् आत्मनि संस्थं विद्यमानं अखिलं सर्वं स्थावरजङ्गमात्मकं कदाचित् प्रदर्शयामास ।।११३।।

**चट्टि–** ईशः समर्थः सः श्रीकृष्णः आत्मानं स्वं प्राकृतं प्रकृतिसम्बन्धिनं लौकिकमित्यर्थः । शिशुं विजानन्त्याः मन्यमानायाः मातुः यशोदायाः उच्चैर्विशेषेण आदर्शनाय सम्यक् ज्ञानाय विजृम्भमाणः जृम्भणं कुर्वन् सन् अखिलं समस्तं स्थावरजङ्गमात्मकं जगदात्मनि संस्थं विद्यमानं कदाचित् प्रदर्शयामास ।।११३।।

**साऽण्डं महाभूतमनोऽभिमानमहत्प्रकृत्यावृतमब्जजादिभिः ।**
**सुरैः शिवेतैर्नरदैत्यसङ्घैर्युतं ददर्शास्य तनौ यशोदा[१] ॥११४॥**

**व्यासतीर्थीया–** मनो मनस्तत्वम् । अभिमानोऽहङ्कारः ॥११४॥

**वेदाङ्गतीर्थीया–** सा महाभूतमनोभिमानमहत्प्रकृत्यावृतम् । महाभूतानि अबादीनि चत्वारि । पृथिव्या अण्डान्तर्गतत्वात् न पृथिवी अण्डावरणत्वेन ग्राह्या । 'अबग्नीरनभोऽहंकृन्महत्तत्त्वगुणत्रयैः' इत्यत्र पृथिव्याः अण्डावरणेऽपरिगणितत्वात् । मनोऽभिमानः मनोऽभिमानिना रुद्रेणाभिमन्यमानः अभिमानः मनोभिमानः अहङ्कारतत्त्वमिति यावत् । मनः मनस्तत्त्वं अभिमानोऽहङ्कारतत्त्वमिति पृथग्ग्रहणे अण्डावरणनवत्वभङ्गात् । अबग्नीरेत्यादि नवावरणेष्वहङ्कारस्यैव गृहीतत्वाच्च । महत्तत्त्वं प्रकृतिरिति गुणत्रयं एवं महाभूतमनोभिमानमहत्प्रकृतिभिर्नवभिरावरणैरावृतं अन्तश्च एतैः सुरादिभिश्च युतमण्डं अस्य तनौ ददर्शेति श्लोकार्थः ॥११४-११६॥

**वादिराजीया–** महाभूतमनोभिमानमहत्प्रकृत्यावृतमित्यत्र महाभूतपदेन मात्रापञ्चकमपि लक्ष्यते । मनःपदेन च दशेन्द्रियाणि बुद्धितत्वं च लक्ष्यते । अभिमानपदेन 'गर्वोऽभिमानोऽहङ्कार' इत्यभिधानात् अहङ्कारतत्त्वमुच्यते । महत्पदेन महत्तत्त्वमुच्यते । एवं चतुर्विंशतितत्वानि सङ्गृहीतानि । प्रकृतिपदेनाव्यक्ताख्यं मूलतत्वमुच्यते । आवृतं महाभूतमनोभीमानमहत्प्रकृतिभिः चतुर्विंशतितत्वमूलतत्वरूपाभिः यथायोग्यमुत्तरोत्तराधिक्येनावृतम् । सकलतत्वसङ्ग्रहाय आचार्यैरेवमुक्तम् । भागवतकारैस्तु क्रमाद्दशोत्तरत्वरूपस्वोक्तसङ्ख्यारक्षणाय 'अबग्नीरनभोऽहंकृन्महत्तत्वगुणत्रयैः । क्रमाद्दशोत्तरैः...॥' इति नवानामेव ग्रहणं कृतम् ।

वस्तुतस्तु मिलितानि चतुर्विंशतितत्वानि अण्डकटाहान्तः सर्वदा सन्ति । अन्यथा चतुर्विंशतितत्वात्मकचतुरशीतिलक्षयोनिभेदेन नानाविधानन्तदेहानां समये कथमुत्पत्तिस्स्यात् । अतः आवरणं नाम इतरामिलितपृथिवीतत्वस्यैव सौवर्णशतकोटिप्रमाणब्रह्माण्डरूपेण या अवस्थितिः सा पृथिव्याख्यं प्रथमं आवरणम् । पृथिवीभागेनाप्यमिश्रकेवलधवलजलसमूहानां शतकोटेः दशगुणितसहस्रकोटिप्रमाणप्रदेशे विस्तृतानां ब्रह्माण्डकटाहानामावृत्त्या या स्थितिः सा द्वितीयावरणम् । एवं जलभागामिश्रितकेवलतेजोराशीनां शतकोटिसहितसहस्रकोटेः दशोत्तरपदोक्तदशसहस्रकोटियोजनप्रमाणप्रदेशे या स्थितिः सा तृतीयावरणमुच्यते ।

---

१. 'एकदार्भकमादाय स्वाङ्कमारोप्य भामिनी । प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ पीतप्रायस्य जननी सुतस्य रुचिरस्मितम् । मुखं लालयती राजन् जृम्भतो ददृशे इदम् ॥ खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनाम्बुधींश्च । द्वीपान् नगान् तद्दुहितृर्वनानि भूतानि यानि स्थिरजङ्गमानि ॥ सा वीक्ष्य विश्वं सहसा राजन् सञ्जातवेपथुः । सम्मील्य मृगशावाक्षी नेत्रे आसीत् सुविस्मिता ॥' इति भागवते १०.८.३६-३९।

अत एव हि परितो जाज्वल्यमानज्वलनज्वलया सदाभिघातात् निराधारमपि जलं नाधः पतति । न पर्यक् स्रवति । नापि क्थने सत्यूर्ध्वं गच्छति । जलस्थितनारायणसन्निधानाच्च न शुष्यति । नापि सर्वत्रोष्णीभवति । कथमन्यथा त्रिविक्रमवामपादनखनिर्भिन्नाण्डकटाहविवरात् शीतलशुक्लरूपगङ्गाप्रवाहस्याधः-स्रवणम् । अत एवाण्डकटाहाख्यपृथिव्यावरणात् भिन्नपृथिव्यावरणकल्पनमपि निर्मूलत्वात्स्वकपोल-कल्पनमेव ।

एवं तेजोभागामिश्रितवायूनां शतकोटेर्दशसहस्राच्च दशोत्तराख्यविंशतिसहस्रकोटिरूपयोजनप्रमाणप्रदेशे यत् प्लवनं तच्चतुर्थावरणमित्युच्यते । एवमीषदपि वायुभागामिश्रितभूताकाशावयवानां विंशतिसहस्रादपि दशोत्तराख्यत्रिंशत्सहस्रकोटियोजनप्रमाणप्रदेशे या अवस्थितिः सा पञ्चमावरणम् । एवमाकाशभागामिश्रिता-हङ्कारावयवानां त्रिंशत्सहस्रकोटिभ्यः शतकोटेश्च दशोत्तरात्मकचत्वारिंशत्सहस्रकोटियोजनप्रमाणप्रदेशे या स्थितिः सा षष्ठमावरणम् । एवमुत्तरत्राप्यूह्यम् । एवं स्थिताकाशतत्वादधिकवृत्तीनां अहङ्कारतत्वात् न्यूनवृत्तीनां स्वयं च क्रमेणाधिवृत्तीनां पञ्चतन्मात्रकर्मेन्द्रियज्ञानेन्द्रियान्तःकरणाख्यमनोरूपेन्द्रियभेदेन षोडशतत्वानां दशोत्तरत्वनियमाभावात् त्रिंशत्सहस्रकोटिपरिमिताकाशतत्वात् सम्भावितपञ्चपञ्चाधिकतया गणने अशीतिसहस्रकोटिभ्योऽप्युपरि पञ्चसहस्रकोटिप्रमाणप्रदेशे अवस्थानं जायते । बुद्धितत्वस्य पार्वत्यभिमन्यमानतया ईदृशस्यैव आधिक्यस्यैवानुचितत्वात् । सम्भावितपञ्चपञ्चकेनाधिक्ये पूर्वोक्तेभ्योप्युपरि पञ्चविंशत्सहस्रकोटियोजनप्रमाणप्रदेशे अवस्थानं जायते । एवं मिलित्वा उक्तसप्तदशतत्वानां शतसहस्रकोटिभ्योऽप्युपरि दशसहस्रकोटिप्रमाणप्रदेशे व्याप्तिर्ज्ञायते । अहङ्कारतत्वं तु इतोऽपि नवतिसहस्र-कोटियोजनोच्छ्रितमेकादशमारभ्य एतैः सह च स्थितम् । अतः पुञ्जीकृत्यगणने द्विशतसहस्रकोटिप्रमाणं जायते । तस्मादेतेषां मुख्यावरणभूताहङ्कारतत्व एवान्तर्भूतत्वाद्दशोत्तरत्वाभावाच्च न पृथग्गणनम् । अन्यथा ब्रह्माण्डाद्बहिराकाशतत्वात् प्राक्सृष्टानां तामसतैजसवैकारिकाख्याहङ्कारतत्वपरिमाणरूपाणामेतेषां अवस्थानमेव न स्यात् । आचार्यैस्तु सङ्ख्यानियमं विना उक्तविधया चतुर्विंशतितत्वस्य तु भागवतकृतोऽप्यभिमतत्वस्वरूपमात्रगणनैव कृतेति न क्वापि गुरुशिष्ययोरनयोर्विरोध इति ज्ञेयम् ।

अस्माभिरपि श्रीहयग्रीवस्य श्रीवेदव्यासस्य श्रीमध्वमुनेश्च कृपया मन्दानां बोधाय यथामति सम्भावितप्रमेयचर्चा कृता । अस्मदीयमनोदोषात् क्वचित् किञ्चिन्न्यूनत्वेऽधिकत्वे वा 'स वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि' इति भागवतोक्तेः, अनुव्याख्याने आचार्योक्तमततत्त्व-विरोधाभावाच्च, गङ्गां प्रति गच्छतः मध्ये मध्ये पादस्खलनमिव लघीयांसमपराधं सन्तः क्षन्तुमर्हन्ति । एवं च 'साण्डं महाभूतमनोऽभिमानमहत्प्रकृत्यावृतम्' इत्यादिना कृतं अण्डाद्बाह्यतत्त्वसङ्ख्यानं 'अबग्नीरनभोऽहङ्कन्महतत्त्वगुणत्रयै' इत्यादिना भागवतोक्तबहिरावणसङ्ख्यानां च अविरुद्धेषद्विशेषविशिष्टत्वेऽपि गङ्गायमुनयोः सङ्गमस्थजलवत् परममङ्गलं सर्वेषामवगाहनयोग्यं चेति स्थितम् ॥११४॥

**वरदराजीया–** अखिलमित्युक्तं विवृणोति– **सेत्यादिना** ।। सा यशोदेति सम्बन्धः । महाभूतानि पञ्च, मनो, अभिमानोऽहङ्कारो, महत् महत्तत्वं, प्रकृतिः गुणत्रयम्, महाभूतादिदशावरणैरावृतमित्यर्थः । शिवेन इतैः युक्तैरब्जजादिभिः सुरैः तथा नराणां दैत्यानां सङ्घैश्च युतं अण्डं अस्य कृष्णस्य तनौ देहे ददर्श ।।११४।।

**अनन्तभट्टीया–** अभिमानो अहङ्कारः ।।११४।।

**जनार्दनीया–** सा यशोदा, महाभूतैः भूरादिपञ्चभूतैः, मनोऽभिमानेन मनोऽभिमानिना रुद्रेण अभिमन्यत इत्यभिमानेन अहङ्कारतत्त्वेन, महता महत्तत्त्वेन । एतैर्युक्तया प्रकृत्या गुणत्रयात्मकया प्रकृत्या आवृतं आवरणीभूतैर्युक्तम् । 'सा सूक्ष्मत्वात् वृणोत्यण्डं द्विगुणात्तु दशोत्तराः । अवादयः प्रकृत्यन्ता अष्टप्रकृतयः स्मृताः ।।' [भा.ता.३.१२.३९] इति वचनात् । अब्जजः ब्रह्मा स एव आदिः उत्पत्तिकारणं येषां ते तथा तैः । शिवेन इतैः सहितैः सुरैर्नराणां दैत्यानां सङ्घैः समूहैश्च युतमण्डं अस्य कृष्णस्य तनौ ददर्श । अत्र महाभूतपदेन अबादिभूतचतुष्टयं विवक्षितम् । तथा मनोऽभिमान इति पदेन अहङ्कारतत्त्वमेव विवक्षितम् । न तु भूतपदेन भूतपञ्चकं, मनःपदेन मनस्तत्त्वं, अभिमानपदेन अहङ्कारतत्वं विवक्षितम् । तथा सति अण्डावरणस्य नवत्वप्रतिपादक 'अवग्नीरनभोऽहंकृन्महत्तत्त्वगुणत्रयैः' इति वाक्यविरोधः स्यात् । मनोऽभिमानपदेन मनस्तत्त्वमपि विवक्षितम् । 'अवग्नीर' इति वाक्ये अहङ्कारस्यैव परिगणनात् मनस्तत्त्वस्य अपरिगणनाच्च ।।११४।।

**भारतश्री–** सा यशोदा सूनोः तनौ ददर्शेत्यन्वयः । अभिमानो अहङ्कारः । तनौ आदर्शे प्रतिबिम्बमिव ददर्श ।।११४-११९।।

**चट्टि–** अखिलमित्येतद्विवृणोति– **सेत्यादिना** ।। सा यशोदा महाभूतमनोभिमानमहत्प्रकृत्यावृतं महाभूतैः अबादिचतुर्भिः । पृथिव्याः अण्डान्तर्गततत्वान्न पृथिवी अण्डावरणत्वेन ग्राह्या । 'अबग्नीरनभोऽहं-कृन्महत्तत्वगुणत्रयैः' इत्यत्र पृथिव्या अण्डावरणे अपरिगणिततत्वात् । मनोऽभिमानेन मनोभिमानिना रुद्रेणाभिमन्यमानः मनोभिमानः अहङ्कारतत्वमिति यावत् । तेन मनः मनस्तत्वं अभिमानः अहंकारतत्व-मिति पृथग्ग्रहणे अण्डावरणनवत्वभङ्गात् । 'अवग्नीर' इत्यादिनवावरणेष्वहङ्कारस्यैव परिगणनात् मनस्तत्वस्यापरिगणनाच्च । महता महत्तत्त्वेन, प्रकृत्या गुणत्रयेण एवं महाभूतमनोऽभिमानमहत्प्रकृतिभिः नवभिः आवरणैः आवृतम् । अब्जजो ब्रह्मा स एव आदिरुत्पत्तिः कारणं एषां ते तथा तैः । शिवेन इतैः युतैः सुरैः नराणां दैत्यानां च सङ्घैः समूहैश्च युतं अण्डमस्य श्रीकृष्णस्य तनौ ददर्श ।।११४।।

**न्यमीलयच्चाक्षिणी भीतभीता जुगूह चाऽत्मानमथो रमेशः ।**
**वपुः स्वकीयं सुखचित्स्वरूपं पूर्णं सत्सु ज्ञापयंस्तद्व्यदर्शयत्[1] ।।११५।।**

**व्यासतीर्थीया–** सतामनुग्रहार्थं चेत्याह– **वपुरिति** ।।११५-११६।।

**वादिराजीया–** जुगुह 'गुहू संवरण' इति धातोः । आच्छादितवान् । तद्व्यदर्शयदित्यत्र तत् व्याप्तं वपुः ।।११५-११७।।

**वरदराजीया–** भीतभीता भीतेषु भीता अत्यन्तेति यावत् । अक्षिणी लोचने न्यमीलयच्च निमीलितवती। अथो अनन्तरं रमेशः कृष्णः आत्मानं स्वात्मानं जुगूहे आच्छादितवान् । ननु किमर्थं विश्वरूपं दर्शितवानित्यतः सदनुकम्पयेत्याह– **वपुरिति** ।। सुखज्ञानात्मकं रूपमपरिच्छिन्नं स्वकीयं वपुः स्वरूपं सत्सु सज्जनेषु ज्ञापयन् तद्विश्वरूपमदर्शयद्धि ।।११५।।

**जनार्दनीया–** भीतभीता अत्यन्तं भीता यशोदा अक्षिणी न्यमीलयत् आच्छादयामास । अतो रमेशः आत्मानं स्वरूपं जुगूह आच्छादयामास । ननु अलौकिकं स्वरूपं किमर्थं दर्शयामासेत्यत आह– **वपुरिति** ।। स्वकीयं स्वसम्बन्धिवपुः शरीरं सुखचित्स्वरूपं आनन्दज्ञानात्मकम्, पूर्णं व्याप्तमिति सत्सु सज्जनेषु ज्ञापयन् तत्पूर्वोक्तं स्वरूपं अदर्शयद्धि ।।११५।।

**भावचन्द्रिका–** ।। **वपुरिति** ।। यशोदा स्वयं दृष्ट्वा जनान् प्रति वदिष्यति । ततश्च सतां तेषां ज्ञानं भविष्यतीति भावः ।।११५।।

**चट्टि–** भीतभीता अत्यन्तभींता यशोदा अक्षिणी लोचने न्यमीलयत् निमीलितवती । अथो रमेशः श्रीकृष्णः आत्मानं स्वस्वरूपं जुगूहे आच्छादयामास । गुहू संवरण इति धातोः । ननु अलौकिकं स्वरूपं किमर्थं दर्शयामासेत्यत तदनुकम्पयेत्याह– **वपुरिति** ।। स्वकीयं स्वसम्बन्धि वपुः शरीरं सुखचित्स्वरूपं आनन्दज्ञानात्मकं पूर्णं व्याप्तमिति सत्सु सज्जनेषु ज्ञापयन् तत्पूर्वोक्तस्वरूपं अदर्शयद्धि ।।

**कदाचित् तं लालयन्ती यशोदा वोढुं नाशक्नोद् भूरिभाराधिकार्ता ।**
**निधाय तं भूमितले स्वकर्म यदा चक्रे दैत्य आगात् सुघोरः ।।११६।।**

**वरदराजीया–** कदाचित् यशोदा तं कृष्णं लालयन्ती खेलयन्ती भूरिणा महता भारेणा अधिकमार्ता सती वोढुं वहनं कर्तुं नाशक्नोत् शक्ता नाभूत् । तं कृष्णं भूमितले निधाय यदा स्वकर्म स्वगृहव्यापारं चक्रे तदा सुघोरो अत्यन्तं दुष्टो दैत्यः असुरः आगात् आजगाम ।।११६।।

---

१. 'तद्व्यदर्शयत्' इति वादिराजीयपाठः ।

**जनार्दनीया–** भूरिभारेण अतिभारेण अधिकं अत्यन्तं आर्ता पीडिता सती । वोढुमुद्धर्तुं नाशक्नोत् समर्था नाभूत् । यशोदा तं कृष्णं भूमितले निधाय स्वकर्म स्वविहितगृहकर्म यदा चक्रे तदा सुघोरः अत्यन्तक्रूरः दैत्यः आगात् आजगाम ।।११६।।

**चट्टि–** कदाचित् यशोदा तं श्रीकृष्णं लालयन्ती भूरिणा महता भारेणाधिकं अत्यन्तं आर्ता पीडिता सती वोढुं वाहयितुं नाशक्नोत् शक्ता नाभूत् । यशोदा तं श्रीकृष्णं भूमितले निधाय यदा स्वकर्म विहितगृहव्यापारं चक्रे । तदा सुघोरो अत्यन्तक्रूरः दैत्यः आगात् आजगाम ।।११६।।

**तृणावर्तो[1] नामतः कंसभृत्यः सृष्ट्वाऽत्युग्रं चक्रवातं शिशुं तम् ।**
**आदायाऽगादन्तरिक्षं स तेन शस्तः कण्ठग्राहसंरुद्धवायुः ।।११७।।**

**व्यासतीर्थीया–** शस्तः हतः ।।११७-११८।।

**वेदाङ्गतीर्थीया–** शस्तः हतः । 'शसु हिंसायाम्' इति धातुः ।।११७-११९।।

**वादिराजीया–** शस्तः शिक्षां प्रापितः हत इत्यर्थः ।।११८-१२०।।

**सत्याभिनवतीर्थीया–** तत्रैव तृणावर्तो नामतः कंसभृत्य...इति श्लोके 'तेन शस्तः कण्ठग्राहसंरुद्धवायुः' इत्यस्य तेन कृष्णेन शस्तः पीडितः कण्ठसंरुद्धवायुश्च जात इत्यर्थः । एतेन कृष्णेन हतस्य कण्ठग्राहसंरुद्धवायुत्वायोगात् 'तेन शस्त' इत्यनेन कृष्णेन हतत्वमुक्त्वा 'कण्ठग्राहसंरुद्धवायुः' इत्यनेन कण्ठग्राहसंरुद्धवायुत्वकथनमनुपपन्नम् । 'पपात कृष्णेन हतः शिलातले' इत्युत्तरश्लोकस्थितं 'कृष्णेन हत' इत्येतत् 'तेन शस्तः' इत्यनेन पुनरुक्तमिति दूषणद्वयं परास्तम् । 'शस्त' इत्यस्य हत इत्यर्थमनङ्गीकृत्य पीडित इत्यर्थस्याङ्गीकारात् ।।११८।।

**वरदराजीया–** स कः कंसभृत्यः तृणावर्तो नाम प्रसिद्धः । सोऽत्युग्रं भयङ्करं वातं चक्रवत् भ्रममाणं वायुं सृष्ट्वा निर्माय तं शिशुं कृष्णं आदायान्तरिक्षं ऊर्ध्वाकाशं प्रति अगात् गतवान् । सः दैत्यः कण्ठग्राहेण ग्रहणेन संरुद्धो वायुः श्वासः यस्य सः तथा सन्, तेन कृष्णेन शस्तो मारितः ।।११७।।

---

१. 'एकदारोहमारूढं लालयन्ती सुतं सती । गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् । भूमौ निधाय तं गोपी विस्मिता भारपीडिता । महापुरुषमादध्यौ जगामाशु च कर्मसु ।। दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रचोदितः । चक्रवातस्वरूपेण जहारासीनमर्भकम् ।। गोकुलं सर्वमावृण्वन् मुष्णन् चक्षूंषि रेणुभिः । ईरयन् सुमहाघोरशब्देन प्रदिशो दिशः ।। मुहूर्तमभवद् गोष्ठं रजसा तमसा वृतम् । सुतं यशोदा नापश्यत् तस्मिन् न्यस्तवती यतः ।।... गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः । अव्यक्तवाक्यो न्यपतत् सहबालो व्यसुर्व्रजे ।।' इति भागवते १०.८.२०-३०।

**जनार्दनीया–** दैत्यः कः? आगत्य किमकरोत्? इत्यत आह– **तृणावर्त इति** ।। अत्युग्रं चक्रवातं चक्राकारवायुं सृष्ट्वा जनयित्वा, तं शिशुं कृष्णमादाय अपहृत्य, अन्तरिक्षं प्रति अगात् अयात् । तेन कृष्णेन कण्ठे ग्राहः बाहुभ्यां ग्रहणं, तेन संरुद्धः रोद्धुं प्राप्तः, वायुः श्वासनामको वायुः यस्य स तथा । तादृशः सन् तृणावर्तः शस्तः हतः । 'शसु हिंसायाम्' इति धातोः ।।११७।।

**ताम्रपर्णीया–** शस्तः शासनं प्राप्तः, पीडित इति यावत् ।।११७-११९।।

**चट्टि–** सः दैत्यः किमर्थमागत इत्याह– **तृणावर्त इति** ।। नामतः तृणावर्तः कंसस्य भृत्यः अत्युग्रमतिभयङ्करं चक्रवातं चक्राकारवायुं सृष्ट्वा जनयित्वा तं शिशुं श्रीकृष्णमादाय अपहृत्य अन्तरिक्षं प्रत्यगात् गतवान् । सः दैत्यः तेन श्रीकृष्णेन कण्ठग्राहः बाहुभ्यां ग्रहणं तेन संरुद्धः निरुद्धः वायुः श्वासात्मको वायुर्यस्य स तथा तादृशः सन् शस्तः हतः । 'शसु हिंसायाम्' इति धातुः ।।११७।।

**पपात कृष्णेन हतः शिलातले तृणावर्तः पर्वतोदग्रदेहः ।**
**सुविस्मयं चाऽपुरथो जनास्ते तृणावर्तं वीक्ष्य सञ्चूर्णिताङ्गम् ।।११८।।**

**वरदराजीया–** तृणावर्तो दैत्यः कृष्णेन हतः मारितः पर्वतवदुदग्रो उच्चो देहो यस्य स तथा । तादृशः सन् शिलातले पपात । अथानन्तरं ते गोकुलवर्तिनः जना सञ्चूर्णितं अङ्गं यस्य स तथा तं तृणावर्तं वीक्ष्य सुविस्मयं अत्यन्तमाश्चर्यबुद्धिं आपुरित्यर्थः ।।११८।।

**जनार्दनीया–** पर्वतवत् उदग्रः अतिदीर्घः देहो यस्येति । ते जनाः महावनस्थाः । सुविस्मयं अत्याश्चर्यम् ।।११८।।

**चट्टि–** श्रीकृष्णेन हतो मारितः तृणावर्तः पर्वतवत् उदग्रो अतिदीर्घः देहो यस्य स तथा । तादृशः सन् शिलातले पपात । अथानन्तरं ते गोकुलवर्तिनो जनाः सञ्चूर्णितमङ्गं यस्य सः तथा । तं तृणावर्तं वीक्ष्य सुविस्मयं अत्याश्चर्यं आपुः ।।११८।।

**अक्रुद्ध्यतां केशवोऽनुग्रहाय शुभं स्वयोग्यादधिकं निहन्तुम् ।**
**स क्रुद्ध्यतां नवनीतादि मुष्णंश्चचार देवो निजसत्सुखाम्बुधिः ।।११९।।**

**व्यासतीर्थीया–** ननु परिपूर्णसुखात्मको भगवान् नवनीतादि मुष्णन् किमर्थं चचारेत्यत आह– **अक्रुद्ध्यतामिति** ।।११९।।

**वरदराजीया–** अक्रुध्यतां स्वेन नवनीतादिचौर्ये क्रियमाणे सत्यपि क्रोधमकुर्वतां उत्तमानां अनुग्रहार्थं अधिकमनुग्रहं कर्तुं तथा सक्रुध्यतां क्रोधं कुर्वतां गोपिकानां स्वयोग्यात् स्वयोग्यतायाः अधिकं कृतं शुभं

कर्म निहन्तुं विनाशयितुं नवनीतादि नवनीतदध्यादिकं मुष्णन् चोरयन् निजेन स्वरूपभूतेन सता सुखेनाम्बुधिरिव विचचार प्रवृत्तः ।।११९।।

**जनार्दनीया–** निजेन स्वरूपभूतेन, सता निर्दुष्टेन, सुखेनाम्बुधिः इवाम्बुधिः । देवः स केशवः कृष्णः । न क्रुध्यन्ति न कुप्यन्ति ते तथा तेषाम् । कोपमकुर्वतां इत्यर्थः । अनुग्रहाय स्वयोग्यपुण्याभिवृद्धये क्रुध्यतां कुप्यतां प्राणिनां स्वयोग्यात् स्वरूपयोग्याद् अधिकं अभिवृद्धं शुभं पुण्यं निहन्तुं नवनीतादि, आदिपदेन क्षीरदध्यादि मुष्णन् चोरयन् । 'मुष स्तेये' इति धातोः । चचार नवनीतादि भक्षितवान् । इतस्ततः गतिं चकारेति च ।।११९।।

**चट्टि–** ननु परिपूर्णसुखात्मको भगवान् नवनीतादि मुष्णन् किमर्थं चकारेत्यत आह– **अक्रुद्ध्यतामिति** ।। निजेन स्वरूपभूतेन सता निर्दुष्टेन सुखेन अम्बुधिरिव निजसत्सुखाम्बुधिः । देवः सः केशवः श्रीकृष्णः, न क्रुद्ध्यन्ति न कोपयन्तीति तथा । तेषां अक्रुद्ध्यतां कोपमकुर्वतामित्यर्थः । अनुग्रहाय स्वयोग्यपुण्याभिवृद्धये क्रुद्ध्यतां कोपं कुर्वतां गोपिकानां स्वयोग्यादधिकं अभिवृद्धं शुभं पुण्यं निहन्तुं नाशयितुं नवनीतादि । आदिपदेन क्षीरदध्यादि मुष्णन् चोरयन् । 'मुष स्तेये' इति धातुः । चचार इतस्ततो गतिं चकार ।।११९।।

**यस्मिन्नब्दे भाद्रपदे स मासे सिंहस्थयोर्गुरुरव्योः परेशः ।**
**उदैत् ततः फल्गुने फल्गुनोऽभूद् गते ततो माद्रवती बभाषे ।।१२०।।**

**व्यासतीर्थीया–** गुरोः वर्षग्रहत्वात् [भाद्रपदस्थितत्वम्?] ।।१२०।।

**वेदाङ्गतीर्थीया–** यस्मिन् अब्दे यस्मिन् संवत्सरे भाद्रपदे मासे पौर्णमासी प्रतिपदमारभ्य मासोपक्रमाङ्गीकारे श्रावणबहुलस्यैव भाद्रपदत्वं विवक्ष्य [विवक्षित्वा] भाद्रपदे मासे गुरुरव्योः सिंहस्थयोः सतोः परेशः उदैत् । ततः तस्मिन्नब्दे संवत्सरे फाल्गुनमासे फाल्गुनः अभूत् । ततः तस्मिन् संवत्सरे गते सति माद्रवती बभाषे । पाण्डुमिति शेषः ।।१२०-१२३।।

**वादिराजीया–** यस्मिन् संवत्सरे अधिकमासप्राप्तौ सत्यां भाद्रपदे मासि रविः सिंहराशिं गतो भवति । कृष्णावतारसमये गुरुरपि सिंहराशिस्थितोऽभूत् । तदा दर्शमासरीत्या भाद्रपदमासोऽपि भवति । सौरमासरीत्या श्रावणमासश्च भवति । तस्मिन् संवत्सरे कृष्णावतार इति भावेन 'यस्मिन्नब्द' इत्याद्युक्तम् । एवं द्विविधमाससम्प्रयोगः अधिकमासप्राप्तावेव भवति । न सर्वदा । अतः 'यस्मिन्नब्दे' इत्युक्तम् । अन्यथा 'अब्दे शुभे भाद्रपदेऽथ मासे' इत्येवावक्ष्यत् । एतद्योगालाभे सांवत्सरिकतिथेः कर्तव्यत्वात् 'श्रावण्यां चासिते पक्षे' इत्यादि प्रमाणानुसारेण सोमाभावे पूतिकाग्रहणवत् केवलसिंहमासेऽपि क्रियते । 'गते तत' इत्यत्र गते तस्मिन्नब्दे गते सति ।।१२०-१२५।।

**वरदराजीया–** यस्मिन्नब्दे वर्षे तत्रापि भाद्रपदे मासे तत्रापि गुरुरव्योः बृहस्पतिदिवाकरयोः सिंहस्थयोः सिंहराशिस्थितयोः परेशः उदैत् प्रादुर्भूतः । ननु रवेः सिंहस्थत्वं श्रावणे मास एव नतु भाद्रपदे मासि । कन्यायुक्तरविसम्बन्धस्य भाद्रपदोपाधित्वात् । तथा श्रीकृष्णावतारस्य श्रावणकृष्णाष्टम्यां जातत्वप्रसिद्धेः 'भाद्रपदे मासि' इत्यादि कथं युज्यत इति चेत् सत्यम् । व्रताद्यपेक्षया श्रावणपौर्णमासीमारभ्य भाद्रपदत्वात् [सौरमानमादाय] सौरमासान् समादाय श्रावणमपि तं मासं भाद्रपदत्वेन व्यवहृतवान् भगवानाचर्य इति सन्तोष्टव्यम् । तस्मिन्नेवाब्दे भाद्रपदानन्तरे फाल्गुने मासि फल्गुनोऽर्जुनोऽभूत् । एवं तस्मिन्नब्दे गते सति ततोऽनन्तरं माद्रवती बभाषे । पाण्डुं प्रतीति शेषः ।।१२०।।

**अनन्तभट्टीया–** श्रावणस्य अधिकमासत्वात् रवेर्भाद्रपदस्थितत्वम् । गते तस्मिन् अब्द इति शेषः ।।१२०।।[१]

**जनार्दनीया–** यस्मिन्नब्दे संवत्सरे भाद्रपदे मासे । गुरुश्च रविश्च तौ तथा तयोः । सिंहस्थयोः सिंहराशौ वर्तमानयोः सतोः सः परेशः कृष्णः उदैत् प्रकटोऽभूत् । पौर्णमास्यां तु चन्द्रग्रहणेन भाद्रपदत्वम् । मीनादिसौरग्रहणे च रवेः भाद्रपदत्वं द्रष्टव्यम् । ततः भाद्रपदानन्तरं आश्वीजादिमासक्रमेण षष्ठे मासि प्राप्ते फाल्गुने मासि फल्गुनः अर्जुनः अभूज्जातः । ततः फाल्गुनमासानन्तरं चैत्रमासि इति यावत् । माद्रवती पाण्डुं प्रति बभाषे ।।१२०।।

**ताम्रपर्णीया–** ।। **यस्मिन्नब्दे भाद्रपदेति** ।। ननु श्रावणकृष्णाष्टम्यां कृष्णजयन्तीति प्रसिद्धम् । कथं भाद्रपदे कृष्णोदय इति चेत् । श्रावणपौर्णमीमारभ्य भाद्रपदपौर्णमीपर्यन्तं मास इति पक्षे श्रावणबहुलस्यापि भाद्रपदविवक्षया एवमुक्त्युपपत्तेः । ततः फाल्गुणे तस्मिन् फाल्गुणे गते आगते फल्गुनोऽभूत् । माद्रवती ततो तदनन्तरं ततः अनपत्यत्वात् बभाषे इत्यर्थः । यद्वा ततः तस्मिन्नब्दे गते सति माद्रवती बभाषेत्यर्थः । तदुक्तं महाभारते । 'अर्जुनादेकसंवत्सरानन्तर्यं यमयोः'

'जगाम हस्तिनपुरं षोडशाब्दो युधिष्ठिरः । भीमसेनः पञ्चदशो बीभत्सुर्वै चतुर्दशः ।
त्रयोदशाब्धौ च यमौ जग्मतुर्नागसाह्वयम् । तत्र त्रयोदशाब्दानि धार्तराष्ट्रैः सहोषिताः ।
[षट्कमासान् जतुगृहात् मुक्ता जातो घटोत्कचः] ।
षण्मासानेकचक्रायां वर्षं पाञ्चालिके पुरे । स धार्तराष्ट्रैः सहोषित्वा पञ्चवर्षाणि भारत ।
इन्द्रप्रस्थे वसंस्तत्र त्रीणि वर्षाणि विंशति । द्वादशाब्दा तथैकं च बभूवुर्द्यूतनिर्जिताः ।
भुक्त्वा षट्त्रिंशतं राज्यं सागरान्तां वसुन्धराम् । मासैः षड्भिर्महात्मानः सर्वे कृष्णपरायणाः ।।'
[आदि.१३४.२-७] इति ।।१२०-१२३।।

१. अनन्तभट्टीया– ।। भाद्रपदे मासेति ।। पौर्णमासीमारभ्य तत्पर्यन्तमास इति पक्षानुसारेणेयमुक्तिरिति ध्येयम् । इति हो.पुस्तकपाठः ।

**भारतश्री–** स परेश इत्यन्वयः । गते अर्जुनोत्पत्त्यनन्तरं अल्पे काले गते पाण्डुमिति शेषः ।।१२०-१२४।।

**भावचन्द्रिका–** 'अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु । सङ्क्रान्तिपौर्णमासीभ्यां तथैव क्षत्रवैश्ययोः ।।' इति वचनात् यादवानां नृपत्वेन तदनुसारेण [सौरमासानुसारेण] तद्वत्सरस्य मीनादित्वं मेषादित्वं वा इति मतद्वये बोधायनोक्तरीत्या सिंहे स्थिते मीनादित्वे सति माससञ्ज्ञानां चैत्रादित्वेन षष्ठस्य सिंहस्य भाद्रपदत्वेन श्रावणान्त्यभागेऽपि सिंहसङ्क्रान्तिसम्भवेन अमावास्यापरिच्छेदेन श्रावणबहुळाष्टम्यामपि भाद्रपदाष्टमीत्वमुपपन्नम् । तौलवदेशे सौरमासप्रवृत्तेश्च तदनुसारेण सौरमासकीर्तनम् । वस्तुतस्तु विश्वामित्रसंहितायां 'सौरे सर्वसमृद्धिस्स्यात् चान्द्रे सर्वविनाशनम् । देवकार्याणि सर्वाणि सौरमासेषु कारयेत्' इत्युक्तेः सौरप्राशस्त्यं कृष्णाष्टम्युक्तपूजार्थम् । अत एवोक्तं विष्णुतीर्थीये कृष्णपूजायां 'सिंहमासे तु रोहिण्या युतकृष्णाष्टमी पुमान् । उपोष्य मध्यरात्रे तु पूजनं कारयेदिदम्।।' इत्याह ।।१२०।।

**चट्टि–** यस्मिन्नब्दे संवत्सरे भाद्रपदे मासे गुरुरव्योः वृहस्पतिदिवाकरयोः सिंहस्थयोः सिंहराशौ स्थितयोः सतोः सः परेशः श्रीकृष्णः उदैत् प्रकटोऽभूत् । ननु रवेः सिंहस्थत्वं श्रावणे मास्येव न तु भाद्रपदे मासि तथा श्रीकृष्णावतारस्य श्रावणकृष्णाष्टम्यां जातत्वप्रसिद्धेः 'भाद्रपदे मास' इत्यादि कथं युज्यत इति चेत् सत्यम् । व्रताद्यपेक्षया श्रावणपौर्णमासीमारभ्य भाद्रपदत्वात् श्रावणबहुलस्यैव भाद्रपदत्वं विवक्ष्योक्तमाचार्यैः । ततस्तस्मिन्नेव संवत्सरे फाल्गुने मासि फल्गुनः अभूत् जातः । ततः तस्मिन् संवत्सरे गते सति माद्रवती बभाषे । पाण्डुमिति शेषः ।।१२०।।

**जाताः सुतास्ते प्रवराः पृथायामेकाऽनपत्याऽहमतः प्रसादात् ।**
**तवैव भूयासमहं सुतेता विधत्स्व कुन्तीं मम मन्त्रदात्रीम् ।।१२१।।**

**व्यासतीर्थीया–** ततो अनपत्यत्वात् ।।१२१-१२३।।

**सत्याभिनवतीर्थीया–** तत्रैव जातास्सुतास्ते प्रवराः पृथायां...इति श्लोके 'अहमनपत्य' इति एकवचनप्रयोगात् एकत्वे सिद्धे एकेति एकत्वोक्त्या एकत्वसमानाधिकरणानपत्यत्वमतिशयेन दुःखकारणमिति द्योतयति ।।१२२।।

**वरदराजीया–** किमिति । पृथायां कुन्त्यां प्रवराः गुणाधिकाः सुतास्ते तव जाताः । यतोऽहं अनपत्या अपत्यरहिता एका तव प्रसादादेव अहं सुतेता सुतयुक्ता पुत्रवतीति यावत् । भूयासं स्याम् । अतः कुन्ती मम मह्यं मन्त्रदात्री मन्त्रदात्री यथा स्यात्तथा विधत्स्व कुरु ।।१२१।।

**अनन्तभट्टीया–** सुतैरिता सुतेता ।।१२१।।

**जनार्दनीया–** किमिति? प्रवराः श्रेष्ठाः सुताः ते तव पृथायां जाताः आसन् । युवां पुत्रवन्ताविति भावः । अनपत्या अपुत्रवती अहमेका यतः अतः तव प्रसादात् अहमेव अहमपि सुतैरिता सहिता भूयासम् । तव प्रसादात् इत्युक्तेरभिप्रायमाह– **विधत्स्वेति** ।। कुन्तीं मम मन्त्रदात्रीं मन्त्रोपदेशकर्त्रीं विधत्स्व कुरुष्व ।।१२१।।

**चट्टि–** किमिति । ते तव पृथायां कुन्त्यां प्रवराः श्रेष्ठाः सुताः जाताः । अनपत्या अपत्यरहिता अहमेका यतः अतः तव प्रसादादेव अहं सुतेता सुतयुक्ता पुत्रवतीति यावत् । भूयासं स्याम् । अतः कुन्तीं मम मन्त्रदात्रीं मन्त्रोपदेशकर्त्रीं विधत्स्व कुरुष्व ।।१२१।।

**इतीरितः प्राह पृथां स माद्र्यै दिशस्व मन्त्रं सुतदं वरिष्ठम् ।**
**इत्यूचिवांसं पतिमाह यादवी दद्यां त्वदर्थे तु सकृत्फलाय ।।१२२।।**

**वरदराजीया–** इतीरितः स पाण्डुः पृथां प्राह । किमिति । सुतदं पुत्रदं वरिष्ठं उत्तमं मन्त्रं माद्र्यै वदस्व उपदिशस्व इत्युक्तरीत्या ऊचिवांसं ब्रुवाणं पतिं पाण्डुं प्रति यादवी यदुकुलोत्पन्ना कुन्ती आह । किमिति । त्वदर्थे त्वत्प्रीत्यर्थं दद्यां दास्यामि मन्त्रमिति शेषः । अपि तु सकृत् एकवारमेव फलाय फलार्थं दास्यामीत्यर्थः ।।१२२।।

**जनार्दनीया–** सः पाण्डुः यादवीं यदुनन्दिनीं कुन्तीं इति उक्तप्रकारेण ऊचिवासं वदन्तं पाण्डुं आह । किमिति? त्वदर्थे तवोपकाराय सकृत् एकदा एव फलाय फलप्राप्त्यै दद्यां मन्त्रं दास्यामि।।१२२।।

**चट्टि–** इतीरितः सः पाण्डुः पृथां प्राह । किमिति । माद्र्यै सुतदं पुत्रदं वरिष्ठमुत्तमं मन्त्रं वदस्व उपदिशस्व इति इत्युक्तरीत्या ऊचिवांसं वदन्तं पतिं पाण्डुं प्रति यादवी यदुकुलोत्पन्ना कुन्ती आह । किमिति । त्वदर्थे त्वत्प्रीत्यर्थं सकृदेकवारमेव फलप्राप्त्यै दद्यां दास्यामि । मन्त्रमिति शेषः ।।१२२।।

**उवाच माद्र्यै सुतदं मनुं च पुनः फलं ते न भविष्यतीति ।**
**मन्त्रं समादाय च मद्रपुत्री व्यचिन्तयत् स्यां नु कथं द्विपुत्रा ।।१२३।।**

**वरदराजीया–** सुतदं पुत्रदं मनुं मन्त्रं माद्र्यै उवाच उपदिष्टवती । पुनः मन्त्रावृत्त्या ते फलं न भविष्यतीति चोवाचेत्यर्थः । मद्रस्य मद्रेशस्य पुत्री माद्री मन्त्रं समादाय स्वीकृत्य अहं द्विपुत्रा पुत्रद्वयवती कथं नु केन प्रकारेण स्यां भूयासमिति अचिन्तयत् विचारितवती ।।१२३।।

**जनार्दनीया–** कुन्ती सुतदं मनुं माद्र्यै उवाच उपदिदेश । ते पुनः प्रसवानन्तरं फलं पुत्रप्राप्तिरूपफलं न भविष्यति इति उवाच इत्यर्थः । मद्रपुत्री मद्रराजपुत्री माद्री मन्त्रं समादाय प्राप्य, द्वौ पुत्रौ यस्याः सा तथा द्विपुत्रवती इत्यर्थः । 'कथं केन उपायेन स्यां भविष्य' इति नु वितर्केण व्यचिन्तयत् ।।१२३।।

**चट्टि–** कुन्ती सुतदं मनुः मन्त्रं माद्र्यै उवाच उपदिदेश । ते पुनः प्रसवानन्तरं फलं पुत्रप्राप्तिरूपफलं न भविष्यतीति च उवाचेत्यर्थः । मद्रपुत्री माद्री मन्त्रं समादाय स्वीकृत्य द्वौ पुत्रौ यस्याः सा तथा द्विपुत्रवतीत्यर्थः । कथं नु केनोपायेन स्यां भविष्य इति व्यचिन्तयद् विचारितवती ।।१२३।।

**सदाऽवियोगौ दिविजेषु दस्रौ न चैतयोर्नामभेदः कचिद्धि ।**
**एका भार्या सैतयोरप्युषा हि तदाऽऽयातः सकृदावर्तनाद् द्वौ ।।१२४।।**

**व्यासतीर्थीया–** 'सदावियोगौ' 'न चैतयोर्नामभेदः कचित्' ग्रन्थे इति वा आह्वाने उभयोरप्यागमने च निमित्तमुक्तम् । तयोर्द्वयोरपि भार्यैकत्वं इत्यतिप्रियत्वं सूचितम् । तदप्यागमने निमित्तम् । तत् तस्मात् मन्त्रस्य सकृदावर्तनात् ।।१२४।।

**वेदाङ्गतीर्थीया–** तत् तस्मात् सदाऽवियुक्तत्वात् नामभेदाभावात् एकभार्यावत्वेनातिप्रियत्वात् च । सकृदावर्तनात्, मन्त्रस्य इति शेषः । द्वौ देवौ आयातः ।।१२४।।

**वरदराजीया–** चिन्ताप्रकारं दर्शयति– **सदेत्यादिना** ।। दिविजेषु देवेषु सदा अवियोगौ वियोगरहितौ दस्रौ अश्विनौ । तयोः अश्विनोः नामभेदः प्रत्येकं नामविशेषो नास्ति । तयोरश्विनोः भार्या उषा अपि एका हि यस्मात्तस्मात् सकृत् एकवारमेव आवर्तनादुच्चारणात् मन्त्रस्येति शेषः । द्वौ द्वावपि आयातः आयास्यतः ।।१२४।।

**जनार्दनीया–** वितर्कं दर्शयति– **सदेति** ।। सदा सर्वदा दिविजेषु देवेषु अवियोगौ वियोगशून्यौ दस्रौ अश्विनौ । एतयोरश्विनोः कचित् नामभेदो न उभयोः एकमेव नाम इत्यर्थः । एतयोरश्विनोर्भार्यापि सा सकारान्तशब्दवाच्या इति प्रसिद्धा 'उषा' इति नामवती एका हि एकैव । आबन्तशब्दवाच्योषा अनिरुद्धभार्येति द्रष्टव्यम् । यत् यस्मात् तत् तस्माद्धेतुत्रयात् द्वावश्विनौ सकृदेकवारं आवर्तनात् मन्त्रावृत्तेः आयातः आयास्यतः ।।१२४।।

**ताम्रपर्णीया–** ।। **सदावियोगाविति** ।। सकृदावर्तनेनोभयोरागमने सदावियुक्तत्वं नामैक्यं एकभार्यकत्वेनातिप्रियत्वं चेति निमित्तत्रयमुक्तं ज्ञेयम् । ननु एतत् 'अश्विनोरेको नासत्यः साहचर्यादुभापि नासत्याविुच्येते । यथा दस्राविति । अत एवान्यत्र नासत्यदस्राविति आचार्यः' इति

ऋग्भाष्यटीकाविरुद्धम् । तत्र तयोर्नामभेदोक्तेरिति चेत् अत्र केचिदाहुः– 'नासत्यदस्रशब्दौ उभयोरपि वाचकौ । 'भेदकौ सर्वशत्रूणाम्' 'नासत्यौ नासिकासंस्थौ' इत्युभयत्र निर्वचनात् । न च निर्वचनमात्रं न रूढिरिति वाच्यम् । वहुप्रयोगबलेन रूढिनिश्चयम् । टीकावचनं तु प्रयोगेनोभयवाचकत्वे सत्यपि एकत्र वहुलातिप्रयोगं अन्यत्र तथा प्रयोगाभावं चादाय प्रवृत्तम्' इति । अन्ये तु 'अत्र नामाभेदो नामप्रतिपादकाभेदो विवक्षितः । रूढलक्षणादेरभिधातुल्यत्वात् नामपदप्रयोगः । अत एव सुधायां 'रूढलक्षणादेरभिधातुल्यत्वात्' इत्युक्तम् । प्रतिपादकत्वं च साहचर्येण । अत एव 'सदावियोगौ' इत्युक्तम् । अवियोगश्च प्रीत्यतिशयेनेति भावेन एकभार्यत्वमुक्तम्' इत्याहुः ।।१२४-१२७।।

**भावचन्द्रिका–** ।। **सदावियोगाविति** ।। अत्र वक्तव्यं तृतीयाध्याय एवोक्तम् । एकामुद्दिश्योभयोरागमने अहं पूर्वं अहं पूर्वं इति विरोधः स्यादित्यत आह– **एकेति** ।।१२४।।

**चट्टि–** चिन्ताप्रकारं दर्शयति– **सदेत्यादिना** ।। दिविजेषु देवेषु सदा अवियोगौ वियोगरहितौ दस्रौ अश्विनौ । एतयोरश्विनोः क्वचिदपि नामभेदः प्रत्येकं नामविशेषो नास्ति । उभयोः एकमेव नामेत्यर्थः । एतयोरश्विनोः भार्यापि सा सकारान्तशब्दवाच्येति प्रसिद्धा । उषाः उष इति नामवती एका हि एकैव । यत् यस्मात् तत् तस्मात् हेतुत्रयात् द्वौ अश्विनौ सकृदेकवारमावर्तनात् मन्त्रावृत्तेरायातः आयास्यतः इति ईक्ष्यन्त्या विचारयन्त्या माद्र्या आकारितौ । एकवारमुक्तेन मन्त्रेणाहूतौ तौ अश्विनौ शीघ्रं प्राप्तौ आगतौ । तावेव प्राप्तौ तामेवेत्यर्थः । देवावश्विनौ पुत्रकौ सन्तौ तस्यां माद्र्यां प्रसूतौ जातौ । तयोः मध्ये इति शेषः । पूर्वजातो नकुलः तन्नामा पश्चिमः पश्चादुत्पन्नः सहदेव इत्यभूत् । तौ नकुलसहदेवौ यमौ च एकसमये एकगर्भगावित्यर्थः ।।१२४-१२५।।

**इतीक्षन्त्याऽऽकारितावश्विनौ तौ शीघ्रं प्राप्तौ पुत्रकौ तत्प्रसूतौ ।**
**तावेव देवौ नकुलः पूर्वजातः सहदेवोऽभूत् पश्चिमस्तौ यमौ हि ।।१२५।।**

**व्यासतीर्थीया–** आकारितौ ।।१२५-१२७।।

**वेदाङ्गतीर्थीया–** इतीक्षन्त्या इति विचारयन्त्या आकारितौ आहूतौ ।।१२५-१२७।।

**वादिराजीया–** इतीक्षन्त्याऽऽकारितौ इत्यत्र आकारितौ आहूतौ ।।१२५-१२८।।

**वरदराजीया–** इत्युक्तप्रकारेण ईक्षन्त्या विचारयन्त्या माद्र्या अश्विनौ आकारितौ एकवारमुक्तेन मन्त्रेणाहूतौ शीघ्रं प्राप्तौ सन्तौ पुत्रकौ, तत् तस्मात् प्रसूतौ जातौ । तावेवाश्विनौ देवौ नत्वन्यौ । तत्र पूर्वजातो नकुलः तन्नामा । पश्चिमः पश्चादुत्पन्नः सहदेव इत्यभूत् । तौ च नकुलसहदेवौ यमौ सहजातावित्यर्थः ।।१२५।।

**जनार्दनीया–** इति ईक्षन्त्या विचारयन्त्या माद्र्या आकारितौ एकावृत्त्या आहूतौ तौ अश्विनौ शीघ्रं प्राप्तौ आगतौ, तावेव यौ प्राप्तौ तावेवेत्यर्थः । देवौ अश्विनौ पुत्रकौ सन्तौ तस्यां माद्रवत्यां प्रसूतौ जातौ । तयोर्मध्य इति वाक्यशेषः । पूर्वं ब्रह्मणः सकाशात् प्रथममुत्पन्नो नासत्यो नकुलः । पश्चिमः नासत्यानन्तरमुत्पन्नो दस्रः सहदेवः । अस्मिन्नर्थे 'नासत्यदस्रौ क्रमशः प्रसूतौ' इति मानम् । यद्वा पूर्वजातः ज्येष्ठः नकुलः नकुलनामा । पश्चिमः कनिष्ठः सहदेवनामाभूत् । तौ नकुलसहदेवौ यमौ च एकसमये एकगर्भगावित्यर्थः ।।१२५।।

**भारतश्री–** कारितौ आकारितौ ।।१२५।।

**पुनर्मनोः फलवत्त्वाय माद्री सम्प्रार्थयामास पतिं तदुक्ता ।**
**पृथाऽवादीत् कुटिलैषा मदाज्ञामृते देवावाह्वयामास दस्रौ ।।१२६।।**

**वरदराजीया–** पुनः फलवत्त्वाय मन्त्रस्येति शेषः । तेन मन्त्रेण पुनः देवतान्तराह्वानेन पुत्रान्तरप्राप्तिरूपफलदानायेति भावः । माद्री पतिं पाण्डुं सम्प्रार्थयामास । तेन पाण्डुना उक्ता पृथा कुन्ती अवादीत् । किमिति । हे राजन् कुटिला कपटबुद्धिः एषा माद्री ममाज्ञामृते विना दस्रौ अश्विनौ देवौ आह्वयत् ।।१२६।।

**जनार्दनीया–** माद्री पुनः मनोः फलवत्वाय पुत्ररूपफलार्थं पतिं सम्प्रार्थयामास । तेन पाण्डुना उक्ता माद्र्याः पुत्रप्राप्तिरूपवीर्यवान् मनुः स्यादित्युक्ता पृथा अवदत् । किमिति? हे राजन् कुटिला छद्मवती एषा माद्री मम आज्ञां ऋते दस्रौ अश्विनौ देवौ आह्वयामास ।।१२६।।

**चट्टि–** माद्री पुनर्मनोः मन्त्रस्य फलवत्त्वाय पुत्रप्राप्तिरूपफलार्थं पतिं पाण्डुं सम्प्रार्थयामास । तेन पाण्डुना उक्ता माद्र्याः पुत्रप्राप्तिरूपवीर्यवान् मनुः स्यादित्युक्ता पृथा कुन्ती अवादीत् । किमिति । हे राजन् कुटिला कपटवुद्धिः एषा माद्री मम आज्ञामृते विना दस्रौ अश्विनौ देवौ आह्वयामास ।।१२६।।

**अतो विरोधं च मदात्मजानां कुर्यादिषेत्येव भीतां न मां त्वम् ।**
**नियोक्तुमर्हः पुनरेव राजन्नितीरितोऽसौ विरराम क्षितीशः ।।१२७।।**

**वरदराजीया–** अतः कारणात् ममात्मजानां मम पुत्राणां विरोधं कर्म एषा कुर्यात् करिष्यतीत्येव हेतोः भीतां मां पुनः फलदानाय नियोक्तुं आज्ञापयितुं नार्हः योग्यो न भवसि । इतीरितोऽसौ क्षितीशो राजा पाण्डुः विरराम तूष्णीं वभूव ।।१२७।।

**अनन्तभट्टीया–** विरोधं स्वसुतैरिति भावः ।।१२७।।

**जनार्दनीया–** अतः कुर्यात् करिष्यत्येवेति भीतां मां पुनः नियोक्तुं मनोः फलवत्त्वाय अज्ञापयितुं त्वं नार्ह एव योग्यो न भवत्येवेत्यर्थः । इतीरितोऽसौ क्षितीशः पाण्डुः विरराम तूष्णीं वभूव ।।१२७।।

**चट्टि–** अतः कारणात् ममात्मजानां पुत्राणां विरोधं वैरं च एषा कुर्यात् करिष्यत्येवेति भीतां मां त्वं पुनर्नियोक्तुं मनोः फलवत्त्वाय आज्ञापयितुं नार्हः योग्यो न भवत्येवेत्यर्थः । इतीरितः असौ क्षितीशः राजा पाण्डुः विरराम तूष्णीं वभूव ।।१२७।।

**विशेषनाम्नैव समाहुताः सुरा दद्युः सुतान् इत्यविशेषितं तयोः ।**
**विशेषनामापि समाह्वयत् तौ मन्त्रावृत्तिर्नामभेदेऽस्य चोक्ता ।।१२८।।**

**व्यासतीर्थीया–** ननु मरुच्छब्दवाच्यानां पञ्चाशन्मरुतां एकादशरुद्राणां वा तच्छब्दवाच्यानां 'मरुत आयान्तु' इति सकृदावर्तनेन तावत्पुत्रलाभे सम्भवति तान् विहायाश्विनौ कस्मात् कारणादाकारितवतीत्यतो निमित्तमाह– **विशेषेति** ।। इति हेतोस्तान् नाह्वयत् । ननु विशेषनाम्नैव समाहूताः सुराः यदि सुतान् दद्युः न सामान्यनाम्ना आहूता इति तर्हि सामान्यनाम्नाहूतावश्विनावपि न पुत्रौ दधातामित्यत आह– **अविशेषितमिति** ।। तयोरविशेषितं सामान्यनामापि नाम विशेषनामापि भवतीत्यतः समाह्वयत्तावित्यर्थः । तद्भिना पृथग्वाचकान्तराभावात्तस्य विशेषनामत्वम् । ननु व्यक्तिद्वयवत्वात् मन्त्रावृत्त्या भवितव्यं सा तु पृथया निषिद्धाऽतः कथं मन्त्रावृत्त्यभावात् द्वयोरागमनमित्यत आह– **मन्त्रेति** ।। अस्यां आह्वयितव्यस्य वस्तुनः नामभेदे मन्त्रावृत्तिः युक्ता न तु नामाभेदेऽतः सकृदावर्तने तयोरागमनं युक्तमिति भावः ।।१२८।।

**वेदाङ्गतीर्थीया–** ननु मरुतां रुद्राणां रुद्रा इति सामान्यतो नामभेदाभावात् तदाह्वानेन वहुसुतलाभे सम्भवति सति किं अश्विनावेवाह्वयत् इत्यत आह– **विशेषेति** ।। भवेदेवं यदि सामान्यनाम्ना आह्वाने सुतान् दद्युः । न चैवं विशेषनाम्नैव विशेषनाम्ना समाहूता एव सुतान् दद्युरिति यत् तस्मात् तावाह्वयदिति वाक्यशेषः । ननु अश्विनीनाम्नोऽपि द्वयोः साधारणत्वात् कथमेतद्विशेषनामेत्यत आह– **अविशेषितमिति**।। ययोः विशेषनामापि परस्परं साधारणम् । तयोः प्रातिस्विकविशेषनामाभावात् । तस्मात् तावश्विनावेव समाह्वयत । अस्य आह्वातव्यस्य वस्तुनः नामभेदे प्रातिस्विकं विशेषनामसद्भावे मन्त्रावृत्तिः । एकमाहूय पुनरन्याह्वाने मन्त्रस्यावृत्तिः कर्तव्यतयोक्ता न तु व्यक्तिभेदमात्र इति भावः ।।१२८।।

**वादिराजीया–** विशेषनाम्नैव समाहुत इत्यत्र । हे देव आयाहीति सामान्यनाम्ना आह्वाने ते देवाः कस्य वाऽऽह्वानं कृतमिति शङ्कया नायान्त्येव । किन्तु इन्द्रवायुयमादिविशेषनाम्ना आहूता एव सुराः पुत्रान् दद्युः । अतो विशेषनामवतां तत्तन्नाम्ना सकृदाह्वाने एक एव पुत्रो भवति । न द्वौ । तेन कारणेन तयोरश्विनोर्विशेषनामाप्यविशेषितमेव अश्विनौ दस्रावित्यादिरूपेण इन्द्रादिभ्यो यद्विशेषनाम

तदपि अश्विनोः परस्परापेक्षयाऽविशेषितमेव । अन्यासाधारणद्विसाधारणनाम । इन्द्रचन्द्रयोरिव एकैकस्य पृथगसाधारणं नाम नास्ति । एकयोक्त्या 'पुष्पदन्तौ दिवाकरनिशाकरौ' इत्युक्ते पुष्पदन्तनामापि पुष्पपदेन दिवाकरं दन्तपदेन निशाकरं वक्ति न तु एकपदेन दस्राविवितिवदुभौ वक्ति । पितरावित्यत्रापि पितृपदं माता च पिता च पितराविति समासे पूर्वपदलोपे तदर्थं काकेभ्यो दधि रक्ष्यतामितिवत् अजहत्स्वार्थ-लक्षणामाश्रित्य लक्षणया मातारं वक्ति । पितरं तु स्वशक्त्या एव वक्ति । न त्वेकविधया अश्विनावितिवदुभौ वक्ति । तस्मादुभयनियमवन्तावाश्विनावेवेति हेतोः तौ सकृदाह्वाने सति द्वावपि सहैवाऽऽयातः । तदा मन्त्रस्यापि सकृदावृत्तिरेव । अत एव माद्र्या कुन्तीवर्चनमपि नोल्लङ्घितं पुत्रद्वयाख्यस्वकार्यं च सम्पादितम् । अस्य आहूयमानसुरसमूहस्य इन्द्रचन्द्रादिवत् प्रत्येकं नामभेदेन विशेषनाम्नैवाह्वाननियमात् एकस्य पूर्वाह्वाने मन्त्रावृत्तिरुक्ता । विशेषनामापि ययोः अविशेषितं तयोर्विशेषनाम्नैव सकृदाह्वानेऽपि द्वयोरागमनसम्भवात् न मन्त्रावृत्तिरिति भावः ।।१२९-१३०।।

**मधुसूदनीया–** नन्वेकोनपञ्चाशन्मरुतां वा एकादशरुद्राणां द्वादशादित्यानां अष्टवसूनां वा सत्वेन तदाह्वानं विहायाश्विनोराह्वानं किमर्थं कृतमित्यत आह– **विशेषनाम्नैवेति** ।। यस्मात् सुराः विशेषनाम्नैव समाहूताः सन्तः सुतान् दद्युः इति तस्मादित्यर्थः । तौ अश्विनावेव समाह्वयत् । ननु यदि विशेषनाम्नैव समाहूताः सन्तः सुराः सुतान् दद्युः नतु सामान्यनाम्ना समाहूता इति । तर्हि सामान्यनाम्ना समाहुताभ्यां अश्विभ्यां कथं पुत्रौ दत्तावित्यत आह– **अविशेषितमिति** ।। ययोरश्विनोरविशेषितमपि सामान्यनाम भवदपि तदेव विशेषनामापि भवतीति तस्मात्तौ समाह्वयत् । तस्मात्ताभ्यां पुत्रौ दत्ताविति भावः । ननु अथापि आहूतयोर्देवयोः नामभेदाभावेऽपि स्वरूपभेदसद्भावेन मन्त्रावृत्तिः कर्तव्यैव । सा च कुन्त्या निषिद्धा । ततो मन्त्रावृत्त्यभावात् कथमेकदाह्वानेन उभयोरागमनमित्यत आह– **मन्त्राऽवृत्तिरिति**।। अस्य आहूतव्यस्य देवस्य नामभेदे सत्येव मन्त्रावृत्तिरुक्ता न तु आह्वातव्यभेदेऽपि । अतः एकदाह्वानेनापि मन्त्रावृत्त्यभावेऽपि द्वयोरागमनं युक्तमिति बोध्यम् । मरुदादीनां तु परस्परं विशेषनामभेदसद्भावात् तान् विहायाश्विनोरेवाह्वानं कृतमिति भावः ।।१२८।।

**वरदराजीया–** नन्वेकनामवाच्यत्वात् द्वयोर्युगपदाह्वानेन पुत्रद्वयप्राप्त्यभिप्रायेण अश्विनोः आह्वाने माद्र्या मन्दमतित्वमापद्यते । वसुरुद्रादित्यमरुदादिनामवाच्यानां वसवः आयान्त्विति वा रुद्र आयान्त्विति इत्यादिरूपेण वा तत्तद्गणाह्वाने युगपदेव बहुपुत्रलाभसम्भवे तान्विहाय अश्विनोः आकारितत्वादित्यतो विशेषहेतुमाह– **विशेषनाम्नैवेति** ।। विशेषनाम्ना असाधारणनाम्ना समाहूता एव सुराः सुतान् दद्युरिति नियमादित्यर्थः । वस्वादिनाम्नाश्च साधारणत्वादिति भावः । ननु तर्हि विशेषनाम्नैव समाह्वाननियमे उभयसाधारणनाम्ना कथमश्विनोराह्वानं कृतमित्यत आह– **अविशेषितमिति** ।। ययोरश्विनोरविशेषितं उभयसाधारणमपि दस्रादिनाम विशेषनामा असाधारणनामापि भवति तावश्विनौ समाह्वयदिति सम्बन्धः ।

तयोः परस्परव्यावृत्तनामान्तराभावात् । नैवं वस्वादिषु । वस्वादिसाधारणनामवत्त्वे सति परस्परव्यावृत्तासाधारणद्रोणादिनाम्नामपि विद्यमानत्वात् । अतो वस्वादौ नामभेदस्य सत्त्वात् आवृत्तिं विना तदाह्वानं न युज्यते । आवृत्तिश्च कुन्त्या निषिद्धा तस्माद्विशेषनामान्तररहितत्वेन मन्त्रावृत्तिं विनैव सकृदाह्वानमात्रेणोभयप्राप्त्यर्थं तावश्विनावेव समाह्वयत् । नतु वस्वादीनिति भावः । नन्वावृत्तिं विना आह्वाने द्वयोरेकस्यैवागमनं स्यात् नतु द्वयोरपीत्यताह– **मन्त्रावृत्तिरिति** ।। अस्याह्वयमानस्य देवस्य नामभेदे सत्येव तत्तदसाधारणनामाह्वानार्थं मन्त्रावृत्तिरित्युक्ता सैव कुन्त्या निषिद्धा । प्रकृते च नामभेदाभावात् दस्रादिनाम्न एवासाधारणधर्मत्वात् तेनाह्वाने च अविशेषेणोभयोरागमनं जातमिति भावः ।।१२८।।

**अनन्तभट्टीया–** ननु विशेषनाम्नैव समाहुताः सुतान् दद्युः तद्विशेषनाम्ना आहूतावश्विनावपि न पुत्रौ... इत्यत आह– **अविशेषितमिति** ।। नाम्नां अविशेषितत्वादिति हेतोः तौ नाह्वयदिति न । किन्तु अविशेषितमपि नाम विशेषनामापि भवति । अतः समाह्वयदित्यर्थः । तद्विना पृथग्वाचकान्तराभावात्। ननु आहूतयोर्द्वित्वात् मन्त्रावृत्त्या भाव्यम् । तत्तु पृथया निषिद्धम् । अतः कथं मन्त्रावृत्त्यभावात् द्वयोरागमनमित्यत आह– **मन्त्रेति** ।। आह्वातव्यवस्तुनः नामभेदे सति मन्त्रावृत्तिरुक्ता न तु नामाभेदे इति भावः ।।१२८।।[१]

**जनार्दनीया–** ननु पुत्रद्वयप्राप्त्यनन्तरं पुनरपि मन्त्रस्य फलवत्त्वमिच्छती माद्री पूर्वमेवैकनामप्रसिद्धं मरुद्रुद्राद्याह्वानेन वहुपुत्रप्राप्तिसम्भवे किमर्थं तान् नाह्वयदित्यत आह– **विशेषनाम्नेति** ।। विशेषनाम्ना असाधारणनाम्ना समाहूताः सुराः सुतान् दद्युरेव इति यतः । अतः मरुदादिनाम्नां सामान्यवाचकत्वात् तेषां आह्वानं न सम्भवतीति भावः । ननु तर्हि सामान्यनामवतोरश्विनोः कथमाह्वानमित्यत आह– **अविशेषितमिति** ।। तयोरश्विनोर्विशेषनामापि असाधारणनामापि अविशेषितं विशेषरहितं अव्यावर्तकम् । एकैकमपि छत्रिन्यायेन द्वयोरप्यभिधायकं न तु शक्त्या । अन्यथा 'नासत्यदस्रौ क्रमशः प्रसूतौ' इत्यादौ सहप्रयोगो न स्यात् । अयं चार्थः 'तक्षन्नासत्याभ्याम्' [ऋ.२०.३] इत्येत्यत्र ऋग्भाष्यटीकायां जयतीर्थार्यैः निर्णीतः । अतः तौ समाह्वयदित्यर्थः । तथापि व्यक्तिभेदस्य विद्यमानत्वात्, मन्त्रावृत्त्यभावे कथं द्वयोरागमनमित्यत आह– मन्त्रेति ।। अस्य आह्वातव्यस्य देवस्य नामभेदे च एकमन्त्रवाचकनामभेदे सत्येव मन्त्रस्यावृत्तिः पुनरुच्चारणं उक्ता । न तु व्यक्तिभेद इति भावः ।।१२८।।

**ताम्रपर्णीया–** ननु मरुत आयातमित्यदिरूपेणाह्वाने वहुपुत्रलाभात् किं तावेवाह्वयदित्यत आह– **विशेषेति** ।। इतिशब्दो हेतौ । इति हेतोः तावेवाह्वयदिति सम्बन्धः । नासत्यादिनाम्नामपि उभयसाधारणत्वात् कथं विशेषनामत्वमित्यत आह– **अविशेषितमिति** ।। नाम नासत्यादिनाम तयोर्विषये अविशेषितमपि साधारणमपि सर्वप्रतिपत्त्येकदेशमात्रप्रतिपादकनामान्तरशून्यत्वात् विशेषनामापि

---

१. अनन्तभट्टीया– ।। मन्त्रावृत्तिरिति ।। अस्य देवस्य नामभेदे मन्त्रावृत्तिरुक्तेत्यर्थः । इति हो.पुस्तकपाठः ।।

भवतीत्यर्थः । व्यक्तिद्वयत्वात् कथं एकदावर्तितमन्तरेणाह्वानमित्यत आह– **मन्त्रेति** ।। अस्याह्वानविषयस्य नामभेदे प्रातिस्विकनामभेदे मन्त्रावृत्तिरुक्ता । [न तु व्यक्तिभेदमपि ।] नामाभेद इत्यर्थः । ननु चन्द्रसूर्ययमा आयान्त्वित्याह्वाने बहुपुत्रलाभः । विशेषनामा च भवतीत्यतो वाह– **मन्त्रेति** ।। चशब्देनावर्तितमन्त्रस्य विफलता चेति ज्ञेयम् ।।१२८।।

**अतिविशद–** विशेषनामापीत्यत्र अश्विनो अश्विनावित्यादि विशेषनाम इत्युक्तम् । तथात्वे एको नासत्यः । अपरो दस्रः इत्यादिविरोधः । तथा 'नासत्यदस्रौ परमस्य नाम' इत्यादि भागवतविरोधश्च स्यादित्यतः– **विशेषनामाप्यविशेषितं तयोरित्युक्तम्** ।। तेन नासत्यौ अश्विनौ दस्रौ इत्यभिधानम्, एकावृत्त्या मन्त्रस्योभयप्राप्त्यन्यथानुपपत्तिश्च नासत्यावित्यादिनाम्नोभयरूपत्वेन प्रमाणमित्युक्तं भवति ।।१२८।।

**भारतश्री–** अश्विभ्यां नकुलसहदेवोत्पत्तिं घटयति– **विशेषनाम्नेत्यादिना** ।। समाहुता समाहूता इति हेतोः विशेषनाम्ना तयोः समाह्वानं युक्तम् । तयोस्तु नासत्यः दस्र इति विशेषनामापि अविशेषितं उभयोः बोधकम् । अतस्तौ नासत्यदस्रौ आगच्छतमित्याहूतवती । विशेषनाम्ना...स्यैव उभयोः योगः रूढिः । योगश्च रूढ्या विशेषनामत्वं योगेनाविशेषनामत्वं योगरूढिरेव विशेषनामत्वदोषः सम इति [?]। अस्याः आह्वाने मन्त्रावृत्तिः स्यादिति चेदाह– **मन्त्रावृत्तिरिति** ।। अस्य मन्त्रेणाहूयमानदेवद्वयस्य नामभेदे मन्त्रावृत्तिः स्यात् । द्वयोः दोषः स्यात् । स च नास्ति । विशेषनामाप्यविशेषितं तयोः इत्युक्तम् । विशेषनाम्नः कथमविशेषितत्वमिति चेत् उच्यते एकस्मिन् शक्तिरन्यस्मिन् लक्षणा । तथाच उभयबोधकत्वेनाविशेषित्वं यस्मिन् शक्तिः तं प्रति विशेषनामवत्वं च । अत एव 'सदाऽवियोगौ' इति शक्यसम्बन्धो दर्शितः । वाजं भूविशेषनाम...र्वणि [अत्र ग्रन्थपातः सम्भाव्यते] । 'एको नासत्यः अपरो दस्र' इत्युक्तेश्च । 'नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनौ नृप । नैतयो नामभेदोऽस्ति सहितौ चरतः सदा ।।' इति शान्तिपर्ववचनादविशेषितत्वञ्च ज्ञायते । वयं तु सुराः विशेषनाम्ना समाहूता सुतान् दद्युः । एवेत्यनेन नान्यथा इत्युच्यते इति हेतोः अश्वीति नाम तयोरश्विनोः न विशेषितं विशेषनाम । अपिशब्दात् विशेषितविशेषनामापि तयोश्चन्द्रसूर्यादिनामवत् अस्तीति ज्ञायते । तदुक्तं 'एको नासत्यः अपरो दस्र' इति नासत्यदस्रशब्दयोर्विशेषितविशेषनामत्वं सख्यादिनाम्नां तु अविशेषितविशेषनामत्वमिति । अत एवोक्तं न चैतयोर्नामभेदः क्वचित्...ति एतयोरश्विनोः देवयो क्वचिन्नामभेदो नास्ति । अश्विन्यादिनाम्नां अभेदेन व्यवहाराच्च क्वचिदित्यनेन दस्रादिशब्देषु नामभेदोऽस्तीति ज्ञायते । अविनाभूतयोः अविनाभूतानां वा अविशेषितविशेषनामत्वं नाम अविनाभूतयोः प्रवृत्तिनिमित्तैक्येन प्रवर्तमानत्वम् । अत एवोक्तम्– 'सदावियोगौ दिविजेषु दस्रौ' इति । तद्भेदेन प्रवर्तमानत्वं विशेषित-विशेषनामत्वमिति । उभयाह्वाने मन्त्रावृत्तिं विना उभयोरागमनं कथमिति चेदाह– **मन्त्रावृत्तिरिति** ।।

अस्याहूयमानदेवद्वयस्य नामभेदे मन्त्रावृत्त्या भाव्यम् । प्रकृताश्विशब्दे स नास्तीत्यर्थः । शान्तिपर्ववचनेऽपि क्वचिदिति वक्तव्यम् । आचार्यैः तथोक्तत्वात् । तस्मात् अश्विनाम्नोभ्याह्वानं कृतवतीत्यलं विस्तरेण । सामान्यनामत्वं तु अविनाभूतानां प्रति प्रतिविलक्षणलिङ्गवतां वाचकत्वमिति ज्ञातव्यम् ॥

**भावचन्द्रिका–** ॥ **विशेषनाम्नेति** ॥ तृतीयाध्यायोक्तनियामकानुसारेणैवात्र विवक्षा द्रष्टव्या । मुख्यवृत्त्या अमुख्यवृत्त्या वा यच्छब्दार्थेषु एकदेशमात्रवृत्तिपर्यवसायि मुख्यामुख्यया वाचिशब्दापेक्षया तदर्थैकदेशमात्रपरः । यद्वा रुद्रादिशब्दापेक्षया तदर्थैकदेशमात्रपरः । मुख्यवृत्त्या दस्रशब्दो यद्यप्यस्ति । तथापि प्रयोगवाहुल्यमात्रेण च एकदेशपरत्वाभावात् । प्रयोगवाहुल्यस्य उभयत्र नासत्यौ दस्रौ च इति विशेषनामैव ॥१२८॥

**चट्टि–** नन्वेकोनपञ्चाशन्मरुतां वा एकादशरुद्राणां द्वादशादित्यानां अष्टवसूनां वा सत्वेन तदाह्वानं विहाय माद्र्या अश्विनोरेव आह्वानं किमर्थं कृतमित्यत आह– **विशेषनाम्नैवेति** ॥ सुराः विशेषनाम्ना असाधारणनाम्नैव समाहूताः सन्तः सुतान् दद्युरिति यतः अतः मरुदादिनाम्नां सामान्यवाचकत्वात् तेषां आह्वानमकृत्वा तावश्विनावेव समाह्वयत् । ननु तर्हि सामान्यनामवतो अश्विनोः कथमाह्वानमित्यत आह– **अविशेषितमिति** ॥ ययोरश्विनोः विशेषनामाप्यसाधारणनामाप्यविशेषितं सममित्यर्थः । अतस्तौ समाह्वयदित्यर्थः । ननु अश्विनोः नामभेदाभावेऽपि स्वरूपभेदसद्भावेन मन्त्रावृत्तिः कर्तव्यैव । सा च कुन्त्या निषिद्धा ततो मन्त्रावृत्त्यभावात् कथमेकदाह्वानेन उभयोः आगमनमित्यत आह– **मन्त्रावृत्तिरिति** ॥ अस्याह्वातव्यस्य नामभेदे सत्येव मन्त्रावृत्तिरुक्ता । न त्वाह्वातव्याभेदेऽपि । अतः एकदाह्वानेनापि मन्त्रावृत्त्यभावेऽपि द्वयोरागमनं युक्तमिति वोध्यम् । मरुदादीनां तु परस्परं नामभेदसद्भावात् तान् विहायाश्विनोरेवाह्वानं कृतमिति भावः ॥१२८॥

**युधिष्ठिराद्येषु चतुर्षु वायुः समाविष्टः फल्गुनेऽतो विशेषात् ।**
**युधिष्ठिरे सौम्यरूपेण विष्टो वीरेण रूपेण धनञ्जयेऽसौ ॥१२९॥**

**व्यासतीर्थीया–** निबन्धान्तरे युधिष्ठिरादीनामपि वायुतोक्तिं घटयन्नाह– **युधिष्ठिरेति** ॥ कस्मिन् केन रूपेणाविष्ट इति जिज्ञासायामाह– **युधिष्ठिर इति** ॥ सौम्यं शान्तम् ॥१२९॥

**वेदाङ्गतीर्थीया–** ग्रन्थान्तरे युधिष्ठिरादयः पञ्च वायव इत्युक्तं तदभिप्रायमाह– **युधिष्ठिरेति** ॥ ॥१२९-१३१॥

**मधुसूदनीया–** पुराणादौ वायुरेव पञ्चपाण्डवत्वेनोत्पन्न इत्युक्तेरभिप्रायमाह– **युधिष्ठिराद्येष्विति** ॥१२९-१३३॥

भवतीत्यर्थः । व्यक्तिद्वयत्वात् कथं एकदावर्तितमन्तरेणाह्वानमित्यत आह– **मन्त्रेति** ।। अस्याह्वानविषययस्य नामभेदे प्रातिस्विकनामभेदे मन्त्रावृत्तिरुक्ता । [न तु व्यक्तिभेदमपि ।] नामाभेद इत्यर्थः । ननु चन्द्रसूर्ययमा आयान्त्वित्याह्वाने बहुपुत्रलाभः । विशेषनामा च भवतीत्यतो वाह– **मन्त्रेति** ।। चशब्देनावर्तितमन्त्रस्य विफलता चेति ज्ञेयम् ।।१२८।।

**अतिविशद–** विशेषनामापीत्यत्र अश्विनो अश्विनावित्यादि विशेषनाम इत्युक्तम् । तथात्वे एको नासत्यः । अपरो दस्रः इत्यादिविरोधः । तथा 'नासत्यदस्रौ परमस्य नाम' इत्यादि भागवतविरोधश्च स्यादित्यतः– **विशेषनामाप्यविशेषितं तयोरित्युक्तम्** ।। तेन नासत्यौ अश्विनौ दस्रौ इत्यभिधानम्, एकावृत्त्या मन्त्रस्योभयप्राप्त्यन्यथानुपपत्तिश्च नासत्यावित्यादिनाम्नोभयरूपत्वेन प्रमाणमित्युक्तं भवति ।।१२८।।

**भारतश्री–** अश्विभ्यां नकुलसहदेवोत्पत्तिं घटयति– **विशेषनाम्नेत्यादिना** ।। समाहुता समाहूता इति हेतोः विशेषनाम्ना तयोः समाह्वानं युक्तम् । तयोस्तु नासत्यः दस्र इति विशेषनामापि अविशेषितं उभयोः बोधकम् । अतस्तौ नासत्यदस्रौ आगच्छतमित्याहूतवती । विशेषनाम्ना...स्यैव उभयोः योगः रूढिः । योगश्च रूढ्या विशेषनामत्वं योगेनाविशेषनामत्वं योगरूढिरेव विशेषनामत्वदोषः सम इति [?]। अस्याः आह्वाने मन्त्रावृत्तिः स्यादिति चेदाह– **मन्त्रावृत्तिरिति** ।। अस्य मन्त्रेणाहूयमानदेवद्वयस्य नामभेदे मन्त्रावृत्तिः स्यात् । द्वयोः दोषः स्यात् । स च नास्ति । विशेषनामाप्यविशेषितं तयोः इत्युक्तम् । विशेषनाम्नः कथमविशेषितत्वमिति चेत् उच्यते एकस्मिन् शक्तिरन्यस्मिन् लक्षणा । तथाच उभयबोधकत्वेनाविशेषित्वं यस्मिन् शक्तिः तं प्रति विशेषनामवत्त्वं च । अत एव 'सदाऽवियोगौ' इति शक्यसम्बन्धो दर्शितः । वाजं भूविशेषनाम...र्वणि [अत्र ग्रन्थपातः सम्भाव्यते] । 'एको नासत्यः अपरो दस्र' इत्युक्तेश्च । 'नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनौ नृप । नैतयो नामभेदोऽस्ति सहितौ चरतः सदा ।।' इति शान्तिपर्ववचनादविशेषितत्वञ्च ज्ञायते । वयं तु सुराः विशेषनाम्ना समाहूता सुतान् दद्युः । एवेत्यनेन नान्यथा इत्युच्यते इति हेतोः अश्वीति नाम तयोरश्विनोः न विशेषितं विशेषनाम । अपिशब्दात् विशेषितविशेषनामापि तयोश्चन्द्रसूर्यादिनामवत् अस्तीति ज्ञायते । तदुक्तं 'एको नासत्यः अपरो दस्र' इति नासत्यदस्रशब्दयोर्विशेषितविशेषनामत्वं सख्यादिनाम्नां तु अविशेषितविशेषनामत्वमिति । अत एवोक्तं न चैतयोर्नामभेदः क्वचित्...ति एतयोरश्विनोः देवयो क्वचिन्नामभेदो नास्ति । अश्विन्यादिनाम्नां अभेदेन व्यवहाराच्च क्वचिदित्यनेन दस्रादिशब्देषु नामभेदोऽस्तीति ज्ञायते । अविनाभूतयोः अविनाभूतानां वा अविशेषितविशेषनामत्वं नाम अविनाभूतयोः प्रवृत्तिनिमित्तैक्येन प्रवर्तमानत्वम् । अत एवोक्तम्– 'सदावियोगौ दिविजेषु दस्रौ' इति । तद्भेदेन प्रवर्तमानत्वं विशेषित-विशेषनामत्वमिति । उभयाह्वाने मन्त्रावृत्तिं विना उभयोरागमनं कथमिति चेदाह– **मन्त्रावृत्तिरिति** ।।

अस्याहूयमानदेवद्वयस्य नामभेदे मन्त्रावृत्त्या भाव्यम् । प्रकृताश्विशब्दे स नास्तीत्यर्थः । शान्तिपर्ववचनेऽपि क्वचिदिति वक्तव्यम् । आचार्यैः तथोक्तत्वात् । तस्मात् अश्विनाम्नोभ्याह्वानं कृतवतीत्यलं विस्तरेण । सामान्यनामत्वं तु अविनाभूतानां प्रति प्रतिविलक्षणलिङ्गवतां वाचकत्वमिति ज्ञातव्यम् ।।

**भावचन्द्रिका–** ।। **विशेषनाम्नेति** ।। तृतीयाध्यायोक्तनियामकानुसारेणैवात्र विवक्षा द्रष्टव्या । मुख्यवृत्त्या अमुख्यवृत्त्या वा यच्छब्दार्थेषु एकदेशमात्रवृत्तिपर्यवसायि मुख्यामुख्यया वाचिशब्दापेक्षया तदर्थैकदेशमात्रपरः । यद्वा रुद्रादिशब्दापेक्षया तदर्थैकदेशमात्रपरः । मुख्यवृत्त्या दस्रशब्दो यद्यप्यस्ति । तथापि प्रयोगबाहुल्यमात्रेण च एकदेशपरत्वाभावात् । प्रयोगबाहुल्यस्य उभयत्र नासत्यौ दस्रौ च इति विशेषनामैव ।।१२८।।

**चट्टि–** नन्वेकोनपञ्चाशन्मरुतां वा एकादशरुद्राणां द्वादशादित्यानां अष्टवसूनां वा सत्वेन तदाह्वानं विहाय माद्र्या अश्विनोरेव आह्वानं किमर्थं कृतमित्यत आह– **विशेषनाम्नैवेति** ।। सुराः विशेषनाम्ना असाधारणनाम्नैव समाहूताः सन्तः सुतान् दद्युरिति यतः अतः मरुदादिनाम्नां सामान्यवाचकत्वात् तेषां आह्वानमकृत्वा तावश्विनावेव समाह्वयत् । ननु तर्हि सामान्यनामवतो अश्विनोः कथमाह्वानमित्यत आह– **अविशेषितमिति** ।। ययोरश्विनोः विशेषनामाप्यसाधारणनामाप्यविशेषितं सममित्यर्थः । अतस्तौ समाह्वयदित्यर्थः । ननु अश्विनोः नामभेदाभावेऽपि स्वरूपभेदसद्भावेन मन्त्रावृत्तिः कर्तव्यैव । सा च कुन्त्या निषिद्धा ततो मन्त्रावृत्त्यभावात् कथमेकदाह्वानेन उभयोः आगमनमित्यत आह– **मन्त्रावृत्तिरिति** ।। अस्याह्वातव्यस्य नामभेदे सत्येव मन्त्रावृत्तिरुक्ता । न त्वाह्वातव्याभेदेऽपि । अतः एकदाह्वानेनापि मन्त्रावृत्त्यभावेऽपि द्वयोरागमनं युक्तमिति बोध्यम् । मरुदादीनां तु परस्परं नामभेदसद्भावात् तान् विहायाश्विनोरेवाह्वानं कृतमिति भावः ।।१२८।।

**युधिष्ठिराद्येषु चतुर्षु वायुः समाविष्टः फल्गुनेऽतो विशेषात् ।**
**युधिष्ठिरे सौम्यरूपेण विष्टो वीरेण रूपेण धनञ्जयेऽसौ ।।१२९।।**

**व्यासतीर्थीया–** निबन्धान्तरे युधिष्ठिरादीनामपि वायुतोक्तिं घटयन्नाह– **युधिष्ठिरेति** ।। कस्मिन् केन रूपेणाविष्ट इति जिज्ञासायामाह– **युधिष्ठिर इति** ।। सौम्यं शान्तम् ।।१२९।।

**वेदाङ्गतीर्थीया–** ग्रन्थान्तरे युधिष्ठिरादयः पञ्च वायव इत्युक्तं तदभिप्रायमाह– **युधिष्ठिरेति** ।। ।।१२९-१३१।।

**मधुसूदनीया–** पुराणादौ वायुरेव पञ्चपाण्डवत्वेनोत्पन्न इत्युक्तेरभिप्रायमाह– **युधिष्ठिराद्येष्विति** ।।१२९-१३३।।

**वरदराजीया–** पुराणेषु युधिष्ठिरादीनां या वाय्वात्मकत्वोक्तिः सा वायोर्विशेषावेशसद्भाव-निमित्तैवेत्याशयेन तत्र वायोर्विशेषावेशमाह– **युधिष्ठिराद्येष्वित्यादिना** ।। भीमं व्यावर्तयति– **चतुर्ष्विति** ।। धर्मार्जुननकुलसहदेवेष्वित्यर्थः । फल्गुनेऽर्जुने अतो धर्माद्यपेक्षया विशेषाद्विशेषेण समाविष्टः । कस्मिन् केन रूपेण समाविष्ट इत्यतस्तद्विवेकमाह– **युधिष्ठिर इति** ।। युधिष्ठिरे सौम्यरूपेण शान्तरूपेण विष्टः प्रविष्टः । असौ वायुर्धनञ्जयेऽर्जुने वीर्येण पराक्रमरूपेणाविष्ट इत्यर्थः ।।१२९।।

**अनन्तभट्टीया–** ग्रन्थान्तरे धर्मादयः पञ्चवायव इत्युक्तम् । तद्घटयन्नाह– **युधिष्ठिरेति** ।। कस्मिन् केन रूपेणाविष्ट इत्यत आह– **युधिष्ठिर इति** ।। सौम्यरूपेण ।।१२९।।

**जनार्दनीया–** ग्रन्थान्तरे युधिष्ठिरादयः पञ्चवायवः इत्युक्तेरभिप्रायमाह– **युधिष्ठिराद्येष्वित्यादिना** ।। वायुः युधिष्ठिराद्येषु चतुर्षु भीमं विना युधिष्ठिरादिचतुर्षु समाविष्टोऽभूदिति शेषः । अतः युधिष्ठिरनकुल-सहदेवेभ्यः फल्गुने अर्जुने विशेषात् विशेषावेशेन समाविष्ट इत्यर्थः । कस्मिन् केन रूपेणाविष्टः? इत्यत आह– **युधिष्ठिर इति** ।। सौम्यरूपेण शान्तरूपेण असौ वायुः । वीरेण वीररूपेणेत्यर्थः । धनञ्जये विष्टः आविष्टः । विष्टः इत्यस्योभयत्र सम्बन्धः । अभूदिति शेषः ।।१२९।।

**ताम्रपर्णीया–** स वायुरेव युधिष्ठिरादिपञ्चरूपी जात इति ग्रन्थान्तरविरोधपरिहारायाह– **युधिष्ठिराद्येष्वित्यादिना** ।।१२९-१३३।।

**भारतश्री–** युधिष्ठिराद्येषु चतुर्षु वायुः समाविष्ट इति वायुप्रवेशस्य प्रयोजनं तु...द्रौपदीभोगप्रसङ्गे स्पष्टम् ।।१२९।।

**चट्टि–** ग्रन्थान्तरे युधिष्ठिरादयः पञ्चवाय्ववतारा इत्युक्तं तदभिप्रायमाह– **युधिष्ठिराद्येष्विति** ।। वायुः युधिष्ठिराद्येषु चतुर्षु भीमं विना युधिष्ठिरादिचतुर्षु समाविष्टोऽभूदिति शेषः । अतः युधिष्ठिरनकुल-सहदेवेभ्योः फल्गुने अर्जुने विशेषाद् विशेषावेशेन समाविष्टः । कस्मिन् केन रूपेणाविष्ट इत्यत आह– **युधिष्ठिर इति** ।। युधिष्ठिरे सौम्यरूपेण शान्तरूपेणाविष्टः प्रविष्टः असौ वायुः धनञ्जये अर्जुने वीरेण वीररूपेण प्रविष्टः ।।१२९।।

**शृङ्गाररूपं केवलं दर्शयानो विवेश वायुर्यमजौ प्रधानः ।**
**शृङ्गारकैवल्यमभीप्समानः पाण्डुर्हि पुत्रं चकमे चतुर्थम् ।।१३०।।**

**व्यासतीर्थीया–** वायोः शृङ्गाररूपेण नकुलप्रवेशे किं निमित्तमिति जिज्ञासायामाह– **शृङ्गारेति** ।।१३०।।

**वादिराजीया–** केवलस्य भावः कैवल्यम् । शृङ्गारस्य सौन्दर्यस्य कैवल्यं शृङ्गारकैवल्यम् । केवलं शृङ्गारमित्यर्थः । विशेषादिति वदता ईषच्छृङ्गाररूपः सहदेवं विवेशेति सूचितम् । ततो भीमार्जुनयोरतिसुन्दरत्वेऽपि कठोराङ्गत्वेन प्रायः प्राकृतजनैः रूपशालित्वेनाकथनात् कारणात् । वरवज्रकायौ भीमार्जुनावृतेऽपि सुजातौ पल्लववत्कोमलाङ्गत्वेन जातौ पुत्रौ पाण्डुरैच्छदिति अन्वयः ।।१३०-१३३।।

**वरदराजीया–** प्रधानो वायुः केवलं शुद्धं शृङ्गाररूपं सुन्दररूपं दर्शयानः प्रदर्शयन् यमजौ नकुलसहदेवौ प्रविष्ट इत्यर्थः । अविशेषोक्तं विशेषयति– **शृङ्गारेति** ।। पाण्डुः हि यस्मात्कारणात् शृङ्गारकैवल्यं शृङ्गारस्य कैवल्यं परमकाष्ठां च पुत्रमभीप्समानः इच्छमानः चकमे अपेक्षितवान् नतु पुत्रमात्रम् ।।१३०।।

**जनार्दनीया–** प्रधानो वायुः श्रीमुख्यप्राणः केवलं अत्यन्तं शृङ्गाररूपं सौन्दर्यस्वरूपं दर्शयानः दर्शयमानः सन् यमजौ नकुलसहदेवौ विवेश । यमजौ विवेश इत्युक्तार्थे विशेषं दर्शयन्नाह– **शृङ्गारेत्यादिना**।। पाण्डुः, केवलस्य भावः कैवल्यम्, शृङ्गारं सौन्दर्यमेव कैवल्यं असाधारणधर्मो यस्येति विग्रहः । तादृशं चतुर्थं पुत्रं चकमे ऐच्छत् ।।१३०।।

**चट्टि–** प्रधानो वायुः केवलमत्यन्तं शृङ्गाररूपं सौन्दर्यस्वरूपं दर्शयानः सन् यमजौ नकुलसहदेवौ विवेश । यमजौ विवेशेत्युक्तार्थे विशेषं दर्शयन्नाह– **शृङ्गारेत्यादिना** ।। पाण्डुः केवलस्य भावः कैवल्यं शृङ्गारः सौन्दर्यं तस्य कैवल्यं शृङ्गारकैवल्यं केवलशृङ्गारमित्यर्थः । अभीप्समानस्सन् चतुर्थं पुत्रं चकमे ऐच्छत् ।।१३०।।

**शृङ्गाररूपो नकुले विशेषात् सुनीतिरूपः सहदेवं विवेश ।**
**गुणैः समस्तैः स्वयमेव वायुर्बभूव भूमौ जगदन्तरात्मा ।।१३१।।**

**व्यासतीर्थीया–** [एवमेवेति चकारार्थः] । ततो विशेषमाह– **शृङ्गाररूपेति** ।।१३१।।

**सत्याभिनवतीर्थीया–** तत्रैव शृङ्गाररूपो नकुले इति श्लोकः । तस्यार्थः । समस्तैः गुणैः युक्तः जगदन्तरात्मा जगदन्तर्नियामकः वायुः विशेषात् शृङ्गारं रूपयति निरूपयति इति शृङ्गाररूपः शृङ्गारप्रदः सन् नकुले नकुलं विवेश । विशेषात् सुनीतिरूपः सुनीतिप्रदः सन् सहदेवं विवेश । स्वयमेव साक्षादेव अन्यावेशमन्तरैव भीमो बभूवेति । एतेन 'शृङ्गाररूपो वायुः नकुलं विवेश' इत्युक्त्या नकुलाविष्टस्य वायोः शृङ्गाररूप एवास्ति गुणान्तरं नास्तीति प्रतीयते । तदनुपपन्नम् । सर्वत्र विद्यमानस्य वायोः सर्वगुणयुक्तत्वात् । एवं सुनीतिरूपो वायुः सहदेवं विवेशेत्यनुपपन्नमिति दूषणं परास्तम् । शृङ्गाररूपो वायुः नकुलं विवेश, सुनीतिरूपो वायुः सहदेवं विवेशेत्यर्थस्य अनङ्गीकारात् । एतेनैव 'समस्तैः गुणैः' इत्येतदनन्वितमिति दूषणं परास्तम् । 'युक्त' इति शेषेणान्वयस्योक्तत्वात् ।।१३१।।

**वरदराजीया–** तस्मान्नकुले चतुर्थे पुत्रे विशेषात् सहदेवापेक्षयेति शेषः । शृङ्गाररूपो वायुः विवेशेत्यर्थः । सुनीतिरूपः सहदेवं विवेश । तथा च भृङ्गाररूपं केवलमित्येतदंशं अविशेषेणोक्तमपि नकुलविषयमेव ज्ञातव्यमिति भावः । जगतोऽन्तरात्मा नियामको वायुः स्वयमेव समस्तैः शान्तिवीर्यभृङ्गारनीत्यादिरूपैः गुणैर्युक्तः सन् भीमो बभूव ।।१३१।।

**जनार्दनीया–** हि यस्मात् तस्मात् विशेषात् सहदेवस्य सौन्दर्यरूपापेक्षया विशेषात् भृङ्गाररूपो वायुः । नकुले कर्मण्यर्थे सप्तमी । विवेश । सुनीतिरूपो वायुः सहदेवं विवेश । वायुः सहदेवे रूपद्वयेन तिष्ठतीत्यर्थः । जगतः अन्तरात्मा अन्तर्नियामको वायुः स्वयमेव समस्तैर्गुणैः भक्तिज्ञानादिगुणैश्चेति समस्तैर्गुणैः सहितः सन् नाम्ना भीमो बभूव ।।१३१।।

**चट्टि–** हि यस्मात् तस्मात् सहदेवसौन्दर्यरूपापेक्षया विशेषात् शृङ्गाररूपो वायुर्नकुले विवेश । सुनीतिरूपो वायुः सहदेवं विवेश । वायुः सहदेवे रूपद्वयेन तिष्ठतीत्यर्थः । जगतामन्तरात्मा अन्तर्नियामकः वायुः स्वयमेव समस्तैः गुणैः युधिष्ठिरादिषूक्तसौम्यादिचतुर्गुणैः भक्तिज्ञानादिभिर्गुणैश्चेति समस्तैः सहितः सन् भीमो बभूव ।।१३१।।

**सुपल्लवाकारतनुर्हि कोमलः प्रायो जनैः प्रोच्यते रूपशाली ।**
**ततः सुजातं वरवज्रकायौ भीमार्जुनावप्यृते पाण्डुरैच्छत् ।।१३२।।**

**व्यासतीर्थीया–** ननु भीमार्जुनयोः सुलक्षणत्वेन सुरूपित्वात् तौ विहायान्यं सुरूपं पुत्रं पाण्डुः कस्मात् चकमे इत्यत आह– **सुपल्लवेति** ।।१३२।।

**वेदाङ्गतीर्थीया–** ननु भीमार्जुनयोः सुलक्षणत्वेन सुरूपित्वात् तौ विहायान्यं सुरूपं पुत्रं पाण्डुः कस्मात् चकमे इत्याह– **सुपल्लवेति** ।। रूपशाली सुरूपः । जनैः प्राकृतजनैः । तेन सुपल्लवाकारतनुत्वाभावेन ऐच्छत् । कोमलरूपमन्यमिति शेषः । तत् तस्मात् पाण्डुना कोमलरूपस्याभिलषितत्वात् ।।१३२-१३३।।

**वरदराजीया–** नन्वेवं भीमार्जुनयोः सुलक्षणयोरतिसुन्दरयोः सतोः किमर्थं पाण्डुः चतुर्थं सुन्दरं पुत्रं चकम इत्यत आह– **सुपल्लवेति** ।। सुपल्लवस्य कोमलपल्लवस्याकार इव आकारो यस्याः सा तथा । तादृशी तनुः यस्य स तथोक्तः । अत एव कोमलः पुरुषः प्रायः स्थूलदृष्टिभिः जनैः रूपशाली सुन्दरः प्रोच्यते हि यस्मात्ततः कारणात् सुजातौ सुन्दरावपि वरवज्रवत् दृढकायौ भीमार्जुनौ ऋते विहाय पाण्डुः सुन्दरं चतुर्थं पुत्रं ऐच्छदित्यर्थः । कोमलशरीर एव पामराणां सुन्दर इति प्रतीतिः भीमार्जुनयोश्च परमसुन्दरत्वेऽपि वज्रवद्दृढशरीरत्वेन सुन्दरबुद्धिः न भवतीति प्राकृतजनापेक्षया सुन्दरपुत्रः स्यादिति चतुर्थं पुत्रं चकम इत्याशयः ।।१३२।।

**अनन्तभट्टीया–** ननु भीमार्जुनयोः सुलक्षणत्वेन सुरूपत्वात् तयोः सतोः पाण्डुः सुरूपं सुतं कथं चकम इत्यत आह– **सुपल्लव इति** ।।१३२।।

**जनार्दनीया–** ननु सद्गुणवतोः भीमार्जुनयोः सुरूपवतोः सतोः पाण्डुः 'रूप्यन्यः स्यात् सूनुः' इति किमर्थं चतुर्थं पुत्रं चकमे इत्यत आह– **सुपल्लवेति** ।। सुपल्लवस्य ललितप्रवालस्य आकार इव आकारो यस्याः सा तथा, तादृशी तनुर्देहो यस्य स तथा । कोमलः मृदुः पुरुषः प्रायः बाहुल्येन जनैः स्थूलज्ञानिजनैः रूपशाली शोभनरूपवानिति प्रोच्यते हि यतः । ततः कारणात् पाण्डुः सुजातौ सुरूपवत्तया जातावपि । वज्राद्वर इति वरवज्रः वज्रादप्यधिकदृढ इत्यर्थः । राजदन्तादित्वात् परनिपातः । 'पञ्चमी' इति योगविभागत् समासः । तादृशः कायो देहो ययोस्तौ तथा तादृशौ भीमार्जुनौ । ऋते ऐच्छत् अन्यं रूपवन्तमिति शेषः ।।१३२।।

**चट्टि–** ननु भीमार्जुनयोः सुलक्षणयोरतिसुन्दरयोः सतोः किमर्थं पाण्डुरन्यं सुरूपं पुत्रं चकम इत्यत आह– **सुपल्लवेति** ।। सुपल्लवस्य कोमलपल्लवस्य आकार इव आकारो यस्य सा तथा, तनुर्देहो यस्य स तथा, कोमलः मृदुः पुरुषः प्रायः बाहुल्येन जनैः स्थूलदृष्टिभिः जनैः रूपशाली शोभनरूपवानिति प्रोच्यते । हि यस्मात् ततः तस्मात् कारणात् पाण्डुः सुजातौ सुरूपवत्तया जातावपि वज्राद्वरः वरवज्रः, वज्रादप्यधिकदृढ इत्यर्थः । तादृशः कायो देहो ययोस्तौ तथा तादृशौ भीमार्जुनौ ऋते विहाय ऐच्छत् । रूपवन्तं चतुर्थं पुत्रमिति शेषः ।।१३२।।

**अप्राकृतानां तु मनोहरं यद् रूपं द्वात्रिंशल्लक्षणोपेतमग्र्यम् ।**
**तन्मारुतो नकुले कोमलाभ एवं वायुः पञ्चरूपोऽत्र चाऽसीत् ।।१३३।।**

**व्यासतीर्थीया–** सुजातावपि सुरूपौ जातावपि सुपल्लवाकारतनुत्वाभावे कथं सुजातत्वमपीत्यतस्तदलौकिकमिति भावेनाह– **अप्राकृतानामिति** ।। नकुले कोमलरूपेण प्रवेशे निमित्तमुक्त्वोपसंहरति– **तदिति** ।। ततः केवलं रूपशालिनमेव चकमे यत इति । नकुले प्रविवेशेति शेषः । पञ्चरूपत्वप्रकारं प्रदर्श्योपसंहरति– **एवमिति** ।। अत्र अस्मिन्नवसरे ।।१३३।।

**वेदाङ्गतीर्थीया–** अत्र श्रीकृष्णावतारप्रसङ्गे ।।१३३।।

**वादिराजीया–** अप्राकृतानां अलौकिकानां तु विशेषेण मनोहरम्, द्वात्रिंल्लक्षणोपेतं अग्र्यं वज्रसाराङ्गं यन्निजरूपं तद्रूपं मारुतः हिरण्यकशिपूदरविदारणसमये प्रदर्शितं काठिन्यमव्यक्तीकृत्य रमाकुचकुम्भपरिरम्भणकाले मार्दवं प्रदर्शयन्नरसिंह इव जरासन्धकठोराङ्गसन्धिविदारणसमयवर्तिकाठिन्यमव्यक्तीकृत्य द्रौपदीपरिरम्भसम्भ्रमसमयसम्भूतमार्दवमिव नकुलदेहेऽपि कोमलाभः सन् पल्लववत् मार्दवमेव दर्शयामासेति योग्यक्रियाध्याहरेण अन्वयः ।।१३३।।

**सत्याभिनवतीर्थीया–** तत्रैव अप्राकृतानां तु मनोहरं यत्...इति श्लोके 'तन्मारुतो नकुले कोमलाभः' इत्यस्य तत्तस्मात् कोमलाभः कोमलरूपस्य अभिलषितत्वात् वायुः कोमलाभः कोमलपल्लवस्यैव आभः यस्मात् सः कोमलाभः, कोमलाभाप्रदः सन् नकुले स्थित इत्यर्थः । एतेन नकुले प्रविष्टस्य वायोः प्रयोजनं वक्तुं कोमलाभप्रदत्वं वक्तव्यम् । कोमलाभाविशिष्टत्वकथनमसङ्गतमिति दूषणं परास्तम् । कोमलाभ इत्यनेन कोमलाभविशिष्टत्वमुच्यते इत्यनङ्गीकारात् ।।१३३।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां द्वादशोऽध्यायः ।।

**वरदराजीया–** वस्तुतस्तु भीमार्जुनयोः तादृशं रूपं तद्दिव्यदृष्टिगोचरमेवेत्याह– **अप्राकृतानामिति** ।। अप्राकृतानां पुरुषाणां मनोहरं मनसो रमणीयं रूपं यत् भीमार्जुनयोः तत् द्वात्रिंशल्लक्षणैः प्रथमाध्यायोक्तैरुपेतम्। अत एव अग्र्यं श्रेष्ठमेवेत्यर्थः । तत्तस्मादेव नकुले कोमलाभः कोमलपल्लववत् आभातीति तथा तादृशो मारुत आविष्ट इत्यर्थः । एवं च पूर्वोक्तरीत्या अत्र लोके पञ्चरूपो भीमात्मा युधिष्ठिराद्याविष्ट चतुरात्मा चेति पञ्चरूपो वायुरासीत् बभूव ।।१३३।।

**अनन्तभट्टीया–** सुपल्लवाकारतनुत्वाभावे कथं...मपीत्यस्तदलौकिकमिति भावेनाह– **अप्राकृतानामिति** ।। नकुले प्रविवेश इति शेषः ।।१३३।।

**जनार्दनीया–** भीमार्जुनस्वरूपं उत्तमैर्द्रष्टुं योग्यं न तु सर्वेषामिति भावेनाह– **अप्राकृतानामिति** ।। द्वात्रिंशल्लक्षणैः उपेतं युक्तम् । अत एवाग्र्यं यद्रूपं तत् अप्राकृतानां सूक्ष्मदृष्टीनां पुरुषाणाम् । तु एव मनोहरमित्यर्थः । तत्तस्मात् पाण्डुना कोमलरूपस्य अभिलषितत्वात् । कोमलाभः कोमलपल्लवसदृशो मारुतः नकुले, स्थितोऽभूदिति शेषः । एवं उक्तप्रकारेण वायुः अत्र कृष्णावतारे पञ्चरूपः भीमस्वरूपो युधिष्ठिराद्याविष्टचतुःस्वरूपश्च पञ्चरूपः आसीत् ।।१३३।।

**भारतश्री–** द्वात्रिंशल्लक्षणोपेतमग्र्यं भीमस्य रूपं पाण्डोः प्राकृतत्वात् मूर्खत्वात् न प्रतिभाति । अतः अन्यं सुन्दरं पुत्रमैच्छदित्यर्थः ।।१३३।।

**चट्टि–** ननु सञ्जातयोः भीमार्जुनयोः सुपल्लवाकारतनुत्वाभावे कथं सुजातत्वमित्यतः तद्रूपमलौकिकमिति भावेनाह– **अप्राकृतानामिति** ।। द्वात्रिंशल्लक्षणैरुपेतं युक्तम् । अत एवाग्र्यं यद्रूपं तत् प्राकृतानां सूक्ष्मदृष्टीनां पुरुषाणां त्वेव मनोहरं मनसा रमणीयमित्यर्थः । नकुले कोमलरूपेण प्रवेशे निमित्तं उक्त्वा उपसंहरति– **तदिति** ।। यस्मात् पाण्डुः केवलं रूपशालिनमेव चकमे तत् तस्मात् कोमलाभः कोमलपल्लवसदृशो मारुतः नकुले प्रविवेश इति शेषः । पञ्चरूपत्वप्रकारं प्रदर्श्य उपसंहरति– **एवमिति** ।।

एवमुक्तप्रकारेण वायुः तत्र कृष्णावतारे पञ्चरूपः भीमस्वरूपः युधिष्ठिराद्याविष्टचतुस्स्वरूपश्चेति पञ्चरूप आसीत् ।।१३३।।

**अतीतेन्द्रा एव ते विष्णुषष्ठाः पूर्वेन्द्रोऽसौ यज्ञनामा रमेशः ।**
**स वै कृष्णो वायुरथ द्वितीयः स भीमसेनो धर्म आसीत् तृतीयः ।।१३४।।**

**व्यासतीर्थीया–** सकृष्णेषु पाण्डुसुतेषु एते इन्द्रा इत्युक्तिं घटयन्नाह– **अतीतेन्द्रा इति** ।।१३४।।

**वेदाङ्गतीर्थीया–** पूर्वमिन्द्रा एव कृष्णपाण्डवत्वेन अवतीर्णा इति प्रसिद्धम् । तत्र पूर्वेन्द्राणां क्रमं तत्स्वरूपं चाह– **अतीतेन्द्रा इत्यादिना** ।। ते पाण्डवाः विष्णुषष्ठाः प्रतिलोमक्रमेण विष्णुरेव षष्ठः । तदेवाह– **पूर्वेन्द्रोऽसाविति** ।।१३४।।

**वादिराजीया–** अतीतेन्द्रा एव ते विष्णुषष्ठा इत्यत्र व्युत्क्रमसङ्ख्याया विष्णुः षष्ठो येषां ते विष्णुषष्ठाः । अत एव 'पूर्वेन्द्रोऽसौ यज्ञनामा रमेश' इत्युक्तम् ।।१३५।।

**मधुसूदनीया–** 'इन्द्रा' इत्यारभ्य 'तैरेव सार्धं तु ततस्स देवो जगाम नारायणमप्रमेयम् । स चापि तद्व्यदधात् सर्वमेव ततः सर्वे सम्बभूवुर्धरण्याम् ।।' [२१४.३१-३२] इत्यादिपर्वणि इन्द्रा एव पञ्चपाण्डवाः कृष्णश्चेति जाता इत्युक्तम् । तदभिप्रायमाह– **अतीतेन्द्रा इति** ।।१३४-१३६।।

।। इति श्रीमद्विद्याधीशतीर्थश्रीपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे द्वादशोऽध्यायः ।।

**वरदराजीया–** ते युधिष्ठिरादयः पञ्च विष्णुः यज्ञनामा षष्ठो येषां ते तथा । अतीतेन्द्रा एव [पूर्वमिन्द्रपदमन्तः]। कथमित्यपेक्षायां विविच्य दर्शयति– **पूर्वेति** ।। असौ यज्ञनामा रमेशः पूर्वेन्द्रः स इदानीं कृष्णो वै । अथ यज्ञानन्तरं वायुः द्वितीय इन्द्रः सोऽत्र भीमसेनो जातः । धर्मो यमः तृतीय इन्द्र आसीत् असौ अत्र युधिष्ठिर इति जातः ।।१३४।।

**अनन्तभट्टीया–** अत्रास्मिन्नवसरे कृष्णसहितेषु पाण्डवेषु इन्द्रत्वमुक्तं घटयन्नाह– **अतीतेति** ।।१३४।।

**जनार्दनीया–** कृष्णपाण्डवाः पूर्वेन्द्रा इति पुराणोक्तेरभिप्रायं विवेचयन्नाह– **अतीतेन्द्रा इति** ।। विष्णुः षष्ठो येषां ते तथा, प्रातिलोम्यक्रमेण विष्णुषष्ठ इत्यर्थः । एते पञ्चपाण्डवाः अतीताः अतिक्रान्ताः, ते च ते इन्द्राश्च अतीतमन्वन्तरेन्द्रा इत्यर्थः । तदेव क्रमपूर्वकमाह– **पूर्वेन्द्र इति** ।। असौ यज्ञनामा रमेशः पूर्वेन्द्रः प्रथममन्वन्तरेन्द्रः । स वै यज्ञनामैव कृष्णोऽभूदिति शेषः । अथ यज्ञेन्द्रानन्तरं वायुः द्वितीयः द्वितीयेन्द्रः रोचनाख्यः । स वायुः भीमसेनः । धर्मः तृतीयः इन्द्रः सत्यजित् आसीत् ।।१३४।।

**ताम्रपर्णीया–** कृष्णसहिताः पाण्डवाः अतीतेन्द्रा इत्युक्तं घटयति– **अतीतेति** ।। विष्णुषष्ठाः कृष्णषष्ठाः ते पञ्च पाण्डवाः अतीतेन्द्रा इत्यर्थः ।। **पूर्वेन्द्र इति** ।। न च कृष्णस्य कृष्णकेशव-वामननारायणाद्यंशत्वं तत्र तत्रोच्यते इति विरोध इति वाच्यम् । 'सर्वांशो हि यतः कृष्णो न विगीतिरथो यथा । चतुर्मूर्तिहरेरंशौ नारायणनृसिंहकौ' इत्यस्माभिर्विरोधोद्धारे समाहितत्वात् ।।१३४।।

**भारतश्री–** पूर्वेन्द्रः स्वायम्भुवमन्वन्तरेन्द्रः । षष्ठः चाक्षुषमन्वन्तरस्थः ।।१३४।।

**भावचन्द्रिका–** ।। **वायुरिति** ।। एतेषामेव नामरूपभेदेन भागवते इन्द्रत्वमुक्तं ज्ञेयम् । षष्ठो मन्द्रद्युम्नः । सप्तमः पुरन्दरः ।।१३४-१३६।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां द्वादशोऽध्यायः ।।

**चट्टि–** स्कन्दपुराणे इन्द्रा एव पाण्डवा आसन् इत्यत तस्याभिप्रायमाह– **अतीतेन्द्रा इति** ।। व्युत्क्रमसङ्ख्यया विष्णुः षष्ठो एषां ते विष्णुषष्ठाः एते पञ्चपाण्डवाः अतीतेन्द्राः अतीताः अतिक्रान्ताः ते च ते इन्द्राश्च अतीतमन्वन्तरेषु इन्द्रा एवेत्यर्थः । तदेव क्रमपूर्वकमाह– **पूर्वेन्द्र इति** ।। असौ यज्ञनामा रमेशः पूर्वेन्द्रः प्रथममन्वन्तरे इन्द्रः । स वै यज्ञनामैव कृष्णोऽभूदिति सर्वत्र शेषः पूरणीयः । अथ यज्ञेन्द्रानन्तरं वायुः द्वितीयः द्वितीयेन्द्रः सः वायुः भीमसेनः । धर्मः तृतीय इन्द्र आसीत् । असौ धर्मो युधिष्ठिरः । अथानन्तरं नासत्यदस्रौ अश्विनौ क्रमात् क्रमेण एकश्चतुर्थेन्द्रः अपरः पञ्चम इन्द्र इत्यर्थः । तावेतौ अश्विनौ क्रमात् नकुलः सहदेव इति माद्रवती सुतौ चाभूताम् । पुरन्दरः षष्ठः षष्ठमन्वन्तर इन्द्रः उतानन्तरं अत्र वैवस्वतमन्वन्तरे पुरन्दरः सप्तमः सप्तमेन्द्रः । सः पुरन्दराख्यः षष्ठः सप्तमश्च एक एव फल्गुनः हि यतः एते विष्ण्वाद्याः षडिन्द्राः एकैकमन्वन्तरेन्द्राः । अतः कारणाद् अतीतेन्द्रा इत्यर्थः ।।१३४-१३५।।

**युधिष्ठिरोऽसावथ नासत्यदस्रौ क्रमात् तावेतौ माद्रवतीसुतौ च ।**
**पुरन्दरः षष्ठ उतात्र सप्तमः स एवैकः फल्गुनो ह्येत इन्द्राः[१] ।।१३५।।**

**व्यासतीर्थीया–** नासत्यदस्रौ क्रमाच्चतुर्थपञ्चमौ उतात्र वैवस्वतमन्वतरे सप्तम ऐन्द्रः ।।१३५।।

**वेदाङ्गतीर्थीया–** नासत्यदस्रौ अश्विनौ क्रमादिन्द्रौ चतुर्थपञ्चम...इन्द्रौ । पुरन्दरः षष्ठः

१. भगवान् वेदव्यासः महाभारते अतीतेन्द्राः अवातरन् इत्येकत्र अवदत् । तथा धर्मजभीमार्जुननकुलसहदेवाः यमवाय्विन्द्रनासत्यदस्राः इत्यपि अवदत् । तथा तेषां पाण्डवानां यमादिषु लयमपि न्यरूरुपत् । एतदन्यथानुपपत्या ज्ञायते यमादयः एव अतीतेन्द्राः इति । कृष्णस्तु यज्ञनाम्ना स्वायम्भुवान्तरे इन्द्रोऽभूत् इति भागवतादिषु प्रसिद्धं वर्तते एव ।

अतीतमन्वन्तरापेक्षया अत्र वर्तमानवैवस्वतमन्वन्तरे सप्तम उत स इन्द्रोऽपि पुरन्दर एकः । स एव फाल्गुन । एवमनेन क्रमेण एते कृष्णपाण्डवाश्चे इन्द्राः पूर्वेन्द्राः ।।१३५।।

**वादिराजीया–** अथ नासत्यदस्रौ इत्यत्र द्वयोरपि पृथङ्नामाभावात् वियोगाभावाच्च नासत्यावप्यश्विनौ एव । दस्रावप्यश्विनावेव । तथा अप्येकदा द्वयोः इन्द्रपदव्यां सत्वेऽपि एकस्य प्राधान्यम्, द्वितीयेन्द्रपदव्यां अपरस्य प्राधान्यम् । यथा द्विमन्दिरप्रियस्य राज्ञो रमणयोग्यरतिमन्दिरद्वयस्थ मञ्चौ प्रियपत्नीभ्यां सहैव शयननियमवतो राज्ञो राज्ञीद्वयस्यापि समौ । एकस्मिन् दिने एकया सह रमणात् अपरस्मिन् दिने अपरया सह रमणात् तत्तत्प्रधानौ । एवं इन्द्रपदव्यौ द्वे अपि द्वयोः अश्विनोः समे । तथापि एकैकपदव्यां एकैकस्य भगवद्दत्तप्राधान्यात् आद्या एकस्य द्वितीया अन्यस्य इति विभज्य उक्तिः इति भावः । तावेतौ क्रमात् मानुषावतारयोग्यक्रमात् नकुलः सहदेव इति माद्रीसुतौ बभूवतुः । क्रमादिति वदता मानुषदेहे एकं विहाय एकस्तिष्ठति, एकं विहाय अन्यो गच्छति, एकं विहाय अपरः एक एव भुङ्क्ते रमते पुत्रं उत्पादयति च इत्यादिमूलरूपात् विलक्षणप्रमेयभेदोऽपि सूचितः । 'विशेषनामाप्यविशेषितं तयोः' इति नियमस्तु मूलरूप एवेति भावः । पुरन्दरः षष्ठ उतात्र सप्तम इत्यत्र अत्र इन्द्रेषु पुरन्दरः अनुक्रमसङ्ख्यया षष्ठः सप्तम उत सप्तमश्च मन्वन्तरद्वयकालेऽपि यः पुरन्दरः एक एवेन्द्रो अभूत् । स पुरन्दरः फल्गुनोऽभूत् । अतः षडिन्द्राणामपि पञ्चेन्द्रत्वम् । ते पञ्चपाण्डवा जाताः । पूर्वेन्द्रो यज्ञस्तु कृष्णो बभूवेति विवेकः ।।१३५।।

**वरदराजीया–** अथ तदनन्तरं नासत्यदस्रौ अश्विनौ द्वौ क्रमादिन्द्रौ एकश्चतुर्थ इन्द्रो अपरस्तु पञ्चम इति भावः । तौ द्वाविन्द्रौ अत्र माद्रवतीसुतौ नकुलसहदेवौ जातौ । पुरन्दरः षष्ठ इन्द्रः । पूर्वमन्वन्तरे उत अनन्तरं स एवात्र वैवस्वतमन्वन्तर सप्तम इन्द्र इति प्रसङ्गादुक्तः । स एक एव मन्वन्तरद्वये एक एव क्रमेणेन्द्र एवात्र फल्गुनो जातः हि यस्मादेते कृष्णाद्याः षट् पूर्वेन्द्रा इत्यर्थः ।।१३५।।

**अनन्तभट्टीया–** नासत्यदस्रौ क्रमात् चतुर्थपञ्चमौ । अत्र वैवस्वतमन्वन्तरे ।।१३५।।

**जनार्दनीया–** असौ धर्मः युधिष्ठिरः । अथ धर्मेन्द्रानन्तरं नासत्यदस्रौ अश्विनौ क्रमात् क्रमेण एकश्चतुर्थ इन्द्रः अपरः पञ्चमेन्द्रः इत्यर्थः । तौ अश्विनौ आविर्भूतौ माद्रवत्याः सुतौ एतौ च अत्रत्यौ नकुलसहदेवावित्यर्थः । पुरन्दरः षष्ठः षष्ठमन्वन्तरेन्द्रः मन्त्रद्युम्नः । उत षष्ठमन्वन्तरेन्द्रपदप्राप्त्यनन्तरं अत्र वैवस्वतमन्वन्तरे पुरन्दरः सप्तमेन्द्रः । स पुरन्दराख्यः षष्ठः सप्तमश्च एक एव फल्गुनः हि यतः । एते विष्ण्वाद्याः षट् इन्द्राः एकैकमन्वन्तरेन्द्राः । अतः कारणात् अतीतेन्द्रा इत्यर्थः ।।१३५।।

**ताम्रपर्णीया–** ।। **अथ नासत्यदस्रौ क्रमादिति** ।। नासत्यदस्रयोः अवियोगित्वविरोध इति चेत् । एकस्य इन्द्रत्वदशायां अन्यस्याप्राधान्येन सहभावाङ्गीकारात् । अत्र वैवस्वतमन्वन्तरे ।।१३५।।

**भारतश्री–** अत्र वैवस्वतमन्वन्तरे । सप्तमोऽपि स एव पुरन्दरः । तथा च पुरन्दरस्य मन्वन्तरद्वये इन्द्रत्वं ज्ञातव्यम् ।।१३४।।

**क्रमात् संस्कारान्[1] क्षत्रियाणामवाप्य तेऽवर्द्धन्त स्वतवसो महित्वना ।**
**सर्वे सर्वज्ञाः सर्वधर्मोपपन्नाः सर्वे भक्ताः केशवेऽत्यन्तयुक्ताः ।।१३६।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यवरचिते श्रीमन्महाभारततात्पर्यनिर्णये द्वादशोऽध्यायः ।।

**व्यासतीर्थीया–** स्वतवसः स्वरूपभूततेजस्विनः । महित्वना महिम्ना । अत्यन्तमुपाययुक्ता ।।१३६।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां द्वादशोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** ते पाण्डवाः क्रमात् ज्येष्ठक्रमात् स्वतवसः स्वरूपभूततवसः महित्वना महिम्ना अत्यन्तयुक्ताः अत्यन्तं हरौ मनोयोगवन्तः 'तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः' इति श्रुतिरुक्तार्थे सम्मतित्वेनोदाहृता इति वेदितव्या ।।१३६।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
तात्पर्यदीपिकायां द्वादशोऽध्यायः ।।

**वादिराजीया–** **'तेऽवर्धन्त स्वतवसो महित्वना' इति श्रुतेः पादं स्वश्लोके पादत्वेन कथयताऽऽचार्येण स्वग्रन्थस्य छन्दःसमानता सूचिता । नहि सौवर्णसर्वाङ्गं विना पादमात्रं सौवर्णं क्वापि दृष्टम् । अतः श्लोकैकपादस्य श्रौतत्वे सर्वोऽपि श्लोकः श्रुतिसमान एवेति कथं न सिद्ध्येदिति भावः । पञ्चपाण्डवानां पूर्वेन्द्रत्वं श्रौतमित्यपि सूचितम् । तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः । विष्णुर्यद्धावद् वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ।। [ऋ.सं.१.८५.७] तथाहि– ये नाकं**

---

१. 'ततः पाण्डुः क्रियाः सर्वा पाण्डवानामकारयत् । गर्भाधानादिकृत्यानि चौलोपनयनानि च ।। काश्यपः कृतवान् सर्वमुपाकर्म च भारत । चौलोपनयनादूर्ध्वं ऋषभाक्षा यशस्विनः । वैदिकाध्ययने सर्वे समपद्यन्त पारगाः ।।' [१.१३३.४५-४७] इत्यादिभारतवाक्यात् पाण्डवाः श्रीकृष्णप्रेषितकाश्यपनामकपुरोहितात् क्षत्रियोचितचौलोपनयनादिसंस्कारान् प्रापुरित्यवगम्यते । पाण्डवाः अधुनैव सागरपर्यन्तां महीं जितवतः समाचरितशताश्वमेधात् शतशृङ्गे तपसि वर्तमानात् शर्यातिप्रथमपुत्रात् शुक्रनामकराज्ञः तदुपकरणश्रेष्ठैः धनुर्विद्यादिषु पारगा अभूवन् इति ज्ञायते । 'गदायां पारगो भीमस्तोमरेषु युधिष्ठिरः । असिचर्मणि निष्णातौ यमौ सत्ववतां वरौ ।। धनुर्वेदे गतः पारं सव्यसाची परन्तपः । ...अनुज्ञाय ततो राजा शक्तिं खड्गं ततः शरान् ।। धनुश्च दमतां श्रेष्ठस्तालमात्रं महाप्रभम् । विपाठक्षुरनाराचान् गृध्रपक्षैरलङ्कृतान् ।। ददौ पार्थाय संहृष्टो महोरगसमप्रभान् । अवाप्य सर्वशस्त्राणि मुदितो वासवात्मजः ।। एकवर्षान्तरास्त्वेवं परस्परमरिन्दमाः ।।' इति आदिपर्वणि.१३३.५१-५७ ।

तस्थुः स्थापयामासुः पालयामासुरिति यावत् । ये तं नाकं उरुसदः सभां चक्रिरे ।। विष्णुः विष्णुरूपी वामनः वृषणं सर्वाभीष्टवर्षणसमर्थः मदच्युतं ऐश्वर्यमदेन च्युतं शक्रेणाहङ्कारे कृते सति दुर्वाससः शापेन च्युतमित्यर्थः । यत् नाकस्थानं आवत् 'अव रक्षण' इति धातोः अरक्षत् । ह प्रसिद्धम् । ये वयः वीत्युपसर्गस्य विशिष्टवाचकत्वात् । विः वी वयः इति रूपनिष्पत्त्या वयः श्रेष्ठाः प्रिये अधि अधिके बर्हिषी यज्ञबर्हिषि नसीदन् असीदन् । 'षदॢ विषरण गत्यवसादनेषु' इति धातोः । दैत्यैर्विघ्ने कृतेऽपि अवसन्नाः विषण्णाः [न] आसन्नित्यर्थः । 'तनु विस्तारे' इति धातोः भावार्थे औणादिके इवसुन्प्रत्यये कृते 'डिति च' इति टेर्लोपे च कृते सति रुत्वविसर्गे च कृते तवो विस्तारः । स्वतवसः स्वभावेन तवः विस्तारो येषां ते स्वतवसः भूमौ कुन्तीमाद्र्योर्जाताः ते पञ्चेन्द्राः महित्वना महिम्ना अवर्धन्त दिने दिने अभिवृद्धिं प्राप्ता इत्यर्थपर्यालोचनया पञ्चपाण्डवानामपि पञ्चेन्द्रतायाः स्पष्टत्वादिति ग्रन्थकारस्य भावः । युक्ताः मनोयोगयुक्ताः ।।१३७।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां द्वादशोऽध्यायः ।।

**वरदराजीया–** क्रमात् ज्येष्ठादिक्रमात् जातकर्मादिक्रमाद्वा क्षत्रियाणां विहितान् संस्कारान् अवाप्य स्वतवसः स्वरूपतेजसो महित्वना महिम्ना सह अवर्धन्त अभ्यवर्धन्तेत्यर्थः । उक्तार्थस्य वेदोक्तत्वसूचनार्थं [वैदिकः पदान्ते पठिताः] सर्वे युधिष्ठिराद्याः सर्वज्ञाः सर्वविद्याभिज्ञाः सर्वभागवतधर्मैरुपपन्नाः । केशवेऽत्यन्तयोगयुक्ताः । सर्वे भक्ता इत्यशेषमतिमङ्गलम् ।।१३७।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
मन्दसुबोधिन्यां द्वादशोऽध्यायः ।।

**अनन्तभट्टीया–** स्वतवसः स्वरूपतेजस्विनः । महित्वनः महिम्ना युक्ताः । उपायवन्तः ।।१३६।।

।। इति श्रीमुष्णं अनन्ताचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
तन्त्रमालायां [सत्तत्त्वमालायां] द्वादशोऽध्यायः ।।

**जनार्दनीया–** स्वतवसः स्वरूपभूतसामर्थ्यवन्तः ते पाण्डवाः क्रमात् संस्कारयोग्यकालक्रमात्, ज्येष्ठक्रमात् वा क्षत्रियाणां योग्यान् संस्कारान् अवाप्य, महित्वना महिम्ना अवर्धन्त अभिवृद्धिं प्रापुः । सर्वे पाण्डवाः सर्वज्ञाः, सर्वधर्मैः स्वविहितविष्णुप्रीतिकरधर्मैः उपपन्नाः युक्ताः सर्वे केशवे भक्ताः भक्तिमन्तः केशवे अत्यन्तयुक्ताः मनोयोगयुक्ताः, अवर्धन्तेति सम्बन्धः । पाण्डवाः श्रुतौ प्रतिपाद्याः इति ज्ञापनार्थं 'तेऽवर्धन्त' [ऋ.१.८५.५] इति आश्वलायनशाखायां विद्यमानश्रुतिरध्यायान्ते उदाहृता ।।१३६।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्प्रयुतात् ।
पूर्तिं तस्य कृतौ सतां सुखकरोऽध्यायस्तथा द्वादशः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां द्वादशोऽध्यायः ।।

**ताम्रपर्णीया– तेऽवर्धन्तेति** श्रुतिप्रतीकग्रहणेन पाण्डवानामिन्द्रत्वं श्रौतमिति दर्शयति । तथा हि श्रुतिः । तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरुचक्रिरे सदः । विष्णुर्यद्धावद् वृषणं मदच्युतं वयो नसीदन्नधि बर्हिषि प्रिये' । अयमर्थः । वृषणं सर्वाभीष्टसेचकं मदच्युतं इन्द्रमदेन दूर्वासशापादिन्द्रैश्वर्येण च्युतं हीनं यन्नाकं विष्णुः वामनात्मना अवत् अरक्षत् । तन्नाकं ये तस्थुः स्थापयामासुः पालयामासुः। सदः स्वर्गसदः उरुचक्रिरे सम्यक्चक्रिरे अलश्चक्रिरे इति यावत् । ये च वयः वयगतौ सर्वज्ञाः प्रिये बर्हिषि निषीदन् नावसीदन् भगवदनुग्रहेण यज्ञभागविघ्नीभूतदैत्यविनाशवन्त इति यावत् । ते स्वतवसः स्वरूपभूतसामर्थ्ययुक्ताः इन्द्राः महित्वना महिम्ना कुन्तीमाद्र्योः अवतीर्य भूमाववर्धन्तेति । अत्यन्तयुक्ताः अत्यन्तमनोयोगयुक्ता ।।१३६।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां [प्रमाणमालायां] द्वादशोऽध्यायः ।।

**अतिविशद–** तेऽवर्धन्त स्वतवसो महित्वना इत्यनेन

तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः ।
विष्णुर्यद्धावदद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ।।

इत्यन्तां ऋचं स्वोक्तार्थे सूचयति । तदर्थः । ते पूर्वमन्त्रे प्रक्रान्ताः पाण्डवा स्वतवसः स्वसामर्थ्येन तवः बलं येषां ते तथा । स्वाश्रयबला इत्यर्थः । स्वः स्वतन्त्रो विष्णुः । तेन बलं येषां ते तथा। तवशब्दस्य बलनामसु पाठात् । महित्वना महिम्ना स्वर्गारोहणकाले नाकं स्वर्गं तस्थुः । स्वमहिम्नैव उरु विस्तीर्णं सदः सभां चक्रिरे । मयादिहस्तेन कारयामासुरित्यर्थः । स्वतन्त्रेण विष्णुना बलं प्राप्ता इति पूर्वमुक्तं तदाह । यत् यस्मात् कारणात् विष्णुः तेषां मध्ये वृषणं श्रेष्ठं मदच्युतं मदं च्यावयतीति मदच्युत् तं मदच्युतं वायुरूपं भीमं अवत् अरक्षत् इति सर्वप्रसिद्धं यस्मात्तस्मात् कारणात् ते तदावेशिनो अवर्धन्त वृद्धिं प्राप्ता इत्यर्थः । किंभूताः वयो न परमात्मन इव तत्सदृशा इत्यर्थः । 'विः पक्षिपरमात्मनोः' इत्युक्तत्वात् । पुनः किंभूताः । प्रिये प्रीतिविषये बर्हिषि यज्ञे अधि सीदन् राजसूयादिधर्माननुतिष्ठितवन्त इत्यर्थः । अत एवोक्तमाचार्यैः 'सर्वे सर्वज्ञा सर्वधर्मोपपन्ना सर्वे भक्ता केशवेऽत्यन्तयुक्ता' इति ।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ द्वादशोऽध्यायः ।।

**भारतश्री–** स्वतवसः स्वरूपतेजसः स्वेन विष्णुना तवः पालनं येषां ते तथा विष्णुपालिता इत्यर्थः ।।१३६।।

।। इति डम्वलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां द्वादशोऽध्यायः ।।

**चट्टि–** स्वतवसः स्वरूपभूतसामर्थ्यवन्तः ते पाण्डवाः क्रमात् ज्येष्ठादिक्रमाज्जातकर्मादिक्रमाद् क्षत्रियाणां योग्यान् संस्कारान् अवाप्य, महित्वना महिम्ना अवर्धन्त अभिवृद्धिं प्रापुः । सर्वे पाण्डवाः सर्वज्ञाः सर्वविद्याभिज्ञाः सर्वैः स्वविहितभागवतधर्मैः उपपन्नाः युक्ताः । केशवे भक्ताः भक्तिमन्तः केशवे अत्यन्तयुक्ताः मनोयोगयुक्ताः अवर्धन्तेति सम्वन्धः ।।१३६।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां द्वादशोऽध्यायः ।।

★★★

# अथ त्रयोदशोऽध्यायः

**गर्गः शूरसुतोक्त्या व्रजमायात् सात्वतां पुरोधास्सः[1] ।**
**चक्रे क्षत्रिययोग्यान् संस्कारान् कृष्णरोहिणीसून्वोः ॥१॥**

**व्यासतीर्थीया–** कृष्णकथामाह– **गर्ग इत्यादिना** ॥१-२॥

**वरदराजीया–** ॥ **गर्ग इत्यादि** ॥ सात्वतां यादवविशेषाणां पुरोधाः पुरोहितो गर्गाचार्यः शूरसुतस्य वसुदेवस्योक्त्या आज्ञया व्रजं गोकुलमायात् प्राप । स गर्गः कृष्णरोहिणीसून्वोः कृष्णरामयोः क्षत्रियाणां कर्तुं योग्यान् विहितान् संस्कारान् जातकर्मादीन् चक्रे ॥१॥

**अनन्तभट्टीया–** सात्वतां यादवविशेषाणाम् ॥१॥

**जनार्दनीया–** 'अक्षत्रसंस्कारयुतो जातोऽपि क्षत्रिये कुले । न क्षत्रियो हि भवति यथा व्रात्यो द्विजोत्तमः ॥' इति स्मरणात् स्वौरसपुत्रबुद्ध्या वसुदेवपुत्रोऽयमित्यजानतो नन्दगोपात् प्राप्तवैश्ययोग्य-संस्कारस्य कृष्णस्याक्षत्रियत्वं स्यादित्याशङ्कापनुत्त्यर्थं कृष्णबलभद्रयोः गर्गो रहः क्षत्रिययोग्यसंस्कारान् चक्र इत्याह– **गर्ग इत्यादिना** ॥ सात्वतां यादवविशेषाणां पुरोधाः पुरोहितो गर्गः गर्गाचार्यः शूरसुतस्य वसुदेवस्य उक्त्या रामकृष्णयोः संस्कारान् कुर्वित्येवंरूपवाक्येनोक्तः सन् व्रजं गोस्थानं प्रति आयात् अगात् । स गर्गः संस्कारान् जातकर्मादिसंस्कारांश्चक्रे । यशोदासूनुर्वैश्यसंस्कारार्हः यतः अत एव श्रीमद्भगवत्पादाचार्यैः 'यशोदारोहिणीसून्वोः' इति प्रयोगो न कृत इति भावः ॥१॥

**चट्टि–** श्रीकृष्णकथामाह– **गर्ग इत्यादिना** ॥ सात्वतां यादवविशेषाणां पुरोधाः पुरोहितः सः गर्गः गर्गाचार्यः शूरसुतस्य वसुदेवस्योक्त्या श्रीरामकृष्णयोः संस्कारान् कुर्वित्येवं रूपवाक्येनोक्तः सन् व्रजं गोकुलमायात् प्राप । सः गर्गः श्रीकृष्णरोहिणीसून्वोः कृष्णरामयोः क्षत्रिययोग्यान् क्षत्रियाणां कर्तुं योग्यान् संस्कारान् जातकर्मादिसंस्कारान् चक्रे ॥१॥

---

१. 'गर्गः पुरोहितो राजन् यदूनां सुमहातपाः । व्रजं जगाम नन्दस्य वसुदेवप्रचोदितः ॥' इति भागवते१०.८.१ ।

**ऊचे नन्द सुतोऽयं तव विष्णोर्नावमो गुणैः सर्वैः[१] ।**
**सर्वे चैतत् त्राताः सुखमाप्स्यन्त्युन्नतं भवत्पूर्वाः ॥२॥**

**वेदाङ्गतीर्थीया–** ॥१॥ ऊचे गर्गः ॥२॥

**वरदराजीया–** ऊचे गर्गो नन्दमिति शेषः । किमिति । हे नन्द अयं तव सुतः कृष्णः सर्वैर्गुणैः विष्णोः नावमः न्यूनो न भवति । किन्तु विष्णुरेव । भवान् पूर्व आदिर्येषां ते तथा सर्व एतेन कृष्णेन त्राताः रक्षिताः सन्तः उन्नतं अधिकं सुखं आप्स्यन्ति प्राप्स्यन्ति ॥२॥

**अनन्तभट्टीया–** तव सुतः । एतत्त्राता एतद्रक्षिताः ॥२॥

**जनार्दनीया–** गर्गो नन्दं प्रति इति वाक्यशेषः, ऊचे । किमिति? हे नन्द! अयं पुरोवर्ती तव सुतः कृष्णः सर्वैः गुणैः विष्णोः सकाशात् अवमः अनुच्चो न भवति । किन्तु विष्णुतुल्य इत्यर्थः । विष्णोः समाधिकरहितत्वात् तत्समः स एवेति भावः । एतेन कृष्णेन त्राताः रक्षिताः भवान् पूर्वो येषां ते तथा । सर्वे उन्नतं सुखं उच्चसुखमाप्स्यन्ति ॥२॥

**भावचन्द्रिका–** ॥१॥ विष्ण्वपेक्षया समाधिकयोरप्रसक्तेः अवमो नेत्याह । अवतारे न्यूनता नेति भावेनोच्यते ॥२॥

**चट्टि–** सः गर्गः नन्दं प्रतीति शेषः । ऊचे । किमिति । हे नन्द अयं तव सुतः श्रीकृष्णः सर्वैः गुणैः विष्णोः सकाशात् नावमः न्यूनो न भवति । विष्णुतुल्य इत्यर्थः । विष्णोः समाधिकरहितत्वात् तत्समस्स एवेति भावः । भवान् पूर्वो येषां ते भवत्पूर्वाः सर्वे च एतेन श्रीकृष्णेन त्राता रक्षिता सन्तः उन्नतमधिकं सुखं आप्स्यन्ति ॥२॥

**इत्युक्तः स मुमोद प्रययौ गर्गोऽपि केशवोऽथाद्यः ।**
**[२]स्वपदैरग्रजयुक्तश्चक्रे पुण्यं व्रजन् व्रजोद्देशम् ॥३॥**

**व्यासतीर्थीया–** व्रजोद्देशं व्रजभूमिम् ॥३॥

**वेदाङ्गतीर्थीया–** अथ आद्यः केशवः व्रजन् गोकुले पर्यटन् व्रजोद्देशं व्रजप्रदेशं पुण्यं पवित्रं चक्रे॥३॥

---

१. 'बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥ एष वः श्रेय आधास्यत् गोपगोकुलनन्दनः । अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः । श्रिया कीर्त्यानुभावेन गोपायस्व समाहितः ॥' इति भागवते १०.८.१५-१६-१९

२. 'कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले । अधृष्टजानुभिः पद्भिः विचक्रमतुरञ्जसा ॥' इति भागवते १०.८.२६

**वरदराजीया–** इत्युक्तः सः नन्दः प्रमुमोद सन्तुष्टोऽभूत् । गर्गोऽपि प्रययौ । अथ आदिपुरुषः केशवः कृष्णो अग्रजेन बलरामेण युक्तः व्रजन् तत्र तत्र सञ्चरन् व्रजोद्देशं गोकुलप्रदेशं स्वपदैः स्वप्रतिपदैः पुण्यं पवित्रं चक्रे ।।३।।

**अनन्तभट्टीया–** व्रजोद्देशं व्रजभूमिम् ।।३।।

**जनार्दनीया–** स नन्दः मुमोद । गर्गोऽपि ययौ । अथ आद्यः आदिपुरुषः अग्रजेन बलेन युक्तः केशवः व्रजन् इतस्ततः पर्यटन् स्वस्य पदैः पादविन्यासैः व्रजस्य उद्देशं उत्तमप्रान्तमपि पुण्यं अतिपुण्यमित्यर्थः, चक्रे ।।३।।

**ताम्रपर्णीया–** ।।१-२।। **स्वपदैरिति** ।। ननु 'सोऽवनि मध्ये रङ्गन्नरिधरयुग्वालरूपमध्येरं गन्' इति यमकभारते बालरूपं वायुमारुह्य व्रजभूसञ्चरणोक्तेः कथं स्वपदैरित्युक्तिरिति चेत् कदाचित् वायुवाहनत्वेऽप्यन्यदा स्वपदैर्गमनोपपत्तेः । वस्तुतस्तु वाय्वारूढस्यापि ऐश्वर्यवशात् स्वपदैर्गमनं सम्भवति । अन्यथा तदानीन्तनानां कृष्णो भुवि स्वपदैर्गच्छतीति प्रत्ययस्य भ्रमत्वापत्तेः ।।३।।

**चट्टि–** इत्युक्तः गर्गेणेति शेषः । सः नन्दः मुमोद सन्तुष्टोऽभूत् । गर्गोऽपि प्रययौ । अथाद्यः आदिपुरुषः केशवः श्रीकृष्णः अग्रजेन बलरामेण युक्तः व्रजन् इतस्ततः सञ्चरन् व्रजोद्देशं गोकुलप्रदेशं स्वस्य पदैः पादविन्यासैः पुण्यं पवित्रं चक्रे ।।३।।

**स कदाचिच्छिशुभावं कुर्वन्त्या मातुरात्मनो भूयः ।**
**अपनेतुं परमेशो मृदं[1] जघासेक्षतां वयस्यानाम् ।।४।।**

**व्यासतीर्थीया–** शिशुभावं शिशुत्वभावनाम् ।।४।।

**वेदाङ्गतीर्थीया–** आत्मनः स्वस्य शिशुभावं शिशुबुद्धिं कुर्वन्त्याः मातुः शिशुभावं अपनेतुम् ।।४।।

**वादिराजीया–** ।।१-३।। शिशुभावं शिशुरिति भावं बुद्धिं भ्रममिति यावत् । कुर्वन्त्याः मातुः । आत्मनो मातुः, शिशुभावमपनेतुमित्यावृत्त्या योजना ।।४।।

**वरदराजीया–** स कृष्णः कदाचित् वयस्यानां समानवयस्कानां बालानां प्रेक्षतां पश्यतां सतां मृदं मृत्तिकां जघास भक्षितवान् । किं कर्तुं आत्मनः स्वस्य शिशुभावं मदीयोऽयं शिशुरिति भावं कुर्वन्त्या मातुः यशोदायाः भूयः पुनरपि अपनेतुम् । शिशुभावमित्यत्रापि सम्बध्यते । निवारयितुं जघासेति सम्बन्धः ।।४।।

---

१. एकदा क्रीडमानास्ते रामाद्या गोपबालकाः । कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ।। इति भागवते.१०.१०.३२।

**अनन्तभट्टीया–** शिशुभावं शिशुभावताम् । एतदपनेतुं ...पि सम्बध्यते । ईक्षतां सतां गोपाल..भक्षतः।।

**जनार्दनीया–** परमेशः समर्थः स कृष्णः आत्मनः स्वस्य शिशुः मम बालोऽयमिति भावं बुद्धिं कुर्वन्त्याः मातुः यशोदायाः भूयः अपनेतुं शिशुभावं नाशयितुम् । कदाचिद् वयस्यानां समवयस्कानाम् ईक्षतां पश्यतां सतां मृदं मृत्तिकां जघास भक्षितवान् । 'अद भक्षणे' लिट् ।।४।।

**ताम्रपर्णीया–** शिशुभावं शिशुत्वभावनाम् ।।४।।

**भावचन्द्रिका–** हरेः शुभभोक्तृत्वात् मृद्भक्षणस्य मद्यपानसमत्वात् जघासेव न तु जघास ।।४।।

**चट्टि–** परमेशः परमसमर्थः सः श्रीकृष्णः आत्मनः शिशुभावं शिशुः मम बालोऽयमिति भावं बुद्धिं कुर्वन्त्याः मातुः यशोदायाः भूयः अपनेतुं शिशुभावं निवारयितुं कदाचित् वयस्यानां समानवयस्कानां ईक्षतां पश्यतां सतां मृदं मृत्तिकां जघास भक्षयामास ।।४।।

**मात्रोपालब्ध ईशो मुखविवृतिमकर्नाम्ब मृद्भक्षिताऽहं**
**पश्येत्यास्यान्तरे तु प्रकृतिविकृतियुक् सा जगत् पर्यपश्यत् ।**
**इत्थं देवोऽप्यचिन्त्यामपरदुरधिगां शक्तिमुच्चां प्रदर्श्य**
**प्रायो ज्ञातात्मतत्त्वां पुनरपि भगवानावृणोदात्मशक्त्या[1] ।।५।।**

**व्यासतीर्थीया–** अकः अकरोत् । आह च नाम्बेति । विकृतिः महदादिः । अपरदुरधिगां अपरैरप्राप्यां उच्चामुत्कृष्टाम् ।।५।।

**वेदाङ्गतीर्थीया–** मात्रा उपलब्धः भर्त्सितः ईशः हे अम्ब अहं मृद्भक्षिता न । पश्य ममास्यं पश्य इति एवमुक्त्वा मुखविवृतिं अकः अकरोत् । प्रकृतिविकृतियुक् प्रकृतिस्त्रिगुणात्मिका जडप्रकृतिः, विकृतिः महदादिः । प्रायः प्रायेण ज्ञातात्मतत्वां यशोदां अवगतस्वरूपशक्तिं पुनरात्मशक्त्या स्वसामर्थ्येन आवृणोत् जुगूहे ।।५।।

---

१. 'सा गृहीत्वा करे कृष्णं उपालभ्य हितैषिणी । यशोदा भयसम्भ्रान्तप्रेक्षणाक्षमभाषत ।। कस्मात् मृदमदीनात्मन् भवान् भक्षितवान् रहः । वदन्ति तावका ह्येते कुमारास्तेऽग्रजोप्ययम् ।। श्रीकृष्ण उवाच– नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः । यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखम् ।। यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान् हरिः । व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः ।। सा तत्र ददृशे विश्वं जगत् स्थास्नु च खं दिशः । साद्रिद्वीपाब्धिभूगोळं सवाय्वग्नीन्दुतारकम् ।। ज्योतिश्चक्रं जलं तेजो नभः स्वर्वियदेव च । वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः ।।... इत्थं विदिततत्वायां गोपिकायां स ईश्वरः । वैष्णवीं व्यतनोन्मायां प्रजास्नेहमयीं प्रभुः ।। सद्यो नष्टस्मृतिर्गोपी आरोप्यारोहमात्मजम् । प्रवृद्धस्नेहकलिलहृदया सा यथा पुरा ।। त्रय्या चोपनिषद्भिश्च साङ्ख्ययोगैश्च शाश्वतैः । उपगीयमानमाहात्म्यं हरिं सामन्यतात्मजम् ।।' इति भागवते १०.९.३५-४५ ।

**वादिराजीया–** मुखविवृतिमक इत्यत्र अकः अकरोदिति वैदिकं पदम् । 'इष इष्टव्रता अकः' इति श्रुतौ प्रयोगदर्शनात् । प्रकृतिः मूलप्रकृतिः । विकृतिः तत्कार्याणि महदादीनि ।।५-६।।

**वरदराजीया–** मात्रा यशोदया उपालब्धः पर्यनुयुक्त ईशो कृष्णः मुखविवृतिं मुखविस्तृतिम्, अकः विकरणलोपः, अकरोत् । किं कुर्वन् हे अम्ब मातः अहं मृद्भक्षिता मृत्तिकाभक्षको न भवामि । पश्य मे मुखमिति वदन्नित्यर्थः । सा तु यशोदा आस्यान्तरे मुखमध्ये प्रकृतिविकृतिभिः युक्तं मूलप्रकृत्या महदादिभिश्च सहितं जगत् पर्यपश्यत् दृष्टवती । इत्थं अनेन प्रकारेण भगवान् देवः श्रीकृष्णोऽपि अचिन्त्यां मनसा ध्यातुमशक्यां अत एव अपरैर्दुरधिगां प्राप्तुमशक्यां उच्चां उत्कृष्टां शक्तिं स्वरूपशक्तिं प्रदर्श्य प्रायः प्रायेण ज्ञातात्मतत्वां ज्ञातमात्मतत्त्वं स्वरूपं यया सा तां यशोदां पुनरपि आत्मशक्त्या आवृणोत् आच्छादयामास ।।५।।

**भावविवृतिः–** ।।१-४।। मात्रोपालब्ध ईश इत्यत्र हे अम्ब नाहं मृद्भक्षितेति कथमनृतमुक्तवानिति । 'न विष्णोर्वचनं क्वापि मृषा भवति कर्हिचित्' इत्युक्तिविरोध इति चेन्मैवम् । हे अम्ब मृदुपलक्षितसर्वजगद्भक्षिता ना परमपुरुषः आस्यान्तरे सर्वजगत्पश्येति विवृतिमकः अकरोत् । एवमर्थकथने न विरोधः । एतद्विशेषसूचकस्तुशब्दः । केचित्तु 'मृदं जघासेव न तु जघास' इत्याहुः । तथा सति 'जघास मृत्तिकां देवः कदाचिल्लीलया हरिः' इत्युक्तिविरोधः ।।५-४४।।

**अनन्तभट्टीया–** अकः अकरोत् । विकृतिः महदादिः । अपरदुरधिगां स्वेतराप्राप्याम् ।।५।।

**जनार्दनीया–** मात्रा यशोदया उपालब्धः भर्त्सितः ईशः कृष्णः । हे अम्ब! मृद्भक्षिता मृद्भक्षकः अहं न । आस्यस्य अन्तरे मध्ये पश्येति वदन् मुखस्य विवृतिं प्रसारणं अकः अकरोत् । सा यशोदा प्रकृत्या त्रिगुणात्मिकया जडप्रकृत्या, विकृतिभिः प्रकृतिविकारैः महत्तत्त्वादिभिः युक् युक्तं जगत् पर्यपश्यत् । देवः इत्थं अनेन प्रकारेण अचिन्त्यां स्मर्तुं अशक्याम्, अपरैः स्वान्यैः रमादिभिः दुरधिगां ज्ञातुमशक्याम्, उच्चां उत्कृष्टां शक्तिं स्वरूपशक्तिं प्रदर्श्य, प्रायः बाहुल्येन ज्ञातं आत्मतत्त्वं परमात्मस्वरूपं यया सा तथा । तामपि यशोदामात्मशक्त्या वैष्णवमायया, पुनः पूर्ववदित्यर्थः, आवृणोत् पुत्रस्नेहेनावृतां चक्रे । 'वैष्णवीं व्यतनोत् मायां प्रजास्नेहमयीं प्रभुः । सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम् ।। प्रवृद्धस्नेहकलिलहृदया सा यथा पुरा ।।' [१०.९.४३] इति भागवतवाक्यादुक्तार्थोऽवगन्तव्यः । यद्वा प्रायः पुनरपि ज्ञातं आत्मतत्त्वं स्वस्वरूपं यस्याः शक्तेः सकाशात् तथा तादृशीं शक्तिं आत्मशक्त्या स्वसामर्थ्येन आवृणोत् जुगूहे ।।५।।

**ताम्रपर्णीया–** पश्येत्युक्ते इत्यध्याहार्यम् । वक्त्रे मृदःपतितत्वेऽपि उदरे प्रवेशाभावात् न 'मयोदितं क्वापि न हेयमस्ति' इति वचनविरोधः । अपरदुरधिगां अपरैरप्राप्यां अचिन्त्यां उच्चां शक्तिं युगपदणुत्वमहत्वशक्तिम् ।।५-७।।

**चट्टि–** मात्रा यशोदया उपालब्धः भर्त्सितः ईशः श्रीकृष्णः हे अम्ब अहं मृद्भक्षिता मृद्भक्षको न भवामि । पश्य मे मुखं इति वदन्निति शेषः । मुखस्य विवृतिं प्रसारणं अकः अकरोत् । सा यशोदा आस्यान्तरे मुखमध्ये, प्रकृतिविकृतियुक् प्रकृत्या त्रिगुणात्मिकया जडप्रकृत्या, विकृतिभिः प्रकृतिविकारैः महत्तत्वादिभिः युक् युक्तं जगत् पर्यपश्यत् । देवः श्रीकृष्णोऽपि इत्थमनेन प्रकारेणाचिन्त्यां मनसा ध्यातुमशक्यामपरैः स्वान्यैः रमादिभिः दुरधिगां ज्ञातुमशक्यां उच्चां उत्कृष्टां शक्तिं स्वरूपशक्तिं प्रदर्श्य प्रायो वाहुल्येन ज्ञातमात्मतत्त्वं परमात्मस्वरूपं यया सा तथा तां यशोदां आत्मशक्त्या वैष्णव्या मायया पुनरपि पूर्ववदित्यर्थः । आवृणोत् पुत्रस्नेहेनावृतां चक्रे । 'वैष्णवीं व्यतनोत् मायां प्रजास्नेहमयीं प्रभुः । सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम् ।। प्रवृद्धस्नेककलिलहृदयं सा यथा पुरा ।' इति भागवतवाक्यादुक्तार्थो अवगन्तव्यः ।।५।।

**इति प्रभुः स लीलया हरिर्जगद् विडम्बयन् ।**
**चचार गोष्ठमण्डलेऽप्यनन्तसौख्यचिद्घनः ।।६।।**

**व्यासतीर्थीया–** गोष्ठे चरणं प्रयोजनोद्देशनेत्युक्तम्– **अनन्तेति** ।।६।।

**वरदराजीया–** इत्युक्तप्रकारेण सः प्रभुः हरिः कृष्णो लीलया क्रीडया जगत् विडम्बयन् प्रतारयन् अनन्तयोः सौख्यचितोः आनन्दज्ञानयोः घनः सारोऽपि गोष्ठमण्डले गोकुलप्रदेशे चचार सञ्चारं कृतवान् ।।६।।

**जनार्दनीया–** इति लीलया इत्यादिक्रीडया, क्रीडाभिरित्यर्थः । गोष्ठमण्डले व्रजप्रदेशे ।।६।।

**चट्टि–** प्रभुस्स हरिः श्रीकृष्णः इत्युक्तप्रकारेण लीलया क्रीडया क्रीडादिभिरित्यर्थः । जगद्विडम्वयन् प्रतारयन् अनन्तसुखज्ञानाभ्यां घनोऽपि गोष्ठमण्डले गोकुलप्रदेशे चचार सञ्चारं कृतवान् ।।६।।

**[1]कदाचिदीश्वरः स्तनं पिबन् यशोदया पयः ।**
**[2]सृतं निधातुमुज्झितो बभञ्ज दध्यमत्रकम् ।।७।।**

**वेदाङ्गतीर्थीया–** शृतं पक्वं । 'शृ पाके' इति धातुः । पाकेन उच्छ्वसितमिति भावः ।।७।।

---

१. 'तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः । गृहीत्वा दधिमन्थानं न्यषेधत् प्रीतिमावहन् ।। तमङ्कमारूढमपाययत् स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् । अतृप्तमुत्सृज्य जवेन सा ययौ उत्सिच्यमाने पयसि त्वधिश्रिते ।। सञ्जातकोपः स्फुरितारुणाधरं सन्दश्य दद्भिर्दधिमण्डभाजनम् । भित्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः ।।' इति भागवते १०.१०.४-६ ।

२. 'शृतम्' इति वेदाङ्गतीर्थीयपाठः ।

**वादिराजीया–** मुखविवृतिमक इत्यत्र अकः अकरोदिति वैदिकं पदम् । 'इष इष्टव्रता अकः' इति श्रुतौ प्रयोगदर्शनात् । प्रकृतिः मूलप्रकृतिः । विकृतिः तत्कार्याणि महदादीनि ।।५-६।।

**वरदराजीया–** मात्रा यशोदया उपालब्धः पर्यनुयुक्त ईशो कृष्णः मुखविवृतिं मुखविस्तृतिम्, अकः विकरणलोपः, अकरोत् । किं कुर्वन् हे अम्ब मातः अहं मृद्भक्षिता मृत्तिकाभक्षको न भवामि । पश्य मे मुखमिति वदन्नित्यर्थः । सा तु यशोदा आस्यान्तरे मुखमध्ये प्रकृतिविकृतिभिः युक्तं मूलप्रकृत्या महदादिभिश्च सहितं जगत् पर्यपश्यत् दृष्टवती । इत्थं अनेन प्रकारेण भगवान् देवः श्रीकृष्णोऽपि अचिन्त्यां मनसा ध्यातुमशक्यां अत एव अपरैर्दुरधिगां प्राप्तुमशक्यां उच्चां उत्कृष्टां शक्तिं स्वरूपशक्तिं प्रदर्श्य प्रायः प्रायेण ज्ञातात्मतत्त्वां ज्ञातमात्मतत्त्वं स्वरूपं यया सा तां यशोदां पुनरपि आत्मशक्त्या आवृणोत् आच्छादयामास ।।५।।

**भावविवृतिः–** ।।१-४।। मात्रोपालब्ध ईश इत्यत्र हे अम्ब नाहं मृद्भक्षितेति कथमनृतमुक्तवानिति । 'न विष्णोर्वचनं क्वापि मृषा भवति कर्हिचित्' इत्युक्तिविरोध इति चेन्मैवम् । हे अम्ब मृदुपलक्षितसर्वजगद्भक्षिता ना परमपुरुषः आस्यान्तरे सर्वजगत्पश्येति विवृतिमकः अकरोत् । एवमर्थकथने न विरोधः । एतद्विशेषसूचकस्तुशब्दः । केचित्तु 'मृदं जघासेव न तु जघास' इत्याहुः । तथा सति 'जघास मृत्तिकां देवः कदाचिल्लीलया हरिः' इत्युक्तिविरोधः ।।५-४४।।

**अनन्तभट्टीया–** अकः अकरोत् । विकृतिः महदादिः । अपरदुरधिगां स्वेतराप्राप्याम् ।।५।।

**जनार्दनीया–** मात्रा यशोदया उपालब्धः भर्त्सितः ईशः कृष्णः । हे अम्ब! मृद्भक्षिता मृद्भक्षकः अहं न । आस्यस्य अन्तरे मध्ये पश्येति वदन् मुखस्य विवृतिं प्रसारणं अकः अकरोत् । सा यशोदा प्रकृत्या त्रिगुणात्मिकया जडप्रकृत्या, विकृतिभिः प्रकृतिविकारैः महत्तत्त्वादिभिः युक् युक्तं जगत् पर्यपश्यत् । देवः इत्थं अनेन प्रकारेण अचिन्त्यां स्मर्तुं अशक्याम्, अपरैः स्वान्यैः रमादिभिः दुरधिगां ज्ञातुमशक्याम्, उच्चां उत्कृष्टां शक्तिं स्वरूपशक्तिं प्रदर्श्य, प्रायः बाहुल्येन ज्ञातं आत्मतत्त्वं परमात्मस्वरूपं यया सा तथा । तामपि यशोदामात्मशक्त्या वैष्णवमायया, पुनः पूर्ववदित्यर्थः, आवृणोत् पुत्रस्नेहेनावृतां चक्रे । 'वैष्णवीं व्यतनोत् मायां प्रजास्नेहमयीं प्रभुः । सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम् ।। प्रवृद्धस्नेहकलिलहृदया सा यथा पुरा ।।' [१०.९.४३] इति भागवतवाक्यादुक्तार्थोऽवगन्तव्यः । यद्वा प्रायः पुनरपि ज्ञातं आत्मतत्त्वं स्वस्वरूपं यस्याः शक्तेः सकाशात् तथा तादृशीं शक्तिं आत्मशक्त्या स्वसामर्थ्येन आवृणोत् जुगूहे ।।५।।

**ताम्रपर्णीया–** पश्येत्युक्ते इत्यध्याहार्यम् । वक्त्रे मृदःपतितत्वेऽपि उदरे प्रवेशाभावात् न 'मयोदितं क्वापि न हेयमस्ति' इति वचनविरोधः । अपरदुरधिगां अपरैरप्राप्यां अचिन्त्यां उच्चां शक्तिं युगपदणुत्वमहत्वशक्तिम् ।।५-७।।

**चट्टि–** मात्रा यशोदया उपालब्धः भर्त्सितः ईशः श्रीकृष्णः हे अम्ब अहं मृद्भक्षिता मृद्भक्षको न भवामि । पश्य मे मुखं इति वदन्निति शेषः । मुखस्य विवृतिं प्रसारणं अकः अकरोत् । सा यशोदा आस्यान्तरे मुखमध्ये, प्रकृतिविकृतियुक् प्रकृत्या त्रिगुणात्मिकया जडप्रकृत्या, विकृतिभिः प्रकृतिविकारैः महत्तत्वादिभिः युक् युक्तं जगत् पर्यपश्यत् । देवः श्रीकृष्णोऽपि इत्थमनेन प्रकारेणाचिन्त्यां मनसा ध्यातुमशक्यामपरैः स्वान्यैः रमादिभिः दुरधिगां ज्ञातुमशक्यां उच्चां उत्कृष्टां शक्तिं स्वरूपशक्तिं प्रदर्श्य प्रायो बाहुल्येन ज्ञातमात्मतत्त्वं परमात्मस्वरूपं यया सा तथा तां यशोदां आत्मशक्त्या वैष्णव्या मायया पुनरपि पूर्ववदित्यर्थः । आवृणोत् पुत्रस्नेहेनावृतां चक्रे । 'वैष्णवीं व्यतनोत् मायां प्रजास्नेहमयीं प्रभुः । सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम् ।। प्रवृद्धस्नेककलिलहृदयं सा यथा पुरा ।' इति भागवतवाक्यादुक्तार्थो अवगन्तव्यः ।।५।।

**इति प्रभुः स लीलया हरिर्जगद् विडम्बयन् ।**
**चचार गोष्ठमण्डलेऽप्यनन्तसौख्यचिद्घनः ।।६।।**

**व्यासतीर्थीया–** गोष्ठे चरणं प्रयोजनोद्देशनेत्युक्तम्– **अनन्तेति** ।।६।।

**वरदराजीया–** इत्युक्तप्रकारेण सः प्रभुः हरिः कृष्णो लीलया क्रीडया जगत् विडम्बयन् प्रतारयन् अनन्तयोः सौख्यचितोः आनन्दज्ञानयोः घनः सारोऽपि गोष्ठमण्डले गोकुलप्रदेशे चचार सञ्चारं कृतवान् ।।६।।

**जनार्दनीया–** इति लीलया इत्यादिक्रीडया, क्रीडाभिरित्यर्थः । गोष्ठमण्डले व्रजप्रदेशे ।।६।।

**चट्टि–** प्रभुस्स हरिः श्रीकृष्णः इत्युक्तप्रकारेण लीलया क्रीडया क्रीडादिभिरित्यर्थः । जगद्विडम्बयन् प्रतारयन् अनन्तसुखज्ञानाभ्यां घनोऽपि गोष्ठमण्डले गोकुलप्रदेशे चचार सञ्चारं कृतवान् ।।६।।

**[१]कदाचिदीश्वरः स्तनं पिबन् यशोदया पयः ।**
**[२]सृतं निधातुमुज्झितो बभञ्ज दध्यमत्रकम् ।।७।।**

**वेदाङ्गतीर्थीया–** शृतं पक्वं । 'शृ पाके' इति धातुः । पाकेन उच्छ्वसितमिति भावः ।।७।।

---

१. 'तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः । गृहीत्वा दधिमन्थानं न्यषेधत् प्रीतिमावहन् ।। तमङ्कमारूढमपाययत् स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् । अतृप्तमुत्सृज्य जवेन सा ययौ उत्सिच्यमाने पयसि त्वधिश्रिते ।। सञ्जातकोपः स्फुरितारुणाधरं सन्दश्य दद्भिर्दधिमण्डभाजनम् । भित्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः ।।' इति भागवते १०.१०.४-६ ।

२. 'शृतम्' इति वेदाङ्गतीर्थीयपाठः ।

**वादिराजीया–** पयः सृतं निधातुमित्यत्र पयः सृतं वीक्ष्य निधातुं पात्रमध्ये निधातुमिति योग्यपदाध्याहारेण योजना ।।७।।

**मधुसूदनीया–** ।।१-६।। दध्यमत्रकं दध्नः अमत्रकं पात्रं दधिभाण्डमित्यर्थः । 'अमत्रं भाजनं पात्रम्' इत्यभिधानम् ।।७-१५।।

**वरदराजीया–** ईश्वरः कृष्णः स्तनं पिबन् स्तनपानं कुर्वन् यशोदया उज्झितः अधस्थापितः कुतः सृतं अधिकतापेन भाण्डाद्बहिर्गलितं पयः क्षीरं निधापयितुं उत्तारयितुं इति यावत् । दध्यमत्रकं दधिभाण्डं बभञ्ज भञ्जितवान् ।।७।।

**अनन्तभट्टीया–** सृतं भाण्डाद्बहिर्गतम् । दध्यमत्रकं दधिभाण्डम् ।।७।।

**जनार्दनीया–** सृतं भाण्डादुच्छ्वसितं पयः क्षीरं निधातुं चुल्याः सकाशादधः स्थापनार्थं यशोदया उज्झितः मुक्तः अधः स्थापितः सन् दध्यमत्रकं मथ्यमानदधिसम्बन्धि अमत्रकं पात्रं बभञ्ज स्फोटयामास । 'अमत्रं भाजनं पात्रम्' इत्यभिधानम् ।।७।।

**अतिविशद–** अमत्रकं पात्रम् । 'अमत्रं भाजनं पात्रम्' इत्यभिधानात् ।

**भावचन्द्रिका–** दधिमथनसमये स्तन्यपानार्थं प्रवृत्तः तदा सृतं पयो निधातुं गतायां यशोदायां स्वयं तदा स्तन्यपानेनातृप्तः कोपाद्बभञ्जेति ।।७।।

**चट्टि–** ईश्वरः श्रीकृष्णः कदाचित् स्तनं पिबन् स्तन्यपानं कुर्वन् सन् सृतं अधिकतापेन भाण्डादुच्छ्वसितं पयः क्षीरं निधातुमत्तारयितुं यशोदयोज्झितः अधस्थापितस्सन् दध्यमत्रकं [मथ्नं न ] दध्नः अमत्रकं दधिभाण्डमित्यर्थः । बभञ्ज स्पोटयामास । 'अमत्रं भाजनं पात्रम्'त्यभिधानम् ।।७।।

**[१]प्रमथ्यमानदध्युरुप्रजातमिन्दुसन्निभम् ।**
**नवं हि नीतमाददे रहो जघास चेशिता ।।८।।**

**व्यासतीर्थीया–** नवं हि नीतमिति पदद्वयं नवनीतवाचकम् ।।८।।

**वेदाङ्गतीर्थीया–** नवं नीतं नवनीतम् ।।८।।

**सत्याभिनवतीर्थीया–** प्रमथ्यमानदध्युरु...इति श्लोके 'नवं हि नीतम्' इत्यस्य अधिकनवनीतमित्यर्थः । एतेन नवनीतमित्यनेनैव पूर्णत्वात् अनुस्वारो हिशब्दो व्यर्थ इति दूषणं परास्तम् । मथनेन यावत् जातं तत् सर्वमपि नवनीतं गृहीतमिति वक्तुं 'आधिक्ये अधिकम्' इति वचनात्

१. 'स मथ्यमान' इति अनन्तभट्टीयातिविशदटिप्पण्योः पाठः ।

नवशब्दोत्तरानुस्वारेण हिशब्देन च नवनीतस्याधिक्यमुच्यते इत्यङ्गीकारात् । अधिकशब्दस्या-धिक्यार्थत्वं 'उरूची सोमपीतये '[ऋ.१.२.३] इत्यत्र उरूचीशब्दे दृष्टम् । अत एव ऋग्भाष्ये 'सोमपानायातिमहती' इत्यनेन उरूचीशब्दः अतिमहतीति व्याख्यातः । तट्टीकायां 'उरूची अतिमहति' इति आधिक्येऽधिक-मित्युक्तत्वात् इत्युक्तम् । अस्मत्स्वामिकृततट्टिप्पणेऽपि ''उरुशब्दात् 'वोतो गुणवचनात्' इति ङीषि उर्वीति भाव्यम् । तदभावपक्षे उरुरिति भाव्यम् । एवमपि यत् उरू इति दीर्घस्य ची इति चकारस्याधिक्यं, तेन लब्धमर्थमाह अतिमहति'' इत्युक्तम् ।।८।।

**वरदराजीया–** प्रमथ्यमानदध्युरुप्रजातं प्रमथ्यमानात् दध्नः उरु यथा भवति तथा प्रजातमुत्पन्नं इन्दुसन्निभं नवं हि नीतं नवनीतं आददे गृहीतवान् । रहो रहसि ईशिता कृष्णो जघास च भक्षितवान् ।।८।।

**अनन्तभट्टीया–** मथ्यमानदध्युरुप्रजातं मथ्यमानदध्नं उरु यथा तथा प्रजातम् । नवं हि नीतं नवनीतमित्यर्थः ।।८।।[१]

**जनार्दनीया–** ईशिता समर्थः कृष्णः प्रमथ्यमानं च तत् दधि च तथा, तस्माद्दध्नः उरु बहु यथा स्यात् तथा प्रजातं उत्पन्नं इन्दुसन्निभं चन्द्रसदृशश्वेतवर्णमित्यर्थः । नवं नीतं नवनीतं आददे अङ्गीचकार । रहः एकान्ते जघास भक्षयामास ।।८।।

**ताम्रपर्णीया–** ।। **नवं हि नीतमिति** ।। 'शुनश्चिच्छेपं निदितं ' [ऋ.५.२.७] इत्यत्र 'शुनःऽशेपं । चित्' इति पदपाठदर्शनात् । 'बालरूपमध्ये रङ्गन्' इत्यत्र आगन् ईरमिति पदस्य 'शुनश्चिच्छेपमितिवत् आगन्नित्यथवा पदम्' इति कृष्णलीलामृत एव स्पष्टमुक्तत्वात् । तद्वदिहापि नवं हि नीतमिति व्यवधानेनाप्येकपदत्वं विश्वामित्रादिशब्दवत् योगरूढत्वादलुक् समास इति द्रष्टव्यम् । रहोभक्षणं च न भयात् इत्याह– **चेशितेति** ।। ईशितापीत्यर्थः । नवनीतस्तैन्येन न तस्य पापं मन्तव्यमिति वाह– **ईशितेति** ।। पुण्यपापयोस्तदीशितव्यत्वात् इति भावः ।।८।।

**अतिविशद–** स मथ्यमानदध्युरुप्रजातमिन्दुसन्निभम् । नवं हि नीतमाददे इत्यस्य नवनीतमित्येव नार्थः । ततश्चैवमक्षरयोजना । सः मथ्यमानदध्युरुप्रजातमाददे । कथम्भूतं इन्दुसन्निभम् । पुनः कथं भूतं नवं यथा भवति तथा नीतं आनीतं दधि मथिते सति नूतनत्वेन जातं नतु पर्युषितमित्यर्थः ।

---

१. **अनन्तभट्टीया–** नवं हि नीतिमिति ।। 'शुनश्चिच्छेदविदि नरा च सन्दैव्यं च धर्तरि'[?] । 'नरा वा शसं पूषणं' [ऋ.१०.६४.३] 'बालरूपमध्येरं गन्' [यमक.भा.] इतिवत् । नवं नीतं इति पदच्छेदः । नवनीतशब्दस्य विश्वामित्रादिशब्दवद्योगरूढत्वाद् विश्वस्य मित्रमित्यादिवत् अलुक्समासोऽयमिति द्रष्टव्यम् ।।८।। इति हो.पुस्तके अधिकः पाठः

ईशिता रहो जघास चेति । नच दधिजनितं तक्रमपि भवतीति न नवनीतसिद्धिरिति वाच्यम् । जघासेति क्रियया तत्सिद्धेः । अन्यथा पपाविति स्यादिति भावः । यद्वा कृष्णेन अन्येभ्यो नीतं कृष्णो यदादद यच्च रहो जघास च तत् नवं हि नूतनं हि आश्चर्यमिति यावत् । तत्र हेतुरीशितेति । दरिद्रेण क्रियमाणमीशितुः कथं घटत इति आश्चर्यमेवोपपादयति ।।८।।

**भावचन्द्रिका–** 'नवो नवो भवति' इति श्रुतेः नववत् चन्द्रवत् नीतं नवनीतमित्याह– **इन्द्विति** ।। दधिमथनसमये कृष्णस्तुतिकरणात् स्तुतस्सन् 'नान्यथा पिबेत्'[नैतदिति] इति वचनाच्च यस्मान्नवं स्तोत्रं नीतं कृतं तस्माज्जघास । हरेरन्यभुक्तशेषभोगाभावात् नवं जघासेति वा ।।८।।

**चट्टि–** ईशिता समर्थः श्रीकृष्णः प्रमथ्यमानं च तद्दधि च प्रमथ्यमानदधि तस्माद् दध्नः उरु बहु यथा स्यात् तथा प्रजातमुत्पन्नं इन्दुसन्निभं चन्द्रसदृशं श्वेतवर्णमित्यर्थः । नवं नीतमिति पदद्वयं नवनीतवाचकमाददे गृहीतवान् । रहः एकान्ते जघास भक्षयामास ।।८।।

**प्रजायते हि यत्कुले यथा युगं यथा वयः ।**
**तथा प्रवर्तनं भवेद् दिवौकसां समुद्भवे ।।९।।**

**व्यासतीर्थीया–** दधिभाण्डभञ्जनादिकं किमर्थं कृतवानित्यत उक्तम्– **प्रजायत इति** ।। यथाकुलमिति योज्यम् ।।९।।

**वेदाङ्गतीर्थीया–** जनार्दनः यत्कुले प्रजायते यस्मिन् युग इति योज्यम् । यथायुगं तद्युगानुसारेण यथाकुलमिति योज्यम् । तत्कुलानुसारेण यथावयश्च विडम्बते । किं कुर्वन् दिवौकसां समुद्भवे भुव्यवतारे सति तथा तद्युगानुसारेण तत्कुलानुसारेण यथावयश्च प्रवर्तमानमाचरणं भवेत् इति एवं रूपं उत्तमं स्वधर्मं दिवौकसां प्रदर्शयन् इति श्लोकद्वयस्य योजना ।।९-१०।।

**वादिराजीया–** आददे हीति हिशब्देन सूचितां सुरनियमप्रसिद्धिं स्पष्टीकरोति– **प्रजायत इति** ।।८-१०।।

**वरदराजीया–** ईशिता चेत् कुत एवं चकारेत्यत आह– **प्रजायत इति** ।। दिवौकसां देवानां समुद्भवे अवतारे सति यत्कुले यादृशे कुले जायते, यथा येन प्रकारेण युगं वर्तते, यथा च वयः प्रवर्तते तथा प्रवर्तनं तेन प्रकारेण प्रवृत्तिः धर्मो भवेत् ।।९।।

**अनन्तभट्टीया–** यत्कुले यादृशे कुले । यथेति भिन्नं पदम् । युगं यथा यादृशं वयः तथा तादृशं तदनुगुणमित्यर्थः ।।९।।

**जनार्दनीया–** ननु ईशितुः नवनीतभक्षणादिकर्म कुतः? इत्याशङ्कायां 'प्रजायते हि' इति श्लोकद्वयेन परिहरन्नाह– **प्रजायते हीति** ।। जनार्दनः दिवौकसां देवानां समुद्भवे प्रादुर्भावे भुवि प्राप्ते सतीति शेषः । यथा यादृशं युगं यथा यादृशं वयः । यथा कुलमित्यपि ग्राह्यम् । तथा तादृशकुलयुगवयोऽनुसारेण प्रवर्तनं आचरणं भवेदित्यभिप्रायेण दिवौकसां उत्तमं स्वधर्मं स्वस्य प्रीतिकरधर्मं प्रदर्शयन् ज्ञापयन् सन् । अधर्मस्य अविहितकर्मणः दाहकर्मणि पावकः अग्निरिवाग्निः सन्नपि यत्कुले यादृशे कुले प्रजायते । इदमप्युपलक्षणम् यादृशे युगे प्रजायते यादृशवयो विशिष्टः प्रजायते इति हिशब्दार्थः । तथा कुलाद्यनुसारेण विडम्बते लोकमनुकरोतीति श्लोकद्वयस्य योजना ।।९।।

**ताम्रपर्णीया–** नन्वाप्तकाम ईश्वरः दधिभाण्डभञ्जननवनीतस्तैन्यादिकं किमर्थं कृतवान् । न च देवानां धर्मशिक्षार्थं कृतवानिति वाच्यम् । शिक्षार्थस्तैन्यादिकरणे 'यद्यदाचरति श्रेष्ठ' इत्युक्तन्यायेन इतरेषामधर्मकरणप्रसक्तेः तथा च समायव्ययफलत्वं स्यात् । न च 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः' [गी.३.२३] इत्युक्तदिशा अधर्मानलायमानस्य हरेरधर्मप्रसञ्जकत्वं सम्भवतीत्यत आह– **प्रजायत इति** ।। यथा कुलमिति योज्यम् ।।९।।

**अतिविशद–** प्रजायते हि इत्यादिना तदा त्वेवं योजना । मथ्यमानदधि उरुप्रजातं सत् हि यस्मात् स्वरूपं नीतं कृत्वा दधिभावमपनीयेति यावत् । नवं नूतनं रूपमाददे । तस्मादित्युच्यत इति हि यस्मात् नीतं नवं तस्मात् ।।९।।

**चट्टि–** ननु ईशिता चेत् चौर्यात् नवनीतभक्षणादिकं किमर्थं कृतवान् इत्याशङ्क्य श्लोकद्वयेन परिहरन्नाह– **प्रजायते हीति** ।। जनार्दनः दिवौकसां देवानां समुद्भवे भुवि प्रादुर्भावे प्राप्ते सति इति शेषः । यत्कुले यादृशे कुले प्रजायते यथा यादृशं युगं वयः यथा यादृशं तथा तादृशकुलयुगवयोऽनुसारेण प्रवर्तनं प्रवृत्तिः भवेत् । इत्यभिप्रायेण दिवौकसां देवानां उत्तमं स्वधर्मं स्वस्य प्रीतिकरं धर्मं प्रदर्शयन् सन् अधर्मस्य चौर्यादिनिषिद्धकर्मणः दाहो पावकोऽग्निरिव सन्नपि विडम्बते लोकमनुकरोतीति श्लोकद्वयस्यार्थः ।।९।।

**इति स्वधर्ममुत्तमं दिवौकसां प्रदर्शयन् ।**
**अधर्मपावकोऽपि सन् विडम्बते[१] जनार्दनः ।।१०।।**

**व्यासतीर्थीया–** आत्मस्मृतिमतामधर्मपावकोऽपि सन् नवनीतादिस्तेनकरणेऽपि न तस्य पापमिति । विडम्बते अनुकरोति ।।१०।।

---

१. 'अबालो बाल्यमास्थाय रमते शिशुलीलया । प्रबन्धः कर्मणामेवं तस्य गोव्रजवासिनः ।।' इति हरिवंशे.२.२२.३१।

ईशिता रहो जघास चेति । नच दधिजनितं तक्रमपि भवतीति न नवनीतसिद्धिरिति वाच्यम् । जघासेति क्रियया तत्सिद्धेः । अन्यथा पपाविति स्यादिति भावः । यद्वा कृष्णेन अन्येभ्यो नीतं कृष्णो यदाददे यच्च रहो जघास च तत् नवं हि नूतनं हि आश्चर्यमिति यावत् । तत्र हेतुरीशितेति । दरिद्रेण क्रियमाणमीशितुः कथं घटत इति आश्चर्यमेवोपपादयति ॥८॥

**भावचन्द्रिका–** 'नवो नवो भवति' इति श्रुतेः नववत् चन्द्रवत् नीतं नवनीतमित्याह– **इन्द्विति** ॥ दधिमथनसमये कृष्णस्तुतिकरणात् स्तुतस्सन् 'नान्यथा पिबेत्'[नैतदिति] इति वचनाच्च यस्मान्नवं स्तोत्रं नीतं कृतं तस्माज्जघास । हरेरन्यभुक्तशेषभोगाभावात् नवं जघासेति वा ॥८॥

**चट्टि–** ईशिता समर्थः श्रीकृष्णः प्रमथ्यमानं च तद्दधि च प्रमथ्यमानदधि तस्माद् दध्नः उरु बहु यथा स्यात् तथा प्रजातमुत्पन्नं इन्दुसन्निभं चन्द्रसदृशं श्वेतवर्णमित्यर्थः । नवं नीतमिति पदद्वयं नवनीतवाचकमाददे गृहीतवान् । रहः एकान्ते जघास भक्षयामास ॥८॥

**प्रजायते हि यत्कुले यथा युगं यथा वयः ।**
**तथा प्रवर्तनं भवेद् दिवौकसां समुद्भवे ॥९॥**

**व्यासतीर्थीया–** दधिभाण्डभञ्जनादिकं किमर्थं कृतवानित्यत उक्तम्– **प्रजायत इति** ॥ यथाकुलमिति योज्यम् ॥९॥

**वेदाङ्गतीर्थीया–** जनार्दनः यत्कुले प्रजायते यस्मिन् युग इति योज्यम् । यथायुगं तद्युगानुसारेण यथाकुलमिति योज्यम् । तत्कुलानुसारेण यथावयश्च विडम्बते । किं कुर्वन् दिवौकसां समुद्भवे भुव्यवतारे सति तथा तद्युगानुसारेण तत्कुलानुसारेण यथावयश्च प्रवर्तमानमाचरणं भवेत् इति एवं रूपं उत्तमं स्वधर्मं दिवौकसां प्रदर्शयन् इति श्लोकद्वयस्य योजना ॥९-१०॥

**वादिराजीया–** आददे हीति हिशब्देन सूचितां सुरनियमप्रसिद्धिं स्पष्टीकरोति– **प्रजायत इति** ॥८-१०॥

**वरदराजीया–** ईशिता चेत् कुत एवं चकारेत्यत आह– **प्रजायत इति** ॥ दिवौकसां देवानां समुद्भवे अवतारे सति यत्कुले यादृशे कुले जायते, यथा येन प्रकारेण युगं वर्तते, यथा च वयः प्रवर्तते तथा प्रवर्तनं तेन प्रकारेण प्रवृत्तिः धर्मो भवेत् ॥९॥

**अनन्तभट्टीया–** यत्कुले यादृशे कुले । यथेति भिन्नं पदम् । युगं यथा यादृशं वयः तथा तादृशं तदनुगुणमित्यर्थः ॥९॥

**जनार्दनीया–** ननु ईशितुः नवनीतभक्षणादिकर्म कुतः? इत्याशङ्कायां 'प्रजायते हि' इति श्लोकद्वयेन परिहरन्नाह– **प्रजायते हीति** ।। जनार्दनः दिवौकसां देवानां समुद्भवे प्रादुर्भावे भुवि प्राप्ते सतीति शेषः । यथा यादृशं युगं यथा यादृशं वयः । यथा कुलमित्यपि ग्राह्यम् । तथा तादृशकुलयुगवयोऽनुसारेण प्रवर्तनं आचरणं भवेदित्यभिप्रायेण दिवौकसां उत्तमं स्वधर्मं स्वस्य प्रीतिकरधर्मं प्रदर्शयन् ज्ञापयन् सन् । अधर्मस्य अविहितकर्मणः दाहकर्मणि पावकः अग्निरिवाग्निः सन्नपि यत्कुले यादृशे कुले प्रजायते । इदमप्युपलक्षणम् यादृशे युगे प्रजायते यादृशवयो विशिष्टः प्रजायते इति हिशब्दार्थः । तथा कुलाद्यनुसारेण विडम्वते लोकमनुकरोतीति श्लोकद्वयस्य योजना ।।९।।

**ताम्रपर्णीया–** नन्वाप्तकाम ईश्वरः दधिभाण्डभञ्जननवनीतस्तैन्यादिकं किमर्थं कृतवान् । न च देवानां धर्मशिक्षार्थं कृतवानिति वाच्यम् । शिक्षार्थस्तैन्यादिकरणे 'यद्यदाचरति श्रेष्ठ' इत्युक्तन्यायेन इतरेषामधर्मकरणप्रसक्तेः तथा च समायव्ययफलत्वं स्यात् । न च 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः' [गी.३.२३] इत्युक्तदिशा अधर्मानलायमानस्य हरेरधर्मप्रसञ्जकत्वं सम्भवतीत्यत आह– **प्रजायत इति** ।। यथा कुलमिति योज्यम् ।।९।।

**अतिविशद–** प्रजायते हि इत्यादिना तदा त्वेवं योजना । मथ्यमानदधि उरुप्रजातं सत् हि यस्मात् स्वरूपं नीतं कृत्वा दधिभावमपनीयेति यावत् । नवं नूतनं रूपमाददे । तस्मादित्युच्यत इति हि यस्मात् नीतं नवं तस्मात् ।।९।।

**चट्टि–** ननु ईशिता चेत् चौर्यात् नवनीतभक्षणादिकं किमर्थं कृतवान् इत्याशङ्क्य श्लोकद्वयेन परिहरन्नाह– **प्रजायते हीति** ।। जनार्दनः दिवौकसां देवानां समुद्भवे भुवि प्रादुर्भावे प्राप्ते सति इति शेषः । यत्कुले यादृशे कुले प्रजायते यथा यादृशं युगं वयः यथा यादृशं तथा तादृशकुलयुगवयोऽनुसारेण प्रवर्तनं प्रवृत्तिः भवेत् । इत्यभिप्रायेण दिवौकसां देवानां उत्तमं स्वधर्मं स्वस्य प्रीतिकरं धर्मं प्रदर्शयन् सन् अधर्मस्य चौर्यादिनिषिद्धकर्मणः दाहो पावकोऽग्निरिव सन्नपि विडम्वते लोकमनुकरोतीति श्लोकद्वयस्यार्थः ।।९।।

**इति स्वधर्ममुत्तमं दिवौकसां प्रदर्शयन् ।**
**अधर्मपावकोऽपि सन् विडम्वते[१] जनार्दनः ।।१०।।**

**व्यासतीर्थीया–** आत्मस्मृतिमतामधर्मपावकोऽपि सन् नवनीतादिस्तेनकरणेऽपि न तस्य पापमिति । विडम्वते अनुकरोति ।।१०।।

१. 'अबालो बाल्यमास्थाय रमते शिशुलीलया । प्रबन्धः कर्मणामेवं तस्य गोव्रजवासिनः ।।' इति हरिवंशे.२.२२.३१।

**वरदराजीया–** इति उत्तमं स्वधर्मं दिवौकसां देवानां प्रदर्शयन्नपि जनार्दनो विडम्बते लोकमनुकरोति । नन्वेवं लोकमनुकुर्वतः कृष्णस्य नवनीतादिचौर्यादिनिषिद्धप्रवृत्त्या प्रत्यवायः स्यादित्याशङ्क्याह– **अधर्मेति** ।। अधर्मस्य दाहे पावक इवेत्यर्थः ।।१०।।

**अनन्तभट्टीया–** दिवौकसां उत्तमं धर्मं प्रदर्शयन् विडम्बते अनुकरोति । देवताधर्मप्रदर्शनेनेत्यर्थः । किं प्रत्यवाय इत्यत उक्तम्– **अधर्मपावकोऽपि सन्निति** ।। मर्यादापालनाय धर्मप्रदर्शनमिति भावः ।।१०।।

**ताम्रपर्णीया–** अधर्मपावकोऽपि अधर्माणां वह्निरपि । अथवा धर्मेभ्यः स्वभक्तशोधकोऽपि विडम्बते अनुकरोति ।।१०।।

**[१]नृतिर्यगादिरूपकस्स बाल्ययौवनादि यत्[२] ।**
**क्रियाश्च तत्तदुद्भवाः करोति शाश्वतोऽपि सन् ।।११।।**

**व्यासतीर्थीया–** प्रजायत इत्याद्युक्तं श्लोकद्वयेन विवृण्वन्नाह– **नृतिर्यगादीति** ।। यत् बाल्ययौवनादि तत्प्रकाशयति । तत्तदुद्भवाः बाल्याद्युद्भवाः । तत्र क्रियाकरणेऽपि न विकारित्वमिति भावेनोक्तम्– **शाश्वतोऽपि सन्निति** ।।११।।

**वेदाङ्गतीर्थीया–** प्रजायते इत्याद्युक्तमेव विवृणोति– **नृतिर्यगादीत्यादिना** ।। यत् बाल्ययौवनादि वयः तत्प्रकाशयतीति शेषः । तत्तदुद्भवाः बाल्याद्युद्भवाः ।।११।।

**वादिराजीया–** स बाल्ययौवनादीत्यत्र बाल्ययौवनादि यद्वयोः अवस्थानं तत्तदुद्भवाः क्रियाश्च करोतीति योजना ।।११।।

**वरदराजीया–** यत्कुले यथा वय इत्येतद्विवृणोति– **नृतिर्यगादीति** ।। नृरूपको रामकृष्णादिः तिर्यग्रूपको वराहादिः । आदिपदेन जलचररूपको मत्स्यादिर्गृह्यते । तथा सः कृष्णो बाल्ययौवनादिवत् वयः प्राप्नोति । तत्तदुद्भवाः तत्तद्रूपोद्भवाश्च क्रियाश्चेष्टा शाश्वतोऽपि अनादिपुरुषोऽपि सन् करोति ।।११।।

**अनन्तभट्टीया–** उक्तमेव विवृणोति– **नृतिर्यगादीति** ।। यद्बाल्ययौवनादि तत्प्रदर्शयतीति शेषः । उद्भवाः उचिताः ।।११।।

---

१. 'देवतिर्यङ्मनुष्येषु गन्धर्वोरगपक्षिषु । योनिष्वन्येष्वपि तथा बुद्ध्वा कार्यबलाबलम् ।। यस्यां यस्यां यदा योनौ प्रादुर्भवति कारणात् । तद्योनिसदृशं तत्स तदा लोके विचेष्टते ।।' इति ब्रह्मवैवर्त्ते [१खं.१७२.९-१०]

२. 'यौवनादिवत्' इति वरदराजीयपाठः ।

**जनार्दनीया–** उक्तमेवार्थं विवेचयन्नाह– **नृतिर्यगादीत्यादिना** ।। नरश्च तिर्यञ्चश्च नृतिर्यञ्चः, त एव आदयो येषां ते तथा रूपकः । रामकृष्णाद्या नृरूपकाः; मत्स्याद्यास्तिर्यग्रूपकाः । आदिपदेन हयग्रीवनृसिंहाद्या इत्यादिरूपवान् । स हरिः शाश्वतः सन्नपि शश्वदेकप्रकारः सन्नपि । बाल्ययौवनादि आदिपदेन कैशोरपौगण्डादि यद्वयः तत्प्रदर्श्येति शेषः । तदुद्भवाः रूपवयोचिता इत्यर्थः । क्रियाः कर्माणि करोति ।।११।।

**ताम्रपर्णीया–** उक्तं विवृणोति– **नृतिर्यगादीति** ।। कथमविकारस्य नृतिर्यगाद्यात्मना विकारः, कथं वा शाश्वतस्य बाल्यादिवर्धनं वा, कथं वा स्थाणोः क्रियावत्त्वमित्यत आह– **शाश्वतोऽपीति** ।।

**चट्टि–** प्रजायते इत्याद्युक्तमेवार्थं विवृणोति– **नृतिर्यगादीत्यादिना** ।। नरश्च तिर्यञ्चश्च नृतिर्यञ्चः । त एव आदयो एषां ते नृतिर्यगादयः । तेषां रूपमिव रूपं यस्य सः नृतिर्यगादिरूपकः श्रीरामकृष्णाद्याः नृरूपकाः मत्स्याद्याः तिर्यग्रूपकाः । आदिपदेन हयग्रीवनृसिंहाद्या इत्यादिरूपवान् सः हरिः शाश्वतस्सन्नपि शश्वदेकप्रकारस्सन्नपि बाल्ययौवनादि । आदिपदेन कैशोरपौगण्डादि यद्वयः तत्प्रकाशयतीति शेषः । तत्तदुद्भवाः बाल्याद्युद्भवाः क्रियाः कर्माणि करोति ।।११।।

**स विप्रराजगोपकस्वरूपकस्तदुद्भवाः ।**
**तदा तदा विचेष्टते क्रियाः सुरान् विशिक्षयन् ।।१२।।**

**व्यासतीर्थीया–** स विप्रेति सुरशिक्षणादिप्रयोजनमाह ।।१२।।

**वादिगजीया–** ननु नृतिर्यगादीत्यत्र आदिपदेन नृपदेन वा विप्रराजादीनां सर्वस्य सङ्ग्रहसम्भवात् 'सविप्रराजगोपकस्वरूपकः' इति पुनर्वचनं किमर्थमिति चेत्सत्यम् । वयोऽवस्थाविशेषोचितकर्मैव तत्र गृहीतम् । जातिविशेषोचितकर्मसङ्ग्रहाय पुनर्वचनमिति परिहारसम्भवात् । अत एव 'तत्तदुद्भवा' इत्यत्र तत्तद्वयोऽवस्थाविशेषोद्भवा इत्यर्थः । तत्तदुद्भवाः तत्तज्जात्युद्भवा इति स्थानद्वयोक्ततच्छब्दार्थभूत-पूर्वपरामर्शयोरपि विषयभेदो विवेचनीयः ।।१२।।

**वरदराजीया–** त्रिरूपत्वेऽपि विशेषोऽस्तीत्याह– **स इति** ।। विप्रस्वरूपको जामदग्न्यादिः, राजस्वरूपको रामादिः, गोपस्वरूपकः कृष्णः तदुद्भवाः विप्राद्युद्भवाः क्रियाः कर्माणि सुरान् विशिक्षयन् विचेष्टते करोति ।।१२।।

**जनार्दनीया–** अधिकार्थं वदन् उपसंहरति– **स इति** ।। व्यासभार्गवाद्याः विप्रस्वरूपकाः, रामो राजस्वरूपकः, गोपस्वरूपकः कृष्णः । यदा यदा विप्रादिस्वरूपकः स हरिर्भवति तदा तदा । तदुद्भवाः तत्तद्रूपोचिताः क्रियाः सुरान् विशिक्षयन् विचेष्टते करोति ।।१२।।

**चट्टि–** सुरशिक्षणादिप्रयोजनमाह– **स इति** ।। व्यासभार्गवाद्याः विप्रस्वरूपकाः श्रीरामः राजस्वरूपकः गोपस्वरूपकः श्रीकृष्णः यदा यदा विप्रादिरूपकः स हरिः भवति । तदा तदा तत्तदुद्भवाः तत्तद्रूपोचिताः क्रियाः सुरान् विशिक्षयन् विचेष्टते करोति ।।१२।।

**तथाऽप्यनन्यदेवतासमं निजं बलं प्रभुः ।**
**प्रकाशयन् पुनः पुनः [1]प्रदर्शयत्यजो गुणान् ।।१३।।**

**व्यासतीर्थीया–** नरादिषु जातानां देवानां मनुष्यत्वाद्यनुसारेण व्यापारकरणं धर्मश्चेद् अमानुषव्यापारान् कथं स्वयं कृतवानित्यत आह– **तथापीति** ।।१३-१६।।

**वेदाङ्गतीर्थीया–** तथापि सुरशिक्षणार्थं बाल्यादिविडम्बयन्नपि ।।१३।।

**वादिराजीया–** प्रदर्शयत्यजो गुणानित्यत्र गुणान् सर्वोत्तमत्वसर्वज्ञत्वसर्वशक्तित्वादिगुणान् ।।१३-१९।।

**वरदराजीया–** तथापि विडम्बयन्नपि अन्यदेवता समं न भवतीत्यनन्यदेवतासमं निजं बलं प्रकाशयन् अजः प्रभुः पुनः गुणान् अचिन्त्यशक्त्यादिस्वगुणान् प्रकाशयति ।।१३।।

**अनन्तभट्टीया–** तर्हि अमानुषकर्म किमिति करोतीत्यत आह– **तथापीति** ।।१३।।

**जनार्दनीया–** तथापि विशिक्षयन्नपि अजः प्रभुः अन्यदेवतासमं न भवतीत्यनन्यदेवतासमम् । निजं बलं प्रकाशयन् प्रकटीकुर्वन् पुनःपुनः गुणान् अलौकिकबलज्ञानानन्दादिगुणान् प्रकाशयति प्रकटीकरोति ।

**ताम्रपर्णीया–** देवावतारभूतानां शिक्षार्थं तत्तत्कुलानुसारेण प्रवृत्तिश्चेत् कथं अमानुषव्यापारप्रदर्शनं इत्यत आह– **तथापीति** ।।१३-२२।।

**चट्टि–** ननु सुरशिक्षणार्थं लोकानुसारेण व्यापारकरणं धर्मश्चेदमानुषव्यापारान् कथं कृतवानित्यत आह– **तथापीति** ।। तथापि विडम्बयन्नपि अजः उत्पत्तिरहितः प्रभुः समर्थः श्रीकृष्णः अन्यदेवतासमं न भवतीत्यनन्यदेवतासमं निजं बलं प्रकाशयन् प्रकटीकुर्वन् सन् पुनः पुनः गुणानलौकिकबलज्ञानानन्दादिगुणान् प्रदर्शयति प्रकटीकरोति ।।१३।।

**अथाऽत्तयष्टिमीक्ष्य[2] तां स्वमातरं जगद्गुरुः ।**
**स पुप्लुवे तमन्वयान्मनोविदूरमङ्गना ।।१४।।**

---

१. 'प्रकाशयति' इति वरदराजीयजनार्दनीययोः पाठः । 'प्रदर्शयति' इति वादिराजीयचट्टिटिप्पण्योः पाठः ।

२. 'तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्ततोवरुह्याभिससार भीतवत् । गोप्यन्वधावन्न यमास योगिनां क्षमं प्रवेष्टुं तपसेरितं मनः ।।' इति भागवते १०.१०.९ ।

**सत्याभिनवतीर्थीया–** तत्रैव अथात्तयष्टिमीक्ष्य तां... इति श्लोकः । तस्यार्थः । यत इत्यादेः शेषः । अथ दधिभाण्डस्फोटनानन्तरं सः कृष्णः यतः जगद्गुरुः जगच्छिक्षकः अतः आत्तयष्टिं अमातरमपि यशोदामीक्ष्य सु सम्यक् भयं प्रदर्श्य पुप्लुवे । अङ्गना यशोदा मनोविदूरं तं कृष्णं अन्वयादिति । अयं भावः । माता ताडनार्थमागता चेत् समर्थेनापि पुत्रेण अविद्यमानं भयं प्रदर्श्य पलायनं कर्तव्यमिति जगच्छिक्षार्थं निराकरणसामर्थ्येऽपि यशोदाया मातृत्वाभावेऽपि मातेति स्वीकारमात्रेण अविद्यमानं भयं प्रदर्श्य पलायनं कृतवान् तं यशोदापि साक्षात्परदेवतेति ज्ञानाभावात् अयं कृष्णो मम पुत्रः भीतश्चेति भ्रान्त्या कृष्णमन्वयादिति । एतेन यशोदाया भगवन्मातृत्वाभावात् मातरमिति कथनमनुपपन्नम् । मातृत्वेन स्वीकारमात्रेण मातरमित्युक्तिसंभवेऽपि मातृशब्दस्य ससम्बधिकत्वेन मातरमित्यस्य स्वमातरमित्यर्थलाभसम्भवात् स्वशब्दो व्यर्थ एवेति दूषणं परिहृतम् । स्वमातरमित्यस्य स्वस्य मातरमित्यर्थ इत्यर्थानङ्गीकारात् ॥१४॥

**वरदराजीया–** तदेव दर्शयति– **अथेत्यादिना** ॥ अथानन्तरं आत्ता उपात्ता यष्टिर्यया सा तां स्वमातरं यशोदां जगद्गुरुः जगतः पिता कृष्णः ईक्ष्य समीक्ष्य पुप्लुवे दुद्रुवे । अङ्गना स्त्री यशोदा मनसोऽपि विदूरं तं कृष्णं अन्वयात् अनु पृष्ठतो ययौ ॥१४॥

**अनन्तभट्टीया–** आत्तयष्टिं उपात्तयष्टिम् ॥१४॥

**जनार्दनीया–** 'पुनःपुनः प्रकाशयति' इत्युक्तं दर्शयति– **अथेति** ॥ अथ दधिभाण्डस्फोटनानन्तरं जगद्गुरुः जगदुपदेशकर्ता । अत एव आत्ता उपात्ता यष्टिः दण्डो यया सा तथा ताम् । स्वमातरं यशोदां संवीक्ष्य दृष्ट्वा पुप्लुवे दुद्रुव इत्यर्थः । अङ्गना अबला यशोदा मनोविदूरं योगिभिः मनसा अप्राप्यमित्यर्थः । तं कृष्णं अन्वगात् ॥१४॥

**भावचन्द्रिका–** शिष्य शास्यः । नायं शास्य इत्याह– **जगद्गुरुरिति** ॥१४॥

**चट्टि–** तदेव दर्शयति– **अथेति** ॥ अथ दधिभाण्डस्पोटनानन्तरं जगद्गुरुः जगतः पिता सः श्रीकृष्णः आत्ता उपात्ता यष्टिः दण्डो यया सा तथा तां स्वमातरं तां यशोदां समीक्ष्य दृष्ट्वा पुप्लुवे दुद्रुवे । अङ्गना अबला यशोदा मनोविदूरं योगिभिर्मनसा अप्राप्यमित्यर्थः । तं श्रीकृष्णं अन्वयात् अन्वगात् ॥१४॥

**पुनः समीक्ष्य तच्छ्रमं[१] जगाम तत्करग्रहम् ।**
**प्रभुः स्वभक्तवश्यतां प्रकाशयन्नुरुक्रमः ॥१५॥**

१. 'स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः । दृष्ट्वा परिश्रमं कृष्णः कृपयाऽसीत् स्वबन्धने ॥ एवं सन्दर्शिता ह्यङ्ग हरिणा भक्तवश्यता । स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥' इति भागवते १०.९०.१८-१९ ।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव पुनस्समीक्ष्य तच्छ्रमं जगाम ... इति श्लोके 'पुनः समीक्ष्य तच्छ्रमम्' इत्यस्य पुनः पुनः तच्छ्रमं समीक्ष्येत्यर्थः । एतेन 'तच्छ्रमं समीक्ष्य' इत्यनेनैव पूर्णत्वात् पुनश्शब्दो व्यर्थ इति दूषणं निराकृतम् । बहुवारं तच्छ्रमं समीक्ष्येत्यर्थलाभार्थं पुनश्शब्दस्यावृत्तिमङ्गीकृत्य पुनः पुनः तच्छ्रमं समीक्ष्येत्यर्थस्योक्तत्वात् ।।१५।।

**वरदराजीया–** पुनः अनन्तरं उरुक्रमः प्रभुः कृष्णः तस्याः यशोदायाः श्रमं श्रान्तिं समीक्ष्य तस्या करग्रहं हस्तेन क्रियमाणं ग्रहणं जगाम प्राप्तवान् । किं कुर्वन् स्वभक्तवश्यतां स्वभक्ताधीनतां प्रदर्शयन् भक्ताधीनोऽहमिति दर्शनार्थं तया गृहीत इति भावः ।।१५।।

**अनन्तभट्टीया–** करग्रहं करग्रहणम् ।।१५।।

**जनार्दनीया–** पुनरनन्तरं उरुक्रमः उत्कृष्टपराक्रमः दूरपादक्षेपो वा प्रभुः कृष्णः यशोदायाः श्रमं श्रान्तिं समीक्ष्य, तस्याः करः, तेन ग्रहः ग्रहणं जगाम । तया गृहीत इत्यर्थः । किं कुर्वन्? स्वस्य भक्तानां वश्यतां अधीनत्वं प्रकाशयन् ।।१५।।

**चट्टि–** पुनरनन्तरं उरुक्रमः उत्कृष्टपराक्रमः प्रभुः श्रीकृष्णः तस्याः यशोदायाः श्रमं श्रान्तिं समीक्ष्य तत्करग्रहं तस्याः करस्तेन ग्रहं ग्रहणं जगाम । तया गृहीत इत्यर्थः । किं कुर्वन् स्वभक्तवश्यतां स्वस्य भक्तानां वश्यतां अधीनत्वं प्रकाशयन् ।।१५।।

**सदा विमुक्तमीश्वरं निबद्धुमञ्जसाऽऽददे ।**
**यदैव दाम गोपिका न तत् पुपूर तं प्रति ।।१६।।**

**वेदाङ्गतीर्थीया–** न पुपूरे पूर्णं नाभूत् ।।१६।।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव सदा विमुक्तमीश्वरं...इति श्लोकः । तस्यार्थः । गोपिका यत् यस्मात् कारणात् सदा विमुक्तं आ सम्यक् ईश्वरं अञ्जसा निबद्धुं दाम आददे । तत् तस्मात् कारणात् तं प्रति दाम न पुपूरेति । एतेन यदेत्येतत् तदिति च व्यर्थमिति दूषणं निराकृतम् । यदेत्यत्र यत् आ इति पदच्छेदमङ्गीकृत्य वाय्वाद्यपेक्षया मुख्यतः ईश्वरत्वं वक्तुं आ इत्युक्तम् । सदा विमुक्तत्वस्य मुख्यत ईश्वरत्वस्य च दामपूर्त्यभावे हेतुत्वज्ञापनार्थं यत्तदिति पदद्वयं प्रयुक्तमिति स्वीकरणात् ।।१६।।

**मधुसूदनीया–** ।। **यदैव दामगोपिकेत्यादिना** ।। अनेनैकदैवास्य अणुत्वमहत्त्वे सूचिते इति वेदितव्यम् ।।१६-१८।।

**वरदराजीया–** सदा विमुक्तं नित्यमुक्तं ईश्वरं स्वामिनं अञ्जसा दृढं निबद्धुमेव यदा गोपिका यशोदा दाम गोवन्धनं आददे गृहीतवती तदा तद्दाम तं प्रति कृष्णं प्रति न पुपूर पर्याप्तं नाभूत् ।।१६।।

**अनन्तभट्टीया–** विमुक्तं बन्धरहितम् ।।१६।।

**जनार्दनीया–** गोपिका यशोदा सदा विमुक्तं बन्धरहितं ईश्वरं कृष्णं अञ्जसा सम्यक् निबद्धुं बन्धनार्थं दाम गोबन्धनपाशं यदा आददे अग्रहीत् । तदा तद्दाम तं कृष्णं प्रति न पुपूर पूरणं नाभूत् ।।१६।।

**चट्टि–** गोपिका यशोदा सदा विमुक्तं नित्यमुक्तं ईश्वरं श्रीकृष्णं अञ्जसा सम्यक् निबद्धुं बन्धनार्थमेव दाम गोबन्धनपाशं यदा आददे अग्रहीत् । तदा तद्दाम श्रीकृष्णं प्रति न पुपूर पूर्णं नाभूत् ।।१६।।

**समस्तदामसञ्चयः सुसन्धितोऽप्यपूर्णताम्[१] ।**
**ययावनन्तविग्रहे शिशुत्वसम्प्रदर्शके ।।१७।।**

**व्यासतीर्थीया–** अनन्तविग्रह इति मध्यमपरिमाणमेव महापरिमाणमिति सूचितम् ।।१७।।

**वरदराजीया–** समस्तानां दाम्नां सञ्चयः समुदायः सुसन्धितोऽपि सम्यक् ग्रथितोऽपि अनन्तविग्रहे व्याप्तदेहे शिशुत्वसम्प्रदर्शके अल्पपरिमाणदेहप्रदर्शके कृष्णे पूर्णतां बन्धनपर्याप्ततां न ययौ । महत्त्वस्याप्रत्यक्षत्वात् अणुत्वस्य प्रत्यक्षत्वात् बद्धुं शक्यं मत्वा दुराशया सर्वदामानि सन्धितवतीति भावः ।।१७।।

**अनन्तभट्टीया–** अनन्तविग्रहे ।।१७।।

**जनार्दनीया–** समस्तदाम्नां सञ्चयः समूहः सुसन्धितोऽपि उत्तरोत्तरग्रन्थिभिर्नियोजितोऽपि शिशुत्वं शिशुस्वरूपं सम्प्रदर्शके अनन्तविग्रहे परिमाणरहितकृष्णदेहे अपूर्णतां ययौ ।।१७।।

**चट्टि–** समस्तानां दाम्नां सञ्चयः समूहः सुसन्धितोऽपि उत्तरोत्तरग्रन्थिभिः योजितोऽपि शिशुत्वं शिशुस्वरूपं सम्प्रदर्शके अनन्तविग्रहे परिमाणरहितकृष्णदेहे अपूर्णतां ययौ ।।१७।।

**अबन्धयोग्यतां प्रभुः प्रदर्श्य लीलया पुनः ।**
**स एकवत्सपाशकान्तरं गतोऽखिलम्भरः ।।१८।।**

**सत्याभिनवतीर्थीया–** तत्रैव अबन्धयोग्यतां प्रभुः प्रदर्श्य...इति श्लोके अखिलम्भरः एकवत्सपाशकान्तरं गतः इत्युक्त्या कृष्णसामर्थ्येन कृष्णोदरस्थितजगतः कृष्णस्य च एकवत्सपाशान्तरगतत्वं प्राप्तमित्युक्तं भवति । एतेन अखिलम्भर इति विशेषणं व्यर्थमिति दूषणं परिहृतम् ।।१८।।

---

१. 'इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा । न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् ।। पूर्वापरं बहिश्चान्तः जगतो यो जगन्मयः । तं मत्वार्भकमव्यक्तं मर्त्यलिङ्गमधोक्षजम् ।।' इति भागवते १०.१०.१३

**वरदराजीया–** एवं प्रभुः कृष्णः स्वस्याबन्धयोग्यतां बन्धयोग्यताभावं प्रदर्श्य पुनः लीलया अखिलम्भरः सर्वाधारकोऽपि एकवत्सस्य पाशको बन्धनरज्जुः तस्यान्तरं गतः । तेनावृत इत्यर्थः ।।१८।।

**जनार्दनीया–** अखिलम्भरः विश्वम्भरः, उदरस्थविश्व इति यावत् । स प्रभुः कृष्णः अबन्धयोग्यतां स्वस्य बन्धनयोग्यताभावं प्रदर्श्य, पुनः अनन्तरं सुतस्य मातुर्वश्यतां वशत्वं धर्मं प्रदर्श्य, एक एव वत्सपाशः । स्वार्थे कप्रत्ययः । तस्य अन्तरं मध्यं गतः प्राप्तोऽभूदित्यर्थः । वत्सगलावरणभूतेन पाशेन बन्धनं प्राप्तवानिति भावः ।।१८।।

**भावचन्द्रिका–** अखिलम्भरत्वात् पाशधारणमुपपद्यते ।।१८।।

**चट्टि–** अखिलम्भरः उदरस्थविश्व इति यावत् । सः प्रभुः श्रीकृष्णः स्वस्य बन्धयोग्यतां बन्धयोग्यताभावं प्रदर्श्य पुनर्लीलया एकस्य वत्सस्य पाशतो बन्धनरज्जुस्तस्यान्तरं गतः प्राप्तोऽभूदित्यर्थः । वत्सगलावरण-भूतपाशेन बन्धनं प्राप्तवानित्यर्थः ।।१८।।

**सुतस्य मातृवश्यतां प्रदर्श्य धर्ममीश्वरः ।**
**बभञ्ज[1] तौ दिविस्पृशौ यमार्जुनौ सुरात्मजौ ।।१९।।**

**व्यासतीर्थीया–** तौ प्रसिद्धौ तरुभङ्गभग्नौ ।।१९।।

**वेदाङ्गतीर्थीया–** दिविस्पृशौ आकाशस्पृशौ ।।१९।।

**मधुसूदनीया–** ।। **दिवि स्पृशाविति** ।। सहस्रधनुषस्तूर्ध्वभागो द्यौः तत्स्पृशावित्यर्थः । 'सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यते' इति शब्दनिर्णये ।।१९-३०।।

**वरदराजीया–** किं कृत्वा ईश्वरः कृष्णः सुतस्य मातृवश्यतां मात्रधीनतां धर्मं प्रदर्श्य पुत्राणां मात्राधीनत्वं धर्म इति प्रदर्शनार्थं पूर्णोऽप्येकेनैव वत्सदाम्ना बद्ध इति भावः । तौ प्रसिद्धौ दिविस्पृशौ अत्युच्चौ यमार्जुनौ यमलार्जुनाख्यौ वृक्षौ सुरात्मजौ पूर्वं कुबेरस्य पुत्रौ तरुत्वेनोत्पन्नौ बभञ्ज समूलघातं उत्पाटितवान् ।।१९।।

**अनन्तभट्टीया–** तौ प्रसिद्धौ दिविस्पृशौ । अतिदीर्घावित्यर्थः ।।१९।।

**जनार्दनीया–** ईश्वरः दिविस्पृशौ सहस्रधनुर्मात्रोर्ध्वदेशस्पृशौ अतिदीर्घावित्यर्थः । 'सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यते' इति तन्त्रमालायाम् [भा.ता.२.७.२७] । पुरा सुरस्य कुबेरस्य आत्मजौ पुत्रौ तौ प्रसिद्धौ यमौ एकगर्भे सहोत्पन्नौ तौ च तौ अर्जुनौ च वृक्षौ बभञ्ज उद्बबर्ह । 'अर्जुनस्तृणजातिः स्यादर्जुनः ककुभद्रुमः' इति अनेकध्वनिपदमञ्जर्याम् ।।१९।।

---

१. 'तद्दाम तस्य बालस्य प्रभावादभवद्दृढम्' इति हरिवंशे.२.७.१९ ।

**अतिविशद–** बभञ्ज तौ दिविस्पृशौ इत्यत्र सहस्रधनुषोऽप्यूर्ध्वं स्पृशावित्यर्थः । 'सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यते' इति द्वितीयतात्पर्यात् ।।१९।।

**चट्टि–** ईश्वरः श्रीकृष्णः सुतस्य मातृवश्यतां मात्राधीनतां धर्मं प्रदर्श्य पुत्राणां मातृवश्यत्वं धर्म इति प्रदर्शनार्थं पूर्णोऽप्येकेनैव वत्सदाम्ना बद्ध इति भावः । दिविस्पृशौ सहस्रधनुषः ऊर्ध्वभागो द्यौः तत्स्पृशौ अतिदीर्घावित्यर्थः । 'सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यते' इति शब्दनिर्णयवचनात् । सुरात्मजौ पूर्वं कुबेरस्य पुत्रौ तौ प्रसिद्धौ यमौ एकगर्भे सहोत्पन्नौ तौ च तावर्जुनौ च वृक्षौ वृक्षत्वेनोत्पन्नौ बभञ्ज उद्ववर्ह । 'अर्जुनस्तृणजातिः स्यात् अर्जुनः ककुभद्रुमे' इति अनेकध्वनिपदमञ्जर्याम् ।।१९।।

**पुरा धुनिश्चमुस्तथाऽपि पूतनासमन्वितौ ।**
**अनोक्षसंयुतौ तपः प्रचक्रतुः शिवां प्रति ।**
**तया वरोऽप्यवध्यता चतुर्षु च प्रयोजितः ।।२०।।**

**व्यासतीर्थीया–** पूर्वभग्नसामर्थ्यपूर्वकमाह– **पुरेति** ।।२०-२२।।

**वेदाङ्गतीर्थीया–** कस्य सुरस्यात्मजौ? किं नामधेयौ? कुतश्च तरुत्वमाप्तौ? किमर्थं भग्नौ? काभ्यां आविष्टौ? इत्यतस्तत्सर्वं निरूपयति– **पुरेत्यादिना** ।। धनेशपुत्रकौ पुरा नारदान्तिके दिगम्बरौ स्थितौ स नारदः ताविति शशाप ।।१९-२३।।

**वादिराजीया–** धुनिस्तथा चमुरपीत्यपिपदसम्बन्धः । अनोक्षः शकटाक्षः ।।२०।।

**वरदराजीया–** तरुत्वेनोत्पन्नयोः तयोः असुरद्वयावेशोप्यासीदित्याह– **पुरेति** ।। पुरा पूर्वं धुनी तन्नामकः तथा चमुरपि तन्नामकोऽपि इति द्वौ दितिजौ पूतनासमन्वितौ युक्तौ तथा अनोक्षेण शकटासुरेण संयुतौ शिवां पार्वतीं प्रति तपः प्रचक्रतुः । धुनिश्चमूपूतनाशकटाक्षाश्चत्वारो मिलित्वा तपश्चक्रुरिति भावः । तया शिवया अवध्यता केनापि वध्यत्वाभावरूपो वरः चतृषु धुन्यादिषु प्रयोजितः तेभ्यो दत्त इति यावत् ।।२०।।

**अनन्तभट्टीया–** तथा? वरमपि अवध्यतावरः । अनोक्ष इत्ये...।।२०।।

**जनार्दनीया–** तर्वोरसुरप्रवेशं कुबेरपुत्रयोः तरुत्वप्राप्तिकारणं चाह– **पुरेति** ।। पूतनया समन्वितौ युक्तौ अनोक्षेण शकटासुरेण संयुतौ धुनिः धुनिनामासुरः तथा चमुरपि चमुनामकोऽपि पुरा शिवां पार्वतीं प्रति तपश्चक्रतुः । चत्वारः सहैव तपश्चक्रुरिति भावः । तया पार्वत्या अवध्यता अवध्यत्वरूपो वरः चतुर्षु स्थितिनिमित्तं प्रयोजितः दत्त इत्यर्थः ।।२०।।

**चट्टि–** तयोः तरुत्वप्राप्तिकारणं असुरप्रवेशं चाह– **पुरेति** ।। पुरा पूर्वं धुनिः धुनिनामा असुरः तथा चमुश्च चमुनामकोऽसुरः इति द्वावपि पूतनया समन्वितौ युक्तौ अनोक्षेण शकटासुरेण संयुतौ सन्तौ शिवां पार्वतीं प्रति तपः प्रचक्रतुः । चत्वारः सहैव तपश्चक्रुरिति भावः । तया पार्वत्या अवध्यतां अवध्यत्वरूपो वरश्चतुर्षु विषये प्रयोजितः प्रयोगः कृतः वरो दत्त इत्यर्थः ।।२०।।

**अनन्तरं तृणोद्भ्रमिस्तपोऽचरद् वरं च तम् ।**
**अवाप ते त्रयो हताः शिशुर्स्वरूपविष्णुना ।।२१।।**

**वादिराजीया–** तृणं उत् ऊर्ध्वं भ्रामयतीति तृणोभ्द्रमिः तृणावर्तः ।।२१-२२।।

**वरदराजीया–** अनन्तरं तद्वरदानानन्तरं तृणोभ्द्रमिः तृणान्युद्भ्रमयतीति तथा चक्रवातात्मकस्तृणावर्त इति यावत् । तपोऽचरत् शिवां प्रतीति शेषः । तं अवध्यतालक्षणं वरं च अवाप । तेषु पञ्चसु ते त्रयः पूतनाशकटाक्षतृणावर्तास्त्रयः शिशुस्वरूपेण बालरूपेण विष्णुना कृष्णेन हताः संहृताः ।।२१।।

**अनन्तभट्टीया–** तृणोभ्द्रमिः तृणावर्तः । तं अवध्यतालक्षणम् ।।२१-२८।।

**जनार्दनीया–** अनन्तरं धुन्यादिवरप्राप्त्यनन्तरम्, तृणान्युद्भ्रामयतीति विग्रहः, तृणावर्तनामकोऽसुरः तपः शिवां प्रत्यचरत् । तं अवध्यत्वरूपं वरं च अवाप । शिशोः स्वरूपमिव स्वरूपं यस्य स तथा, स चासौ विष्णुः कृष्णः तेन । ते पूतनानोक्षतृणोभ्द्रमिरिति त्रयः हताः ।।२१।।

**चट्टि–** अनन्तरं तृणोभ्द्रमिः तृणान्युद्भ्रमयतीति तथा चक्रवातात्मकः तृणावर्त इति यावत् । शिवां पार्वतीं प्रति तपः अचरत् । तमवध्यत्वरूपं वरं च अवाप । ते त्रयः पूतनाशकटाक्षतृणावर्ता इति त्रयः शिशोः स्वरूपमिव स्वरूपं यस्य स तथा स चासौ विष्णुश्च तेन हताः ।।२१।।

**धुनिश्चमुश्च तौ तरू समाश्रितौ निषूदितौ ।**
**तरुप्रभङ्गतोऽमुना तरू च शापसम्भवौ ।।२२।।**

**वादिराजीया–** शापसम्भवौ नारदशापेन सम्भवो ययोस्तौ । तरू नलकूबरमणिग्रीवात्मकौ वृक्षौ निषूदितौ । अमुना कृष्णेन तरुप्रभङ्गतो निमित्तात् तरू समाश्रितौ धुनिश्चमुश्च दानवौ निषूदितौ ।।२२-२८।।

**वरदराजीया–** पञ्चस्ववशिष्टौ तरू वृक्षौ समाश्रितौ धुनिश्चमुश्चेति तौ द्वौ अमुना कृष्णेन तरुप्रभङ्गतः तर्वोरुत्पाटनेन निषूदितौ मारितौ । यमलार्जुनौ सुरात्मजावित्युक्तं विवृणोति– **तरू चेति** ।। तरू वृक्षौ तु शापेन सम्भवः उत्पत्तिर्ययोस्तौ ।।२२।।

**जनार्दनीया–** अमुना कृष्णेन तौ प्रसिद्धौ पूर्वोक्तौ तरू अर्जुनौ समाश्रितौ वृक्षप्रविष्टावित्यर्थः । धुनिश्चमुश्च तर्वोः वृक्षयोः प्रभङ्गतः उन्मूलनात् निषूदितौ निहतौ । असुरप्रवेशमुक्त्वा तरुत्वकारणमाह– **तरू इति** ।। तरू यमार्जुनौ, शापात् सम्भवो ययोस्तौ तथा ।।२२।।

**चट्टि–** तौ पूर्वोक्तौ तरू वृक्षौ समाश्रितौ । वृक्षप्रविष्टावित्यर्थः । धुनिश्चमुश्चेत्यवशिष्टौ द्वौ अमुना श्रीकृष्णेन तर्वोः वृक्षयोः प्रभङ्गतः उन्मूलनात् निषूदितौ निहतौ । असुरप्रवेशमुक्त्वा तरुत्वकारणमाह– **तरू चेति** ।। तरू वृक्षौ तु शापेन सम्भवः उत्पत्तिः ययोः तौ तथा ।।२२।।

**पुरा हि नारदान्तिके दिगम्बरौ शशाप[1] सः ।**
**धनेशपुत्रकौ[2] द्रुतं तरुत्वमाप्नुतं त्विति ।।२३।।**

**व्यासतीर्थीया–** शापसम्भवौ सुरौ कौ? तौ सुरौ [प्रति]कुतः शापः? कुतश्च भग्नाविति जिज्ञासायां सर्वं निरूपयति– **पुरा हीत्यादिना** ।। दिगम्बरौ स्थितौ ।।२३-२६।।

**सत्याभिनवतीर्थीया–** तत्रैव पुरा हि नारदान्तिके दिगम्बरौ...इति श्लोकः । तस्यार्थः । अत्र नारदागमनादित्यादेः शेषः । नारदागमनात् पुरा स्त्रीभिः सह दिगम्बरौ धनेशपुत्रकौ नारदागमनानन्तरं स्त्रीभिः वस्त्रेषु गृहीतेष्वपि तु विशेषतः नारदान्तिके मदेन यतः दिगम्बरौ एव स्थितौ । अतः सः नारदः द्रुतं तरुत्वं आप्नुतां इति शशापेति । एतेन वृक्षजन्मप्राप्तौ नारदशापस्य हेतुत्वोक्त्यैव नारदशापः पूर्वभावीत्यर्थस्य सिद्धत्वात् 'पुरा' इत्येतत् व्यर्थमिति दूषणं परिहृतम् । 'पुरा' इत्यस्य वृक्षजन्मप्राप्तेः पुरेत्यर्थ इत्यनङ्गीकारात् नारदागमनात् पुरा स्त्रीभिः सह दिगम्बरौ इत्यादिप्रमेयं 'तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशङ्किताः'[१०.११.६] इत्यादिभागवतवाक्यैस्सिद्धम् ।।२३।।

**वरदराजीया–** तयोः केन कारणेन शाप इत्यत आह– **पुरा हीति** ।। पुरा पूर्वं धनेशस्य पुत्रकौ नलकूबरमणिग्रीवाख्यौ नारदस्य ऋषेः अन्तिके पुरतो दिगम्बरौ नग्नौ । अतोऽपराधात् स नारदस्तौ शशाप । किमिति । तरुत्वं वृक्षत्वं आप्नुतं प्राप्तौ भवतामिति ।।२३।।

---

१. 'यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ । न विवाससमात्मानं विजानीतः सुदुर्मदौ ।। अतोऽर्हतः स्थावरतां नैव स्यातां यथा पुनः । स्मृतिः स्यात् मत्प्रसादेन तत्रापि मदनुग्रहात् ।। वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते । वृत्ते स्वर्लोकतां भूयो लब्ध्वा भक्तौ भविष्यतः ।।' इति भागवते १०.१०.२०-२२ ।

२. 'कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः । अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ।। पुरा नारदशापात् तौ वृक्षात् प्रापितौ मदात् । नळकूबरमणिग्रीवौ इति ख्यातौ श्रियान्वितौ ।।' इति भागवते १०.१०.२२-२३ ।

**जनार्दनीया–** किमर्थं कस्य शाप इत्यत आह– **पुरेति** ।। पुरा स नारदः । नारदस्य स्वस्येत्यर्थः, अन्तिके समीपे दिगम्बरौ, मुक्तवस्त्रावित्यर्थः । धनेशस्य पुत्रौ नलकूबरमणिग्रीवनामानौ द्रुतं शीघ्रं तु बहुकालं तरुत्वं युवां आप्नुतमिति शशाप । हि यतः ततः तरू शापसम्भवाविति पूर्वेणान्वयः ।।२३।।

**ताम्रपर्णीया–** दिगम्बरावागतौ इति शेषः ।।२३-२५।।

**चट्टि–** केन कारणेन कस्य शाप इत्यत आह– **पुरेति** ।। पुरा पूर्वं धनेशस्य कुबेरस्य पुत्रकौ नलकूबरमणिग्रीवाख्यौ नारदस्य ऋषेः अन्तिके समीपे दिगम्बरौ विवस्त्रौ सन्तौ स्थितौ । सः नारदः तौ नलकूबरमणिग्रीवौ कर्मभूतौ द्रुतं शीघ्रं बहुकालं तरुत्वं युवौ आप्नुतामाप्नुतम् । यद्वा भवन्तौ इति शेषः । आप्नुतामिति शशाप । हि यतः ततः तरू शापसम्भवौ इति पूर्वेणान्वयः ।।२३।।

**ततो हि तौ निजां तनुं हरेः प्रसादतः शुभौ ।**
**अवापतुः स्तुतिं प्रभोर्विधाय जग्मतुर्गृहम् ।।२४।।**

**वेदाङ्गतीर्थीया–** ततः तरुभङ्गतः ।।२४-२७।।

**वरदराजीया–** ततः कारणात् उभौ कुबेरात्मजौ हरेः कृष्णस्य प्रसादतोऽनुग्रहेण निजां तनुं स्वमूलरूपं अवापतुः । प्रभोः कृष्णस्य स्तुतिं स्तोत्रं विधाय कृत्वा गृहं स्वलोकं जग्मतुः प्रापतुः ।।२४।।

**जनार्दनीया–** तौ नलकूबरमणिग्रीवौ हरेः कृष्णस्य प्रसादतः शुभौ शापदेहान्मुक्तौ सन्तौ निजां तनुं स्वमूलरूपं अवापतुः । प्रभोः कृष्णस्य स्तुतिं विधाय गृहं देवतापदं प्रति जग्मतुः ।।२४।।

**चट्टि–** तौ नलकूबरमणिग्रीवौ हरेः श्रीकृष्णस्य प्रसादतः अनुग्रहेण शुभौ शापात् मुक्तौ सन्तौ निजां तनुं स्वमूलरूपमवापतुः । प्रभोः श्रीकृष्णस्य स्तुतिं स्तोत्रं विधाय कृत्वा गृहं स्वलोकं प्रति जग्मतुः ।।२४।।

**नलकूबरमणिग्रीवौ मोचयित्वा तु शापतः ।**
**वासुदेवोऽथ गोपालैर्विस्मितैरभिवीक्षितः ।।२५।।**

**वरदराजीया–** एवं नलकूबरमणिग्रीवौ तन्नामानौ धनदात्मजौ शापात् मोचयित्वा अथानन्तरं वासुदेवः कृष्णः विस्मितैः गोपालैरभिवीक्षितः अवलोकितोऽभूत् ।।२५।।

**जनार्दनीया–** अथ तयोर्गमनानन्तरं विस्मितैः विस्मययुक्तैः गोपालैरभिवीक्षितः दृष्टोऽभूदित्यर्थः ।।२५।।

**चट्टि—** वासुदेवः श्रीकृष्णः नलकूबरमणिग्रीवौ तन्नामानौ धनदात्मजौ शापतः नारदशापान्मोचयित्वा अथ तयोः गमनानन्तरं विस्मितैः स्मययुक्तैः गोपालै अभिवीक्षितः दृष्टोऽभूत् ।।२५।।

**वृन्दावनमियासुः स नन्दसूनुर्बृहद्वने[1] ।**
**ससर्ज रोमकूपेभ्यो वृकान् व्याघ्रसमान् बले[2] ।।२६।।**

**वरदराजीया—** स नन्दसूनुः कृष्णो बृहद्वनात् वृन्दावनमियासुः यातुमिच्छुः बृहद्वने बले बलविषये व्याघ्रसमानान् वृकान् श्वापादान् रोमकूपेभ्यः स्वरोमकूपेभ्यः ससर्ज सृष्टवान् ।।२६।।

**जनार्दनीया—** बृहद्वनाद् वृन्दावनं वृन्दावनाख्यस्थानविशेषं प्रति यियासुः यातुमिच्छुः नन्दस्य सूनुः स कृष्णः बृहद्वने रोमकूपेभ्यः, स्वस्येति शेषः । वले शक्तिविषये व्याघ्रसमान् वृकान् सारमेयाकारान् श्वापदविशेषान् ससर्ज ।।२६।।

**चट्टि—** सः नन्दसूनुः श्रीकृष्णः बृहद्वनात् वृन्दावनं वृन्दावनाख्यस्थानविशेषं प्रति यियासुः यातुमिच्छुः सन् बृहद्वने रोमकूपेभ्यः, स्वस्येति शेषः । वले बलविषये व्याघ्रसमानान् वृकान् श्वापदविशेषान् ससर्ज ।।२६।।

**अनेककोटिसङ्घैस्तैः पीड्यमाना व्रजालयाः ।**
**ययुर्वृन्दावनं नित्यानन्दमादाय नन्दजम् ।।२७।।**

---

१. 'तत्र गोवर्धनं चैव भाण्डीरं च वनस्पतिम् । कालिन्दीं च नदीं रम्यां द्रक्ष्यावश्चरतः सुखम् ।। तत्रायं कल्प्यतां घोषः त्यज्यतां निर्गुणं वनम् । संत्रासयावो भद्रं ते किञ्चिदुत्पाद्य कारणम् ।। एवं कथयतस्तस्य वासुदेवस्य धीमतः । प्रादुर्बभूवुः शतशो रक्तमांसवसाशनाः ।। घोराश्चिन्तयस्तस्य स्वतनूरुहजास्तदा ।।' इति हरिवंशे.२.८.२६-३१ तत्र व्रजमण्डले मधुतालकुमुदबहुलाकाम्यखदिरवृन्दाभद्रभाण्डीरविल्वलोहमहावनभेदात् द्वादश वनानि सन्ति ।

२. 'सन्त्रासयावो भद्रं ते किञ्चिदुत्पाद्य कारणम् । एवं कथयतस्तस्य वासुदेवस्य धीमतः ।। प्रादुर्बभूवुः शतशो रक्तमांसवसाशनाः । घोराश्चिन्तयतस्तस्य स्वतनूरुहजास्तदा ।। विनिष्पेतुर्भयकराः सर्वशः शतशो वृकाः । निष्पतन्ति स्म बहवो व्रजस्योत्सादनाय वै ।। वृकान्निष्पतितान् दृष्ट्वा गोषु वत्सेष्वथो नृषु । गोपीषु च यथाकामं व्रजं त्रासोऽभवत् महान् ।। ते वृकाः पञ्चबद्धाश्च दशबद्धास्तथा परे । त्रिंशद्विंशतिबद्धाश्च शतबद्धास्तथा परे ।। निश्चेरुस्तस्य गात्रेभ्यः श्रीवत्सकृतलक्षणाः । कृष्णस्य कृष्णवदना गोपानां भयवर्धनाः ।। भक्षयद्भिश्च तैर्वत्सांस्त्रासयद्भिश्च गोर्व्रजात् । निशि बालान् हरद्भिश्च वृकैरुत्साद्यते व्रजः ।। न वने शक्यते गन्तुं न गाश्च परिरक्षितुम् । न वनात् किञ्चिदाहर्तुं न च वा तरितुं नदीम् ।। त्रस्ता ह्युद्विग्नमनसो गतास्तस्मिन् वनेऽवसन् । एवं वृकैरुदीर्णैस्तु व्याघ्रतुल्यपराक्रमैः ।। व्रजो निष्पन्दचेष्टस्य एकस्थानचरः कृतः ।।' इति हरिवंशे.विष्णु.८.२९-३८ ।

**व्यासतीर्थीया–** ततस्तरुभङ्गानन्तरं बृहद्वने जातमालस्यं वृन्दावने परिहर्तुं वृकान् ससर्जेति न भावनीयमिति भावेनोक्तम्– **नित्यानन्दमिति** ।।२७।।

**वरदराजीया–** वृकसर्जनफलमाह– **अनेकेति** ।। अनेकेषां कोटीनां सङ्घैः तावत्सङ्ख्याकैः तैः सृष्टैः वृकैः पीड्यमानाः पीडां प्राप्यमाणा व्रजालयाः गोकुलवासिनो वृन्दावनं ययुः । किं कृत्वा नित्यानन्दं परिपूर्णानन्दं नन्दजं कृष्णमादाय ।।२७।।

**जनार्दनीया–** कोटीनां सङ्घाः कोटिसङ्घाः, अनेके कोटिसङ्घा येषां ते तथा तैः, बहुकोटिसमूहवद्भिः तैः वृकैः पीड्यमानाः, व्रजे आलयाः गृहाः येषां ते तथा, व्रजवासिनो नराः । नित्यः अविच्छिन्नः आनन्दो यस्य स तथा तम् । नन्दजं नन्दगोपपुत्रं आदाय वृन्दावनं ययुः प्रापुः ।।२७।।

**ताम्रपर्णीया–** बृहद्वने जातमालस्यं वृन्दावने परिहर्तुं वृन्दावनमापेति न मन्तव्यमिति भावेनोक्तम्– **नित्यानन्दमित्यादि** ।।२६-२८।।

**चट्टि–** वृकसर्जनफलमाह– **अनेकेति** ।। कोटीनां सङ्घः कोटिसङ्घः अनेके कोटिसङ्घाः येषां ते तथा तैः । बहुकोटिसमूहवद्भिः तैः वृकैः पीड्यमानाः, व्रज आलयः गृहः एषां ते तथा गोकुलवासिनः, नित्यः अविच्छिन्नः आनन्दो यस्य स तथा तम्, नन्दजं नन्दगोपपुत्रं श्रीकृष्णं आदाय वृन्दावनं ययुः ।।

**इन्दिरापतिरानन्दपूर्णो वृन्दावने प्रभुः ।**
**नन्दयामास नन्दादीनुद्दामतरचेष्टितैः ।।२८।।**

**वेदाङ्गतीर्थीया–** उद्दामतरचेष्टितैः अतिप्रौढचेष्टितैः ।।२८।।

**वरदराजीया–** इन्दिरायाः लक्ष्म्याः पतिः, आनन्देन स्वरूपानन्देन पूर्णः परिपूर्णः, प्रभुः श्रीकृष्णो वृन्दावने उद्दामतरचेष्टितैः अत्युत्तमाभिः स्वक्रीडादिभिः नन्दादीन् गोपान् नन्दयामास सन्तोषितवान् ।।

**जनार्दनीया–** उद्दामतरैः अतिप्रौढैः चेष्टितैः स्वकृतकर्मभिः नन्दयामास सन्तोषयामास ।।२८।।

**चट्टि–** इन्दिरायाः लक्ष्म्याः पतिः आनन्देन स्वरूपानन्देन पूर्णः प्रभुः श्रीकृष्णः वृन्दावने उद्दामतरैः अत्युत्तमैश्चेष्टितैः स्वकृतकर्मभिः नन्दादीन् गोपान् नन्दयामास । 'नदि हर्षे' इति धातुः ।।२८।।

**स चन्द्रतो हसत्कान्तवदनेनेन्दुवर्चसा ।**
**संयुतो रौहिणेयेन वत्सपालो[1] बभूव ह ।।२९।।**

१. 'एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः । कलवाक्यैश्च कालेन वत्सपालौ बभूवतुः ।।' इति भागवते १०.१२.३७

**व्यासतीर्थीया–** चन्द्रतश्चन्द्रम् ।।२९-३३।।

**वेदाङ्गतीर्थीया–** चन्द्रतः चन्द्रम् । सार्वविभक्तिकः तसिः ।।२९।।

**वादिराजीया–** स चन्द्रतो हसत्कान्तवदनेनेत्यत्र तसेः सार्वविभक्तिकत्वात् चन्द्रतः चन्द्रमिति द्वितीया ।।२९।।

**वरदराजीया–** सः कृष्णो रौहिणेयेन कथम्भूतेन चन्द्रत इति द्वितीयार्थे तसिः । चन्द्रं हसत् निराकुर्वत् कान्तं मनोहरं वदनं मुखं यस्य स तथा । इन्दोः चन्द्रस्य वर्च इव वर्चो तेजः यस्य स तथा तेनेत्यर्थः । एवम्भूतेन रौहिणेयेन वलभद्रेण संयुतः सन् वत्सानां पालः पालको वभूव ।।२९।।

**अनन्तभट्टीया–** चन्द्रतः हसन् कान्तवदनं यस्येति विग्रहः ।।२९।।

**जनार्दनीया–** चन्द्रतश्चन्द्रं हसत् तिरस्कुर्वत् कान्तं मनोहरं वदनं यस्य स तथा, तेन इन्दोः वर्च इव वर्चः कान्तिर्यस्य स तथा, तेन रौहिणेयेन संयुतः स कृष्णः वत्सानां पालः पालको बभूव।।२९।।

**ताम्रपर्णीया–** चन्द्रतः चन्द्रं इति द्वितीयार्थे तसिः । इन्दुवर्चसेति रौहिणेयविशेषणम् ।। ।।२९-३७।।

**चट्टि–** चन्द्रतः चन्द्रं सार्वविभक्तिकः तसिः । हसत् तिरस्कुर्वत् कान्तं मनोहरं वदनं यस्य सः तथा, तेन इन्दोर्वर्च इव वर्चः कान्तिर्यस्य स तथा, तेन रौहिणीयेन संयुतः सः श्रीकृष्णः वत्सानां पालः पालको वभूव ।।२९।।

**दैत्यं[1] स वत्सतनुमप्रमयः प्रगृह्य कंसानुगं हरवरादपरैरवध्यम् ।**
**प्रक्षिप्य वृक्षशिरसि न्यहनद् [2]बकोऽपि कंसानुगोऽथ विभुमच्युतमाससाद ।।**

**वादिराजीया–** स वत्सतनुमप्रमय इत्यत्र प्रकर्षेण मा ज्ञानं न यस्मिन्सोऽप्रमः । 'या प्रापण' इति धातोः स्वयं ज्ञानरूपश्च । अप्रमश्चासौ यश्चेति विग्रहः । स तु कृष्णं सर्वेश्वरं न जानाति । कृष्णस्तु तं दैत्यं जानातीति भावः । यद्वा 'माङ् मान' इति धातोः कर्मण्यौणादिके डप्रत्यये कृते अप्रमेय एवाप्रमयः ।।३०-३२।।

---

१. 'कदाचित् यमुनातीरे वत्सान् चारयतोऽर्भकैः । वयस्यैः कृष्णबलयोः जिघांसुर्दैत्य आगमत् ।। गृहीत्वाऽपरपादाभ्यां सहलाङ्गूलमच्युतः । भ्रामयित्वा कपित्थाग्रे प्राहिणोत् गतजीवितम् ।। स कपित्थैर्महाकायः पात्यमानैः पपात ह । देवाश्चोपरि सन्तुष्टा बभूवुः पुष्पवर्षिणः ।।' इति भागवते १०.१२.४१-४४ ।

२. 'स वै बको नाम महानसुरो बकरूपधृक् । आगत्य तरसा कृष्णं तीक्ष्णतुण्डोऽग्रसत् बली ।।' इति भागवते १०.१२.४९।

**वरदराजीया–** अप्रमयः प्रकृष्टा मा येषां ते प्रमाः । प्रमैर्याप्यते साकल्येन प्राप्यते ज्ञायत इति प्रमयः । न प्रमयः अप्रमयः । प्राज्ञैरपि साकल्येन प्रमातुमशक्य इति यावत् । स कृष्णो हरवरादपरैः जनैः अवध्यं कंसस्यानुगं भृत्यं वत्सतनुं वत्सस्वरूपं दैत्यं वृक्षशिरसि वृक्षाग्रे प्रक्षिप्य निरस्य न्यहनत् हतवान् । अथानन्तरं कंसानुगो बको नामासुरो विभुमच्युतं कृष्णमाससाद प्राप्तवान् ।।३०।।

**जनार्दनीया–** अप्रमयः प्रमितिः प्रमः, घञर्थे कः, तेन प्रमीयते इति प्रमयः, न प्रमयः अप्रमयः, ज्ञातुमशक्य इत्यर्थः । कृष्णः कंसस्य अनुगं अनुचरम्, भृत्यमिति यावत् । वत्सस्य तनुरिव तनुः स्वरूपं यस्य स तथा तम् । दैत्यं प्रगृह्य पृष्टपादौ प्रगृह्य वृक्षस्य शिरसि ऊर्ध्वभागे प्रक्षिप्य सम्प्रास्य न्यहनत् जघान । अथ बकोऽपि बकनामकोऽप्यसुरः आससाद प्राप ।।३०।।

**चट्टि–** न प्रमयः अप्रमयः ज्ञातुमशक्य इत्यर्थः । श्रीकृष्णः हरवराद् अपरैः जनैः अवध्यं कंसस्य अनुगं भृत्यं वत्सस्य तनुरिव तनुर्यस्य स तथा तं दैत्यं प्रगृह्य, पृष्टपादाविति शेषः । वृक्षस्य शिरसि उपरिभागे प्रक्षिप्य न्यहनत् जघान । अथानन्तरं कंसानुगः बकः बकनामकोऽप्यसुरः विभुमच्युतं श्रीकृष्णं आससाद प्राप ।।३०।।

**स्कन्दप्रसादकवचः स मुखे चकार गोविन्दमग्निवदमुं प्रदहन्तमुच्चैः ।**
**चच्छर्द तुण्डशिरसैव निहन्तुमेनमायान्तमीक्ष्य जगृहेऽस्य स तुण्डमीशः।।३१।।**

**वेदाङ्गतीर्थीया–** अप्रमेयः स्कन्धप्रसादकवचः स्कन्दप्रसादरक्षः । तुण्डशिरसा तुण्डाग्रेण ।। ।।३१-३२।।

**मधुसूदनीया–** ।। **स्कन्दप्रसादकवचः** ।। स्कन्दप्रसादः स्कन्दवरः स एव कवचं यस्य स तथोक्त इत्यर्थः ।।३१-३५।।

**वरदराजीया–** स्कन्दस्य प्रसाद एव कवचं यस्य स तथा बको गोविन्दं मुखे चकार मुखे निक्षिप्तवान् । अग्निवत् अग्निर्यथा तथा प्रदहन्तं ज्वलन्तं कृष्णं चच्छर्द छर्दितवान् । तुण्डशिरसा तुण्डाग्रेण निहन्तुं एनं कृष्णं आयान्तमीक्ष्य ईशः कृष्णोऽस्य बकस्य तुण्डं चुञ्चुं जगृहे धृतवान् ।।३१।।

**अनन्तभट्टीया–** स्कन्दप्रसादकवचः स्कन्दप्रसादाख्यकवचयुक्तः । अथवा स्कन्दप्रसादलक्षणकवच इत्यर्थः । मुखे चकार पीतवानित्यर्थः । चच्छर्द निजगार तुण्डशिरसा चञ्चुपुटेन ।।३१।।

**जनार्दनीया–** स्कन्दस्य षण्मुखस्य प्रसादः वररूपप्रसादः कवचं वर्म यस्य स तथा । तादृशो बकपक्षिरूपदैत्यः गोविन्दं श्रीकृष्णं मुखे चकार कृतवान्, अग्रसदित्यर्थः । स बकः उच्चैः अतिशयेन

अग्निवत् प्रदहन्तं दहन्तं अमुं कृष्णं चच्छर्द ववाम । ईशः स कृष्णः तुण्डशिरसा चुञ्चाग्रेण स्वं निहन्तुमेवायान्तं आगच्छमानं एनं बकं वीक्ष्य अस्य बकस्य तुण्डं चुञ्चुं जगृहे जग्राह ।।३१।।

**चट्टि–** स्कन्दस्य षण्मुखस्य प्रसादः वररूपप्रसादः स एव कवचं वर्म यस्य स तथा सः बकः पक्षिरूपो दैत्यः गोविन्दं श्रीकृष्णं मुखे चकार । अग्रसदित्यर्थः । सः बकः उच्चैः अतिशयेनाग्निवदग्निर्यथा तथा प्रदहन्तं ज्वलन्तममुं श्रीकृष्णं चच्छर्द ववाम । सः ईशः श्रीकृष्णः तुण्डशिरसा चञ्च्वग्रेण स्वं निहन्तुमेवायान्तं आगच्छमानं एनं वकं ईक्ष्यास्य बकस्य तुण्डं चञ्चुं जगृहे जग्राह ।।३१।।

**तुण्डद्वयं[1] यदुपतिः करपल्लवाभ्यां सङ्गृह्य चाऽशु विददार ह पक्षिदैत्यम् ।**
**ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः सायं ययौ व्रजभुवं सहितोऽग्रजेन ।।३२।।**

**वरदराजीया–** यदुपतिः श्रीकृष्णः तुण्डद्वयं तुण्डस्योर्ध्वाधोदलद्वयं करपल्लवाभ्यां हस्ताख्यपल्लवाभ्यां पल्लवकोमलाभ्यां हस्ताभ्यामित्यर्थः । सङ्गृह्य प्रगृह्य पक्षिदैत्यं पक्षिरूपिणं बकं दैत्यमाशु विददार विदारितवान् । कुसुमानि पुष्पाणि वर्षतीति तथा तैः ब्रह्मादिभिर्देवैरीड्यमानः स्तूयमानः अग्रजेन बलभद्रेण सहितः कृष्णः व्रजभुवं गोकुलस्थानं सायं सायङ्काले गतवानिति ।।३२।।

**जनार्दनीया–** करपल्लवाभ्यां प्रवालवत् कोमलकराभ्यामित्यर्थः । ऊर्ध्वाधस्थं तुण्डस्य द्वयम् । कुसुमानि वर्षन्तीति कुसुमवर्षिणः ते तथा ।।३२।।

**चट्टि–** यदुपतिः श्रीकृष्णः करपल्लवाभ्यां प्रवालवत्कोमलाभ्यां कराभ्यां इत्यर्थः । तुण्डद्वयं ऊर्ध्वाधतुण्डस्य द्वयं सङ्गृह्य प्रगृह्य पक्षिदैत्यं पक्षिरूपिणं बकदैत्यं आशु विददार दारितवान् । कुसुमानि पुष्पाणि वर्षन्तीति कुसुमवर्षिणः तैः ब्रह्मादिभिः देवैः ईड्यमानः स्तूयमानोऽग्रजेन बलभद्रेण सहितः सन् व्रजभुवं गोकुलस्थानं सायङ्काले ययौ ।।३२।।

**एवं स देववरवन्दितपादपद्मो गोपालकेषु विहरन् भुवि [2]षष्ठमब्दम् ।**
**प्राप्तो गवामखिलपोऽपि स पालकोऽभूद् वृन्दावनान्तरगसान्द्रलतावितानै ।।३३।।**

**वेदाङ्गतीर्थीया–** वृन्दावनान्तरगसान्द्रलतावितानै वृन्दावनमध्यगतनिबिडलतावितानवति प्रदेशे ।।३३।।

---

१. 'तदा बकारिं सुरलोकवासिनः समाकिरन् नन्दनमल्लिकादिभिः । समीडिरे चानकशङ्खसंस्तवैस्तद् वीक्ष्य गोपालसुता विसिस्मिरे ।।' इति भागवते १०.१२.५३

२. 'ततश्च पौगण्डवयःश्रितौ व्रजे बभूवतुस्तौ पशुपालसम्मतौ । गाश्चारयन्तौ सखिभिः समं पदैः वृन्दावनं पुण्यमतीव चक्रतुः ।।' इति भागवते १०.१३.१

**वादिराजीया–** वृन्दावनान्तरगसान्द्रलतावितानं इत्यत्र वृन्दावनान्तरगसान्द्रलतावितानं प्रदेशे गवां पालकोऽभूदित्यन्वयः ।।३३।।

**वरदराजीया–** एवं वक्ष्यमाणरीत्या देववरैः देवश्रेष्ठैः वन्दितं पादपद्मं यस्य स तथा । स कृष्णो भुवि भूम्यां गोकुलेषु मध्ये विहरन् क्रीडन् षष्ठं अब्दं वर्षं प्राप्तः । वयसा षड्वर्षो बभूवेत्यर्थः । स कृष्णो अखिलपोऽपि सर्वपालकोऽपि गवां पालकोऽभूत् । कुत्र वृन्दावनस्यान्तरे मध्ये गच्छतीति तिष्ठतीति वृन्दावनान्तरगः । ताश्च ताः सान्द्रं निरन्तरं लताश्च ताभिर्विताने विस्तीर्णे, वने इति शेषः ।।३३।।

**जनार्दनीया–** एवमुक्तप्रकारेण देववरैः उत्तमैर्ब्रह्माद्यैर्वन्दितपादपद्मः, स कृष्णः गोपालकेषु विहरन् क्रीडन् भुवि षष्ठं अब्दं प्राप्तः सन्, अखिलपोऽपि ब्रह्मादिविश्वपालकोऽपि । वृन्दावनस्यान्तरे मध्ये गच्छन्तीति तथा, ताश्च ताः सान्द्राः अविरलाः, तादृशाः लताः वल्लयः तल्लक्षणं वितानं उपरितनवस्त्रविशेषो यस्मिन् तथा तस्मिन् । यद्वा लताभिः विताने विस्तीर्णे स्थले गवां पालकोऽभूत् ।।३३।।

**चट्टि–** एवमुक्तप्रकारेण देववरैः देवश्रेष्ठैः वन्दिते पादपद्मे यस्य स देववरवन्दितपादपद्मः सः श्रीकृष्णः गोपालकेषु विहरन् क्रीडन् भुवि षष्ठमब्दं वर्षं प्राप्तः श्रीकृष्णः अखिलपोऽपि ब्रह्मादिविश्वपालकोऽपि वृन्दावनस्यान्तरे मध्ये गच्छन्ति तिष्ठन्ति इति वृन्दावनान्तरगाः । ताश्च ताः सान्द्राः अविरलाः लताश्च ताभिः विताने विस्तीर्णे स्थले गवां पालको अभूत् ।।३३।।

**ज्येष्ठं विहाय स कदाचिदचिन्त्यशक्तिर्गोगोपगोगणयुतो यमुनातटेषु ।**
**रेमे भविष्यदनुवीक्ष्य हि गोपदुःखं तद्बोधनाय निजमग्रजमेषु सोऽधात् ।।३४।।**

**व्यासतीर्थीया–** गोपायन्तीति गोपाः । गाः गोपायन्तीति गोगोपाः । गोगोपाश्च गावश्च गोगोपगावः । गोगोपगवां गणः गोगोपगोगणः । तेन युक्तस्तथोक्तः । ज्येष्ठं निधाय स्वयमेव गमने निमित्तमाह– **भविष्यदिति** ।।३४।।

**वेदाङ्गतीर्थीया–** गाः गोपायन्ति पालयन्तीति गोगोपाः । 'गुपू रक्षणे' इति धातुः । गोगोपानां गवां च गणः गोगोपगोगणः तद्युतः ।।३४।।

**वादिराजीया–** 'गुपू रक्षण' इति धातोः गाः गोपायन्ति रक्षन्तीति गोगोपाः गोपालाः । अतो न पुनरुक्तिः ।।३४-४८।।

**वरदराजीया–** अचिन्त्या शक्तिर्यस्य स कृष्णः कदाचित् कस्मिंश्चिद्दिने ज्येष्ठं बलभद्रं विहाय गेह एव स्थापयित्वा, गाः गोपायन्ति रक्षन्तीति गोगोपाः गोपालाः, तैः गवां गणैश्च युतः सहितः सन्

यमुनायास्तटेषु रेमे [क्रीडयाम्बभूव] । ननु ज्येष्ठं विहाय गमने किं निमित्तमित्यत आह– **भविष्यदिति** ।। स कृष्णो भविष्यत् एष्यत् गोपानां दुःखं कालीयेन स्वस्य बन्धने सति गोपानां दुःखं स्यादिति निश्चित्य तद्बोधनाय तेषां गोपानां बोधनाय स्वस्वरूपज्ञानार्थं निजमग्रजं बलभद्रं एषु गोपेषु अधात् स्थापितवानित्यर्थः ।।३४।।

**अनन्तभट्टीया–** गोगोपगोगणयुतः गाः गोपायतीति गोगोपाः तैः गवां गणेन च युतः । भविष्यद्गोपदुःखं तद्बोधनाय गोपबोधनाय ।।३४।।

**जनार्दनीया–** स कृष्णः ज्येष्ठं बलभद्रं विहाय, गोगोपगोगणयुतः गाः गोपायन्ति पालयन्तीति गोगोपाः, 'गुपू रक्षणे' इति धातुः । गवां गणः गोगणः, गोगोपैः गोगणेन च युतः सन् यमुनायाः तटेषु रेमे । ज्येष्ठं विहाय गमने कारणमाह– **भविष्यदिति** ।। स कृष्णः भविष्यद् भावि गोपानां दुःखं अनुवीक्ष्य विचार्य दृष्ट्वा तेषां गोपानां बोधनाय कृष्णसामर्थ्यकथनार्थम्, एषु गोपेषु अग्रजं बलं अधात् स्थापयामास ।।३४।।

**चट्टि–** अचिन्त्या शक्तिः यस्य सः श्रीकृष्णः कदाचित् कस्मिंश्चित् दिने ज्येष्ठं बलभद्रं विहाय गेहे अवस्थाप्य गोगोपगोगणयुतः गाः गोपायन्ति पालयन्तीति गोगोपाः गोपालाः । 'गुपू रक्षणे' इति धातुः । गवां गणो गोगणः गोगोपैः गोगणेन च युक्तः सन् यमुनायास्तटेषु रेमे । ननु ज्येष्ठं विहाय गमने किं निमित्तमित्यत आह– **भविष्यदिति** ।। सः श्रीकृष्णः भविष्यदेष्यत् गोपानां दुःखमनुवीक्ष्य स्वस्य कालीयेन बन्धने सति गोपानां दुःखं स्यादिति निश्चित्य तद्बोधनाय तेषां गोपानां बोधनाय कृष्णसामर्थ्यकथनार्थं निजमग्रजं बलभद्रं एषु गोपेषु अधात् स्थापयामास ।।३४।।

**तं ब्रह्मणो वरबलादुरगं त्ववध्यं सर्वैरवार्यविषवीर्यमृते सुपर्णात्[१] ।**
**विज्ञाय तद्विषविदूषितवारिपानसन्नान् पशूनपि वयस्यजनान् स आवीत् ।।३५।।**

---

१. 'विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः । कदर्थीकृत्य गरुडं स्वयं तां बुभुजे बलिम् ।। तच्छ्रुत्वा कुपितो राजन् भगवान् भगवत्प्रियः । विजिघांसुर्महावीर्यः कालियं समुपाद्रवत् ।। तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुद्धृतनैकमस्तकः । दद्भिः सुपर्णं व्यदशद् ददायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ।। तं तार्क्ष्यपुत्रः स निरस्य मन्युमान् प्रचण्डवेगो मधुसूदनासनः । पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रोः सुतमुग्रविक्रमः ।। सुपर्णपक्षाभिहतः कालियोऽतीवविह्वलः । ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदम् ।।' इति भागवते १०.१५.४-८ । कालियः गरुडं यदा ददंश तदा तं गरुडः निराचक्रे । तथा स्वपक्षेण ताडयामास च । तेन कालियः विह्वलस्सन् यामुनं ह्रदं विवेश इति निरूप्यते । अनया आख्यायिकया कालियविषेन गरुडः न पराभूतः किन्तु तत्पक्षघातेन कालियः एव निरस्तः अभूत् इति सिद्ध्यति । इयमाख्यायिका 'सर्वैरवार्यविषवीर्यमृते सुपर्णात्' इत्यत्रोक्तस्य 'कालीयविषनिवारणपटीयसी सौपर्णीशक्तिः' इति प्रमेयस्योपपादिका ।

**व्यासतीर्थीया–** अत्र तिष्ठतीत्युरगं विज्ञाय जगाम ।।३५।।

**वेदाङ्गतीर्थीया–** नन्दादीनां दुःखं भविष्यतीति चेत् किमिति यमुनाजलेषु रेमे इत्यतः कालियनिग्रहार्थं चेत्यभिप्रायेणाह– **तं ब्रह्मण इति** ।। सः कृष्णः ब्रह्मणः वरबलात् अवध्यं उरगं यमुनाजलेषु स्थितं विज्ञाय, तत्र रन्तुं जगामेति अध्याहृतक्रियया सम्वन्धः ।।३५-३६।।

**वरदराजीया–** स कृष्णो ब्रह्मणो धातुः वरबलात् सर्वैरवध्यं सुपर्णात् गरुडादृते अन्येन वारयितुमशक्यं विषवीर्यं यस्य तं उरगं सर्पं विज्ञाय ज्ञात्वा, तस्य सर्पस्य विषेण दूषितस्य वारिणो जलस्य पानेन सन्नान् मृतप्रायान् पशून् वयस्यजनांश्च गोपान् आवीत् ररक्ष उज्जीवयामासेत्यर्थः ।।३५।।

**अनन्तभट्टीया–** सन्नान् मृतान् ।।३५।।

**जनार्दनीया–** स कृष्णः ब्रह्मणो वरबलात् सर्वैरवध्यम्, सुपर्णाद् गरुडाद् ऋते अवार्यं विषवीर्यं यस्य स तथा तम् । उरगं कालियाख्यं सर्पं जलस्थं विज्ञाय, तस्य सर्पस्य विषेण विदूषितं दुष्टं वारि जलं तस्य पानेन सन्नानपि मूर्च्छितानपि मृतानपि वा पशून् वयसि भवाः वयस्याः, समानवयस्का इत्यर्थः । ते च ते जनाश्च तथा तान् । सर्वजनानित्यर्थः । आवीत् अपात् ।।३५।।

**चट्टि–** सः कृष्णः ब्रह्मणो वरवलात् सर्वैरवध्यं सुपर्णात् गरुडाद् ऋते अन्येनावार्यं वारयितुमशक्यं विषवीर्यं यस्य स तथा । तमुरगं कालियाख्यं सर्पं जलस्थं विज्ञाय ज्ञात्वा, तस्य सर्पस्य विषेण विदूषितं दुष्टं वारि जलं तस्य पानेन सन्नान् मूर्च्छितान् अपि मृतान् वा । पशून् वयसि भवाः वयस्याः समानवयस्काः इत्यर्थः । ते च ते जनाश्च तान् सखिजनानित्यर्थः । आवीत् ररक्ष । 'अव रक्षणे' इति धातुः ।।३५।।

**तद्दृष्टिदिव्यसुधया[१] सहसाऽभिवृष्टाः**
**सर्वेऽपि जीवितमवापुरथोच्छशाखम् ।**
**कृष्णः कदम्बमधिरुह्य[२] ततोऽतितुङ्गा-**
**दास्फोट्य गाढरशनो न्यपतद् विषोदे[३] ।।३६।।**

१. 'ययौ राममृते राजन् कालिन्दीं सखिभिर्वृतः । अथ गावश्च गोपाश्च निदाघातपपीडिताः । दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ।। विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः । निपेतुर्व्यसवः सर्वे मूर्च्छिता वै कुरूद्वह ।। वीक्ष्य तान् स तथाभूतान् कृष्णो योगेश्वरेश्वरः । ईक्षयाऽमृतवर्षिण्या स्वनाथान् समजीवयत् ।। ते सम्प्रतीतस्मृतय उत्थाय च जलान्तिकात् । आसन् सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ।। अन्वमंसत तद्राजन् गोविन्दानुग्रहेक्षितम् । पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ।।' इति भागवते १०.१३.४७-५२

**व्यासतीर्थीया–** ओषधेनावीत् किमिति जिज्ञासायामाह– **तद्दृष्टिदिव्येति** ।।३६।।

**सत्याभिनवतीर्थीया–** तत्रैव कृष्णः कदम्बमधिरुह्य...इत्यस्ति । तस्यार्थः । कृष्णः कदम्बमधिरुह्य गाढरशनः गाढा दृढा रशना कटिप्रदेशः यस्यासौ गाढरशनः । दृढरशनाबद्धकटिप्रदेशः सन् आस्फोट्य ततः कदम्बवृक्षात् ऊर्ध्वं गत्वा अतितुङ्गात् प्रदेशात् विषोदे न्यपतदिति ।।३६।।

**मधुसूदनीया–** ।। **कृष्णः कदम्बमधिरुह्येति** ।। उक्तञ्च– 'आरूढः चपलः कृष्णः कदम्बशिखरं मुदा । कदम्बः कृष्णवृक्षो हि कालीयह्रदसमीपगः ।। तस्मादेको न शुष्कोऽसौ विषहारकरः परान् ।।' इति हरिवंशे [२.१२.१] । 'ननु समन्ताद्योजनं साग्रम्' इति हरिवंशे [२.११.४७] तथा 'ह्रदं कालीयनागस्य ददर्शाऽतिविभीषणम् । विषाग्निना प्रसरता दग्धतीरमहातरुम् ।।' इति विष्णुपुराणवाक्याच्च [५.७.३] योजनपर्यन्तं सर्वेषां वृक्षाणां कालीयसर्पविषेण दग्धत्वात् कथमयं वृक्ष उर्वरित इति चेदुच्यते । 'पूर्वं मात्रार्थं अमृतमादाय तन्मार्गाद्गच्छतो गरुडस्य तद्वृक्षे स्थित्या एतद्वृक्षेऽमृतकलशस्पर्शेनायं वृक्ष उर्वरित' इति सम्प्रदायविदः ।।३६-३७।।

**वरदराजीया–** तस्य कृष्णस्य दृष्टिलक्षणसुधया अभिवृष्टाः अभिषिक्ताः सर्वेऽपि सहसा युगपदेव जीवितं जीवनमापुः । अथ [अपरस्मिन् दिने] कृष्णः उच्चाः शाखाः यस्य स तथा तम्, कदम्बं नीपवृक्षं अधिरुह्य अतितुङ्गात् अत्युच्चात् ततः कदम्बात् आस्फोट्य भुजावास्फालयित्वा, गाढा सुबद्धाः रशनानीव यस्य स तथाभूतः सन् विषोदे विषप्राये जले न्यपतत् पपात ।।३६।।

---

२. 'गृहीत्वाऽमृतपात्रं हि गच्छन्मार्गे क्षुधार्दितः । कदम्बे कलशं न्यस्य यमुनातीरगो विराट् ।। इति मात्स्ये'' इति भागवतत्र्याख्याने १०.१४.६ श्रीसत्यधर्मतीर्थश्रीपादाः । 'भाविना श्रीकृष्णचरणस्पर्शभाग्येन स एकस्तत्तीरे न शुष्क इति ज्ञातव्यम् । अमृतमाहरता गरुत्मता आक्रान्तत्वादिति पुराणान्तरम् ।' इति श्रीधरीये । 'कदम्बोऽसावमृतमानयता तार्क्ष्येणाक्रान्तत्वात् न दग्ध इति पुराणान्तारसिद्धम्' इति विष्णुपुराणस्य विष्णुचित्तीयव्याख्याने । विष्णुपुराणे.५.७.१०। 'गाढा दृढं बद्धा रशना कटिबन्धनवस्त्रं येन सः' इति श्रीधरीये ।

३. 'चचार रुचिरं कृष्णो यमुनामुपशोभयन् । तां चरन् स नदीं श्रेष्ठां ददर्श ह्रदमुत्तमम् ।। दीर्घं योजनविस्तारं दुस्तरं त्रिदशैरपि । ..समन्ताद्योजनं साग्रं देवैरपि दुरासदम् ।। विषानलेन घोरेण ज्वालाप्रज्वलितद्रुमम् ।।' इति विष्णुपर्वणि ११.४१-४२-४७ । 'कालिन्द्या ह्रदः' इति हरिवंशोक्तेः योजनप्रमाणस्तस्या दक्षिणभागे वर्त्तमानस्तद्वर्त्तज-स्तत्प्रवाहास्पृष्ट एव, अन्यथा तद्विषसम्पृक्तजलवती सा मथुरादिदेशस्थजनैः अव्यवहार्यैव अभविष्यदिति ज्ञेयम् ।' इति वंशीधरः । स हि ह्रदः यावत्पातालं आसीदिति हंसवधप्रसङ्गे हरिवंशे । 'हंसो राजा महाराज निश्चेष्ट इव सम्बभौ । उत्प्लुत्य स रथात् तस्मात् यमुनामभ्यधावत ।। यत्र कृष्णो हृषीकेशः कालियाहिं ममर्द ह । महाह्रदं महारौद्रं यावत्पातालसंस्थितम् ।। तावद्दीर्घं महानीलं कालाञ्जननिभं हि यत् । तस्मिन् ह्रदे महाघोरे पपाताथ स हंसकः ।।' इति हरिवंशे.३.१२८.१-४ 'यमुनाया ह्रदे नागः कालियो दमितस्तथा । रसातलचरो नीतः क्षणेनादर्शनं ह्रदात् ।।' इति हरिवंशे. २.२२.२७. वंशीधरस्तु– 'अगाधे अतलस्पर्शे' इति ह्रदस्य अतललोकपर्यन्तस्थितिमाह ।

**जनार्दनीया–** तस्य कृष्णस्य दृष्टिलक्षणदिव्यसुधया अभिवृष्टाः अभिषिक्ताः सर्वे पशुगोपाश्च सहसा अकस्मात् जीवितं जीवनमवापुः । अथ कृष्णः उच्चाः शाखाः यस्य स तथा तम् । कदम्बं तन्नामकवृक्षं अधिरुह्य, गाढा दृढा रशना कटिबन्धनं यस्य स तथा सन् । आस्फोट्य करतलाभ्यां भुजौ अवहत्य अतितुङ्गात् अत्युच्चात् ततः कदम्बवृक्षात् विषोदे विषोपेतजले । ह्रद इति शेषः, न्यपतत् । 'कुमातृकः कदम्बः स्यात् कदम्बः सर्षपः स्मृतः । कदम्बो वृक्षभेदश्च कदम्बो निर्गुणः पुमान् ।।' इत्यनेकध्वनिपदमञ्जर्याम् ।।३६।।

**अतिविशद–** कृष्णः कदम्बमधिरुह्य इत्यत्र कालीयविषात् यदा तटस्थानां सर्वप्राणिनां मृतिः तथोपरि गच्छतां पक्षिणां चापि तदा कदम्बः कथमुर्वरित इति शङ्का गरुडेन सुधाहरणकाले सुधापात्रं स्थापितम् । तेन सुधाबिन्दुपतनं कृतं तेनोर्वरित इति पुराणप्रसिद्ध्यङ्गीकार्या ।।३६।।

**भावचन्द्रिका–** आस्फोट्य द्विगुणीकृतहस्तप्रसारं कृत्वा । गाढरशनो बद्धकक्ष्यः ।।३६।।

**चट्टि–** तस्य श्रीकृष्णस्य दृष्टिलक्षणदिव्यसुधया अभिवृष्टाः अभितो वर्षिता सर्वे पशवः गोपाश्च सहसा युगपदेव जीवितं जीवनमापुः । अथ श्रीकृष्णः उच्चाः शाखाः यस्य स तथा तम्, कदम्बं तन्नामकं वृक्षमधिरुह्य, गाढा दृढा रशना कटिबन्धनं यस्य स तथा भूतस्सन्, आस्फोट्य करतलाभ्यां भुजौ आहत्य अतितुङ्गात् अत्युच्चात् ततः कदम्बवृक्षात् विषोदे विषोपेतजले ह्रदे न्यपतत् । 'कुमातृकः कदम्बः स्यात् कदम्बः सर्षपस्स्मृतः । कदम्बो वृक्षभेदश्च कदम्बो निर्गुणः पुमान् ।।' इत्यनेकध्वनिपदमञ्जर्याम् । उक्तञ्च– 'आरूढश्चपलः कृष्णः कदम्बशिखरं मुदा । कदम्बः कृष्णवृक्षो हि कालियह्रदसमीपगः ।। तस्मादेको न शुष्कोऽसौ विषहारकरः पुमान् ।।' इति हरिवंशे । ननु 'समं तत् योजनं साग्रम्' इति हरिवंशवचनात्, तथा 'ह्रदं कालियनागस्य ददर्शातीवभीषणम् । विषाग्निना प्रसरता दग्धतीरमहातरुम् ।।' इति विष्णुपुराणवाक्याच्च योजनपर्यन्तं सर्वेषां वृक्षाणां कालियसर्पविषेण दग्धत्वात् कथमयं वृक्ष उर्वरित इति चेदुच्यते । 'पूर्वं मात्रार्थं अमृतमादाय तन्मार्गवशात् गच्छतो गरुडस्य वृक्षे स्थित्या तद्वृक्षे अमृतकलशस्पर्शेनायं वृक्ष उर्वरित' इति सम्प्रदायविदः।।३६।।

**सार्पह्रदः पुरुषसारनिपातवेगसङ्क्षोभितोरगविषोच्छ्वसिताम्बुराशिः ।**
**पर्यक्प्लुतो विषकषायविभीषणोर्मिभीमो धनुःशतमनन्तबलस्य किं तत् ।।३७।।**

**वेदाङ्गतीर्थीया–** सार्पह्रदः सर्पेणाधिष्ठितं सार्पं स चासौ ह्रदश्चेति तथोक्तः । अम्बूनां राशिः अम्बुराशिः । पुरुषसारः पुरुषोत्तमः तन्निपातवेगेन सङ्क्षोभितश्चासौ उरगविषोच्छ्वसितश्चेति तादृशं अम्बुराशिर्यस्मिन् स तथोक्तः । पर्यक्प्लुतः परितः प्लुतः उत्प्लुतः ऊर्ध्वंगतः विषकषायविभीषणोर्मिभीमः विषकषायेण विषसम्बन्धेन विभीषणोर्मिभिः भयङ्करोर्मिभिः भीमः विभीषणः ।।३७।।

**वरदराजीया—** सर्पस्य नागस्य सम्बन्धी यमुनाह्रदः पुरुषसारस्य पुरुषोत्तमस्य निपातः तद्वेगेन सङ्क्षोभितस्योरगस्य विषेण उच्छ्वसितः क्षोभं प्राप्तः अम्बुराशिर्यस्य स तथा । तथाभूतो ह्रदः पर्यक् समन्तात् धनुःशतं विषकषायेण भीषणा भयङ्करा ऊर्मयः भीमो भयङ्करः सन् प्लुतो [ऊर्ध्वंगतोऽभूदित्यर्थः] । अनन्तबलस्य कृष्णस्य तत् किं चित्रं न किञ्चिदाश्चर्यमित्यर्थः ।।३७।।

**अनन्तभट्टीया—** पुरुषसारकर्तृकनिपातवेगेन सङ्क्षोभितेन उरगविषेण उच्छ्वसितः अभिवृद्धितः अम्बुराशिः यस्य स तथोक्तः । अतोऽपीत्यर्थः ।।३७।।

**जनार्दनीया—** पुरुषसारस्य पुरुषश्रेष्ठस्य, निपातः तस्य यो वेगः तेन सङ्क्षोभितस्य स्वस्थानाद् उच्चलितस्य, उरगस्य विषेण उच्छ्वसितः ऊर्ध्वं वृद्धः, अम्बुराशिर्यस्य स तथा । विषकषायेण विषकायेन विभीषणाः भयङ्कराः ऊर्मयः तरङ्गाः तैर्भीमः भयजनकः । 'रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे' इति यादवः । सर्पेणाधिष्ठितः सार्पः स चासौ ह्रदश्च यमुना ह्रदः । धनुःशतं पर्यक् समन्तात् प्लुतः उत्प्लुतः ऊर्ध्वं गत इति यावत् । अनन्तबलस्य श्रीकृष्णस्य तत् धनुःशतजलगमनं किम्? किमाश्चर्यमित्यर्थः । 'चतुर्हस्तैस्तु दण्डकः धनुर्द्वादशदण्डैस्तु' इत्यभिधानम् ।।३७।।

**चट्टि—** सर्पेणाधिष्ठितः सार्पः स चासौ ह्रदश्च, यमुनाह्रदः पुरुषसारस्य पुरुषश्रेष्ठस्य निपातस्तस्य यो वेगः तेन भीतस्य स्वस्थानादुच्चलितस्य उरगस्य विषेणोच्छ्वसितः ऊर्ध्वं वृद्धः अम्बुराशिः यस्य स तथा । विषकषायेण विषक्वाथेन, क्वाथः कषायः, विभीषणाः भयङ्कराः ऊर्मयस्तरङ्गाः तैः भीमः भयजनकः सन् पर्यक् समन्तात् धनुःशतं प्लुतः दूरं गतोऽभूदित्यर्थः । अनन्तबलस्य श्रीकृष्णस्य तद्धनुःशतं जलगमनं किं चित्रं किमाश्चर्यम् । न किञ्चिदाश्चर्यमित्यर्थः । 'रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसः' इति यादवः ।।३७।।

**तं यामुनह्रदविलोलकमाप्य नागः**
**काल्यो निजैः समदशत्सह वासुदेवम् ।**
**भोगैर्बबन्ध च निजेश्वरमेनमज्ञः**
**सेहे तमीश उत भक्तिमतोऽपराधम् ।।३८।।**

**व्यासतीर्थीया—** ईश उत ईशोऽपि ।।३८-३९।।

**वेदाङ्गतीर्थीया—** उत तमपराधम् ।।३८।।

**मधुसूदनीया—** ।। **नागः काल्य इति** ।। कालीयः भोगैर्बबन्धेति कुण्डलस्य बहुत्वेन सशरीरस्यैकत्वे भोगैरिति बहुवचनोपपत्तेः । यद्वा— 'ततः प्रवेशितः सर्पैः स कृष्णो भोगबन्धनैः । ददंशुस्तेऽपि तं

कृष्णं विषज्वालाकुलैर्मुखैः ।। तं तत्र पतितं दृष्ट्वा सर्पभोगैर्निपीडितम् ।।' इति विष्णुपुराणरीत्या [५.७.१७-१८] सर्पाणां बहुत्वेन भोगैरिति वा बहुवचनमिति ध्येयम् ।।३८-३९।।

**वरदराजीया–** काल्यः कालियः नागः यमुनाया सम्बन्धिनं ह्रदं विलोलयन्तीति यमुनाह्रदविलोलकः तं कृष्णं आप्य प्राप्य निजैः स्वकीयैः नागैः सह वासुदेवं श्रीकृष्णं समदशत् सन्दष्टवान् । निजेश्वरं स्वस्वामिनं एनं कृष्णं भोगैः स्वशरीरावयवैः बबन्ध यतो अज्ञ इत्यर्थः । ईशः कृष्णः तमपराधमपि भक्तिमतो नागस्येति हेतुगर्भं विशेषणं सेहे क्षान्तवान् ।।३८।।

**जनार्दनीया–** काल्यो नागः, यमुनायाः अयं यामुनः स चासौ ह्रदश्च तं विलोलकं हस्तस्फालनेन कलुषं कुर्वाणं तं कृष्णं निजैः स्वैर्नागैः सह आप्य समदशद् ददंश । अज्ञः विवेकशून्यः यतः अत एव निजेश्वरं स्वस्वामिनं एनं वासुदेवं भोगैः पुच्छादिदेहावयवैः बबन्ध च । ईशः उत समर्थोऽपि कृष्णः भक्तिमतः कालियस्य तं अपराधं सेहे ममर्ष ।।३८।।

**ताम्रपर्णीया–** ईश उत ईशोऽपि ।।३८-३९।।

**चट्टि–** काल्यः कालीयः नागः, यमुनायाः अयं यामुनः स चासौ ह्रदश्च तं विलोलयतीति यामुनह्रदविलोलकम्, हस्तास्फालनेन कलुषं कुर्वाणं तं श्रीकृष्णं निजैः स्वैः नागै सहाप्य समदशत् ददंश । अज्ञः विवेकशून्यो यतः अत एव निजेश्वरं स्वामिनं एनं वासुदेवं श्रीकृष्णं भोगैः स्वशरीरावयवैः बबन्ध । ईश उत समर्थोऽपि श्रीकृष्णः भक्तिमतः कालियस्य तमपराधं सेहे ममर्ष ।।३८।।

**उत्पातमीक्ष्य तु तदाऽखिलगोपसङ्घ-**
**स्तत्राऽजगाम हलिना[१] प्रतिबोधितोऽपि ।**
**दृष्ट्वा निजाश्रयजनस्य बहोः सुदुःखं**
**कृष्णः स्वभक्तमपि नागममुं ममर्द ।।३९।।**

**वेदाङ्गतीर्थीया–** नागस्य गोपानां च स्वभक्तत्वेऽपि गोपानां बहुत्वात् तदनुसरणेन स्वभक्तमपि नागं ममर्देत्याशयेन 'बहोः सुदुःखं दृष्ट्वा' इत्युक्तम् ।।३९।।

**वरदराजीया–** तदा उत्पातं गोकुले दिवोल्कापातादिरूपं उत्पातमीक्ष्य दृष्ट्वा अखिलानां गोपानां सङ्घः समूहो, हलिना हलायुधेन रामेण प्रतिबोधितोऽपि विज्ञापितकृष्णमाहात्म्योऽपि तत्र यमुनातीरं

---

१. 'कृष्णप्राणान् निर्विशतो नन्दादीन् वीक्ष्य तं ह्रदम् । प्रत्यषेधत् स भगवान् रामः कृष्णानुभाववित् ।।' इति भागवते.१०.१४.२२ ।

प्रति आजगाम । बहोः निजाश्रयजनस्य बहूनां स्वाश्रितजनानां सुदुःखं अतिदुःखं दृष्ट्वा स्वभक्तमपि अमुं नागं कालियं ममर्द मर्दितवान् । गोपानां नागस्य भक्तत्वाविशेषेऽपि गोपानां परिवारस्य नागापेक्षया बहुत्वेन प्राबल्यात् अल्पबाधया बहूनां पालनं युक्तमेवेति भावः ।।३९।।

**अनन्तभट्टीया–** बहोर्बहुलस्य गोपाला...स्यकत्वात् परिवारस्यापि तदपेक्षया अल्पत्वात् तन्मर्दने गोपदुःखनिर्हरणेन...युक्तमिति सूचयितुं बहोरित्युक्तम् ।।३९।।

**जनार्दनीया–** हलिना हलायुधेन रामेण प्रतिबोधितोऽपि हरिसामर्थ्योक्त्या शिक्षितोऽपीत्यर्थः । तत्र सर्पाधिष्ठितस्थलं प्रति कृष्णः बहोः नागात् बहुसङ्ख्याकस्य । निजाश्रयः स्वयमेव आश्रयो यस्य स तथा, स चासौ जनश्च तस्य स्वभक्तगोपजनस्य सुदुःखं दृष्ट्वा स्वभक्तमप्यमुं नागं कालियं ममर्द मर्दितवान् । अल्पीयोभक्तजनापेक्षया बहुभक्तानां दुःखविनाशनं युक्तमेवेति भावः ।।३९।।

**चर्ट्टि–** अखिलानां गोपानां सङ्घः समूहः तदा उत्पातं गोकुले दिवोल्कापातादिरूपमुत्पातमीक्ष्य दृष्ट्वा हलिना हलायुधेन रामेण प्रतिबोधितोऽपि हरिसामर्थ्योक्त्या शिक्षितोऽपि इत्यर्थः । तत्र यमुना तीरं प्रत्याजगाम । श्रीकृष्णः बहोः नागेभ्यः बहुसङ्ख्याकस्य, निजाश्रयः स्वयमेवाश्रयो यस्य स तथा स चासौ जनश्च तस्य स्वभक्तगोपजनस्य, सुदुःखमतिदुःखं दृष्ट्वा स्वभक्तमप्यमुं नागं कालियं ममर्द । अल्पभक्तजनापेक्षया बहुभक्तानां दुःखविनाशनं युक्तमेवेति भावः ।।३९।।

**तस्योन्नतेषु स फणेषु ननर्त कृष्णो ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः ।**
**आर्तो मुखैरुरु वमन् रुधिरं स नागो नारायणं तमरणं मनसा जगाम ।।४०।।**

**व्यासतीर्थीया–** अरणं शरणम् ।।४०।।

**वेदाङ्गतीर्थीया–** ताण्डवं ननर्त ।।४०।।

**मधुसूदनीया–** ।। **तस्योन्नतेष्विति** ।। फणेषु सहस्रसङ्ख्याकफणेषु । 'तच्चित्रताण्डवविरुग्णफणासहस्रम्' इति दशमस्कन्धवचनात् [१४.३०] । 'कालीयो नाम सर्पो नवनागस्सहस्रफणः' [नवनागसहस्रबलः] इति श्रुतेश्च [ऋ.७.५५ नन्तरपरिशिष्ट] । ब्रह्मादिभिः कुसुमवर्षिभिरिति वाद्यादीन्कुर्वद्भिश्चेति शेषः । 'अनीनदत् पद्मभवो मृदङ्गं जगौ हनूमान् जगतामधीशम् । अदर्शयत्तालगतिं कपर्दी ननर्त गोपालकबालमौलिः ।।' इत्यादिवचनात् ।।४०।।

**वरदराजीया–** कुसुमवर्षिभिः पुष्पवर्षणं कुर्वद्भिः ब्रह्मादिभिर्देवैः ईड्यमानः स्तूयमानः सः श्रीकृष्णः तस्योन्नतेषु उच्चेषु फणेषु फणमण्डलेषु ननर्त नाट्यं कृतवान् । स नागः आर्तो दुःखितः सन् मुखैः अशेषैः उरु यथा भवति तथा रुधिरं वमन् उद्गिरन् तं नारायणं मनसा अरणं शरणं जगाम ।।४०।।

**अनन्तभट्टीया–** अरणं शरणं । नामदिति ? ।[१]

**जनार्दनीया–** ईड्यमानः स्तूयमानः स कृष्णः तस्य कालियस्य उन्नतेषु उच्चेषु ननर्त नर्तनमकरोत् । स नागः आर्तः सन् पीडितः सन् मुखैः उरु रुधिरं बहु रक्तं वमन् सन् वान्तं कुर्वन् तं 'भक्तरक्षक' इति प्रसिद्धं नारायणं मनसा अरणं शरणं जगाम ।।४०।।

**ताम्रपर्णीया–** अरणं शरणम् ।।४०।।

**चट्टि–** कुसुमवर्षिभिः पुष्पवर्षिणं कुर्वद्भिः वाद्यादीन् कुर्वद्भिः इति शेषः । 'अनीनदत् पद्मभवो मृदङ्गं जगौ हनूमान् जगतामधीशम् । अदर्शयत् तालगतिं कपर्दी ननर्त गोपालकबालमौलिः ।।' इत्यादिवचनात् । ब्रह्मादिभिः देवैः ईड्यमानः स्तूयमानः सः श्रीकृष्णः तस्य कालीयस्य उन्नतेषु उच्चेषु फणेषु सहस्रसङ्ख्याकेषु ननर्त । सः नागः आर्तः दुःखितः सन् मुखैरुरु रुधिरं बहुरक्तं वमन् उद्गिरन् तं भक्तरक्षक इति प्रसिद्धं श्रीनारायणं मनसा अरणं शरणं जगाम ।।४०।।

**तच्चित्रताण्डवविरुग्णफणातपत्रं रक्तं वमन्तमुरु सन्नधियं नितान्तम् ।**
**दृष्ट्वाऽहिराजमुपसेदुरमुष्य पत्न्यो नेमुश्च सर्वजगदादिगुरुं भुवीशम् ।।४१।।**

**व्यासतीर्थीया–** भुवि नेमुः ।।४१।।

**वेदाङ्गतीर्थीया–** विरुग्णं...रक्तं बहुलरक्तं ईशं भुवि नेमुः ।।४१।।

**सत्याभिनवतीर्थीया–** तच्चित्रताण्डव...इति श्लोके 'नेमुश्च सर्वजगदादिगुरुं भुवीशम्' इत्यस्य सर्वजगदादिगुरुं दुष्टनिग्रहार्थं भुवि अवतीर्णं ईशं नेमुरित्यर्थः । एतेन 'भुवि' इत्येतत् व्यर्थमिति दूषणं परास्तम् । दुष्टनिग्रहणार्थमित्यादेः शेषेण दुष्टनिग्रहार्थं भुवि अवतीर्णं ईशं नेमुरित्यर्थस्योक्तत्वात् ।।४१।।

**मधुसूदनीया–** ।। **नेमुश्चेति** ।। भुवि नेमुरित्यन्वयः । 'दृष्ट्वा हि राजमुपसेदुरमुष्य पत्न्यौ आर्ता श्लथद्वसनभूषणकेशबन्धाः । तं ता विषण्णमनसोऽथ पुरस्कृतार्हाः कायं निधाय भुवि भूतपतिं प्रणेमुः ।।' इति दशमस्कन्धवचनात् [१४.३१-३२] । अनेन 'भुवि स्थितमीशं नेमुः' इति व्याख्यानं निरस्तम् । तदानीं कालिङ्गशिरसि कृष्णेन नर्तनस्य क्रियमाणत्वेन भूस्थित्यभावात् । तं त्यक्त्वा भुवि स्थितौ प्रार्थनस्यैवायोगापत्तेरिति ।।४१-४३।।

**वरदराजीया–** तस्य कृष्णस्य वैचित्र्येण विचित्रेण ताण्डवेन नृत्येन विरुग्णनि श्रमं प्राप्तानि फणाख्यातपत्राणि छत्राणि यस्य स तथा । तं रक्तं वमन्तं उद्गिरन्तं अत एव नितान्तं सन्ना मन्दा

---

१. इति हो.पुस्तकपाठः ।

धीर्यस्य स तथा तम्, अहिराजं नागं दृष्ट्वा अमुष्य नागस्य पत्न्यः भार्या उपसेदुः । कृष्णमिति शेषः । सर्वजगतः आदिगुरुं सर्वजगदादेश्चतुर्मुखस्य गुरुं पितरमिति वा ईशं स्वामिनं नेमुश्च नमस्कृतवत्यः ।।४१।।

**अनन्तभट्टीया–** भुवि नेमुः ।।४१।।

**जनार्दनीया–** अमुष्य कालियस्य पत्न्यः । तस्य कृष्णस्य चित्रताण्डवेन आश्चर्यनृत्येन विरुग्णं भग्नं फणातपत्रं फणलक्षणच्छत्रं यस्य स तथा तम् । उरु रक्तं वमन्तं मुखात् स्रवन्तम् । नितान्तं सन्ना नष्टा मूर्च्छिता धीर्बुद्धिर्यस्य स तथा तम् । अहिराजं सर्पराजं दृष्ट्वा उपसेदुः । श्रीकृष्णसमीपं प्रापुः । अमुष्य पत्न्यः सर्वजगतः आदिगुरुं मूलगुरुम् । सर्वजगतः आदिः उत्पादकः स चासौ गुरुश्च इति वा । सर्वजगतः रुद्रादिसर्वजगतः आदेः स्रष्टुः ब्रह्मणः गुरुमिति वा । अत एव ईशं समर्थम् । कृष्णं भुवि नेमुः । 'भुवि नेमुः' इत्यनेन साष्टाङ्गप्रणामं चक्रुरिति ज्ञातव्यम् । अमुष्य पत्न्यः इत्युभयत्र सम्बद्ध्यते ।।४१।।

**ताम्रपर्णीया–** भुवि नेमुः ।।४१।।

**चट्टि–** अमुष्य कालीयस्य पत्न्यः तस्य श्रीकृष्णस्य चित्रताण्डवेन अश्चर्यनृत्तेन विरुग्णानि श्रमं प्राप्तानि फणातपत्राणि यस्य सः तथा तम् । उरु रक्तं वमन्तं नितान्तं सन्नो मन्दा धीः बुद्धिः यस्य स तथा । तमहिराजं सहस्रफणं कालीयं दृष्ट्वा उपसेदुः श्रीकृष्णस्य समीपं प्रापुः । 'तच्चित्रताण्डवविरुग्णफणासहस्र' इति दशमस्कन्धवचनात् 'कालीयो नाम सर्पो नवनागसहस्रफणः' इति श्रुतेश्च । अमुष्य पत्न्यः सर्वजगतः आदिगुरुं मूलगुरुम्, सर्वजगतः रुद्रादिजगतः आदितः स्रष्टुः, ब्रह्मणो गुरुमिति वा । सर्वजगतः आदिः उत्पादकः स चासौ गुरुश्चेति तमीशं समर्थं श्रीकृष्णं भुवि च नेमुः । अनेन साष्टाङ्गं प्रणामं चक्रुरिति ज्ञातव्यम् । 'तं ताः विपन्नमनसोऽथ पुरस्कृतार्हाः कायं निधाय भुवि भूतपतिं प्रणेमुः' इति च दशमस्कन्धवचनात् । 'अमुष्य पत्न्य' इत्युभयत्र सम्बध्यते ।।४१।।

**ताभिः स्तुतः स भगवानमुना च तस्मै**
**[1]दत्त्वाऽभयं यमसहोदरवारितोऽमुम् ।**
**उत्सृज्य निर्विषजलां यमुनां चकार[2]**
**संस्तूयमानचरितः सुरसिद्धसाध्यैः ।।४२।।**

---

१. 'मत्पदानि च ते सर्प दृष्ट्वा मूर्धसु सागरे । गरुडः पन्नगरिपुस्त्वयि न प्रहरिष्यति ।।' इति विष्णुपुराणे.१२.४२ इति अभयं दत्वा इत्यर्थः ।

२. 'विषदग्धास्तु ये पूर्वं तत्तीरस्थाश्च शाखिनः । कृष्णेन वीक्षितास्तूर्णं फलिनः पुष्पिणोऽभवन् ।।' इति पद्मपुराणे.उ.खं.२४५.१३२ ।

**व्यासतीर्थीया–** उत्सृज्य उत्साद्य ।।४२।।

**वेदाङ्गतीर्थीया–** अभयं दत्वा सुपर्णादिति भावः । उत्सृज्य निर्गमय्य ।।४२।।

**वरदराजीया–** ताभिः नागपत्नीभिः अमुना नागेन च स्तुतो भगवान् कृष्णः तस्मै नागाय अभयं दत्वा, अमुं नागं यमस्य सहोदरायाः यमुनायाः वारितः उदकादुत्सृज्य उत्साद्य, यमुनां निर्विषजलां विषरहितोदकां चकार । सुरैः सिद्धैः साध्यैश्च संस्तूयमानं चरितं यस्य स तथा ।।४२।।

**अनन्तभट्टीया–** अमुना च स्तुतः । वारितः... ।।४२।।

**जनार्दनीया–** ताभिः नागवधूभिः स्तुतः, अमुना च कालियेन, स्तुत इत्यर्थः । स भगवान् कृष्णः तस्मै कालियाय अभयं दत्वा 'तव सुपर्णाद् भयं न भवेत्' इति अभयं दत्वा । यमस्य सहोदरायाः भगिन्याः, भाषितपुंस्त्वाद् ह्रस्वः, वारितः जलाद् अमुं कालियं उत्सृज्य निःसार्य निर्विषं विषरहितं जलं यस्याः सा तां च । कथम्भूतः? सुरादिभिः संस्तूयमानं चरितं कर्म यस्य स तथा ।।४२।।

**ताम्रपर्णीया–** उत्सृज्य उत्साद्य तटे समेत्य बलादिभिः गोपैः सार्धं अत्र तटे तां रात्रिं निवसन् दावाग्निं पपावित्यन्वयः ।।४२-४५।।

**चट्टि–** ताभिः नागपत्नीभिः अमुना कालियेन च स्तुतः सः भगवान् श्रीकृष्णः तस्मै कालीयायाभयं दत्वा 'तव गरुडाद् भयं न भवेत्' इत्यभयं दत्वा, यमस्य सहोदरायाः भगिन्याः यमुनायाः वारितः जलात् अमुं कालियं उत्सृज्य निस्सार्य, यमुनां निर्विषं विषरहितं जलं यस्याः सा निर्विषजला तां चकार । कथम्भूतः सन् सुरसिद्धसाध्यैः संस्तूयमानं चरितं कर्म यस्य स तथा ।।४२।।

**गोपैर्बलादिभिरुदीर्णतरप्रमोदैः**
**सार्द्धं समेत्य भगवानरविन्दनेत्रः ।**
**तां रात्रिमत्र[1] निवसन् यमुनातटे स**
**दावाग्निमुद्धतबलं च पपौ व्रजार्थे ।।४३।।**

**व्यासतीर्थीया–** सार्धं सहितं समेत्य ।।४३-५०।।

**वेदाङ्गतीर्थीया–** समेत्य यमुना तटमिति शेषः । व्रजार्थे व्रजरक्षार्थम् ।।४३।।

१. 'तां रात्रिं तत्र राजेन्द्र क्षुत्तृड्भ्यां श्रमकर्शिताः । ऊषुर्व्रजौकसो गावः कालिन्द्या उपकूलतः ।।२०।। एतस्मिन्नेव काले तु व्रजे कौरवसत्तम । घोरः शुचिबलोद्भूतो दवाग्निः सर्वतो वृतः ।।२१।। इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः । तमग्निमपिबत् तीव्रं अनन्तोऽनन्तशक्तिधृक् ।।' इति भागवते १०.१६.२५ ।

**अनन्तभट्टीया–** उदीर्णतरः अत्युत्कृष्टः प्रमोदो येषां ते तैः गोपैः सार्धं समेत्य यमुनातटेषु मिलित्वा तां रात्रिं न्यवसत् । उद्धतबलं प्रबलं दावाग्निं व्रजार्थे तद्रक्षणार्थं पपौ ।।४३।।[१]

**जनार्दनीया–** भगवान् समेत्य कूलं प्राप्य, उदीर्णतरः अत्युत्कृष्टः प्रमोदः सन्तोषो येषां ते तथा तैः सार्धं सह समेत्य, जलसमीपात् कूलं सम्प्राप्य, तत्र यमुनाकूले तां रात्रिं न्यवसत् उवास । स कृष्णः यमुनातटे उद्धतवलं अतिशयबलम्, व्याप्तमित्यर्थः । दावाग्निं वडवाग्निं व्रजार्थे व्रजरक्षणार्थं पपौ ।।

**चर्ट्टि–** अरविन्दनेत्रः भगवान् सः श्रीकृष्णः उदीर्णतरः उत्कृष्टः प्रमोदो येषां ते । बलो बलदेवः आदिः येषां ते तैः गोपैः सार्धं समेत्य जलसमीपात् कूलं सम्प्राप्य, अत्र यमुनाकूले तां रात्रिं निवसन् यमुनातटे उद्धतवलं प्रलम्वं व्याप्तमित्यर्थः । दावाग्निं व्रजार्थे व्रजजनरक्षणार्थं पपौ ।।४३।।

**इत्थं सुरासुरगणैरविचिन्त्यदिव्यकर्माणि गोकुलगतेऽगणितोरुशक्तौ ।**
**कुर्वत्यजे व्रजभुवामभवद्विनाश उग्राभिधादसुरतस्तरुरूपतोऽलम् ।।४४।।**

**वेदाङ्गतीर्थीया–** अलं विनाशः ।।४४-४५।।

**मधुसूदनीया–** ।। **तरुरूपत इति** ।। कपित्थतरुरूपत इत्यर्थः । तदुक्तम्– 'पर्यायात् द्वादशाब्दानां अस्मिन्काले क्रमागते । वृक्षस्स पुष्पफलवान् कपित्थस्समजायत ।।' इत्यादि हरिवंशे ।।४४-४७।।

**वरदराजीया–** इत्थमुक्तप्रकारेण सुरैरसुरैश्च अचिन्त्यानि दिव्यानि कर्माणि कुर्वति सति उग्राभिधात् उग्रनामकादसुरतो दैत्यात् अत्र तरुरूपतो वृक्षत्वं प्राप्तात् व्रजभुवां गोकुलस्थानां विनाशोऽभवत् ।।४४।।

**जनार्दनीया–** इत्थं अनेन प्रकारेण, गोकुले गते विद्यमाने, अगणिता अपरिमिता उर्वी शक्तिर्यस्येति । अजे जन्मरहिते कृष्णे, अविचिन्त्यानि चिन्तितुमशक्यानि दिव्यानि अलौकिकानि कर्माणि कुर्वति सति, तरुरूपतः वृक्षस्वरूपाद्, उग्र इत्यभिधा नाम यस्य स तस्माद् असुरतः दैत्याद्, व्रजे भवन्ति ते व्रजभुवः तेषां तथा । व्रजोद्भवानां अलमत्यन्तं विनाशः अभवत् ।।४४।।

**चर्ट्टि–** इत्थं उक्तप्रकारेण गोकुलं गतः गोकुलगतः तस्मिन्, अगणिता अपरिमिता उर्वी शक्तिः यस्य तस्मिन् अजे जन्मरहिते श्रीकृष्णे अविचिन्त्यानि चिन्तितुमशक्यानि दिव्यान्यलौकिकानि कर्माणि कुर्वति सति, तरुरूपतः कपित्थतरुरूपतः इत्यर्थः । तदुक्तम्– 'पर्यायाद् द्वादशाब्दानामस्मिन् काले क्रमागते । वृक्षः सपुष्पफलवान् कपित्थः समजायत ।।' इत्यादिहरिवंशे । उग्र इत्यभिधा नाम यस्य सः तथा तस्मात्, असुरतः दैत्यात् व्रजे भवन्तीति व्रजभुवः तेषां व्रजभुवाम्, अमलमत्यन्तं विनाशः अभवत् ।।४४।।

---

१. अनन्तभट्टीया– सार्धं समेत्य सहितं अत्र यमुनातट इति सम्बन्धः ।।४३।। इति हो.पुस्तकपाठः ।

**तद्गन्धतो नृपशुमुख्यसमस्तभूतान्यापुर्मृतिं बहुलरोगनिपीडितानि ।**
**धातुर्वराज्जगदभावकृतैकबुद्धिर्वध्यो न केनचिदसौ तरुरूपदैत्यः ।।४५।।**

**वरदराजीया–** एतदेव विवृणोति– **तद्गन्धत इति** ।। तस्य वृक्षस्य गन्धतो गन्धेन नृपशुमुख्यानि समस्तभूतानि सर्वे प्राणिनो मृतिमापुः । यतः बहुलेन रोगेण निपीडितानीत्यर्थः । धातुः ब्रह्मणो वरान्निमित्तात् जगतोऽभावो विनाशः तत्र कृता एका निश्चयरूपा बुद्धिः यस्य स तथा । अत एव केनचित् केनापि न वध्यः ।।४५।।

**भावविवृति–** जगदभावकृतैकबुद्धिरित्यत्र जगतः व्रजगतवैष्णवस्य अजनभावे विनाशे कृता एका केवला बुद्धिर्येन स तथा । 'नीरोगमाशु कृतवान् व्रजमब्जनाभः' इत्युक्तेः । अन्यथा 'नीरोगमाशु कृतवान् जगदब्जनाभः' इत्युक्तिः स्यात् ।।४५-४९।।

**अनन्तभट्टीया–** तद्गन्धतः वृक्षगन्धतः ।।४५।।

**जनार्दनीया–** नाशप्रकारमाह– **तदिति** ।। बहुलैः बहुविधैः रोगैः निपीडितानि भूतानि प्राणिनः । तस्य वृक्षस्य गन्धतः परिमलात् । धातुर्वरात् जगतः अभावे विनाशे कृता एका बुद्धिः निश्चितबुद्धिर्येन स तथा । असौ तरुरूपदैत्यः केनचित् केनापि वध्यो न ।।४४-४५।।

**चट्टि–** तदेव विवृणोति– **तद्गन्धत इति** ।। तस्य वृक्षस्य गन्धतः परिमलात् नृपशुमुख्यानि समस्तभूतानि, सर्वे प्राणिनः, बहुलैः बहुविधैः रोगैः निपीडितानि सन्ति मृतिमापुः । धातुः ब्रह्मणः वराज्जगतः अभावे विनाशे कृता एका निश्चयरूपा बुद्धिः येन स तथा, असौ तरुरूपदैत्यः केनचित् केनापि वध्यो न ।।४५।।

**सङ्कर्षणेऽपि तदुदारविषानुविष्टे कृष्णो निजस्पर्शतस्तमपेतरोगम् ।**
**कृत्वा बभञ्ज विषवृक्षममुं बलेन तस्यानुगैः सह तदाकृतिभिः समस्तैः।।४६।।**

**वेदाङ्गतीर्थीया–** तदाकृतिभिः वृक्षाकृतिभिः ।।४६-४७।।

**सत्याभिनवतीर्थीया–** तत्रैव सङ्कर्षणेऽपि तदुदारविषानुविष्टे...इति श्लोके 'बभञ्ज विषवृक्षममुं बलेन' इत्यस्य बलेन सामर्थ्येन युक्तं विषवृक्षं विषवृक्षाकारं अमुं उग्रनामकं दैत्यं बभञ्जेत्यर्थः । एतेन 'अनायासेन बभञ्ज' इति । 'बलेन बभञ्ज' इति कथनमनुपपन्नमिति दूषणं परास्तम् । 'बलेन' इत्यस्य 'बभञ्ज' इत्यनेनान्वय इत्यनङ्गीकृत्य युक्तमित्यध्याहृतेनान्वय इत्यभ्युपगमात् ।।४६।।

**वरदराजीया—** सङ्कर्षणेऽपि बलभद्रेऽपि तस्य वृक्षस्योदारेण विषेणानुविष्टे व्याप्ते सति तं सङ्कर्षणं अपेतरोगं निरस्तविषं कृत्वा, अमुं विषवृक्षं तस्य तरुरूपदैत्यस्यानुगैः तदाकृतिभिः वृक्षरूपैः सह बलेन शक्त्या बभञ्ज उत्पाटितवान् ।।४६।।

**जनार्दनीया—** सङ्कर्षणेऽपि बलभद्रेऽपि तस्य विषवृक्षस्य उदारेण उत्कृष्टेन विषेण अनुविष्टे आविष्टे सति । कृष्णः निजस्पर्शतः स्वालिङ्गनेन तं रामं अपेतरोगं गतविषजरोगं कृत्वा । तदाकृतिभिः वृक्षाकारैः समस्तैः तस्योग्रस्यानुगैः सहचरैः सह विषवृक्षं विषवृक्षात्मकं अमुं उग्रं बभञ्ज ।।४६।।

**ताम्रपर्णीया—** बलेन बलभद्रेन सहेत्यत्रापि सम्बध्यते । तत्र प्रधानवृक्षनाशकत्वं कृष्णस्य रामस्येतरनाशकत्वेन उपयोगः अत एव 'चिक्रीड्य रामसहित' इति वक्ष्यतीति ज्ञेयम् ।।४६।।

**चट्टि—** सङ्कर्षणे बलभद्रेऽपि तस्य विषवृक्षस्य उदारेण उत्कृष्टेन विषेणानुविष्टे व्याप्ते सति श्रीकृष्णः निजस्पर्शतः स्वालिङ्गनेन तं रामं अपेतरोगं गतविषजरोगं कृत्वा, अमुं विषवृक्षं तदाकृतिभिः विषवृक्षाकारैः समस्तैः तस्यानुगैः सहचरैः सह बलेन शक्त्या बभञ्ज उत्पटयामास ।।४६।।

**दैत्यांश्च गोवपुष आत्तवरान् विरिञ्चात्**
**मृत्यूज्झितानपि निपात्य ददाह वृक्षान् ।**
**विक्रीड्य रामसहितो यमुनाजले स**
**नीरोगमाशु कृतवान् व्रजमब्जनाभः ।।४७।।**

**वरदराजीया—** विरिञ्चात्तवरान् गोवपुषो गोरूपधरान् दैत्यान् निपात्य वृक्षान् पूर्वोक्तांश्च ददाह । स कृष्णो रामेण सहितो यमुनाजले विक्रीड्य व्रजं नीरोगं रोगरहितं कृतवान् ।।४७।।

**अनन्तभट्टीया—** धातुर्वरात् अवध्यान् वृक्षान् दैत्यात्मकवृक्षान् । 'विषवृक्षः कपित्थोऽभूत् कालिन्द्या दक्षिणे तटे' इति हरिवंशे ।।४७।।

**जनार्दनीया—** विरिञ्चाद् आत्तः स्वीकृतः वरो यैस्ते तथा तान् । मृत्यूज्झितानपि मरणरहितानपि गोवपुषः गोस्वरूपान् दैत्यान् वृक्षांश्च निपात्य ददाह भस्मीचकार । उग्राभिधानदैत्यस्य गोरूपाः पत्न्यः वत्सरूपाः पुत्रास्तांश्च निपात्य वृक्षैः सह ददाहेति भावः । स कृष्णः यमुनाजले चिक्रीड्य स्नात्वा व्रजं निरोगं निरस्तरोगं कृतवांश्चकार ।।४७।।

**ताम्रपर्णीया—** ।। **दैत्यांश्च गोवपुष इति** ।। उग्रनामकतरुरूपदैत्यस्य भार्यापुत्राः गोरूपाः तन्निकटस्थिताः तानित्यर्थः । उक्तं हरिवंशे 'तत्र भार्या सपक्षा च सहस्रं तनयाः तयोः । गोभूताः वत्सभूताश्च चरन्ति यमुनातटे' इति ।।४७।।

**भावचन्द्रिका–** गोवपुषः वज्रकायान् बभञ्ज ददारेति सम्बन्धः ।।४७।।

**चट्टि–** विरिञ्चात् आत्तः स्वीकृतः वरो यैस्ते तथा तान् मृत्यूज्झितान् मरणरहितान् अपि गोवपुषः गोरूपधरान् दैत्यान् च निहत्य, वृक्षान् पूर्वोक्तान् ददाह भस्मीचकार । उग्राभिधानदैत्यस्य गोरूपाः पत्न्यः वत्सरूपाः पुत्रास्तांश्च निहत्य वृक्षैः ददाहेति भावः । अब्जनाभः सः श्रीकृष्णः रामेण सहितः सन् यमुनायाः जले विक्रीड्य स्नात्वा आशु व्रजन् नीरोगं रोगरहितं कृतवान् चकार ।।४७।।

**सप्तोक्षणोऽतिबलवीर्ययुतानदम्यान्**
**सर्वैर्गिरीशवरतो दितिजप्रधानान् ।**
**हत्वा सुतामलभदाशु विभुर्यशोदा-**
**भ्रातुः स कुम्भकसमाह्वयिनोऽपि नीलाम् ।।४८।।**

**वेदाङ्गतीर्थीया–** उक्षणः वृषान् ।।४८-५१।।

**मधुसूदनीया–** ।। **सप्तोक्षण इति** ।। दितिजप्रधानान् पूर्वजन्मनि कालनेमिपुत्रान् । तच्चोक्तम् । 'नैते वृषा महाबाहो दैत्यास्सप्त समुत्थिताः । कालनेमिसुता आर्य मां हन्तुमिह सङ्गताः ।। पुरा हता मया युद्धे तदा तारामये ।।' इत्यादि हरिवंशे ।।४८-५२।।

**वरदराजीया–** सप्तसङ्ख्याकान् उक्षणः ककुद्मिनः अतिबलवीर्याभ्यां युतान् अत एव मृत्यूज्झितान् अदम्यान् अनिग्राह्यान् । कुतः? गिरीशवरतः दितिजेषु प्रधानान् मुख्यान् आशु हत्वा यशोदायाः कुम्भकसमाह्वयिनः कुम्भकाख्यस्य सुतां नीलां अलभत प्राप्तवान् ।।४८।।

**भावविवृति–** स कुम्भकः पूर्वं सप्तपितृष्वेकः । नीलापि पूर्वं तत्पुत्री । तद्विवरणं तु उत्तरत्र क्रियते । न केवलं नीलामुवाह गोपाङ्गना अप्युवाहेत्यर्थः ।।४८।।

**अनन्तभट्टीया–** दितिजप्रधानान् दैत्यश्रेष्ठान् । यथोक्तं हरिवंशे–
'कालनेमिसुतास्सप्त विक्रान्ता बाहुशालिनः । पुरा देवासुरे युद्धे विष्णुना प्रभविष्णुना ।।
सङ्ग्रामान् बहुशः कृत्वा तेन युद्धे जितास्तथा । दिशो मुखाः प्रजग्मुस्ते विष्णुं हन्तुं समुद्यताः ।।
यावत्कृष्णं यदुकुले...समास्थिताः । ज्ञात्वा विष्णुं यदुकुले जातं दैतेयसत्तमाः ।।
वृषरूपधरास्सप्त कुम्भकस्य गृहेऽवसन् ।।' इति । कुम्भकसमाह्वयिनः सुताम् ।।४८।।

**जनार्दनीया–** विभुः स कृष्णः गिरीशवरतः सर्वैरदम्यान् निग्रहं कर्तुमशक्यान् दितिजप्रधानान् दैत्यश्रेष्ठान् सप्त उक्षणः, सञ्ज्ञापूर्वको विधिरनित्य इत्यल्लोपो न । वृषान् हत्वा, यशोदायाः भ्रातुः कुम्भकसमाह्वयिनः कुम्भकनाम्नः सुतां नीलां नीलानाम्नीं आशु अलभत् प्राप ।।४८।।

**ताम्रपर्णीया–** अदम्यानपीति अन्वयः ।।४८।।

**भावचन्द्रिका–** ...कुम्भको मिथिलायामास ! तस्य असङ्ख्या गावश्चासन् । तत्र देवासुरयुद्धे पूर्वं देवेन हताः कालनेमिसुताः पूर्ववैरमनुस्मृत्य गोपालरूपिणं देवं हन्तुं वृषभरूपिणः सप्त आसन् । ते च गाः वत्सांश्च जघ्नुः शृङ्गैः । रात्रौ केदारांश्च अभक्षयन् । तदा जनाः कुम्भकं चुक्रुशुः । भवद्वृषभैरुपद्रुता वयमिति । तदा बलिनो गोपानाहूय तान् बध्नीत इत्युवाच । ते च पतन्त एव हताः । तदा विचार्य य एतान् हनिष्यति तस्मै सुतां दास्यामीत्याह । तत् श्रुत्वा गोपः कृष्णः मिथिलां गत्वा तान् एकैकमुष्टिप्रहारेण हत्वा तामलभत् इति हरिवंशे ।।४८।।

**चर्द्रि–** विभुः सः श्रीकृष्णः गिरीशस्य वरतः सर्वैः अदम्यान् निग्रहं कर्तुमशक्यान् अतिबलवीर्याभ्यां युतान् दितिजप्रधानान् पूर्वजन्मनि कालनेमिपुत्रान् दैत्यश्रेष्ठान् सप्तसङ्ख्याकान् उक्षणः वृषान् हत्वा यशोदायाः भ्रातुः कुम्भकसमाह्वयिनः कुम्भनाम्नः सुतां नीलां नीलानाम्नीं आशु अलभत् प्राप । तच्चोक्तम्– 'नैते वृषा महाबाहो दैत्याः सप्त समुत्थिताः । कालनेमेः सुता आर्य मां हन्तुमिह सङ्गताः ।। पुरा हता मया युद्धे तथा तारामये ।।' इत्यादिहरिवंशे ।।४८।।

**या पूर्वजन्मनि तपः प्रथमैव भार्या**
**भूयासमित्यचरदस्य हि सङ्गमो मे ।**
**स्यात् कृष्णजन्मनि समस्तवराङ्गनाभ्यः**
**पूर्वं त्विति स्म तदिमां प्रथमं स आप ।।४९।।**

**वादिराजीया–** या पूर्वजन्मनीत्यत्र गोपाङ्गनात्वात् परभार्यायाः सत्या अङ्गसङ्गो नेति भावेन प्रथमा भार्यैव भूयासमित्युक्तम्, प्रथममपि स्वभावतो भार्यायाः नन्दकुमार्या अङ्गसङ्गाभावात् उभयमपि प्रार्थितमिति ज्ञेयम् ।।४९।।

**वरदराजीया–** सर्वगोपाङ्गनापेक्षया नीलाया एव प्रथमप्राप्तौ निमित्तमाह– **या पूर्वजन्मनीति** ।। या नीला पूर्वजन्मनि तपः अचरत् । किमिति । प्रथममेव सर्वभार्यापेक्षया प्रथममेव भार्या भूयासं स्यामिति । तदेव विवृणोति– **अस्येति** ।। अस्य हरेः कृष्णजन्मनि कृष्णावतारे समस्तवराङ्गनाभ्यः पूर्वं मे सङ्गमः स्यादिति तत्तस्मादिमां नीलां स कृष्णः प्रथममाप ।।४९।।

**भावविवृति–** या पुरा पूर्वजन्मनि परमाप्सरसः भगवद्भार्यात्वयोग्या इत्यर्थः । उक्तश्चैकादशतात्पर्ये– 'भगवद्भार्यतायोग्याः काश्चिदप्सरसः स्त्रियः । रमावेशात्कदाचित्स्युः तास्वेका पिङ्गला वरा ।।' इति । अत्रायं निष्कर्षः । मुक्तियोग्याप्सरसः सहस्रसङ्ख्याका । तासु भगवद्भार्यतायोग्याः शतम् । तास्वपि

अप्रतीकालम्बना द्विनवत्यः गोपाङ्गना बभूवुः । तदन्यास्सप्त कात्यायनीव्रतधरा बभूवुः । तत्रैका सैरन्ध्री बभूव इति ।।४९-५४।।

**अनन्तभट्टीया–** समस्तवराङ्गनाभ्यः पूर्वं हरेः सुसङ्गमः स्यादिति तप अचरत् ।।४९।।

**जनार्दनीया–** या नीला पूर्वजन्मनि अस्य कृष्णस्य प्रथमा भार्या ज्येष्ठभार्या भूयासमेव स्यामिति तपः अचरत् । तपश्चरणान्तरमाह– **हीति** ।। कृष्णजन्मनि कृष्णावतारे समस्तवराङ्गनाभ्यः रुक्मिण्याद्युत्तमस्त्रीभ्यः पूर्वं आदौ मे सङ्गमः कृष्णरमणः स्यादिति । तु विशेषेण तप आचरत् स्मेत्यर्थः । हि यस्मात् तस्मात् स कृष्णः प्रथमं समस्तवराङ्गनाभ्यः पूर्वं इमां नीलां आप ।।४९।।

**ताम्रपर्णीया–** प्रथमतो नीलापाणिग्रहे हेतुमाह– **येति** ।। या नीला हि यस्मात् प्रथमभार्येव भूयासमिति तप आचरत् तत्तस्मात् इमां प्रथममाप विवाहमकरोदित्यर्थः । तर्हि रुक्मिण्यादितः पूर्वं विवाहः कार्यः किमु उपनयनात् पूर्वं विवाहेन इत्यत आह– **अस्येति** ।। मे कृष्णजन्मनि समस्तवराङ्गनाभ्यः पूर्वं कृष्णस्य सङ्गमः स्यात् इति समेत्य तप आचरत् । तत् तस्मात् उपनयनात् प्रथममेवाप ।।४९।।

**भावचन्द्रिका–** आद्यस्त्रीसङ्गे पुरुषस्य आदरातिशय इति नीलाभिप्रायः । तदितरासां तु कृष्णस्य धर्मशिक्षकत्वेन संस्कारे सति यथेच्छाविहारो न स्यादिति ।।४९।।

**चट्टि–** सर्वगोपाङ्गनापेक्षया नीलाया एव प्रथमग्रहणे निमित्तमाह– **या पूर्वजन्मनीति** ।। या नीला पूर्वजन्मनि अहं प्रथमभार्या समस्तभार्यापेक्षया प्रथमभार्यैव भूयासमिति । कृष्णजन्मनि कृष्णावतारे समस्तवराङ्गनाभ्यः रुक्मिण्याद्युत्तमस्त्रीभ्यः पूर्वमादौ मे अस्य श्रीकृष्णस्य सङ्गमः रमणं स्यादिति तु विशेषेण तपः अचरत् हि यस्मात् तस्मात् सः श्रीकृष्णः प्रथमं समस्तवराङ्गनाभ्यः पूर्वं इमां नीलां आप ।।४९।।

**अग्रे द्विजत्वत उपावहदेष नीलां गोपाङ्गना अपि पुरा वरमापिरे यत् ।**
**संस्कारतः प्रथममेव सुसङ्गमो नो भूयात् तवेति परमाप्सरसः पुरा याः ।।५०।।**

**वादिराजीया–** यत् यस्मात् कारणात् ग्रन्थोक्तरीत्या गोपाङ्गना अपि वरमापिरे तत् द्विजत्वतः अग्रे वरं श्रेष्ठं कृष्णमापिरे इति क्रियाकर्मणोरावृत्त्या योजना ।।५०-५३।।

**सत्याभिनवतीर्थीया–** तत्रैव अग्रे द्विजत्वत उपावहदेष इत्यस्ति । तस्यार्थः । यत् यस्मात् याः पुरा परमाप्सरसः ताः गोपाङ्गना अपि संस्कारतः प्रथममेव तव सुसङ्गमः नः अस्माकं भूयादिति प्रार्थ्य संस्कारतः प्रथममेव युष्माकं सुसङ्गमः नः अस्माकं भूयादिति भगवतः सकाशात् वरमापिरे । तस्मात् द्विजत्वतः अग्रे नीलामुपावहदिति । एतेन 'तव सुसङ्गमः नः भूयात्' इत्यस्य प्रार्थनावाक्यत्वेन 'इति

प्रार्थ्य' इति वक्तव्यम् । 'तव सङ्गमः न भूयात् इति वरम्' इति वरत्वकथनमनुपपन्नमिति दूषणं परास्तम् । इति प्राथ्येंत्यस्य शेष इत्यङ्गीकारात् । एतेनैव वरप्रकारो नोक्त इति न्यूनतेति शङ्कानवकाशः । युष्माकमित्यध्याहार सुसङ्गम इत्यादेरावृत्तिः नः इत्यस्य कृष्णपरत्वं च स्वीकृत्य सुसङ्गम इत्यादिनैव वरप्रकारोऽपि उच्यते इत्यभ्युपगमात् । नः इत्यस्य कृष्णपरत्वे 'अस्मदोर्द्वयोश्च' इति वचनात् बहुवचनं युक्तम् ।।५०।।

**वरदराजीया–** प्रथममित्येतद्विवृणोति– **अग्र इति** ।। द्विजत्वतः उपनयनादग्रे पूर्वमेव एषः कृष्णो नीलामुपावहत् स्वीकृतवान् । गोपाङ्गना अपि पुरा पूर्वजन्मनि यद्यस्मात् वरमापिरे प्रापुः । किमिति । संस्कारतः उपनयनाख्यसंस्कारात् प्रथममेव पूर्वमेव तव सुसङ्गमो नोऽस्माकं भूयादिति । गोपाङ्गनाः पूर्वं का इत्यत उक्तम्– **परमेति** ।। या गोपाङ्गनाः पुरा परमाप्सरसः उत्तमाप्सरस्त्रियः । अप्सरस्त्रीष्वपि काश्चिदेव हरेरङ्गसङ्गयोग्या इति दर्शयितुं परमेत्युक्तम् ।।५०।।

**अनन्तभट्टीया–** संस्कारतः उपनयनतः । याः गोपाङ्गनाः । इत्यवदन् ।।५०।।[१]

**जनार्दनीया–** एषः कृष्णः द्विजत्वतः उपनयनाद् अग्रे पूर्वं नीलां उपावहत् उपयेमे । ननु तपश्चरणान्नीला प्रथमा भार्या भवतु । तस्याः प्रथमसङ्गोऽपि भवतु । गोपाङ्गनानां संस्कारतः पूर्वं स्वीकारः कुत इत्यत आह– **गोपाङ्गना इति** ।। पुरा पूर्वजन्मनि गोपाङ्गना अपि गोपकन्यकाः गोपत्न्यश्च वरं आपिरे प्रापुः। किमिति? यद् यस्मात् संस्कारतः प्रथममेव पूर्वमेव नोऽस्माकं तव सुसङ्गमः शोभनसम्बन्धः भूयादिति वरं आपिरे । तत् तस्माद् द्विजत्वतः अग्रे नीलां उपावहदिति पूर्वेणान्वयः । गोपाङ्गनाः पूर्वं का इत्यत आह– **परमेति** ।। या गोपाङ्गनाः पुरा परमाप्सरसः उत्तमाप्सरस्त्रियः ।।५०।।

**ताम्रपर्णीया–** ननु समस्तवराङ्गनाभ्यः पूर्वं हरिसङ्गः उपनयनानन्तरभाविविवाहाविरोधि द्विजत्वप्राप्त्यनन्तरं रुक्मिण्यादितः पूर्वमेव विवाहसङ्गमयो उपपत्तेः इत्यत आह– **अग्रे द्विजत्वत इति** ।। याः पुरा परमाप्सरसः परमाश्च ता अप्सरसश्च परमाप्सरसः ताः गोपाङ्गनाः अपि संस्कारतः पूर्वं एव तव सङ्गमः स्यादिति प्रार्थयित्वा तं वरं आपिरे । यदतो अग्रे द्विजत्वतः उपावहदेष नीलामिति योजना । ननु कृष्णप्रियगोपीनां अप्सरस्सु श्रेष्ठे कार्मिकसाम्यप्राप्त्या ''यास्ताः षोडशसाहस्रमहिष्यः कृष्णवल्लभाः । कृष्णप्रियाभ्यः गोपीभ्यः भक्तितः द्विगुणाधिका'' [भा.ता.११.१२.२४] इति आजानज-समाग्निपुत्राधमत्वोक्तिविरोध इति चेत् अत्र केचिदाहुः 'कासांचित् गोपीनां कार्मिकसाम्यं कासांचित् अग्निपुत्रावरत्वं अतो न विरोध' इत्याहुः । वस्तुतस्तु 'परमाप्सरस' इत्यत्र भगवदङ्गसङ्गमभाक्त्वात् परमा इति स्वरूपकथनम् । न तु सर्वाप्सरसः प्राधान्यमिति विवक्षितं इति ज्ञेयम् ।।५०-५१।।

---

१. अनन्तभट्टीया– बलभद्रविवाहात् स्वस्य द्विजत्वगमनात् पूर्वं इत्यर्थः ।। इति हो.पुस्तकपाठः ।

**चट्टि–** प्रथममित्येतद्विवृणोति– **अग्र इति** ।। एषः श्रीकृष्णः द्विजत्वतः उपनयनादग्रे पूर्वं नीलामुपावहत् उद्वाहयामास । ननु तपश्चरणात् नीला प्रथमभार्या भवतु । तस्याः प्रथमसङ्गोऽपि भवतु । संस्कारतः पूर्वं स्वीकारः कुत इत्यत आह– **गोपाङ्गना इति** ।। पुरा पूर्वजन्मनि गोपाङ्गना अपि गोपकन्यकाः अपि, न तु गोपपत्न्यः, तथात्वे तासां अप्सरस्त्वं न युज्यत इति भावः । वरमापिरे आपुः । किमिति । यद्यस्मात् संस्कारतः प्रथमं पूर्वमेव नो अस्माकं तव सुसङ्गमः शोभनसम्बन्धः भूयादिति वरं आपिरे तत् तस्मात् द्विजत्वतः अग्रे नीलां उपावहदिति पूर्वेणान्वयः । गोपाङ्गना अपि उपावहदित्यर्थः । गोपाङ्गनाः पूर्वं का इत्यत आह– **परमेति** ।। या गोपाङ्गनाः पुरा परमाप्सरसः स्त्रियः अप्सरस्त्रीष्वपि काश्चिदेव हरेरङ्गसङ्गयोग्या इति दर्शयितुं परमेत्युक्तम् ।।५०।।

**तत्राथ कृष्णमवदन् सबलं वयस्याः[१] पक्वानि तालसुफलान्यनुभोजयेति ।**
**इत्यर्थितः सबल आप स तालवृन्दं गोपैर्दुरासदमतीव हि धेनुकेन ।।५१।।**

**व्यासतीर्थीया–** धेनुकेन निमित्तेन ।।५१।।

**वेदाङ्गतीर्थीया–** [धेनुकेन] निमित्तेन ।।५१।।

**वरदराजीया–** तत्र व्रजे सबलं बलभद्रेण सहितं श्रीकृष्णमवदन् । पक्वानि पाकं प्राप्तानि तालानां सुफलानि अनुभोजयेति भोक्तुं देहीति अर्थितः स कृष्णः सबलः सन् तालानां वृन्दं वनं गोपैः सह, कथम्भूतं धेनुकेन निमित्तेन धेनुकाक्रान्तत्वादित्यर्थः, अतीव दुरासदं अत्यन्तं अगम्यम् ।।५१।।

**अनन्तभट्टीया–** धेनुकेन निमित्तेन । धेनुकाक्रान्तत्वेनेत्यर्थः ।।५१।।

**जनार्दनीया–** अथेति कथान्तरारम्भः । तत्र गोकुले । वयस्याः सखिजना इत्यर्थः । पक्वानि तालसुफलानि अनुभोजयेति । बलेन सहितं कृष्णमवदन् इति । अर्थितः गोपैः प्रार्थितः स कृष्णः धेनुकेन निमित्तेन गोपैरतीव दुरासदं अप्राप्यं तालानां वृन्दं समूहो यस्मिन् तत् तथा तालवनमित्यर्थः । आप गोपैः सहेति वा ।।५१।।

**चट्टि–** अथ तत्र व्रजे वयस्याः सखीजना इत्यर्थः, सबलं कृष्णं पक्वानि तालफलानि अनुभोजय भोक्तुं देहीत्यवदन् । इत्यर्थितः सः श्रीकृष्णः सबलस्सन् धेनुकेन निमित्तेन गौपैरतीव दुरासदं अत्यन्तमगम्यं तालवृन्दं तालवनमाप । गौपैः सहेति वा ।।५१।।

---

१. 'श्रीदामा नाम गोपालो रामकेशवयोः सखा । सुबलाशोककृष्णाद्यान् गोपान् प्रेम्णेदमब्रवीत्।।२०।।फलानि तत्र भूरीणि पतन्ति पतितानि च । सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना ।।२२।। विद्यन्तेऽभूक्तपूर्वाणि फलानि सुरभीणि च । एष वै सुरभिर्गन्धो विषूचीनो विगृह्यते ।।२५।। प्रयच्छ तानि नः कृष्ण गन्धलोभितचेतसाम् । वाञ्छासीत् महती राम गम्यतां यदि रोचते ।।'२६।। इति भागवते १०.१३ ।

**विघ्नेशतो वरमवाप्य सुदुष्टदैत्यो दीर्घायुरुत्तमबलः[1] कदनप्रियोऽभूत् ।**
**नित्योद्धतः स उत राममवेक्ष्य तालवृन्दात् फलानि गलयन्तमथाभ्यधावत् ।**
**तस्य प्रहारमभिकाङ्क्षत आशु पृष्ठपादौ[2] प्रगृह्य तृणराजशिरोऽहरत् सः ।।५२।।**

**व्यासतीर्थीया–** कदनप्रियो युद्धप्रियः । उत रामं बलिनमपि ।।५२।।

**वेदाङ्गतीर्थीया–** कदनप्रियः युद्धप्रियः सुदुष्टदैत्यः विघ्नेशतः वरमवाप्य दीर्घायुः उत्तमबलः अभूत् । बलमभ्यधावत् । तद्बलमविज्ञाय इतरानि वेति भावः । प्रहारमभिकाङ्क्षतः पृष्टपादाभ्यामिति शेषः । तृणराजशिरः तालवृक्षशिरः ।।५२-५५।।

**वरदराजीया–** धेनुकेन [निमित्तेन] कुतो दुरासदमित्यत आह । विघ्नेशतो गणेशात् वरमवाप्य दीर्घायुरभूत् उत्तमबलश्चाभूत् । अत एव कदनप्रियश्चाभूत् । नित्योद्धतः सः धेनुकः तालवृन्दात् फलानि गलयन्तं पातयन्तं रामं बलभद्रमवेक्ष्य अथानन्तरं अभ्यधावत् धावन्नागतः । प्रहारमभिकाङ्क्षतः स्वात्मानं पृष्ठपादाभ्यां प्रहर्तुमिच्छतः तस्य धेनुकस्य पृष्टपादौ प्रगृह्य तृणराजस्य तालस्य शिरोऽग्रं अहनत् अहन्नित्यर्थः ।।५२।।

**अनन्तभट्टीया–** प्रहारमभिकाङ्क्षतः प्रहर्तुमिच्छतः इच्छत इत्यर्थः । अहरत् अहन्नित्यर्थः ।।५२।।

**जनार्दनीया–** सुदुष्टोऽसौ दैत्यश्च धेनुकः विघ्नेशतः विनायकाद् वरं अवाप्य, उत कदनं युद्धमभूदिति विशेषणचतुष्टयेऽपि सम्बन्धः । अथ वनप्रवेशानन्तरं स धेनुकः तालानां वृन्दात् समूहात् फलानि गलयन्तं पातयन्तं राममवेक्ष्य अभ्यधावत् अभ्यगात् । रामाभिमुखः सन् अधावदिति भावः । स रामः प्रहारं पादाभ्यां प्रहर्तुं अभिकाङ्क्षतः इच्छतः तस्य धेनुकस्य पृष्ठपादौ पश्चात्तनपादौ आशु प्रगृह्य, तृणराजशिरः तालोर्ध्वभागं अहरत् अच्छिनत् ।।५२।।

**ताम्रपर्णीया–** उद्धतबलः उद्रिक्तबलः । नित्योद्धतः नित्यमुन्नद्धः । राममुत राममपि ।।५२-५४।।

**चट्टि–** कुतो दुरासद इत्यत आह– **विघ्नेश इति** ।। सुदुष्टश्चासौ दैत्यश्च धेनुकः विघ्नेशतः गणेशात् वरं अवाप्य उतानन्तरं दीर्घायुः उत्तमबलः, कदनं युद्धं प्रियं यस्य सः कदनप्रियः, नित्योद्धतश्च अभूदित्यस्य विशेषेणचतुष्टयेऽपि सम्बन्धः । अथ स्ववनप्रवेशादनन्तरं सः धेनुकः तालानां वृन्दात्

---

१. उद्धतबलः इति ताम्रपर्णीयपाठः ।

२. 'स तं गृहीत्वाऽथ पदोर्भ्रामयित्वैकपाणिना । चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ।।३२।। बलस्य लीलयोत्सृष्ट-खरदेहहताहताः । तालाश्चकम्पिरे सर्वे महावातेरिता इव ।।३४।। नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे । ओतप्रोतमिदं यस्मिन् तन्तुष्वङ्ग यथा पटः ।।' इति भागवते १०.१३.३५

समूहात् फलानि गलयन्तं रामं बलरामं अवेक्ष्य अभ्यधावत् अभ्यगात् । रामाभिमुखस्सन् अभ्यधावदिति भावः । सः रामः प्रहारमभिकाङ्क्षतः पृष्ठपदाभ्यां प्रहर्तुमिच्छतः तस्य धेनुकस्य पृष्ठपादौ पश्चात्तनपादावाशु प्रगृह्य तृणराजस्य तालस्य शिरः ऊर्ध्वभागं अहनत् अच्छिनत् ।।५२।।

**तस्मिन् हते खरतरे खररूपदैत्ये सर्वे खराश्च खरतालवनान्तरस्थाः ।**
**प्रापुः [१]खरस्वरतराः खरराक्षसारिं कृष्णं बलेन सहितं निहताश्च तेन ।।५३।।**

**व्यासतीर्थीया–** रामं खराः खरस्वरतराः अतिशयेन क्रूरध्वनयः ।।५३।।

**वादिराजीया–** खराः खरतरा इत्यत्र खरतराः अतिखराः ।।५३-५५।।

**मधुसूदनीया–** खरराक्षसारिं रामावतारे खराख्यराक्षसशत्रुं न तु गार्दभरूपशत्रुमित्यर्थः । धेनुकदीनां दैत्यत्वेन राक्षसत्वाभावात् ।।५३-५४।।

**वरदराजीया–** तस्मिन् खरतरे अत्युग्रे दैत्ये हते सति सर्वे तदीयाः खरतालवनस्य अन्तरस्थाः सर्वे खराः खरस्वरूपाः । कथम्भूताः खराणां स्वर इव स्वरो येषां ते खरस्वराः । अतिशयेन खरस्वराः सन्तः, खरस्य राक्षसस्य अरिं बलेन सहितं कृष्णमापुः । तेन कृष्णेन हताश्च ।।५३।।

**अनन्तभट्टीया–** खरतरे कर्कशतरे । खरस्य स्वरो येषां ते खरस्वराः । अतिशयेन खरस्वराः खरस्वरतराः खरनामराक्षसारिम् ।।५३।।

**जनार्दनीया–** खरतरे अतिक्रूरे खररूपदैत्ये रासभरूपदैत्ये तस्मिन् धेनुके हते सति । खरतालः श्रीताल इति तालभेदोऽस्ति । तत्र खरतालवनस्य अन्तरस्थाः मध्यस्थाः, खरः क्रूरः स्वरो येषां ते खरस्वराः अतिशयेन खरस्वराः खरस्वरतराः, सर्वे खराः धेनुकसम्बन्धिनो रासभाः खरराक्षसानां रासभरूपराक्षसानां अरिं बलेन सहितं कृष्णं प्रापुः । तेन निहताश्च ।।५३।।

**चट्टि–** खरतरे अतिक्रूरे तस्मिन् खररूपदैत्ये हते सति, खरतालः श्रीताल इति तालभेदोस्ति । खरतालवनस्य अन्तरस्थाः मध्यस्थाः खरदैत्यस्य तालवनान्तस्था इति वा । खरः क्रूरश्चासौ स्वरश्चेति खरस्वरः अतिशयेन खरस्वरो येषां ते खरस्वरतराः सर्वे खराः धेनुकसम्बन्धिनो रासभाः खरराक्षसारिं रामावतारे खराख्यराक्षसशत्रुं न तु गर्दभरूपराक्षसशत्रुमित्यर्थः । धेनुकादीनां दैत्यत्वेन राक्षसत्वाभावात् । वलेन सहितं श्रीकृष्णं प्रापुः तेन श्रीकृष्णेन निहताश्च ।।५३।।

---

१. 'खराः खरतराः' इति वादिराजतीर्थीयपाठः ।

**सर्वान्निहत्य [1]खररूपधरान् स दैत्यान्विघ्नेश्वरस्य वरतोऽन्यजनैरवध्यान् ।**
**पक्वानि तालसुफलानि निजेषु चाऽदाद्दुर्वारपौरुषगुणोद्भरितो रमेशः ।।५४।।**

**वरदराजीया–** एवं सर्वान् निहत्य दुर्वारपौरुषश्चासौ गुणोद्भरितश्च रमेशो निजेषु निजेभ्यो गोपेभ्यो फलान्यदात् ।।५४।।

**जनार्दनीया–** दुर्वारं वारयितुमशक्यं पौरुषं यस्य स तथा । स चासौ गुणोद्भरितः गुणपूर्णः स कृष्णः निहत्य निजेषु स्वकीयेभ्यः अदात् ।।५४।।

**चट्टि–** दुर्वारं वारयितुं अशक्यं पौरुषं यस्य स तथा । स चासौ गुणोद्भरितः गुणपरिपूर्णश्च सः रमेशः श्रीकृष्णः विघ्नेश्वरस्य विनायकस्य वरतः अन्यजनैरवध्यान् खररूपधरान् सर्वान् दैत्यान् निहत्य तानि पक्वानि तालसुफलानि निजेषु स्वकीयेभ्यो गोपेभ्यो अदात् ।।५४।।

**पक्षद्वयेन विहरत्स्वथ गोपकेषु दैत्यः प्रलम्ब इति कंसविसृष्ट आगात् ।**
**कृष्णस्य पक्षिषु जयत्स्वथ [2]राममेत्य पापः पराजित उवाह तमुग्ररूपः ।।५५।।**

**मधुसूदनीया–** ।। **कृष्णस्य पक्षिषु जयत्स्विति** ।। नन्वेवं सति भागवतविरोधः । तथाहि–
'तत्र चक्रुः परिवृढौ गोपाः रामजनार्दनौ । कृष्णसङ्घट्टिनः केचिद्गोपा रामस्य चापरे ।।
आचेरुर्विविधाः क्रीडाः वाह्यवाहकलक्षणाः । तत्रारोहन्ति जेतारो वहन्ति च पराजिताः ।।
वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम् । भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ।।
रामसङ्घट्टिनो ये हि श्रीदामवृषभादयः । क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप ।।
उवाह कृष्णो भगवान् श्रीदामानं पराजितः । वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् ।।'
इत्यादौ [भाग.१०.१७.१९-२३] कृष्णरामयोः पक्षद्वयस्थत्वमुक्त्वा कृष्णपक्षीयानामेव पराजयोक्तेरिति चेदुच्यते । शब्दव्यत्यासेन तद्ग्रन्थस्य प्रवृत्तत्वेन विरोधाभावात् । तथाहि– 'गोपा रामजनार्दनौ' इत्यत्र 'गोपा रामस्य' इत्यत्र च रेफस्य व्यत्यये कृते 'श्रीदामजनार्दनौ' इति श्रीदाम्न इति रामसङ्घट्टिनः इत्यत्रापि श्रीदामसङ्घट्टिन इति शब्दव्यत्यये कृते 'उवाह कृष्णो भगवान् श्रीदामानम्' इत्यत्र कृष्णं श्रीदामोवाहेत्यर्थः । व्यत्यये कृते विरोधाभावात् । भगवद्गुणपूर्त्यर्थत्वेन व्यत्यासस्य कर्तव्यत्वात् । अन्यथा भगवतो बहुमानविरोधापत्तेः ।
'बहुमानविरोधे तु व्यत्यासश्शब्दतोऽर्थतः । कार्योऽनिरुक्तदेवानां गुणसिद्ध्यै न चान्यथा ।।

---

१. 'अन्यानथ सजातीयान् आगतान् दैत्यगर्दभान् । कृष्णश्चिक्षेप तालाग्रे बलभद्रश्च लीलया ।।' इति विष्णुपुराणे ५.८.११
२. 'अविषह्यं ततो मत्वा कृष्णमद्भुतविक्रमम् । रौहिणेयवधे यत्नमकरोद्दानवोत्तमः ।।' इति हरिवंशे.२.१४.१७।

विष्णुर्ब्रह्म तथा वायुरनिरुक्ताः प्रकीर्तिताः । तत्पत्न्यश्चेतरगुणाः व्यत्यस्यास्तेष्वसंशयः ।।'
इति ब्रह्मतर्कवचनात् । एवं विरोधपरिहाराकरणे हरिवंशादिबहुप्रमाणविरोधापत्तेः । तथाहि–
'हरिसङ्क्रीडनं नाम बालक्रीडनकं ततः । प्रक्रीडतुस्स्म ते सर्वे द्वौ द्वौ युगपदुत्थितौ ।।
कृष्णः श्रीदामसहितः पुप्लुवे गोपसूनुना । सङ्कर्षणस्तु प्लुतवान् प्रलम्बेन सहानघ ।।
गोपालास्त्वपरे द्वन्द्वं गोपालैरपरैस्सह । प्रद्रुता लङ्घयन्तो वै तेऽन्योन्यं लघु विक्रमाः ।।
श्रीदाममजयत् कृष्णः प्रलम्बं रोहिणीसुतः । गोपालैः कृष्णपक्षीयैः गोपालास्त्वपरे जिताः ।।
ते वाहयन्तस्त्वन्योन्यं सहर्षात्सहसा द्रुताः । भाँण्डीरस्कन्धमुद्दिस्य मर्यादां पुनरागमन् ।।
सङ्कर्षणं तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः । द्रुतं जगाम विमुखः सचन्द्र इव तोयदः ।।'
इत्यादि हरिवंशे [२.१५.१८-२३] ।

हरिणा क्रीडनं नाम बालक्रीडनकं ततः । प्रकुर्वन्तो हि ते सर्वे द्वौ द्वौ युगपदुत्थितौ ।।
श्रीदाम्ना सह गोविन्दः प्रलम्बेन तथा बलः । गोपालैरपरैश्चान्ये गोपालाः पुप्लुवुस्ततः ।।
श्रीदामानं ततः कृष्णः प्रलम्बं रोहिणीसुतः । जितवान् कृष्णपक्षीयैर्गोपैरन्ये पराजिताः ।।
सङ्कर्षणं तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः । नभस्स्थलं जगामाशु सचन्द्र इव तोयदः ।।'
इत्यादि विष्णुपुराणे च [५.९.१२-१६] । कृष्णरामयोरेकपक्षत्वं श्रीरामप्रलम्बयोश्चैकपक्षत्वमुक्त्वा श्रीदाम्ना साकं कृष्णस्य, प्रलम्बेन साकं बलस्य क्रीडामुक्त्वा कृष्णपक्षीयानामेव जयोक्तेः । नचैतद्विरोधेन हरिवंशादेरेव अर्थान्तरं किं न स्यादिति वाच्यम् । बहूनामर्थान्तरकल्पने गौरवात् । निर्णयग्रन्थेषु भारतस्याऽधिकत्वेन तदनुसारेण [तर्णियस्य] कर्तव्यत्वात् ।

।। **कृष्णस्य पक्षिषु** ।। कृष्णपक्षस्थेषु गोपेषु जयत्सु सत्सु । अथ श्रीदाम्ना कृष्णोद्वहनानन्तरं प्रलम्बो राममेत्य । 'पक्षद्वयेन कृष्णरामौ नायकौ कृत्वा केचिद्गोपाः कृष्णपक्षस्थाः, श्रीदामाद्याः केचिद्गोपाः रामपक्षस्थाः जाता इत्येवं पक्षद्वयेन द्वन्दीभूय वाह्यवाहकरूपक्रीडया गोपालकेषु विहरत्सु सत्सु क्रीडां कुर्वत्सु सत्सु अथ कंसेन विसृष्टः प्रेषितः प्रलम्ब इति ख्यातो दैत्यः अगात् । श्रीकृष्णपक्षगोऽभूदिति शेषः । कृष्णस्य पक्षिषु जयत्सु सत्सु स्वयं पराजितः पापः प्रलम्बः अथ पराभवानन्तरं राममेत्य तं रामं उवाह पृष्ठेनावहत् । अत्रायमाशयः । कृष्णपक्षिभिः सर्वैः जितम् । तत्पक्षस्थैः प्रलम्बभद्रसेनाद्यैः द्वित्रिभिरेव पराजितम् । रामपक्षिभिः श्रीदामाद्यैः सर्वैः पराजितम् । रामवृषभाद्यैः द्वित्रिभिरेव जितमिति । अयमेवार्थो हरिवंशदशमस्कन्धानुकूल्यात्' इति जनार्दनभट्टीयव्याख्यानम् ।।५५-६२।।

**वरदराजीया–** पक्षद्वयेन पक्षद्वयं सम्पाद्येत्यर्थः । प्रलम्ब इति प्रसिद्धो दैत्यः तत्र पक्षद्वये कृष्णस्य पक्षिषु गोपेषु जयत्सु सत्सु द्वितीयपक्षस्थः स्वयं पराजितः सन् कृष्णपक्षीयं राममेत्य तं राममुवाह । स प्रसिद्ध इति शेषः ।।५५।।

**भावविवृति–** पक्षद्वयेन विहरत्स्वथ गोपकेषु...तमुग्ररूप इत्यत्र गोपालाः क्रीडार्थं पक्षपरपक्षत्वेन व्यूहितास्सन्तः उभयपक्षेऽप्येकैकं नायकं चक्रुः । तत्रैकस्मिन् पक्षे कृष्णं अन्यस्मिन् पक्षे श्रीरामं नायकं चक्रुरित्यर्थः । अन्ये गोपालका अपि केचन रामवृषभादय कृष्णपक्षीयाः, केचन प्रलम्बभद्रसेनादयः श्रीदामपक्षीया बभूवुः । किञ्च पक्षप्रतिपक्षिषु मध्ये कृष्णपक्षीयोऽप्येक इति द्वौ द्वौ क्रीडायां अनेन समं मम बलपरीक्षा स्यात् इति सङ्केतपूर्वकमुत्थिताः । तत्र कृष्णश्रीदामानौ रामबलीयौ वृषभभद्रसेनौ एवमन्येऽपि पक्षप्रतिपक्षस्थौ द्वौ युगपदुत्थितौ । तत्क्रीडायां कृष्णश्च कृष्णपक्षीयाश्च स्वेन स्वेन संमिलितं प्रतिपक्षिणं पराजितं चक्रुः । तैर्जिता श्रीदामादयः कृष्णादीनूहुः । कृष्णेन पराजितः श्रीदामा कृष्णमुवाह । रामेण जितः प्रलम्बो राममुवाह । वृषभेण जितो भद्रसेनो वृषभमुवाह । एवमन्येऽपीति द्रष्टव्यम् । तदुक्तं हरिवंशे–

'हरिसङ्क्रीडनं नाम बालक्रीडनकं ततः । प्रक्रीडतुस्स्म ते सर्वे द्वौ द्वौ युगपदुत्थितौ ।।
कृष्णः श्रीदामसहितः पुप्लुवे गोपसूनुना । सङ्कर्षणस्तु प्लुतवान् प्रलम्बेन सहानघ ।।
गोपालास्त्वपरे द्वन्द्वं गोपालैरपरैस्सह । प्रद्रुता लङ्घयन्तो वै तेऽन्योन्यं लघु विक्रमाः ।।
श्रीदाममजयत् कृष्णः प्रलम्बं रोहिणीसुतः । गोपालैः कृष्णपक्षीयैः गोपालास्त्वपरे जिताः ।।
ते वाहयन्तस्त्वन्योन्यं सहर्षात्सहसा द्रुताः । भाण्डीरस्कन्धमुद्दिस्य मर्यादां पुनरागमन् ।।
सङ्कर्षणं तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः । द्रुतं जगाम विमुखः सचन्द्र इव तोयदः ।।'
इत्यादि हरिवंशे [२.१५.१८-२३] ।

विष्णुपुराणे च–

हरिणा क्रीडनं नाम बालक्रीडनकं ततः । प्रकुर्वन्तो हि ते सर्वे द्वौ द्वौ युगपदुत्थतौ ।।
श्रीदाम्ना सह गोविन्दः प्रलम्बेन तथा बलः । गोपालैरपरैश्चान्ये गोपालाः पुप्लुवुस्ततः ।।
श्रीदामानं जितः कृष्णः प्रलम्बं रोहिणीसुतः । जितवान् कृष्णपक्षीयैर्गोपैरन्ये पुरा जिताः ।।
सङ्कर्षणं तु स्कन्धेन शीघ्रमुत्क्षिप्य दैत्यराट् ।। इत्यादि ।

ननु भागवते–

तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ । कृष्णसङ्घट्टिनः केचित् गोपा रामस्य चापरे ।।
ताश्चेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः । तत्रारोहन्ति जेतारो वहन्ति च पराजिताः ।।
वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम् । भाण्डीरकं नाम वनं जग्मुः पुरोगमाः ।।
रामसङ्घट्टिनो ये हि श्रीदामवृषभादयः । क्रीडायां जयिनस्तांस्तान् कृष्णादयो नृपाः ।।
उवाह कृष्णो बलवान् श्रीदामानं पराजितः । वृषभं भद्रसेनश्च प्रलम्बो रोहिणीसुतम् ।।
इति रामकृष्णयोर्भिन्नपक्षीयत्वं कृष्णपक्षीयानां पराजयश्च प्रतीयते । अतो विरोध इति चेत् उच्यते ।

भागवतवचनस्य सङ्क्षेपकथायां तु व्यत्यासेनार्थसम्भवात् न तद्विरोध इति । तथाच इत्थमत्र व्यत्यासेनार्थकथनप्रकारः ।

'गोपा रामजनार्दनौ' इत्यत्र गोपारामजनौ इति पदच्छेदः । गोपास्तत्र क्रीडायां परिवृढौ नायकौ चक्रुः । तौ कावित्यत आह– **रामजनार्दनाविति** ।। रेफस्य व्यत्यये कृते श्रीदामजनानार्दनौ इति नामैकदेशे नामग्रहणमिति श्रीदामजनार्दनावित्यर्थः । 'रामस्य च पर' इत्यत्रापि रेफस्य व्यत्यये कृते 'श्रीदामस्य चापर' इति सङ्घट्टिनः पक्षीयाः आसन्नित्यर्थः । तांस्तांस्ते पराजिता श्रीदामादयः कृष्णादयः कृष्णादीनूहुः । 'उवाह कृष्णो भगवान् श्रीदामानं पराजित' इत्यत्रापि कृष्णो भगवानिति प्रथमा द्वितीयार्थे । सप्तसु प्रथमार्थेषु 'षट्सु द्वितीया यस्माच्च'...छान्दोग्यभाष्योक्तेः । एतदभिप्रायेणैव श्रीदामा कृष्णमुवाह इत्युक्तमाचार्यैः । तथाच पराजितः श्रीदामा कृष्णमुवाह, पराजितः प्रलम्बो रोहिणीसुतमिति । एवं व्यत्यासेनार्थकथने किं कारणमित्यतो हरिवंशादिप्रमाणविरोधादनिरुक्तदेवानां बहुमानविरोधप्रसक्तिर्यत्र तत्र व्यत्यासेनार्थः कथनीय इति ब्रह्मतर्कोक्तेश्चात्र व्यत्यासेनार्थकथनं युक्तमिति भावेनैतदर्थप्रतिपादक-ब्रह्मतर्कवचनमुदाहृतमाचार्यैः ।

'बहुमानविरोधे तु व्यत्यासः शब्दतोऽर्थतः । कार्योऽनिरुक्तदेवानां गुणसिद्ध्यै न चान्यथा ।।
विष्णुर्ब्रह्माथ वायुर्वा अनिरुक्ताः प्रकीर्तिताः । तत्पत्न्यश्चेतरगुणाः व्यत्यस्यास्तेष्वसंशयः ।।'
इति दशमतात्पर्ये [१७.२४] ।

अस्यार्थः । एकस्य वाक्यस्य बहुप्रमाणविरोधे यथासम्भवं शब्दतो वा उभयतो वा व्यत्यस्यार्थो वक्तव्यः । कुतः? अनिरुक्तदेवानां गुणसिद्ध्यै तदर्थं अन्यथा व्यत्यासेनार्थकथनं विना अप्रामाण्यकल्पनं न च न युक्तमिति । यद्वा अघटनार्थं शब्दतोऽर्थतो वा व्यत्यासः कार्य इति ।।५५।।

**अनन्तभट्टीया–** पक्षद्वयेन विभागकरणेन कृष्णस्य पक्षिषु जयत्सु प्रलम्बं विना कृष्णपक्षीयाः सर्वे जिताः । प्रलम्बस्त्वेकः कृष्णपक्षीयः बलरामेण पराजितः । यथोक्तं हरिवंशे–

'दृष्टिश्च सदृशे कृष्णे रौहिणेये च दारुणः । अविषह्यं ततो ज्ञात्वा कृष्णमद्भुतविक्रमम् ।।
रौहिणेयवधे यत्नं अकरोद्दानवोत्तमः । हरिणा क्रीडनं नाम बालक्रीडनकं ततः ।।
प्रक्रीडितास्तु ते सर्वे द्वौ द्वौ युगपदुत्पतन् । श्रीदामसहितः कृष्णः पुप्लुवे गोपसूनुना ।।
सङ्कर्षणस्तु प्लुतवान् प्रलम्बेन महानघ । गोपालास्त्वपरे द्वन्द्वं गोपालैरपरैस्सह ।।
प्रद्रुता लङ्घयन्तो वै तेऽन्योन्यं लघुविक्रमाः ।....
प्रलम्बस्य कृष्णपक्षीयत्वं भागवतवाक्यादवगन्तव्यम् ।...कृष्णं । क्रियाविशेषणं वा ।।५५।।

**जनार्दनीया–** पक्षद्वयेन कृष्णरामौ नायकौ कृत्वा, केचिद्गोपाः कृष्णपक्षस्थाः श्रीदामाद्याः, केचिद्गोपाः रामपक्षस्थाः जाता इत्येवं पक्षद्वयेन द्वन्द्वीभूय वाह्यवाहकरूपक्रीडया गोपकेषु विहरत्सु सत्सु क्रीडां

कुर्वत्सु सत्सु । अथ कंसेन विसृष्टः प्रेषितः प्रलम्ब इति ख्यातः दैत्यः आगात् । श्रीकृष्णपक्षगोऽभूदिति शेषः । कृष्णस्य पक्षिषु जयत्सु सत्सु स्वयं पराजितः पापः प्रलम्बः । अथ पराभवानन्तरं तं रामं एत्य, रामं उवाह पृष्ठेनावहत् । अत्रायमाशयः कृष्णपक्षिभिः सर्वैर्जितं तत्पक्षस्थैः प्रलम्बभद्रसेनाद्यैः द्वित्रिभिरेव पराजितं रामपक्षिभिः श्रीदामाद्यैः सर्वैः पराजितं रामवृषभाद्यैः द्वित्रिभिरेव जितमिति । अयमेवार्थो हरिवंशदशमस्कन्धानुकूल्यात् ।।५५।।

**ताम्रपर्णीया–** ।। **पक्षद्वयेनेति** ।। ननु अत्र रामकृष्णौ केचन गोपाश्चैकः पक्षः । अपरे गोपा अन्यपक्ष इति पक्षद्वयेन विहरत्सु कृष्णस्य पक्षिषु जयत्सु द्वितीयपक्षस्थः प्रलम्बः पराजितो भूत्वा कृष्णपक्षीयं राममुवाहेति विवक्षायां 'तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ । कृष्णसङ्घटिनः केचित् आसन् रामस्य चापरे'[१०.१६.१९] इति भागवतविरोधः । कृष्णरामयोर्भिन्नपक्षस्थत्वे कृष्णपक्षे जयति तत्पक्षीयस्य प्रलम्बस्य रामवाहकत्वायोग इति चेत् अयमर्थो अत्राभिप्रेतः । पक्षद्वयेन कृष्णरामेश्वरैकपक्षद्वयेन गोपकेषु विहरत्सु सत्सु हरिणा क्रीडनं नाम विहारं कुर्वत्सु प्रलम्बः कंसेन प्रेषितः आगत्य कृष्णपक्षीभूत्वा कृष्णस्य पक्षिषु जयत्स्वथ जयत्स्वपि पापिष्ठः महाबलं राममेत्य तेन सह प्लवनादिरूपक्रीडया प्राप्य पराजितः सन् उवाहेति । तथा हि हरिवंशे ''हरिणा क्रीडनं नाम बालक्रीडनकं ततः । प्रक्रीडिताश्च ते सर्वे द्वौ द्वौ युगपदुत्थितौ । श्रीदाम्ना सहितः कृष्णः पुप्लुवे गोपसूनुना । सङ्कर्षणश्च प्लुतवान् प्रलम्बेन सहानघः । गोपालास्त्वपरे द्वन्द्वगोपालैरपरैः सह । प्रद्रुता लङ्घयन्तो वै अन्योन्यं लघुविक्रमः । श्रीदामं चाजयत् कृष्णः प्रलम्बं रोहिणीसुतः । गोपालैः कृष्णपक्षीयैः गोपालास्त्वपरे जिताः' [विष्णुपर्व.१४.१८-२१] इति । पाद्मे चाह 'हरिणा क्रीडनं नाम बालक्रीडनकं ततः । प्रकुर्वन्तौ हि ते सर्वे द्वौ द्वौ युगपदुत्थितौ । श्रीदाम्ना सह गोविन्दः प्रलम्बेन तथा बलः । गोपालैरपरैश्चान्ये गोपालाः सह पुप्लुवुः । श्रीदामानं ततः कृष्णः प्रलम्बं रोहिणीसुतः । गोपालैः कृष्णपक्षीयैः गोपैरन्ये पराजिताः । ते वाहयन्तस्त्वन्योन्यं भाण्डीरस्कन्धमेव च । पुनर्निववृतुः सर्वे ये ये तत्र पराजिताः' इति । कृष्णो रामपक्षगतेन श्रीदाम्ना पुप्लुवे । रामोऽपि कृष्णपक्षगतेन प्रलम्बेन पुप्लुवे अपरैर्गोपालैरन्ये पुप्लुवुः । तत्र कृष्णो रामपक्षीयं श्रीदामानमजयत् । रामः कृष्णपक्षीयं प्रलम्बमजयत् । अन्ये रामपक्षीयास्तु कृष्णपक्षीयैः जिता इति वचनद्वयार्थः ।।५५-५९।।

**भावचन्द्रिका–** ।। **पक्षद्वयेनेति** ।। हरिणा क्रीडनं नाम बलक्रीडनकं ततः । प्रक्रीडिताश्च ते सर्वे द्वौ द्वौ युगपदुत्थितौ ।। कृष्णः श्रीदामसहितः पुप्लुवे गोपसूनुना । सङ्कर्षणस्तु प्लुतवान् प्रलम्बेन सहानघ ।। गोपालाश्चापरे द्वन्द्वं गोपालैरपरैस्सह । प्रद्रुता लङ्घयन् ते वै अन्योन्यं लघुविक्रमाः ।। श्रीदामं चाजयत्कृष्णः प्रलम्बं रोहिणीसुतः । गोपालैः कृष्णपक्षीयैः गोपालास्त्वपरे जिताः ।। इति हरिवंशोक्तं द्रष्टव्यम् ।।५५।।

**चट्टि–** अथ अनन्तरं पक्षद्वयेन श्रीकृष्णरामौ नायकौ कृत्वा केचिद् गोपाः कृष्णपक्षस्थाः श्रीदामाद्याः केचिद्गोपाः श्रीरामपक्षस्थाः जाता इत्येवं पक्षद्वयेन द्वन्द्वीभूय वाह्यवाहकक्रीडया गोपेषु विहरत्सु सत्सु क्रीडां कुर्वत्सु सत्सु अथ कंसेन विसृष्टः प्रेषितः प्रलम्व इति प्रसिद्धः दैत्यः आगात् । श्रीकृष्णगो अभूदिति शेषः । कृष्णस्य पक्षिषु जयत्सु सत्सु स्वयं पराजितः पापः उग्ररूपः प्रलम्बः अथ पराभवानन्तरं राममेत्य तंराममुवाह पृष्ठेनावहत् । अत्रायमाशयः । कृष्णपक्षस्थैः सर्वैः जितं तत्पक्षस्थैः प्रलम्बभद्रसेनाद्यैः द्वित्रिभिरेव पराजितम् । रामपक्षिभिः श्रीदामाद्यैः पराजितम् । रामवृषभाद्यैः द्वित्रिभिरेव जितमिति दशमस्कन्धहरिवंशानुकूल्येनायमेवार्थः ।।५५।।

**भीतेन रोहिणिसुतेन हरिस्तुतोऽसौ [1]स्वाविष्टतामुपदिदेश बलाभिपूर्त्यै ।**
**तेनैव पूरितबलोऽम्बरचारिणं तं पापं प्रलम्भमुरुमुष्टिहतं चकार ।।५६।।**

**वेदाङ्गतीर्थीया–** उपदिदेश आविश्चकार । तेनैवाविष्करणेनैव ।।५६-५७।।

**वादिराजीया–** स्वाविष्टतामुपदिदेशेत्यत्र बलाभिपूर्त्यै स्वेनाविष्टत्वमुपदिदेश वलं प्रत्युक्तवान् । अहं त्वय्याविष्टोऽस्मि । त्वं मा भैषीरित्युक्तवानिति भावः ।।५६-५९।।

**वरदराजीया–** तेन रामेण हरिः कृष्णः स्तुतोऽसौ कृष्णो रामस्य बलाभिपूर्त्यै स्वाविष्टतां शुक्लकेशात्मकस्वावेशित्वमुपदिदेश । तेन स्वाविष्टत्वानुसन्धानेन परिपूरितबलः परिपूर्णबलो रामो उरुमुष्टिहतं चकार ।।५६।।

**भावविवृतिः–** भीतेन रोहिणिसुतेन...चारिणमित्यत्र स्वाविष्टतामुपदिदेश इत्यनेन यावद्देहभाविहर्यावेशस्य रामे सूचितत्वात् कथं भयप्रसक्तिः । उपदेशात् बलाभिवृद्धिर्वा कथमिति चेदुच्यते । रामे सदा हर्यावेशे सत्यपि तस्य शक्तिव्यक्त्यङ्गीकारात् । व्यक्त्यर्थं उपदेशादिकं अपेक्षितमेव । आवेशशक्तिकाले भयादिप्रसक्तिः व्यक्तिकाले बलाभिवृद्धिश्च भवतीति । तदुक्तमाथर्वणरहस्ये–'सन्निधानं तथा प्राप्ता पिशाचाः पुरुषेष्वपि । तत्र स्थित्वापि भुञ्जन्तः आविशेयुः पुनश्च ते ।। मन्त्रादिभिस्तथा विष्णुः सदा प्राणे स्थितोऽपि सन् । ज्ञानदीप्त्यादिकं कुर्यात् ज्ञानिनः पुनरेव तु।।' इति ।।५६-७२।।

**जनार्दनीया–** स्तुतोऽसौ हरिः कृष्णः स्वाविष्टतां स्वशुक्लकेशावेशत्वं बलस्य शक्तेः अभिपूर्त्यै । रामस्येति शेषः । उपदिदेश आविश्चकारेत्यर्थः । तेनैव आविष्करणनिमित्तेनैव पूरितं पूर्णं कृतं बलं यस्य सः । रामः अम्बरे आकाशे चारिणं विचरन्तं प्रलम्बं उरुणा दृढेन मुष्टिना हतं मृतम् ।।५६।।

---

१. 'स सन्दिग्धमिवात्मानं मेने सङ्कर्षणस्तदा । दैत्यस्कन्धगतः श्रीमान् कृष्णं चेदमुवाच ह ।। ह्रियेऽहं कृष्ण दैत्येन पर्वतोदग्रवर्ष्मणा । प्रदर्शयित्वा महतीं मायां मानुषरूपिणीम् ।। कथमस्य मया कार्यं शासनं दुष्टचेतसः । प्रलम्बस्य प्रवृद्धस्य दर्पाद्द्विगुणवर्चसः ।। तमाह सस्मितं कृष्णः साम्ना हर्षाकुलेन वै ।' इत्यादि हरिवंशे१४.३०-३६।

**चट्टि–** असौ हरिः श्रीकृष्णः भीतेन रोहिणीसुतेन बलरामेण स्तुतस्सन् स्वाविष्टतां स्वशुक्लकेशावेशवत्त्वं बलस्य शक्तेरभिपूर्त्यै रामस्येति शेषः, उपदिदेश आविश्चकारेत्यर्थः । तेनैवाविष्करणनिमित्तेनैव पूरितबलः पूर्णबलः रामः अम्बरचारिणं आकाशे चरन्तं पाप तं प्रलम्बं उरुणा दृढेन मुष्टिना हतं चकार ।।५६।।

**तस्मिन् हते सुरगणा बलदेवनाम रामस्य चक्रुरतितृप्तियुता हरिश्च ।**
**वह्निं पपौ पुनरपि प्रदहन्तमुच्चैर्गोपांश्च गोगणमगण्यगुणार्णवोऽपात् ।।५७।।**

**वरदराजीया–** अतितृप्तियुताः देवगणाः रामस्य बलदेव इति नाम चक्रुः । हरिः कृष्णश्च पुनरपि प्रदहन्तं वह्निं दावाग्निं पपौ । गोपान् गोगणञ्च अपात् अरक्षत् ।।५७।।

**जनार्दनीया–** तस्मिन् प्रलम्बे । हरिश्च कृष्णोऽपि । बलदेवनाम चक्रुरित्यर्थः । अगण्यगुणार्णवः कृष्णः । पुनरपि कालियप्रसङ्गप्राप्तदावाग्निप्राशनापेक्षया पुनः ।।५७।।

**चट्टि–** तस्मिन् प्रलम्बे हते सति सुरगणाः देवसमूहः अतितृप्तियुताः अधिकसन्तोषयुक्ताः रामस्य बलदेव इति नाम चक्रुः । अगण्यगुणार्णवः हरिः श्रीकृष्णश्च पुनरपि कालियह्रदनिर्गमनानन्तरं प्राप्तदावाग्निप्राशनापेक्षया पुनरित्युक्तम् । उच्चैः प्रदहन्तं वह्निं दावाग्निं पपौ । गोपान् गोपालकान् गवां गणो गोगणस्तं चापात् अरक्षत् ।।५७।।

**कृष्णं कदाचिदतिदूरगतं वयस्या ऊचुः [१]क्षुधाऽर्दिततरा वयमित्युदारम् ।**
**सोऽप्याह सत्रमिह विप्रगणाश्चरन्ति तान् याचतेति परिपूर्णसमस्तकामः ।।५८।।**

**व्यासतीर्थीया–** गोपैर्याचितदाने असामर्थ्यं न शङ्क्यमिति भावेनोक्तम्– **परिपूर्णसमस्तकाम इति** ।।५८-५९।।

**वेदाङ्गतीर्थीया–** उदारं प्रार्थितवरदानसमर्थम् ।।५८।।

**वरदराजीया–** वयं अतिशयेन क्षुधार्दिततराः इत्यवदन् । उदारं कृष्णं इति सम्बन्धः । सोऽपि कृष्णः । तान् विप्रगणान् ।।५८।।

**अनन्तभट्टीया–** चरन्ति कुर्वन्ति ।।५९।।

**जनार्दनीया–** वयस्याः वयं क्षुधर्दिततराः अतिशयेन पीडिताः । 'क्षुधार्दिततरा' इति पाठे क्षुधेति पदच्छेदः । इति उदारं भक्ताभीष्टदम् । 'उदारो दातृमहतोः' इत्यभिधानम् । कृष्णं ऊचुः । परिपूर्णाः समस्तकामा यस्य । तादृशोऽपि स कृष्णः इह वने विप्रगणाः सत्रं बहुकर्तृकयागं चरन्ति कुर्वन्ति । तान् विप्रान् याचत अन्नयाचनं कुरुतेत्याह ।।५८।।

---

१. 'क्षुधार्दिततरा' इति जनार्दनीये पाठान्तरम् ।

**चट्टि–** कदाचिद् वयस्याः समानवयस्काः वयं क्षुधा अर्दिततराः अतिशयेन पीडिताः इत्यतिदूरगम् उदारं भक्ताभीष्टप्रदं श्रीकृष्णं ऊचुः । परिपूर्णाः समस्तकामाः यस्य तादृशोऽपि श्रीकृष्णः इह वने विप्रगणैः सत्रं बहुकर्तृकयागं चरन्ति कुर्वन्ति तान् विप्रगणान् याचत अन्नयाचनां कुरुतेत्याह ।।५८।।

**तान् प्राप्य काममनवाप्य पुनश्च गोपाः**
**कृष्णं समापुरथ तानवदत्स देवः ।**
**[१]पत्नीः समर्थयत मद्वचनादिति स्म**
**चक्रुश्च ते तदपि ता भगवन्तमापुः ।।५९।।**

**वेदाङ्गतीर्थीया–** मद्वचनात् पत्नीः समर्थयतेति कृष्णेन प्रेषिता वयमागता इति ब्रूतेति मद्वचनात् तत्पत्नी प्रार्थनमपि ।।५९।।

**वरदराजीया–** काममाकाङ्क्षितं अनवाप्य तान् गोपान् मम वचनात् समर्थयत याचतेत्यर्थः । ते गोपाः तदपि चक्रुः । पत्नीः प्रार्थितवन्त इत्यर्थः । ता पत्न्यः ।।५९।।

**अनन्तभट्टीया–** समर्थयत प्रार्थयध्वम् । इत्यवदन् ।।५९।।

**जनार्दनीया–** गोपाः तान् विप्रान् आप्य, कामं अभीष्टं अनवाप्य कृष्णं समापुः । अथ देवः स कृष्णः पुनस्तान् गोपान् अवदत् । किमिति? मद्वचनात् मदागमनाख्यानरूपवचनात् पत्नीः विप्रपत्नीः समर्थयत, प्रार्थयध्वमित्यवददिति सम्बन्धः । ते गोपाः तत्पत्नीनामन्नयाचनं चक्रुः स्म । ता अपि स्त्रिय अपि भगवन्तं कृष्णं आपुः ।।५९।।

**भावचन्द्रिका–** मद्वचनात् मम वचनकथनात् । सरामः कृष्णो अन्नार्थीति ।।६०।।

**चट्टि–** गोपास्तान् विप्रान् प्राप्य कामं अभीष्टं अनवाप्य पुनश्च श्रीकृष्णं समापुः । अथ सः देवः श्रीकृष्णः पुनस्तान् गोपान् अवदत् । किमिति । मद्वचनात् मदागमनाख्यानरूपवचनात् पत्नीः विप्रपत्नीः समर्थयत याचतेत्यवदत् इति सम्बन्धः । ते गोपाः तदपि विप्रपत्नीनां अन्नं याचनमपि चक्रुः स्म । ताः विप्रपत्न्यः भगवन्तं श्रीकृष्णं आपुः ।।५९।।

**ताः [२]षड्विधान्नपरिपूर्णकराः समेताः प्राप्ता विसृज्य पतिपुत्रसमस्तबन्धून् ।**
**आत्मार्चनैकपरमा विससर्ज देहं एका पतिप्रविधुता पदमाप विष्णोः ।।६०।।**

---

१. 'मां ज्ञापयत पत्नीभ्यः ससङ्कर्षणमागतम् । दास्यन्ति काममन्नं वः स्निग्धा मय्युषिता धिया ।।' इति भागवते १०.२१.१४

२. 'चतुर्विधं बहुगुणमन्नमादाय भाजनैः । अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ।।' इति भागवते १०.२१.१९

**व्यासतीर्थीया—** षड्विधरसवदन्नपूर्णकराः ।।६०।।

**वेदाङ्गतीर्थीया—** षड्विधान्नपरिपूर्णकराः षड्विधरसवदन्नपूर्णककराः । विससर्ज प्रेषयामास । पतिप्रविधृता न याहीति पत्या निरुद्धा ।।६०-६१।।

**वादिराजीया—** ताः षड्विधान्नपरिपूर्णकरा इत्यत्र षड्रसोपेततया अन्नस्य षाड्विध्यं ज्ञेयम् । विप्रपत्नीनामागमनप्रकारं गमनप्रकारं चोक्त्वा प्रागागमनसमय एव जातां काञ्चित्कथामाह— **एका पतिप्रविधृतेति** ।। पत्या आकर्षणेन विरुद्धतया धृता न गच्छेति धृतेति यावत् । अन्यथा 'पतयो नाभ्यसूयेरन्नित्यं भ्रातृसुतादयः । लोकाश्च वो मयोपेता देवा अप्यनुमन्वते ।।' इति भागवतोक्तकृष्ण-वचनस्यासत्यता स्यात् । भगवन्तं दृष्ट्वा गतासु कस्याश्चिद्वर्जने 'तत्रैका विधृता तत्र भगवन्तं यथाश्रुतम् । हृदोपगुह्य विजहौ देहं कर्मानुबन्धनम् ।।' इति श्लोके यथाशश्रुतमिति न स्यात् । किन्तु यथादृष्टमित्य-वक्ष्यदिति ज्ञेयम् ।।६०-६२।।

**वरदराजीया—** ताः विप्रपत्नीः । विससर्ज परावृत्य प्रेषितवान् । द्वितीयाबहुवचनान्तानि तासां विशेषणानि । पतिपुत्रान् समस्तबन्धून् विसृज्य प्राप्ता इति सम्बन्धः । अतिशयेन आत्मार्चने एकं मुख्यं परं उत्तमं यासां तास्तथा । तासामागतानां मध्ये एका विप्रपत्नी पतिप्रविधृता पत्या विसृष्टेति यावत् । पत्या विधृता न स्वीकृतेत्यक्षरार्थः । विशब्दस्य निषेधार्थत्वप्रसिद्धेरिति द्रष्टव्यम् । विष्णोः पदं आप तद्देहं त्यक्त्वेति शेषः ।।६०।।

**अनन्तभट्टीया—** समेताः मिलिताः । ...पायसयुक्तान्नपरिपूर्णकराः । आत्मनः परमात्मनः अर्चनमेव एकं मुख्यं परमश्रेष्ठं यासां ताः...। पत्या प्रविधृता पतिगवचनबद्धेत्यर्थः । विष्णोः पदमाप । शरीरं तत्याजेत्यर्थः ।।६०।।

**जनार्दनीया—** कृष्णः षड्विधान्नेन षड्विधरसवदन्नेन, परिपूर्णाः कराः यासां ताः तथा ताः । समेताः मिलिताः पत्यादीन् विसृज्य विहाय प्राप्ताः स्वात्मानं प्रत्यागताः । आत्मार्चने एकं केवलं परमं मुख्यं तात्पर्यं यासां तास्तथा ताः । विप्रपत्नीः विससर्ज सत्रं प्रति प्रेषयामासेत्यर्थः । तास्विति शेषः । पत्या स्वपतिना प्रविधृता मा गच्छेति प्रवारिता एका विप्रपत्नी योगेन तनुं त्यक्त्वा विष्णोः पदं स्थानं आप ।।६०।।

**ताम्रपर्णीया—** ।। **षड्विधान्नपरिपूर्णेति** ।। षड्विधरसवदन्नपूर्णकरा इत्यर्थः । पतिप्रविधृता प्रकर्षेण विरुद्धतया धृता निगृहितेति यावत् विसृष्टेति वा ।।६०-६३।।

**अतिविशद—** एका पतिप्रविधृता पदमाप विष्णोरित्यत्र पत्या प्रविधृता 'कृष्णं प्रति न गच्छ । यदि गच्छसि तर्हि त्वां हनिष्ये' इति हस्ते प्रगृह्य निवारितेत्यर्थः । पत्या प्रविधृता त्यक्ता इति वा ।।

**भारतश्री–** तदानीं षड्विधान्नं भुक्त्वा ताः विप्रपत्न्यः विससर्ज इत्यन्वयः । तत्रैका पतिप्रविधृता विष्णोः पदमाप । शरीरं त्यक्त्वा विष्णुपदमेवापेत्यर्थः । अयं विशेषः भागवतादवगन्तव्यः ।। ।।६०-६६।।

**चर्ट्टि–** श्रीकृष्णः षड्विधान्नेन षड्विधरसवदन्नेन परिपूर्णः कराः यासां तास्तथा ताः समेताः मिलिताः पतिपुत्रान् समस्तबन्धून् च विसृज्य प्राप्ताः । स्वात्मानं प्रत्यागताः आत्मार्चने एकं परमं मुख्यतात्पर्यं यासां तास्तथा ताः विप्रपत्नीः विससर्ज । सत्रं प्रति प्रेर्षयामासेत्यर्थः । विप्रपत्नीनामागमनं गमनप्रकारं चोक्त्वा काश्चित् कथामाह– **एका पतिप्रविधृतेति** ।। पत्या स्वपतिना प्रकर्षेण निरुद्धतया धृता न गच्छेति धृतेति यावत् । अन्यथा 'पतयो नाभ्यसूयेरन् नित्यं भ्रातृसुतादयः । लोकाश्च वो मयोपेताः देवा अप्यनुमन्वते ।।' इति भागवतोक्तश्रीकृष्णवाक्यस्य असत्यता स्यात् । भगवन्तं दृष्ट्वा गतासु कस्याश्चित् विसर्जने 'तत्रैका विधृता भर्तुः भगवन्तं यथाश्रुतम् । हृदोपगूह्य विजहौ देहं कर्मानुबन्धनम् ।।' इति श्लोके यथाश्रुतमिति न स्यात् । किन्तु यथादृष्टं इत्यवक्षदिति ज्ञेयम् । एवं पत्या मा गच्छेति प्रतिवारिता एका विप्रपत्नी विष्णोः पदं स्थानमाप । योगेन शरीरं त्यक्त्वेति शेषः ।।६०।।

**भुक्त्वाऽथ गोपसहितो भगवांस्तदन्नं**
**रेमे च गोकुलमवाप्य समस्तनाथः ।**
**आज्ञातिलङ्घनकृतेः स्वकृतापराधात्**
**[१]पश्चात् सुतप्तमनसोऽप्यभवन् स्म विप्राः ।।६१।।**

**व्यासतीर्थीया–** आज्ञातिलङ्घनकृतेः स्वकृतापराधादिति ।।६१।।

**वरदराजीया–** तदन्नं ताभिः दत्तमन्नम् । कृष्णस्य आज्ञाया अतिलङ्घनकृते हेतोः स्वकृतापराधात् पश्चात्तापयुक्तमनसो अभवन् ।।६१।।

**अनन्तभट्टीया–** गोकुलमवाप्य रेमे । आज्ञातिलङ्घनकृते आज्ञातिलङ्घनकारणाद्रूपात् तप्तमनसः ।।

**जनार्दनीया–** विप्राः सत्रकारिणो विप्राः । आज्ञायाः अतिलङ्घनं अतिक्रमणं तल्लक्षणा कृतिः कर्म यस्य स तथा तस्मात् । स्वैः कृतादपराधात् पश्चात् सुतप्तमनसः अनुतप्तमनसोऽभवन् ।।६१।।

**चर्ट्टि–** समस्तनाथः भगवान् श्रीकृष्णः गोपैः सहितः सन् तदन्नं भुक्त्वा अथ गोकुलं चावाप्य रेमे । विप्रा अपि सत्रकारिणो विप्राश्चाज्ञायाः श्रीकृष्णस्य आज्ञाया अतिलङ्घनं अतिक्रमणं तल्लक्षणा कृतिः कर्म यस्य स तथा तस्मात्, तैः कृतापराधात् पश्चात् सुतप्तमनसः अनुतप्तमनसः अभवन् ।।६१।।

---

१. 'अथानुस्मृत्य विप्रास्ते अन्वतप्यन् कृतागसः । यद् विश्वेश्वरयोः याञ्चामहनन् नृविडम्बयोः' इति भागवते १०.२१.३७

**कृष्णोऽथ वीक्ष्य पुरुहूतमहप्रयत्नं गोपान् न्यवारयदविस्मरणाय तस्य[1] ।**
**मा मानुषोऽयमिति मामवगच्छतात्स इत्यव्ययोऽस्य विदधे महभङ्गमीशः[2] ॥**

**व्यासतीर्थीया–** समानाधिकरणे अविस्मरणायेत्युक्तं विवृणोति– **मेति** ॥६२॥

**वेदाङ्गतीर्थीया–** तस्य इन्द्रस्य । अविस्मरणाय स्वस्येति शेषः ॥६२॥

**वरदराजीया–** पुरुहूतमहस्य इन्द्रोत्सवस्य प्रयत्नमुद्योगं गोपानां वीक्ष्य गोपान् न्यवारयत् । इन्द्रोत्सवो न कर्तव्येति निवारयामासेत्यर्थः । कस्मै प्रयोजनाय तस्येन्द्रस्य अविस्मरणाय स्वात्मविस्मृत्यभावाय स्वात्मानं ज्ञापयितुं महभङ्गं चकारेति भावः । 'अविस्मरणाय' इत्युक्तं विवृणोति– **मेति** ॥ मा मानुषोऽयमिति मां अवगच्छतात् स इन्द्र इति बुद्ध्या इन्द्रस्य महभङ्गं विदधे ॥६२॥

**अनन्तभट्टीया–** महः उत्सवः । तस्येन्द्रस्य अविस्मरणाय स्वस्य विस्मरणाभावाय । मा मानुषोऽयमिति मामवगच्छतात् गोपानाम् ॥६२॥

**जनार्दनीया–** अथ कृष्णः पुरुहूतस्य पुरन्दरस्य महस्य पूजायाः प्रयत्नं उद्योगं वीक्ष्य, तस्येन्द्रस्य अविस्मरणाय स्वावतारस्य विस्मृत्यभावार्थे गोपान् न्यवारयत् । इन्द्रपूजां मा कुरुध्वं इति न्यवारयत् । उक्तमेवार्थं विशदयति– **स इति** ॥ स इन्द्रः मां 'अयं कृष्णः मानुषः मनुष्य इति मा अवगच्छतात् जानातु' इति अव्ययः क्षयरहितः कृष्णः अस्येन्द्रस्य महभङ्गं पूजापहारं विदधे । अत एवेशः ॥६२॥

**चट्टि–** अथ श्रीकृष्णः पुरुहूतमहस्य इन्द्रोत्सवस्य प्रयत्नमुद्योगं वीक्ष्य तस्येन्द्रस्य अविस्मरणाय स्वावतारस्य विस्मृत्यभावार्थं गोपान् न्यवारयत् । इन्द्रोत्सवं मा कुरुध्वमिति न्यवारयत् । अविस्मरणायेत्युक्तं विवृणोति– **मेति** ॥ सः इन्द्रः मामायं श्रीकृष्णः मानुषः मनुष्यः इति मावगच्छतात् न जानात्विति अव्ययः नाशरहितः ईशः श्रीकृष्णः अस्येन्द्रस्य महभङ्गं उत्सवापहारं विदधे ॥६२॥

**[3]गोपांश्च तान् गिरिमहोऽस्मदुरुस्वधर्म इत्युक्तिसच्छलत [4]आत्ममहेऽवतार्य ।**
**भूत्वाऽतिविस्तृतनुर्बुभुजे[5] बलिं स नानाविधान्नरसपानगुणैः सहैव ॥६३॥**

---

१. 'मया तेऽकारि भगवन् मखभङ्गोऽनुगृह्णता । मदनुस्मृतये नित्यं मत्तस्येन्द्रिश्रिया भृशम् ॥' इति भागवते.१०.२५.१५
२. 'तदभिज्ञोऽपि भगवान् सर्वात्मा सर्वदर्शनः । प्रश्रयावनतोऽपृच्छद् वृद्धान् नन्दपुरोगमान् ॥' इति भागवते १०.२२.२
३. 'गोपांश्च तान् गिरिवरस्य विधीयतां स यागो यथावदिति ह' इति जनार्दनीये पाठान्तरम् ।
४. 'तस्मै नमो व्रजजनैः स चक्रे ह्यात्मनाऽत्मने । अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात् ॥' इति भागवते १०.२२.३६
५. 'कृष्णस्त्वन्यतमं रूपं गोपविस्रम्भणं गतः । शैलोऽस्मीति ब्रुवन् भूरि बलिमादद् बृहद्वपुः ॥' इति भागवते १०.२२.३५

**व्यासतीर्थीया–** गिरिमहः गिरिपूजा अस्मत्स्वधर्मः गिरिमाश्रित्य जीविनां अस्माकं महान् विहितः धर्मः इत्युक्तिसच्छलतः । आत्ममहे स्वपूजायाम् अवतार्य अवतारयित्वा ।।६३।।

**वेदाङ्गतीर्थीया–** गिरिमहः गिरिपूजा अस्मदुरुस्वधर्मः गिरिमाश्रित्य जीवतामस्माकं महान् विहितः धर्मः । इत्युक्तिसच्छलतः एवंरूपवचनव्याजात् आत्ममहे स्वपूजायां अवतार्य प्रवर्तयित्वा सर्वेषां मदाश्रयत्वात् मत्पूजैव सर्वेषां परमधर्मः इति स्पष्टमनुक्त्वा सर्वगिरणात् स्वस्यैव मुख्यतो गिरिनामत्वमभिप्रेत्य गिरिपूजा स्वधर्म इत्युक्तिश्छलमिति भावः ।।६३।।

**वादिराजीया–** इत्युक्तिसच्छलत इत्यत्र छलेन गिरिपूजा कार्येति छद्मना सहिता उक्तिः उक्तिसच्छलमिति विशेषणस्योपरि निपातो ज्ञेयः । 'कपटोऽस्त्री व्याजदम्भोऽनृतं छद्म छलः पुमान्' इति ह्यनुशासनम् । यद्वा उक्तौ सत्समीचीनं छलं व्यर्थकपदप्रयोगः । तस्मात् गिरिशब्दो हि गिरति नद्यादिकमिति पर्वतमपि वक्ति । तत्रानभिप्रेतार्थग्रहणे समीचीनच्छलं भवति । इदं च गिरिशब्देन 'नामानि सर्वाणि' इत्यादि श्रुतेः 'अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत' इति श्रुतेश्च वाच्यतया पूज्यतया च द्वेधाऽपि स्वात्मग्रहणमुचिततरमिति भावः । अतो लीलयोक्तमपि भगवद्वचनं नानृतमिति ज्ञेयम् । अत एव 'आत्ममहेऽवतार्य' इत्युक्तम् ।।६३।।

**सत्याभिनवतीर्थीया–** तत्रैव गोपांश्च तान् गिरिमहोऽस्मदुरुस्वधर्म...इत्यस्ति । तस्यार्थः । अत्र सच्छलत इति छद्मवाचकच्छलशब्देन छद्मकार्यमिथ्याज्ञानं गृह्यते । सः कृष्णः गिरिमहः गिरिपूजा अस्मदुरुस्वधर्मः अस्माकं उत्कृष्टस्वधर्म इत्युक्त्या जन्यः सच्छलः सन्मिथ्याज्ञानं तस्मात् तान् गोपान् आत्ममहे च आत्मपूजायामेव अवतार्य प्रवर्तयित्वेति । गिरिपूजा कार्या इति मिथ्याज्ञानस्यापि गिर्यन्तर्गतात्मपूजाद्वारा अभीष्टहेतुत्वात् समीचीनत्वमिति ज्ञापयितुं सदित्युक्तम् ।।६३।।

**मधुसूदनीया–** ।। **गोपाश्च तानिति** ।। अतिविस्तृततनुः गिरिरूपेणातिविस्तृततनुर्बभूवेत्यर्थः । तथाचोक्तम्– 'गिरिमूर्धनि कृष्णोऽपि शैलोऽहमिति मूर्तिमान् । बुभुजेऽहं बहुतरं गोपवर्याहृतं द्विज ।।' इति विष्णुपुराणे [५.११.४७]। 'मांसं च मायया कृष्णो गिरिर्भूत्वा समश्नुते । सुतृप्तोऽस्मीति दिव्येन रूपेण प्रजहार वै ।।' इति हरिवंशे च [प.१७.२१] । बुभुजे बलिं तदनन्तरं अन्तर्धानं च ययाविति बोध्यम् । 'अन्तर्धानं जगामाशु तेन देहेन सोऽचल' इत्यादि च [हरि.२.१७.३८] ।।६३-६९।।

**वरदराजीया–** स यागो य इन्द्रार्थं क्रियते स गिरिवरस्यार्थं यथावत् विधीयतां इत्युक्त्वा आत्मनः स्वस्य महे पूजायां अवतार्य अभिमुखीकृत्य अतिविस्तृततनुः स्थूलदेहो भूत्वा बलिं बुभुजे ।।६३।।

**अनन्तभट्टीया–** आत्ममहेऽवतार्य स्थापयित्वा । तदुक्तं हरिवंशे–

'यजनान्ते तदन्नं तु तत्पयो दधि चोत्तमम् । मांसञ्च मायया कृष्णो गिरिर्भूत्वा समश्नुते ।।

सुतृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै । तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम् ।।
गिरिमूर्ध्निस्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः । भगवानपि तेनैव रूपेणाच्छादितः प्रभुः ।।
सहितैः प्रणतो गोपैर्ददर्शात्मानमात्मना । तमूचुर्विस्मिता गोपा देवं गिरिवरे स्थितम् ।।
भगवंस्त्वद्वशे युक्ता दासाः किं कुर्म किङ्कराः । स उवाच ततो गोपान् गिरिप्रभवया गिरा ।।
अद्यप्रभृति याज्योऽहं गोषु यद्यस्ति वो दया । अहं वः प्रथमो देवः सर्वकामकरः शुभः ।।
मम प्रसादाच्च गवां अयुतान्येव भोक्ष्यथ । शिवश्च वो भविष्यामि मद्भक्तानां वने वने ।।
रंस्येऽहं सह युष्माभिः यथा दिविगतस्तथा ।।' इति [२.१७.२१-२९]
रथाङ्गं चक्रम् । उरुशब्दो वरविशेषणम् ।।६४।।

**जनार्दनीया–** महभङ्गप्रकारमाह– **गोपानिति** ।। स कृष्णः । गिरिमहः गिरिपूजा अस्माकं गिरिमाश्रित्य जीवतामस्माकमित्यर्थः । उरुः श्रेष्ठः स्वधर्मः स्वोचितधर्मः । इत्युक्तिसच्छलतः एवंविधवचनसद्व्याजेन तानिन्द्रयागोद्युक्तान् गोपान् आत्ममहे स्वपूजायाम् अवतार्य प्रवर्त्य, अतिविस्तृततनुः स्वयं अतिविस्तीर्णदेहो भूत्वा, नानाविधैः बहुप्रकारैः अन्नरसपानान्येव गुणाः अङ्गानि तैः सहैव बलिं बुभुजे । 'गोपांश्च तान् गिरिवरस्य विधीयतां स यागो यथावदिति ह' इति पाठे, स यागः इन्द्रार्थं क्रियमाणो यागः गिरिवरस्य अर्थे यथावदुक्तप्रकारेण विधीयतां इत्युक्त्वेति शेषः । तान् गोपान् ।।६३।।

**चट्टि–** महभङ्गप्रकारमाह– **गोपानिति** ।। सः श्रीकृष्णः गिरिमहः गिरिपूजा अस्मदुरुस्वधर्मः अस्माकं गिरिमाश्रित्य जीवतामस्माकमित्यर्थः । उरुः श्रेष्ठः स्वधर्मः स्वोचितधर्म इति उक्तिसच्छलतः एवं विधवचनसद्व्याजेन तान् इन्द्रोत्सवोद्युक्तान् गोपान् आत्ममहे स्वपूजायां अवतार्य प्रवर्तयित्वा अतिविस्मृततनुः गिरिरूपेणातिविस्तीर्णदेहो भूत्वा । तथाचोक्तम्– 'गिरिमूर्धनि कृष्णो वै शैलोऽहमिति मूर्तिमान् । बुभुजेऽन्नं बहुतरं गोपवर्याहृतं द्विज ।।' इति विष्णुपुराणे । 'मांसं च मायया कृष्णो गिरिर्भूत्वा समश्नुते । सुतृप्तोऽस्मीति दिव्येन रूपेण प्रजहार वै ।।' इति हरिवंशे च । नानाविधैश्च बहुप्रकारैरन्नरसपानानां गुणैः सहैव बलिं बुभुजे । 'गोपांश्च तान् गिरिवरस्य विधीयतां स यागो यथावदिति ह' इति पाठे सः यागः इन्द्रार्थं क्रियमाणो यागः गिरिवरस्यार्थे यथावदुक्तप्रकारेण विधीयतामित्युक्त्वेति शेषः । तान् गोपान् आत्ममहे अवतार्य बलिं बुभुजे इत्यन्वयः ।।६३।।

**इन्द्रोऽथ विस्मृतरथाङ्गधरावतारो मेघान् समादिशदुरूदकपूगवृष्ट्यै ।**
**ते प्रेरिताः सकलगोकुलनाशनाय धारा वितेरुरुरुनागकरप्रकाराः[१] ।।६४।।**

**व्यासतीर्थीया–** वितेरुरकुर्वन् । सप्तरात्राणां वृष्टिं विवृणोति– **त इति** ।।६४-६५।।

१. 'स्थूणास्थूलावर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः । जलौघैः प्लाव्यमाना भूः नादृश्यत नतोन्नतम् ।।' इति भागवते १०.२३.१०

**व्यासतीर्थीया–** गिरिमहः गिरिपूजा अस्मत्स्वधर्मः गिरिमाश्रित्य जीविनां अस्माकं महान् विहितः धर्मः इत्युक्तिसच्छलतः । आत्ममहे स्वपूजायाम् अवतार्य अवतारयित्वा ॥६३॥

**वेदाङ्गतीर्थीया–** गिरिमहः गिरिपूजा अस्मदुरुस्वधर्मः गिरिमाश्रित्य जीवतामस्माकं महान् विहितः धर्मः । इत्युक्तिसच्छलतः एवंरूपवचनव्याजात् आत्ममहे स्वपूजायां अवतार्य प्रवर्तयित्वा सर्वेषां मदाश्रयत्वात् मत्पूजैव सर्वेषां परमधर्मः इति स्पष्टमनुक्त्वा सर्वगिरणात् स्वस्यैव मुख्यतो गिरिनामत्वमभिप्रेत्य गिरिपूजा स्वधर्म इत्युक्तिश्छलमिति भावः ॥६३॥

**वादिराजीया–** इत्युक्तिसच्छलत इत्यत्र छलेन गिरिपूजा कार्येति छद्मना सहिता उक्तिः उक्तिसच्छलमिति विशेषणस्योपरि निपातो ज्ञेयः । 'कपटोऽस्त्री व्याजदम्भोऽनृतं छद्म छलः पुमान्' इति ह्यनुशासनम् । यद्वा उक्तौ सत्समीचीनं छलं द्व्यर्थकपदप्रयोगः । तस्मात् गिरिशब्दो हि गिरति नद्यादिकमिति पर्वतमपि वक्ति । तत्रानभिप्रेतार्थग्रहणे समीचीनच्छलं भवति । इदं च गिरिशब्देन 'नामानि सर्वाणि' इत्यादि श्रुतेः 'अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत' इति श्रुतेश्च वाच्यतया पूज्यतया च द्वेधाऽपि स्वात्मग्रहणमुचिततरमिति भावः । अतो लीलयोक्तमपि भगवद्वचनं नानृतमिति ज्ञेयम् । अत एव 'आत्ममहेऽवतार्य' इत्युक्तम् ॥६३॥

**सत्याभिनवतीर्थीया–** तत्रैव गोपांश्च तान् गिरिमहोऽस्मदुरुस्वधर्म...इत्यस्ति । तस्यार्थः । अत्र सच्छलत इति छद्मवाचकच्छलशब्देन छद्मकार्यमिथ्याज्ञानं गृह्यते । सः कृष्णः गिरिमहः गिरिपूजा अस्मदुरुस्वधर्मः अस्माकं उत्कृष्टस्वधर्म इत्युक्त्या जन्यः सच्छलः सन्मिथ्याज्ञानं तस्मात् तान् गोपान् आत्ममहे च आत्मपूजायामेव अवतार्य प्रवर्तयित्वेति । गिरिपूजा कार्या इति मिथ्याज्ञानस्यापि गिर्यन्तर्गतात्मपूजाद्वारा अभीष्टहेतुत्वात् समीचीनत्वमिति ज्ञापयितुं सदित्युक्तम् ॥६३॥

**मधुसूदनीया–** ॥ **गोपाश्च तानिति** ॥ अतिविस्तृततनुः गिरिरूपेणातिविस्तृततनुर्बभूवेत्यर्थः । तथाचोक्तम्– 'गिरिमूर्धनि कृष्णोऽपि शैलोऽहमिति मूर्तिमान् । बुभुजेऽहं बहुतरं गोपवर्याहृतं द्विज ॥' इति विष्णुपुराणे [५.११.४७]। 'मांसं च मायया कृष्णो गिरिर्भूत्वा समश्नुते । सुतृप्तोऽस्मीति दिव्येन रूपेण प्रजहार वै ॥' इति हरिवंशे च [प.१७.२१] । बुभुजे बलिं तदनन्तरं अन्तर्धानं च ययाविति बोध्यम् । 'अन्तर्धानं जगामाशु तेन देहेन सोऽचल' इत्यादि च [हरि.२.१७.३८] ॥६३-६९॥

**वरदराजीया–** स यागो य इन्द्रार्थं क्रियते स गिरिवरस्यार्थं यथावत् विधीयतां इत्युक्त्वा आत्मनः स्वस्य महे पूजायां अवतार्य अभिमुखीकृत्य अतिविस्तृततनुः स्थूलदेहो भूत्वा बलिं बुभुजे ॥६३॥

**अनन्तभट्टीया–** आत्ममहेऽवतार्य स्थापयित्वा । तदुक्तं हरिवंशे–

'यजनान्ते तदन्नं तु तत्पयो दधि चोत्तमम् । मांसञ्च मायया कृष्णो गिरिर्भूत्वा समश्नुते ॥

सुतृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै । तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम् ।।
गिरिमूर्ध्निस्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः । भगवानपि तेनैव रूपेणाच्छादितः प्रभुः ।।
सहितैः प्रणतो गोपैर्ददर्शात्मानमात्मना । तमूचुर्विस्मिता गोपा देवं गिरिवरे स्थितम् ।।
भगवंस्त्वद्वशे युक्ता दासाः किं कुर्म किङ्कराः । स उवाच ततो गोपान् गिरिप्रभवया गिरा ।।
अद्यप्रभृति याज्योऽहं गोषु यद्यस्ति वो दया । अहं वः प्रथमो देवः सर्वकामकरः शुभः ।।
मम प्रसादाच्च गवां अयुतान्येव भोक्ष्यथ । शिवश्च वो भविष्यामि मद्भक्तानां वने वने ।।
रंस्येऽहं सह युष्माभिः यथा दिविगतस्तथा ।।' इति [२.१७.२१-२९]
रथाङ्गं चक्रम् । उरुशब्दो वरविशेषणम् ।।६४।।

**जनार्दनीया–** महभङ्गप्रकारमाह– **गोपानिति** ।। स कृष्णः । गिरिमहः गिरिपूजा अस्माकं गिरिमाश्रित्य जीवतामस्माकमित्यर्थः । उरुः श्रेष्ठः स्वधर्मः स्वोचितधर्मः । इत्युक्तिसच्छलतः एवंविधवचनसद्व्याजेन तानिन्द्रयागोद्युक्तान् गोपान् आत्ममहे स्वपूजायाम् अवतार्य प्रवर्त्य, अतिविस्तृततनुः स्वयं अतिविस्तीर्णदेहो भूत्वा, नानाविधैः वहुप्रकारैः अन्नरसपानान्येव गुणाः अङ्गानि तैः सहैव वलिं बुभुजे । 'गोपांश्च तान् गिरिवरस्य विधीयतां स यागो यथावदिति ह' इति पाठे, स यागः इन्द्रार्थं क्रियमाणो यागः गिरिवरस्य अर्थे यथावदुक्तप्रकारेण विधीयतां इत्युक्त्वेति शेषः । तान् गोपान् ।।६३।।

**चट्टि–** महभङ्गप्रकारमाह– **गोपानिति** ।। सः श्रीकृष्णः गिरिमहः गिरिपूजा अस्मदुरुस्वधर्मः अस्माकं गिरिमाश्रित्य जीवतामस्माकमित्यर्थः । उरुः श्रेष्ठः स्वधर्मः स्वोचितधर्म इति उक्तिसच्छलतः एवं विधवचनसद्व्याजेन तान् इन्द्रोत्सवोद्युक्तान् गोपान् आत्ममहे स्वपूजायां अवतार्य प्रवर्तयित्वा अतिविस्मृततनुः गिरिरूपेणातिविस्तीर्णदेहो भूत्वा । तथाचोक्तम्– 'गिरिमूर्धनि कृष्णो वै शैलोऽहमिति मूर्तिमान् । बुभुजेऽन्नं बहुतरं गोपवर्याहृतं द्विज ।।' इति विष्णुपुराणे । 'मांसं च मायया कृष्णो गिरिर्भूत्वा समश्नुते । सुतृप्तोऽस्मीति दिव्येन रूपेण प्रजहार वै ।।' इति हरिवंशे च । नानाविधैश्च बहुप्रकारैरन्नरसपानानां गुणैः सहैव वलिं बुभुजे । 'गोपांश्च तान् गिरिवरस्य विधीयतां स यागो यथावदिति ह' इति पाठे सः यागः इन्द्रार्थं क्रियमाणो यागः गिरिवरस्यार्थे यथावदुक्तप्रकारेण विधीयतामित्युक्त्वेति शेषः । तान् गोपान् आत्ममहे अवतार्य बलिं बुभुजे इत्यन्वयः ।।६३।।

**इन्द्रोऽथ विस्मृतरथाङ्गधरावतारो मेघान् समादिशदुरूदकपूगवृष्ट्यै ।**
**ते प्रेरिताः सकलगोकुलनाशनाय धारा वितेरुरुरुनागकरप्रकाराः[१] ।।६४।।**

**व्यासतीर्थीया–** वितेरुरकुर्वन् । सप्तरात्राणां वृष्टिं विवृणोति– **त इति** ।।६४-६५।।

१. 'स्थूणास्थूलावर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः । जलौघैः प्लाव्यमाना भूः नादृश्यत नतोन्नतम् ।।' इति भागवते १०.२३.१०

**वेदाङ्गतीर्थीया–** ते [वितेरुः] ववृषुरिति यावत् ।।६४।।

**वादिराजीया–** विस्मृतविष्ण्ववतार इत्यनुक्त्वा रथाङ्गधरावतार इति वदता बालरूपकृष्णकरे तदानीं चक्रादर्शनं च विस्मरणबीजमिति सूचितम् । धारा वितेरुरित्यत्र वितेरुः वितरणं चक्रुः । यथेष्टं ददुरित्यर्थः ।।६४-६६।।

**वरदराजीया–** अथ महभङ्गानन्तरं विस्मृतः रथाङ्गधरस्य चक्रपाणेरवतारो येन स इन्द्रो मेघान् कालमेघान् समादिशत् । कस्मै प्रयोजनाय उरूदकपूर्गस्य वृष्ट्यै वर्षणाय ते मेघाः, उरूणां स्थूलानां नागानां गजानां करप्रकाराः शुण्डादण्डवद्विद्यमाना धारा वितेरुः ववर्षुः ।।६४।।

**जनार्दनीया–** अथ पूजासमास्यनन्तरं विस्मृतः रथाङ्गधरस्य चक्रधरस्य कृष्णस्य अवतारो येन स तथा । इन्द्रः उरूदकपूगस्य उत्कृष्टजलसमुदायस्य वृष्ट्यै वर्षणार्थम् । ते मेघाः, उरुनागानां श्रेष्ठहस्तीनां करप्रकाराः शुण्डा दण्डवद् विद्यमानाः धाराः जलधाराः वितेरुः विस्तारितवन्तः । ववृषुरिति यावत् । 'स्यान्नागौ वारणपन्नगौ' इत्यनेकध्वनिपदमञ्जर्याम् ।।६४।।

**ताम्रपर्णीया–** वितेरुः वितरणं चक्रुः ददुरिति यावत् ।।६४-६६।।

**चट्टि–** अथ तदनन्तरं पूजासमास्यनन्तरं अन्तर्धानं च ययाविति बोध्यम् । तदुक्तम्– 'अन्तर्धानं जगामाशु तेन सोऽचलः' इत्यादि च । विस्मृतः रथाङ्गधरस्य चक्रधरस्य श्रीकृष्णस्य अवतारो येन स तथा । इन्द्रः उरूदकपूगस्य उत्कृष्टजलसमूहस्य वृष्ट्यै वर्षणार्थं मेघान् समादिशत् । ते मेघाः सकलगोकुलनाशनाय इन्द्रेण प्रेरिताः सन्तः उरुनागानां श्रेष्ठगजानां करप्रकाराः शुण्डादण्डवद् विद्यमानाः धाराः जलधाराः वितेरुः ददुः । ववृषुरिति यावत् । 'नागो वृक्षविशेषे स्यात् नागो वारणपन्नगौ' इत्यनेकध्वनिपदमञ्जर्याम् ।।६४।।

**ताभिर्निपीडितमुदीक्ष्य स कञ्जनाभः**
**सर्वं व्रजं गिरिवरं प्रसभं दधार ।**
**वामेन [१]कञ्जदलकोमलपाणिनैव**
**तत्राखिलाः प्रविविशुः पशुपाः सगोभिः ।।६५।।**

**वेदाङ्गतीर्थीया–** तत्र उद्धृतपर्वताधोभागे ।।६५।।

---

१. 'इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् । दधार लीलया कृष्णः छत्राकमिव बालकः ।।' इति भागवते १०.२३.१९
'दोर्भ्यामुत्पाटयामास कृष्णो गिरिमिवाचलः। स धृतः सङ्गतो मेघैः गिरिः सव्येन पाणिना।।' इति हरिवंशे.विष्णु.१८.३१

**सत्याभिनवतीर्थीया–** तत्रैव ताभिर्निपीडितमुदीक्ष्य स... इति श्लोकः । तस्यार्थः । कञ्जनाभः सः कृष्णः ताभिः धाराभिः निपीडितं सर्वं व्रजं उदीक्ष्य वामेन कञ्जदलकोमलपाणिनैव गिरिवरम्, प्रसभं क्रियाविशेषणमेतत् । प्रकृष्टसभाविशिष्टं यथा भवति तथा दधार । तत्र सभायां अखिलाः पशुपाः स्वगोभिः सह प्रविविशुरिति । एतेन 'प्रसभम्' इत्येतत् व्यर्थमिति परास्तम् । कृष्णकर्तृकगिरिवर-धारणक्रियया गिरिवराधोभागे प्रकृष्टसभा जातेति वक्तुं 'प्रसभम्' इत्युक्तमिति स्वीकरणात् ।।६५।।

**वरदराजीया–** ताभिः धाराभिः निपीडितं सर्वं व्रजं उद्वीक्ष्य तमेव गिरिवरं गोवर्धनं दधार । केन करेण कञ्जदलवत्कोमलेन वामेन पाणिनेत्यर्थः । तत्र पर्वतस्याधः स्वगोभिः सह ।।६५।।

**जनार्दनीया–** कञ्जनाभः कमलनाभः स कृष्णः ताभिः जलधाराभिः निपीडितं सर्वं व्रजं उदीक्ष्य, प्रसभं दृढं यथा स्यात् तथा । गिरिवरं गोवर्धनपर्वतश्रेष्ठं दधार । तत्र धृतपर्वतस्याधः पशुपाः गोपाः स्वगोभिः सह प्रविविशुः ।।६५।।

**चट्टि–** कञ्जनाभः कमलनाभः सः श्रीकृष्णः ताभिः जलधाराभिः निपीडितं सर्वं व्रजमुदीक्ष्य वामेन कञ्जदलवत् कमलदलवत् कोमलेन पाणिना तमेव गिरिवरं गोवर्धनपर्वतश्रेष्ठं प्रसभं दृढं यथा स्यात् तथा दधार । तत्र धृतपर्वतवरस्याधः अखिलाः सर्वे पशुपाः गोपाः स्वगोभिः सह प्रविविशुः ।।६५।।

**[1]वृष्ट्वोरुवार्यथ निरन्तरसप्तरात्रं त्रातं निरीक्ष्य हरिणा व्रजमश्रमेण[2] ।**
**शक्रोऽनुसंस्मृतसुरप्रवरावतारः पादाम्बुजं यदुपतेः शरणं जगाम ।।६६।।**

**व्यासतीर्थीया–** सप्तानां रात्रीणां समुदायः सप्तरात्रम् । निरन्तरं च तत् सप्तरात्रं च निरन्तरसप्तरात्रम् ।।६६।।

**वेदाङ्गतीर्थीया–** कृष्णेन व्रजरक्षणानन्तरम्, अनु संस्मृतसुरप्रवरावतारः ।।६६।।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव वृष्ट्वोरुवार्यथ निरन्तरसप्तरात्रं...इति श्लोके निरन्तरेत्यस्य निरन्तरमित्यर्थः । एतेन सप्तरात्रमिति वक्तव्यम् । निरन्तरसप्तरात्रकथनमयुक्तमिति दूषणं परास्तम् । 'निरन्तरसप्तरात्रम्' इत्यत्र अनुस्वारलोपमङ्गीकृत्य निरन्तरेत्यस्य निरन्तरमित्यर्थ इत्युक्तत्वात् ।।६६।।

**वरदराजीया–** निरन्तरं सप्तरात्रं उरु वारिजलं दृष्ट्वा अथानन्तरं अश्रमेण हरिणा त्रातं व्रजं गोकुलं समीक्ष्य, अनुस्मृतः अनुसंहितः सुरप्रवरस्य हरेरवतारो येन स, इन्द्रः शरणं जगामेति सम्बन्धः ।।६६।।

---

१. 'दृष्ट्वा' इति वरदराजीये पाठान्तरम् ।

२. 'क्षुत्तृड्व्यथां सुखापेक्षां हित्वा तैर्व्रजवासिभिः । वीक्ष्यमाणो दधाराद्रिं सप्ताहं नाचलत्पदात् ।।' इति भागवते १०.२३.२३

**जनार्दनीया–** शक्रः निरन्तरं अव्यवहितं सप्तरात्रं सप्तदिनपर्यन्तं यथा स्यात् तथा । उत्कृष्टवारिजलं वृष्ट्वा, अश्रमेण हरिणा त्रातं रक्षितं व्रजं निरीक्ष्य, अथ रक्षितव्रजदर्शनानन्तरं अनुस्मृतः सुरप्रवरस्य कृष्णस्य अवतारो येन स तथा सन् ।।६६।।

**चट्टि–** शक्रः निरन्तरं अव्यवधानेन सप्तरात्रं सप्तदिनपर्यन्तं यथा स्यात् तथा, उरु उत्कृष्टं वारि जलं वृष्ट्वा, अश्रमेण हरिणा त्रातं रक्षितं व्रजं निरीक्ष्य, अथ रक्षकदर्शनानन्तरं अनुसंस्मृतः सुरप्रवरस्य हरेः अवतारो येन स तथाभूतस्सन् यदुपतेः श्रीकृष्णस्य पादाम्बुजं शरणं जगाम ।।६६।।

**तुष्टाव चैनमुरुवेदशिरोगताभिर्गीर्भिः सदाऽगणितपूर्णगुणार्णवं तम् ।**
**गोभृद् गुरुं हरगुरोरपि गोगणेन युक्तः सहस्रगुरगाधगुमग्र्यमग्र्यात् ।।६७।।**

**व्यासतीर्थीया–** स्तुतियोग्यत्वदर्शनायोक्तम्– **अगणितेत्यादि** ।। गोभृद् वज्रभृत् । हरगुरोरपि ब्रह्मणोऽपि । सहस्रगुः सहस्राक्षः । अगाधगुं अगाधज्ञानम् ।।६७।।

**वेदाङ्गतीर्थीया–** उरुवेदशिरोगताभिः उरूपनिषद्गताभिः । गोभृत् वज्रभृत् । हरगुरोरपि ब्रह्मणोऽपि । सुरगोगणेन सहस्रगुः सहस्राक्षः । अगाधगुं अगाधज्ञानं निरवधिकज्ञानं भावः ।।६७।।

**वादिराजीया–** गोभृत् वज्रभृत् । गोगणेन सुरभ्यादिगोसमूहेन युक्तः सहस्रगुः सहस्राक्षः इन्द्रः । हरगुरोरपि गुरुः । अगाधगुं अपारशरीरकान्तिं अपारवाग्विलासं वा । अग्र्यादग्र्यं श्रीकृष्णं तुष्टावेत्यन्वयः । 'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृतः ।।' इति ह्यनुशासनम् ।।६७-६८।।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव तुष्टाव चैनमुरुवेदशिरोगताभिः...इति श्लोके 'सहस्रगुः' इत्यस्य सहस्रज्ञान इत्यर्थः । बहुज्ञान इति तात्पर्यार्थः । एतेन इन्द्रस्य 'सहस्रगुः' इति सहस्रनेत्रत्वकथनमसङ्गतमिति दूषणं परास्तम् । परमेश्वरस्तावकत्वोपपादनार्थमिन्द्रस्य सहस्रगुरित्यनेन बहुज्ञानत्वमेवोच्यते न तु सहस्रनेत्रत्वमित्यभ्युपगमात् ।।६७।।

**वरदराजीया–** गोभृत् वज्रभृत् सहस्रगुः सहस्राक्षः गोगणेन सुरभ्यादिगोगणेन युक्तः सन् एनं कृष्णं उरूणि वेदशिरांसि उपनिषदः तद्गताभिः गीर्भिः तुष्टाव । कथम्भूतं एनं सदा अगणितैः पूर्णगुणैरर्णव इव तम् । हरस्य रुद्रस्य गुरोश्चतुर्मुखस्य गुरुम् । अगाधा गौः ज्ञानं यस्य तम् । अग्र्यात् श्रेष्ठात् श्रेष्ठं तुष्टावेति सम्बन्धः ।।६७।।

**अनन्तभट्टीया–** गोभृत् वज्रभृत् । गुरोर्गुरुम् । सहस्रगुः सहस्राक्षः । अगाधगुं अगाधज्ञानम् ।।६७।।

**जनार्दनीया–** गोभृत् वज्रधरः । सहस्रगुः सहस्रनेत्रः इन्द्रः । गोगणेन सुरभ्यादिगोसमूहेन युक्तः सन् । सदा अगणितत्वेन पूर्णैः गुणैः अर्णव इवार्णवः तम् । हरगुरोरपि ब्रह्मणोऽपि गुरुम् । अगाधगुं अपरिमितदीप्तिं अपरैरसह्यदीप्तिमित्यर्थः । अग्र्याद् उत्तमाद् अग्र्यं उत्तमं एनं कृष्णम् । उरवश्च ते वेदाश्च अनन्तवेदाः तेषां शिरस्सु उपनिषत्सु गताभिर्विद्यमानाभिः गीर्भिर्वाग्भिः तुष्टाव अस्तौद् । 'दिग्दृष्टिदीधिति-स्वर्गवज्रवाग्वाणवारिषु । भूमौ पशुषु गोशब्दो विद्वद्भिर्दशसु स्मृतः ॥' इत्यभिधानम् । 'स्वर्गे शरे च वज्रे च बलीवर्दे च गौः पुमान् । स्त्रियां नयनदिग्भागमातृवाग्भूजलेष्वपि ॥' इत्यनेकध्वनिपदमञ्जर्याम् ॥

**ताम्रपर्णीया–** गोभृत् वज्रधरः । गोगणेन ''स्वर्गादूर्ध्वं ब्रह्मलोको ब्रह्मर्षिगणसेवितः । तत्र सोमगतिश्चैव ज्योतिषां च महात्मनाम् । तस्योपरि गवां लोकः साध्यास्तं पालयन्ति हि ॥'' [विष्णुपर्व.१९.२९-३०] इति हरिवंशोक्तगोलोकगतसुरभ्यादिधेनुगणेन । सहस्रगुः सहस्राक्षः । अगाधगुं अगाधज्ञानं अगाधकान्तिं वा अगाधवेदवाक्ययुक्तं वा ॥६७-६८॥

**भारतश्री–** गोभृद् स्वर्गनायकः । सहस्रगुः सहस्रनेत्रः इन्द्रः सुरभ्यादिगोगणेन 'अथाह सुरभिः कृष्णं अभिमन्त्र्य [अभिवन्द्य-अभिनन्द्य इति प्रचलितपाठः] मनस्विनी । स्वसन्तानैरुपामन्त्र्य गोपरूपिण-मीश्वरम् ॥' इति भागवतोक्तेः ॥ [१०.२५.१८] अगाधगुं साकल्येन वेदाप्रतिपाद्यम् । अग्र्यात् लक्ष्मीतत्वात् अग्र्यम् ॥६७-६९॥

**भावचन्द्रिका–** कृष्णं द्रष्टुं नेत्रद्वयं नालमित्याह– **सहस्रगुरिति** ॥६७॥

**चट्टि–** गोभृत् वज्रधरः सहस्रगुः सहस्रनेत्रः इन्द्रः, गोगणेन सुरभ्यादिगोसमूहेन युक्तः सन्, सदा अगणितत्वेन पूर्णैः गुणैरर्णव इव तम्, हरस्य रुद्रस्य गुरोश्चतुर्मुखस्यापि गुरुम्, अगाधगुमपरिमितदीप्तिं अपरैरसह्यमित्यर्थः । अग्र्यात् श्रेष्ठात् अग्र्यं श्रेष्ठं एनं श्रीकृष्णं उरूणि च तानि वेदशिरांसि च उपनिषदः तद्गताभिः गीर्भिः वाग्भिः तुष्टाव अस्तौत् । 'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्वाणवारिषु । भूमौ पशुषु गोशब्दो विद्वद्भिः दशसु स्मृतम् ॥' इत्यभिधानम् । 'स्वरे शरे च वज्रे च बलीवर्दे च गौः पुमान् । स्त्रियां नयनदिग्भागमातृवाग्भूतलेष्वपि ॥' इत्यनेकध्वनिपदमञ्जर्याम् ॥६७॥

**त्वत्तो जगत्सकलमाविरभूदगण्य–**
**धाम्नस्त्वमेव परिपासि समस्तमन्ते ।**
**अस्ति त्वयैव जगतोऽस्य हि बन्धमोक्षौ**
**न त्वत्समोऽस्ति [1]कुहचित् परिपूर्णशक्ते ॥६८॥**

---

१. 'कुतश्चित्' इति व्यासतीर्थीयपाठः ।

**व्यासतीर्थीया–** कुतश्चित् कुत्रचित् ।।६८-७२।।

**अनन्तभट्टीया–** अगण्यधाम्नः अगण्यनिलयस्येत्यर्थः । अगण्यं अपरिमितं धाम तेजो यस्येति वार्थः । अन्ते अत्सि । कुहचित् कुत्रापि ।।६८।।

**वरदराजीया–** स्तुतिप्रकारं लेशतो दर्शयति– **त्वत्त इति** ।। सकलं जगत् त्वत्तः आविरभूत् जातम् । कथम्भूतात् त्वत्तः अगण्यधाम्नः अगणितालयात् अगणिततेजसो वा त्वमेव समस्तं परिपासि समस्तं अन्ते अत्सि च । अस्य जगतः त्वयैव बन्धमोक्षौ भवताम् । कुहचित् कुत्रचित् देशे काले वा त्वत्समो नास्ति ।।६८।।

**जनार्दनीया–** स्तुतिं समासेनाह– **त्वत्त इति** ।। अगण्यानां ज्ञानानन्दादिगुणानां धाम्नः आश्रयाद् । अगण्यमपरिमितं धाम तेजो यस्येति वा । अगण्यानि अवधिरहितानि धामानि वैकुण्ठादित्रीणि स्थानानि यस्येति वा । त्वत्तः त्वत् अखिलं जगद् आविरभूदुत्पन्नमित्यर्थः । त्वमेव परिपासि स्थितिकर्ता त्वमेवेत्यर्थः । अन्ते समस्तजगदत्सि । 'अद भक्षणे' इति धातुः । त्वयैवास्य जगतः बन्धः संसारबन्धः मोक्षः संसारमोक्षः तौ भवतः । हे परिपूर्णशक्ते! कुहचित् कुत्रापि त्वत्समो नास्ति ।।६८।।

**भावचन्द्रिका–** अन्ते अस्तीत्युक्त्या नायमन्तकाल इति पालनमेव कृतम् । अनादिवन्धः अनन्तो मोक्षश्च यदा तन्नियतः तदा सादिः सान्तश्च तन्नियत इति किमु वक्तव्यं इति भावेनाह– **त्वयेति** ।।६८।।

**चट्टि–** स्तुतिप्रकारं लेशतो दर्शयति– **त्वत्त इति** ।। अगण्यानां ज्ञानानन्दादिगुणानां धाम्न आश्रयादगण्यमपरिमितं धाम तेजो यस्येति वा त्वत्तः अखिलजगदाविरभूत् । उत्पन्नमित्यर्थः । त्वमेव परिपासि स्थितिकर्ता च त्वमेवेत्यर्थः । अन्ते समस्तं जगदत्सि । 'अद भक्षणे' इति धातुः त्वयैवास्य जगतः बन्धः संसारवन्धः मोक्षः संसारमोक्षः तौ भवतः । हे परिपूर्णशक्ते कुहचित् कुत्रापि देशे काले त्वत्समो नास्ति ।।६८।।

**क्षन्तव्यमेव भवता मम बाल्यमीश**
**त्वत्संश्रयोऽस्मि हि सदेत्यभिवन्दितोऽजः ।**
**क्षान्तं सदैव भवतस्तव शिक्षणाय**
**पूजापहारविधिरित्यवदद् रमेशः ।।६९।।**

**वेदाङ्गतीर्थीया–** अभिवन्दितः प्रणतः ।।६९।।

**वादिराजीया–** क्षान्तं सदैव भवत इत्यत्र भवतः बाल्यं क्षान्तमिति बाल्यपदावृत्त्या योजना ।।

**वरदराजीया–** मम बाल्यं भवता क्षन्तव्यं सोढव्यम् । त्वं संश्रयो यस्य स तथा । भवतः सदैव क्षान्तम् । तव शिक्षणाय पूजापहारस्य विधिं अकरवमित्यवदत् ।।६९।।

**अनन्तभट्टीया–** त्वं संश्रयो यस्येति विग्रहः ।।६९।।

**जनार्दनीया–** हे ईश! सदा त्वमेव संश्रयो यस्य स तथा । तादृशोऽहमस्मि हि यतः । अतः मम बाल्यं मुग्धभावं भवतैव त्वयैव क्षन्तव्यं सोढव्यम् । इत्युक्त्वा अभिवन्दितोऽजो रमेशः कृष्णः सदा भवतः तव क्षान्तमेव, मया बाल्यमिति शेषः । तव शिक्षणाय सन्मार्गप्रवर्तनाय पूजायाः अपहारः परिहाररूपो यो विधिः विधानं स कृत इत्यवदत् ।।६९।।

**ताम्रपर्णीया–** क्षान्तं सदैव भवत इति बाल्यमित्यनुवर्तते ।।६९-७२।।

**चट्टि–** हे ईश हि यतः अहं सदा त्वमेव संश्रयो यस्य स तथा तादृशोऽस्मि । अतो मम बाल्यं भवता त्वयैव क्षन्तव्यम् । इति उक्त्वा अभिवन्दितः अजः रमेशः श्रीकृष्णः सदा भवतस्ते शिक्षणाय सन्मार्गप्रवर्तनाय पूजाया अपहारः परिहाररूपो यो विधिः विधानं सः कृतः इत्यवदत् ।।६९।।

**गोविन्दमेनमभिषिच्य[1] स गोगणेशो गोभिर्जगाम गुणपूर्णममुं प्रणम्य ।**
**गोपैर्गिराम्पतिरपि प्रणतोऽभिगम्य गोवर्धनोद्धरणसङ्गतसंशयैस्सः ।।७०।।**

**वेदाङ्गतीर्थीया–** गोविन्दं गोविन्दनामकम् । सम्यक् गतसंशयैः ।।७०-७२।।

**वादिराजीया–** सम्यग्गतः संशयो येषां ते तथोक्ताः । तैः गोपैः अभिगम्य प्रणतः गोकुलं जगामेति पूर्वक्रियावृत्त्या योग्यपदाध्याहारेण योजना । गिरां वेदवाक्यानां पतिः गिरां पतिः ।।७०-७२।।

**सत्याभिनवतीर्थीया–** तत्रैव गोविन्दमेनमभिषिच्य...इति श्लोके गिरां पतिरित्यस्य वेदादिवागभिमानि-लक्ष्म्यादीनां स्वामीत्यर्थः । एतेन गिरां पतिरिति वेदपतित्वकथनमसङ्गतमिति दूषणं परिहृतम् । वन्यत्वोपपादनार्थं गिरां पतिरित्यनेन विशिष्टत्वमुच्यत इत्यभ्युपगमात् ।।७०।।

**मधुसूदनीया–** ।। **गोविन्दमिति** ।। एनं गोविन्दं गोभिरभिषिच्य गोभिः कामधेन्वादिगोभिः गोभिः आकाशगङ्गाजलैश्च । 'स्तनैः प्रस्रवसंयुक्तैः सिषिचुः कृष्णमव्ययम्' इति च [हरि.२.१९.६२] । 'जलैश्चाकाशगङ्गाया ऐरावतकरोद्धृतैः' इति भागवते [१०.२५.२२]।'अथोपवाह्यादादाय घण्टामैरावताद्गजात् ।

---

१. 'एवं कृष्णमुपामन्त्र्य सुरभिः पयसाऽत्मनः । जलैश्चाकाशगङ्गाया ऐरावतकरोद्धृतैः ।। इन्द्रः सुरर्षिभिः साकं चोदितो देवमातृभिः । अभ्यषिञ्चत दाशार्हं गोविन्द इति चाभ्यधात् ।।' इति भागवते १०.२५.२२-२३ ।

अभिषेकं तया चक्रे पवित्रजलपूर्णया ।।' इत्यादि विष्णुपुराणे [५.१२.१३]। 'दिव्यस्य पयसो घटैः । एभिरद्याभिषिञ्चस्व' इति हरिवंशे [२.१९.४४] ।।७०-७२।।

**वरदराजीया–** गोगणेन सुरभ्यादिगोगणेन इतो युक्तः स इन्द्रोऽपि गोभिः करणैरेनं कृष्णं गोविन्दमभिषिच्य कृष्णं प्रणम्य ययौ । गिरां पतिः वेदपतिः गोपैः प्रणतोऽभूत् । कथम्भूतैः गोपैः गोवर्धनस्य गिरेरुद्धरणेन सम्यक् गतः संशयो येषां तैः ।।७०।।

**अनन्तभट्टीया–** गवां गणेशः ।।७०।।

**जनार्दनीया–** गोगणेशः सुरभ्यादिगवां समूहस्य पतिः इन्द्रः । गोभिः आकाशगङ्गाजलैः एनं गोविन्दं अभिषिच्य, 'जलैश्चाकाशगङ्गाया ऐरावतकरोद्धृतैः' इति भागवते [१०.२५.२२]। गोवर्धनगिरेः उद्धरणेन सम्यग् गतः परिहृतः । संशयः कृष्णो मनुष्यो देवो वेति संशयो येषां ते तथा तैः । गोपैरपि गिरां वेदानां पतिः । स कृष्णः अभिगम्य अभिमुखं प्राप्य, प्रणतोऽभूत् ।।७०।।

**भारतश्री–** गोगणेशः दिग्गणेशः ।।७०-७६।।

**भावचन्द्रिका–** ।। **गोविन्दमिति** ।। ब्रह्मणा चोदिता सुरभिः गोपकृष्णं स्वपयसा अभ्यषिञ्चत । शक्रोऽप्यैरावतकरोद्धृताकाशगङ्गोदकैरभ्यषिञ्च्य गवामिन्द्रं सन्तं परोक्षेण गोविन्द इति नाम व्यधादिति भावः । गिरांपतिः वेदपतिः ।।७०।।

**चट्टि–** गोगणेशः गवां सुरभ्यादिगवां गणस्समूहः तस्य पतिः सः इन्द्रः एनं गोविन्दं श्रीकृष्णं गोभिः कामधेन्वादिभिः आकाशगङ्गाजलैश्चाभिषिच्य स्तनैः प्रसवसंयुक्तैः निषिचुः । कृष्णमव्ययमिति च । 'जलैश्चाकाशगङ्गायाः ऐरावतकरोद्धृतैः' इति भागवते । 'अथोपवाह्यादादाय घण्टामैरावताद्गजात् । अभिषेकं तया चक्रे पवित्रजलपूर्णया ।।' इत्यादि विष्णुपुराणे । 'दिव्यस्य पयसो घटैः । एभिस्त्वमभिषिञ्चस्व' इति हरिवंशे ।। गुणैः पूर्णममुं श्रीकृष्णं प्रणम्य जगाम । गोवर्धनगिरेरुद्धरणेन सम्यग्गतः परिहृतः संशयः श्रीकृष्णः मनुष्यो देवो वेति संशयो एषां ते तथा तैः, गोपैः गिरां वेदानां पतिः श्रीकृष्णः अभिगम्याभिमुखं प्राप्य प्रणतो अभूत् ।।७०।।

**कृष्णं ततः प्रभृति गोपगणा व्यजानन्**
**नारायणोऽयमिति गर्गवचश्च[१] नन्दात् ।**

१. 'श्रूयतां मे वचो गोपा व्येतु शङ्का च वोऽर्भके । एतं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ।।' इत्यादि भागवते । १०.२४.१९ । 'इति नन्दवचः श्रुत्वा गर्गगीतं व्रजौकसः । दृष्टश्रुतानुभावास्ते कृष्णस्यामिततेजसः ।। मुदिता नन्दमानर्चुः कृष्णं च गतविस्मयाः ।।' इति भागवते १०.२४.२४ ।

**नारायणस्य सम इत्युदितं निशम्य**
**पूजां च चक्रुरधिकामरविन्दनेत्रे ।।७१।।**

**वरदराजीया—** ततः प्रभृति गोवर्धनोद्धरणमारभ्य अयं नारायण एवेति कृष्णं व्यजानन् । 'नारायणस्य सम' इत्युदितं गर्गवचश्च नन्दान्निशम्य व्यजानन् । अधिकां उत्कृष्टां पूजां च चक्रुः ।।७१।।

**अनन्तभट्टीया—** 'नारायणोऽयम्' इति गर्गवचः । 'नारायणस्य सम' इति नन्दवचोऽनुकरणम् ।।७१।।

**जनार्दनीया—** ततः प्रभृति गोवर्धनोद्धरणदिनमारभ्य गोपगणाः अयं नारायण इति कृष्णं व्यजानन् ज्ञातवन्तः । 'नारायणस्य सम' इत्युदितं गर्गस्य वचनं नन्दात् निशम्य च श्रुत्वा व्यजानन्नित्यर्थः । अरविन्दनेत्रे कमललोचने । अधिकां सर्वोत्तमत्वेनेति भावः । पूजां चक्रुश्च ।।७१।।

**चट्टि—** ततः प्रभृति गोवर्धनोद्धरणमारभ्य गोपगणाः अयं श्रीनारायण इति श्रीकृष्णं व्यजानन् ज्ञातवन्तः । श्रीनारायणस्य सम इत्युदितं गर्गवचनं नन्दान्निशम्य व्यजानन्नित्यर्थः । अरविन्दनेत्रे कमललोचने श्रीकृष्णे अधिकां सर्वेभ्यो अधिकां सर्वोत्तमत्वेनेति भावः । पूजां चक्रुश्च ।।७१।।

**स्कन्दादुपात्तवरतो मरणादपेतं**
**दृष्ट्वा च रामनिहतं बलिनं प्रलम्बम् ।**
**चक्रुर्विनिश्चयममुष्य सुराधिकत्वे**
**गोपा अथास्य विदधुः परमां च पूजाम् ।।७२।।**

**वरदराजीया—** स्कन्दात् कामस्वरूपात्, उपात्तात् वरतो वरात् मरणात् मृत्योरपेतं अत एव बलिनं प्रलम्बम्, रामेण निहतं दृष्ट्वा अमुष्य रामस्य सुरेभ्योऽधिकत्वे विनिश्चयं चक्रुः । अथ तस्मात् अधिकां पूजां विदधुः चक्रुः ।।७२।।

**जनार्दनीया—** गोपाः स्कन्दात् षडाननात् उपात्तवरतः स्वीकृतवरतः मरणात् मृत्योः अपेतं उज्झितम् । बलिनं रामनिहतं प्रलम्बं दृष्ट्वा अमुष्य रामस्य सुराधिकत्वे देवश्रेष्ठत्वे विनिश्चयं चक्रुः । ननु कृष्णस्य अधिकां पूजां यथा चक्रुः तथा चक्रुः किमित्यतो नेत्याह— **अथेति** ।। अस्य कृष्णस्य अथ अनन्तरम्, असमानामित्यर्थः । परमां स्वोत्तमेभ्यः परमामित्यर्थः । पूजां अस्य रामस्य विदधुः चक्रुः । अस्येत्युभयत्र सम्बद्ध्यते ।।७२।।

**चट्टि–** गोपाः स्कन्दात् षण्मुखादुपात्तात् स्वीकृतात् वरतः वरात् मरणात् मृत्योः अपेतं उज्झितं बलिनं प्रलम्बं रामेण निहतं दृष्ट्वा अमुष्य रामस्य सुराधिकत्वे विनिश्चयं चक्रुः । अथ तस्मात् अस्य रामस्य च परमां स्वावरेभ्यः उत्तमां पूजां विदधुः चक्रुः ।।७२।।

**कात्यायनीव्रतधराः [१]स्वपतित्वहेतोः**
**कन्या उवाह भगवानपराश्च गोपीः ।**
**अन्यैर्धृता अयुगबाणशराभिनुन्नाः**
**प्राप्ता निशास्वरमयच्छशिराजितासु ।।७३।।**

**व्यासतीर्थीया–** कात्यायनी गौरी ।।७३।।

**वेदाङ्गतीर्थीया–** कात्यायनी गौरी । अन्यैः ऊढाः ।।७३।।

**वादिराजीया–** अकृतोद्वाहानां कन्यानामसंस्कृतत्वेन परिग्रहायोगाद् विवाहविधिनैव जग्राहेति भावेन कन्या उवाहेत्युक्तम् । ताश्च अन्यैर्धृता अपरा गोपीश्चारमयदिति योजना ।।७३-७५।।

**मधुसूदनीया–** ।। **अन्यैर्धृता इति** ।। 'नासूयन् नृप कृष्णाय मोहितास्तस्य मायया । मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः' इति भागवतवचनात् [१०.३१.३८] । कृष्णमायामोहितत्वेन गोपाः कृष्णेन स्वपत्नीरमणेऽपि गोपी नाभ्यसूयति भावः ।।७३।।

**वरदराजीया–** स्वस्य पतित्वहेतोः कात्यायन्याः गौर्याः व्रतधराः कन्या उवाह । अन्यैः पतिभिः धृताः ऊढाः, अपराश्च गोपीः गोपस्त्रियश्च अयुगबाणस्य पञ्चबाणस्य शरेणाभिनुन्नाः बलात् प्रेषिताः अत एव शशिना चन्द्रेण राजितासु अलङ्कृतासु निशासु रात्रिषु प्राप्ताः स्वसमीपमागता अरमयत् रमयामास ।।७३।।

**भावविवृतिः–** कात्यायनीव्रतधराः स्वपतित्वहेतोः इत्यत्र उत्तमाधिकारिणो भगवद्भार्यतायोग्याः शतसङ्ख्याका अप्सरसः तास्वप्रतीकालम्बना द्विनवत्यो नीलाविवाहानन्तरं उपनयनात्पूर्वमेव उद्वाहिताः तदन्यास्सप्तसङ्ख्याकाः इदानीमुद्वाहिताः तदन्याः शतं मध्यमाधिकारिणः गोकुले जाताः । अन्यैर्गोपालैर्धृताः विवाहिताः यास्ता अपि पूर्ववरदानान्निमित्ताद्रमयामासेति ।।७३-७४।।

**अनन्तभट्टीया–** स्वपतित्वहेतोः कात्यायनीव्रतधराः । अयुगबाणः कामः ।।७३।।

---

१. 'सङ्कल्पो विदितः साध्व्यो भवतीनां मदर्चने । मयाऽनुमोदिताः सोऽसौ सत्यो भवितुमर्हति ।। न मय्यावेशितधियां कामः कामाय कल्पते। भर्जिता कथिता धाना प्रायो बीजाय नेष्यते ।। याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः । यदुद्दिश्य व्रतमिदं चरथार्यर्चनं सतीः ।।' इति भागवते १०.२०.२६-२८ ।

**जनार्दनीया–** भगवान् स्वस्य पतित्वहेतोः पतित्वार्थं कात्यायन्याः गौर्याः व्रतधराः कन्याः उवाह उद्वाहयामास । कन्यकानां मूलस्वरूपं 'परमाप्सरसः पुरा याः' इति पुरैवोक्तत्वादत्र नोक्तम् । अन्यैर्गोपैः धृताः वृताः अयुगबाणः कामः तस्य शरेण अभिनुन्नाः प्रेरिताः । शशिना चन्द्रेण राजितासु शोभमानासु निशासु रात्रिषु प्राप्ताः, स्वसन्निधिमिति शेषः । अपराः उद्वाहितकन्याभ्योऽन्याः गोपीः अरमयत् रमयामास।।

**ताम्रपर्णीया–** ।। **कन्या इति** ।। अक्षतयोनय इत्यर्थः । तदुक्तं 'कन्या अक्षतयोनयः' इति यमकभारतटीकायाम् ।।७३।।

**चट्टि–** भगवान् श्रीकृष्णः स्वस्य पतित्वहेतोः पतित्वार्थं कात्यायन्याः गौर्याः व्रतधराः कन्या उवाह उद्वाहयामास । कन्यकानां मूलस्वरूपं 'परमाप्सरसः पुरा या' इति पूर्वमेवोक्तत्वात् अत्र नोक्तम् । अन्यैः गोपैः धृताः ऊढाः अयुगबाणस्य कामस्य शरेणाभिनुन्नाः प्रेरिताः अत एव शशिना चन्द्रेण राजितासु शोभमानासु निशासु रात्रिषु प्राप्ताः स्वसमीपगताः अपराः उद्वाहितकन्याभ्यः अन्याः गोपीश्च अरमयत् रमयामास । 'नासूयन् नृप कृष्णाय मोहितास्तस्य मायया । मन्यमाना स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः ।।' इति भागवते श्रीकृष्णमायया मोहितत्वेन गोपाः श्रीकृष्णेन स्वपत्नीरमणेऽपि गोपीः नाभ्यसूयन् इति भावः ।।७३।।

**तास्वत्र तेन जनिता दशलक्षपुत्रा**
**[१]नारायणाह्वययुता बलिनश्च गोपाः ।**
**सर्वेऽपि दैवतगणा भगवत्सुतत्व-**
**माप्तुं धरातलगता हरिभक्तिहेतोः ।।७४।।**

**व्यासतीर्थीया–** भगवत्सुतत्वमपि किमर्थमित्यत उक्तम्–**हरिभक्तिहेतोरिति** ।। भक्तिः प्रेमः। तादर्थ्ये षष्ठी ।।७४।।

**वेदाङ्गतीर्थीया–** हरिभक्तिहेतोः पितेति हरौ स्नेहविशेषार्थम् ।।७५-७६।।

**मधुसूदनीया–** ।। **नारायणाह्वययुता इति** ।। नारायण इत्याह्वयो येषां ते तथोक्ताः । 'ततस्ते सन्यवर्तन्त संशप्तकगणास्ततः । नारायणाश्च गोपाला मृत्युं कृत्वाऽनिवर्तनम् ।।' इति द्रोणपर्वणि [१८.३४]। 'मत्संहनननतुल्यानां गोपानां अर्बुदं महत् । नारायणा इति ख्याताः सर्वे सङ्ग्रामयोधिनः ।। इत्युद्योगपर्वणि [७.१९] । द्विजत्वगमनात्पूर्वमेव संस्कारात्प्रागेव तास्सर्वा रामाः गोपिकाः अरमयदित्यन्वयः ।।७४-८०।।

---

१. 'मत्संहनननतुल्यानां गोपानामर्बुदं महत् । नारायणा इति ख्याता सर्वे सङ्ग्रामयोधिनः ।।' इति उद्योगपर्वणि.७.१९

**वरदराजीया–** अत्र गोकुले तासु पूर्वोक्तासु दशलक्षसङ्ख्याकाः पुत्राः जनिताः । ते सर्वे नारायणाह्वययुताः नारायणस्य नामतः ते सर्वेऽपि दैवगणाः भगवतः कृष्णस्य सुतत्वं पुत्रत्वं आप्तुं हरिभक्तिहेतोः धरातलगता अभवन्नित्यर्थः ।

**अनन्तभट्टीया–** अत्र व्रजे ।।७४।।

**जनार्दनीया–** अत्र व्रजे तेन कृष्णेन तासु उद्वाहितगोपकन्यासु, नारायणेति आह्वयेन नाम्ना युताः बलिनो दशलक्षपुत्राः जनिताः उत्पादिताः । ते सर्वेऽपि गोपाः गोपकन्यासु जातत्वात् गोपाः । मातृजातिं प्राप्ता इति भावः । ते पूर्वं क इत्यत आह– **दैवतेति** ।। दैवतगणाः हरौ पित्रात्मके हरौ भक्तिहेतोः प्रीतिविशेषार्थं भगवत्सुतत्त्वं आप्तुं धरातलं भूतलं गताः प्राप्ताः, भुवि जाता इत्यर्थः ।।७४।।

**ताम्रपर्णीया–** हरिभक्तिहेतोः भगवत्सुतत्वमाप्तुमिति सम्बन्धः । पितरि स्नेहानुबन्धस्य अनायासलभ्यत्वादिति भावः ।।७४।।

**चट्टि–** अत्र गोकुले तेन श्रीकृष्णेन तासु पूर्वोक्तासु नारायण इत्याह्वयेन युताः 'ततस्ते सन्यवर्तन्त संशप्तकगणास्ततः । नारायणाश्च गोपाला मृत्युं कृत्वाऽनिवर्तनम् ।।' इति द्रोणपर्वणि । बलिनः दशलक्षसङ्ख्याकाः पुत्राः जनिताः उत्पादिताः । सर्वेऽपि गोपाः गोपकन्यकासु जातत्वात् गोपाः मातृजातिं प्राप्ता इति भावः । ते पूर्वं क इत्यत आह– **दैवतेति** ।। सर्वेऽपि दैवतगणाः हरिभक्तहेतोः हरौ पित्रात्मके हरौ भक्तिहेतोः प्रीतिविशेषार्थं भगवत्सुतत्वं आप्तुं धरातलं गताः भुवि जाता इत्यर्थः।।७४।।

**तास्तत्र पूर्ववरदानकृते रमेशो [1]रामाद् द्विजत्वगमनादपि पूर्वमेव ।**
**सर्वा निशास्वरमयत् समभीष्टसिद्धिचिन्तामणिर्हि भगवानशुभैरलिप्तः।।७५।।**

**व्यासतीर्थीया–** ननु कृष्णः उपनयनात् पूर्वं कन्याः कस्मादुवाहेति जिज्ञासायां कारणं वदन् ज्येष्ठात् पूर्वं स्त्रीपरिग्रहे अन्यस्वीकृतस्त्रीगमने च दोषः स्यादिति शङ्कां वारयन्नाह– **ता इति** ।। बह्वीनां कथमेको रमणकृत् स्यादित्यत उक्तम्– **अभीष्टसिद्धिचिन्तामणिरिति** ।।७५-७६।।

**वेदाङ्गतीर्थीया–** गोपीः पूर्वं वरदानकृतेः संस्कारतः पूर्वमेव युष्माकं मत्सङ्गमो भवत्विति पूर्वमेव वरस्य दत्तत्वात् । रामात्, द्विजत्वगमनादपि पूर्वमेवारमयत् ।।७५।।

**वरदराजीया–** ताः रामाः वनिताः पूर्वं वरदानकृते संस्कारात् पूर्वमेव परिग्रहीष्यामीति वरदानकृतहेतोः द्विजत्वगमनात् पूर्वमेव सर्वाः अरमयत् । यतो अभीष्टसिद्ध्यै चिन्तामणिरिव । ननु अन्यपतिपरिगृहीत-स्त्रीरमणे कृष्णस्य प्रत्यवायः स्यात् इत्यत उक्तम्– **अशुभैरलिप्त इति** ।।७५।।

१. 'रामा' इति जनार्दनचट्टिटिप्पण्योः पाठान्तरम् ।

**भावविवृति–** रामद्विजत्वगमनादपि पूर्वमेव इत्यत्र रामस्य ज्येष्ठत्वात् तद्विवाहात्पूर्वं उपनयनादपि पूर्वमित्यर्थः ।।७५-९७।।

**जनार्दनीया–** ननु कृष्णः संस्कारात् पूर्वं कन्या उवाहेत्याशङ्कायां तत्र हेतुमाह– **ता इति** ।। भगवान् रमेशः कृष्णः तत्र वृन्दावने, पूर्ववरदानकृतेः संस्कारात् पूर्वमेव मम सङ्गः स्यादिति वरप्रदानाद्धेतोः, रामात् बलभद्रात् पूर्वं रामस्य स्त्रीस्वीकारात्, अथवा भाविनो रामसम्भोगात् पूर्वं द्विजत्वगमनादपि पूर्वं स्वोपनयनादपि पूर्वतः ताः सर्वाः उद्वाहितकन्याः गोपस्त्रीश्च निशासु अरमयत् रमयामास । नन्वेकः कथं बह्वीः रमयामासेत्यत आह– **समभीष्टेति** ।। समभीष्टस्य सत्कामस्य सिद्धौ प्राप्तौ चिन्तामणिरिव चिन्तामणिः । ननु ज्येष्ठस्य विवाहात् पूर्वं स्त्रीस्वीकारेण गोपस्त्रीगमनेन च कृष्णस्य दोषः स्यादित्यत आह– **अशुभैरिति** ।। अशुभैः विकर्मजदोषैः अलिप्तः अस्पृष्ट इत्यर्थः । 'रामाः द्विजत्वगमनात्' इति पाठे रमेशः पूर्वं वरदानकृतेः द्विजत्वगमनादपि पूर्वमेव सर्वास्ताः रामाः युवतीः निशास्वरमयदित्यन्वयः । 'रामा स्त्री जामदग्न्यश्च रामो रामौ सितासितौ' इत्यनेकध्वनिपदमञ्जर्याम् ।।७५।।

**ताम्रपर्णीया–** वह्वीनां कथमेको रमणकृदित्यत आह– **समभीष्टेति** ।। अशुभैः परस्त्रीसङ्गमेन ज्येष्ठातिक्रमप्राप्तेन द्विजात् पूर्वं सङ्गात् संप्राप्तेनेत्येवमाद्यशुभैत्यर्थः ।।७५-७६।।

**चष्टि–** ननु श्रीकृष्णः उपनयनात् पूर्वं कन्याः कस्मादुवाहेति जिज्ञासायां कारणं आह– **ता इति** ।। भगवान् रमेशः श्रीकृष्णः तत्र वृन्दावने पूर्वं वरदानकृतेः संस्कारात् पूर्वं मम सङ्गः स्यादिति वरप्रदानात् हेतोः रामात् बलभद्रात् पूर्वं रामस्य स्त्रीस्वीकारात् पूर्वं द्विजत्वगमनात् स्वोपनयनादपि पूर्वमेव तान् सर्वाः कन्यकाः गोपस्त्रीस्च निशास्वरमयत् । नन्वेकः कथं बह्वीनां रमणकृत् स्यादित्यत उक्तम्– **समभीष्टेति** ।। समभीष्टस्य सत्कामस्य सिद्धौ चिन्तामणिरिव । ननु ज्येष्ठात् पूर्वं स्त्रीपरिग्रहो अन्यस्वीकृतस्त्रीगमनेन च श्रीकृष्णस्य दोषः स्यादित्यत आह– अशुभैः विकर्मजदोषैः अलिप्तः अस्पृष्ट इत्यर्थः । 'रामाः द्विजत्वगमनात्' इति पाठे रमेशः पूर्वं वरदानकृतेः द्विजत्वगमनादपि पूर्वमेव सर्वास्ताः रामाः युवतीः निशास्वरमयदित्यन्वयः । 'रामा स्त्री जामदग्न्यश्च रामो रामौ सीतासितौ' इत्यनेकध्वनिपदमञ्जर्याम् ।।७५।।

**सम्पूर्णचन्द्रकरराजितसद्रजन्यां वृन्दावने कुमुदकुन्दसुगन्धवाते ।**
**श्रुत्वा मुकुन्दमुखनिस्सृतगीतसारं गोपाङ्गना [1]मुमुहुरत्र ससार [2]यक्षः ।।७६।।**

---

१. 'गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन् नृप । श्लथद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ।।' इति भागवते.१०.३२.२४
२. 'एवं विक्रीडतोः स्वैरं गायतोः सम्प्रमत्तवत् । शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात् ।।' इति भागवते.१०.३२.२५

**वादिराजीया–** मुखनिःसृतगीतसारमिति वदता वेणुं विना स्वमुखेनैवाद्भुतसङ्गीतरसः प्रदर्शित इति सूचितम् । अत एव मुमुहुः मूर्च्छां गता इत्युक्तम् ।।७६।।

**वरदराजीया–** सम्पूर्णस्य चन्द्रस्य करैः किरणैः राजितायां रजन्याम्, कुमुदानां कुन्दानां सुगन्धो यत्र तथा स चासौ वातो यत्र तस्मिन्, वृन्दावने गोपाङ्गना मुमुदुः मोहं प्राप्ताः । किं कृत्वा मुकुन्दस्य कृष्णस्य मुखान्निःसृतं गीतसारं श्रुत्वा । अत्र वृन्दावने यक्षः ससार ।।७६।।

**जनार्दनीया–** गोपाङ्गनाः सम्पूर्णस्य षोडशकलाभिपूर्णस्य चन्द्रस्य करैः किरणैः राजिता दीप्यमाना सा च सा सती च सा मनोहरा रजनी रात्री तस्याम् । कुमुदानां कुमुदपुष्पाणां सुगन्धः समीचीनपरिमलो यस्य स तथा, तादृशः वातः वायुः तस्मिन् तत्तथा । तस्मिन् वृन्दावने मुकुन्दमुखात् कृष्णमुखान्निःसृतः उद्गतश्चासौ गीतसारः गायनश्रेष्ठः । तं श्रुत्वा, मुमुहुः मोहं प्रापुः । उत अत्र कृष्णस्य क्रीडास्थाने । ससार कृष्णमिति शेषः ।।७६।।

**चट्टि–** गोपाङ्गनाः सम्पूर्णस्य षोडशकलाभिपूर्णस्य चन्द्रस्य करैः किरणैः राजिता दीप्यमाना सा च सती मनोहरा रजनी रात्री तस्याम् । कुमुदानां कुन्दानां कुन्दपुष्पाणां च सुगन्धः समीचीनपरिमलो यस्य स तथा, स चासौ वातो वायुः यस्मिन् तत्तथा तस्मिन् वृन्दावने मुकुन्दमुखात् श्रीकृष्णमुखान्निःसृतः उद्गतश्चासौ गीतसारः गायनश्रेष्ठश्च । तं श्रुत्वा, मुमुहुः मोहं प्रापुः ।।७६।।

**रुद्रप्रसादकृतरक्ष उतास्य सख्युर्भृत्यो बली खरतरोऽपि च शङ्खचूडः ।**
**ताः कालयन् भगवतस्तलताडनेन मृत्युं जगाम [1]मणिमस्य जहार कृष्णः ।।**

**व्यासतीर्थीया–** अस्य रुद्रस्य सख्युर्धनेश्वरस्य भृत्यः ।।७७-८०।।

**वेदाङ्गतीर्थीया–** अस्य रुद्रस्य सख्युः कुबेरस्य भृत्यः ।।७६-८०।।

**वादिराजीया–** अस्य रुद्रस्य सख्युः कुबेरस्य भृत्य इत्यर्थः । ताः गोपीः कालयन् 'कल गतौ' इति धातोः नयन्नित्यर्थः ।।७७।।

**वरदराजीया–** कथम्भूतः रुद्रप्रसादेन कृता रक्षा यस्य स तथा । अस्य रुद्रस्य सख्युः धनदस्य भृत्योऽपि अत एव बली खलतरो अत्यन्तमुग्रः शङ्खचूडनामा यक्ष इत्यर्थः । ताः गोपीः कालयन् भीषणेन द्रावयन् यक्षो भगवतः कृष्णस्य तलताडनेन करतलप्रहारेण मृत्युं जगाम । अस्य रक्षस्य मणिं चूडामणिं कृष्णो जहार ।।७७।।

---

१. 'शङ्खचूडं निहत्यैवं मणिमादाय भासुरम् । अग्रजायाददात् प्रीत्या पश्यन्तीनां च योषिताम् ।।' इति भागवते.१०.३२.३२

**अनन्तभट्टीया–** अस्य दुष्टस्य [रुद्रस्य?] । सख्युः कुबेरस्य । खरतरः अतिप्र..रः । ताः गोपाः कालयन् भीषयन् ।।७७।।

**जनार्दनीया–** शङ्खचूडः तदाख्यो यक्षः ताः गोपीः कालयन् द्रावयन् ससार । 'कल द्रावणे' इति धातुः । कथम्भूतः? रुद्रस्य प्रसादेन कृता रक्षा रक्षणं यस्य स तथा । अस्य रुद्रस्य सख्युः कुबेरस्य भृत्यः । बलमस्यास्तीति बली, खरतरः अतिक्रूरोऽपि भगवतः कृष्णस्य तलताडनेन तलघातेन कृष्णः अस्य शङ्खचूडस्य मणिं शिरोगतमणिं जहार अपाहरत् ।।७७।।

**ताम्रपर्णीया–** अस्य रुद्रस्य सख्युः धनेशस्य शङ्खचूडोऽपीत्यपिशब्दसबन्धः ।।७७-८०।।

**भारतश्री–** अस्य रुद्रस्य सख्युः कुबेरस्य ।।७७।।

**भावचन्द्रिका–** कृष्णः मणिं रामाय जहार तस्मै ददौ च ।।७७।।

**चट्टि–** उत अनन्तरं अत्र श्रीकृष्णस्य क्रीडास्थाने, रुद्रस्य प्रसादेन कृता रक्षा रक्षणं यस्य स तथा । अस्य रुद्रस्य सख्युः कुबेरस्य भृत्यः । बलमस्यास्तीति बली । खरतरः अतिक्रूरः शङ्खचूडः तन्नाम यक्षोऽपि ताः गोपीः कालयन् पीडयन् ससार, श्रीकृष्णमिति शेषः, भगवतः श्रीकृष्णस्य तलताडनेन करतलप्रहारेण मृत्युं जगाम । श्रीकृष्णः अस्य शङ्खचूडस्य मणिं शिरोमणिं जहार ।।७७।।

**नाम्नाऽप्यरिष्ट उरुगायविलोमचेष्टो गोष्ठं जगाम वृषभाकृतिरप्यवध्यः ।**
**शम्भोर्वरादनुगतश्च सदैव कंसं गां भीषयन्तममुमाह्वयदाशु कृष्णः ।।७८।।**

**वादिराजीया–** उरुगाय विलोमचेष्ट इत्यत्र उरुभिर्गीयत इति उरुगायः । उरुधा सामादिना गायतीति वा उरुगायः ।।७८-८२।।

**वरदराजीया–** उरुगायस्य कृष्णस्य विलोमचेष्टो विरुद्धव्यापारो नाम्ना अरिष्टो वृषभाकृतिः सन् व्रजं जगाम । शम्भोः वरात् अवध्यः सदैव कंसमनुगतश्च गाः भीषयन्तं अमुं अरिष्टं कृष्णः आह्वयत् ।।७८।।

**अनन्तभट्टीया–** उरुगायविलोमचेष्टः कृष्णप्रतिकूलव्यापारः ।।७८।।

**जनार्दनीया–** उरुगायस्य उत्तमश्लोकस्य कृष्णस्य विलोमचेष्टः विपरीतकर्मा वृषभाकृतिः गोवृषभस्वरूपः सदैव कंसं अनुगतः अनुकूलेन वर्तमानः । कंसस्य चित्तानुवर्तीत्यर्थः । नाम्नापि अरिष्टः गोष्ठं जगाम । कृष्णः गाः भीषयन्तं भयप्रापकं अमुं अरिष्टं आह्वयत् ।।७८।।

**चट्टि–** उरुभिः गीयते इति उरुगायः, उरुधा सामादीन् गायति इति वा उरुगायः । उरुगायस्य श्रीकृष्णस्य विलोमचेष्टः विरुद्धव्यापारः वृषभाकृतिः वृषभस्वरूपः शम्भोः वरादवध्योऽपि सदैव कंसं अनुगतः अनुकूलेन वर्तमानश्च कंसस्य चित्तानुवर्तीत्यर्थः । नाम्नापि अरिष्टः गोष्ठं जगाम । श्रीकृष्णः गाः भीषयन्तं भयप्रापकं अमुं अरिष्टं आशु आह्वयत् ।।७८।।

**सोऽप्याससाद हरिमुग्रविषाणकोटिमग्रे निधाय जगृहेऽस्य [1]विषाणमीशः ।**
**भूमौ निपात्य च वृषासुरमुग्रवीर्यं यज्ञे यथा पशुममारयदग्र्यशक्तिः ।।७९।।**

**वरदराजीया–** सोऽपि अरिष्टोऽपि हरिमाससाद । उग्रस्य विषाणस्य कोटिमग्रं अग्रे पुरतो निधाय अस्य अरिष्टस्य विषाणं जगृहे । यज्ञे पशुं यथा तथा ममार अमारयत् ।।७९।।

**जनार्दनीया–** सोऽप्यरिष्टः उग्रयोर्विषाणयोः शृङ्गयोः कोटिं अग्रं अग्रे पुरतः निधाय कृत्वा हरिं आससाद प्राप । 'विषाणं दन्तशृङ्गयोः' इत्यभिधानम् । 'कोटिरग्रे प्रकारे च' इति । ईशः कृष्णः अस्य वृषभाकृत्यसुरस्य विषाणं शृङ्गं जगृहे । यद् यस्माद् अग्रशक्तिः उत्तमबलः । अतः यज्ञे यथा पशुं घ्नन्ति तथा अमारयत् जघान ।।७९।।

**चट्टि–** सोऽप्यरिष्टः उग्रयोर्विषाणयोः शृङ्गयोः कोटिं अग्रं अग्रे पुरतः निधाय कृत्वा हरिं आससाद प्राप । ईशः श्रीकृष्णः अस्य वृषभासुरस्य विषाणं शृङ्गं जगृहे । अग्र्यशक्तिः उत्तमबलः श्रीकृष्णः उग्रवीर्यं वृषभासुरं भूमौ निपात्य यज्ञे पशुं यथा अमारयत् जघान च । 'अथ त्रिषु विषाणं स्यात् पशुशृङ्गेभदन्तयोः' इत्यभिधानम् ।।७९।।

**केशी तु [2]कंसविहितस्तुरगस्वरूपो**
**[3]गिर्यात्मजावरमवाप्य सदा [4]विमृत्युः ।**
**पापः स केशवमवाप [5]मुखेऽस्य बाहुं**
**प्रावेशयत् स भगवान् ववृधेऽस्य देहे ।।८०।।**

---

१. 'तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले । निष्पीडयामास यथार्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत् ।।' इति भागवते १०.३४.१४ ।

२. 'प्रतियाते तु देवर्षौ कंस आशास्य केशिनम् । प्रेषयामास हन्येतां भवता रामकेशवौ ।।' इति भागवते१०.३४.२१

३. 'हयादस्मान्महेन्द्रोऽपि बिभेति बलसूदनः । कुर्वाणाच्च वपुर्घोरं केशिनो दुष्टचेतसः ।।' इति हरिवंशे. विष्णु.२४.६३

४. 'अवध्यः सर्वभूतानां प्रथमः पापकर्मणाम्' इति हरिवंशे विष्णुपर्वणि २४.२३ । 'तथा वनगतं पार्थ गजायुतबलं हयम् । कराम्भोरुहवज्रेण जघान मधुसूदनः ।।' इति सभापर्वणि.५३.२९ ।

५. 'सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं बिले । दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा ।।' इति भागवते १०.३५.८

**वरदराजीया–** कंसेन विहितः आज्ञापितः, गिरेः हिमवतः आत्मजायाः पार्वत्याः वरम् । मुखे स्वमुखे अस्य कृष्णस्य । अस्यासुरस्य ॥८०॥

**अनन्तभट्टीया–** सः बाहुः ववृधे ॥८०॥

**जनार्दनीया–** गिर्यात्मजा पार्वती । कंसेन विहितः प्रेषितः तुरगस्य अश्वस्य स्वरूपः केशी च केशिनामा यः पापः स केशवं अवाप । सः अस्य मुखे बाहुं प्रावेशयत् । स भगवान् अस्य केशिनो देहे ववृधे वृद्धिं प्राप । 'बाहुमाभोगिनं कृत्वा मुखे त्वस्य जनार्दनः । प्रवेशयामास तदा केशिनो दुष्टवाजिनः । तथा कृष्णस्य ववृधे बाहुः...॥' इति विष्णुपुराणे ॥८०॥

**चट्टि–** गिर्यात्मजायाः पार्वत्याः वरमवाप्य सदा विमृत्युः विगतमृत्युः, कंसेन विहितः प्रेषितः, तुरगस्य अश्वस्य स्वरूपमिव स्वरूपं यस्य सः । केशी च केशिनामा यः पापः स केशवं अवाप । सः केशी अस्य श्रीकृष्णस्य बाहुं मुखे स्वास्ये प्रावेशयत् । श्रीकृष्णः स्वबाहुमस्य मुखे प्रावेशयदिति वा । भगवान् अस्य केशिनो देहे ववृधे वृद्धिं प्राप ॥८०॥

**तत्त्वादनाय कुमतिः स कृतप्रयासः [१]शीर्णास्यदन्तदशनच्छदरुद्धवायुः ।**
**शीर्णः[२] पपात च मृतो हरिरप्यशेषैर्ब्रह्मेशशक्रदिनकृत्प्रमुखैः [३]स्तुतोऽभूत् ॥८१॥**

**व्यासतीर्थीया–** विलोमं विपरीतम् । दीर्णो विदारितः ॥८१॥

**वेदाङ्गतीर्थीया–** शीर्णास्यदन्तदशनछदरुद्धवायुः शीर्णास्यदन्तदशनच्छदश्चासौ रुद्धवायुश्चेति तथोक्तः । दशनच्छदौ ओष्ठौ कण्ठनाले । हस्ताभिवृद्ध्या रुद्धवायुः दीर्णः देहः हस्ताभिवृद्ध्यैव विदारितदेहः ॥८१॥

---

१. 'समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् । प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लम्बं विसृजन् क्षितौ व्यसुः ॥' इति भागवते १०.३५.८

२. 'दीर्णः पपात' इति पाठान्तरम् ।

३. 'अथाहान्तर्हितो विप्रो नारदो जलदे स्थितः । केशिनं निहतं दृष्ट्वा हर्षनिर्भरमानसः ॥ साधु साधु जगन्नाथ लीलयैव यदच्युत । निहतोऽयं त्वया केशी क्लेशदस्त्रिदिवौकसाम् ॥ युद्धोत्सुकोऽहमत्यर्थं नरवाजिमहाहवम् । अभूतपूर्वमन्यत्र द्रष्टुं स्वर्गादिहागतः ॥ कर्माण्यत्रावतारे ते कृतानि मधुसूदन । यानि तैर्विस्मितं चेतः तोषमेतेन मे गतम् ॥ तुरङ्गस्यास्य शक्रोऽपि कृष्ण देवाश्च बिभ्यति । धुतकेसरजालस्य ह्रेषतोऽभ्रावलोकिनः ॥ यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन । तस्मात्केशवनाम्ना त्वं लोके ख्यातो भविष्यसि ॥' इति विष्णुपुराणे.५.१६.१८-२३ । 'अविस्मितोऽयं निहतारिरुस्रियैः प्रसूनवर्षैर्ववृषद्भिरीडितः॥' इति भागवते १०.२५.९ ।

**मधुसूदनीया–** ।। दीर्णः पपात चेति ।। 'व्यादितास्यमहारन्ध्रः सोऽसुरः कृष्णबाहुना । निपपात द्विधा भूमौ वैद्युतेन यथा द्रुमः ।। द्विपादपृष्ठपुच्छार्द्धे एककर्णाक्षिनासिके [श्रवणैकाक्षिनासिके]। केशिनस्ते द्विधा भूते शकले द्वे विरेजतुः ।।' इति विष्णुपुराणे [५.१६.१४-१५]। 'द्विपादपृष्ठपुच्छार्धे श्रवणैकाक्षिनासिके। [शिश्नस्तस्य]केशिनस्तद्विधाभूते देहार्धे रेजतुः क्षितौ ।।' इति हरिवंशे च [२.२४.४९] ।।८१-८८।।

**वरदराजीया–** सः केशी तस्य कृष्णस्य बाहोः खादनाय भक्षणाय शीर्णानि विदीर्णानि आस्यादीनि यस्य स तथा । स चासौ रुद्धवायुश्चेति विग्रहः । दीर्णः सन् पपात मृतश्च । दिनकृत् सूर्यः ।।८१।।

**अनन्तभट्टीया–** शीर्णेति...दशना यस्य स तथोक्तः । स चासौ रुद्धवायुश्चेति विग्रहः ।।८१।।

**जनार्दनीया–** तस्य कृष्णस्य बाहोः खादनाय भक्षणार्थं कृतप्रयासः कृतप्रयत्नः स केशी । आस्यं च दन्ताश्च दशनच्छदौ दन्ताच्छादकौ ओष्ठौ च शीर्णाः विदीर्णाः, आस्यदन्तदशनच्छदाः यस्य स तथा, स चासौ रुद्धवायुश्च तथा । गले हस्तवृद्ध्या निरुद्धश्वासः शीर्णः विदारितदेह इत्यर्थः । तदुक्तं हरिवंशे– [विष्णुपर्व.२४.४९] 'द्विपादपुच्छपृष्ठार्धे श्रवणैकाक्षिनासिके । केशिनस्ते द्विधाभूते द्वे त्वर्धे रेजतुः क्षितौ ।।' इति । विष्णुपुराणे च 'निपपात द्विधाभूतः' इति । तथा सन् पपात मृतश्च । दिनकृत् सूर्यः ।।८१।।

**ताम्रपर्णीया–** शीर्णः विदारितः ।।८१-८६।।

**चट्टि–** तत्खादनाय तस्य श्रीकृष्णस्य बाहोः खादनाय भक्षणार्थं कृतप्रयासः कृतप्रयत्नः कुमतिः स केशी । आस्यं च दन्ताश्च दशनच्छदौ दन्ताच्छादकौ ओष्ठौ च शीर्णाः विशीर्णाः, आस्यदन्तदशनच्छदाः यस्य स तथा, स चासौ रुद्धवायुश्च तथा । गले हस्तवृद्ध्या निरुद्धश्वासः दीर्णः विदारितकण्ठ इत्यर्थः । 'दॄ विदारणे' इति धातुः । तथाभूतः सन् पपात मृतश्च । श्रीकृष्णोऽपि ब्रह्मा च ईशश्च शक्रश्च दिनकृत् सूर्यश्च ते प्रमुखाः एषां ते तथा तैरशेषैः स्तुतो अभूत् । व्यदितास्यमहारन्ध्रः सोऽसुरः कृष्णबाहुना । निपपात द्विधा भूमौ वैद्युतेन यथा द्रुमः ।। द्विपादपुच्छपृष्ठाग्रे एककर्णोऽक्षिनासिके । केशिनस्तद्द्विधाभूते द्वे त्वर्धे रेजतुः ।। इति विष्णुपुराणे । द्विपादपुच्छपृष्ठार्धे श्रवणैकाक्षिनासिके । केशिनस्तद्विधाभूते देहार्धे रेजतुः क्षितौ ।। इति हरिवंशे च ।।८१।।

**व्योमश्च नाम [१]मयसूनुरजप्रसादा-**
**लब्धायुतायुरखिलान् विदधे बिले सः ।**

१. 'मयपुत्रो महामायो व्योमो गोपालवेषधृक्' इति भागवते.१०.३५.२९ ।

[१]तं श्रीपतिः सुरपतिः पशुवद्विशस्य
निःसारितान् बिलमुखादखिलांश्चकार ॥८२॥

**व्यासतीर्थीया–** अजप्रसादलङ्घनसामर्थ्यं कथमित्यत उक्तम्– **सुरपतिरिति** ॥८२॥

**वेदाङ्गतीर्थीया–** विशस्य हत्वा । 'शसु हिंसायाम्' इति ॥८२॥

**सत्याभिनवतीर्थीया–** तत्रैव व्योमश्च नाम मयसूनुरजप्रसादात्...इति श्लोके 'व्योमश्च नाम मयसूनुः' इत्यस्य यस्य व्योम इति नाम स च स एव मयसूनुरित्यर्थः । एतेन व्योमशब्दस्य मयसूनुनामत्वलाभार्थं यस्य व्योम इति नाम इति वक्तव्यम् । यथेत्यादेरभावात् न्यूनतेति शङ्कानवकाशः । यस्येत्यादेरध्याहारः इत्यङ्गीकारात् । एतेनैव चशब्दो व्यर्थ इति दूषणं परास्तम् । चशब्दस्यावधारणार्थत्वमित्यङ्गीकारात् ॥८२॥

**वरदराजीया–** व्योमश्च मयसूनुर्नाम प्रसिद्धः । अजस्य ब्रह्मणः प्रसादात् लब्धं अमितं आयुः येन स तथा । स व्योमः अखिलान् गोपान् बिले विदधे निक्षिप्तवान् । बिलमुखान्निःसारितान् निष्कासितान् चकार ॥८२॥

**अनन्तभट्टीया–** अखिलान् गोपान् ॥८२॥

**जनार्दनीया–** मयः मयनामा दैत्यतक्षः, तस्य सूनुः । अजस्य ब्रह्मणः प्रसादात् वरप्रसादात् । लब्धं प्राप्तं अमितायुः दीर्घायुः येन स तथा । व्योमश्च व्योम इति नाम प्रसिद्धो योऽसुरः सः अखिलान् गोपान् बिले गुहायां विदधे न्यधात् । सुरपतिरित्यनेन सुरावताराणां गोपानां तदीयत्वमुक्तम् । न तु केवलं सुरपतिः किन्तु श्रीपतिश्चेत्यर्थः । एतादृशः कृष्णः तं व्योमं पशुवद् विशस्य हत्वा । 'शसु हिंसायाम्' इति धातुः । बिलमुखाद् अखिलान् गोपान् निःसारितान् निष्कासितांश्चकार ॥८२॥

**भावचन्द्रिका–** ॥ **व्योमश्चेति** ॥ गोपाः बिलायनं क्रीडां चक्रुः । तत्र केचन गोपाः मेषायिताः केचन पालकायिताः चोरैर्मेषेषु हृतेषु पालका विचारयन्ति । चोरायितोऽन्यो यः [व्योमः] सर्वान् बिले चकारेति ॥८२॥

---

१. 'तस्य तत् कर्म विज्ञाय कृष्णः शरणदः सताम् । गोपान् नयन्तं जग्राह वृकं हरिरिवौजसा ॥ स निजं रूपमास्थाय गिरीन्द्रसदृशं बली । इच्छन् विमोक्तुमात्मानं नाशक्नोत् ग्रहणातुरः ॥ तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले । पश्यतां दिवि देवानां पशुमारममारयत् ॥ गुहापिधानं निर्भिद्य गोपान् निस्सार्य कृच्छ्रतः । स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥' इति भागवते.१०.३५.३१-३४ ।

**चट्टि–** मयः मयनामा दैत्यानां तक्षाः, तस्य सूनुः । अजस्य ब्रह्मणः प्रसादात् वरप्रसादात् लब्धं प्राप्तं अमितं दीर्घायुः येन स तथा । व्योमश्च व्योम इति नाम प्रसिद्धो योऽसुरः सः अखिलान् गोपान् बिले गुहायां विदधे न्यधात् । सुरपतिरित्यनेन सुरावताराणां गोपानां तदीयत्वमुक्तम् । न तु केवलं सुरपतिः किन्तु श्रीपतिश्चेत्यर्थः । एतादृशः श्रीकृष्णः तं व्योमं पशुवद् पशुमिव विशस्य हत्वा । 'शसु हिंसायाम्' इति धातुः । बिलमुखाद् गुहामुखात् अखिलान् गोपान् निःसारितान् निष्कासितांश्चकार ॥८२॥

**कुर्वत्यनन्यविषयाणि दुरन्तशक्तौ**
**कर्माणि गोकुलगतेऽखिललोकनाथे ।**
**कंसाय सर्वमवदत् सुरकार्यहेतोः**
**ब्रह्माङ्कजो [1]मुनिरकारि यदीशपित्रा ॥८३॥**

**व्यासतीर्थीया–** अन्याविषयाणि कथं स्वविषयाणीत्यत उक्तम्– **दुरन्तशक्ताविति** ॥ ईशपित्रा वसुदेवेन नन्दगृहप्रापणादिकमकारि ॥८३॥

**वेदाङ्गतीर्थीया–** ईशपित्रा वसुदेवेन ॥८३॥

**वादिराजीया–** ईशपित्रेत्यत्र ईशपित्रा जगदीशपित्रा वसुदेवेन यदकारि स्वपुत्रं कृष्णं निशीथे गोकुलं नीतवानित्यादि तत्सर्वमवददिति सम्बन्धः । सुरकार्यहेतोः निरपराधिकंसस्य हननायोगात् पित्रोः शृङ्खलाबन्धनेन अपराधीकरणाख्यसुरकार्यहेतोरित्यर्थः ॥८३-८६॥

**वरदराजीया–** दुरन्तशक्तौ कृष्णे अनन्यविषयाणि अनन्यसाध्यानि कर्माणि कुर्वति सति ब्रह्माङ्कजो नारदः ईशपित्रा वसुदेवेन यत्कृतं तत् सर्वं कंसाय अवदत् ॥८३॥

**अनन्तभट्टीया–** ब्रह्माङ्कजो नारदः । ईशपित्रा वसुदेवेन ॥८३॥

**जनार्दनीया–** गोकुले गते विद्यमाने दुरन्तशक्तौ, अत एव अनन्यविषयाणि अन्यैः कर्तुमशक्यानीत्यर्थः । कर्माणि कुर्वति सति, ब्रह्मणः अङ्कजः ऊरुजः मुनिः नारदमुनिः ईशस्य कृष्णस्य पित्रा वसुदेवेन यद् गोकुले कृष्णं निधाय दुर्गानयनादि यत्कर्म अकारि कृतं तत्सर्वं अवदत् ॥८३॥

**चट्टि–** गोकुलं गते तत्र स्थिते । दुरन्ता शक्तिः यस्य स तथा तस्मिन्, अखिललोकनाथे श्रीकृष्णे अनन्यविषयाणि अन्यैः कर्तुमशक्यानि कर्माणि कुर्वति सति । ब्रह्मणः अङ्कजः मुनिः नारदः ईशस्य

---

१. 'अरिष्टे निहते गोष्ठ कृष्णेनाद्भुतकर्मणा । कंसाय प्राह भगवान् नारदो देवदर्शनः ॥' इति भागवते १०.३४.१७ ।

श्रीकृष्णस्य पित्रा वसुदेवेन यद् नन्दगृहे कृष्णं निधाय दुर्गानयनादि कर्म अकारि कृतं तत्सर्वं सुरकार्यहेतोः कंसाय अवदत् ।।८३।।

**[1]श्रुत्वाऽतिकोपरभसोच्चलितः स कंसो**
**बद्ध्वा सभार्यमथ शूरजमुग्रकर्मा ।**
**अक्रूरमाश्वदिशदानयनाय विष्णो**
**रामान्वितस्य सह गोपगणै रथेन ।।८४।।**

**व्यासतीर्थीया–** रभसः तीव्रव्यग्रता ।।८४-८५।।

**वेदाङ्गतीर्थीया–** कोपरभसोच्चलितः कोपसम्भ्रमेण [उच्चलितः] ।।८४-८६।।

**वरदराजीया–** अतिकोपरभसेन उच्चलितः प्रवर्तितः । विष्णोः कृष्णस्य आनयनाय अक्रूरं अदिशत् ।।

**जनार्दनीया–** अतिकोपस्य रभसः वेगः तेनोच्चलितः चलत्तनुरित्यर्थः । अथ रथेन विष्णोः आनयनाय । आदिशत् आज्ञापयामास ।।८४।।

**चट्टि–** उग्रकर्मा सः कंसः तदिति शेषः । तन्नारदवचनं श्रुत्वा अतिकोपस्य रभसेन वेगेन उच्चलितः चलत्तनुरित्यर्थः । तथाभूतः सन् सभार्यं शूरजं वसुदेवं बद्ध्वा । अथ रथेन गोपगणैः सह वर्तमानस्य रामान्वितस्य विष्णोः श्रीकृष्णस्य आनयनाय आशु अक्रूरं आदिशत् ।।८४।।

**संसेवनाय स हरेरभवत् पुरैव**
**नाम्ना किशोर इति यः सुरगायकोऽभूत् ।**
**स्वायम्भुवस्य च मनोः परमांशयुक्त**
**आवेशयुक् कमलजस्य बभूव विद्वान् ।।८५।।**

**वरदराजीया–** अक्रूरः पूर्वं क इत्यत आह– **संसेवनायेति** ।। नाम्ना किशोर इति यः सुरगायको गन्धर्वः सोऽभवत् । स्वायम्भुवस्य मनोः परमेणांशेन युक्तः कमलजस्य च आवेशेन युक्तो अतो विद्वान् बभूव ।।८४।।

---

१. 'निशम्य तद् भोजपतिः कोपात् प्रचलितेन्द्रियः । निशातमसिमादत्त वसुदेवजिघांसया ।। निवारितो नारदेन तत्सुतौ मृत्युमात्मनः । ज्ञात्वा लोहमयैः पाशैः बबन्ध सह भार्यया ।। प्रतियाते तु देवर्षौ कंस आभास्य केशिनम् । प्रेषयामास हन्येतां भवता रामकेशवौ ।।' इति भागवते १०.३४.१८-२१ ।

**अनन्तभट्टीया–** अभूत् प्रावर्तिष्ट ।।८५।।

**जनार्दनीया–** अक्रूरस्य मूलरूपमाह– **संसेवनायेति** ।। पुरा नाम्ना किशोर इति योऽभूत् स किशोरः हरेः संसेवनाय अभवद् यतः । मनुब्रह्मणोः अंशावेशाभ्यां युक्तः अत एव विद्वान् ज्ञानी बभूव ।।८५।।

**चट्टि–** अक्रूरः पूर्वं क इत्यत आह– **संसेवनायेति** ।। पुरा नाम्ना किशोर इति यः सुरगायकः देवगन्धर्वः अभूत् । स किशोरः एव हरेः संसेवनाय अभवद् यतः । स्वायंभुवस्य मनोः परमेणांशेन युक्तः, कमलजस्य चावेशेन युग् युक्तः अत एव विद्वान् ज्ञानी बभूव ।।८५।।

**सोऽक्रूर इत्यभवदुत्तमपूज्यकर्मा वृष्णिष्वथाऽस स हि भोजपतेश्च मन्त्री ।**
**आदिष्ट एव जगदीश्वरदृष्टिहेतोरानन्दपूर्णसुमना अभवत् कृतार्थः ।।८६।।**

**व्यासतीर्थीया–** उत्तमैः पूज्यं कर्म यस्य स तथोक्तः ।।८६।।

**वरदराजीया–** अत्र वृष्णिषु अक्रूर इत्यभवत् । उत्तमैः पूज्यं कर्म यस्य स तथा । सोऽक्रूरः भोजपतेः कंसस्य मन्त्री आस जातः । आदिष्ट आज्ञापित एव जगदीश्वरस्य कृष्णस्य दृष्टिहेतोः दर्शनं भविष्यतीति कृत्वा आनन्दपूर्णसुमनस्त्वादिविशिष्टो बभूव ।।८६।।

**अनन्तभट्टीया–** उत्तमैः पूज्यो विष्णौ कर्म यस्येति विग्रहः । उत्तमैः पूज्यं कर्म यस्येति वा ।।८६।।

**जनार्दनीया–** विद्वानित्यस्यैव विवरणम्– **उत्तमेति** ।। उत्तमस्य हरेः पूज्यं पूजाविषयकं कर्म यस्येति विग्रहः । उत्तमो हरिः तद्विषयत्वाद् उत्तमं अत एव पूज्यं सद्भिर्मान्यकर्म यस्येति वा । उत्तमैर्ब्रह्माद्यैः पूज्यो हरिः तत्प्रीतिकरं कर्म यस्येति वा । स पुरुषः वृष्णिषु यादवविशेषेषु अक्रूर इति नामाभवत् । अथ स हि स एवाक्रूरः भोजपतेः कंसस्य मन्त्री आस । आदिष्टः कंसेनाज्ञापितः एव । स एवाक्रूरः जगदीश्वरस्य कृष्णस्य दृष्टिहेतोः दर्शननिमित्ताद् आनन्देन पूर्णं सु शोभनं मनो यस्य स तथा तादृशः सन् । कृतः अर्थः प्रयोजनं येन स तथा, कृतकृत्य इति यावत् । अभवत् ।।८६।।

**चट्टि–** विद्वानित्यस्यैव विवरणम्– **उत्तमेति** ।। उत्तमैः पूज्यं कर्म यस्य स तथा । उत्तमैः ब्रह्माद्यैः पूज्यो हरिः तत्प्रीतिकरं कर्म यस्येति वा । वृष्णिषु यादवेविशेषेषु अक्रूर इति नामाभवत् । अथ स हि स एवाक्रूरः भोजपतेः कंसस्य मन्त्री आस । आदिष्टः कंसेनाज्ञापितः एव अक्रूरः जगदीश्वरस्य श्रीकृष्णस्य दृष्टिहेतोः दर्शनं भविष्यतीति निमित्ताद् । आनन्देन पूर्णं सु शोभनं मनो यस्य स तथा तादृशः सन् । कृतः अर्थः प्रयोजनं येन स तथा, कृतकृत्य इति यावत् । अभवत् ।।८६।।

**आरुह्य तद्रथवरं भगवत्पदाब्जमब्जोद्भवप्रणतमन्तरमन्तरेण ।**
**[१]सञ्चिन्तयन् पथि जगाम स गोष्ठमाराद् दृष्ट्वा पदाङ्कितभुवं मुमुदे परस्य ।।**

**व्यासतीर्थीया–** अन्तरं व्यवधानम् । अन्तरेण विना ।।८७।।

**वेदाङ्गतीर्थीया–** तद्रथवरं कृष्णानयनाय सज्जं तद्रथवरम् । अन्तरं व्यवधानं अन्तरेण विना सञ्चिन्तयन् निरन्तरं स्मरन् इति भावः ।।८७।।

**वादिराजीया–** अन्तरमन्तरेणेत्यत्र अन्तरं व्यवधानं अन्तरेण विना । सञ्चिन्तयन् निरन्तरं सञ्चिन्तयन्नित्यर्थः । अन्तरं हृदयान्तर्विद्यमानम् । अन्तरेण चित्तेनेति वा ।।८७।।

**वरदराजीया–** तस्य कंसस्य रथवरं आरुह्य अन्तरेण अन्तरं मध्ये मध्ये पथि अब्जोद्भवेन प्रणतं भगवत्पदाब्जं सञ्चिन्तयन् स्मरन् गोष्ठं जगाम अगात् । गोकुलसमीपे परस्य कृष्णस्य पदा अङ्कितं भुवं भूमिं दृष्ट्वा मुमुदे ।।८७।।

**अनन्तभट्टीया–** अन्तरं अन्तरेण । मध्ये मध्य इत्यर्थः ।।८७।।

**जनार्दनीया–** सोऽक्रूरः स चासौ रथवरश्च तथा तम् । कृष्णार्थं कंसदत्तरथं आरुह्य अब्जोद्भवेन ब्रह्मणा प्रणतं भगवत्पदाब्जं अन्तरं अवकाशं अन्तरेण विना निरन्तरमित्यर्थः । पथि सञ्चिन्तयन् गोष्ठं प्रति जगाम । आरात् गोष्ठसमीपे परस्य कृष्णस्य पदा पादेन अङ्किता चिह्निता सा च सा भूश्च तां भूमिम्, आराद् दूरेण दृष्ट्वा मुमुदे तुतोष । 'आराद् दूरसमीपयोः' इत्यमरः । आरादित्युभयत्र सम्बद्ध्यते ।।८७।।

**ताम्रपर्णीया–** अन्तरमन्तरेण व्यवधानं विना ।।८७।।

**चट्टि–** सोऽक्रूरः स चासौ रथवरश्च तद्रथवरः तम् । कृष्णानयनाय कंसदत्तरथं आरुह्य अब्जोद्भवेन ब्रह्मणा प्रणतं भगवत्पदाब्जं अन्तरं व्यवधानं अन्तरेण विना निरन्तरमित्यर्थः । पथि सञ्चिन्तयन् अन्तरं हृदयान्तरः विद्यमानं अन्तरेण चित्तेन सञ्चिन्तयन् इति वा । गोष्ठं प्रति जगाम । 'आरात् गोकुलसमीपे परस्य श्रीकृष्णस्य पदा पादेन अङ्कितां भुवं भूमिं दृष्ट्वा मुमुदे । 'आराद् दूरसमीपयोः' इत्यमरः ।।८७।।

---

१. 'ज्ञानात्मकस्यामलसत्वराशेः अपेतदोषस्य सदा स्फुटस्य । किं वा जगत्यत्र समस्तपुंसां अज्ञातमस्यास्ति हृदि स्थितस्य ।। तस्मादहं भक्तिविनम्रचेता व्रजामि सर्वेश्वरमीश्वराणाम् । अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः ।।' इति विष्णुपुराणे.५.१७.३२-३३ ।

**सोऽचेष्टतात्र* जगदीशितुरङ्गसङ्गाल्लब्धोच्चयेन निखिलाघविदारणेषु ।**
**पांसुष्वजेशपुरुहूतमुखोच्चविद्युद्भ्राजत्किरीटमणिलोचनगोचरेषु ॥८८॥**

**व्यासतीर्थीया–** उच्चयोऽतिशयः ॥८८॥

**वेदाङ्गतीर्थीया–** लब्धोच्चयेन लब्धातिशयेन ॥८८-९१॥

**वादिराजीया–** किरीटमणिलोचनगोचरेषु इत्यत्र किरीटमणीनां लोचनानां गोचरेषु शिरोभिर्नम्यमानेषु लोचनैः सादरं दृश्यमानेष्वित्यर्थः ॥८८॥

**सत्याभिनवतीर्थीया–** तत्रैव पांसुष्वजेशपुरुहूतमुखोच्च...इत्यस्ति । तस्यार्थः । अजेशपुरुहूतमुखोच्चविद्युद्भ्राजत्किरीटमणिषु लोचनेषु अजादिलोचनोपरिभागेषु च गोचरेषु संलग्नेषु पांसुष्विति । एतेन अत्र लोचनपदं व्यर्थमिति दूषणं निरस्तम् । न केवलं मणिषु लोचनोपरिभागेषु च संलग्नेष्वित्यर्थलाभार्थं 'मणिलोचनगोचरेषु' इत्युक्तमिति स्वीकरणात् ॥८८॥

**वरदराजीया–** तत्र भुवि विद्यमानेषु पांसुषु रजःसु सो अक्रूरो अचेष्टत भुवि पतितोऽभूत् । कथम्भूतेषु पांसुषु निखिलान्यघानि विदारयन्तीति तथा तेषु । केन गुणेन जगदीशतुः कृष्णस्य अङ्गसङ्गेन लब्धः यः उच्चयः उत्कृष्टत्वं तेन गुणेनेत्यर्थः । पुनः कथम्भूतेषु पांसुषु, अजादिदेवानां उच्चेषु उन्नतेषु विद्युद्वत् भ्राजत्सु किरीटेषु विद्यमानमणीनां लोचनानि तत्तत्प्रदेशाः तेषु गोचरेषु संलग्नेषु ॥८८॥

**अनन्तभट्टीया–** अत्र तु उच्चत्वेन उत्कृष्टत्वेन गुणविशेषणत्वेनेत्यर्थः । पुरुहूतेति ।...उच्चेषु विद्युदिव भ्राजत्सु किरीटेषु मणीः ताः लोचनेषु नयनप्रदेशेषु गोचराः वर्तमानाः तेषु च...॥८८॥

**जनार्दनीया–** सोऽक्रूरः अत्र भुवि जगदीशितुः कृष्णस्य अङ्गस्य पादाङ्गस्य सङ्गात् सम्बन्धात् लब्धोच्चयेन प्राप्तोत्तमत्वेन । निखिलाघानि सर्वपापानि विदारयन्ति नाशयन्तीति तथा तेषु । अजो ब्रह्मा, ईशः शिवः, पुरुहूतः पुरन्दरः, एते मुखानि मुख्या येषां ते तथा, ते च ते उच्चाः श्रेष्ठाः कामाद्याश्च तेषां विद्युदिव भ्राजन्ति च तानि किरीटानि च, तेषु विद्यमानानां मणिलक्षणलोचनानां गोचरेषु किरीटस्थमणीनां संलग्नेष्विति भावः । पांसुषु धूलिषु अचेष्टत व्यलुण्ठत । 'अवेष्टत' इति वा पाठः ॥८८॥

**ताम्रपर्णीया–** उच्चयेन अतिशयेन मणिलोचनगोचरेषु मणिगतलोचनशब्दितप्रकाशविशेषविषयेषु तदावरकेषु इति यावत् ॥८८॥

---

* 'अवेष्टत' इति जनार्दनीये पाठान्तरम् ।

**चट्टि–** सोऽक्रूरः अत्र भुवि जगदीशितुः श्रीकृष्णस्य अङ्गस्य पादाङ्गस्य सङ्गात् सम्बन्धात् लब्धोच्चयेन लब्धातिशयेन, निखिलाघानि सर्वपापानि विदारयन्ति नाशयन्तीति निखिलाघविदारणेषु । अजो ब्रह्मा, ईशः शिवः, पुरुहूतः इन्द्रः, एते मुखाः मुख्याः येषां तेषां उच्चेषु उन्नतेषु विद्युदिव भ्राजत्सु किरीटेषु विद्यमानमणीनां लोचनानि विवरणानि गोचराः विषयाः येषां तेषु पांसुषु धूलिषु अचेष्टत व्यलुण्ठत् ।।८८।।

**सोऽपश्यताथ जगदेकगुरुं समेतमग्रोद्भवेन भुवि गा अपि दोहयन्तम् ।**
**आनन्दसान्द्रतनुमक्षयमेनमीक्ष्य हृष्टः पपात पदयोः पुरुषोत्तमस्य ।।८९।।**

**व्यासतीर्थीया–** भुव्यवस्थितं गोपैर्गोदोहयन्तम् । आनन्दसान्द्रेत्यादिना तदीक्षणप्रकारं निरूपयति ।।८९।।

**वेदाङ्गतीर्थीया–** भुवि अवस्थितम् ।।८९।।

**वादिराजीया–** दोहयन्तं दुहन्तं 'दुह प्रपूरणे' इति धातोः पात्रे पूरयन्तं वा ।।८९-९३।।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव सोऽपश्यताथ जगदेकगुरुं समेतं...इति श्लोकः । 'भुवि' इत्यस्य भुवि शिष्टपरिपालनार्थमवतीर्णमित्यर्थः । एतेन भुवीत्येतत् व्यर्थमिति दूषणमपास्तम् । भगवान् भूमिं प्रति कुत आगतः इत्याशङ्कापरिहारार्थं शिष्टपरिपालनरूपप्रयोजनं वक्तुं भुवीत्युक्तमिति ज्ञापयितुं शिष्टपरिपालनार्थमवतीर्णमित्यस्य शेषमङ्गीकृत्य भुवि शिष्टपरिपालनार्थमवतीर्णमित्यर्थस्योक्तत्वात् ।।८९।।

**मधुसूदनीया–** गा अपि दोहयन्तं स्वयमपि गोदोहनं कुर्वन्तमित्यर्थः । 'ददर्श रामं कृष्णं च व्रजे गोदोहनं गतौ' इति दशमस्कन्धवचनात् [३६.२६]।।८९-९४।।

**वरदराजीया–** अग्रयोद्भवेन रामेण समेतं सः अक्रूरो अपश्यत् । अन्यैः दोहयन्तं स्वयं दुहन्तमपीत्यपिशब्दार्थः । आनन्देन सान्द्रा पूर्णा तनुर्यस्य तं अक्षयमेनं कृष्णं वीक्ष्य हृष्टः सन् पदयोः पपात ।।८९।।

**जनार्दनीया–** अथ सोऽक्रूरः अग्रोद्भवेन अग्रजेन समेतं जगतः एकगुरुं मुख्यगुरुं भुव्यपि स्वयमपि गाः दुहन्तमित्यर्थः । दोहयन्तं च गोपैरिति शेषः । अपश्यत् । आनन्देन सान्द्रा निविडा तनुर्यस्य स तथा तम् । अक्षयं नाशरहितं एनं कृष्णं वीक्ष्य, हृष्टस्तुष्टः सन् ।।८९।।

**ताम्रपर्णीया–** दोहयन्तं गोपैरिति शेषः । अपि पदेन दुहन्तं इत्यपि विवक्षितम् । तदुक्तं भागवते 'व्रजे गोदोहनं गतौ' [१०.३७.२६] इति । पदयोर्भुवि पपातेत्यन्वयः । भुवि अव्यविस्थितमेनमिति वा ।।८९-९९।।

**चट्टि–** अथ सोऽक्रूरः अग्रोद्भवेन अग्रजेन समेतं जगतः एकगुरुं मुख्यगुरुं भुवि गाः, गोपैरिति शेषः। दोहयन्तं स्वयमपि दुहन्तमित्यपिशब्दार्थः। 'ददर्श रामकृष्णौ च व्रजे गोदोहनं गतौ' इति दशमस्कन्धवचनात्। आनन्देन सान्द्रा पूर्णा तनुर्यस्य स तथा तम्। अक्षयं नाशरहितं एनं श्रीकृष्णं ईक्ष्य हृष्टस्तुष्टः सन् पुरुषोत्तमस्य श्रीकृष्णस्य पदयोः पपात ॥८९॥

**[१]उत्थाप्य तं यदुपतिः सबलो गृहं स्वं**
**नीत्वोपचारमखिलं प्रविधाय तस्मिन्।**
**नित्योदिताक्षयचिदप्यखिलं स तस्मात्**
**शुश्राव [२]लोकचरितानुविडम्बनेन ॥९०॥**

**व्यासतीर्थीया–** उदिता अविद्यानावृता ॥९०॥

**सत्याभिनवतीर्थीया–** तदनन्तरमेव उत्थाप्य तं यदुपतिस्सबलो...इति श्लोके 'अखिलं स तस्मात् शुश्राव लोकचरितानुविडम्बनेन' इत्यस्य कृष्णः यस्मात् लोकचरितानुविडम्बनेन अज्ञलोकसम्बन्धिश्रवणाद्याचारानुकरणेन युक्तः तस्मात् तस्मात् अक्रूरात् अखिलं शुश्रावेत्यर्थः। एतेन लोकचरितानुविडम्बनेनेत्येतदनन्वितमिति दूषणं परास्तम्। यस्मादित्यादेः शेषं तस्मादित्यस्यावृत्तिं चाभ्युपगम्यान्वयस्योक्तत्वात् ॥९०॥

**वरदराजीया–** तमक्रूरमुत्थाप्य सबलो बलेन सहितो स्वं स्वकीयं गृहं प्रति नीत्वा अखिलमर्घ्यपाद्यादि उपचारं तस्मिन्नक्रूरे प्रविधाय कृत्वा। नित्यं उदिता अक्षया चित् यस्य स तथाभूतोऽपि तस्मात् अक्रूरात् निखिलं आगमनं शुश्राव। लोकस्य चरितस्य अनुविडम्बनं अनुकरणं तेनेत्यर्थः ॥९०॥

**जनार्दनीया–** स्वगृहं नीत्वा प्रापयित्वा अखिलं उपचारं षोडशोपचारान् तस्मिन्नक्रूरे विधाय। नित्या उदिता प्रकटीभूता अक्षया ह्रासरहिता चित् ज्ञानं यस्य स तथा। तादृशोऽपि स कृष्णः लोकचरितस्य अनुविडम्बनेन अनुकरणेन तस्मादक्रूराद् अखिलं आगमनादिकारणं शुश्राव ॥९०॥

**चट्टि–** यदुपतिः श्रीकृष्णः तमक्रूरं उत्थाप्य सबलः बलरामेण सहितः सन् स्वं स्वकीयं गृहं नीत्वा अखिलं उपचारं अर्घ्यपाद्याद्युपचारं तस्मिन्नक्रूरे प्रविधाय कृत्वा। नित्यं उदिता प्रकटीभूता अक्षया नाशरहिता चित् ज्ञानं यस्य स तथा। तादृशोऽपि स श्रीकृष्णः लोकचरितस्य अनुविडम्बनेन अनुकरणेन तस्मादक्रूराद् अखिलं आगमनादिकारणं शुश्राव ॥९०॥

---

१. 'सोऽप्येनं ध्वजवज्राब्जकृतचिह्नेन पाणिना। संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे ॥' इति विष्णुपुराणे. ५.१८.१

२. 'तत्सर्वं विस्तरात् श्रुत्वा भगवान् देवकीसुतः। उवाचाखिलमप्येतत् ज्ञातं दानपते मया ॥' इति विष्णुपुराणे ५.१८.७

**श्रुत्वा स कंसहृदि संस्थितमब्जनाभः प्रातस्तु गोपसहितो रथमारुरोह ।**
**रामश्वफल्कतनयाभियुतो जगाम यानेन तेन यमुनातटमव्ययात्मा* ॥९१॥**

**व्यासतीर्थीया–** कंसमनोरथगोचरो न भवतीति सूचयति– [**अव्ययात्मेति**] **अव्यज्ञात्मेति** ॥९१॥

**वरदराजीया–** कंसस्य हृदि संस्थितं अभिप्रायं श्रुत्वा प्रातस्तु प्रातरेव रामश्वफल्कतनयाभ्यां बलभद्राक्रूराभ्यां अभियुतः अव्ययात्मा कृष्णस्तेन अक्रूरानीतेन यानेन रथेन यमुनातटं जगाम ॥९१॥

**जनार्दनीया–** रामश्च श्वफल्कस्य तनयोऽक्रूरः, ताभ्यां युतः । अव्ययात्मा अविनाशिस्वरूपः कृष्णः तेन कंसेन प्रेषितेन यानेन रथेन यमुनातटं प्रति जगाम ॥९१॥

**चट्टि–** अब्जनाभः कमलनाभः सः श्रीकृष्णः कंसस्य हृदिसंस्थितं अभिप्रायं श्रुत्वा प्रातस्तु प्रातरेव गोपैः सहितस्सन् रथमारुरोह । रामश्च श्वफल्कतनयोऽक्रूरश्च ताभ्यां अभियुतः संयुतः । अव्ययात्मा अविनाशस्वरूपः श्रीकृष्णः तेन कंसप्रेषितेन यानेन रथेन यमुनातटं प्रति जगाम ॥९१॥

**संस्थाप्य तौ रथवरे जगताऽभिवन्द्यौ श्वाफल्किराश्ववततार यमस्वसारम् ।**
**स्नात्वा स तत्र विधिनैव कृताघमर्षः शेषासनं परमपूरुषमत्र चैक्षत् ॥९२॥**

**वेदाङ्गतीर्थीया–** अत्र जले शेषासनं परमपूरुषमैक्षत् ॥९२॥

**वरदराजीया–** तौ रामकृष्णौ रथवरे संस्थाप्य अक्रूरो यमस्वसारं यमुनां अवततार प्राप्तवान् । तत्र यमुनायां स्नात्वा कृताघमर्षः सन् अत्र जले शेषासनं शेषस्योपरि विद्यमानं परमपुरुषं कृष्णमैक्षत् ॥

**जनार्दनीया–** श्वाफल्किः अक्रूरः तौ रामकृष्णौ संस्थाप्य अवततार । रथादिति शेषः । सोऽक्रूरः यमस्वसारं यमुनां प्राप्य, तत्र यमुनायां विधिनैव स्नात्वा, कृतः अघमर्षः अघमर्षविधिः येन स तथा सन् । शेषासनं शेषोपर्युपविष्टं परमपुरुषं श्रीकृष्णं अत्र जले ऐक्षत ददर्श ॥९२॥

**भावचन्द्रिका–** विधिना जले शेषशायिध्यानविधिना । तदुक्तं पञ्चसंस्कारसङ्ग्रहे स्नानखण्डे 'तत्काले जले शेषशायिनं श्रीनारायणं ध्यात्वा तैर्मन्त्रैर्यावच्छक्यं जपेत्' इत्यादि । हारीते पञ्चमाध्याये–

'अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमादिषु । षट्सु तेषु हरेः पूजा नित्यमेव विधीयते ॥
स्नानकाले तु सम्प्राप्ते रम्यां पुण्यजले शुभे । ध्यात्वा नारायणं देवं नागपर्यङ्कशायिनम् ॥
द्वादशार्णेन मनुना सोऽर्चयित्वाक्षतादिभिः । अष्टोत्तरशतं जप्त्वा ततः स्नानं समाचरेत् ॥
एतदप्स्वर्चनं प्रोक्तं ब्राह्मणस्य जगत्पतेः ॥' इति ॥९२॥

---

* 'अव्यज्ञात्मा' इति व्यासतीर्थीयपाठान्तरम् ।

**चट्टि–** श्वाफल्किः अक्रूरः जगतामभिवन्द्यौ तौ रामकृष्णौ रथवरे संस्थाप्य अवततार । रथादिति शेषः । सोऽक्रूरः यमस्वसारं यमुनां प्राप्य, तत्र यमुनायां विधिनैव स्नात्वा, कृतः अघमर्षः विधिः येन स तथाभूतः सन् । शेषासनं शेषोपर्युपविष्टं परमपूरुषं श्रीकृष्णं अत्र जले ऐक्षत् । सोऽक्रूरः रथवरे संस्थाप्य यमस्वसारं यमुनां प्रत्यवततारेति वा ।।९२।।

**नित्यं हि [1]शेषमभिपश्यति सिद्धमन्त्रो**
**दानेश्वरः स तु तदा ददृशे [2]हरिश्च ।**
**अग्रे हि बालतनुमत्र समीक्ष्य कृष्णं**
**किं नास्ति यान इति यानमुखो बभूव ।।९३।।**

**व्यासतीर्थीया–** यमस्वसारं प्रति प्रतिदिनमघमर्षावसरे शेषासनं पश्यति किमिति जिज्ञासायामाह– **नित्यं हीति** ।।९३।।

**वेदाङ्गतीर्थीया–** सिद्धमन्त्रः सिद्धाघमर्षणमन्त्रः । तदा अग्रे स्वपुरस्तात् बालतनुं हरिं च ददर्श ।।९३-९८।।

**वादिराजीया–** अग्रे हि बालतनुमित्यत्र अग्रे शेषस्य पुरोभागे ।।९३-९८।।

**वरदराजीया–** दानेश्वरो अक्रूरो सिद्धमन्त्रः सिद्धसङ्कर्षणमन्त्रः शेषं पश्यति हि । तदा अघमर्षणानुष्ठानसमये शेषस्योपरि हरिं कृष्णश्च ददर्श । सोऽक्रूरः बालतनुं कृष्णं अग्रे पुरतो समीक्ष्य याने रथे नास्ति किं इति यानमुखो रथाभिमुखो बभूव ।।९३।।

**अनन्तभट्टीया–** सिद्धमन्त्रः दानेश्वरः अक्रूरः । अग्रे पुरः अस्य पूर्वेणान्वयः । बालतनुं कृष्णं वीक्ष्य उदके ।।९३।।

---

१. 'यमुनाया ह्रदे ह्यस्मिन् स्तोष्यामि भुजगेश्वरम् । दिव्यैर्भागवतैर्मन्त्रैः सर्वलोकप्रभुं यतः ।।'४२।। इति हरिवंशे.विष्णुपर्वणि.२६।। 'स ह्रदे यमुनायास्तु ममज्जामितदक्षिणः । रसातले स ददृशे नागलोकमिमं यथा ।।'४८।। इति हरिवंशे.विष्णुपर्वणि.२६।

२. 'ददर्श भोगिनां नाथं स्थितमेकार्णवेश्वरम् । पूज्यमानं द्विजिह्वेन्द्रैः वासुकिप्रमुखैः प्रभुम् ।।५४।।' 'तस्योत्सङ्गं घनश्यामं श्रीवत्साच्छादितोरसम् । पीताम्बरधरं विष्णुं सूपविष्टं ददर्श ह ।।५८।।' 'सोऽनुभूय भुजङ्गानां तं भागवतमव्ययम् । उदतिष्ठत्पुनस्तोयात् विस्मितोऽमितदक्षिणः ।। स तौ रथस्थावासीनौ तत्रैव बलकेशवौ । निरीक्ष्यमाणावन्योन्यं ददर्शाद्भुतरूपिणौ ।। अथामज्जत्पुनस्तत्र तदाक्रूरः कुतूहलात् । इज्यते यत्र देवोऽसौ नीलवासाः सिताननः ।। तथैवासीनमुत्सङ्गे सहस्रास्यधरस्य वै । ददर्श कृष्णमक्रूरः पूज्यमानं तदा प्रभुम् ।।' भूयश्च सहसोत्थाय तं मन्त्रं मनसा जपन् । रथं तेनैव मार्गेण जगामामितदक्षिणः ।।' इत्यादि विष्णुपर्वणि.२६.६१-६५ ।

**जनार्दनीया–** सिद्धमन्त्रः सिद्धाघमर्षणमन्त्रः दानेश्वरः अक्रूरः नित्यं शेषं अभिपश्यति । तदा तस्मिन् दिने हरिश्च, शेषस्थहरिश्चेत्यर्थः । ददृशे उभौ ददृश इति भावः । सोऽक्रूरः अत्र यमुनायां अग्रे स्वपुरतः वालतनुं कृष्णं ईक्ष्य, याने नास्ति किमिति सञ्चिन्त्य, यानमुखः रथाभिमुखो बभूव ।।९३।।

**चट्टि–** सिद्धमन्त्रः सिद्धाघमर्षणमन्त्रः सः दानेश्वरः अक्रूरः नित्यं शेषं अभिपश्यति हि । सो अक्रूरः तदा तस्मिन् दिने हरिश्च, शेषस्थहरिश्च इत्यर्थः । ददृशे उभौ ददृश इति भावः । सोऽक्रूरः अत्र यमुनायां अग्रे स्वपुरतः वालतनुं श्रीकृष्णं ईक्ष्य, याने नास्ति किमिति सञ्चिन्त्य, यानमुखः रथाभिमुखो बभूव ।।९३।।

**तत्रापि कृष्णमभिवीक्ष्य पुनर्निमज्य शेषोरुभोगशयनं परमं ददर्श ।**
**[1]ब्रह्मेशशक्रमुखदेवमुनीन्द्रवृन्दसंवन्दिताङ्घ्रियुगमिन्दिरया समेतम् ।।९४।।**

**व्यासतीर्थीया–** शेषासनस्याग्रे परमं ददर्शेत्युक्तं दर्शनप्रकारं विवृण्वन्नुत्तरकथामाह– **ब्रह्मेति** ।। ।।९४-९५।।

**वरदराजीया–** तत्रापि याने कृष्णमभिवीक्ष्य पुनः जले निमज्य शेषस्योरुभोगे [शयानं] शयनं यस्य तं परमं कृष्णं ददर्श । पुनः दर्शने विशेषोऽपि दृष्ट इत्याह– **ब्रह्मेति** ।। ब्रह्मादिदेवैः मुनीन्द्रवृन्दैश्च संवन्दिते अङ्घ्री यस्य तम् । इन्दिरया लक्ष्म्या समेतश्च ददर्शेत्यर्थः ।।९४।।

**अनन्तभट्टीया–** तत्रापि याने ।।९४।।

**जनार्दनीया–** तत्रापि यानेऽपि । शेषस्य उरुभोगः उत्तमदेहः शयने शय्या यस्य स तथा तम् । ब्रह्मादिवृन्देन संवन्दितं अङ्घ्रियुगं पादयुग्मं यस्य स तथा तम् । इन्दिरया लक्ष्म्या समेतं परमं श्रेष्ठं कृष्णं ददर्श । पूर्वतो विशेषं ददर्शेति भावः ।।९४।।

**चट्टि–** तत्रापि यानेऽपि श्रीकृष्णमभिवीक्ष्य पुनर्जले निमज्य शेषस्य उरुभोगः उत्तमदेहः शयनं शय्या यस्य स तथा तम् । ब्रह्मेशशक्रमुखदेवमुनीन्द्रवृन्देन संवन्दितं अङ्घ्रियुगं यस्य स तथा तम् । इन्दिरया लक्ष्म्या समेतं परमं श्रीकृष्णं ददर्श । पूर्वतोऽपि विशेषं ददर्शेति भावः ।।९४।।

---

१. 'सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः । सुरेशैः ब्रह्मरुद्राद्यैः नवभिश्च द्विजोत्तमैः ।। प्रह्लादनारदवसुप्रमुखै-र्भागवतोत्तमैः । स्तूयमानं पृथङ् मार्गैः वचोभिरमलात्मभिः ।। श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येळयाऽजया । विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ।। विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ।.. गिरा गद्गदयाऽस्तौषीत् सत्वमालम्ब्य सात्वतः।।' इति भागवते१०.३७.४९-५३ ।

**स्तुत्वा वरस्तुतिभिरव्ययमब्जनाभं सोऽन्तर्हिते[1] भगवति स्वकमारुरोह ।**
**यानं च तेन सहितो भगवान् जगाम सायं पुरीं सहबलो मधुरामनन्तः ॥९५॥**

**मधुसूदनीया–॥ सायं पुरीमिति ॥** सायमपराह्ण इत्यर्थः । 'तत्रापराह्णे भगवान् कृष्णस्सङ्कर्षणान्वितः। मधुरां प्राविशत् गोपैर्दिदृक्षुः परिवारितः ॥' इति दशमस्कन्धवचनात् [३९.१९] । यद्वा त्रिमुहूर्ते उर्वरितेत्यर्थः ॥९५-१००॥

**वरदराजीया–** वरस्तुतिभिः स्तुत्वा भगवति अन्तर्हिते अन्तर्धानं प्राप्ते सति स्वकं यानमारुरोह । तेनाक्रूरेण क्रमेण मधुरापुरीम् ॥९५॥

**जनार्दनीया–** सोऽक्रूरः अन्तर्हिते अदृश्ये सति स्वकं यानं आरुरोह । बलेन सहितः सहबलः कृष्णः तेनाक्रूरेण सायं सायङ्काले मधुरां पुरीं जगाम ॥९५॥

**चट्टि–** सोऽक्रूरः अव्ययं नाशरहितं अब्जनाभं श्रीकृष्णं वरस्तुतिभिः स्तुत्वा भगवति अन्तर्हिते अदृश्ये सति स्वकं यानं आरुरोह । बलेन सहितः सबलः भगवाननन्तः श्रीकृष्णः तेनाक्रूरेण सहितस्सन् सायं अपराह्णे इत्यर्थः । मधुरां पुरीं जगाम । 'तत्रापराह्णे भगवान् कृष्णः सङ्कर्षणान्वितः । मधुरां प्राविशत् गोपैः दिदृक्षुः परिवारितः ॥' इति दशमस्कन्धवचनात् ॥९५॥

**[2]अग्रेऽथ दानपतिमक्षयपौरुषोऽसावीशो विसृज्य सबलः सहितो वयस्यैः ।**
**द्रष्टुं पुरीमभिजगाम नरेन्द्रमार्गे पौरैः कुतूहलयुतैरभिपूज्यमानः ॥९६॥**

**व्यासतीर्थीया–** पौरुषं सामर्थ्यम् । तत्प्रसङ्गोचितं विशेषणम् । दानपतिं विसृज्य नन्दादींश्चोद्याने संस्थाप्य ॥९६-९८॥

**वरदराजीया–** अक्षयं पौरुषं यस्य स, ईशो अग्रे दानपतिं विसृज्य प्रेषयित्वा वयस्यैः गोपैः सहितः सबलः बलभद्रेण सहितः पुरीं द्रष्टुं जगाम । तत्र नरेन्द्रमार्गे राजमार्गे कुतूहलेन कौतूहलेन युतैः पौरैः पुरस्थैः अभिपूज्यमानः सन् ॥९६॥

**जनार्दनीया–** अथ पुरप्राप्त्यनन्तरम् । अक्षयं अविनाशि पौरुषं सामर्थ्यं यस्य । अत एव

---

१. 'स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः । भूयः समाहरत् कृष्णो नटो नाट्यमिवात्मनः ॥' इति भागवते.१०.३९.१

२. 'तान् समेत्याह भगवानक्रूरं जगदीश्वरः । गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव । भवान् प्रविशतामग्रे सहयानः पुरीं गृहम् । वयं त्विहावमुच्याथ तावद् द्रक्ष्यामहे पुरीम् ॥' इति भागवते.१०.३९.९-१०॥ हरिवंशादिषु अक्रूर एव 'अहं वां विसृज्य गच्छामि' इत्युक्त्वा तौ मथुरापुरीदर्शनार्थं त्यक्त्वा कंसान्तिकं जगाम इति कथा श्रूयते ।

ईशोऽसौ कृष्णः दानपतिं अक्रूरं अग्रे पुरतो विसृज्य सम्प्रेष्येत्यर्थः । पुरीं द्रष्टुं अभिजगाम । कथम्भूतः? नरेन्द्रमार्गे राजमार्गे कुतूहलेन कौतुकेन युतैः पौरैः पुरवासिभिः अभिपूज्यमानः ॥९६॥

**चट्टि–** अथ पुरप्राप्त्यनन्तरम् । अक्षयं नाशरहितं अविनाशि पौरुषं सामर्थ्यं यस्य । अत एव ईशोऽसौ श्रीकृष्णः दानपतिं अक्रूरं अग्रे पुरतो विसृज्य, सम्प्रेषयित्वेत्यर्थः । सबलः बलभद्रेण सहितः वयस्यैः गोपैः सहितः सन् पुरीं द्रष्टुं अभिजगाम । नरेन्द्रमार्गे राजमार्गे कुतूहलेन कौतुकेन युतैः पौरैः पुरवासिभिः अभिपूज्यमानः सन् गिरिजायाः पार्वत्याः वरेण मृत्यूज्झितं मरणरहितं कंसस्य दयितं कुञ्जरगतं गजारूढं रजकं आसाद्य प्राप्य, वस्त्राणि ययाचे । तेन रजकेन दुरुक्तिभिः परुषवाग्भिः विद्धः निन्दित इत्यर्थः । तथा सन् सपदि पापं रजकं कराग्रेण हस्ततलेन मृदितं मर्दितं कृत्वा यमाय व्यनयत् प्रेषयामास ॥९६-९७॥

**आसाद्य कुञ्जरगतं रजकं ययाचे वस्त्राणि कंसदयितं गिरिजावरेण ।**
**मृत्यूज्झितं सपदि तेन दुरुक्तिविद्धः पापं [1]कराग्रमृदितं व्यनयद्यमाय॥९७॥**

**वरदराजीया–** आसाद्य प्राप्य कुञ्जरगतं गजारूढं रजकं वस्त्राणि ययाचे । कथम्भूतं रजकं कंसस्य दयितं प्रियं गिरिजायाः पार्वत्याः वरेण मृत्यूज्झितेन रजकेन दुरुक्त्या निन्दरूपया [पारुष्यया]परुषया विद्धः पापं रजकं कराग्रेण मृदितं कृत्वा यमाय व्यनयत् प्रेषयामास ॥९७॥

**जनार्दनीया–** कृष्णः कंसस्य दयितं प्रियं कुञ्जरगतं गजोपरिस्थं रजकं आसाद्य प्राप्य, वस्त्राणि ययाचे । तेन रजकेण दुरुक्तिभिः परुषवाग्भिः विद्धः, निन्दित इत्यर्थः । तथा सन् कराग्रेण हस्ततलेन मृदितं मर्दितं पापं रजकं यमाय व्यनयत् प्रापयामास ॥९७॥

**हत्वा तमक्षतबलो भगवान् प्रगृह्य [2]वस्त्राणि चाऽत्मसमितानि बलस्य चादात् ।**
**दत्वाऽपराणि सखिगोपजनस्य शिष्टान्यास्तीर्य तत्र च पदं प्रणिधाय चागात् ॥**

**वरदराजीया–** तं रजकं हत्वा वस्त्राणि आत्मनः समितानि योग्यानि प्रगृह्य बलस्य बलभद्राय चादात् । अपराणि वस्त्राणि सखिभ्यो गोपजनेभ्यो दत्वा शिष्टान्यवशिष्टानि मार्गे आस्तीर्य तत्र आस्तीर्णेषु वस्त्रेषु पदं प्रणिधाय स्थापयन् एवागात् ॥९८॥

**भावविवृति–** भगवान् प्रगृह्य वस्त्राणि चात्मसमितानि बलस्य चादात् इत्यत्र आत्मसमितानि स्वेन गृहीतवस्त्रसदृशानि बलस्याप्यदादित्यर्थः ॥९८॥

---

१. 'इत्थं विकत्थमानस्य कुपितो देवकीसुतः । रजकस्य कराग्रेण शिरः कायादपाहरत् ॥' इति भागवते १०.३९.३६
२. 'वसित्वात्मप्रिये वस्त्रे कृष्णः सङ्कर्षणस्तथा । शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित्॥' इति भागवते १०.३९.३८

**स्तुत्वा वरस्तुतिभिरव्ययमब्जनाभं सोऽन्तर्हिते[1] भगवति स्वकमारुरोह ।**
**यानं च तेन सहितो भगवान् जगाम सायं पुरीं सहबलो मधुरामनन्तः ॥९५॥**

**मधुसूदनीया–॥ सायं पुरीमिति ॥** सायमपराह्ण इत्यर्थः । 'तत्रापराह्णे भगवान् कृष्णस्सङ्कर्षणान्वितः। मथुरां प्राविशत् गोपैर्दिदृक्षुः परिवारितः ॥' इति दशमस्कन्धवचनात् [३९.१९] । यद्वा त्रिमुहूर्ते उर्वरितेत्यर्थः ॥९५-१००॥

**वरदराजीया–** वरस्तुतिभिः स्तुत्वा भगवति अन्तर्हिते अन्तर्धानं प्राप्ते सति स्वकं यानमारुरोह । तेनाक्रूरेण क्रमेण मधुरापुरीम् ॥९५॥

**जनार्दनीया–** सोऽक्रूरः अन्तर्हिते अदृश्ये सति स्वकं यानं आरुरोह । बलेन सहितः सहबलः कृष्णः तेनाक्रूरेण सायं सायङ्काले मधुरां पुरीं जगाम ॥९५॥

**चट्टि–** सोऽक्रूरः अव्ययं नाशरहितं अब्जनाभं श्रीकृष्णं वरस्तुतिभिः स्तुत्वा भगवति अन्तर्हिते अदृश्ये सति स्वकं यानं आरुरोह । बलेन सहितः सबलः भगवाननन्तः श्रीकृष्णः तेनाक्रूरेण सहितस्सन् सायं अपराह्णे इत्यर्थः । मधुरां पुरीं जगाम । 'तत्रापराह्णे भगवान् कृष्णः सङ्कर्षणान्वितः । मधुरां प्राविशत् गोपैः दिदृक्षुः परिवारितः ॥' इति दशमस्कन्धवचनात् ॥९५॥

**[2]अग्रेऽथ दानपतिमक्षयपौरुषोऽसावीशो विसृज्य सबलः सहितो वयस्यैः ।**
**द्रष्टुं पुरीमभिजगाम नरेन्द्रमार्गे पौरैः कुतूहलयुतैरभिपूज्यमानः ॥९६॥**

**व्यासतीर्थीया–** पौरुषं सामर्थ्यम् । तत्प्रसङ्गोचितं विशेषणम् । दानपतिं विसृज्य नन्दादींश्चोद्याने संस्थाप्य ॥९६-९८॥

**वरदराजीया–** अक्षयं पौरुषं यस्य स, ईशो अग्रे दानपतिं विसृज्य प्रेषयित्वा वयस्यैः गोपैः सहितः सबलः बलभद्रेण सहितः पुरीं द्रष्टुं जगाम । तत्र नरेन्द्रमार्गे राजमार्गे कुतूहलेन कौतूहलेन युतैः पौरैः पुरस्थैः अभिपूज्यमानः सन् ॥९६॥

**जनार्दनीया–** अथ पुरप्राप्त्यनन्तरम् । अक्षयं अविनाशि पौरुषं सामर्थ्यं यस्य । अत एव

---

१. 'स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः । भूयः समाहरत् कृष्णो नटो नाट्यमिवात्मनः ॥' इति भागवते.१०.३९.१

२. 'तान् समेत्याह भगवानक्रूरं जगदीश्वरः । गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव । भवान् प्रविशतामग्रे सहयानः पुरीं गृहम् । वयं त्विहावमुच्याथ तावद् द्रक्ष्यामहे पुरीम् ॥' इति भागवते.१०.३९.९-१०॥ हरिवंशादिषु अक्रूर एव 'अहं वां विसृज्य गच्छामि' इत्युक्त्वा तौ मथुरापुरीदर्शनार्थं त्यक्त्वा कंसान्तिकं जगाम इति कथा श्रूयते ।

ईशोऽसौ कृष्णः दानपतिं अक्रूरं अग्रे पुरतो विसृज्य सम्प्रेष्येत्यर्थः । पुरीं द्रष्टुं अभिजगाम । कथम्भूतः? नरेन्द्रमार्गे राजमार्गे कुतूहलेन कौतुकेन युतैः पौरैः पुरवासिभिः अभिपूज्यमानः ।।९६।।

**चट्टि–** अथ पुरप्राप्त्यनन्तरम् । अक्षयं नाशरहितं अविनाशि पौरुषं सामर्थ्यं यस्य । अत एव ईशोऽसौ श्रीकृष्णः दानपतिं अक्रूरं अग्रे पुरतो विसृज्य, सम्प्रेषयित्वेत्यर्थः । सबलः बलभद्रेण सहितः वयस्यैः गोपैः सहितः सन् पुरीं द्रष्टुं अभिजगाम । नरेन्द्रमार्गे राजमार्गे कुतूहलेन कौतुकेन युतैः पौरैः पुरवासिभिः अभिपूज्यमानः सन् गिरिजायाः पार्वत्याः वरेण मृत्यूज्झितं मरणरहितं कंसस्य दयितं कुञ्जरगतं गजारूढं रजकं आसाद्य प्राप्य, वस्त्राणि ययाचे । तेन रजकेन दुरुक्तिभिः परुषवाग्भिः विद्धः निन्दित इत्यर्थः । तथा सन् सपदि पापं रजकं कराग्रेण हस्ततलेन मृदितं मर्दितं कृत्वा यमाय व्यनयत् प्रेषयामास ।।९६-९७।।

**आसाद्य कुञ्जरगतं रजकं ययाचे वस्त्राणि कंसदयितं गिरिजावरेण ।**
**मृत्यूज्झितं सपदि तेन दुरुक्तिविद्धः पापं [1]कराग्रमृदितं व्यनयद्यमाय।।९७।।**

**वरदराजीया–** आसाद्य प्राप्य कुञ्जरगतं गजारूढं रजकं वस्त्राणि ययाचे । कथम्भूतं रजकं कंसस्य दयितं प्रियं गिरिजायाः पार्वत्याः वरेण मृत्यूज्झितेन रजकेन दुरुक्त्या निन्दरूपया [पारुष्यया]परुषया विद्धः पापं रजकं कराग्रेण मृदितं कृत्वा यमाय व्यनयत् प्रेषयामास ।।९७।।

**जनार्दनीया–** कृष्णः कंसस्य दयितं प्रियं कुञ्जरगतं गजोपरिस्थं रजकं आसाद्य प्राप्य, वस्त्राणि ययाचे । तेन रजकेण दुरुक्तिभिः परुषवाग्भिः विद्धः, निन्दित इत्यर्थः । तथा सन् कराग्रेण हस्ततलेन मृदितं मर्दितं पापं रजकं यमाय व्यनयत् प्रापयामास ।।९७।।

**हत्वा तमक्षतबलो भगवान् प्रगृह्य [2]वस्त्राणि चाऽत्मसमितानि बलस्य चादात् ।**
**दत्वाऽपराणि सखिगोपजनस्य शिष्टान्यास्तीर्य तत्र च पदं प्रणिधाय चागात् ।।**

**वरदराजीया–** तं रजकं हत्वा वस्त्राणि आत्मनः समितानि योग्यानि प्रगृह्य बलस्य बलभद्राय चादात् । अपराणि वस्त्राणि सखिभ्यो गोपजनेभ्यो दत्वा शिष्टान्यवशिष्टानि मार्गे आस्तीर्य तत्र आस्तीर्णेषु वस्त्रेषु पदं प्रणिधाय स्थापयन् एवागात् ।।९८।।

**भावविवृति–** भगवान् प्रगृह्य वस्त्राणि चात्मसमितानि बलस्य चादात् इत्यत्र आत्मसमितानि स्वेन गृहीतवस्त्रसदृशानि बलस्याप्यदादित्यर्थः ।।९८।।

---

१. 'इत्थं विकत्थमानस्य कुपितो देवकीसुतः । रजकस्य कराग्रेण शिरः कायादपाहरत् ।।' इति भागवते १०.३९.३६
२. 'वसित्वात्मप्रिये वस्त्रे कृष्णः सङ्कर्षणस्तथा । शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित्।।' इति भागवते १०.३९.३८

**अनन्तभट्टीया–** समितानि उचितानि ।।९८।।

**जनार्दनीया–** आत्मसमितानि स्वोचितानि प्रगृह्य स्वीकृत्य बलस्य च तत्सम्मितानीत्यर्थः । अदात् । सखा चासौ गोपजनश्चेति विग्रहः । सखिभूतगोपसमूहस्येत्यर्थः । अपराणि दत्वा, शिष्टानि उर्वरितानि आस्तीर्य पथि विस्तृत्य तत्र विस्तृतवस्त्रेषु पदं पादविन्यासं प्रणिधाय कृत्वा अगात् ।।९८।।

**ताम्रपर्णीया–** आत्मसमितानि आत्मयोग्यानि पीताम्बरादीनि ।।९८-१०५।।

**चट्टि–** अक्षतबलो भगवान् श्रीकृष्णः एवं तं रजकं हत्वा आत्मसमितानि स्वोचितानि वस्त्राणि प्रगृह्य स्वीकृत्य, बलस्य बलभद्राय च तत्सम्मितानि अदात् । सखा चासौ गोपजनश्च सखिगोपजनः सखिभूतगोपजनस्य च अपराणि वस्त्राणि दत्वा, शिष्टानि उर्वरितानि च आस्तीर्य पथि विस्तृत्य, तत्र विस्तृतवस्त्रेषु पदं पादविन्यासं च प्रणिधाय कृत्वा अगात् ।।९८।।

**ग्राह्यापहेयरहितैकचिदात्मसान्द्रस्वानन्दपूर्णवपुरप्ययशोषहीनः ।**
**लोकान् विडम्ब्य नरवत् समलक्तकाद्यैर्वप्त्रा विभूषित इवाभवदप्रमेयः ।।९९।।**

**व्यासतीर्थीया–** ग्राह्यापहेयरहितत्वे निमित्तम्– **एकचिदित्यादि** ।। विभूषित इव ।।९९-१०२।।

**वेदाङ्गतीर्थीया–** समलक्तकाद्यैः समीचीनालक्तकाद्यैः । वप्त्रा नापितेन ।।९९।।

**वादिराजीया–** ग्राह्यापहेयेत्यत्र भावप्रधानो निर्देशः । ग्राह्यत्वापहेयत्वाभ्यां रहितं केवलं ग्राह्यमेवेत्यर्थः । मनुष्यदेहेषु वामकरादिकमपहेयं दक्षिणकरादिकं ग्राह्यमिति विभागोऽस्ति । भगवद्वपुः सर्वत्र परममङ्गलमित्यर्थः। वप्त्रा वपनकर्त्रा, नापितनेत्यर्थः ।।९९।।

**सत्याभिनवतीर्थीया–** तत्रैव ग्राह्यापहेयरहितैकचिदात्मसान्द्र...इति श्लोके 'ग्राह्यापहेय' इत्यत्र ग्राह्यशब्देन स्वीकार्यग्रहणं अपशब्देन वर्ज्यग्रहणं हेयेत्यनेन अस्वीकार्यग्रहणमिति द्रष्टव्यम् । एतेन अपशब्दो व्यर्थ इति दूषणं परास्तम् । अपशब्देन 'अप परिवर्जने' इति वचनानुसारेण वर्ज्यस्य स्वीकरणात् । एतेनैव हेत्येतत् अपेत्यनेन पुनरुक्तमिति दूषणं परात्तम् । हेत्येत्यनेन त्याज्यं नोच्यते किन्तु अस्वीकार्यमुच्यते इत्यङ्गीकारात् ।

तदनन्तरमेव लोकान् विडम्ब्य नरवत्समलक्तकाद्यैः...इत्यस्ति । तस्यार्थः । लोकान् विडम्ब्य सर्वदा स्थितः अप्रमेयः कृष्णः नरवत् समलक्तकाद्यैः समीचीनालक्तककेशच्छेदाद्यैः विभूषित इवाभवदिति । लोकान् विडम्ब्य सर्वदा स्थित इत्युक्त्या लोकविडम्बनस्वभावत्वात् लोकविडम्बनार्थं वप्त्रा विभूषित इवाभवदित्युक्तं भवति । एतेन लोकविडम्बनार्थं वप्त्रा विभूषित इवाभवदिति वक्तव्यम् । लोकान्

विडम्ब्येति लोकविडम्बनस्य पूर्वभावित्वकथनमनुपपन्नमिति दूषणं परिहृतम् । लोकान् विडम्ब्येत्यतः परं सर्वदा स्थित इत्यनयोः पदयोः शेषमङ्गीकृत्य लोकविडम्बनार्थं वप्त्रा विभूषित इवाभवदिति तात्पर्यार्थस्योक्तत्वात् ।।९९।।

**वरदराजीया–** ग्राह्यापहेयाभ्यां उपादेयहेयाभ्यां रहितं चिदात्मकसान्द्रस्वानन्दपूर्णं वपुर्यस्य स । अप्ययशोषाभ्यां हीनोऽपि लोकान् विडम्ब्य अनुकृत्य समीचीनैः अलक्तकाद्यैः द्रव्यैः वप्त्रा नापितेन विभूषित इवाभवत् ।।९९।।

**भावविवृति–** अप्ययशोषहीन इत्यत्र अप्ययो नाशः शोषः शोषणं ताभ्यां हीन इति । टीकायां तु 'अपि अशोषहीन इति पदविभागं कृत्वा अयो वृद्धिः शोषो ह्रासस्ताभ्यां हीन' इत्युक्तम् । वप्त्रा विभूषित इवेत्यत्र भगवन्नखकेशादीनां भगवताऽभिन्नत्वात् प्राकृतकेशादिकं सृष्ट्वा पतितं दर्शयामस इति ज्ञेयम् । 'तस्मादानन्दचिद्देहं शिरोमुखं चिदानन्दभुजं ज्ञानसुखैकपदसाङ्गुलिम्, आकेशादानखाग्रेभ्यः पूर्णचित्सुखशक्तिमान्' इत्यादिबृहद्भाष्यदिशा भगवन्नखमण्यादीनां अपि भगवत्स्वरूपत्वाभिधानात् ।।९९।।

**अनन्तभट्टीया–** वप्त्रा नापितेन ।।९९।।[१]

**जनार्दनीया–** ग्राह्येण स्वीकर्तुं योग्यमण्डनद्रव्येण, अपहेयेन परित्यागयोग्येन नखलोमादिना, रहितं एकं चिदात्मकं मुख्यज्ञानात्मकं, सान्द्रस्वानन्देन निबिडस्वरूपानन्देन पूर्णं वपुर्यस्य स तथा । अयशोषहीनोऽपि अयो वृद्धिः, शोषः ह्रासः ताभ्यां रहितोऽपि । नखलोमाद्यवयवानां वृद्धिह्रासाभ्यां रहित इति भावः । अप्रमेयः ज्ञातुमशक्यः कृष्णः लोकान् विडम्ब्य अनुकृत्य नरवत् समीचीनं अलक्तकं लाक्षाविकाराः तदादिधातुभिः वप्त्रा नापितेन विभूषित इव अलङ्कृत इवाभवत् ।।९९।।

**भावचन्द्रिका–** सन्ध्याकाले वपनमकीर्तिकरमित्यत आह– **अयशोषविहीन इति** ।।९९।।

**चट्टि–** ग्राह्येण स्वीकर्तुं योग्यमण्डनद्रव्येण, अपहेयेन परित्यागयोग्येन नखरोमादिना, रहितं एकं चिदात्मकं मुख्यज्ञानात्मकं, सान्द्रस्वानन्देन स्वरूपानन्देन पूर्णं वपुर्यस्य स तथा । अपि अयशोषहीनः इति पदविभागः । अयो वृद्धिः, शोषः ह्रासः ताभ्यां रहितोऽपि । नखरोमाद्यवयवानां वृद्धिह्रासाभ्यां रहित इति भावः । अप्रमेयः ज्ञातुमशक्यः श्रीकृष्णः लोकान् विडम्ब्य अनुकृत्य नरवत् मनुष्यवत् समीचीनैः अलक्तकाद्यैः द्रव्यैः वप्त्रा नापितेन विभूषित इव अलङ्कृत इवाभवत् ।।९९।।

---

१. अनन्तभट्टीया– अप्रमयः अप्रमेयः । इति हो.पुस्तके अधिकः पाठः ।

**अनन्तभट्टीया–** समितानि उचितानि ।।९८।।

**जनार्दनीया–** आत्मसमितानि स्वोचितानि प्रगृह्य स्वीकृत्य बलस्य च तत्सम्मितानीत्यर्थः । अदात् । सखा चासौ गोपजनश्चेति विग्रहः । सखिभूतगोपसमूहस्येत्यर्थः । अपराणि दत्वा, शिष्टानि उर्वरितानि आस्तीर्य पथि विस्तृत्य तत्र विस्तृतवस्त्रेषु पदं पादविन्यासं प्रणिधाय कृत्वा अगात् ।।९८।।

**ताम्रपर्णीया–** आत्मसमितानि आत्मयोग्यानि पीताम्बरादीनि ।।९८-१०५।।

**चट्टि–** अक्षतबलो भगवान् श्रीकृष्णः एवं तं रजकं हत्वा आत्मसमितानि स्वोचितानि वस्त्राणि प्रगृह्य स्वीकृत्य, बलस्य बलभद्राय च तत्सम्मितानि अदात् । सखा चासौ गोपजनश्च सखिगोपजनः सखिभूतगोपजनस्य च अपराणि वस्त्राणि दत्वा, शिष्टानि उर्वरितानि च आस्तीर्य पथि विस्तृत्य, तत्र विस्तृतवस्त्रेषु पदं पादविन्यासं च प्रणिधाय कृत्वा अगात् ।।९८।।

**ग्राह्यापहेयरहितैकचिदात्मसान्द्रस्वानन्दपूर्णवपुरप्ययशोषहीनः ।**
**लोकान् विडम्ब्य नरवत् समलक्तकाद्यैर्वप्त्रा विभूषित इवाभवदप्रमेयः ।।९९।।**

**व्यासतीर्थीया–** ग्राह्यापहेयरहितत्वे निमित्तम्– **एकचिदित्यादि** ।। विभूषित इव ।।९९-१०२।।

**वेदाङ्गतीर्थीया–** समलक्तकाद्यैः समीचीनालक्तकाद्यैः । वप्त्रा नापितेन ।।९९।।

**वादिराजीया–** ग्राह्यापहेयेत्यत्र भावप्रधानो निर्देशः । ग्राह्यत्वापहेयत्वाभ्यां रहितं केवलं ग्राह्यमेवेत्यर्थः । मनुष्यदेहेषु वामकरादिकमपहेयं दक्षिणकरादिकं ग्राह्यमिति विभागोऽस्ति । भगवद्वपुः सर्वत्र परममङ्गलमित्यर्थः। वप्त्रा वपनकर्त्रा, नापितनेत्यर्थः ।।९९।।

**सत्याभिनवतीर्थीया–** तत्रैव ग्राह्यापहेयरहितैकचिदात्मसान्द्र...इति श्लोके 'ग्राह्यापहेय' इत्यत्र ग्राह्यशब्देन स्वीकार्यग्रहणं अपशब्देन वर्ज्यग्रहणं हेयेत्यनेन अस्वीकार्यग्रहणमिति द्रष्टव्यम् । एतेन अपशब्दो व्यर्थ इति दूषणं परास्तम् । अपशब्देन 'अप परिवर्जने' इति वचनानुसारेण वर्ज्यस्य स्वीकरणात् । एतेनैव हेत्येतत् अपेत्यनेन पुनरुक्तमिति दूषणं परात्तम् । हेत्येत्यनेन त्याज्यं नोच्यते किन्तु अस्वीकार्यमुच्यते इत्यङ्गीकारात् ।

तदनन्तरमेव लोकान् विडम्ब्य नरवत्समलक्तकाद्यैः...इत्यस्ति । तस्यार्थः । लोकान् विडम्ब्य सर्वदा स्थितः अप्रमेयः कृष्णः नरवत् समलक्तकाद्यैः समीचीनालक्तककेशच्छेदाद्यैः विभूषित इवाभवदिति । लोकान् विडम्ब्य सर्वदा स्थित इत्युक्त्या लोकविडम्बनस्वभावत्वात् लोकविडम्बनार्थं वप्त्रा विभूषित इवाभवदित्युक्तं भवति । एतेन लोकविडम्बनार्थं वप्त्रा विभूषित इवाभवदिति वक्तव्यम् । लोकान्

विडम्ब्येति लोकविडम्बनस्य पूर्वभावित्वकथनमनुपपन्नमिति दूषणं परिहृतम् । लोकान् विडम्ब्येत्यतः परं सर्वदा स्थित इत्यनयोः पदयोः शेषमङ्गीकृत्य लोकविडम्बनार्थं वप्त्रा विभूषित इवाभवदिति तात्पर्यार्थस्योक्तत्वात् ।।९९।।

**वरदराजीया–** ग्राह्यापहेयाभ्यां उपादेयहेयाभ्यां रहितं चिदात्मकसान्द्रस्वानन्दपूर्णं वपुर्यस्य स । अप्ययशोषाभ्यां हीनोऽपि लोकान् विडम्ब्य अनुकृत्य समीचीनैः अलक्तकाद्यैः द्रव्यैः वप्त्रा नापितेन विभूषित इवाभवत् ।।९९।।

**भावविवृति–** अप्ययशोषहीन इत्यत्र अप्ययो नाशः शोषः शोषणं ताभ्यां हीन इति । टीकायां तु 'अपि अशोषहीन इति पदविभागं कृत्वा अयो वृद्धिः शोषो ह्रासस्ताभ्यां हीन' इत्युक्तम् । वप्त्रा विभूषित इवेत्यत्र भगवन्नखकेशादीनां भगवताऽभिन्नत्वात् प्राकृतकेशादिकं सृष्ट्वा पतितं दर्शयामस इति ज्ञेयम् । 'तस्मादानन्दचिद्देहं शिरोमुखं चिदानन्दभुजं ज्ञानसुखैकपदसाङ्गुलिम्, आकेशादानखाग्रेभ्यः पूर्णचित्सुखशक्तिमान्' इत्यादिबृहद्भाष्यदिशा भगवन्नखमण्यादीनां अपि भगवत्स्वरूपत्वाभिधानात् ।।९९।।

**अनन्तभट्टीया–** वप्त्रा नापितेन ।।९९।।[1]

**जनार्दनीया–** ग्राह्येण स्वीकर्तुं योग्यमण्डनद्रव्येण, अपहेयेन परित्यागयोग्येन नखलोमादिना, रहितं एकं चिदात्मकं मुख्यज्ञानात्मकं, सान्द्रस्वानन्देन निबिडस्वरूपानन्देन पूर्णं वपुर्यस्य स तथा । अयशोषहीनोऽपि अयो वृद्धिः, शोषः ह्रासः ताभ्यां रहितोऽपि । नखलोमाद्यवयवानां वृद्धिह्रासाभ्यां रहित इति भावः । अप्रमेयः ज्ञातुमशक्यः कृष्णः लोकान् विडम्ब्य अनुकृत्य नरवत् समीचीनं अलक्तकं लाक्षाविकाराः तदादिधातुभिः वप्त्रा नापितेन विभूषित इव अलङ्कृत इवाभवत् ।।९९।।

**भावचन्द्रिका–** सन्ध्याकाले वपनमकीर्तिकरमित्यत आह– **अयशोषविहीन इति** ।।९९।।

**चट्टि–** ग्राह्येण स्वीकर्तुं योग्यमण्डनद्रव्येण, अपहेयेन परित्यागयोग्येन नखरोमादिना, रहितं एकं चिदात्मकं मुख्यज्ञानात्मकं, सान्द्रस्वानन्देन स्वरूपानन्देन पूर्णं वपुर्यस्य स तथा । अपि अयशोषहीनः इति पदविभागः । अयो वृद्धिः, शोषः ह्रासः ताभ्यां रहितोऽपि । नखरोमाद्यवयवानां वृद्धिह्रासाभ्यां रहित इति भावः । अप्रमेयः ज्ञातुमशक्यः श्रीकृष्णः लोकान् विडम्ब्य अनुकृत्य नरवत् मनुष्यवत् समीचीनैः अलक्तकाद्यैः द्रव्यैः वप्त्रा नापितेन विभूषित इव अलङ्कृत इवाभवत् ।।९९।।

---

१. अनन्तभट्टीया– अप्रमयः अप्रमेयः । इति हो.पुस्तके अधिकः पाठः ।

**[2]मालामवाप्य च [3]सुदामत आत्मतन्त्रस्तावक्षयोऽनुजगृहे निजपार्षदौ हि ।**
**पूर्वं विकुण्ठसदनाद्धरिसेवनाय प्राप्तौ भुवं मृजनपुष्पकरौ पुराऽपि ॥१००॥**

**वेदाङ्गतीर्थीया–** सुदामतः सुदामनाममालाकारात् ॥१००-१०३॥

**वादिराजीया–** 'मृजू शुद्धौ' इति धातोः मृजनं मार्जनं नखश्मश्र्वादिमुण्डनम् । वप्त्रा अलङ्काराय नखश्मश्र्वादीनां यथायोग्यं ईषदीषच्छेदनकाले आनन्दमयं स्वनखादिकं स्वशक्त्यैव यथालङ्कारो भवति तथा सङ्कोचयित्वा प्राकृतनखकेशाग्रादिकं निर्मायाधःपातयतीति मन्दानां बुद्धिं मोहयति । ज्ञानिनां तु अस्मदुक्तविधया तत्त्वमेव बोधयति । अन्यथा घनीभूतशतकोटियोजनसौवर्णब्रह्माण्डभेदनेऽप्यच्छिन्ननखाग्रं कः छिन्द्यादिति अनुसन्धेयम् ॥१००-१०१॥

**वरदराजीया–** सुदामतः तन्नामकात् मालाकारात् मालाश्चावाप्य हि यस्मात् निजपार्षदौ तस्मात् तौ नसृमालाकारौ अनुजगृहे अनुग्रहविषयौ चक्रे । निजपार्षदौ इत्येतद्दर्शयति– **पूर्वमिति** ॥ पुरा पूर्वजन्मन्यपि मृजनपुष्पकरौ भूषणमालाकारौ हरेः सेवनाय पूर्वमेव कृष्णावतारात् भुवं भूमिं प्राप्तौ ॥१००॥

**भावविवृति–** निजपार्षदौ हि पूर्वं विकुण्ठसदनात् । पुरापीत्यत्र नीचकर्म कुर्वते नीचजन्मवतश्च कथं विष्णुलोकेऽवस्थानम्, विष्णुलोके स्थितस्य पुनः कर्मभूमौ जननं कथमिति चेदुच्यते । देवयोनयो बहवः । तेष्वपि ब्राह्मणादिवर्णाः प्रतिलोमानुलोमतश्च भवन्ति । तेषु गन्धर्वो नापित इत्युच्यते । ते च संसारिण एव विष्णुवरादेव विष्णुलोके निवसन्ति । प्रारब्धादिना भूमौ जनिरिति वक्तव्यम् । तदेतदुक्तं तृतीयस्कन्धे– 'देवसर्गश्चाष्टविध' इत्यादिना । तात्पर्ये च 'प्रोक्ता अष्टविधा देवा' इत्यादिना । उक्तञ्च विष्णुरहस्ये–

शौनकः–

'भृग्विन्द्रद्युम्नसंवादात् यदुक्तं हरिचेष्टितम् । तदेव विस्तराद्ब्रूहि तत्र कौतूहलं हि नः ॥
सृष्ट्यादौ भगवान् ब्रह्मा वैराजः पुरुषो महान् । ससर्ज विश्वमखिलं नानारूपमिदं स्वतः ॥
वैजात्यं तत्कथं सूत देवेषु समभूत्तथा । विद्याप्रवृत्तिं लोकेषु प्रवृत्तिं शिल्पिनां तथा ॥
केन रूपेण भगवान् कथं चेदमिहातनोत् ॥

---

२. 'माला अवाप्य' इति वरदराजीयपाठः ।

३. 'ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः । तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥' इति भागवते १०.३९.४२ । हरिवंशादिषु २.२७.१९ 'गुणको नाम तत्रासीत् माल्यवृत्तिः प्रियंवदः' इति मालाकारास्य नामान्तरमुच्यते ।

श्रीसूतः–

जातिभेदस्तु देवेषु ईश्वरेच्छानिबन्धनः । ब्रह्मवर्णपतिर्ब्रह्मा नारदो देवलोऽसितः ।।
बृहस्पतिर्भृगुर्वह्निमरीच्याद्या सनादयः । ऋषयः पितरः सर्वे ब्रह्मवर्णाः प्रकीर्तिताः ।।
क्षत्रवर्णपतिर्वायुः प्राणः सूत्र इतीरितः । रुद्राद्याः प्रायशो देवा क्षत्रवर्णाः प्रकीर्तिताः ।।
अश्विनौ धनदो विश्वकर्मा विद्याधरादयः । वैश्यवर्णाः पतिस्तेषां धनदं व्यदधाद्धरिः ।।
एक एव यमो देवो धर्म काल इति द्विधा । धर्मो विप्रः कालः शूद्रवर्णाध्यक्षोऽथ दूतकाः ।।
यक्षाश्च गुह्यकाश्चापि शूद्रवर्णाः प्रकीर्तिताः । विश्वावसुश्चित्ररथः तथा चित्राङ्गदादयः ।।
अष्टौ गन्धर्वपतयो प्रोक्ता मूर्धावसिक्तकाः । तथा केचिद्देवगणाः युद्धकर्मविशारदाः ।।
क्षत्रियादित्रिवर्णेषु ब्राह्मणादनुलोमिनः । मूर्धावसिक्तकाम्बष्टास्तथा पाराशवस्त्विति ।।
ब्रह्मविट्शूद्रयोषित्सु सूतो माहिष उग्रकः । त्रयः क्षत्रियतो जाता प्रतिलोमानुलोमिनौ ।।
ब्रह्मक्षत्रियशूद्रस्त्रीगर्भजा वैश्यतस्त्रयः । वैदेहो मागधश्चैव करणश्चानुलोमजः ।।
शूद्रचण्डालक्षत्तारौ आयोगव इति त्रयः । ब्राह्मण्यादिषु नारीषु प्रोच्यन्ते प्रतिलोमिनः ।।
क्षत्तार इति विज्ञेया उग्रपारशका इति । एवं द्वादशपूर्वोक्तैः चतुर्भिस्संयुतास्त्वमी ।।
देवाः षोडशजातीया स्वभावादेव जज्ञिरे । मातल्याद्याः सूतजात्या उग्रा ऐरावता द्विपाः ।।
करणाश्चित्रगुप्ताद्या मागधाश्चारणेषु तु । केचित्सूताश्च तत्रापि यक्षाः पाराशवोग्रकाः ।।
पुष्पदन्तश्चारणेशो यक्षेशो नलकूबरः । क्षत्तारो गुह्यकेष्वेव प्रोक्ताः शूद्रानुयायिनः ।।
पिशाचभूतकूष्माण्डा प्रेताश्चण्डालजातयः । घण्टाकर्णः पिशाचेशो भूतेशो भैरवः स्मृतः ।।
कूष्माण्डेशो भृङ्गिरुक्मिः प्रेताधीशस्तथोल्मकः । तुम्बुर्वाद्याश्च गन्धर्वा अम्बष्टा अखिला अपि ।।
आयोगवाश्च महिषा नानाशिल्पविशारदाः । विद्याधरेषु केचित्तु चित्रकेत्वादयो विशः ।।
सर्वरक्षःपतिः प्रोक्तः क्षत्रवर्णोऽथ तद्गणः । ब्रह्मराक्षसवेताला नानाजात्या प्रकीर्तिताः ।।
केवलं कण्ठमाधुर्यात् गायन्तो विविधैः स्वरैः । किन्नरास्ते नरास्या हि हयाकारकबन्धकाः ।।
केचित्किम्पुरुषाश्चान्ये हयास्याः नृकबन्धकाः । गन्धर्वजातयस्तेऽपि सेवन्ते देवतागणान् ।।
सर्ववर्णाश्रमाचारा देवा यद्यपि सर्वशः । तथापि प्रायः स्वाभाव्यात् एतज्जातय ईरिताः ।।
सर्वस्रष्टा यतो विष्णुः नास्य जातिर्नियम्यते । स्वस्वयोग्यतया सर्वे ब्रह्माद्यैः समुपास्यते ।।
इति पञ्चत्रिंशाध्याये [१-३०] ।

'अधिकारस्थिताश्चैव विमुक्ताश्च स्थिता जनाः । विष्णुलोकस्थिताश्चैव वरशापादियोगिनः ।।
अधिकारस्थिता मुक्तिं निश्चयं प्राप्नुवन्ति च । विमुक्त्यनन्तरं तेषां वरशापादयो नहि ।।
इति तात्पर्ये [७.१.३७] ।।१००-१०३।।

**अनन्तभट्टीया–** तौ वमृसुदामानौ ।।१००।।

**जनार्दनीया–** आत्मतन्त्रोऽपि स्वतन्त्रोऽपि कृष्णः सुदामतः सुदामनाम्नो मालाकारात् मालामवाप्य । पूर्वं पूर्वजन्मनि तौ वमृपुष्पकरौ हरेः पार्षदौ, विकुण्ठस्य नारायणस्य सदनाद् वैकुण्ठस्थानाद् हरिसेवनाय कृष्णस्य सेवार्थं भुवं प्राप्तौ हि यतः अतः अनुजगृहे अनुग्रहं चकार । पुरा हि पुरापि मृजनपुष्पकरौ नापितमालाकारौ पार्षदावित्यर्थः ।।१००।।

**चट्टि–** अक्षयः नाशरहितः आत्मतन्त्रोऽपि स्वतन्त्रः श्रीकृष्णः सुदामतः तन्नाम्नो मालाकारात् मालां चावाप्य, हि यस्मात् निजपार्षदौ तस्मात् तौ वमृमालाकरौ अनुजगृहे अनुग्रहविषयौ चक्रे । निजपार्षदौ इत्येतद् दर्शयति– **पूर्वमिति** ।। पुरा पूर्वजन्मनि अपि मृजनपुष्पकरौ नापितमालाकारौ पार्षदावित्यर्थः तौ हरेः श्रीकृष्णस्य सेवनाय सेवार्थं पूर्वं श्रीकृष्णावतारात् पूर्वं विकुण्ठस्य श्रीनारायणस्य सदनाद् वैकुण्ठस्थानाद् भुवं भूमिं प्राप्तौ । एतादृशौ अनुजगृहे इति पूर्वेण सम्बन्धः ।।१००।।

**[१]सर्वेष्टपुष्टिमिह तत्र सरूपतां च कृष्णस्तयोर्वरमदादथ राजमार्गे ।**
**गच्छन् ददर्श वनितां नरदेवयोग्यमादाय गन्धमधिकं कुटिलां व्रजन्तीम् ।।१०१।।**

**मधुसूदनीया–** ।। **सर्वेष्टपुष्टिमिति** ।। सर्वाभीष्टसहितबलानपत्तिं इति । तच्चोक्तम्–
'मालाकाराय कृष्णोऽपि प्रसन्नः प्रददौ वरान् । श्रीस्त्वां मत्संश्रया भद्रे न कदाचित्त्यजिष्यति ।।
बलहानिर्न ते सौम्य धनहानिरथापि वा । यावद्दिनानि तावच्च न नशिष्यति सन्ततिः ।।
भुक्त्वा च विपुलान् भोगान् त्वमन्ते मत्प्रसादतः । ममानुस्मरणं प्राप्य दिव्यं लोकमवाप्स्यसि ।।'
इति विष्णुपुराणे [५.१९.२४-२६] ।।१०१-१०३।।

**वरदराजीया–** अनुजगृह इत्येतद्दर्शयति– **सर्वेष्ट इति** ।। इह लोके सर्वस्येष्टस्य पुष्टिं पूर्णतां तत्र परलोके सरूपतां सारूप्यं च तयोः पार्षदयोः वरमदात् । राजमार्गे गच्छन् नरदेवस्य राज्ञः योग्यं गन्धं आदाय कंसाय दातुं व्रजन्तीं अधिकं यथा भवति तथा कुटिलां त्रिवक्रां वनितां ददर्श ।।१०१।।

**अनन्तभट्टीया–** तत्र वैकुण्ठे ।।१०१।।

**जनार्दनीया–** कृष्णः तयोः पार्षदयोः इह भुवि सर्वेषां इष्टानां अभीष्टानां पुष्टिं पूर्तिम् । तत्र वैकुण्ठे सरूपतां सारूप्यवरं अदात् । अथ राजमार्गे गच्छन् सन् नरदेवस्य राज्ञः योग्यं गन्धमादाय गृहीत्वा, व्रजन्तीं राजगृहं प्रतिगच्छन्तीम्, अधिकं यथा स्यात्तथा कुटिलां वक्रां वनितां नारीं ददर्श ।।१०१।।

---

१.'इति तस्मै वरं दत्वा श्रियं चान्वयवर्धिनीम् । बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः ।।' इति भागवते१०.३९.५१

**चट्टि–** अनुजगृहे इत्येतत् दर्शयति– **सर्वेति** ।। कृष्णः तयोः पार्षदयोः इह भुवि सर्वेषां इष्टानां अभीष्टानां पुष्टिं पूर्तिं तत्र वैकुण्ठे सरूपतां सारूप्यं च वरं अदात् । तथाचोक्तम्– 'मालाकाराय कृष्णोऽपि प्रसन्नः प्रददौ वरान् । श्रीस्त्वां मत्संश्रयं भद्र न कदाचित् त्यजिष्यति ।। बलहानिर्न ते सौम्य धनहानिरथापि वा । यावद्दिनानि तावच्च न नशिष्यति सन्ततिः ।। भुक्त्वा च विपुलान् भोगान् त्वमन्ते मत्प्रसादजम् । ममानुस्मरणं प्राप्य दिव्यं लोकमवाप्स्यसि ।।' इति विष्णुपुराणे । अथ श्रीकृष्णः राजमार्गे गच्छन् सन् नरदेवस्य राज्ञः योग्यं गन्धमादाय गृहीत्वा, व्रजन्तीं कंसाय दातुं व्रजन्तीं अधिकं यथा भवति तथा कुटिलां वक्रां वनितां नारीं ददर्श ।।१०१।।

**तेनार्थिता सपदि गन्धमदात् त्रिविक्रा**
**तेनाग्रजेन सहितो भगवान् लिलिम्पे ।**
**तां चाऽऋजुत्वमनयत् स तयाऽर्थितोऽल-**
**मायामि कालत इति प्रहसन्नमुञ्चत् ।।१०२।।**

**वादिराजीया–** प्रहसन्नमुञ्चदित्युक्त्या कचिदमुञ्चदित्यादिना लौकिकप्रयोगं करोमि । क्वचिदमुचदित्यादिना वैदिकप्रयोगं करोमि । अतोऽहं लौकिकालौकिकपाण्डित्यचतुरत्वात् त्रैलोक्याचार्य इति सूचितम् ।।१०२।।

**वरदराजीया–** तेन कृष्णेनार्थिता सपदि तत्क्षणमेव गन्धमदात् । तेन गन्धेन लिलिम्पे लेपनं कृतवान् । तां वनितां ऋजुत्वमवक्रत्वं अनयत् प्रापयामास । तया अलं अर्थितः कालतः कालान्तरे आयामि आगमिष्यामि इति प्रहसन् अमुञ्चत् प्रेषयामास ।।१०२।।

**अनन्तभट्टीया–** अर्थितः मन्मन्दिरं प्रति आगन्तव्यमिति अर्थितः । कालतः कालान्तरे ।।१०२।।

**जनार्दनीया–** तेन कृष्णेन अर्थिता त्रिवक्रा सपदि शीघ्रं अविचार्येत्यर्थः । गन्धं अदात् । तेन गन्धेन लिलिम्पे लेपनमकरोत् । तां च ऋजुत्वं वक्राभावं अनयत् । तया सैरन्ध्रिकया अर्थितः तव सङ्गो भवत्वित्यलं प्रार्थितः स कृष्णः कालतः कालान्तरे आयामीति प्रहसन्नमुञ्चत् तां मुमोच।।१०२।।

**चट्टि–** तेन श्रीकृष्णेन अर्थिता त्रिवक्रा सपदि तत्क्षणमेव अविचार्येत्यर्थः । गन्धं अदात् । अग्रजेन सहितो भगवान् श्रीकृष्णः तेन गन्धेन लिलिम्पे लेपनमकरोत् । सः श्रीकृष्णः तां वनितां ऋजुत्वं अवक्रत्वं अनयत् । तया सैरन्ध्रिकया अर्थितः तव सङ्गो भवत्वित्यलं प्रार्थितः सन् कालतः कालान्तरे आयामि आगमिष्यामीति प्रहसन्नमुञ्चत् ।।१०२।।

**पूर्णेन्दुवृन्दनिवहाधिककान्तिकान्तसूर्यामितोरुपरमद्युतिसौख्यदेहः ।**
**पीताम्बरः कनकभासुरगन्धमाल्यः शृङ्गारवारिधिरगण्यगुणार्णवोऽगात् ।।१०३।।**

**व्यासतीर्थीया–** शृङ्गारो मनोहारी रसः ।।१०३।।

**वादिराजीया–** पूर्णेन्दुवृन्दनिवहेत्यत्र पूर्णेन्दुवृन्दमेव नितरां वहत् आधारभूतं यस्याः कान्तेः सा पूर्णेन्दुवृन्दनिवहा ततोऽप्यधिका या कन्तिः तया कान्तश्चासौ । सूर्यैर्मिता न भवतीति सूर्यामिता । एतादृशी उर्वी बहुला परमा उत्तमा द्युतिर्यस्य स तथोक्तः । ईदृशसौख्यमयदेहो यस्य स इति समासः । भक्तानां चन्द्रराशिवदिति शान्ततया दृश्यमानः विद्विषां मध्यन्दिनसूर्यवत् अत्युग्रतया दृश्यमान इति भावः । अतो वृन्दनिवहेत्यत्र पौनरुक्त्याशङ्का गर्भस्रवेणैव गता ।।१०३।।

**वरदराजीया–** पूर्णानामिन्दूनां वृन्दानि राशयः तेषां निवहः समूहः तदधिककान्त्या कान्तः कमनीयः । सूर्यामिता अमितसूर्याः तद्वत् उर्वी परमा द्युतिः यस्य स तथा । सौख्यं देहो यस्य स तथा । ततः पदत्रयस्य कर्मधारयः । पीतमम्बरं यस्य । कनकवद्भासुराणि गन्धमाल्यानि यस्य स । शृङ्गारेण वारिधिरिव अगण्यगुणैरर्णव इव कृष्णोऽगात् ।।१०३।।

**अनन्तभट्टीया–** ।। **पूर्णेति** ।। पूर्णानां इन्दूनां वृन्दानि राशयः तेषां निवहः समूहः तस्मादधिककान्तिः तया कान्तः मनोहरः । सूर्याणां अमितं अमितसूर्यादित्यर्थः, तेभ्योप्युरुः परमा च दीप्तिः यस्य देवस्य स तथोक्तः । सुखमेव सौख्यं तदेव देहः । पश्चात् द्विपदबहुव्रीहिः ।।१०३।।

**जनार्दनीया–** पूर्णेन्दूनां षोडशकलापूर्णचन्द्राणां वृन्दानि । वृन्द इति सङ्ख्याविशेषः । तदुक्तं वायवीये– 'अर्बुदं न्यर्बुदं चैव वृन्दं चैव ततः परम्' इति [उत्तरार्ध अ.३९-९३.]। तेषां निवहाः समूहाः, तेभ्यो अधिका च सा कान्तिश्च, तया कान्तः मनोहरः । 'वृन्दानि समूहास्तेषां निवहा' इति केचित् । अमितसूर्या इति सूर्यामिताः तेभ्यः उर्वी उत्कृष्टा अधिकेत्यर्थः । अत एव परमा श्रेष्ठा द्युतिर्यस्य स तथा । 'कडाराः कर्मधारय' इत्यनेन विशेषणस्य परनिपातः । सुखमेव सौख्यम्, तदेव देहो यस्य स तथा । पूर्णेन्दुवृन्दनिवहाधिककान्तिकान्तश्चासौ सूर्यामितोरुपरमद्युतिश्चासौ सौख्यदेहश्च तथोक्तः । पीतं अम्बरं यस्य स तथा । कनकवत् सुवर्णवत् भासुराणि मनोहराणि गन्धमाल्यानि गन्धाः चन्दनादिद्रव्याणि माल्यानि माला यस्य स तथा । 'माल्यं मालाप्रसूनयोः' इत्यभिधानम् । शृङ्गारेण वारिधिरिव वारिधिः समुद्रः अगात् ।।१०३।।

**चट्टि–** पूर्णानां इन्दूनां षोडशकलापरिपूर्णचन्द्राणां वृन्दानि वृन्द इति सङ्ख्याविशेषः । तदुक्तम्– 'अर्बुदं न्यर्बुदं चैव वृन्दं चैव ततः परम्' इति वायवीये [उत्तरार्ध अ.३९-९३]। बहुवृन्दानीत्यर्थः। तेषां निवहाः समूहाः तेभ्यो अधिका च सा कान्तिश्च तया कान्तः मनोहरः । 'वृन्दानि समूहास्तेषां निवहा' इति केचित् । सूर्यामिताः अमितसूर्या तेभ्यः उर्वी उत्कृष्टा अधिकेत्यर्थः । अत एव परमा श्रेष्ठा द्युतिर्यस्य स । 'कडाराः कर्मधारय' इत्यनेन विशेषणस्य परनिपातः । सुखस्य भावः सौख्यम्,

तदेव देहो यस्य स तथा । पूर्णेन्दुवृन्दनिवहाधिककान्तिकान्तश्चासौ सूर्यामितोरुपरमद्युतिश्चासौ सौख्यदेहश्च तथोक्तः । पीतं अम्बरं यस्य स तथा । कनकवत् सुवर्णवत् भासुराणि मनोहराणि गन्धमाल्यानि यस्य स तथा । शृङ्गारेण वारिधिरिव अगण्यगुणैरर्णवः एतादृशः श्रीकृष्णः अगात् ।।१०३।।

**प्राप्याथ चाऽयुधगृहं [१]धनुरीशदत्तं**
**कृष्णः प्रसह्य जगृहे [२]सकलैरभेद्यम् ।**
**कांसं स नित्यपरिपूर्णसमस्तशक्ति-**
**रारोप्य चैनमनुकृष्य [३]बभञ्ज मध्ये ।।१०४।।**

**व्यासतीर्थीया–** कंसस्येदं कांसम् । अन्याभेद्यमेतद्धनुः स्वयं कथं बभञ्जेत्यत उक्तम्– **नित्येति** ।।१०४।।

**वेदाङ्गतीर्थीया–** कांसं कंसस्य विद्यमानम् ।।१०४।।

**वादिराजीया–** कांसं कंसस्य विद्यमानम् । आरोप्य चैनमित्यत्र एनं चापम् ।।१०४-१०७।।

**मधुसूदनीया–** ।। **धनुरीशदत्तमिति** ।। तद्धनुः तालत्रयप्रमाणम् । तालो नाम अङ्गुष्ठाग्रमारभ्य मध्यमाङ्गुल्यग्रपर्यन्त इति ज्ञेयम् । 'प्रादेशतालगोकर्णतर्जन्यादि युतेन ते । अङ्गुष्ठेन कनिष्ठस्य वितस्तिर्द्वादशाङ्गुलिः ।।' इत्यभिधानात् मध्यमाङ्गुल्यग्रात् मणिबन्धपर्यन्तो वा तालः ज्ञेयम् ।। ।।१०४-१०७।।

**वरदराजीया–** आयुधानां गृहं प्राप्य ईशेन शिवेन दत्तं धनुः प्रसह्य बलाज्जगृहे । कथम्भूतं धनुः सकलैरभेद्यं कांसं कंसम्बन्धि, नित्यं परिपूर्णा एका मुख्या समस्तविषयिणी शक्तिः यस्य स कृष्णः एतद्धनुरारोप्य मध्ये बभञ्ज ।।१०४।।

**भावविवृति–** कांसं कंसेन प्राप्तम् ।।१०४-११०।।

---

१. ईशदत्तमिति आचार्यचरणाः आहुः । अतः भागवते ऐन्द्रं धनुरित्युक्तं अर्थान्तरे नेयम् । 'ततः पौरान् पृच्छमानो धनुषः स्थानमच्युतः । तस्मिन् प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ।।१५।।'

२. 'अनारोप्यमसम्भेद्यं देवैरपि सवासवैः । तद्गृहीत्वा तदा कृष्णः तोलयामास वीर्यवान् ।। दोर्भ्यां कमलपत्राक्षः प्रहृष्टेनान्तरात्मना ।।' इति हरिवंशे विष्णुपर्वणि २७.४५-४६ । 'जग्राह तद्धनूरत्नं दुर्ग्राह्यं दैवतैरपि' इति हरिवंशे विष्णुपर्वणि २७.५५ । 'तालत्रयं महासारं धनुर्यष्टिमिवेभराट् । बभञ्जैकेन हस्तेन ...।।' इति भागवते १०.४४.२५

३. 'करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् । नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः ।।' इति भागवते १०.४०.१६ ।

**अनन्तभट्टीया–** कांसं कंससम्बन्धि ।।१०४।।

**जनार्दनीया–** अथ नित्यं परिपूर्णा समस्ता सर्वविषया शक्तिर्यस्य स तथा । कृष्णः कांसं कंसस्य विद्यमानं धनुः प्रसह्य बलात्कारेण जगृहे आददे । स कृष्णः तद्धनुः आरोप्य ज्यासहितं कृत्वा अनुकृष्य मध्ये बभञ्ज ।।१०४।।

**चट्टि–** अथ नित्यं परिपूर्णा समस्ता सर्वविषया शक्तिर्यस्य स तथा । श्रीकृष्णः आयुधगृहं प्राप्य ईशेन शिवेन दत्तं अत एव सकलैरभेद्यं कांसं कंसस्य विद्यमानं धनुः प्रसह्य बलात्कारेण जगृहे । स श्रीकृष्णः एतद्धनुः आरोप्य ज्यासहितं कृत्वा अनुकृष्य मध्ये बभञ्ज ।।१०४।।

**तस्मिन् सुरासुरगणैरखिलैरभेद्ये भग्ने बभूव जगदण्डविभेदभीमः ।**
**[1]शब्दः स येन निपपात भुवि प्रभग्नसारोऽसुरो धृतियुतोऽपि तदैव कंसः ।।१०५।।**

**व्यासतीर्थीया–** सारो धैर्यम् ।।१०५।।

**वेदाङ्गतीर्थीया–** प्रभग्नसारः प्रभग्नबलः ।।१०५।।

**वरदराजीया–** तस्मिन् धनुषि भग्ने सति जगदावरणब्रह्माण्डविभेदनभीमरावो बभूव । अनेन शब्देन धृत्या धैर्येण युतोऽपि कंसो भग्नसारो भूत्वा तदैव शब्दश्रवणानन्तरमेव भुवि निपपात । एतादृशशब्दो बभूवेति सम्बन्धः ।।१०५।।

**अनन्तभट्टीया–** ।। **जगदिति** ।। जगतामाधारस्य ब्रह्माण्डस्येत्यर्थः । तस्य विभेदेन भीमम् । निपपातैवेति सम्बन्धः ।।१०५।।

**जनार्दनीया–** तस्मिन् धनुषि भग्ने सति जगद्भिः चतुर्दशलोकैः सहितं अण्डं जगदण्डं, तस्य विभेदवद् आस्फोटवद् आस्फोटजन्यशब्दवदित्यर्थः, भीमः भयजनकशब्दः बभूव । येन धनुःप्रभङ्गशब्देन धृतियुतोऽपि धैर्ययुक्तोऽपि असुरः कंसः । प्रभग्नः सारो बलं यस्य स तथा सन् । तदैव तस्मिन्नेव क्षणे भुवि निपपात । सिंहासनादिति शेषः ।।१०५।।

**चट्टि–** अखिलैः सुरासुरगणैः अभेद्ये तस्मिन् धनुषि भग्ने सति । जगद्भिः चतुर्दशलोकैः सहितं अण्डं जगदण्डं, तस्य विभेदवद् आस्फोटवद् आस्फोटजन्यशब्दवदित्यर्थः, भीमः भयजनकः शब्दः बभूव । तेन धनुःप्रभङ्गशब्देन धृतियुतोऽपि असुरः कंसः प्रभग्नः सारो बलं यस्य स तथा सन् । तदैव तस्मिन्नेव भुवि निपपात । सिंहासनादिति शेषः ।।१०५।।

---

१. 'धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः । पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ।।' इति भागवते.१०.४०.१७ ।।
'ततः प्रचलिता भूमिः नैव भाति च भास्करः । धनुषो भङ्गनादेन भ्रमतीव नभस्तलम् ।।' इति विष्णुपर्वणि २७.५८ ।

**आदिष्टमप्युरुबलं[१] भगवान् स तेन**
**सर्वं निहत्य सबलः प्रययौ पुनश्च ।**
**नन्दादिगोपसमितिं [२]हरिरत्र रात्रौ**
**भुक्त्वा पयोऽन्वितशुभान्नमुवास कामम् ॥१०६॥**

**व्यासतीर्थीया–** तेन धनुःखण्डेन ॥१०६-१०७॥

**वेदाङ्गतीर्थीया–** काममुवास इत्यत्र निर्भयत्वं सूचितम् ॥१०६-१०७॥

**वरदराजीया–** तेन कंसेनादिष्टं प्रेषितं उरुवलं सर्वं निहत्य पुनश्च नन्दादिगोपसमितिं प्रति परावृत्य प्रययौ । अत्र नन्दादिसमीपे पयोन्वितं शुभान्नं भुक्त्वा रात्रौ काममुवास ॥१०६॥

**अनन्तभट्टीया–** तेन धनुःखण्डेन ॥१०६॥

**जनार्दनीया–** भगवानादिष्टं कंसेनाज्ञापितं उरुवलमपि उत्कृष्टसैन्यमपि तेन धनुश्शकलेन निहत्य, पुनः परावृत्येत्यर्थः । नन्दादिगोपानां समितिं समूहं प्रययौ । सबल इत्यनेन बलोऽप्येकधनुश्शकलेन वलं जघानेति द्रष्टव्यम् । 'क्रुद्धौ धनुष आदाय शकले तांश्च जघ्नतुः' इति भागवते [१०.४०.१९]। हरिः अत्र नन्दादिस्थितोद्याने रात्रौ पयसा क्षीरेण अन्वितं शुभान्नं भुक्त्वा कामं स्वेच्छा यथा स्यात् तथा निर्भयेनेत्यर्थः । उवास ॥१०६॥

**ताम्रपर्णीया–** तेन धनुःखण्डेन ॥१०६-१०९॥

**चट्टि–** भगवान् सः श्रीकृष्णः सबलस्सन् तेन कंसेन आदिष्टं आज्ञापितं उरुवलमपि उत्कृष्टसैन्यमपि तेन धनुश्शकलेन निहत्य, तेन इत्यस्यावृत्तिः । पुनः परावृत्येत्यर्थः । नन्दादिगोपानां समितिं समूहं प्रति प्रययौ च । सबल इत्यनेन बलोऽप्येकधनुश्शकलेन कंसबलं जघानेति द्रष्टव्यम् । 'क्रुद्धौ धनुष आदाय शकले तांश्च जघ्नतुः' इति भागवते [१०.४०.१९]। हरिः श्रीकृष्णः अत्र नन्दाद्यधिष्ठितोद्याने रात्रौ पयसा क्षीरेण अन्वितं शुभान्नं भुक्त्वा कामं स्वेच्छा यथा स्यात् तथा निर्भयेन उवास ॥१०६॥

**[३]कंसोऽप्यतीव भयकम्पितहृत्सरोजः प्रातर्नरेन्द्रगणमध्यगतोऽधिकोच्चम् ।**
**मञ्चं विवेश सह जानपदैश्च पौरैर्नानाऽनुमञ्चकगतैर्युवतीसमेतैः ॥१०७॥**

१. 'बलं च कंसप्रहितं हत्वा शालामुखात् ततः । निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसम्पदः ॥' इति भागवते १०.४०.२० ।

२. 'अवनिज्याङ्घ्रियुगलं भुक्त्वा क्षीरोपसेचनम् । ऊषतुस्तां सुखं रात्रीं ज्ञात्वा कंसचिकीर्षितम् ॥' इति भागवते १०.४०.२३।

३. 'कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च । वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः । बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥' इति भागवते १०.४०.२४-२५ ।

**वरदराजीया–** अतीव अत्यन्तं भयेन कम्पितं हृत्सरोजं यस्य स तथा । नरेन्द्राणां गणमध्यगतो अधिकोच्चं अत्यन्तं उन्नतं मञ्चं विवेश । युवतीसमेतैः जानपदैः पौरैश्च अनु मञ्चगतैः साकं सह विवेशेति सम्बन्धः ।।१०७।।

**जनार्दनीया–** कंसोऽप्यतीवभयेन कम्पितं हृत्सरोजं हृदयकमलं यस्य स तथा सन् प्रातः काले युवतीभिः समेतैः । नाना च ते अनुमञ्चकाः उपमञ्चकाः, तेषु गतैर्विद्यमानैः पौरैः पुरवासिभिः जानपदैः देशस्थैः सह नरेन्द्राणां राज्ञां गणमध्यगतः सन् अधिकोच्चं अत्युच्चं मञ्चं विवेश । राजमञ्चानां मध्यस्थं मञ्चं विवेशेति भावः ।।१०७।।

**चट्टि–** कंसोऽप्यतीवभयेन कम्पितं हृत्सरोजं हृदयकमलं यस्य स तथा सन् प्रातः काले युवतीभिः स्त्रीभिः समेतैः । नानाश्च ते अनुमञ्चकाश्च उपमञ्चकाः, तान् गतैः तत्र विद्यमानैः पौरैः पुरवासिभिः जानपदैः देशस्थैश्च सह नरेन्द्राणां राज्ञां गणमध्यगतः सन् अधिकोच्चं अत्युच्चं मञ्चं विवेश । राजमञ्चानां मध्यस्थं मञ्चं विवेशेति भावः ।।१०७।।

**संस्थाप्य नागमुरुरङ्गमुखे कुवल्यापीडं गिरीन्द्रसदृशं करिसादियुक्तम् ।**
**चाणूरमुष्टिकमुखानपि मल्लवीरान् रङ्गे निधाय हरिसंयमनं किलैच्छत्।।१०८।।**

**व्यासतीर्थीया–** किलेत्यपरमार्थे । हरिसंयमनं न भवतीत्यर्थः ।।१०८।।

**वेदाङ्गतीर्थीया–** हरिसंयमनं हरिनिग्रहम् । किलेति अविशेषेच्छासूचितम् [असम्भवमैच्छदिति] ।।१०८।।

**वादिराजीया–** कुवल्यापीडं कुः पृथ्वी सैव वल्ली तामासमन्तात् पीडयतीति कुवल्यापीडः । भूभारभूत इत्यर्थः । तस्यैव कुवलयापीड इति नामान्तरम् ।।१०८-१०९।।

**मधुसूदनीया–** ।। **करिसादियुक्तमिति** ।। करिभिः पार्श्वगजैः सादिना च युक्तमित्यर्थः । 'गजस्य पादरक्षास्ताञ्घ्नतुः पुरुषर्षभौ' इति हरिवंशवचनात् [२.३०.४०]। यत्तु 'करिसादियुतं करिसादिना करिपालकेन युक्तम्' इति व्याख्यानम् । तन्न । सादिशब्देनैव प्रकरणवशेन वा करिपालस्य लाभात् करिपदवैयर्थ्यापत्तेः । उक्तमानविरोधाच्च ।। **हरिसंयमनमिति** ।। हरिसंयमनमित्यत्र हरिपदेन ब्रह्मरुद्रेन्द्रादिसंहर्तृत्वेन हरिसञ्ज्ञकस्य कृष्णस्य संयमनं कथमैच्छदिति परिहासं सूचयति । तथाचोक्तम्– 'ब्रह्माणं इन्द्रं रुद्रं च रामं वरुणमेव च । निगृह्य हरते यस्मात् तस्माद्धरिरितीरितः।।' इति पाद्मे ।।१०८-१२३।।

**वरदराजीया–** ऊरूणि रङ्गमुखे कुवल्यापीडं नागं गजं संस्थाप्य, कथम्भूतं नागं गिरीन्द्रेण सदृशं करिसादिना करिपकेन युक्तं चाणूरादीनपि निधाय हरेः कृष्णस्य संयमनं नियमनमैच्छत् किल । किलेत्यनेन अहो तस्य मौढ्यं यत् सर्वजगन्नियन्तुः नियमनमैच्छदिति सूचयति ।।१०८।।

**अनन्तभट्टीया–** हरिसंयमनं अशक्यमिति सूचयितुं किलेत्युक्तम् ।।१०८।।

**जनार्दनीया–** कंसः उरुरङ्गस्य वररङ्गस्थलस्य मुखे द्वारि करिसादिना हस्तिपेन युक्तं कुवल्यापीडं तदाख्यनागं वारणं संस्थाप्य, चाणूरश्च मुष्टिकश्च तावेव मुखे मुख्यौ येषां ते तथा तान् । हरिसंयमनं कृष्णनिग्रहं ऐच्छत् । किल आश्चर्यम् । स्वाशक्यकार्यमैच्छदिति भावः ।।१०८।।

**भावचन्द्रिका–** पीडकत्वमल्पमिति वक्तुं कुवलयापीडमिति वक्तव्ये अकारलोपेन कुवल्यापीड इत्याह ।।१०८।।

**चट्टि–** कंसः उरुरङ्गस्य वररङ्गस्थलस्य मुखे द्वारि गिरीन्द्रेण सदृशं करिसादिभिः हस्तिपैः उद्युक्तम् । न तु 'करिभिः पार्श्वगजैः सादिभिः' इति व्याख्यानं कुशलम् । तस्यागत्या कल्पनीयत्वात् । 'हस्त्यारोहास्तु सादिनः' इति सादिशब्दः हस्त्यारोहे रूढः । अत्र तु यौगिकः । 'भीमरूपाश्च मातङ्गाः प्रभिन्नकरटामुखाः । चरन्त इव जीमूता सुदन्ताः षाष्टिहायनाः ।। स्वारूढाः युद्धकुशलैः शिक्षिता हस्तिसादिभिः । राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः ।।' इति विराटपर्वणि ।

कुवल्यापीडः कुः पृथिवी सैव वल्ली तां आ समन्तात् पीडयतीति कुवल्यापीडः । भूभारभूत इत्यर्थः । तस्यैव 'कुवल्यापीठ' इति नामान्तरम् । कुवल्यापीडाख्यं नागं संस्थाप्य, चाणूरश्च मुष्टिकश्च तावेव मुख्यौ येषां ते तथा तान् मल्लवीरानपि रङ्गे निधाय, हरेः श्रीकृष्णस्य संयमनं निग्रहणं ऐच्छत् । किल आश्चर्यम् । स्वाशक्यकार्यमैच्छदिति भावः ।।१०८।।

**अक्षोहिणी गणितमस्य बलं च**
**विंशदासीदसह्यमुरुवीर्यमनन्यवध्यम् ।**
**शम्भोर्वरादपि च तस्य सुनीथनामा**
**यः पूर्वमास वृक इत्यसुरोऽनुजोऽभूत् ।।१०९।।**

**व्यासतीर्थीया–** अस्य बलं विंशदासीत् । कथं विशंत्सङ्ख्याकं अक्षौहिणीगणितम् ।।१०९।।

**वेदाङ्गतीर्थीया–** अक्षौहिणीगणितं विंशद्बलं विंशदक्षौहिणीबलमित्यर्थः ।।१०९-११०।।

**सत्याभिनवतीर्थीया–** तत्रैव अक्षौहिणीगणितमस्य बलं च इति श्लोकः । 'अक्षौहिणीगणितमस्य बलं च विंशदासीत्' इत्यस्य यत् बलं गणितं चेत् विंशदक्षौहिणी भवति, तत् बलं अस्य कंसस्य आसीदित्यर्थः । एतेन अक्षौहिणीत्यस्य गणितमित्यनेन समस्तत्वात् विंशदित्यनेनानन्वय इति दूषणं परिहृतम् । 'अक्षौहिणीगणितम्' इत्येतत् एकं पदमित्यनङ्गीकारात् । एतेनैव 'अक्षौहिणीगणितम्' इत्यस्य भिन्नपदत्वेऽपि पदानामनन्वय इति दूषणस्यानवकाशः । यदित्यादेः शेषेणान्वयस्योक्तत्वात् ।।१०९।।

**वरदराजीया–** ।। **विंशदिति** ।। [अक्षौहिणीभिः इत्येतत्] बुद्ध्या विविक्तं अक्षौहिणीभिरिति विंशदित्यनेन सम्बध्यते । विंशदक्षौहिणीभिः गणितमित्यर्थः । असह्यमित्यादि वलस्य विशेषणम् । तस्य कंसस्य सुनीथनामा अनुजोऽभूत् । स पूर्वं क इत्यत उक्तम्– **पूर्वं वृक इत्यसुरो य इति**।।१०९।।

**अनन्तभट्टीया–** विंशदक्षोहिणीगणितं विंशत्यक्षोहिणीकमित्यर्थः । तस्यानुजोऽभूत् ।।१०९।।

**जनार्दनीया–** अस्य कंसस्य असह्यं सोढुमशक्यं बलं सैन्यं अक्षौहिणीभिर्गणितं विंशद् विंशदक्षौहिणीगणितमित्यर्थः । आसीत् । तस्य कंसस्य सुनीथनामा यः अनुजः अभूत् स पूर्वं वृक इति वृकनामा असुरः आस ।।१०९।।

**चट्टि–** शम्भोः वरात् अनन्यवध्यं उरुवीर्यं असह्यं सोढुमशक्यं अस्य कंसस्य बलं सैन्यञ्च । अक्षौहिणीभिर्गणितं विंशद् विंशदक्षौहिणीगणितमित्यर्थः । आसीत् । यः पूर्वं वृकः इत्यसुरः आस सः सुनीथनामा सः तस्य कंसस्य अनुजः अभूत् ।।१०९।।

**सप्तानुजा अपि हि तस्य पुरातना ये सर्वेऽपि कंसपृतनासहिताः स्म रङ्गे ।**
**तस्थुः सराममभियान्तमुदीक्ष्य कृष्णमात्तायुधा युधि विजेतुमजं सुपापाः ।।११०।।**

**व्यासतीर्थीया–** ये पुरातनास्तस्यानुजास्ते सप्तेहापि जन्मन्यनुजा आसन् । ते सर्वेऽपि जनिमन्त हि जेतुं शक्याः । अयं त्वजत्वान्न जेतुं शक्यत इत्युक्तम्– **अजमिति** ।।११०।।

**वादिराजीया–** पुरातना ये इत्यत्र तस्य सुनीथस्य पुरातनाः पूर्वजन्मन्यप्यनुजत्वेन विद्यमानाः ये त एव इहापि सप्त अनुजाः । कंसपृतनसहिताः सन्तः रङ्गे रणरङ्गयोग्यप्रदेशे तस्थुरिति योजना ।।११०।।

**वरदराजीया–** अन्ये सप्तसङ्ख्याका अनुजाश्चासन् । ये पुरातनाः कालनेमिजन्मन्यपि अनुजा इत्यर्थः । कंसस्य पृतनया सेनया सहिता रङ्गे तस्थुः । कथम्भूताः सरामं कृष्णं आयान्तमुद्वीक्ष्य अजं कृष्णं जेतुमात्तायुधाः अत एव सुपापाः ।।११०।।

**अनन्तभट्टीया–** पुरातना ये अनुजास्ते सप्त इह जन्मनि अनुजा ह्यासन् ॥११०॥

**जनार्दनीया–** तस्य कंसस्य पुरातनाः पूर्वजन्मनि विद्यमानाः येऽनुजाः ते सप्त अपि इह जन्मन्यपि अनुजाः सर्वेऽप्यनुजाः सरामं अभियान्तं कृष्णं उदीक्ष्य, अजं कृष्णं युधि विजेतुम् । आत्तानि गृहीतानि आयुधानि यैस्ते तथा सन्तः । कंसस्य पृतनया सेनया सहिताः रङ्गे तस्थुः । अत एव सुपापाः ॥

**ताम्रपर्णीया–** जनिमान् हि जेतुं शक्यः अयं त्वजो न जेतुं शक्य इत्युक्तम्– **अजमिति** ॥११०॥

**चट्टि–** तस्य कंसस्य पुरातनाः पूर्वजन्मनि विद्यमानाः येऽनुजाः ते सप्त अस्मिन् जन्मन्यपि अनुजाः हि । सुपापाः सर्वेऽप्यनुजाः सरामं अभियान्तं श्रीकृष्णं उदीक्ष्य, अजं श्रीकृष्णं युधि जेतुम्, आत्तानि गृहीतानि आयुधानि यैस्ते तथा भूताः सन्तः । कंसस्य पृतनया सेनया सहिताः सन्तः रङ्गे तस्थुः ॥११०॥

**कृष्णोऽपि [१]सूर्य उदिते सबलो वयस्यैः सार्धं जगाम वररङ्गमुखं सुरेशैः ।
संस्तूयमान उरुविक्रम आसुराणां निर्मूलनाय सकलाचरितोरुशक्तिः ॥१११॥**

**व्यासतीर्थीया–** सकलाचरितोरुशक्तिः सकलैरनवतीर्णोरुशक्तिः ॥१११॥

**वेदाङ्गतीर्थीया–** सकलाचरितोरुशक्तिः सकलाचरणे उरुशक्तिः यस्य स तथोक्तः ॥१११॥

**वादिराजीया–** 'सूरसूर्यार्यमादित्य' इत्यनुशासनात् सूरः सूर्यः ॥१११॥

**वरदराजीया–** वलेन सहितैः वयस्यैः सखिभिः सार्धं सुरेशैः संस्तूयमानः असुराणां निर्मूलनाय उन्मूलनाय जगामेति सम्बन्धः ॥१११॥

**भावविवृति–** सकलाचरितोरुशक्तिरित्यत्र सकलसज्जनहितार्थमाचरिता उरु उत्कृष्टा शक्तिर्येनेति ॥१११-११८॥

**अनन्तभट्टीया–** सकलैरतीर्णोरुशक्तिः ॥१११॥

**जनार्दनीया–** उरुविक्रमः उत्कृष्टपराक्रमः । सकलानां सृष्ट्यादिकर्मणां आचरिते आचरणविषये उरुशक्तिर्यस्य स तथा । कृष्णः असुराणां निर्मूलनाय विनाशायेत्यर्थः । जगाम ॥१११॥

**ताम्रपर्णीया–** ॥ **सकलाचरितोरुशक्तिरिति** ॥ सकलैर्ब्रह्मादिभिः आचरिता उपासिता उर्वी शक्तिर्यस्येति विग्रहः । यद्वा भावे क्तः । सकलाचरणे उरुशक्तिमानित्यर्थः ॥१११-११४॥

---

१ 'सूर' इति वादिराजतीर्थपाठः ।

**भारतश्री–** आसुराणां असुरावताराणां कुवलयापीडचाणूरमुष्टिकादीनाम् । तदुक्तं हरिवंशे– रुष्यो नाम दितेः पुत्रः वरिष्ठो दानवेश्वरः । स कुञ्जरत्वमापन्नो दैत्यः कंसस्य वाहनः ।। कुवलत्वमगात् दैत्यः कंसस्यैव स वाहनः ।। योऽसौ कुवलयापीड इति नाम्ना भुवि श्रुतः । वराहश्च किशोरश्च दानवौ तौ महाबलौ । मल्लौ कंसगतौ तौ तु जातौ चाणूरमुष्टिकौ ।।' इति[१] ।।१११।।

**चट्टि–** उरुविक्रमः उत्कृष्टपराक्रमः । सकलाचरितोरुशक्तिः सकलानां सृष्ट्यादिकर्मणां आचरिते आचरणविषये उर्वी शक्तिर्यस्य स तथा । श्रीकृष्णोऽपि उदिते सूर्ये सबलैः बलेन सहितैः वयस्यैः सार्धं सुरेशैः संस्तूयमानस्सन् आसुराणां निर्मूलनाय विनाशाय वररङ्गमुखं जगाम ।।१११।।

**आयन् जगद्गुरुतमो बलिनं गजेन्द्रं रुद्रप्रसादपरिरक्षितमाश्वपश्यत् ।**
**[२]दृष्ट्वोरुरङ्गमुखसंस्थितमीक्ष्य चैभ्यं पापापयाहि न चिरादिति वाचमूचे ।।११२।।**

**व्यासतीर्थीया–** दुष्टस्योदरगम् [दृष्ट्वोरुरङ्ग?] ।।११२।।

**वेदाङ्गतीर्थीया–** आयन् आगच्छत् । रङ्गं तस्य दुष्टजनपूर्णत्वात् दुष्टत्वम् । अग्रे रङ्गाग्रे वासुदेवं प्रति वासुदेवमुद्दिश्य नागं अभियापयते अभिगमयामास ।।११२-११३।।

**वादिराजीया–** दृष्ट्वोरुरङ्गमुखसंस्थितमित्यत्र उरुरङ्गमुखसंस्थितं गजेन्द्रं दृष्ट्वा ऐभ्यं चेक्ष्येति सम्बन्धः । ऐभ्यं इभसम्बन्धिनं यन्तारम् ।।११२।।

**वरदराजीया–** आयन् आगच्छन् गजेन्द्रं अपश्यत् । बलिनमित्यादि गजेन्द्रविशेषणम् । दुष्टानां उरुरङ्गमुखे संस्थितं तं गजेन्द्रं दृष्ट्वा चैभ्यं करिपकं ईक्ष्य न चिरात् अविलम्बेन हे पाप मार्गं मुक्त्वा अपयाहीति वाचमूचे ।।११२।।

**अनन्तभट्टीया–** ।। **दृष्ट्वेति** ।। दृष्ट्वा अस्य उरुरङ्गः तस्य मुखे संस्थितम् । नचिरात् शीघ्रम् ।।११२।।

**जनार्दनीया–** आयन् आगच्छन् कृष्णः । दुष्टस्य कंसस्य उरु रङ्गस्य मुखे द्वारि संस्थितम् । दुष्टैः पूर्णस्योरुरङ्गस्येति वा । गजेन्द्रं अपश्यत् । ऐभ्यं इभसम्बन्धी ऐभ्यः, तं हस्तिपं ईक्ष्य, हे पाप! अपयाहि अपसर मार्गं मुञ्चेति भावः । नचिरात् विलम्बं मा कुर्वित्यर्थः । इति वाचं ऊचे ।।११२।।

**भावचन्द्रिका–** ऐभ्यं इभनियन्तारम् ।।११२।।

---

१. रिष्टो नाम दितेः पुत्रः वरिष्ठो दानवेषु यः । स कुञ्जरत्वमापन्नो दैत्यः कंसस्य वाहनः ।। कुवलत्वमगात् दैत्यः कंसस्यैव स वाहनः ।। वराहश्च किशोरश्च दानवौ यौ महाबलौ । मल्लौ रङ्गगतौ तौ तु जातौ चाणूरमुष्टिकौ ।। इति प्रचलितपाठः ।

२. 'दुष्टोरुरङ्ग' इति व्यासतीर्थीयवेदाङ्गतीर्थीयपाठः ।

**चट्टि–** आयन् आगच्छन् जगतामतिशयेन गुरुः गुरुतमः श्रीकृष्णः । दुष्टस्य कंसस्य उरुरङ्गमुखे द्वारि संस्थितम्, रुद्रस्य प्रसादरूपेण वरेण परिरक्षितं बलिनं गजेन्द्रं आशु अपश्यत् । ऐभ्यं इभसम्बन्धिनं च हस्तिपमित्यर्थः । ईक्ष्य, हे पाप! न चिरेण अविलम्बेन अपयाहि अपसर मार्गं मुञ्चेति भावः । इति वाचं ऊचे ॥११२॥

**क्षिप्तः स ईश्वरतमेन गिरीशलब्धाद् दृप्तो वराज्जगति सर्वजनैरवध्यः ।**
**नागं त्ववध्यमभियापयते ततोऽग्रे पापो दुरन्तमहिमं प्रति वासुदेवम् ॥११३॥**

**व्यासतीर्थीया–** अभियापते स्म ॥११३-११४॥

**वादिराजीया–** दुरन्तमहिमं प्रति वासुदेवमित्यत्र 'डावुभाभ्यामन्यतरस्याम्' [कौ.४६१] इति वचनात् डाबन्तो महिमशब्दोऽस्ति । दुरन्ता महिमा यस्य तं वासुदेवं प्रतीति सम्बन्धः ॥११३-११५॥

**वरदराजीया–** स चैभ्यः क्षिप्तः तिरस्कृतः नागं गजं पुरतो अग्रे दुरन्तमहिमं वासुदेवं प्रति अभियापयते स्म प्रापयामास ॥११३॥

**जनार्दनीया–** गिरिशलब्धात् शिवप्रसादजाद् वराद् दृप्तः मत्तः । जगति विद्यमानैः सर्वजनैः अवध्यः । क्षिप्तः निराकृतः निन्दित इत्यर्थः । स ऐभ्यः ततः रङ्गद्वाराद् अग्रे पुरतः, कृष्णमभीत्यर्थः । दुरन्तमहिमं अवधिरहितमहिमं वासुदेवं कृष्णमुद्दिश्य नागं गजं अभियापयते अभिगमयामास ॥११३॥

**चट्टि–** गिरीशलब्धात् शिवप्राप्ताद् वराद् दृप्तः मत्तः जगति विद्यमानैः सर्वजनैः अवध्यः पापः सः ऐभ्यः ईश्वरतमेन श्रीकृष्णेन क्षिप्तः निराकृतः सन् ततः रङ्गद्वाराद् अग्रे पुरतः, श्रीकृष्णमभीत्यर्थः । दुरन्तमहिमम् । 'डाबुभाभ्यामन्यतरस्याम्' इति वचनात् डाबन्तो महिमशब्दोऽस्ति । अतः दुरन्ता महिमा यस्य तं वासुदेवं प्रति श्रीकृष्णमुद्दिश्य अवध्यं नागं गजं अभियापयते अभिगमयामास ॥११३॥

**विक्रीड्य तेन करिणा भगवान् स किञ्चित्**
**हस्ते प्रगृह्य विनिकृष्य निपात्य भूमौ ।**
**कुम्भे पदं प्रतिनिधाय विषाणयुग्मं**
**उत्कृष्य हस्तिपमहन्[१] निपपात सोऽपि ॥११४॥**

**वेदाङ्गतीर्थीया–** अहन् अहनत् ॥११४-११५॥

१. 'तेनैव गजदन्तेन कृष्णो हत्वा तु दन्तिनम् । जघानैकप्रहारेण गजारोहणमुल्बणम् ॥' इति हरिवंशे.विष्णु.३०.३८ ।

**वरदराजीया–** तेन सह किञ्चित् विक्रीड्य, हस्ते शुण्डादण्डं प्रगृह्य, कुम्भे कुम्भस्थले पदं पादं प्रतिनिधाय विषाणयुग्मं दन्तद्वयं उत्कृष्य हस्तिपं चैभ्यं अहन् हतवान् । स चैभ्योऽपि निपपात ।।११४।।

**जनार्दनीया–** हस्ते शुण्डादण्डे प्रगृह्य, कुम्भे कुम्भस्थले विषाणयुग्मं दन्तद्वयम् । 'विषाणं दन्तशृङ्गयोः' इत्यभिधानम् । उत्कृष्य उत्पाट्य तेनैव हस्तिपं गजसादिनं अहन् जघान । स हस्तिपः निपपात ।।११४।।

**चट्टि–** सः भगवान् श्रीकृष्णः तेन करिणा किञ्चित् विक्रीड्य हस्ते शुण्डादण्डे प्रगृह्य, विनिकृष्य भूमौ निपात्य कुम्भे कुम्भस्थले पदं पादं प्रतिनिधाय विषाणयुग्मं दन्तद्वयम् । 'विषाणं दन्तशृङ्गयोः' इत्यभिधानम् । उत्कृत्य उत्पाट्य तेनैव हस्तिपं गजसादिनं अहन् जघान । स हस्तिपः निपपात ।।

**नागं ससादिनमवध्यमसौ निहत्य स्कन्धे विषाणमवसज्य सहाग्रजेन ।**
**नागेन्द्रसान्द्रमदबिन्दुभिरश्चिताङ्गः पूर्णात्मशक्तिरमलः प्रविवेश रङ्गम् ।।११५।।**

**व्यासतीर्थीया–** नागेन्द्रविन्दुसम्वन्धादपवित्रत्वं न शङ्क्यमिति भावेनोक्तम्– **अमल इति** ।।११५।।

**वरदराजीया–** ससादिनं चैभ्येन सह वर्तमानं अवध्यं नागं गजं निहत्य विषाणं दन्तं स्कन्धे अवसज्य निधाय नागेन्द्रस्य सान्द्रैः निबिडैः मदबिन्दुभिः अश्चितं अङ्गं यस्य स तथा । पूर्णात्मभूता स्वरूपभूता शक्तिः यस्य सः रङ्गं प्रविवेश ।।११५।।

**जनार्दनीया–** ससादिनं हस्तिपेन सहितं नागं अग्रजेन सह विषाणं दन्तं स्कन्धे अंसे अवसज्य संस्थाप्य । सहाग्रजेनेत्यनेन रामस्यापि स्कन्धे दन्तस्थापनं द्रष्टव्यम् । रङ्गं युद्धस्थानं प्रविवेश । कथम्भूतः? नागेन्द्रस्य सान्द्रैः निबिडैः मदबिन्दुभिः अश्चितं शोभितं अङ्गं यस्य स तथा । पूर्णा आत्मशक्तिः स्वरूपशक्तिः यस्य स तथा । अमलः निर्दोषः । गजमदबिन्दुसम्बन्धजन्यदोषरहित इत्यर्थः । 'रङ्गं विविशतू राजन् गजदन्तवरायुधौ' इति भागवते [१०.४१.१६] ।।११५।।

**ताम्रपर्णीया–** मदबिन्दुसम्बन्धादपावित्र्यं न मन्तव्यमिति भावेनोक्तम्– **अमल इति** ।। ।।११५-११८।।

**चट्टि–** पूर्णा आत्मशक्तिः स्वरूपशक्तिः यस्य स तथा । अमलः निर्दोषः । असौ श्रीकृष्णः अवध्यं ससादिनं हस्तिपेन सहितं नागं गजं निहत्य, अग्रजेन सह विषाणं दन्तं स्कन्धे अंसे अवसज्य संस्थाप्य । सहाग्रजेनेत्यनेन रामोऽपि एकं दन्तं स्कन्धे दधारेति ज्ञातव्यम् । नागेन्द्रस्य सान्द्रैः निबिडैः मदविन्दुभिः अश्चितं शोभितं अङ्गं यस्य स तथाभूतः सन् रङ्गं युद्धस्थानं प्रविवेश । 'रङ्गं विविशतू राजन् गजदन्तवरायुधौ' इति भागवते [१०.४१.१६] ।।११५।।

**विष्टे [1]जगद्गुरुतमे बलवीर्यमूर्तौ रङ्गं मुमोद च शुशोष जनोऽखिलोऽत्र ।
कञ्जं तथाऽपि कुमुदं च यथैव सूर्य उद्यत्यजेऽनुभविनो विपरीतकाश्च ।।११६।।**

**व्यासतीर्थीया–** अत्र स्थितो जनो मुमोद । शुशोषेत्युक्त्या प्रतीतं विरोधं परिहरन्नाह– **कञ्जमिति** ।। सूर्ये उद्यति सति यथा कञ्जं कुमुदं शुष्यति तथैवाजे कृष्णे रङ्गं प्रविष्टे अनुभविनो ज्ञानिनः मुमुदुः विपरीतकाश्च अशुष्यन्नित्यर्थः ।।११६-११८।।

**वेदाङ्गतीर्थीया–** जगद्गुरुतमे रङ्गं प्रविष्टे सति अत्र रङ्गे स्थितः अखिलोऽपि जनः, द्विविध इति शेषः । मुमोद शुशोष च । कस्य मोदादीत्यत सदृष्टान्तमाह– **कञ्जमिति** ।। सूर्ये उद्यते कञ्जं यथा तथा अजे अनुभविनो ज्ञानिनः भक्ता इति यावत् । कुमुदः यथा तथा अजे विपरीतकाः विरोधिनः शुशुषुरिति सम्बन्धाः ।।११६-११९।।

**वादिराजीया–** कञ्जं तथाऽपीत्यत्र कञ्जमपि कञ्जं च तथा कुमुदं च सूर्ये उद्यति यथा तथैवानुभविनः भगवदनुकूलज्ञानवन्तः मुमुदुः । विपरीतकाः हरिविरुद्धाः कुत्सिताः शुशुषुरिति योग्यक्रियावृत्त्या योजना ।।११६-१२३।।

**वरदराजीया–** अतिशयेन बलवीर्ये मूर्तिः यस्य तस्मिन् रङ्गं विष्टे प्रविष्टे सति अत्रावसरे अखिलो द्विविधः जनः यथायोग्यं मुमोद शुशोष च । उभयत्र दृष्टान्तमाह– सूर्ये उद्यति उदिते सति कञ्जं तथा कुमुदं च यथा तथेत्यर्थः । जनद्वैविध्यं दर्शयति– अनुभविनः सम्यग्ज्ञानिनः विपरीतकाः मिथ्याज्ञानिनश्चेति।।

**अनन्तभट्टीया–** रङ्गं विष्टे प्रविष्टे, यत्र रङ्गे जनः सज्जनः मुमोद । असज्जनः शुशोचेति विवेकेन योज्यम् । उक्तं सदृष्टान्तं विवृणोति– **कञ्जमिति** ।। सूर्ये उद्यति कञ्जं मुमोद कुमुदं शुशोष । अनुभविनः सम्यज्ज्ञानिनः ।।११६।।

**जनार्दनीया–** जगतां गुरुतमे मुख्यगुरौ । बलवीर्ये बलपराक्रमौ मूर्तिः स्वरूपं यस्य स तथा तस्मिन् कृष्णे रङ्गं प्रविष्टे सति । अत्र रङ्गे विद्यमानोऽखिलो जनः भक्तजन इत्यर्थः, मुमोद । अखिलो जनः द्वेषिजनः शुशोष शोकं प्रापेत्यर्थः । अखिलो जन इति चकारबलादावर्त्य योज्यम् । अखिलो जन इत्युक्तं सदृष्टान्तमुपपादयति– **कञ्जमिति** ।। सूर्ये उद्यति सति कञ्जं यथैव तथापि तथैव अजे कृष्णे उद्यति सति अनुभविन अपरोक्षज्ञानिनः मुमुदुरित्यर्थः । सूर्ये उद्यति सति कुमुदं यथैव शुष्यति तथापि तथैव अजे उद्यति सति । विपरीतकाश्च विपरीतज्ञानिन इत्यर्थः । द्वेषिण इति यावत् शुष्यन्नित्यर्थः ।।११६।।

---

१. 'जगत्परतमे' इति वरदराजीयपाठः ।

**अतिविशद–** विष्टे जगद्गुरुतमे बलवीर्यमूर्तौ रङ्गं मुमोद च तुतोष जनोऽखिलोऽत्र । कञ्जं तथापि कुमुदश्च यथैव सूर्य उद्यत्यजेऽनुभविनो विपरीतकाश्च ।। इत्यत्र जगद्गुरुतमे बलवीर्यमूर्तौ अजे कृष्णे रङ्गं विष्टे प्रविष्टे सति अखिलो जनः सूर्ये उद्यति सति कञ्जं कुमुदं यथैव तथापि तथैव मुमोद । शुशोष इत्यनेनैव सदृष्टान्तमुपपादितत्वेन पुनः अनुभविनो विपरीतकाश्चेत्यस्य वैय्यर्थ्यमेव इत्याशङ्क्य अखिलो जनो मुमोद शुशोष च इत्युक्तम् । कञ्जं यथेत्यारभ्य विपरीतकाश्च इत्यन्तेन उपपद्यते इत्याहुः । तथा सति अध्याहारवाक्यभेदादिप्रसङ्गात् तस्मात्कथमेतदिति चेत् । अत्रैवं वाक्ययोजना । जगद्गुरुतमे बलवीर्यमूर्तौ अजे रङ्गं प्रविष्टे सति अखिलो जनः कञ्जं कुमुदं अनुभविनो विपरीतकाश्च अभिभाष्येति हे अनुभविनः हे विपरीतकाश्च यूयं शृणुध्वं इति तानभिभाष्येत्यर्थः । अथवा रङ्गं प्रविष्टमभिवीक्ष्य अभिभाष्य च मल्लः जगाद किमिति । हे कृष्ण अनुभविनो विपरीतकाश्च विप्राः राजैव दैवतमिति वदन्ति राज्ञः प्रियं कृतवतः परमा हि सिद्धिरिति च । तेन आवां नृपतिकाम्यया योत्स्याव इति ।।

**चट्टि–** जगतां गुरुतमे मुख्यगुरौ । बलवीर्ये बलपराक्रमौ मूर्तिः स्वरूपं यस्य स तथा तस्मिन् श्रीकृष्णे । रङ्गं युद्धस्थानं विष्टे प्रविष्टे सति अत्र रङ्गे स्थिताः अखिलो जनः द्विविध इति शेषः । मुमोद शुशोष च । कस्य मोदः कस्य शोष इत्यतः सदृष्टान्तमाह– **कञ्जमिति** ।। सूर्ये उद्यति सति कञ्जं कमलं यथैव तथापि तथैव अजे अनुभविन ज्ञानिनः भक्ताः इति यावत् मुमुदुः । सूर्ये उद्यति सति कुमुदं यथा तथा अजे विपरीतकाः विपरीतज्ञानिनश्च द्वेषिण इति यावत् । शुशुषुरिति सम्बन्धः।।११६।।

**रङ्गं प्रविष्टमभिवीक्ष्य जगाद मल्लः कंसप्रियार्थमभिभाष्य जगन्निवासम् ।**
**चाणूर इत्यभिहितो जगतामवध्यः शम्भुप्रसादत इदं शृणु माधवेति।।११७।।**

**वरदराजीया–** रङ्गं प्रविष्टं जगन्निवासं अभिवीक्ष्य चाणूर इत्यभिहितो मल्लः अभिभाष्य सम्बोध्य कंसप्रियार्थं जगाद । कथम्भूतो मल्लः शम्भुप्रसादतो जगतामवध्यः । हे माधव इदं वक्ष्यमाणं शृणु ।।

**अनन्तभट्टीया–** इदं वक्ष्यमाणम् ।।११७।।

**जनार्दनीया–** चाणूर इति नाम्ना अभिहितः उक्तः शम्भोः शिवस्य प्रसादतः वरप्रसादात् जगतां सकाशादवध्यौ । मल्लः रङ्गं प्रविष्टं कृष्णं अभिवीक्ष्य, जगन्निवासं कृष्णं हे माधव! इति अभिभाष्य भो कृष्ण! इति सम्बोधनेन अभिमुखीकृत्वा । इदं वक्ष्यमाणं शृण्विति कंसप्रियार्थं जगादेत्यन्वयः ।।११७।।

**चट्टि–** चाणूर इति नाम्ना अभिहितः उक्तः शम्भोः रुद्रस्य प्रसादतः वरप्रसादात् जगतां सकाशादवध्यः मल्लः रङ्गं प्रविष्टं श्रीकृष्णं अभिवीक्ष्य जगन्निवासं श्रीकृष्णं हे माधव! इति अभिभाष्य भो कृष्ण! इति सम्बोधनेन अभिमुखीकृत्वा इदं वक्ष्यमाणं शृण्विति कंसप्रियार्थं जगाद ।।११७।।

**[१]राजैव दैवतमिति प्रवदन्ति विप्रा**
**राज्ञः प्रियं कृतवतः परमा हि सिद्धिः ।**
**योत्स्याव तेन नृपतिप्रियकाम्यया वां**
**रामोऽभियुद्ध्यतु बली सह मुष्टिकेन ॥११८॥**

**वरदराजीया–** परमा सिद्धिः परमा गतिः । तेन कारणेन नृपतेः कंसस्य प्रियकाम्यया प्रीतिकरणेच्छया आवां अहं त्वञ्च योत्स्याव । रामो बलरामो मुष्टिकेन सह युध्यतु युद्धं करोतु ॥११८॥

**अनन्तभट्टीया–** सिद्धिः गतिः । आवां त्वमहंश्च ॥११८॥

**जनार्दनीया–** शृण्वित्युक्तं दर्शयति– **राजेति** ॥ विप्राः राजैव दैवतम् । एवकारस्तु अन्ययोग-व्यवच्छेदकः । हि यतः अतः राज्ञः प्रियं कृतवतः कुर्वतः पुंसः परमा सिद्धिः मोक्षः भवतीति प्रवदन्ति । तेन कारणेन नृपतेः कंसस्य प्रियकाम्यया प्रियेच्छया । आवामित्यस्मच्छब्दस्य प्रथमाद्विवचनम् । अहं त्वं चेत्यर्थः । योत्स्यावः युद्धं कुर्वः । रामः मुष्टिकेन सहाभियुद्ध्यतु युद्धं करोतु ॥११८॥

**अतिविशद–** बली रामः मुष्टिकेन सह अभियुध्यत्विति ॥११८॥

॥ इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ त्रयोदशोऽध्यायः ॥

**चट्टि–** शृण्वित्युक्तं दर्शयति– **राजेति** ॥ विप्राः राजैव दैवतमिति । एवकारस्तु अन्ययोगव्यवच्छेदकः । प्रवदन्ति हि यतः । अतः राज्ञः प्रियं कृतवतः कुर्वतः पुंसः परमा सिद्धिः मोक्षः भवतीति प्रवदन्ति । तेन कारणेन नृपतेः कंसस्य प्रियकाम्यया प्रियेच्छया आवां अहं त्वं चेत्यर्थः । योत्स्यावः युद्धं कुर्वः । बली रामोऽपि मुष्टिकेन सह युद्ध्यतु युद्धं करोतु ॥११८॥

---

१. 'योऽयं करीषधर्मश्च तोयधर्मश्च रङ्गजः । कषायस्य च संसर्गः समयो ह्येष कल्पितः ॥ संयमः स्थिरता शौर्यं व्यायामः सत्क्रिया बलम् । रङ्गे च नियता सिद्धिरेतद्युद्धविदां मतम् ॥' अवैरमेवं यदयं सवैरं कर्तुमुद्यतः । अत्र वै निग्रहः कार्यः तोषयिष्याम्यहं जगत् ॥ करूषेषु प्रसूतोऽयं चाणूरो नाम नामतः । बाहुयोधी शरीरेण कर्मभिश्चारु चिन्त्यताम् ॥ एतेन बहवो मल्ला निपातानन्तरं हताः । रङ्गप्रतापकामेन मल्लमार्गश्च दूषितः ॥ शस्त्रसिद्धिस्तु योधानां संग्रामे शस्त्रयोधिनाम् । ...रङ्गसिद्धिस्तु मल्लानां प्रतिमल्लनिपातजा ॥ रणे विजयमानस्य कीर्तिर्भवति शाश्वती । हतस्यापि रणे शस्त्रैर्नाकपृष्ठं विधीयते ॥ रणे ह्युभयतः सिद्धिर्हतस्येह घ्नतोऽपि वा । सा हि प्राणान्तिकी यात्रा महद्भिः साधु पूजिता ॥ अयं तु मार्गो बलतः क्रियातश्च विनिःसृतः । मृतस्य रङ्गे क स्वर्गो जायते वा कुतो रतिः ॥ ये तु केचित्स्वदोषेण राज्ञः पण्डितमानिनः । प्रतापार्थे हता मल्ला मल्लहन्तुर्वधो हि सः ॥' इति हरिवंशे.३०.२१.३० 'प्रियं राज्ञः प्रकुर्वन्त्यः श्रेयो विन्दन्ति वै प्रजाः । मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥' इति भागवते १०.३१.३३॥ 'अथ मल्लं तु चाणूरं निजघान महासुरम्' इति भारते सभापर्वणि ५३.३० ।

**इत्युक्त आह भगवान् [1]परिहासपूर्वमेवं भवत्विति स तेन तदाऽभियातः ।**
**सन्दर्श्य दैवतपतिर्युधि मल्ललीलां मौहूर्तिकीमथ पदोर्जगृहे स्वशत्रुम् ।।११९।।**

**व्यासतीर्थीया–** वेतनभुजां [भवतां] राजा दैवतमित्यपहासपूर्वम् ।।११९।।

**वरदराजीया–** परिहासपूर्वकमेव भवत्वित्याह । सः चाणूरः तेन कृष्णेन अभियातः मौहूर्तिकीं मुहूर्तमनुवर्तमानां मल्ललीलां प्रदर्श्य ।।११९।।

**भावविवृति–** स्वशत्रुमित्यत्र स्वस्य शत्रुः स्वशत्रुः इति नार्थः । 'न यस्य वध्यो न च रक्षणीयो नोपेक्षणीय'..इत्यष्टमस्कन्धोक्तेः [५.२२] । किन्तु स्वस्मिन् शत्रुत्वबुद्धिर्यस्य स तथेत्यर्थः । स्वेन सह युद्ध्यन्तमिति वा ।।११९-१३६।।

**अनन्तभट्टीया–** युष्माकं राजा दैवतमिति अपहासपूर्वकमित्यर्थः । सः मल्लः तेन कृष्णेन मौहुर्तिकीं मुहूर्तव्यापिनीम् ।।११९।।

**जनार्दनीया–** इत्युक्तो भगवान् परिहासपूर्वकं यथा स्यात्तथा । एवमुक्तप्रकारेण भवतां राजा दैवतं भवत्वित्याह । तदा तेन मल्लेन अभियातः अभिप्राप्तः स दैवतपतिः स कृष्णः युधि मल्लयुद्धे मौहूर्तिकीं घटिकाद्वयसम्बन्धिनीं मल्ललीलां मल्लशिक्षां सन्दर्श्य । अथ मुहूर्तानन्तरं स्वशत्रुं मल्लं पदोः पादयोः जगृहे ।।११९।।

**ताम्रपर्णीया–** ।। **अपहासपूर्वमिति** ।। 'प्रजा भोजपतेरस्य वयं चापि वनेचराः । करिष्यामः प्रियं नित्यं तन्नः परमनुग्रहः । बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितैः । भवेन्नियुद्धं माधर्मः स्पृशेत् मल्लसभासदः'[१०.४२.३७-३८] इति भागवतोक्तरीत्यापहासपूर्वमित्यर्थः ।।११९-१२९।।

**चट्टि–** इत्युक्तो भगवान् परिहासपूर्वं यथा स्यात्तथा । एवमुक्तप्रकारेण भवतां राजा दैवतं भवत्वित्याह । तदा तेन मल्लेन अभियातः दैवतपतिः स श्रीकृष्णः युधि मल्लयुद्धे मौहूर्तिकीं घटिकाद्वयसम्बन्धिनीं मल्ललीलां मल्लशिक्षां सन्दर्श्य, अथ अनन्तरं स्वशत्रुं मल्लं पदोः पादयोः जगृहे ।।११९।।

**उत्क्षिप्य तं गगनगं गिरिसन्निकाशं**
**उद्भ्राम्य चाथ शतशः [1]कुलिशक्षताङ्गम् ।**

---

१. 'अपहासपूर्वं' इति व्यासतीर्थीयताम्रपर्णीयपाठः ।
१. 'कुलिशाक्षताङ्गं' इति व्यासतीर्थजनार्दनीयचट्टिपाठः ।

**आविध्य दुर्धरबलो भुवि निष्पिपेष**
**चूर्णीकृतः स निपपात यथा गिरीन्द्रः ॥१२०॥**

**व्यासतीर्थीया–** कुलिशेन अक्षतं अङ्गं यस्यासौ तथोक्तः ॥१२०॥

**वेदाङ्गतीर्थीया–** दुर्धरबलः असह्यबलः ॥१२०॥

**वरदराजीया–** शतशः उद्भ्राम्य कुलिशेन वज्रेण क्षतं अङ्गं यस्य तम् । आविध्य निपात्य निष्पिपेष ममर्द ॥१२०॥

**अनन्तभट्टीया–** कुलिशं वज्रम् ॥१२०॥

**जनार्दनीया–** दुर्धरं सोढुमशक्यं बलं यस्य स तथा । कृष्णः उत्क्षिप्य ऊर्ध्वं निक्षिप्य गगनगं आकाशे विद्यमानं गिरिसन्निकाशं पर्वतसदृशं कुलिशेन वज्रेणापि अक्षतं अदार्यं अङ्गं यस्य स तथा तम् । चाणूरं शतशः शतवारं उद्भ्राम्य, अथ भुवि आविध्य पोथयित्वा निष्पिपेष पदा ममर्द । चूर्णीकृतः सः चाणूरः पपात । कथमिव? यथा गिरीन्द्रः तथेति सम्बन्धः ॥१२०॥

**चट्टि–** दुर्धरं सोढुमशक्यं बलं यस्य स तथा । श्रीकृष्णः तं चाणूरं उत्क्षिप्य ऊर्ध्वं निक्षिप्य गगनगं आकाशे विद्यमानं गिरिसन्निकाशं पर्वतसदृशं कुलिशेन वज्रेणापि अक्षतं अङ्गं यस्य स तथा तम् । चाणूरं शतशः शतवारं उद्भ्राम्य, अथ भुवि आविध्य पोथयित्वा निष्पिपेष ममर्द । चूर्णीकृतः सः चाणूरः यथा गिरीन्द्रः निपपात ॥१२०॥

**कृष्णं च तुष्टुवुरथो दिवि देवसङ्घा मर्त्या भुवि प्रवरमुत्तमपूरुषाणाम् ।**
**तद्वद्बलस्य दृढमुष्टिनिपिष्टमूर्धा भ्रष्टस्तदैव निपपात स मुष्टिकोऽपि॥१२१॥**

**व्यासतीर्थीया–** भ्रष्टो मृतः ॥१२१-१२३॥

**वेदाङ्गतीर्थीया–** भ्रष्टः मृतः ॥१२१-१२३॥

**वरदराजीया–** दिवि देवसङ्घाः भुवि मर्त्याश्च तुष्टुवुः । तद्वत् चाणूरो यथा तथा दृढमुष्टिभिः निष्पिष्टः चूर्णीकृतो मूर्धा मस्तकं यस्य स भ्रष्टो मृतः पपात ॥१२१॥

**जनार्दनीया–** उत्तमपूरुषाणां मध्ये प्रवरम् । पुरुषोत्तममिति यावत्, कृष्णम् । तद्वत् चाणूरवत् । बलस्य दृढमुष्टयः तेषां पातैः निष्पिष्टः सञ्चूर्णितः मूर्धा शिरो यस्य स तथा । स मुष्टिकोऽपि तदैव चाणूरमरणसमये भ्रष्टो मृतः सन् निपपात । तदुक्तं हरिवंशे– [विष्णुपर्व.३०.५३–५४] 'मुष्टिनैकेन

तेजस्वी साशनिस्तनयित्नुना । शिरस्यभ्यहनद्वीरो वज्रेणेव महागिरिम् ।। स सुनिष्पिष्टमस्तिष्को विस्रस्तनयनाननः । पपात निहतस्तेन...।।' इति ।।१२१।।

**चट्टि–** अथ अनन्तरं उत्तमपूरुषाणां प्रवरं श्रीकृष्णं दिवि देवसङ्घाः भुवि मर्त्याश्च तुष्टुवुः । स मुष्टिकोऽपि बलस्य बलरामस्य । दृढाश्च ते मुष्टयश्च तै निष्पिष्टः सञ्चूर्णितः मूर्धा शिरो यस्य स तथाभूतस्सन् । तदैव चाणूरमरणसमये तद्वत् चाणूरवत् भ्रष्टो मृतः सन् निपपात ।।१२१।।

**कूटश्च कोसल उत च्छलनामधेयौ द्वौ तत्र कृष्णनिहतावपरो बलेन ।**
**कंसस्य ये त्ववरजाश्च सुनीथमुख्याः[१] सर्वे बलेन निहताः परिघेण वीराः ।।१२२।।**

**सत्याभिनवतीर्थीया–** तत्रैव कूटश्च कोसल उत च्छलनामधेयौ...इति श्लोके 'छलनामधेय' इत्यस्य छलनामधेयनामक इत्यर्थः । एतेन कूटकोसलशब्दाभ्यां कूटकोसलनामकत्वलाभात् छलशब्देनैव छलनामकत्वलाभसम्भवात् नामधेयौ इत्येतत् व्यर्थमिति दूषणं परास्तम् । छलनामधेयनामकत्वलाभार्थं छलनामधेय इत्युक्तमिति स्वीकरणात् ।।१२२।।

**वरदराजीया–** कूटादयो ये मल्लाः तेषु द्वौ कूटकोसलौ कृष्णेन निहतौ । अपरः छलनामधेयो बलभद्रेण निहतः । परिघेन आयुधेन बलेन बलभद्रेण निहताः ।।१२२।।

**अनन्तभट्टीया–** अपरो मल्लः । बलेन रामेण ।।१२२।।

**जनार्दनीया–** तत्र युद्धे कूटः कोसलश्चेति द्वौ कृष्णेन निहतौ । उत अनन्तरं अपरः ताभ्यामन्यः छलनामधेयः बलेन निहतः । परिघेण मुसलेन ।।१२२।।

**चट्टि–** तत्र युद्धे कूटः कोसलश्चेति द्वौ श्रीकृष्णेन हतौ । उत अनन्तरं अपरः ताभ्यामन्यः छलनामधेयः बलेन निहतः । वीराः सुनीथमुख्याः कंसस्य ये अवरजाः ते सर्वे च बलेन बलरामेण परिघेण निहताः ।।१२२।।

**ताभ्यां हतानभिसमीक्ष्य निजान् समस्तान्**
**कंसो दिदेश बलमक्षयमुग्रवीर्यम् ।**
**रुद्रप्रसादकृतरक्षमवध्यमेतौ**
**निस्सार्य दण्डमधिकं कुरुतेति पापः ।।१२३।।**

---

१. 'बलदेवोऽपि धर्मात्मा कंसभ्रातरमूर्जितम् । बाहुभ्यामेव तरसा सुनामानमपोथयत् ।।' हरिवंशे.२.३०.९२

**वरदराजीया–** ताभ्यां कृष्णरामाभ्यां अक्षयमपरिमितं बलं दिदेश । किमिति दिदेश । एतौ कृष्णबलरामौ निःसार्य पुरात् बहिष्कृत्य अधिकं दण्डं कुरुतेति ।।१२३।।

**जनार्दनीया–** पापः कंसः अक्षयं शस्त्रास्त्रबलशिक्षाद्यैः ह्रासरहितं अत एव उग्रवीर्यं बलं सैन्यं इत्युक्त्वा आदिदेश । इतीति किम्? एतौ रामकृष्णौ निःसार्य दूरीकृत्य अधिकं यथा भवति तथा दण्डं शिक्षां कुरुतेत्युक्त्वेति सम्बन्धः ।।१२३।।

**चट्टि–** पापः कंसः निजान् स्वकीयान् समस्तान् ताभ्यां रामकृष्णाभ्यां हतान् अभिसमीक्ष्य अक्षयं शस्त्रास्त्रबलशिक्षाद्यैः ह्रासरहितं अत एव उग्रवीर्यं रुद्रप्रसादेन कृता रक्षा यस्य तदवध्यं बलं सैन्यं इत्युक्त्वा आदिदेश । किमिति । एतौ रामकृष्णौ निःसार्य पुरात् बहिष्कृत्य अधिकं यथा तथा दण्डं दण्डनं कुरुतेत्युक्त्वेत्यर्थः ।।१२३।।

**श्रुत्वैव राजवचनं बलमक्षयं तत्**
**अक्षौहिणीदशकयुग्ममनन्तवीर्यम् ।**
**कृष्णं चकार विविधास्त्रधरं स्वकोष्ठे**
**सिंहं यथा किल सृगालबलं समेतम् ।।१२४।।**

**व्यासतीर्थीया–** स्वकोष्ठे स्वमध्ये ।।१२४।।

**वेदाङ्गतीर्थीया–** अनन्तवीर्यं कृष्णं स्वकोष्ठे स्वमध्ये चकार ।।१२४-१२६।।

**वादिराजीया–** स्वकेषु स्वमध्ये ।।१२४-१२७।।

**सत्याभिनवतीर्थीया–** तत्रैव श्रुत्वैव राजवचनं बलमक्षयं तत्...इति श्लोकः । तस्यार्थः । अत्र अस्मिन् स्थले इत्यादेः शेषः । अक्षयं अक्षौहिणीदशकयुग्मं विविधास्त्रधरं तत् प्रसिद्धं बलं राजवचनं श्रुत्वैव राजवचनश्रवणानन्तरमेव समेतं अखिलं शृगालबलं अस्मिन् स्थले सिंहो वर्तते इति ज्ञानाभावेन सिंहं सिंहस्थलं यथा प्राप्नोति तथा कृष्णसामर्थ्याज्ञानेन अनन्तवीर्यं कृष्णं स्वकोष्ठे चकारेति । एतेन समेतमखिलं शृगालबलं सिंहं स्वकोष्ठे करोतीत्यर्थस्य बाधितत्वात् समेतमखिलं शृगालबलं सिंहं स्वकोष्ठे यथा करोतीति दृष्टान्तकथनमनुपपन्नमिति दूषणं परास्तम् । प्राप्तिमात्रे अयं दृष्टान्त इत्यभ्युपगमात् ।।

**मधुसूदनीया–** स्वकोष्ठे स्वमध्यभागे ।।१२४-१२५।।

**वरदराजीया–** अक्षौहिणीदशकयुग्मं विंशदक्षौहिण्यात्मकं तद्बलं कृष्णं अनन्तवीर्यं स्वकोष्ठे स्वमध्ये चकार । सृगालानां बलं सेना सिंहं यथा तथा चकारेत्यर्थः ।।१२४।।

**अनन्तभट्टीया–** स्वकोष्ठे मध्ये चकार । कृष्णं परित आवृणोदित्यर्थः ।।१२४।।

**जनार्दनीया–** अक्षौहिणीनां दशकं तस्य युग्मं विंशदक्षोहिणीसङ्ख्याकमित्यर्थः, बलम् । अनन्तवीर्यं कृष्णं स्वकोष्ठे स्वसमूहमध्ये चकार । तत्र दृष्टान्तमाह– **सिंहमिति** ।। समेतं मिलितं अखिलानां सृगालानां गोमायूनां बलं सिंहं यथा तथेत्यर्थः ।।१२४।।

**चट्टि–** अक्षौहिणीनां दशकं तस्य युग्मं विंशदक्षौहिणीसङ्ख्याकमित्यर्थः । विविधास्त्रधरं तद्बलं राज्ञः कंसस्य वचनं श्रुत्वैव अक्षयं नाशरहितं अनन्तवीर्यं बलं यस्य तं श्रीकृष्णम् । स्वकोष्ठे स्वसमूहः तस्य मध्यभागे चकार । तत्र दृष्टान्तमाह– **सिंहमिति** ।। समेतं मिलितं अखिलानां सृगालानां गोमायूनां बलं सिंहं यथा तथेत्यर्थः ।।१२४।।

**जानन्नपीश्वरमनन्तबलं महेन्द्रः कृष्णं रथं निजमयातयदायुधाढ्यम् ।**
**शुश्रूषणाय परमस्य यथा समुद्रमर्घ्येण पूरयति पूर्णजलं जनोऽयम् ।।१२५।।**

**व्यासतीर्थीया–** ईश्वरमनन्तबलं जानन्नित्यनेन रथप्रेषणवैयर्थ्यं सूचयति । तर्हि किमर्थं प्रेषितवानित्यत आह– **शुश्रूषणायेति** ।।१२५-१२६।।

**सत्याभिनवतीर्थीया–** तत्रैव जानन्नपीश्वरमनन्तबलं महेन्द्रः...इति श्लोकः । तस्यार्थः । महेन्द्रः कृष्णं ईश्वरं अनन्तबलं जानन्नपि यथा अयं जनः पूर्णजलं समुद्रं अर्घ्येण पूरयति तृप्तं करोति तथा परमस्य शुश्रूषणाय तृप्तये निजं आयुधाढ्यं रथं अयातयदिति । एतेन अर्घ्येण समुद्रस्य पूर्तेरभावात् अर्घ्येण समुद्रं पूरयतीति कथनमयुक्तमिति दूषणं परास्तम् । पूरयतीत्यस्य पूर्णं करोतीत्यर्थमनङ्गीकृत्य तृप्तं करोतीत्यर्थस्योक्तत्वात् । एतेनैव दृष्टान्तानुसारेण तृप्तये इति वक्तव्यं शुश्रूषणायेति कथनमयुक्तमिति दूषणं परास्तम् । शुश्रूषणशब्देन शुश्रूषणकार्यतृप्तेः ग्रहणात् ।।१२५।।

**वरदराजीया–** अनन्तबलं जानन्नपि महेन्द्रो निजं कृष्णाय आयुधाढ्यं रथं अयापयत् प्रेषयामास । कस्मै प्रयोजनाय परमस्य कृष्णस्य शुश्रूषणाय । तत्र दृष्टान्तः– **यथेति** ।। पूर्णजलं समुद्रं अयं जनः अर्घ्येण अञ्जलिजलप्रदानेन यथा पूरयति तथेत्यर्थः ।।१२५।।

**जनार्दनीया–** महेन्द्रः इन्द्रः ईश्वरं सर्वसम्पदां लोकानां चेश्वरं अनन्तबलं अनन्तबलत्वाद् रथायुधाद्यपेक्षारहितमिति भावः । ईदृशं कृष्णं जानन्नपि परमस्य श्रीकृष्णस्य शुश्रूषणाय सेवनार्थं आयुधैः आढ्यं पूर्णं निजं कृष्णसम्बन्धिनं हरिणा इन्द्राय दत्तत्वात् स्वकीयं वा रथं अयातयत् प्रेषयामास । अस्य हरिशुश्रूषणं नित्यविधिरूपमिति सूचनार्थं तत्र दृष्टान्तमाह– **यथेति** । अयं जनः विधिबद्धो जनः पूर्णजलं समुद्रमर्घ्येण तदीयं जलं अञ्जलिनादाय समुद्रस्तृप्यत्विति अर्घ्येण यथा पूरयति पूर्णं करोति तथैवेत्यर्थः । अनेन स्वविधिप्रतिपालनमेव कृतमिति भावः ।।१२५।।

**चट्टि–** इन्द्रः श्रीकृष्णं ईश्वरं सर्वेषामीश्वरं अनन्तवलं अनन्तबलत्वाद् रथायुधाद्यपेक्षारहितमिति भावः । जानन्नपि परमस्य श्रीकृष्णस्य शुश्रूषणाय सेवायै सेवनार्थं आयुधैः आढ्यं पूर्णं निजं श्रीकृष्णसम्बन्धिनं हरिणा इन्द्राय दत्तत्वात् स्वकीयं च रथं अयातयत् प्रेषयामास । तत्र दृष्टान्तमाह– **यथेति** ।। अयं जनः पूर्णजलं समुद्रमर्घ्येण तदीयं जलं आदाय अर्घ्यदानेन यथा पूरयति पूर्णं करोति तथैवेत्यर्थः ।।१२५।।

**स्वं स्यन्दनं तु भगवान् स [1]महेन्द्रदत्तमारुह्य सूतवरमातलिसङ्गृहीतम् ।**
**नानायुधोग्रकिरणस्तरणिर्यथैव ध्वान्तं व्यनाशयदशेषत आशु सैन्यम् ।।१२६।।**

**मधुसूदनीया–** स्वं स्यन्दनं इन्द्ररथम् । कृष्णरथत्वे दारुकेणानयनापत्तेरिति बोध्यम् ।।१२६।।

**वरदराजीया–** सूतवरेण मातलिना सङ्गृहीतं स्वं स्वकीयमेव महेन्द्रदत्तं रथमारुह्य नानायुधान्येव किरणानि यस्य स तथा तरणिः [सामर्थ्यमेतत्] तरणिः ध्वान्तं यथा तथा तत्सैन्यं अशेषतो व्यनाशयत् ।।१२६।।

**अनन्तभट्टीया–** ...आयुधा एव उग्रकिरणाः यस्येति स तथोक्तः । इदं सूर्यसाम्यप्रतिपादनायोक्तम् । अशेषसेनां व्यनाशयत् ।।१२६।।

**जनार्दनीया–** सूतवरेण इन्द्रस्य सूतश्रेष्ठेन, मातलिना मातलिनाम्ना गृहीतं स्वं स्यन्दनं आत्मरथम् । अशेषतः सर्वसैन्यं व्यनाशयत् । कथम्भूतो भगवान्? नानायुधान्येव उग्रकिरणा यस्य स तथा । क इव? तरणिः सूर्यः ध्वान्तं अन्धकारं यथा विनाशयति तथेत्यर्थः ।।१२६।।

---

१. 'कश्च नारायणादन्यः सर्वरत्नविभूषितम् । रथमादित्यसंकाशमातिष्ठेत शचीपतेः । कस्य चाप्रतिमो यन्ता वज्रपाणेः प्रियः सखा ।। मातलिः सङ्गृहीता स्यादन्यत्र पुरुषोत्तमात् । भोजराजात्मजो वापि कंसस्तात युधिष्ठिर ।। अस्त्रजाते बले वीर्ये कार्तवीर्यसमोऽभवत् । तस्य भोजपतेः पुत्राद् भोजराजन्यवर्धनात् ।। उद्विजन्ते स्म राजानः सुपर्णादिव पन्नगाः। चित्रकार्मुकनिस्त्रिंशविमलप्रासयोधिनः ।। शतं शतसहस्राणि पादातास्तस्य भारत । अष्टौ शतसहस्राणि शूराणामनिवर्तिनाम् ।। अभवन्भोजराजस्य जाम्बूनदमयाः ध्वजाः । ....महामृधनदीं घोरां योधावर्तननिस्वनाम् । कोऽन्यो नारायणादेत्य कंसहन्ता युधिष्ठिर ।। एष शक्ररथे तिष्ठंस्तान्यनीकानिं भारत । व्यधमद् भोजपुत्रस्य महाभ्राणीव मारुतः ।। तं सभास्थं सहामात्यं हत्वा कंसं सहान्वयम् । आनयामास मानार्हां देवकीं ससुहृद्गणाम् ।। यशोदां रोहिणीं चैव अभिवाद्य पुनःपुनः । उग्रसेनं च राजानमभिषिच्य जनार्दनः ।।' [सभा.५४.१६-३२] यद्यपि भागवते कंससैन्यसंहारकथा न कथ्यते । तथापि महाभारते कंसानीकसंहारानन्तरमेव कंससंहारकथा निरूप्यते । तदनुसारेणाचार्या अपि तथैव कथानिर्णयं चक्रुः ।

**चट्टि—** नानायुधान्येवोग्रकिरणाः यस्य सः तथा, स भगवान् श्रीकृष्णः सूतवरेण सूतश्रेष्ठेन मातलिना मातलिनाम्ना इन्द्रसारथिना सङ्गृहीतस्तं स्वं स्वकीयं स्यन्दनं इन्द्रदत्तरथमारुह्य तरणिः सूर्यः । ध्वान्तं अन्धकारं यथा नाशयति तथा । अशेषतः सर्वसैन्यं आशु व्यनाशयत् ।।१२६।।

**निःशेषतो विनिहते स्वबले स [1]कंसश्चर्मासिपाणिरभियातुमियेष कृष्णम् ।**
**तावत् तमेव भगवन्तमभिप्रयान्तमुत्तुङ्गमञ्चशिरसि प्रददर्श वीरम् ।।१२७।।**

**व्यासतीर्थीया—** यदाऽभियातुमियेष तावत् तदानीमेव तमिति रङ्गस्थितमभियान्तं उत्तुङ्गमञ्चस्थितं च वीरं ददर्शेत्यर्थः ।।१२७-१२८।।

**वेदाङ्गतीर्थीया—** यावत् यदा रङ्गे स्थितमभियातुमियेष तावत् तदैव ।।१२७-१२८।।

**सत्याभिनवतीर्थीया—** तत्रैव निश्शेषतो विनिहते....इति श्लोके प्रददर्शेत्यत्र प्रेत्यस्य प्रकृष्टभयं जातमित्यर्थः । एतेन ददर्शेत्यनेनैव पूर्णत्वात् प्रेत्यतत् व्यर्थमिति दूषणं परास्तम् । 'उपसर्गाः सति क्रियावचने तत्सम्बन्धिनो भवन्ति । असति तु ससाधनां क्रियामाहुः' इति वचनानुसारात् प्रेत्यनेन प्रकृष्टभयं जातमित्यर्थ उच्यते इत्यभ्युपगमात् ।।१२७।।

**मधुसूदनीया—** ।। **तावत्तमेव भगवन्तमिति** ।। 'क्षिप्ते पितरि चुक्रोध नन्दगोपे च केशवः । ज्ञातीनां च व्यथां दृष्ट्वा विसञ्ज्ञां चैव देवकीम् ।। आरुरुक्षुर्महाबाहुः कंसनाशार्थमच्युत ।।' इत्यादि हरिवंशवचनात् [२.३१.७१-७२] वसुदेवादीनां व्यथादिदर्शनेन कंसागमनात् प्राग्भगवतैव कंसं प्रति गतमिति भावः ।।१२७-१३८।।

।। इति श्रीमद्विद्याधीशतीर्थश्रीपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारतातात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे त्रयोदशोऽध्यायः ।।

**वरदराजीया—** कृष्णं अभियातुमियेष ऐच्छत् तावत् तदैव उत्तुङ्गे मञ्चशिरसि प्रयान्तं भगवन्तं ददर्श ।।१२७।।

**जनार्दनीया—** कृष्णं प्रति अभियातुं इयेष ऐच्छत् यदा । तावत् तदा तं रङ्गस्थितं वीरं अभिप्रयान्तं स्वाभिमुखं आगतं भगवन्तं कृष्णं उत्तुङ्गस्य उन्नतस्य मञ्चस्य शिरसि उपरि प्रददर्श ।।१२७।।

**चट्टि—** कंसः स्वबले निश्शेषतः विनिहते सति चर्मासिपाणिः सन् यावत् यदा श्रीकृष्णं प्रति अभियातुं इयेष । तावत् तदानीं एव तं रङ्गस्थितं वीरं अभिप्रयान्तं स्वाभिमुखं आगतं भगवन्तं श्रीकृष्णं उत्तुङ्गस्य उन्नतस्य मञ्चस्य शिरसि उपरि प्रददर्श च ।।१२७।।

---

१. 'तमापतन्तमालोक्य मृत्युमात्मन आसनात् । मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ।।' इति भागवते १०.३२.३४।

**तं [1]श्येनवेगमभितः प्रतिसञ्चरन्तं निश्छिद्रमाशु जगृहे भगवान् प्रसह्य ।**
**केशेषु चैनमभिमृश्य करेण वामेनोद्धृत्य दक्षिणकरेण जघान केऽस्य ।।१२८।।**

**वादिराजीया–** जघान केऽस्येत्यत्र के शिरसि जघान ।।१२८-१३१।।

**वरदराजीया–** श्येनस्य वेग इव वेगो यस्य तम् । अत एव निश्छिद्रं अभितः प्रतिसञ्चरन्तं कंसं प्रसह्य जगृहे । एनं कंसं केशेषु अभिमृश्य धृत्वा वामेन करेण उद्धृत्य दक्षिणेन करेणास्य कंसस्य के शिरसि जघान ।।१२८।।

**जनार्दनीया–** भगवान् श्येनः पक्षिविशेषः तस्य वेगवत् वेगो यस्य स तथा तम् । अभितः परितः निश्छिद्रं अविच्छिन्नं यथा स्यात्तथा । प्रतिसञ्चरन्तं स्वमभि भ्रमन्तं कंसं प्रसह्य बलात्कारेण आशु केशेषु अभिमृश्य स्पृष्ट्वा केशानाकृष्येत्यर्थः । जगृहे कृष्ण इति शेषः । एनं कंसं वामेन करेण उद्धृत्य, दक्षिणकरेण अस्य कंसस्य के शिरसि जघान ।।१२८।।

**चट्टि–** भगवान् श्रीकृष्णः श्येनवेगं श्येनः पक्षिविशेषः तस्य वेग इव वेगो यस्य स तथा तम् । अभितः परितः निच्छिद्रं यथा स्यात्तथा प्रतिसञ्चरन्तं स्वमभि भ्रमन्तं कंसम्, प्रसह्य आशु केशेषु अभिमृश्य स्पृष्ट्वा केशानाकृष्येत्यर्थः, जगृहे । एनं कंसं वामेन करेण उद्धृत्य, दक्षिणकरेण अस्य कंसस्य के शिरसि जघान ।।१२८।।

**सञ्चालितेन मकुटेन विकुण्डलेन कर्णद्वयेन विगताभरणोरसा च[2] ।**
**स्रस्ताम्बरेण जघनेन सुशोच्यरूपः कंसो बभूव [3]नरसिंहकराग्रसंस्थः ।।१२९।।**

**व्यासतीर्थीया–** नरसिंहकराग्रसंस्थः पुरुषश्रेष्ठकराग्रसंस्थः ।।१२९।।

**वेदाङ्गतीर्थीया–** नरसिंहकराग्रसंस्थः पुरुषोत्तमकराग्रसंस्थः कंसः सुशोच्यरूपः बभूव । सञ्चालितेनेत्यादि इत्थंभूतलक्षणे तृतीया ।।१२९।।

**सत्याभिनवतीर्थीया–** तत्रैव सञ्चालितेन मुकुटेन विकुण्डलेन...इति श्लोके 'सञ्चालितेन मुकुटेन' इत्यस्य शिरसः सञ्चालितेन मुकुटेनेत्यर्थः । एतेन सञ्चालितमुकुटेन शिरसेति वक्तव्यम् । सञ्चालितेन

---

१. 'तं खड्गपाणिं विचरन्तमाशु श्येनं यथा दक्षिणसव्यमम्बरे । समग्रहीत् दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ।।' इति भागवते १०.४२.३५ ।

२. 'मुकुटाच्चापि कंसस्य पपात मणिरुत्तमः' ।

३. 'न शशाक मुखं द्रष्टुं कंसः कृष्णस्य वै तदा ।... तस्य देहे प्रकाशन्ते सहसा केशवार्पिताः ।। मांसच्छेदघनाः सर्वे नखाग्रा जीवितच्छिदः ।।' इति हरिवंशे २.३०.८८

मुकुटेनेति कथनमयुक्तमिति दूषणं पराकृतम् । शिरस इत्यस्य शेषमङ्गीकृत्य सश्चालितेन मुकुटेनेत्यनेन शिरसः सश्चालितेन मुकुटेनेत्यर्थः । सश्चालितमुकुटेन शिरसेति तात्पर्यार्थश्चोच्यते इत्युररीकरणात् ।।१२९।।

**वरदराजीया–** नरसिंहस्य कृष्णस्य कराग्रसंस्थः कंसः सुशोच्यरूपो दैन्यवदनो बभूव ह । सुशोच्यरूपत्वं दर्शयति– **सश्चालितेनेत्यादिना** ।। सश्चालितेत्यनेन तदुपलक्षितं मस्तकं गृह्यते । विकुण्डलेन कुण्डलरहितेन कर्णद्वयेन, विगताभरणेन विगता पादकण्ठमाल्याद्याभरणेन उरसा, स्रस्तं गतं अम्बरं यस्य तत्तेन जघनेन कटिप्रदेशेन सुशोच्यरूप इति सम्बन्धः । पूर्वं नरसिंहेन हिरण्यकशिपोरपीय-मवस्था प्राप्ता तदात्मकेन कृष्णेनापि तथैव अवस्था प्रापितेति दर्शयितुं नृसिंहेत्युक्तम् ।।१२९।।

**जनार्दनीया–** नरसिंहकराग्रे पुरुषश्रेष्ठकृष्णहस्ततले संस्थः स्थितः कंसः सश्चालितेन पातितेन मुकुटेन किरीटेन । पातितमुकुटवत्मस्तकेनेति भावः । विगते कुण्डले यस्य तत्तेन कर्णद्वयेन । विगतानि आभरणानि यस्य स तथा, तच्च तदुरो वक्षः तेन । स्रस्तं श्लथितं अम्बरं वस्त्रं यस्मात्तत्तथा तेन । जघनेन कट्यूर्वोर्मध्यप्रदेशेन । सुशोच्यं अतिदुःखितं रूपं यस्य स तथा । बभूव । नरसिंहकराग्रसंस्थः हिरण्यकशिपुः यथा सुशोच्यरूपो बभूव तथा कंसो बभूवेति लुप्तोपमेयमिति वा ।।१२९।।

**चट्टि–** नरसिंहकराग्रसंस्थः नरसिंहकराग्रे पुरुषश्रेष्ठस्य श्रीकृष्णस्य कराग्रे हस्ततले संस्थः स्थितः । कंसः सश्चालितेन पातितेन मुकुटेन किरीटेन । पतितमुकुटमस्तकेनेति भावः । विगते कुण्डले यस्य तत्तेन कर्णद्वयेन । विगतानि आभरणानि यस्य स तथा, तच्च तदुरो वक्षश्च तेन । स्रस्तं गतं अम्बरं वस्त्रं यस्मात्तत्तथा तेन । जघनेन कटिप्रदेशेन च सुशोच्यरूपो बभूव ।।१२९।।

**उत्कृष्य तं सुरपतिः परमोच्चमश्चादन्यैरजेय[१]मतिवीर्यबलोपपन्नम् ।**
**अब्जोद्भवेशवरगुप्तमनन्तशक्तिर्भूमौ निपात्य स ददौ पदयोः प्रहारम्।।१३०।।**

**व्यासतीर्थीया–** पदयोरिति षष्ठी पादप्रहारमकरोदित्यर्थः ।।१३०।।

**वेदाङ्गतीर्थीया–** पदयोरिति षष्ठी स्वपदाभ्यां तमप्रहरदिति भावः ।।१३०।।

**वरदराजीया–** परमोच्चमश्चात् तं कंसमुत्कृष्य कथम्भूतमित्यतो अन्यैरित्यादिना विशेषितः । सोऽनन्तशक्तिः कृष्णः पदयोः सपदाभ्यां प्रहारं ददौ ।।१३०।।

**अनन्तभट्टीया–** तं कंस...मश्चादुत्कृष्य भूमौ निपात्य...प्रहारं ददौ । स्वपदाभ्यामताडयदित्यर्थः ।।

**जनार्दनीया–** सुरपतिः गुप्तं रक्षितं कंसं परमोच्चमश्चाद् उत्कृष्य आकृष्य भूमौ निपात्य, पदयोः प्रहारं ददौ, कंसायेति शेषः । पादद्वयस्य प्रहारं ददाविति भावः । अत एव अनन्तशक्तिः ।।१३०।।

---

१. 'इन्द्रेण सह सङ्ग्रामं कृत्वा सायकविग्रहम्। अमर्त्यैरजितो युद्धे मर्त्येनासि कथं हतः।।' इति विष्णुपर्वणि.३१.२७ ।

**ताम्रपर्णीया–** पदयोरिति षष्ठी । पादप्रहारमकरोदित्यर्थः ।।१३०।।

**चट्टि–** अनन्ता शक्तिः यस्य स तथा, सुरगणां पतिः सः श्रीकृष्णः अब्जोद्भवेशवरगुप्तं अतिवीर्यबलोपपन्नं अन्यैरजेयं तं कंसं परमोच्चमञ्चाद् उत्कृष्य भूमौ निपात्य पदयोः प्रहारं ददौ । स्वपादद्वयस्य प्रहारं कंसाय ददाविति भावः ।।१३०।।

**देहे तु योऽभवदमुष्य रमेशबन्धुर्वायुः स कृष्णतनुमाश्रयदन्यपापम् ।**
**दैत्यं चकर्ष हरिरत्र शरीरसंस्थं पश्यत्सु कञ्जजमुखेषु सुरेष्वनन्तः ।।१३१।।**

**व्यासतीर्थीया–** ग्रन्थान्तरे कंसस्थितं तेजः कृष्णं प्राविशदित्युक्तं घटयन्नाह– **देहे त्विति** ।। अन्यश्चासौ पापश्च तं अन्यपापं दैत्यं तमः प्रति चकर्ष ।।१३१।।

**वेदाङ्गतीर्थीया–** कंसः सायुज्यमगमदिति ग्रन्थान्तरोक्तेर्गतिमाह– **देह इति** ।। अमुष्य देहे यो वायुरभवत् स कृष्णतनुमाश्रयत् । अनेन कंसः कृष्णं प्राविशदित्यत्र कंसस्थो वायुः कृष्णं प्राविशदित्यर्थः इत्युक्तं भवति । अत्र शरीरसंस्थयोरुभयोर्मध्ये अन्यः पापः अन्यश्चासौ पापश्च अन्यपापः तं दैत्यं कालनेम्याख्यं दैत्यं तमः प्रति चकर्ष । अत्र किं प्रमाणमित्यतः ब्रह्मादीनां प्रत्यक्षं प्रमाणमित्याह– **पश्यत्स्विति** ।।१३१।।

**वरदराजीया–** श्रीकृष्णेन हतः कंसः कृष्णप्रवेशरूपां मुक्तिं प्रापेति पुराणोक्तिः तत्तात्पर्यमाह– **देहेत्यादिना** ।। अमुष्य कंसस्य देहे यः रमेशबन्धुः वायुः अभवत् सः वायुः कृष्णतनुमाश्रयत् प्रविवेश । कंसदेहाविष्टभृगोरपि उपलक्षणमेतत् । प्राधान्यात् वायुग्रहणम् । अत एव रमेशबन्धुरित्युक्तम् । अत्र कंसस्य शरीरस्थं दैत्यं चकर्ष । उक्तेऽर्थे ब्रह्मादीनां प्रत्यक्षं प्रमाणयति– **पश्यत्स्विति** ।।१३१।।

**अनन्तभट्टीया–** चकर्ष तमः प्रति चकर्ष ।।१३१।।

**जनार्दनीया–** कंसः सायुज्यं प्रापेति पुराणोक्तेर्गतिमाह– **देह इति** ।। अमुष्य कंसस्य देहे रमेशबन्धुः हरेर्मित्रम् । यद्वा रमा जाया तस्या ईशः भर्ता सङ्कर्षणः, तस्य बन्धुः पुत्र इत्यर्थः । यो वायुः अभवत् स कृष्णतनुं आश्रयत् प्रविवेश । हरिः अत्र अस्य कंसस्य शरीरसंस्थम्, अन्यश्चासौ पापश्चेति विग्रहः । वायोरन्य इत्यर्थः । दैत्यं कालनेमिं चकर्ष । तमः प्रतीति शेषः । अत्र प्रमाणं किमित्यतो योगिप्रत्यक्षमेव प्रमाणमित्याह– **पश्यत्स्विति** ।।१३१।।

**ताम्रपर्णीया–** 'तदेव रूपं दुरवापमाप' [१०.४२.३९] इति भागवते कंसस्य भगवत्प्रवेशोक्तेः तात्पर्यमाह– **देहेति** ।। वायुरित्युपलक्षणम् । भृगुरित्यपि द्रष्टव्यम् ।। **दैत्यं चकर्षेति** ।। कञ्जजमुखेषु पश्यत्सु शरीरसंस्थं दैत्यं अत्र भुवि विचकर्षेत्यर्थः । अनेन 'कंसं परेतं विचकर्ष भूमौ हरिर्यथेभं

जगतोऽभिपश्यत' [१०.४२.३८] इति भागवततात्पर्यमुक्तं भवति । अन्यथा मृतस्य कंसस्य भुविकर्षणं न युक्तम् । कंसशरीरविवक्षायां मृतस्य सर्पापकर्षणवदतिजुगुप्सितत्वप्रसङ्गः । अधुना तु देवतानिर्गमेन परेतप्रायं परेण वायुना इतमपगतं वा । अन्यथा पापं दैत्यं भुवि चकर्षेति युज्यत इति । टीकासु 'अन्यश्चासौ पापश्च अन्यपापः तमन्यपापम् । तमः प्रति चकर्षेत्यर्थ उक्तः ।।१३१।।

**चट्टि–** श्रीकृष्णेन हतः कंसः सायुज्यं प्रापेति पुराणोक्तेः तात्पर्यमाह– **देह इति** ।। अमुष्य कंसस्य देहे रमेशबन्धुः हरेर्मित्रं यो वायुः अभवत् । स वायुः श्रीकृष्णतनुं आश्रयत् प्रविवेश । अनन्तो हरिः श्रीकृष्णः अत्र अस्य कंसस्य शरीरे संस्थम् । अन्यश्चासौ पापश्च अन्यपापः । वायोरन्य इत्यर्थः । तं दैत्यं कालनेमिं कञ्जजमुखेषु सुरेषु पश्यत्सु सत्सु चकर्ष । कञ्जजमुखेष्वित्युक्त्या उक्तार्थे ब्रह्मादीनां प्रत्यक्षं प्रमाणं उक्तं भवति ।।१३१।।

**द्वेषात् स सर्वजगदेकगुरोः स्वकीयैः**
**पूर्वं प्रमापितजनैः सहितः समस्तैः ।**
**धात्र्यादिभिः प्रतिययौ कुमतिस्तमोऽन्धम्**
**अन्येऽपि चैवमुपयान्ति हरावभक्ताः ।।१३२।।**

**व्यासतीर्थीया–** अन्येष्वपि भगवद्द्वेषिषूक्तमतिदिशति– **अन्येऽपीति** ।।१३२।।

**वेदाङ्गतीर्थीया–** चकर्षेत्येतत् विवृणोति– **द्विषामिति** ।। अन्येषां हरिद्विषामपि इत्थं तमोगतिरित्याह– **अन्येऽपीति** ।। अभक्ताः द्वेषिणः ।।१३२।।

**वादिराजीया–** पूर्वं प्रमापितजनैरित्यत्र 'प्रमापणं निबर्हणम्' इत्यभिधानात् । प्रमापिताः विनाशिताः ।।१३२-१३६।।

**वरदराजीया–** स दैत्यः कालनेमिः सर्वजगतः पद्मापद्मभवादेः मुख्यगुरोः कृष्णस्य द्वेषात् अन्धन्तमः प्रति ययौ । न केवलं स्वयमेव किन्तु पूर्वप्रमापितैः मारितैः धात्र्यादिभिः पूतनादिभिः सहितः मिलितः । विद्वेषिष्वेवमेव नियम इत्याह– **अन्येऽपीति** ।। अभक्ताः द्वेषिणः ।।१३२।।

**अनन्तभट्टीया–** प्रमापिताः घातिताः । धात्र्यादिभिः पूतनादिभिः ।।१३२।।

**जनार्दनीया–** स कंसः सर्वजगतः एकगुरोः मुख्यगुरोः कृष्णस्य द्वेषात् पूर्वं प्रमापितैः हतैः जनैः धात्र्यादिभिः समस्तैः स्वकीयैः सहितः सन् अन्धन्तमः प्रतिययौ । यतः कुमतिः पापबुद्धिः अत एवेत्यर्थः । 'कुः पापेऽल्पार्थकुत्सयोः' इति यादवः । अन्येषामपि द्वेषिणां एवमेव तमःप्राप्तिरित्याह– **अन्येऽपीति** ।। अन्ये हरौ अभक्ताः द्वेषिणः उपयान्ति प्रतियान्ति ।।१३२।।

**ताम्रपर्णीया**– 'कंसो भगवन्तमाप' इति पौराणिकवचनस्य तदन्तस्थवाय्वादिपरत्वं कुतः कल्प्यते । प्रतीतार्थे बाधकाभावात् इत्यत आह– **द्वेषादिति** ।। धात्र्यादिभिरिति । स्वपदेन पूतनाग्रहणं पूतनायाः मुक्तिवचनं तदाविष्टोर्वशीविषयमिति प्रागुक्तस्मरणायेति ज्ञेयम् । तस्या एव प्रथमं हतत्वाच्च । जरासन्धसाल्वरुक्मिपौण्ड्रकचैद्यादीनां भगवत्प्राप्त्युक्तिरन्तस्थसज्जीवविषया । तेषां हरिद्वेषित्वात् तम एवेति भावेनोक्तं अन्यत्रापि अतिदिशति– **अन्य इति** ।।१३२।।

**भारतश्री**– वायुर्जीवभूतः । 'कंसाविष्टो स्वयं भृगुः' इति भागवततात्पर्योक्तेः [७.१.३२] ।।१३२।।

।। इति डम्वलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां त्रयोदशोऽध्यायः ।।

**भावचन्द्रिका**– अन्धन्तमो ययौ इत्यत्र पूर्वोक्तं ज्ञेयम् । द्वेषिण इत्युक्तौ नित्यसंसारिणां द्वेषो भक्तिश्चास्तीति तद्व्यावृत्तये अभक्ता इत्याह ।।१३२-१३८।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां त्रयोदशोऽध्यायः ।।

**चट्टि**– स कंसः । सर्वजगतः एकगुरोः मुख्यगुरोः श्रीकृष्णस्य द्वेषात् पूर्वं प्रमापितजनैः 'प्रमापणं निवर्हणम्' इत्यभिधानात् । पूर्वं प्रमापितैः हतैः जनैः धात्र्यादिभिः समस्तैः स्वकीयैः सहितः सन् अन्धन्तमः प्रतिययौ । यतः कुमतिः पापबुद्धिः अत एवेत्यर्थः । 'कुः पापेऽल्पार्थकुत्सयोः' इति यादवः । अन्येषामपि द्वेषिणां एवमेव तमःप्राप्तिरित्याह– **अन्येऽपीति** ।। अन्ये हरौ अभक्ताः द्वेषिणः एवमेव च तम उपयान्ति प्रयान्ति ।।१३२।।

**नित्यातिदुःखमनिवृत्तिसुखव्यपेतमन्धं तमो नियतमेति हरावभक्तः ।**
**[१]भक्तोऽपि कञ्जगिरीशमुखेषु सर्वधर्मार्णवोऽपि निखिलागमनिर्णयेन ।।१३३।।**

**व्यासतीर्थीया**– ननु तमः प्राप्तिः लोकान्तरप्राप्तिश्चेत्किं तयानिष्टमित्यतस्तत्स्वरूपं निरूपयन्नाह– **नित्येति** ।। ननु देवान्तरभक्त्यादिना तत्परिहारसम्भवात् कथं हरावभक्तस्तमो नियतमेतीत्युक्तिरित्यत आह– **भक्तोऽपीति** ।। कुत एतदवगतमित्यत उक्तम्– **निखिलेति** ।।१३३।।

---

१. 'ब्रह्मोवाच । विचार्याऽहं वेदान् मुहुरुपगतो निश्चयमिमं रमारामे भक्तिः त्वयि दृढतरा यर्ह्यसुभृताम् । भवेत्तर्ह्येवेषां क्षयविरहिता भोगनिकरास्तथा स्युर्लोका वै परमपुरुषात्यन्तिकगतिः । अजानन्तस्त्वित्थं भृतरजतमस्कानपि हरे भजन्त्यस्मान् देवान् बहुविधतपोऽर्चासरणिभिः । त एवोक्ता मूढाः क्षयरहितसौख्यं न कुहचिल्लभन्तेऽतस्त्वां वै निजहृदि दधे केशवमहम् ।' इति स्कान्दे वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये १५.१-२ ।

**वरदराजीया–** नियममेव स्पष्टयति– **नित्येत्यादिना** ।। नित्यं अत्यन्तं दुःखं यस्मिन् तत् । न विद्यते निवृत्तिः निर्गमनं यस्मात् तत् । सुखव्यपेतं सुखलेशेनापि रहितं एतादृशमन्धन्तमः एति । कञ्जादिषु भक्तोऽपि सर्वधर्मार्णवोऽपि हरावभक्तः हरिद्वेषी अन्धन्तमः नियतं नियमेन एति प्राप्नोतीति सम्बन्धः ।।१३३।।

**अनन्तभट्टीया–** अनिवृत्ति वृत्तिरहितम् ।। **निखिलेति** ।। सकलशास्त्रनिर्णयसिद्धः ।।१३३।।

**जनार्दनीया–** तमःस्वरूपं वदन् उक्तमेवार्थं विशदयन्नाह– **नित्येति** ।। कञ्जादिषु भक्तोऽपि सर्वधर्मार्णवोऽपि स्वविहितसर्वधर्मानुष्ठानशीलोऽपीत्यर्थः । हरौ अभक्तश्चेत् नित्यं अतिदुःखं यस्मिन् तत्तथा तत् । अनिवृत्तिमपुनरावृत्तिरहितं सुखेन व्यपेतं विशेषेणोज्झितम्, सुखलेशोऽपि नास्तीति भावः । एतादृशं अन्धन्तमः निखिलागमनिर्णयेन नियतं निश्चयेन एति प्राप्नोति ।।१३३।।

**ताम्रपर्णीया–** ननु हरिद्वेषित्वे ब्रह्मादिभक्तियुक्तत्वात् तमः प्रतिबन्धः किन्न स्यादित्याशङ्कां परिहरन् तमसश्च न नरकादितुल्यानर्थरूपत्वं किन्त्वत्यर्थानर्थरूपत्वं अतस्तत्साधने द्वेषे विरक्तेन भवितव्यमिति भावेनाह– **नित्येति** ।। कुत एतदवगतं इत्यत आह– **निखिलेति** ।। निखिलागमानामुपक्रमादिभिर्भगवत्येव महातात्पर्यनिर्णयेन अन्यथा महातात्पर्यनिर्णयविरोधः स्यादिति भावः । एवमभक्तस्य तमःप्राप्तेः न सर्वथा द्वेषः कार्य इत्युक्तम् । इदानीं भक्तेर्मुक्तिहेतुत्वात् सावश्यं कार्येति वदन् भक्तिसाधनमाह– **निखिलागमनिर्णयेनेत्यादिना** ।। 'हिरण्यगर्भस्समवर्तताग्रे'[ऋ.१०.१२१.१] 'ज्ञात्वा शिवम्' [श्वेता.] इत्यादिविरोधपरिहाराय निखिलागमेनेत्युक्तम् । उपक्रमादिभिः 'हिरण्यगर्भ' इत्याद्यागमानां भगवत्परत्वनिर्णयत्वेनेत्यर्थः ।।१३३-१३४।।

**चट्टि–** तमःस्वरूपं वदन् उक्तमेवार्थं विशदयन्नाह– **नित्येति** ।। कञ्जगिरीशमुखेषु भक्तोऽपि सर्वधर्मार्णवोऽपि स्वविहितधर्मानुष्ठानशीलोऽपीत्यर्थः । हरौ अभक्तश्चेत् नित्यं अतिदुःखं यस्मिन् तत्तथा । अनिवृत्तिमपुनरावृत्तिरहितं सुखेन व्यपेतं उज्झितम् । तत्र सुखलेशोऽपि नास्तीति भावः । एतादृशं अन्धन्तमः निखिलागमानां निर्णयेन नियतं निश्चयेन एति प्राप्नोति ।।१३३।।

**यो वेत्ति निश्चितमतिर्हरिमब्जजेशपूर्वाखिलस्य जगतः सकलेऽपि काले ।**
**सृष्टिस्थितिप्रलयमोक्षदमात्मतन्त्रं लक्ष्म्या अपीशमतिभक्तियुतः स मुच्येत् ।।१३४।।**

**व्यासतीर्थीया–** द्वेषिणः फलकथनप्रसङ्गाज्जिज्ञासितं भक्तिफलमाह– **यो वेत्तीति** ।।१३४।।

**वेदाङ्गतीर्थीया–** द्वेषिणः तत्प्राप्त्युक्तिप्रसङ्गात् मुक्तानां मुक्तिसाधनं ज्ञानप्रकारमाह– **यो वेत्तीति** ।।

**वरदराजीया–** अब्जजाद्यखिलस्य जगतः सकलेऽपि काले भूतभविष्यद्वर्तमानकाले सृष्ट्यादिप्रदं आत्मतन्त्रं स्वतन्त्रं लक्ष्म्या अपीशं स्वामिनं निखिलागमनिर्णयेन सर्वागमतात्पर्यपरिज्ञानेन यो वेत्ति जानाति निश्चितमतिः उक्तरीत्या निश्चयवान् योऽपि भक्तियुतः स मुच्येत् मुक्तो भवति ।।१३४।।

**जनार्दनीया–** माहात्म्यज्ञानपूर्वकहरिभक्त्यैव मोक्षप्राप्तिरित्याह– **यो वेत्तीति** ।। यः पुरुषः अब्जजेशादित्रयविशेषणैरुपेतं हरिं निश्चितमतिः उक्तार्थनिश्चितज्ञानी सन् वेत्ति जानाति । स हरौ भक्तियुतः सन् मुच्येत् मुक्तो भवति ।।१३४।।

**चट्टि–** माहात्म्यज्ञानपूर्वकहरिभक्त्यैव मोक्षप्राप्तिरित्याह– **यो वेत्तीति** ।। यः पुरुषः अब्जजेशपूर्वाखिलस्य जगतः सकले भूतभविष्यद्वर्तमानकालत्रयेऽपि सृष्टिस्थितिप्रलयमोक्षदम्, आत्मतन्त्रं लक्ष्म्या अपि ईशं स्वामिनं हरिम् निखिलागमनिर्णयेन सर्वागमतात्पर्यपरिज्ञानेन निश्चितमतिः निर्णीतज्ञानः सन् वेत्ति जानाति । स हरौ अतिभक्तियुतः सन् मुच्येत् मुक्तो भवति । निखिलागमनिर्णयेनेत्यस्यावृत्तिः ।।

**तस्मादनन्तगुणपूर्णममुं रमेशं निश्चित्य दोषरहितं परयैव भक्त्या ।**
**विज्ञाय दैवतगणांश्च यथाक्रमेण भक्ता[१] हरेरिति सदैव भजेत धीरः।।१३५।।**

**व्यासतीर्थीया–** अस्तु भक्ताभक्तयोरेवं फलं तथा च किं कार्यमित्यत आह– **तस्मादिति** ।। ।।१३५-१३६।।

**वेदाङ्गतीर्थीया–** दैवतगणांश्च हरेर्भक्ता इति विज्ञाय यथा क्रमेण भजेत ।।१३५-१३६।।

**वरदराजीया–** यस्मादेवं नियमस्तस्मात् अमुं रमेशमनन्तगुणपरिपूर्णं निर्दोषं परया भक्त्या निश्चित्यैव दैवतानां ब्रह्मादीनां गणाश्च यथाक्रमेण हरेः भक्ता इति च विज्ञाय हरिं देवतगणांश्च सदा भजेतैव ।।१३५।।

**जनार्दनीया–** तस्मान्मुक्तो भवतीति नियमात् धीरः दृढभक्तिः पुरुषः अमुं हरिं अनन्तगुणपूर्णं दोषरहितं रमेशं निश्चित्य, परयैव भक्त्या सर्वेभ्यः अधिकभक्त्या सदैव मुक्तामुक्तावस्थायां भजेत । दैवतगणांश्च ब्रह्मादिदेवसमूहांश्च यथाक्रमेण उक्ततारतम्यक्रमेण विज्ञाय, हरेर्भक्ता इति बुद्ध्या भजेत समर्चयेदित्यर्थः ।।१३५।।

**ताम्रपर्णीया–** तस्मात् द्वेषस्यानर्थहेतुत्वात् भक्तेर्महाफलहेतुत्वात् भजेत सेवेत । तदुक्तं 'पौण्ड्रकादिषु दैत्येषु सुरांशा सन्ति सर्वशः । वहुमानफलं विष्णोस्ते यान्त्यादाय सद्गतिम् । विद्वेषस्य फलं यत्तु तदादायासुरास्तमः । यान्त्यतो नैव विद्वेषो विष्णोः कार्यः कथञ्चन' [११.६.५] इति एकादशस्कन्धतात्पर्ये ।।१३५-१३६।।

१. 'भक्त्या' इति क्वचित् पाठः ।

**चट्टि–** यस्मादेवं नियमः तस्मात् धीरः दृढभक्तिः पुरुषः अमुं हरिं अनन्तगुणपूर्णं दोषरहितं रमेशं निश्चित्य, परयैव भक्त्या सर्वेभ्यः अधिकभक्त्या भजेत । दैवतगणांश्च ब्रह्मादिदेवसमूहांश्च यथाक्रमेण तारतम्यक्रमेण विज्ञाय, हरेर्भक्ता इति एते हरिभक्ताः इति बुद्ध्या सदैव भजेत समर्चयेदित्यर्थः ।।१३५।।

**निहत्य कंसमोजसा [१]विधातृशम्भुपूर्वकैः ।**
**स्तुतः प्रसूनवर्षिभिर्मुमोद केशवोऽधिकम् ।।१३६।।**

**सत्याभिनवतीर्थीया–** तत्रैव निहत्य कंसमोजसा विधातृशम्भुपूर्वकैः...इति श्लोकद्वयम् । तस्यार्थः । केशवः ओजसा कंसं निहत्य प्रसूनवर्षिभिः विधातृशम्भुपूर्वकैः स्तुतः सन् अधिकं मुमोद । मुमोदेति अज्ञलोका अवदन्निति शेषः । तर्हि कंसं निहत्य केशवः अधिकं मुमोदेति पुराणोक्तेः का गतिरित्यत आह– **सदैवेति** ।। सदैव मोदरूपिणः अस्य कृष्णस्य पुराणसम्बन्धिनीति शेषः । पुराणसम्बन्धिनी मुदोक्तिः सन्तोषोक्तिः लौकिकी लोकोक्तानुवादिनी । लोकानामविद्यमानार्थविषयकव्यवहारो भवतीत्यत्र दृष्टान्तमाह– **यथेति** ।। लोकतः लोकानां सदोदितस्य रवेः विषये उदयः उदयव्यवहारः यथेति । एतेन केशवः अधिकं मुमोदेति कथनमयुक्तम् । 'मुदोक्तिरस्य लौकिकी' इति मोदाभावस्य वक्ष्यमाणत्वादिति दूषणमपास्तम् । केशवः अधिकं मुमोदेत्यनेन मूर्खलोकैः भ्रान्त्या केशवः अधिकं मुमोदेत्युक्तमित्युच्यत इत्यङ्गीकारात् । एतेनैव केशवः अधिकं मुमोदेत्यनेनैव मुदोक्तेर्गतेरुक्तत्वात् मुदोक्तिरस्य लौकिकीत्येतत् पुनरुक्तमिति चोद्यं निराकृतम् । केशवोऽधिकं मुमोदेत्यनेन अज्ञलोकोक्तेः गतिरुक्ता । 'मुदोक्तिरस्य लौकिकी' इत्यनेन पुराणोक्तेः गतिरुच्यत इति स्वीकरणात् ।।१३६-१३७।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां त्रयोदशोऽध्यायः ।।

**वरदराजीया–** एवं प्रासङ्गिकमुक्त्वा अध्यायार्थमुपसंहरति– **निहत्येति** ।। ओजसा स्वसामर्थ्येन । प्रसूनवर्षिभिः पुष्पवृष्टिं कुर्वद्भिः विधातृपूर्वकैः स्तुतः सन् अधिकं मुमोद ।।१३६।।

**जनार्दनीया–** ओजसा सामर्थ्येन । अधिकमिति क्रियाविशेषणम् ।।१३६।।

**चट्टि–** एवं प्रासङ्गिकं उक्त्वा अध्यायार्थमुपसंहरति– **निहत्येति** ।। केशवः श्रीकृष्णः ओजसा सामर्थ्येन कंसं निहत्य, प्रसूनवर्षिभिः विधातृशम्भुपूर्वकैः स्तुतस्सन् अधिकं यथा भवति तथा मुमोद ।।

**सदैव मोदरूपिणो मुदोक्तिरस्य लौकिकी ।**
**यथोदयो रवेर्भवेत् सदोदितस्य लोकतः ।।१३७।।**

---

२. 'नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः । पुष्पैः किरन्तस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः ।।' इति भागवते १०.४२.४२।

**व्यासतीर्थीया–** ननु भगवतः सदा मोदरूपत्वात् कथं मुमोदेत्युक्तिरित्यतः व्याचष्टे– **सदेति** ।। लौकिकी लोकदृष्ट्यपेक्षया ।।१३७।।

**वेदाङ्गतीर्थीया–** मुदोक्तिः 'हलन्तादपि टावन्तं यथा वाचा निशा दिशा' इति हलन्तादपि टाप् विधानात् मुत् शब्दस्य टाप्प्रत्ययमित्यभिप्रेत्यायं प्रयोगः । मुदेति भिन्नं वा पदम् । तत्पक्षे विशिष्य योज्यम् । लौकिकी अज्ञजनानुसारिणी ।।१३७।।

**वादिराजीया–** मुदोक्तिरित्यत्र 'टापं चैव हलन्तानाम्' इति वचनात् मुदेव मुदेति ज्ञेयम् ।। ।।१३७-१३८।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां त्रयोदशोऽध्यायः ।।

**वरदराजीया–** सदैव नित्याभिव्यक्तमोदरूपस्य इदानीं मुमोदेति या मुदोक्तिः सा लौकिकी लोकानुसारिणी । तत्र लौकिकमेव दृष्टान्तमाह– **यथेति** ।। यथा सदोदितस्य रवेः लोकत उदयो भवेत् सदाभिव्यक्तस्वरूपोऽपि सूर्य इदानीमुदित यथा लौकिको व्यवहारः तथा मुमोदेति व्यवहार इति भावः ।।१३७।।

**भावविवृति–** यथोदयो रवेर्भवेत् सदोदितस्य लोकत इत्यत्र मुदोक्तिः मुदायाः उक्तिः । मुदो इत्यकारन्तं पदम् । लोकतो दृष्ट्यनुसारेण । अयं भावः । मेरोश्चतुर्दिक्षु चरतो रवेः स्वत उदयाद्यभावेऽपि तत्तत्प्रदेशसञ्चारदशायां तत्रत्यैः दृश्यत इत्युदयः । तद्देशं परित्यज्यान्यत्र गमने तैर्नदृश्यत इति अस्तमयोक्तिश्च । किञ्च तत्तद्दिक्षु प्रकाशका रश्मयो नियता एव तत्तद्दिक्ष्वेव वर्तन्ते । तथापि स्वनियतदेशे रविमण्डले आगते सति प्रकाशलक्षणं स्वव्यापारं कुर्वते । मण्डलापगमे तत्र स्थिता अपि रश्मयो प्रकाशलक्षणं स्वव्यापारं न कुर्वन्तीति वक्तव्यम् । तदुक्तं छान्दोग्यभाष्ये– रश्मीनां नियतदिक्ष्वेव स्थितत्वम् ।

'ऋक्प्रोक्तो लोहिताकारो वासुदेवः परः पुमान् । स एव सूर्यलौहित्ये प्राच्यरश्मिषु संस्थितः ।।
सङ्कर्षणः शुक्लवर्णः यजुर्वेदोदितः प्रभुः । शुक्लवर्णे च सूर्यस्य दक्षराशिषु संस्थितः ।
प्रत्यग्रश्मिषु सूर्यस्य श्यामवर्णेऽपि च स्थितः । अनिरुद्धः सुनीलश्च इतिहासपुराणयोः ।
अथर्ववेदे चोक्तस्सन् उदग्रश्मिषु च स्थितः । सुकृष्णे सूर्यरूपे च मध्ये नारायणः प्रभुः ।
ऊर्ध्वरश्मिषु संस्थश्च प्रोद्यदादित्यसन्निभः ।।' इति [३.५.]

उक्तञ्च षट्प्रश्नोपनिषद्भाष्ये– [४प्र.२]

'रश्मीनामविशेषेऽपि ह्यल्पदृष्टिव्यपेक्षया । सूर्यस्य मण्डलं यान्तीत्युच्यन्ते तददर्शनात् ।।' इति।

तट्टीकायाञ्च– 'अर्कमरीचीनां यत्तेजोमण्डले अस्तमये एकीभाववचनं यच्चोदये तस्मात् पुनः प्रचारवचनं तदनुपपन्नम् । अत्रास्तमयेऽपि देशान्तरे पृथग्दर्शनादिना आदित्यरश्मीनामुदयास्तमययोः अविशेषात् । ...तद्वाक्यं समञ्जसयितुं व्याख्यानरूपां स्मृतिमुदाहरति– **रश्मीनामिति** ।। ततश्चायमर्थः। यथार्कस्यास्तमदर्शनं गच्छतः सतः सर्वेपि रश्मयः सर्वा एव मरीचयो एतस्मिन् दृश्यमाने तेजोमण्डले एकीभवन्ति । तत्र एकीभूता इव दृश्यन्ते । प्रकाशनादिव्यापारादुपरमन्त इति यावत् । ताः पुनरस्ते तु रश्मयोऽर्कस्य पुनरुदयतः सतः प्रचरन्ति । तस्मान्मण्डलान्निर्गत्य लोके प्रचरन्तीव दृश्यन्ते, स्वव्यापारं कुर्वन्तीति यावत्' । ननु रश्मीनां मण्डलस्याभिन्नत्वात् कथं नियततत्तद्दिक्षु अवस्थितत्वमिति चेत् मासि मासि एकैकस्सूर्यः मण्डले आगत्य तिष्ठति । यस्मिन् मासि यः सूर्यो मण्डले तिष्ठति तत्सम्बन्धिनो रश्मयः प्राच्यादिपञ्चदिक्षु स्थित्वा प्राणादिमुख्यप्राणरूपेण अनिरुद्धादिरूपेणाधिष्ठतास्सन्तः स्वस्वनियतदिशं प्रकाशयन्ति । तदुक्तं कूर्मपुराणे चतुर्दशाध्याये-[४३.१९-२७]

वरुणो माघमासे तु सूर्यः पूषा तु फल्गुने । चैत्रे मासि च [देवेशो] वेदाङ्गो धाता वैशाखतापनः ।।
ज्येष्ठे चैव तु देवेन्द्रो आषाढे तपते रविः । विवस्वान् श्रावणे मासि प्रोष्टपद्यां भगस्स्मृतः ।।
पर्जन्यश्चाश्विने त्वष्टा कार्तिके मासि भास्करः । मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः ।।
पञ्चरश्मिसहस्राणि वरुणस्यार्ककर्मणि । षड्भिः सहस्रैः पूषा तु वेदाङ्गस्सप्तभिस्तपेत् ।।
धाताऽष्टभिस्सहस्रैस्तु सविता नवभिस्तपेत् । विवस्वान् दशभिश्चैव तपत्येकादशभिर्भगः ।।
सप्तभिस्तपते मित्रः त्वष्टा चैवाष्टभिस्तपेत् । अर्यमा दशभिः पाति पर्जन्यो नवभिस्तथा ।।
षड्भिः रश्मिसहस्रैस्तु विष्णुस्तपति विश्वकृत् । वसन्ते कपिलस्सूर्यः ग्रीष्मे काञ्चनसप्रभः ।।
श्वेतो वर्षासु वर्णेन पाण्डुरः शरदि प्रभुः । हेमन्ते ताम्रवर्णस्स्यात् शिशिरे लोहितो रविः ।।
ओषधीषु बलं धत्ते स्वधाञ्चैव पितृस्वधा ।। इति ।।१३७-१३८।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ त्रयोदशोऽध्यायः ।।

**जनार्दनीया–** अधिकं मुमोदेत्युक्तेस्तात्पर्यमाह– **सदैवेति** ।। सदैव निरन्तरं मोदरूपिणः आनन्दरूपिणः अस्य कृष्णस्य मुदायाः मोदस्य उक्तिः कथनं लौकिकी अल्पज्ञबुद्ध्यनुसारिणी । तत्र दृष्टान्तमाह– **यथेति** । सदा उदितस्य रवेः लोकतः उदयो भवेद् भवति । यथा तथा सदैव मोदरूपिणः मुदोक्तिरित्यर्थः । 'टापं चैव हलन्तानां यथा वाचा निशा दिशा' इति हलन्तादपि टाप्विधानात् मुच्छब्दस्य टावन्तत्वमभिप्रेत्यायं प्रयोगः । अस्य कृष्णस्य मुदा सन्तोषेण उक्तिः विशिष्टत्वोक्तिः लौकिकीति वार्थः ।।१३७।।

**ताम्रपर्णीया–** ।। **मुदोक्तिरिति** ।। 'हलन्तादपि टावन्तं यथा वाचा निशा दिशा' इति हलन्तादपि टाब्विधानात् मुच्छब्दस्य टावन्तत्वमभिप्रेत्यैवं प्रयोगः । मुदेति भिन्नं वा पदम् । मुदा विशिष्टत्वेनोक्तिरिति योज्यम् ।।१३७।।

**चट्टि–** ननु भगवतः सदा मोदरूपत्वात् कथमिदानीं मुमोदेत्युक्तिरित्यत आह– **सदैवेति** ।। सदैव निरन्तरं मोदरूपिणः आनन्दरूपिणः अस्य श्रीकृष्णस्य मुदायाः मोदस्य उक्तिः कथनं लौकिकी अल्पज्ञबुद्ध्यनुसारिणी । तत्र दृष्टान्तमाह– **यथेति** ।। सदा उदितस्य रवेः लोकतः यथा उदयो भवेद् तथा सदैव मोदरूपिणः मुदोक्तिरित्यर्थः । 'टापं चैव हलन्तानां यथा वाचा निशा दिशा' इति हलन्तादपि टाब्विधानात् मुच्छब्दस्य टावन्तत्वमभिप्रेत्यायं प्रयोगः । मुदेति भिन्नं वा पदम् । अस्य श्रीकृष्णस्य मुदा सन्तोषेण उक्तिः विशिष्टत्वोक्तिः लौकिकी लोकानुसारिणीत्यर्थः ।।१३७।।

**अनन्तचित्सुखार्णवः सदोदितैकरूपकः ।**
**समस्तदोषवर्जितो हरिर्गुणात्मकः सदा ।।१३८।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये त्रयोदशोऽध्यायः ।।

**व्यासतीर्थीया–** तस्मादनन्तगुणमित्याद्युक्तं मुमुक्षुणा सर्वथा ज्ञातव्यमिति भावेन पुनराह– **अनन्तेति** ।। उदितमविद्यानावृतम् । अनन्तचित्सुखादिगुणैरर्णवोऽनन्तचित्सुखार्णव इत्युक्त्या प्रसक्तां भेदप्रतीतिं निवारयितुमुक्तम्– **गुणात्मक इति** ।।१३८।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां त्रयोदशोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** सदैव मोदरूपित्वं साधयितुं तत्स्वरूपं निरूपयति– **अनन्तेति** ।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां त्रयोदशोऽध्यायः ।।

**वरदराजीया–** वस्तुतस्त्वेतादृश इत्याह– **अनन्तेति** ।। अनन्ताभ्यां चित्सुखाभ्यां अर्णव इव सदोदिताभिन्नाभिव्यक्तरूपः सदा समस्तदोषवर्जितो गुणात्मको हरिरित्यशेषमतिमङ्गलम् ।।१३८।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुबोधिन्यां त्रयोदशोऽध्यायः ।।

**अनन्तभट्टीया–** ।। **सदोदितेति** ।। नित्योदितमुख्यरूपः ।।१३८।।

।। इति श्रीमुष्णं अनन्ताचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां तन्त्रमालायां [सत्तत्त्वमालायां] त्रयोदशोऽध्यायः ।।

**जनार्दनीया–** सदैव मोदरूपित्वं कृष्णस्य साधयितुमेव तत्स्वरूपं निरूपयति– **अनन्तचिदिति** ।। हरिः सदा । अनन्ते च ते चित्सुखे ज्ञानानन्दौ ताभ्यां अर्णव इवार्णवः । सदा उदितं अभिव्यक्तं स्वरूपं यस्य स तथा । स्वार्थे कप्रत्ययः । **समस्तदोषवर्जितः** । गुणाः आनन्दादयः आत्मा देहो यस्य स तथा ।।१३८।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात् ।
पूर्तिं तस्य कृतौ त्रयोदश इहाध्यायः सतां मोददः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां त्रयोदशोऽध्यायः ।।

**ताम्रपर्णीया–** लोकदृष्ट्यपेक्षया मुमोदेत्युक्तिरिति कुतः? अस्मदादिवत् सुखजनिर्वा? मुक्तानामिव सुखव्यक्तिर्वा? किं न स्यादित्यतो 'सदैव मोदरूपिणः' इत्युक्तं विवृण्वन्नाह– **अनन्तेति** ।। अनन्तचित्सुखादिगुणैरर्णव इवेत्युक्त्या प्राप्तगुणगुणिभेदशङ्कां वारयितुमुक्तम्– **गुणात्मक इति** ।।१३८।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां [प्रमाणमालायां] त्रयोदशोऽध्यायः ।।

**चट्टि–** सदैव मोदरूपित्वं श्रीकृष्णस्य साधयितुं तत्स्वरूपं निरूपयति– **अनन्तचिदिति** ।। हरिः सदा अनन्ते च ते चित्सुखे ज्ञानानन्दौ ताभ्यां अर्णव इवार्णवः । सदा उदितं अभिव्यक्तं स्वरूपं यस्य स तथा । स्वार्थे कप्रत्ययः । सदा समस्तदोषैः विवर्जितः । गुणाः आनन्दादयः आत्मा देहो यस्य स इत्यशेषमतिमङ्गलम् ।।१३८।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां त्रयोदशोऽध्यायः ।।

★★★

# अथ चतुर्दशोऽध्यायः

**कृष्णो विमोच्य [1]पितरावभिवन्द्य सर्ववन्द्योऽपि रामसहितः प्रतिपालनाय ।**
**धर्मस्य राज्यपदवीं प्रणिधाय चोग्रसेने द्विजत्वमुपगम्य मुमोच नन्दम्॥१॥**

**व्यासतीर्थीया–** अथ कंसवधानन्तरं प्रवृत्तकथामाह– **कृष्णो विमोच्येत्यादिना** ॥ निखिलान् विमोच्य, सर्ववन्द्यः पितरौ किमर्थं ववन्दे इत्यतः, स्वयं जित्वा कस्मादुग्रसेने राज्यं न्यधादित्यतो, विध्यगोचरत्वात् किमर्थं द्विजत्वमवापेत्यतश्चोक्तम्– **धर्मस्य प्रतिपालनायेति** ॥१-३॥

**वेदाङ्गतीर्थीया–** धर्मस्य परिपालनाय पितरावभिवन्द्य राज्यपदवीमुग्रसेने प्रणिधाय द्विजत्वं चोपगम्येति योज्यम् । नन्दं मुमोच नन्दं गोकुलाय प्रेषयामास ॥१-३॥

**मधुसूदनीया–** ॥ **कृष्ण इति** ॥ पितरावित्युपलक्षणम् । उग्रसेनाहुकौ च विमोक्ष्येत्यपि ग्राह्यम् । तयोरपि कंसेन बद्धत्वात् । तथाचोक्तम्–'उग्रसेनसुतः कंसः सर्वान् निर्मथ्य यादवान् । राज्यं जग्राह दुर्बुद्धिः बद्ध्वा पितरमाहुकम् ॥ समाश्रित्य जरासन्धं श्वसुरं कुलपांसनः ॥' इति हरिवंशे [१०१.२६-२७] कृष्णवचनादुग्रसेने राज्यपदवीं प्रणिधाय उग्रसेनं राज्येऽभिषिच्येत्यर्थः । 'न हि राज्येन मे कार्यं नाप्यहं नृप काङ्क्षितः । अहं स एव गोमध्ये गोपैस्सह वनेचरः ॥ विजयायाभिषिञ्चस्व स्वराज्ये राजसत्तम । यदि ते मत्प्रियं कार्यं यदि ते नास्ति ते व्यथा ॥' इति कृष्णवचनाद्धरिवंशे [२.३२.४८-४९-५३]। ययातिशापेन यादवभोजादीनां राज्याऽनर्हत्वेऽपि कृष्णवचनादुग्रसेनस्य राज्याधिकारः ।

---

१. 'मातरं पितरं चैव मोचयित्वाऽथ बन्धनात् । कृष्णरामौ ववन्दाते शिरसाऽस्पृश्य पादयोः ॥ देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ । कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ ॥' १०.४२.५०-५१ । भागवते तु श्रीकृष्णस्य द्विजत्वप्राप्तिः वृन्दावनं प्रति नन्दप्रेषणानन्तरमेव इत्युच्यते । तथाहि– 'एवं सान्त्वय्य भगवान् नन्दं सव्रजमच्युतः । वासोऽलङ्कारकुप्याद्यैः अर्हयामास सादरम् । इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः । पूरयन्नश्रुभिर्नेत्रे सह गोपैः व्रजं ययौ ॥ अथ शूरसुतो राजन् पुत्रयोः समकारयत् । पुरोधसा ब्राह्मणैश्च यथावत् द्विजसंस्कृतिम् ॥' इति भागवते १०.४३.२४-२६

'ययातिशापाद्वंशोऽयमराज्यार्होऽपि साम्प्रतम् । मयि भृत्ये स्थिते देवानाज्ञापयतु किं पुनः ।। श्रीपराशर उवाच– इत्युक्त्वा सोऽस्मरद्वायुं आजगाम च तत्क्षणात् । उवाचैवं च भगवान् केशवः कार्यमानुषः ।। गच्छेन्द्रं ब्रूहि वायो त्वं अलं गर्वेण वासव । दीयतामुग्रसेनाय सुधर्मा भवता सभा ।।' इत्यादि विष्णुपुराणोक्तेः [५.२१.१५-१६] ।।१-२।।

**वरदराजीया–** पितरौ मातापितरौ निगडाद्विमोच्य, सर्ववन्द्योऽपि रामसहितो धर्मस्य प्रतिपालनाय अभिवन्द्य, राज्याधिपत्यञ्च उग्रसेने प्रणिधाय, द्विजत्वमुपयनयमुपगम्य प्राप्य, नन्दं मुमोच गोकुलं प्रति प्रेषितवान् ।।१।।

**भावविवृति–** कृष्णो विमोच्य पितरावभिवन्द्य सर्ववन्द्योऽपि रामसहितः मुमोच नन्दमित्यत्र कृष्णः पितरौ विमोच्य । अपिशब्दादुग्रसेनाहुकौ च विमोच्य, निगडादिति शेषः । तदेतदुक्तं हरिवंशे– 'उग्रसेनसुतः कंसः सर्वान्निर्मथ्य यादवान् । राज्यं जग्राह दुर्बुद्धिः बध्वा पितरमाहुकम् ।। समाश्रित्य जरासन्धं श्वशुरं कुलपांसनः ।।' इति । लोके पुत्रेण पितृवन्दनं कार्यमिति धर्मपालनाय शत्रुवधानन्तरं तद्राज्यं तद्वंश्यानामेव दातव्यमिति धर्मरक्षणाय चोग्रसेने राज्यं निधाय वसुदेवात् द्विजत्वमुपगम्य नन्दं मुमोच । वृन्दावनं प्रति अनयत् ।।१-४।।

**अनन्तभट्टीया–** विमोच्य निगडादिति शेषः । राज्यपदवीं राज्यम् । नन्दं मुमोच । व्रजं प्रति स्थापयामासेत्यर्थः ।।१।।

**जनार्दनीया–** श्रीमद्भगवानाचार्यः कंसवधानन्तरं सतां धर्मशिक्षणरूपां दैत्यपराभवरूपां च कृष्णलीलां निरूपयति– **कृष्ण इत्यादिना** ।। कृष्णः पितरौ देवकीवसुदेवौ विमोच्य निगडान्मोचयित्वा, धर्मस्य प्रतिपालनाय रक्षणार्थम् । सतां धर्मं शिक्षयन्निति भावः । रामसहितः सन् स्वयं सर्ववन्द्योऽपि पितरौ अभिवन्द्य, उग्रसेने राज्यपदवीं मधुरामण्डलाधिपत्यं प्रणिधाय च द्विजत्वं उपनयने गायत्रीतो जन्म उपगम्य प्राप्य, वसुदेवादिति शेषः । धर्मस्य प्रतिपालनाय इति त्रिषु सम्बन्धः । नन्दं मुमोच सान्त्वयित्वा वृन्दावनं प्रति प्रेषयामासेत्यर्थः ।।१।।

**ताम्रपर्णीया–** पित्रभिवन्द्यत्वे उग्रसेनाय राज्यप्रदाने विप्रत्वगमने च कारणमाह– **धर्मस्येति** ।। ।।१-६।।

**चट्टि–** भगवान् श्रीमदाचार्यवर्यः सतां धर्मशिक्षणरूपां दैत्यपराभवरूपां च श्रीकृष्णलीलां निरूपयति– **कृष्ण इत्यादिना** ।। श्रीकृष्णः पितरौ देवकीवसुदेवौ विमोच्य निगडान्मोचयित्वा, पितरौ उपलक्षणम् । उग्रसेनाहुकौ च विमोच्येत्यपि ज्ञातव्यम् । तयोरपि कंसेन बद्धत्वात् । तथा चोक्तम्–

'उग्रसेनसुतः कंसः सर्वान्निर्मथ्य यादवान् । राज्यं जग्राह दुर्बुद्धिः बध्वा पितरमाहुकम् ।।

समाश्रित्य जरासन्धं श्वसुरं कुलपांसनः ।।' इति हरिवंशे [प.२.१०१.२६-२७] ।

स्वयं सर्ववन्द्योऽपि रामसहितः सन् धर्मस्य प्रतिपालनाय रक्षणार्थम् । सतां धर्मं शिक्षयन्निति भावः । पितरौ अभिवन्द्य, उग्रसेने राज्यपदवीं मधुरामण्डलाधिपत्यं प्रणिधाय च । उग्रसेनं राज्येऽभिषिच्येत्यर्थः । द्विजत्वं उपनयने गायत्रीतो जन्म उपगम्य प्राप्य, वसुदेवादिति शेषः । धर्मस्य प्रतिपालनाय इति त्रिषु सम्बन्धः । नन्दं मुमोच सान्त्वयित्वा वृन्दावनं प्रति प्रेषयामासेत्यर्थः ।

नहि राज्येन मे कार्यं नाप्यहं नृप काङ्क्षितः । अहं स एव गोमध्ये गोपैस्सह वनेचरः ।।

विजयायाभिषिञ्चस्व स्वराज्ये राजसत्तम । यदि ते मत्प्रियं कार्यं यदि ते नास्ति ते व्यथा ।।

इति कृष्णवचनाद्धरिवंशे [२प.३२अ.४८-४९-५३] । ययातिशापेन यादवभोजादीनां राज्याऽनर्हत्वेऽपि श्रीकृष्णवचनादुग्रसेनस्य राज्याधिकारः ।

ययातिशापाद्वंशोऽयमराज्यार्होऽपि साम्प्रतम् । मयि भृत्ये स्थिते देवानाज्ञापयतु किं नृपैः[पुनः]।।

इत्युक्त्वा सोऽस्मरद्वायुं आजगाम च तत्क्षणात् । उवाचैनं च भगवान् केशवः कार्यमानुषः ।।

गच्छेन्द्रं ब्रूहि वायो त्वं अलं गर्वेण वासव । दीयतामुग्रसेनाय सुधर्मा भवतां सभा ।।

इत्यादि विष्णुपुराणोक्तेः [५.२१.१५-१६] ।।१।।

**नन्दोऽपि सान्त्ववचनैरनुनीय मुक्तः कृष्णेन तच्चरणपङ्कजमात्मसंस्थम् ।**
**कृत्वा जगाम सह गोपगणेन कृच्छ्राद् ध्यायन् जनार्दनमुवास वने सभार्यः ।।२।।**

**वरदराजीया–** 'नन्दं मुमोच' इत्येतत्स्पष्टयति– **नन्दोऽपीति** ।। सान्त्ववचनैः मृदुवचनैः अनुनीय प्रार्थयित्वा मुक्तः प्रेषितः आत्मसंस्थं कृत्वा सभार्यः सन् वने उवास ।।२।।

**जनार्दनीया–** कृष्णेन नन्दोऽपि नन्दश्च सान्त्ववचनैः दुःखपरिहाररूपवाक्यैः अनुनीय सान्त्वयित्वा, मुक्तः प्रेषितोऽभूदित्यर्थः । तस्य कृष्णस्य चरणपङ्कजं आत्मनि अन्तःकरणे संस्थं निश्चलं कृत्वा गोपगणेन सह कृच्छ्राज्जगाम । नन्द इति शेषः । सभार्यो नन्दः जनार्दनं ध्यायन् वने वृन्दावने उवास।

**चट्टि–** श्रीकृष्णेन नन्दोऽपि नन्दश्च सान्त्ववचनैः दुःखपरिहाररूपवाक्यैः अनुनीय सान्त्वयित्वा, मुक्तः प्रेषितः सन् तस्य श्रीकृष्णस्य, चरणपङ्कजं आत्मसंस्थं हृदि संस्थं कृत्वा, गोपगणेन सह कृच्छ्रात् आजगाम । सभार्यो नन्दः गृहे उवास ।।२।।

**कृष्णोऽप्यवन्तिपुरवासिनमेत्य विप्रं सान्दीपनिं सह बलेन ततोऽध्यगीष्ट ।**
**वेदान् [१]सकृन्निगदितान् निखिलाश्च विद्याः सम्पूर्णसंविदपि दैवतशिक्षणाय ।।३।।**

१. 'सर्वं तदमरश्रेष्ठौ सर्वविद्याप्रवर्तकौ । सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप ।।' इति भागवते १०.४३.३५ ।

**मधुसूदनीया–** ।। **कृष्णोऽपीति** ।। निखिला विद्याः चतुष्षष्ठिसङ्ख्याका इत्यर्थः । 'अहो रात्रैश्चतुःषष्ट्या साङ्गवेदमधीयताम् । चतुष्पादे धनुर्वेदे शस्त्रग्रामे ससङ्ग्रहे ।। अचिरेणैव कालेन गुरुस्तानभ्यशिक्षयत् ।।' इति हरिवंशे [२.३३.६-७] ।।३-४।।

**वरदराजीया–** ततः सान्दिपिनेः सकाशात् अध्यगीष्ट अधीतवान् । सकृन्निगदितान् एकवारं पठितान् । विद्याः सात्वताद्याः । सम्पूर्णसंविदपि दैवतशिक्षणाय अध्यगीष्टेति सम्बन्धः ।।३।।

**अनन्तभट्टीया–** ततः सान्दिपिनेः ।।३।।

**जनार्दनीया–** अथ सम्पूर्णा संविज्ज्ञानं यस्य सः तथा । तादृशोऽपि कृष्णः सान्दीपनिं सान्दीपिनामकं विप्रमेत्य, ततः तस्मात्सान्दीपिनः सकृन्निगदितानेकवारमुक्तान् वेदान्, निखिलाः विद्याश्च, दैवतानां देवानां शिक्षणाय अध्यगीष्ट अधिजगौ ।।३।।

**भावचन्द्रिका–** ।।१-२।। अध्यगीष्ट अहोरात्रैश्चतुःषष्ट्या ।।३।।

**चट्टि–** सम्पूर्णा संवित् ज्ञानं यस्य सः तथा । तादृशो श्रीकृष्णः बलेन सह अवन्तिपुरवासिनं सान्दीपनिं तन्नामकविप्रमेत्य, ततः तस्मात् सकृन्निगदितानेकवारमुक्तान् । निखिलाः विद्याश्च चतुःषष्टिसङ्ख्याकाः विद्याः इत्यर्थः । दैवतानां देवानां शिक्षणाय अध्यगीष्ट अधिजगौ । 'अहोरात्रैश्चतुःषष्ट्या साङ्गं वेदमधीयताम् । चतुष्पादे धनुर्वेदे शस्त्रग्रामे ससङ्ग्रहे ।। अचिरेणैव कालेन गुरुस्तानभ्यशिक्षयत् ।।' इति हरिवंशे [२.३३.६-७]।।३।।

**धर्मो हि सर्वविदुषामपि दैवतानां प्राप्ते नरेषु जनने नरवत् प्रवृत्तिः ।**
**ज्ञानादिगूहनमुताध्ययनादिरत्र [१]तज्ज्ञापनार्थमवसद् भगवान् गुरौ च ।।४।।**

**व्यासतीर्थीया–** दैवतशिक्षणायेत्युक्तं विवृणोति– **धर्मो हीति** ।।४।।

**वेदाङ्गतीर्थीया–** तज्ज्ञापनार्थं देवधर्मज्ञापनार्थं भगवांश्च गुराववसत् ।।४।।

**सत्याभिनवतीर्थीया–** तत्रैव धर्मो हि सर्वविदुषां...इति श्लोके । यद्यपि किञ्चिज्ज्ञानिनापि धर्मानुष्ठानमावश्यकं न भवति, सर्वज्ञानां तु सुतराम् । देवानां सर्वज्ञत्वात् धर्मानुष्ठानमावश्यकं न भवति । तथाऽपि देवानां नरवत् प्रवृत्त्यादिरूपधर्मानुष्ठानमावश्यकमिति ज्ञापयितुं सर्वविदुषामपीत्युक्तम् । एतेन देवानां नरवत् प्रवृत्त्यादिकं धर्म इत्यनेनैव पूर्णत्वात् सर्वविदुषामपीत्येतत् व्यर्थमिति दूषणस्यावकाशः।

१. 'प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ । नान्यसिद्धामलज्ञानं गूहमानौ नरेहितैः ।। अथो गुरुकुले वासमिच्छन्तौ उपजग्मतुः । काश्यं सान्दीपिनिं नाम अवन्तिपुरवासिनम् ।।' इति भागवते १०.४३.३१-३२ । 'विदिताखिलविज्ञानौ सर्वज्ञानमयावपि । शिष्याचार्यक्रमं वीरौ ख्यापयन्तौ यदूत्तमौ ।।' इति विष्णुपुराणे ५.२१.१८ ।

**वरदराजीया–** 'दैवतशिक्षणाय' इत्येतद्विवृणोति– **धर्मो हीति** ।। सर्वविदुषां सर्वज्ञानामपि नरेषु जनने प्राप्ते सति नरवत्प्रवृत्तिः धर्मो हि । नरवत्प्रवृत्तिमेव दर्शयति– **ज्ञानादीति** ।। ज्ञानबलाद्याच्छादनं तद्धर्म इति ज्ञापनार्थं गुराववसत् ।।४।।

**जनार्दनीया–** दैवतशिक्षणमित्युक्तं विशदयति– **धर्म इति** ।। सर्वविदुषामपि सर्वज्ञानिनामपि दैवतानां नरेषु जनने अवतारे प्राप्ते सति अवतारे नरवत्प्रवृत्तिः प्रवर्तनम् । ज्ञानादेः ज्ञानबलादेर्गूहनं गौप्यं उत तथा अध्ययनादिः अध्ययनं वेदपठनम् । आदिपदेन वर्णोचितविद्याभ्यासः । धर्मो हि यस्मात् तस्मात् भगवान् ज्ञापनार्थं अवतीर्णानां धर्मं ज्ञापयितुं, गुरौ च गुरुवशे चावसत् ।।४।।

**चट्टि–** दैवतशिक्षणायेत्युक्तं विवृणोति– **धर्म इति** ।। सर्वज्ञानानामपि दैवतानां नरेषु जनने अवतारे प्राप्ते सति नरवत्प्रवृत्तिः प्रवर्तनम् । ज्ञानादेः ज्ञानबलादेर्गूहनं आच्छादनं उत तथा अध्ययनादिः अध्ययनं वेदपठनम् । आदिपदेन वर्णोचितविद्याभ्यासः । धर्मो हि यस्मात् तस्मात् भगवान् श्रीकृष्णः अत्र तज्ज्ञापनार्थं अवतीर्णानां देवानां धर्मं ज्ञापयितुं, गुरौ च गुरुवशे अवसत् ।।४।।

**गुर्वर्थमेष [1]मृतपुत्रमदात् पुनश्च[2] रामेण सार्धमगमन्मधुरां रमेशः ।**
**पौरैः सजानपदबन्धुजनैरजस्रमभ्यर्चितो न्यवसदिष्टकृदात्मपित्रोः ।।५।।**

**वेदाङ्गतीर्थीया–** आत्मपित्रोरन्येषां चेति शेषः ।।५।।

**वेदाङ्गतीर्थीया–** आत्मपित्रोरन्येषां च इति शेषः ।।५-६।।

**सत्याभिनवतीर्थीया–** तत्रैव गुर्वर्थमेष मृतपुत्रं...आत्मपित्रोरित्यस्य आत्मप्रीत्यास्पदपित्रोरित्यर्थः । एतेन पित्रोरित्यस्य ससम्वन्धिकत्वात् आत्मपदाभावेऽपि आत्मपित्रोरित्यर्थप्राप्तिसम्भवात् आत्मपदं व्यर्थमिति दूषणं पराकृम् । आत्मसम्वन्धित्वमात्रलाभार्थमात्मपदं प्रयुक्तमित्यनभ्युपगमात् ।।५।।

**मधुसूदनीया–** ।। **गुर्वर्थमिति** ।। मृतपुत्रं पूर्वरूपवयसं यमलोकादानीयादादित्यर्थः । 'आनिनाय गुरोः पुत्रं चिरनष्टं यमक्षयात् । ततः सान्दीपिनेः पुत्रं तद्रूपवयसं तथा [प्रभावादमितौजसः]।।' इत्यादि हरिवंशोक्तेः [२.३३.२२]। 'तं वालं यातनासंस्थं यथापूर्वशरीरिणम् । पित्रे प्रदत्तवान् कृष्णो वलश्च वलिनां वरः ।।' इति विष्णुपुराणोक्तेश्च [५.२१.३१]।।५-९।।

---

१. 'ततः सान्दिपिनेः पुत्रं तद्रूपवयसं तदा । प्रादात् कृष्णः प्रतीतात्मा सह रत्नैरुदारधीः ।।' इति हरिवंशे विष्णुपर्वणि ३३.२६ ।

२. चशब्दः रत्नधनधान्यादिसमुच्चायकः । न केवलं मृतपुत्रमदात् अपि तु गवाश्वधनधान्यादिकमपि उपाजहार । तथाहि– 'आसनानि च सर्वाणि गवाश्वञ्च धनादिकम् । सर्वं तदुपजह्राते गुरवे रामकेशवौ ।।' इति सभापर्वणि ५४.१३ ।

**मधुसूदनीया–** ।। **कृष्णोऽपीति** ।। निखिला विद्याः चतुष्षष्ठिसङ्ख्याका इत्यर्थः । 'अहो रात्रैश्चतुःषष्ट्या साङ्गवेदमधीयताम् । चतुष्पादे धनुर्वेदे शस्त्रग्रामे ससङ्ग्रहे ।। अचिरेणैव कालेन गुरुस्तानभ्यशिक्षयत् ।।' इति हरिवंशे [२.३३.६-७] ।।३-४।।

**वरदराजीया–** ततः सान्दिपिनेः सकाशात् अध्यगीष्ट अधीतवान् । सकृन्निगदितान् एकवारं पठितान् । विद्याः सात्वताद्याः । सम्पूर्णसंविदपि दैवतशिक्षणाय अध्यगीष्टेति सम्बन्धः ।।३।।

**अनन्तभट्टीया–** ततः सान्दिपिनेः ।।३।।

**जनार्दनीया–** अथ सम्पूर्णा संविज्ज्ञानं यस्य सः तथा । तादृशोऽपि कृष्णः सान्दीपनिं सान्दीपिनामकं विप्रमेत्य, ततः तस्मात्सान्दीपिनः सकृन्निगदितानेकवारमुक्तान् वेदान्, निखिलाः विद्याश्च, दैवतानां देवानां शिक्षणाय अध्यगीष्ट अधिजगौ ।।३।।

**भावचन्द्रिका–** ।।१-२।। अध्यगीष्ट अहोरात्रैश्चतुःषष्ट्या ।।३।।

**चट्टि–** सम्पूर्णा संवित् ज्ञानं यस्य सः तथा । तादृशो श्रीकृष्णः बलेन सह अवन्तिपुरवासिनं सान्दीपनिं तन्नामकविप्रमेत्य, ततः तस्मात् सकृन्निगदितानेकवारमुक्तान् । निखिलाः विद्याश्च चतुःषष्टिसङ्ख्याकाः विद्याः इत्यर्थः । दैवतानां देवानां शिक्षणाय अध्यगीष्ट अधिजगौ । 'अहोरात्रैश्चतुःषष्ट्या साङ्गं वेदमधीयताम् । चतुष्पादे धनुर्वेदे शस्त्रग्रामे ससङ्ग्रहे ।। अचिरेणैव कालेन गुरुस्तानभ्यशिक्षयत् ।।' इति हरिवंशे [२.३३.६-७]।।३।।

**धर्मो हि सर्वविदुषामपि दैवतानां प्राप्ते नरेषु जनने नरवत् प्रवृत्तिः ।**
**ज्ञानादिगूहनमुताध्ययनादिरत्र [१]तज्ज्ञापनार्थमवसद् भगवान् गुरौ च ।।४।।**

**व्यासतीर्थीया–** दैवतशिक्षणायेत्युक्तं विवृणोति– **धर्मो हीति** ।।४।।

**वेदाङ्गतीर्थीया–** तज्ज्ञापनार्थं देवधर्मज्ञापनार्थं भगवांश्च गुराववसत् ।।४।।

**सत्याभिनवतीर्थीया–** तत्रैव धर्मो हि सर्वविदुषां...इति श्लोके । यद्यपि किञ्चिज्ज्ञानिनापि धर्मानुष्ठानमावश्यकं न भवति, सर्वज्ञानां तु सुतराम् । देवानां सर्वज्ञत्वात् धर्मानुष्ठानमावश्यकं न भवति । तथाऽपि देवानां नरवत् प्रवृत्त्यादिरूपधर्मानुष्ठानमावश्यकमिति ज्ञापयितुं सर्वविदुषामपीत्युक्तम् । एतेन देवानां नरवत् प्रवृत्त्यादिकं धर्म इत्यनेनैव पूर्णत्वात् सर्वविदुषामपीत्येतत् व्यर्थमिति दूषणस्यावकाशः।

१. 'प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ । नान्यसिद्धामलज्ञानं गूहमानौ नरेहितैः ।। अथो गुरुकुले वासमिच्छन्तौ उपजग्मतुः । काश्यं सान्दीपिनिं नाम अवन्तिपुरवासिनम् ।।' इति भागवते १०.४३.३१-३२ । 'विदिताखिलविज्ञानौ सर्वज्ञानमयावपि । शिष्याचार्यक्रमं वीरौ ख्यापयन्तौ यदूत्तमौ ।।' इति विष्णुपुराणे ५.२१.१८ ।

**वरदराजीया–** 'दैवतशिक्षणाय' इत्येतद्विवृणोति– **धर्मो हीति** ।। सर्वविदुषां सर्वज्ञानामपि नरेषु जनने प्राप्ते सति नरवत्प्रवृत्तिः धर्मो हि । नरवत्प्रवृत्तिमेव दर्शयति– **ज्ञानादीति** ।। ज्ञानबलाद्याच्छादनं तद्धर्म इति ज्ञापनार्थं गुराववसत् ।।४।।

**जनार्दनीया–** दैवतशिक्षणमित्युक्तं विशदयति– **धर्म इति** ।। सर्वविदुषामपि सर्वज्ञानिनामपि दैवतानां नरेषु जनने अवतारे प्राप्ते सति अवतारे नरवत्प्रवृत्तिः प्रवर्तनम् । ज्ञानादेः ज्ञानबलादेर्गूहनं गोप्यं उत तथा अध्ययनादिः अध्ययनं वेदपठनम् । आदिपदेन वर्णोचितविद्याभ्यासः । धर्मो हि यस्मात् तस्मात् भगवान् ज्ञापनार्थं अवतीर्णानां धर्मं ज्ञापयितुं, गुरौ च गुरुवशे चावसत् ।।४।।

**चट्टि–** दैवतशिक्षणायेत्युक्तं विवृणोति– **धर्म इति** ।। सर्वज्ञानानामपि दैवतानां नरेषु जनने अवतारे प्राप्ते सति नरवत्प्रवृत्तिः प्रवर्तनम् । ज्ञानादेः ज्ञानबलादेर्गूहनं आच्छादनं उत तथा अध्ययनादिः अध्ययनं वेदपठनम् । आदिपदेन वर्णोचितविद्याभ्यासः । धर्मो हि यस्मात् तस्मात् भगवान् श्रीकृष्णः अत्र तज्ज्ञापनार्थं अवतीर्णानां देवानां धर्मं ज्ञापयितुं, गुरौ च गुरुवशे अवसत् ।।४।।

**गुर्वर्थमेष [1]मृतपुत्रमदात् पुनश्च[2] रामेण सार्धमगमन्मधुरां रमेशः ।**
**पौरैः सजानपदबन्धुजनैरजस्रमभ्यर्चितो न्यवसदिष्टकृदात्मपित्रोः ।।५।।**

**वेदाङ्गतीर्थीया–** आत्मपित्रोरन्येषां चेति शेषः ।।५।।

**वेदाङ्गतीर्थीया–** आत्मपित्रोरन्येषां च इति शेषः ।।५-६।।

**सत्याभिनवतीर्थीया–** तत्रैव गुर्वर्थमेष मृतपुत्रं...आत्मपित्रोरित्यस्य आत्मप्रीत्यास्पदपित्रोरित्यर्थः । एतेन पित्रोरित्यस्य ससम्बन्धिकत्वात् आत्मपदाभावेऽपि आत्मपित्रोरित्यर्थप्राप्तिसम्भवात् आत्मपदं व्यर्थमिति दूषणं पराकृम् । आत्मसम्बन्धित्वमात्रलाभार्थमात्मपदं प्रयुक्तमित्यनभ्युपगमात् ।।५।।

**मधुसूदनीया–** ।। **गुर्वर्थमिति** ।। मृतपुत्रं पूर्वरूपवयसं यमलोकादानीयाददादित्यर्थः । 'आनिनाय गुरोः पुत्रं चिरनष्टं यमक्षयात् । ततः सान्दीपिनेः पुत्रं तद्रूपवयसं तथा [प्रभावादमितौजसः]।।' इत्यादि हरिवंशोक्तेः [२.३३.२२]। 'तं बालं यातनासंस्थं यथापूर्वशरीरिणम् । पित्रे प्रदत्तवान् कृष्णो बलश्च बलिनां वरः ।।' इति विष्णुपुराणोक्तेश्च [५.२१.३१]।।५-९।।

---

१. 'ततः सान्दिपिनेः पुत्रं तद्रूपवयसं तदा । प्रादात् कृष्णः प्रतीतात्मा सह रत्नैरुदारधीः ।।' इति हरिवंशे विष्णुपर्वणि ३३.२६ ।

२. चशब्दः रत्नधनधान्यादिसमुच्चायकः । न केवलं मृतपुत्रमदात् अपि तु गवाश्वधनधान्यादिकमपि उपाजहार । तथाहि– 'आसनानि च सर्वाणि गवाश्वञ्च धनादिकम् । सर्वं तदुपजह्राते गुरवे रामकेशवौ ।।' इति सभापर्वणि ५४.१३ ।

**वरदराजीया–** मृतपुत्रं दक्षिणात्वेनादात् । पुनः परावृत्त्य जानपदबन्धुसहितैः पौरैः । पित्रोर्देवकी-वसुदेवयोः ।।५।।

**भावविवृति–** गुर्वर्थमेष मृतपुत्रमदात्पुनश्च इत्यत्र मृतपुत्रदेहस्तु समुद्रे शङ्खासुरेण भक्षिततत्वात् नष्टोऽभूत् । चेतनस्तु यमसदनं गतः । कृष्णो यमसदनादानीय प्रकृतिसूक्ष्मभागैः पूर्वदेहसदृशवयोरूपयुक्तं कृत्वा गुरोर्दक्षिणात्वेनादादित्यर्थः । सान्दीपिना एतस्यैव दक्षिणात्वेन याचितत्वात् । एतद्विशेषकश्चशब्दः । 'समुच्चये तथाधिक्ये न्यूनत्वे च प्रयुज्यत' इत्युक्तेः । उक्तश्च हरिवंशे–

'आनिनाय गुरोः पुत्रं चिरनष्टं यमक्षयात् । ततो सान्दीपिनः पुत्रं तद्रूपवयसं तथा ।।' इति।
'नाहर्षं तमिमं देहं दैत्यः पञ्चजनो महान् । अन्तर्जलचरः कृष्णः शङ्खरूपधरोऽसुरः ।।
जलमाविश्य तं हत्वा नापश्यदुदकेऽर्भकम् । ततः संयमिनीं गत्वा यमं प्राह जनार्दनः ।।
गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् । आनयस्व महाराज मच्छासनपुरस्कृतः ।।
तथेति तेनोपनीतं गुरुपुत्रं यदूत्तमौ । दत्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ।।
इति दशमस्कन्धे [४३.४०-४३,४६-४७] ।।५-४३।।

**जनार्दनीया–** एषः कृष्णः गुर्वर्थं गुरवे मृतपुत्रं अदात् । दक्षिणात्वेनेति शेषः । ते सर्वेऽपि मधुरामण्डलस्थाः सर्व एव पुरा भोजपतिना कंसेन तप्ताः हि यतः अतः हरिं पतिं अवाप्य नितान्तं मुमुदुः । यत्र यदा अखिलस्य सुजनस्य मोदो बभूव । तदा हरिं सुतं अवाप्य, आत्मपित्रोः कृष्णस्य मातापित्रोः अत्र मोदो बभूवेत्येतद्विषये किं वाच्यम्? न वाच्यमित्यर्थः ।।५-६।।

**भावचन्द्रिका–** ।। **गुर्वर्थमिति** ।। पत्न्या संमन्त्र्य प्रभासे समुद्रे मृतपुत्रो देय इत्युक्ते प्रभासं गत्वा समुद्रेण पूजिते पुत्रं देहीत्युक्ते च 'न मया हतः । किन्तु पञ्चजनेन हतः' इत्युक्ते तं हन्तुं समुद्रं प्रविश्य तज्जठरं विदार्य दृष्ट्वा पाञ्चजन्यं गृहीत्वा संयमिनीं गत्वा यमेन पूजितः तमादाय पूर्ववत्कृत्वा ददाविति ।।५।।

**चट्टि–** श्रीकृष्णः गुर्वर्थं गुरोर्दीयमानो अर्थो गुर्वर्थः तं गुरुदक्षिणामित्यर्थः । मृतपुत्रं अदात् । पूर्वरूपवयसं यमलोकादानीय अदात् । रमेशः श्रीकृष्णः रामेण सार्धं मधुरामगमत् । आत्मपित्रोः स्वपित्रोरर्थे देवकीवसुदेवयोरिष्टकृत् प्रियकृत् श्रीकृष्णः सजानपदबन्धुजनैः पौरैरजस्रं अभ्यर्चितः सन् न्यवसत् । 'आनिनाय गुरोः पुत्रं चिरनष्टं यमक्षयात् । ततस्सान्दीपिनेः पुत्रं तद्रूपवयसं तथा ।।' इत्यादि हरिवंशोक्तेः [२प.३३.२२]। 'तं बालं यातनासंस्थं यथापूर्वशरीरिणम् । पित्रे प्रदत्तवान् कृष्णो वलश्च वलिनां वरः ।।' इति विष्णुपुराणोक्तेश्च [५अं.२१.३१] ।।५।।

**सर्वेऽपि ते पतिमवाप्य हरिं पुराऽभितप्ता हि भोजपतिना मुमुदुर्नितान्तम् ।**
**किं वाच्यमत्र सुतमाप्य हरिं स्वपित्रोर्यत्राखिलस्य सुजनस्य बभूव मोदः ।।६।।**

**सत्याभिनवतीर्थीया–** तदनन्तरमेव सर्वेऽपि ते पतिमवाप्य...इति श्लोकः। तस्यार्थः– ये भोजपतिना कंसेन हिशब्दोऽवधारणे । पुरा हि पूर्वमेव तप्ताः ते सर्वेऽपि हरिं पतिमवाप्य नितान्तं मुमुदुः इत्येतत् हि प्रमाणप्रसिद्धम् । अत्र अस्मात् कृष्णात् अखिलस्य सुजनस्य यत्र यदा मोदः बभूव तदा हरिं सुतमवाप्य स्थितयोः स्वपित्रोः मोदः बभूवेति किं वाच्यमिति । एतेन कंसेन तप्ताः इत्युक्त्यैव कंसमरणानन्तरं कंसकर्तृकतापायोगेन कंसमरणात् पूर्वं कंसेन तप्ता इत्यर्थलाभात् 'पुरा' इत्येतत् व्यर्थमिति दूषणं परास्तम् । कंसमरणात् पूर्वं कंसेन तप्ताः, कंसमरणानन्तरं तु कंसादन्येन तप्ता इति भ्रान्तिः स्यात् । तन्निवारणार्थं पुरा हीत्यनेन कंसमरणात् पूर्वं कंसेन तप्ताः, कंसमरणानन्तरं अन्येन केनापि तप्ता न जाता इत्युच्यते इति स्वीकरणात् । एतेनैव 'अत्र' इत्येतत् व्यर्थमिति दूषणस्यानवकाशः । सुजनमोदहेतुत्वं कृष्णस्येति वक्तुम् 'अत्र' इत्युक्तमिति स्वीकरणात् ।।६।।

**वरदराजीया–** सर्वे ते पौरादयः पतिं स्वामिनम् । पुरा भोजपतिना कंसेनाभितप्ताः दुःखं प्राप्ता हि यस्मात् तस्मात् नितान्तं मुमुदुः ।।६।।

**अनन्तभट्टीया–** पतिं स्वामिनम् ।।६।।

**चट्टि–** ते सर्वेऽपि मधुरामण्डलस्थाः सर्व एव पुरा भोजपतिना कंसेन तप्ताः हि यतः । अतः हरिं पतिं अवाप्य नितान्तं मुमुदुः । यत्र यदा अखिलस्य सुजनस्य मोदो बभूव । अत्र तदा हरिं सुतं आप्य स्वपित्रोः श्रीकृष्णस्य मातापित्रोः मोदो बभूवेति किं वाच्यम् ।।६।।

**कृष्णाश्रयो वसति यत्र जनोऽपि तत्र वृद्धिर्भवेत् किमु [1]रमाधिपतेर्निवासे ।**
**वृन्दावनं यदधिवासत आस सध्र्यङ् [2]माहेन्द्रसद्मसदृशं किमु तत्र पुर्याम् ।।७।।**

**व्यासतीर्थीया–** यत्र यदा कृष्णे पालयति मधुरास्थितिप्रकारजिज्ञासायामनेकोपपत्तिभिरसम्भावनां परिहरन् सर्वसमृद्ध्युपेतत्वमाह– **कृष्णेत्यादिना** ।। **कृष्णश्रयोऽपि** ।। विपिनमपि वृन्दावनम् । तत्र तदा पुर्याः सम्यगिन्द्रसदनसदृशत्वं किमुत ।।७-९।।

**वेदाङ्गतीर्थीया–** सध्र्यङ् सम्यक् । तत्र पुर्यां समीचीनतां किं वाच्यम् ।।७।।

---

१. 'तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् । हरेर्निवासानुगुणैः रमाक्रीडमभून्नृप ।।' इति भागवते १०.६.१८।
२. 'यानि लिङ्गानि लोकस्य चासन् कृतयुगे पुरा । तानि सर्वाण्यदृश्यन्त पुरीं प्राप्ते जनार्दने ।।' इति हरिवंशे.विष्णु.३३.३८।

**वरदराजीया—** यत्र देशे कृष्णाश्रयोऽपि जनो वसति तत्रापि वृद्धिः सर्वसमृद्धिः भवेत् रमाधिपतेर्निवासे किमु वक्तव्यम् । यस्य कृष्णस्य अधिवासतो वृन्दावनं महेन्द्रसद्मसदृशं सध्र्यङ् आस । तत्र मे पुर्यां किमु किं वक्तव्यम् ॥७॥

**अनन्तभट्टीया—** यत्र पुरे कृष्णाश्रयो जनः । पुर्यां वृद्धिर्भवतीति किमु वक्तव्यमित्यर्थः ॥७॥

**जनार्दनीया—** यत्र यस्मिन् देशे । कृष्णः आश्रयो यस्य स तथा । जनो लोकः वसति वासं करोति । तत्राऽपि तस्मिन्नपि देशे वृद्धिः भवेत् । रमायाः सम्पदभिमानिन्याः लक्ष्म्याः, अधिपतेः मुख्यस्वामिनः । इन्द्रादयोऽपि हरिदत्तसम्पत्स्वामिनः हरिस्तु मुख्यस्वामीति भावः । ईदृशस्य कृष्णस्य निवासे वसतौ, वासस्थान इति यावत् । किमु वृद्धिर्भवेदिति किमु वक्तव्यमित्यर्थः । वृन्दावनं यस्य कृष्णस्य अधिवासतः अधिष्ठानात् सध्र्यङ् सम्यक् । महेन्द्रसम्बन्धिनः सद्मनः गृहस्य स्वर्लोकस्येत्यर्थः । सदृशं आस । तिङन्तप्रतिरूपकमव्ययमेतत् । न तु तिङन्तं पदम् । अस्तेरार्धधातुके भूरादेशविधानात् । तत्र तस्यां पुर्यां मथुरापुर्यां किमु? सम्पद्वृद्धिरभूदिति किमु वक्तव्यमित्यर्थः ॥७॥

**ताम्रपर्णीया—** ॥ **वृन्दावनमिति** ॥ विपिनमपि वृन्दावनं भगवद्वासमात्रेणेन्द्रसद्मसदृशमास । पुर्यां यस्याधिवासतः स्वामित्वेन वासतः पुर्याः सध्र्यक् सम्यक् सम्यक्त्वं किमु वाच्यम् ॥७॥

**चट्टि—** श्रीकृष्णः आश्रयो यस्य स तथा । जनो लोकः वसति वासं करोति । तत्रापि तस्मिन्नपि देशे वृद्धिः संवृद्धिः भवेत् । रमायाः सकलसम्पदभिमानिन्याः लक्ष्म्याः पतेः स्वामिनः श्रीकृष्णस्य निवासे वसतौ, वासस्थान इति यावत् । किमु वृद्धिर्भवेदिति किं वक्तव्यमित्यर्थः । वृन्दावनं यदधिवासतः यस्य श्रीकृष्णस्य अधिष्ठानतः सध्र्यङ् सम्यक् माहेन्द्रस्य इन्द्रसम्बन्धिनः सद्मनः गृहस्य स्वर्लोकस्येत्यर्थः । सदृशमास । तिङन्तप्रतिरूपकमव्ययमेतत् । न तु तिङन्तम् । अस्तेरार्धधातुके भूरादेशविधानात् । तत्र तस्यां पुर्यां मधुरापुर्यां किमु? सम्पद्वृद्धिरभूदिति किमु वक्तव्यमित्यर्थः ॥७॥

**येनाधिवासमृषभो जगतां विधत्ते विष्णुस्ततो हि वरता सदने विधातुः ।**
**तस्मात् [१]प्रभोर्निवसनान्मधुरा पुरी सा शश्वत् समृद्धजनसङ्कुलिता बभूव ॥८॥**

**वेदाङ्गतीर्थीया—** विष्णुः विधातुः सदने अधिवासं विधत्ते येन यस्मात् ततो हि तस्मात् हि वरता विधातृलोकस्य लोकोत्तमता जाता जगत्सकाशात् ॥८-९॥

---

१. 'शूरसेनो यदुपतिः मथुरामावसन्पुरीम् । माथुरान् शूरसेनांश्च विषयान् बभुजे पुरा ॥ राजधानी ततः साऽभूत् सर्वयादवभूभुजाम् । मथुरा भगवान् यत्र नित्यं सन्निहितो हरिः ॥' इति भागवते १०.१.२८।

**वरदराजीया–** येन कारणेन जगतां वृषभो हरिः विधातुः सदने सत्यलोकेऽधिकवासं विधत्ते तेन कारणेन तस्य वरता लोकोत्तमता हि यस्मात् तस्मात् प्रभोः कृष्णस्य निवासनात् मधुरापुरी शश्वत् सर्वदा समृद्धा जनैः सङ्कुलिता पूर्णा बभूव ।।८।।

**जनार्दनीया–** येन कारणेन जगतां मध्ये वृषभः श्रेष्ठो विष्णुः विधातुः सदने स्थाने अधिवासं मुख्यतया वासं विधत्ते करोति । ततः तेन कारणेन वरता सत्यलोकस्य उत्तमत्वम् । हि यस्मात् तस्मात् प्रभोः कृष्णस्य शश्वत् निरन्तरम् ।।८।।

**ताम्रपर्णीया–** किं तत् सम्यक्त्वमित्यतः सत्यलोकसादृश्यमेवेति दृष्टान्तमुपपादयति– **येनेति** ।। तस्मादिति प्रभुनिवासस्योत्तमत्वव्याप्तिदर्शनात् । अत्र च व्याप्यप्रभुनिवासादित्यर्थः ।।८-९।।

**चट्टि–** येन कारणेन जगतां वृषभः श्रेष्ठो सदने सत्यलोके अधिवासं विधत्ते करोति । ततः तेन कारणेन वरता सत्यलोकस्य उत्तमत्वम् । हि यस्मात् । तस्मात् प्रभोः श्रीकृष्णस्य निवसनात् सा मधुरापुरी शश्वत् सर्वजनेन सङ्कुलिता पूर्णा बभूव ।।८।।

**रक्षत्यजे त्रिजगतां परिरक्षकेऽस्मिन् सर्वान् यदून् मगधराजसुते स्वभर्तुः ।**
**कृष्णान्मृतिं पितुरवाप्य समीपमस्तिप्रास्ती[1] शशंसतुरतीव च दुःखितेऽस्मै ।।९।।**

**वरदराजीया–** सर्वान् यदून् रक्षति सति मगधराजस्य जरासन्धस्य सुते कन्ये अस्तिप्रास्तीति तन्नामके पितुर्जरासन्धस्य समीपमवाप्य स्वभर्तुः कंसस्य कृष्णात् प्राप्तां मृतिं अतिदुःखिते अस्मै जरासन्धाय शंसतुः ।।९।।

**जनार्दनीया–** अस्मिन् भूलोके अस्मिन्नजे कृष्ण इति वा । यदून् रक्षति सति मगधराजस्य जरासन्धस्य, सुते पुत्र्यौ अतीव अत्यन्तं सुदुःखिते वैधव्येन सञ्जातमहादुःखे अस्तिप्रास्तीति सञ्ज्ञे पितुः जरासन्धस्य समीपं अवाप्य, स्वभर्तुः कंसस्य कृष्णाज्जातां मृतिं अस्मै पित्रे शशंसतुः । 'शंस कथने' इति धातुः ।।९।।

**चट्टि–** त्रिजगतां परिरक्षके अजे अस्मिन् श्रीकृष्णे सर्वान् यदून् रक्षति सति । मगधराजस्य जरासन्धस्य, सुते पुत्र्यौ अतीव अत्यन्तं सुदुःखिते अस्तिप्रास्तीति नाम्न्यौ पितुः जरासन्धस्य समीपं अवाप्य, स्वभर्तुः कंसस्य श्रीकृष्णाज्जातां मृतिं अस्मै पित्रे जरासन्धाय शशंसतुः ।।९।।

---

१. 'अस्तिप्रास्तीति कंसस्य महिष्यौ भरतर्षभ । हते भर्तरि दुःखार्ते ईयतुः स्वपितुर्गृहान् ।। पित्रे मगधराजाय जरासन्धाय दुःखिते । वेदयाञ्चक्रतुः सर्वमात्मवैरूप्यकारणम् ।।' इति भागवते १०.४९.१-२।

**श्रुत्वैव तन्मगधराज उरुप्ररूढबाह्वोर्बलेन नजितो युधि सर्वलोकैः ।**
**[1]ब्रह्मेश[2]चण्डमुनिदत्तवरै[3]रजेयो मृत्यूज्झितश्च विजयी जगतश्चुकोप ॥१०॥**

**व्यासतीर्थीया–** प्रकर्षेण रूढौ प्ररूढौ च तौ बाहू चेति । प्ररूढबाह्वोर्बलं तेन । षष्ठ्याः क्रूरत्वलक्षणाक्रोशे [अलुक्] अस्य ईदृशबाहुबलत्वे निमित्तमाह– **ब्रह्मेति** ॥ जगतो विजयी ॥१०॥

**वेदाङ्गतीर्थीया–** मृत्यूज्झितः जगतः विजयी । चण्डमुनिः दुर्वासाः ॥१०॥

**वादिराजीया–** ॥१-९॥ जितो न भवतीति नजितः । नसमासोऽयम् । चण्डमुनिः दुर्वासाः ॥१०-१४॥

**मधुसूदनीया–** ॥ **ब्रह्मेशचण्डमुनिदत्तवरैरिति** ॥ चण्डमुनिश्चण्डकौशिकः ।
'अद्य कक्षीवतः पुत्रं गौतमस्य महात्मनः । सिषेवे तपसि श्रान्तं उदारं चण्डकौशिकम् ॥
तमब्रवीत् सत्यधृतिस्सत्यवागृषिसत्तमः । परितुष्टोऽस्मि ते राजन् वरं वरय पार्थिव ॥'
इत्यादिना चण्डकौशिकवराज्जरासन्धस्योत्पत्तिमुक्त्वा
कस्यचित्त्वथ कालस्य पुनरेव महातपाः । मागधानुपचक्राम भगवांश्चण्डकौशिकः ॥
तस्यागमनसंहृष्टः सामात्यस्सपुरोहितः । सभार्यस्सहपुत्रेण निर्जगाम बृहद्रथः ॥
पाद्यार्घ्यादीनुपादाय स्वर्चयामास भारत । स नृपो राज्यसहितं पुत्रं तस्मै न्यवेदयत् ॥
प्रतिगृह्य तु तां पूजां पार्थिवाद्भगवानृषिः । उवाच मागधं राजन् प्रहृष्टेनान्तरात्मना ॥
सर्वमेतन्महाराज विज्ञातं ज्ञानचक्षुषा । पुत्रस्तु शृणु राजेन्द्र यादृशोऽयं भविष्यति ॥
यस्य वीर्यवतो वीर्यं नानुयास्यन्ति पार्थिवाः । विनाशमुपयास्यन्ति ये चास्य परिपन्थिनः ॥
देवैरपि विसृष्टाणि अस्त्राण्यपि महीपते । न रुजं जनयिष्यन्ति गिरेरिव नदीरयः ॥
सर्वमूर्धाभिषिक्तानां एष मूर्ध्नि विराजितः । सर्वेषां...प्रभाकारो ज्योतिषामिव भास्करः ॥

---

१. 'सत्यसन्धो जरासन्धं भुवि भीमपराक्रमम् । भागमन्यस्य निर्दिष्टं अवध्यं मधुभिर्मृधे ॥ नात्मनाऽत्मवतां मुख्य इयेष मधुसूदनः । ब्राह्मीं आज्ञां पुरस्कृत्य हन्तुं हलधरानुजः ॥' [२२.४५-४६] इति सभापर्ववचनात् ब्रह्मवरः प्रमापितो भवति ।

२. 'महादेवं महात्मानं उमापतिमरिन्दम । आराध्य तपसोग्रेण निर्जितास्तेन पार्थिवाः ॥' इति सभापर्वणि १४.७५ । इति युधिष्ठिरं प्रति श्रीकृष्णवचनम् ।

३. 'अष्टौ वरान् प्रयच्छामि तव पुत्रस्य पार्थिव । ब्रह्मण्यत्वमजेयत्वं युद्धेषु च तथा मतिः॥ प्रियातिथेयतां चैव दीनानामन्ववेक्षणम् । तथा बलञ्च सुमहल्लोके कीर्तिश्च शाश्वतीम् ॥ अनुरागं प्रजानाञ्चेत्येवमष्टौ वरान्नृप ।' इति सभापर्वणि.१७.३९-४१।

एनमासाद्य राजानः समृद्धबलवाहनाः । विनाशमुपयास्यन्ति शलभा इव पावकम् ।।
एष श्रियं समुदितां सर्वराज्ञां गृहीष्यति । वर्षास्विवोदीर्णजला नदीर्नदनदीपतिः ।।
एष धारयिता सम्यक्चातुर्वर्ण्यं महाबलः । शुभाशुभमिव स्फीता सर्वसस्यधरा धरा ।।
अस्याज्ञावशगास्सर्वे भविष्यन्ति नराधिपाः । सर्वभूतात्मभूतस्य वायोरिव शरीरिणः ।।
एष रुद्रं महादेवं त्रिपुरान्तकरं हरम् । सर्वलोकेष्वतिबलः स्वयं द्रक्ष्यति मागधः ।।
एवं ब्रुवन्नेव मुनिः स्वकार्यमनु चिन्तयन् । विसर्जयामास नृपं बृहद्रथमुदारधीः ।।
जरासन्धोऽपि नृपतिः यदुक्तं कौशिकेन तत् । वरप्रदानमखिलं प्राप्य राज्यमपालयत् ।।'
इत्यन्तेन पुनरपि जरासन्धस्य चण्डकौशिकेन वरदानोक्तेः सभापर्वणि [१९.१-१७] ।

वेदाङ्गतीर्थास्तु 'चण्डमुनिः दूर्वासाः' इत्याहुः । अन्ये चाप्येवमेवाहुः । तन्न । उक्तमानविरोधात् ।।१०-१३।।

**वरदराजीया–** ततः सः सुतयोः तत् आर्तवचनं श्रुत्वा, उरु प्ररूढश्च तत् बाह्वोर्बलं चेति अलुक्समासः । न जितो अजितः । न समसोऽयम् । अतो नञो नलोपः । चण्डमुनिः दूर्वासाः । जगतो विजयी ।।१०।।

**अनन्तभट्टीया–** जगतः विजयी ।। **उरुप्ररूढेति** ।। बाह्वोर्बलम् इत्यलुक्समासः । उरुप्ररूढेति बलविशेषणम् ।।१०।।[१]

**जनार्दनीया–** मगधराजः तद्दुहित्रोः दुःखं श्रुत्वा चुकोप कुपितोऽभूत् । कथम्भूतः? उरुप्ररूढौ अतिप्ररूढौ तौ च तौ बांहू च, तयोर्बलेन निमित्तेन सर्वलोकैः युधि युद्धे नजितः अजितः । पराभवरहित इति यावत् । अपराभवे कारणान्तरमाह– **ब्रह्मेति** ।। चण्डमुनिः चण्डकौशिकः । तदुक्तं सभापर्वणि– 'अथ कक्षीवतः पुत्रं गौतमस्य महात्मनः । सुश्राव तपसि श्रेष्ठं उदारं चण्डकौशिकम् ।।' इति । [सभा.१७.२४] दुर्वासा इति केचित् । ब्रह्मादिदत्तवरैर्जगतः जगतां अजेयः । मृत्यूज्झितश्च अवध्य इत्यर्थः । अत एव विजयी विशेषेण जयशीलः ।।१०।।

**ताम्रपर्णीया–** ।। **उरूप्ररूढेति** ।। प्ररूढौ प्रसिद्धौ । अतिदृढतया जातौ वा । 'रुह बीजजन्मनि' 'अथ कक्षीवतः पुत्रं गौतमस्य महात्मनः । शुश्राव तपसा श्रान्तं उदारं चण्डकौशिकम् ।।' इत्यादिना ।।१०।।

---

१. अनन्तभट्टीया– ।। ब्रह्मेशचण्डेति ।। चण्डमुनिश्चण्डकौशिकः । चण्डकौशिकवरेणाजेयोऽवध्यः सुतो भविष्यतीति फलमभिमन्त्र्य दत्तमिति भारते उक्तत्वात् ।। केचित्तु चण्डमुनिर्दूर्वासा इत्याहुः ।। इति हो.पुस्तके अधिकः पाठः

**चट्टि–** उरुप्ररूढौ अतिप्ररूढौ तौ च तौ बाहू च, तयोर्बलेन निमित्तेन । सर्वलोकैः युद्धे नजितः अजितः । पराभवरहित इति यावत् । नसमासोऽयम् । यद्वा उरुप्ररूढं च तद्बाह्वोः बलं चेत्युलुकूसमासः । पराभवाभावे कारणान्तरमाह– **ब्रह्मेति** ।। चण्डमुनिः चण्डकौशिकः । दूर्वासा इति केचित् । मुनिभिः दत्तवैरजेयः मृत्यूज्झितश्च अवध्य इत्यर्थः । अत एव जगतो विजयी एतादृशः मगधराजः तद्दुहित्रोः दुःखं श्रुत्वा चुकोप । मुनिरित्यत्र सभापर्ववचनम्– 'अथ कक्षीवतः पुत्रं गौतमस्य महात्मनः । [सुश्राव तपसि श्रेष्ठं] निषेवे तपसि श्रान्तमुदारं चण्डकौशिकम् ।। तमब्रवीत् सत्यधृतिस्सत्यवागृषिसत्तमः । परितुष्टोऽस्मि ते राजन् वरं वरय पार्थिव ।। जरासन्धोऽपि नृपतिः यदुक्तं कौशिकेन तत् । वरप्रदानमखिलं प्राप्य राज्यमपालयत् ।। इति । [सभा.१७.२४] ।।१०।।

**क्षुब्धोऽतिकोपवशतः स्वगदाममोघां दत्तां शिवेन जगृहे शिवभक्तवन्द्यः ।**
**शैवागमाखिलविदत्र च सुस्थिरोऽसौ चिक्षेप योजनशतं स तु तां परस्मै ।।११।।**

**व्यासतीर्थीया–** कोपवशतः क्षुब्धः । गदादाने निमित्तमुक्तम्– **शिवभक्तेति** ।। शिवभक्तवन्द्यत्वं च कथमित्यत उक्तम्– **शैवेति** ।। शैवागमस्याखिलं रहस्यं वेत्तीति तथोक्तः । अत्र शैवागमोक्ते सुस्थिरो निष्ठितश्च [नियतश्च]। परस्मै कृष्णाय ।।११।।

**वेदाङ्गतीर्थीया–** शैवाखिलागमवित् अखिलशैवागमवित् । अतिकोपवशतः क्षुब्धोऽसौ ।।११।।

**सत्याभिनवतीर्थीया–** तत्रैव क्षुब्धोऽतिकोपवशतो...इति श्लोके 'स्वगदाम्' इत्यस्य अतिशयित-स्वप्रीतिविषयगदामित्यर्थः । एतेन 'शिवेन दत्तां गदाम्' इत्युक्त्यैव गदायाः स्वकीयत्वस्य सिद्धत्वात् स्वेत्येतत् व्यर्थमिति दूषणं निरस्तम् । स्वप्रीतिविषयत्वमतिशयेनास्तीति ज्ञापयितुं स्वेत्युक्तमित्यङ्गीकारात्।

**वरदराजीया–** क्षुब्धः क्षोभं प्राप्तः । शिवेन दत्तां अत एव अमोघां गदाम् ।। **शैवेति** ।। अखिलशैवागमवेत्ता । अत्र स्वस्थानस्थित एव सन् । अथवा अत्र शैवागमे सः स्थिरोऽपि परिनिष्ठितः सः जरासन्धः तां गदां परस्मै कृष्णाय योजनशतं यथा गच्छति तथा चिक्षेप ।।११।।

**अनन्तभट्टीया–** अखिलशब्देन रहस्यं विवक्षितम् । अथवा शैवादखिलं यथा तथेति वेत्ति तथोक्तः ।।११।।

**जनार्दनीया–** अतिकोपवशतः क्षुब्धः क्षोभं प्राप्तः । अखिलाश्च ते शैवागमा इति शैवागमाखिलाः, तान् वेत्ति जानातीति तथा । शैवागमैरखिलं तत्त्वादिजगद्वेत्ति । शैवागमानामखिलं अर्थसारं वेत्तीति वा । गदां जगृहे । असौ जरासन्धः अत्र च स्वपुर्यां एव सुस्थिरः सुस्थितः सन् योजनानां शतं योजनशतेतां गदां परस्मै कृष्णार्थे चिक्षेप ।।११।।

**ताम्रपर्णीया–** शैवागमस्याखिलरहस्यं वेत्तीति शैवागमाखिलवित् । परस्मै कृष्णाय ॥११॥

**चट्टि–** अतिकोपवशतः क्षुब्धः क्षोभं प्राप्तः । अखिलाश्च शैवागमाश्च शैवागमाखिलाः जानातीति शैवागमाखिलवित् । शैवागमस्य अखिलरहस्यं वेत्ति जानानीति वा तथोक्तः । अत्र शैवागमे सुसंस्थितः परिनिष्ठः [दण्ड्योऽसौ] जरासन्धः शिवेन दत्तां अमोघां स्वगदां जगृहे । सः जरासन्धः अत्र स्वपुर्यां एव सुस्थिरः संस्थितः सन् सा गदा योजनानां शतं यथा गच्छति तथा तस्मै श्रीकृष्णाय चिक्षेप । अत्र सुस्थिर इति पदद्वयस्यावृत्तिः ॥११॥

**[1]अर्वाक् पपात च गदा मधुराप्रदेशात् सा योजनेन यदिमं प्रजगाद पृष्टः ।**
**एकोत्तरामपि [2]शताच्छतयोजनेति [3]देवर्षिरत्र मधुरां भगवत्प्रियार्थे ॥१२॥**

**व्यासतीर्थीया–** मधुराया योजनोनार्वाग्गदापातने निमित्तमाह– **यदिममिति** ॥१२॥

**वेदाङ्गतीर्थीया–** मार्गविषययोजनसङ्ख्यायां योजनेन अर्वाक् पश्चात् । तन्निमित्तमाह– **यदिममिति** ॥ मधुरायोजनसङ्ख्यां पृष्टः । अत्र अतः जरासन्धनगरात् ॥१२॥

**वरदराजीया–** सा गदा मधुराप्रदेशात् योजनेन अर्वाक् इतः पपात । कुतः यत् यस्मात् देवर्षिः नारदः पृष्टः मधुरा इतः कियद्दूरे अस्तीति जरासन्धेन पृष्टस्सन् शतादेकोत्तरामपि एकाधिकशतयोजनामपि मधुरां शतयोजनेति शतयोजनव्यवहिता मधुरा इतोऽस्तीति प्रजगाद ॥१२॥

**अनन्तभट्टीया–** योजनेन अर्वाक् यत् यस्मात् ॥१२॥

**जनार्दनीया–** सा गदा मधुराप्रदेशाद्योजनेन अर्वाक्पृष्ठतः पपात । मधुरायाः योजनव्यवहितपूर्वदिशि पपातेति भावः । तत्र कारणमाह– **यदिति** ॥ यद्यस्मात् पृष्टः मधुरा इतः कति योजनव्यवधानेन तिष्ठति? इति पृष्टो देवर्षिः शताच्छतयोजनसङ्ख्याविशेषात् एकेन एकयोजनेन उत्तरामपि अधिकामपि । एकयोजनाधिकशतयोजनव्यवहितामित्यर्थः । मधुरां भगवत्प्रियार्थे कृष्णप्रीत्यै अत्र अस्मात् तव नगरात् शतयोजनव्यवहिता मधुरेति इमं जरासन्धं प्रति जगाद । तत्तस्मादर्वाक्पपातेति सम्बन्धः ॥१२॥

---

१. 'भ्रामयित्वा शतगुणं एकोनं येन भारत । गदा क्षिप्ता बलवता मागधेन गिरिव्रजात् ॥ तिष्ठतो मथुरायां वै कृत्स्नस्याद्भुतकर्मणः । एकोनयोजनशते सा पपात गदा शुभा ॥ दृष्ट्वा पौरैस्तदा सम्यग्गदा चैव निवेदिता । गदावसानं तत्ख्यातं मथुरायाः समीपतः ॥ इति सभापर्वणि १९.२३-२५ ।

२ 'शतां शतयोजन' इति क्वचिद् पाठः । 'शताच्छतयोजन' इत्यपि क्वचित् पाठः ।

३. देवर्षिः नारदः । देवर्षिशब्दार्थः वायुपुराणे– 'ऋषन्ति देवान् यस्मात्ते तस्माद्देवर्षयः स्मृताः' पूर्वार्ध.६१.८५ ।

**ताम्रपर्णीया–** 'शतां शतयोजन' इति क्वचिद् पाठः । 'शताच्छतयोजन' इत्यपि क्वचित् पाठः ।।१२-३८।।

**चट्टि–** सा गदा मधुराप्रदेशाद्योजनेन अर्वाक्पृष्ठतः पपात । मधुरायाः योजनव्यवहितपूर्वदिशि पपातेति भावः । तत्र कारणमाह– **यदिति** ।। यद्यस्मात् पृष्टः मधुरा इतः कति योजनव्यवधानेन तिष्ठति? इति पृष्टो देवर्षिः नारदः शताच्छतयोजनसङ्ख्याविशेषात् एकेन योजनेन उत्तरां अधिकामपि । एकयोजनाधिकशतयोजनव्यवहितामित्यर्थः । मधुरां भगवत्प्रियार्थं कृष्णप्रीत्यै अत्र अस्मात् तव नगरात् शतयोजना शतयोजनव्यवहिता मधुरेति इमं जरासन्धं प्रति जगाद । तत्तस्मादर्वाक्पपातेति सम्बन्धः ।।१२।।

**शक्तस्य चापि हि गदाप्रतिघातने तु शुश्रूषणं मदुचितं त्विति चिन्तयानः ।**
**विष्णोर्मुनिः स निजगाद ह योजनोनं मार्गं पुरो भगवतो मगधेशपृष्टः ।।१३।।**

**व्यासतीर्थीया–** भगवतो गदाप्रतिघातने शक्त्यभावं मन्वानो भगवत्प्रियार्थे योजनोनं मार्गं जगादेत्यत आह– **शक्तस्यापीति** ।।१३-१६।।

**वेदाङ्गतीर्थीया–** भगवतः पुरः मधुरायाः मार्गं मार्गविषये योजनसङ्ख्यां मगधेशपृष्टः सः मुनिः गदाप्रतिघातने शक्तस्यापि विष्णोः इदं मदुचितं मया कर्तुं उचितं शुश्रूषणमिति चिन्तयानः योजनोनं मार्गमिति शेषः । निजगाद हि ।।१३-१४।।

**सत्याभिनवतीर्थीया–** तत्रैव शक्तस्य चापि हि गदा प्रतिघातने...इति श्लोकः । तस्यार्थः । सः मुनिः नारदः हि यस्मात् गदाप्रतिघातेन शक्तस्य च शक्तस्यापि विष्णोः शुश्रूषणं तु तुशब्दोऽवधारणे शुश्रूषणमेव तु विशेषतः मदुचितं इति चिन्तयानः, तस्मात् मगधेशपृष्टोऽपि भगवतः पुरः पुर्याः योजनोनं मार्गं नि नितरां स्पष्टमिति यावत् । जगादेत्येतत् ह प्रसिद्धमिति । एतेन शक्तस्य च शक्तस्यापि विष्णोरित्यनेन पूर्णत्वात् अपीत्याद्यव्ययानां वैय्यर्थ्यमिति दूषणं परिहृतम् । अपीत्याद्यव्ययानां मगधेशपृष्ठोऽपीत्यादिना कृत्यस्योक्तत्वात् ।।१३।।

**वरदराजीया–** कुतः भगवतः कृष्णस्य प्रीत्यै नतु कृष्णे गदाघातशङ्कयेत्याह– **शक्तस्येति** ।। गदाप्रतिघातने शक्तस्यापि विष्णोः मदुचितं शुश्रूषणं सेवा स्यात् इति चिन्तयानः मन्यमानो मुनिः नारदः मगधेन पृष्टस्सन् भगवतः कृष्णस्य पुरः पुर्याः मधुराया मार्गं एकोत्तरशतयोजनात्मकमपि योजनोनं शतयोजनात्मकमेवाह । अतो योजनतोऽर्वाक् पपातेत्युक्तं भवति ।।१३।।

**अनन्तभट्टीया–** शक्तस्य विष्णोर्भगवतः । पुरः नगरात् । योजनोनम् ।।१३।।

**जनार्दनीया–** 'भगवतः प्रीत्यै' इत्युक्तं विशदयति– **शक्तस्येति** ।। भगवतः गदाप्रतिघातसामर्थ्याभावात् तत्प्रियार्थं योजनोनं जगाद किम्? इत्यतो वाह– **शक्तस्येति** ।। मगधेशपृष्टः स मुनिर्नारदः गदायाः प्रतिघातने परिहारविषये शक्तस्यापि विष्णोः । शुश्रूषणं गदाघातपरिहाररूपसेवा मम उचितं योग्या इति चिन्तयानः सन् भगवतः पुरः पुर्याः योजनेन ऊनं न्यूनं मार्गं निजगाद ह । तस्मादर्वाक्पपातेति भावः ।।१३।।

**चट्टि–** भगवतः गदाप्रतिघातसामर्थ्याभावात् तत्प्रियार्थं योजनोनं जगाद किम्? इत्यत आह– **शक्तस्येति** ।। मगधेशेन जरासन्धेन पृष्टः स मुनिर्नारदः गदायाः प्रतिघातने परिहारविषये शक्तस्यापि विष्णोः श्रीकृष्णस्य मदुचितं शुश्रूषणं स्यादिति चिन्तयानः सन् भगवतः पुरः पुर्याः मधुरायाः मार्गं योजनेन ऊनं न्यूनं जगाद हि तस्मादर्वाक्पपातेति भावः ।।१३।।

**क्षिप्ता तु सा भगवतोऽथ गदा [1]जराख्यां**
**तत्सन्धिनीमसुभिराशु वियोज्य पापाम् ।**
**मर्त्याशनीं भगवतः पुनराज्ञयैव**
**याता गिरीशसदनं मगधं विसृज्य ।।१४।।**

**सत्याभिनवतीर्थीया–** तत्रैव क्षिप्ता तु सा भगवतेऽथ...इति श्लोके 'पुनः गिरीशसदनं याता' इत्यस्य गिरीशसदनगमनेन पुनः गिरीशसदनसम्वन्धो जात इति भावः । एतेन गदायाः गिरीशसदनं प्रति गमनस्य पूर्वमभावत् पुनः गिरीशसदनं यातेति कथनमनुपपन्नमिति दूषणं निराकृतम् । पुनः गिरीशसदनं यातेत्येन गिरीशसदनसम्वन्धः पुनः जातः इत्येवोच्यते न तु गिरीशसदनं प्रति पुनर्गमनं जातमित्युच्यते इत्यभ्युपगमनात् ।।१४।।

**मधुसूदनीया–** ।। **जराख्यां तत्सम्बन्धिनीमिति** ।। जरासन्धेन पूर्वं कंसगृहं प्रति अस्तिप्रास्तिप्रेषणसमये ताभ्यां साकं जरापि प्रेषिता । तदनन्तरं तस्यै कंसेन मधुरासमीपे योजनतः कश्चित् ग्रामो दत्त इति हेतोस्तत्र जरा स्थितेति भावः ।।१४-१६।।

---

१. 'जरासन्धो हि रुषितो रौहिणेयप्रधर्षितः । अस्मद्वधार्थं चिक्षेप गदां वै सर्वघातिनीम् ।। सीमन्तमिव कुर्वाणा नभसः पावकप्रभा । अदृश्यतापतन्ती सा शक्रमुक्ता यथाशनिः ।। तामापतन्तीं दृष्ट्वैव गदां रोहिणिनन्दनः । प्रतिघातार्थमस्त्रं वै स्थूणाकर्णमवासृजत् ।। अस्त्रवेगप्रतिहता सा गदा प्रापतद्भुवि । दारयन्ती धरां देवीं कम्पयन्तीव पर्वतान् ।। तत्र सा राक्षसी घोरा जरानाम्नी सुविक्रमा । सन्दधे सा हि सञ्जातं जरासन्धमरिन्दमम् ।। द्वाभ्यां जातो हि मातृभ्यां अर्धदेहः पृथक् पृथक् । जरया सन्धितो यस्मात् जरासन्धस्ततोऽभवत् ।। सा तु भूमिं गता पार्थ हता ससुतबान्धवा । गदया तेन चास्त्रेण स्थूणाकर्णेन राक्षसी ।। विनाभूतः स गदया जरासन्धो महामृधे ।।' इति द्रोणपर्वणि.१८२.८.१५

**वरदराजीया–** भगवतार्थे क्षिप्ता सा गदा तस्य जरासन्धस्य सन्धानकर्त्री जराख्यां पापां मर्त्याशनीं राक्षसीं असुभिः प्राणैः वियोज्य भगवतः कृष्णस्याज्ञयैव मगधं विसृज्य गिरीशसदनं याता ।।१४।।

**अनन्तभट्टीया–** भगवतः भगवदर्थम् ।।१४।।

**जनार्दनीया–** अथ नारदोक्त्यनन्तरं भगवतः अर्थे क्षिप्ता सा गदा तस्य जरासन्धस्य, सन्धिनीं शकलद्वयसन्धानकर्त्रीम् । मर्त्याः अशनं यस्याः सा ताम् । अत एव पापां जराख्यां राक्षसीं असुभिः प्राणैः वियोज्य विमोच्य, हत्वेत्यर्थः । मगधं विसृज्य विहाय भगवतः आज्ञयैव पुनः गिरीशस्य सदनं याता गता ।।१४।।

**चट्टि–** अथ नारदोक्त्यनन्तरं भगवते क्षिप्ता सा गदा तस्य जरासन्धस्य सन्धिनीं शकलद्वयसन्धानकर्त्रीम्। मर्त्याः अशनं यस्याः सा तथा । अत एव पापां जराख्यां राक्षसीं असुभिः प्राणैः आशु वियोज्य विमोच्य, हत्वेत्यर्थः । भगवतः श्रीकृष्णस्य आज्ञयैव मगधं विसृज्य विहाय पुनः गिरीशस्य सदनं याता गता । जरासन्धेन पूर्वं कंसगृहं प्रत्यस्तिप्रास्तिप्रेषणसमये ताभ्यां साकं जरा प्रेषिता । तदनन्तरं तस्यै कंसेन मधुरासमीपे योजनतः कश्चित् ग्रामो दत्त इति तत्र जरा स्थितेति भावः ।।१५।।

**राजा स्वमातृत उतो गदया च हीनः**
**क्रोधात् समस्तनृपतीनभिसन्निपात्य ।**
**[१]अक्षोहिणीत्र्यधिकविंशयुतोऽतिवेलं**
**दर्पोद्धतः सपदि कृष्णपुरीं जगाम ।।१५।।**

**वेदाङ्गतीर्थीया–** अभिसन्निपात्य मेलयित्वा ।।१५।।

**वादिराजीया–** स्वमातृत उतो इत्यत्र उतेत्यर्थे अथो [अथेतवत्] उतो इत्यव्ययम् ।।१५।।

**वरदराजीया–** राजा जरासन्धः स्वमातृतो गदया च विहीनः अत एव क्रोधात् समस्तनृपतीन् अभिसन्निपात्य मेलयित्वा । अक्षोहिणी इति त्रयोविंशत्यक्षौहिण्यात्मकसेनया युत इत्यर्थः । अत एव अतिवेलं [अतिवलेन] अमर्यादेन दर्पेणोद्धतः सपदि शीघ्रं कृष्णपुरीं मधुरां जगाम ।।१५।।

**अनन्तभट्टीया–** त्रितयाधिकविंशत्यक्षौहिणीयुक्तमित्यर्थः ।।१५।।

---

१. 'अक्षौहिणीभिर्विंशद्भिः तिसृभिश्चापि संवृतः । यदुराजधानीं मधुरां न्यरुणद् सर्वतो दिशम् ।।' इति भागवते.४९.४

**जनार्दनीया–** हीनः रहितः । अभिसन्निपात्य मेलयित्वा, विंशतेरधिकाः अधिकविंशाः, त्रयश्च ते अधिकविंशाश्च त्र्यधिकविंशाः, अक्षौहिणीनां त्र्यधिकविंशाः, तैर्युतः । अतिवेलं भृशं दर्पेण गर्वेण उद्धतः मत्तः ।।१५।।

**चट्टि–** राजा जरासन्धः स्वमातृतः गदया च हीनः रहितः । उत अनन्तरं अथो अथेतिवत् । उतो इत्यव्ययम् । क्रोधात् समस्तनृपतीन् अभिसन्निपात्य मेलयित्वा त्रिभिः अधिका च सा विंशच्चेति त्र्यधिकविंशं अक्षौहिणीनां त्र्यधिकविंशेन युतः त्रयोविंशदक्षौहिण्यात्मकसेनया युत इत्यर्थः । अतिवेलं मर्यादातिक्रमणं यथा स्यात् तथा दर्पेण गर्वेण उद्धतः मत्तः सन् सपदि श्रीकृष्णपुरीं मधुरां प्रति जगाम ।।१५।।

**सर्वां पुरीं प्रतिनिरुद्ध्य दिदेश विन्दविन्दानुजौ भगवतः कुमतिः स दूतौ ।**
**तावूचतुर्भगवतेऽस्य वचोऽतिदर्पपूर्णं तथा भगवतोऽप्यपहासयुक्तम् ।।१६।।**

**वेदाङ्गतीर्थीया–** अनुजः अनुविन्दः ।।१६।।

**वादिराजीया–** विन्दविन्दानुजावित्यत्र विन्दानुजः अनुविन्दः ।।१६।।

**वरदराजीया–** सर्वां पुरीं मथुरां प्रतिनिरुद्ध्य रोधयित्वा स कुमतिः जरासन्धः भगवतोऽर्थे विन्दानुविन्दौ दूतौ दिदेश प्रेषयामास । तौ विन्दानुविन्दौ अनुजौ अतिदर्पेण पूर्णं भगवतः कृष्णस्य अपहासयुक्तं तस्य जरासन्धस्य वचः भगवते कृष्णाय अवोचतुः ।।१६।।

**अनन्तभट्टीया–** दूतौ ज्ञात्वा ।।१६।।

**जनार्दनीया–** प्रतिनिरुद्ध्य रोधयित्वा, विन्दस्य अनुजः अनुविन्दः । विन्दश्च विन्दानुजश्च विन्दविन्दानुजौ, तौ तथा । भ्रातरावित्यर्थः । विन्दानुविन्दाख्यौ दूतौ भगवतः सकाशं दिदेश प्रेषयामास । तौ विन्दानुविन्दौ अतिदर्पेण महागर्वेण पूर्णम्, भगवतोऽपि कृष्णस्यापि अपहासेन परिहासेन युक्तं अस्य जरासन्धस्य वचः भगवते कृष्णाय ऊचतुः ।।१६।।

**चट्टि–** कुत्सिता मतिर्यस्य स तथा सः, जरासन्धः सर्वां पुरीं मथुरां निरुद्ध्य रोधयित्वा विन्दस्यानुजः अनुविन्दः । विन्दश्च विन्दानुजश्च विन्दानुविन्दौ भ्रातरौ इत्यर्थः । विन्दानुविन्दाख्यौ दूतौ भगवतः सकाशमिति शेषः । दिदेश प्रेषयामास । तौ विन्दानुविन्दौ अतिदर्पेण अत्यन्तगर्वेण पूर्णं तथा भगवतः श्रीकृष्णस्यापि अपहासेन युक्तमस्य जरासन्धस्य वचः भगवते कृष्णाय ऊचतुः ।।१६।।

**लोकेऽप्रतीपबलपौरुषसाररूप-**
**स्त्वं ह्येक एष्यभवतो बलवीर्यसारम् ।**
**ज्ञात्वा सुते न तु मया [१]प्रतिपादिते हि**
**कंसस्य वीर्यरहितेन हतस्त्वया सः ॥१७॥**

**व्यासतीर्थीया–** वीर्यरहितेन मया ॥१७॥

**वेदाङ्गतीर्थीया–** एष्य भवतः भविष्यद्भगवतः ॥१७॥

**वादिराजीया–** एष्य भवतो बलवीर्यसारमित्यत्र एष्यस्य भविष्यतः भवतः बलवीर्ययोः सारम् । न तु ज्ञात्वा अज्ञात्वेत्यर्थः । सुते पुत्र्यौ मया कंसस्य प्रतिपादिते दत्ते इति सम्वन्धः । विवाहसमये अतिसमर्थस्त्वं वर्तसे चेदहं सुते न दद्यां भविष्यतस्तव सामर्थ्यमज्ञात्वा सुते प्रदामिति परिहासः । यद्वा भविष्यतः बलवीर्यसारं ज्ञात्वा मया कंसस्य सुते न प्रतिपादिते । किं स एव बलान्नीतवानिति भावः । तद्वचः सत्यम् । अर्थवदिति वदता भगवता कटाक्षक्षेपमात्रेण ब्रह्माण्डचूर्णीकरणसमर्थोऽहं तृणमुद्धर्तुं सर्वं निजबलमप्रयुञ्जानो गज इव तुच्छकंसवधाय निजवीर्यं नोपाददम् । अतः वीर्यरहिते निजवीर्यरहितेन मया कंसो हत इति वचोऽप्यर्थवदिति सूचितम् ॥१७-१८॥

**मधुसूदनीया–** एष्य भवतः एष्यस्याग्रे जायमानस्य भवतः तवेत्यर्थः । बलवीर्यसारमज्ञात्वा वीर्यरहितेन मया कंसस्य सुते प्रतिपादिते इत्यन्वयः । एतादृशबलस्त्वमग्रे जनिष्यसीति न ज्ञात्वा वीर्यरहितोऽहं कंसाय सुते दत्तवानित्युक्तमिति भावः ॥१७-४३॥

**वरदराजीया–** अपहासयुक्तं वचो दर्शयति– **लोक इत्यादिना** ॥ अप्रतीपबलादेः सारभूतः त्वं एक एव । लोके एष्यस्य भवतो बलवीर्यसारं ज्ञात्वा सुते कन्ये कंसस्य वीर्यरहितेन मया न प्रतिपादिते । किन्तु आज्ञात्वैव प्रतिपादिते हि । सः कंसः त्वया हतः ॥१७॥

**अनन्तभट्टीया–** सुतौ वीर्यरहितेन मया न प्रतिपादिते । किन्तु न ज्ञात्वा प्रतिपादित इत्यर्थः । लोके अप्रतीपबलपौरुषवीर्यसारः स ह्येकः । एष्यभवतः बलवीर्यसारम् ॥१७॥

---

१. 'उग्रसेनसुतः कंसः पुरा निर्जित्य बान्धवान् । बार्हद्रथसुते देव्यावुपागच्छद् वृथामतिः ॥ अस्तिः प्रास्तिश्च नाम्ना ते सहदेवानुजे बले । बलेन तेन स्वज्ञातीन् अभिभूय वृथामतिः ॥ श्रैष्ठ्यं प्राप्तः स तस्यासीत् अतीवापनयो महान् । भोजराजन्यवृद्धैश्च पीड्यमानैर्दुरात्मना ॥' इति भारते सभापर्वणि १४.३१-३३ । 'जरासन्धस्य दुहिता तस्य भार्याऽतिविश्रुता । राज्यशुल्केन दत्ता सा जरासन्धेन धीमता ॥ तदर्थमुग्रसेनस्य मथुरायां सुतस्तदा । अभिषिक्तस्तदाऽमात्यैः स वै तीव्रपराक्रमः ॥' इति सभापर्वणि २३.५-६ । इति भारवाक्यं पूर्वोक्तार्थे सङ्गमनीयम् ।

**जनार्दनीया–** अपहासयुक्तवचनं विशदयति– **लोक इति** ।। लोके जगति अप्रतीपे अप्रतिरुद्धे, ये बलपौरुषे ताभ्यां साररूपः श्रेष्ठरूपः त्वं एक इति हि प्रसिद्धिः । वीर्यरहितेन मया एष्यस्य भविष्यतः भवतः तव बलवीर्ययोः सारं आधिक्यं न ज्ञात्वा अविज्ञाय, सुते कंसस्य प्रतिपादिते । अतः त्वया सः कंसः हतः ।।१७।।

**चट्टि–** अपहासयुक्तमित्येतद् विवृणोति– **लोक इत्यादिना** ।। लोके जगति अप्रतीपे च ते वलपौरुषे च ताभ्यां साररूपः त्वं एक एव इति हि प्रसिद्धम् । वीर्यरहितेन मया एष्यभवतः एष्यस्य भविष्यतः भवतः तव वलवीर्ययोः सारं आधिक्यं ज्ञात्वा सुते कंसस्य न प्रतिपादिते न दत्ते हि । किन्तु एतादृशः त्वमग्रे जनिष्यसीति न ज्ञात्वा वीर्यरहितो अहं कंसाय सुते दत्तवानित्युक्तमिति भावः । त्वया सः कंसः हतः ।।१७।।

**सोऽहं हि दुर्बलतमो बलिनां वरिष्ठं कृत्वैव दृष्टिविषयं [१]विगतप्रतापः ।**
**यास्ये [२]तपोवनमथो सहितः सुताभ्यां क्षिप्रं ममाद्य विषयो भव चक्षुषोऽतः ।।१८।।**

**व्यासतीर्थीया–** तपसे वनं तपोवनम् ।।१८।।

**वेदाङ्गतीर्थीया–** तप उद्दिश्येति शेषः ।।१८।।

**वरदराजीया–** दुर्वलतमः सोऽहं वलिनां वरिष्ठं त्वां दृष्टिविषयं कृत्वैव विगतप्रतीपः सन् सुताभ्यां सहितः तपोवनं यास्ये । अतः कारणात् मम चक्षुर्विषयो अद्य क्षिप्रं भव ।।१८।।

**जनार्दनीया–** दुर्बलतमः अत्यन्तनिर्बलः सोऽहं बलिनां मध्ये वरिष्ठं श्रेष्ठं त्वां ज्ञात्वा, दृष्टिविषयं दृग्गोचरं कृत्वैव विगतप्रतापः हतपराक्रमः सन् । अथ सुताभ्यां अस्तिप्रास्तिभ्यां सहितः सन् तपोवनं तपोवनमिति प्रसिद्धं वनं मगधविषये तिष्ठति । तपसे वनं प्रतीति वा । यास्ये गच्छामि । यतः अतः अद्य मम चक्षुषः दृष्टेः विषयः गोचरः क्षिप्रं भव ।।१८।।

**चट्टि–** दुर्बलतमः अत्यन्तदुर्बलः सोऽहं वलिनां मध्ये वरिष्ठं श्रेष्ठं त्वां दृष्टिविषयं दृग्गोचरं कृत्वैव विगतप्रतीपः सन् । 'विगतप्रतापः' इति पाठे हतपराक्रमः सन् । अथ अनन्तरं सुताभ्यां अस्तिप्रास्तिभ्यां सहितः सन् तपोवनं तपोवनमिति प्रसिद्धं वनं मगधविषये तिष्ठति । तपसे वनं प्रतीति वा । यास्ये गच्छामि । यतः अतः अद्य मम चक्षुषः दृष्टेः विषयः गोचरः क्षिप्रं भव ।।१८।।

---

१. 'विगतप्रतीपः' इति वरदराजीयपाठः चट्टिटिप्पण्यां पाठान्तरम् ।

२. 'तपः वनम्' इति वेदाङ्गतीर्थीये ।

**साक्षेपमीरितमिदं बलदर्पपूर्ण-**
**मात्मापहाससहितं भगवान् निशम्य ।**
**सत्यं तदित्युरु वचोऽर्थवदित्युदीर्य**
**मन्दं प्रहस्य निरगात् सहितो बलेन ॥१९॥**

**व्यासतीर्थीया–** तदुरुवचः सत्यं न मृषा । तदेव विवृतम्– **अर्थवदिति** ॥१९॥

**वेदाङ्गतीर्थीया–** ईरितं वचनं इति तदुरुवचः एवमुक्तं उरु सत्यं न मृषा । तदेवोक्तम्– **अर्थवदिति** ॥ इत्यभ्युदीर्य ॥१९॥

**वादिराजीया–** उरुवच इत्यत्र उरु उत्कृष्टं अल्पाक्षरत्वेऽपि बह्वर्थभरितमित्यर्थः । बहुभाषिणो जरासन्धस्य व्यर्थबहुतरवाक्यस्य मितवाणीष्वग्रणीः श्रीकृष्णः स्वल्पं बह्वर्थभरितं वाक्यं प्रयुक्तवान् । अतः स एव गम्भीरपुरुष इति भावः ॥१९-२३॥

**वरदराजीया–** इतीरितं वचनं इदं निशम्य तद्वचः सत्यमेव इत्युदीर्य प्रहस्य च निरगात ॥१९॥

**जनार्दनीया–** आक्षेपेण तिरस्कारेण सहितं यथा स्यात्तथा निशम्य श्रुत्वा, तज्जरासन्धोक्तं विगतप्रताप इत्युक्तं स्यादेव । तपोवनं यास्य इत्युक्तं न स्यादित्यभिप्रायेण सत्यमित्यर्धाङ्गीकारप्रयोग इति । अर्थवत् सार्थम्, उरु श्रेष्ठं गम्भीरं वा वचः अभ्युदीर्य, तयोरभिमुखं उक्त्वा निरगात् पुर्याः निःसृतोऽभूत् ॥१९॥

**चट्टि–** आक्षेपेण तिरस्कारेण सहितं यथा स्यात्तथा ईरितं बलदर्पपूर्णं आत्मनः श्रीकृष्णस्य अपहासेन परिहासेन सहितं इदं वचनं भगवान् श्रीकृष्णः निशम्य श्रुत्वा, तत् जरासन्धोक्तं वचः सत्यं 'तपोवनं यास्य' इत्युक्तं न स्यादित्यर्धाङ्गीकारे सत्यशब्दप्रयोगः । इति अर्थवत् सार्थकं उरु गम्भीरं वचः अभ्युदीर्य, तयोरभिमुखे उक्त्वा, मन्दं प्रहस्य बलेन सहितः सन् निरगात् पुर्याः निःसृतोऽभूत् ॥१९॥

**द्वारेषु सात्यकिपुरस्सरमात्मसैन्यं त्रिष्वभ्युदीर्य भगवान् स्वयमुत्तरेण ।**
**रामद्वितीय उदगान्मगधाधिराजं योद्धुं नृपेन्द्रकटकेन युतं परेशः ॥२०॥**

**वेदाङ्गतीर्थीया–** कटकेन समूहेन ॥२०-२१॥

**सत्याभिनवतीर्थीया–** तत्रैव द्वारेषु सात्यकि...इति श्लोकः । 'स्वयमुत्तरेण रामद्वितीयः उदगात्' इत्यस्य भगवान् स्वयमेव युद्धं कर्तुं समर्थोऽपि रामद्वितीयः सन् उत्तरेणोदगादित्यर्थः । एतेन 'स्वयम्' इत्येतत् व्यर्थमिति दूषणं परास्तम् । स्वस्य एकस्य युद्धकरणसामर्थ्याभावात् रामद्वितीय उदगादिति

भ्रान्तिपरिहाराय एवेत्यादेः शेषमङ्गीकृत्य स्वयमेव युद्धं कर्तुं समर्थोऽपीत्यर्थं वक्तुं 'स्वयम्' इत्युक्तमिति स्वीकरणात् ॥२०॥

**वरदराजीया—** त्रिषु पूर्वादिद्वारेषु आत्मसैन्यं अभ्युदीर्य प्रेरयित्वा स्वयमुत्तरेण द्वारेणोदगात् ॥२०॥

**अनन्तभट्टीया—** ॥ **नृपेन्द्रेति** ॥ कटकेन सैन्येन ॥२०॥

**जनार्दनीया—** परेशस्त्रिषु द्वारेषु उदीर्य आज्ञाप्य उदगात् निर्ययौ । कथम्भूतः? रामः द्वितीयो यस्येति विग्रहः । किं कर्तुम्? कटकेन समूहेन सैन्येन वा । 'सैन्येऽपि कटकोऽस्त्रियाम्' इत्यभिधानम् । युतं युक्तं योद्धुम् ॥२०॥

**भारतश्री—** ॥ **रामद्वितीय उदगादिति** ॥ रामेण सहेति शेषः । 'तं चुकोपयिषुरग्रत उग्रसेनं कृष्णो निधाय समगात् स्वयमस्य पश्चात्' इति उत्तरत्रोक्तेः ॥२०॥

**भावचन्द्रिका—** ॥ **द्वारेष्विति** ॥ वसुदेवनिष्ठकृतवर्माणः पूर्वद्वारे । कंसपितृभिन्नोग्रसेनसुदाम... दक्षिणद्वारे । सात्यकिगदप्रसेनाक्रूरान् पश्चिमद्वारे । स्वयं रामेण सहितोग्रसेनं राजानमग्रतो निधायोत्तरेणेति ध्येयम् ॥२०॥

**चट्टि—** परेषां ब्रह्मादीनां ईशः भगवान् श्रीकृष्णः त्रिषु द्वारेषु पूर्वादित्रिषु द्वारेषु सात्यकिः पुरस्सरो यस्य तत्तथा आत्मसैन्यं अभ्युदीर्य आज्ञाप्य । रामः द्वितीयो यस्य स तथाभूतस्सन् नृपेन्द्राणां कटकेन समूहेन सैन्येन वा सह । 'सैन्येऽपि कटकोऽस्त्रियाम्' इत्यभिधानम् । युतं मगधाधिराजं जरासन्धं योद्धुं स्वयं उत्तरेण द्वारेण उदगात् निर्ययौ ॥२०॥

**[१]तस्येच्छयैव पृथिवीमवतेरुराशु तस्याऽयुधानि[२] सबलस्य सुभास्वराणि ।**
**शार्ङ्गासिचक्रदरतूणगदाः स्वकीया जग्राह दारुकगृहीतरथे स्थितः सः ॥२१॥**

---

१. 'ततो रामश्च कृष्णश्च मतिं चक्रतुरञ्जसा । आयुधानां पुराणानामादाने मुनिसत्तम ॥' इति विष्णुपुराणे ५.२२.५ ।

२. 'एतस्मिन्नेव काले तु गगनात् सूर्यवर्चसौ । रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ आयुधानि च दिव्यानि पुराणानि यदृच्छया । चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम् ॥ गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा । त्रिनतं कार्मुकश्रेष्ठं शार्ङ्गसञ्ज्ञं गुणान्वितम् ॥ तीक्ष्णधारः शितिमुखः खड्गो नन्दकसञ्ज्ञितः । लघू शरचितौ रम्यौ तूणी चाक्षयसायकौ ॥ तुरगाः शैब्यसुग्रीवमेघपुष्पबलाहकाः । हलं च बलभद्रस्य मुसलं च दृढं गुरु ॥ इत्येतान्यायुधान्याजौ गगनादागतानि सः । दृष्ट्वा राजन् हृषीकेशः सङ्कर्षणमथाब्रवीत् ॥ त्रयोविंशत्यनीकानां भूमेर्भारमपाकुरु ॥' इति भागवते १०.४९.२२-२७ । 'ततः शशाङ्काकृतिपाञ्चजन्यं महारवं दैत्यकुलापचारम्' इति पाञ्चजन्यस्य आकृतिः भागवते निरूपिता १०.४९.५०।

**वरदराजीया–** तस्य कृष्णेस्येच्छया सबलस्य कृष्णस्य आयुधानि पृथिवीं प्रत्यवतेरुः आगतानि। कथं भूतानि। सुभास्वराणि अत्यन्तं प्रकाशमानानि शार्ङ्गधनुः, असिः खड्गम्, चक्रं सुदर्शनः, शङ्खः तूणमिषुधिर्गदा चेति ताः स्वकीयाः स्वस्य विद्यमानाः दारुकाख्यस्वीयसारथिगृहीतरथे स्थितः सन् जग्राह ।।२१।।

**जनार्दनीया–** तस्य कृष्णस्य इच्छयैव सबलस्य तस्य कृष्णस्य सुतरां भास्वराणि दीप्यमानानि आयुधानि आशु पृथिवीमवतेरुः प्रापुः। रथोऽप्यवततारेति द्रष्टव्यम्। दारुकेण हरिसारथिदारुकनाम्ना गृहीतरथे स्थितः स कृष्णः स्वकीयाः शार्ङ्गधनुः, असिः खड्गः, चक्रं, दरः शङ्खः, तूणा इषुधिः, गदा च तथा ताः। जग्राह। 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः ।।२१।।

**भावचन्द्रिका–** ।। **तस्येति** ।। अवतेरुः वैकुण्ठात् रथावप्यवतीर्णौ। 'एतस्मिन्नेव काले तु गगनात् सूर्यवर्चसौ। रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ।। आयुधानि च नित्यानि पुराणानि यदृच्छया ।।' इति भागवते। दारुको मूलरूपेण वैकुण्ठादागतः। 'दारुको विष्णुलोकं तु पुनराप यथागतम्' इति वक्ष्यमाणत्वात्। सुग्रीवपुष्पकनामके रथे। 'सुग्रीवं पुष्पकं नाम समादाय महारथम्' ...अश्वैः शैब्यसुग्रीवमेघवलाहकाद्यैः ।।२१।।

**चट्टि–** तस्य श्रीकृष्णस्य इच्छयैव सबलस्य तस्य कृष्णस्य सुभास्वराणि अत्यन्तं प्रकाशमानानि आयुधानि आशु पृथिवीमवतेरुः प्रापुः। रथोप्यवततारेति द्रष्टव्यम्। दारुकनाम्ना स्वसारथिना गृहीतरथे स्थितः स श्रीकृष्णः स्वकीयाः शार्ङ्गधनुः, असिः खड्गः, चक्रं सुदर्शनं दरः शङ्खः, तूणी इषुधी, गदा च तथा ताः जग्राह ।।२१।।

**आरुह्य भूमयरथं प्रतियुक्तमश्वैर्वेदात्मकैर्धनुरधिज्यमथ प्रगृह्य।**
**शार्ङ्गं शरांश्च निशितान् मगधादिराजमुग्रं नृपेन्द्रसहितं प्रययौ जवेन।।२२।।**

**व्यासतीर्थीया–** भूमयो भूदेवतात्मकः ।।२२।।

**वेदाङ्गतीर्थीया–** भूमयः भूदेवतात्मकः। वेदात्मके वेदाभिमानिदेवतात्मके ।।२२-२५।।

**वरदराजीया–** नृपेन्द्रसहितं मगधाधिराजं प्रति जवेन प्रययौ। कृष्णः किं कृत्वा। भूमयं भूम्यात्मकं तथा वेदात्मकैः चतुर्वेदादिभिमानिभिश्च शैब्यसुग्रीवमेघपुष्पबलाहकैः अश्वैः प्रतियुक्तं रथमारुह्य अथ अधिज्यं आरोपितज्यासहितं धनुः निशितान् शरांश्च प्रगृह्य प्रययाविति सम्बन्धः ।।२२।।

**जनार्दनीया–** उक्तमेवार्थं विशदयति– **आरुह्येति** ।। कृष्णः भूमयं भुवा अभिमन्यमानरथं आरुह्य, कथम्भूतम्? वेदात्मकैः ऋगादिवेदानां अभिमन्यामानदेवतात्मकैः अश्वैः प्रतियुक्तं नियोजितम्। प्रतीति

भिन्नं वा पदम् । अधिज्यं आरोपितज्याकं शार्ङ्गं धनुः प्रगृह्य, निशितान् तीक्ष्णान् शरांश्च प्रगृह्य, अथ मगधाधिराजं प्रति ।।२२।।

**चट्टि–** उक्तमेवार्थं विशदयति– **आरुह्येति** ।। श्रीकृष्णः वेदात्मकैः ऋगादिवेदानां अभिमानिदेवतात्मकैः अश्वैः प्रतियुक्तं नियोजितम् । प्रतीति भिन्नं वा पदम् । भूमयं भुवा अभिमन्यमानं रथं आरुह्य, अधिज्यं अधिरोपितज्याकं शार्ङ्गं धनुः निशितान् तीक्ष्णान् शरांश्च प्रगृह्य अथ उग्रं नृपेन्द्रसहितं मगधाधिराजं प्रति जवेन प्रययौ ।।२२।।

**रामः प्रगृह्य मुसलं स हलं च यानमास्थाय सायकशरासनतूणयुक्तः ।**
**सैन्यं जरासुतसुरक्षितमभ्यधावद्धर्षान्नदन्नुरुबलोऽरिबलैरधृष्यः ।।२३।।**

**वरदराजीया–** अरिवलैरधृष्यः उरुबलः सायकैः शरासनेन धनुषा च युक्तः सन् रामः सहलं हलेन सह वर्तमानं मुसलं प्रगृह्य जरासुतेन सुरक्षितं सैन्यं प्रति हर्षान्नदन् अभ्यधावत् ।।२३।।

**अनन्तभट्टीया–** सः रामः । अत एव सः हलं मुसलं प्रतिगृह्येति योजना ।।२३।।

**जनार्दनीया–** अरिवलैः अधृष्यः सोढुमशक्यः रामः सहलं लाङ्गलसहितं मुसलं प्रगृह्य, यानं रथं आस्थाय आरुह्य । सायकैः वाणैः, शरासनेन धनुषा, तूणाभ्यां इषुधीभ्यां युक्तः सन् सैन्यं प्रत्यभ्यधावत् ।।२३।।

**चट्टि–** उरु वलं यस्य सः उरुवलः । अरिवलैः अधृष्यः सोढुमशक्यः रामः सहलं लाङ्गलसहितं मुसलं च प्रगृह्य, यानं रथं आस्थाय आरुह्य, सायकैः बाणैः शरासनेन धनुषा तूणाभ्यां इषुधिभ्यां युक्तः सन् हर्षात् नदन् जरासुतेन सुरक्षितं सैन्यं प्रत्यभ्यधावत् ।।२३।।

**उद्वीक्ष्य कृष्णमभियान्तमनन्तशक्तिं राजेन्द्रवृन्दसहितो मगधाधिराजः ।**
**उद्वेलसागरवदाश्वभियाय कोपान्नानाविधायुधवरैरभिवर्षमाणः ।।२४।।**

**वादिराजीया–** आश्वभियायेत्यत्र आशु अभि अभितः याय प्राप्य । 'या प्रापण' इति धातोः अभिधायेतिवत् ल्यबन्तमिदं पदम् । क्रियात्वे तु अभीयायेति स्यात् । अभिवर्षमाणो वभूवेति योग्यपदाध्याहारः ।।२४-२५।।

**वरदराजीया–** अभियान्तं कृष्णं उदीक्ष्य उद्वेलसागर इव मर्यादारहितसमुद्रो यथा तथा कोपात् अभियाय ।।२४।।

**जनार्दनीया–** उद्वीक्ष्य दृष्ट्वा उद्गता अतिक्रान्ता वेला मर्यादा यस्मात् स तथा, तादृशसागरवत् । अभियाय अभिययौ ।।२४।।

**चट्टि–** राजेन्द्राणां वृन्देन सहितः मगधाधिराजः अनन्तशक्तिमभियान्तं श्रीकृष्णं उद्वीक्ष्य दृष्ट्वा कोपात् नानाविधायुधगणैरभिवर्षमाणस्सन्, उत् अतिक्रान्ता वेला मर्यादा यस्मात् स तथा, तादृशसागरवत् आशु अभियाय अभिययौ ।।२४।।

**तं वै चुकोपयिषुरग्रत उग्रसेनं कृष्णो निधाय समगात् स्वयमस्य पश्चात् ।**
**दृष्ट्वाऽग्रतो मगधराट् स्थितमुग्रसेनं कोपाच्चलत्तनुरिदं वचनं बभाषे ।।२५।।**

**सत्याभिनवतीर्थीया–** तत्रैव तं वै चुकोप...इति श्लोके 'स्वयम्' इत्यस्य मुख्योऽपीत्यर्थः । एतेन 'मुख्योऽपि' इति वक्तव्यं 'स्वयम्' इति कथनमनुपपन्नमिति दूषणं निरस्तम् । 'स्वयम्' इत्यस्य 'स्वतन्त्र' इत्यर्थः । मुख्य इति तात्पर्यार्थ इति स्वीकृत्य अपिशब्दमध्याहृत्य मुख्योऽपीत्यर्थस्योक्तत्वात् ।।२५।।

**वरदराजीया–** तं जरासन्धं चुकोपयिषुः कोपयितुं इच्छुः कृष्णः उग्रसेनं अग्रतः पुरतो निधाय उग्रसेनस्य पश्चात् पृष्ठतः समगात् । अग्रतः स्थितं उग्रसेनं दृष्ट्वा कोपात् चलन्ती तनुर्यस्य सः । इदं वक्ष्यमाणं वचनं बभाषे ।।२५।।

**अनन्तभट्टीया–** चुकोपयिषुः कोपमुत्पादयितुमिच्छन् ।।२५।।

**जनार्दनीया–** तं जरासन्धं चुकोपयिषुः कोपमुत्पादयितुमिच्छन् सन् अग्रतः पुरतः उग्रसेनं निधाय कृत्वा, स्वयं अस्य उग्रसेनस्य पश्चात् पृष्ठतः । इदं वक्ष्यमाणं वचनं पञ्चसम्बोधनोपेतं वचनं बभाषे ।।२५।।

**चट्टि–** श्रीकृष्णः तं जरासन्धं चुकोपयिषुः कोपमुत्पादयितुमिच्छन् सन् अग्रतः पुरतः उग्रसेनं निधाय कृत्वा, स्वयं अस्य उग्रसेनस्य पश्चात् पृष्ठतः समगात् । मगधराट् जरासन्धः अग्रतः पुरतः स्थितं उग्रसेनं दृष्ट्वा, कोपात् चलन्ती तनुः यस्य स तथा सन्, इदं वक्ष्यमाणं वचनं बभाषे ।।२५।।

**पापापयाहि पुरतो मम राज्यकाम**
**निर्लज्ज पुत्रवधकारण शत्रुपक्ष ।**
**त्वं जीर्णबस्तसदृशो न मयेह वध्यः**
**सिंहो हि सिंहमभियाति न वै सृगालम् ।।२६।।**

**वेदाङ्गतीर्थीया–** बस्तः छागः ।।२६।।

**वादिराजीया–** बस्तः छागः ।।२६-३०।।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव पापापयाहि... इति श्लोके 'पुत्रवधकारणशत्रुपक्ष' इत्यस्य पुत्रः कंसः तद्वधकारणीभूतः यः शत्रुः कृष्णः तत्पक्षेत्यर्थः । एतेन उग्रसेनस्य पुत्रवधकारणत्वं कथमिति शङ्कानवकाशः । 'पुत्रवधकारण' इति भिन्नं पदमित्यनङ्गीकारात् ।।२६।।

**वरदराजीया–** हे पाप! मम पुरतः अपयाहि राज्यकाम इत्यादि सम्बोधनम् । त्वं जीर्णेन बस्तेन मेषेण सदृशो [इतो अपयाहि] मया इह युद्धे न वध्यः । सिंहः सिंहं अभियाति । शृगालं नैव याति ।।

**जनार्दनीया–** वचनं स्पष्टयति– **पापेति** ।। अपयाहि अपसर । त्वं जीर्णेन वृद्धेन बस्तेन छागेन सदृशः । अत एव मया इह युद्धे वध्यो वधार्हो न । तत्र दृष्टान्तमाह– **सिंह इति**।। सृगालं गोमायुम् ।

**चट्टि–** सम्बोधनपञ्चकेनोपेतं वचनं स्पष्टयति– **पापेति** ।। हे पाप मम पुरतः अपयाहि अपसर । हे राज्यकाम हे निर्लज्ज हे पुत्रवधकारण हे शत्रुपक्ष त्वं जीर्णेन वृद्धेन बस्तेन मेषेन सदृशः । अत एव मया इह युद्धे वध्यो वधार्हो न भविष्यसि । अत्र दृष्टान्तमाह– **सिंह इति** ।। सिंहः सिंहं प्रत्यभियाति सृगालं गोमायुं प्रति नाभियाति ।।२६।।

**आक्षिप्त इत्थममुनाऽथ स भोजराजस्तूणात् प्रगृह्य निशितं शरमाशु तेन ।**
**छित्वा[१] जरासुतधनुर्बलवन्ननाद विव्याध सायकगणैश्च [२]पुनस्तमुग्रैः ।।२७।।**

**व्यासतीर्थीया–** आक्षिप्तो निन्दितः ।।२७-३५।।

**वेदाङ्गतीर्थीया–** आक्षिप्तो निन्दितः ।।२७-२९।।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव अक्षिप्त इत्थममुना... इति श्लोके 'विव्याध सायकगणैश्च पुनस्तमुग्रैः' इत्यस्य उग्रैः सायकगणैः तं पुनः पुनः विव्याध चेत्यर्थः । एतेन 'पुनः' इत्येतत् व्यर्थमिति दूषणं निरस्तं 'पुनः' इत्यस्यावृत्तिमङ्गीकृत्य पुनः पुनः विव्याधेत्यर्थस्योक्तत्वात् । एतेनैव 'सायकगणैश्च' इति चशब्दो व्यर्थ इति दूषणं पराकृतम् । न केवलं ननाद, किन्तु विव्याध चेति समुच्चयार्थः चशब्दः इत्यभ्युपगमात् ।।२७।।

**वरदराजीया–** इत्थं आक्षिप्तः तिरस्कृतः । तूणात् इषुधेः । तेन शरेण जरासुतधनुः छित्वा ननाद । नृपः उग्रसेनः तं जरासन्धम् ।।२७।।

---

१. 'भित्वा' इति चट्टीपाठः । २. 'नृपस्तमुग्रैः' इति वरदराजीयपाठः ।

**जनार्दनीया–** इत्थमुक्तप्रकारेण आक्षिप्तः निराकृतः । भोजराजः उग्रसेनः तेन शरेण पुनः तं जरासन्धम् । उग्रैः तीक्ष्णैः ।।२७।।

**चट्टि–** अमुना जरासन्धेन इत्थं उक्तप्रकारेण आक्षिप्तः निराकृतः सः भोजराजः उग्रसेनः । अथ तूणात् इषुधेः निशितं तीक्ष्णं शरं प्रगृह्य आशु तेन शरेण जरासुतधनुः भित्वा ननाद । बलवान् उग्रसेनः पुनः तं जरासन्धं उग्रैः तीक्ष्णैः सायकगणैः शरसमूहैः विव्याध ।।२७।।

**अन्यच्छरासनवरं प्रतिगृह्य कोपसंरक्तनेत्रमभियान्तमुदीक्ष्य कृष्णः ।**
**भोजाधिराजवधकाङ्क्षिणमुग्रवेगं बार्हद्रथं प्रतिययौ परमो रथेन ।।२८।।**

**वरदराजीया–** प्रतिगृह्य अभियान्तम् । उग्रो वेगो यस्य । परमः कृष्णः ।।२८।।

**जनार्दनीया–** परमः कृष्णः । अभियान्तं उग्रसेनं प्रत्यागच्छन्तं बार्हद्रथं जरासन्धं प्रति रथेन ययौ ।।२८।।

**चट्टि–** अन्यच्छरासनवरं धनुश्श्रेष्ठं प्रतिगृह्य अभियान्तं उग्रसेनं प्रत्यागच्छन्तं तं कोपसंरक्तनेत्रं भोजाधिराजस्य उग्रसेनस्य वधकाङ्क्षिणम्, उग्रः वेगः यस्य तम्, बार्हद्रथं जरासन्धं उदीक्ष्य परमः श्रीकृष्णः रथेन तं प्रति ययौ ।।२८।।

**आयान्तमीक्ष्य भगवन्तमनन्तवीर्यं चेदीशपौण्ड्रमुखराजगणैः समेतः ।**
**नानाविधास्त्रवरशस्त्रगणैर्ववर्ष मेरुं यथा घन उदीर्णरवो जलौघैः ।।२९।।**

**वरदराजीया–** चेदीशादिगणैः समेतो ववर्ष । उदीर्णरवः घनो मेघः मेरुं यथा ।।२९।।

**जनार्दनीया–** चेदीशः शिशुपालः । पौण्ड्रः पौण्ड्रकाख्यः । दृष्टान्तमाह– **मेरुमिति** ।। उदीर्णरवः उच्चध्वनिः । घनो मेघः मेरुं मेर्वाख्यपर्वतं यथा तथा ववर्षेत्यर्थः ।।२९।।

**चट्टि–** चेदीशादिराजगणैः समेतः जरासन्धः आयान्तं अनन्तवीर्यं भगवन्तं श्रीकृष्णं ईक्ष्य नानाविधास्त्रवरशस्त्रगणैः उदीर्णरवः उच्चध्वनिः घनो मेघः जलौघैः मेरुं मेर्वाख्यपर्वतं यथा तथा ववर्ष ।।

**शस्त्रास्त्रवृष्टिमभितो भगवान् विवृश्च्य शार्ङ्गोत्थसायकगणैर्विरथाश्वसूतम् ।**
**चक्रे निरायुधमसौ मगधेन्द्रमाशु च्छिन्नातपत्रवरकेतुमचिन्त्यशक्तिः ।।३०।।**

**वेदाङ्गतीर्थीया–** विवृश्च्य हित्वा ।।३०।।

**वरदराजीया–** विवृश्च्य छित्वा असौ अचिन्त्यशक्तिः कृष्णः स मगधेन्द्रं छिन्नायुधादिरूपं चक्रे ।।

**जनार्दनीया–** भगवान् शार्ङ्गनाम्नो धनुषः उत्थैः निसृतैः सायकगणैः बाणपूगैः अभितः सर्वत्र वृष्टिं विवृश्च्य छित्वा । विगताः रथाः अश्वाः सूतश्च यस्य स तथा तम् । निर्गतायुधं छिन्नौ आतपत्रवरकेतू छत्रध्वजौ यस्य स तथा तम् । मगधेन्द्रं जरासन्धं चक्रे ॥३०॥

**चट्टि–** अचिन्त्या शक्तिः यस्य स तथा, असौ भगवान् श्रीकृष्णः, शार्ङ्गधनुषः उत्थैः निःसृतैः सायकगणैः बाणपूगैः, अभितः सर्वत्र शस्त्रास्त्रवृष्टिं विवृश्च्य छित्वा तं मगधेन्द्रं विगताः रथाश्वसूताः यस्य स तथा । निर्गतायुधं छिन्नौ आतपत्रवरकेतू छत्रध्वजौ यस्य स तथा तम् चक्रे ॥३०॥

**नैनं जघान भगवान् [१]सुशकं च भीमे**
**भक्तिं निजां प्रथयितुं [२]यश उच्चधर्मम् ।**
**चेदीशपौण्ड्रकसकीचकमद्रराज-**
**साल्वैकलव्यकमुखान् विरथांश्चकार ॥३१॥**

**वेदाङ्गतीर्थीया–** सुशकं स्वयं हन्तुं शक्यम् । भीमे निजां भक्तिं यशः उच्चधर्मं च प्रथयितुम्, तेन मागधं घातयित्वेति भावः ॥३१-३२॥

**वादिराजीया–** भीमे भक्तिं निजामित्यत्र भीमे विद्यमानां निजां भक्तिं सहजां स्वविषयां वा भक्तिमिति सम्बन्धः ॥३१-३५॥

**वरदराजीया–** हन्तुं शक्यमपि एनं जरासुतं न जघान । किं कर्तुं भीमे भक्त्यादिकं प्रथयितुं चेदीशादीन् विरथान् चक्रे ॥३१॥

**जनार्दनीया–** भगवान् भीमे निजां भक्तिं यशः उच्चधर्मं च प्रथयितुं प्रख्यापयितुं, सुशकं च हन्तुं सुशक्यमप्येनं जरासन्धं न जघान । चेदीशाद्येकलव्यान्ताः मुखानि मुख्या येषां ते तथा तान् ॥३१॥

**भावचन्द्रिका–** एकं अङ्गुल्याख्यं लव्यं छेद्यं अस्येत्येकलव्यः ॥३१॥

**चट्टि–** भगवान् श्रीकृष्णः भीमे निजां भक्तिं यशः उच्चधर्मं च प्रथयितुं प्रख्यापयितुं, तेन मागधं घातयित्वेति भावः । सुशकं च हन्तुं सुशक्यमप्येनं जरासन्धं न जघान । चेदीशपौण्ड्रकसकीचक-मद्रराजसाल्वैकलव्याः मुख्या येषां ते तथा तान् विरथान् रथरहितान् चकार ॥३१॥

---

१. 'स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया । न तस्य चित्रं परपक्षनिग्रहः तथापि मर्त्यानुविधस्य वर्ण्यते ॥' इति भागवते १०.४९.७२।

२. 'त्यक्तभग्नजरासन्धो भीमसेनयशःप्रदः' वासुदेवसहस्रनाम श्लोक १३६ । 'जग्राह विरथं रामो जरासन्धं महाबलम् । ..वारयामास गोविन्दः तेन कार्यचिकीर्षया ॥' इति भागवते १०.४९.७९ ।

**जनार्दनीया–** इत्थमुक्तप्रकारेण आक्षिप्तः निराकृतः । भोजराजः उग्रसेनः तेन शरेण पुनः तं जरासन्धम् । उग्रैः तीक्ष्णैः ।।२७।।

**चट्टि–** अमुना जरासन्धेन इत्थं उक्तप्रकारेण आक्षिप्तः निराकृतः सः भोजराजः उग्रसेनः । अथ तूणात् इषुधेः निशितं तीक्ष्णं शरं प्रगृह्य आशु तेन शरेण जरासुतधनुः भित्वा ननाद । बलवान् उग्रसेनः पुनः तं जरासन्धं उग्रैः तीक्ष्णैः सायकगणैः शरसमूहैः विव्याध ।।२७।।

**अन्यच्छरासनवरं प्रतिगृह्य कोपसंरक्तनेत्रमभियान्तमुदीक्ष्य कृष्णः ।**
**भोजाधिराजवधकाङ्क्षिणमुग्रवेगं बार्हद्रथं प्रतिययौ परमो रथेन ।।२८।।**

**वरदराजीया–** प्रतिगृह्य अभियान्तम् । उग्रो वेगो यस्य । परमः कृष्णः ।।२८।।

**जनार्दनीया–** परमः कृष्णः । अभियान्तं उग्रसेनं प्रत्यागच्छन्तं बार्हद्रथं जरासन्धं प्रति रथेन ययौ ।।२८।।

**चट्टि–** अन्यच्छरासनवरं धनुश्श्रेष्ठं प्रतिगृह्य अभियान्तं उग्रसेनं प्रत्यागच्छन्तं तं कोपसंरक्तनेत्रं भोजाधिराजस्य उग्रसेनस्य वधकाङ्क्षिणम्, उग्रः वेगः यस्य तम्, बार्हद्रथं जरासन्धं उदीक्ष्य परमः श्रीकृष्णः रथेन तं प्रति ययौ ।।२८।।

**आयान्तमीक्ष्य भगवन्तमनन्तवीर्यं चेदीशपौण्ड्रमुखराजगणैः समेतः ।**
**नानाविधास्त्रवरशस्त्रगणैर्ववर्ष मेरुं यथा घन उदीर्णरवो जलौघैः ।।२९।।**

**वरदराजीया–** चेदीशादिगणैः समेतो ववर्ष । उदीर्णरवः घनो मेघः मेरुं यथा ।।२९।।

**जनार्दनीया–** चेदीशः शिशुपालः । पौण्ड्रः पौण्ड्रकाख्यः । दृष्टान्तमाह– **मेरुमिति** ।। उदीर्णरवः उच्चध्वनिः । घनो मेघः मेरुं मेर्वाख्यपर्वतं यथा तथा ववर्षेत्यर्थः ।।२९।।

**चट्टि–** चेदीशादिराजगणैः समेतः जरासन्धः आयान्तं अनन्तवीर्यं भगवन्तं श्रीकृष्णं ईक्ष्य नानाविधास्त्रवरशस्त्रगणैः उदीर्णरवः उच्चध्वनिः घनो मेघः जलौघैः मेरुं मेर्वाख्यपर्वतं यथा तथा ववर्ष ।।

**शस्त्रास्त्रवृष्टिमभितो भगवान् विवृश्च्य शार्ङ्गोत्थसायकगणैर्विरथाश्वसूतम् ।**
**चक्रे निरायुधमसौ मगधेन्द्रमाशु च्छिन्नातपत्रवरकेतुमचिन्त्यशक्तिः ।।३०।।**

**वेदाङ्गतीर्थीया–** विवृश्च्य हित्वा ।।३०।।

**वरदराजीया–** विवृश्च्य छित्वा असौ अचिन्त्यशक्तिः कृष्णः स मगधेन्द्रं छिन्नायुधादिरूपं चक्रे ।।

**जनार्दनीया–** भगवान् शार्ङ्गनाम्नो धनुषः उत्थैः निसृतैः सायकगणैः बाणपूगैः अभितः सर्वत्र वृष्टिं विवृश्च्य छित्वा । विगताः रथाः अश्वाः सूतश्च यस्य स तथा तम् । निर्गतायुधं छिन्नौ आतपत्रवरकेतू छत्रध्वजौ यस्य स तथा तम् । मगधेन्द्रं जरासन्धं चक्रे ।।३०।।

**चट्टि–** अचिन्त्या शक्तिः यस्य स तथा, असौ भगवान् श्रीकृष्णः, शार्ङ्गधनुषः उत्थैः निःसृतैः सायकगणैः बाणपूगैः, अभितः सर्वत्र शस्त्रास्त्रवृष्टिं विवृश्च्य छित्वा तं मगधेन्द्रं विगताः रथाऽश्वसूताः यस्य स तथा । निर्गतायुधं छिन्नौ आतपत्रवरकेतू छत्रध्वजौ यस्य स तथा तम् चक्रे ।।३०।।

**नैनं जघान भगवान् [१]सुशकं च भीमे**
**भक्तिं निजां प्रथयितुं [२]यश उच्चधर्मम् ।**
**चेदीशपौण्ड्रकसकीचकमद्रराज-**
**साल्वैकलव्यकमुखान् विरथांश्चकार ।।३१।।**

**वेदाङ्गतीर्थीया–** सुशकं स्वयं हन्तुं शक्यम् । भीमे निजां भक्तिं यशः उच्चधर्मं च प्रथयितुम्, तेन मागधं घातयित्वेति भावः ।।३१-३२।।

**वादिराजीया–** भीमे भक्तिं निजामित्यत्र भीमे विद्यमानां निजां भक्तिं सहजां स्वविषयां वा भक्तिमिति सम्बन्धः ।।३१-३५।।

**वरदराजीया–** हन्तुं शक्यमपि एनं जरासुतं न जघान । किं कर्तुं भीमे भक्त्यादिकं प्रथयितुं चेदीशादीन् विरथान् चक्रे ।।३१।।

**जनार्दनीया–** भगवान् भीमे निजां भक्तिं यशः उच्चधर्मं च प्रथयितुं प्रख्यापयितुं, सुशकं च हन्तुं सुशक्यमप्येनं जरासन्धं न जघान । चेदीशाद्येकलव्यान्ताः मुखानि मुख्या येषां ते तथा तान् ।।३१।।

**भावचन्द्रिका–** एकं अङ्गुल्याख्यं लव्यं छेद्यं अस्येत्येकलव्यः ।।३१।।

**चट्टि–** भगवान् श्रीकृष्णः भीमे निजां भक्तिं यशः उच्चधर्मं च प्रथयितुं प्रख्यापयितुं, तेन मागधं घातयित्वेति भावः । सुशकं च हन्तुं सुशक्यमप्येनं जरासन्धं न जघान । चेदीशपौण्ड्रकसकीचक-मद्रराजसाल्वैकलव्याः मुख्या येषां ते तथा तान् विरथान् रथरहितान् चकार ।।३१।।

---

१. 'स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया । न तस्य चित्रं परपक्षनिग्रहः तथापि मर्त्यानुविधस्य वर्ण्यते ।।' इति भागवते १०.४९.७२।

२. 'त्यक्तभग्नजरासन्धो भीमसेनयशःप्रदः' वासुदेवसहस्रनाम श्लोक १३६ । 'जग्राह विरथं रामो जरासन्धं महाबलम् । ..वारयामास गोविन्दः तेन कार्यचिकीर्षया ।।' इति भागवते १०.४९.७९ ।

**ये चापि हंसडिभिकद्रुमरुक्मिमुख्या बाह्लीकभौमसुतमैन्दपुरस्सराश्च ।**
**सर्वे प्रदुद्रुवुरजस्य शरैर्विभिन्ना अन्ये च भूमिपतयो य इहाऽसुरुर्व्याम् ॥३२॥**

**वरदराजीया–** ये च हंसादयस्ते प्रदुद्रुवुः । इह उर्व्यां य आसुः आस्थिताः ॥३२॥

**जनार्दनीया–** भौमो नरकासुरः, तत्सुतः भगदत्तः । मैन्द इत्यत्र विविदोऽपि ग्राह्यः । मैन्दविविदावित्यर्थः । विभिन्नाः विदारिताः सन्तः प्रदुद्रुवुः । अन्ये पूर्वोक्तेभ्यः अन्ये ये भूमिपतयः उर्व्यां भुवि आसुः । तेऽपि इह अस्मिन् युद्धे विभिन्नाः सन्तः, प्रदुद्रुवुः इति सम्बन्धः ॥३२॥

**चट्टि–** भौमसुतः भगदत्तः । मैन्द इत्यत्र विविदोऽपि ग्राह्यः । हंसडिभिकादयः बाह्लीकादयश्च ये ते सर्वे अजस्य श्रीकृष्णस्य शरैः विभिन्नाः विदारिताः सन्तः प्रदुद्रुवुः । अन्ये पूर्वोक्तेभ्योऽन्ये ये भूमिपतयः उर्व्यां भुवि आसुः । तेऽपि इह अस्मिन् युद्धे ॥३२॥

**छिन्नायुधध्वजपताकरथाश्वसूतवर्माण उग्रशरताडितभिन्नगात्राः ।**
**स्रस्ताम्बराभरणमूर्धजमाल्यहीना रक्तं वमन्त उरु दुद्रुवुराशु भीताः ॥३३॥**

**वरदराजीया–** ते सर्वे उक्तावस्थां प्राप्ताः । उरु रक्तं वमन्तः प्रदुद्रुवुः ॥३३॥

**अनन्तभट्टीया–** उरु रक्तम् ॥३३॥

**जनार्दनीया–** वर्म कवचम्, अम्बराणि वस्त्राणि, आभरणानि भूषणानि, मूर्धजाः केशाः, स्रस्ताः श्लथिताः अम्बरादयो येषां ते तथा, ते च ते माल्यैः मालासमूहैः हीनाश्च । उरु बहु रक्तं वमन्तः । रथमध्यगदीर्घस्तम्भवस्त्रनिर्मितोऽतिलम्बो ध्वजः । रथस्य परितः स्थिताः दण्डाश्रिताः वस्त्ररचिताः सूक्ष्माः पताकाः ॥३३॥

**चट्टि–** छिन्नायुधध्वजपताकरथाश्वसूताः सन्तः उग्रशरताडितभिन्नगात्राः अम्बराणि वस्त्राणि, आभरणानि भूषणानि, मूर्धजाः केशाः, स्रस्ताः श्लथिताः अम्बरादयो येषां ते तथा, ते च ते माल्यैः मालासमूहैः हीनाश्च । उरु वहु रक्तं वमन्तः भीताः सन्तः आशु प्रदुद्रुवुः । रथमध्यगदीर्घस्तम्भवस्त्रनिर्मितोऽतिलम्बो ध्वजः । तस्य परितः स्थिताः दण्डं श्रिताः वस्त्ररचिताः सूक्ष्माः पताकाः ॥३३॥

**शोच्यां दशामुपगतेषु नृपेषु [१]सर्वेष्वात्तायुधेषु हरिणा युधि विद्रवत्सु ।**
**[२]नानायुधाढ्यमपरं रथमुग्रवीर्यं आस्थाय मागधपतिः प्रससार रामम् ॥३४॥**

---

१. 'सर्वेष्वस्तायुधेषु' इति वेदाङ्गतीर्थपाठः ।

**वेदाङ्गतीर्थीया–** हरिणा अस्तायुधेषु ।।३३-३५।।

**वरदराजीया–** अपरं रथं आस्थाय । पूर्वरथस्य कृष्णेन छिन्नत्वात् ।।३४।।

**जनार्दनीया–** शोच्यां शोकार्हां दशां अवस्थाम् । हरिणा आत्तानि अपहृतानि आयुधानि येषां ते तथा तेषु । आस्थाय आरुह्य रामं प्रससार प्राप ।।३४।।

**चट्टि–** सर्वेषु नृपेषु शोच्यां दशां शोकावस्थां उपगतेषु सत्सु, हरिणा आत्तानि अपहृतानि आयुधानि येषां ते तथा तेषु सत्सु, युधि विद्रवत्सु सत्सु उग्रवीर्यः मागधपतिः जरासन्धः नानायुधाढ्यं अपरं रथं आस्थाय आरुह्य रामं प्रससार ।।३४।।

**आधावतोऽस्य मुसलेन रथं बभञ्ज रामो गदामुरुतरोरसि सोऽपि तस्य ।**
**चिक्षेप तं च मुसलेन तताड रामस्तावुत्तमौ बलवतां युयुधात उग्रम् ।।३५।।**

**वरदराजीया–** अस्य जरासन्धस्य रथं रामो बभञ्ज । अस्य रामस्य उरुतरोरसि विस्तीर्णे वक्षसि सोऽपि जरासन्धः चिक्षेप । सः रामः तं जरासन्धश्च मुसुलेन तताड । बलवतां उत्तमौ उग्रं यथा भवति तथा युयुधाते युद्धं कृतवन्तौ ।।३५।।

**अनन्तभट्टीया–** उग्रमिति क्रियाविशेषणम् ।।३५।।

**जनार्दनीया–** रामः आधावतः अस्य जरासन्धस्य रथं बभञ्ज । सोऽपि जरासन्धोऽपि तस्य रामस्य उरुतरे अतिविस्तीर्णे उरसि चिक्षेप । रामः तं जरासन्धं बलवतां बलिनां मध्ये उत्तमौ तौ रामजरासन्धौ उग्रं वीराणां भयङ्करं यथा स्यात्तथा । युयुधाते युद्धं चक्रतुः ।।३५।।

**चट्टि–** रामः आधावतः अस्य जरासन्धस्य रथं मुसलेन बभञ्ज । सः जरासन्धोऽपि तस्य रामस्य उरुतरे अतिविस्तीर्णे उरसि गदां चिक्षेप । रामः तं जरासन्धश्च मुसलेन तताड । बलवतां बलिनां मध्ये उत्तमौ तौ रामजरासन्धौ उग्रं वीराणां यथा भयङ्करं स्यात् तथा युयुधाते युद्धं चक्रतुः ।।३५।।

**तौ चक्रतुः पुरु नियुद्धमपि स्म तत्र सञ्चूर्ण्य सर्वगिरिवृक्षशिलासमूहान् ।**
**दीर्घं नियुद्धमभवत् सममेतयोस्तद् वज्राद् दृढाङ्गतमयोर्बलिनोर्नितान्तम् ।।३६।।**

---

२. 'हतेषु सर्वसैन्येषु जरासन्धो महाबलः । विद्रुतेष्ववशिष्टेषु रथेनैकेन सीरिणम् ।। तावुभौ गिरिसङ्काशौ मत्ताविव महागजौ । परस्परमयुध्येतां समर्थौ बलशालिनौ ।। मागधस्तु गदां गुर्वीं आदायामर्षविह्वलः । भ्रामयित्वा शतगुणं चिक्षेप बलवक्षसि ।। तामापतन्तीं तरसा गदां शृङ्गोपमां गिरेः । व्यंसयित्वा हलधरो मुधा चक्रे स्मयन्निव ।। व्यर्थीकृत्य गदां तस्य मुसलेन हलायुधः । पोथयित्वा रथे क्षुब्धो निहत्यरथसारथी ।। जग्राह विरथं रामो जरासन्धं महाबलम् ।' इति भागवते ४९.७३-७८ ।

**ये चापि हंसडिभिकद्रुमरुक्मिमुख्या बाह्लीकभौमसुतमैन्दपुरस्सराश्च ।**
**सर्वे प्रदुद्रुवुरजस्य शरैर्विभिन्ना अन्ये च भूमिपतयो य इहाऽसुरुर्व्याम् ।।३२।।**

**वरदराजीया–** ये च हंसादयस्ते प्रदुद्रुवुः । इह उर्व्यां य आसुः आस्थिताः ।।३२।।

**जनार्दनीया–** भौमो नरकासुरः, तत्सुतः भगदत्तः । मैन्द इत्यत्र विविदोऽपि ग्राह्यः । मैन्दविविदावित्यर्थः । विभिन्नाः विदारिताः सन्तः प्रदुद्रुवुः । अन्ये पूर्वोक्तेभ्यः अन्ये ये भूमिपतयः उर्व्यां भुवि आसुः । तेऽपि इह अस्मिन् युद्धे विभिन्नाः सन्तः, प्रदुद्रुवुः इति सम्बन्धः ।।३२।।

**चट्टि–** भौमसुतः भगदत्तः । मैन्द इत्यत्र विविदोऽपि ग्राह्यः । हंसडिभिकादयः बाह्लीकादयश्च ये ते सर्वे अजस्य श्रीकृष्णस्य शरैः विभिन्नाः विदारिताः सन्तः प्रदुद्रुवुः । अन्ये पूर्वोक्तेभ्योऽन्ये ये भूमिपतयः उर्व्यां भुवि आसुः । तेऽपि इह अस्मिन् युद्धे ।।३२।।

**छिन्नायुधध्वजपताकरथाश्वसूतवर्माण उग्रशरताडितभिन्नगात्राः ।**
**स्रस्ताम्बराभरणमूर्धजमाल्यहीना रक्तं वमन्त उरु दुद्रुवुराशु भीताः ।।३३।।**

**वरदराजीया–** ते सर्वे उक्तावस्थां प्राप्ताः । उरु रक्तं वमन्तः प्रदुद्रुवुः ।।३३।।

**अनन्तभट्टीया–** उरु रक्तम् ।।३३।।

**जनार्दनीया–** वर्म कवचम्, अम्बराणि वस्त्राणि, आभरणानि भूषणानि, मूर्धजाः केशाः, स्रस्ताः श्लथिताः अम्बरादयो येषां ते तथा, ते च ते माल्यैः मालासमूहैः हीनाश्च । उरु बहु रक्तं वमन्तः । रथमध्यगदीर्घस्तम्भवस्त्रनिर्मितोऽतिलम्बो ध्वजः । रथस्य परितः स्थिताः दण्डाश्रिताः वस्त्ररचिताः सूक्ष्माः पताकाः ।।३३।।

**चट्टि–** छिन्नायुधध्वजपताकरथाश्वसूताः सन्तः उग्रशरताडितभिन्नगात्राः अम्बराणि वस्त्राणि, आभरणानि भूषणानि, मूर्धजाः केशाः, स्रस्ताः श्लथिताः अम्बरादयो येषां ते तथा, ते च ते माल्यैः मालासमूहैः हीनाश्च । उरु बहु रक्तं वमन्तः भीताः सन्तः आशु प्रदुद्रुवुः । रथमध्यगदीर्घस्तम्भवस्त्रनिर्मितोऽतिलम्बो ध्वजः । तस्य परितः स्थिताः दण्डं श्रिताः वस्त्ररचिताः सूक्ष्माः पताकाः ।।३३।।

**शोच्यां दशामुपगतेषु नृपेषु [1]सर्वेष्वात्तायुधेषु हरिणा युधि विद्रवत्सु ।**
**[2]नानायुधाढ्यमपरं रथमुग्रवीर्य आस्थाय मागधपतिः प्रससार रामम् ।।३४।।**

---

१. 'सर्वेष्वस्तायुधेषु' इति वेदाङ्गतीर्थपाठः ।

**वेदाङ्गतीर्थीया–** हरिणा अस्तायुधेषु ।।३३-३५।।

**वरदराजीया–** अपरं रथं आस्थाय । पूर्वरथस्य कृष्णेन छिन्नत्वात् ।।३४।।

**जनार्दनीया–** शोच्यां शोकार्हां दशां अवस्थाम् । हरिणा आत्तानि अपहृतानि आयुधानि येषां ते तथा तेषु । आस्थाय आरुह्य रामं प्रससार प्राप ।।३४।।

**चट्टि–** सर्वेषु नृपेषु शोच्यां दशां शोकावस्थां उपगतेषु सत्सु, हरिणा आत्तानि अपहृतानि आयुधानि येषां ते तथा तेषु सत्सु, युधि विद्रवत्सु सत्सु उग्रवीर्यः मागधपतिः जरासन्धः नानायुधाढ्यं अपरं रथं आस्थाय आरुह्य रामं प्रससार ।।३४।।

**आधावतोऽस्य मुसलेन रथं बभञ्ज रामो गदामुरुतरोरसि सोऽपि तस्य ।**
**चिक्षेप तं च मुसलेन तताड रामस्तावुत्तमौ बलवतां युयुधात उग्रम् ।।३५।।**

**वरदराजीया–** अस्य जरासन्धस्य रथं रामो बभञ्ज । अस्य रामस्य उरुतरोरसि विस्तीर्णे वक्षसि सोऽपि जरासन्धः चिक्षेप । सः रामः तं जरासन्धश्च मुसुलेन तताड । बलवतां उत्तमौ उग्रं यथा भवति तथा युयुधाते युद्धं कृतवन्तौ ।।३५।।

**अनन्तभट्टीया–** उग्रमिति क्रियाविशेषणम् ।।३५।।

**जनार्दनीया–** रामः आधावतः अस्य जरासन्धस्य रथं बभञ्ज । सोऽपि जरासन्धोऽपि तस्य रामस्य उरुतरे अतिविस्तीर्ण उरसि चिक्षेप । रामः तं जरासन्धं बलवतां बलिनां मध्ये उत्तमौ तौ रामजरासन्धौ उग्रं वीराणां भयङ्करं यथा स्यात्तथा । युयुधाते युद्धं चक्रतुः ।।३५।।

**चट्टि–** रामः आधावतः अस्य जरासन्धस्य रथं मुसलेन बभञ्ज । सः जरासन्धोऽपि तस्य रामस्य उरुतरे अतिविस्तीर्ण उरसि गदां चिक्षेप । रामः तं जरासन्धश्च मुसलेन तताड । बलवतां बलिनां मध्ये उत्तमौ तौ रामजरासन्धौ उग्रं वीराणां यथा भयङ्करं स्यात् तथा युयुधाते युद्धं चक्रतुः ।।३५।।

**तौ चक्रतुः पुरु नियुद्धमपि स्म तत्र सञ्चूर्ण्य सर्वगिरिवृक्षशिलासमूहान् ।**
**दीर्घं नियुद्धमभवत् सममेतयोस्तद् वज्राद् दृढाङ्गतमयोर्बलिनोर्नितान्तम् ।।३६।।**

२. 'हतेषु सर्वसैन्येषु जरासन्धो महाबलः । विद्रुतेष्ववशिष्टेषु रथेनैकेन सीरिणम् ।। तावुभौ गिरिसङ्काशौ मत्ताविव महागजौ । परस्परमयुध्येतां समर्थौ बलशालिनौ ।। मागधस्तु गदां गुर्वीं आदायामर्षविह्वलः । भ्रामयित्वा शतगुणं चिक्षेप बलवक्षसि ।। तामापतन्तीं तरसा गदां शृङ्गोपमां गिरेः । व्यंसयित्वा हलधरो मुधा चक्रे स्मयन्निव ।। व्यर्थीकृत्य गदां तस्य मुसलेन हलायुधः । पोथयित्वा रथे क्षुब्धो निहत्यरथसारथी ।। जग्राह विरथं रामो जरासन्धं महाबलम् ।' इति भागवते ४९.७३-७८ ।

**व्यासतीर्थीया–** शिलासमूहानित्यतः परं अपिशब्दः ।।३६-३७।।

**वेदाङ्गतीर्थीया–** तत्र तत्समीपे स्थितान् सर्वगिरिवृक्षशिलासमूहान् अपि सञ्चूर्ण्य उरु नियुद्धं चक्रतुः ।।३६-३७।।

**वादिराजीया–** वज्रदृढाङ्गतमयोरित्यत्र अतिशयेन दृढाङ्गौ दृढाङ्गतमौ ।।३६-३८।।

**वरदराजीया–** सर्वान् गिर्यादीन् सञ्चूर्ण्य । एतयोः युद्धं सममेवाभवत् । वज्रादप्यतिशयेन दृढाङ्गतमयोः ।।३६।।

**अनन्तभट्टीया–** ।। वज्राङ्गेति [वज्रादिति] ।। अतिशयेन दृढाङ्गौ तथोक्तौ ।।३६।।

**जनार्दनीया–** तौ रामजरासन्धौ तत्र आयोधनमण्डले सर्वगिर्यादीन्, समीपस्थानिति शेषः । सञ्चूर्ण्य चूर्णयित्वा, पुरु महत् नियुद्धं मुष्टियुद्धं चक्रतुः । दीर्घं बहुकालवर्ति एतयोः तन्नियुद्धं समं समानमभूत् । कथम्भूतयोः? वज्रादपि दृढाङ्गतमयोः कठिणाङ्गश्रेष्ठयोः । नितान्तं बलिनोः ।।३६।।

**चट्टि–** तौ रामजरासन्धौ तत्र आयोधनमण्डले सर्वगिरिवृक्षशिलासमूहान्, समीपस्थानिति शेषः । सञ्चूर्ण्य चूर्णयित्वा, पुरु महत् नियुद्धं मुष्टियुद्धं चक्रतुः । वज्रादप्यतिशयेन दृढाङ्गौ दृढाङ्गतमयोः तयोः नितान्तं बलिनोः एतयोः रामजरासन्धयोः तन्नियुद्धं समं यथा स्यात् तथा दीर्घं बहुकालसम्बन्धि अभवत् ।।३६।।

**श्रुत्वाऽथ शङ्खरवमम्बुजलोचनस्य**
**विद्रावितानपि नृपानभिवीक्ष्य रामः ।**
**युध्यन्तमीक्ष्य च रिपुं ववृधे बलेन**
**त्यक्त्वा रिपुं मुसलमादद आश्वमोघम् ।।३७।।**

**वरदराजीया–** ।। श्रुत्वेति ।। शङ्खध्वनिं बलेन ववृधे । अमोघं मुसलम् ।।३७।।

**जनार्दनीया–** अम्बुजलोचनस्य कृष्णस्य शङ्खरवं शङ्खध्वनिम् । युध्यतीति युध्यन् तं रिपुं शत्रुराजानं ईक्ष्य बलेन शक्त्या ववृधे । रिपुं युध्यन्तं रिपुं त्यक्त्वा मुसलं आददे ।।३७।।

**चट्टि–** रामः अम्बुजलोचनस्य श्रीकृष्णस्य शङ्खरवं शङ्खध्वनिं श्रुत्वा विद्रावितान् नृपानपि अभिवीक्ष्य युध्यन्तं रिपुं शत्रुं च ईक्ष्य बलेन शक्त्या ववृधे । युध्यन्तं रिपुं त्यक्त्वा अमोघं मुसलं आशु आददे ।।३७।।

**तेनाऽहतः शिरसि सम्मुमुहेऽतिवेलं बार्हद्रथो जगृहे एनमथो हली सः ।**
**तत्रैकलव्य उत कृष्णशरैः पलायन्नस्त्राणि रामशिरसि प्रमुमोच शीघ्रम् ॥३८॥**

**व्यासतीर्थीया–** अतिवेलं वेलामतिक्रम्य अत्यर्थमित्यर्थः ॥३८॥

**वेदाङ्गतीर्थीया–** अतिवेलं अत्यर्थम् । कृष्णशरैर्विद्धः ॥३८॥

**वरदराजीया–** अतिवेलं चिरं स मुमुहे । एनं बार्हद्रथम् । शरैस्ताडितः पलायन् ॥३८॥

**जनार्दनीया–** तेन मुसलेन । अतिवेलं अत्यन्तं संमुमुहे मोहं प्राप । हली लाङ्गली एनं राजानम् । तत्र तदा । एकलव्यः कृष्णशरैराहतः पलायन् सन् रामशिरसि अस्त्राणि मुमोच ॥३८॥

**चट्टि–** वार्हद्रथो जरासन्धः तेन मुसलेन शिरसि आहतस्सन् अतिवेलं अत्यन्तं संमुमुहे मोहं प्राप । अथो हली लाङ्गली सः रामं एनं जरासन्धं जगृहे । उत अनन्तरं तत्र तदा श्रीकृष्णशरैराहतः पलायन् एकलव्यः रामशिरसि शीघ्रं अस्त्राणि प्रमुमोच ॥३८॥

**भीतेन तेन समरं भगवाननिच्छन् प्रद्युम्नमाश्वसृजदात्मसुतं मनोजम् ।**
**प्रद्युम्न एनमभियाय महास्त्रजालै रामस्तु मागधमथाऽत्मरथं निनाय ॥३९॥**

**व्यासतीर्थीया–** भारते रुक्मिणीस्वयंवरात् पूर्वं प्रद्युम्नयुद्धोक्तेः दुर्घटत्वं परिहरन् रामं प्रत्येकलव्यप्राप्त्य-नन्तरकथामाह– **भीतेनेति** ॥३९॥

**वादिराजीया–** महास्त्रजालैरित्यत्र अभियाय आभिमुख्येन गत्वा, अभिधायेतिवत् ल्यवन्तमिदं पदम् । महास्त्रजालैर्विव्याधेति योग्यपदाध्याहारेण सम्वन्धः ॥३९-४१॥

**सत्याभिनवतीर्थीया–** तत्रैव भीतेन तेन...इति श्लोके 'प्रद्युम्न एनमभियाय महास्त्रजालैः' इत्यस्य प्रद्युम्नः महास्त्रजालैः युक्तः सन् एनं एकलव्यं अभियायेत्यर्थः । एतेन 'महास्त्रजालैः' इत्येतदनन्वितमिति दूषणं परास्तम् । 'युक्त' इत्यध्याहृतेनान्वयस्योक्तत्वात् ॥३९॥

**वरदराजीया–** तेन एकलव्येन । भविष्यत्प्रद्युम्नमेव मनोजं असृजत् । एनं एकलव्यं प्रद्युम्नोऽभियाय प्राप्तवान् । आत्मरथं प्रति मागधं निनाय नीतवान् रामः ॥३९॥

**अनन्तभट्टीया–** प्रद्युम्नस्य उत्पत्तेः पश्चाद्भावित्वात् मनोजमित्युक्तम् ॥३९॥

**जनार्दनीया–** तेन एकलव्येन । आत्मसुतं आदिसृष्टौ स्वपुत्रं मनोजं अथोत्पत्त्यनन्तरं ब्रह्मणः मानसाज्जातं कामं प्रद्युम्नं इह प्रद्युम्ननामानं असृजत् जनयामास । मनस इति शेषः । प्रद्युम्नः महास्त्रजालैः सह एनं एकलव्यं प्रति अभियाय अभिययौ । रामः निनाय निन्ये ॥३९॥

**ताम्रपर्णीया–** ।। **प्रद्युम्नमिति** ।। प्रागप्यात्मसुतं स्वमनोजं काममिह प्रद्युम्ननामकं मनसासृजदित्यर्थः ।।

**भारतश्री–** 'प्रद्युम्नो योधयामास' इति हरिवंशोक्तेः । प्रद्युम्नस्य तदानीमभावेन प्राप्ताप्रामाण्यं परिहरति– **प्रद्युम्नमाश्वसृजदिति** ।।३९-४३।।

**चट्टि–** भगवान् श्रीकृष्णः भीतेन तेन एकलव्येन समरं युद्धं अनिच्छन् आत्मसुतं आदिसृष्टौ स्वपुत्रम्, मनोजं जडोत्पत्त्यनन्तरं ब्रह्मणो मनसा जातं कामं प्रद्युम्नं इह प्रद्युम्ननामानं असृजत् जनयामास । मनस इति शेषः । प्रद्युम्नः महास्त्रजालैः सह एनं एकलव्यं प्रति अभियाय अभिययौ । अथ रामः मागधं आत्मरथं निनाय निन्ये ।।३९।।

**युद्ध्वा चिरं रणमुखे भगवत्सुतोऽसौ चक्रे निरायुधममुं स्थिरमेकलव्यम् ।**
**अंशेन यो भुवमगान्मणिमानिति स्म स क्रोधतन्त्रकगणेष्वधिपो निषादः ।।४०।।**

**व्यासतीर्थीया–** क्रोधतन्त्रगणेषु यो मणिमानिति स्म सोंऽशेन भुवमगात् । यः निषादाधिपो निषादः ।।४०-४४।।

**वेदाङ्गतीर्थीया–** यः पूर्वं क्रोधतन्त्रगणेषु क्रोधवशगणेषु अधिपः मणिमानिति मणिमान्नामा अंशेन भुवमगात् भुवि जातः स इह निषादः एकलव्य निषादः ।।४०।।

**वरदराजीया–** अमुमेकलव्यं निरायुधं चक्रे । एकलव्यः पूर्वं क इत्यत आह– **अंशेनेति** ।। यो मणिमानिति क्रोधतन्त्रकगणेषु प्रसिद्धः सोऽधिपो निषादाधिपतिः निषादो जातः ।।४०।।

**जनार्दनीया–** असौ प्रद्युम्नः चिरं युध्वा, रणमुखे स्थिरं अचञ्चलं अमुं एकलव्यम् । निरायुधं चक्रे । एकलव्यस्य पूर्वस्वरूपमाह– **अंशेनेति** ।। पूर्वं क्रोधतन्त्रकगणेषु क्रोधवशगणेषु । मणिमानिति स्म नाम्ना मणिमानिति प्रसिद्धः । अधिपः श्रेष्ठो यः । सः मणिमान् अंशेन निषादः निषादजातिः सन् । भुवं अगात् । निषादकुले जात इति भावः ।।४०।।

**ताम्रपर्णीया–** क्रोधतन्त्रकगणेषु यो मणिमानिति स्म प्रसिद्धः सोंऽशेन भुवमगात् । इह निषादः व्याधः ।।४०-४५।।

**चट्टि–** भगवत्सुतो असौ प्रद्युम्नः चिरं युद्ध्वा रणमुखे स्थिरं अमुं एकलव्यं निरायुधं चक्रे । एकलव्यः पूर्वं क इत्यत आह– **अंशेनेति** ।। पूर्वं क्रोधतन्त्रकगणेषु क्रोधवशगणेषु । मणिमानिति स्म नाम्ना मणिमानिति प्रसिद्धः अधिपः श्रेष्ठो यः सः मणिमान् अंशेन निषादः निषादजातिः सन् भुवं अगात् । निषादकुले जात इति भावः ।।४०।।

**प्रद्युम्नमात्मनि निधाय पुनः स कृष्णः संहृत्य मागधबलं निखिलं शरौघैः ।**
**भूयश्चमूमभिविनेतु[1]मुदारकर्मा बार्हद्रथं त्वमुचदक्षयपौरुषोऽजः ॥४१॥**

**वेदाङ्गतीर्थीया–** अभिविनेतुं आवेतुम् [आनेतुम्] ॥४१॥

**वरदराजीया–** आत्मनि स्वात्मनि निधाय भूयः पुनरपि चमूं सेनां अभिविनेतुं बार्हद्रथममुचत् ॥

**अनन्तभट्टीया–** आत्मनि निधाय निगूह्य ॥४१॥

**जनार्दनीया–** कृष्णः प्रद्युम्नं आत्मनि स्वोदरे निधाय संस्थाप्य, पुनः संहृत्य विनाश्य, अक्षय्यपौरुषोऽप्यजः कृष्णः भूयः पुनरपि चमूं सेनां अभिविनेतुं आनेतुं, बार्हद्रथं अमुचत् अमोचयत् । अत एवोदारकर्मा ॥४१॥

**भावचन्द्रिका–** बार्हद्रथं रामरथस्थं अमुचत् अमोचयत् ॥४१॥

**चट्टि–** उदारं कर्म यस्य स तथा । अक्षयं पौरुषं यस्य स तथा । न जायत इति अजः सः श्रीकृष्णः प्रद्युम्नं आत्मनि स्वोदरे निधाय निखिलं मागधबलं शरौघैः पुनः संहृत्य विनाश्य, भूयः पुनरपि चमूं सेनां अभिविनेतुं आनेतुं बार्हद्रथं अमुचत् ॥४१॥

**व्रीडानताच्छविमुखः सहितो नृपैस्तैर्बार्हद्रथः प्रतिययौ स्वपुरीं स पापः ।**
**आत्माभिषिक्तमपि भोजवराधिपत्ये दौहित्रमग्रत उत प्रणिधाय मन्दः ॥४२॥**

**वेदाङ्गतीर्थीया–** छविरहितं अछविम् । मन्दः अविवेकी । दौहित्रमपि ॥४२-४३॥

**वादिराजीया–** व्रीडानताच्छविमुख इत्यत्र छविरहितमच्छवि मुखं यस्येति विग्रहः ॥४२-४३॥

**वरदराजीया–** व्रीडया आनतः अच्छविः कान्तिरहितं मुखं यस्य सः । स्वपुरीं प्रति । भोजवराधिपत्ये आत्मना अभिषिक्तं दौहित्रं कंससुतं अग्रतः प्रणिधाय ॥४२॥

**अनन्तभट्टीया–** ॥ व्रीडेति ॥ व्रीडाननम्, अच्छवि कान्तिरहितं मुखं यस्येति विग्रहः ॥४२॥

**जनार्दनीया–** व्रीडया आनतं अधःकृतं अच्छवि विगतकान्ति मुखं यस्य स तथा । तैः पराजितैः नृपैः सहितः मन्दः अपटुः कर्तव्याकर्तव्यज्ञानशून्यः । 'मन्दाल्पापटुनिर्भाग्याः' इत्यमरः । पापः पापात्मा स बार्हद्रथः भोजवराणां भोजश्रेष्ठानां, आधिपत्ये साम्राज्ये आत्मना स्वेन, अभिषिक्तं दौहित्रं दुहितुः

---

१. 'चिन्तयामास भगवान् हरिः कारणमानुषः । तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ हनिष्यामि बलं ह्येतद् भुवि भारं समाहितम् । मागधेन समानीतं वंश्यानां सर्वभूभृताम् ॥ अक्षौहिणीभिः सङ्ख्यातं भटाश्वरथकुञ्जरैः । मागधोऽपि न हन्तव्यो भूयः कर्ता बलोद्यमम् । एतदर्थोऽवतारोऽयं भूभारहरणाय मे ॥' इति भागवते.१०.४९.६-८ ।

पुत्रं उतापि पुनरपि पलायनसमयेऽपीत्यर्थः । अग्रतः पुरतो निधाय, स्वपुरीं प्रति ययौ । उतापीत्यनेन आगमनसमयेऽपि दौहित्रं पुरतो निधायागादिति द्रष्टव्यम् ।।४२।।

**चट्टि–** सुपापः बार्हद्रथः व्रीडानताच्छविमुखः व्रीडया नतं अधःकृतं अच्छवि कान्तिरहितं मुखं यस्य स तथा सन् । तैः पराजितैः नृपैः सहितः सन् मन्दः कर्तव्याकर्तव्यज्ञानशून्यः सन् भोजवराणां भोजश्रेष्ठानां आधिपत्ये साम्राज्ये आत्मना स्वेन अभिषिक्तं दौहित्रं दुहितुः पुत्रं अग्रतः स्वस्य अग्रतः प्रणिधाय उतानन्तरं स्वपुरीं प्रति ययौ ।।४२।।

**जित्वा तमूर्जितबलं[1] भगवानजेशशक्रादिभिः[2] कुसुमवर्षिभिरीड्यमानः ।**
**रामादिभिः सहित आशु पुरं प्रविश्य रेमेऽभिवन्दितपदो महतां समूहैः ।।४३।।**

**वरदराजीया–** तं जरासन्धम् । कुसुमवर्षिभिः राजादिभिः ईड्यमानः पुरीं मधुरां महतां समूहैः अभिवन्दितपदः सन् रेमे ।।४३।।

**जनार्दनीया–** कुसुमानां पुष्पाणां वर्षिभिः वर्षणशीलैः । पुरीं मधुराम् । महतां उत्तमानाम् ।।४३।।

**चट्टि–** ।। **जित्वेति** ।। भगवान् श्रीकृष्णः ऊर्जितबलं तं जरासन्धं जित्वा कुसुमवर्षिभिः अजेशशक्रादिभिः ईड्यमानः सन् रामादिभिः सहितस्सन् आशु पुरीं मधुरां प्रविश्य महतां महात्मनां समूहैः अभिवन्दितपदस्सन् रेमे ।।४३।।

**वर्धत्सु पाण्डुतनयेषु चतुर्दशं तु**
**जन्मर्क्षमास तनयस्य सहस्रदृष्टेः ।**
**प्रत्याब्दिकं मुनिगणान् परिवेषयन्ती**
**कुन्ती तदाऽऽस बहुकार्यपरा नयज्ञा[3] ।।४४।।**

---

१. 'सर्वेष्वेतेषु युद्धेषु यादवैः स पराजितः । अपक्रान्तो जरासन्धस्स्वल्पसैन्यैर्बलाधिकः ।। न तद्बलं यादवानां विजितं यदनेकशः । तत्तु सन्निधिमाहात्म्यं विष्णोरंशस्य चक्रिणः ।। मनुष्यधर्मशीलस्य लीला सा जगतीपतेः । अस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति ।। मनसैव जगत्सृष्टिं संहारं च करोति यः । तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ।। तथापि यो मनुष्याणां धर्मस्तमनुवर्तते । कुर्वन् बलवतां सन्धिं हीनैर्युद्धं करोत्यसौ ।। साम चोपप्रदानं च तथा भेदं च दर्शयन् । करोति दण्डपातं च क्वचिदेव पलायनम् ।। मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते । लीला जगत्पतेस्तस्य छन्दतः परिवर्तते ।।' इति विष्णुपुराणे १०.२२.१२-१८ ।

२. 'विकीर्यमाणः कुसुमैः त्रिदशैरनुमोदितः । माधुरैरभिसङ्गम्य विज्वरैर्मुदितात्मभिः ।।' इति भागवते १०.४९.८३ ।

३. 'यज्ञा' इति मधुसूदनीयपाठः । 'नयज्ञा' इति वरदराजीयपाठः । 'अनयज्ञा' इति भावविवृतिकृत्पाठः ।

**वेदाङ्गतीर्थीया–** नयज्ञा नीतिज्ञा विवेकवतीत्यभिप्रायः ।।४४।।

**वादिराजीया–** यदा प्रत्याब्दिकं अब्दमब्दं प्रति जायमानम् । चतुर्दशं चतुर्दशाब्दे विद्यमानं जन्मदिनं जन्मर्क्षं जन्मनः ऋक्षं नक्षत्रं यत्र जन्मदिने तत् जन्मर्क्षं आस । जन्मनक्षत्रयोगेनापि सहितं जन्मदिनमास तदेति सम्बन्धः ।।४४-४५।।

**मधुसूदनीया–** न यज्ञा यत् पाण्डुरक्षणं जानातीति यज्ञा पाण्डुरक्षणज्ञाना । तत्र हेतुमाह– **बहुकार्यपरेति** ।। ततः पाण्डुरक्षणं विस्मृतवतीति भावः । 'रक्षणे विस्मृता कुन्ती व्यग्रा ब्राह्मणभोजने । पुरोहितेन सहिता ब्राह्मणान् पर्यवेषयत् ।।' इत्यादिपर्वोक्तेः [१३४.१३]। केचित्तु 'नयज्ञेत्येकं पदं कृत्वा नीतिज्ञेत्यर्थ' इति व्याचक्षते । तच्चिन्त्यम् । नीतिज्ञत्वे पाण्डुरक्षणे विस्मरणायोगात् ।।४४।।

**वरदराजीया–** सहस्रदृष्टेः इन्द्रस्य तनयस्य अर्जुनस्य प्रत्याब्दिकं प्रतिवर्षे भवं जन्मर्क्षं जन्मदिनमास । तदा कुन्ती मुनिगणान् परिवेषयन्ती परिवेषणं कुर्वन्ती । अत एव वहुकार्यपरा । यतो नयज्ञा नीतिज्ञा इत्यर्थः ।।४४।।

**भावविवृति–** 'वर्धत्सु पाण्डुतनयेषु चतुर्दशं तु... तदास वहुमानपरा नयज्ञा' इत्यत्र पुनर्भारतकथां वक्ति । द्वादशाध्यायान्ते 'क्रमात् संस्कारान् क्षत्रियाणामवाप्य तेऽवर्धन्त स्वतवसो महित्वना' इति पाण्डवा वने अवर्धन्त इत्युक्तम् । कियत्कालपर्यन्तमित्यत आह– **चतुर्दशं त्विति** ।। अर्जुनोत्पत्तिमारभ्य चतुर्दशवर्षपर्यन्तमित्यर्थः । यद्वा चतुर्दशवर्षाणां प्रत्याब्धिकं वर्षपूर्तौ क्रियमाणमुत्सवं तस्मिन् जन्मनक्षत्रमप्यासीत् । तदा कुन्ती अनयज्ञा आस । नयो नीतिः तां जानातीति नयज्ञा सा न भवतीत्यनयज्ञा आसीत् । पाण्डुरक्षणनीतिं विस्मृत्य कार्यान्तरे आसक्ताऽभूदित्यर्थः । तदेतदुक्तम्– 'पूर्णे चतुर्दशे वर्षे फल्गुनस्य च धीमतः । तदा उत्तरफल्गुन्यां प्रवृत्ते स्वस्तिवाचने ।। रक्षणे विस्मृता पाण्डोः व्यग्रा ब्राह्मणभोजने । पुरोहितेन सहिता ब्राह्मणान् परिवेशयत् ।।' इत्यादिपर्वणि ।। ।।४४-५३।।

**अनन्तभट्टीया–** प्रत्याब्दिकं प्रतिवर्षे भवम् । जन्मर्क्षं जन्मदिनमित्यर्थः ।।४४।।

**जनार्दनीया–** अस्मिन् काले प्रवृत्तां पाण्डवकथामाह– **वर्धत्स्विति** ।। पाण्डुतनयेषु वर्धत्सु वर्धमानेषु सत्सु सहस्रदृष्टेः सहस्रनेत्रस्य इन्द्रस्य तनयस्य पुत्रस्य अर्जुनस्य प्रत्याब्दिकं प्रतिसांवत्सरिकं चतुर्दशजन्मर्क्षं जन्मनक्षत्रं यदा आस तदा तद्दिने । नयं नीतिं जानातीति नयज्ञा । बहुकार्येषु परा आसक्ता कुन्ती मुनिगणान् परिवेषणकर्त्री आस ।।४४।।

**भारतश्री–** 'वर्धत्सुः पाण्डुतनयेषु' इत्यादिना पुनः भारतकथामाह । 'क्रमात् संस्कारान् क्षत्रियाणामवाप्य तेऽवर्धन्त स्वतवसो महित्वना । सर्वे सर्वज्ञाः सर्वधर्मोपपन्नाः सर्वे भक्ताः केशवेऽत्यन्तयुक्ताः ।।' इति वर्धत्सु पाण्डुतनयेष्विति...चतुर्दशं त्विति सम्बन्धः ।।४४।।

**भावचन्द्रिका–** वहुकार्यपरा भाविबहुकार्योद्देशा, भाविश्रेयोऽर्थिनीत्यर्थः । भाविज्ञानञ्च नीतिज्ञत्वादित्याह– **नयज्ञेति** ।।४४।।

**चट्टि–** अस्मिन् काले प्रवृत्तां पाण्डवकथामाह– **वर्धत्स्विति** ।। पाण्डुतनयेषु पाण्डवेषु वर्धत्सु सत्सु सहस्रदृष्टेः इन्द्रस्य तनयस्य अर्जुनस्य प्रत्याब्दिकं प्रतिवर्षे भवं चतुर्दशं जन्मर्क्षं जन्मनक्षत्रं यदा आस । तदा तस्मिन् दिने । नयं नीतिं जानातीति नयज्ञा कुन्ती मुनिगणान् मुनीनां समूहान् परिवेषयन्ती अन्नपरिवेषणं कुर्वती अत एव वहुकार्यपरा आस ।।४४।।

**तत्काल एव नृपतिः सह माद्रवत्या पुंस्कोकिलाकुलितफुल्लवनं ददर्श ।**
**तस्मिन् वसन्तपवनस्पर्शेधितः स कन्दर्पमार्गणवशं सहसा जगाम ।।४५।।**

**व्यासतीर्थीया–** फुल्लवनं विकसितवनम् ।।४५।।

**वेदाङ्गतीर्थीया–** सहसा स्त्रिया युतः मरिष्यसीति ऋषिशापमविचार्य ।।४५।।

**मधुसूदनीया–** ननु ब्राह्मणभोजनदशायां यजमानेन भाव्यम् । तत्कथं पाण्डुः तद्दशायां तत्र न स्थित इत्यत आह– **कन्दर्पमार्गणवश इति** ।। तथाच कामातुरत्वात् तत्र न स्थित इति भावः । 'तस्मिन् काले समाहूय माद्रीं मदनमोहितः । भूतसंमोहने काले सभार्यो व्यचरद्वनम् ।।' इत्यादिपर्वोक्तेः [१३४.१९] ।।४५-५२।।

**वरदराजीया–** तस्मिन्नेव काले नृपतिः पाण्डुः माद्रवत्या सह पुंस्कोकिलैराकुलितं व्याप्तं फुल्लं पुष्पितं वनं ददर्श । तस्मिन् वने पवनस्पर्शेन एधितः उत्सिक्तः सहसा कन्दर्पस्य कामस्य मार्गणवशं बाणविषयत्वं जगाम ।।४५।।

**अनन्तभट्टीया–** एधितः उत्सिक्त इत्यर्थः ।।४५।।

**जनार्दनीया–** नृपतिः पाण्डुः पुंस्कोकिलैः पुरुषपिकपक्षिभिः, आकुलितं संकुलितं, फुल्लं विकसितं पुष्पवदित्यर्थः, वनं ददर्श । तस्मिन् वने वसन्तपवनस्य वसन्तकालवायोः स्पर्शेन एधितः उद्रिक्तः पाण्डुः सहसा अकस्मात्, शापमविचार्येत्यर्थः । कन्दर्पः कामः तस्य मार्गणस्य बाणस्य वशं जगाम प्राप । सौरमासानुसारेण क्वचित्फाल्गुने मासि वसन्तर्तुर्भवति ।।४५।।

**भारतश्री–** माद्रवत्येति तृतीया सहयोगे ।।४५।।

**चट्टि–** तस्मिन् काले एव नृपतिः पाण्डुः माद्रवत्या सह पुंस्कोकिलैः पुरुषपिकैः आकुलितं व्याप्तं फुल्लं विकसितपुष्पवनं ददर्श । तस्मिन् वने वसन्तपवनस्य वसन्तकालवायोः स्पर्शेन एधितः उद्रिक्तः सः पाण्डुः सहसा अकस्मात्, शापमविचार्येत्यर्थः । कन्दर्पः कामः तस्य मार्गणस्य बाणस्य वशं जगाम प्राप । सौरमासानुसारेण क्वचित्फाल्गुने मासि वसन्तर्तुर्भविष्यति । 'वसन्तकाले चचार' इत्यादिपर्वण्युक्तम्। 'सुपुष्पितवने काले कदाचिन्मधुमाधवे । भूतसम्मोहने राजा सभार्यो व्यचरद्वनम् ।।' इति ।।४५।।

**जग्राह तामथ तया रममाण एव यातो [१]यमस्य सदनं हरिपादसङ्गी ।**
**पूर्वं शचीरमणमिच्छत एष विघ्नं शक्रस्य तद्दर्शनोपगतो हि चक्रे ।।४६।।**

**व्यासतीर्थीया–** अशुचित्वावसरे मृतस्य कथं यमसदनप्राप्तिरित्यत उक्तम्– **हरिपादसङ्गीति** ।। स्त्रीसङ्गवेलायां मरणे किं निमित्तमित्यतो मुनेः शाप एकं कारणमधिकं च कारणमाह– **पूर्वमिति** ।।

**वेदाङ्गतीर्थीया–** अशुचित्वावसरे मृतस्य कथं यमसदनप्राप्तिरित्यत उक्तम्– **हरिपादसङ्गीति** ।। रतिस्थस्य मरणे किं कारणमित्यतस्तत्कारणमाह– **पूर्वमिति** ।। पूर्वजन्मनि । तद्दर्शनोपगतः तस्य दर्शनार्थं उपगतः ।।४६।।

**वादिराजीया–** 'पूर्वं शचीरमणम्' इत्यत्र शच्यां रमणं क्रीडां शचीरमणमिति विग्रहः ।।४६।।

**सत्याभिनवतीर्थीया–** तत्रैव पूर्वं शचीरमणम्...इति सार्धश्लोकः । तस्यार्थः– एषः पाण्डुः हि यस्मात् पूर्वं शचीरमणमिच्छतः शक्रस्य तद्दर्शनोपगतः सन् विघ्नं चक्रे । तेनैव कारणेन मानुषमवाप्य रतिस्थ एव पञ्चत्वं अथ पञ्चत्वं च रतिविघ्नं च अपुत्रतां च आप । यस्मात् स्वात्मोत्तमेषु स्वल्पोऽपि दोषः उरुतामभियाति । सुरेषु स्वल्पोऽपि दोषः विशेषतः उरुतामभियाति तस्मात् पाण्डोः शचीरमण-विघ्नाख्यस्याल्पदोषेण मानुषादिबह्वनिष्टप्राप्तिर्युक्तेति । एतेन स्वोत्तमेष्वथेति अथशब्दो व्यर्थ इति दूषणं परास्तम् । अथशब्दस्य चशब्दार्थत्वमङ्गीकृत्य पञ्चत्वं चेति समुच्चयार्थ अथशब्द इत्यङ्गीकारात् एतेनैव विशेषतश्चेति चशब्दो व्यर्थ इति दूषणस्यानवकाशः । रतिविघ्नं चेति समुच्चयार्थः चशब्द इत्यङ्गीकारात् । एतेनैव 'स्वल्पोऽपि दोष उरुतामभियाति' इत्येतदनन्वितमिति दूषणं निरस्तम् । तस्मादित्यध्याहृतेनान्वय-स्योक्तत्वात् ।।४६।।

---

१. सभापर्वणि यमसभावर्णनसमये सभास्थितराज्ञां नामनिर्देशप्रसङ्गे नारदेन– 'शन्तनुश्चैव राजेन्द्र पाण्डुश्चैव पिता तव' [८.२५] इत्युक्तेः पाण्डुराजः यमसदनमगमदिति साधु ।

**वरदराजीया–** अथ तां माद्रीं जग्राह । तया माद्र्या रममाण एव रतिं कुर्वन्नेव यमस्य सदनं यातः । हरिपादे सङ्गो भक्तिरस्यास्तीति तथा । ननु रतिस्थ एव किमर्थं मृत इत्यत आह– **पूर्वमित्यादिना** ।। पूर्वं पूर्वजन्मनि शच्या साकं रमणमिच्छतः शक्रस्य विघ्नं रमणविघ्नं चक्रे । कथम्भूतः? तद्दर्शनार्थं उपगतः शच्या रहसि विद्यमानस्येन्द्रस्य दर्शनार्थं गमने रतिप्रतिवन्धो जात इति भावः ।।४६।।

**अनन्तभट्टीया–** पुनः शापे कारणमाह– **पूर्वमिति** ।। अपुत्रतां स्वेन पुत्ररहितताम् ।।४६।।

**जनार्दनीया–** अथ हरिपादस्य सङ्गोऽस्यास्तीति तथा । हरिभक्त इत्यर्थः । पाण्डुः तां माद्रीं जग्राह । रत्यर्थमङ्गीचकार । सदनं स्थानं यातः प्राप । रतिकाले मृतस्याऽपि सुपुण्यैः राजभिः प्राप्यस्य यमसदनस्य प्राप्तौ हरिपादसङ्गित्वमेव कारणमिति भावः । पाण्डोः रतिकाले मृतिकारणात् पूर्वोक्तमुनिशापादप्यधिककारणमाह– **पूर्वमिति** ।। एषः पाण्डुः पूर्वं परावहनाममरुत्स्वरूपेण तस्येन्द्रस्य दर्शनार्थं उपगतः समीपं प्राप्तः सन् शच्या सह रमणं इच्छतः शक्रस्य विघ्नं रतिप्रतिवन्धं चक्रे । हि येन कारणेन तेनैव रतिविघ्नकरणेनैव मानुषं मनुष्यजन्म अवाप्य, रतिस्थ एव पञ्चत्वं मृतिं आप । रतिविघ्नं आप । अपुत्रताञ्च औरसपुत्ररहितत्वं आप ।।४६।।

**ताम्रपर्णीया–** अशुचित्वावसरे मृतत्वात् कथं यमसदनप्राप्तिरित्यत आह– **हरिपादेति** ।। यमसदनप्राप्त्या न क्लेशो मन्तव्य इति वा हरीति । सङ्गो भक्तिः । **पूर्वं शचीरमणमिति** ।। अत्र विरोधस्त्वेकादशाध्यायरीत्या परिहार्यः ।।४६-४९।।

**अतिविशद–** 'पूर्वं शचीरमणमिच्छत एष विघ्नं शक्रस्य तद्दर्शनोपगतो हि चक्रे । तेनैव मानुषमवाप्य' इत्यत्र रतिविघ्नदोषेणैव मानुषप्राप्तिरुच्यते । तत्तु 'तपश्चरन् समागते शचीपतौ पिता तव । मरुद्गणोत्तमः पुरा न तूत्थितः शशाप सः ।। व्रजस्व मानुषीं तनुं ....।।' [म.ता.नि.२१.८७] इत्युत्तरवाक्यविरुद्धम् । तत्र शापेन मानुष्यप्राप्तेरुक्तत्वात् तेनैवेत्यवधारणं कथमुपपन्नं भवेत् । तस्यान्ययोगव्यवच्छेदकत्वादिति चेन्न । तेनैवेत्येवकारस्यायोगव्यवच्छेदकत्वात् रतिविघ्नदोषेण तथा अनुत्थितदोषेण मानुष्यप्राप्तिः सूचिता भवति ।।४६।।

**चट्टि–** अथ हरिपादे सङ्गो भक्तिः अस्यास्तीति हरिपादसङ्गी हरिभक्त इत्यर्थः । पाण्डुः तां माद्रीं जग्राह रत्यर्थमङ्गीचकार । तया रममाणः एव यमस्य सदनं स्थानं यातः । रतिकाले मृतस्यापि पाण्डोः सुपुण्यैः राजभिः प्राप्यस्य यमसदनस्य प्राप्तौ हरिपादसङ्गित्वमेव कारणमिति भावः । पाण्डोः रतिकाले मृतिकारणात् पूर्वोक्तमुनिशापादप्यधिककारणमाह– **पूर्वमिति** ।। एषः पाण्डुः पूर्वं परावहनाम्ना मरुत्स्वरूपेण तस्येन्द्रस्य दर्शनार्थं उपगतः समीपं प्राप्तः सन् । शच्या सह रमणं इच्छतः शक्रस्य विघ्नं रतिविघ्नं चक्रे ।।४६।।

**तेनैव मानुषमवाप्य रतिस्थ एव**
**पञ्चत्वमाप रतिविघ्नमपुत्रतां च[1] ।**
**स्वात्मोत्तमेष्वथ सुरेषु विशेषतश्च**
**स्वल्पोऽपि दोष उरुतामभियाति[2] यस्मात् ॥४७॥**

**व्यासतीर्थीया–** [तेन] दर्शनेन रतिविघ्नतः । कथमेतावाननर्थो जात इत्यत आह– **स्वात्मोत्तमेति** ॥ स्वात्मोत्तमेषु कृतः स्वल्पोऽपि दोषः उरुतामभियाति । अथ सुरेषु विशेषतश्चोरुतां याति । यस्मात् तस्मात् एतावाननर्थो जात इत्यर्थः ॥४७॥

**वेदाङ्गतीर्थीया–** तेनैव रतिविघ्नकरणेनैव किञ्चिदपराधस्य किमेवं महानर्थहेतुत्वमित्यत आह– **स्वात्मोत्तमेष्विति** ॥ दोषः अपराधः स्वल्पोऽपि उरुतां फलतः उरुतां उपयाति अथ तत्रापि सुरेषु विशेषतः उरुतामुपयाति यस्मात् तस्मात् रतिविघ्नकरणस्यैतावदनर्थहेतुत्वमिति ॥४७॥

**वादिराजीया–** 'रतिविघ्नम्' इत्यत्र ऋषिशापानन्तरं एतावत्कालपर्यन्तं रतेरभावात् रतिविघ्नमित्युक्तम् । यद्यपि ऋषिशापोऽप्यस्ति निमित्तम् । तथाऽपि ऋषेर्नीचत्वात् तच्छापः न प्रबलं निमित्तम् । किन्तु इन्द्रक्रोध एव मरणे मुख्यनिमित्तमिति 'पूर्वं शचीरमणम्' इत्याद्युक्तम् ॥४७॥

**वरदराजीया–** तेनैवापराधेन मानुषं जन्म अवाप । रतिस्थ एव पञ्चत्वं मरणं आप । स्वच्चिकीर्षितरतिविघ्नं अपुत्रतां स्वजन्यपुत्ररहितत्वञ्च आप । नन्वेतावदपराधेनैव अनर्थः कथमभूदित्यतत आह– **स्वात्मोत्तमेति** ॥ स्वात्मनः सकाशात् उत्तमेषु गुणाधिकेषु स्वल्पोऽपि दोषः अपराधरूपः उरुतां उत्कृष्टानर्थफलतां अभियाति । अथ सुरेषु विशेषतोऽपि उरुतां अभियाति यस्मात्तस्मात् अल्पेनापराधेन एतावदनर्थप्राप्तिर्युक्तैव इत्यर्थः ॥४७॥

**अनन्तभट्टीया–** विशेषतः सुरेषु यस्मादेवं तस्मात् पाण्डोः महाननर्थोऽभूदित्यर्थः ॥४७॥

**जनार्दनीया–** नन्वल्पापराधेन महानर्थफलप्राप्तिः कथमित्यत आह– **स्वात्मेति** ॥ स्वात्मोत्तमेषु स्वतः गुणोत्तमेषु स्वल्पोऽपि अत्यल्पोऽपि दोषः उरुतां फलतः महत्वं अभियाति । अथ अथोऽपि स्वात्मोत्तमापराधादपि सुरेषु विषये कृतः स्वल्पोऽपि दोषः उरुतां अभियाति यस्मात् तस्मात् पाण्डोः मानुषमवाप्येत्याद्युक्तफलं युक्तमेवेत्यर्थः ॥४७॥

**भावचन्द्रिका–** विशेषतश्च सुरेषु देवोत्तमेषु ॥४७॥

---

१. 'हि' इति चट्टिपाठः । २. 'उपयाति' इति वेदाङ्गतीर्थीयपाठः ।

**चट्टि–** हि येन कारणेन । तेनैव रतिविघ्नकरणेनैव मानुषं मनुष्यजन्म अवाप । रतिस्थ एव पञ्चत्वं मृतिं आप । रतिविघ्नं आप । अपुत्रतां औरसपुत्ररहित्वं चाप । ननु अल्पापराधेन महानर्थफलप्राप्तिः कथमित्यत आह– **स्वात्मोत्तमेष्विति** ।। स्वात्मोत्तमेषु स्वतः गुणोत्तमेषु स्वल्पोऽपि अत्यल्पोऽपि दोषः उरुतां उरुफलतां महत्त्वं अभियाति । अथ अतोऽपि स्वोत्तमापराधादपि सुरेषु विषये कृतः स्वल्पोऽपि दोषः उरुतां अभियाति यस्मात् तस्मात् पाण्डोः मानुषमपीत्याद्युक्तफलं युक्तमेवेत्यर्थः ।।४७।।

**माद्री पतिं मृतमवेक्ष्य रुराव दूरात्**
**तच्छुश्रुवुश्च पृथया सह पाण्डुपुत्राः ।**
**तेष्वागतेषु वचनादपि माद्रवत्याः[१]**
**पुत्रान् निवार्य तु पृथा स्वयमत्र चाऽगात् ।।४८।।**

**वेदाङ्गतीर्थीया–** तेषु पार्थेषु सहागतेषु स्वयं निवार्य माद्रवत्या वचनादपि निवार्य अत्र स्वयं चागात् ।।४८।।

**वादिराजीया–** 'वचनादपि माद्रवत्याः' इत्यत्र पुत्रान्नानय त्वमेवायाहीति रुदत्या माद्रवत्या वचनादपीत्यर्थः ।।४८।।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव माद्री पतिं मृतमवेक्ष्य इति श्लोके 'दूरात् तच्छुश्रुवुः पृथया सह पाण्डुपुत्राः' इत्यस्य पृथया सह पाण्डुपुत्राः दूरात् दूरे स्थिताश्च स्थिता अपि तत् शुश्रुवुरित्यर्थः । एतेन 'दूरात्' इत्येतदनन्वितमिति दूषणं परास्तम् । स्थिता इत्यध्याहृतेनान्वयस्योक्तत्वात् ।।४८।।

**वरदराजीया–** दूरात् दूरादेव श्रुतवती तद्रोदनम् । तेषु आगतेष्वपि माद्रवत्याः वचनात् 'पुत्रान् न आनय' इत्येवंरूपात् पुत्रान् पाण्डवान् निवार्य मध्ये स्थापयित्वा स्वयमेव चागात् ।।४८।।

**जनार्दनीया–** रुराव रोदनं चक्रे । दूरात् तद्रोदनं शुश्रुवुः । पृथा तेषु पार्थेषु आगतेषु सत्सु । 'मत्सहायेन नागन्तव्यम्' इति पुत्रान् स्वयं निवार्य, माद्रवत्या वचनादपि च निवार्येत्यर्थः । स्वयमेवागात् । शवसमीपमिति शेषः ।।४८।।

---

१. 'सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ । आजग्मुः सहितास्तत्र यत्र राजा तथागतः ।। ततो माद्र्यब्रवीत् राजन् आर्ता कुन्तीमिदं वचः । एकैव त्वमिहागच्छ तिष्ठन्त्वत्रैव दारकाः । तच्छ्रुत्वा वचनं तस्याः तत्रैवाधाय दारकान् ।' इति आदिपर्वणि १३४.२८-३०।

**चट्टि–** माद्री पतिं मृतमवेक्ष्य रुराव रोदनं चक्रे । पृथया सह वर्तमानाः पाण्डुपुत्राश्च दूरात् तद्रोदनं शुश्रुवुः । तेषु पार्थेषु आगतेषु सत्सु पृथा माद्रवत्या वचनात् पुत्रान् मा आनय त्वमेव याहीति वचनात् पुत्रानपि निवार्य स्वयमेवात्र शवसमीपं प्रत्यगात् ।।४८।।

**पत्युः कलेवरमवेक्ष्य निशम्य माद्र्याः**
**कुन्ती भृशं व्यथितहृत्कमलैव माद्रीम् ।**
**धिक्कृत्य चानुमरणाय मतिं चकार**
**तस्याः स्वनो रुदितजः श्रुत आशु पार्थैः ।।४९।।**

**वादिराजीया–** 'निशम्य माद्र्या' इत्यत्र माद्र्याः सकाशात् निशम्य मरणप्रकारं निशम्येत्यर्थः ।।

**वरदराजीया–** माद्र्याः सकाशात् श्रुत्वैव, व्यथितं हृत्कमलं यस्याः सा । माद्रीं धिक्कृत्य विनिन्द्य अनुमरणाय पत्युरनुमरणार्थं मतिं बुद्धिं चकार । तस्याः रुदितजः रोदनजः स्वनो ध्वनिः पार्थैः श्रुतः।।

**जनार्दनीया–** कलेवरं देहम् । माद्र्याः सकाशान्निशम्य कारणं श्रुत्वा, भृशं व्यथितं हृत्कमलं हृदयपद्मं यस्याः सा । तादृशी सत्येव माद्रीं धिक्कृत्य विनिन्द्य, अनुमरणाय पतिमनु मरणार्थं मतिं चकार । तस्याः कुन्त्याः रुदितजः रोदनाज्जातः स्वनः रावः आशु पार्थैः कुन्त्या मध्ये स्थापितैः पार्थैः श्रुतः ।।४९।।

**भारतश्री–** निशम्य वच इति शेषः ।।४९।।

**चट्टि–** कुन्ती पत्युः पाण्डोः कलेवरं देहं अवेक्ष्य माद्र्याः सकाशान्निशम्य कारणं श्रुत्वा, भृशं व्यथितं हृत्कमलं यस्याः सा तथा तादृशसत्येव माद्रीं धिक्कृत्य विनिन्द्य, अनुमरणाय पतिमनु मरणार्थं मतिं चकार । तस्याः कुन्त्याः रुदितजः रोदनाज्जातः स्वनः रावः आशु पार्थैः श्रुतः ।।४९।।

**तेष्वागतेष्वधिक आस विराव एतं सर्वेऽपि शुश्रुवुर्ऋषिप्रवरा अथात्र ।**
**आजग्मुरुत्तमकृपा ऋषिलोकमध्ये पत्नी नृपानुगमनाय च पस्पृधाते ।।५०।।**

**व्यासतीर्थीया–** अपूर्वसवर्णो जातस्तेन पत्नी इति ।।५०।।

**वादिराजीया–** 'पत्नी नृपानुगमनाय' इत्यत्र बालेषु सुतेषु सत्सु द्वयोरनुगमनमनुचितम् । तत्र एकस्याः पत्न्याः नृपानुगमनं पत्नीनृपानुगमनं तस्मै । अहं गच्छामि अहं गच्छामीति उभे पस्पृधाते इति योजना ।।५०।।

**वरदराजीया–** तेषु पार्थेषु । विरावो ध्वनिः । एतं तत्रत्याः सर्वे ऋषिवराः शुश्रुवुः अथात्र आगताश्च । यत उत्तमकृपा इत्यर्थः । ऋषिलोकमध्ये पत्नीशब्दो द्विरावर्तनीयः । तेन पस्पृधाते इति द्विवचनोपपत्तिः । द्विवचनस्य एकवचनादेशो वा । 'सुपां सलुक्' इति वचनात् इति द्रष्टव्यम् । पस्पृधाते विवादं चक्रतुः ।।५०।।

**अनन्तभट्टीया–** पत्नी पत्न्यौ ।।५०।।

**जनार्दनीया–** तेषु पार्थेषु । विरावः रोदनशब्दः अधिकः आस । एतं विरावं सर्वेऽपि शुश्रुवुः । अत्र ऋषिलोकमध्ये ये उत्तमकृपाः ते ऋषिप्रवराः अत्राजग्मुः । पत्नी पत्न्यौ नृपानुगमनाय नृपं अनु मरणार्थं पस्पृधाते 'अहमहम्' इति परस्परं स्पर्धामकुर्वाते ।।५०।।

**ताम्रपर्णीया–** ।। **पत्नी नृपानुगमनायेति** ।। 'देव्यौ प्रकृतिमानिनी' इत्यत्र [अनुव्याख्यान-अंशाधिकरण] प्रकृतिमानिनी प्रकृतिमानिन्यौ । सुपां सुलुक् पूर्वसवर्णदीर्घ इति [४२५९] सुधोक्तोपपत्तिरत्रानुसन्धेया ।।५०-५६।।

**अतिविशद–** पत्नी नृपानुगमनाय च पस्पृधाते इत्यत्र स्त्रियो यन्नृपानुगमनं विहितमस्ति तत्र कुन्तीमाद्री ते उभे पस्पृधाते । क्षत्रियस्त्रियः विशेषतः सहगमनमिति सूचनार्थं नृपेत्युक्तम् । पत्नीसंयाजावभृथैश्चरित्वा अथर्त्विजः इत्यत्र पत्नीसंयाजावभृथशब्दस्य यथैकपदत्वं पत्नीनृपानुगमनस्यैकपदत्वं ज्ञेयम् ।।

'मरुद्गणोत्तमः पुरा' इति पाण्डोः मरुद्गणोत्तमत्वमुच्यते । तत्तु भागवततात्पर्यविरुद्धम् । तत्र 'मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः' [भा.ता.१०.९४.१२] इत्युक्तत्वात् । एतस्य सप्तातिरिक्तत्वात् । 'प्राणादयः पञ्च मरुत्प्रवीराः' [म.ता.नि.८.७२] इति प्राणपञ्चकस्य नासिक्येन प्रवहेन च साकं सप्तत्वावगमात् कथमेतदिति चेन्न । इन्द्रकामयोः समत्वश्रवणेऽपि यथेन्द्रस्य प्रमाणबलात् कामादुत्तमत्व-मङ्गीक्रियते तथेहापि उक्तशेषशतस्थत्वेन साम्येऽपि 'देवादिष्वेव सर्वेषु प्रोक्ता अपि विशेषिणः । पञ्चांशतो दशांशाद्वा स्वस्वजात्या परस्परम् ।।' [बृ.भा.३.५.अव्याकृतब्राह्मण] इति वचनात् । उक्तशेषशतस्थेष्वपि मरुत्सु पाण्डोरुत्तमत्वमङ्गीक्रियताम् । तात्पर्यं तु अल्पस्याविवक्षया । इन्द्रकामसाम्यवचनं समानयोगक्षेमं समं न विरुद्धमिति अयमेव न्यायः पाण्डोरश्विनोराधिक्ये द्रष्टव्यं इति ।।५०।।

**भावचन्द्रिका–** पत्न्यनुगमनं तदर्थम् । यद्वा यतः पत्नी यज्ञसंयोगवती नतु भोगार्थं...संयोग इत्युक्तेः ।।५०।।

**चट्टि–** तेषु पार्थेषु आगतेषु सत्सु विगवः रोदनशब्दः अधिकः आस । एतं विरावं अत्र वर्तमानाः सर्वेऽपि ऋषिवराः शुश्रुवुः । अथ अनन्तरं यतः उत्तमा कृपा एषां ते उत्तमकृपाः अतः सर्वेऽपि आजग्मुः । ऋषिलोकमध्ये पत्नी नृपपत्न्यौ नृपानुगमनाय नृपं अनु मरणार्थश्च पस्पृधाते अहमहमिति परस्परं स्पर्धां [अ]कुरुतः । पत्नीशब्दः इकारान्तोऽप्यस्ति । 'अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ । अद्यप्रभृति युष्माकमप्रजास्सन्तु पत्नयः ॥' [बालकाण्ड.३६.२२] 'शैलपुत्र्या यदुक्तं तन्न प्रजास्यथ पत्निषु ॥' इत्यादि रामायणोक्तेः [वालकाण्ड.३७.६]। 'याः कर्दमसुताः प्रोक्ताः नव ब्रह्मर्षिपत्नयः' इति भागवतोक्तेश्च [४.१.१२] । 'ऊर्क्च सूनृता च देवानां पत्नयः' इति श्रुतेश्च ॥५०॥

**ते सन्निवार्य तु पृथामथ माद्रवत्या भर्तुः सहानुगमनं बहुशोऽर्थयन्त्याः ।**
**संवादमेव[1] निजदोषमवेक्ष्य तस्याश्चक्रुः सदाऽवगतभागवतोच्चधर्माः ॥५१॥**

**व्यासतीर्थीया–** माद्रवत्या एव पत्यनुगमनसंवादकरणे किं निमित्तमित्यत उक्तम्– **निजदोषमवेक्ष्येति** ॥

**वरदराजीया–** ते ऋषयः पृथां सन्निवार्य वहु यथा भवति तथा अर्थयन्त्या अहं अनुगमिष्यामीति प्रार्थयन्त्या माद्र्या एव निजदोषं अपराधमेव अवेक्ष्य संवादं अनुगमनसम्मतिं चक्रुः । यतः सदा अवगताः भागवताः उच्चधर्मा यैस्ते तथा ॥५१॥

**जनार्दनीया–** सदा अवगताः ज्ञाताः, भागवताः भगवत्सम्वन्धिनः, उच्चधर्माः यैस्ते तथा । ते ऋषिप्रवराः निजदोषं माद्रीकृतभर्तृमरणनिमित्तदोषं अवेक्ष्य विचार्य, भर्तुः सहानुगमनं प्रति वहुशः वहुवारं अर्थयन्त्याः प्रार्थयन्त्याः तस्याः माद्रवत्याः एव संवादं अनुगमनसम्मतिं चक्रुः कृतवन्तः ॥५१॥

**भारतश्री–** तस्या एवेत्यन्वयः ॥५१॥

**भावचन्द्रिका–** ॥ **सदेति** ॥ बालकसंरक्षणार्थं कुन्तीं शरणमापुरिति भावः ॥५१॥

**चट्टि–** सदा अवगताः ज्ञाताः भागवताः भगवत्सम्वन्धिनः उच्चाः उत्कृष्टाः धर्माः यैस्ते तथा । ते ऋषिप्रवराः पृथां सन्निवार्य अथ निजदोषं माद्रीकृतभर्तृमरणनिमित्तदोषं अवेक्ष्य विचार्य, भर्तुः सहानुगमनं प्रति वहुशः वहुवारं अर्थयन्त्याः प्रार्थयन्त्याः तस्याः माद्रवत्याः एव संवादं अनुगमनसंमतिं चक्रुः ॥५१॥

---

१. वक्ष्यमाणानधिकपतिस्वीकाराख्यनिजदोषातिरिक्तदोषाः तथा कुन्त्याः गुणाः अपि भारतात् सङ्ग्राह्याः । तथाहि– 'वर्तेयं न समां वृत्तिं जात्वहं न सुतेषु ते । तथाहि वर्तमानां मामधर्मः संस्पृशेन्महान् ॥' आदिपर्वणि.१३४.७५ । 'कुन्ती समर्था पुत्राणां योगक्षेमस्य धारणे । अस्या हि न समा बुद्ध्या यद्यपि स्यादरुन्धती । कुन्त्याश्च वृष्णयो नाथा कुन्तिभोजस्तथैव च । नाहं त्वमिव पुत्राणां समर्था धारणे तथा ॥' आदिपर्वणि.१३४.८९-९० ।

**भर्तुर्गुणैरनधिकौ तनयार्थमेव [१]माद्र्या कृतौ सुरवरावधिकौ स्वतोऽपि ।**
**तेनैव भर्तृमृतिहेतुरभूत् समस्तलोकैश्च नातिमहिता सुगुणाऽपि माद्री ।।५२।।**

**व्यासतीर्थीया–** निजदोषमवेक्ष्येत्युक्तं दोषं निरूपयति– **भर्तुरिति** ।।५२।।

**वेदाङ्गतीर्थीया–** कृतौ अङ्गीकृतौ । स्वतः स्वस्मात् अधिको गुणत इति शेषः ।।५२।।

**वादिराजीया–** 'विष्वक्सेनोऽश्विनौ तौ गणपतिधनपा उक्तशेषाः शतस्था देवाश्चोक्तेतरे ये' इति [तारतम्यस्तोत्र.३] चशब्दात् प्राक् सङ्गृहीतयोरश्विनोः शतस्थदेवेषु पठितस्य पाण्डुमूलरूपपरावहाख्यमरुतश्च साम्येन पाण्डोः सकाशादश्विनोराधिक्याभावात् 'भर्तुर्गुणैरनधिकौ' इत्युक्तम् । आकृतौ आकारितौ ।।५२।।

**वरदराजीया–** तथा गुणैः भर्तुः सकाशात् अनधिकौ अनुत्तमौ स्वतोऽधिकावपि सुरवरौ अश्विनौ तनयार्थं आहूतौ । तेनापराधेनैव भर्तुः मृतिहेतुरभूत् । सुगुणापि माद्री समस्तलोकैः अतिमहिता अतिशयेन पूज्या च नाभूदित्यर्थः ।।५२।।

**जनार्दनीया–** 'निजदोषम्' इत्युक्तं दोषं निरूपयति– **भर्तुरिति** ।। माद्र्याः भर्तुः सकाशात् । गुणैः अनधिकौ न अधिकौ । समौ नीचौ च । उक्तशेषशतस्थत्वेन साम्येऽपि, 'देवादिष्वेषु सर्वेषु प्रोक्ता अपि विशेषिणाम् । पञ्चांशतो दशांशाद्वा स्वस्वजात्यां परस्परम् ।।' [बृ.भा.३.५.अव्याकृतब्राह्मण] इति वचनात् अवान्तरतारतम्यापेक्षया नीचत्वं ज्ञेयम् । अत एव आचार्यैः समौ नीचावित्यनुक्त्वा साधारणानधिकपदप्रयोगः कृतः । स्वतोऽपि स्वस्मादपि अधिकौ गुणोत्तमौ सुरवरौ अश्विनौ तनयार्थमेव पुत्रार्थमेव कृतौ । तेनैव अनधिकपतिस्वीकारदोषेणैव पत्युः भर्तुः, मृतेः हेतुः कारणं अभूत् । माद्री सुगुणापि समीचिनगुणवत्यपि समस्तलोकैः अतिमहिता अतिशयेन पूज्या न चाभूत् ।।५२।।

**भारतश्री–** भर्तुर्गुणैरनधिकौ भर्तुः पाण्डोः परावहनामकमरुत्वात् उक्तशेषशतस्थत्वं 'विष्वक्सेनोश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्थाः देवाश्च' इत्युक्तेः अश्विनोः पाण्डुसमत्वमेव न त्वाधिक्यम् । अतः अनधिकावित्युक्तम् । 'वरं समाश्रिता पतिं व्रजेत या ततोऽधमम्' [म.ता.नि.१२.२४] इत्युक्तत्वात्। स्वतोऽधममपि पत्यधमं व्रजेत् चेत् 'न काचिदस्य निष्कृतिः' [म.ता.नि.१२.२४] इत्याद्युक्तम् । स्वतोऽधमश्चेत् भर्तृलोकप्राप्तिर्नास्ति 'तारादेहे सूर्यजस्याङ्गसङ्गात् स्वर्गं नागादन्तरिक्षादिहासीत्' [म.ता.नि.२०.१६१] इति । स्वतो वरश्चेद् दुरन्वयाः सुदुःसहा भवति । बृहस्पतिभार्याया चन्द्रसङ्गात् दुरन्वयत्वम्, माद्र्याः दुःसहत्व... निष्कृरित्येतत्समम् । बृहस्पतिभार्यायाः बलात्कारेण चन्द्रधर्षणात् निष्कृतिः न तद्देहे प्रायश्चित्तमभूत् तद्देहे स्वभर्तृप्राप्तिश्च । माद्रवत्याः कामेनाधमगमनात् अश्विनोः

१. 'माद्र्या कृतौ' इति वेदाङ्गतीर्थीय-जनार्दनीय-चट्टिपाठः । माद्र्या आकृतौ इति वादिराजतीर्थीयपाठः ।

स्वतो वरत्वेऽपि पत्यवरत्वात् पतिमृतिहेतुत्वं दुःसहत्वम् । स्वतो वरत्वात् देहान्ते भर्तृलोकप्राप्तिः । शच्यास्तु स्वतोऽप्यधमगमनात् स्वभर्तृमरणानन्तरत्वात्... भर्तृलोकप्राप्तिर्नासीदित्यादिविशेषाः ज्ञातव्याः ।।५२-५५।।

**भावचन्द्रिका–** अधिकैः स्त्रियः पत्यपेक्षया दशावरस्य उत्सर्गतो देवेषूक्तेः ।।५२।।

**चट्टि–** 'निजदोषमवेक्ष्य' इत्युक्तं निरूपयति– **भर्तुरिति** ।। माद्र्याः भर्तुः गुणैः सकाशात् अनधिकौ अनुत्तमौ, स्वतः स्वस्माद् अधिकगुणोत्तमावपि, सुरवरौ अश्विनौ तनयार्थं पुत्रार्थमेव कृतौ स्वीकृतौ । तेनैव दोषेण भर्तुः मृतेः हेतुः कारणं अभूत् । माद्री सुगुणापि समीचिनगुणवत्यपि समस्तलोकैः समस्तप्राणिभिः अतिमहिता अतिशयेन पूज्या च नाभूत् । 'विष्वक्सेनोऽश्विनौ तौ गणपतिधनपा उक्तशेषाः शतस्थाः देवाश्च' इति चशब्दात् प्राक्सङ्गृहीतयोः अश्विनोः शतस्थदेवेषु पतितस्य पाण्डुमूलरूपपरावहाख्यमरुतश्च साम्येन पाण्डोः सकाशात् अश्विनोः आधिक्याभावात् भर्तुर्गुणैरनधिकौ इत्युक्तम् ।।५२।।

**पाण्डोः सुता मुनिगणैः पितृमेधमत्र चक्रुर्यथावदथ तेन सहैव माद्री ।**
**हुत्वाऽऽत्मदेहमुरु पापमदः कृतं च सम्मार्ज्य लोकमगमन्निजभर्तुरेव ।।५३।।**

**वेदाङ्गतीर्थीया–** अदःकृतं पापं सम्मार्ज्य भर्तृलोकमेवागमत् । अनेन 'वरं समाश्रिता पतिम्' इत्येतत् अकृतप्रायश्चित्तमित्युक्तं भवति ।।५३।।

**वादिराजीया–** 'यथावदथ' इत्यत्राथशब्दस्य अथ पाण्डुसुता इति पूर्वेणान्वयः ।।५३।।

**वरदराजीया–** मुनिगणैः सहिता पितृमेधं पाण्डोर्देहसंस्काररूपं अत्र वने यथावच्चक्रुः । तेन पाण्डवदेहेन सहैव आत्मदेहं हुत्वा अदः... तत्कृतं उरुपापं सम्मार्ज्य परिहृत्य निजभर्तुलोकमेव अगमत् । 'वरं समाश्रिता पतिं व्रजेत या ततोऽधमम् । न काचिदस्य निष्कृतिः न भर्तृलोकमृच्छति ।।' [म.ता.नि.१२.२४] इत्याद्युक्तं देहहानिप्रायश्चित्तं विना इत्यवगन्तव्यम् ।।५३।।

**जनार्दनीया–** पाण्डोः सुताः अत्र व्यासाश्रमे मुनिगणैः सह पितृमेधं देहदाहादिपितृयज्ञं यथावत् उक्तविधिप्रकारेण चक्रुः । माद्री तेन दह्यमानदेहेन सह आत्मदेहं हुत्वा, अदः अस्मिन् जन्मनि कृतं उरु अल्पप्रायश्चित्तेन अपरिहार्यं पापं अश्विनिसम्बन्धजन्यपापजन्यभर्तृमृतिहेतुरूपपापं सम्मार्ज्य निरस्य, निजभर्तृलोकमेवागमत् । 'वरं समाश्रिता पतिम्' इत्याद्युक्तं देहहानिप्रायश्चित्तमेव वेत्यवगन्तव्यम् ।।५३।।

**चट्टि–** पाण्डोः सुताः अत्र व्यासाश्रमे मुनिगणैः सहिताः पितृमेधं देहदाहादिपितृयज्ञं यथावत् विध्युक्तप्रकारेण चक्रुः । अथ माद्री तेन पाण्डुदेहेन सहैव आत्मदेहं हुत्वा, अदः अस्मिन् जन्मनि कृतं

उरु अल्पप्रायश्चित्तेन अपरिहार्यं पापं अश्विनिदेवतासम्बन्धजन्यभर्तृमृतिहेतुरूपपापं सम्मार्ज्य परिहृत्य निजभर्तृलोकमेवागमत् ।।५३।।

**पाण्डुश्च पुत्रकगुणैः स्वगुणैश्च साक्षात्**
**कृष्णात्मजः सततमस्य पदैकभक्तः ।**
**लोकानवाप विमलान् महितान् महद्भिः**
**किं चित्रमत्र हरिपादविनम्रचित्ते ।।५४।।**

**वेदाङ्गतीर्थीया–** इन्द्रापराधाख्योरुदोषवत्वात् पाण्डोः कथं विमललोकप्राप्तिरित्यत उक्तं– **पुत्रकगुणैरित्यादि** ।।५४-५५।।

**वादिराजीया–** हरिपादविनम्रचित्ते पाण्डौ विषये । अत्र उत्तमाधिकारप्राप्तौ ।।५४-६०।।

**वरदराजीया–** साक्षात् मुख्यतया कृष्णस्य वेदव्यासस्य आत्मजः सततं अस्य कृष्णस्य पदैकभक्तश्च अतो विमलाल्लोकान् अवाप । हरिपादे विनम्रं चित्तं यस्य तस्मिन् पाण्डौ अत्र विषये किं चित्रं किमाश्चर्यमित्यर्थः ।।५४।।

**भावविवृति–** पाण्डुश्च पुत्रकगुणैः...इत्यत्र एकश्चशब्दो विशेषार्थः । अपरस्तु नत्त्वर्थकः । तथाच स्वर्गे बहवो देवतासभाऽवर्तन्त तासु उत्तमां ऐन्द्रीं सभां पाण्डुर्न प्राप । किन्तु यमसभां प्राप । 'यातो यमस्य सदनं हरिपादसङ्गी' इत्युक्तेः । यमसभायां वसन् पाण्डुः कदाचित् भगवत्पूजां कर्तुं महद्भिर्ब्रह्मादिभिः महितान् पूजितान् लोकान् श्वेतद्वीपादीन् प्राप । तत्र गमनशक्तिं प्रापेति भावः । हरिपादविनम्रचित्ते अत्रास्मिन् पाण्डौ एतच्चित्रं न । पाण्डोरिन्द्रशापात् तदानीमेवांशिप्राप्तिर्नाभूदिति ज्ञेयम् । तदुक्तमुत्तरत्र-

'तपश्चरन् समागते शचीपतौ पिता तव । मरुद्गणोत्तमः पुरा न तूत्थितः शशाप सः ।।
व्रजन् मानुषीं तनुं ततो मृतः पुनर्दिवम् । गतोऽपि च स्वकां तनुप्रवेष्टुमत्र नेशसे ।।
ततोऽधिकस्त्रिशङ्कुजो भविष्यति त्वदित्यथ । क्षमापितश्च वासवो जगाद राजसूयतः ।।
त्रिशङ्कुजाधिको भवानवाप्स्यति स्वकां तनुम् ।।' इति [म.ता.नि.२१.८७-९०] ।।५४-७३।।

**जनार्दनीया–** ननु इन्द्रापराधेन अशुचित्वावसरे मृतस्य पाण्डोः उत्तमलोकप्राप्तिः कथमित्यत आह– **पाण्डुश्चेति** ।। 'साक्षाद्' इत्यनेन औरसत्वं विवक्षितम् । कृष्णस्य व्यासस्यात्मजः सततं अस्य कृष्णस्य पदैकभक्त इति हेतुगर्भविशेषणमेतत्पदद्वयम् । पाण्डुः पुत्रकगुणैः, स्वगुणैश्च महद्भिः श्रेष्ठपुरुषैः महितान् पूज्यान् अत एव विमलान् निर्दोषान् लोकानवापेति । हरिपादयोः विनम्रचित्तं मनो यस्य स तथा तस्मिन् । अत्र अस्मिन् पाण्डौ चित्रं किम् ? नैवेत्यर्थः ।।५४।।

**भावचन्द्रिका**– पुत्रापेक्षया हरिभक्त्या । हरिभक्त्यादिः स्वगुण एव प्रधानमित्याह– **किमिति** ।।५४।।

**चट्टि**– ननु इन्द्रापराधेन रतिकाले मृतस्य तस्य पाण्डोः कथमुत्तमलोकप्राप्तिः इत्यत आह– **पाण्डुश्चेति** ।। 'साक्षाद्' इत्यनेन औरसत्वं विवक्षितम् । 'कृष्णस्य व्यासस्यात्मजः' 'सततं अस्य श्रीकृष्णस्य पदैकभक्तः' इति पदद्वयं हेतुगर्भविशेषणम् । पाण्डुश्च पुत्रकगुणैः स्वगुणैश्च महद्भिः श्रेष्ठपुरुषैः महितान् पूज्यान् अत एव विमलान् निर्दोषान् लोकानवापेति । हरिपादयोः विनम्रं चित्तं मनो यस्य स तथा तस्मिन् । अत्र अस्मिन् पाण्डौ किं चित्रं न चित्रमित्यर्थः ।।५४।।

**पाण्डोः सुताश्च पृथया सहिता मुनीन्द्रैः**
**नारायणाश्रमत आशु पुरं स्वकीयम् ।**
**जग्मुस्तथैव धृतराष्ट्रपुरो मुनीन्द्राः**
**वृत्तं समस्तवदन्ननुजं मृतं च ।।५५।।**

**वरदराजीया**– नारायणाश्रमतो वदरिकाश्रमात् स्वकीयं पुरं हस्तिनपुरं जग्मुः । धृतराष्ट्रस्य पुरः पुरस्तात् समस्तं वृत्तं वृत्तान्तं शापादिरूपं अनुजं पाण्डुं मृतश्च अवदन् ।।५५।।

**मधुसूदनीया**– ।। **पाण्डोस्सुताश्चेति** ।। आशु सप्तदशेऽहनीत्यर्थः । 'पितृलोकं गतः पाण्डुः इतस्सप्तदशेऽहनि' इत्यादिपर्वोक्तेः [१३५.४०] । पुरागमनसमये धर्मराजः षोडशवार्षिकः इति ज्ञेयम् । 'जगाम हस्तिनपुरं षोडशाब्दो युधिष्ठिरः' इति चोक्तेः [आदि.१३४.२] ।।५५-७३।।

**जनार्दनीया**– पुरं नागपुरं जग्मुः प्रापुः । मुनीन्द्राः यथैव वृत्तं पाण्डोः शापपुत्रोत्पत्त्यादिकं च प्रवृत्तम् । तथैव समस्तं अवदन् । मृतं अनुजं पाण्डुं च अवदन् ।।५५।।

**भावचन्द्रिका**– आशु पाण्डुमरणानन्तरं सप्तदशेऽह्नि । तथोक्तं भारते ।।५५।।

**चट्टि**– पाण्डोः सुताः पाण्डवाः पृथया मुनीन्द्रैश्च सहिताः श्रीनारायणाश्रमतः वदरिकाश्रमात् स्वकीयं पुरं हस्तिनपुरं आशु सप्तदशे अहनीत्यर्थः । जग्मुः । 'पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि' इत्यादिपर्वोक्तेः । पुरागमनसमये धर्मराजः षोडशवार्षिक इति ज्ञेयम् । 'आजगाम हस्तिनपुरं षोडशाब्दो युधिष्ठिरः' इति चोक्तेः । मुनीन्द्राः पाण्डोः शापं पुत्रोत्पत्त्यादिकं यथैव वृत्तं प्रवृत्तं तथैव समस्तं धृतराष्ट्रपुरः अवदन् । अनुजं पाण्डुं मृतं च अवदन् ।।५५।।

**तूष्णीं स्थिते तु नृपतौ तनुजे द्युनद्याः**
**क्षत्तर्युताात्त उरुमोदमतीव पापाः ।**

उरु अल्पप्रायश्चित्तेन अपरिहार्यं पापं अश्विनिदेवतासम्वन्धजन्यभर्तृमृतिहेतुरूपपापं सम्माज्य परिहृत्य निजभर्तृलोकमेवागमत् ।।५३।।

**पाण्डुश्च पुत्रकगुणैः स्वगुणैश्च साक्षात्**
**कृष्णात्मजः सततमस्य पदैकभक्तः ।**
**लोकानवाप विमलान् महितान् महद्भिः**
**किं चित्रमत्र हरिपादविनम्रचित्ते ।।५४।।**

**वेदाङ्गतीर्थीया–** इन्द्रापराधाख्योरुदोषवत्वात् पाण्डोः कथं विमललोकप्राप्तिरित्यत उक्तं– **पुत्रकगुणैरित्यादि** ।।५४-५५।।

**वादिराजीया–** हरिपादविनम्रचित्ते पाण्डौ विषये । अत्र उत्तमाधिकारप्राप्तौ ।।५४-६०।।

**वरदराजीया–** साक्षात् मुख्यतया कृष्णस्य वेदव्यासस्य आत्मजः सततं अस्य कृष्णस्य पदैकभक्तश्च अतो विमलाल्लोकान् अवाप । हरिपादे विनम्रं चित्तं यस्य तस्मिन् पाण्डौ अत्र विषये किं चित्रं किमाश्चर्यमित्यर्थः ।।५४।।

**भावविवृति–** पाण्डुश्च पुत्रकगुणैः...इत्यत्र एकश्चशब्दो विशेषार्थः । अपरस्तु नत्वर्थकः । तथाच स्वर्गे बहवो देवतासभाऽवर्तन्त तासु उत्तमां ऐन्द्रीं सभां पाण्डुर्न प्राप । किन्तु यमसभां प्राप । 'यातो यमस्य सदनं हरिपादसङ्गी' इत्युक्तेः । यमसभायां वसन् पाण्डुः कदाचित् भगवत्पूजां कर्तुं महद्भिर्ब्रह्मादिभिः महितान् पूजितान् लोकान् श्वेतद्वीपादीन् प्राप । तत्र गमनशक्तिं प्रापेति भावः । हरिपादविनम्रचित्ते अत्रास्मिन् पाण्डौ एतच्चित्रं न । पाण्डोरिन्द्रशापात् तदानीमेवांशिप्राप्तिर्नाभूदिति ज्ञेयम् । तदुक्तमुत्तरत्र-

'तपश्चरन् समागते शचीपतौ पिता तव । मरुद्गणोत्तमः पुरा न तूत्थितः शशाप सः ।।
व्रजन् मानुषीं तनुं ततो मृतः पुनर्दिवम् । गतोऽपि च स्वकां तनुप्रवेष्टुमत्र नेशसे ।।
ततोऽधिकस्त्रिशङ्कुजो भविष्यति त्वदित्यथ । क्षमापितश्च वासवो जगाद राजसूयतः ।।
त्रिशङ्कुजाधिको भवानवाप्स्यति स्वकां तनुम् ।।' इति [म.ता.नि.२१.८७-९०] ।।५४-७३।।

**जनार्दनीया–** ननु इन्द्रापराधेन अशुचित्वावसरे मृतस्य पाण्डोः उत्तमलोकप्राप्तिः कथमित्यत आह– **पाण्डुश्चेति** ।। 'साक्षाद्' इत्यनेन औरसत्वं विवक्षितम् । कृष्णस्य व्यासस्यात्मजः सततं अस्य कृष्णस्य पदैकभक्त इति हेतुगर्भविशेषणमेतत्पदद्वयम् । पाण्डुः पुत्रकगुणैः, स्वगुणैश्च महद्भिः श्रेष्ठपुरुषैः महितान् पूज्यान् अत एव विमलान् निर्दोषान् लोकानवापेति । हरिपादयोः विनम्रचित्तं मनो यस्य स तथा तस्मिन् । अत्र अस्मिन् पाण्डौ चित्रं किम् ? नैवेत्यर्थः ।।५४।।

**भावचन्द्रिका**— पुत्रापेक्षया हरिभक्त्या । हरिभक्त्यादिः स्वगुण एव प्रधानमित्याह— **किमिति** ।।५४।।

**चट्टि**— ननु इन्द्रापराधेन रतिकाले मृतस्य तस्य पाण्डोः कथमुत्तमलोकप्राप्तिः इत्यत आह— **पाण्डुश्चेति** ।। 'साक्षाद्' इत्यनेन औरसत्वं विवक्षितम् । 'कृष्णस्य व्यासस्यात्मजः' 'सततं अस्य श्रीकृष्णस्य पदैकभक्तः' इति पदद्वयं हेतुगर्भविशेषणम् । पाण्डुश्च पुत्रकगुणैः स्वगुणैश्च महद्भिः श्रेष्ठपुरुषैः महितान् पूज्यान् अत एव विमलान् निर्दोषान् लोकानवापेति । हरिपादयोः विनम्रं चित्तं मनो यस्य स तथा तस्मिन् । अत्र अस्मिन् पाण्डौ किं चित्रं न चित्रमित्यर्थः ।।५४।।

**पाण्डोः सुताश्च पृथया सहिता मुनीन्द्रैः**
**नारायणाश्रमत आशु पुरं स्वकीयम् ।**
**जग्मुस्तथैव धृतराष्ट्रपुरो मुनीन्द्राः**
**वृत्तं समस्तवदन्ननुजं मृतं च ।।५५।।**

**वरदराजीया**— नारायणाश्रमतो वदरिकाश्रमात् स्वकीयं पुरं हस्तिनपुरं जग्मुः । धृतराष्ट्रस्य पुरः पुरस्तात् समस्तं वृत्तं वृत्तान्तं शापादिरूपं अनुजं पाण्डुं मृतश्च अवदन् ।।५५।।

**मधुसूदनीया**— ।। **पाण्डोस्सुताश्चेति** ।। आशु सप्तदशेऽहनीत्यर्थः । 'पितृलोकं गतः पाण्डुः इतस्सप्तदशेऽहनि' इत्यादिपर्वोक्तेः [१३५.४०] । पुरागमनसमये धर्मराजः षोडशवार्षिकः इति ज्ञेयम् । 'जगाम हस्तिनपुरं षोडशाब्दो युधिष्ठिरः' इति चोक्तेः [आदि.१३४.२] ।।५५-७३।।

**जनार्दनीया**— पुरं नागपुरं जग्मुः प्रापुः । मुनीन्द्राः यथैव वृत्तं पाण्डोः शापपुत्रोत्पत्त्यादिकं च प्रवृत्तम् । तथैव समस्तं अवदन् । मृतं अनुजं पाण्डुं च अवदन् ।।५५।।

**भावचन्द्रिका**— आशु पाण्डुमरणानन्तरं सप्तदशेऽह्नि । तथोक्तं भारते ।।५५।।

**चट्टि**— पाण्डोः सुताः पाण्डवाः पृथया मुनीन्द्रैश्च सहिताः श्रीनारायणाश्रमतः वदरिकाश्रमात् स्वकीयं पुरं हस्तिनपुरं आशु सप्तदशे अहनीत्यर्थः । जग्मुः । 'पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि' इत्यादिपर्वोक्तेः । पुरागमनसमये धर्मराजः षोडशवार्षिक इति ज्ञेयम् । 'आजगाम हस्तिनपुरं षोडशाब्दो युधिष्ठिरः' इति चोक्तेः । मुनीन्द्राः पाण्डोः शापं पुत्रोत्पत्त्यादिकं यथैव वृत्तं प्रवृत्तं तथैव समस्तं धृतराष्ट्रपुरः अवदन् । अनुजं पाण्डुं मृतं च अवदन् ।।५५।।

**तूष्णीं स्थिते तु नृपतौ तनुजे द्युनद्याः**
**क्षत्तर्युताप्त उरुमोदमतीव पापाः ।**

**[1]ऊचुः सुयोधनमुखाः सह सौबलेन**
**पाण्डोर्मृतिः किल पुरा तनयाः क तस्य ॥५६॥**

**वेदाङ्गतीर्थीया–** पुरा किल संयोगोत्पत्तेः पूर्वं किल ॥५६॥

**वरदराजीया–** नृपतौ धृतराष्ट्रे नद्यास्तनूजे भीष्मे च तूष्णीं स्थिते सति क्षत्तरि विदुरे उरुमोदं आप्ते सति सुयोधनमुखाः ऊचुः । यतोऽतीवपापा इत्यर्थः । पाण्डोर्मृतिः किल पुत्रोत्पत्तेः पुरा जाता अतस्तस्य पाण्डोः तनयाः क ॥५६॥

**अनन्तभट्टीया–** क्षत्तरि मोदमाप्ते । तनयाः औरसाः ॥५६॥

**जनार्दनीया–** नृपतौ धृतराष्ट्रे एवं तूष्णीं स्थिते सति नद्याः तनुजे च भीष्मे तूष्णीं स्थिते सतीत्यर्थः । क्षत्तरि विदुरे उरु मोदं प्राप्ते सति उत सुयोधनमुखाः सौबलेन शकुनिना सह ऊचुः । किमिति ? पाण्डोर्मृतिः पुरा तनयोत्पत्तेः पूर्वं किल । तस्य पाण्डोः तनया क कुत्रत्याः ॥५६॥

**भारतश्री–** मृतिः सन्यासः । 'सन्यस्य गतवान् पाण्डुः तनयाः कनु तस्य वै' इति भारतोक्तेः ॥५६॥

**चट्टि–** नृपतौ धृतराष्ट्रे तूष्णीं स्थिते सति नद्याः तनुजे भीष्मे च तूष्णीं स्थिते सति क्षत्तरि विदुरे तु उरु मोदं आप्ते सति उत अनन्तरं अतीवपापाः अत्यन्तपापिष्ठाः सुयोधनमुखाः सौबलेन शकुनिना सह ऊचुः । किमिति? पाण्डोर्मृतिः पुरा तनयोत्पत्तेः पूर्वं किल । अतः तस्य पाण्डोः तनयाः क ॥

**न क्षेत्रजा अपि मृते पितरि स्वकीयैः**
**सम्यङ् नियोगमनवाप्य भवाय योग्याः ।**
**तेषामितीरितवचोऽनु जगाद वायु-**
**राभाष्य कौरवगणान् गगनस्थ एव ॥५७॥**

**व्यासतीर्थीया–** साक्षात्पुत्रताभावेऽपि क्षेत्रजा भवन्त्वित्यत आह– **न क्षेत्रजा इति** ॥ पितरि मृते जाता इति शेषः । पितरि मृते जाता अपि विचित्रवीर्यादिवद्भवन्त्वित्यत उक्तम्– **स्वकीयैरिति** ॥ नियोगमनवाप्य स्थितायाम् ॥५७॥

**वेदाङ्गतीर्थीया–** नियोगमाज्ञां भवाय पितृसन्ततये ॥५७॥

---

१. 'आहुः केचिन्न तस्यैते तस्यैत इति चापरे । यदा चिरमृतः पाण्डुः कथं तस्येति चापरे ॥ स्वागतं सर्वथा दिष्ट्या पाण्डोः पश्याम सन्ततिम् । उच्यतां स्वागतमिति वाचोऽश्रूयन्त सर्वशः ॥ तस्मिन्नुपरते शब्दे दिशः सर्वा निनादयन् । अन्तर्हितानां भूतानां निःस्वनस्तुमुलोऽभवत् ॥' इति भारते.१.१.१४०-१४२ ।

**वरदराजीया**– तर्हि क्षेत्रजा भविष्यन्तीत्यत आहुरित्याह– **नेति** ।। पितरि मृते सति स्वकीयैः सम्बन्धिभिः सम्यक् बुद्धिपूर्वं नियोगं अज्ञामनवाप्य क्षेत्रे जाता अन्यस्माज्जाता स्वकीयैर्भवाय परिग्रहाय न योग्याः । स्वकीयानामाज्ञया मृतस्य भर्तुः क्षेत्रे उत्पन्नाः क्षेत्रजाः संव्यवहार्याः । एते च नैवमित्यर्थः । तेषां सुयोधनादीनां इति उक्तरीत्या उक्तं वचः अनु वायुर्गगनस्थ एव सन् कौरवगणान् आभाष्य 'रे शृणुत' इति अभिमुखीकृत्य जगाद ।।५७।।

**अनन्तभट्टीया**– अनवाप्य स्थिता । भवाय जननाय न योग्याः । भर्तुर्मृते स्वकीयविनियोगं विना अन्यस्मात् भार्यायां जाता क्षेत्रजा [य] भवन्तीत्यर्थः ।।५७।।[१]

**जनार्दनीया**– औरसपुत्राभावे क्षेत्रजाः पुत्राः किं न स्युः? इत्यतो नेत्याह– **नेति** ।। पितरि मृते सति स्वकीयैः बान्धवैः सम्यक् प्रीतिपूर्वकं नियोगमाज्ञां अनवाप्याप्राप्य विनेत्यर्थः । क्षेत्रे भार्यायां जाता अपि, अन्यस्मादिति शेषः । भवाय यस्य क्षेत्रं तत्सन्ततये योग्याः न । यद्वा पितरि मृते नियोगमप्राप्य ये भवाय जननाय योग्यास्ते क्षेत्रजा अपि नेत्यर्थः । तस्मादेते पाण्डोः क्षेत्रजा अपि न भवन्तीत्यूचुरिति भावः । गगनस्थो वायुः कौरवगणानाभाष्य सम्बोधनेन अभिमुखीकृत्य, तेषां दुर्योधनादीनाम् । इति भवाय योग्या नेत्यादि । ईरितवचः अन्वेव सहैव जगाद ।।५७।।

**ताम्रपर्णीया**– ।। **न क्षेत्रजा इति** ।। पितरि मृते क्षेत्रजा अपि भवाय परिग्रहराज्यप्राप्त्यादिमङ्गलाय न योग्याः । पितरि मृते क्षेत्रजातानामपि धृतराष्ट्रादिवत् परिग्रहार्हत्वं स्यादित्यत उक्तम्– **पितरि मृते स्वकीयैः सम्यङ् नियोगमाज्ञां अनवाप्येति** ।। यद्वा यस्माद् युधिष्ठिरादयः स्वकीयैः नियोगमनवाप्य भवाय उत्पत्तये न योग्याः । तस्मात् क्षेत्रजा अपि नेत्यर्थः । अथवा पितरि मृते जाताः क्षेत्रजा एव न भवन्ति यस्मात् स्वकीयैः सम्यक् नियोगमनवाप्य स्थितायां भवायोत्पत्तये न योग्या इत्यर्थः ।।५७-५८।।

**भारतश्री**– विचित्रवीर्यादिव्यावृत्त्यर्थं स्वकीयैः सम्यङ् नियोगमनवाप्येति ।।५७।।

**भावचन्द्रिका**– गगनस्थ एव नतु भूस्थः ।।५७।।

**चट्टि**– औरसपुत्रत्वाभावे क्षेत्रजाः भविष्यन्तीत्यत आहुरित्याह– **नेति** ।। पितरि मृते सति स्वकीयैः बन्धुभिः सम्यक्प्रीतिपूर्वकं नियोगमाज्ञां अनवाप्य अप्राप्य आज्ञां विनेत्यर्थः । क्षेत्रे भार्यायां जाता अपि, अन्यस्मादिति शेषः । भवाय यस्य क्षेत्रं तत्सन्ततये न योग्याः । तस्मादेते पाण्डोः क्षेत्रजा अपि न भवन्तीत्यूचुरिति भावः । गगनस्थो वायुः कौरवगणानाभाष्य सम्बोधनेन अभिमुखीकृत्य, तेषां दुर्योधनादीनाम् । इति ईरितवचः एते भवाय न योग्या इति गदितवचः अन्वेव सहैव जगाद ।।

---

१. अनन्तभट्टीया– क्षेत्रजत्वमपि नास्तीत्याह– न क्षेत्रजा इति ।। मृते जाता इति शेषः ।।५७।।

**एते हि धर्ममरुदिन्द्रभिषग्वरेभ्यो जाताः प्रजीवति पितर्युरुधर्मसाराः ।**
**शक्याश्च नैव भवतां क्वचिदग्रहाय नारायणेन सततं परिरक्षिता यत् ।।५८।।**

**वरदराजीया–** किमिति? उरुधर्मः सारः सामर्थ्यं येषां ते एते पार्थाः पितरि पाण्डौ प्रजीवति सति । तदाज्ञयेति शेषः । धर्ममरुदादिभ्यो जाताः अतो भवतां अग्रहाय भवद्भिरपि अपरिगृहीतुं शक्या नैव । यद्यस्मान्नारायणेन स्वाश्रमे पालिताश्च ।।५८।।

**अनन्तभट्टीया–** ।। उरु इति ।। उरु धर्मसारो येषामिति विग्रहः । भवतामग्रहाय भवद्भिरगृहीतुमित्यर्थः।।

**जनार्दनीया–** किमिति? उरु उत्कृष्टो भगवान्, तत्प्रीतिकरं धर्मो येषां ते तथा, अत एव साराः श्रेष्ठाः । एते पार्थाः । भिषग्वरावश्विनौ । धर्मादिभ्यः पितरि पाण्डौ प्रजीवति प्रकृष्टेन ज्ञानावयवपटुतरेण, जीवति सति जाता इति हि श्रुतिः भारतादिषु प्रसिद्धिः । भवतां अग्रहाय परित्यागाय क्वचित् नैव शक्याः । कुतः? नारायणेन भवतां पितामहव्यासेन सततं मूलरूपे अवतारे मुक्तौ च परिरक्षिताः यत् यस्मात् तस्मादित्यर्थः ।।५८।।

**भारतश्री–** पितरि प्रजीवति असन्यस्ते ।।५८-७३।।

**चट्टि–** किमिति? उरु उत्कृष्टो भगवान् तत्प्रीतिकराः धर्माः येषां ते तथा, अत एव साराः श्रेष्ठाः एते पार्थाः । भिषग्वरावश्विनौ । धर्ममरुदिन्द्रभिषग्वरेभ्यः पितरि पाण्डौ प्रजीवति सति जाता इति हि श्रुतिः भारतादिषु प्रसिद्धम् । भवतां अग्रहाय परित्यागाय क्वचित् नैव शक्याः । कुतः? श्रीनारायणेन भवतां पितामहव्यासेन सततं मूलरूपे अवतारे मुक्तौ च परिरक्षिताः यत् यस्मात् तस्मादित्यर्थः ।।

**वायोरदृश्यवचनं परिशङ्कमानेष्वाविर्बभूव भगवान् स्वयमब्जनाभः ।**
**व्यासस्वरूप उरुसर्वगुणैकदेह आदाय तानविशदाशु च पाण्डुगेहम् ।।५९।।**

**व्यासतीर्थीया–** अदृश्यस्य वचनं अदृश्यवचनम् । अदृश्यवचनं कस्यादृश्यस्येत्यतो वायोरिति योज्यम् ।।५७।।

**वरदराजीया–** अदृश्यस्य वचनं अदृश्यवचनं वा अदृश्यस्य वायोरिति योज्यम् । परिशङ्कमानेषु सत्सु व्यासरूपो भगवान् अब्जनाभः आविर्बभूव । कथम्भूत उरु सर्वगुणा एव देहो यस्य स तथा तान् पाण्डवानादाय पाण्डुगेहमगमत् ।।५९।।

**अनन्तभट्टीया–** अदृश्यवचनं कस्यादृश्यस्येत्यतो वायोरिति योज्यम् ।।५९।।

**जनार्दनीया–** परिशङ्कमानेषु अदृश्यवाक्यकरणे किं स्यात् ? इति परिशङ्कमानेषु सत्सु । व्यासः तान् पार्थान् आदाय गृहीत्वा ।।५९।।

**ताम्रपर्णीया–** अदृश्यस्य वचनं ने दृश्यवचनम् इति बुद्ध्या विवेकेन वायोरित्यनेनान्वेति ।। अदृश्यस्य वायोर्वचनमित्यर्थः ।।५९-६४।।

**चट्टि–** वायोरदृश्यवचनं अदृश्यस्य वायोः वचनमित्यर्थः । परिशङ्कमानेषु अदृश्यवाक्यकरणे किं स्यात्? इति परिशङ्कमानेषु सत्सु उरु सर्वगुणैकदेहः अब्जनाभः श्रीव्यासस्वरूपो भगवान् स्वयमेव आविर्बभूव । तान् पार्थान् आदाय आशु पाण्डुगेहं अगमत् ।।५९।।

**तत्स्वीकृतेषु सकला अपि भीष्ममुख्या**
**वैचित्रवीर्यसहिताः परिपूज्य सर्वान् ।**
**कुन्त्या सहैव जगृहुः सुभृशं तदाऽऽर्ता**
**वैचित्रवीर्यतनयाः सह सौबलेन ।।६०।।**

**वरदराजीया–** तेन व्यासेन स्वीकृतेषु सत्सु निखिलाः कुन्त्या सह वर्तमानान् परिपूज्य जगृहुः परिगृहीतवन्तः । सुभृशं यथा भवति तथा आर्ताः ।।६०।।

**जनार्दनीया–** तेन व्यासेन स्वीकृतेषु सत्सु । वैचित्रवीर्येण धृतराष्ट्रेण सहिताः । कुन्त्या सह, कुन्तीसहितानित्यर्थः । सर्वान् पञ्चपार्थान् परिपूज्य, यदा जगृहुः स्वीकारं चक्रुः । तदा भृशं यथा स्यात्तथा आर्ता दुःखिता बभूवुरित्यर्थः ।।६०।।

**चट्टि–** तेन श्रीव्यासेन स्वीकृतेषु सत्सु । वैचित्रवीर्येण धृतराष्ट्रेण सहिताः भीष्ममुख्याः सकला अपि कुन्त्या सहैव वर्तमानान् सर्वान् पाण्डवान् परिपूज्य यदा जगृहुः स्वीकारं चक्रुः । तदा वैचित्रवीर्यतनयाः धृतराष्ट्रपुत्राः सौबलेन शकुनिना सह भृशं यथा स्यात्तथा आर्ताः दुःखिताः बभूवुरित्यर्थः ।।

**वैचित्रवीर्यतनयाः [1]कृपतो महास्त्रा-**
**ण्यापुश्च पाण्डुतनयैः सह सर्वराज्ञाम् ।**
**पुत्राश्च तत्र विविधा अपि बालचेष्टाः[2]**
**कुर्वत्सु [3]वायुतनयेन जिताः समस्ताः ।।६१।।**

---

१. 'सोऽचिरेणैव कालेन परमाचार्यतां गतः । कृपमाहूय गाङ्गेयस्तव शिष्या इति ब्रुवन् । पौत्रान् परिसमाधाय कृपमाराधयत्तदा ।। ततोऽधिजग्मुः सर्वे ते धनुर्वेदं महारथाः । धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः ।। वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः । कृपमाचार्यमासाद्य परमास्त्रज्ञतां गताः ।।' इति आदिपर्वणि.१४०.२३-२५ । 'कुमारान् क्रीडमानांस्तान् दृष्ट्वा राजातिदुर्मदान् । गुरुं शिक्षार्थमन्विष्य गौतमं तान् न्यवेदयत् ।। .....

**व्यासतीर्थीया–** पाण्डवानां कौरवविरोधे कारणं निरूपयन् हस्तिनपुरप्रवेशानन्तरं प्रवृत्तां कथामाह– **वैचित्रेत्यादिना** ।।६१-६२।।

**वादिराजीया–** अनित्यत्वात् समासान्तविधेः 'राजाहः सखिभ्यष्टच्' इति टच्प्रत्ययो न भवति अतः सर्वराज्ञामिति साधु ।।६१-६२।।

**वरदराजीया–** कृपतः कृपाचार्यात् राज्ञां पुत्राश्च अस्त्राण्यापुः । तत्र तस्यां दशायां विविधाः बालचेष्टाः बालक्रीडाः कुर्वत्सु वायुतनयेन श्रीभीमेन समस्ताः जिताः पराजिताः अभवन् ।।६१।।

**जनार्दनीया–** कृपतः कृपाचार्यात् । तत्र तेषु कुमारेषु विविधाः बहुप्रकाराः बालचेष्टाः बालक्रीडाः कुर्वत्सु सत्सु वायुतनयेन जिताः पराजिताः ।।६१।।

**चट्टि–** वैचित्रवीर्यस्य तनयाः पाण्डुतनयैः सह कृपतः कृपाचार्यात् महास्त्राण्यापुः । सर्वराज्ञां पुत्राश्च महास्त्राण्यापुः । तत्र तेषु कुमारेषु विविधाः बहुविधाः बालचेष्टाः बालक्रीडाः कुर्वत्सु सत्सु वायुतनयेन भीमेन समस्ताः जिताः पराजिताः ।।६१।।

**[1]पक्वोरुभोज्यफलसन्नयनाय वृक्षेष्वारूढराजतनयानभिवीक्ष्य भीमः ।**
**पादप्रहारमुरुवृक्षतले प्रदाय साकं फलैर्विनिपतत्सु फलान्यभुङ्क्त ।।६२।।**

**वरदराजीया–** पक्वानां उरूणां भोज्यानां भक्ष्यणां फलानां आनयनाय वृक्षेष्वारूढान् राज्ञां तनयान् उरु यथा भवति तथा वृक्षतले वृक्षमूले पादप्रहारं प्रदाय फलैः साकं निपतत्सु कुमारेषु स्वयं फलान्यभुङ्क्त ।।

**जनार्दनीया–** पराभवं दर्शयति– **पक्वेति** ।। पक्वानि उरूणि श्रेष्ठानि, भोज्यानि भक्ष्याणि, फलानि, तेषां संनयनाय आनयनाय भक्षणाय च । वृक्षतले वृक्षस्याधो भागे उरु यथा तथा पादप्रहारं प्रदाय, फलैः साकं कुमारेषु विनिपतत्सु सत्सु, फलानि स्वयं अभुङ्क्त भक्षितवान् ।।६२।।

---

....शरस्तम्बे समुद्भूतं वेदशास्त्रार्थपारगम् । राज्ञा निवेदितास्तस्मै ते च सर्वे च निष्ठिताः ।। अधिजग्मुश्च कुरवो धनुर्वेदं कृपात् तु ते ।।' इति आदिपर्वणि.१३९.४१-४२ ।

२. 'एवं स धार्तराष्ट्रांश्च स्पर्धमानो वृकोदरः । अप्रियेऽतिष्ठदत्यन्तं बाल्यान्न द्रोहचेतसा ।।' इत्यादिपर्वणि १३७.२५।

३. 'सर्वेषां मम पुत्राणां स एकः क्रूरविक्रमः । बह्वाशी विप्रतीपश्च बाल्येऽपि रभसः सदा ।। उद्वेपते मे हृदयं ये मे दुर्योधनादयः । बाल्येऽपि तेन युध्यन्तो वारणेनेव मर्दिताः ।। तस्य वीर्येण संक्लिष्टा नित्यमेव सुता मम । स एव हेतुर्भेदस्य भीमो भीमपराक्रमः ।।' इति उद्योगपर्वणि धृतराष्ट्रवचनं ५१.१०-१२ ।

---

१. 'फलानि वृक्षमारुह्य विचिन्वन्ति च ये तदा । तदा पादप्रहारेण भीमः कम्पयते द्रुमान् ।। प्रहारवेगाभिहता द्रुमा व्याघूर्णितास्ततः । सफलाः प्रपन्ति स्म द्रुमात्त्रस्ता कुमारकाः ।। केचिद्भग्नशिरोरस्काः केचिद्भग्नकटीमुखाः । निपेतुर्भ्रातरः सर्वे भीमसेनभुजार्दिताः ।।' इति आदिपर्वणि.१३७.२१-२३ ।

**चट्टि–** पराभवं दर्शयति– **पक्वेति**। पक्वानां फलानां उरूणां श्रेष्ठानां भोज्यानां भक्ष्याणां फलानां सन्नयनाय वृक्षेषु आरूढराजतनयान् अभिवीक्ष्य भीमः वृक्षतले वृक्षमूले उरु यथा स्यात् तथा पादप्रहारं प्रदाय, फलैः साकं कुमारेषु विनिपतत्सु सत्सु, फलानि स्वयं अभुङ्क्त भक्षितवान् ॥६२॥

**[1]युद्धे नियुद्ध उत धावन उत्प्लवे च**
**[2]वारिप्लवे च सहितान् निखिलान् कुमारान् ।**
**[3]एको जिगाय तरसा परमार्यकर्मा**
**विष्णोः सुपूर्णसदनुग्रहतः सुनित्यात् ॥६३॥**

**व्यासतीर्थीया–** परं विलक्षणम् । आर्यं पूज्यम् । अतिबलानखिलान् कुमारान् कथमेकोऽजयदित्युक्तम्– **विष्णोरिति** ॥६३॥

**वादिराजीया–** 'युद्धे नियुद्धे' इत्यत्र युद्धं नाम पुञ्जद्वयीभूय कलहः । नियुद्धं द्वन्द्वयुद्धम् । पुञ्जीभूय मध्यस्थितेषु कुमारेषु परितः प्लवनं पारिप्लवः । स्वार्थिकोऽण् ॥६३॥

**वरदराजीया–** युद्धे तत्रापि नियुद्धे द्वन्द्वयुद्धे धावने उत्प्लवे च वारिषु प्लवने च निखिलान् एको जिगाय । तरसा बलेन वेगेन परमार्यं पूज्यं कर्म यस्य स तथा । एकः कथं जिगायेत्यतस्तत्र हेतुमाह– **विष्णोरिति** ॥६३॥

**अनन्तभट्टीया–** तरसा बलेन । परेति परं विलक्षणं आर्यं पूज्यं कर्म यस्येति विग्रहः ॥६३॥

**जनार्दनीया–** युद्धे दण्डादिना क्रीडायुद्धे वाग्युद्धे वा नियुद्धे मुष्टियुद्धे धावने पलायने उत्प्लवे ऊर्ध्वं उड्डीने निम्नभूम्यूड्डीने वा वारिप्लवे बाहुभ्यां जलप्लवने च सहितान् एकत्रमिलितान् निखिलान् कुमारान् एकः तरसा जवेन जिगाय । कथम्भूतः? आर्यं पूज्यं कर्म यस्य स तथा । ननु भीमस्य सर्वजयशक्तिः कुतः? इत्यतः आह– **विष्णोरिति** ॥ सुनित्यात् निरन्तरं विद्यमानात् ॥६३॥

---

१. 'जवे लक्ष्याभिहरणे भोज्ये पांसुविकर्षणे । धार्तराष्ट्रान् भीमसेनः सर्वान् स परिमर्दति ॥ हर्षात् प्रक्रीडमानांस्तान् गृह्य राजन्निलीयते । शिरःसु विनिगृह्यैतान् योजयामास पाण्डवैः ॥ शतमेकोत्तरं तेषां कुमाराणां महौजसजाम् । एक एव निगृह्णाति नातिकृच्छ्राद् वृकोदरः ॥ कचेषु च निगृह्यैतान् विनिहत्य बलात् बली । चकर्ष च क्रोशतो भूमौ घृष्टजानुशिरोंऽसकान् ॥' इति आदिपर्वणि.१३७.१६-१९ ।

२. पारिप्लवे इति वादिराजतीर्थीयपाठः ।

३. 'न ते नियुद्धे न जवे न योग्यासु कदाचन । कुमारा उत्तरं चक्रुः स्पर्धमाना वृकोदरम् ॥' इति आदिपर्वणि.१३७.२४ ।

**भावचन्द्रिका–** अधिकार्युत्तमत्वात् सुपूर्णेति ।...[अजन्यत्वात्] न जन्यत्वात् सुनित्यादिति । प्रतीक्ष्येति सम्बन्धः ॥६३॥

**चट्टि–** युद्धे दण्डादिना क्रीडायुद्धे नियुद्धे बाहुयुद्धे उत अनन्तरं धावने उत्प्लवे च वारिप्लवे बाहुभ्यां जलप्लवने च सहितान् एकत्रमिलितान् निखिलान् कुमारान् परमार्यं अतिश्रेष्ठं कर्म यस्य स तथा । सः भीमः एकः एव तरसा बलेन सुनित्यात् नित्यं विद्यमानात् विष्णोः सुपूर्णसदनुग्रहतः जिगाय ॥६३॥

**सर्वान् प्रगृह्य विनिमज्जति वारिमध्ये**
**श्रान्तान्[१] विसृज्य हसति स्म स विष्णुपद्याम् ।**
**सर्वानुदूह्य च कदाचिदुरुप्रवाहां**
**गङ्गां सुतारयति सारसुपूर्णपौंस्यः ॥६४॥**

**व्यासतीर्थीया–** सारः श्रेष्ठः । पौंस्यं बलम् ॥६४॥

**वेदाङ्गतीर्थीया–** सारः श्रेष्ठः । सुपूर्णपौंस्यः च पौंस्यं बलम् ॥६४॥

**वादिराजीया–** सारसुपूर्णपौंस्य इत्यत्र सारं श्रेष्ठं सुपूर्णं पौंस्यं पुंसो भावः पौंस्यं पौरुषं यस्य स तथोक्तः ॥६४॥

**सत्याभिनवतीर्थीया–** तत्रैव सर्वान् प्रगृह्य ...इत्यस्ति । स भीमः सर्वान् प्रगृह्य विष्णुपद्यां विनिमज्जति श्रान्तान् वारिमध्ये विसृज्य हसति स्मेत्यर्थः । एतेन 'विष्णुपद्यां विनिमज्जति' इत्यनेनैव पूर्णत्वात् 'वारिमध्ये' इत्येतत् व्यर्थमिति दूषणं निराकृतम् । 'वारिमध्ये' इत्यस्य विनिमज्जतीत्यनेनान्वय-मनङ्गीकृत्य 'विसृज्य' इत्यनेनान्वय इत्यङ्गीकारात् ॥६४॥

**वरदराजीया–** सः भीमो विष्णुपद्यां गङ्गायां सर्वान् कुमारान् प्रगृह्य वारिमध्ये विनिमज्जति अनन्तरं श्रान्तान् निरुद्धश्वासान् विसृजति [विसृज्य हसति स्म]स्म । सारभूतं सम्पूर्णं पौंस्यं पौरुषं यस्य सः भीमः सर्वान् उद्वाह्य गङ्गां तारयति ॥६४॥

**जनार्दनीया–** सारं श्रेष्ठं, सुपूर्णं पौंस्यं पौरुषं यस्य तथा । स भीमः ॥६४॥

---

१. 'दश बालान् जले क्रीडन् भुजाभ्यां परिगृह्य सः । आस्ते स्म सलिले मग्नो मृतकल्पान् विमुञ्चति ॥' इति आदिपर्वणि.१३७.२० ।

**चट्टि–** सः भीमः विष्णुपद्यां गङ्गायां सर्वान् कुमारान् प्रगृह्य वारिमध्ये विनिमज्जति श्रान्तान् विसृज्य हसति स्म । सारं श्रेष्ठं सुपूर्णं सुतरां पूर्णं पौंस्यं पुंसो भावः पौरुषं यस्य स तथा । स भीमः कदाचित् सर्वान् कुमारान् उद्गृह्य उरुप्रवाहां गङ्गां सुतारयति ।।६४।।

**द्वेषं ह्यृते नहि हरौ तमसि प्रवेशः प्राणे च तेन जगतीमनु तौ प्रपन्नौ ।**
**तत्कारणान्यकुरुतां परमौ करांसि देवद्विषां सततविस्तृतसाधुपौंस्यौ ।।६५।।**

**व्यासतीर्थीया–** ननु कृष्णभीमौ द्वेषकारणानि कर्माणि कस्मादकुरुतामित्यत आह– **द्वेषमिति** ।। करांसि कर्माणि ।।६५-६६।।

**वेदाङ्गतीर्थीया–** जगतीं भुवं अनु प्रपन्ने के [तौ] तत्कारणानि । करांसि कर्माणि ।।६५-६६।।

**वादिराजीया–** 'अकुरुतां परमौ करांसि' इत्यत्र 'श्रु श्रवण' इति धातोः शिरांसीतिवत्, 'मनु अवबोधने' इति धातोः मनांसीतिवच्च करांसीत्यपि । भावार्थात् 'डुकृञ् करणे' इति धातोरसुन्प्रत्ययान्तं पदं कर्माणीत्यर्थः ।।६५-७१।।

**वरदराजीया–** नन्वेवं भीमः किमर्थं कृतवानित्यत आह– **द्वेषमिति** ।। हरौ प्राणे च द्वेषमृते तमसि प्रवेशो न हि । प्रसिद्धं हि यस्मात् तेन कारणेन तौ हरिप्राणौ जगतीं अनुप्रपन्नौ प्राप्तौ देवद्विषां तत्कारणानि द्वेषकारणानि करांसि कर्माणि तौ अकुरुताम् । कथम्भूतौ तौ सततं विस्तृतं पूर्णं साधु अव्यवहितं पौंस्यं ययोस्तौ ।।६५।।

**अनन्तभट्टीया–** करांसि कर्माणि ।।६५।।

**जनार्दनीया–** ननु भीमः इदं किमर्थं कृतवान्? इत्यत आह– **द्वेषमिति** ।। देवद्विषां असुराणां हरौ प्राणे च मुख्यप्राणे च द्वेषं ऋते तमसि प्रवेशो न हि नैव भवेत् । हि यतः तेन कारणेन तौ हरिवायू जगतीं पृथ्वीं अनु साकं प्रपन्नौ प्राप्तौ । सततं अविच्छिन्नं, विस्तृतं पूर्णं, साधु निर्दुष्टं, वरमन्त्रसामर्थ्योपाधिरहितं स्वाभाविकमित्यर्थः, पौंस्यं बलं ययोस्तौ तथा । अत एव परमौ श्रेष्ठौ कृष्णभीमौ । तस्य द्वेषस्य कारणानि करांसि कर्माणि अकुरुतां सञ्चक्रतुः ।।६५।।

**ताम्रपर्णीया–** करांसि कर्माणि ।।६५-७३।।

**चट्टि–** ननु एवं भीमः किमर्थं कृतवान्? इत्यत आह– **द्वेषमिति** ।। देवद्विषां असुराणां हरौ प्राणे मुख्यप्राणे च द्वेषं ऋते तमसि प्रवेशो न हि नैव भवेत् । हि यतः तेन कारणेन तौ हरिवायू जगतीं पृथ्वीं अनु साकं प्रपन्नौ प्राप्तौ । सततं अविच्छिन्नं विस्तृतं पूर्णं साधु निर्दुष्टं वरमन्त्रसामर्थ्योपाधिरहितं

स्वाभाविकमित्यर्थः, पौंस्यं बलं ययोस्तौ तथा । अत एव परमौ श्रेष्ठौ श्रीकृष्णभीमौ तस्य द्वेषस्य कारणानि करांसि कर्माणि अकुरुतां सञ्चक्रतुः ।।६५।।

**दृष्ट्वाऽमितान्यथ करांसि मरुत्सुतेन**
**नित्यं कृतानि तनया निखिलाश्च राज्ञाम् ।**
**तस्यामितं [१]बलमुदीक्ष्य सदोरुवृद्ध-**
**द्वेषा बभूवुरथ मन्त्रममन्त्रयंश्च ।।६६।।**

**वरदराजीया–** नित्यं कृतानि करांसि कर्माणि । राज्ञां निखिलाः तनयाः तस्य भीमस्य अमितं बलं उदीक्ष्य सदा उरु यथा भवति तथा वृद्धो द्वेषो एषां ते तथा । अथ मन्त्रं विचारं अमन्त्रयन् विचारयामास ।।६६।।

**जनार्दनीया–** तस्य भीमस्य । अथ मन्त्रं विचारं अमन्त्रयन् विचारयामासुः ।।६६।।

**चट्टि–** अथ राज्ञां निखिलाः तनयाश्च मरुत्सुतेन भीमेन नित्यं कृतानि अमितानि करांसि । डुकृञ् करणे इति धातोः भावे असुन्प्रत्ययः । कर्माणीत्यर्थः । दृष्ट्वा तस्य भीमस्य अमितं बलं च उदीक्ष्य सदा उरुवृद्धः अतिवृद्धः द्वेषो येषां ते तथा बभूवुः । अथ मन्त्रं विचारं अमन्त्रयन् विचारयामासुः ।

**ये ये हि तत्र नरदेवसुताः सुरांशाः प्रीतिं परां पवनजे निखिला अकुर्वन् ।**
**तांस्तान् विहाय दितिजा नरदेववंशजाता विचार्य वधनिश्चयमस्य चक्रुः ।।६७।।**

**व्यासतीर्थीया–** सर्वेऽपि नरदेवकुमाराः द्वेषमकुर्वन् किमित्यतो विशेषं वदन् मन्त्रप्रकारमाह– ये य इति ।।६७।।

**वेदाङ्गतीर्थीया–** विहाय विना ।।६७-६९।।

**वरदराजीया–** तत्र कुमारेषु सुरांशाः देवावताराः ये नरदेवसुताः पवनजे भीमे परां प्रीतिमकुर्वन् । तान् नरदेवसुतान् विसृज्य दितिजाः पूर्वं दैत्याः इदानीं नरदेववंशजाता विचार्य अस्य भीमस्य वधनिश्चयं चक्रुः ।।६७।।

**जनार्दनीया–** तत्र तेषु मध्ये ये ये नरदेवानां राज्ञां, सुताः सुरांशाः देवावताराः ते ते निखिलाः

---

१. 'ततो बलमतिख्यातं धार्तराष्ट्रः प्रतापवान् । भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत् ।। तस्य धर्मादपेतस्य पापानि परिपश्यतः । मोहादैश्वर्यलोभाच्च पापा मतिरजायत ।।' इति आदिपर्वणि.१३७.२६-२८ ।

सुरांशाः पवनजे भीमे । तान् तान् सुरांशान् विहाय । नरदेववंशे राजकुले, जाता दितिजाः विचार्य विचारं कृत्वा अस्य भीमस्य ।।६७।।

**चट्टि—** तत्र तेषु कुमारेषु ये ये नरदेवसुताः सुरांशाः देवावताराः ते ते निखिलाः पवनजे भीमे परां प्रीतिं अकुर्वन् । तान् तान् विहाय विसृज्य नरदेववंशे राजकुले जाता दितिजाः विचार्य विचारं कृत्वा अस्य भीमस्य वधनिश्चयं चक्रुः ।।६७।।

**अस्मिन् हते विनिहता अखिलाश्च पार्थाः**
**शक्यो बलाच्च न निहन्तुमयं बलाढ्यः[१] ।**
**छद्मप्रयोगत इमं विनिहत्य वीर्यात्**
**पार्थं निहत्य निगडे च विदध्महेऽन्यान् ।।६८।।**

**वरदराजीया—** विचारप्रकारं दर्शयति— **अस्मिन्निति** ।। अस्मिन् भीमे । अयं भीमो बलाद्धन्तुं न शक्यः । यतः बलाढ्यः छद्मप्रयोगतो विषादिदानेन इमं भीमं विनिहत्य, पार्थं वीर्यात् बलेन निहत्य अन्यान् युधिष्ठिरादीन् निगडे शृङ्खलायां विदध्महे बध्नीमः ।।६८।।

**अनन्तभट्टीया—** पार्थं वीर्यान्निहत्य बध्नीम इत्यर्थः ।।६८।।

**जनार्दनीया—** विचार्येत्युक्तं विशदयति— **अस्मिन्निति** ।। अस्मिन् भीमे । अयं भीमः यतो बलाढ्यः अतः बलात् शारीरबलात् निहन्तुं शक्यो न च । छद्मप्रयोगतः मन्त्रौषधादिछद्मप्रयोगात् इमं भीमं विनिहत्य पार्थं अर्जुनं वीर्यात् पराक्रमात् निहत्य, अन्यान् युधिष्ठिरादित्रीन् निगडे शृङ्खलायां विदध्महे कुर्मः ।।६८।।

**चट्टि—** विचारप्रकारं दर्शयति— **अस्मिन्निति** ।। अस्मिन् भीमे हते सति निखिलाश्च पार्थाः विनिहताः । अयं भीमः यतो बलाढ्यः अतः बलात् निहन्तुं न शक्यः । छद्मप्रयोगतः मन्त्रौषधादिछद्मप्रयोगात् इमं भीमं विनिहत्य पार्थं अर्जुनं वीर्यात् पराक्रमात् निहत्य, अन्यान् युधिष्ठिरादित्रीन् निगडे शृङ्खलायां विदध्महे कुर्मः ।।६८।।

---

१. 'तस्य धर्मादपेतस्य पापानि परिपश्यतः । मोहादैश्वर्यलोभाच्च पापा मतिरजायत ।। अयं बलवतां श्रेष्ठः कुन्तीपुत्रो वृकोदरः । मध्यमः कुन्तिपुत्राणां निकृत्या सन्निगृह्यताम् ।। प्राणवान् विक्रमी चैव शौर्येण महतान्वितः । स्पर्धते चापि सहितानस्मानेको वृकोदरः ।। तं तु सुप्तं पुरोद्याने गङ्गायां प्रक्षिपामहे ।।' आदिपर्वणि.१३७.२७-३१ इति दुर्योधनवाक्यम् ।।

**एवं कृते निहतकण्टकमस्य राज्यं**
**दुर्योधनस्य हि भवेन्न ततोऽन्यथा स्यात् ।**
**अस्मिन् हते निपतिते च सुरेन्द्रसूनौ**
**[1]शेषा[2] भवेयुरपि सौबलिपुत्रदासाः ।।६९।।**

**वरदराजीया–** एवं कृते अनुष्ठिते सति अस्य निष्कण्टकं राज्यं भवेत् । ततोऽन्यथा न स्यात् । शेषाः पार्थाः सौबलिपुत्रस्य दुर्योधनस्य दासा भवेयुः ।।६९।।

**जनार्दनीया–** एवं कृते सति अस्य दुर्योधनस्य निहतकण्टकं निष्कण्टकं राज्यं भवेत् । ततः विचारितस्य अन्यथा करणात् तस्य निष्कण्टकराज्यं न स्यादित्यर्थः । अस्मिन् भीमे । सुरेन्द्रसूनावर्जुने । शेषाः युधिष्ठिरादित्रयः । सौबल्याः गान्धार्याः ।।६९।।

**चट्टि–** एवं कृते सति अस्य दुर्योधनस्य निहतकण्टकं निष्कण्टकं राज्यं भवेत् । ततः विचारितस्य अन्यथा करणात् न स्यादित्यर्थः । निष्कण्टकं राज्यं न स्यादित्यर्थः । अस्मिन् भीमे हते सति सुरेन्द्रसूनावर्जुने निपतिते सति शेषाः युधिष्ठिरादित्रयः अथ सौबल्याः गान्धार्याः पुत्रस्य दुर्योधनस्य दासाः भवेयुः ।।६९।।

**एवं विचार्य [3]विषमुल्बणमन्तकाभं क्षीरोदधेर्मथनजं तपसा गिरीशात् ।**
**शुक्रेण लब्धममुतः सुबलात्मजेन प्राप्तं प्रतोष्य मरुतस्तनयाय चादुः ।।७०।।**

**वेदाङ्गतीर्थीया–** अमुतः शुक्रात् ।।७०।।

**वरदराजीया–** उल्बणं उग्रं अत एवान्तकाभं क्षीरोदधेः मथनेन जातं गिरीशात् तपसा शुक्रेण प्राप्तं अमुतः शुक्रात् सुबलात्मजेन शकुनिना आप्तं विषं मरुतस्तनयाय भीमाय अदुः ।।७०।।

**अनन्तभट्टीया–** प्रतोष्य प्राप्तम् ।।७०।।

---

१. 'अथ तस्मादवरजं श्रेष्ठं चैव युधिष्ठिरम् । प्रसह्य बन्धने बद्ध्वा प्रशासिष्ये वसुन्धराम् ।।' इति आदिपर्वणि.१३७.३१।

२. 'शेषा भवेयुरथ सौबलिपुत्रदासा' इति चट्टिपाठः ।

३. 'तथान्यदिवसे राजन् हन्तुकामोऽत्यमर्षणः । बलनेन सहामन्त्र्य सौबलस्य मते स्थितः ।। भोजने भीमसेनस्य ततः प्राक्षेपयद्विषम् । कालकूटं विषं तीक्ष्णं सम्भृतं रोमहर्षणम् । तच्चापि भुक्त्वाऽजरयदविकारो वृकोदरः ।। विकारं नाभ्यजनयत्सुतीक्ष्णमपि तद्विषम् । भीमसंहननो भीमस्तस्मादजरयद्विषम्।।' इति आदिपर्वणि.१३७.४६-४९ । 'ततो दुर्योधनः पापस्तद्भक्ष्ये कालकूटकम् । विषं प्रक्षेपयामास भीमसेनजिघांसया ।।' इति आदिपर्वणि.१३८.१५ ।

**जनार्दनीया–** शुक्रेण गिरीशात् तत्प्रसादलब्धम् । सुबलात्मजेन शकुनिना प्रतोष्य सन्तोषं प्रापयित्वा, अमुतः शुक्रात् प्राप्तं अन्तकाभं मृत्युसदृशं विषं मरुत्तनयाय भीमाय अदुः ददुः ।।७०।।

**चट्टि–** दुष्टाः एवं विचिन्त्य उल्बणं उग्रं अन्तकाभं मृत्युसदृशं क्षीरोदधेः मथनेन जातं शुक्रेण तपसा गिरीशात् लब्धम्, अमुतः शुक्रात् सुबलात्मजेन शकुनिना शुक्रं प्रतोष्य सन्तोषं प्रापयित्वा प्राप्तं विषं मरुत्तनयाय भीमाय अदुः ददुश्च ।।७०।।

**सम्मन्त्र्य राजतनयैर्धृतराष्ट्रजैस्तद् दत्तं स्वसूदमुखतोऽखिलभक्ष्यभोज्ये ।**
**ज्ञात्वा [१]युयुत्सुगदितं बलवान् स भीमो विष्णोरनुग्रहबलाज्जरयाञ्चकार ।।७१।।**

**वेदाङ्गतीर्थीया–** राजतनयैः सह अखिलभक्ष्यभोज्ये मिश्रं कृत्वा ।।७१-७३।।

**वरदराजीया–** राजतनयैः सह सम्मन्त्र्य स्वसूदमुखतः तद्द्वारा अखिलभक्ष्यभोज्ये कृत्वा दत्तं युयुत्सुमुखतो ज्ञात्वा स्वयं बलवान् विष्णोरनुग्रहबलाच्च जरायाञ्चकार जीर्णमकरोत् ।।७१।।

**जनार्दनीया–** बलवान् स भीमः राजतनयैः सह सम्मन्त्र्य विचार्य, धृतराष्ट्रजैः स्वसूदमुखतः स्वपाककर्तृद्वारा अखिलभक्ष्यभोज्ये संयोज्य दत्तं भक्षार्थं आत्मने दत्तं तत् विषं युयुत्सोः धृतराष्ट्रपुत्रात् युयुत्सोर्मुखतः ज्ञात्वापि, प्रभक्ष्येति शेषः । विष्णोरनुग्रहबलतः जरयाञ्चकार जीर्णश्चकार ।।७१।।

**चट्टि–** राजतनयैः सह सम्मन्त्र्य धृतराष्ट्रजैः स्वसूदमुखतः स्वपाककर्तुः द्वारा अखिलभक्ष्यभोज्ये संयोज्य दत्तं बलवान् स भीमः भक्षणार्थं आत्मने दत्तं तत् विषं युयुत्सुगदितमपि ज्ञात्वा । अपिशब्देन स्वयं पूर्वमेव जानातीति भावः । तद् विषं प्रभक्ष्येति शेषः । विष्णोरनुग्रहबलात् जरयाञ्चकार जीर्णं अकरोत् ।।७१।।

**जीर्णे विषे कुमतयः परमाभितप्ताः [२]प्रासादमाशु विदधुर्हरिपादतोये ।**
**ज्ञात्वा[३] युयुत्सुमुखतः स्वयमत्र चान्ते सुष्वाप मारुतिरमा धृतराष्ट्रपुत्रैः ।।७२।।**

---

१. 'वैश्यापुत्रस्तदाचष्ट पार्थानां हितकाम्यया । पाण्डवा ह्यपि तत्सर्वं प्रत्यजानन्नरिन्दमाः ।। उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः।।' १.३७.५२ । धार्तराष्ट्राः पाण्डवान् अनेकैरुपायैः जिघांसन्तः मन्त्रयाञ्चक्रुः । तत्सर्वं ज्ञात्वा युयुत्सुः पाण्डवान् तान् वधोपायान् आचष्ट इत्यभिप्रायेण तदाचष्ट इत्युक्तं भारते । अतः एव धार्तराष्ट्रमन्त्रणादिकं निरूपयित्वा अध्यायान्ते एतच्छ्लोकं भारते निबबन्ध ।

२. 'ततो जलविहारार्थं कारयामास भारत । चैलकम्बलवेश्मानि विचित्राणि महान्ति च ।। सर्वकामैः सुपूर्णानि पताकोच्छ्रायवन्ति च । तत्र सञ्जनयामास नानागाराण्यनेकशः ।।' इति आदिपर्वणि.३७.३३ ।

३. अत्र जनार्दनचट्टिटिप्पण्योः 'ज्ञात्वाऽपि युयुत्सुगदितं' इति पाठः स्वीक्रीयते । तादृशपाठस्वीकारे श्लोकस्य छन्दोऽनुगुणता चिन्तनीया ।

**वादिराजीया–** अमा धृतराष्ट्रपुत्रैः इत्यत्र 'अमा सह समीपे' इत्यभिधानात् धृतराष्ट्रपुत्रैः अमा सह ।।७२।।

**वरदराजीया–** विषे जीर्णे सति हरिपादतोये विष्णुपद्या जले प्रासादं शालाविशेषं धृतराष्ट्रपुत्रैः अमा सहितः स्वयमत्र प्रासादे सुष्वाप ।।७२।।

**अनन्तभट्टीया–** अन्ते प्रासादमध्ये ।।७२।।

**जनार्दनीया–** हरिपादाज्जातं तोयं गङ्गाजलमित्यर्थः । तस्मिन् प्रासादं गृहविशेषं विदधुः चक्रुः । मारुतिः धृतराष्ट्रपुत्रैः अमा सह अत्र प्रासादे स्वयं अन्ते सुष्वाप शिश्ये ।।७२।।

**चट्टि–** विषे जीर्णे सति कुमतयः दुष्टबुद्धयः परमाभितप्ताः सन्तः हरिपादाज्जातं यत् तोयं गङ्गाजलमित्यर्थः । तस्मिन् प्रासादं गृहविशेषं आशु विदधुः चक्रुः । मारुतिः युयुत्सुमुखतः तदपि ज्ञात्वा धृतराष्ट्रपुत्रैः अमा सह । 'अमा सह समीपे च' इत्यभिधानम् । अत्र प्रासादे स्वयं अन्ते सुष्वाप शिश्ये ।।७२।।

**दोषान् प्रकाशयितुमेव विचित्रवीर्यपुत्रात्मजेषु नृवरं प्रतिसुप्तमीक्ष्य ।**
**बद्ध्वाऽभिमन्त्रणदृढैरयसा[१] कृतैस्तं पाशैर्विचिक्षिपुरुदे हरिपादजायाः ।।७३।।**

**वेदाङ्गतीर्थीया–** प्रतिसुप्तमन्त इति शेषः ।।७३।।

**वादिराजीया–** 'अभिमन्त्रणदृढैः' इत्यत्र दुर्मन्त्रैः अभिमन्त्रणेन दृढैरित्यर्थः ।।७३।।

**वरदराजीया–** अन्ते प्रदेशे कुतः सुष्वापेत्यत उक्तम्– **दोषानिति** ।। नृवरं नरोत्तमं भीमं निमन्त्रणेन अभिमन्त्रणेन दृढैः अयसा कृतैः पाशैः बध्वा हरिपादजायाः विष्णुपद्याः उदके चिक्षिपुः ।।७३।।

**जनार्दनीया–** किं कर्तुम् ? विचित्रवीर्यपुत्रात्मजेषु दुर्योधनादिषु दोषान् प्रकाशयितुमेव । दुर्योधनाद्याः नृवरं मनुष्यश्रेष्ठं प्रतिसुप्तं तं भीमं ईक्ष्य, अभिमन्त्रणदृढैः अयसा लोहविशेषेण कृतैः निर्मितैः पाशैः बध्वा, हरिपादजायाः गङ्गायाः तोये जले विचिक्षिपुः ।।७३।।

**चट्टि–** विचित्रवीर्यपुत्रस्य धृतराष्ट्रस्य आत्मजेषु पुत्रेषु दोषान् प्रकाशयितुमेव । नृवरं नरोत्तमं भीमं प्रतिसुप्तं ईक्ष्य, धृतराष्ट्रपुत्रा इति शेषः । अभिमन्त्रणेन दृढैः दुर्मन्त्रैरभिमन्त्रणेन दृढैः अयसा कृतैः पाशैः तं भीमं बद्ध्वा हरिपादजायाः विष्णुपद्याः उदे उदके विचिक्षिपुः ।।७३।।

---

१. 'ततो बद्ध्वा लतापाशैः भीमं दुर्योधनः शनैः । प्रमाणकोट्यां संसुप्तं गङ्गायां प्राक्षिपज्जले ।। ततः प्रबुद्धः कौन्तेयः सर्वान् संछिद्य बन्धनान् । उदतिष्ठत् बलाद्भूयो भीमः प्रहतां वरः ।।' इति आदिपर्वणि.३७.४०-४१ ।

**तत् कोटियोजनगभीरमुदं विगाह्य**
**भीमो विजृम्भणत एव विवृश्च्य पाशान् ।**
**उत्तीर्य सज्जनगणस्य विधाय हर्षं**
**तस्थावनन्तगुणविष्णुपदातिहार्दः[१] ॥७४॥**

**व्यासतीर्थीया–** मन्त्रदृढपाशबन्धं कथं चिच्छेदेत्यत उक्तम्– **अनन्तगुणेति** ।। हार्दः स्नेहो भक्तिरिति यावत् ।।७४।।

**वेदाङ्गतीर्थीया–** अनन्तगुणविष्णुसदातिहार्दः अनन्तगुणविष्णौ सदातिहार्दं मतिर्भक्तिः यस्यासौ तथोक्तः ।।७४।।

**वादिराजीया–** तत्कोटियजनगभीरमित्यत्र गङ्गा कचित्कचित् ह्रदे भूमिं विदार्य स्ववेगबलात् घनोदकं प्रविश्य कूर्मपृष्ठपर्यन्तं वाहिनीति पौराणिकी प्रथा । अतः कोटियोजनगभीरतापि दुर्योधनकृतप्रासादसमीपस्थ-ह्रदेऽप्यस्ति । तेन कारणेन लक्षयोजनप्रमाणगभीरभूमौ कथं कोटियोजनप्रमाणगभीरतेति शङ्काया नावकाश इति ज्ञेयम् ।।७४-७५।।

**मधुसूदनीया–** ।। **तत्कोटियोजनगभीरमिति** ।। अत्र तच्छब्देन प्रमाणपदं लक्ष्यते । एवञ्च तत्कोटेः प्रमाणकोट्याख्यह्रदस्य योजनगभीरं उदं जलं विगाह्येत्यन्वयः । तथाचोक्तम्– 'प्रमाणकोट्यां स्वापार्थी सुष्वापारुह्य तत्स्थलम्'[१३७.३८] इति 'प्रमाणकोट्यां तं देशं स्थलं किञ्चिदुपेत्य ह' इत्यादिपर्वणि [१३७.३४] । उक्तञ्च मध्वविजये 'प्रमाणकोटेस्स हि हेलयागान्नेदं जगज्जीवनदेऽत्र चित्रम्' इति । नतु कोटिपदं योजनविशेषणम् । भागीरथीजलस्य कूर्मपर्यन्तत्वापत्तेः इति ध्येयम् । यद्वा कोटियोजनगभीरं कोटियोजनोदकवत् गभीरं गम्भीरमित्यर्थः ।।७४।।

**वरदराजीया–** कोटियोजनगभीरं गम्भीरं अगाधं तदुदकं विगाह्य विजृम्भणतः विजृम्भणेन पाशान् विवृश्च्य छित्वा उत्तीर्य तीर्त्वा अनन्तगुणस्य विष्णोः पदे अतिहार्दं प्रेमो यस्य सः ।।७४।।

**भावविवृति–** तत्कोटियोजनगभीरमुदं विगाह्य... पाशानित्यत्र तस्याः गङ्गायाः कोटियोजनगभीरमुदकं विगाह्येत्यर्थः । नच वाच्यं भूकन्दस्य लक्षमितत्वात् कथं कोटियोजनगभीरमिति । भागवतादौ भूकन्दस्य लक्षयोजनमिति स्पष्टमनुक्तत्वात् । ग्रन्थान्तरे दशकोटिपरिमित्युक्तेश्च ।

'पृथिवीलोकतोऽधस्तात् यावत् ब्रह्माण्डखर्परम् । पञ्चविंशतिकोट्यस्तु योजनानां प्रकीर्तितम् ।।

१. 'विष्णुसदातिहार्दः' इति वेदाङ्गतीर्थीयपाठः । 'विष्णुसदातिहार्दः' इति चट्टिटिप्पण्यां पाठान्तरम् । 'विष्णुपदातिहार्दः' इति जनार्दनीताम्रपर्णीटिप्पण्योः पाठान्तरम् ।

तत्र पञ्चदशं तोयं तदूर्ध्वं दशभूतलम् । तत्र मग्नं मेरुमूलं सहस्राणि तु षोडश ॥
समुद्रास्तत्र सप्तापि गाम्भीर्ये विस्तृतेस्समाः । कोटियोजनगम्भीरं तत्रैव च घनोदकम् ॥
घनोदकादधस्तात्तु भूदलं कोटियोजनम् । कोटौ कोटौ ततोऽधस्तात् एवं पातालसप्तकम् ॥
ततोऽप्यधस्तात्सप्तापि नरका रौरवादिकाः । लक्षद्वादशकं तत्र प्रत्येकं नरकान्तरम् ॥
अधस्तात्सर्वतो भूमेः दलं षोडशलक्षकम् । ततोऽप्यतिगम्भीरे जले साक्षाद्धरिस्स्वयम् ॥
आधारशक्तिसंयुक्तो नानारूपैः प्रदीव्यति । भूदले लक्षतोऽधस्तात् तिष्ठन्ति जलदेवताः ॥
तत्रास्ति वारुणो लोको नानाभोगसमन्वितः ॥' इति विष्णुरहस्ये चत्वारिंशाध्याये ।
वाराहे च–
'पृथिव्यां ऊर्ध्वतां प्राहुर्दशयोजनकोटयः । ततोऽधस्तात्तु सलिलं दशपञ्च च कोटयः ॥
भूलोकादधरं प्रोक्तं अतलं प्रथमं बिलम् । कोटिद्वयं योजनानां बिलषट्कमुदाहृतम् ॥
विलसप्तकविस्तारो यावद्ब्रह्माण्डखर्परम् । कोटियोजनतोऽधस्तात् पातालान्नरका स्मृताः ॥
योजनानां तु लक्षाणां द्वादश द्वादशैव तु । अन्तरो नरकाणां स्यात् सप्तानां तु परस्परम् ॥
रौरवः प्रथमः प्रोक्तो महारौरव एव च । कुम्भीपाकोऽसितापाख्यः पूयशोणितमुद्गरौ ॥
तप्तवालुक इत्येते सप्तैव नरकाः स्मृताः । ततः षोडशलक्षाणि भूकन्दं परिकीर्तितम् ॥
चतुर्दशबिलान्येवं दशमो सप्तयोजनः । प्रत्येकमवकाशस्तु तेषु सर्वेषु सर्वशः ॥
आब्रह्माण्डकटाहस्स्यात् विस्तारोऽपि बिले बिले । भूमण्डलस्य विस्तारः पञ्चाशत्कोटियोजनः ॥ इति।
यद्यपि पञ्चरात्रे जयद्रथयामिले–
'भूमेरधो लक्षमात्रं भूकन्दं परिकीर्तितम् । दशसाहस्रसङ्ख्याकयोजनायामसंयुतः ॥
द्विसहस्रान्तरोपेताः अतलाद्याः प्रकीर्तिताः ॥'
इत्यनेन भूकन्दं लक्षयोजनपरिमितमित्युच्यते । तथापि तस्य सावकाशत्वात् युक्तविरुद्धत्वादेकत्वाच्च दशकोटिपरिमितमित्युक्तीनां बहुत्वान्निरवकाशत्वात् सयुक्तिकत्वाच्च गङ्गायाः कोटियोजनगम्भीरत्वं युक्तमिति भावः । एवं सति भीमस्य महिमाधिक्यञ्च युज्यते ॥७४-११२॥

॥ इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ चतुर्दशोऽध्यायः ॥

**अनन्तभट्टीया–** हार्दः भक्तः ॥७४॥

**जनार्दनीया–** भीमः कोटियोजनैः कोटिसङ्ख्याकयोजनैः गभीरं गह्वरं तत् उदं विगाह्य पोप्लूय । यद्वा कोटिः प्रकृष्टं योजनं गम्भीरं योजनमात्रगहरं उदं विगाह्य । 'कोटिरग्रे प्रकर्षे च सङ्ख्या चापाग्रयोरपि' इत्यभिधानम् । विजृम्भणत एव विजृम्भणमात्रादेव पाशान् विवृश्च्य छित्वा, उत्तीर्य जलं तीर्त्वा,

कूलं प्राप्येत्यर्थः । सज्जनगणस्य हर्षं निधाय तस्थौ । कथम्भूतः? अनन्तगुणश्चासौ विष्णुश्च, तस्मिन् सदा अतिहार्दः अतिशया भक्तिर्यस्य स तथा । 'विष्णुपदाति' इति वा पाठः ।।७४।।

**ताम्रपर्णीया–** ।। **तत्कोटियोजनगभीरमिति** ।। कोटियोजनदूरमगाधं तदुदं विगाह्येत्यर्थः । स्थानविशेषगतगङ्गोदकस्य गर्भोदेनैकीभूतत्वान्नानुपपत्तिः । अत एव भारते । भीमो नागलोकं गत्वा तद्दत्तं मद्यं पीत्वा सुप्त्वा पुनरागतवानित्युक्तमुपपन्नं ज्ञेयम् । अन्ये 'तत्कोटिनामकं च तद्योजनगभीरं चेत्यर्थ' आहुः । 'अनन्तगुणविष्णुपदातिहार्दः' इति पाठः । 'सदातिहार्द' इति क्वचित् पाठः । तत्रानन्तगुणविष्णौ सदा अतिहार्दो भक्तिर्यस्येत्यर्थः ।।७४-८०।।

**अतिविशद–** तत्कोटियेजनगभीरमुदं विगाह्येत्यत्र कोटि कोटिनामकं योजनगभीरमित्यपि वदन्ति । तथा कोटियोजनगभीरमित्यपि वदन्ति । गङ्गा कूर्मवाहिनीति तेषामभिप्रायः ।।७४।।

**भारतश्री–** ।। **तत्कोटियोजनगभीरमुदं विगाह्येति** ।। तस्याः भागीरथ्याः कोटौ प्रान्ते दशयोजन-गभीरमुदं विगाह्य भागीरथ्याः कोटियोजनगभीरमिति वा । ...गाधस्य ह्रदस्य कोटियोजनगभीरमिति सञ्ज्ञा वा ।।७४-८८।।

**भावचन्द्रिका–** ।। **तदिति** ।। अधोविधावनसमये भूमिं विदार्य कोटियोजनपर्यन्तं अण्डोदकं गङ्गोदकं गतमिति भावः । नागलोकं गत्वा वासुकिना पूजितः यदेककुण्डपाने सहस्रगजबलं भवति तद्रसपानं कुण्डाष्टकं वासुकिदत्तं पीत्वा तत्र सुखेन स्थित्वा अष्टमदिवसे पुनरागत इत्याह– **उत्तीर्येति** ।।

**चट्टि–** भीमः तत्कोटियोजनगभीरं तच्छब्देन प्रासादो गृह्यते । तस्य प्रासादस्य कोटेः सकाशात् योजनेन गभीरं गह्वरं तत् उदं विगाह्य, विजृम्भणत एव विजृम्भणमात्रादेव पाशान् विवृश्च्य छित्वा, उत्तीर्य जलं तीर्त्वा, कूलं प्राप्येत्यर्थः । सज्जनगणस्य हर्षं विधाय तस्थौ । कथम्भूतः? अनन्तगुणश्चासौ विष्णुश्च, तस्य पदे अतिहार्दा अधिकभक्तिर्यस्य स तथा । 'सदातिहार्दः' इति वा पाठः । यद्वा तत्पदेन प्रमाणपदं लक्ष्यते । एवं च तत्कोटेः प्रमाणकोट्याख्यह्रदस्य योजनगभीरजलं विगाह्येत्यर्थः । तदुक्तम्- 'प्रमाणकोट्यां स्वापार्थी सुष्वापारुह्य तत्स्थलम्' इति । 'प्रमाणकोट्यां तद्देशं स्थलं किञ्चिदुपेत्य च' इत्यादिपर्वणि [१३७.३४] । उक्तश्च मध्वविजये 'प्रमाणकोटेस्स हि हेलयागान्नेदं जगज्जीवनदेऽत्र चित्रम्' । न तु कोटिपदं योजनविशेषणम् । भागीरथीजलस्य कूर्मपर्यन्तत्वापत्तेः इति ध्येयम् । वादिराजतीर्थानां व्याख्यानं तु 'गङ्गा क्वचित् प्रदेशे भूमिं विदार्य स्ववेगबलात् घनोदकं प्रविश्य कूर्मपृष्ठपर्यन्तं वाहिनीति पौराणिकी कथा । अतः कोटियोजनगभीरता दुर्योधनकृतप्रासादसमीपस्थह्रदेऽप्यस्ति । तेन कारणेन लक्षयोजनप्रमाणगभीरभूमौ 'कथं कोटियोजनप्रमाणगभीरता' इति शङ्काया अनवकाश इति ज्ञेयम्' इति ।।७४।।

**तं वीक्ष्य दुष्टमनसोऽतिविपन्नचित्ताः सम्मन्त्र्य भूय उरुनागगणानथाष्टौ ।**
**शुक्रोक्तमन्त्रबलतः पुर आह्वयित्वा पश्चात् सुपञ्जरगतान् प्रददुः स्वसूते ।।७५।।**

**वेदाङ्गतीर्थीया–** तं बन्धं छित्वोन्मज्जनं । पुरः अग्रे ।।७५-७७।।

**मधुसूदनीया–** ।। **अष्टौ नागगणान्** ।। 'अनन्तो वासुकिः पद्मो महापद्मश्च तक्षकः । कार्कोटकः शङ्खपालो महाशङ्ख' इत्यष्टसङ्ख्याकानित्यर्थः ।।७५-९०।।

**वरदराजीया–** अतिविपदं प्राप्तं चित्तं येषां ते । भूयः सम्मन्त्र्य अथाष्टौ नागगणान् शुक्रोक्तमन्त्रबलतः पुरः पुरस्तादेव अह्वयित्वा पश्चात् पञ्जरगतान् कृत्वा अस्य सूते प्रददुः ।।७५।।

**अनन्तभट्टीया–** पुरे नगरे ।।७५।।

**जनार्दनीया–** तं भीमम् । विपन्नं दुःखितमित्यर्थः, चित्तं मनो येषां ते तथा सन्तः । भूयः पुनः सम्मन्त्र्य विचार्य, अथ शुक्रोक्तमन्त्रबलतः शुक्राचार्योपदिष्टमन्त्रसामर्थ्येन अष्टौ 'अनन्तो वासुकिः पद्मो महापद्मश्च तक्षकः । कर्कोटकः शङ्खपालो महाशङ्खः...।।' इत्यष्टसङ्ख्याकान् श्रेष्ठान् नागगणान् पुरः पुर्याः नागपुरस्य समीपं आह्वयित्वा, पश्चादनन्तरं सुपञ्जरगतान् पञ्जरस्थान् कृत्वा, सूते दुर्योधनसारथिवशे प्रददुः स्म ।।७५।।

**चट्टि–** दुष्टं मनो येषां ते दुष्टमनसः तं भीमं वीक्ष्य अतिविपन्नं अत्यन्तदुःखितं चित्तं मनो येषां ते तथाभूताः सन्तः भूयः पुनः सम्मन्त्र्य विचार्य, अथ अष्टौ– 'अनन्तो वासुकिः पद्मो महापद्मश्च तक्षकः । कर्कोटकः शङ्खपालो महाशङ्खः...।।' इत्यष्टसङ्ख्याकान् उरून् श्रेष्ठान् नागगणान् शुक्रोक्तमन्त्रबलतः पुरः नागपुरस्य समीपं पुरोऽग्रे इति वा आह्वयित्वा, पश्चादनन्तरं पञ्जरगतान् पञ्जरस्थान् कृत्वा सूते दुर्योधनसारथिवशे प्रददुः स्म ।।७५।।

**दुर्योधनेन पृथुमन्त्रबलोपहूतांस्तत्सारथिः फणिगणान् पवनात्मजस्य ।**
**[1]सुप्तस्य विस्तृत उरस्यमुचद् विशीर्णदन्ता बभूवुरमुमाशु विदश्य नागाः ।।७६।।**

**वादिराजीया–** सुप्तस्य विस्तृत उरस्यमुचदित्यत्र नगराद्बहिः स्वक्रीडास्थाने श्रान्ततया सुप्तस्येति भावः । गृहकोणे चेत्सुदूरं क्षिप्त्वेत्यस्यायोगादिति ज्ञेयम् ।।७६-७८।।

**वरदराजीया–** दुर्योधनेन उपहूतान् । सुप्तस्य पवनात्मजस्य विस्तृते विस्तीर्णे । विशीर्णा दन्ता एषां ते तथा अमुं भीमं विदश्य बभूवुः ।।७६।।

---

१. 'सुप्तं चापि पुनः सर्पैः तीक्ष्णदंष्ट्रैर्महाविषैः । कुपितैर्दंशयामास सर्वेष्वेवाङ्गसन्धिषु ।। दंष्ट्राश्च दंष्ट्रिणां मर्मस्वपि तेन निपातिताः । त्वचं न चास्य बिभिदुः सारत्वात् पृथुवक्षसः ।।' इति आदिपर्वणि.१३७.४३-४४ ।

**जनार्दनीया–** पृथुः वीर्यवान्, स चासौ मन्त्रश्च तथा, तस्य बलेन उपहृतानानीतान् । उरसि वक्षसि अमुचत् । नागाः अमुं भीमम् ।।७६।।

**चट्टि–** दुर्योधनेन पृथुः वीर्यवान् स चासौ मन्त्रश्च तथा । तस्य बलेन उपहृतानानीतान् फणिगणान् सर्पगणान् सुप्तस्य पवनात्मजस्य भीमस्य विस्तृते उरसि वक्षसि अमुचत् । नागाः सर्वाः अमुं भीममाशु विदश्य विशीर्णदन्ताः बभूवुः ।।७६।।

**क्षिप्त्वा सुदूरमुरुनागगणानथाष्टौ तद्वंशजान् स विनिहत्य पिपीलिकावत् ।**
**जघ्ने च सूतमपहस्तत[1] एव भीमः सुष्वाप पूर्ववदनुत्थित एव तल्पात् ।।७७।।**

**वरदराजीया–** सुदूरं क्षिप्त्वा तद्वंशजान् नागगणवंशजान् पिपीलिका यथा भवति तथा निहत्य अपहस्ततः सूतं जघ्ने । तल्पादनुत्थित एव पूर्ववत् सुष्वाप ।।७७।।

**जनार्दनीया–** अपहस्ततः हस्तपृष्ठभागेन । तल्पात् शयनात् अनुत्थित एव सुष्वाप शिश्ये ।।७७।।

**चट्टि–** अथ सः भीमः अष्टौ नागवरान् सुदूरं क्षिप्त्वा तद्वंशजान् नागगणवंशजान् पिपीलिकावत् पिपीलिका यथा तथा विनिहत्य, अपहस्ततः हस्तपृष्ठभागेनैव सूतं जघ्ने । तल्पात् शयनात् अनुत्थित एव पूर्ववत् सुष्वाप शिश्ये ।।७७।।

**तत् तस्य नैजबलमप्रतिमं[2] निरीक्ष्य**
**सर्वे क्षितीशतनया अधिकं विषेदुः ।**
**निश्वासतोऽथ दर्शनादपि भस्म येषां**
**भूयासुरेव भुवनानि च ते मृषाऽऽसन् ।।७८।।**

**वेदाङ्गतीर्थीया–** मृषा आसन् व्यर्था आसन् ।।७८।।

---

१. 'प्रबुद्धो भीमसेनस्तान् सर्वान् सर्पानपोथयत् । सारथिं चास्य दयितमपहस्तेन जघ्निवान् ।।'१.१३७.४६ । एते श्लोकाः प्रक्षिप्ताः इत्याधुनिकाः भणन्ति तन्न । वनपर्वणि द्रौपदीवाक्ये एतच्छ्लोकोक्तविषयाणामुपपादितत्वात् । वन.१२.८२-८८ । तथाहि- 'भोजने भीमसेनस्य पापः प्राक्षेपयद् विषम् । कालकूटं नवं तीक्ष्णं संभृतं रोमहर्षणम् ।। तज्जीर्णमविकारेण सहान्नेन जनार्दन । सशेषत्वात् महाबाहो भीमस्य पुरुषोत्तम ।। प्रमाणकोट्यां विश्वस्तं तथा सुप्तं वृकोदरम् । बद्ध्वैनं कृष्ण गङ्गायां प्रक्षिप्य पुरमाव्रजन् ।। यदा विबुद्धः कौन्तेयस्तदा संच्छिद्य बन्धनम् । उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः ।। आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयन् । सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा ।। प्रतिबुद्धस्तु कौन्तेयः सर्वान् सर्पानपोथयत् । सारथिं चास्य दयितमपहस्तेन जघ्निवान् ।।'

२. 'नैजबलमप्रमेयम्' इति वरदराजीयपाठः ।

**वरदराजीया–** अप्रमेयं नैजं बलं बाहुबलं तत् तस्य भीमस्य निरीक्ष्य अधिकं विषेदुः विषादं प्राप्ताः । एषां नागानां निश्वासतो दर्शनादपि भुवनानि लोका भस्मसात् भूयासुः ते नागाः मृषा व्यर्थाः आसन् ।।७८।।

**अनन्तभट्टीया–** मृषा व्यर्थम् ।।७८।।

**जनार्दनीया–** अप्रतिमं अप्रतिद्वन्द्वं तस्य भीमस्य तत् पूर्वोक्तं नैजं बलं स्वाभाविकं बलं निरीक्ष्य, अधिकं यथा स्यात् तथा विषेदुः विषादं प्रापुः । नरेन्द्रपुत्राः एवमनेन प्रकारेण सम्मन्त्र्य विचार्य अथ हरेश्च कृष्णस्यापि बहुप्रतीपं प्रतिकूलं चक्रुरित्युत्तरपञ्चमश्लोकेन सम्बन्धः । एवं सम्मन्त्र्येत्युक्तं विशदयति– **निश्वासत इत्यादिना** ।। येषां नागानां निश्वासतः श्वासमात्रात् दर्शनादपि भुवनानि भस्म भूयासुः । ते नागाः मृषा व्यर्थोद्यमा आसन् ।।७८।।

**चट्टि–** अप्रतिमं असदृशं तस्य भीमस्य तत् पूर्वोक्तं नैजं बलं स्वाभाविकवलं निरीक्ष्य, सर्वे क्षितीशतनयाः अधिकं यथा स्यात् तथा विषेदुः विषादं प्रापुः । नरेन्द्रपुत्राः एवमनेन प्रकारेण सम्मन्त्र्य अथ हरेश्च श्रीकृष्णस्यापि बहु यथा स्यात् तथा प्रतीपं प्रतिकूलं चक्रुरित्युत्तरपञ्चमश्लोकेन सम्बन्धः । एवं सम्मन्त्र्येत्युक्तं विशदयति– **निश्वासत इति** ।। येषां नागानां निश्वासतः श्वासमात्रात् दर्शनादपि भुवनानि लोकाः भस्म भूयासुः एव । ते नागाः मृषा व्यर्थोद्यमा आसन् ।।७८।।

**दद्भिर्विदश्य न विकारममुष्य कर्तुं शेकुर्भुजङ्गमवरा अपि सुप्रयत्नाः ।**
**कस्यापि नेदृशबलं श्रुतपूर्वमासीद् दृष्टं किमु स्म तनयेऽपि हिरण्यकस्य ।।७९।।**

**व्यासतीर्थीया–** मृषा व्यर्था आसन्नित्युक्तं विवृणोति– **दद्भिरिति** ।। हिरण्यकतनये ईदृशं वलं श्रुतमासीदित्यतः कथमेतदित्यत उक्तम्– **तनयेति** ।।७९।।

**वेदाङ्गतीर्थीया–** दृष्टं नासीदिति किमु स्म । प्रह्लादे श्रुतत्वात् कुतः श्रुतपूर्वं नासीदित्यत उक्तम्– **तनयेऽपीति** ।। तदुपपादयति अपिशव्देन । ईदृशं [बलं] श्रुतपूर्वं नासीदित्यनुकृष्यते ।।७९।।

**वादिराजीया–** 'कस्यापि नेदृशवलं श्रुतपूर्वमासीत्' इत्यत्र कस्यापीदृशं वलं श्रुतपूर्वं न । दृष्टं नेति किं वक्तव्यम् । हिरण्यकस्य सुते प्रह्लादेऽपि ईदृश बलं श्रुतपूर्वं नेति योजना ।।७९।।

**वरदराजीया–** कथं दद्भिः दन्तैः विदस्य अमुष्य भीमस्य विकारं कर्तुं न शेकुः । ईदृशं बलं कस्यापि श्रुतपूर्वं नास । हिरण्यतनये प्रह्लादेऽपि दृष्टं किं न दृष्टमेवेत्यर्थः ।।७९।।

**अनन्तभट्टीया–** ईदृशं वलं कस्यापि कस्मिन्नपि श्रुतपूर्वं नासीत् । दृष्टमिति किमु । हिरण्यकतनये श्रुतपूर्वमित्यत आह– **हिरण्यकेति** ।। न श्रुतमासीदिति सम्बन्धः ।।७९।।

**जनार्दनीया**– 'मृषा' इत्युक्तं विशदयति– **दद्भिरिति** ।। भुजङ्गमवराः सर्पश्रेष्ठाः सुप्रयत्ना अपि अतिप्रयत्नवन्तोऽपि दद्भिः दन्तैः विदश्य, अमुष्य भीमस्य विकारं क्षतमोहादिविकारं कर्तुं न शेकुः समर्था न बभूवुः । ईदृशवलं भीमसदृशबलं कस्यापि श्रुतपूर्वं नासीत् । दृष्टं किमु स्म क स्यादित्यर्थः । हिरण्यकस्य हिरण्यकशिपोः तनयेऽपि प्रह्लादेऽपि ईदृशं श्रुतपूर्वं नासीदित्यर्थः ।।७९।।

**चट्टि**– 'मृषा' इत्युक्तं विशदयति– **दद्भिरिति** ।। भुजङ्गमवराः सर्पश्रेष्ठाः सुप्रयत्ना अतिप्रयत्नवन्तोऽपि । भीममति शेषः । दद्भिः दन्तैः विदश्य अमुष्य भीमस्य विकारं क्षतमोहादिविकारं कर्तुं न शेकुः समर्था न बभूवुः । ईदृशवलं भीमसदृशबलं कस्यापि श्रुतपूर्वं नासीत् । दृष्टं नेति किमु वक्तव्यम् । हिरण्यकस्य हिरण्यकशिपोः तनये प्रह्लादेऽपि ईदृशं वलं श्रुतपूर्वं नासीदित्यर्थः ।।७९।।

**[1]स्वात्मावनार्थमधिकां स्तुतिमेव कृत्वा**
**विष्णोः स दैत्यतनयो हरिणाऽवितोऽभूत् ।**
**न त्वौरसं बलममुष्य स कृष्यते हि**
**भृत्यैर्बलात् स्वपितुरौरसमस्य वीर्यम् ।।८०।।**

**व्यासतीर्थीया**– हिरण्यतनयेऽप्येतादृशं बलं कुतो न श्रुतं इत्यत आह– **स्वात्मेति** ।। औरसं स्वाभाविकवलं नास्तीति कुतोऽवगतमित्यत आह– **स कृष्यत इति** ।।८०।।

**वेदाङ्गतीर्थीया**– उपपादयति– **आत्मेत्यादिना** ।। आवितः रक्षितः । अमुष्य प्रह्लादस्य औरसं नैसर्गिकं न । कुतः? स प्रह्लादः स्वपितृभृत्यैर्वलात् कृष्यते हि यस्मात् तस्मात् औरसं न । यस्य भीमस्य वीर्यं औरसं नैसर्गिकम् ।।८०।।

**वादिराजीया**– तर्हि प्रह्लादे कीदृशं वलं भीमे च कीदृशं बलमित्यतस्तद्विवेचयति– **स्वात्मेत्यादिना** ।। हि यस्मात् स्वपितुर्भृत्यैः सः प्रह्लादः वलात् कृष्यते तस्मात् अमुष्य प्रह्लादस्य वलमौरसं स्वस्य उरःसत्त्वाज्जातमौरसं सहजं न तु । यद्यपि हरिस्तुतिकरणे औरसत्वं प्रह्लादस्याप्यस्ति । तथापि स्वप्रयोजनाय विद्योपजीवनमकुर्वतः स्वशक्त्यैव सर्पनिरोधकृतो भीमस्येव सर्वत्रातिशयितशक्तिर्नास्तीति सूचितं तुशब्देन ।।८०–८२।।

**वरदराजीया**– स्वात्मनः स्वस्यावनार्थं रक्षणार्थं विष्णोः अधिकां स्तुतिं कृत्वैव दैत्यतनयः सः प्रह्लादो हरिणावितो रक्षितोऽभूत् । अमुष्य प्रह्लादस्य औरसं स्वाभाविकं बलं न तु हि यस्मात् सः प्रह्लादः स्वपितुः हिरण्यकस्य भृत्यैः बलात् कृष्यते आकृष्यते । अस्य भीमस्य औरसं बलमित्यर्थः ।

१.'आत्मावनार्थम्' इति वेदाङ्गतीर्थीयपाठः ।

'प्रह्लादं दाहयामास हिरण्यकशिपुः पुरा । न ददाह पुनस्तस्मै पर्वताग्रात् न्यपातयत् । न ममार तदा पुत्रं [विषाद्यै]रर्दितो भृशम् । न ममार तदा सोऽपि पश्चात्तस्य विषं ददुः । विषं जीर्णं बभूवाशु सर्पाः दंशुः ततः परम् । शीर्णदन्ताः बभूवुस्ते हरिभक्तिबलादभूत् ।।' इति मात्स्ये ।।८०।।

**अनन्तभट्टीया–** अस्य भीमस्य ।।८०।।

**जनार्दनीया–** 'श्रुतपूर्वं न' इत्युक्तं विवृणोति– **स्वात्मेति** ।। सः दैत्यतनयः प्रह्लादः स्वात्मनः अवनार्थं रक्षणार्थं अधिकां स्तुतिं कृत्वा हरिणा आवितः रक्षितोऽभूत् । स प्रह्लादः स्वपितुः भृत्यैः बलात् कृष्यते हि यस्मात् तस्मात् अमुष्य प्रह्लादस्य औरसं स्वाभाविकं बलं न । अस्य भीमस्य वीर्यं औरसं स्वाभाविकम् ।।८०।।

**चट्टि–** तर्हि प्रह्लादे कीदृशं बलं भीमे च कीदृशमित्यत तद्विवेचयति– **स्वात्मेति** ।। सः दैत्यतनयः प्रह्लादः स्वात्मनः स्वस्य अवनार्थं रक्षणार्थं अधिकां स्तुतिं कृत्वैव हरिणा आवितः रक्षितोऽभूत् । हि यस्मात् सः प्रह्लादः स्वपितुः भृत्यैः बलात् कृष्यते तस्मात् अमुष्य प्रह्लादस्य बलं औरसं स्वाभाविकं न भवति । अस्य भीमस्य वीर्यं औरसं स्वाभाविकम् ।।८०।।

**[१]नैसर्गिकं प्रियमिमं प्रवदन्ति विप्रा विष्णोर्नितान्तमपि सत्यमिदं ध्रुवं हि ।**
**नैवान्यथौरसबलं भवतीदृशं तदुत्साद्य एष हरिणैव सहैष नोऽर्थः ।।८१।।**

**व्यासतीर्थीया–** अस्य भीमस्य बलं नैसर्गिकं कुतो जातमिति जिज्ञासायां कारणं निरूपयति । इदं विप्राणां वचः ध्रुवं सत्यं यथार्थं हि एषः नः निश्चितोऽर्थः ।।८१-८४।।

**वेदाङ्गतीर्थीया–** नितान्तं नैसर्गिकप्रियम् । इदं विप्राणां वचनम् । ध्रुवं सत्यं सर्वथा सत्यम् । तत् तस्मात् । स एषा नो अर्थः । निश्चितोऽर्थः ।।८१।।

**वरदराजीया–** इमं भीमं विष्णोः नैसर्गिकं प्रियं स्वाभाविकं प्रियं विप्राः प्रवदन्ति । इदं वचनं सत्यं ध्रुवं निश्चितम् । विष्णोः प्रियत्वाभावे ईदृशमौरसबलं न भवति न भवेत् । तत्तस्मात् एषः भीमो हरिणा सह उत्साद्यः उच्छेद्यः इत्येष एव नोऽस्माकं अर्थः पुरुषार्थः ।।८१।।

**अनन्तभट्टीया–** सत्यं यथार्थम् । ध्रुवं निश्चितम् । तत्तस्मादमुना सह ।।८१।।

**जनार्दनीया–** इमं भीमं विष्णोः नितान्तं नैसर्गिकं प्रियं निरुपाधिकप्रियमिति प्रवदन्ति । इदं विप्रवाक्यं ध्रुवं निश्चयेन सत्यमपि सत्यमेव । हि प्रसिद्धिः । अन्यथा प्रियत्ववैपरीत्येन ईदृशं औरसं

---

१. 'नैसर्गिकप्रियम्' इति चट्टिपाठः ।

बलं नैव भवति । भीमस्येति शेषः । तत् तस्मात् हरिणा सह एषः भीमः उत्साद्यः विनाश्य एव । स एव तयोः विनाश एवेत्यर्थः । नोऽस्माकं अर्थः प्रयोजनम् ।।८१।।

**ताम्रपर्णीया–** इदं वचनं सत्यमिदं तत्वं ध्रुवं निश्चितमित्यर्थः ।।८१-८२।।

**चट्टि–** विप्राः इमं भीमं श्रीविष्णोः नितान्तं नैसर्गिकप्रियं निरुपाधिकप्रियं प्रवदन्ति । इदं विप्रवाक्यं ध्रुवं निश्चयेन सत्यमपि सत्यमेव । हि प्रसिद्धम् । अन्यथा भीमस्य नैसर्गिकप्रियत्वाभावे ईदृशं औरसं बलं नैव भवति । तत् तस्मात् हरिणा सह एषः भीमः उत्साद्यः विनाश्यः । एष एव नोऽस्माकं अर्थः प्रयोजनम् ।।८१।।

**कृष्णः किलैष च हरिर्यदुषु प्रजातः**
**सोऽस्याऽश्रयः कुरुत तस्य बहु प्रतीपम् ।**
**सम्मन्त्र्य चैवमतिपापतमा नरेन्द्र-**
**पुत्रा हरेश्च बहु चक्रुरथ प्रतीपम् ।।८२।।**

**व्यासतीर्थीया–** वैकुण्ठे तिष्ठन् हरिः कथं उत्साद्य इत्यत आह– **स कृष्ण इति** ।।८२-८४।।

**वेदाङ्गतीर्थीया–** वैकुण्ठे स्थितो हरिः कथमुत्साद्यते? इत्यत आह– **कृष्ण इति** ।। एषः कृष्णः हरिः किल ।।८२।।

**वरदराजीया–** एषः कृष्णो यदुषु प्रजातो हरिः किल । सः कृष्णो अस्य भीमस्य आश्रयः । तस्य कृष्णस्य बहुप्रतीपं वैरं कुरुत । एवं सम्मन्त्र्य हरेः बहु यथा भवति तथा प्रतीपं चक्रुः ।।८२।।

**जनार्दनीया–** ननु लोकान्तरस्थहरेः उत्सादनं कथं स्यादित्यत आह– **कृष्ण इति** ।। यदुषु प्रजातः एषः कृष्णः हरिश्च हरिरेव किल । स कृष्णः अस्य भीमस्य आश्रयः । तस्य कृष्णस्य बहुप्रतीपं वैरं कुरुत कुरुध्वम् । एवं सम्मन्त्र्य, प्रतीपं चक्रुरिति सम्बन्धः ।।८२।।

**चट्टि–** ननु वैकुण्ठे स्थितो हरिः कथं उत्साद्य इत्यत आह– **कृष्ण इति** ।। यदुषु प्रजातः एषः श्रीकृष्णः हरिश्च हरिरेव किल । स श्रीकृष्णः अस्य भीमस्य आश्रयः । तस्य श्रीकृष्णस्य बहुप्रतीपं बहुवैरं कुरुत कुरुध्वम् । एवं सम्मन्त्र्य अतिपापतमाः नरेन्द्रपुत्राः हरेश्च बहु यथा स्यात् तथा प्रतीपं चक्रुरिति सम्बन्धः ।।८२।।

**तैः प्रेरिता नृपतयः पितरश्च तेषां साकं बृहद्रथसुतेन हरेः सकाशम् ।**
**युद्धाय जग्मुरमुनाऽष्टदशेषु युद्धेष्वत्यन्तभग्नबलदर्पमदा निवृत्ताः ।।८३।।**

**वादिराजीया–** 'अष्टदशेषु युद्धेषु' इत्यत्र अनित्यत्वात् समासान्तविधेः अष्टन्शब्दस्याकारदेशो न भवति । अष्टचत्वारिंशच्छब्दवत् वैकल्पिको वा ।।८३-८७।।

**वरदराजीया–** तेषां कुमाराणां पितरः नृपतयः बृहद्रथसुतेन जरासन्धेन साकं युद्धाय हरेः सकाशं जग्मुः । अमुना कृष्णेन अत्यन्तभग्नाः बलादयो येषां ते तथा । अष्टादशसङ्ख्याकेषु युद्धेषु निवृत्ताः पराजिताः सन्तो निवृत्ताः ।। **अत्यन्तेति** ।।८३।।

**जनार्दनीया–** तैः असुरांशराजकुमारैः प्रेरिताः नृपतयः तेषां कुमाराणां पितरो नृपाश्च बृहद्रथसुतेन साकं युद्धाय हरेः सकाशं जग्मुः । अमुना कृष्णेन अष्टदशेषु अष्टादशसङ्ख्याकेषु युद्धेषु बलं च दर्पो गर्वश्च, बलस्य दर्पो वा, मदः अनवधानता, भग्नाः बलदर्पमदाः येषां ते तथा सन्तः । निवृत्ताः परावृत्य ययुः ।।८३।।

**ताम्रपर्णीया–** शारीरसम्भवं बलम् । मदाद् भीतेरदृष्टिः दर्पः । मदोऽहङ्कारः ।।८३-९६।।

**भावचन्द्रिका–** द्वारकानिर्माणात् पूर्वं अनन्तरश्च युद्धसङ्ख्यां निष्कृष्याह- **अष्टदशेष्विति** ।।८३।।

**चट्टि–** तैः असुरांशराजकुमारैः प्रेरिताः तेषां कुमाराणां पितरः नृपतयश्च बृहद्रथसुतेन जरासन्धेन साकं युद्धाय हरेः सकाशं जग्मुः । अमुना श्रीकृष्णेन अष्टदशेषु युद्धेषु बलं च दर्पो गर्वश्च, अत्यन्तभग्नाः बलदर्पमदाः येषां ते तथा सन्तः निवृत्ताः परावृत्ता सन्तः जग्मुः ।।८३।।

**तेनाऽगृहीतरथवाजिगजा नितान्तं शस्त्रैः परिक्षततनूभिरलं वमन्तः ।**
**रक्तं विशस्त्रकवचध्वजवाजिसूताः स्रस्ताम्बराः श्लथितमूर्द्धजिनो निवृत्ताः ।।८४।।**

**वरदराजीया–** तेन कृष्णेन आगृहीताः रथादयः येषां ते तथा । शस्त्रैः परिक्षताः मारिताः व्रणं प्राप्ताः तन्वः ताभिः रक्तं वमन्तः । विगतानि शस्त्रादीनि येषां ते तथा । स्रस्तानि अम्बराणि येषां ते मूर्धजाः केशा येषां ते ।।८४।।

**अनन्तभट्टीया–** नागृहीतेति नसमासः । अपहृतगजवाजिरथा इत्यर्थः ।।८४।।

**जनार्दनीया–** उक्तमेवार्थं विशदयति– **तेनेति** ।। तेन कृष्णेन आगृहीताः अपहृताः, गजादयो येषां ते तथा । नितान्तं शस्त्रैः परिक्षततनूभिः विदारितावयवैः । अलं रक्तं वमन्तः । विगतशस्त्रादिसूता येषां ते तथा । स्रस्ताम्वराः मुक्तवस्त्राः । श्लथिताः विस्रस्ताः मूर्धजाः केशाः विद्यन्ते येषां ते तथा । एवं भूताः सन्तः निवृत्ता इत्यर्थः ।।८४।।

**भावचन्द्रिका–** आ सम्यगित्यर्थः ।।८४।।

**चट्टि—** उक्तमेवार्थं विशदयति— **तैर्नेति** ।। तेन श्रीकृष्णेन आगृहीताः अपहृताः गजवाजिरथादयो येषां ते । नितान्तं शस्त्रैः परिक्षततनूभिः विदारितदेहैः अलं रक्तं वमन्तः । विगताः शस्त्रकवचध्वजवाजिसूताः सन्तः । स्रस्तानि अम्बराणि येषां ते तथा । श्लथिताः विस्रस्ताः मूर्धजाः येषां सन्तीति श्लथितमूर्धजिनः सन्तः निवृत्ता ।।८४।।

**एवं बृहद्रथसुतोऽपि सुशोच्यरूप आर्तो ययौ बहुश एव पुरं स्वकीयम् ।**
**कृष्णेन पूर्णबलवीर्यगुणेन मुक्तो जीवेत्यतीव विजितः श्वसितावशेषः ।।८५।।**

**व्यासतीर्थीया—** बृहद्रथसुतो वल्यपि ।।८५-९४।।

**वरदराजीया—** एवं जरासन्धोऽपि सुशोच्यं रूपं यस्य स तथा । बहुशो बहुवारं पूर्णे बलवीर्ये गुणौ यस्य तेन कृष्णेन जीवेति मुक्तः श्वसितं श्वासमात्रं अवशेषो यस्य स तथा, विजितः पराजितः ययौ ।।८५।।

**जनार्दनीया—** सुशोच्यं अतिशोकार्हं रूपं यस्य स तथा । आर्तः पीडितः । पूर्णे च ते बलवीर्ये च, त एव गुणा यस्य स तथा । तेन कृष्णेन जीवेति मुक्तः विजितः पराजितः । श्वसितं श्वासः अवशेषो यस्य स तथा । बहुशः ।।८५।।

**भावचन्द्रिका—** 'अष्टादशे तु सङ्ग्रामे जित्वा यादवसत्तमौ । दृष्टः स्वराष्ट्रे न्यवसत् जितदिङ्मण्डलो नृपः ।।' इति भागवतवाक्यस्य भावमाह— **कृष्णेनेति** ।।८५।।

**चट्टि—** एवं बृहद्रथसुतः जरासन्धोऽपि सुशोच्यं रूपं यस्य स तथा । बहुशः बहुवारं आर्तः पीडितः सन् पूर्णबलवीर्यगुणेन कृष्णेन अतीव अत्यन्तं विजितः पराजितः जीवेति मुक्तः सन्, श्वसितं श्वासः अवशेषो यस्य स तथा भूतस्सन्, स्वकीयं पुरमेव ययौ ।।८५।।

**एवं गतेषु बहुशो नतकन्धरेषु राजस्वजोऽपि मधुरां स्वपुरीं प्रविश्य ।**
**रामेण सार्धमखिलैर्यदुभिः समेतो रेमे रमापतिरचिन्त्यबलो जयश्रीः ।।८६।।**

**वेदाङ्गतीर्थीया—** जयश्रीः जयः श्रीः यस्यासौ तथोक्तः ।।८६।।

**वरदराजीया—** नतं कन्धरं शिरो येषां तेषु गतेषु सत्सु जयः श्रीः यस्य सः ।।८६।।

**जनार्दनीया—** नताः अधःकृताः कन्धरा ग्रीवा येषां ते तथा तेषु । जयलक्षणा श्रीः सम्पद्यस्य स तथा ।।८६।।

**चट्टि—** नताः अधःकृताः कन्धराः ग्रीवाः येषां ते तथा । तेषु राजसु बहुशः एवं गतेषु सत्सु । जयलक्षणा श्रीः सम्पद्यस्य स तथा, रमापतिः अचिन्त्यबलः अजः श्रीकृष्णोऽपि मधुरां मधुरानामकां स्वपुरीं प्रविश्य रामेण सार्धं अखिलैः यदुभिः समेतस्सन् रेमे ॥८६॥

**व्यर्थोद्यमाः पुनरपि स्म सधार्तराष्ट्रा**
**भीमं निहन्तुमुरुयत्नमकुर्वताज्ञाः ।**
**राज्ञाः सुतास्तमखिलं स मृषैव कृत्वा**
**चक्रे जयाय[1] च दिशां बलवान् प्रयत्नम् ॥८७॥**

**वरदराजीया—** सधार्तराष्ट्राः राज्ञां सुताः पुनः भीमं हन्तुं उरु यत्नं अकुर्वन्त । सः भीमः तं उरु यत्नं मृषा कृत्वैव दिशां विजयाय प्रयत्नं चक्रे ॥८७॥

**जनार्दनीया—** धार्तराष्ट्रैः सह वर्तमानाः राज्ञां सुताः व्यर्थोद्यमा अपि नष्टप्रयत्नवन्तोऽपि पुनः भीमं निहन्तुं, उरुयत्नं अकुर्वत कृतवन्तः । अत एव अज्ञाः विवेकशून्याः । बलवान् स भीमः अखिलं तं वधोद्योगं मृषैव व्यर्थमेव कृत्वा, दिशां विजयाय दिग्विजयार्थं प्रयत्नं चक्रे ॥८७॥

**चट्टि—** धार्तराष्ट्रैः सहिताः राज्ञां सुताः व्यर्थोद्यमा नष्टप्रयत्नवन्तोऽपि पुनः भीमं निहन्तुं उरुयत्नं अकुर्वत कृतवन्तः । अत एव अज्ञाः विवेकशून्याः । बलवान् स भीमः अखिलं वधोद्योगं मृषैव व्यर्थमेव कृत्वा, दिशां विजयाय दिग्विजयार्थं च यत्नं चक्रे ॥८७॥

**प्राचीं दिशं प्रथममेव जिगाय पश्चाद्**
**याम्यां जलेशपरिपालितया सहान्याम् ।**
**यौ तौ पुरातनदशाननकुम्भकर्णौ**
**मातृष्वसातनयतां च गतौ जिगाय ॥८८॥**

---

१. 'त्रिवर्षकृतयज्ञस्तु गन्धर्वाणामुपप्लवे । अर्जुनप्रमुखैः पार्थैः सौवीरः समरे हतः ॥ न शशाक वशे कर्तुं यं पाण्डुरपि वीर्यवान् । सोऽर्जुनेन वशं नीतो राजासीद् यवनाधिपः ॥ अतीव बलसम्पन्नः सदा मानी कुरून् प्रति । विपुलो नाम सौवीरः शस्तः पार्थेन धीमता ॥ दत्तामित्र इति ख्यातं सङ्ग्रामे कृतनिश्चयम् । सुमित्रं नाम सौवीरमर्जुनोदमयच्छरैः ॥ भीमसेनसहायश्च रथानामयुतं च सः । अर्जुनः समरे प्राच्यान् सवनिकरथोऽजयत् ॥ तथैवैकरथो गत्वा दक्षिणामजयद्दिशम् । धनौघं प्रापयामास कुरुराष्ट्रं धनञ्जयः ॥ यतः पञ्चदशे वर्षे सर्वमेतच्चकार सः । तं दृष्ट्वा धार्तराष्ट्राणां ततो भयमजायत ॥' आदि.१५१.४४-५०। पाण्डोः मरणानन्तरं पाण्डवाः हस्तिनपुरे त्रयोदशवर्षं वासं चक्रुः । ततः वारणावतं जग्मुः इति कथा भारते स्पष्टं प्रतिपाद्यते । अतः 'यतः पञ्चदशे वर्षे' इति अत्रत्यपञ्चदशवर्षशब्दस्य अर्जुनस्य पञ्चदशे वर्षे इत्यर्थः साधु । तेन एतद्दिग्विजयं द्रोणाद् विद्यासम्पादनात् पूर्वमेव अर्जुनभीमाभ्यां कृतमिति भाति ।

**वेदाङ्गतीर्थीया–** अन्यां उत्तराम् । यौ पुरातनदशाननकुम्भकर्णौ मातृष्वसातनयतामुपगतौ च जिगाय ॥८८॥

**वादिराजीया–** 'मातृष्वसातनयतां च गतौ' इत्यत्र या मातृष्वसा तस्याः तनयतां च गतौ । मातृष्वसेति जात्येकवचनम् । द्वयोर्मातृष्वस्रोर्द्वौ पुत्रावित्यर्थः । तथा या अन्या शिशुपालमातुरन्या मातृष्वसा । यद्वा 'सृज विसर्गे' इति धातोः स्त्रियां डापि कृते 'डोऽन्यत्रापि दृश्यते' इति वचनात् डप्रत्यये वा कृते स्वया सह निसृष्टा मातृष्वसा । तस्मात् महाव्याकरणज्ञैर्महावैदिकशिरोमणिभिर्यत्प्रयुक्तं स एव प्रयोगः साधुः । करूशनृपं दन्तवक्रं तस्या एव तनयं वदन्ति ॥८८-८९॥

**वरदराजीया–** अन्यां उत्तराम् । यौ पुरातनौ दशाननकुम्भकर्णौ इदानीं मातृष्वसातनयतां गतौ जिगाय जितवान् ॥८८॥

**अनन्तभट्टीया–** अन्यां उत्तरां दिशम् ॥८८॥

**जनार्दनीया–** प्रथमं आदौ प्राचीं दिशं पूर्वदिशं पश्चादनन्तरं याम्यां दक्षिणदिशं जलेशेन वरुणेन, परिपालितया प्रतीच्या सह अन्यां उत्तरदिशं जिगाय । यौ पुरातनौ च तौ दशाननकुम्भभकर्णौ च । पूर्वं यौ रावणकुम्भकर्णावित्यर्थः । इदानीं मातुः कुन्त्याः, स्वसायाः स्वसुर्भगिन्याः, तनयतां पुत्रत्वं गतौ प्राप्तौ जिगाय ॥८८॥

**चट्टि–** भीमः प्रथमं आदौ प्राचीं दिशं पूर्वदिशमेव पश्चादनन्तरं याम्यां दक्षिणां दिशं जलेशेन वरुणेन परिपालितया प्रतीच्या सह अन्यां उत्तरां दिशं जिगाय । यौ पुरातनौ च दशाननकुम्भकर्णौ च इदानीं मातुः कुन्त्याः स्वसायाः स्वसुर्भगिन्याः तनयतां पुत्रत्वं गतौ प्राप्तौ तौ च जिगाय ॥८८॥

**पूर्वस्तयोर्हि दमघोषसुतः प्रजातः**
**प्राहुश्च यं नृपतयः शिशुपालनाम्ना ।**
**अन्यं वदन्ति च करूशनृपं तथाऽन्य-**
**मातृष्वसातनयमेव च दन्तवक्रम् ॥८९॥**

**वेदाङ्गतीर्थीया–** तयोः रावणकुम्भकर्णयोः पूर्वं अग्रजः । तथान्यं दन्तवक्रं वदन्ति । 'अन्यं मातृष्वसातनयम्' इत्यनेनोभयोरेकोदरत्वं निवारितम् ॥८९-९०॥

**वरदराजीया–** तयोर्मध्ये पूर्वो दशाननो दमघोषसुतः जातः । यं दमघोषसुतं शिशुपालनाम्ना आहु व्यवहृतवन्तः । अन्यं द्वितीयं मातृश्वसासुतं तनयम् । अनेन मातृभेदो दर्शितः । दन्तवक्रं प्रवदन्ति ॥८९॥

**जनार्दनीया–** तयोः रावणकुम्भकर्णयोः मध्ये पूर्वं ज्येष्ठो रावणः दमघोषनृपस्य सुतः सन् प्रजातः । नृपतयः यं दमघोषसुतं शिशुपालनाम्ना आहुः प्रवदन्ति आकारयन्तीत्यर्थः । अन्यं शिशुपालादन्यं करूशविषयाणां नृपं राजानं अन्यं मातृष्वसातनयं शिशुपालमातुः सकाशादन्या या मातृष्वसाया कुन्त्याः स्वसुः, तनयं दन्तवक्रमिति प्रवदन्तीति । शिशुपालदन्तवक्रयोः मातरौ भीममातृष्वसाराविति भावः ॥८९॥

**चट्टि–** तयोः रावणकुम्भकर्णयोः मध्ये पूर्वः ज्येष्ठो रावणः दमघोषनृपस्य सुतः सन् प्रजातः । नृपतयः यं दमघोषसुतं शिशुपालनाम्ना प्राहुः प्रवदन्ति । अन्यं द्वितीयं च कुम्भकर्णं तथा अन्यमातृष्वसायाः तनयमेव करूशनृपं दन्तवक्रं प्रवदन्ति । शिशुपालदन्तवक्रयोः मातरौ कुन्त्याः स्वसाराविति भावः ॥८९॥

**जित्वैव तावपि जिगाय च पौण्ड्रकाख्यं**
**शौरेः सुतं सुतमजैदथ भीष्मकस्य ।**
**यः पूर्वमास दितिजो नरहेल्वलाख्यो**
**रुक्मीति नाम च बभूव स कुण्डिनेशः ॥९०॥**

**वादिराजीया–** 'नरहेल्वलाख्यः' इत्यत्र इल्वलाख्यो दैत्यः स्वानुजं वातापिं शाकं कृत्वा नरहान् भोजयित्वा पुनराह्वाने सति तदुदरं निर्भिद्य स्वानुजस्य यथापूर्वमागमने सति ते नरा मृता भवन्तीति कथासूचनाय नरहेत्युक्तम् ॥९०॥

**वरदराजीया–** तावुभावपि जित्वा शौरेः वसुदेवस्य सुतं पौण्ड्रकाख्यं जिगाय । अथ अनन्तरं भीष्मकराज्ञः सुतं अजैत् जितवान् । भीष्मकसुतः पूर्वं दितिजो नरहा राक्षसः इल्वलाख्यः आस । सः रुक्मीति नाम प्रसिद्धः । कुण्डिनदेशस्य ईशो राजा बभूव ॥९०॥

**जनार्दनीया–** तौ शिशुपालदन्तवक्रौ । शौरेः वसुदेवस्य सुतं पौण्ड्रकाख्यम् । अथ भीष्मकस्य सुतं रुक्मिणं पूर्वं दितिजः, असुर इत्यर्थः । नरहा नरघ्नः, राक्षस इत्यर्थः । इल्वलाख्यो यः आस स रुक्मीति नाम प्रसिद्धः सन् कुण्डिनेशः कुण्डिनविषये नृपो बभूव ॥९०॥

**भारतश्री–** ॥ **यः पूर्वमास दितिज इति** ॥ यः पूर्वमास स एव रुक्मीति प्रसिद्धो बभूव । न तु ग्रन्थान्तरोक्तरीत्या शुचिः । कुण्डिनेशो रुक्मी पूर्वं शुचिरन्योऽभवदित्यत आह– **स एव कुण्डिनेशः** ॥ न त्वन्यो रुक्मी नाम अस्ति ॥९०॥

**चट्टि–** तौ उभावपि शिशुपालदन्तवक्रौ जित्वा शौरेः वसुदेवस्य सुतं पौण्ड्रकाख्यं च जिगाय । अथ भीष्मकस्य सुतं रुक्मिणं अजैत् जितवान् । इल्वलाख्यो दैत्यः स्वानुजं वातापिं पाकं कृत्वा नरान् भोजयित्वा पुनराह्वाने सति तदुदरं निर्भिद्य स्वानुजस्य यथापूर्वमागमने सति नरघ्नः इति सूचनाय 'नरहा' इत्युक्तम् । यः दितिजः दैत्यः पूर्वं नरान् घ्नन्तीति नरहा इल्वलाख्यो राक्षस आस । स च रुक्मीति नाम प्रसिद्धः सन् कुण्डिनेशः कुण्डिनविषयनृपो बभूव ।।९०।।

**भागेत एव तनयस्य स एव वह्नेर्नाम्ना**
**शुचेः स तु पिताऽस्य हि मित्रभागः ।**
**राह्वंशयुक् तदनुजौ क्रथकैशिकाख्यौ**
**भागो तथाऽग्निसुतयोः पवमानशुन्ध्योः ।।९१।।**

**वेदाङ्गतीर्थीया–** वह्नेः प्रधानवह्नेः तनयस्य नाम्ना शुचेर्भागतः अंशयुक् । अस्य सः पिता भीष्मकः मित्रभागः मित्राख्यदेवतांशकः ।।९१-९५।।

**वादिराजीया–** स एव पूर्वोक्तरुक्म्येव नाम्ना शुचेः वह्नेः सुतस्य भागेत एव भागेन अंशेन इतः सहित एव । न तु स एवेत्येवकारार्थः । दैत्यस्य भगवत्सम्बन्धित्वायोगात् 'भागेतः' इत्युक्तम् । अस्य पिता भीष्मकः मित्रभागः मित्राख्यसूर्यांशः । शिशुपालविवाहोररणीकरणात् राह्वंशयुगित्युक्तम् ।।९१-९४।।

**मधुसूदनीया–** ननु रुक्मिणो असुरत्वे तत्र तत्र सद्गत्युक्तिः कथमित्यः तस्मिन् शुच्याख्यवह्निपुत्रस्याविष्टत्वेन तदुक्तिर्घटते इत्याशयेनाह– **भागेत इति** ।। स रुक्मी नाम्ना शुचेः शुच्याख्यस्य वह्नेः तनयस्य वह्निपुत्रस्य भागेत एव अंशयुक्त एव नतु तदात्मक इत्यर्थः । भीष्मकः पूर्वं क इत्यत आह– **स तु पितेति** ।। अस्य रुक्मिणः पिता जनकः । स तु भीष्मकस्तु मित्रभागः मित्रनाम्नो देवस्यांशः तदात्मक इत्यर्थः । तथा राह्वंशयुक्तश्च । तदनुजौ भीष्मकस्य अनुजौ क्रथकैशिकाख्यौ अग्निसुतयोः पवमानशुन्ध्योः पवमानशुन्ध्याख्ययोः भागौ अंशावित्यर्थः । वरदराजाचार्यस्तु 'भीष्मक क इत्यत आह– **भागेत इति** ।। अस्य रुक्मिनामकस्य पिता स भीष्मको मित्रभागः मित्रांशः । तथा वह्नेः प्रधानवह्निसुतस्य नाम्ना शुचेः भागेतः अंशयुतः तथा राह्वंशयुक् च' इति व्याचक्षते । तन्न । 'स एव स तु' इति तच्छब्दद्वयवैयर्थ्यापातात् । भेदद्योतकतुशब्दवैय्यर्थ्यापाताच्च । रुक्मिणि सर्वथा देवांशाभावे रुक्मिणः सद्गतिकथनविरोधाच्च । बहु सम्प्रदायविरोधाच्च । 'राहुयुग् भीष्मको मित्रः' इति **विद्याधीशतीर्थकृततारतम्यस्तोत्र**विरोधाच्च । भीष्मकस्यांशत्रयात्मकत्वे स्वरूपनिर्णयानापत्तेः । एकस्यैव तच्छब्दस्यावृत्त्यान्वयापत्तेश्च ।।९१-१०३।।

**वरदराजीया–** भीष्मकः पूर्वंक इत्यत आह– **भागेत इति** ।। अस्य रुक्मिनामकस्य पिता स भीष्मको मित्रभागः मित्रनामकादित्यांशः । तथा वह्नेः सुतस्य नाम्ना शुचेः शुचिनामकस्य भागेनांशेन इतो युक्तः । तथा राह्वंशयुक्तः । तस्य भीष्मकस्य अनुजौ क्रथकैशिकनामानौ अग्निसुतयोः पवमानशुन्ध्योः तन्नामकयोः भागौ यथाक्रमं अंशभूतावित्यर्थः ।।९१।।

**अनन्तभट्टीया–** नरहा मनुष्यहन्ता स रुक्मी वह्नेस्तनयस्य नाम्ना शुचेर्भागेतः । अस्य रुक्मिणः पिता सुप्रसिद्धः भीष्मकः मित्रभागः मित्रदेवतास्वरूपः । राह्वंशयुक् । तदनुजौ भीष्मकानुजौ पवमानशुन्ध्योः अग्निसुतयोर्भागौ ।।९१।।

**जनार्दनीया–** स एव रुक्मी वह्नेः प्रधानाग्नेः तनयस्य नाम्ना शुचेः भागेन अंशेन, इतः युक्तः । इल्वलः शुचेर्भागेतः सन् नाम्ना रुक्मीति भीष्मकसुतो बभूवेति भावः । अस्य रुक्मिणः स पूर्वोक्तः पिता मित्रभागः मित्राख्यदेवांशः हि । तथा राहोः अंशयुक् । 'राहुयुग्भीष्मको मित्रः' इति वचनात् । तथा तस्य भीष्मकस्य, अनुजौ क्रथकैशिकाख्यौ अग्निसुतयोः पवमानश्च शुन्धिश्च पवमानशुन्धी तयोः तथा । भागौ अंशभूतौ ।।९१।।

**भारतश्री–** तर्हि 'रुक्मी शुचिः पूर्वम्' इत्यादेः का गतिरित्यत आह– **शुचेस्स भागेत इति** ।। शुच्यंशयुक्तत्वत्वात् तथोक्तिरिति भावः । यो अस्य पिता भीष्मकः राजा । स तु मित्रभागः मित्रांशः । हि अयमर्थः एवं निर्णयग्रन्थे निर्णीतः ।।९१-९४।।

**चट्टि–** स एव रुक्मी वह्नेः प्रधानाग्नेः तनयस्य नाम्ना शुचेः भागेन अंशेन इतः युक्तः एव । न तु स एवेत्येवकारार्थः । इल्वलः शुचेर्भागेतः सन् नाम्ना रुक्मीति भीष्मकसुतो बभूवेति भावः । अस्य रुक्मिणः स पूर्वोक्तः पिता भीष्मकः मित्रभागः मित्राख्यसूर्यांशः हि । तथा राहोः अंशयुक् । तस्य भीष्मकस्य अनुजौ क्रथकैशिकाख्यौ अग्निसुतयोः पवमानश्च शुन्धिश्च पवमानशुन्धी तयोः तथा भागौ अंशभूतौ ।।९१।।

**बन्धोर्निजस्य तु बलं सुपरीक्षमाणः शल्योऽपि तेन युयुधे विजितस्तथैव ।**
**भीमो जिगाय युधि वीरमथैकलव्यं सर्वे नृपाश्च विजिता अमुनैवमेव ।।९२।।**

**वरदराजीया–** शल्यः निजस्य वन्धोर्भीमस्य बलं सुपरीक्षमाण एव तेन भीमेन युयुधे । तथैव पूर्ववदेव विजितश्च । अथ एकलव्यं जिगाय । अमुना भीमेन सर्वे विजिताः ।।९२।।

**जनार्दनीया–** प्रकृतमनुसरति– **बन्धोरिति** ।। निजस्य बन्धोः स्वबान्धवस्य भीमस्य । तेन भीमेन युयुधे । तथैव शिशुपालादिवत् विजितः पराजितोऽभूत् । एवमेव अनेन प्रकारेण । अमुना भीमसेनेन विजिताश्च ।।९२।।

**अतिविशद–** 'सर्वे नृपाश्च विजिताः' इत्यत्र जरासन्धोऽपि विजित इति ज्ञातव्यम् । न केवलमेतावत् । अधिरथं विजित्य सर्वमङ्गराज्यं जरासन्धेन गृहीतमभूत् । तन्मध्यैकदेशः भीमेन गृहीत इत्यपि ज्ञातव्यम् । 'पूर्वं हि तस्य निजराज्यपदैकदेशो दुर्योधनेन विहितो मगधाधिराजम् । जित्वा वृकोदरहृतः पितुरेव दत्त...।।' इत्यादिना उत्तरत्र वक्ष्यमाणत्वात् ।।९२।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ चतुर्दशोऽध्यायः ।।

**चट्टि–** प्रकृतमनुसरति– **बन्धोरिति** ।। शल्योऽपि निजस्य बन्धोः भीमस्य वलं सुपरीक्षमाणः सन् तेन भीमेन युयुधे । तथैव शिशुपालादिवत् विजितः पराजितः । अथ भीमः युधि वीरमेकलव्यं जिगाय । अमुना भीमेन एवमेव सर्वे नृपाश्च विजिताः ।।९२।।

**तद्बाहुवीर्यपरिपालित इन्द्रसूनुः**
**शेषान् नृपांश्च समजैद् बलवानयत्नात् ।**
**साल्वं च हंसडिभकौ च विजित्य भीमो**
**नागाह्वयं पुरमगात् सहितोऽर्जुनेन ।।९३।।**

**वरदराजीया–** तस्य भीमस्य बाहुवीर्येण परिपालितो अर्जुनो अत एव शेषान् नृपान् समजैत् । भीमः साल्वं हंसडिभिकौ विजित्य अर्जुनेन सहितः नागाह्वयं हस्तिनापुरीम् ।।९३।।

**जनार्दनीया–** तस्य भीमसेनस्य बाहुवीर्येण । शेषान् भीमजितेभ्यः उर्वरितान् । भीमः साल्वं च हंसडिभिकौ च विजित्य जित्वा नागपुरमगात् ययौ ।।९३।।

**चट्टि–** बलवान् इन्द्रसूनुः अर्जुनः तस्य भीमस्य बाहुवीर्येण पालितस्सन् शेषान् भीमजितेभ्यः उर्वरितान् नृपान् अयत्नात् समजयत् । भीमः साल्वं च हंसडिभिकौ च विजित्य अर्जुनेन सहितस्सन् नागाह्वयं हस्तिनाख्यं पुरमगात् ।।९३।।

**तद्बाहुवीर्यमथ वीक्ष्य मुमोद धर्मसूनुः समातृयमजो विदुरः सभीष्मः ।**
**अन्ये च सज्जनगणाः [१]सहपौरराष्ट्राः श्रुत्वैव सर्वयदवो जहृषुर्नितान्तम् ।।९४।।**

**सत्याभिनवतीर्थीया–** तत्रैव अन्येऽपि सज्जनगणाः...इत्यस्ति । तस्यार्थः । अन्ये पूर्वोक्तेभ्यः अन्ये पौरराष्ट्राः सज्जनगणाः जहृषुः । सः कृष्णः सर्वयादवश्च श्रुत्वैव नितान्तं जहृषुः इत्येतत् ह

१. 'स ह पौरराष्ट्राः' इति सत्यभिनवतीर्थीयपाठः ।

प्रसिद्धमिति । एतेन पौरराष्ट्रस्थितदुर्जनानां सन्तोषायोगात् पौरराष्ट्राः सज्जनगणा जहृषुरिति वक्तव्यम् । अतः सहेत्येतत् व्यर्थमिति दूषणं परास्तम् । 'सहपौरराष्ट्रा' इत्येतत् एकं पदं इत्यनङ्गीकृत्य 'स' 'ह' 'पौरराष्ट्रा' इति पदत्रयमित्यभ्युपगमात् । एतेनैव कृष्णो जहर्ष इत्यवश्यं वक्तव्यम् । तत् नोक्तमिति शङ्कानवकाशः । सः इत्यनेन कृष्णस्य ग्रहणात् ।।९४।।

**वरदराजीया–** समातृयमजः मात्रा यमजाभ्यां सह वर्तमानो धर्मसूनुः सभीष्मो विदुरश्च तद्बाहुवीर्यं वीक्ष्य मुमोद । अन्ये च नितान्तं जहृषुः ।।९४।।

**जनार्दनीया–** माता कुन्ती, यमजौ नकुलसहदेवौ, तैः सह वर्तमानः मुमोद । सभीष्मो विदुरश्च पौरराष्ट्रैः सहिताः अन्ये सज्जनगणाश्च मुमुदुरित्यर्थः । सर्वयदवः सर्वयादवाः श्रुत्वा भीमकृतदिग्विजयं श्रुत्वा नितान्तं जहृषुः तुतुषुः ।।९४।।

**चट्टि–** माता कुन्ती, यमजौ नकुलसहदेवौ, तैः सह वर्तमानः धर्मसूनुः तयोः बाहुवीर्यं वीक्ष्य मुमोद । अथ सभीष्मो विदुरश्च पौरराष्ट्रैः सह वर्तमानाः अन्ये सज्जनगणाश्च मुमुदुः । सर्वयदवः यादवाः श्रुत्वा भीमकृतदिग्विजयं श्रुत्वा नितान्तं जहृषुः ।।९४।।

**कृष्णः [1]सुयोधनमुखाक्रममाम्बिकेयं जानन् स्वपुत्रवशवर्तिनमेव गत्वा ।**
**श्वाफल्किनो गृहममुं धृतराष्ट्रशान्त्यै गन्तुं दिदेश गजनाम पुरं रमेशः ।।९५।।**

**व्यासतीर्थीया–** सुयोधनमुखे सुयोधनादौ चाक्रमो यस्य स तथोक्तः । तदेव विवृणोति– **स्वपुत्रवशवर्तिनमिति** ।।९५-९६।।

**वादिराजीया–** 'कृष्णः सुयोधनमुखाक्रमम्' इत्यत्र सुयोधनमुखैः दुष्पुत्रैरक्रमः मनआदिसर्वेन्द्रियाणामाक्रमणं यस्य स तथोक्तः । अत एव स्वपुत्रवशवर्तिनम् । यद्वा सुयोधनमुखैर्निमित्तैरक्रमः अधर्मोपेक्षकत्वाख्यविपरीतक्रमो यस्य तम् ।।९५-९८।।

**वरदराजीया–** सुयोधनमुखाक्रमं दुर्योधनप्रमुखैः आक्रान्तम् । अत एव स्वपुत्राणां दुर्योधनादीनां वशवर्तिनं आम्बिकेयं जानन् कृष्णः श्वाफल्किनो अक्रूरस्य गृहं गत्वा अमुं अक्रूरं धृतराष्ट्रशान्त्यै नागपुरं प्रति गन्तुं दिदेश आज्ञापितवान् ।।९५।।

**अनन्तभट्टीया–** ।। **सुयोधनेति** ।। सुयोधने युधिष्ठिरादौ च यथा क्रमो यस्य स तथोक्तः ।।

**जनार्दनीया–** कृष्णः स्वपुत्राणां दुर्योधनादीनां वशे वर्तितुं शीलमस्येति । अत एव सुयोधनः मुखं आदिर्येषां पाण्डवानां ते तथा, तेषु अक्रमं विपरीतवृत्तिर्यस्य तथा । तं आम्बिकेयं धृतराष्ट्रं

---

१. 'सुयोधनमुख-आक्रमं' इति चट्टिटिप्पणीरीत्या पदच्छेदः ।

जानन् सन्, श्वाफल्किनः श्वफल्कापत्यस्य अक्रूरस्य गृहं प्रति गत्वा, अमुं अक्रूरं धृतराष्ट्रस्य शान्त्यै विपरीतप्रवृत्तिनिवृत्त्यै गजनाम नागाह्वयं पुरं प्रति गन्तुं दिदेश ।।९५।।

**भारतश्री–** सुयोधनमुखानामक्रमं अन्यायम् । आम्बिकेयं स्वपुत्रवशवर्तिनं जानन्नित्यन्वयः । एवेत्यस्य गत्वेत्यनेन सम्बन्धः । न तु स्वगेहमाहूयेत्यर्थः ।।९५-११२।।

।। इति डम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां चतुर्दशोऽध्यायः ।।

**चट्टि–** रमेशः श्रीकृष्णः सुयोधनमुखैः दुष्टपुत्रैः आक्रमः मनआदिसर्वेन्द्रियाणां आक्रमणं वशीकरणं यस्य स तथोक्तः । तं अत एव स्वपुत्रवशवर्तिनं आम्बिकेयं धृतराष्ट्रं जानन् सन्, श्वाफल्किनः अक्रूरस्य गृहं प्रति गत्वा, अमुं अक्रूरं धृतराष्ट्रस्य शान्त्यै गजनाम नागाह्वयं पुरं गन्तुं दिदेश ।।९५।।

**सोऽयाद् गजाह्वयममुत्र विचित्रवीर्य-**
**पुत्रेण भीष्मसहितैः कुरुभिः समस्तैः ।**
**सम्पूजितः कतिपयानवसच्च मासान्**
**ज्ञातुं हि पाण्डुषु मनःप्रसृतिं कुरूणाम् ।।९६।।**

**वेदाङ्गतीर्थीया–** मनःप्रसृतिं मनः प्रवृत्तिम् ।।९६।।

**वरदराजीया–** अमुत्र गजाह्वये पुरे विचित्रवीर्यस्य पुत्रादिभिः सम्पूजितः कतिपयान् मासान् अवसत् । किं कर्तुम्? पाण्डुषु पाण्डवेषु कुरूणां कौरवाणां मनसः प्रसृतिं प्रवृत्तिं ज्ञातुम् ।।९६।।

**जनार्दनीया–** सोऽक्रूरः अयात् अगात् । अमुत्र हस्तिनपुरे सम्पूजितः सन्, पाण्डवेषु कुरूणां मनसः प्रसृतिं ज्ञातुं अवसत् ।।९६।।

**चट्टि–** सोऽक्रूरः गजाह्वयं नागपुरं अयात् । अमुत्र नागपुरे विचित्रवीर्यपुत्रेण धृतराष्ट्रेण भीष्मसहितैः समस्तैः कुरुभिः सम्पूजितः सन्, पाण्डुषु पाण्डवेषु कुरूणां कौरवाणां मनसः प्रसृतिं वृत्तिं ज्ञातुं कतिपयान् मासान् अवसच्च ।।९६।।

**ज्ञात्वा स [१]कुन्तिविदुरोक्तित आत्मना च**
**मित्रारिमध्यमजनांस्तनयेषु पाण्डोः ।**

---

१. कृतं च धार्तराष्ट्रैर्यत् गरदानाद्यकौशलम् । आचख्यौ सर्वमेवास्मै पृथा विदुर एव च । पृथा तु भ्रातरं प्राप्तं अक्रूरमुपसृत्य तम् । उवाच... ।। इति भागवते १०.४८.६-७ ।

**विज्ञाय पुत्रवशगं धृतराष्ट्रमञ्जः**
**साम्नैव भेदसहितेन जगाद विद्वान्** ॥९७॥

**व्यासतीर्थीया–** अञ्जः पुत्रवशगम् ॥९७-१०३॥

**वेदाङ्गतीर्थीया–** अञ्जः अञ्जसा ॥९७-९८॥

**वरदराजीया–** सोऽक्रूरः कुन्त्यादिभिः पाण्डोस्तनयेषु मित्रादि जानन् ज्ञात्वा अञ्जः अञ्जसा पुत्रवशगं धार्तराष्ट्रं विज्ञाय भेदसहितेन साम्ना उपायेन जगाद । यतो विद्वानित्यर्थः ॥९७॥

**जनार्दनीया–** सोऽक्रूरः कुन्तीविदुरयोः उक्तितः वचनात् आत्मना च स्वेनैव पाण्डोः तनयेषु मित्राणि अरयः शत्रवः, मध्यमाः उदासीनाः, एतादृशान् जनान् ज्ञात्वा । पुत्रवशगं धृतराष्ट्रं च विज्ञाय, भेदसहितेन भेदोपायेन साम्नैव सामोपायेनैव अञ्जः सम्यक् जगाद । यतो विद्वान् ज्ञानी अत एवेत्यर्थः ॥९७॥

**ताम्रपर्णीया–** आत्मना स्वमनसा च ॥ **साम्नैव भेदसहितेनेति** ॥ साम समीकरणम् । भेदः स्वयूथ्यविरोधः । 'तत्र धर्मार्थकामसहितां च विमुक्तिमेषि तत्प्रीतितः सुनियतम्' इत्यन्तेन सामोक्तिः । 'विपरीतवृत्तिः' इत्यादिना भेदोक्तिरित्यवगन्तव्यम् ॥९७-१०१॥

**चट्टि–** सोऽक्रूरः कुन्तीविदुरयोः उक्तितः वचनात् आत्मना च स्वेनैव च पाण्डोः तनयेषु मित्राणि अरयः शत्रवः, मध्यमाः उदासीनाः, एतादृशजनान् ज्ञात्वा, धृतराष्ट्रं अञ्जः पुत्रवशगं विज्ञाय, भेदसहितेन भेदोपायोपेतेन साम्नैव सामोपायेनैव अञ्जः सम्यक् जगाद । यतो विद्वान् ज्ञानी अत एवेत्यर्थः । अञ्जः इत्यस्यावृत्तिः ॥९७॥

**पुत्रेषु पाण्डुतनयेषु च साम्यवृत्तिः**
**कीर्तिं च [1]धर्ममुरुमेषि तथाऽर्थकामौ ।**
**प्रीतिं परां त्वयि करिष्यति वासुदेवः**
**साकं समस्तयदुभिः [2]सहितः सुराद्यैः** ॥९८॥

---

१. 'धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन् । वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥ अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः । तस्मात् समस्त्वं वर्तस्व पाण्डवेष्वात्मजेषु च ॥' इति भागवते.१०.४८.१८-१९ ।

२. 'स हितः' इति सत्याभिनवतीर्थीयपाठः ।

**सत्याभिनवतीर्थीया–** तत्रैव प्रीतिं परां...इत्यस्ति । तस्यार्थः हितः भक्तेभ्यो हितः सः वासुदेवः समस्तयदुभिः सुराद्यैश्च साकं त्वयि परां प्रीतिं करिष्यति इति । एतेन सर्वयदुभिः इत्यस्यैव सुराद्यैः इत्यस्यापि साकं इत्यनेन अन्वयसम्भवात् 'सहितः' इत्येतत् व्यर्थमिति दूषणं निराकृतम् । 'सहितः' इत्येकं पदं न भवति किन्तु 'सः' 'हितः' इति पदद्वयं इति अभ्युपेत्यार्थस्य उक्तत्वात् ।।९८।।

**वरदराजीया–** पुत्रेषु दुर्योधनादिषु पाण्डुतनयादिषु च साम्यवृत्तिः साम्येन वृत्तिः यस्यासौ तथा । त्वं कीर्तिं उरुधर्मञ्च एषि प्राप्नोषि । अर्थकामौ च एषि । परां प्रीतिं च ।।९८।।

**अनन्तभट्टीया–** साम्येन वृत्तिर्यस्य सः साम्यवृत्तिः । उरुधर्मम् ।।९८।।

**जनार्दनीया–** 'अञ्जो जगाद' इत्युक्तं विवृणोति– **पुत्रेष्विति** ।। पुत्रेषु पाण्डुतनयेषु च साम्यवृत्तिः तत्तद्योग्यतानुसारिणी, वृत्तिः वर्तनं यस्यासौ साम्यवृत्तिः तादृशस्त्वमिति शेषः । कीर्तिं उरु उत्तमं धर्मं च, तथा अर्थकामौ एषि प्राप्नोषि । वासुदेवः कृष्णः परां उत्तमां प्रीतिं करिष्यति ।।९८।।

**चट्टि–** जगाद इत्युक्तं विवृणोति– **पुत्रेष्विति** ।। पुत्रेषु दुर्योधनादिषु पाण्डुतनयेषु च साम्येन वृत्तिः वर्तनं यस्य सः तादृशश्चेत् त्वं कीर्तिं उरु उत्तमं धर्मं च तथा अर्थकामौ एषि प्राप्नोषि । वासुदेवः श्रीकृष्णः समस्तयदुभिः साकं सुराद्यैः सहितस्सन् त्वयि परां उत्तमां प्रीतिं करिष्यति ।।९८।।

**धर्मार्थकामसहितां च विमुक्तिमेषि तत्प्रीतितः [१]सुनियतं विपरीतवृत्तिः ।**
**[२]यास्येव राजवर तत्फलवैपरीत्यमित्थं वचो निगदितं तव कार्ष्णमद्य।।९९।।**

**वेदाङ्गतीर्थीया–** कार्ष्णं कृष्णेनोक्तम् ।।९९-१००।।

**वादिराजीया–** यासे च राजवरेत्यत्र यासे प्राप्नोषि । 'या प्रापणे' इति धातोर्लटि आत्मनेपद्यां मध्यमपुरुषैकवचनम् । तव कार्ष्णमद्येत्यत्र कार्ष्णं कृष्णसम्बन्धीत्यर्थः ।।९९-१०२।।

**वरदराजीया–** तत्प्रीतितो धर्मादिसहितां सुनियतां विमुक्तिमेषि । हे राजवर! विपरीतवृत्तिः त्वं तत्फलवैपरीत्यं यास्येव । इत्थं कार्ष्णं कृष्णेनोक्तं वचोऽद्य तव तुभ्यं निगदितम् ।।९९।।

**अनन्तभट्टीया–** कार्ष्णं वचः । नैव भविष्यतीति शेषः ।।९९।।

**जनार्दनीया–** प्रीतेः फलमप्याह– **धर्मेति** ।। तस्य कृष्णस्य प्रीतितः विमुक्तिं एषि । हे राजवर! विपरीतवृत्तिः स्वपुत्रेषु पाण्डवेषु चासमप्रवृत्तिस्त्वं । सुनियतं यथा स्यात्तथा । तत्फलस्य,

---

१. 'सुनियतां' इति चट्टिपाठः । 'सनियतां' इति चट्टिटिप्पण्यां पाठान्तरम् ।

२. 'यासे च' इति वादिराजतीर्थपाठः ।

कृष्णप्रीतिजन्यफलवैपरीत्यं नरकाद्यनर्थप्राप्तिरूपफलं यास्येव प्राप्स्यस्येव । इत्थं मदुक्तप्रकारेण कार्ष्णं कृष्णसम्बन्धि वचः अद्य तव, अनादरे षष्ठी, निगदितमिति । जगादेति सम्बन्धः । मदुक्तप्रकारेण कृष्णेनाप्युक्तं वचः मया तव निगदितमिति जगादेति भावः ।।९९।।

**चट्टि–** प्रीतेः फलमप्याह– **धर्मेति** ।। तस्य कृष्णस्य प्रीतितः धर्मार्थकामसहितां सुनियतां विमुक्तिं च एषि । 'सनियतम्' इति पाठे सनियतं यथा स्यात् तथेति क्रियाविशेषणम् । हे राजवर! विपरीतवृत्तिः स्वपुत्रेषु पाण्डवेषु चासाम्यवृत्तिश्चेत् तत्फलस्य कृष्णप्रीतिजन्यफलस्य वैपरीत्यं नरकाद्यनर्थप्राप्तिरूपफलं यास्येव । इत्थं कार्ष्णं कृष्णसम्बन्धि वचः अद्य तव निगदितमिति जगादेति सम्बन्धः । कृष्णोक्तवचनं मयोक्तमिति भावः ।।९९।।

**इत्थं समस्तकुरुमध्य उपात्तवाक्यो राजाऽपि पुत्रवशगो वचनं जगाद ।**
**सर्वं वशे भगवतो न वयं स्वतन्त्रा भूभारसंहृतिकृते स इहावतीर्णः ।।१००।।**

**सत्याभिनवतीर्थीया–** तत्रैव इत्थं समस्तकुरुमध्य... इत्यस्ति । तस्यार्थः– राजा कुरुमध्ये इदं इत्थं भवति इति उपात्तवाक्यः अपि स्वीकृतवाक्यः अपि पुत्रवशगः सन् वचः जगाद इति । एतेन 'इत्थम्' इत्येतदनन्वितं इति दूषणं निराकृतम् । 'इदं' इत्यादेः शेषेण अन्वयस्य उक्तत्वात् ।।१००।।

**वरदराजीया–** उपात्तवाक्यः श्रुतवाक्यो जगाद । सर्वं जगत् भगवतो वशे । वयं न स्वतन्त्राः । स भगवान् भूभारस्य संहृत्यर्थं संहरणार्थं इह भूमाववतीर्णः ।।१००।।

**जनार्दनीया–** इत्थं उक्तरीत्या । उपात्तं श्रुतं वाक्यं येन स तथा । राजा स कृष्णः इह भुवि भुवः भारस्य भाररूपदैत्यसङ्घस्य, संहृतिकृते संहारार्थं अवतीर्णः अवतारं च कृतवानिति जगाद ।।१००।।

**चट्टि–** इत्थं उक्तरीत्या समस्तकुरुसन्निधौ मध्ये उपात्तं श्रुतं वाक्यं येन स तथा । राजापि पुत्रवशगस्सन् वचनं जगाद । किमिति? सर्वं भगवतः वशे वर्तत इति शेषः । वयं न स्वतन्त्राः । स भगवान् कृष्णः भुवः भारस्य भाररूपदैत्यसङ्घस्य संहृतिकृते संहारार्थं इह भुवि अवतीर्णः अवतारं कृतवानिति जगादेति सम्बन्धः ।।१००।।

**एवं निशम्य वचनं स तु यादवोऽस्य**
**ज्ञात्वा मनोऽस्य कलुषं तव नैव पुत्राः ।**
**इत्यूचिवान् सह मरुत्तनयार्जुनाभ्यां**
**प्रायात् पुरीं च सहदेवयुतः स्वकीयाम् ।।१०१।।**

**वेदाङ्गतीर्थीया–** तव पुत्रा नैव सन्त्येव निश्चितनाशाः इत्यर्थः ।।१०१-१०४।।

**सत्याभिनवतीर्थीया–** तत्रैव एवं निशम्य...इति श्लोकः 'तव नैव पुत्रा इत्यूचिवान्' इत्यस्य दुर्योधनाद्याः तव पुत्राः नैव किन्तु शत्रव इति ऊचिवान् इत्यर्थः । एतेन तव पुत्रा नैव किन्तु शत्रवः इति वक्तव्यम् । किन्तु 'शत्रवः' इत्यस्य अभावात् न्यूनतेति शङ्कानवकाशः । किन्तु 'शत्रवः' इत्यस्य शेष इत्यङ्गीकारात् ।।१०१।।

**वरदराजीया–** अस्य धृतराष्ट्रस्य वचनं श्रुत्वा, अस्य धृतराष्ट्रस्य कलुषं दुष्टमनो ज्ञात्वा तव पुत्रा नैव, भीमेनैव मरिष्यन्तीत्यूचिवान् । अक्रूरो मरुत्तनयार्जुनाभ्यां सह सहदेवयुतश्च स्वकीयां पुरीं मधुरां प्रायात् ।।१०१।।

**जनार्दनीया–** स यादवोऽक्रूरः अस्य राज्ञः एतद्वचनं छद्मरूपवाक्यं निशम्य, अस्य राज्ञः कलुषं कुटिलं मनः ज्ञात्वा, तव पुत्राः नैव पुत्राभावः स्यादेवेति ऊचिवान् अक्रूरः । पुरीं मधुरां प्रति ।।१०१।।

**चट्टि–** स यादवोऽक्रूरः अस्य राज्ञः एतद्वचनं छद्मरूपकार्यं निशम्य, अस्य राज्ञः कलुषं कुटिलं ज्ञात्वा तव पुत्राः नैव पुत्राभावः स्यादेवेति ऊचिवान् सन् मरुत्तनयार्जुनाभ्यां सह सहदेवेन युतस्सन् स्वकीयां पुरीं मधुरां प्रति प्रायात् ।।१०१।।

**ज्ञानं तु भागवतमुत्तममात्मयोग्यं भीमार्जुनौ भगवतः समवाप्य कृष्णात् ।**
**तत्रोषतुर्भगवता सह युक्तचेष्टौ सम्पूजितौ यदुभिरुत्तमकर्मसारौ ।।१०२।।**

**वरदराजीया–** भागवतं भगवत्सम्बन्धि, उत्तमं सर्वाधिकम्, आत्मयोग्यं स्वस्वयोग्यं ज्ञानं भगवतः कृष्णात् समवाप्य तत्र मधुरायां भगवता सह ऊषतुः । युक्तचेष्टौ युक्ताः सह क्रियमाणाः चेष्टा व्यापारा ययोस्तौ । उक्तानि कर्माणि येषां ते तथा तेषु सारभूतौ उत्तमकर्मणां सारौ वा ।।१०२।।

**अनन्तभट्टीया–** ।। **उत्तमेति** ।। उत्तमानां कर्मणां सारो येषामिति विग्रहः ।।१०२।।

**जनार्दनीया–** आत्मयोग्यं स्वस्य योग्यज्ञानम् । भगवता सह युक्ता स्वयोग्या, चेष्टा व्यापारो ययोस्तौ । उत्तमकर्मणा सारौ श्रेष्ठौ । तत्र मधुरायां ऊषतुः ।।१०२।।

**ताम्रपर्णीया–** युक्तचेष्टावनिषिद्धचेष्टौ ।।१०२-१०३।।

**चट्टि–** उत्तमानि कर्माणि येषां ते तथा तेषु सारौ श्रेष्ठौ भीमार्जुनौ उत्तमं आत्मयोग्यं स्वस्वयोग्यं भागवतं भगवत्सम्बन्धि ज्ञानम् । भगवतः कृष्णात् समवाप्य युक्ताः चेष्टा व्यापाराः ययोस्तौ तथाभूतौ यदुभिः सम्पूजितौ सन्तौ भगवता सह तत्र मधुरायां ऊषतुः ।।१०२।।

**प्रत्युद्यमो [1]भगवतापि भवेद् गदायाः शिक्षा यदा भगवता क्रियते नचेमम् ।**
**कुर्यामिति स्म भगवत्समनुज्ञयैव रामादशिक्षदुरुगायपुरः स भीमः ।।१०३।।**

**वादिराजीया–** 'प्रत्युद्यमो भगवतोऽपि' इत्यत्र भगवतस्सकाशात् यदा यदा शिक्षा क्रियते तदा प्रत्युद्यमोऽपि भवेत् । भगवन्तं प्रति मयापि गदाप्रहारोद्यमः कर्तव्यः स्यात् । अभ्यासस्य ताडनप्रतिताडनरूपत्वादिति भावः । अतः भगवता सह इमं प्रत्युद्यमं न कुर्याम् ।।१०३।।

**सत्याभिनवतीर्थीया–** तत्रैव प्रत्युद्यमो भगवता... इति श्लोके 'प्रत्युद्यमो भगवताऽपि भवेत्' इत्यस्य भगवता उद्यमे कृते प्रत्युद्यमोऽपि कार्यो भवेदित्यर्थः । एतेन 'भगवता' इत्येतत् अनन्वितमिति दूषणं निरस्तम् । 'उद्यमे कृते' इति अध्याहृतेन अन्वयस्य उक्तत्वात् ।।१०३।।

**वरदराजीया–** यदा गदायाः शिक्षा भगवता क्रियते तदा भगवता प्रत्युद्यमो प्रत्युद्धरणं भवेत् । इमं भगवतो प्रत्युद्यमं न कुर्यामिति बुद्ध्या भगवतः कृष्णस्य समनुज्ञयैव उरुगायस्य कृष्णस्य पुरः पुरस्तात् सः गदायुद्धमशिक्षत् ।।१०३।।

**अनन्तभट्टीया–** प्रत्युद्यमः आभिमुख्येनोद्धरणम् । इमं प्रत्युद्यमम् ।।१०३।।

**जनार्दनीया–** यदा भगवता कृष्णेन सह गदायाः शिक्षा क्रियते, तदा भगवता प्रत्युद्यमोऽपि अभिमुखेनोद्धरणमपि भवेत् । अतः इमं प्रत्युद्यमं भगवता सह न कुर्यामिति बुध्या स भीमः भगवतः समनुज्ञयैव उरुगायस्य उत्तमश्लोकस्य कृष्णस्य पुरः अग्रे । 'स्यात् पुरः पुरतोऽग्रतः' इत्यमरः । रामात् अशिक्षत् । गदाशिक्षामिति शेषः ।।१०३।।

**भावचन्द्रिका–** उत्तमानुत्तमगुरुद्वयप्रसक्तौ उत्तमे बाधकादनुपपत्तौ तदनुग्रहपूर्वकानुज्ञया अनुत्तमरामप्राप्तिः स्यादित्याह– **भगवदिति** ।।१०३।।

**चट्टि–** यदा भगवता श्रीकृष्णेन सह गदायाः शिक्षा मया क्रियते, तदा भगवता प्रत्युद्यमोऽपि अभिमुखेन गदायाः प्रत्युद्धरणमपि भवेत् । अतः इमं प्रत्युद्यमं भगवता सह न कुर्यामिति बुध्या स भीमः भगवतः श्रीकृष्णस्य समनुज्ञयैव उरुगायस्य उत्तमश्लोकस्य श्रीकृष्णस्य पुरः अग्रे रामात् अशिक्षत् । गदाशिक्षामिति शेषः ।।१०३।।

**रामोऽपि शिक्षितमरीन्द्रधरात्[2] पुरोऽस्य**
**भीमे ददावथ वराणि हरेरवाप ।**

---

१. 'भगवतोऽपि' इति वादिराजतीर्थपाठः । २. 'सर्वं तदुपजह्राते गुरवे रामकेशवौ । गदापरिघयुद्धे च सर्वास्त्रेषु च केशवः । परमां मुख्यतां प्राप्तः सर्वलोकेषु विश्रुतः ।।' इति सभापर्वणि ५४.१४ ।

**अस्त्राणि शक्रतनयः सहदेव आर**
**नीतिं तथोद्धवमुखात्[१] सकलामुदाराम्** **॥१०४॥**

**व्यासतीर्थीया–** अरीन्द्रधरात् भगवत्प्रसादात् । उदारां धर्माविरोधिनीम् ॥१०४॥

**वादिराजीया–** सान्दीपिनीपुरतः लीलयाऽन्योन्यं गदाभ्यासकरणसमये अरीन्द्रधरशिक्षितं नूतनतया शिक्षितं अभ्यासं अस्य कृष्णस्य पुरः भीमे ददाविति सम्बन्धः । पराणि उत्तमानि ॥१०४॥

**मधुसूदनीया–** सहदेवः उद्धवमुखात् सकलां समस्तां उदारामुत्कृष्टां नीतिमार प्रापेत्यर्थः ॥ ॥१०४-११२॥

॥ इति श्रीमद्विद्याधीशतीर्थश्रीपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे चतुर्दशोऽध्यायः ॥

**वरदराजीया–** रामो बलरामोऽपि अरीन्द्रधरात् चक्रधरात् सुशिक्षितं गदायुद्धप्रकारं भीमे ददौ । अथानन्तरं शक्रतनयोऽर्जुनः पराणि उत्तमानि अस्त्राणि हरेः कृष्णादवाप । सहदेवोऽपि परां उत्तमां नीतिं उद्धवादाप प्राप ॥१०४॥

**अनन्तभट्टीया–** अरीन्द्रधरः कृष्णः । उदारां धर्माविरोधिनीम् ॥१०४॥

**जनार्दनीया–** रामोऽपि अरीन्द्रधरात् सुदर्शनधरात् कृष्णात् शिक्षितं गदाशिक्षाविशेषं अस्य कृष्णस्य पुरः भीमे भीमाय ददौ । अथ शक्रतनयोऽर्जुनः पराणि उत्तमानि । तथा सहदेवः उद्धवमुखात् सकलां उदारां उत्तमां नीतिं नयं आर प्राप ॥१०४॥

**ताम्रपर्णीया–** ॥ **अरीन्द्रधरादिति** ॥ न च रामस्याग्रजत्वात् कथं कृष्णाद् गदाशिक्षेति चेन्न । लीला छलेनोपपत्तेः । व्यासतीर्थीये तु 'अरीन्द्रधराद्भगवत्प्रसादात्' इत्युक्तम् ॥१०४-११०॥

**भावचन्द्रिका–** गदाभ्याससमये अरीन्द्रधराच्छिक्षितम् । तदुक्तं हरिवंशे [२.३३.२५-२६]– 'गदापरिघयुक्तेषु सर्वशास्त्रेषु तावुभौ । अचिरान्मुख्यतां प्राप्तौ सर्वलोकधनुर्भृताम् ॥ ततः सान्दिपनेः पुत्रं तद्रूपवयसं तदा ॥' इति ॥१०४॥

**चट्टि–** रामः बलभद्रोऽपि अरीन्द्रधरात् श्रीकृष्णात् शिक्षितं गदाशिक्षाविशेषं अस्य कृष्णस्य पुरः भीमे भीमाय ददौ । अथ अनन्तरं शक्रतनयोऽर्जुनः पराणि उत्तमानि अस्त्राणि हरेः श्रीकृष्णादवाप । तथा सहदेवः उद्धवमुखात् सकलां उदारां उत्तमां नीतिं आप प्राप ॥१०४॥

---

१. 'नीतिमान् सकलां नीतिं विबुधाधिपतेस्तदा । अवाप्य सहदेवोऽपि भ्रातृणां ववृते वशे ॥' इति आदिपर्वणि.१३९.१८ । अत्र विबुधाधिपतेः देवाचार्याद् द्रोणरूपादिति नीलकण्ठः ।

**कृष्णोऽथ चौपगविमुत्तमनीतियुक्तं सम्प्रेषयन्निदमुवाच ह गोकुलाय ।**
**दुःखं विनाशय वचोभिररे मदीयैर्नन्दादिनां विरहजं मम चाऽशु याहि ।।१०५।।**

**व्यासतीर्थीया–** अथ कथान्तरम् ।।१०५।।

**वेदाङ्गतीर्थीया–** अरे भोः ।।१०५-१०६।।

**वादिराजीया–** 'नन्दादिनाम्' इत्यत्र 'व्रीह्यादिभ्यश्च' इति सूत्रात् व्रीहिमान् व्रीहीतिवत् नन्दः आदिः येषां वर्तत इति नन्दादिन इति । अथवा नन्द आदिर्येषां गोपस्त्रीवृन्दानां तानि नन्दादीनि नन्दः आ समन्तात् दः दाता अन्नादिदाता एषां वर्तत इति नन्दादिन इति मतुबन्तं वा ।।१०५-१०६।।

**वरदराजीया–** अथ कृष्णः औपगविं उद्धवं गोकुलाय सम्प्रेषयत् । अरे उद्धव मदीयैः वचोभिः नन्दादीनां मम विरहजं शोकं च विनाशय ।।१०५।।

**अनन्तभट्टीया–** मम विरहजं मद्वियोगजातम् ।।१०५।।

**जनार्दनीया–** अथशब्दः कथान्तरद्योतकः कृष्णः औपगविं उपगवाख्ययादवापत्यं उद्धवं गोकुलाय सम्प्रेषयन् सन्, इदं उवाच । किमिति? अरे भो उद्धव! मदीयैः वचोभिः मम विरहाद्वियोगात् जातं नन्दादीनां दुःखं विनाशय । आशु याहि गच्छेति सम्बन्धः ।।१०५।।

**चट्टि–** अथ अनन्तरं श्रीकृष्णः उत्तमनीतियुक्तं औपगविं उपगवाख्ययादवापत्यं उद्धवं गोकुलाय सम्प्रेषयन् इदं उवाच । किमिति? अरे भो उद्धव! मदीयैः वचोभिः मम विरहाद्वियोगात् जातं नन्दादीनां दुःखं विनाशय । आशु याहि गच्छेति सम्बन्धः ।।१०५।।

**मत्तो वियोग इह कस्यचिदस्ति नैव**
**यस्मादहं तनुभृतां [1]निहितोऽन्तरेव ।**
**नाहं मनुष्य इति कुत्रच वोऽस्तु बुद्धिः**
**ब्रह्मैव निर्मलतमं प्रवदन्ति मां हि ।।१०६।।**

**वरदराजीया–** यतः मत्तः सकाशादिह लोके वियोगः कस्यचिदपि नैवास्ति । यस्मात् कारणात् अहं तनुभृतां देहिनां अन्तरेव विनिहितोऽस्मि । अहं मनुष्य इति वो युष्माकं कुत्रच कुत्रापि बुद्धिर्मास्तु माभूत् । निर्मलतमं ब्रह्मैव मां प्रवदन्ति वेदाः ।।१०६।।

**जनार्दनीया–** अहं तनुभृतां देहधारिणां अन्तः हृत्कमले निहितः स्थितो यस्मात् तस्मात् इह जगति कस्यचिद्देहिनः मत्तः मद्वियोगो नास्त्येव । अहं मनुष्य इति वः युष्माकं बुद्धिः कुत्रच कुत्रापि

१. 'निहितोऽत एव' इति चट्टिटिप्पण्यां पाठान्तरम् ।

नोऽस्तु न स्यात् । कुतः? हि यस्मात् निर्मलतमं अतिशुद्धं ब्रह्मैवेति मां प्रवदन्ति । वेदविदो गर्गाद्या इति शेषः । तस्मान्नोऽस्त्विति सम्बन्धः ।।१०६।।

**भावचन्द्रिका–** परीत्या सगुणब्रह्मेत्यत्र..आह– **निर्मलमिति** ।। अन्यत्र प्रमाणाभावादिति भावः ।।

**चट्टि–** यस्मात् अहं तनुभृतां देहधारिणां अन्तरे हृदये निहितः स्थितश्च । अत एवेति वा पदविभागः । तस्मात् इह जगति कस्यचिद्देहिनः मत्तः वियोगो नास्त्येव । अहं मनुष्य इति वः युष्माकं बुद्धिः कुत्र च कुत्रापि माऽस्तु माभूत् । कुतः? हि यस्मात् निर्मलतमं अतिशुद्धं ब्रह्मैवेति मां प्रवदन्ति । ज्ञानिनः इति शेषः ।।१०६।।

**पूर्वं यदा ह्यजगरो निजगार नन्दं सर्वे न शेकुरथ [१]तत्प्रविमोक्षणाय ।**
**मत्पादसंस्पर्शतः स तदाऽतिदिव्यो विद्याधरस्तदुदितं निखिलं स्मरन्तु ।।१०७।।**

**व्यासतीर्थीया–** 'त्वं ब्रह्म' इत्येतत्कथं तज्ज्ञापकमित्यत आह– **पूर्वमिति** ।।१०७।।

**वेदाङ्गतीर्थीया–** विद्याधरः अभूत् इति शेषः ।।१०७-११०।।

**वादिराजीया–** 'अजगरो निजगार' इत्यत्र 'गृ निगरणे' इति धातोः निजगार जग्राह ।। ।।१०७-११२।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां चतुर्दशोऽध्यायः ।।

**सत्याभिनवतीर्थीया–** तत्रैव पूर्वं यदाजगरो...इति श्लोकः । तस्यार्थः पूर्वं अजगरः यदा नन्दं निजगार तदा सर्वे तत् तस्य नन्दस्य मोक्षणाय । हि शब्दोऽवधारणे । न हि नैव शेकुः । अथ अनन्तरं सः अजगरः प्रकृष्टस्य सर्वोत्तमस्य । विशब्दः 'विः पक्षिपरमात्मनोः' इत्युक्तत्वात् परमात्मवाची लुप्तषष्ठ्यन्तश्च । विः परमात्मनः मत् इति भिन्नं पदम् । षष्ठ्याः पञ्चम्यादेशः । मत् मम संस्पर्शतः अतिदिव्यः विद्याधरः बभूव । तदुदितं विद्याधरोदितं निखिलं स्मरन्तु इति । एतेन 'तत्प्रविमोक्षणाय' इत्यत्र तन्मोक्षणायेत्यनेनैव पूर्णत्त्वात् प्र वी इत्येतत् व्यर्थं इति दूषणं परास्तम् । 'तत्' इति लुप्तषष्ठ्यन्तं भिन्नं पदं मोक्षणायेत्यनेन अन्वितम् । प्रवी इति भिन्ने पदे 'मत्' इतिपदेन अन्विते इति स्वीकरणात् ।।१०७।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्यभिनवयतिना विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां चतुर्दशोऽध्यायः ।।

---

१. 'तत्प्रतिमोक्षणाय' इति वरदराजीयपाठः ।

**वरदराजीया–** पूर्वं गोकुला[वास]दशायां यदा अजगरो नन्दं निजगार ग्रसितवान् तदा तस्य नन्दस्य प्रतिमोक्षणाय सर्वे न शेकुः । सोऽजगरः मत्पादसंस्पर्शतः अतिदिव्यो विद्याधरोऽभूत् । तेन विद्याधरेणोदितम् ॥१०७॥

**अनन्तभट्टीया–** सः अजगरः ॥१०७॥

**जनार्दनीया–** पूर्वं यदा अजगरः नन्दं निजगार गलितवान् । तस्य नन्दस्य, विमोक्षणाय सर्वे गोपाः न शेकुः । तदा मम पादसंस्पर्शतः सोऽजगरः अतिदिव्यः अत्युत्तमः विद्याधरोऽभूत् । तेन विद्याधरेण उदितं निखिलं स्मरन्तु ॥१०७॥

**चट्टि–** पूर्वं गोकुले अवस्थानसमये यदा अजगरः नन्दं निजगार गिलितवान् । तदा तस्य नन्दस्य प्रविमोक्षणाय सर्वे न शेकुः । सः अजगरः अथ मत्पादसंस्पर्शतः अतिदिव्यः विद्याधरः, अभवदिति शेषः । तेन विद्याधरेण उदितं उक्तं निखिलं स्मरन्तु ॥१०७॥

**पूर्वं स रूपमदतः प्रजहास विप्रान्**
**नित्यं तपःकृशतराङ्गिरसो विरूपान् ।**
**तैः प्रापितः सपदि सोऽजगरत्वमेव**
**मत्तो निजां तनुमवाप्य जगाद नन्दम् ॥१०८॥**

**वरदराजीया–** विद्याधरस्य अजगरत्वप्राप्तौ निमित्तमाह– **पूर्वमिति** ॥ स्वरूपस्य सौन्दर्यस्य मदेन नित्यं तपसा कृशतरान् अङ्गिरसो अत एव विरूपान् विप्रान् प्रजहास । विद्याधरश्च तैः विप्रैः सपदि अजगरत्वं प्रापितः मत्तः सकाशात् निजं विद्याधरतनुं अवाप्य नन्दं प्रति जगाद ॥१०८॥

**अनन्तभट्टीया–** सः विद्याधरः ॥१०८॥

**जनार्दनीया–** विद्याधरस्य अजगरत्वप्राप्तिः कुतः? इत्यत आह– **पूर्वमिति** ॥ पूर्वं स विद्याधरः रूपमदतः सौन्दर्यमदात् नित्यं तपसः तपश्चरणादित्यर्थः । कृशतरान् अतिशयेन कृशान् अङ्गिरसः अङ्गिरसगोत्रोत्पन्नान् अङ्गिरसःपुत्रान् विरूपान् विकाररूपान् विप्रान् प्रजहास । तैः विप्रैः सपदि शीघ्रं अजगरत्वं सर्पस्वरूपं प्रापितो विद्याधरः मत्त एव निजां तनुं विद्याधरस्वरूपं अवाप्य, नन्दं जगाद यत् तत् स्मरन्त्वित्यर्थः ॥१०८॥

**भावचन्द्रिका–** यदा देवदर्शनार्थं गताः वने शिविरं चक्रुः तदा प्रवृत्तमाह– **पूर्वमिति** ॥ **नन्दमिति** ॥१०८॥

**चट्टि—** विद्याधरस्याजगरत्वप्राप्तौ निमित्तमाह— **पूर्वमिति** ।। पूर्वं सः विद्याधरः रूपमदतः सौन्दर्यमदात् नित्यं तपसः तपश्चरणादित्यर्थः । कृशतरान् अतिशयेन कृशान् आङ्गिरसः अङ्गिरसः पुत्रान् विरूपान् विकृतरूपान् विप्रान् प्रजहास । तैः विप्रैः सपदि तत्क्षणे अजगरत्वं सर्पस्वरूपं प्रापितो सः विद्याधरः मत्त एव निजां तनुं विद्याधरस्वरूपं अवाप्य, नन्दं जगाद ।।१०८।।

**नायं नरो हरिरयं परमः परेभ्यो विश्वेश्वरः सकलकारण आत्मतन्त्रः ।**
**विज्ञाय चैनमुरुसंसृतितो विमुक्ता यान्त्यस्य पादयुगलं मुनयो विरागाः ।।**

**वरदराजीया—** किमिति? अयं कृष्णो न नरः किन्तु परमत्वादिविशेषणविशिष्टो हरिरेव । एनं कृष्णं विज्ञाय उरुसंसृतितः उग्रात् संसारात् विमुक्ताः सन्तो अस्य कृष्णस्य पादयुगलं यान्ति ।।१०९।।

**जनार्दनीया—** किमिति जगाद? इत्यत आह— **नायमिति** ।। अयं कृष्णः नरो न । किन्तु सकलानां सृष्ट्यादीनां कारणः हेतुः । विरागाः विरक्ताः मुनयः उरु उत्कृष्टं यथा भवति तथा । एनं विज्ञाय, संसृतितः संसाराद्विमुक्ताः सन्तः अस्य कृष्णस्य । उरुसंसृतित इत्येकं वा पदम् । उरुकालस्थसंसारात् ।।१०९।।

**चट्टि—** किमिति? अयं श्रीकृष्णः नरो न । किन्तु अयमात्मतन्त्रः स्वतन्त्रः सकलकारणः विश्वेश्वरः परेभ्यः परमः हरिरेव विरागाः विरक्ताः मुनयः उरु उत्कृष्टं यथा भवति तथा । एनं विज्ञाय संसृतितः संसाराद्विमुक्ताः सन्तः । उरुसंसृतितः इत्येकं वा पदम् । उरुकालस्थसंसारात् विमुक्ताः सन्तः अस्य श्रीकृष्णस्य पादयुगलं यान्ति । इति विद्याधरेण यदुदितं तत्स्मरन्त्विति पूर्वेण सम्बन्धः ।।१०९।।

**नन्दं यदा च जगृहे वरुणस्य दूतः**
**तत्रापि मां जलपतेर्गृहमाशु यान्तम् ।**
**सम्पूज्य वारिपतिराह विमुच्य नन्दं**
**नायं सुतस्तव पुमान् परमः स एषः ।।११०।।**

**वरदराजीया—** तत्रापि वरुणस्य दूतः एनं जगृहे । तत्रापि तदापि यान्तं मां सम्पूज्य अयं तव सुतो न भवति । किन्तु स एषः कृष्णः परमः पुमान् ।।११०।।

**जनार्दनीया—** वरुणस्य दूतः भृत्योऽसुरः स्नानकाले नन्दं यदा जगृहे, तत्रापि तदैव जलपतेः वरुणस्य गृहं यान्तं प्राप्तं मां वारिपतिः मां सम्पूज्य, नन्दं विमुच्य, हे नन्द इति शेषः । अयं कृष्णो तव सुतो न । किम् ? प्रसिद्धः परमः पुमान् उत्तमपुरुषो हरिः एषः कृष्णः इति यदाह तदपि स्मरन्त्वित्यर्थः ।।११०।।

**चट्टि–** वरुणस्य दूतः भृत्यो यदा स्नानार्थं गतं नन्दं जगृहे । तत्रापि तदैव जलपतेः वरुणस्य गृहं यान्तं प्राप्तं मां वारिपतिः वरुणः आशु सम्पूज्य नन्दं विमोच्य आह । किमिति । नन्द इति शेषः । अयं श्रीकृष्णः तव सुतो न । किन्तु? सः प्रसिद्धः परमः पुमान् उत्तमपुरुषो हरिः एषः श्रीकृष्णः इति यदाह तदपि स्मरन्त्वित्यर्थः ॥११०॥

**सन्दर्शितो ननु मयैव विकुण्ठलोको गोजीविनां स्थितिरपि प्रवरा मदीया ।**
**मानुष्यबुद्धिमपनेतुमजे मयि स्म तस्मान्मयि स्थितिमवाप्य शमं प्रयान्तु ॥**

**व्यासतीर्थीया–** त्वदधिष्ठितं लोकं प्रदर्शयेत्यर्थः । तेन मया ॥१११॥

॥ इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां चतुर्दशोऽध्यायः ॥

**वेदाङ्गतीर्थीया–** शमं दुःखशान्तिम् ॥१११-११२॥

॥ इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
तात्पर्यदीपिकायां चतुर्दशोऽध्यायः ॥

**वरदराजीया–** गोजीवनां विकुण्ठलोको मयैव सन्दर्शितः । मदीया प्रवरा स्थितिरपि सन्दर्शिता । उत अजे मयि मनुष्यबुद्धिमपनेतुं मयि स्थितिं निष्ठां शमः संसारोपशमः ॥१११॥

**अनन्तभट्टीया–** स्थितिरपि सन्दर्शिता ॥१११-११२॥

॥ इति श्रीमुष्णं अनन्ताचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
तन्त्रमालायां [सत्तत्त्वमालायां] चतुर्दशोऽध्यायः ॥

**जनार्दनीया–** मया विकुण्ठलोकं दर्शयेति प्रार्थितेन मया गोजीविनां गोपानां विकुण्ठलोकः सन्दर्शितो ननु । अजे मयि मानुष्यबुद्धिं अपनेतुं, प्रवरा अतिश्रेष्ठा मदीया स्थितिरपि वर्तमानमपि सन्दर्शिता यस्मात् तस्मात् मयि स्थितिं मनःस्थैर्यं अवाप्य, शमं दुःखशान्तिं प्रयान्तु ॥१११॥

**ताम्रपर्णीया–** प्रवरा स्थितिरणुत्वमहत्वादिरूपा । मयि स्थितिं ध्यानरूपाम् । शमं दुःखशान्तिम् ॥१११-११२॥

॥ इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां
प्रमेयमणिमालायां (प्रमाणमालायां) चतुर्दशोऽध्यायः ॥

**भावचन्द्रिका—** [सङ्कोच]द्वादश्यामकाले स्नानं कुर्वन्तं वरुणलोके महदाश्चर्यं दृष्ट्वा गतो नन्दः गोपैः सह स्वलोकदर्शनं ययाचे । अक्रूरो यत्र शेषशायिनं ददर्श ब्रह्महृदे स्नानान्तरं दिव्यदृष्ट्या इहैव स्थितान् सन्दर्शितः ।।११२।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावचन्द्रिकायां चतुर्दशोऽध्यायः ।।

**चट्टि—** मया विकुण्ठलोकं दर्शयेति गोपैः प्रार्थितेन मया गोजीविनां गोपानां विकुण्ठलोकः सन्दर्शितो ननु । अजे मयि मानुष्यबुद्धिं अपनेतुं प्रवरा अतिश्रेष्ठा मदीया स्थितिरपि सन्दर्शिता यस्मात् तस्मात् मयि स्थितिं निष्ठां अवाप्य शमं दुःखशान्तिं प्रयान्तु ।।१११।।

**श्रुत्वोद्धवो निगदितं परमस्य पुंसो**
**वृन्दावनं प्रति ययौ वचनैश्च तस्य ।**
**दुःखं व्यपोह्य निखिलं पशुजीवनानां**
**आयात् पुनश्चरणसन्निधिमेव विष्णोः ।।११२।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये चतुर्दशोऽध्यायः ।।

**वरदराजीया—** उद्धवः परमस्य पुंसो निगदितं वचनं श्रुत्वा तस्य कृष्णस्य वचनैः पशुजीवनानां अखिलदुःखं व्यपोह्य पुनः परावृत्य विष्णोः कृष्णस्य चरणयोः सन्निधिमेव आयादित्यशेषमिति मङ्गलम् ।।११२।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुबोधिन्यां चतुर्दशोऽध्यायः ।।

**जनार्दनीया—** पुंसः पुरुषात् निगदितं उक्तं श्रुत्वा, ययौ । तस्य कृष्णस्य वचनैः पशुजीवनानां नन्दादिगोपानां दुःखं व्यपोह्य परिवृत्य, पुनः परावृत्य, विष्णोः श्रीकृष्णस्य चरणयोः सन्निधिं समीपं आयात् आययौ ।।११२।।

यं गङ्गाजमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमःस्वाध्यायसम्प्रयुतात् ।
पूर्तिं तस्य कृतौ चतुर्दश इहाध्यायः सतां मोददः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां चतुर्दशोऽध्यायः ।।

**चट्टि–** उद्धवः परमस्य पुंसः श्रीकृष्णस्य निगदितं वचनं श्रुत्वा वृन्दावनं प्रति ययौ । तस्य श्रीकृष्णस्य वचनैः पशुजीविनां नन्दादिगोपानां निखिलं दुःखं व्यपोह्य परिहृत्य विष्णोः श्रीकृष्णस्य चरणयोः सन्निधिमेव आयात् आययौ ।।११२।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां चतुर्दशोऽध्यायः ।।

★★★



# अथ पञ्चदशोऽध्यायः

**एवं प्रशासति जगत्पुरुषोत्तमेऽस्मिन् भीमार्जुनौ तु सहदेवयुतावनुज्ञाम् ।**
**कृष्णादवाप्य वर्षत्रितयात् पुरं स्वमाजग्मतुर्हरिसुतेन [1]विशोकनाम्ना ॥१॥**

**व्यासतीर्थीया–** गोकुले उद्धवप्राप्त्यनन्तरकथामाह– **एवमिति** ॥१-३॥

**वरदराजीया–** ॥ **एवमित्यादिना** ॥ जगत् प्राशासति पालयति सति भीमार्जुनौ वर्षत्रितयात्परं कृष्णादनुज्ञामवाप्य पूर्वं अक्रूरेण सह [आगत्य] तत्र वर्षत्रयं स्थित्वा पुनः स्वपुरं विशोकनाम्ना हरेः कृष्णस्य सुतेन सह जग्मतुरित्यर्थः ॥१॥

**जनार्दनीया–** अस्मिन्नध्याये भीमप्रभावमनुवर्णयन् पाण्डवकथां निरूपयति– **एवमित्यादिना** ॥ एवं स्वभक्तदुःखपरिहारादिप्रकारेण अस्मिन् कृष्णे । वर्षाणां त्रितयं तथा तस्मात् त्रिवत्सरात् परं कृष्णादनुज्ञामवाप्य, हरेः कृष्णस्य, सुतेन विशोकनाम्ना सह स्वं स्वकीयं पुरं हस्तिनपुरं प्रत्याजग्मतुः ॥१॥

**ताम्रपर्णीया–** एवं प्रशासति अज्ञानादीन् परिहृत्य प्रशासति सति ॥१-४॥

**चट्टि–** अस्मिन्नध्याये भीमप्रभावं वर्णयन् पाण्डवकथां निरूपयति– **एवमित्यादिना** ॥ एवं स्वभक्तदुःखपरिहारादिरूपेण पुरुषोत्तमे अस्मिन् श्रीकृष्णे जगत् प्रशासति सति सहदेवयुतौ भीमार्जुनौ वर्षाणां त्रितयं तस्मात् त्रिवत्सरात् परं श्रीकृष्णादनुज्ञामवाप्य विशोकनाम्ना हरेः श्रीकृष्णस्य सुतेन सह स्वं स्वकीयं पुरं हस्तिनपुरं प्रत्याजग्मतुः ॥१॥

**सैरन्ध्रिकोदरभवः स तु नारदस्य**
**शिष्यो वृकोदररथस्य बभूव यन्ता ।**

---

१. 'त्रिवक्राया विशोकश्च पुत्रः कृष्णमनुव्रतः । आसीच्छिष्यो नारदस्य ददौ चित्तमखण्डितम् ॥ येनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् । यत्र स्त्रीशूद्रदाशानां संस्कारो वैष्णवः स्मृतः ॥' इति भागवते.१०३.२१-२२ ।

**या पिङ्गलाऽन्यभव आत्मनि संस्थितं तं**
**संस्मृत्य कान्तमुरुगायमभूत् त्रिवक्रा ॥२॥**

**वेदाङ्गतीर्थीया–** सैरन्ध्री त्रिवक्रा अन्यभवे पूर्वजन्मनि या पिङ्गला पिङ्गलनामवेश्या आत्मनि संस्थितं स्वहृदयस्थं उरुगायं हरिं कान्तं संस्मृत्य सुचित्रा त्रिवक्रा अभूत् । पूर्वजन्मनि कान्तत्वेन भगवच्चिन्तनात् अस्मिन् जन्मनि भगवत्सङ्गः अभूदिति भावः ॥२॥

**सत्याभिनवतीर्थीया–** सैरन्ध्रिकोदरभवस्स तु नारदस्य इति श्लोके 'संस्मृत्य कान्तमुरुगायमभूत् त्रिवक्रा' इत्यस्य उरुगायं कान्तं संस्मृत्य मधुरायामुत्पन्ना अभूत् । दुष्कर्मवशात् त्रिवक्रा अभूदित्यर्थः । एतेन त्रिवक्रत्वस्य दुष्कर्मफलत्वेन कान्तत्वप्रकारकोरुगायस्मरणफलत्वाभावात् 'उरुगायं कान्तं संस्मृत्य त्रिवक्रा अभूत्' इति कथनमयुक्तमिति दूषणं निरस्तम् । 'उरुगायं कान्तं संस्मृत्य' इत्यस्य 'त्रिवक्रा अभूत्' इत्यनेनान्वय इत्यनङ्गीकारात् । 'दुष्कर्मवशात्' इत्यस्य शेषेण दुष्कर्म त्रिवक्रत्वनिमित्तमित्युच्यते इति स्वीकरणात् । जन्मान्तरे कान्तत्वेन उरुगायस्मरणं कृतं चेत् त्रिवक्रत्वं कथमागतमित्याशङ्कापरिहारार्थं दुष्कर्मवशात् त्रिवक्रा अभूदित्युक्तम् ॥२॥

**मधुसूदनीया–** ॥ **वृकोदररथस्येति** ॥ वृकः अङ्गुष्ठप्रमाणकोऽनलः उदरे जठरे यस्य स वृकोदरः तस्येत्यर्थः । 'तीक्ष्णश्चैव प्रचण्डश्च वृको नामानलो मतः । स पाण्डवस्य जठरे तेन भीमो वृकोदर ॥' इति वचनात् । एतेन 'वृकवत् सालावृकवत् उदरं यस्य' इति तु निरस्तम् । अप्रामाणिकत्वात् । एवं धर्मराजादीनामपि इन्द्रसेनादयो सारथिनो ज्ञातव्याः । तदुक्तम्– 'इन्द्रसेनो विशोकश्च द्रुमश्चार्जुनसारथिः। आद्याहरणे युक्ताः सन्तु मत्प्रियकाम्यया ॥' इति सभापर्वणि [३६.३०] ॥२-३॥

**वरदराजीया–** स तु विशोकः सैरन्ध्रिकायाः कुब्जायाः उदरे भवः, नारदस्य शिष्यः अत एव वृकोदरस्य यन्ता सारथिर्बभूव । सैरन्ध्रिका पूर्वं केत्यतत आह– **या इति** ॥ अन्यभावे पूर्वजन्मनि या पिङ्गला नाम वेश्या सा आत्मनि संस्थं उरुगायं कान्तं संस्मृत्य अत्र त्रिवक्रा कुब्जा नामाभूत् ॥२॥

**भावविवृति–** ॥१॥ वृकोदर इत्यत्र वृको नामाग्निरुदरे यस्य स तथा । तदुक्तम्– 'सुतीक्ष्णश्च प्रचण्डश्च वृको नामानलो मतः । स पाण्डवस्य जठरे तेन भीमो वृकोदर ॥' इति ॥२-४॥

**अनन्तभट्टीया–** अन्यभवे अन्यस्मिन् जन्मनि ॥२॥

**जनार्दनीया–** विशोकः कस्यां जातः? इत्यत आह– **सैरन्ध्रिकेति** ॥ सैरन्ध्रिकायाः त्रिवक्रायाः उदराद्गर्भादित्यर्थः, भवः उत्पत्तिर्यस्य स तथा । 'सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका' इत्यमरः । स विशोकः । यन्ता सारथिः । सैरन्ध्रिकायाः पूर्वस्वरूपमाह– **येति** ॥ या पिङ्गला पिङ्गलानाम्नी

गणिका अन्यभवे पूर्वजन्मनि आत्मनि स्वस्मिन् हृत्कमल इत्यर्थः । संस्थितं उरुगायं उत्तमश्लोकम् । कान्तमिति हेतुगर्भविशेषणम् । पतित्वेनेत्यर्थः । संस्मृत्य, गणिकादेहं विहायेति वाक्यशेषः । त्रिवक्रा अभूत् । तस्मात् कृष्णसमागमोऽभूदिति भावः ।।२।।

**अतिविशद–** सैरन्ध्रिकोदरभव इति 'सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका' इत्यमरः । 'या पिङ्गलान्यभव आत्मनि संस्थितं तं संस्मृत्य कान्तमुरुगायमभूत् त्रिवक्रा' इत्यत्र उरु गायं गायनं यस्यासौ उरुगायस्तम् । उरु गायतीति उरुगाय इति वा । गोपालकृष्णं संस्मृत्य त्रिवक्राऽभूत् । एतदुक्तं भवति । गोपालकृष्णस्य वेणुवादनसमये त्रिवक्रत्वात् तच्चिन्तयेयमपि त्रिवक्रा अभूत् । त्रिवक्रात्वेन भवने पूर्वकर्मसहिते तच्चिन्तनं कारणमिति उरुगायमिति पदेनैव तया गोपालकृष्णस्मरणं कृतमिति ज्ञायते । अन्यथा नारायणमित्याद्यवक्ष्यत् ।।२।।

**भावचन्द्रिका–** ।।१।। तं वेणुं नादयन्तं उरुगायं कृष्णम् । [स्वदोषवशात्] त्रिवक्रा । कृष्णोपासनया तेन सङ्गता इति भावः ।।२।।

**चट्टि–** विशोकः कस्यां जात? इत्यत आह– **सैरन्ध्रिकेति** ।। सैरन्ध्रिकायाः त्रिवक्रायाः उदरात् गर्भात् भवः उत्पत्तिर्यस्य स तथा । नारदस्य शिष्यः सः विशोकः वृकोदररथस्य यन्ता सारथिः बभूव । वृकः अङ्गुष्ठप्रमाणको अनलः उदरे यस्य सः वृकोदरः तस्येत्यर्थः । 'तीक्ष्णश्चैव प्रचण्डश्च वृको नामानलो मतः । स पाण्डवस्य जठरे तेन भीमो वृकोदर ।।' इति वचनात् वृकोदरशब्दार्थो ज्ञेयः । सैरन्ध्रिकायाः पूर्वस्वरूपमाह– **या इति** ।। अन्यभवे पूर्वजन्मनि या पिङ्गला पिङ्गलानाम्नी गणिका आत्मनि स्वस्मिन् हृत्कमल इत्यर्थः । संस्थितं उरुगायं उत्तमश्लोकम् । कान्तमिति हेतुगर्भविशेषणम् । पतित्वेनेत्यर्थः । संस्मृत्य, गणिकादेहं विहायेति वाक्यशेषः । त्रिवक्रा अभूत् । तस्मात् श्रीकृष्णसमागमोऽभूदिति भावः ।।२।।

**तं पञ्चरात्रविदमाप्य सुसारथिं स भीमो मुमोद पुनराप परात्मविद्याम् ।**
**व्यासात् परात्मत उवाच च [1]फल्गुनादिदेवेषु सर्वविजयी परविद्ययैषः।।३।।**

**वेदाङ्गतीर्थीया–** फल्गुनादिदैवेषु अर्जुनादिदेवावतारेषु । परविद्यया भगवत्तत्त्वविद्यया सर्वविजयी सकलदेवादिविजयी सकलदेवादिविजयी ।।३।।

**वरदराजीया–** तं पञ्चरात्रागमविदं अत एव सुसारथिं अवाप्य व्यासाख्यात् परमात्मनः सकाशात् परमात्मनो विद्यां पुनरवाप्य फल्गुनादिदेवेषु परमात्मविद्यामुवाच ।।३।।

---

१. 'फल्गुणादिदैवेषु' इति वेदाङ्गतीर्थीयपाठः ।

**जनार्दनीया–** पञ्चरात्रविदं पञ्चरात्रागमवेत्तारं विशोकम् । पुनः कृष्णात् प्राप्ततत्त्वविद्यापेक्षया पुनः परमात्मतः उत्तमस्वरूपात् व्यासात् परात्मविद्यां परतत्वविद्यां आप । परविद्यया सर्वविजयी एषः भीमः स्वयं फल्गुनादिदेवेषु देवावतारेषु उवाच उपदिदेश ॥३॥

**भावचन्द्रिका–** ॥ **पञ्चरात्रविदमिति** ॥ 'स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता । एकदेशे परोक्ते तु नतु ग्रन्थपुरस्सरम् ॥' इत्युक्तमिति [सू.भा.१.१.१] चेन्न । अपशूद्राधिकरणे 'विदुरादीनामुत्पन्न-ज्ञानित्वात् कश्चिद्विशेषः' [सू.भा.१.३.३८] इत्युक्तत्वेन न विरोध इति ज्ञेयम् ॥३॥

**चट्टि–** सः भीमः पञ्चरात्रविदं पञ्चरात्रागमवेत्तारं तं विशोकं सुसारथिमाप्य मुमोद । पुनः श्रीकृष्णात् प्राप्तविद्यापेक्षया पुनः परमात्मतः उत्तमस्वरूपात् श्रीव्यासात् परात्मविद्यां परतत्वविद्यां आप । परविद्यया सर्वविजयी एषः भीमः स्वयं फल्गुनादिदेवेषु देवावतारेषु उवाच उपदिदेश ॥३॥

**सर्वानभागवतशास्त्रपथान् विधूय मार्गं चकार स तु वैष्णवमेव शुभ्रम् ।**
**क्रीडार्थमेव विजिगाय तथोभयात्मयुद्धे बलं च करवाक्प्रभवेऽमितात्मा ॥४॥**

**व्यासतीर्थीया–** अमितं अपरिमितं आत्मस्वरूपं यस्य स तथोक्तः । अपरिमिततत्वज्ञानवानित्यर्थः॥४॥

**वेदाङ्गतीर्थीया–** तदेवाह– **सर्वानिति** ॥ अमितात्मा अमितं अपरिमितं आत्मा स्वरूपं बुद्धिः यस्य सः तथोक्तः । अपरिमितबलस्वरूपत्वात् करप्रभवे युद्धे जिगाय । अपरिमितबुद्धित्वात् वाक्प्रभवे युद्धे जिगाय इत्यमितात्मेति हेतुगर्भविशेषणम् ॥४॥

**वादिराजीया–** ॥१-३॥ 'बलं च करवाक्प्रभवे' इत्यत्र करेण वाचा प्रभवो यस्य तस्मिन् । उभयात्मके वाग्युद्धे च । अर्शवानर्श इतिवत् बलं बलवन्तं च जिगाय ॥४॥

**मधुसूदनीया–** ॥ **क्रीडार्थमेवेति** ॥ बलं बलभद्रम् ॥४-५॥

**वरदराजीया–** एषः भीमः परविद्यया सर्वविजयीत्येतद्दर्शयति– **सर्वानिति** ॥ अभागवतशास्त्राणां पाशुपतादीनां मार्गान् विधूय विनाश्य शुभ्रं शुद्धं वैष्णवमेव मार्गं चकार । करवाक्प्रभवे अत एवोभयात्मकयुद्धे वाग्युद्धे चेत्यर्थः । बलं बलभद्रं क्रीडार्थमेव विजिगाय यतो अमितात्मेत्यर्थः ॥४॥

**अनन्तभट्टीया–** शुभ्रं स्वच्छम् । बलं...॥४॥

**जनार्दनीया–** 'सर्वविजयी' इत्युक्तं विशदयति– **सर्वानिति** ॥ स भीमः सर्वान् अभागवतानां भगवदुत्कृष्टत्वाप्रतिपादकानां शास्त्राणां पथः मार्गान् विधूय निराकृत्य, शुभ्रं तु निरवद्यत्वेन अत्युत्तमं वैष्णवं विष्णूत्कर्षप्रतिपादकं मार्गं चकार । तथा अमितः ज्ञानबलादिना अपरिमितः, आत्मा स्वरूपं

यस्य स तथा भीमः । करवाग्भ्यां प्रभवो यस्य तत्तथा तस्मिन् । अत एव उभयात्मयुद्धे क्रीडार्थमेव वलं बलभद्रं विजिगाय जितवान् ।।४।।

**चट्टि–** 'सर्वविजयी' इत्युक्तं विशदयति– **सर्वानिति** ।। स भीमः सर्वान् अभागवतानां भगवत्सर्वोत्तमत्वाप्रतिपादकानां पाशुपतादिशास्त्राणां पथान् मार्गान् विधूय निराकृत्य, शुभ्रं निरवधिकत्वेन अत्युत्तमं वैष्णवं विष्णुसर्वोत्तमत्वप्रतिपादकं मार्गमेव चकार । तथा अमितः ज्ञानबलादिना अपरिमितः आत्मा स्वरूपं यस्य स तथा भीमः करवाग्भ्यां प्रभवे अत एव उभयात्मकयुद्धे क्रीडार्थमेव वलं बलभद्रं जिगाय ।।४।।

**नित्यप्रभूतसुशुभप्रतिभोऽपि विष्णोः**
**श्रुत्वा परां पुनरपि प्रतिभामवाप ।**
**को नाम विष्ण्वनुपजीवक आस यस्य**
**नित्याश्रयादभिहिताऽपि रमा सदा श्रीः ।।५।।**

**व्यासतीर्थीया–** सुशुभा यथार्थाः । ननु नित्यप्रभूतसुशुभप्रतिभश्चेत् पुनः कस्माद्विष्णुरूपजीव्यः [इत्यत आह]– **क इति** ।। [विष्ण्वनुपजीवकः] को नाम आस? न कोऽपीत्युक्तं अर्थं कैमुत्यन्यायेन समर्थयते– **यस्येति** ।। रमापि यस्य नित्याश्रयात् सदा श्रीरित्यभिहिता ।।५।।

**वेदाङ्गतीर्थीया–** ननु नित्यप्रभूतप्रतिभश्चेत् पुनः कस्मात् विष्णुः उपजीवनं कृतः इत्यत आह– **क इति** ।।५।।

**वादिराजीया–** रमाऽपि यस्य नारायणस्य नित्याश्रयात् नित्यं वक्षसि आश्रयात् सदा श्रीरित्यभिहिता आस तस्येत्यन्वयः ।।५-१२।।

**वरदराजीया–** नित्यं प्रभूता सुशुभा [प्रतिभा] यस्य सः विष्णोः सकाशात् श्रुत्वा परां प्रतिभां पुनरवाप । विष्ण्वनुपजीवकः विष्णुं अनुपजीव्य च वर्तमानः कः न कोऽपि आस । रमापि नित्याश्रयात् सदा श्रीरित्यभिहिता ।।५।।

**भावविवृतिः–** नित्यप्रभूतशुशुभप्रतिभोऽपि ...इत्यत्र प्रतिभाशब्देन स्वरूपा बाह्या च ग्राह्या । स्वरूपविवक्षया नित्या अभिव्यक्ता सुशुभा अज्ञानाद्यसाहित्येन यथार्थप्रतिभा स्वरूपज्ञानं यस्य स तथेत्यर्थः । तदुक्तम्–'अनादिभक्तिर्देवानां क्रमाद्वृद्धिं गतैव सा । अपरोक्षदृशेर्हेतुः मुक्तिहेतुश्च सा पुनः ।। सैवानन्दस्वरूपेण नित्या मुक्तेषु तिष्ठति ।।' इति [म.ता.नि.१.११४-११५]। बाह्यप्रतिभा तु नित्या अविच्छिन्नप्रवाहभूता क्रमादामुक्तेर्व्यक्त्यतिशयोपेता । 'प्रवर्धतां भक्तिरलं क्षणे क्षणे',

[म.ता.नि.८.२४८] 'सदा प्रवर्धमानया तया रमेऽहमञ्जसा' [म.ता.नि.९.६९] इत्युक्तेः । एतादृशोऽपि भीमः कृष्णव्यासाभ्यां श्रुत्वा पुनः प्रतिभामवाप । वेदेतिहासाद्यनुक्तसम्प्रदायं प्रापेत्यर्थः । तदुक्तम्– 'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि । सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायगताश्च ये ।।' [गी.भा.३.४२] 'ब्रह्मा सर्वगुणैश्चैव' [अनु.३.३.विद्याधिकरण] इत्यादि । उक्तश्चानुव्याख्याने– 'दोषाभावाश्च ये वेदैरुदिता अविहाय तान् । अनुक्ता अपि च ग्राह्या महातात्पर्यशक्तितः ।।' इति [अनु.३.४.उभयलिङ्गाधिकरण] ।।५-३६।।

**अनन्तभट्टीया–** यथार्थत्वमेव स्वप्रतिभायाः सुशुभत्वम् । रमा श्रीरित्यभिहिता ।।५।।

**जनार्दनीया–** नित्यं प्रभूता उत्कृष्टा, सुशुभा अत्युत्तमा, प्रतिभा सामर्थ्यं यस्य स तथा । तादृशोऽपि भीमः विष्णोः कृष्णव्यासात्मनो हरेः सकाशात् परां परविद्यां श्रुत्वा, पुनरपि प्रतिभां ज्ञानं आप । परात्मविद्यां श्रुत्वा प्रतिभामवापेत्यनेन प्राप्तं परोपजीवनशङ्कां परिहरन्नाह– **को नामेति** ।। उपजीवतीत्युपजीवकः, न उपजीवकः अनुपजीवकः, विष्णुना अनुपजीवकः । को नाम आस? न कोऽप्यासेत्यर्थः । तदेव कैमुत्येनाह– **यस्येति** ।। रमापि यस्य हरेः नित्याश्रयात् सदा श्रीरिति अभिहिता उदिता ।।५।।

**ताम्रपर्णीया–** ।। **नित्येति** ।। अन्यप्रतिभाया अपि नित्यत्वमस्तीत्यतो– **प्रभूतेत्युक्तम्** ।। नित्यव्यक्तेत्यर्थः । तदुक्तम् । 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः'[ई.भा१९] इति । यद्वा प्रभूतत्वं नाम प्रतिभातारतम्यकाष्ठात्वरूपं पूर्णत्वम् । तदुक्तम् । 'ऋषीन् राज्ञस्तथारभ्य प्रतिभाभ्यधिकाक्रमात् । यावद् ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम् ।।' [गी.ता.१३.२५-२६] इति । नित्यप्रभूतप्रतिभायाः शुभत्वं स्वज्ञातव्ययावद्गुणक्रियादिविषयत्वम् । तदुक्तम् । 'पारोक्ष्यात् पूर्णं ज्ञानं सदैव हि' इति [भा.ता.११.७.१७] । शुभत्वं नाम संशयविपर्ययासमानाधिकरणत्वम् । यद्वक्ष्यति 'न संशयं कदाप्येषः धर्मे ज्ञानेऽपि वाऽकरोत्' [म.ता.नि १८.१०] इति । अपि तथापि । परामतिशयिताम् । इदमुक्तं भवति । यद्यपि भीमः नित्याभिव्यक्तसर्वदेवाधिकसर्वविषयकसंशयविपर्ययगन्धविधुरप्रतिभावान् तथापि ज्ञातेष्वेव गुणादिषु भगवदुपदेशेन विशेषविषयिकं क्रमिकप्रतिभावान् भवत्येव । तथा च गुणादिषु विशेषावगत्यर्थं भगवदुपदेशोऽपेक्षित एवेति । अत एव 'क्रमेण वर्धमानम्' [प्रमाणलक्षणं] इत्युक्तम् । 'प्रायो नाप्रतिभासितम्' [गी.ता.१३.२६] इति च । 'विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो भवेत्' [गी.ता.१३.२५-२६] इति च । उक्तश्च मध्वविजये [८.३-५]

'पुर एव पूरितमपूरयत् पुनः ननु कृष्ण एष परमार्थसङ्कथया ।
भगवन्मनः पुरमिवायतं पुरा निजधाम तां च जगृहे तदद्भुतम् ।।

इतिहाससुन्दरपुराणसूत्रसत्प्रियपञ्चरात्रनिजभावसंयुतम् ।
अभृणोदनन्तहृदनन्ततो चिरात् परमार्थमप्यगणितागमावलेः ।।
ऋजुपुङ्गवस्य परिजानतः स्वयं सकलं तदप्यलमनन्तजन्मसु ।
स्वकृतोर्वनुग्रहबलादमुष्य तां विशिशेष शेषशयनः पुनर्धियम् ।।'

इति रहस्यमाहुराचार्याः ।।५-९।।

**भारतश्री–** ।।१-४।। प्रभूतसुशुभप्रतिभोऽपि पुनः परां प्रतिभामवाप । 'क्रमादामुक्तेः व्यक्त्यतिशयोपेतम्' इत्युक्तत्वात् ।।५-६।।

**चट्टि–** नित्यं प्रभूता उत्कृष्टा, सुशुभा उत्तमा, प्रतिभा सामर्थ्यं यस्य स तथा । तादृशोऽपि भीमः विष्णोः श्रीकृष्णव्यासात्मनो हरेः सकाशात् परां परविद्यां श्रुत्वा पुनरपि प्रतिभां प्रभावं अवाप । परां विद्यां श्रुत्वा प्रतिभामवापेत्यनेन प्राप्तपरोपजीवनशङ्कां परिहरन्नाह– **को नामेति** ।। उपजीवतीत्युपजीवकः, न उपजीवकः विष्णुना अनुपजीवकः । को नाम आस? न कोऽप्यीत्यर्थः । तदेव कैमुत्यन्यायेनाह– **यस्येति** ।। रमापि यस्य हरेः नित्याश्रयात् सदा श्रीरिति अभिहिता उदिता ।।५।।

**व्यासादवाप परमात्मसुतत्त्वविद्यां धर्मात्मजोऽपि सततं भगवत्प्रपन्नः ।**
**ते पञ्च पाण्डुतनया मुमुदुर्नितान्तं सद्धर्मचारिण उरुक्रमशिक्षितार्थाः ।।६।।**

**व्यासतीर्थीया–** उरुक्रमेण शिक्षितो अर्थ यैस्ते तथोक्ता ।।६।।

**वेदाङ्गतीर्थीया–** उरुक्रमशिक्षितार्था उरुक्रमेण हरिणा शिक्षिता अर्था धर्मादयो येषां ते तथोक्ताः ।।६।।

**मधुसूदनीया–** ।। **धर्मात्मजोऽपीति** ।। व्यासाद्विद्याप्राप्तिमात्रसमुच्चये अपिशब्दः । न तु भीमवदवैष्णवमार्गनिराकरणेऽपीति बोध्यम् ।।६-१३।।

**वरदराजीया–** धर्मात्मजोऽपि परमात्मसुतत्वविद्यां व्यासादवाप । यतः सततं भगवत्प्रपन्नः उरुक्रमेण कृष्णेन शिक्षितो उपदिष्टः । अर्थाः धर्मादिपुरुषार्थाः येषां ते तथा ।।६।।

**अनन्तभट्टीया–** अर्थाः धर्मादिः ।।६।।

**जनार्दनीया–** भगवन्तं प्रपन्नः शरणं प्राप्तो धर्मात्मजः । परमात्मनः सुतत्त्वविद्यां परतत्त्वविद्याम् । उरुक्रमाभ्यां व्यासकृष्णाभ्याम्, शिक्षिताः अर्थाः धर्मादिपुरुषार्थाः येषां ते तथा । अत एव सद्धर्मचारिणः भगवद्धर्माचरणशीलाः ते ।।६।।

**चट्टि–** सततं भगवन्तं प्रपन्नः शरणं प्राप्तो धर्मात्मजोऽपि परमात्मनः सुतत्त्वविद्यां परतत्त्वविद्यां श्रीव्यासादवाप । उरुक्रमाभ्यां श्रीव्यासकृष्णाभ्यां शिक्षिताः अर्थाः धर्मादिपुरुषार्थाः येषां ते तथा । अत एव सद्धर्मचारिणः भगवद्धर्माचरणशीलाः ते पञ्च पाण्डुतनयाः नितान्तं मुमुदुः ।।६।।

**यदा भरद्वाजसुतस्त्वसञ्चयी[१] प्रतिग्रहोज्झो निजधर्मवर्ती ।**
**द्रौणिस्तदा धार्तराष्ट्रैः समेत्य क्रीडन् पयः पातुमुपैति सद्म ।।७।।**

**व्यासतीर्थीया–** [प्रतिग्रहोज्झत्वे] निमित्तमुक्तम्– **निजधर्मवर्तीति** ।। असङ्ग्रही सङ्ग्रहरहितः ।। ।।७-९।।

**वेदाङ्गतीर्थीया–** असङ्ग्रही सङ्ग्रहरहितः ।।७।।

**वरदराजीया–** भरद्वाजसुतो द्रोणः प्रतिग्रहमुज्झतीति तथा । अत एव असञ्चयी द्रव्याद्यसङ्ग्रही यतः निजधर्मवर्ती तदा द्रौणिः अश्वत्थामा सद्म गृहमेति उपैति ।।७।।

**अनन्तभट्टीया–** प्रतिग्रहोज्झो प्रतिग्रहमुज्झतीति प्रतिग्रहोज्झः ।।७।।

**जनार्दनीया–** भरद्वाजर्षेः सुतः पुत्रो द्रोणः निजधर्मवर्ती स्वाश्रमोचितधर्मवर्तनशीलः । अत एव प्रतिग्रहमुज्झतीति तथा । अत एव असञ्चयी पशुद्रव्यादिसङ्ग्रहरहितः सन् यदा आस तदा द्रौणिः अश्वत्थामा धार्तराष्ट्रैः समेत्य सम्भूय, क्रीडन् सन्, पयः क्षीरं पातुं पानार्थं सद्म स्वगृहं उपैति प्राप्नोति ।।७।।

**भारतश्री–** भारतकथामनुसरति– **यदा भरद्वाजेति** ।।७-८।।

**चट्टि–** भरद्वाजर्षेः सुतः पुत्रो द्रोणः निजधर्मवर्ती स्वाश्रमोचितधर्मवर्तनशीलः । अत एव प्रतिग्रहमुज्झतीति प्रतिग्रहोज्झः । अत एव असञ्चयी पशुद्रव्यादिसङ्ग्रहरहितः सन् यदा आस तदा द्रौणिः अश्वत्थामा धार्तराष्ट्रैः समेत्य सम्भूय, क्रीडन् सन् पयः क्षीरं पातुं पानार्थं सद्म स्वगृहमुपैति प्राप्नोति ।।७।।

**तस्मै माता पिष्टमालोड्य पातुं ददाति पीत्वैति तदेष नित्यम् ।**
**पीतक्षीरान् धार्तराष्ट्रान् समेत्य मया पीतं क्षीरमित्याह नित्यम् ।।८।।**

**वरदराजीया–** पयःपानार्थमागताय तस्मै माता कृपी पिष्टं जलेन आलोड्य पातुं ददाति । तत्पिष्टं पीत्वा एति । पीतं क्षीरं यैः तान् समेत्य मयापि क्षीरं पीतमिति नित्यमाह ।।८।।

---

१. 'असङ्ग्रही' इति व्यासतीर्थ-वेदाङ्गतीर्थपाठः ।

**जनार्दनीया–** माता कृपी तस्मै अश्वत्थाम्ने पिष्टं आलोड्य, जलेनेति शेषः । पातुं ददाति । एषोऽश्वत्थामा तत्पिष्टोदकं नित्यं पीत्वा, एति क्रीडास्थानं प्राप्नोति । पीतं क्षीरं यैस्ते तथा तान् धार्तराष्ट्रान् समेत्य प्राप्य, मया क्षीरं पीतमित्याह ॥८॥

**चट्टि–** माता कृपी तस्मै अश्वत्थाम्ने पिष्टं जले आलोड्य पातुं ददाति । एषोऽश्वत्थामा तत्पिष्टोदकं नित्यं पीत्वा एति क्रीडास्थानं प्राप्नोति । पीतं क्षीरं यैः ते तथा तान् धार्तराष्ट्रान् समेत्य मया क्षीरं पीतमिति नित्यमाह ॥८॥

**नृत्यन्तमेनं पाययामासुरेते पयः कदाचिद् रसमस्य सोऽवैत् ।**
**पुनः कदाचित् स तु मातृदत्ते पिष्टे नेदं क्षीरमित्यारुराव ॥९॥**

**वरदराजीया–** नृत्यन्तं नर्तनं कुर्वन्तं एनं द्रौणिं कदाचित् पयः क्षीरं पाययामासुः । सः द्रौणिः अस्य क्षीरस्य रसं माधुर्यविशेषं अवैत् ज्ञातवान् । स तु द्रौणिः मातृदत्ते पिष्टे इदं नेति आरुराव अरोदीत् ॥९॥

**जनार्दनीया–** एते धार्तराष्ट्राः नृत्यन्तं नृत्यं कुर्वन्तं एनं अश्वत्थामानं कदाचित् पयः क्षीरं पाययामासुः । सोऽश्वत्थामा अस्य क्षीरस्य रसं माधुर्यरसं अवैत् ज्ञातवान् । 'रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे' इति यादवः । कदाचित् सोऽश्वत्थामा पिष्टे मातृदत्ते सति इदं त्वद्दत्तं क्षीरं नेत्यारुराव अरोदीत् ॥९॥

**भारतश्री–** ॥ **रसमस्य सोऽवैदिति** ॥ पूर्वमजानन् वा । 'धर्मो हि सर्वविदुषामपि देवतानां प्राप्ते नरेषु जनने नरवत्प्रवृत्तिः । ज्ञानादिगूहनमुताध्ययनादिरत्र' [म.ता.नि.१४.४] इत्युक्तेः ज्ञानगूहनं वेति ज्ञातव्यम् ॥९॥

**चट्टि–** एते धार्तराष्ट्राः नृत्यन्तं नृत्यं कुर्वन्तं एनं अश्वत्थामानं कदाचित् पयः क्षीरं पाययामासुः । सोऽश्वत्थामा अस्य क्षीरस्य रसं माधुर्यरसं अवैत् ज्ञातवान् । 'रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे' इति यादवः । कदाचित् सोऽश्वत्थामा पुनः पिष्टे मातृदत्ते सति इदं क्षीरं नेति आरुराव रोदनं कृतवान् ॥९॥

**दृष्ट्वा [१]रुदन्तं सुतमात्मजस्य स्नेहान्नियत्यैव जनार्दनस्य ।**
**सम्प्रेरितः कृपया चार्तरूपो द्रोणो ययावार्जयितुं तदा गाम् ॥१०॥**

---

१. 'रुवन्तं' इति वरदराजीयजनार्दनीयपाठः ।

**व्यासतीर्थीया–** नियत्या प्रेरणया । कृपया च स्वभार्यया च संप्रेरितः ।।१०।।

**वेदाङ्गतीर्थीया–** भगवन्नियत्यैव प्रेरणया एव आप्तम् [आर्तम्] । आत्मजस्य स्नेहात् जनार्दनस्य नियत्यैव सम्प्रेरितः रुदन्तं सुतं दृष्ट्वा कृपया आर्तरूपः आर्तमनाः इति भावः ।।१०।।

**वरदराजीया–** रुवन्तं रुदन्तं सुतं दृष्ट्वा आत्मजस्य स्नेहात् जनार्दनस्य नियत्या प्रेरणया एव प्रेरितः कृपया पुत्रदयया आर्तरूपश्च गामर्जयितुं ययौ ।।१०।।

**अनन्तभट्टीया–** ।। **कृपयेति** ।। कृपया संप्रेरित इत्यर्थः ।।१०।।[१]

**जनार्दनीया–** रुवन्तं रुदन्तं सुतं दृष्ट्वा, जनार्दनस्य नियत्यैव प्रेरणयैव जातादात्मजस्य पुत्रस्य स्नेहात् जनार्दनस्य नियत्योत्पन्नया कृपया च अनुकम्पया सम्प्रेरितो द्रोणः आर्तरूपः पुत्ररोदनेन व्यथितमना इत्यर्थः । प्राप्तप्रतिग्रहादार्तरूपो वा । तादृशः सन् गां अर्जयितुं सम्पादयितुं ययौ ।।१०।।

**ताम्रपर्णीया–** कृपया कृप्या ।।१०-१३।।

**भारतश्री–** नियत्या इच्छया । कृपया भार्यया । 'कृपामाप कृपस्वसां' इत्यन्यत्र प्रयोगात् । आर्तरूपः निजधर्मप्रहाणभयेन ।।१०-११।।

**चट्टि–** द्रोणः रुदन्तं सुतं दृष्ट्वा जनार्दनस्य श्रीकृष्णस्य नियत्या प्रेरणयैव जातादात्मजस्य पुत्रस्य स्नेहात् कृपया पुत्रदयया स्वभार्यया च सम्प्रेरितस्सन् आर्तरूपः पुत्ररोदनेन व्यथितमना सन् तदा गां आर्जयितुं सम्पादयितुं ययौ ।।१०।।

**प्रतिग्रहात् सन्निवृत्तः [२]स रामं ययौ न विष्णोर्हि भवेत् प्रतिग्रहः ।**
**[३]दोषाय यस्मात् स पिताऽखिलस्य स्वामी गुरुः परमं दैवतं च ।।११।।**

**वेदाङ्गतीर्थीया–** विष्णोः प्रतिग्रहः दोषाय न भवेदिति मन्वान इति शेषः । तदुपपादनम्– **पितेत्यादिना** ।।११।।

---

१. इति हो.पुस्तकपाठः ।

२. 'स शुश्राव महात्मानं जामदग्न्यं परन्तपम् । सर्वज्ञानविदं विप्रं सर्वशस्त्रभृतां वरम् । ब्राह्मणेभ्यस्तदा राजन् दित्सन्तं वसु सर्वशः । स रामस्य धनुर्वेदं दिव्यान्यस्त्राणि चैव हि । श्रुत्वा तेषु मनश्चक्रे नीतिशास्त्रे तथैव च ।।' इति आदिपर्वणि१४०.५२-५३ ।

३. 'न स्नातकोऽवसीदेत वर्तमानः स्वकर्मसु । इति सञ्चिन्त्य मनसा तं देशं बहुशो भ्रमन् । विशुद्धमिच्छन् गाङ्गेय धर्मोपेतं प्रतिग्रहम् । अन्तादन्तं परिक्रम्य नाध्यगच्छं पयस्विनीम् ।।' इति आदिपर्वणि १४१.५३-५४ । इति भीष्मं प्रति द्रोणवचनम् । सर्वत्र दोषदर्शनात् विशुद्धं धनमिच्छन् परशुरामात् परिग्रहे न दोषः इति मत्वा तं ययौ इति भावः ।

**वरदराजीया–** प्रतिग्रहात् सम्यक् निवृत्तोऽपि द्रोणो रामं परशुरामं प्रति ययौ । यस्मात् कारणात् विष्णोः सकाशात् प्रतिग्रहो दोषाय न भवेत् हि? सः विष्णुः यस्मात् अखिलस्य जगतः पिता स्वमी परमं दैवतश्च तस्मान्न दोषायेत्यर्थः ।।११।।

**जनार्दनीया–** प्रतिग्रहात् सम्यक् निवृत्तः स द्रोणः रामं परशुरामं प्रति गामर्थयितुं ययौ । कुतः? हि यस्मात् विष्णोः प्रतिग्रहः दोषाय न भवेत्तस्मादिति सम्बन्धः । तदपि कुतः? इत्यत आह– **यस्मादिति** ।। स विष्णुः ।।११।।

**भावचन्द्रिका–** पित्राद्यनुज्ञया पुत्रभृत्यशिष्यभक्तानां पित्रादिव धनस्वीकारे न प्रतिग्रहदोष इत्याह– **पिता स्वामी गुरुः परमं दैवतश्चेति** ।।११।।

**चट्टि–** प्रतिग्रहात् सन्निवृत्तः सम्यक् निवृत्तः स द्रोणः रामं परशुरामं प्रति गामर्थयितुं ययौ । कुतः? हि यस्मात् विष्णोः सकाशात् प्रतिग्रहः दोषाय न भवेत् तस्मादिति सम्बन्धः । तदपि कुतः? इत्यत आह– **यस्मादिति** ।। स विष्णुः अखिलस्य जगतः पिता स्वामी गुरुः परदैवतं च तस्मादिति सम्बन्धः ।।११।।

**दृष्ट्वैवैनं जामदग्न्योऽप्यचिन्तयद् द्रोणं कर्तुं क्षितिभारापनोदे ।**
**हेतुं सुराणां नरयोनिजानां हन्ता चायं स्यात् सह पुत्रेण चेति ।।१२।।**

**व्यासतीर्थीया–** हन्ता च स्यादिति चाचिन्तयत् ।।१२।।

**वेदाङ्गतीर्थीया–** जामदग्न्यः द्रोणमायान्तमिति शेषः । दृष्ट्वा एनं क्षितिभारापनोदे हेतुं कर्तुं इत्यचिन्तयत्।

**वरदराजीया–** जामदग्न्यो रामः एनं द्रोणं दृष्ट्वा क्षितिभारापनोदे हेतुं कर्तुं अचिन्तयत् । नरयोनिजानां सुराणां पुत्रेण सह हन्ता स्यादित्यचिन्तयत् ।।१२।।

**जनार्दनीया–** जामदग्न्योऽपि रामः एनं द्रोणं दृष्ट्वा, क्षितिभारस्य अपनोदे परिहारविषये हेतुमेव निमित्तमात्रमेव । संहारकर्मणि मुख्यकर्ता स्वयमेवेति भावः । द्रोणं कर्तुं इत्यचिन्तयत् । इतीति किम्? नरयोनौ जातानां मनुष्येष्ववतीर्णानामित्यर्थः । सुराणां हन्ता नाशकर्तायं द्रोणः स्यादिति ।।

**भारतश्री–** सुराणां नरयोनिजानां द्रुपदविराटधृष्टद्युम्नादीनाम् ।।१२।।

**भावचन्द्रिका–** ।। **हेतुमिति** ।। देवोत्तमपाण्डवसहायत्वेन तस्यैव कृष्णसेवारूपत्वाच्च फलत्वमिति भावः । ननु ज्ञानिमात्रमेव फलं बहुदेववधे तु सुतरां पापमिति चेन्न दैत्यपक्षत्वेन देवहनने च रामावतारे कृतस्य अधिकस्य हानिर्भवतीति द्वितीयाध्यायोक्तत्वेन अधिकहानार्थमेव रामो द्रोणं हन्तुं

कृतवानिति भावः । उद्धवरूपेण सेवकत्वात् प्रायश्चित्तं भविष्यतीति वा हेतुं कृतवान् । इतरेषां तु नार्थमेकवदित्युक्तत्वेन न परलोकबाध इति ज्ञेयम् ।।१२।।

**चट्टि–** जामदग्न्योऽपि रामः एनं द्रोणं दृष्ट्वा क्षितिभारस्य अपनोदे परिहारविषये द्रोणं हेतुं कर्तुमिति अचिन्तयत् । किमिति? नरयोनौ जातानां मनुष्येष्ववतीर्णानामित्यर्थः । सुराणां अयं द्रोणः पुत्रेण सह हन्ता नाशकर्ता स्यादिति ।।१२।।

**तेषां वृद्धिः स्यात् पाण्डवार्थे हतानां मोक्षेऽपि सौख्यस्य न सन्ततिश्च ।**
**योग्या सुराणां कलिजा सुपापाः प्रायो यस्मात् कलिजाः सम्भवन्ति।।१३।।**

**व्यासतीर्थीया–** [न रथो] निजानां सुराणां हननं च किमर्थमित्यत आह– **तेषामिति** ।। नृजातानां हनने कारणान्तरमाह– **न सन्ततिश्चेति** ।। कलिजा सुराणां सन्ततिश्च स्थातुं योग्या न । सुरसन्ततेः कलियुगस्थानायोग्यत्वं जिज्ञासायामाह– **सुपापा इति** ।।१३।।

**वादिराजीया–** 'योग्या सुराणाम्' इत्यत्र सुराणां कलिजा सन्ततिः योग्या नेति सम्बन्धः । कलावपि शुभानां मध्वशिष्यसन्ततीनां विद्यमानत्वात् प्राय इत्युक्तम् ।।१३-१६।।

**वरदराजीया–** पाण्डवार्थे हतानां तेषां सुराणां मोक्षे सौख्यस्य आनन्दस्य वृद्धिरपि स्यात् । सुराणां सन्ततिः कलिजा भवितुं न योग्याः यस्मात् कारणात् कलिजाः प्राणिनः सुपापाः प्रायः सम्भवन्ति ।।१३।।

**अनन्तभट्टीया–** वृद्धिरतिशयः । सुराणां सन्ततिः कलिजा कलौ जनयितुं न योग्या यद्यस्मात् ।।१३।।

**जनार्दनीया–** ननु देवावनार्थं कृतावतारो रामः देवहननं किमर्थमचिन्तयत्? इत्यत आह– **तेषामिति** ।। पाण्डवार्थे हतानां तेषां सुरावताराणां वृद्धिः पाण्डवसहायमकृतेभ्यः स्वसमानदेवेभ्यः सुखातिशयः स्यात् । संसारावस्थायामिति शेषः । मोक्षेऽपि मुक्तावपि सौख्यस्य वृद्धिः स्यात् । अत एव हननमचिन्तयदित्यर्थः । सुराणां मोक्षे स्वस्वनियतानन्दाविर्भावविशेष एव सौख्यस्य वृद्धिरित्यवगन्तव्यम् । हनने हेत्वन्तरमाह– **नेति** ।। सुराणां कलौ जाता सन्ततिः सन्तानं भुव्यवस्थातुं योग्यो न । कुतः ? कलिजाः कलियुगे जाताः जीवसङ्घाः प्रायः बाहुल्येन । क्षेमकादिव्यावृत्त्यर्थं प्राय इत्युक्तम् । सुपापाः सुतरां पापिनः सम्भवन्ति यस्मात् तस्मात् योग्या नेति सम्बन्धः ।।१३।।

**भारतश्री–** ननु द्रुपदादीनां रणमध्ये मरणात् परलोके शुभप्राप्तिः युक्ता । धृष्टद्युम्नादीना[मथ] अतथात्वात् कथं तेषां शुभप्राप्तिः । रणमध्यहननात् न द्रोणस्य दोषः । अश्वत्थाम्नः सुप्तमारणोक्तेः... इत्याशङ्कां परिहरति– **तेषां वृद्धिः स्यादित्यादिना** ।। पाण्डवार्थे हतानां पाण्डवसम्बन्धत्वेन हतानाम् । अश्वत्थाम्नः देवसन्तत्युच्छेदस्य भगवत्प्रियस्य कारित्वान्न दोषः । उत्तरत्र विष्णवाज्ञाविरोधित्वात् दुर्गन्धिदेहादिकं प्रापेत्यभिप्रायः ।।१४-१८।।

**चट्टि–** ननु देवावनार्थं कृतावतारो रामः देवहननं किमर्थमचिन्तयत्? इत्यत आह– **तेषामिति** ।। पाण्डवार्थे हतानां तेषां सुरावताराणां वृद्धिः सहायमकृतेभ्यः स्वसमानदेवेभ्यः सुखातिशयः स्यात् । संसारावस्थायामिति शेषः । मोक्षेऽपि मुक्तावपि सौख्यस्य वृद्धिः स्यात् । अत एवं अचिन्तयदित्यर्थः । सुराणां मोक्षे स्वस्य नियतानन्दाविर्भावविशेष एव सौख्यस्य वृद्धिरित्यवगन्तव्यम् । हनने हेत्वन्तरमाह– **नेति** ।। सुराणां सन्ततिः कलिजा भवितुं न योग्याः । कुतः? यस्मात् कलिजाः कलियुगे जाताः जीवसङ्घाः प्रायः बाहुल्येन । क्षेमकान्तादिव्यावृत्त्यर्थं प्राय इत्युक्तम् । सुपापाः सुतरां पापिनः सम्भवन्ति । तस्मात् योग्या नेति सम्बन्धः ।।१३।।

**न देवानामाशतं पूरुषा हि सन्तानजाः प्रायशः पापयोग्याः ।**
**नाकारणात् सन्ततेरप्यभावो योग्यः सुराणां सदमोघरेतसाम् ।।१४।।**

**व्यासतीर्थीया–** सुरसन्ततिश्चेन्न पापयोग्येत्याह– **नेति** ।। सन्त[सन्तानजाः] कलिजाः सुपापाः अस्तु देवानामाशतं सन्तानजात पापयोग्यः इति तथाप्यपुत्रकत्वादिना कारणेन सन्तानोच्छेदसम्भवे किमनेनेत्यत आह– **नेति** ।। [अकारणाच्छापे न वधेत च] कारणेन विना कारणान्तरात् सुराणां सन्ततेरभाव उच्छेदयोग्यो न च । स तु निर्दोषं अमोघं रेतो येषां ते तथोक्तम् । तेषां सदमोघरेतसामपि ।।

**वेदाङ्गतीर्थीया–** आशतं शतसन्तानपर्यन्तं पापयोग्याः पापकरणयोग्याः । अकारणात् शापेन वधेन वा कारणेन विना । सत् निर्दोषं अमोघं रेतो येषां ते तथोक्ताः ।।१४।।

**मधुसूदनीया–** ।। **सदमोघरेतसामिति** ।। रेतसः अमोघत्वं कुत इत्यत अत्र हेतुः– **सदिति** ।। अनेन सन्तत्युच्छेदे पापमपि कारणमपि सूचितमिति भावः ।।१४-२१।।

**वरदराजीया–** देवानां सन्तानजास्तु आशतं शतसन्तानपर्यन्तं पुरुषाः पापयोग्या न भवन्ति । सन्ततेः सन्तानस्याप्यभावः अकारणात् बलवत्करणं विना न योग्यः । सत् अमोघं रेतो येषां ते तथा । हेतुगर्भविशेषणमेतत् ।।१४।।

**जनार्दनीया–** कलिजाः देवसन्तानजाः सुपापाः सन्तु । ततः किम्? इत्यत आह– **नेति** ।। देवानां सन्तानजाः वंशे जाताः पुरुषाः आशतं शतसन्तानपर्यन्तं प्रायशः पापयोग्याः न । दुर्योधनादिव्यावृत्त्यर्थं प्रायशः इत्युक्तम् । कारणं विना स्वयमेव सन्तानोच्छेदः स्यादित्यतो नेत्याह– **नेति** ।। सन् निर्दुष्टं, अमोघं रेतो येषां ते तथा तेषाम् । सुराणां सन्ततेः अभावोऽपि अकारणात् शापरूपवधकारणं विना योग्यो न ।।१४।।

**ताम्रपर्णीया–** अकारणात् शापेन वधेन च विना कारणान्तरात् ।।१४-१७।।

**चट्टि–** कलिजाः देवसन्तानजाः सुपापाः सन्तु । ततः किमित्यत आह– **नेति** ।। देवानां सन्तानजाः वंशे जाताः पुरुषाः आशतं शतसन्तानपर्यन्तं प्रायशः पापयोग्याः न । दुर्योधनादिव्यावृत्त्यर्थं प्रायश इत्युक्तम् । कारणं विनापि स्वयमेव सन्तानोच्छेदः स्यादित्यतो नेत्याह– **नेति** ।। सन् निर्दुष्टम्, अमोघं अव्यर्थं रेतो येषां ते तथा तेषाम् । सुराणां सन्ततेः अभावोऽपि अकारणात् शापरूपवधकारणं विना योग्यो न ।।१४।।

**अव्युच्छिन्ने सकलानां सुराणां तन्तौ कलिर्नो भविता कथञ्चित् ।**
**तस्मादुत्साद्याः सर्व एते सुरांशा एतेन साकं तनयेन वीराः ।।१५।।**

**व्यासतीर्थीया–** उक्तार्थे हेतुमाह । शापादिना कारणेन विना सुराणां सन्तत्यभावो योग्यो न चेत् तथैव तिष्ठत्वित्यतो निष्ठाकथनपूर्वकं प्रकृतमुपसंहरति– **अव्युच्छिन्न इति** ।।१५।।

**वेदाङ्गतीर्थीया–** एवं तर्हि कलौ अव्युच्छिन्नास्ते [भवन्तु] किं अनिष्टं इत्यत आह– **अव्युच्छिन्नेति** ।। नरयोनिजानां सुराणां हन्ता स्यादित्युक्तमुपसंहरति– **तस्मादिति** ।।१५।।

**वरदराजीया–** तन्तौ सन्ताने अव्युच्छिन्ने अनुवर्तमाने सति कलिः न भविता न स्यात् तस्मात् सुरांशाः वीराः तनयेन साकं एतेन द्रोणेनोत्साद्याः ।।१५।।

**अनन्तभट्टीया–** तन्तौ सन्ताने । एतेन द्रोणेन ।।१५।।

**जनार्दनीया–** तर्हि तथैवास्त्वित्यतो बाधकं वदन्नुपसंहरति– **अव्युछिन्न इति** ।। सकलानां सुराणां तन्तौ वंशे अव्युच्छिन्ने उच्छित्तिरहिते सति कथञ्चित् कलिः कलिकालवृत्तिर्नो भविता न भविष्यति । 'हन्ता चायं स्यात्' इत्युक्तार्थमुपसंहरति– **तस्मादिति** ।। तनयेन अश्वत्थाम्ना साकं एतेन द्रोणेन एते भुव्यवतीर्णाः वीराः उत्साद्याः विनाश्याः ।।१५।।

**चट्टि–** सकलानां सुराणां तन्तौ सन्ताने अव्युच्छिन्ने अनुवर्तमाने सति कलिः कथञ्चित् नो भविता । तस्मात् तनयेन अश्वत्थाम्ना साकं एतेन द्रोणेन एते भुव्यवतीर्णाः सर्वे सुरांशाः वीराः उत्साद्याः विनाश्याः ।।१५।।

**एवं विचिन्त्याप्रतिमः स भार्गवो बभाष ईषत्स्मितशोचिषा गिरा ।**
**अनन्तशक्तिः सकलेश्वरोऽपि [1]त्यक्तं सर्वं नाद्य वित्तं ममास्ति ।।१६।।**

१. 'आगतं वित्तकामं मां विद्धि द्रोणं द्विजोत्तम ।... भारद्वाजोऽब्रवीत् वचः । रामं प्रहरतां श्रेष्ठं दित्सन्तं विविधं वसु । अहं धनमनन्तं हि प्रार्थये विपुलव्रत ।... हिरण्यं मम यच्चान्यद् वसु किञ्चिदिह स्थितम् । ब्राह्मणेभ्यो मया दत्ता कृत्स्ना नगरमालिनी ।' इत्यादिपर्वणि१४०.६०-६४ ।

**व्यासतीर्थीया–** तदिष्टदाने शक्त्यभावात् नास्ति वित्तमित्युक्तवान् किमित्यत उक्तम्– **अनन्तशक्तिः सकलेश्वरोऽपीति** ।।१६।।

**वरदराजीया–** ईषत्स्मितेन शोचिः यस्याः सा तया गिरा बभाषे किमिति । मया सर्वं त्यक्तं अद्य मे वित्तं नास्ति ।।१६।।

**अनन्तभट्टीया–** ईषदिति ईषत्स्मितेन जातं शोचिर्यस्येति विग्रहः ।।१६।।

**जनार्दनीया–** अप्रमेयः साकल्येन प्रतीत्यविषयः ईषत्स्मितेन मन्दहासेन जाता, शोचिर्दीप्तिर्यस्याः सा तथा तया । गिरा वाचा बभाषे । किमिति ? मया सर्वं त्यक्तम् । अद्य मम वित्तं नास्ति । ननु रामः दातुमशक्तत्वात् नास्तीति बभाषे किमित्यत आह– **अनन्तशक्तिः सकलेश्वरोऽपीति** ।।१६।।

**चट्टि–** अप्रतिमो असदृशः सः भार्गवः एवं विचिन्त्य ईषत्स्मितेन मन्दहासेन जातं शोचिर्दीप्तिर्यस्याः सा तथा । तया गिरा वाचा बभाषे । किमिति? मया सर्वं त्यक्तम् । अद्य इदानीं मम वित्तं नास्ति इति । ननु रामः दातुमसमर्थत्वात् नास्तीति बभाषे किमित्यत आह– **अनन्तशक्तिः सकलेश्वरोऽपीति**।।

**[१]आत्मा विद्या शस्त्रमेतावदस्ति तेषां मध्ये रुचितं त्वं गृहाण ।**
**उक्तः स इत्थं प्रविचिन्त्य विप्रो जगाद कस्त्वद्ग्रहणे समर्थः ।।१७।।**

**वेदाङ्गतीर्थीया–** आत्मा अहम् । शस्त्रं परश्वाद्यायुधम् । त्वद्ग्रहणे सेवकत्वेन त्वद् ग्रहणे ।।१७।।

**वादिराजीया–** 'आत्मा विद्या' इत्यत्र आत्मा स्वयं विद्या ब्रह्मविद्या ।।१७-२४।।

**वरदराजीया–** आत्मा अहं विद्या परविद्या शस्त्रञ्च इत्येतत् त्रयमेवास्ति । तेषामात्मादीनां मध्ये यदपि रुचितं अपेक्षितं गृहाण आत्मा अस्तीत्युक्तं परिहरति– **क इति** ।।१७।।

**जनार्दनीया–** तर्हि किमस्तीत्याहेत्यत आह– **आत्मेति** ।। आत्मा अहं विद्या तत्त्वविद्या शस्त्रं परशुशार्ङ्गाद्यायुधं चेत्येतावत् त्रयं अस्ति । तेषां आत्मादित्रयाणां मध्ये यद्रुचितं इष्टं तत् त्वं गृहाण । इत्थं उक्तः स विप्रो द्रोणः प्रविचिन्त्य जगाद । किमिति? तव ग्रहणे परिचारकत्वेन स्वीकारे कः समर्थः ? न कोऽपीत्यर्थः ।।१७।।

**चट्टि–** तर्हि किमस्तीत्याहेत्यत आह– **आत्मेति** ।। आत्मा अहं विद्या तत्त्वविद्या शस्त्रं परशु शार्ङ्गं चेत्येतावत् त्रयमेव अस्ति । तेषां आत्मादित्रयाणां मध्ये यत् रुचितं इष्टं तत् त्वं गृहाण । विप्रः सः

१. 'शरीरमात्रमेवाद्य ममेदमवशेषितम् । अस्त्राणि च महार्हाणि शस्त्राणि विविधानि च । अस्त्राणि वा शरीरं वा ब्रह्मन् शस्त्राणि वा पुनः । वृणीष्व किं प्रयच्छामि तुभ्यं द्रोण वदाशु तत् ।।' इति आदिपर्वणि १४०.६५-६६ । इति द्रोणं प्रति परशुरामवचनम् ।

द्रोणः इत्थं उक्तः सन् प्रविचिन्त्य जगाद । किमिति? तव ग्रहणे परिचारकत्वेन स्वीकारे कः समर्थः? न कोऽपीत्यर्थः ।।१७।।

**सर्वेशिता सर्वपरः स्वतन्त्रस्त्वमेव कोऽन्यः सदृशस्तवेश ।**
**साम्यं तवेच्छन् प्रतियात्यधो हि यस्मान्न चोत्थातुमलं कदाचित् ।।१८।।**

**व्यासतीर्थीया–** त्वद् ग्रहणे कः समर्थः स्यादित्युक्तम् ।कुतो न स्यात्? तदधिकस्तत्समो वा यदि स्यात् तर्हि तथा स्यात् । स तु नास्तीत्याह– **सर्वेति** ।। [सदृशोऽधिकश्च सदृशादिरिदानीमन्योन्य-भूद्भविष्यं रक्तस्यादित्यतः साम्येच्छया हि भविष्यन् समदि स्यात् हेतुत्वयुक्तानर्थहेतुत्वादित्याह]– **साम्यमिति** ।। अलं समर्थः ।।१८-१९।।

**वेदाङ्गतीर्थीया–** यस्मात् स अधोलोकान् । अलं समर्थः ।।१८।।

**वरदराजीया–** हे ईश! त्वं सर्वस्येशिता ईशनशीलः, सर्वस्मात् परः उत्कृष्टः स्वतन्त्रश्च, त्वमेव तव सदृशः कोऽन्यः? तव साम्यमिच्छन् अधः प्रति याति । यस्मात् स्थानात् उत्थातुं कदाचित् नालं न समर्थः ।।१८।।

**जनार्दनीया–** कस्त्वद् ग्रहणे समर्थ इत्युक्तम् । इदं कुतः? इत्यतस्त्वदधिको यदि स्यात्तर्हि तत्सम्भवति स एव नास्तीत्याह– **सर्वेशितेति** ।। हे ईश सर्वेशिता सर्वस्मात् परः उत्कृष्टः स्वतन्त्रः त्वमेव तव सदृशः अन्यः पुरुषः कः? न कोऽपीत्यर्थः । तव साम्यं इच्छन् पुरुषः अधः अन्धन्तम इत्यर्थः । प्रतियाति यस्मादधोगतेः उत्थातुं बहिःस्थातुं कदाचित् नालं न समर्थः । तस्मात् पुनरावृत्तिर्नैवेति भावः ।।१८।।

**ताम्रपर्णीया–** सर्वेशिता सर्वनियामकः ।।१८।।

**भावचन्द्रिका–** अनन्तशक्तित्वात् सज्जनसामर्थ्यं विद्यामपि इतरस्तदीयमीश्वरत्वात् तस्य गृहाण वशीकुरु । चेद्गृहाणेत्यत्र ग्रहणं भृत्यतासम्पादनं न सर्वेशत्वात्, नापि शिष्यत्वं परत्वात्, नापि स्वरूपसत्तादिनियमनं स्वतन्त्रत्वात्, नाप्यभेदः अन्यत्वात्, नापि साम्यापादनं असदृशत्वात् । अत्र कैमुत्यमाह– **साम्यमिति** ।।१८।।

**चट्टि–** यदि त्वदधिकः स्यात् तर्हि त्वद्ग्रहणं सम्भवतीत्यतः स एव नास्तीत्याह– **सर्वेशितेति** ।। हे ईश सर्वेशिता सर्वस्मात् परः उत्कृष्टः स्वतन्त्रः त्वमेव । तव सदृशः अन्यः पुरुषः कः? न कोऽपीत्यर्थः । तव साम्यं इच्छन् पुरुषः अधः नीचं तमः प्रतियाति यस्मात् तमसः उत्थातुं कदाचिदपि नालं न समर्थः । तस्मात् पुनरावृत्तिर्नास्तीति भावः ।।१८।।

**सर्वोत्तमस्येश तवोच्चशस्त्रैः कार्यं किमस्माकमनुद्बलानाम्[1] ।**
**विद्यैव देया भवता ततोऽज सर्वप्रकाशिन्यमला सुसूक्ष्मा ॥१९॥**

**वेदाङ्गतीर्थीया–** अनुद्बलानां अनुत्कृष्टबलानाम् । तत्त्वविद्यादिकाः शस्त्रविद्याः सहिताः ॥१९॥

**वरदराजीया–** शस्त्रमित्युक्तं परिहरति– **सर्वोत्तमस्येति** ॥ अनुद्बलानां दुर्बलानां अस्माकं किं कार्यं न किमपि । विद्येत्युक्तमङ्गीकरोति– **विद्यैवेति** ॥ ततः परिशेषात् ॥१९॥

**जनार्दनीया–** अनुद्बलानां अनुत्कृष्टबलानाम्, दुर्बलानामित्यर्थः । अस्माकं ततः कारणात् हे अज! भवता त्वया सर्वप्रकाशिनी अतीन्द्रियादिपदार्थविषयकारिणी अमला अवद्यरहिता सुसूक्ष्मा अतिसूक्ष्मार्थप्रतिपादकपरब्रह्मप्रतिपादिकेत्यर्थः । ईदृशी विद्यैव देया दातुं योग्या ॥१९॥

**भारतश्री–** अनुद्बलानां दुर्बलानाम् । 'अतद्बलानाम्' इत्यपि पाठोऽस्ति । सुसूक्ष्मा अतिरहस्या ॥१९-२४॥

**चट्टि–** अनुद्बलानां अनुत्कृष्टबलानाम्, दुर्बलानामित्यर्थः । अस्माकं हे ईश सर्वोत्तमस्य तव उच्चशस्त्रैः उत्तमशस्त्रैः किं कार्यम् । न किमपीत्यर्थः । ततः कारणात् हे अज भवता त्वया सर्वप्रकाशिनी अतीन्द्रियादिपदार्थविषयकारिणी, अमला अवद्यरहिता, सुसूक्ष्मा सूक्ष्मार्थप्रतिपादिका परब्रह्मप्रतिपादिकेत्यर्थः । ईदृशी विद्यैव देया दातुं योग्या ॥१९॥

**[2]इतीरितस्तत्त्वविद्यादिकाः स विद्याः सर्वाः प्रददौ सास्त्रशस्त्राः ।**
**अब्दद्विषट्केन समाप्य ताः स ययौ सखायं द्रुपदं महात्मा ॥२०॥**

**व्यासतीर्थीया–** तत्त्वविद्या ब्रह्मविद्या ॥२०-२१॥

**वरदराजीया–** सः रामः तस्य तत्त्वविद्यादिकाः सर्वा विद्याः शास्त्रशस्त्राः प्रददौ । अब्दद्विषट्केन द्वादशभिः वर्षैः । ताः विद्याः ॥२०॥

**जनार्दनीया–** स रामः सास्त्रशस्त्राः अस्त्रशस्त्रविद्यासहिताः । तत्त्वविद्या परतत्त्वविद्या आदिर्यासां ताः तथा । स्वार्थे कप्रत्ययः । सर्वाः विद्याः नीतिस्तम्भोच्चाटनादिविद्याः प्रददौ । महात्मा महामतिः स द्रोणः अब्दानां द्विषट्केन द्वादशवर्षैः ताः विद्याः समाप्य, सखायं द्रुपदं प्रति ययौ ॥२०॥

---

१. 'अतद्बलानाम्' इति पाठान्तरमिति भारतश्रीनिवासाचार्यः ।

२. अस्त्राणि मे समग्राणि ससंहाराणि भार्गवः । सप्रयोगरहस्यानि दातुमर्हस्यशेषतः ॥ एतद्वसु वसूनां हि सर्वेषां विप्रसत्तम । तथेत्युक्त्वा ततस्तस्मै प्रादादस्त्राणि भार्गवः ॥ सरहस्यव्रतं चैव धनुर्वेदमशेषतः । प्रतिगृह्य तु तत्सर्वं कृतास्त्रो द्विजसत्तमः । प्रियं सखायं सुप्रीतो जगाम द्रुपदं प्रति ॥' आदिपर्वणि१४०.११ ।

**ताम्रपर्णीया—** तत्त्वविद्या ब्रह्मविद्या आदिपदेनाङ्गविद्या ।।१८-२०।।

**चट्टि—** द्रोणेनेति शेषः । इतीरितः स रामः सास्त्रशस्त्राः अस्त्रशस्त्रविद्यासहिताः तत्त्वविद्या आदिर्यासां ताः तथा । स्वार्थे कप्रत्ययः । सर्वाः विद्याः प्रददौ । महात्मा महामतिः स द्रोणः अब्दानां द्विषट्केन द्वादशवर्षैः ताः विद्याः समाप्य सखायं द्रुपदं प्रति ययौ ।।२०।।

**[१]दानेऽर्द्धराज्यस्य हि तत्प्रतिज्ञां संस्मृत्य पूर्वामुपयातं सखायम् ।**
**सखा तवास्मीति तदोदितोऽपि जगाद वाक्यं द्रुपदोऽतिदर्पात् ।।२१।।**

**वेदाङ्गतीर्थीया—** पूर्वां गुरुकुलवासकाले कृतां तत्प्रतिज्ञां संस्मृत्य सखायं द्रुपदं ययौ । दैवात् दर्पात् दैवेच्छया जातदर्पात् इति वाक्यं जगाद ।।२१।।

**वरदराजीया—** अर्धराज्यस्य दाने विषये तस्य द्रुपदस्य प्रतिज्ञां संस्मृत्य उपयान्तं आगतं सखायं प्रति अतिदर्पात् वाक्यं जगाद । कथम्भूतम्? तव सखाऽस्मीत्युदितोऽपि इत्यर्थः ।।२१।।

**अनन्तभट्टीया—** उपयातं सखायं प्रति वाक्यं जग्राहेत्यन्वयः ।।२१।।

**जनार्दनीया—** किं कृत्वा ? अर्धराज्यस्य दाने दानविषये पूर्वं 'सहैव नौ राज्यमिति' इत्यात्मार्थं पूर्वकृतां तद् द्रुपदस्य प्रतिज्ञां संस्मृत्य, द्रुपदं ययाविति सम्बन्धः । अहं तव सखा अस्मीति तदा उदितः द्रोणोदितो द्रुपदोऽपि दैवात् अदृष्टोद्बोधकहरीच्छया जाताद् अतिदर्पात् गर्वात् उपयातं स्वसन्निधिं प्राप्तं सखायं द्रोणं प्रति वाक्यं जगाद ।।२१।।

**ताम्रपर्णीया—** दर्पात् मदप्रयुक्तमेष्यद्भीतिकारणादर्शनात् । 'मदाद्भीतेरदृष्टिस्तु दर्पः' इति [गी.भा १६.२] वचनात् ।।२१-२४।।

**चट्टि—** अर्धराज्यस्य दाने दानविषये पूर्वं 'सहैव नौ राज्यम्' इत्यात्मार्थं पूर्वकृतां तस्य द्रुपदस्य प्रतिज्ञां संस्मृत्य उपयान्तं स्वसन्निधिं प्राप्तं द्रोणं प्रति 'अहं तव सखा अस्मि' इति उदितः द्रोणोदितोऽपि द्रुपदो अतीवदर्पात् अधिकगर्वात् वाक्यं जगाद । 'न दरिद्रो वसुमतो नाविद्वान् विदुषस्सखा । नाराज्ञा सङ्गमो राज्ञः सखिपूर्वं किमिष्यते ।।' इति आदिपर्ववचनप्रकारेण जगाद [१४१.९] ।।२१।।

---

१. 'बाल्यात् प्रभृति कौरव्य सहाध्ययनमेव च । स मे सखा सदा तत्र प्रियवादी प्रियङ्करः । अब्रवीदिति मां भीष्म वचनं प्रीतिवर्धनम् । अहं प्रियतमः पुत्रः पितुर्द्रोण ममात्मनः । अभिषेक्ष्यति मां राज्ये स पाञ्चाल्यो यदा तदा । तद्भोज्यं भवता राज्यमर्धं सत्येन ते शपे ।। मम भोगाश्च वित्तं च त्वदधीनं सुखानि च । एवमुक्त्वाथ वव्राज कृतास्त्रः पूजितो मया ।।' इत्यादिपर्वणि १४१.४५-४८ । 'तच्च वाक्यं मनसा नित्यं धारयन् अहं पितृनियोगेन पुत्रलोभाच्च शारद्वतीं उपयेमे ।' आदिपर्वणि१४१.६० ।

**[1]न निर्धनो राजसखो [2]भवेत [3]यथेष्टतो गच्छ विप्रेति दैवात् ।**
**इतीरितस्याऽशु बभूव कोपो[3] जितेन्द्रियस्यापि मुनेर्हरीच्छया ॥२२॥**

**व्यासतीर्थीया–** देवाद्दैवेष्ठता ॥२२-२८॥

**मधुसूदनीया–** ॥ **न निर्धन इति** ॥ 'न दरिद्रो वसुमतो नाविद्वान् विदुषस्सखा । नाराज्ञा सङ्गमो राज्ञः सखिपूर्वं किमिष्यत ॥' इति आदिपर्ववचनप्रकारेण [१४१.९] जगादेत्यर्थः ॥२२-२५॥

**वरदराजीया–** हे विप्र यथेष्टतो गच्छ इति दैवात् अदृष्टवशादीरिते सति । 'राजा प्रोवाच वचनं ममर्षे विप्र भाषितम् । नो चेद्धन्तव्यतां प्राप्तो यथेष्टं गच्छतामिति ॥' इति विष्णुधर्मोत्तरे ॥२२॥

**जनार्दनीया–** किमिति ? हे विप्र! निर्धनः दरिद्रः । राज्ञः सखेति राजसखः न भवेत । यथेष्टतः स्वेच्छया गच्छेति सम्बन्धः । द्रुपदेन ईरिते सति, हरीच्छया अस्य द्रोणस्य आशु कोपो बभूव । कथम्भूतस्य जितेन्द्रियस्यापि ॥२२॥

**चट्टि–** किमिति? हे विप्र! निर्धनः दरिद्रः राज्ञः सखा राजसखः न भवेत । यथेष्टतः स्वेच्छया गच्छेति दैवात् अदृष्टवशात् द्रुपदेन ईरिते सति जितेन्द्रियस्यापि अस्य मुनेः द्रोणस्य हरीच्छया आशु कोपो बभूव ॥२२॥

**[4]प्रतिग्रहात् सन्निवृत्तेन सोऽयं मया प्राप्तो मत्पितुः शिष्यकत्वात् ।**
**पितुः शिष्यो ह्यात्मशिष्यो भवेत शिष्यस्यार्थः स्वीय एवेति मत्वा ॥२३॥**

---

१. 'मैवं जीर्णमुपास्व त्वं सख्यं भवदुपाधिकृत् । आसीत् सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनम् ॥ न दरिद्रो वसुमतो नाविद्वान् विदुषः सखा । न शूरस्य सखा क्लीबः सखिपूर्वं किमिष्यते ॥ ययोरेव समं वित्तं ययोरेव समं श्रुतम् । तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः । नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा । नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥' आदिपर्वणि १४१८-११

२. 'अहं त्वया न जानामि राज्यार्थे संविदं कृताम् । एकरात्रं तु ते ब्रह्मन् कामं दास्यामि भोजनम् ॥' इति आदिपर्वणि १४१.७३

३. 'द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान् । मुहूर्तं चिन्तयित्वा तु मन्युनाभिपरिप्लुतः । स विनिश्चित्य मनसा पाञ्चाल्यं प्रतिबुद्धिमान् ।' इत्यादिपर्वणि १४१.१२ ।

४. 'द्रोणं धिगस्त्वधनिनं यो धनं नाधिगच्छति । पिष्टोदकं सुतो यस्य पीत्वा क्षीरस्य तृष्णया । नृत्यति स्म मुदाविष्टः क्षीरं पीतं मयाप्युत ॥ इति सम्भाषतां वाचं श्रुत्वा मे बुद्धिरच्यवत् । आत्मानं चात्मना गर्हन् मनसेदं व्यचिन्तयम् ॥ अपि चाहं पुरा विप्रैर्वर्णितो गर्हितो वसे । परोपसेवां पापिष्ठां न च कुर्यां धनेप्सया ॥ इति मत्वा प्रियं पुत्रं भीष्मादाय ततो ह्यहम् । पूर्वस्नेहानुरागित्वात् सदारः सौमकिं गतः ॥' इत्यादिपर्वणि १४१.५८-६१ ।

**वेदाङ्गतीर्थीया–** शिष्यस्यार्थः स्वीय एवेति हेतोः प्रतिग्रहदोषो नेति मत्वेति भावः ।।२३।।

**अनन्तभट्टीया–** मत्तः मया प्राप्तः ।।२३।।

**वरदराजीया–** अस्य द्रोणस्य कोपोत्पत्तिप्रकारमाह– **प्रतिग्रहादित्यादिना** ।। प्रतिग्रहात् सम्यक् निवृत्तेन मया मत्पितुः भरद्वाजस्य शिष्यकत्वात् प्राप्तः हि यस्मात् पितुः शिष्यः आत्मनः स्वशिष्यो भवेत् । शिष्यस्य चार्थं स्वीयमेवेति मत्वा मया प्राप्त इति सम्बन्धः ।।२३।।

**जनार्दनीया–** कोपप्रकारं दर्शयति– **प्रतिग्रहादित्यादिना** ।। पितुः शिष्यः आत्मनः स्वस्य, शिष्यो भवेत् । शिष्यस्य अर्थः द्रव्यं स्वीय एव स्वकीयमेव । शिष्यप्रतिग्रहो दोषाय न भवेदित्यर्थः । इति मत्वा ज्ञात्वा, मम पितुः भरद्वाजस्य शिष्यकत्वात् प्रतिग्रहात् सम्यक् निवृत्तेन उज्झितेन मया स शिष्यभूतोऽयं द्रुपदः प्राप्तः ।।२३।।

**चट्टि–** कोपप्रकारं दर्शयति– **प्रतिग्रहादित्यादिना** ।। पितुः शिष्यः आत्मनः स्वस्य शिष्यो भवेत् । शिष्यस्य अर्थः द्रव्यं स्वीय एव । शिष्यात् प्रतिग्रहो न दोषाय इत्यर्थः । इति मत्वा मम पितुः भरद्वाजस्य शिष्यकत्वात् प्रतिग्रहात् सम्यक् निवृत्तेन मया सः शिष्यभूतो अयं द्रुपदः प्राप्तः ।।२३।।

**सोऽयं पापो मामवज्ञाय मूढो दुष्टं वचोऽश्रावयदस्य दर्पम् ।**
**हनिष्य इत्येव मतिं निधाय ययौ कुरूञ्छिष्यतां नेतुमेतान् ।।२४।।**

**वेदाङ्गतीर्थीया–** अस्य द्रुपदस्य ।।२४।।

**वरदराजीया–** अस्य द्रुपदस्य । एतान् कुरून् शिष्यतां नेतुम् ।।२४।।

**जनार्दनीया–** अवज्ञाय तिरस्कृत्य । अस्य द्रुपदस्य दर्पं मदम् । एतान् बुद्धिस्थान् कुरून् शिष्यतां स्वशिष्यत्वम्, नेतुं प्रापयितुं, कुरून् कुरुविषयान् ययौ ।।२४।।

**चट्टि–** मूढः पापः सोऽयं द्रुपदः मां अवज्ञाय तिरस्कृत्य दुष्टं वचः अश्रावयत् । अस्य द्रुपदस्य दर्पं मदं हनिष्य इति मतिं बुद्धिं विधायैव एतान् बुद्धिस्थान् कुरून् शिष्यतां स्वशिष्यत्वं नेतुं प्रापयितुं कुरून् कुरुविषयान् ययौ ।।२४।।

**प्रतिग्रहाद् विनिवृत्तस्य चार्थः स्याच्छिष्येभ्यः कौरवेभ्यो ममात्र ।**
**एवं मन्वानः क्रीडतः पाण्डवेयान् सधार्तराष्ट्रान् पुरबाह्यतोऽख्यत् ।।२५।।**

**वेदाङ्गतीर्थीया–** अर्थः द्रुपददर्पहननाख्यप्रयोजनं धनं च ।।२५।।

**वादिराजीया–** 'चक्षिङ् दर्शने' इति धातोः 'चक्षिङ् ख्याञ्' इति सूत्रात् ख्यादेशे कृते लुङि अख्यदिति रूपं भवति । अपश्यदित्यर्थः ॥२५-३०॥

**वरदराजीया–** प्रतिग्रहाद्विनिवृत्तस्य मम शिष्येभ्यः अर्थः प्रयोजनं स्यादित्येवं मन्वानः द्रोणः पुरस्य हस्तिनस्य बाह्यतो बाह्यप्रदेशे अख्यत् ऐक्षत ॥२५॥

**अनन्तभट्टीया–** अख्यत् ...ख्यादेशे कृते सति रूपम् । अपश्यदित्यर्थः ॥२५॥

**जनार्दनीया–** ममार्थः द्रुपदनिग्रहरूपप्रयोजनं द्रव्यार्थश्च कौरवेभ्यः स्यात् । एवं मन्वानः मनसि मन्त्रयन् द्रोणः अत्र कुरुविषयम् । पुरस्य हस्तिनपुरस्य बाह्यतः बहिप्रदेशे क्रीडतः क्रीडां कुर्वतः । अख्यत् अपश्यत् ॥२५॥

**ताम्रपर्णीया–** अख्यत् अपश्यत् ॥२५-३१॥

**भारतश्री–** अख्यत् अपश्यत् ॥२५॥

**चट्टि–** प्रतिग्रहात् विनिवृत्तस्य च ममार्थः द्रुपदनिग्रहरूपप्रयोजनं द्रव्याद्यर्थश्च शिष्येभ्यः कौरवेभ्यः स्यात् । एवं मन्वानः मनसि मन्त्रयन् द्रोणः अत्र कुरुविषये पुरस्य हस्तिनपुरस्य बाह्यतः बहिः प्रदेशे क्रीडतः क्रीडां कुर्वतः सधार्तराष्ट्रान् पाण्डवेयान् अख्यत् अपश्यत् ॥२५॥

**विक्रीडितो धर्मसूनोस्तदैव सहाङ्गुलीयेन च कन्दुकोऽपतत् ।**
**कूपे न शेकुः सहिताः कुमारा उद्धर्तुमेतं पवनात्मजोऽवदत् ॥२६॥**

**मधुसूदनीया–** ॥ **विक्रीडतो धर्मसूनोरिति** ॥ 'तेषां तु क्रीडमानानां उदपानेऽङ्गुलीयकम् । पपात धर्मराजस्य वीटा तत्रैव चापतत् ॥' [१४१.१८-१९] इत्यादिपर्वस्थवीटाशब्दस्यार्थः कन्दुक इति भावेन कन्दुकोऽपतदित्युक्तमिति भावः ॥२६-५२॥

**वरदराजीया–** विक्रीडतः कन्दुकक्रीडां कुर्वतः । कन्दुकः सहाङ्गुलीयेन कूपे अपतत् । कुमारा उद्धर्तुं न शेकुः । एतं कन्दुकम् । पवनात्मजः कुमारान् अवदत् ॥२६॥

**जनार्दनीया–** तदा धर्मसूनोः अङ्गुलीयेन प्रधानमुद्रारूपाङ्गुलीयभूषणेन सह कन्दुकः कूपे अपतत् । 'गेन्दुकः कन्दुकः' इत्यमरः । सहिताः मिलिताः एनं कन्दुकं उद्धर्तुं न शेकुः यदा, तदेति शेषः । पवनात्मजः भीमोऽवदत् ॥२६॥

**चट्टि–** विक्रीडतः कन्दुकक्रीडां कुर्वतः धर्मसूनोः कन्दुकः अङ्गुलीयेन प्रधानमुद्रारूपाङ्गुलीभूषणेन सह कूपे अपतत् । 'तेषां तु क्रीडमानानामुदपानेऽङ्गुलीयकम् । पपात धर्मराजस्य वीटा तत्रैव चापतत् ॥'

इति आदिपर्वस्थविटाशब्दस्यार्थः कन्दुक इति भावेन कन्दुकोऽपतदित्युक्तमिति भावः । सहिताः मिलिताः कुमाराः एनं कन्दुकं उद्धर्तुं न शेकुः यदा तदेति शेषः । पवनात्मजः भीमोऽवदत् ।।२६।।

**निष्पत्य चोद्धृत्य समुत्पतिष्ये कूपादमुष्माद् भृशनीचादपि स्म ।**
**सकन्दुकां मुद्रिकां पश्यताद्य सर्वे कुमारा इति वीर्यसंश्रयात् ।।२७।।**

**वेदाङ्गतीर्थीया–** वीर्यसंश्रयात् इत्यवदत् ।।२७।।

**वरदराजीया–** किमिति ? हे कुमाराः! भृशं नीचादत्यन्तं गभीरात् अस्मात् कूपात् समुत्पतिष्ये उपर्यागच्छामि । किं कृत्वा निष्पत्य कूपे पतित्वा सकन्दुकां मुद्रिकां समुद्धृत्य इति वीर्यसंश्रयादिति सम्बन्धः ।।२७।।

**अनन्तभट्टीया–** भृशनीचात् अतिनिम्नात् ।।२७।।

**जनार्दनीया–** किमिति? हे कुमारा! अहं वीर्यसंश्रयात् स्ववीर्यसंश्रयादेव निष्पत्य कूपे निमज्य, कन्दुकेन सहितां मुद्रिकां उद्धृत्य, भृशं नीचादपि अतिनिम्नादपि अमुष्माद् कूपात् समुत्पतिष्ये सम्यगूर्ध्वं आगमिष्ये । सर्वे यूयं पश्यतेत्यवददिति सम्बन्धः ।।२७।।

**भारतश्री–** भृशनीचात् अतिदूरगाधात् ।।२७-२८।।

**चट्टि–** किमिति? हे कुमाराः! अहं वीर्यसंश्रयात् स्ववीर्याश्रयात् निष्पत्य कूपे निमज्य सकन्दुकां कन्दुकेन सहितां मुद्रिकां उद्धृत्य, भृशनीचात् अतिनिम्नादपि अमुष्माद् कूपात् समुत्पतिष्ये सम्यगूर्ध्वं आगमिष्ये । सर्वे यूयं पश्यतेत्यवददिति सम्बन्धः ।।२७।।

**तदा कुमारानवदत् स विप्रो धिगस्त्रबाह्यां भवतां प्रवृत्तिम् ।**
**[1]जाताः कुले भरतानां न वित्थ दिव्यानि चास्त्राणि सुरार्चितानि ।।२८।।**

**वरदराजीया–** विप्रो द्रोणः । अस्त्रबाह्यां अस्त्ररहितां भवतां प्रवृत्तिं धिक् । भारतानां कुले जाता अपि अस्त्राणि यन्न वित्थ न जानीथ ।।२८।।

**जनार्दनीया–** अस्त्रबाह्यां मन्त्रहीनां प्रवृत्तिं धिक् । धिगित्यव्ययं निन्दार्थे । भरतानां भरतनृपकुलोद्भवानां कुलजाताः यूयं अस्त्राणि न वित्थ न जानीथ ।।२८।।

---

१. 'अथ द्रोणः कुमारांस्तान् दृष्ट्वा कृत्यवशस्तदा । प्रहस्य मन्दं पैशल्यादभ्यभाषत वीर्यवान् ।। अहो वो धिग्बलं क्षात्रं धिगेतां वः कृतास्त्रताम् । भरतस्यान्वये जाता ये वीटां नाधिगच्छत ।।' इत्यादिपर्वणि १४१.२४-२५ ।

**चट्टि–** विप्रः सः द्रोणः तदा कुमारान् अवदत् । किमिति । अस्त्रबाह्यां मन्त्रहीनां भवतां युष्माकं प्रवृत्तिं धिक् । धिगित्यव्ययं निन्दार्थे । भरतनृपकुलोद्भवानां कुले जाताः यूयं सुरार्चितानि दिव्यानि अस्त्राणि न वित्थ न विजानीथ ॥२८॥

**इतीरिता अस्त्रविदं कुमारा विज्ञाय विप्रं [1]सुरपूज्यपौत्रम् ।**
**सम्प्रार्थयामासुरथोद्धृतिं प्रति प्रधानमुद्रायुतकन्दुकस्य ॥२९॥**

**व्यासतीर्थीया–** सुरपूज्यपौत्रं विप्रमस्त्रविदं विज्ञाय ॥२९॥

**वेदाङ्गतीर्थीया–** सुरपूज्यपौत्रं विप्रं अस्त्रविदं विज्ञाय ॥२९॥

**वरदराजीया–** सुरपूज्यस्य बृहस्पतेः पौत्रं तं विप्रं अस्त्रविदं विज्ञाय उद्धृतिं प्रति सकन्दुकाङ्गुलीयोद्धारं प्रार्थयामासुरित्यर्थः ॥२९॥

**अनन्तभट्टीया–** सुरपूज्यपौत्रात् अस्त्रविदं विज्ञाय ॥२९॥

**जनार्दनीया–** सुरैः पूज्यः बृहस्पतिः, तस्य पौत्रं विप्रं अस्त्रविदं अस्त्रज्ञमिति विज्ञाय, अथ प्रधानमुद्रया युतश्चासौ कन्दुकश्च तस्य उद्धृतिं प्रति सम्प्रार्थयामासुः । उद्धृत्य देहीति प्रार्थयामासुरिति भावः ॥२९॥

**भारतश्री–** सुरपूज्यस्य बृहस्पतेः पौत्रं द्रोणं कश्चन विप्रं विज्ञाय ॥२९-३०॥

**चट्टि–** तेन इतीरिताः कुमाराः सुरैः पूज्यः बृहस्पतिः तस्य पौत्रं विप्रं अस्त्रविदं अस्त्रज्ञमिति विज्ञाय अथ प्रधानमुद्रायुतस्य कन्दुकस्य उद्धृतिं प्रति सम्प्रार्थयामासुः । उद्धृत्य देहीति प्रार्थयामासुरिति भावः॥२९॥

**स चाऽश्विषीकाभिरथोत्तरोत्तरं सम्प्रास्य दिव्यास्त्रबलेन कन्दुकम् ।**
**उद्धृत्य मुद्रोद्धरणार्थिनः पुनर्जगाद[2] भुक्तिर्मम कल्प्यतामिति ॥३०॥**

**व्यासतीर्थीया–** इषीकाः सम्प्रास्य ॥३०॥

**वेदाङ्गतीर्थीया–** उत्तरोत्तरं सम्प्रास्य ईषीकामिति शेषः । पूर्वं [केवलं कन्दुकं] उद्धृत्य ॥३०॥

**वरदराजीया–** स च द्रोणः आशु ईषिकाभिः तृणविशेषैः उत्तरोत्तरं यथा भवति तथा सम्प्रास्य क्षिप्त्वा ईषिकाभिः कन्दुकं उद्धृत्येर्थः । पुनः मुद्रोद्धरणार्थिनः कुमारान् जगाद । किमिति? मम भुक्तिः उपजीविका कल्प्यतां क्रियतामिति ॥३०॥

---

१. 'सुरपूज्यपौत्रात्' इति अनन्तभट्टीयपाठः ।

२. 'वीटां च मुद्रिकां चैव ह्यहमेतदपि द्वयम् । उद्धरेयमीषिकाभिः भोजनं मे प्रदीयताम्॥' इत्यादिपर्वणि१४१.२६ ।

**अनन्तभट्टीया–** सम्प्रास्य ....इति शेषः ॥३०॥

**जनार्दनीया–** स च द्रोणः उत्तरोत्तरं सम्प्रास्य, ईषिकाः संयोज्य, दिव्यास्त्रबलेन ईषीकाभिः तृणविशेषैः आशु कन्दुकं उद्धृत्य, मुद्रायाः प्रधानमुद्रिकायाः उद्धरणार्थं अर्थिनः सम्प्रार्थयतः कुमारान् प्रति मम भुक्तिः भोजनम्, जीवनोपायमित्यर्थः । कल्प्यतां क्रियतामिति पुनर्जगाद ॥३०॥

**चट्टि–** स च द्रोणः उत्तरोत्तरं सम्प्रास्य, ईषिकाः संयोज्य, दिव्यास्त्रबलेन ईषीकाभिः काशतृणैः । 'ईषिका काश उच्यते' इति हलायुधः । आशु कन्दुकं उद्धृत्य मुद्रायाः प्रधानमुद्रायाः उद्धरणार्थिनः कुमारान् प्रति मम भुक्तिः भोजनम्, जीवनोपायः इत्यर्थः । कल्प्यतां क्रियतामिति पुनर्जगाद ॥३०॥

**यथेष्टवित्ताशनपानमस्य धर्मात्मजः[१] प्रतिजज्ञे सुशीघ्रम् ।**
**तथैव तेनोद्धृतमङ्गुलीयं त्रिवर्गमुख्यात्मजवाक्यतोऽनु ॥३१॥**

**व्यासतीर्थीया–** त्रिवर्गाः धर्मादयः । त्रिवर्गमुख्यः धर्मः ॥३१-३२॥

**वादिराजीया–** त्रिवर्गमुख्यात्मजवाक्यत इत्यत्र धर्मार्थकामाः त्रिवर्गाः तत्र मुख्यो धर्मः तस्याऽऽत्मजः युधिष्ठिर इत्यर्थः ॥३१॥

**वरदराजीया–** अस्य द्रोणस्य यथेष्टवित्तादिकं प्रतिजज्ञे तथैव कन्दुकवदित्यर्थः । त्रिवर्गमुखस्य धर्मस्य आत्मजो युधिष्ठिरः तद्वाक्यानन्तरम् । 'द्रोणाय दत्तवान् राजा कुन्तीपुत्रो युधिष्ठिरः । धनं धान्यं गवां वस्त्रं सुवर्णं रजतादिकम् ॥' इति पाद्मे ॥३१॥

**अनन्तभट्टीया–** तथैव कन्दुकोद्धरणप्रकारेणैव ॥ **त्रिवर्गेति** ॥ धर्मादिषु मुख्यस्य धर्मस्य यमस्यात्मजं तस्य युधिष्ठिरस्येत्यर्थः । तेन द्रोणेन ॥३१॥

**जनार्दनीया–** अस्य द्रोणस्य । यथेष्टमिति सर्वत्र सम्बन्धः । वित्ताशनपानमित्यत्रैकवद्भावः । दास्यमीति प्रतिजज्ञे प्रतिज्ञातवान् । त्रिवर्गेषु धर्मार्थकामेषु, मुख्यस्य धर्मस्य अभिमन्यमानत्वाद् तदुद्भवो यो धर्मः तत्स्वरूपस्य यमस्य, आत्मजस्य पुत्रस्य युधिष्ठिरस्य, वाक्यतः वाक्यस्य अनु अनन्तरं तेन द्रोणेन तथैव कन्दुकवदेव अङ्गुलीयकं उद्धृतम् ॥३१॥

**भारतश्री–** त्रिवर्गमुख्यः धर्मः त्रिवर्गेषु प्रथमत्वात् मुख्यत्वम् ॥३१-३५॥

**भावचन्द्रिका–** तथैवेति उद्धरणमात्रे पूर्वसाम्यं ... । इषीकाभिरपि चापं गृहीत्वा कदारेण..अङ्गुलीयकं विध्वा तं शरं शरान्तरेण संयोज्य उद्धृतमिति भारतोक्तेः ॥३१॥

---

१. 'ततोऽब्रवीत् तदा द्रोणं कुन्तीपुत्रो युधिष्ठिरः । कृपस्यानुमते ब्रह्मन् भिक्षामाप्नुहि शाश्वतीम् ॥' इत्यादिपर्वणि १४१.२७ ।

**चट्टि–** धर्मात्मजः अस्य द्रोणस्य । यथेष्टमिति सर्वत्र सम्बन्धः । वित्ताशनपानमित्यत्रैकवद्भावः । दास्यमीति सुशीघ्रं प्रतिजज्ञे प्रतिज्ञातवान् । धर्मार्थकामाः त्रिवर्गः, तत्र मुख्यो धर्मः यमः तस्यात्मजः युधिष्ठिरः तस्य वाक्यतः वाक्यस्य अनु अनन्तरं तेन द्रोणेन तथैव कन्दुकवदेव अङ्गुलीयकं उद्धृतम् ।।३१।।

**पप्रच्छुरेनं सहिताः कुमाराः कोऽसीति सोऽप्याह पितामहो वः ।**
**वक्तेति ते दुद्रुवुराशु भीष्मं [1]द्रोणोऽयमित्येव स तांस्तदोचे ।।३२।।**

**वेदाङ्गतीर्थीया–** वक्ता वक्ष्यति । अयं भवद्भिः पृष्टः ।।३२।।

**वादिराजीया–** 'पप्रच्छुरेनं सहिताः कुमाराः' इत्यत्र गोयाचनार्थं गते द्रोणे रामात् द्वादशवर्षपर्यन्तं विद्याभ्यासं कुर्वति सति शिलोञ्छवृत्त्या मातृपोषणं कुर्वन्नश्वत्थामा कुमारैः सह नायाति । अश्वत्थाम्नः स्वपितृज्ञानसम्भवात् प्रश्नो न घटत इति ज्ञेयम् ।।३२।।

**वरदराजीया–** कोऽसीत्येनं द्रोणं पप्रच्छ । वो युष्माकं पितामहो भीष्मो मां वक्तेति सः द्रोणः आह । ते कुमाराः भीष्मं प्रति दुद्रुवुः । ऊचुश्च । सः भीष्मो द्रोणोऽयमिति तान् कुमारान् प्रति ऊचे ।।३२।।

**जनार्दनीया–** सहिताः मिलिताः कुमाराः त्वं कोऽसीति एनं द्रोणं पप्रच्छुः । सोऽपि द्रोणः वः भवतां पितामहः भीष्मः मां वक्ता वक्ष्यतीत्याह । ते कुमाराः आशु भीष्मं दुद्रुवुः गताः । 'द्रु गतौ' इति धातुः । स भीष्मः तदा तान् प्रति अयं विप्रः द्रोण इत्यूचे ।।३२।।

**ताम्रपर्णीया–** ।। **पप्रच्छुरिति** ।। गोयाचनार्थं गते द्रोणे रामात् द्वादशवर्षपर्यन्तं विद्याभ्यासं कुर्वति शिलोञ्छवृत्त्या मातृपोषणं कुर्वन् द्रौणिः बालैः क्रीडार्थं नागच्छतीति ज्ञेयम् ।।३२।।

**चट्टि–** सहिताः मिलिताः कुमाराः त्वं कोऽसीति एनं द्रोणं पप्रच्छुः । सोऽपि द्रोणः वः भवतां पितामहो भीष्मः मां वक्ता वक्ष्यतीत्याह । ते कुमाराः आशु भीष्मं दुद्रुवुः गताः । 'द्रु गतौ' इति धातुः । स भीष्मः तदा तान् प्रति अयं विप्रः द्रोण इत्यूचे ।।३२।।

**न राजगेहं स कदाचिदेति तेनादृष्टः स कुमारैः पुराऽतः ।**
**भीष्मो विद्यास्तेन सहैव चिन्तयन्नस्त्रप्राप्तिं तस्य शुश्राव रामात् ।।३३।।**

---

१. 'मुद्रिकामुद्धृतं दृष्ट्वा तामाहुस्ते कुमारकाः । अभिवन्दामहे ब्रह्मन् नैतदन्येषु विद्यते । कोसि कस्यासि जानीमो वयं किं करवामहे ।। एवमुक्तस्ततो द्रोणः प्रत्युवाच कुमारकान् । आचक्षध्वं च भीष्माय रूपेण च गुणैश्च माम् । स एव सुमहातेजाः साम्प्रतं प्रतिपत्स्यते । तथेत्युक्त्वा च गत्वा च भीष्ममूचुः कुमारकाः ।। ब्राह्मणस्य वचः कृत्स्नं तच्च कर्म तथाविधम् । भीष्मः श्रुत्वा कुमाराणां द्रोणं तं प्रत्यजानत।।' इत्यादिपर्वणि १४२.३४-३५ ।

**व्यासतीर्थीया–** कुमाराः द्रोणं कस्मान्नाज्ञासिषुः । भीष्मः कथं व्यजानादिति जिज्ञासायामाह– **न राजेति** ।।३३-३५।।

**वादिराजीया–** 'स कुमारैः पुराऽतः' इत्यत्र अतः इदानीं दर्शनकालात् पुरेति योजना । 'भीष्मो विद्यास्तेन सहैव चिन्तयन्' इत्यत्र द्रोणगृहं गत्वा विद्याचिन्तनं कुर्वन् भीष्मः द्वादशवर्षपर्यन्तं तददर्शने सति चारमुखेन रामात् तस्यास्त्रप्राप्तिं शुश्रावेति ज्ञेयम् ।।३३।।

**वरदराजीया–** ननु तत्रैव वसन् द्रोणः कथं तैः न ज्ञात इत्यत आह– **नेति** ।। तेन कारणेन । अतः पुरा इतः पूर्वं कदाचिदपि न दृष्टः । तर्हि भीष्मेण कथं ज्ञात इत्यत आह– **भीष्म इति** ।। तेन द्रोणेन सह विद्याश्चिन्तयन् भीष्मस्तं जानातीत्यर्थः । अस्य द्रोणस्य रामादस्त्रप्राप्तिं तदागमनात् पूर्वमेव वार्तारूपेण शुश्राव ।।३३।।

**अनन्तभट्टीया–** रामात् परशुरामात् तस्य अस्त्रप्राप्तिं शुश्राव । अतो भीष्मेण ज्ञात इति भावः ।।३३।।

**जनार्दनीया–** ननु कुमाराः स्वपुरवासिनं द्रोणं किमर्थं नाज्ञासिषुरित्यत आह– **नेति** ।। येन कारणेन स द्रोणः राजगेहं कदाचित् नैति न प्राप्नोति तेन कारणेन । अतः अस्मात् कारणात् पुरा कुमारैः स द्रोणः अदृष्टः । तर्हि भीष्मः कथं ज्ञातवानित्यत आह– **भीष्म इति** ।। तेन द्रोणेन सह विद्याः चिन्तयन् विचारयन् भीष्मः इदानीं द्रोणः क गतः? कुत्र तिष्ठति? किं करोति? इति विचार्येति वाक्यशेषः । रामात् तस्य द्रोणस्य अस्त्रप्राप्तिं शुश्राव अशृणोत् । अतो भीष्मेण ज्ञातमिति भावः ।।३३।।

**ताम्रपर्णीया–** ननु द्रोणस्य कदाचिदपि राजगेहागमने कथं भीष्मस्तद् ज्ञातवानित्यत आह– **भीष्म इत्यादिना** ।। भीष्म उक्तलक्षणं द्विजं श्रुत्वा द्रोणं ज्ञात्वा तत्र गत्वा तच्छिष्यत्वायैतान् ददाविति योजना । नन्वज्ञातपुरुषस्य लक्षणज्ञानेन कथं पुरुषविशेषत्वनिश्चय इत्यत उक्तम्– **विद्या इति** ।। प्रागिति शेषः । चिन्तयन्नभ्यसन् । ननु पूर्वं द्रोणे उक्तमहास्त्रविद्याया अभावात् कथं महास्त्रविद्यां श्रुत्वा द्रोणोऽयमिति ज्ञातवानित्यत उक्तम्– **अस्त्रप्राप्तिमिति** ।।३३-३५।।

**भावचन्द्रिका–** ।। **नेति** ।। द्रोणे रामं गते द्वादशवर्षपर्यन्तं मातृपोषणे रतः राजद्वारं क्रीडार्थमपि नागतः । पितरश्च विचारयन् पिता ...श्रुत्वा मात्रा सह तं प्राप्य तेन सह कुरून् प्रापेति इति । स कदाचित् क्रीडार्थमागतोऽपि अश्वत्थामो द्वादशवर्षमानागमनात् । कुरुभिर्विस्मृतः अतस्तन्मुखेनापि द्रोणो न ज्ञातः । 'शिष्यैः परिवृतः श्रीमान् पुत्रेणानुगतस्तदा । जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ।।' इति । 'सदारः प्राद्रवत् कुरून्' इति वचनात् ।।३३।।

**चट्टि–** ननु कुमाराः स्वपुरवासिनं द्रोणं किमर्थं न जानन्ति इत्यत आह– **नेति** ।। येन कारणेन स द्रोणः राजगेहं कदाचित् नैति न प्राप्नोति । तेन कारणेन कुमारैः अतः अस्मात् कालात् पुरा सः

द्रोणः अदृष्टः । तर्हि भीष्मः कथं ज्ञातवानित्यत आह– **भीष्म इति** ।। स्वयं द्रोणगृहं गत्वा तेन द्रोणेन सह विद्याः तत्वविद्यादिविद्याः चिन्तयन् विचारयन् भीष्मः इदानीं द्रोणः कुत्र गतः? कुत्र तिष्ठति ? किं करोति ? इति विचार्येति वाक्यशेषः । रामात् परशुरामात् तस्य द्रोणस्य अस्त्रप्राप्तिं शुश्राव चारमुखात् अभृणोत् । अतो भीष्मेण ज्ञात इति भावः ।।३३।।

**श्रुत्वा वृद्धं कृष्णवर्णं द्विजं तं महास्त्रविद्यामपि तां महामतिः ।**
**द्रोणं ज्ञात्वा तस्य शिष्यत्व [१]एतान् ददौ कुमारांस्तत्र गत्वा स्वयं च ।।३४।।**

**वादिराजीया–** 'महास्त्रविद्यामपि ताम्' इत्यत्र तां मन्त्रितैषीकपरम्परया कूपात् कन्दुकोद्धरणादि-महास्त्रविद्यां च श्रुत्वेति सम्बन्धः ।।३४-३७।।

**वरदराजीया–** वृद्धं कृष्णवर्णं तं द्विजं कुमारेभ्यः श्रुत्वा । कन्दुकोद्धरणादिना तां महास्त्रविद्यामपि श्रुत्वा । तत्र द्रोणसमीपं गत्वा शिष्यत्वे ददौ । शिष्यान् कर्तुं ददावित्यर्थः ।।३४।।

**जनार्दनीया–** तथापि तमदृष्ट्वा कथं ज्ञातवानित्यत आह– **श्रुत्वेति** ।। द्विजं श्रुत्वा, तामपि कन्दुकाद्युद्धरणरूपां महास्त्रविद्यां श्रुत्वेत्यर्थः । इति हेतुद्वयेन द्रोणोऽयमिति ज्ञात्वा, अत एव महामतिः भीष्मः स्वयं तत्र द्रोणसन्निधिं गत्वा, तस्य द्रोणस्य वशे शिष्यत्वे शिष्यत्वार्थे एतान् ददौ ।।३४।।

**चट्टि–** तथापि तमदृष्ट्वा कथं ज्ञातवानित्यत आह– **श्रुत्वेति** ।। वृद्धं कृष्णवर्णं द्विजं च कुमारेभ्यः श्रुत्वा, तां कन्दुकाद्युद्धरणरूपां महास्त्रविद्यामपि श्रुत्वा तं द्रोणं ज्ञात्वा अत एव महामतिः भीष्मः स्वयं तत्र द्रोणसन्निधिं गत्वा, तस्य द्रोणस्य शिष्यत्वे शिष्यत्वार्थे एतान् कुमारान् ददौ । कुमाराः द्रोणमज्ञात्वा भीष्मं पप्रच्छुः इत्युक्तम् । कुमाराणां मध्ये अश्वत्थाम्नः स्थितत्वात् तेनापि न ज्ञातः किमिति शङ्का गोयाचनार्थं गते द्रोणे रामात् द्वादशवर्षपर्यन्तं विद्याभ्यासं कुर्वति शिलोञ्छवृत्त्या मातृपोषणं कुर्वन् अश्वत्थामा कुमारैः सह क्रीडार्थं नागत इति ज्ञात्वा परिहर्तव्या ।।३४।।

**[२]द्रोणोऽथ तानवदद् यो मदिष्टं कर्तुं प्रतिज्ञां प्रथमं करोति ।**
**[३]तं धन्विनां प्रवरं साधयिष्य इत्यर्जुनस्तामकरोत् प्रतिज्ञाम् ।।३५।।**

---

१. 'प्रतिजग्राह तं भीष्मो गुरुं पाण्डुसुतैः सह । पौत्रानादाय तान् सर्वान् वसूनि विविधानि च । शिष्या इति ददौ राजन् द्रोणाय विधिपूर्वकम् ।।' इत्यादिपर्वणि १४२.१-२ ।

२. 'कार्यं मे काङ्क्षितं किञ्चिद् हृदि सम्परिवर्तते । कृतास्त्रैस्तत्प्रदेयं मे तदेतद्वदतानघाः ।। तच्छ्रुत्वा कौरवेयास्ते तूष्णीमासन् विशांपते । अर्जुनस्तु ततः सर्वं प्रतिजज्ञे परन्तप ।।' इत्यादिपर्वणि १४३.१२-१३ ।

३. द्रोण उवाच- प्रतयिष्ये तथा कर्तुं यथा नान्यो धनुर्धरः । त्वत्समो भविता लोके सत्यमेतद् ब्रवीमि ते ।।' इत्यादिपर्वणि १४३.३५ ।

**वरदराजीया–** मदिष्टं कर्तुं यः प्रतिज्ञां करोति तं धन्विनां मध्ये प्रवरं श्रेष्ठं साधयिष्ये इत्यवदत् । तां प्रतिज्ञां त्वदिष्टं करोमीत्येवं रूपाम् ।।३५।।

**जनार्दनीया–** तान् कुमारान् अवदत् । किमिति ? यः पुमान् मम इष्टं अभीप्सितं कर्तुं प्रथमं आदौ प्रतिज्ञां करोति करिष्यति तं धन्विनां मध्ये प्रवरं श्रेष्ठं साधयिष्ये करोमीत्यवदत् । अर्जुनः तां द्रोणोक्तां प्रतिज्ञां अकरोत् ।।३५।।

**चट्टि–** अथ द्रोणः तान् कुमारान् अवदत् । किमिति? यः पुमान् मम इष्टं अभीप्सितं कर्तुं प्रथमं आदौ प्रतिज्ञां करोति करिष्यति । तं धन्विनां मध्ये प्रवरं श्रेष्ठं साधयिष्ये करोमीत्यवदत् । अर्जुनः तां द्रोणोक्तां प्रतिज्ञां अकरोत् ।।३५।।

**उन्मादनादीनि स वेद कृष्णादस्त्राण्यनापत्सु न तानि मुञ्चेत् ।**
**इत्याज्ञया केशवस्यापराणि प्रयोगयोग्यानि सदेच्छति स्म ।।३६।।**

**व्यासतीर्थीया–** कृष्णादस्त्राणां प्राप्तत्वात् किमर्थं प्रतिजज्ञ इति जिज्ञासायामाह– **उन्मादेति** ।। इति हेतोः प्रतिजज्ञे ।।३६।।

**वेदाङ्गतीर्थीया–** सदा प्रयोगयोग्यानि आपद्यनापदि च ।।३६।।

**सत्याभिनवतीर्थीया–** तत्रैव उन्मादनादीनि स वेद...इति श्लोके 'तानि न मुञ्चेत् इत्याज्ञया केशवस्य' इत्यस्य तानि न मुञ्चेत् अतः त्वं न मुञ्चेति केशवस्याज्ञयेत्यर्थः । एतेन 'तानि न मुञ्चेति केशवस्याज्ञया' इति वक्तव्यम् । 'तानि न मुञ्चेत् इति केशवस्याज्ञया' इति अनुपपन्नमिति दूषणमपहस्तितम् । अत इत्यस्य अध्याहारः, तानि न मुञ्चेदित्यस्यावृत्तिः, मुञ्चेदित्यस्य अर्थवशात् मुञ्चेति विपरिणाम इति स्वीकृत्य तानि न मुञ्चेति केशवस्याज्ञयेत्यस्यार्थस्योक्तत्वात् ।।३६।।

**वरदराजीया–** सोऽर्जुनः उन्मादनादीनि अस्त्राणि कृष्णात् वेद । तथापि अनापत्सु आपदं विना तानि अस्त्राणि न मुञ्चेदिति कृष्णस्याज्ञयैव प्रयोगयोग्यानि अस्त्राणि सदा इच्छति स्म ।।३६।।

**अनन्तभट्टीया–** उन्मादनादीनि संमोहास्त्रादीनि ।।३६।।[१]

**जनार्दनीया–** सोऽर्जुनः । उन्मादनं आदिर्येषां तानि तथा तानि । अस्त्राणि कृष्णाद्वेद । अनापत्सु आपद्रहितकालेषु तानि उन्मादनादीनि न मुञ्चेत् न प्रयुज्येत् । इति केशवस्याज्ञया सदा आपद्यनापदिप्रयोगयोग्यानि अपराण्यस्त्राणि इच्छति स्म ।।३६।।

---

१. इति हो.पुस्तकपाठः ।

**ताम्रपर्णीया–** उन्मादनादीनि सम्मोहनादीनि ।।३६-४०।।

**भारतश्री–** उन्मादनादीनि सम्मोहनादीनि ।।३६।।

**चट्टि–** कृष्णादस्त्राणां प्राप्तत्वात् अर्जुनः किमर्थं प्रतिज्ञामकरोदित्यत आह– **उन्मादेति** ।। सः अर्जुनः उन्मादनं आदिर्येषां तानि तथा तानि अस्त्राणि कृष्णाद्वेद । अनापत्सु आपद्रहितकालेषु तानि उन्मादनादीनि न मुञ्चेत् न प्रयुज्येत् इति केशवस्याज्ञया सदा आपद्यनापदि च प्रयोगयोग्यानि अपराण्यस्त्राणि इच्छति स्म । अतः प्रतिज्ञामकरोदिति भावः ।।३६।।

**भीष्मादिभिर्भविता सङ्गरो नः तदा नाऽहं गुरुभिर्नित्ययोद्धा ।**
**भवेयमेकः फल्गुनोऽस्त्रज्ञ एषां निवारकश्चेन्मम धर्मलाभः ।।३७।।**

**व्यासतीर्थीया–** भीमः कस्मात् प्रथमं न प्रतिजज्ञ इति जिज्ञासायामाह– **भीमेति** ।।३७।।

**वेदाङ्गतीर्थीया–** अतिसमर्थो भीमः कस्मात् न प्रतिजज्ञे इत्यत आह– **भीमेति** ।। न भवेयं न स्याम् ।।३७।।

**वरदराजीया–** भीमः प्रतिज्ञां किमर्थं न चकारेत्यत आह– **भीष्मादिभिरित्यादिना** ।। नोऽस्माकं सङ्गरो भविता । गुरुभिः भीष्मादिभिः नित्ययोद्धा नाहं भवेयम् । तत एषः गुरूणां निवारकः अर्जुनः स्याच्चेत्तर्हि मम धर्मलाभः ।।३७।।

**भावविवृति–** 'भीष्मादिर्भविता सङ्गरो नः ... मम धर्मलाभः' इत्यत्र नित्ययोद्धा नियमेन योद्धा कदाचित्तैस्सह भीमेन युद्धकरणात् । तदुक्तम्–

'ततः परेद्युः पुनरेव भीमभीष्मौ पुरस्कृत्य समीयतुस्ते ।
सेने तथा सारथिहीनमाशु भीष्मं कृत्वा मारुतिरभ्यगात्परान् ।।' [म.ता.नि.२५.७२] इति,
'तस्याशु विचूर्णितो रथः गदाभिघातेन वृकोदरस्य ।
ससूतवाजिध्वजयन्त्रकूबरः.. ... ... ...।।' [म.ता.नि.२६.१२३-१२४]
'आपद्येव हि भीमस्य निवारयति नान्यथा' [म.ता.नि.२२.१२६] इत्यादि ।
ननु 'विष्णुद्विट् तदनुबन्धिनिग्रहः परमो धर्मः' इति
'भीष्मादिहत्यापि तवैव पापं यदन्वयुस्त्वामपि पापनिश्चयम् ।
पापश्च पापानुगतश्च हत्वा कथञ्चनाप्यस्ति नचैव पापम् ।।' [म.ता.नि.२८.१०३] इत्युक्तेः ।

कथं भीष्मादीनामनिवारणं धर्म इति चेत् । ये भगवद्द्वेषिणस्ते सर्वे स्वेनैव वध्याः । तेष्वपि येऽक्षधूर्ताः ते परैर्घातनीया हि । ये मुक्तियोग्या विष्णुद्विडनुबन्धिनः तेष्वपि राजानो राजपुत्रा राजानुजाश्च

**वरदराजीया–** मदिष्टं कर्तुं यः प्रतिज्ञां करोति तं धन्विनां मध्ये प्रवरं श्रेष्ठं साधयिष्ये इत्यवदत् । तां प्रतिज्ञां त्वदिष्टं करोमीत्येवं रूपाम् ।।३५।।

**जनार्दनीया–** तान् कुमारान् अवदत् । किमिति ? यः पुमान् मम इष्टं अभीप्सितं कर्तुं प्रथमं आदौ प्रतिज्ञां करोति करिष्यति तं धन्विनां मध्ये प्रवरं श्रेष्ठं साधयिष्ये करोमीत्यवदत् । अर्जुनः तां द्रोणोक्तां प्रतिज्ञां अकरोत् ।।३५।।

**चट्टि–** अथ द्रोणः तान् कुमारान् अवदत् । किमिति? यः पुमान् मम इष्टं अभीप्सितं कर्तुं प्रथमं आदौ प्रतिज्ञां करोति करिष्यति । तं धन्विनां मध्ये प्रवरं श्रेष्ठं साधयिष्ये करोमीत्यवदत् । अर्जुनः तां द्रोणोक्तां प्रतिज्ञां अकरोत् ।।३५।।

**उन्मादनादीनि स वेद कृष्णादस्त्राण्यनापत्सु न तानि मुञ्चेत् ।**
**इत्याज्ञया केशवस्यापराणि प्रयोगयोग्यानि सदेच्छति स्म ।।३६।।**

**व्यासतीर्थीया–** कृष्णादस्त्राणां प्राप्तत्वात् किमर्थं प्रतिजज्ञ इति जिज्ञासायामाह– **उन्मादेति** ।। इति हेतोः प्रतिजज्ञे ।।३६।।

**वेदाङ्गतीर्थीया–** सदा प्रयोगयोग्यानि आपद्यनापदि च ।।३६।।

**सत्याभिनवतीर्थीया–** तत्रैव उन्मादनादीनि स वेद...इति श्लोके 'तानि न मुञ्चेत् इत्याज्ञया केशवस्य' इत्यस्य तानि न मुञ्चेत् अतः त्वं न मुञ्चेति केशवस्याज्ञयेत्यर्थः । एतेन 'तानि न मुञ्चेति केशवस्याज्ञया' इति वक्तव्यम् । 'तानि न मुञ्चेत् इति केशवस्याज्ञया' इति अनुपपन्नमिति दूषणमपहस्तितम् । अत इत्यस्य अध्याहारः, तानि न मुञ्चेदित्यस्यावृत्तिः, मुञ्चेदित्यस्य अर्थवशात् मुञ्चेति विपरिणाम इति स्वीकृत्य तानि न मुञ्चेति केशवस्याज्ञयेत्यस्यार्थस्योक्तत्वात् ।।३६।।

**वरदराजीया–** सोऽर्जुनः उन्मादनादीनि अस्त्राणि कृष्णात् वेद । तथापि अनापत्सु आपदं विना तानि अस्त्राणि न मुञ्चेदिति कृष्णस्याज्ञयैव प्रयोगयोग्यानि अस्त्राणि सदा इच्छति स्म ।।३६।।

**अनन्तभट्टीया–** उन्मादनादीनि संमोहास्त्रादीनि ।।३६।।[१]

**जनार्दनीया–** सोऽर्जुनः । उन्मादनं आदिर्येषां तानि तथा तानि । अस्त्राणि कृष्णाद्वेद । अनापत्सु आपद्रहितकालेषु तानि उन्मादनादीनि न मुञ्चेत् न प्रयुज्येत् । इति केशवस्याज्ञया सदा आपद्यनापदिप्रयोगयोग्यानि अपराण्यस्त्राणि इच्छति स्म ।।३६।।

---

१. इति हो.पुस्तकपाठः ।

**ताम्रपर्णीया–** उन्मादनादीनि संमोहनादीनि ।।३६-४०।।

**भारतश्री–** उन्मादनादीनि सम्मोहनादीनि ।।३६।।

**चट्टि–** कृष्णादस्त्राणां प्राप्तत्वात् अर्जुनः किमर्थं प्रतिज्ञामकरोदित्यत आह– **उन्मादेति** ।। सः अर्जुनः उन्मादनं आदिर्येषां तानि तथा तानि अस्त्राणि कृष्णाद्वेद । अनापत्सु आपद्रहितकालेषु तानि उन्मादनादीनि न मुञ्चेत् न प्रयुज्येत् इति केशवस्याज्ञया सदा आपद्यनापदि च प्रयोगयोग्यानि अपराण्यस्त्राणि इच्छति स्म । अतः प्रतिज्ञामकरोदिति भावः ।।३६।।

**भीष्मादिभिर्भविता सङ्गरो नः तदा नाऽहं गुरुभिर्नित्ययोद्धा ।**
**भवेयमेकः फल्गुनोऽस्त्रज्ञ एषां निवारकश्चेन्मम धर्मलाभः ।।३७।।**

**व्यासतीर्थीया–** भीमः कस्मात् प्रथमं न प्रतिजज्ञ इति जिज्ञासायामाह– **भीमेति** ।।३७।।

**वेदाङ्गतीर्थीया–** अतिसमर्थो भीमः कस्मात् न प्रतिजज्ञे इत्यत आह– **भीमेति** ।। न भवेयं न स्याम् ।।३७।।

**वरदराजीया–** भीमः प्रतिज्ञां किमर्थं न चकारेत्यत आह– **भीष्मादिभिरित्यादिना** ।। नोऽस्माकं सङ्गरो भविता । गुरुभिः भीष्मादिभिः नित्ययोद्धा नाहं भवेयम् । तत एषः गुरूणां निवारकः अर्जुनः स्याच्चेत्तर्हि मम धर्मलाभः ।।३७।।

**भावविवृति–** 'भीष्मादिर्भविता सङ्गरो नः ... मम धर्मलाभः' इत्यत्र नित्ययोद्धा नियमेन योद्धा कदाचित्तैस्सह भीमेन युद्धकरणात् । तदुक्तम्–

'ततः परेद्युः पुनरेव भीमभीष्मौ पुरस्कृत्य समीयतुस्ते ।
सेने तथा सारथिहीनमाशु भीष्मं कृत्वा मारुतिरभ्यगात्परान् ।।' [म.ता.नि.२५.७२] इति,
'तस्याशु विचूर्णितो रथः गदाभिघातेन वृकोदरस्य ।
ससूतवाजिध्वजयन्त्रकूबरः.. ... ... ...।।' [म.ता.नि.२६.१२३-१२४]
'आपद्येव हि भीमस्य निवारयति नान्यथा' [म.ता.नि.२२.१२६] इत्यादि ।
ननु 'विष्णुद्विट् तदनुबन्धिनिग्रहः परमो धर्मः' इति
'भीष्मादिहत्यापि तवैव पापं यदन्वयुस्त्वामपि पापनिश्चयम् ।
पापञ्च पापानुगतञ्च हत्वा कथञ्चनाप्यस्ति नचैव पापम् ।।' [म.ता.नि.२८.१०३] इत्युक्तेः ।

कथं भीष्मादीनामनिवारणं धर्म इति चेत् । ये भगवद्द्वेषिणस्ते सर्वे स्वेनैव वध्याः । तेष्वपि येऽक्षधूर्ताः ते परैर्घातनीया हि । ये मुक्तियोग्या विष्णुद्विडनुबन्धिनः तेष्वपि राजानो राजपुत्रा राजानुजाश्च

युद्धार्थमागताश्चेत् स्वेनैव वध्याः । ये विष्णुद्विडनुबन्धिनो कृतोद्वाहा राजपुत्रा क्रूरव्रतयुक्ताश्च तथा अन्यधर्मरताश्च स्वेनैव वध्याः नैव परैरेव वध्या भवन्ति । भीष्मस्य ब्रह्मचारित्वात् द्रोणकृपादीनामन्यधर्मरतत्वात् तेषामनिवारणं धर्मो भवत्यनापदि । आपदि तु न दोषायेति । तदुक्तमुत्तरत्र-

'पापाधिकांश्चैव बलाधिकांश्च हत्वा मुक्तावधिकानन्दवृद्धिः ।
प्रीतिश्च विष्णोः परमैव तत्र तस्माद्धन्तव्याः पापिभिः सर्वथैव ।।
ये त्वक्षधूर्ता ग्रहणं गता वा पापास्ते वै घातनीयाः स्वदोर्भ्याम् ।
राजानं वा राजपुत्रं तथैव राजानुजं वाभियान्तं निहन्यात् ।।
राज्ञः पुत्रोऽप्यकृतोद्वाहको यस्स घातनीयो न स्वयं वध्य एव ।
क्रूरं चान्यद्धर्मयुक्तं परैस्तत्प्रसाधनीयं क्षत्रियैर्न स्वकार्यम् ।।
एवं धर्मो विहितो वेद एव वाक्यं विष्णोः पञ्चरात्रेषु तादृक् ।।'[२२.१०३-१०६] इति ।।
।।३७-५०।।

**जनार्दनीया–** अर्जुनादपि समर्थेन भीमेन प्रतिज्ञा कुतो न कृता ? इत्यतो हेतुमाह– **भीष्मादिभिरित्यादिना** ।। यदा भीष्मादिभिर्नोऽस्माकं सङ्गरः सङ्ग्रामः भविता भविष्यति तदाहं गुरुभिर्भीष्मादिभिर्नित्यं योद्धा युद्धकर्ता न भवेयं न स्याम् । अतः अस्त्रज्ञः एकः फल्गुनः एषां भीष्मादीनां निवारकश्चेत्तर्हि मम धर्मलाभः । ननु 'क्षत्रियाणां विशेषतोऽपि परमधर्मं नारायणद्विट्तदनुबन्धिनिग्रहम्' इति गीतातात्पर्यविरोध इति चेन्न । तात्पर्ये विष्णुद्विट्तदनुबन्धिनिग्रहमात्रं धर्म इत्युक्तम् । न तु स्वत एवेति नियमः । निग्रहस्य स्वतः परतोऽपि सम्भवात् । यथा दुष्टस्त्रीकितवादिनिग्रहस्य परत एव सम्भवात् तथा नारायणतदनुबन्धिनिग्रहणं अस्त्रैस्सदा निग्रहोऽपि परत एव धर्मः । अत एवात्र 'गुरुभिर्नित्य-योद्धा' 'अस्त्रज्ञ' इति विशेषणानि । तत्र तु 'नारायणद्विट्तदनुबन्धिनिग्रहम्' इति सामान्योक्तिः ।।३७।।

**भारतश्री–** नित्ययोद्धा नियमेन योद्धा । कदाचित् युद्धस्य कृतत्वात् । तदुक्तमुत्तरत्र । 'ततः परेद्युः पुनरेव भीमभीष्मौ पुरस्कृत्य समीयतुस्ते । सेने तथा [तदा] सारथिहीनमाशु भीष्मं कृत्वा मारुतिरभ्ययात् परान् ।।' इति [२५-७१] तथा– 'इत्युक्तवाक्यः स गदां समाददे चिक्षेप तां द्रोणरथाय भीमः । उवाच चाहं पितृवन्मानये त्वां सदा मृदुस्त्वां प्रति नान्यथा क्वचित् ।। अमार्दवे पश्य च यादृशं बलं ममेति तस्याशु विचूर्णितो रथः । गदाभिघातेन वृकोदरस्य ससूतवाजिध्वजयन्त्रकूबरः ।।' [२६-१२३,१२४] 'आपद्येव हि भीमस्तान्निवारयति नान्यथा'[२२-१२६] इति ।।३७-४५।।

**भावचन्द्रिका–** ।। **भीष्मादिभिरिति** ।। 'विष्णुद्विट्तदनुबन्धिनिग्रहः परमो धर्मः' इति गीताभाष्य-वचनेन विरोधपरिहारस्तु अस्त्रज्ञैस्सह अस्त्रज्ञेनैव युद्धं कार्यम् । भीमस्य हर्याज्ञया क्वचिदेवास्त्रयुद्धं धर्म

इति वक्ष्यति । नित्यमस्त्रयुद्धमिति प्रसक्तं भविष्यति तदा नाहं गुरुभिः अस्त्रोपदेशकैः अत एवास्त्रज्ञैः नित्ययोद्धा न । अस्त्रज्ञः फल्गुनो निवारकश्चेत् धर्मलाभ इति ।।३७।।

**चट्टि–** अर्जुनादपि समर्थेन भीमेन प्रतिज्ञा कुतो न कृता? इत्यत आह– **भीष्मादिभिरित्यादिना** ।। यदा भीष्मादिभिः नः अस्माकं सङ्गरः सङ्ग्रामः भविता भविष्यति । तदाहं गुरुभिर्भीष्माद्यैर्नित्ययोद्धा युद्धकर्ता न भवेयं न स्याम् । अतः अस्त्रज्ञः एकः फल्गुनः एषां भीष्मादीनां निवारकश्चेत् तर्हि मम धर्मलाभः । ननु 'क्षत्रियाणां विशेषतोऽपि परमधर्मं नारायणद्विट्तदनुबन्धिनिग्रहम्' इति गीतातात्पर्येण विरोध इति चेन्न । तात्पर्ये 'विष्णुद्विट्तदनुबन्धिनिग्रहः धर्म' इत्युक्तम् । न तु स्वत एवेति नियमः । निग्रहस्य स्वतः परतोऽपि सम्भवात् । यथा दुष्टस्त्रीकितवादीनां निग्रहस्य परत एव सम्भवः । तथा नारायणद्विडनुबन्धिगुरूणां अस्त्रैस्सदा निग्रहोऽपि परत एव धर्मः । अत एवात्र 'गुरुभिर्नित्ययोद्धा' 'अस्त्रज्ञ' इति विशेषणानि । तत्र तु 'नारायणद्विट्तदनुबन्धिनिग्रहम्' इति सामान्योक्तिः ।।३७।।

**न बुद्धिपूर्वं वर इन्दिरापतेरन्यत्र मे ग्राह्य इतश्च जिष्णुः ।**
**करोतु गुर्वर्थमिति स्म चिन्तयन् भीमः प्रतिज्ञां न चकार तत्र ।।३८।।**

**व्यासतीर्थीया–** अस्त्रदातारो वरं च प्रददाति । तदभिप्रायेणोक्तम्– **न बुद्धीति** ।।३८-४१।।

**वेदाङ्गतीर्थीया–** इन्दिरापतेरन्यत्र अन्यस्मात् । इतश्च अस्मात् कारणाच्च । जिष्णुः गुर्वर्थं प्रतिज्ञां करोतु इत्यभिप्रायद्वयम् ।।३८-४४।।

**वादिराजीया–** 'न बुद्धिपूर्वम्' इत्यत्र क्षुतादौ शतं जीवेति ब्राह्मणदत्तवरनिवारणाय बुद्धिपूर्वमित्युक्तम् ।।३८-४०।।

**वरदराजीया–** इन्दिरापतेरन्यत्र अन्यस्मात् । इतश्च हेतोः । गुर्वर्थं द्रोणार्थम् ।।३८।।

**जनार्दनीया–** हेत्वन्तरमाह– **नेति** ।। इन्दिरापतेः अन्यत्र अन्यस्मात् बुद्धिपूर्वं यथा स्यात्तथा । मे मया वरो न ग्राह्यः । अप्रार्थितगुर्वादिभिर्दत्तवरस्य ग्राह्यत्वान्न बुद्धिपूर्वमित्युक्तम् । इतश्च अस्माद्धेतोः जिष्णुरर्जुनः गुर्वर्थं प्रतिज्ञां करोतु इति हेतुद्वयं चिन्तयन् भीमः तत्र गुरुविषये अस्त्रप्राप्तिसमये वा स्वयं प्रतिज्ञां न चकार ।।३८।।

**चट्टि–** हेत्वन्तरमाह– **नेति** ।। इन्दिरापतेः अन्यत्र अन्यस्मात् बुद्धिपूर्वं यथा स्यात्तथा । मे मया वरो न ग्राह्यः । क्षुतादौ शतं जीवेत्यादिब्राह्मणदत्तवरस्य ग्राह्यत्वान्न बुद्धिपूर्वमित्युक्तम् । इतश्च अस्माद्धेतोः जिष्णुरर्जुनः गुर्वर्थं प्रतिज्ञां करोतु इति हेतुद्वयं चिन्तयन् भीमः तत्र गुरुविषये स्वयं प्रतिज्ञां न चकार न कृतवान् ।।३८।।

**तत्प्रेरितेनार्जुनेन प्रतिज्ञा कृता यदा विप्रवरस्ततः परम् ।**
**स्नेहं नितान्तं सुरराजसूनौ कृत्वा महास्त्राणि ददौ स तस्य ॥३९॥**

**वरदराजीया–** तेन भीमेन प्रेरितेन । ततः परं प्रतिज्ञाकरणानन्तरम् । सः द्रोणः तस्य सुरराजसूनोः॥

**जनार्दनीया–** तेन भीमेन, प्रेरितेन यदा प्रतिज्ञा कृता । ततः परं तदनन्तरम् । स विप्रवरः द्रोणः सुरराजसूनौ अर्जुने । तस्मै अर्जुनाय ददौ ॥३९॥

**चट्टि–** तेन भीमेन प्रेरितेन अर्जुनेन यदा प्रतिज्ञा कृता ततः परं तदनन्तरं सः विप्रवरः द्रोणः सुरराजसूनौ अर्जुने नितान्तं स्नेहं कृत्वा अस्मै अर्जुनाय महास्त्राणि ददौ ॥३९॥

**स पक्षपातं च चकार तस्मिन् करोति चास्योरुतरां प्रशंसाम् ।**
**रहस्यविद्याश्च ददाति तस्य नान्यस्य कस्यापि तथा कथञ्चित् ॥४०॥**

**वरदराजीया–** तस्मिन् अर्जुने । अस्य अर्जुनस्य । रहस्यविद्याः एकान्तविद्याः । तथा कस्यापि न ददौ ॥४०॥

**जनार्दनीया–** स द्रोणः तस्मिन्नर्जुने । अस्य अर्जुनस्य उरुतरां अत्युत्कृष्टां प्रशंसां स्तुतिं करोति । लोकमध्य इति शेषः । रहस्यविद्याः गुह्यविद्याः तस्यार्जुनस्य ददाति । तथा अर्जुनवत् अन्यस्य कस्यापि शिष्यस्य कथञ्चित् न ददाति ॥४०॥

**चट्टि–** स द्रोणः अस्मिन्नर्जुने पक्षपातं चकार । अस्य अर्जुनस्य सदा उरुतरां अत्युत्कृष्टां प्रशंसां स्तुतिं च करोति । रहस्यविद्याः गुह्यविद्याश्च तस्यार्जुनस्य ददाति । तथा अर्जुनवत् अन्यस्य कस्यापि शिष्यस्य कथञ्चित् न ददाति ॥४०॥

**भीमः समस्तं प्रतिभाबलेन जानन् स्नेहं त्वद्वितीयं कनिष्ठे ।**
**द्रोणस्य कृत्वा सकलास्त्रवेदिनं कर्तुं पार्थं नार्जुनवच्चकार ॥४१॥**

**वादिराजीया–** द्रोणस्य कृत्वेत्यत्र कृत्वा कारयित्वा । तथा अर्जुनवत् न चकार सेवां न चकार ॥४१-४८॥

**वरदराजीया–** प्रतिभाबलेन स्वरूपप्रज्ञाबलेन समस्तं जानन् भीमो अर्जुनवन्न चकार । शुश्रूषादिकमिति शेषः । किं कर्तुं पार्थं सकलास्त्रवेदिनं कर्तुम् । किं कृत्वा कनिष्ठे अर्जुने द्रोणस्य अद्वितीयं स्नेहं कृत्वा ॥४१॥

**अनन्तभट्टीया–** ।। **नार्जुनवच्चकार** ।। शुश्रूषत्वादिकं प्रतिश्रवं वा ।।४१।।[1]

**जनार्दनीया–** एवं चेत् भीमस्य सर्वज्ञत्वं स्यादित्यत आह– **भीम इति** ।। प्रतिभायाः प्रज्ञायाः, बलेन समस्तं अस्त्रादिकं जानन्, भीमः सकलास्त्रवेदिनं पार्थं कर्तुं, कनिष्ठे अर्जुने द्रोणस्य अद्वितीयं असदृशं स्नेहं कृत्वा कारयितुं, अर्जुनवत् प्रतिज्ञापूर्वकास्त्रप्राप्त्यादिकं स्वयं न चकार ।।४१।।

**ताम्रपर्णीया–** नार्जुनवच्चकार ।।४१।।

**चट्टि–** एवं चेत् भीमस्य सर्वज्ञत्वं स्यादित्यत आह– **भीम इति** ।। प्रतिभायाः प्रज्ञायाः बलेन समस्तं अस्त्रादिकं जानन् भीमः पार्थं अर्जुनं सकलास्त्रवेदिनं कर्तुं, कनिष्ठे अर्जुने द्रोणस्य अद्वितीयं असदृशं स्नेहं कृत्वा कारयित्वा अर्जुनवत् न चकार । सेवां न चकार ।।४१।।

**नैवातियत्नेन ददर्श लक्षं शुश्रूषायां पार्थमग्रे करोति ।**
**स्वबाहुवीर्याद् भगवत्प्रसादान्निहन्मि शत्रून् किमनेन चेति ।।४२।।**

**व्यासतीर्थीया–** प्रथमतः प्रतिज्ञाऽकरणेन नार्जुनवत् चकारेत्युक्तं विवृण्वन्नाह– **नैवेति** ।। ।।४२-४४।।

**वरदराजीया–** अर्जुनवन्न चकारेत्येतद्दर्शयति– **नैवेति** ।। अनेन कृतेन किं न किमपि ।।४२।।

**अनन्तभट्टीया–** तदेव विवृणोति– **नैवेति** ।। शुश्रूषायां प्रतिज्ञाकरणनिमित्तका... .. ।।४२।।

**जनार्दनीया–** न चकारेत्युक्तं विवृणोति– **नैवेति** ।। अतियत्नेन अतिप्रयासेन लक्ष्यं नैव ददर्श । लक्ष्यवेधे अतिप्रयत्नं न चकारेत्यर्थः । शुश्रूषायां द्रोणसेवाविषये पार्थं अग्रे पुरतः करोति । अहं स्वबाहुवीर्यात् भगवत्प्रसादाच्च शत्रून्निहन्मि । अनेन प्रतिज्ञापूर्वकास्त्रसङ्ग्रहणेन किम्? न किमपीत्यर्थः । इत्यभिप्रायेण अर्जुनवत् न चकारेति सम्बन्धः ।।४२।।

**ताम्रपर्णीया–** शुश्रूषां लक्ष्यदर्शनं प्रतिश्रुत्य, तदेव विवृणोति– **नैवेति** ।।४२-५२।।

**चट्टि–** न चकारेत्युक्तं विवृणोति– **नैवेति** ।। भीमो अतियत्नेन अतिप्रयासेन लक्ष्यं नैव ददर्श । लक्ष्यवेधे अतिप्रयत्नं न चकारेत्यर्थः । शुश्रूषायां द्रोणसेवाविषये पार्थं अग्रे पुरतः करोति । अहं स्वबाहुवीर्यात् भगवत्प्रसादाच्च शत्रून्निहन्मि । अनेन प्रतिज्ञापूर्वकास्त्रसङ्ग्रहणेन किम्? न किमपीत्यर्थः । इत्यभिप्रायेण अर्जुनवत् न चकारेति सम्बन्धः ।।४२।।

---

१. अनन्तभट्टीया– ...विचारम् । द्रोणस्य स्नेहं कनिष्ठे कृत्वा कारयित्वा चकार । प्रतिज्ञामिति शेषः ।।४१।। इति हो.पुस्तकपाठः ।

**तदा समीयुः [1]सकलाः क्षितीशपुत्रा द्रोणात् सकलास्त्राण्यवाप्तुम् ।**
**ददौ स तेषां परमास्त्राणि विप्रो रामादवाप्तान्यगतानि चान्यैः ॥४३॥**

**वरदराजीया–** तेषां क्षितीशपुत्राणाम् । अन्यैः अगतानि अप्राप्तानि परमास्त्राणि ददौ ॥४३॥

**अनन्तभट्टीया–** अगतानि अप्राप्तानि अज्ञातानि वा ॥४३॥

**जनार्दनीया–** तदा शस्त्रास्त्रसङ्ग्रहणकाले । रामात् स्वेन अवाप्तानि प्राप्तानि । अन्यैः अगतानि अप्राप्तानि अज्ञातानि वा । अस्त्राणि ददौ ॥४३॥

**चट्टि–** तदा शस्त्रसङ्ग्रहणकाले सकलाः क्षितीशपुत्राः द्रोणात् सकलास्त्राण्यवाप्तुं समीयुः । सः विप्रः रामात् स्वेन अवाप्तानि प्राप्तानि अन्यैः अगतानि अप्राप्तानि अज्ञातानि वा परमास्त्राणि दिव्यास्त्राणि तेषां ददौ ॥४३॥

**अस्त्राणि चित्राणि महान्ति दिव्यान्यन्यैर्नृपैर्मनसाऽप्यस्मृतानि ।**
**अवाप्य सर्वे तनया नृपाणां शक्ता बभूवुर्न यथैव पूर्वे ॥४४॥**

**वरदराजीया–** सर्वे नृपाणां तनयाः चित्राणि दिव्यान्यस्त्राणि अवाप्य शक्ता बभूवुः । न पूर्वे नृपा यथैव बभूवुः तथा न बभूवुः । किन्तु ततोऽधिका बभूवुरित्यर्थः ॥४४॥

**अनन्तभट्टीया–** ॥ यथैवेति ॥ यथा एते तथा पूर्वे नेत्यर्थः ॥४४॥

**जनार्दनीया–** अन्यैः नृपैः मनसापि अस्मृतानि अस्त्राण्यवाप्य, पूर्वे पूर्वतनाः नृपाः । यथा शक्ताः न बभूवुः तथा शक्ताः समर्थाः बभूवुः । पूर्वतनेभ्यः अधिकाः बभूवुरिति भावः ॥४४॥

**चट्टि–** नृपाणां सर्वे तनयाः अन्यैः नृपैः मनसापि अस्मृतानि चित्राणि महान्ति दिव्यानि अस्त्राण्यवाप्य, पूर्वे पूर्वतनाः नृपाः यथा शक्ताः न बभूवुः तथा शक्ताः समर्थाः बभूवुः । पूर्वतनेभ्यः अधिकाः बभूवुरिति भावः । यद्वा पूर्वे नृपाः यथा बभूवुः तथा न बभूवुः । किन्तु ततोऽपि शक्ताः अधिकाः बभूवुः इत्यर्थः ॥४४॥

**नैतादृशाः पूर्वमासन् नरेन्द्रा अस्त्रे बले सर्वविद्यासु चैव ।**
**दौष्यन्तिमान्धातृमरुत्तपूर्वाश्चैतत्समानाः नासुरुदारवीर्याः ॥४५॥**

---

१. 'राजपुत्राः तथा चान्ये समेत्य भरतर्षभ । अभिजग्मुस्ततो द्रोणमस्त्रार्थे द्विजसत्तमम् ॥ वृष्णयश्चान्धकाश्चैव नानादेश्याश्च पार्थिवाः । सूतपुत्रश्च राधेयो गुरुं द्रोणमियात् तदा ॥' इत्यादिपर्वणि.१४३.१९-२० । 'तस्य तत्कौशलं श्रुत्वा धनुर्वेदजिघृक्षवः । राजानो राजपुत्राश्च समाजग्मुः सहस्रशः ॥' इत्यादिपर्वणि.१४३.३९ ।

**व्यासतीर्थीया**– [आगतान्यागतानिशत्का: समर्था न यथैव पूर्व] इत्युक्तं विवृण्वन्नाह– **नैतादृशा इति** ।। दौष्यन्तिः भरतः ।।४५-४७।।

**वेदाङ्गतीर्थीया**– दौष्यन्तिः भरतः ।।४५-४८।।

**वरदराजीया**– उदारवीर्या अपि दौष्यन्त्यादयो नृपाः एतत्समा नासुः न बभूवुः ।।४५।।

**अनन्तभट्टीया**– एतदेव विवृणोति– **स्मरिति** ।। सम्भावनायां लिट् ।।४५।।

**जनार्दनीया**– अस्त्रे वले विद्यासु एतादृशाः द्रोणशिष्यसदृशाः नरेन्द्राः नासन् । दौष्यन्तिः दुष्यन्तपुत्रो भरतः, मरुत्तो नाम राजा । पूर्वाः नृपाः उदारवीर्याश्च उत्कृष्टवीर्या अपि एतैर्द्रोणशिष्यैः समाः तुल्याः नासुः ।।४५।।

**चट्टि**– अस्त्रे बले सर्वविद्यासु च पूर्वं नरेन्द्राः एतादृशाः द्रोणशिष्यसदृशाः नासन् । दुष्यन्तपुत्रभरतादीनां विद्यमानत्वात् एतत्समाः नासुरिति कथमुच्यते इत्यत आह– **दौष्यन्तीति** ।। उदारं वीर्यं बलं येषां ते तथा । दौष्यन्तिः दुष्यन्तपुत्रो भरतः, मान्धाता च मरुत्तो नाम राजा च एतत्पूर्वाः नृपाश्च एतैर्द्रोणशिष्यैः समाः तुल्याः नासुः ।।४५।।

**तदा [१]कर्णोऽथैकलव्यश्च दिव्यान्यस्त्राण्याप्तुं द्रोणसमीपमीयतुः ।**
**सूतो निषाद[२] इति नैतयोरदादस्त्राणि विप्रः स तु रामशिष्यः ।।४६।।**

**वरदराजीया**– कर्ण एकलव्यश्चोभौ । कर्णः सूतः एकलव्यो निषादः इति हेतोरस्त्राणि नादात् ।।४६।।

**अनन्तभट्टीया**– यतो रामशिष्यः...अनुचितमिति भावः ।।४६।।

**जनार्दनीया**– तदा अस्त्राभ्यासकाले । स विप्रः तु विशेषेण यतो रामशिष्यः । अतः एतयोः कर्णैकलव्ययोः सूतो निषाद इति भावेन अस्त्राणि न ददौ ।।४६।।

**भारतश्री**– रामशिष्यः राम अयोग्येषु नोपदिशति अतः अयमपि तथा ।।४६।।

---

१. 'विद्याधिकमथालक्ष्य धनुर्वेदे धनञ्जयम् । द्रोणं रहस्युपागम्य कर्णो वचनमब्रवीत् । ब्रह्मास्त्रं वेत्तुमिच्छामि सरहस्यनिवर्तनम्। अर्जुनेन समो युद्धे भवेयमिति मे मतिः । समः पुत्रेषु च स्नेहः शिष्येषु च तव ध्रुवम् । त्वत्प्रसादान्न मा ब्रूयुरकृतास्त्रं विचक्षणाः ।। द्रोणस्तथोक्तः कर्णेन सापेक्षः फल्गुनं प्रति । दौरात्म्यं चैव कर्णस्य विदित्वा तमुवाच ह । ब्रह्मास्त्रं ब्राह्मणो विद्याद् यथावच्चरितव्रतः । क्षत्रियो वा तपस्वी वा नान्यो विद्यात् कथञ्चन ।। इत्युक्तोऽङ्गिरसां श्रेष्ठमामन्त्र्य प्रतिपूज्य च । जगाम सहसा राजन् महेन्द्रं पर्वतं प्रति ।।' शान्ति.२.९-१४ ।

२. 'ततो निषादराजस्य हिरण्यधनुषः सुतः । एकलव्यो महाराज द्रोणमभ्याजगाम ह ।। न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् । शिष्यं धनुषि धर्मज्ञस्तेषामेवान्ववेक्षया ।।' इत्यादिपर्वणि १४३.४०-४१ ।

**भावचन्द्रिका–** विराटपर्वणि[२१.९-१०]– 'ब्राह्मण्यां क्षत्रियाज्जातः सूतो भवति पार्थिव । प्रातिलोम्येन जातानां सात्विको द्विज एव तु ।। रथकारीति तानाहुः क्रियायुक्तं द्विजन्मनाम् । क्षत्रियादवरो वैश्यात् विशिष्ट इव चक्षते ।।' इति वचने द्विजत्वोक्त्या वेदाधिकारसद्भावेऽपि क्षत्राधिकारशस्त्रानधिकारित्वादेव सूत इत्याह द्रोणः । अत एव अपशूद्राधिकरणे कर्णस्य क्षत्रसंस्काराभावेनैव वेदानधिकारशङ्का कृता । यथा प्रणवानधिकारो गृहस्थानाम् ।।४६।।

**चट्टि–** अथ तदा अस्त्राभ्यासकाले कर्णः एकलव्यश्च दिव्यास्त्राण्याप्तुं द्रोणसमीपमीयतुः । रामशिष्यः स विप्रः द्रोणः एतयोः कर्णैकलव्ययोः सूतः निषाद इति कर्णः सूतः एकलव्यो निषाद इति भावेन अस्त्राणि न ददौ ।।४६।।

**कर्णोऽनवाप्य निजमीप्सितमुच्चमानो**
**यस्मादवाप पुरुषोत्तमतोऽस्त्रवृन्दम् ।**
**विप्रोऽप्ययं तमजमेमि भृगोः कुलोत्थं**
**इत्थं विचिन्त्य स ययौ भृगुपाश्रमाय ।।४७।।**

**वरदराजीया–** अनवाप्य अप्राप्य । अयं विप्रो द्रोणः यस्मात् पुरुषोत्तमतः अवाप तं पुरुषोत्तमं भृगोः कुलोत्थं एमि गच्छामि इति इत्थं विचिन्त्य भृगुपस्य रामस्य आश्रमाय ययौ ।।४७।।

**अनन्तभट्टीया–** उच्चमानः उच्चगर्वः ।।४७।।

**जनार्दनीया–** उच्चमानः उत्कृष्टगर्वः स कर्णः निजं ईप्सितं स्वाभिलषितं अनवाप्य अप्राप्य, अयमपि विप्रो द्रोणः यस्मात् पुरुषोत्तमतः अस्त्राणां वृन्दं समूहं अवाप । अजं भृगोः भृगुऋषेः कुले उत्थं अवतीर्णं तं रामं एमि गच्छामि । इत्थं विचिन्त्य भृगुपस्य परशुरामस्य आश्रमाय ययौ ।।४७।।

**भारतश्री–** भृगुपो रामः तस्याश्रममाय ।।४७-४८।।

**चट्टि–** उच्चमानः उत्कृष्टगर्वः स कर्णः निजं ईप्सितं स्वाभिलषितं अनवाप्य अप्राप्य, अयमपि विप्रो द्रोणः यस्मात् पुरुषोत्तमतः अस्त्राणां वृन्दं समूहं अवाप । अजं भृगोः भृगुऋषेः कुले उत्थं अवतीर्णं अजं तं रामं एमि गच्छामि । इत्थं विचिन्त्य भृगुपस्य रामस्य आश्रमाय ययौ ।।४७।।

**स सर्ववेत्तुश्च विभोर्भयेन विप्रोऽहमित्यवददस्त्रवरातिलोभात् ।**
**जानन्नपि प्रददावस्य रामो [१]दिव्यान्यस्त्राण्यखिलान्यव्ययात्मा[२] ।।४८।।**

१. 'विशुद्धयोनिं विज्ञाय दिव्यान्यस्त्राण्यदाद् भृगुः' इति कर्णपर्वणि २२.३१ । २.'अव्ययात्मा'इति व्यासतीर्थीयपाठः ।

**व्यासतीर्थीया**– अनृतवाणिनो मन्त्रदानेऽपि हानि न मन्तव्येति भावेनोक्तम्– **अव्ययात्मेति** ।।४८।।

**वरदराजीया**– सः कर्णः सर्ववेत्तुः सर्वज्ञस्यापि भयेन विप्रोऽहमित्यवदत् । जानन् सः सूतोऽयमिति जानन् अस्य ददौ ।।४८।।

**जनार्दनीया**– स कर्णः सर्ववेत्तुः सर्वज्ञस्य विभोः रामस्य भयेन अस्त्रवराणां अतिलोभात् अतिलौल्यात् अहं विप्र इत्यवदत् । सूतोऽयमिति जानन्नपि प्रददौ । सूतस्य मन्त्रोपदेशेन रामस्य अनर्थः स्यादित्यत आह– **अव्ययात्मेति** ।।४८।।

**भावचन्द्रिका**– अयोग्योपदेशेऽपि रामस्य न दोष इत्याह– **अव्ययात्मेति** ।।४८।।

**चर्टि**– स कर्णः सर्ववेत्तुः सर्वज्ञस्य विभोः रामस्य भयेन अस्त्रवरेषु अतिलोभात् अतिलौल्यात् अहं विप्र इत्यवदत् च । अयं कर्णः सूत इति जानन्नपि रामः अस्य कर्णस्य दिव्यान्यखिलानि अस्त्राणि प्रददौ । सूतस्य मन्त्रोपदेशेन अनर्थः स्यादित्यत आह– **अव्ययात्मेति** ।।४८।।

**[१]अस्त्रज्ञचूडामणिमिन्द्रसूनुं विश्वस्य[२] हन्तुं धृतराष्ट्रपुत्रः ।**
**एनं समाश्रित्य दृढो भवेतेत्यदाज्ज्ञात्वैवास्त्रमस्मै रमेशः ।।४९।।**

**व्यासतीर्थीया**– अनृतवाणिनं कर्णं जानन् रामः तस्मै किमर्थमस्त्राणि ददाविति जिज्ञासायामाह– **अस्त्रेति** ।। धृतराष्ट्रपुत्रः एनमाश्रित्यास्त्रज्ञचूडामणिमिन्द्रसूनुं हन्तुं विश्वस्य दृढो भवेत ।।४९-५०।।

**वेदाङ्गतीर्थीया**– अस्त्राणि दातुरभिप्रायमाह– **अस्त्रेति** ।। एनं कर्णम् । दृढो भवेत धीरो भवेत । ज्ञात्वैव सूत इति ।।४९।।

**वादिराजीया**– रमेशः एनं कर्णं ज्ञात्वैव सूतमेव ज्ञात्वाऽपि धृतराष्ट्रपुत्रः एनं समाश्रित्य इन्द्रसूनुं हन्तुं विश्वस्य विश्वासं कृत्वा दृढो भवेतेति अस्मै कर्णाय अस्त्रमदादिति । एनमिति पदस्य सूतमिति पदाध्याहारेण एवेत्यस्यावधारणार्थत्वं अपिशब्दार्थत्वं चाश्रित्य योजना ।।४९-५१।।

**वरदराजीया**– जानन्नेव कुतः प्रददावित्यत आह– **अस्त्रज्ञेति** ।। अस्त्रज्ञानां चूडामणिं शिरोरत्नं इन्द्रसूनुं अर्जुनं हन्तुं एनं कर्णं समाश्रित्य दृढो धीरो भवेत् इत्थं विचार्य अस्मै कर्णाय अस्त्रमदात् ।।४९।।

**अनन्तभट्टीया**– एनं समाश्रित्य अस्त्रचूडामणिमिन्द्रसूनुं हन्तुं विश्वस्य दृढो भवेत ।।४९।।

---

१. अत एव 'दुर्योधनस्यापि तदा कर्णमासाद्य पार्थिव । भयमर्जुनसञ्जातं क्षिप्रमन्तरधीयत ।।' इत्यादिपर्वणि १४७.२४

२. 'एकः कर्णः पराञ्जेतुं समर्थ इति निश्चितम् । धार्तराष्ट्रस्य दुर्बुद्धेः स शमं नोपयिष्यति ।।' इति उद्योगपर्वणि ९२.१० ।

**जनार्दनीया–** सूतमिति ज्ञात्वाप्यस्त्रदातुः रामस्याभिप्रायमाह– **अस्त्रेति** ।। धृतराष्ट्रपुत्रः एनं कर्णं समाश्रित्य, अस्त्रज्ञानां चूडामणिं मस्तकमणिं इन्द्रसूनुमर्जुनं हन्तुं, विश्वस्य, दृढः धैर्यवान् भवेतेत्यभिप्रायेण रमेशो रामः अस्मै सूताय ज्ञात्वैव कर्णस्य सूतत्वं ज्ञात्वैव अस्त्रं ददौ ।।४९।।

**अतिविशद–** अदात् ज्ञात्वैवास्त्रमस्मै रमेश भागवतज्ञानं अपरा विद्याश्च विजयं धनुरप्यग्र्ययानञ्चेत्यपि ग्राह्यम् । 'ज्ञानञ्च भागवतमाप्य' इत्युत्तरवाक्यात् ।।४९।।

**भारतश्री–** एनं समाश्रित्य विश्वस्य दृढो भवेतेत्यन्वयः ।।४९-५०।।

**चट्टि–** सूत इति ज्ञात्वाप्यस्त्रदातुः रामस्याभिप्रायमाह– **अस्त्रेति** ।। धृतराष्ट्रपुत्रः एनं कर्णं समाश्रित्य अस्त्रज्ञानां चूडामणिं शिरोरत्नं इन्द्रसूनुमर्जुनं हन्तुं विश्वस्य दृढः धैर्यवान् भवेतेत्यभिप्रायेण रमेशो रामः अस्मै कर्णाय ज्ञात्वा सूतत्वं ज्ञात्वैव अस्त्रं ददौ ।।४९।।

**ज्ञानं च [१]भागवतमाप्य पराश्च विद्या[२] रामादवाप्य [३]विजयं धनुरग्र्ययानम् ।**
**अब्दैश्चतुर्भिरथ च न्यवसत् तदन्ते हातुं न शक्त उरुगायमिमं स कर्णः ।।५०।।**

**वरदराजीया–** भागवतं भगवद्विषयम् । [पराश्च विद्याः] अपरा विद्याश्च अवाप्य । विशेषेण जयो यस्मात् तत् धनुः अग्र्ययानञ्च अवाप्य चतुर्भिर्वर्षैरवाप्य इति सम्बन्धः । तदन्ते तस्य रामस्य समीपे यतो हातुं त्यक्तुं न समर्थः ।।५०।।

**जनार्दनीया–** कर्णश्चतुर्भिरब्दैः रामात् भागवतं ज्ञानं पराः उत्तमाः विद्याश्च अस्त्रशस्त्रविद्यादि नानाविद्या अवाप्य, विजयो यस्मात् तद् विजयम् । तादृशं धनुः । अग्र्यं च तद्यानं च श्रेष्ठरथं अवाप्य, अथ च विद्याप्राप्त्यनन्तरमपि उरुगायं उत्तमश्लोकं इमं रामं हातुं त्यक्तुं न शक्तः अशक्तः सन् तदन्ते रामसमीपे न्यवसत् ।।५०।।

**चट्टि–** सः कर्णश्चतुर्भिरब्दैः रामात् भागवतं ज्ञानम्, वराः उत्तमाः विद्याः अस्त्रशस्त्रविद्यादिनानाविद्याश्च आप्य, विशेषेण जयो यस्मात् तद् विजयम्, तादृशं धनुः । अग्र्यं च तद्यानं च श्रेष्ठरथं अवाप्य । अथ च विद्याप्राप्त्यनन्तरं उरुगायं उत्तमश्लोकं इमं रामं हातुं त्यक्तुं न शक्तः सन् तदन्ते रामसमीपे न्यवसत् ।।५०।।

---

१. 'भागवतमाप्य वराश्च विद्या' इति अतिविशदचट्टिटिप्पण्योः पाठः । २. 'भागवतमप्यपराश्च विद्या' इति वरदराजीयपाठः, 'पराश्च विद्या' इति जनार्दनीयपाठः ।

३. 'सर्वायुधमहामात्रं विजयं नाम तद्धनुः । इन्द्रार्थं प्रियकामेन निर्मितं विश्वकर्मणा ।। येन दैत्यगणान् राजन् जितवान् वै शतक्रतुः । यस्य घोषेण दैत्यानां व्यामुह्यन्त दिशो दश ।। तद्भार्गवाय प्रायच्छच्छक्रः परमसंमतम् । तद्दिव्यं भार्गवो मह्यमदद्धनुरुत्तमम् ।।' इति कर्णपर्वणि २२.४६-४८

**अङ्के निधाय स कदाचिदमुष्य रामः शिश्ये शिरो विगतनिद्र उदारबोधः ।**
**संसुप्तवत् सुरवरः सुरकार्यहेतोर्दातुं च[१] वालिनिधनस्य फलं तदस्य ।।५१।।**

**व्यासतीर्थीया–** तदिति प्रसिद्धम् ।।५१।।

**वेदाङ्गतीर्थीया–** सुरकार्यहेतोः कर्णपराजयख्यसुरकार्यहेतोः शिश्ये । तदिति प्रसिद्धं फलम् ।।५१।।

**वरदराजीया–** स रामोऽमुष्य कर्णस्याङ्के ऊरौ शिरो निधाय संसुप्तवत् शिष्ये शयनं कृतवान् । उदारबोधो अत एव विगतनिद्रः वालिनिधनस्य सुग्रीवजन्मनि कृतस्य फलं दातुं सुरकार्यहेतोश्च शिश्य इति सम्बन्धः ।।५१।।

**भावविवृति–** 'दातुं हि वालिनिधनस्य फलं तदस्य' इत्यत्र 'वालिमारणप्रभूतदोषकारणात्' इत्यादिना मुख्यं फलमुक्तम् । अनेन तु ऐहिकमनःखेदरूपं अवान्तरफलमुच्यत इति ज्ञेयम् ।।५१।।

**जनार्दनीया–** उदारः उत्कृष्टः, बोधः ज्ञानं यस्य स तथा । अत एव विगता निद्रा यस्य निद्रारहित इत्यर्थः । यतः सुरवरः देवपतिः अतः स रामः सुराणां कार्यहेतोः कर्णपराजयरूपकार्यहेतोः अस्य कर्णस्य तत् प्रसिद्धं वालिनिधनस्य फलं दातुं, कदाचित् अमुष्य कर्णस्य अङ्के ऊरौ शिरो निधाय संसुप्तवच्छिश्ये सुष्वाप ।।५१।।

**भारतश्री–** ।। **दातुं च वालिनिधनस्य फलं तदस्येति** ।। फलं तद्योग्यं फलम् । यद्यपि पूर्वं 'पुरा स वालिमारणात् प्रभूतदोषकारणात् । सहस्रवर्मनामिनासुरेण वेष्टितोऽजनि ।।' इत्युक्तम् । तथापि तस्य दोषस्य तत्फलमल्पम् । तद्योग्यमन्यदपि फलं दातुं चेत्यर्थः । अस्य कर्णस्य । कर्णवधलक्षणसुरकार्यहेतोः । सुराः प्रसिद्धा वा तदवताराः पाण्डवाः ।।५१।।

**चट्टि–** उदारः उत्कृष्टः बोधो ज्ञानं यस्य स तथा । अत एव विगता निद्रा यस्य सः निद्रारहित इत्यर्थः । यतः सुरवरः देवपतिः । अतः स रामः सुराणां कार्यहेतोः कर्णपराजयसाध्यवधरूपकार्यहेतोः । अस्य कर्णस्य तत् प्रसिद्धं वालिनिधनस्य फलं दातुं कदाचित् अमुष्य कर्णस्य अङ्के ऊरौ शिरो निधाय संसुप्तवच्छिश्ये सुष्वाप च ।।५१।।

**तत्राऽस राक्षसवरः स तु हेतिनामा**
**काले महेन्द्रमनुपास्य हि शापतोऽस्य ।**
**कीटस्तमिन्द्र उत तत्र समाविवेश**
**कर्णस्य शापमुपपादयितुं सुतार्थे ।।५२।।**

---

१. 'दातुं हि' इति भावविवृतिपाठः ।

**वेदाङ्गतीर्थीया–** यः हेतिनाम राक्षसवरः काले स्वसेवायाः नियतकाले महेन्द्रमनुपास्य शापतः । कीटः स भृगुपाश्रमे आस ।।५२।।

**वादिराजीया–** महेन्द्रं काले अनुपास्य सेवाकाले सेवाया अकरणादित्यर्थः । अस्य इन्द्रस्य शापतः । तत्र रामाश्रमे कीटः आस । हीति हिशब्देन साक्षादिन्द्र एव कीटो नेति पुराणप्रसिद्धिं सूचयति । राक्षसवरस्स तु हेतिनामेत्यत्र राक्षसवरः राक्षसेषु वरः श्रेष्ठः प्रह्लादादिवत् सज्जीव इति भावः ।।५२।।

**वरदराजीया–** हेतिनामा सः प्रसिद्धो राक्षसवरः काले सेवाकाले महेन्द्रमनुपास्य सेवामकृत्वा तदपराधात् अस्य महेन्द्रस्य शापतः कीटो बभूवेत्यर्थः । 'महेन्द्रसेवकश्चासीत् हेतिनामा तु राक्षसः । इन्द्रसेवां विहायैव रुद्रसेवाकरोऽभवत् ।। तदा तु वासवः क्रुद्धः कीटो भव सुदुर्मते ।।' इति विष्णुरहस्ये । तं कीटं इन्द्रः तत्र तस्यामवस्थायां समाविवेश । किं कर्तुम्? सुतार्थं अर्जुनार्थं कर्णस्य शापमुपपदायितुं दापयितुम् ।।५२।।

**भावविवृति–** हेतिनामा राक्षसो वरो मुक्तियोग्यः । अस्य स्वर्गप्राप्तिकथनेन उत्तमाधिकारित्वं सूचितमिति ।।५२-६६।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ पञ्चदशोऽध्यायः ।।

**अनन्तभट्टीया–** कीट आस ।।५२।।

**जनार्दनीया–** हेतिनामा स तु वैष्णव इति प्रसिद्धो राक्षसवरः काले स्वविहितकाले महेन्द्रं अनुपास्य पूजामकृत्वा अस्येन्द्रस्य शापतः कीटः सन् तत्र रामाश्रमे आस अभूत् । उत कीटतनुप्राप्त्यनन्तरं इन्द्रसुतार्थं अर्जुनस्य कर्णवधजयसामर्थ्यार्थं कर्णस्य शापं उपपादयितुं सम्पादयितुं तत्र तदा कर्णाङ्के रामस्य स्वापकाले तं कीटं समाविवेश ।।५२।।

**भावचन्द्रिका–** द्वादशमासेषु रथपृष्ठचोदकाः निर्ऋतिपुत्राः द्वादश सन्ति । द्वादशादित्याश्च तत्र यदा इन्द्रः सूर्यः तदा च अयोनामा राक्षसो अस्ति । तथा पितृलोकाधिपतित्वात् इन्द्रस्य यदा स्वाधमं धातारं चैत्रमासे सूर्यपदे नियुङ्क्ते । तदा तत्पृष्ठचोदको हेतिनामा राक्षसः स्वकाले महेन्द्राज्ञामकृत्वेत्यर्थः । अथवा स्वकालातिरिक्तकाले इन्द्रसेवानियुक्तः तत्सेवामकृत्वेत्यर्थः ।।५२।।

**चट्टि–** हेतिनामा स तु वैष्णव इति प्रसिद्धो राक्षसवरः । काले स्वविहितकाले महेन्द्रं अनुपास्य पूजामकृत्वा अस्येन्द्रस्य शापतः कीटः सन् तत्र रामाश्रमे आस अभूत् । उत अनन्तरं इन्द्रः सुतार्थे अर्जुनस्य कर्णजयवधसामर्थ्यार्थं कर्णस्य शापं उपपादयितुं तत्र तदा कर्णाङ्के रामस्य स्वापकाले तं कीटं समाविवेश ।।५२।।

**कर्णः स कीटतनुगेन किरीटिनैव[1] ह्यूरोरधस्तनत [2]औपरिगात्वचश्च ।**
**विद्धः शरेण स यथा रुधिरस्य [3]धारां सुस्राव तं विगतनिद्र इवाऽह रामः ॥**

**व्यासतीर्थीया–** उरोरधःस्थलतः आरभ्य उपरिगत्वचश्च आ आपर्यन्तं आ उपरिगात् औपरिगात् ॥५३-५४॥

**वेदाङ्गतीर्थीया–** ऊरोरधस्तनतः आरभ्य उपरिगात्वचः उपरिगा त्वक् पर्यन्तं शरेण यथा तथा किरीटिना इन्द्रेण विद्धः । [आ] उपरिगात्वच इत्यत्र आ इत्यस्य सवर्णदीर्घः । स्वतो निद्राशून्यत्वात् विगतनिद्र इवेति ॥५३॥

**वादिराजीया–** 'ऊरोरधस्तनतः' इत्यत्र ऊरोरधस्तनतः अधोभागे विद्यमानाच्चर्मणः आ आरभ्य उपरि ऊरोरुपरि गा गता आ त्वक् समीचीना त्वक् सा औपरिगात्वक् । तां मर्यादीकृत्य औपरिगात्वचः । अधोभागमारभ्य उपरितनत्वक्पर्यन्तमित्यर्थः । यद्वा 'गम्लृ सृप्लृ गतौ' इति धातोः स्वार्थे अण् प्रत्यये कृते 'णिति च' इति उकारस्य च वृद्धौ कृतायां उपरिगैव औपरिगा । सा च सा त्वक्च औपरिगात्वक् । तां मर्यादीकृत्य औपरिगात्वचः शरेण यथा विद्धः कर्णः रुधिरस्य धारां सुस्राव । अन्तर्णीतो णिच् स्रावयामास ॥५३॥

**मधुसूदनीया–** ॥ **ऊरोरधस्तनतः** ॥ ऊर्वधोदेशमारभ्य औपरिगा त्वचः उपरिगतत्वक्पर्यन्तमित्यर्थः। [तत्रा स राक्षसवर] इति तुशब्देन भृगुशापोऽपि तस्य कीटत्वप्राप्तौ निमित्तमिति विशेषं द्योतयति । तथाचोक्तम्–

'ददर्श रामस्तं चापि कृमिं सूकरसंस्थितम् । अष्टपादं तीक्ष्णदंष्ट्रं सूचिभिः परिसंवृतम् ॥
रोमभिस्सन्निरुद्धाङ्गं अलर्कं नाम नामतः । स दृष्टमात्रो रामेण कृमिः प्राणानवासृजत् ॥
तस्मिन्नेवासृजि क्लिन्न तदद्भुतमिवाभवत् । ततोऽन्तरिक्षे ददृशे विश्वरूपः करालवान् ॥
राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः । स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः ॥
स्वस्ति ते भृगुशार्दूल गमिष्येऽहं यथातथम् । मोक्षितो नरकादस्माद्भवता मुनिसत्तम ॥
भद्रं च तेऽस्तु वृद्धिश्च प्रियं मे भवता कृतम् । तमुवाच महाबाहुः जामदग्न्यः प्रतापवान् ॥
कस्त्वं कस्माच्च नरकं प्रतिपो ? ब्रवीहि नः । सोऽब्रवीत् अहमासं प्राक् हेतिनामात्र नामतः ॥
पुरा देवयुगे तात भृगोस्तु सवया इव । सोऽहं भृगोस्तु दयितां भार्यामपहरं बलात् ॥

---

१. 'तत्रापि मे देवराजेन विघ्नो हितार्थिना फल्गुनस्यैव शल्य । कृतो विभेदेन ममोरुमेत्य प्रविश्य कीटस्य तनुं विरूपाम् ॥' इति कर्णपर्वणि.३६.७ ।

२. 'ओपरिगात्वचः' इति पाठान्तरमिति जनार्दनीय-अतिविशदटिप्पण्योः । ३.'धारा' इति ताम्रपर्णीये पाठान्तरम् ।

महर्षेरभिशापेन कृमिभूतोऽपतं भुवि । अब्रवीत्तु स मां क्रोधात् तव पूर्वपितामहः ।।
मूत्रश्लेष्माशनः पाप निरयं प्रतिपत्स्यसे । शापस्यान्तो भवेत् ब्रह्मन्नित्येवं तमथाब्रवीत् ।।
भविता भार्गवाद्रामादिति मामब्रवीद्भृगुः । सोऽहमेनां गतिं प्राप्तो यथा नकुशलस्तथा ।
त्वया साधो समागम्य विमुक्तः पापयोनितः । एवमुक्त्वा नमस्कृत्य ययौ रामं महासुरः ।।'

इति शान्तिपर्वणि [३.१२-२४] । तथाचाऽत्र भगवत्पादैरुक्तः पुराणान्तरोक्तो महेन्द्रशापः शान्तिपर्वस्थ महर्षेरपीत्यपिशब्दार्थ इति न भारतविरोध इति ध्येयम् ।।५३-५४।।

**वरदराजीया–** सः कर्णः कीटतनुगेन कीटशरीरस्थेन किरीटिना इन्द्रेण ऊरोः कर्णस्येति शेषः । अधस्तनतः अधस्तनप्रदेशात् अधस्तनप्रदेशमारभ्येत्यर्थः । उपरिगात्वचः उपरिगतत्वचं अभिव्याप्येत्यर्थः । शरेण यथा तथेत्यर्थः । विद्धः स कर्णो रुधिरस्य धारां सुस्राव । तं कर्णं विगतनिद्र इव राम आह।।

**अनन्तभट्टीया–** ऊरोरधस्तनतः अधोभागादित्यर्थः । उपरि उपरिगात्वचः उपरितनत्वचमभिव्याप्येत्यर्थः। यथा शरेण तथा विद्धः ।।५३।।[1]

**जनार्दनीया–** स कीटतनुगेन कीटतनुगो हेतिस्तेन सहितेन किरीटिना इन्द्रेण ऊरोरधस्तलतः अधो भागमारभ्य, औपरिगात्वचः आ ऊर्ध्वभागगत्वचं मर्यादीकृत्य, शरेण यथा विद्धः भिन्नः स कर्णः रुधिरस्य धारां सुस्राव । आ औपरिगत्वच इति छेदः । उपरि गच्छतीत्युपरिगा, उपरिगा एव औपरिगा, आ समन्तात् त्वक् आत्वक्, औपरिगा चासौ त्वक् च औपरिगात्वक् तस्या इति विग्रहः । 'ओपरिगात्वचः' इति पाठे, आ उपरिगा त्वचः इति पदच्छेदः । उपरि गच्छतीति उपरिगा, उपरिगा च सा त्वक् च उपरिगात्वक्, तस्याः इति विग्रहः । 'गात्वक्' इत्यत्र 'ङ्यापोः सञ्ज्ञाच्छन्दसोर्बहुलम्' [सि.कौ.१००१] इति ह्रस्वाभावः । केचित् 'उपरि गच्छतीत्युपरिगा, आ ईषदुपरिगा ओपरिगा, सा आ सामस्त्येन मर्यादया वा त्वक् यस्याः' इत्याहुः । तन्न । त्वग्विशेषणस्य सामस्त्यमर्यादार्थकस्याङ् औपरीत्यपेक्षया पूर्वनिपातो न स्यात् । 'उपसर्जनं पूर्वम्' [सि.कौ.६५४] इत्यन्वर्थसञ्ज्ञाश्रयणेन यत्प्रति यदुपसर्जनं तं प्रति तस्यैव पूर्वनिपातस्य स्थापितत्वात् । किञ्च औपरिगत्वगिति स्यात् । ननु अत एव आत्वक् यस्या इत्युच्यत इति चेत्तर्हि ओपरिगात्वच इति स्यान्न त्वौपरिगेति । स रामः विगतनिद्र इव सन् तं कर्णं प्रति आह ।।५३।।

**ताम्रपर्णीया–** ।। **औपरिगादिति** ।। आ आ उपरिगादिति पदच्छेदः । ऊरोरधस्तनत आ आरभ्य उपरिगात्वचः । आ पर्यन्तं शरेण यथा शरेणेव विद्धस्सन् रुधिरस्य धारां सुस्राव स्रावयामासेत्यर्थः । 'उपरिगात्वचः' इति लिङ्गव्यत्ययः छान्दसः । 'धारा' इति पाठे विद्धो बभूवेति शेषः ।।५३-५७।।

---

१. **अनन्तभट्टीया–** किरीटिना अर्जुनेन । औपरिगात्वच इत्यत्र पदद्वयम् । तत्रैकस्योरोरध इति सम्बन्धः ।।५३।। इति हो.पुस्तके अधिकः पाठः ।

**अतिविशद–** कर्णः स कीटतनुगेन किरीटिनैव ह्यूरोरधस्थलत औपरिगत्वचश्च इत्यत्र उरा औपरिगत्वचश्चेति पदच्छेदः । उपरि गच्छतीत्युपरिगा उपरिगैव औपरिगी आ त्वक् औपरिगी चासौ आत्वक्च औपरिगात्वक् । 'ओपरिगात्वचश्च' इति पाठे आ उपरिगा त्वच इति पदच्छेदः । उपरिगा चासौ आ त्वक्च ओपरिगात्वक् तस्या इति विग्रहः । केचित्तु 'उपरि गच्छतीति उपरिगा आ ईषत् उपरिगा औपरिगा आ सामस्त्येन मर्यादया वा त्वक् तस्या' इत्याहुः । तन्न त्वग्विशेषणस्य सामर्थ्यमर्यादार्थ आहुः । औपरीत्यपेक्षया पूर्वनिपातो न स्यात् । 'उपसर्जनं पूर्वम्' इत्यन्वर्थसञ्ज्ञाश्रयणे यत्प्रति उपसर्जनं तत्प्रति तस्यैव पूर्वनिपातस्थापितत्वात् औपरिगात्वमिति स्यात् । नन्वत एव आत्वक्..पदत्रयं उपरिगैव औपरिगी स्वार्थे अण् यत्तच्छब्दाध्याहारेण योजना ऊरोरधस्थलत इति ल्यब्लोपनिमित्ता पञ्चमी अधःस्थलमारभ्येत्यर्थः । या औपरिगा तस्याः त्वक् यस्या इत्यत इति चेत्तर्हि औपरिगा त्वच इति स्यात् न त्वौपरिगीति । यद्वा औपरिगा त्वच इत्यत्र औपरिगा त्वचश्चेति चः तत्पर्यन्तमित्यर्थः ।।५३।।

**भारतश्री–** ।। **औपरिगात्वचश्चेति** ।। आ उपरिगा त्वच इति छेदः । अधस्तनतः आ आरभ्य उपरिगा आ त्वचः त्वक्पर्यन्तमित्यर्थः । उकारस्य औकारः ।।५३-५४।।

**चट्टि–** औपरिगात्वच इत्यत्र आ आ उपरिगात्वच इति पदत्रयम् । सः कीटतनुगेन कीटतनुगो हेतिस्तेन सहितेन किरीटिना इन्द्रेण ऊरोरधस्थलतः आ अधस्स्थलमारभ्य, उपरिगात्वचः आ ऊरूपरिगतत्वचं अभिव्याप्येत्यर्थः । शरेण यथा तथा स कर्णः विद्धः छिन्नः अभूदिति शेषः । रुधिरस्य रक्तस्य धारा सुस्राव । रामः विगतनिद्रः इव तं कर्णमाह । यद्वा आ आ उपरिगात् त्वच इति पदविभागः । ऊरोरधस्थलतः अधोभागे विद्यमानायाः त्वचः आ आरभ्य उपरिगात् चर्मण इति शेषः । आ पर्यन्तं विद्ध इति ।।५३।।

**किं त्वं न चालयसि मां रुधिरप्रसेके**
**प्राप्तेऽपि पावनविरोधिनि कोऽसि चेति ।**
**तं प्राह कर्ण इह नैव मया विधेयो**
**निद्राविरोध इति कीट उपेक्षितो मे ।।५४।।**

**वेदाङ्गतीर्थीया–** आद्यस्योत्तरमाह– [इहेति] ।।५४।।

**वादिराजीया–** कोऽसीति चेत्यत्र कोऽसीति तमाहेति पूर्वेणान्वयः ।।५४।।

**सत्याभिनवतीर्थीया–** तत्रैव किं त्वं न चालयसि...इति श्लोके इहेत्यस्य गाढनिद्रासमये इत्यर्थः । एतेन 'इह' इत्येतत् व्यर्थम् । न च निद्रासमये इत्यर्थं वक्तुं 'इह' इत्युक्तमिति वाच्यम् । निद्राविरोधो

नैव विधेय इत्यनेनैव निद्रासमये इत्यर्थस्य अर्थात् प्राप्तत्वादिति दूषणं परिहृतम् । अगाढनिद्रासमये निद्राविरोधस्य विधेयत्वेऽपि गाढनिद्रासमये निद्राविरोधो नैव विधेय इत्यर्थलाभार्थं इहेत्युक्तमित्युररीकरणात् ।।५४।।

**वरदराजीया–** पावनविरोधिनि पावित्र्यविनाशके रुधिरप्रसेके प्राप्तेऽपि मां न चालयसि । अतस्त्वं कोऽसि इति । निद्राया विरोधो भङ्गो न विधेयो इति हेतोः कीटो मे मया उपेक्षितः ।।५४।।

**अनन्तभट्टीया–** पावनेति भावप्रधाननिर्देशः ।।५४।।

**जनार्दनीया–** किमिति? पावनस्य पवित्रस्य, विरोधिनि प्रतिकूले । अपवित्र इत्यर्थः । रुधिरस्य प्रसेके संस्पर्शे प्राप्ते सत्यपि त्वं मां किमर्थं न चालयसि प्रचलितवानसि? त्वं कोऽसि च? इत्याहेति सम्बन्धः । कर्णः तं रामं प्राह । किमिति? मया निद्रायाः विरोधः न विधेयः न कर्तव्य । इति बुद्ध्या इह निद्रासमये मे मया कीटः उपेक्षितः इत्याद्यप्रश्नोत्तरमुक्त्वा, कोऽसीत्यस्योत्तरमाह– **जात्येति** ।। जात्या सूतोऽस्मि । उत पक्षान्तरेण येन कारणेन ते तनयोऽस्मि तेन कारणेन भार्गववंशजः अहं विप्रोऽस्मीति । भवतः तव अग्रे सत्यं यथा स्यात्तथा अब्रुवम् । ते मम पुत्रत्वं कथम्? इत्यत आह– **ईशेति** ।। हे ईश! जगतोऽपि न केवलं मम किन्तु जगतोऽपीत्यर्थः । त्वत् अन्यः मुख्यो मात्रादिर्न हि नास्ति । मात्रादिस्त्वमेवेत्यर्थः ।।५४-५५।।

**चट्टि–** रामः कर्णं प्रति किमाहेत्यत आह– **किं त्वमिति** ।। पावनस्य पवित्रवस्तुनः विरोधिनि प्रतिकूले । अपवित्र इत्यर्थः । रुधिरस्य प्रसेके संस्पर्शे प्राप्ते सत्यपि त्वं मां किमर्थं न चालयसि न चलितवानसि? त्वं कोऽसि च? इत्याहेति सम्वन्धः । कर्णः तं रामं प्राह । किमिति? मया निद्रायाः विरोधः न विधेयः न कर्तव्य इति बुद्ध्या इह निद्रासमये कीटः मे मया उपेक्षितः ।।५४।।

**जात्याऽस्मि सूत उत ते तनयोऽस्मि सत्यं**
**तेनास्मि विप्र इति भार्गववंशजोऽहम् ।**
**अग्रेऽब्रवं भवत ईश नहि त्वदन्यो**
**माता पिता गुरुतरो जगतोऽपि मुख्यः ।।५५।।**

**व्यासतीर्थीया–** उत? भगवति त्वदन्यो मुख्यः पितेत्यादि योज्यम् ।।५५-६२।।

**वेदाङ्गतीर्थीया–** कोऽसीति द्वितीयस्योत्तरमाह– **जात्येति** ।। अग्रे त्वदग्रे ते तनयोऽस्मि सत्यमित्युक्तम्। कथमस्य सत्यतेत्यत आह– **न हीति** ।। मुख्यपितेत्यन्वयः ।।५५।।

**वादिराजीया–** भार्गववंशजोऽहमित्यत्र हे भार्गव उत यस्मात् ते तनयोऽस्मि । अतो भवतः वंशजः विप्रोऽस्मीत्यब्रुवम् । तदपि सत्यम् । हे ईश जगतः त्वदन्यः माता पिता गुरुतमश्च नहीति योजना ।।५५-५७।।

**मधुसूदनीया–** ।। **जात्यास्मि सूत उत ते तनय इति** ।। ब्राह्मण्यां क्षत्रियाज्जातः सूत इत्यर्थः ।
'ब्राह्मण्यां क्षत्रियाज्जातः सूतो भवति पार्थिव । प्रातिलोम्येन जातानां स ह्येको द्विज एव तु ।।'
इति विराटपर्वोक्तेः [२१.९] । गुरोः पितृसमत्वाद्रामं प्रति तनय इत्युक्तमिति भावः । तथाचोक्तम्-
'ब्रह्मक्षत्रान्तरे जातं सूतं मां विद्धि भार्गव । राधेयः कर्ण इति मां प्रवदन्ति जना भुवि ।।
प्रसादं कुरु मे ब्रह्मन् अस्त्रलुब्धस्य भार्गव । पिता गुरुर्न सन्देहो वेदविद्याप्रदः प्रभुः ।।
अतो भार्गव इत्युक्तं मया गोत्रं तवान्तिके ।।'
इति कर्णेन परशुरामं प्रति शान्तिपर्वणि [३.२६-२८] ।।५५-६५।।

**वरदराजीया–** किं न चालयसि इत्यस्योत्तरमुक्त्वा कोऽसीत्यस्योत्तरमाह– **जात्येति** ।। जात्या सूतोऽस्मि उतापि ते तनयोऽस्मि । तेन कारणेन विप्रोऽस्मीति सत्यं त्वदग्रे पूर्वमब्रुवं उक्तवानस्मि । मत्तनयत्वमेव कुतः? यतः त्वमेव मात्रादीत्यर्थः ।।५५।।

**अनन्तभट्टीया–** ते तनयः । तेन भार्गववंशजः सन् विप्र इति भर्त्सितः सन् अब्रुवन् ।।५५।।

**भारतश्री–** ततो भयादाह– **जात्यास्मीति** ।। ते तनयोऽस्मि अतो भार्गववंशजविप्र इत्युक्तम् । अन्येषां विद्यमानत्वात् कथमित्यत– **मुख्य इत्युक्तम्** ।।५५।।

**भावचन्द्रिका–** शिष्यस्यापि पुत्रसमत्वं वक्तुं गुरुतर इत्युक्तम् ।।५५।।

**चट्टि–** किं त्वं न चालयसि इत्यस्योत्तरमाह– **जात्येति** ।। जात्या सूतोऽस्मि । उत अनन्तरं सत्यं ते तनयोऽस्मि । शिष्यस्य पुत्रतुल्यत्वात् तनयोऽस्मीत्युक्तमिति भावः । येन कारणेन ते तव तनयोऽस्मि । तेन कारणेन अहं भार्गववंशजः विप्रोऽस्मीति भवतः तव अग्रे अब्रुवम् । मम त्वत्पुत्रत्वे हेत्वन्तरमप्यस्तीत्याह– **ईशेति** ।। हे ईश! जगतोऽपि न केवलं मम किन्तु जगतोऽपीत्यर्थः । त्वत्तो अन्यो मुख्यो मात्रादिः न हि नास्ति । मातापितागुरुतरोऽपि त्वमेवेत्यर्थः ।।५५।।

**इत्युक्तमात्रवचने स तु कीटकोऽस्य रामस्य दृष्टिविषयत्वत एव रूपम् ।**
**सम्प्राप्य नैजमतिपूर्णगुणस्य तस्य विष्णोरनुग्रहत आप विमानगः स्वः ।।५६।।**

**वेदाङ्गतीर्थीया–** रामे इत्युक्तमात्रवचने ।।५६।।

**सत्याभिनवतीर्थीया–** तत्रैव इत्युक्तमात्रवचने...इति श्लोके 'इत्युक्तमात्रवचने' इति पदमस्ति । तस्यार्थः । उक्तशब्दः वक्तव्यपरः मात्रशब्दः कार्त्स्न्यवाची उक्ते सतीति शेषः । कर्णेन इति पूर्वोक्तरीत्या वक्तव्यं यावत् तत्सर्वविषयकवचने उक्ते सतीति । एतेन कर्णेन इति उक्ते सतीत्येव वक्तव्यम् । 'उक्तमात्रवचने' इत्येतत् व्यर्थमिति दूषणं परास्तम् । कर्णेन वक्तव्यमध्ये किञ्चिदुक्तम्, किञ्चिन्नोक्तमिति शङ्कापरिहारार्थं वक्तव्यं सर्वमप्युक्तमिति ज्ञापयितुं उक्तमात्रवचने इत्युक्तमित्यभ्युपगमात् ।।५६।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां पञ्चदशोऽध्यायः ।।

**वरदराजीया–** इत्युक्तवचने तस्मिन् स तु रामस्य दृष्टिविषयत्वतः नैजं रूपं सम्प्राप्य तस्य विष्णोः रामस्यानुग्रहतो विमानगः सन् स्वः स्वर्गमाप ।।५६।।

**जनार्दनीया–** इति उक्तरीत्या रामे उक्तमात्रवचने सति स तु कीटकः अस्य रामस्य दृष्टिविषयत्वत एव दृष्टिगोचरत्वादेव नैजं रूपं स्वमूलरूपं सम्प्राप्य, तस्य रामस्यानुग्रहतः विमानगः सन् स्वः स्वर्गं आप ।।५६।।

**भारतश्री–** विमानगः स्वः । अत एव पूर्वं राक्षसवर इत्युक्तम् । नृरक्ष इत्यादिवत् पुण्यराक्षसः ।।५६-६१।।

**चर्ट्टि–** इति उक्तरीत्या रामे उक्तमात्रवचने सति कर्णेनेति शेषः । स तु कीटकः अस्य रामस्य दृष्टिविषयत्वत दृष्टिविषयत्वात् दृष्टिगोचरत्वादेव नैजं रूपं स्वमूलरूपं सम्प्राप्य अतिपूर्णगुणस्य तस्य विष्णोः रामस्य अनुग्रहतः विमानगः सन् स्वः स्वर्गं आप ।।५६।।

**अथाऽह रामस्तमसत्यवाचो न ते सकाशे मम वासयोग्यता ।**
**तथाऽपि ते नैव वृथा मदीया भक्तिर्भवेज्जेष्यसि सर्वशत्रून् ।।५७।।**

**वरदराजीया–** असत्यवाचं अनृतभाषिणं तं कर्णं मम सकाशे मत्समीपे वासयोग्यता ते तव नास्ति । अथापि एवमपि ते तव मदीया मद्विषया भक्तिः वृथा न भवेत् । अतः सर्वशत्रून् विजेष्यसि ।।५७।।

**अनन्तभट्टीया–** मम सकाशे तव वासयोग्यता नास्ति । मयि कृता भक्तिर्व्यर्था न ।।५७।।

**जनार्दनीया–** असत्यवाचं असत्यसम्भाषिणं तं कर्णं मम सकाशे ते तव वासयोग्यता न यद्यपि तथापि ते तव मदीया मत्सम्बन्धिनी भक्तिः वृथा नैव भवेत् । सर्वशत्रून् जेष्यसि ।।५७।।

**अतिविशद–** ‘तथापि ते नैव वृथा मदीया मतिर्भवेज्जेष्यसि सर्वशत्रून् । अस्पर्धमानं न कथञ्चन त्वां जेता कश्चित् स्पर्धमानश्च यासि ।। पराभूतिं नात्र विचार्यमस्ति प्रमादी त्वं भविता चास्त्रसङ्गे ।।’ इति वरशापप्रतिपादके अस्मिन् श्लोके वरस्य यथा त्रित्वसङ्ख्याविशिष्टत्वं तथा शापस्यापि सूर्यसुतस्य चक्रं रथस्य भूमिर्ग्रसत्विति शापादिति वक्ष्यमाणानुरोधेन त्रित्वसङ्ख्याविशिष्टत्वं ज्ञातव्यम् । अन्यथा तद्विरोधः स्यादिति भावः । ततश्चैवमुक्तं भवति । न केवलमुक्तशापद्वयवान् तव चक्रं च भूमिर्ग्रसत्विति ।।५७।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ पञ्चदशोऽध्यायः ।।

**चट्टि–** अथ अनन्तरं रामः असत्यवाचं अनृतभाषिणं तं कर्णं मम सकाशे समीपे ते तव वासाय योग्यता नास्ति । यद्यपि तथापि ते तव मदीया मत्सम्बन्धिनी भक्तिः वृथा नैव भवेत् । सर्वशत्रून् जेष्यसि इत्याह ।।५७।।

**अस्पर्धमानं न कथञ्चन त्वां जेता कश्चित् स्पर्धमानस्तु यासि ।**
**पराभूतिं नात्र विचार्यमस्ति [1]प्रमादी त्वं भविता चास्त्रसङ्गे[2] ।।५८।।**

**वेदाङ्गतीर्थीया–** अस्त्रसङ्गे अस्त्रयुद्धे ।।५८-६२।।

**वादिराजीया–** भविता चास्त्रसङ्ग इत्यत्र भवितेति ऋकारान्तं पदम् । नतु लुट् । त्वंपदप्रयोगादेव असीति लभ्यते ।।५८-६६।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां पञ्चदशोऽध्यायः ।।

**वरदराजीया–** अस्पर्धमानं स्पर्धामकुर्वन्तं त्वा जेता कश्चन न स्यात् । स्पर्धमानस्तु त्वं पराभूतिं यासि । अस्त्रसङ्गे विषये प्रमादी विस्मरणवान् भविता ।।५८।।

**अनन्तभट्टीया–** प्रमादी विस्मरणशीलः ।।५८।।

**जनार्दनीया–** ‘जेष्यसि’ इत्यत्र विशेषमाहेत्याह– **अस्पर्धेति** ।। अस्पर्धमानं स्पर्धामकुर्वन्तं त्वां कश्चित् पुरुषः कथञ्चन जेता न भवेत् । स्पर्धमानस्त्वं पराभूतिं पराभवं यासि प्राप्स्यसि । स्पर्धमानस्त्वं

१. ‘सूत त्वया ह्याप्तमिदं तवास्त्रं न कर्मकाले प्रतिभास्यतीति । अन्यत्र तु स्यात् तव मृत्युकालादब्राह्मणे ब्रह्म न हि ध्रुवं स्यात् ।।’ इति कर्णपर्वणि.३६.११ ।

२. ‘अस्त्रसङ्घे’ इति जनार्दनीये पाठान्तरम् । ‘अस्त्रसङ्ख्ये’ इति चट्टिटिप्पण्यां पाठान्तरम् ।

[अस्त्रसङ्घे] अस्त्रसङ्ख्ये अस्त्रयुद्धे प्रमादी विस्मरणशीलः भविता भविष्यसि । अत्र उक्तार्थे विचार्यं नास्ति । स्पर्धमान इत्यावर्त्य योज्यम् । 'अस्त्रसङ्घे' इति पाठे अस्त्रसमूहे ।।५८।।

**ताम्रपर्णीया–** अस्पर्धमानं पाण्डवेष्वनसूयावन्तम् । त्वं भवितेति । अत्र भवितेति ऋकारान्तं पदं न तु लुट् । त्वंपदप्रयोगात् ।।५८-६६।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां [प्रमाणमालायां] पञ्चदशोऽध्यायः ।।

**चट्टि–** जेष्यसि इत्यत्र विशेषमाह– अस्पर्धेति ।। अस्पर्धमानं स्पर्धामकुर्वन्तं त्वां कश्चित् पुरुषः कथञ्चन जेता न भवेत् । स्पर्धमानस्तु त्वं पराभूतिं पराभवं यासि प्राप्स्यसि । स्पर्धमानस्त्वं अस्त्रसङ्घविषये प्रमादी भविता । भवितेति ऋकारान्तं पदम् । न तु लुट् । त्वंपदप्रयोगादेव असीति लभ्यते । यद्वा प्रमादिनो भावः प्रमादित्वं भवितेति । अत्र उक्तार्थे विचार्यं नास्ति । स्पर्धमान इत्यावृत्य योज्यम् । 'अस्त्रसङ्ख्ये' इति पाठे अस्त्रयुद्धे ।।५८।।

**याहीति तेनोक्त उदारकर्मणा कर्णो ययौ तं प्रणम्येशितारम् ।**
**तथैकलव्योऽपि निराकृतोऽमुना द्रोणेन तस्य प्रतिमां वनेऽर्चयत् ।।५९।।**

**वरदराजीया–** इतो याहीति तेन रामेणोक्तः तं ईशितारं प्रणम्य ययौ । निषाद इति पूर्वं निराकृतः तस्य द्रोणस्य प्रतिमां वनेऽर्चयत् ।।५९।।

**जनार्दनीया–** तेन रामेण । तं रामम् । अथ कथान्तरारम्भः । निराकृतः निषाद इति तिरस्कृतः एकलव्यः । तस्य द्रोणस्य प्रतिमां मृत्प्रतिमाम् ।।५९।।

**भावचन्द्रिका–** ।। **तथेति** ।। निषाद इत्युक्त्या प्रेक्षणसमये 'शिष्योऽसि यम नैषादे प्रयोग बलवत्तर' इति उक्ते सदनुग्रहादेव प्रतिमार्चनेऽपि कार्यसिद्धिः । 'तस्य प्रसादोपचितोरुशिक्ष' इति वचनात् ।। ।।५९-६६।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावचन्द्रिकायां पञ्चदशोऽध्यायः ।।

**चट्टि–** कर्णः उदारकर्मणा तेन रामेण याहीत्युक्तस्सन् ईशितारं तं रामं प्रणम्य ययौ । तथा कर्णवत् अमुना द्रोणेन निराकृतोऽपि एकलव्यः तस्य द्रोणस्य प्रतिमां मृत्प्रतिमां वने अर्चयत् ।।५९।।

**ततः कदाचिद् धृतराष्ट्रपुत्रैः पाण्डोः सुता मृगयां सम्प्रयाताः ।**
**अग्रे गच्छन् सारमेयो रुराव धर्मात्मजस्यात्र वने मृगार्थी ।।६०।।**

**वरदराजीया—** ततोऽनन्तरं धृतराष्ट्रपुत्रैः सह मृगयां मृगक्रीडां कर्तुं सम्प्रयाताः अत्र वने धर्मराजस्य सारमेयश्च रुराव । यतो मृगार्थी इत्यर्थः ।।६०।।

**जनार्दनीया—** ततः अस्त्रप्राप्त्यनन्तरम् । अथ वने मृगार्थी धर्मात्मजस्य सारमेयः श्वा अग्रे गच्छन् सन्, रुराव शब्दमकरोत् ।।६०।।

**चट्टि—** ततः अस्त्रप्राप्त्यनन्तरं पाण्डोः सुताः धृतराष्ट्रपुत्रैः सह मृगयां मृगहननरूपप्रवृत्तिं सम्प्रयाताः प्राप्ताः । अत्र वने मृगार्थी धर्मात्मजस्य सारमेयः श्वा अग्रे गच्छन् सन् रुराव शब्दमकरोत् ।।६०।।

**श्रुत्वा रावं सारमेयस्य दूराच्छरैर्मुखं शब्दवेधी पुपूरे ।**
**स एकलव्यो व्रणमस्य नाकरोच्छ्वा पूरितास्यः पाण्डवानभ्ययात् सः ।।६१।।**

**वरदराजीया—** सारमेयस्य रावं ध्वनिं श्रुत्वा स एकलव्यः सारमेयस्य मुखं शरैः पुपूरे पूरितवान् । यतः शब्दवेधीत्यर्थः । अस्य सारमेयस्य व्रणं क्षतं नाकरोत् । सः सारमेयः पूरितास्यः सन् पाण्डवान् अभ्यधावत् ।।६१।।

**जनार्दनीया—** शब्दवेधी शब्दवेधनशीलः स एकलव्यः दूरात् सारमेयस्य रावं श्रुत्वा, दूरात् सारमेयस्य मुखं शरैः पुपूरे पूरयामास । अस्य मुखस्य व्रणं क्षतं नाकरोत् । पूरितं शरैः पूरितं आस्यं मुखं यस्य स तथा श्वा अभ्ययात् अभ्यागात् ।।६१।।

**चट्टि—** शब्दवेधी शब्दवेधनशीलः स एकलव्यः दूरात् सारमेयस्य रावं श्रुत्वा, सारमेयस्य मुखं शरैः पुपूरे पूरयामास । अस्य मुखस्य व्रणं क्षतं नाकरोत् । सः श्वा पूरितं आस्यं मुखं यस्य स पूरितास्यः सन् पाण्डवान् अभ्ययात् ।।६१।।

**दृष्ट्वा चित्रं कुरवः पाण्डवाश्च द्रष्टुं कर्तारं मार्गयामासुरत्र ।**
**द्रोणाकृतिं मार्त्तिकीं पूजयन्तं ददृशुश्चैनं धनुरेवाभ्यसन्तम् ।।६२।।**

**वरदराजीया—** चित्रं विचित्रं तत्कार्यं दृष्ट्वा कर्तारं अत्र वने मार्गयामासुः । मार्तिकीं मृत्तिकामयीं द्रोणस्याकृतिं प्रतिमां पूजयन्तं पूजयित्वा धनुरभ्यसन्तं तं ददृशुः ।।६२।।

**अनन्तभट्टीया—** कर्तारं तत्कर्मण इति शेषः । मार्तिकीं मृण्मयाम् ।।६२।।

**जनार्दनीया—** अत्र वने । कर्तारं द्रष्टुम्, विचित्रकर्मण इति शेषः । मार्गयामासुः अन्वेषणं चक्रुः । मार्तिकीं मृत्तिकासम्बन्धिनीं द्रोणाकृतिं द्रोणप्रतिमां पूजयन्तं धनुरभ्यसन्तं धनुर्विद्याभ्यासं कुर्वन्तं एनं एकलव्यं ददृषुः ।।६२।।

[अस्त्रसङ्गे] अस्त्रसङ्ख्ये अस्त्रयुद्धे प्रमादी विस्मरणशीलः भविता भविष्यसि । अत्र उक्तार्थे विचार्यं नास्ति । स्पर्धमान इत्यावर्त्य योज्यम् । 'अस्त्रसङ्गे' इति पाठे अस्त्रसमूहे ।।५८।।

**ताम्रपर्णीया–** अस्पर्धमानं पाण्डवेष्वनसूयावन्तम् । त्वं भवितेति । अत्र भवितेति ऋकारान्तं पदं न तु लुट् । त्वंपदप्रयोगात् ।।५८-६६।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां [प्रमाणमालायां] पञ्चदशोऽध्यायः ।।

**चट्टि–** जेष्यसि इत्यत्र विशेषमाह– अस्पर्धेति ।। अस्पर्धमानं स्पर्धामकुर्वन्तं त्वां कश्चित् पुरुषः कथञ्चन जेता न भवेत् । स्पर्धमानस्तु त्वं पराभूतिं पराभवं यासि प्राप्स्यसि । स्पर्धमानस्त्वं अस्त्रसङ्गविषये प्रमादी भविता । भवितेति ऋकारान्तं पदम् । न तु लुट् । त्वंपदप्रयोगादेव असीति लभ्यते । यद्वा प्रमादिनो भावः प्रमादित्वं भवितेति । अत्र उक्तार्थे विचार्यं नास्ति । स्पर्धमान इत्यावृत्य योज्यम् । 'अस्त्रसङ्ख्ये' इति पाठे अस्त्रयुद्धे ।।५८।।

**याहीति तेनोक्त उदारकर्मणा कर्णो ययौ तं प्रणम्येशितारम् ।**
**तथैकलव्योऽपि निराकृतोऽमुना द्रोणेन तस्य प्रतिमां वनेऽर्चयत् ।।५९।।**

**वरदराजीया–** इतो याहीति तेन रामेणोक्तः तं ईशितारं प्रणम्य ययौ । निषाद इति पूर्वं निराकृतः तस्य द्रोणस्य प्रतिमां वनेऽर्चयत् ।।५९।।

**जनार्दनीया–** तेन रामेण । तं रामम् । अथ कथान्तरारम्भः । निराकृतः निषाद इति तिरस्कृतः एकलव्यः । तस्य द्रोणस्य प्रतिमां मृत्प्रतिमाम् ।।५९।।

**भावचन्द्रिका–** ।। **तथेति** ।। निषाद इत्युक्त्या प्रेक्षणसमये 'शिष्योऽसि यम नैषादे प्रयोग बलवत्तर' इति उक्ते सदनुग्रहादेव प्रतिमार्चनेऽपि कार्यसिद्धिः । 'तस्य प्रसादोपचितोरुशिक्ष' इति वचनात् ।। ।।५९-६६।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावचन्द्रिकायां पञ्चदशोऽध्यायः ।।

**चट्टि–** कर्णः उदारकर्मणा तेन रामेण याहीत्युक्तस्सन् ईशितारं तं रामं प्रणम्य ययौ । तथा कर्णवत् अमुना द्रोणेन निराकृतोऽपि एकलव्यः तस्य द्रोणस्य प्रतिमां मृत्प्रतिमां वने अर्चयत् ।।५९।।

**ततः कदाचिद् धृतराष्ट्रपुत्रैः पाण्डोः सुता मृगयां सम्प्रयाताः ।**
**अग्रे गच्छन् सारमेयो रुराव धर्मात्मजस्यात्र वने मृगार्थी ।।६०।।**

**वरदराजीया–** ततोऽनन्तरं धृतराष्ट्रपुत्रैः सह मृगयां मृगक्रीडां कर्तुं सम्प्रयाताः अत्र वने धर्मराजस्य सारमेयश्च रुराव । यतो मृगार्थी इत्यर्थः ।।६०।।

**जनार्दनीया–** ततः अस्त्रप्राप्त्यनन्तरम् । अथ वने मृगार्थी धर्मात्मजस्य सारमेयः श्वा अग्रे गच्छन् सन्, रुराव शब्दमकरोत् ।।६०।।

**चट्टि–** ततः अस्त्रप्राप्त्यनन्तरं पाण्डोः सुताः धृतराष्ट्रपुत्रैः सह मृगयां मृगहननरूपप्रवृत्तिं सम्प्रयाताः प्राप्ताः । अत्र वने मृगार्थी धर्मात्मजस्य सारमेयः श्वा अग्रे गच्छन् सन् रुराव शब्दमकरोत् ।।६०।।

**श्रुत्वा रावं सारमेयस्य दूराच्छरैर्मुखं शब्दवेधी पुपूरे ।**
**स एकलव्यो व्रणमस्य नाकरोच्छ्वा पूरितास्यः पाण्डवानभ्ययात् सः ।।६१।।**

**वरदराजीया–** सारमेयस्य रावं ध्वनिं श्रुत्वा स एकलव्यः सारमेयस्य मुखं शरैः पुपूरे पूरितवान् । यतः शब्दवेधीत्यर्थः । अस्य सारमेयस्य व्रणं क्षतं नाकरोत् । सः सारमेयः पूरितास्यः सन् पाण्डवान् अभ्यधावत् ।।६१।।

**जनार्दनीया–** शब्दवेधी शब्दवेधनशीलः स एकलव्यः दूरात् सारमेयस्य रावं श्रुत्वा, दूरात् सारमेयस्य मुखं शरैः पुपूरे पूरयामास । अस्य मुखस्य व्रणं क्षतं नाकरोत् । पूरितं शरैः पूरितं आस्यं मुखं यस्य स तथा श्वा अभ्ययात् अभ्यागात् ।।६१।।

**चट्टि–** शब्दवेधी शब्दवेधनशीलः स एकलव्यः दूरात् सारमेयस्य रावं श्रुत्वा, सारमेयस्य मुखं शरैः पुपूरे पूरयामास । अस्य मुखस्य व्रणं क्षतं नाकरोत् । सः श्वा पूरितं आस्यं मुखं यस्य स पूरितास्यः सन् पाण्डवान् अभ्ययात् ।।६१।।

**दृष्ट्वा चित्रं कुरवः पाण्डवाश्च द्रष्टुं कर्तारं मार्गयामासुरत्र ।**
**द्रोणाकृतिं मार्त्तिकीं पूजयन्तं ददृशुश्चैनं धनुरेवाभ्यसन्तम् ।।६२।।**

**वरदराजीया–** चित्रं विचित्रं तत्कार्यं दृष्ट्वा कर्तारं अत्र वने मार्गयामासुः । मार्तिकीं मृत्तिकामयीं द्रोणस्याकृतिं प्रतिमां पूजयन्तं पूजयित्वा धनुरभ्यसन्तं तं ददृशुः ।।६२।।

**अनन्तभट्टीया–** कर्तारं तत्कर्मण इति शेषः । मार्तिकीं मृण्मयाम् ।।६२।।

**जनार्दनीया–** अत्र वने । कर्तारं द्रष्टुम्, विचित्रकर्मण इति शेषः । मार्गयामासुः अन्वेषणं चक्रुः । मार्तिकीं मृत्तिकासम्बन्धिनीं द्रोणाकृतिं द्रोणप्रतिमां पूजयन्तं धनुरभ्यसन्तं धनुर्विद्याभ्यासं कुर्वन्तं एनं एकलव्यं ददृषुः ।।६२।।

**भारतश्री–** धनुः धनुर्विद्याम् ।।६२।।

**चट्टि–** पाण्डवाः कुरवश्च चित्रं विचित्रं तत्कार्यं दृष्ट्वा अत्र वने कर्तारं द्रष्टुं मार्गयामासुः अन्वेषणं चक्रुः । मार्तिकीं मृद्विकारां द्रोणस्याकृतिं द्रोणप्रतिमां पूजयन्तं पूजां कुर्वन्तम्, धनुरभ्यसन्तं धनुर्विद्याभ्यासं कुर्वन्तं एनं एकलव्यं ददृशुश्च ।।६२।।

**पैशाचमेवैष पिशाचकेभ्यः पूर्वं विवेदास्त्रवृन्दं निषादः ।**
**दिव्यान्यस्त्राण्याप्तुमेतां च शिक्षां द्रोणं सदा पूजयति स्म भक्त्या ।।६३।।**

**व्यासतीर्थीया–** ननु एकलव्योऽस्त्राणि धनुर्विद्यां च जानात्येव । अपरथा तत्र [जपित्वोक्तेः] किमर्थं द्रोणमपूजयदित्यत आह– **पैशाचमिति** ।। एतां च शिक्षां शब्दवेधित्वलक्षणाम् ।।६३।।

**वेदाङ्गतीर्थीया–** विवेद विशेषेण व्यजानात् । एतां शिक्षां धनुर्विद्याशिक्षाम् ।।६३-६४।।

**वरदराजीया–** एषः निषादः पूर्वं पैशाचं पिशाचानां विद्यमानमेव अस्त्रवृन्दं पिशाचकेभ्योऽपि वेद । इदानीं दिव्यानि अस्त्राणि एतां शिक्षां शब्दवेधरूपां आप्तुं द्रोणं सदा पूजयति स्म ।।६३।।

**जनार्दनीया–** एषः एकलव्यः पिशाचकेभ्यः पैशाचं पिशाचसम्बन्ध्यस्त्रवृन्दं विवेद विशेषेण व्यजानात् । तर्हि द्रोणप्रतिमां किमर्थं पूजयतीत्यत आह– **दिव्यानीति** ।। एतां शिक्षां धनुर्विद्याशिक्षां च ।।६३।।

**भारतश्री–** ननु पूर्वं चतुर्दशाध्याये 'तत्रैकलव्य उत कृष्णशरैः पलायन्नस्त्राणि रामशिरसि प्रमुमोच शीघ्रम्' इत्युक्तत्वेन एकलव्यः अस्त्राणि पूर्वमेव वेद अतः कथं पुनरस्त्रार्थं द्रोणं पूजयामासेत्यत आह– **पैशाचमेवैष इत्यादिना** ।।६३।।

।। इति डम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां पञ्चदशोऽध्यायः ।।

**चट्टि–** निषादः एषः एकलव्यः पिशाचकेभ्यः पैशाचं पिशाचसम्बन्ध्यस्त्रवृन्दमेव पूर्वं विवेद विशेषेण व्यजानात् । तर्हि द्रोणप्रतिमां किमर्थं पूजयतीत्यत आह– **दिव्यानीति** ।। दिव्यान्यस्त्राण्येतां शिक्षां धनुर्विद्याशिक्षां च आप्तुं द्रोणं सदा भक्त्या पूजयति स्म ।।६३।।

**दृष्ट्वा विशेषं तममुष्य पार्थो द्रोणायोचे त्वद्वरो मे मृषाऽऽसीत् ।**
**इत्युक्त एनं त्वभिगम्य दक्षिणां विप्रो ययाचे दक्षिणाङ्गुष्ठमेव ।।६४।।**

**वरदराजीया–** तं विशेषं शब्धवेधात्मकं शिक्षाविशेषं दृष्ट्वा द्रोणायोचे । किमिति । त्वद्वरो मे मृषासीत् । इत्युक्ते एनं एकलव्यं अभिगम्य विप्रो द्रोणो दक्षिणाङ्गुष्ठं तद्रूपां दक्षिणां ययाचे ।।६४।।

**अनन्तभट्टीया–** विशेषं शब्दवेधित्वलक्षणाम् ।। **दक्षिणेति** ।। दक्षिणहस्ताङ्गुष्ठम् । तं एकलव्यम् । अस्य एकलव्यस्य ।।६५-६६।।

।। इति श्रीमुष्णं अनन्ताचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां तन्त्रमालायां [सत्तत्त्वमालायां] पञ्चदशोऽध्यायः ।।

**जनार्दनीया–** पार्थः अमुष्य एकलव्यस्य तं विशेषं शब्दवेधात्मकं शिक्षाविशेषं दृष्ट्वा, द्रोणाय द्रोणं प्रतीत्यर्थः । ऊचे । तव वचः त्वं धन्विनां प्रवरं साधयिष्ये इत्युक्तवचः मे मृषा व्यर्थं आसीत् । इत्युक्तो विप्रः एनं एकलव्यं अभिगम्य अभिमुखं प्राप्य, दक्षिणाङ्गुष्ठमेव दक्षिणहस्ताङ्गुष्ठमेव दक्षिणां गुरुदक्षिणां ययाचे ।।६४।।

**चट्टि–** पार्थः अमुष्य एकलव्यस्य तं विशेषं शब्दवेधात्मकशिक्षाविशेषं दृष्ट्वा द्रोणाय द्रोणं प्रतीत्यर्थः । त्वद्वरः धन्विश्रेष्ठं करिष्यामीत्येवंभूतस्तव वरः मे मृषा आसीत् । इत्यर्जुनेनोक्तो विप्रः द्रोणः एनं एकलव्यं अभिगम्य अभिमुखं प्राप्य दक्षिणाङ्गुष्ठं दक्षिणहस्ताङ्गुष्ठमेव दक्षिणां गुरुदक्षिणां ययाचे ।।६४।।

**तस्य प्रसादोपचितोरुशिक्षो निषादोऽदाद् दक्षिणाङ्गुष्ठमस्मै ।**
**ततः परं नास्य बभूव शिक्षा सन्मुष्टिहीनस्य समाऽर्जुनेन ।।६५।।**

**व्यासतीर्थीया–** अर्जुनेत्यर्जुनशिक्षामुपलक्षयति अर्जुनशिक्षयेति ।।६५।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां पञ्चदशोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** उपचिता ऋद्धा । अर्जुनेन समा अर्जुनशिक्षासमा ।।६५।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां पञ्चदशोऽध्यायः ।।

**वरदराजीया–** अस्मै द्रोणाय दक्षिणाङ्गुष्ठं अदात् । यस्मात् तस्य द्रोणस्य प्रसादेनोपचिता लब्धा उर्वी शिक्षा येन स तथा । ततःपरं दक्षिणाङ्गुष्ठप्रदानानन्तरं अस्य एकलव्यस्य सा शिक्षा न बभूव । तत्र हेतुगर्भविशेषणम्– **सन्मुष्टिहीनस्येति** ।। किन्तु अर्जुनेन सममेवासीत् ।।६५।।

**जनार्दनीया–** तस्य द्रोणस्य प्रसादेन उपचिता समृद्धा, शिक्षा यस्य स तथा । निषादः एकलव्यः अस्मै द्रोणाय अदात् । छित्त्वेति शेषः । ततः परं अङ्गुष्ठदानानन्तरं सन्मुष्टिः समीचीनमुष्टिः तेन हीनस्य शून्यस्य अस्यैकलव्यस्य शिक्षा पूर्वसंमिता शिक्षा न बभूव । किन्तु अर्जुनेन समा अर्जुनशिक्षासमा बभूवेत्यर्थः । यद्वा मुष्टिहीनस्य अस्य शिक्षा अर्जुनेन समा न बभूवेत्यर्थः ।।६५।।

**चट्टि–** तस्य द्रोणस्य प्रसादेन उपचिता समृद्धा उर्वी शिक्षा येन स तथा । निषादः एकलव्यः दक्षिणाङ्गुष्ठं अस्मै द्रोणाय अदात् । छित्वेति शेषः । ततः परं अङ्गुष्ठप्रदानानन्तरं सन्मुष्टिहीनस्य समीचीनश्चासौ मुष्टिश्च तेन हीनस्य रहितस्य अस्यैकलव्यस्य अर्जुनेन समा शिक्षा न बभूव । 'अक्लीबौ मुष्ठिमस्तू द्वौ' इत्यमरः ।।६५।।

**पुनः कृपालू रैवतपर्वते तं द्रोणः प्राप्याऽदादस्त्रवराणि तस्मै ।**
**एकान्त एवास्य भक्त्या सुतुष्टो धन्विश्रेष्ठं कृतवानर्जुनं च ।।६६।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये पञ्चदशोऽध्यायः ।।

**मधुसूदनीया–** ।। **पुनः कृपालुः इति** ।। द्रोणः तं एकलव्यं रैवतपर्वते दृष्ट्वा कृपालुस्सन् तस्मै एकलव्याय एकान्तेऽस्त्रवराणि प्रादात् । तत्र हेतुमाह– **अस्य भक्त्येति** ।। अस्य एकलव्यस्य भक्त्या सुतुष्टस्सन् अस्त्रं प्रादादिति पूर्वेणाऽन्वयः । कृपालुत्वं चास्य दक्षिणाङ्गुष्ठापनयनेनेति मन्तव्यम् । नतु अर्जुनं प्रति कृपालुत्वम् । 'विप्रवरस्ततःपरम् । स्नेहं नितान्तं सुरराजसूनौ कृत्वा महास्त्राणि ददौ स तस्य' इति पूर्वमर्जुने द्रोणस्य बहुस्नेहस्योक्तत्वादिति मन्तव्यम् । न च रैवतपर्वते द्रोणस्यैकलव्यदर्शनमेव नास्तीति वाच्यम् । 'तत्र रैवतको नाम पर्वतो नातिदूरतः । तत्रैकलव्यसंवासः[1] द्रोणेनाऽध्युषितश्चिरम् ।।' [२.५६.२७-२८] इति हरिवंशोक्तेस्तद्दर्शनावगमादिति भावः ।।६६।।

।। इति श्रीमद्विद्याधीशतीर्थश्रीपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारतातात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे पञ्चदशोऽध्यायः ।।

**वरदराजीया–** तस्मै निषादाय द्रोणो अस्त्रवराणि अदात् । यतो एकान्ते तस्य भक्त्या सन्तुष्टः प्रतिमायां मां सन्निधाप्य सम्यक्पूजितवानिति गुरुभक्तेरित्यर्थः । अर्जुनश्च धन्विनां मध्ये प्रवरं श्रेष्ठं कृतवान् अतः तद्वरोऽपि न मृषेति भावः । इत्यशेषमतिमङ्गलम् ।

**अत्र पक्षद्वयम् । अत्राध्यायं परिसमाप्य 'काले' इत्यादिकं षोडशमध्यायं सम्पाद्यम्, 'गतेऽथ चेदिपे' इत्यतः प्राक् एक एवाध्याय इति द्वितीयः । मूलकोशेषु उभयथापि दर्शनात्' इति सम्प्रदायविदः ।।६६।।**

।। इति आय वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
मन्दसुबोधिन्यां पञ्चदशोऽध्यायः ।।

**जनार्दनीया–** कृपालुः द्रोण एव । अत एव कृपालुत्वादेवेत्यर्थः । अस्यैकलव्यस्य भक्त्या प्रतिमापूजाङ्गुष्ठदानादिरूपभक्त्या सुतुष्टः सन्, पुनः अङ्गुष्ठदानान्तरं रैवतपर्वते तमैकलव्यं प्राप्य, अस्मै

---

१. 'तत्रैकलब्धसंवासो' इति अर्वाचीनपाठः ।

एकलव्याय अस्त्रवराण्यदात् । पुनः अर्जुनं धन्विनां श्रेष्ठं एकलव्यादिधन्विभ्यः श्रेष्ठं कृतवानित्यनेन तं धन्विनां प्रवरं साधयिष्ये इत्युक्तं स्ववचनं सत्यमकरोदिति भावः ।।६६।।

यं गङ्गाजमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधात्
पुत्रं प्राप जनार्दनं शमदमःस्वाध्यायसम्पद्युतात् ।
पूर्तिं पञ्चदशः सदैव कृतिनोऽध्यायः सतां मोददः
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
पदार्थदीपिकायां पञ्चदशोऽध्यायः ।।

**चट्टि—** कृपालुः द्रोण एव अस्यैकलव्यस्य भक्त्या प्रतिमापूजाङ्गुष्ठदानादिरूपभक्त्या सुतुष्टः सन्, पुनः अङ्गुष्ठदानानन्तरं रैवतपर्वते तमैकलव्यं प्राप्य, अस्मै एकलव्याय एकान्ते अस्त्रवराणि प्रादात् । अर्जुनं धन्विश्रेष्ठं एकलव्यादिधन्विभ्यः श्रेष्ठं च कृतवान् । कृतवानित्यनेन 'तं धन्विनां प्रवरं साधयिष्ये' इत्युक्तं स्ववाक्यं सत्यमकरोदिति भावः । इत्यशेषमतिमङ्गलम् ।।६६।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां पञ्चदशोऽध्यायः ।।

★★★

# अथ षोडशोऽध्यायः

**काले त्वेतस्मिन् भूय एवाखिलैश्च नृपैर्युक्तो मागधो योद्धुकामः ।**
**प्रायाद् यदूंस्तत्र नित्याव्ययातिबलैश्वर्योऽपीच्छयाऽगात्[१] स कृष्णः ॥१॥**

**व्यासतीर्थीया–** एवं विस्तरेण कुरुपाण्डवकथां निरूप्य कृष्णकथामाह– **काल इति** ॥१॥

**वेदाङ्गतीर्थीया–** एतस्मिन् काले पाण्डवानां अस्त्राभ्याससमये ॥१-२॥

**मधुसूदनीया–** ॥ **काल इति** ॥ एतस्मिन्नेव काले कर्णैकलव्ययोरस्त्राभ्याससमाप्तिकाले । यत्तु 'पाण्डवानामस्त्राभ्याससमय' इति वेदाङ्गतीर्थीयव्याख्यानम् । तन्न । पाण्डवानामस्त्राभ्याससमये एकलव्येनापि अस्त्राभ्यासस्य क्रियमाणत्वेन 'तत्रैव हंसो डिभिश्चैकलव्य' इति वक्ष्यमाणरीत्या एकलव्यागमनोक्त्ययोगात् ॥१-१८॥

**वरदराजीया–** काले त्वेत्यादिना एतस्मिन् काले तु भूय एव पुनरपि अखिलैः नृपैः युक्तश्च योद्धुकामो युद्धं कर्तुं कामो मागधो जरासन्धो यदून् ययौ । तत्र कृष्णः नित्यं क्षयरहितं अतिबलं ऐश्वर्यं यस्य स तथाभूतोऽपीति स्वेच्छयैव अगात् । मधुरां परित्यज्येत्यर्थः ॥१॥

**जनार्दनीया–** श्रीभगवानाचार्यः कुमाराणां अस्त्रप्राप्तिकाले प्रवृत्तां श्रीकृष्णकथामध्यायद्वयेन निरूपयति– **काल इत्यादिना** ॥ एतस्मिन्नेव काले कुमाराणां अस्त्रप्राप्तिकाले भूय एव पुनरपि । यदून् प्रति प्रायात् । तत्र तस्मिन् युद्धे । नित्यं नाशरहितं, अव्ययं ह्रासरहितं, अतिबलात्मकं ऐश्वर्यं यस्येति । ईदृशोऽपि कृष्णः इच्छया अगाद् ययौ । यदून् पुरीं च त्यक्त्वेति शेषः ॥१॥

**ताम्रपर्णीया–** तत्र तदा मागधे आगते ॥१॥

---

१. 'अहं तावत् सहार्येन मुहूर्तेऽस्मिन् प्रकाशिते । जीवितार्थं गमिष्यामि शक्तिमानप्यशक्तवत् ॥' इति हरिवंशे.विष्णु.३९.९ इति यादवान् प्रति कृष्णवचनम् ।

**भारतश्री–** एवं विस्तरेण कुरुपाण्डवकथां निरूप्य पुनः कृष्णकथामाह– **कालेति** ।।१।।

**चट्टि–** एवं विस्तारेण कुरुपाण्डवकथां निरूप्य श्रीकृष्णकथामाह– **काल इत्यादिना** ।। एतस्मिन्नेव काले कर्णैकलव्ययोः अस्त्राभ्याससमाप्तिकाले, कुरूणां अस्त्राभ्याससमये इत्यर्थः । तु कुरूणां अस्त्राभ्याससमये एकलव्येनाप्यस्त्राभ्यासस्य क्रियमाणत्वेन 'तत्रैव हंसो डिभिकश्चैकलव्य' इति वक्ष्यमाणरीत्या जरासन्धसहायत्वेन एकलव्यागमनानुपपत्तिरित्यस्त्रसमाप्तिकाल इत्यर्थकथनं युक्तम् । एतस्मिन् काले मागधः जरासन्धः अखिलै नृपैः युक्तः सन् भूय एव पुनरपि योद्धकामः सन् यदून् प्रति प्रायात् । तत्र तदा नित्यं नाशरहितं, अव्ययं ह्रासरहितं, अतिवहुलात्मकं ऐश्वर्यं यस्य स ईदृशोऽपि सः श्रीकृष्णः इच्छया अगात् । यदून् मधुरां च त्यक्त्वेति शेषः ।।१।।

**सन्दर्शयन् बलिनामल्पसेनाद्युपस्कराणां बहुलोपस्करैश्च ।**
**प्राप्ते विरोधे बलिभिर्नीतिमग्र्यां ययौ सरामो दक्षिणाशां रमेशः ।।२।।**

**व्यासतीर्थीया–** समर्थोऽपि भगवान् वैरिणि प्राप्ते वीराणामयोग्यं पलायनं किमर्थं कृतवानिति जिज्ञासायामाह– **सन्दर्शयन्निति** ।। उपस्कराणि साधनानि सेनां विहाय दूराद् युद्धं [सेना युद्धे] भवतीत्यग्र्यां नीतिं दर्शयन् ।।२।।

**वरदराजीया–** नन्वेवं भूतश्चेत्तर्हि किमर्थं अगादित्यत आह– **सन्दर्शयन्निति** ।। वलिनामपि अल्पसेनाद्युपस्करः साधनं येषां ते तथा तेषां, वहुलोपस्करैः बहुसेनादिसाधनसम्पन्नैः वलिभिः विरोधे प्राप्ते सति या नीतिः तां अग्र्यां श्रेष्ठां नीतिं न्यायं श्रेष्ठां नीतिं दर्शयन् 'बहुसामग्रीकैः शत्रुभिः युद्धे प्राप्ते सति अल्पसामग्रीकैः युद्धं परित्यज्य गन्तव्यम्' इति युद्धे शिक्षां दर्शयितुं सरामो रमेशः कृष्णः दक्षिणां दिशं प्रति ययावित्यर्थः ।।२।।

**अनन्तभट्टीया–** उपस्करं साधनम् । नीतिं सन्दर्शयन् ।।२।।

**जनार्दनीया–** ननु नित्याव्ययातिवलैश्वर्योऽपि कृष्णः किमर्थमगात्? इत्यत आह– **सन्दर्शयन्निति** ।। अल्पानि सेनादीनि उपस्कराणि युद्धसाधनानि येषां ते तथा । तेषां वलिनां वहुलानि वहूनि उपस्कराणि सेनायुद्धसाधनानि येषां ते तथा तैः । वलिभिः विरोधे प्राप्ते सति अग्र्यां नीतिं सन्दर्शयन्, रामेण सहितो, रमायाः ईशः कृष्णः दक्षिणाशां दक्षिणदिशं प्रति ययौ ।।२।।

**ताम्रपर्णीया–** विरोधे प्राप्ते दूराद् युद्धं स्वसेनाया गुप्त्यै अग्र्यां नीतिं सन्दर्शयन्निति योजना ।।२-८।।

**भारतश्री–** क्षत्रियाणां निन्दितं पलायनं किमर्थं कृतवानित्यत अभिप्रायमाह– **सन्दर्शयन्नित्यादिना** ।।२-३।।

**चट्टि–** ननु एवंभूतश्चेत् तर्हि किमर्थमगादित्यत आह– **सन्दर्शयन्निति** ।। अल्पः सेनाद्युपस्करः सेनादियुद्धसाधनं येषां ते तथा । तेषां बलिनां बहुलोपस्करैः बहुलः उपस्करः सेनादियुद्धसाधनं येषां ते तथा तैः, बलिभिः विरोधे प्राप्ते सति अग्र्यां नीतिं सन्दर्शयन्, रामेण सहितो सरामः रमेशः श्रीकृष्णः दक्षिणाशां दक्षिणां दिशं प्रति ययौ ।।२।।

**सोऽनन्तवीर्यः परमोऽभयोऽपि [१]नीत्यै गच्छन् जामदग्न्यं ददर्श ।**
**क्रीडार्थमेकोऽपि ततोऽतिदुर्गं श्रुत्वा [२]गोमन्तं तत्र ययौ सहाग्रजः ।।३।।**

**व्यासतीर्थीया–** भीत्या पलायत इति लोकप्रसिद्ध्यादिभावादत्र न प्रमदितव्यमिति भावेन नित्याव्यक्तेत्युक्तमनुवदन् निर्गमनानन्तरकथामाह– **सोऽनन्तेति** ।।३-१०।।

**वेदाङ्गतीर्थीया–** नीत्यै उक्तनीतिप्रदर्शनाय ।।३-४।।

**वरदराजीया–** नतु अन्यथेत्याह– **स इति** ।। अनन्तं वीर्यं यस्य स तथा । परमः उत्कृष्टः अभयो भयरहितः सः कृष्णः नीत्यै नीतिप्रदर्शनार्थमेव गच्छन् मार्गे जामदग्न्येन अभिन्नोऽपि क्रीडार्थमेव विडम्बनार्थमेव ततो जामदग्न्यात् दुर्गं दुर्गमं गोमन्तं श्रुत्वा अग्रजेन सहितः तत्र गोमन्तं प्रति ययौ ।।३।।

**जनार्दनीया–** अशक्तत्वाद्भयेन ययाविति ग्रन्थान्तरविरोधं परिहरन् उक्तमेवार्थं विशदयति– **स इति** ।। एकोऽपि क्रीडार्थमेव लोकानुकरणार्थमेव । ततः परशुरामात् । अतिदुर्गं अतिशयेन गन्तुमशक्यं गोमन्ताख्यपर्वतं श्रुत्वा, तत्र गोमन्तं प्रति ययौ ।।३।।

**चट्टि–** अशक्तः सन् भयेन गतवान् किमित्यत आह– **स इति** ।। अनन्तं वीर्यं यस्य सः तथा । परमः उत्कृष्टः अभयः भयरहितोऽपि सः श्रीकृष्णः नीत्यै नीतिप्रदर्शनार्थमेव गच्छन् मार्गे जामदग्न्यं ददर्श । एकोऽपि भेदरहितोऽपि क्रीडार्थं ततः जामदग्न्यात् दुर्गं गन्तुमशक्यं गोमन्तं गोमन्ताख्यपर्वतं श्रुत्वा, सहाग्रजः सन् तत्र गोमन्तं प्रति ययौ ।।३।।

**तदा दुग्धाब्धौ संसृतिस्थैः सुराद्यैः पूजां प्राप्तुं स्थानमेषां च योग्यम् ।**
**मुक्तस्थानादाप नारायणोऽजो बलिश्चाऽगात् तत्र सन्द्रष्टुमीशम् ।।४।।**

---

१. 'बलिनः सन्निकृष्टे तु न स्थेयं पण्डितेन वै । अपक्रमेद्धि कालज्ञः समर्थो युद्धमुद्वहेत् ।। अहं तावत्सहार्येण मुहूर्तेऽस्मिन् प्रकाशिते । जीवितार्थं गमिष्यामि शक्तिमानप्यशक्तवत् ।। ततः सह्याचलपुतं सहार्येणाहमक्षयम् । आत्मद्वितीयः श्रीमन्तं प्रवेक्ष्ये दक्षिणापथम् ।।' इति हरिवंशे.विष्णु.३९.८-१०।।

२. 'गोमन्तमिति विख्यातं नैकशृङ्गविभूषितम् । स्वगतैकमहाशृङ्गं दुरारोहं खगैरपि ।। विश्रामभूतं देवानां ज्योतिर्भिरभिसंवृतम् । सोपानभूतं स्वर्गस्य गगनाद्रिमिवोच्छ्रितम् ।।' इति हरिवंशे.विष्णु.३९.६४-६६ ।

**वरदराजीया–** तदा तस्मिन्नेव काले दुग्धाब्धौ एषां संसृतिस्थानां सुराणां योग्यस्थानं मुक्तस्थानात् अजो नारायणो मूलरूपी आप आगतवान् । किं कर्तुम् । संसृतिस्थैः सुराद्यैः देवर्ष्यादिभिः पूजां प्राप्तुम् । ईशं नारायणं द्रष्टुं बलिश्च तत्रागात् ।।४।।

**भावविवृति–** ।।१-३।। तदा दुग्धाब्धौ...सन्द्रष्टुमीशम् इत्यत्र यदा कृष्णो गोमन्तं प्रति गतः तदा स्वर्गादिस्था देवाः क्षीराब्धिस्थं देवं पूजयितुं गतास्तदाऽजो नारायणः तैः कृतपूजां स्वीकर्तुं मुक्तस्थानादमुक्तदेवप्राप्यस्थानं प्राप । चशब्दः स्वर्गस्थदेवानां कदाचित्कालविशेषे तत्रस्थ हरिपूजनाय गमनशक्तिः विष्णुवरादेवेति सूचनाय । तत्र बलिश्च पूजार्थमागत इति । अस्मिन्नर्थे प्रमाणं नवमाध्याये उदाहृतम् ।।४-७।।

**जनार्दनीया–** तदा गोमन्तगमनकाले अजो नारायणः संसृतिस्थैः संसारस्थैः सुराद्यैः । आद्यपदेन ऋषिबल्यादिसर्वदैत्याः विवक्षिताः । तैः पूजां प्राप्तुं, दुग्धाब्धौ विद्यमानात् मुक्तस्थानात् एषां संसृतिस्थानां योग्यस्थानममुक्तस्थानमित्यर्थः आप । तत्र तदा तत्स्थानं प्रति बलिश्च ।।४।।

**चट्टि–** तदा तस्मिन्नेव काले अजो नारायणः संसृतिस्थैः सुराद्यैः देवर्ष्यादिभिः पूजां प्राप्तुम्, दुग्धाब्धौ विद्यमानात् मुक्तस्थानात् एषां संसृतिस्थानां देवर्ष्यादीनां योग्यं स्थानममुक्तस्थानमित्यर्थः । आप च । तत्र तदा तत्स्थानं प्रति बलिश्च ईशं श्रीनारायणं सन्द्रष्टुं अगात् ।।४।।

**तत्रासुरावेशममुष्य विष्णुः सन्दर्शयन् सुप्तिहीनोऽपि नित्यम् ।**
**संसुप्तवच्छिश्य उदारकर्मा सञ्ज्ञायै देवानां मुखमीक्ष्याप्रमेयः ।।५।।**

**वेदाङ्गतीर्थीया–** संज्ञायै मद्वत् सर्वे सुप्ता इतीव भवन्त्विति सञ्ज्ञां दर्शयितुम् ।।५।।

**वादिराजतीर्थीया–** ।।१-४।। देवानां सञ्ज्ञायै मुखमीक्ष्येत्यत्र सञ्ज्ञायै 'यूयमपि निद्रां कुरुध्वम्' इति सञ्ज्ञायै मुखमीक्ष्येत्यर्थः ।।५।।

**वरदराजीया–** अमुष्य बलेः असुरावेशं सन्दर्शयन् विष्णुः नित्यं सुप्तिहीनोऽपि उदारकर्मा हरिः संसुप्तवत् सुप्तो यथा तथा शिश्ये सुप्तोऽभूत् । किं कृत्वा । अप्रमेयो हरिः देवानां सञ्ज्ञायै सङ्केतार्थं तेषां मुखं ईक्ष्य भवद्भिरपि शयनं कर्तव्यमिति सूचयितुं तेषां मुखं अवलोकयन्नेव शिश्य इत्यर्थः ।।५।।

**अनन्तभट्टीया–** सञ्ज्ञायै सूचनाय ।।५।।

**जनार्दनीया–** तत्र तदा अमुष्य बलेः असुरावेशं सन्दर्शयन्, सञ्ज्ञायै मद्वत्सुप्ता इव भवन्त्विति सूचनार्थं देवानां मुखं ईक्ष्य, संसुप्तवच्छिश्ये ।।५।।

**चट्टि–** तत्र तदा अप्रमेयः उदारं कर्म यस्य स उदारकर्मा श्रीविष्णुः नित्यं सुप्तिहीनोऽपि अमुष्य बलेः असुरावेशं सन्दर्शयन्, सञ्ज्ञायै मद्वत्सुप्ता इव भवन्त्विति सूचनार्थं देवानां मुखं ईक्ष्य संसुप्तवच्छिश्ये।।

**देवाश्च तद्भावविदोऽखिलाश्च निमीलिताक्षाः शयनेषु शिश्यिरे ।**
**तदा [1]बलिस्तस्य विष्णोः [2]किरीटमादायागाज्जहसुः सर्वदेवाः ।।६।।**

**वेदाङ्गतीर्थीया–** तद्भावविदः शयानस्य हरेः स्वमुखे[क्षा]भिप्रायविदः ।।६।।

**वरदराजीया–** देवाश्च तस्य हरेः भावं अभिप्रायं जानन्तीति तथा । अखिला निमीलिताक्षाः निमीलितनेत्राः स्वस्वशयनेषु शय्यासु शिश्यिरे शयनं कृतवन्तः । तदा बलिस्तस्य शयनस्य विष्णोः किरीटं मुकुटं आदाय अगात् गतवान् । सर्वे देवाः तं दृष्ट्वा जहसुः हास्यं कृतवन्तः ।।६।।

**जनार्दनीया–** तस्य विष्णोर्भावविदः अभिप्रायज्ञाः । शिश्यिरे स्वापं चक्रुः । किरीटं मुकुटं आदाय, अगात् । पातालं प्रतीति शेषः ।।६।।

**चट्टि–** तस्य हरेः भावं अभिप्रायं विदः अखिलाः देवाश्च निमीलिताक्षाः निमीलितनेत्राः शयनेषु शय्यासु शिश्यिरे स्वापं चक्रुः । तदा बलिः तस्य शयानस्य विष्णोः किरीटं आदाय अगात् । पातालं प्रतीति शेषः । सर्वे देवास्तु तं दृष्ट्वा जहसुः ।।६।।

**नारायणे सर्वदेवैः समेते ब्रह्मादिभिर्हासमाने सुपर्णः ।**
**गत्वा पातालं युधि जित्वा बलिं च किरीटमादायाभ्ययाद् यत्र कृष्णः।।७।।**

**वेदाङ्गतीर्थीया–** ब्रह्मादिभिः सर्वदेवैः समेते नारायणे हासमाने सति ।।७।।

**वादिराजतीर्थीया–** ब्रह्मादिभिः सर्वदेवैः समेते ब्रह्मादिभिर्हासमाने सतीत्यन्वयः ।।७-१०।।

**वरदराजीया–** सर्वदेवैः समेते नारायणे हासमाने हास्यं कुर्वाणे सति सुपर्णो गरुडः पातालं बलेः स्थानं गत्वा युधि युद्धे बलिं जित्वा च किरीटमादाय यत्र कृष्णस्तिष्ठति तत्र अभ्ययात् आगतः ।।७।।

**अनन्तभट्टीया–** ।। **नारायण इति** ।। ब्रह्मदिभिस्सर्वदेवैः समेते नारायणे हासमाने सतीत्यन्वयः।।[3]

---

१. 'शक्रस्य सदृशं रूपं दिव्यमास्थाय सागरात् । ग्राहरूपेण यो नीत आनीतोऽसौ गरुत्मता ।।' इति हरिवंशे.२.४१.४८ ।

२. 'उपासीनो महाबाहुः श्रीमान् वैरोचनो बलिः । जहार देवदेवस्य किरीटं रत्नचित्रितम् ।। इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम् । पद्मरागमहानीलमुक्ताफलविराजितम् ।। पुष्परागप्रवालाढ्यं दिव्यकाञ्चननिर्मितम् ।।' इति भागवते १०.५३.८-९ ।

३ इति हो.पुस्तकपाठः ।

**जनार्दनीया–** देवैः समेते नारायणे हासमाने हास्यं कुर्वति सति सुपर्णः पातालं पाताललोकं गत्वा प्राप्य वलिं युधि जित्वा, किरीटं आदाय, यत्र गोमन्ते कृष्णः अस्ति तत्र अभ्ययादगात् । ननु ब्रह्मवरसत्वाद्गरुडः कथं बलिमजयदिति चेत्सत्यं यथा जरासन्धजये 'रामगेण' इत्युक्तं तथा विशेषावेशात् हरिवराद्वा । वरश्चोक्तो स्कान्दे बदरीमाहात्म्ये[वैष्णवखं.बदरीमाहात्म्य.४.२१-२३] – 'अजेयो देवदैत्यानां स्यामहं ते प्रसादतः । ओमित्युक्त्वा तदा विष्णुरुवाच च हितं वचः ।।' इति ।।७।।

**अतिविशद–** नारायणे सर्वदेवैः समेते ब्रह्मादिभिर्हासमाने सुपर्णः इत्यत्र सर्वदेवेषु सत्सु सुपर्णस्यैव किरीटानयने को हेतुरित्याशङ्क्य 'निरीक्ष्य पुरपालकः' ['विदित्वा पुरपालकः' इति मुद्रितपुस्तकपाठः । १०.५३.१०] इति दशमवाक्येन गरुडस्य पुरपालकत्वोक्त्या परिहृतो ज्ञातव्य इति ।।७।।

**भारतश्री–** नारायणः कथं मुक्तस्थाने वर्तते..इत्यत आह– अजः उत्पत्त्यादिदोषरहितो नित्यमुक्त इत्यर्थः । सुपर्ण इति तस्य पुरपालकत्वात् । अयं विशेषः हरिवंशादवगन्तव्यः ।।७-८।।

**चट्टि–** ब्रह्मादिभिः सर्वदेवैः समेते श्रीनारायणे हासमाने हास्यं कुर्वति सति सुपर्णः गरुडः पातालं पाताललोकं गत्वा प्राप्य वलिं बलिनामकं युधि जित्वा, किरीटं मुकुटं आदाय, यत्र गोमन्ते श्रीकृष्णः तिष्ठति तत्र अभ्ययात् अगात् ।।७।।

**[1]तत् तस्य शीर्ष्णि प्रतिमुच्य नत्वा खगः स्तुत्वा देवदेवं रमेशम् ।**
**[2]स्मृत आगच्छेत्येव विसर्जितोऽमुना ययौ दुग्धाब्धिं यत्र नारायणोऽसौ ।।८।।**

**वेदाङ्गतीर्थीया–** तस्य गोमन्ते स्थितस्य कृष्णस्य शीर्ष्णि ।।८।।

**वरदराजीया–** तच्च किरीटं तस्य कृष्णस्य मूर्ध्नि शीर्ष्णि मस्तके प्रतिमुच्य स्थापयित्वा देवानां देवं रमेशं कृष्णं नत्त्वा स्तुत्वा स्मृत एव आगच्छ इत्युक्तो विसर्जितः इदानीं गच्छ इत्याज्ञापितः खगो गरुडो यत्रासौ नारायणः तत्र क्षीराब्धिं प्रति ययौ ।।८।।

---

१. 'ताभ्यामुभाभ्यां संलापे वर्तमाने गृहे यथा । वैनतेयस्ततोऽध्वानं अतिचक्राम वेगतः ।। सङ्ग्रामयुक्तस्तेजस्वी दैत्यप्रहरणाङ्कितः । देवतानां जलश्लाघी दिव्यस्रगनुलेपनः ।। सुप्तस्य शयने दिव्ये क्षीरोदे वरुणालये । विष्णोः किरीटं दैत्येन हृतं वैरोचनेन वै ।। तदर्थस्तेन सङ्ग्रामः कृतो गुर्वर्थमोजसा । किरीटार्थे समुद्रस्य मध्ये दैत्यगणैः सह ।। मोक्षयित्वा किरीटं तु वैष्णवं पततां वरः । व्यत्यक्रमत वेगेन गगनं देवतालयम् ।। स ददर्श गुरुं शैले विष्णुं कार्यान्तरागतम् । तेन क्रीडावलम्बेन किरीटेन विराजता ।। स दृष्ट्वा मानुषं विष्णुं शैलराजशिरोगतम् । प्रकाशचेष्टानिर्मुक्तं विमौलिमिव मानुषम् ।। अभिज्ञस्तस्य भावानां गरुत्मान् पततां वरः । चिक्षेप खं गतो मौलिं विष्णोः शिरसि हृष्टवत् ।। उपेन्द्रमूर्ध्नि सा मौलिः अपिनद्धा इवापतत् । शिरसः स्थाननिर्मुक्ता कृष्णं चैवान्वशोभयत् ।।' इति हरिवंशे.२.४१.३७-४५ ।

२. 'गच्छ भद्र यथाकाममेहि काले मया स्मृतः ।' इति भागवते १०.५३.१९ । 'वैनतेयस्य चाह्वानं वाहनं ध्वजकर्मणः । कुरु शीघ्रं महाबाहो गोविन्द वदतां वर ।।' इति हरिवंशे.वि.प.४०.४१ ।

**भावविवृति–** विसर्जितो...यत्र नारायणोऽसावित्यत्र असावपहृतकिरीटो नारायणः यत्र यस्मिन् स्थाने तत्र ययौ ॥८॥

**अनन्तभट्टीया–** [प्रतिमुच्य] प्रमुच्य निधाय । अमुना स्मृतः सन् ॥८॥

**जनार्दनीया–** खगः गरुडः तत् किरीटं तस्य कृष्णस्य शीर्ष्णि मूर्ध्नि प्रतिमुच्य संस्थाप्य, नत्वा स्तुत्वा, स्मृतः मया स्मृतस्त्वं आगच्छ आयाहि इत्येव इत्युक्त्वा, अमुना कृष्णेन विसर्जितः प्रेषितः सन्, यत्र दुग्धाब्धौ असौ कृष्णात्मा नारायणः तिष्ठति तं दुग्धाब्धिं प्रति ययौ ॥८॥

**चट्टि–** खगः गरुडः तत् किरीटं तस्य श्रीकृष्णस्य शीर्ष्णि मूर्ध्नि प्रतिमुच्य संस्थाप्य देवदेवं रमेशं नत्वा स्तुत्वा, स्मृतः मया स्मृतस्त्वं आगच्छ आयाहि इत्युक्तः अमुना श्रीकृष्णेन विसर्जितः प्रेषितः सन्, यत्र दुग्धाब्धौ असौ श्रीकृष्णात्मा नारायणः तिष्ठति तं दुग्धाब्धिं प्रति ययौ ॥८॥

**किरीटं तत् कृष्णमूर्ध्नि प्रविष्टं तत्तुल्यमासीत् तस्य रूपेष्वभेदात् ।**
**तदिच्छया चैव नारायणस्य शीर्ष्ण्यप्यासीद् युगपद् दुग्धवार्धौ ॥९॥**

**वेदाङ्गतीर्थीया–** दुग्धाब्धौ नारायणस्य शीर्ष्णि अपि श्रीकृष्णशीर्ष्ण्यपि युगपदासीच्च । कुत एतत् तदिच्छयैव अघटितघटकनारायणेच्छयैव ॥९॥

**वरदराजीया–** तत्किरीटं कृष्णस्य मूर्ध्नि प्रविष्टं स्थापितं तस्य कृष्णमस्तकस्य तुल्यं पर्याप्तमासीत् । कुत इत्यत उक्तम्– **तस्येति** ॥ तस्य नारायणस्य रूपेषु कृष्णादिरूपेषु अभेदात् । नारायणेन अत्यन्ताभेदात् तुल्यमासीदित्यर्थः । तर्हि मूलरूपस्य किरीटाभाव एव प्राप्तः? नेत्याह– **तदिति** ॥ तस्य नारायणस्य इच्छया दुग्धवार्धौ क्षीराब्धौ नारायणस्य शीर्ष्ण्यपि आसीत् । कृष्णस्य तर्हि मुकुटाभावः प्राप्त इति किं? नेत्याह– **युगपदिति** ॥ एकमेव किरीटं हरेः अचिन्त्यशक्त्या युगपदेवोभयत्र आसीदित्यर्थः ॥९॥

**भावविवृति–** किरीटं तत्कृष्णमूर्ध्नि प्रविष्टं...दुग्धवार्धौ इत्यत्र प्रविनिक्षिप्तं तत् गरुडानीतं तत्तुल्यमासीत्। तस्य मनुष्यवत्प्रतीयमानस्य कृष्णस्य यच्छिरस्तस्य तुल्यं समानं तदिच्छया कृष्णेच्छया आसीदित्यर्थः । न केवलं कृष्णशिरसि किन्तु क्षीराब्धिशायिनारायणशिरस्यपि युगपदासीत् । नतु कालभेदेन । कुतः । तस्य रूपेष्वभेदात् । किरीटं शुद्धसत्वात्मकं केवलं वायुदेवताकं चक्राद्यायुधवदंशतस्संयोगविभागवत् कृष्णशिरसि एकांशेन अपरांशेन नारायणशिरस्यप्यासीदिति विशेषसूचकश्चशब्दः । 'जहार देवदेवस्य किरीटं रत्नचित्रितम्' इति भागवते [१०.५३.८] । 'चूडारत्ने मरुद्देवः' इति ब्रह्माण्डपुराणे ॥९॥

**अनन्तभट्टीया–** तत्तुल्यं कृष्णशिरस्तुल्यम् । **तस्य रूपेष्विति** ।। तस्य रूपेष्वमहत्वादिभेदकाभावात् । अणुत्वादीनां सर्वत्र सत्वादित्यर्थः ।।[१]

**जनार्दनीया–** कृष्णस्य मूर्ध्नि प्रविष्टं स्थापितं तत् नारायणशिरस्थं किरीटं तस्य कृष्णशिरसः, तुल्यं परितः आसीत् । कुतः ? तस्य हरेः रूपेषु मत्स्याद्यवतारेषु अभेदात् । तदिच्छैव नारायणेच्छयैव तस्य गोमन्तस्थस्य कृष्णस्य दुग्धवार्धौ क्षीराब्धौ स्थितस्य नारायणस्य शीर्ष्णि युगपदेव आसीत् । कृष्णनारायणयोरभेदादुभयोः एकं किरीटं एककाले आसीदिति भावः ।।९।।

**ताम्रपर्णीया–** ।। **तस्य रूपेष्वभेदादिति** ।। तस्य रूपेष्वणुत्वमहत्वादिभेदकाभावात् । महत्वादीनां सर्वत्र सत्वादित्यर्थः । यद्वा 'पूर्णमदः पूर्णमिदम्' इत्युक्तरीत्या इन्द्रार्जुनादिवद्विशेषहीनाभेदादित्यर्थः । तदिच्छया च तत्तुल्यमासीत् । नारायणः कृष्ण इत्यखण्डैकरसत्वादेव तदिच्छया च नारायणस्य शीर्ष्ण्यप्यासीत् इत्यर्थः ।।९।।

**अतिविशद–** किरीटं तत्कृष्णमूर्ध्नि प्रविष्टं तत्तुल्यमासीत् तस्य रूपेष्वभेदात् । तदिच्छया चैव नाराणस्येत्यत्र 'तस्य रूपेष्वभेदात् तदिच्छया च' इति हेतुद्वयमस्ति । 'कृष्णमूर्ध्नि प्रविष्टं तत्तुल्यमासीत् । शीर्ष्ण्यपि' इत्यपिशब्दात् तथा 'नारायणस्य शीर्ष्ण्यपि दुग्धवार्धौ युगपदासीत्' तत्र हेत्वपेक्षायां तस्य रूपेष्वभेदात् तदिच्छया चेत्यनयोर्मध्ये एकेनैव चरितार्थत्वात् एकस्य वैय्यर्थ्यमिति चेन्न । अभेदादित्येवमुक्तौ व्यासाद्यनन्तरूपेषु अभेदस्य सत्वात् एकदैव किरीटावाप्तिः स्यात् सा मा भूदिति तदिच्छयेत्युक्तम् । नच तथात्वे तदिच्छयैवेत्येतावदेवास्त्विति वाच्यम् । इच्छाया स्वभिन्न सात्विकप्रभृतिषु ...सत्सुतमित्यनेन स्वरथदाने दृष्टत्वेन तावन्मात्रस्याङ्गीकर्तुमशक्यत्वात् । तथाच इच्छासहिताभेदः एकदा किरीटप्राप्तौ कारणम् । इदमत्राकूतम् । अभेदात् सर्वरूपेषु एकदैव किरीटावाप्तिर्वाच्या । तत्रेच्छाभावात् । यत्रेच्छा तत्राभेदात् किरीटावाप्तिरिति नातिप्रसङ्गः । तस्य गरुडस्येच्छया वा किरीटानयनार्थमागतेन मया कृष्णमूर्ध्नि प्रक्षिप्तमेतत्किरीटं युगपत् क्षीराब्धौ नारायणशीर्ष्ण्यपि भवत्विति अन्यथा कार्यकर्ता न स्यामिति गरुडेच्छयेत्यर्थः ।।९।।

**भारतश्री–** ।। **नारायणस्य शीर्ष्ण्यप्यासीदिति** ।। अचिन्त्य...आसीदित्यर्थः ।।

**भावचन्द्रिका–** ।।१-८।। **किरीटमिति** ।। प्रविष्टं निहितम् । बलरामस्य रेवतीवत् अल्पपरिमाणाभिप्रायेण तुल्यमित्युक्तम् । अन्यथा क्षीराब्धि..नोक्त द्विलक्षार्धपरिमाणस्य हरेः किरीटं कृष्णशिरःपरिमितं न भवेत् । अधिकभारस्य कृष्णशिरःप्रवेशाद्वा तुल्यत्वम् । अत एव प्रविष्टमित्युक्तम् । एकस्य रूपद्वयाश्रितित्वं तु 'देहे देहे हरिः' इत्युक्तवत् एकाण्डस्य अनेकाश्रितत्ववच्च युज्यते ।।९।।

---

१. इति हो.पुस्तकपाठः ।

**चट्टि–** श्रीकृष्णस्य मूर्ध्नि प्रविष्टं स्थापितं तत् नारायणशिरस्थं किरीटं तत्तुल्यं तस्य श्रीकृष्णस्य शिरसस्तुल्यं परिमितमासीत् । कुतः? तस्य हरेः रूपेषु श्रीकृष्णादिरूपेषु अभेदात् । तदिच्छया श्रीनारायणेच्छयैव अस्य गोमन्तस्थस्य श्रीकृष्णस्य, दुग्धाब्धौ क्षीरसमुद्रे स्थितस्य श्रीनारायणस्य शीर्ष्णि अपि युगपत् एकदैव आसीत् । श्रीकृष्णनारायणयोरभेदादुभयोरेकमेव किरीटं एककाले आसीदिति भावः ।।

**पूर्वं प्राप्तान्येव दिव्यायुधानि पुनर्वैकुण्ठं लोकमितानि[1] भूयः ।**
**तदाऽवतेरू[2] रौहिणेयस्य चैवं भार्याऽप्यायाद् वारुणी नाम पूर्वा ।।१०।।**

**वेदाङ्गतीर्थीया–** पूर्वप्राप्तानि [पूर्वो] त्कजरासन्धयुद्धे प्राप्तानि ।।१०।।

**वरदराजीया–** पूर्वं युद्धसमये प्राप्तान्येव दिव्यायुधानि पुनस्तद्युद्धसमाप्त्यनन्तरं वैकुण्ठलोकं प्रति इतानि गतानि भूयः पुनरपि तदा गोमन्तपवर्ते अवस्थानसमये तान्येवावतेरुः आगतानि । एवमेव रौहिणेयस्य पूर्वा भार्या शेषरूपस्य भार्या वारुणी नाम प्रसिद्धा आयात् आगतवती ।।१०।।

**भावविवृति–** पूर्वं प्राप्तान्येव दिव्यायुधानि...तदावतेरुरित्यत्र पूर्वं प्रथमजरासन्धयुद्धे वैकुण्ठादागतानि दिव्यानि शुद्धसत्त्वात्मकानि देवताधिष्ठितानि कृष्णायुधानि पुनस्तज्जयानन्तरं वैकुण्ठं इतानि वैकुण्ठं प्रति गतानि तानि तान्येव भूयः अंशेनागतानीत्यर्थः । न केवलं कृष्णस्य किन्तु रौहिणेयस्यायुधान्यपि आगतानीत्यर्थः ।।१०-१८।।

**अनन्तभट्टीया–** एवं आयुधान्यवतेरुः ।। **रौहिणेयस्येति** ।। रौहिणेयस्य पूर्वा शेषत्वावस्थायाम् । वारुणी नामका भार्या आगात् ।।१०।।

**जनार्दनीया–** पूर्वं जरासन्धेन प्राप्तप्रथमयुद्धे प्राप्तान्यागतानि दिव्यायुधानि पुनः युद्धानन्तरं वैकुण्ठलोकं प्रति इतानि गतानि आयुधानीत्यर्थः । पुनः गोमन्तावस्थानकाले अवतेरुः । कृष्णं प्रति प्राप्तानि । तदैव काले रौहिणेयस्य च रामस्यायुधान्यागतानीत्यर्थः । पूर्वा पूर्वतना भार्या वारुणीति नाम प्रसिद्धा या अपि सापि वारुण्यप्यागात् । रामस्यायुधन्यागतानि तथा भार्यापि मूलरूपेणागादिति भावः ।।१०।।

**ताम्रपर्णीया–** 'तिस्रस्त्रिदशनार्यस्तमुपतस्थुः प्रियंवदाः । मदिरा रूपिणी भूत्वा कान्तिश्च शशिनः प्रिया ।। श्रीश्च देवी वरिष्ठा च स्वयमेवाम्बुजध्वजा ।।' इति विष्णुपर्व [४१.१४-१५] हरिवंशतात्पर्यमाह- **रौहिणेयस्येत्यादिना** ।।१०।।

१. 'खाच्युतान्यायुधान्येवं तान्येवान्तर्दधुस्तदा । जरासन्धोऽपि नृपतिः विमनाः स्वपुरीं ययौ ।।'इति हरिवंशे २.३६.३४-३५
२. 'यानि वै माथुरे युद्धे प्राप्तान्याहवशोभिनोः । तान्यम्बरात् पतन्ति स्म दिव्यान्याहवसम्प्लवे ।।' इति हरिवंशे, विष्णु.४३.५

**अतिविशद–** भार्याप्यागात् वारुणी नामपूर्वा इत्यत्र कादम्बरी वारुणी मद्यरूपेणेत्यर्थः । कदम्बं नीलवस्त्रं यस्य रामस्य तस्येयं कादम्बरी वारुणीदेवी तस्याः वारुण्याः प्रतिमा पेयरूपा इत्युत्तरवाक्यात् ।।१०।।

**भावचन्द्रिका–** तिस्रस्त्रिदशनार्यस्तमुपतस्थुः प्रियंवदाः । मदिरारूपिणी भूत्वा कान्तिश्च शशिनः प्रिया । श्रीश्च देवी वरिष्ठा च स्वयमेवाम्बुजप्रजाः ।।' इति हरिवंशवचनाभिप्रायमाह– **रौहिणेयस्येति** ।। एका कान्तिः रामस्त्रीप्रेषिता गोमन्ते पर्वते ते तस्मै वारुणीं दत्वा रमस्वेति प्रेषितत्वात् । वरुणापत्यत्वाच्च वारुणी नाम ।।१०।।

**चट्टि–** पूर्वं जरासन्धेन प्राप्तप्रथमयुद्धे प्राप्तान्यागतान्येव दिव्यायुधानि पुनः युद्धानन्तरं वैकुण्ठलोकं इतानि प्रतिगतानि भूयः गोमन्तावस्थानसमये अवतेरुः कृष्णं प्राप्तानि । तदैव काले रौहिणेयस्य रामस्य चायुधान्यागतानीत्यर्थः । पूर्वा पूर्वतना भार्या वारुणीति नाम प्रसिद्धा या सापि वारुणी आयात् । रामस्यायुधन्यागतानि तथा भार्यापि मूलरूपेणायादिति भावः ।।१०।।

**सैवापरं रूपमास्थाय चाऽगाच्छ्रीरित्याख्यं सेन्दिरावेशमग्र्यम् ।**
**कान्तिश्चाऽगात् तस्य सोमस्य चान्या भार्या द्वयोः पूर्वतना सुरूपा।।११।।**

**व्यासतीर्थीया–** तस्यान्या भार्या कान्तिश्चागात् । ननु कान्तिः सोमभार्या कथमत्रागादित्यत उक्तम्– **सोमस्येति** ।। सोमस्य भार्या [कान्तिरन्या द्वयोस्तयोः वारुणीकान्त्योः] पूर्वतना सुरूपा ।।११।।

**वेदाङ्गतीर्थीया–** ननु कान्तिः सोमस्य भार्या सा कथं रौहिणेयस्य भार्या इति तत्राह– **सोमस्येति** ।। सोमस्य भार्या कान्तिरन्या । द्वयोः कान्तिवारुण्योः ।।११।।

**वादिराजतीर्थीया–** सैवापरमित्यत्र सैव वारुण्येव । कन्तिश्चागादित्यत्र तस्य बलरामस्य कान्तिश्च कान्तिसञ्ज्ञा भार्या चागात् नागलोकादागात् । सोमस्य भार्या कान्तिरन्या पत्नी । द्वयोः कान्त्योर्मध्ये इयं कान्तिः पूर्वतना ज्येष्ठा सुरूपा चेत्यन्वयः ।।११।।

**वरदराजीया–** सैव वारुणी श्रीरित्याख्या श्रीः इत्याख्या सञ्ज्ञा यस्य तत् । इन्दिरावेशेन सह वर्तमानं अत एव अग्र्यं अपरं द्वितीयं रूपमास्थाय प्राप्य चागात् । तस्य बलभद्रस्य कान्तिश्च पत्नी तत्रागात् । नेयं सोमस्य भार्या कान्तिरिति भ्रमितव्यमित्याह– **सोमस्येति** ।। सोमस्य भार्या कान्तिश्च अन्या बलभद्रभार्यायाः कान्तेः भिन्ना । द्वयोः श्रीकान्त्योर्मध्ये पूर्वतना श्रीः सुरूपा सुन्दररूपा इत्यर्थः।।११।।

**अनन्तभट्टीया–** सैवापरं रूपमास्थाय चागात् । तस्याः नाम किमित्य आह– **श्रीरित्याख्यमिति** ।। ननु हरिवंशे 'श्रीश्च देवी वरिष्ठा स्त्री स्वयमेवाम्बुजध्वजा । साञ्जलिः प्रग्रहा देवी रौहिणेयमुपस्थिता ।।'

इति श्रीदेव्यागमनोक्तेः तद्विरोध इत्यत आह- **सेन्दिरावेशमिति** ।। **कान्तिश्चागादिति** ।। तस्य बलरामस्य सोमस्य च द्वयोः नियतभार्यापेक्षया अन्या सुरूपा पूर्वतना भार्या बलरामत्वावस्थायां भार्यात्वाभावात् पूर्वतनेत्युक्तिः । सा कान्तिश्चागादित्यर्थः । अत एव हरिवंशे– 'अहं चन्द्रादपि गुरुं सहस्रशिरसं प्रभुम् । स्वैर्गुणैरनुरक्ताहं यथैव मदिरा तथा ।।' इत्युक्तेः इत्यवगन्तव्यम् ।।११।।[1]

**जनार्दनीया–** सैव वारुणी । श्रीरित्याख्यं श्रीनामकेन्दिरायाः लक्ष्म्याः आवेशो यस्मिन् तत्तथा । तेन 'श्रीश्च देवी वरिष्ठा स्त्री स्वयमेवाम्बुजध्वजा' इति हरिवंशो [विष्णुपर्व.४१-१५] व्याख्यातो भवति । अत एवाग्र्यं श्रेष्ठं अपरं अन्यं रूपं आस्थाय प्राप्य अगात् । तस्य रामस्य कान्तिश्च कान्तिनामका भार्यापि अगात् । 'कान्तिश्च शशिनः प्रिया' इति हरिवंशे [विष्णुपर्व.४१-१५]। अत्र रामभार्येति कथमुक्तेत्यत आह– **सोमस्येति** ।। सोमस्य भार्या कान्तिः अन्या रामभार्यायाः कान्त्याः भिन्ना । तथा च तत्रेयं व्याख्या । कान्ती रामभार्या आगता । शशिनः प्रिया कान्तिः अन्येति अध्याहारेण सूचिता भवति । द्वयोः वारुणीकान्त्योः मध्ये पूर्वतना ज्येष्ठा वारुणी सुरूपा सुन्दररूपा ।।११।।

**ताम्रपर्णीया–** तस्य बलरामस्य सोमस्य चेति द्वयोः या नियतभार्यापेक्षयान्या सुरूपा पूर्वतनाभार्या सा कान्तिश्चागादित्यर्थः । बलरामत्वावस्थायां भार्यात्वाभावात् पूर्वतनेत्युक्तम् । अत एव हरिवंशे 'मदिरानन्तरं कान्तिः सङ्कर्षणमुपस्थिता । मदेनाकुलितश्रोणी किञ्चिदाकुलितेक्षणा । प्रोवाच प्रणता कान्तिः सङ्कर्षणमुपस्थिता । जयपूर्वेण योगेन सस्मितं वक्तुमिच्छतीम् । अहं चन्द्रादपि गुरुं सहस्रशिरसं प्रभुम् । स्वैर्गुणैरुपगच्छे त्वां यथैव मदिरा तथा ।।' [विष्णुपर्व.४१.२५-२७] इत्यादिना । कान्तिरागत्य 'अहं सोमस्त्री तव मम च पूर्वयोगश्च वर्तते । मानुषोऽपि भवान् चन्द्रादपि गुणाढ्यः । अतस्त्वामुपगच्छेयम्' इत्युक्तमुपपन्नं इति ज्ञेयम् । केचित्तु 'तस्य रामस्य भार्या कान्तिरागात् । ननु कान्तेः सोमस्त्रीत्वादिदमयुक्तमित्यत आह– **सोमस्येति** ।। सोमस्य भार्या कान्तिरन्या अतो न विरोधः । द्वयोः कान्तिवारुण्योर्मध्ये पूर्वतना वारुणी सुरूपा' इत्यर्थमाहुः । अन्ये तु 'द्वयोः कान्त्योर्मध्ये इयं कान्तिः पूर्वतना गुणज्येष्ठा सुरूपत्वात्' इत्याहुः । कादम्बरी कदम्बकोटरे जाता । तदुक्तम् हरिवंशे– 'कदम्बकोटरे जाता नाम्ना कादम्बरीति सा' इति [विष्णुपर्व.४१.१३] ।।११-१६।।

---

१. **अनन्तभट्टीया–** कान्तिश्चागादिति । तस्य बलरामस्य सोमस्य च द्वयोः या नियतभार्यापेक्षयान्या सुरूपा पूर्वतना भार्या । बलरामत्वावस्थायां भार्यात्वाभावात् पूर्वतनेत्युक्तिः । सा कान्तिश्चागादित्यर्थः । अत एव हरिवंशे यदुक्तं कान्तिरागत्य 'अहं सोमस्त्री त्वं गुणाढ्यः इत्यागता' इत्युक्तवतीति । तदुपपन्नं भवति । केचित्तु तस्य रामस्य भार्या कान्तिश्चागात् । ननु कान्तेः सोमस्त्रीत्वादिदमयुक्तमित्यत आह- **सोमस्य चेति** ।। सोमस्य भार्या कान्तिरन्या ततो न विरोधः । द्वयोर्वारुणीकान्त्योर्मध्ये पूर्वतना वारुणी सुरूपेत्यर्थमाहुः । [इति हो.पुस्तके अधिकः पाठः]

**भारतश्री–** ।। **कान्तिश्चागात् तस्य सोमस्य चान्येति** ।। तस्य रौहिणेयस्य । रोहिणीपुत्रव्यावृत्त्यर्थं तस्येत्युक्तम् । तस्य..त पर्वते प्रकृतस्य रौहिणेयस्य रामस्यैव नतु कृष्णस्य । 'श्रीश्च देवी वरिष्ठा स्त्री रौहिणेयमुपस्थिता' इति हरिवंशोक्तेस्तात्पर्यमाह– **सैवापरमिति** ।। 'तत्र सन्निहिता श्रीश्च यत्र सन्निहितो हरिः । नास्य सन्निधिमात्रेण रमा पत्नीत्वमाव्रजेत् ।। साक्षादेव तु साक्षाच्च हरेः सन्निधितः क्वचित् । गोप्यादिरूपा भवति विपरीतं न तु क्वचित् ।।' इति चतुर्थस्कन्धतात्पर्योक्तेः [१४.५०] आवेशावतारे साक्षाद् श्रीभोगानुपपत्तेः । अन्या वारुण्या अन्या सोमस्य चन्द्रस्य भार्या अन्या कान्तिश्चागात् । वलभद्रं दृष्ट्वा कामेनागात् । द्वयोः तत्र प्राप्तयोः पूर्वतना सुरूपा पूर्वं प्राप्ता तद्भार्या सुरूपा । अनेन बलभद्रकामनया नागात् । [अनेन स्व] किन्तु स्वयं कामुकी अगात् । तदुक्तं हरिवंशे– 'मदिरा रूपिणी भूत्वा कान्तिश्च शशिनः प्रिया । प्रोवाच प्रणता कान्तिः सङ्कर्षणमवस्थिता ।। अहं चन्द्रादपि गुरुं सहस्रशिरसं प्रभुम् । स्वैर्गुणैरनुरक्ता त्वां यथैव मदिरा तथा ।।' [२.४१.१५,२७] इति । 'वरं समाश्रिता पतिम्' इत्यादौ अधमगमनस्यैव दुष्टत्वमुक्तम् । नोत्तमसङ्गस्य । 'तस्य रामस्य अन्या भार्या कान्तिश्चागात् । चन्द्रप्रिया कान्तिश्च अन्या सात्र नागात्' इत्याहुः ।।११।।

**भावचन्द्रिका–** ...'अम्बुजध्वजा' इत्यस्य भावमाह– **सेन्दिरावेशमिति** ।। द्वयोर्वारुणीकान्त्योः । स्त्रीषु सौन्दर्यातिशयस्य श्रेष्ठत्वप्रयोजकत्वेन उक्तत्वात् कान्त्यपेक्षया वारुणी श्रेष्ठा इत्यर्थः ।।११।।

**चट्टि–** सैव वारुणी श्रीरित्याख्या सञ्ज्ञा यस्य तदिन्दिरायाः श्रीमहालक्ष्म्याः आवेशेन सहितं अत एव अग्र्यं परं अन्यत् रूपमास्थाय प्राप्य अगात् । तस्य रामस्य कान्तिश्च कान्तिनाम्नी भार्यापि अगात् । ननु कान्तिः चन्द्रभार्येति प्रसिद्धिः अत्र रामभार्येति कथमुक्तेत्यत आह– **सोमस्येति** ।। सोमस्य भार्या कान्तिः अन्या रामभार्यायाः कान्त्याः भिन्ना । द्वयोः वारुणीकान्त्योः मध्ये पूर्वतना ज्येष्ठा वारुणी सुरूपा सुन्दररूपा ।।११।

**ताभी रामो मुमुदे तत्र तिष्ठञ्छशाङ्कपूगोद्रिक्तकान्तिः सुधामा ।**
**तस्या वारुण्याः प्रतिमा पेयरूपा कादम्बरी वारुणी[१] तां पपौ सः ।।१२।।**

**व्यासतीर्थीया–** सुधामा सुरूपः ।।१२-२०।।

**वेदाङ्गतीर्थीया–** ताभिः वारुणीश्रीकान्तिभिः ।।१२-१६।।

**वादिराजतीर्थीया–** ताभिः वारुणीश्रीकान्तिभिः रामो मुमुदे । तस्याः वारुण्याः प्रतिमा अभिमन्यमानत्वेन देहसमा कादम्बरी कदम्बकुसुमोत्पन्नत्वात् कादम्बरी पेयरूपा वारुणी गोमन्तशिखरस्थकदम्बवृक्षकोटरात् सुस्राव । तां सः बलरामः पपौ ।।१२-१७।।

१. 'वारुणीं' इति जनार्दनीयपाठः । 'वारुणीं' इति चट्टिटिप्पण्यां पाठान्तरम् ।

**वरदराजीया–** रामो बलभद्रः तत्र गोमन्ते तिष्ठन् वर्तमानः ताभिः वारुणीभिः श्रीकान्तिभिः सह रेमे । कथम्भूतः । शशाङ्कपूगात् चन्द्रसमूहादपि उद्रिक्ता उत्कृष्टा कान्तिः यस्य स तथा । अत एव सुधामा सुतेजा राम इति सम्बन्धः । तत्र वारुण्या सह रमणे विशेषमाह– **तस्य इति** ।। तस्याः पूर्वोक्तायाः वारुण्याः प्रतिमा अभिमानित्वेन देहभूता । अत एव वारुणीसञ्ज्ञा पेयरूपा पातुं योग्या कादम्बरीति गुणनामयुक्ता । तां कादम्बरीं स रामः पपौ पीतवान् । अयमेव वारुण्या साकं सम्भोगो नामेति भावः । अत्र पेयरूपा इत्यनेन तु कथं कादम्बरीरूपमदिरासेवनं रामस्य घटत इति शङ्का अपास्ता वेदितव्या ।।१२।।

**अनन्तभट्टीया–** ।। **ताभीति** ।। ताभिः वारुणीन्दिरावेशसहितश्रीकान्तिभिः । अत एव हरिवंशे- 'कादम्बरीमदकलं विदित्वा कृष्णपूर्वजम् । तिस्रस्त्रिदशनार्यस्तमुपतस्थुः प्रियंवदाः ।। मदिरारूपिणी भूत्वा कान्तिश्च शशिनः प्रिया । श्रीश्च देवी वरिष्ठा सा स्वयमेवाम्बुजध्वजा ।। साञ्ज...।।' इत्युक्तम् । उपसंहारेऽपि 'सोऽलङ्कारमनुप्राप्य ताश्च तिस्रः सुरस्त्रियः । शुशुभे बलदेवश्च शारदेन्दुसमप्रभः ।।' इत्युक्तम् । प्रतिमा अभिमन्यमानत्वेन देहसमा । वारुणीति प्रसिद्धं नाम कादम्बरीति गुणनाम ।।१२।।

**जनार्दनीया–** शशाङ्कपूगः चन्द्रसमूहः । 'पूगः क्रमुकवृन्दयोः' इत्यमरः । तस्मादुद्रिक्ता उत्कृष्टा कान्तिर्यस्य स तथा । अत एव सुधामा शोभनप्रकाशो रामः तत्र गोमन्ते तिष्ठन् वसन् ताभिः वारुणीश्रीकान्तिभिर्मुमुदे मुमोद । तस्याः पूर्वोक्तायाः वारुण्याः प्रतिमा अभिमन्यमानस्वरूपा पेयरूपा पानयोग्यमद्यस्वरूपा या कादम्बरी कदम्बकोटरादुत्पन्ना । वारुणीं समुद्रोत्पन्नत्वाद्वा वारुणीनाम्नीं वरुणात्मजामित्यर्थः । शेषभार्यया वारुण्या अभिमन्यमानत्वात् वारुणीनाम्नीं कादम्बरीं पपाविति योजना । 'कदम्बकोटराज्जाता नाम्ना कादम्बरीति सा । वारुणीरूपिणीं तत्र देवानाममृतारणीम् ।।' इति हरिवंशे । [विष्णुपर्व.४१-१३ ] 'सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा । गन्धोत्तमा प्रसन्नेरा कादम्बर्यः परिस्रुता ।।' इत्यमरः । कुत्सितं च तत् अम्बरं च नीलवस्त्रमित्यर्थः । तदस्यास्तीति कादम्बरः, तस्येयं कादम्बरीति तृतीया सहार्थे क्षीरस्वामिना व्याख्यातम् । 'वारुणी मदिरा ज्ञेया' इत्यनेकध्वनिपदमञ्जर्याम् ।।१२।।

**भारतश्री–** सुधामा सु आश्रयः ।।१२।।

।। इति डम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां षोडशोऽध्यायः ।।

**भावचन्द्रिका–** 'शशिन' इत्यस्य भावमाह– **शशाङ्केति** ।। पेयरूपा पेयाभिमता प्रतिमा । 'कदम्बकोटरे जाता नाम्ना कादम्बरीति या' इति हरिवंशवचनात् तत्कोटरे कदम्बपुष्परसजन्या कादम्बरी वा पुष्पाभिमन्यमाना वारुणी ।।१२।।

**चट्टि–** शशाङ्कपूगात् चन्द्रसमूहात् उद्रिक्ता उत्कृष्टा कान्तिर्यस्य स तथा । अत एव सुधामा सुतेजाः रामः तत्र गोमन्ते तिष्ठन् वसन् ताभिः वारुणीश्रीकान्तिभिर्मुमुदे मुमोद । तस्याः पूर्वोक्तायाः वारुण्याः प्रतिमा अभिमन्यमानत्वेन देहभूता । अत एव वारुणीसञ्ज्ञा पेयरूपा पानयोग्या कादम्बरी या तां पपौ । यद्वा वारुणीं समुद्रोत्पन्नत्वात् वारुणीनाम्नीं वरुणात्मजामित्यर्थः ।

'वने विहरतस्तस्य सहगोपैः महात्मनः । मानुषच्छद्मरूपस्य शेषस्य धरणीभृतः ।।
निष्पादितोरुकार्यस्य कार्येणोर्वीन्द्रचारिणः । उपभोगार्थमत्यर्थं वरुणः प्राह वारुणीम् ।।
अभीष्टा सर्वदा यस्य मदिरे त्वं महौजसः । अनन्तस्योपभोगाय तस्य गच्छ मुदे शुभे ।।
इत्युक्ता वारुणी तेन सन्निधानमथाकरोत् । वृन्दावनवनोत्पन्नकदम्वतरुकोटरे ।।
विचरन् वलदेवोऽपि मदिरागन्धमुद्वहन् । आघ्राय मदिरां तर्षमवापाथ वराननः ।।
ततः कदम्वात् सहसा मद्यधारां स लाङ्गली । पतन्तीं वीक्ष्य मैत्रेय प्रययौ परमां मुदम् ।।
पपौ च गोपगोपीभिः समवेतो मुदा युतः ।।' इति विष्णुपुराणे ।
'सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा । गन्धोत्तमा प्रसन्नेरा कादम्वर्यः परिस्रुता ।।' इत्यमरः ।
'वारुणी मदिरा ज्ञेया' इत्यनेकध्वनिपदमञ्जर्याम् ।।१२।।

**एवं तयोः क्रीडतोः स्वैरमत्र राजन्यवृन्दानुगतो जरासुतः ।**
**गिरिं गोमन्तं परिवार्यादहत् तं दृष्ट्वा देवौ पुप्लुवतुर्बलाढ्यौ ।।१३।।**

**वरदराजीया–** एवमुक्तरीत्या अत्र गोमन्ते स्वैरं स्वेच्छया तयोः रामकृष्णयोः क्रीडतोः रममाणयोः सतोः राजन्यवृन्देन राज्ञां समूहेन अनुगतो युक्तो जरासुतो गोमन्तं गिरिं परिवार्य परितः आवृत्य अदहन् ददाह । दह्यमानं गिरिं दृष्ट्वा वलाढ्यौ सेनासमुद्रे देवौ कृष्णरामौ पुप्लुवतुः उत्पेततुः ।।१३।।

**अनन्तभट्टीया–** परिवार्य आवृत्य ।।१३।।

**जनार्दनीया–** एवं अनेन प्रकारेण अत्र गिरौ तयोः कृष्णरामयोः स्वैरं स्वेच्छानुसारेण यथा स्यात्तथा क्रीडतोः क्रीडां कुर्वतोः सतोः राजन्यानां राज्ञां, वृन्देन अनुगतः सहितः । परिवार्यावृत्य अदहत् ददाह । देवौ कृष्णरामौ तं दहन्तं दाहयन्तं जरासन्धं दह्यमानं पर्वतं वा ।।१३।।

**चट्टि–** एवं अनेन प्रकारेण अत्र गिरौ तयोः श्रीरामकृष्णयोः स्वैरं स्वेच्छानुसारेण क्रीडां कुर्वतोः सतोः राजन्यानां राज्ञां वृन्देन समूहेन अनुगतः सहितः जरासुतः गोमन्तं गिरिं परिवार्य परितः आवृत्य अदहत् ददाह । बलाढ्यौ देवौ श्रीकृष्णरामौ तं दहन्तं जरासन्धं दृष्ट्वा पुप्लुवतुः उत्पेततुः ।।१३।।

**गिरिस्ताभ्यां पीडितः सन् निमग्नो भूमौ पद्भ्यां [1]योजनैकादशं सः ।**
**[2]निष्पीडिताज्जलधारोद्गताऽस्माद् वह्निं व्याप्तं शमयामास सर्वम् ॥१४॥**

**वरदराजीया–** स गोमन्तगिरिः ताभ्यां रामकृष्णाभ्यां पद्भ्यां पीडितः आहतः योजनैकादश एकादशयोजनानि भूम्यां सन्निमग्नः अन्तर्गतोऽभूत् । निष्पीडितादस्मात् गोमन्तात् जलधारा प्रवाहः उद्गता निर्गता सती व्याप्तं सर्वं वह्निं शमयामास शान्तमकरोत् ॥१४॥

**अनन्तभट्टीया–** योजनैकादशं एकादशयोजनानीत्यर्थः ॥१४॥

**जनार्दनीया–** ताभ्यां कृष्णरामाभ्याम् । पद्भ्यां पदाभ्याम् । योजनैकादशं एकादशयोजनानीत्यर्थः । भूमौ संनिमग्नः प्रविष्टोऽभूत् । निष्पीडितात् तस्माद्गिरेः उद्गता ऊर्ध्वं निःसृता ॥१४॥

**चट्टि–** सः गिरिः ताभ्यां श्रीकृष्णरामाभ्यां पद्भ्यां पदाभ्यां पीडितस्सन् योजनैकादशं एकादशयोजनानीत्यर्थः । भूमौ संनिमग्नः प्रविष्टोऽभूत् । निष्पीडितात् तस्मात् गोमन्तगिरेः उद्गता ऊर्ध्वं निःसृता जलस्य धारा प्रवाहः व्याप्तं सर्वं वह्निं शमयामास शान्तिमकरोत् ॥१४॥

**सेनां प्रविष्टौ सर्वराजन्यवृन्दं व्यमथ्नतां देववरौ स्वशस्त्रैः ।**
**तत्र हंसो डिभिकश्चैकलव्यः [3]सकीचकस्तौ शिशुपालपौण्ड्रकौ ॥१५॥**

**वरदराजीया–** सेनां प्रविष्टौ देववरौ कृष्णरामौ सर्वेषां राजन्यानां नृपाणां वृन्दं समूहं स्वशस्त्रैः व्यमथ्नतां ममर्दतुः । तत्र युद्धे सेनायां वा । सः प्रसिद्धः । तौ प्रसिद्धौ ॥१५॥

**अनन्तभट्टीया–** तौ प्रसिद्धौ ॥१५॥

**जनार्दनीया–** सेनां जरासन्धसेनां प्रविष्टौ कृष्णरामौ स्वशस्त्रैः । वृन्दं समूहं व्यमथ्नतां ममन्थतुः । यदा तत्रैव तदैव । सकीचकः एकलव्यः । तौ प्रसिद्धौ ॥१५॥

**चट्टि–** देववरौ रामकृष्णौ सेनां जरासन्धसेनां प्रविष्टौ सन्तौ सर्वेषां राजन्यानां वृन्दं समूहं स्वशस्त्रैः व्यमथ्नतां ममन्थतुः । तत्रैव तदैव हंसो डिभिकश्च सकीचकः एकलव्यः । तौ प्रसिद्धौ शिशुपालपौण्ड्रकौ॥

---

१. 'तत उत्पत्य तरसा दह्यमानात्तु तावुभौ । दशैकयोजनात्तुङ्गात् निपेततुरधो भुवि ॥' इति भागवते १०.५५.३७ ।

२. 'अवप्लुते ततो रामे कृष्णः कृष्णाम्बुदोपमः । गोमन्तशिखरात् श्रीमान् आप्लुतोऽमितविक्रमः ॥ ततस्तं पीडयामास पद्भ्यां गिरिवरं हरिः । स पीडितो गिरिस्तेन निर्ममज्ज समन्ततः ॥ जलाकुलोपलस्तत्र प्रस्रुतो द्विरदो यथा । स तेन वारिणा वह्निः तत्क्षणात् प्रशमं ययौ ॥' इति विष्णुपर्वणि.४२.८१-८२ ।

३. 'स कीचकः' इति भिन्नं पदमिति वरदराजीये ।

**भौमात्मजो दन्तवक्रश्च रुक्मी सौभाधिपो मैन्दमैन्दानुजौ च ।**
**अन्ये च ये पार्थिवाः सर्व एव क्रोधात् कृष्णं परिवार्याभ्यवर्षन् ।।१६।।**

**वरदराजीया–** भौमात्मजो भगदत्तः । सौभधिपः साल्वः । मैन्दानुजो विविदः । अन्ये ये पार्थिवा राजानः ते सर्वे हंसादयः क्रोधात् कोपेन कृष्णं परिवार्य परिवृत्य शस्त्रौघैः अभ्यवर्षन् ।।१६।।

**जनार्दनीया–** भौमात्मजः भगदत्तः । सौभाधिपः साल्वः । मैन्दश्च मैन्दानुजो विविदः । ये पार्थिवाः ते सर्वे कृष्णं परिवार्य परितः आवृत्य, द्रुमपूगैः वृक्षसमहैः शिलाभिः पाषाणैः क्रोधात् अभ्यवर्षन् । यस्माद्धरौ एते अभक्ताः तस्मात् क्रोधादभ्यवर्षन्निति भावः ।।१६।।

**चट्टि–** भौमात्मजः भगदत्तः, दन्तवक्रश्च रुक्मी सौभाधिपः साल्वश्च मैन्दश्च मैन्दानुजो विविदः तौ च अन्ये च ये पार्थिवाः राजानः ते सर्वे ते श्रीकृष्णं परिवार्य परितः आवृत्य, शस्त्रैरस्त्रैः द्रुमपूगैः वृक्षसमहैः, शिलाभिः पाषाणैः क्रोधात् अभ्यवर्षन् । यस्मात् हि ते हरौ अभक्ताः तस्मात् क्रोधादभ्यवर्षन्निति भावः । भगदत्तमैन्दविविदाः यद्यपि भक्ताः तथापि तेष्वसुरावेशवशात् असुरेष्वेव परिगणिताः ।।१६।।

**शस्त्रैरस्त्रैर्द्रुमपूगैः शिलाभिर्भक्ताश्च ये शल्यबाह्लीकमुख्याः ।**
**ससोमदत्ताः सौमदत्तिर्विराटः पाञ्चालराजश्च जरासुतस्य ।**
**भयात् कृष्णं शरवर्षैरवर्षन् कारागृहे वासिता मागधेन ।।१७।।**

**वेदाङ्गतीर्थीया–** सौमदत्तिः भूरिश्रवाः ।।१७-१८।।

**वादिराजतीर्थीया–** कारागृहे वासिता मागधेनेत्यत्र 'अयुते द्वे गिरिद्रोण्याम्' इति वचनात् कारागृहे मागधेन वासिता ये नृपाः ते च शस्त्रवर्षैः कृष्णमवर्षन्नित्यन्वयः ।।१८-२०।।

**वरदराजीया–** हरौ भक्ताश्च शल्यादयोऽपि जरासुतस्य भयात् कृष्णं प्रति शस्त्रवर्षैः अवर्षन् ववर्षुः । यतः कारणात् कारागृहे बन्दीगृहे मागधेन जरासन्धेन वासिताः स्थापिता अत इत्यर्थः । सौमदत्तिः भूरिश्रवाः पाञ्चालराजो द्रुपदः ।।१७।।

**जनार्दनीया–** भगदत्तमैन्दविविदाद्याः यद्यपि भक्ताः तथापि तेष्वसुरावेशवशादसुरेष्वेव परिगणिताः । भक्तेषु विशेषमाह– **भक्ताश्चेति** ।। सोमदत्तेन पित्रा सह वर्तमानः सौमदत्तिः भूरिश्रवाः । ये शल्यादयो भक्तास्तेऽपि जरासुतस्य भयात् अवर्षन् । न तु क्रोधादिति भावः । एषां भयं कुतः? इत्यत आह– **कारागृह इति** ।। यतो मागधेन कारागृहे बन्धिगृहे वासिताः वासं प्रापिताः । पूर्वमिति शेषः । अत एवावर्षन्निति सम्बन्धः ।।१७।।

**ताम्रपर्णीया–** ।। **कारागृह इति** ।। 'अयुते द्वे गिरिद्रोण्याम्' इति वचनात् । कारागृहे मागधेन वासिता ये विंशत्सहस्रसङ्ख्याका नृपास्ते च शस्त्रवर्षैरवर्षन्नित्यर्थः ।।१७-१८।।

**चट्टि–** भक्तेषु विशेषमाह– **भक्ताश्चेति** ।। सोमदत्तेन पित्रा सह वर्तमानः सौमदत्तिः भूरिश्रवाः विराटः पाञ्चालराजः द्रुपदश्च शल्यबाह्लीकमुख्याः ये भक्ताः ते च जरासन्धस्य भयात् श्रीकृष्णं शरवर्षैः अवर्षन् । न तु क्रोधादिति भावः । तेषां भयं कुतः?" इत्यत आह– **कारागृह इति** ।। यतो मागधेन कारागृहे बन्धिगृहे वासिताः वासं प्रापिताः । पूर्वमिति शेषः । अत एवावर्षन्निति सम्बन्धः ।।१७।।

**सर्वानेताञ्छरवर्षेण कृष्णो विसूतवाजिध्वजशस्त्रवर्मणः ।**
**कृत्वा वमच्छोणितानार्तरूपान् विद्रावयामास हरिर्यथा मृगान् ।।१८।।**

**वरदराजीया–** कृष्णः सर्वानेतान् पूर्वोक्तान् नृपान् शरवर्षेण बाणवृष्ट्या विगतानि सूताः सारथयो वाजिनो अश्वाः ध्वजाः अस्त्राणि शस्त्राणि वर्म कवचानि येषां ते तथाविधान् कृत्वा । तथा वमत् शोणितं येषां ते तथा । आर्तरूपान् उद्विग्नरूपांश्च कृत्वा विद्रावयामास द्रावितवान् । हरिः सिंहो मृगादीन् सृगालादीन् यथा तथेत्यर्थः ।।१८।।

**जनार्दनीया–** विगतानि सूतादीनि येषां ते तथा तान् । कृत्वा, वमत् शोणितं रक्तं येषां ते तथा तान् । आर्तं पीडितं रूपं येषां ते तथा तान् । हरिः सिंहः ।।१८।।

**चट्टि–** श्रीकृष्णः एतान् पूर्वोक्तान् सर्वान् नृपान् शरवर्षेण बाणवृष्ट्या विसूतवाजिध्वजशस्त्रवर्मणः विगताः सूताः सारथयो वाजिनो अश्वाः ध्वजाः शस्त्राणि वर्माणि कवचाश्च येषां तान् कृत्वा, वमत् शोणितं रक्तं येषां ते तथा तान् । आर्तं पीडितं रूपं येषां ते तथा तान् । हरिः सिंहः मृगान् सृगालादीन् यथा तथेत्यर्थः विद्रावयामास ।।१८।।

**हत्वा सेनां विंशदक्षोहिणीं तां त्रिभिर्युक्तां रुक्मिणं नैव कृष्णः ।**
**[1]रुक्मिण्यर्थे पीडयामास शस्त्राण्यस्य च्छित्वा विरथं द्रावयानः ।।१९।।**

**वेदाङ्गतीर्थीया–** त्रिभिरक्षौहिणीबलैः ।।१९-२०।।

**सत्याभिनवतीर्थीया–** हत्वा सेनां विंशदक्षौहिणीं...इति श्लोके 'विंशदक्षौहिणीं तां त्रिभिर्युक्ताम्' इत्यस्य त्र्यक्षौहिणीनामकसङ्ख्याविशेषैः युक्तां विंशदक्षौहिणीं तामित्यर्थः । एतेन 'त्रिभिः' इत्यस्य अध्याहृतेन 'अक्षौहिणीभिः' इत्यनेनान्वयो वक्तव्यः । स न सम्भवति । 'त्रिभिः' इत्यस्य पुल्लिङ्गत्वात्

---

१. 'अवेक्ष्य रुक्मिणीं कृष्णो रुक्मिणं न व्यपोथयत् । ज्वलनार्कांशुसंकाशानाशीविषविषोपमान् ।। वारयामास कृष्णो वै शरांस्तस्य तु शिक्षया ।।' इति हरिवंशे २.३५.७-८ ।

'अक्षौहिणीभिः' इत्यस्य स्त्रीलिङ्गत्वादिति दूषणं परास्तम् । 'त्रिभिः' इत्यस्य अध्याहृतेन अक्षौहिणीनामक-सङ्ख्याविशेषैरित्यनेन अन्वयः इत्यभ्युपगमात् ।।१९।।

**मधुसूदनीया–** ।। **रुक्मिण्यर्थ इति** ।। रुक्मिणीनिमित्तेन स्वस्मिन् विवाहप्रतिबन्धकद्वेषकरणार्थ-मित्यर्थः । यद्वा अर्थशब्दो निमित्तवाची । तथाच रुक्मिण्यर्थे रुक्मिणि निवृत्तौ रुक्मिणीनयनकाले रुक्मिणीनिवर्तनार्थं इतरराजवत् अधुनैवातिपीडने कृष्णबलस्य ज्ञातत्वेन [तदा रुक्मिणीनिवर्तनार्थं] न आयास्यति । तथाच शिखामुण्डनाद्यपकारो न कृतः स्यात् इति भावेनेति भावः ।।१९-२१।।

**वरदराजीया–** त्रिभिर्युक्तां विंशदक्षौहिणीं त्रयोविंशदक्षौहिण्यात्मिकां सेनां हत्वापि कृष्णः रुक्मिणीप्रीत्यर्थं रुक्मिणं नैव पीडयामास । अस्य रुक्मिणः शस्त्राणि छित्वा विरथं कृत्वा द्रावयानः पलायनं कारितवान् ।।१९।।

**भावविवृति–** रुक्मिण्यर्थे पीडयामास इत्यत्र रुक्मिणा विवाहे स्वस्मिन् विरोधकरणार्थं रुक्मिणं न जघान न पीडयामास ।।१९-३३।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ षोडशोऽध्यायः ।।

**जनार्दनीया–** त्रिभिः त्र्यक्षौहिणीभिः युक्ताम् । विंशतविंशतिशब्दपर्यायो विंशच्छब्दः । अक्षौहिणीं अक्षौहिण्यात्मिकां सेनां त्रयोविंशत्यक्षौहिणीसङ्ख्याकां सेनामित्यर्थः । हत्वा, रुक्मिण्याः देव्या अर्थे कृते रुक्मिणं रुक्मिण्यग्रजं रुक्मिनामकं नैव पीडयामास । किम्भूतः कृष्णः? अस्य रुक्मिणः शस्त्राणि छित्वा विगतरथं कृत्वेति शेषः । द्रावयानः द्रावयन् ।।१९।।

**ताम्रपर्णीया–** ।। **रुक्मिण्यर्थ इति** ।। रुक्मिण्यर्थे लोकरीत्या रुक्मिणीप्रीत्यर्थं रुक्मिणं न पीडयामासेत्यर्थः । यद्वा रुक्मिणीविवाहप्रतिबन्धार्थं न पीडयामास । कृत्स्ने कृष्णभयेन तत्प्रतिबन्धस्तेन न क्रियत इति भावः ।।१९-२२।।

**अतिविशद–** रुक्मिणं नैव कृष्ण इत्यत्र सेनां हत्वापि रुक्मिणं नैव जघानेत्यर्थः । कुत इत्यतो रुक्मिण्यर्थ इति रुक्मिणीनिवृत्त्यै रुक्मिणीं शिशुपालाय दास्ये न कृष्णायेति निषेधार्थमित्यर्थः । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यभिधानम् । तर्हि किञ्चकारेति तत्राह– **पीडयामासेति** ।। पीडाप्रकारमेवाह– **शस्त्राण्यस्य छित्वा विरथं द्रावयान** इति ।। अत एवोक्तं सप्तदशे 'स रुक्मिनामकोऽग्रजः श्रियो द्विषन् रमापतिम् । हरेः प्रदातुमुद्यतां न्यवारद्धरिप्रियाम् ।।' इति । रुक्मिण्यर्थे रुक्मिण्यर्थमित्यपि वदन्ति । रुक्मिण्यां प्रीतिरूपप्रयोजनार्थमिति भावः ।।१९।।

**चट्टि–** श्रीकृष्णः त्रिभिः अक्षौहिणीभिः युक्तां तां विंशदक्षौहिणीं त्रयोविंशदक्षौहिण्यात्मकां सेनां हत्वा, रुक्मिण्याः देव्या अर्थे रुक्मिणीनिमित्तेन स्वस्मिन् द्वेषकरणार्थमित्यर्थः । रुक्मिणं नैव अहनत् । किन्तु अस्य रुक्मिणः शस्त्राणि छित्वा विरथं कृत्वा द्रावयानः द्रावयन् सन् पीडयामास । यद्वा रुक्मिण्यर्थे रुक्मिणीप्रीत्यर्थं रुक्मिणं नैव पीडयामास । किन्तु अस्य रुक्मिणः शस्त्राणि छित्वा द्रावयानस्सन् पीडयामासेति पूर्वेणान्वयः ।।१९।।

**जरासुतो रौहिणेयेन युद्धं चिरं कृत्वा तन्मुसलेन पोथितः ।**
**विमोहितः प्राप्तसञ्ज्ञश्चिरेण क्रुद्धो गदां तदुरस्यभ्यपातयत् ।।२०।।**

**वरदराजीया–** जरासुतो रौहिणेयेन बलभद्रेण चिरं युद्धं कृत्वा तस्य रामस्य मुसलेन आयुधेन पोथितः ताडितः सन् विमोहितोऽभूत् । चिरेणातिकालं प्राप्ता सञ्ज्ञा येन स तथा क्रुद्धः सन् तस्य बलभद्रस्योरसि गदां अभ्यपातयत् पातितवान् ।।२०।।

**जनार्दनीया–** तस्य रामस्य, मुसलेन पोथितः । अत एव विमोहितः मूर्च्छितो जरासुतः चिरेण विलम्बेन प्राप्तसञ्ज्ञः सन् क्रुद्धो भूत्वा, तस्य रामस्य उरसि गदां अभ्यपातयत् पातयामास ।।२०।।

**चट्टि–** जरासुतः जरासन्धः रौहिणेयेन बलभद्रेण चिरं युद्धं कृत्वा तस्य रामस्य मुसलेन पोथितः ताडितस्सन् । अत एव विमोहितः मूर्च्छितस्सन् चिरेण विलम्बेन प्राप्तसञ्ज्ञः सन् क्रुद्धो भूत्वा तस्य रामस्य उरसि गदां अभ्यपातयत् पातयामास ।।२०।।

**तेनाऽहतः सुभृशं रौहिणेयः पपात मूर्च्छाभिगतः क्षणेन ।**
**अजेयत्वं तस्य दत्तं हि धात्रा पूर्वं गृहीतं विष्णुना रामगेन ।।२१।।**

**व्यासतीर्थीया–** कथमतिबलो बलभद्रो जरासन्धजित इति जिज्ञासायामाह– **अजेयमिति** ।। अजेयत्वं धात्रा दत्तं चेत् कथं बलेन पूर्वं गृहीत इत्यत उक्तम्- **पूर्वमिति** ।।२१।।

**वेदाङ्गतीर्थीया–** कथमतिबलो बलभद्रो जरासन्धगदापातात् मूर्च्छित इत्यत उक्तम्– **अजेयत्वमिति** ।। अजेयत्वं तस्य धात्रा दत्तं चेत् कथं बलेन पूर्वं गृहीत इत्यत आह- **पूर्वमिति** ।। 'जगृहे एनमथो हली सः' इति पूर्वयुद्धे ।।२१।।

**वादिराजतीर्थीया–** अजेयत्वं तस्य दत्तं हि धात्रेत्यत्र तस्य जरासन्धस्य । तर्हि मथुरायां युद्धे बलरामेण कथं गृहीत इत्यत आह– **पूर्वमिति** ।।२१।।

**वरदराजीया–** तेन जरासन्धेन हतो गदया सम्यक् ताडितः सन् क्षणेन तत्क्षणमेव मूर्च्छामभिगतः प्राप्त पपात । तादृक् सामर्थ्ये कारणमाह– **अजेयत्वमिति** ।। धात्रा ब्रह्मणा तस्य जरासन्धस्य

अजेयत्वं दत्तं हि यत इति । तर्हि पूर्वं युद्दे कथं बलभद्रेण जरासन्धो धृत इत्यत आह– **पूर्वमिति** ।। पूर्वं युद्धे रामगेन बलभद्रस्थितेन विष्णुना शुक्लकेशात्मकेन हरिणैव धृत इत्यतो न विरोध इत्यर्थः ।।२१।।

**अनन्तभट्टीया–** तस्य जरासुतस्य ।।२१।।[१]

**जनार्दनीया–** तेन जरासन्धेन आहतः पोथितः । रामस्य पतने हेतुमाह– **अजेयत्वमिति** ।। तस्य जरासन्धस्य । तर्हि प्रथमयुद्धे रामेण जरासन्धः कथं गृहीतः ? इत्यत आह– **पूर्वमिति** ।। रामगेन रामे विद्यमानेन शुक्लकेशस्वरूपिणा विष्णुना ।।२१।।

**चट्टि–** रौहिणेयः तेन जरासन्धेन सुभृशं आहतः पोथितः क्षणेन तत्क्षणमेव मूर्च्छां अभिगतः प्राप्तः सन् पपात । रामस्य पतने हेतुमाह– **अजेयत्वमिति** ।। तस्य जरासन्धस्य धात्रा ब्रह्मणा अजेयत्वं दत्तं तर्हि मधुरायां युद्धे कथं बलरामेण जरासन्धः गृहीतः? इत्यत आह– **पूर्वमिति** ।। पूर्वं रामगेन रामे विद्यमानेन शुक्लकेशस्वरूपिणा विष्णुना गृहीतः अतो न विरोध इत्यर्थः ।।२१।।

**तथाकृते बलभद्रे तु कृष्णो गदामादाय स्वामगान्मागधेशम् ।**
**तताड जत्रौ स तयाऽभिताडितो जगाम गां मूर्च्छयाऽभिप्लुताङ्गः ।।२२।।**

**व्यासतीर्थीया–** तथा कृते मूर्च्छिते कृते ।।२२।।

**वेदाङ्गतीर्थीया–** जत्रौ वक्षसः उपरिकण्ठादधस्तात् स्थितास्थ्नि । अभिप्लुताङ्गः प्रहतावयवः ।।२२।।

**वादिराजतीर्थीया–** तताड जत्राविल्यत्र जत्रौ उरःकण्ठयोर्मध्यस्थितास्थ्नि ।।२२-२३।।

**सत्याभिनवतीर्थीया–** तत्रैव तथा कृते बलभद्रे तु... इति श्लोके इयं गदा इन्द्रादिप्रेषिता न भवति, किन्तु वैकुण्ठे विद्यमाना स्वकीया गदा आगतेति ज्ञापनार्थं स्वामित्युक्तम् । एतेन गदामित्यनेनैव पूर्णत्वात् स्वामित्येतत् व्यर्थमिति दूषणस्यानवकाशः ।।२२।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां षोडशोऽध्यायः ।।

**मधुसूदनीया–** जत्रौ हृदयाग्रप्रदेश इत्यर्थः ।।२२-२८।।

**वरदराजीया–** अथोऽनन्तरं तथोक्तप्रकारेण बलभद्रे कृते सति कृष्णः स्वीयां गदामादाय मागधेशं जरासन्धं प्रति अगात् । जत्रौ हृदयप्रदेशे तताड च । जरासन्धः तया गदया ताडितस्सन् मूर्च्छया मोहावस्थाभिप्लुताङ्गः व्याप्तसर्वाङ्गो भूत्वा भूमिं जगाम । भूम्यां पतित इत्यर्थः ।।२२।।

---

१. अनन्तभट्टीया– ननु मागधस्य सदा अजेयत्वे पूर्वं रामेण [अतत्वं?] कथमित्यत आह- पूर्वमिति ।।

**जनार्दनीया–** बलभद्रे तथा कृते मूर्च्छिते कृते सति जत्रौ वक्षःकण्ठयोः मध्यप्रदेशे तताड । तया गदया अभिताडितः स जरासन्धः अभिप्लुताङ्गः स्रवद्गात्रः सन् मूर्च्छया गां भुवं जगाम । भुवि पपातेति भावः ।।२२।।

**चट्टि–** बलभद्रे तथा कृते मूर्च्छिते सति श्रीकृष्णः स्वां गदां समादाय मगधेशमगात् । जत्रौ हृदयाग्रप्रदेशे तताड । तया गदया अभिताडितः सन् मूर्च्छया मोहावस्थया अभिप्लुताङ्गः व्याप्तसर्वाङ्गः गां भूमिं जगाम भुवि पपातेति भावः ।।२२।।

**अथोत्तस्थौ रौहिणेयः सहैव समुत्तस्थौ मागधोऽप्यग्र्यवीर्यः ।**
**क्रुद्धो गृहीत्वा मौलिमस्याऽशु रामो वधायोद्यच्छन्मुसलं बाहुशाली ।।२३।।**

**व्यासतीर्थीया–** [उद्यच्छन्न भवत्] ।।२३।।

**वेदाङ्गतीर्थीया–** उद्यच्छत् उदयच्छत् उद्यममकरोत् ।।२३।।

**वरदराजीया–** अथानन्तरं रौहिणेयो बलभद्रः उत्तस्थौ । अग्र्यवीर्यो मागधोऽपि रामेण सहैव तस्थौ । युगपदेवोत्थितौ इत्यर्थः । रामो बलभद्रः कृद्धस्सन् अस्य जरासन्धस्य मौलिं चूडास्थानं गृहित्वा वधाय वधार्थं मुसलमायुधं उद्यच्छन् उद्यतं कुर्वन् । यतो बाहुशाली बलाढ्य इत्यर्थः ।।२३।।

**अनन्तभट्टीया–** सहैव मूर्च्छानन्तरमेवेत्यर्थः ।।२३।।

**जनार्दनीया–** रौहिणेयः उत्तस्थौ । मागधोऽपि सहैव रामेण सहैव समुत्तस्थौ । रामः क्रुद्धः सन्, अस्य जरासन्धस्य मौलिं केशग्रन्थिमित्यर्थः । गृहीत्वा, वधाय हन्तुं, मुसलं उद्यच्छत् उद्युक्तमकरोत् । यतो बाहुभ्यां शालते शोभते असौ तथा । बाहुबलाढ्य इत्यर्थः ।।२३।।

**ताम्रपर्णीया–** ।। **क्रुद्धो गृहीत्वेति** ।। न चेदानीं जरासुतस्य पराजितत्वाद्धिरिश्चवरमोघतेति वाच्यम् । युद्धपरिसमाप्तिहेतोरेव पराजयत्वेन जरासुतं पुनरुद्यच्छमानमित्युक्तेरत्र तदभावात् ।।२३।।

**चट्टि–** अथ रौहिणेयः उत्तस्थौ । अग्र्यवीर्यः मागधोऽपि सहैव रामेण सहैव समुत्तस्थौ । रामः क्रुद्धः सन्, आशु अस्य जरासन्धस्य मौलिं केशग्रन्थिमित्यर्थः । गृहीत्वा वधाय हन्तुं मुसलं उद्यच्छत् उद्युक्तमकरोत् । यतो बाहुभ्यां शालते शोभते इति तथा । बाहुबलाढ्य इत्यर्थः ।।२३।।

**अथाब्रवीद् [1]वायुरेनं न राम त्वया हन्तुं शक्यते मागधोऽयम् ।**
**वृथा न ते बाहुबलं प्रयोज्यममोघं ते यद् बलं तद्वदस्त्रम् ।।२४।।**

**व्यासतीर्थीया–** [अस्त्रममोघं तद्वत्ते बलमपि] यत्तद्बाहुबलं न प्रयोज्यम् ।।२४-२७।।

**वेदाङ्गतीर्थीया–** ते अस्त्रं यद्वदमोघं तद्वत् ते बलमपि अमोघं... ते बाहुबलं वृथा न प्रतियोज्यं इति सम्बन्धः ।।२४।।

**वादिराजतीर्थीया–** यद्बलं तद्वदस्त्रमित्यत्र तव यदमोघं बलं तद्वदस्त्रम् । 'असु निरसने' इति धातोः शत्रुसंहारकं मुसलं चामोघम् । तत् न मोघीकुर्विति भावः ।।२४।।

**वरदराजीया–** अथानन्तरं वायुरेनं रामं अब्रवीत् । किमिति । हे राम! अयं मागधः जरासन्धः त्वया हन्तुं न शक्यते । अतो वृथा ते त्वया बाहुबलं न प्रयोज्यं न प्रयोक्तव्यम् । यत् यस्मात् ते बलममोघं तद्वदस्त्रमप्यमोघं अव्यर्थम् ।।२४।।

**अनन्तभट्टीया–** ते अस्त्रं अमोघं तद्वत्तव बलमपि अमोघं यत् अतः बाहुबलं न प्रयोज्यम् ।।२४।।

**जनार्दनीया–** एनं रामं प्रति । न प्रयोज्यं न प्रयोक्तव्यम् । कुतः ? यत् यस्मात् यद्वत् अस्त्रं अमोघं तद्वत् ते बलमप्यमोघम् । तत् तस्मात्ते बाहुबलं वृथा न प्रयोज्यमिति सम्बन्धः ।।२४।।

**ताम्रपर्णीया–** अस्त्रं यद्वदमोघं तद्वत् ते बलमित्यमोघमित्यर्थः । यद्वा ते बलं तद्वदस्त्रं मुसलमप्यमोघमित्यर्थः ।।२४-२८।।

**अतिविशद–** वृथा न ते बाहुबलं प्रयोज्यं अमोघं ते यद्बलं तद्वदस्त्रमित्यत्र हे राम ते बलं यद्वदमोघं तद्वदस्त्रमप्यमोघं यस्मात् तस्मात् वृथा ते बलं न प्रयोज्यमिति । यद्वा हे राम अमोघं जरासन्धं प्रतीति शेषः । ते बलं वृथा न प्रयोज्यम् । यद्वद्बलं वृथा न प्रयोज्यं तद्वदस्त्रं अस्त्रञ्च वृथा न प्रयोज्यमित्यर्थः । जरासन्धस्यामोघत्वं 'पूर्वं गृहीतो विष्णुना रामगेन' इत्यादिना गम्यते । अन्यथा मोघं वृथेत्यनयोर्व्याहतिः जरासन्धव्यतिरिक्तस्थले मोघत्वमङ्गीकृत्य व्याहतिपरिहारो वा द्रष्टव्यः । अत एवोक्तं 'पूर्वं गृहीतो विष्णुना रामगेन' इति ।।२४।।

---

१. 'ततोऽन्तरिक्षे वागासीत् सुस्वरा लोकसाक्षिणी । न त्वया राम वध्योऽयं अलं खेदेन मानद ।। विहितोऽस्य मया मृत्युः तस्मात् साधु व्युपारम । अचिरेणैव कालेन प्राणांस्त्यक्ष्यति मागधः ।।' इति विष्णुपर्वणि.४३.७२-७३ । हरिवंशे मथुरायुद्धप्रसङ्गे तथा गोमन्तयुद्धप्रसङ्गे एतद्प्रसङ्गं वर्णयन्ति । भागवते मथुरायुद्धे एतद्प्रसङ्गं वर्णयन्ति । तथाहि- 'ततोऽन्तरिक्षे घनघोषघर्घरां शुश्राव वाणीं विशदाशरीरिणीम् । न राम वध्यो भवता जरासुतः सुखी निवर्तस्व रणादिति स्फुटम् ।।' इति भागवते.१०.५२.४ 'तवैष वध्यो दुर्बुद्धिः जरासन्धो महारयः । इत्यन्तरिक्षे त्वश्रौषं यदा वायुरवाप्यते ।। गोमन्ते पर्वतश्रेष्ठे येनैष परिमोक्षितः । बलदेवबलं प्राप्य कोऽन्यो जीवेत्तु मागधात् ।। तदस्य मृत्युर्विहितः त्वदृते न महाबल । वायुं चिन्त्य महाबाहो जहीमं मगधाधिपम् ।।' इति सभापर्वणि २५.५-७ ।

**चट्टि–** अथ अनन्तरं वायुरेनं रामं अब्रवीत् । किमिति । हे राम अयं मागधः जरासन्धः त्वया हन्तुं न शक्यते । अतः वृथा ते त्वया बाहुबलं न प्रयोज्यं न प्रयोक्तव्यम् । कुतः? यत् यस्मात् यद्वत् अस्त्रं अमोघं तद्वत् ते बलमप्यमोघम् । तत् तस्मात्ते बाहुबलं वृथा न प्रयोज्यमिति सम्बन्धः ।।२४।।

**अन्यो हन्ता बलवानस्य चेति श्रुत्वा ययौ बलभद्रो विमुच्य ।**
**जरासुतं पुनरुद्यच्छमानं जघान कृष्णो गदया स्वयैव ।।२५।।**

**वादिराजतीर्थीया–** जघान कृष्णो गदया स्वयैवेत्यत्र कृष्णः स्वया गदया जघानैव तताडैव । यथा न मरिष्यति तथा लाघवेन ताडनमेवाकरोदिति भावः ।।२५-२७।।

**वरदराजीया–** अस्य जरासन्धस्य च अन्यो बलवान् त्वत्तोऽपि अधिकबलो हन्तास्तीति वाक्यं श्रुत्वा बलभद्रो विमुच्य, जरासन्धमिति शेषः । ययौ गतवान् । पुनरुद्यच्छमानं युद्धाय प्रपतन्तं जरासुतं स्वयैव गदया एव कृष्णो जघान ।।२५।।

**जनार्दनीया–** अस्य जरासन्धस्य हन्ता अन्यस्त्वदन्यः बलवान् त्वत्तोऽपि बलाधिकश्च अस्तीति श्रुत्वा, बलभद्रः शत्रुं विमुच्य ययौ । तथैव पूर्ववदेव ।।२५।।

**चट्टि–** अस्य जरासन्धस्य हन्ता अन्यः बलवान् त्वत्तोऽपि बलाधिकश्च अस्तीति वायुरब्रवीत् इति सम्बन्धः । बलभद्रः तद्वाक्यं श्रुत्वा विमुच्य शत्रुमिति शेषः । ययौ । पुनर्युद्धाय उद्यच्छमानं जरासुतं श्रीकृष्णः स्वगदयैव जघान ।।२५।।

**तेनाऽहतः स्रस्तसमस्तगात्रः पपात मूर्च्छाभिगतः स राजा ।**
**चिरात् सञ्ज्ञां प्राप्य चान्तर्हितोऽसौ सम्प्राद्रवद् भीतभीतः सलज्जः।।२६।।**

**वरदराजीया–** तेन श्रीकृष्णेन अभिहतः सन् स्रस्तानि शिथिलानि समस्तानि गात्राणि शरीरावयवाः यस्य स तथा । मूर्च्छामभिगतः प्राप्तः सन् सः राजा जरासन्धः पपात । चिरात् कालव्यवधानेन सञ्ज्ञां ज्ञानं प्राप्य अन्तर्हितो लीनो भूत्वा सलज्जः भीतभीतः अत्यन्तं भीतः प्राद्रवत् दुद्रुवे ।।२६।।

**अनन्तभट्टीया–** सोऽन्तर्हितः निगूहितवेषः ।।२६।।

**जनार्दनीया–** तेन कृष्णेन । स्रस्तानि समस्तगात्राणि सर्वावयवाः यस्य स तथा । मूर्च्छाभिगतः प्राप्तः असौ जरासन्धः सञ्ज्ञां प्राप्य, कृष्णेन जीवेति मुक्तः । भीतभीतः अत्यन्तं भीत इत्यर्थः । पराजितोऽभूदिति शेषः । अत एव अन्तर्हितः निलीनः लज्जया सहितः शिष्टैर्हतावशिष्टैः राजभिः संयुतः संवृतः सन्, पुरीं प्रति ययौ । जितः पराजितोऽभूदिति ।।२६-२७।।

**चट्टि–** राजा सः जरासन्धः तेन श्रीकृष्णेन आहतस्सन् स्रस्तानि समस्तानि गात्राणि शरीरावयवाः यस्य स तथा । मूर्च्छामभिगतः प्राप्तः सन् पपात । असौ जरासन्धः चिरात् सञ्ज्ञां प्राप्य, श्रीकृष्णेन जीवेति मुक्तः, भीतभीतः अत्यन्तं भीतः । अत एव अन्तर्हितः निलीनः सलज्जः लज्जया सहितः सन् सम्प्राद्रवत् ।।२६-२७।।

**ययौ शिष्टै राजभिः संयुतश्च पुरं जीवेत्येव कृष्णेन मुक्तः ।**
**पुनर्युद्धं बहुशः केशवेन कृत्वा जितो राजगणैः समेतः ।।२७।।**

**वरदराजीया–** शिष्टैः राजभिश्च हतावशिष्टैः नृपैः संयुतः कृष्णेन जीवेति मुक्तः पुरं स्वपुरं ययौ । पुनरपि बहुशो बहुवारं केशवेन कृष्णेन युद्धं कृत्वा राजगणैः समेतः जरासन्धो जितः पराजितोऽभूत् ।।२७।।

**चट्टि–** शिष्टैर्हतावशिष्टैः राजभिः संयुतः सन् पुरं च ययौ । पुनरपि बहुशो बहुवारं केशवेन श्रीकृष्णेन युद्धं कृत्वा राज्ञां गणैः समेतः जरासन्धः जितः पराजितोऽभूदिति शेषः ।।२७।।

**कृष्णो जित्वा मागधं रौहिणेययुक्तो ययौ दमघोषेण सार्द्धम् ।**
**पितृष्वसायाः पतिना तेन चोक्तः पूर्वं जितेनापि युधि स्म बान्धवात् ।।२८।।**

**व्यासतीर्थीया–** मागधं त्यक्त्वा गतेन दमघोषेण ।।२८-३२।।

**वादिराजतीर्थीया–** पितृष्वसायाः पतिनेत्यत्र याः पितृष्वसारः सन्ति तास्वेका या पितृष्वसा शिशुपालमाता तस्याः पतिनेत्यर्थः । 'सृ गतौ' इति धातोः औणादिके डाप्रत्यये कृते स्वेन सह निस्सृता स्वसा सहोदरी पितृष्वसा तस्याः पतिनेति वा ।।२८।।

**मधुसूदनीया–** ।। **पितृष्वसाया इति** ।। पितृष्वसायाः पतिनेत्यलुक्समासः इति वक्तुं विवक्षितत्वात् घिसञ्ज्ञोपपत्तिः । 'रघुनाथाय नाथाय सीतायाः पतये नमः' इत्यत्र 'वासुदेवाय शान्ताय यदूनां पतये नमः' इत्यादौ च तथा दर्शनात् । एवमन्यत्राप्यूह्यम् ।

'द्रवत्सु रथमुख्येषु चेदिराजो महाद्युतिः । स्मृत्वा यादवसम्बन्धं कृष्णमेवान्ववर्तत ।।
वृतः करूशसैन्येन चेदिसैन्येन चानघ । सम्बन्धकामो गोविन्दमिदमाह स चेदिराट् ।।
अहं पितृष्वसुर्भर्ता तव यादवनन्दन । सबलस्त्वामुपावृत्तस्त्वं हि मे दयितः प्रभो ।।
करवीरपुरं कृष्ण गच्छामस्सबलानुगाः । सृगालं वासुदेवं वै द्रक्ष्यामस्तत्र पार्थिवम् ।।
इमौ रथवरोदग्रौ युवयोः कारितौ मया । योजितौ शीघ्रतुरगैः स्वर्णचक्राक्षकूवरौ ।।
शीघ्रमारुह भद्रं ते बलदेवसहयवान् ।।' इति हरिवंशे [२.७८-८०.८५-८७] ।।२९-३२।।

**अनन्तभट्टीया–** दमघोषः शिशुपालपिता । बान्धवान् बन्धुत्वतः । तेन दमघोषेण ।।२८।।

**वरदराजीया–** कृष्णो मागधं जरासन्धं जित्वा रौहिणेयेन रामेण युक्तः दमघोषेण राज्ञा सार्धं सह ययौ । ननु दमघोषः कः? किमर्थं तेन सह ययौ? कुत्र च ययौ? इत्यपेक्षायामाह– **पितृष्वसाया इत्यादिना** ।। पितृष्वसायाः वसुदेवभगिन्याः भर्ता युधि युद्धे जितेन पराजितेनापि बान्धवात् सौहार्दात् तेन दमघोषेण उक्तः कृष्णस्तेन सार्धं ययावित्यर्थः ।।२८।।

**जनार्दनीया–** कृष्णो जित्वा, रौहिणेययुक्तः सन् दमघोषेण दमघोषनृपेण सार्धं साकं ययौ । ननु दमघोषः कः? तेन सार्धं कुत्र ययौ? इत्यत आह– **पितृष्वसाया इति** ।। पितुः कृष्णस्य पितुः, स्वसायाः स्वसुः, पतिना भर्त्रा । 'षष्ठीयुक्तः च्छन्दसि वा' [सि.कौ.३३८९] इति घिसञ्ज्ञा । भर्ता पूर्वं आदौ युधि युद्धे जितेन जरासन्धेन सह कृष्णेन पराजितेनापि तेन दमघोषेण महालक्ष्म्याः क्षेत्रसन्दर्शनाय, लक्ष्म्या अधिष्ठितस्थानं द्रष्टुमित्यर्थः । करवीराख्यं पुरं प्रति याम इति । बान्धवादेव बन्धुस्नेहादेवमुक्तः कृष्णः ययाविति सम्बन्धः ।।२८।।

**अतिविशद–** पितृष्वसायाः पतिना तेन चोक्त इत्यत्र या स्त्रियः तासु या पितृष्वसा तस्याः यः पतिना पतिलक्षणपुरुषः तेन चोक्त इत्यर्थः । एवञ्च न चोद्यावकाशः ।।२८-३३।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ षोडशोऽध्यायः ।।

**चट्टि–** श्रीकृष्णो मागधं जरासन्धं जित्वा, रौहिणेयेन रामेण युक्तः दमघोषेण राज्ञा सार्धं साकं ययौ । ननु दमघोषः कः? तेन सार्धं कुत्र च किमर्थं ययौ? इत्यत आह– **पितृष्वसाया इति** ।। पितुः श्रीकृष्णस्य पितुः स्वसायाः स्वसुः, पतिना भर्त्रा । 'प्रसादयित्वा चामन्त्र्य अभिवाद्य पितृष्वसाम् । गमनाय मतिं चक्रे वासुदेवः सहानुगः ।।' इत्यादिपर्वणि । 'सृ गतौ' इति धातोः औणादिके टापि प्रत्यये कृते स्वेन सह निःसृता स्वसा सहोदरी, पितुः स्वसा पितृष्वसा एवं रूपसिद्धिः । पूर्वं आदौ युधि जितेन जरासन्धेन सह श्रीकृष्णेन पराजितेनापि तेन दमघोषेण महालक्ष्म्याः क्षेत्रसन्दर्शनाय महालक्ष्म्या अधिष्ठितस्थानं द्रष्टुमित्यर्थः । करवीराख्यं पुरं याम इति । बान्धवादेव बन्धुस्नेहादेव उक्तः श्रीकृष्णः ययाविति सम्बन्धः ।।२८।।

**यामः पुरं [१]करवीराख्यमेव महालक्ष्म्याः क्षेत्रसन्दर्शनाय ।**
**श्रुत्वा वाक्यं तस्य युद्धे जितस्य भीत्या[२] युक्तस्याऽऽत्मना तद्युतोऽगात्।।२९।।**

१. 'पद्मावतं जनपदं करवीरं च तत्पुरम् । निर्मितं पद्मवर्णेन प्राजापत्येन कर्मणा ।।' इति विष्णुपर्वणि.३८.१९ ।

२. 'प्रीत्या' इति वेदाङ्गतीर्थ-वादिराजतीर्थ-मधुसूदनभिक्षु-ताम्रपर्णीपाठः । 'भीत्या' इति वरदराजीये । 'भीत्या' इति पाठान्तरमिति जनार्दनीयचट्टीटिप्पण्योः ।

**वेदाङ्गतीर्थीया–** पूर्वं युधि जरासन्धेन सहागत्य युद्धे जितेनापि पराजितेनापि तेन च बान्धवादेव बन्धुस्नेहादेव करवीराख्यं पुरं याम इत्युक्तोऽभूत् । आत्मना मनसा प्रीत्या भक्त्या । न केवलं बन्धुस्नेहवतः किन्तु मानसभक्त्यापि युक्तस्य । मनसेति बाह्यप्रीतिप्रदर्शनमात्रं न भवतीत्युक्तम् ।।२९।।

**वादिराजतीर्थीया–** प्रीत्या युक्तस्यात्मनेत्यत्र आत्मना स्वभावेन प्रीत्या न तु छद्मना प्रीत्येत्यर्थः ।।२९-३२।।

**मधुसूदनीया–** आत्मना मनसा प्रीत्या स्वस्मिन् प्रीत्या युक्तस्य तस्य दमघोषस्य वाक्यं श्रुत्वा।।२९।।

**वरदराजीया–** किमित्युक्तः। महालक्ष्म्याः क्षेत्रस्य सन्दर्शनाय अवलोकनाय करवीराख्यं पुरं याम इति तस्य दमघोषस्य आत्मना स्वेन पराजितस्य, अत एव भीत्या भयेन युक्तस्य वाक्यं श्रुत्वा, तेन दमघोषेण युतो अगात् करवीराख्यमिति शेषः ।।२९।।

**अनन्तभट्टीया–** महालक्ष्म्याः क्षेत्रसन्दर्शनाय करवीराख्यं पुरं याम इत्युक्तः । आत्मना युद्धे जितस्य ।।२९।।

**जनार्दनीया–** ननु वैरिपक्षस्थेन सह कथं ययावित्यत आह– **श्रुत्वेति** ।। युद्धे जितस्य आत्मना अन्तःकरणेन प्रीत्या कृष्णः स्नेहेन युक्तस्य तस्य दमघोषस्य वाक्यं श्रुत्वा, तेन दमघोषेण युक्तः सन्नगात् । करवीरं प्रतीति शेषः । 'भीत्या युक्तस्य' इति पाठे कृष्णेन सह कृतयुद्धरूपापराधभयेन युक्तस्य ।।२९।।

**ताम्रपर्णीया–** ।। **श्रुत्वेति** ।। आत्मना युद्धे जितस्येत्यन्वयः । आत्मना स्वभावेन प्रीत्या न तु छद्मप्रीत्येति वा । आत्मना स्वेन सह प्रीत्या युक्तस्येति वा ।।२९-३१।।

**चट्टि–** ननु वैरिपक्षस्थेन सह कथं ययावित्यत आह– **श्रुत्वेति** ।। आत्मना स्वेन युद्धे जितस्य प्रीत्या श्रीकृष्णस्नेहेन युक्तस्य तस्य दमघोषस्य वाक्यं श्रुत्वा तेन दमघोषेण युक्तः सन्नगात् । करवीरपुरं प्रतीति शेषः । 'भीत्या युक्तस्य' इति पाठे श्रीकृष्णेन सह कृतयुद्धरूपापराधभयेन युक्तस्य

द्रवत्सु रथमुख्येषु चेदिराजो महाद्युतिः । स्मृत्वा यादवसम्बन्धं कृष्णमेवान्ववर्तत ।।
वृतः करूशसैन्येन चेदिसैन्येन चानघ । सम्बन्धकामो गोविन्दमिदमाह स चेदिराट् ।।
अहं पितृष्वसुर्भर्ता तव यादावनन्दन । सबलस्त्वामुपावृत्तस्त्वं हि मे दयितः प्रभो ।।
करवीरपुरं कृष्ण गच्छाम सबलानुगाः । सृगालवासुदेवं वै द्रक्ष्यामस्तत्र पार्थिवम् ।।
इमौ रथवरोदग्रौ युवयोः कारितौ मया । योजितौ [स्वर्ण]शीघ्रतुरगैः स्वर्णचक्राक्षकूबरौ ।।
शीघ्रमारुह भद्रं ते बलदेवसहयवान् ।। इति हरिवंशे ।।२९।।

**गन्धर्वोऽसौ दनुनामा नरोऽभूत् तस्मात् कृष्णे भक्तिमांश्चाऽस राजा ।**
**पुरं प्राप्तांस्तान् स विज्ञाय पापः [1]सृगालाख्यो वासुदेवः क्रुधाऽऽगात्॥३०॥**

**वेदाङ्गतीर्थीया–** पुरं प्राप्ताः ॥३०॥

**वरदराजीया–** पूर्वं दनुः नामा गन्धर्वः असौ अत्र नरोऽभूत् । तस्मात् राजा दमघोषः कृष्णे भक्तिमांश्चास । स पूर्वोक्तः सृगालाख्यो वासुदेवो वसुदेवाज्जातः पापः पापरूपः । पुरं प्राप्तान् तान् कृष्णादीन् विज्ञाय ज्ञात्वा क्रुधा क्रोधेनागात् ॥३०॥

**अनन्तभट्टीया–** असौ राजा दमघोषः ॥३०॥

**जनार्दनीया–** दमघोषः पूर्वं कः? इत्यत आह– **गन्धर्व इति** ॥ यस्मादसौ दमघोषः पूर्वं दनुनामा गन्धर्वः । त्रिजटापुत्रदनुराक्षसव्यावृत्त्यर्थं गन्धर्वः इत्युक्तम् । तस्मात् राजा कृष्णे भक्तिमानास । पापः वासुदेवः वसुदेवपुत्रः स प्रसिद्धः सृगालाख्यः क्रुधा अगात् ॥३०॥

**भावचन्द्रिका–** न प्राप्ताः किन्तु पुरं हन्तुं प्राप्ता इति मिथ्याज्ञानजक्रोधात् ॥३०॥

**चट्टि–** दमघोषः पूर्वं कः? इत्यत आह– **गन्धर्व इति** ॥ यस्मादसौ दमघोषः पूर्वं दनुनामा गन्धर्वः अत्र नरो अभूत् । तस्मात् राजा दमघोषः श्रीकृष्णे भक्तिमान् चास ॥३०॥

**[2]सूर्यप्रदत्तं रथमारुह्य दिव्यं वरादवध्यस्तिग्मरुचेः स कृष्णम् ।**
**योद्धुं ययावमुचच्चास्त्रसङ्घाञ्छिरस्तस्याथाऽशु जहार कृष्णः ॥३१॥**

**वरदराजीया–** कथम्? सूर्येण दत्तं अत एव दिव्यं रथं आरुह्य स्वयं तिग्मरुचेः सूर्यस्य वरादवध्यः सन् कृष्णं प्रति योद्धुं ययौ । अस्त्रसङ्घांश्च अमुचत् । अथ अनन्तरं कृष्णः तस्य सृगालस्य शिरः अरिणा चक्रेण जहार चिच्छेद ॥३१॥

**अनन्तभट्टीया–** तिग्मरुचेः सूर्यस्य । तस्य ...॥३१॥

**जनार्दनीया–** उक्तमेवार्थं विवृणोति– **सूर्येति** ॥ तिग्मरुचेः सूर्यस्य वरादवध्यः सृगालः । कृष्णं प्रति योद्धुं ययौ । अस्त्रसङ्घानमुचच्च । अथ जहार चिच्छेद ॥३१॥

---

१. 'शृगाल इति विख्यातो नित्यं परमकोपनः । नृपेण तेन गोविन्द तव वंशभवा नृपाः ॥ दायादा निहताः सर्वे वीरद्वेषानुशायिना । अहङ्कारपरो नित्यं अजितात्माऽतिमत्सरी ॥ राज्यैश्वर्यमदाविष्टः पुत्रेष्वपि च दारुणः ॥' इति विष्णुपर्वणि. ६९.५१-५३ ।

२. 'सावित्रे नियमे पूर्णे यं ददौ सविता स्वयम् । आदित्यरश्मिभिरिव रश्मिभिर्यो निगृह्यते ॥ तेन स्यन्दनमुख्येन द्विषत्स्यन्दनघातिना ॥' इति हरिवंशे.२.४४.६-७ ।

**चट्टि—** पापः पापरूपः वासुदेवः वसुदेवपुत्रः स प्रसिद्धः सृगालाख्यः पुरं प्राप्तान् तान् कृष्णादीन् विज्ञाय ज्ञात्वा क्रुधा अगात् । कथं । तिग्मरुचेः सूर्यस्य वरादवध्यः सः सृगालः सूर्येण प्रदत्तं अत एव दिव्यं रथमारुह्य श्रीकृष्णं प्रति योद्धुं ययौ । अस्त्रसङ्घान् चामुचच्च । अथ श्रीकृष्णः तस्य सृगालस्य शिरः आशु जहार ।।३१।।

**द्विधा कृत्वा देहमस्यारिणा च पुत्रं भक्तं तस्य राज्येऽभिषिच्य ।**
**स शक्रदेवं [1]माणिभद्रं पुरा यो ययौ पुरीं स्वां सहितोऽग्रजेन ।।३२।।**

**मधुसूदनीया—** ।। **माणिभद्रः पुरेति** ।। यः पुरा पूर्वजन्मनि माणिभद्रः माणिभद्राख्ययक्षः 'तत्र माणिधरो नाम यक्षः परमदुर्जयः । धूम्राक्षेण समागम्य माणिभद्रो महारणे ।।' इति रामायणे [उत्तर.१५.१०] ।।३२।।

**वरदराजीया—** कथम्? अस्य सृगालस्य देहं द्विधा कृत्वा जहारेति सम्बन्धः । तस्य पुत्रं भक्तं स्वभक्तं राज्ये विषये अभिषिच्य । कथं भूतं पुत्रम् । यः पुरा पूर्वजन्मनि माणिभद्रो रुद्रगणस्थोऽभूत् । अत्र शक्रदेवं तन्नामकं पुत्रमिति सम्बन्धः । सः कृष्णो अग्रजेन रामेण सहितः स्वां मधुरां पुरीं ययौ ।।३२।।

**जनार्दनीया—** स कृष्णः अस्य सृगालस्य देहं अरिणा सुदर्शनेन द्विधा द्विप्रकारं कृत्वा, पुरा मूलरूपे यो मणिभद्राख्यो देवोऽभूदिति शेषः । तस्य सृगालस्य पुत्रं भक्तं स्वभक्तं शक्रदेवं शक्रदेवनामकं राज्ये अभिषिच्य । मणिभद्रः शक्रदेवनाम्ना सृगालपुत्रोऽभूदिति भावः । स्वपुरीं मथुरां ययौ ।।३२।।

**ताम्रपर्णीया—** अग्रजेनेत्युपलक्षणं दमघोषेणेत्यपि ग्राह्यम् । गते च चेदिपे इति मधुराप्राप्त्यनन्तरं दमघोषस्य स्वपुरगमनस्य वक्ष्यमाणत्वात् ।।३२।।

**भावचन्द्रिका—** 'यक्षराट् कुबेरसखा मणिभद्रो नाम' इत्यरण्यपर्वणि ।।३२।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावचन्द्रिकायां षोडशोऽध्यायः ।।

---

१. 'यक्षो रजतनाभश्च गुह्यकाणां प्रपितामहः । अनुह्लादस्य दैत्यस्य भद्रां मणिवरां सुताम् ।। उपयेमेऽनवद्याङ्गीं तस्यां मणिवरो वशी । जज्ञे सा मणिभद्रं च शक्रतुल्यपराक्रमम् ।।' कश्यपस्य खशानामकपत्न्यां यक्षनामकः यक्षाणां मूलपुरुषः जातः । तस्य क्रतुस्थलानामकाप्सरसायां जातः रजतनाभ इति कथा ब्रह्माण्डपुराणे प्रक्षिप्तश्लोकस्याध्याये कथ्यते । इति ब्रह्माण्डपुराणे.उपो.पा.७.११९-१२०।

**चट्टि–** श्रीकृष्णः अस्य सृगालस्य देहं अरिणा सुदर्शनेन द्विधा द्विप्रकारं कृत्वा, पुरा मूलरूपे यो माणिभद्रः मणिभद्राख्यो यक्षः । 'तत्र माणिधरो नाम यक्षः परमदुर्जयः । धूम्राक्षेण समागम्य मणिभद्रो महारणे ।।' इति श्रीरामायणे । सः सृगालपुत्रोऽभूदिति शेषः । तस्य सृगालस्य पुत्रं भक्तं स्वभक्तं शक्रदेवं शक्रदेवनामकं राज्ये अभिषिच्य अग्रजेन बलरामेण सहितस्सन् स्वां पुरीं मथुरां ययौ ।।३२।।

**नीतिं बलिष्ठस्य विहाय सेनां दूराद् युद्धं दर्शयित्वैव गुप्त्यै ।**
**स्वसेनायाः सर्वपूर्णात्मशक्तिः पुनः पुरीं प्राप्य स पूजितोऽवसत् ।।३३।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारातततात्पर्यनिर्णये
सृगालवधो नाम षोडशोऽध्यायः ।।

**व्यासतीर्थीया–** 'सन्दर्शयन् बलिनाम्' इत्युक्तनीतिस्वरूपं दर्शयन् अध्यायार्थमुपसंहरति– **नीतिमिति** ।। बलिष्ठस्य सेनां विहाय दूराद् युद्धं स्वसेनागुप्त्यै नीतिं दर्शयित्वा ।।३३।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां षोडशोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** सन्दर्शयन् बलिनां अन्यत्रोक्तनीतिशेषं पूरयन्नध्यायार्थं उपसंहरति– **नीतिमिति** ।। बलिष्ठस्य स्वयमेव बलिष्ठस्य स्वसेनायाः गुप्त्यै सेनां विहाय दूरात् युद्धं दूरं गत्वा युद्धनीतिं दर्शयित्वा ।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
तात्पर्यदीपिकायां षोडशोऽध्यायः ।।

**वादिराजतीर्थीया–** नीतिं बलिष्ठस्य विहाय सेनामित्यत्र स्वसेनायाः गुप्त्यै बलिष्ठस्य सेनां विहाय दूराद्दूरं प्राप्य युद्धं कार्यमिति नीतिं दर्शयित्वेति सम्बन्धः । बलिष्ठस्य सेनां विहाय स्वेन दूरं गते सति सोऽपि सेनया सह स्वात्मानमन्वेव याति तदा निजसेनायाः रक्षा भवतीति भावः ।।३३।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां षोडशोऽध्यायः ।।

**मधुसूदनीया–** ।। **पुरीं प्राप्येति** ।। दमघोषेण साकमिति शेषः । 'तौ तु स्वल्पेन कालेन दमघोषेण सङ्गतौ । नगरीं मथुरां प्राप्तौ वसुदेवसुतावुभौ ।।' इति हरिवंशे [विष्णुपर्वणि.४५.१-२] ।।३३।।

।। इति श्रीमद्विद्याधीशतीर्थश्रीपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारतातात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे षोडशोऽध्यायः ।।

**वरदराजीया–** सेनां विहाय एकाकित्वेन गतवतः कृष्णस्याभिप्रायमाह– **नीतिमिति** ।। स्वसेनायाः गुप्त्यै रक्षायै सेनां दूरात् विहाय युद्धं कर्तव्यमिति वलिष्ठस्य नीतिं दर्शयित्वैव सर्वा सर्वविषया पूर्णा आत्मभूता शक्तिर्यस्य स तथा कृष्णः पुरीं मधुरां प्राप्य सम्पूजितो यादवैरिति शेषः । अत्र वसन् मधुरामिति शेषः । इत्यशेषमतिमङ्गलम् ।।३३।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुवोधिन्यां षोडशोऽध्यायः ।।

**अनन्तभट्टीया–** वलिष्ठस्य सेनां स्वसेनां विहाय दूरात् दूरे । परैः सह युद्धम् । स्वसेनायाः गुप्त्यै कर्तव्यमिति नीतिं सन्दर्शयित्वा ।।३३।।[१]

।। इति श्रीमुष्णं अनन्ताचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां तन्त्रमालायां [सत्तत्त्वमालायां] षोडशोऽध्यायः ।।

**जनार्दनीया–** 'सन्दर्शयन् वलिनाम्' इत्यादिनोपक्रान्तमर्थं विशिष्यन्नुपसंहरति– **नीतिमिति** ।। सर्वविषये पूर्णा आत्मशक्तिः स्वरूपशक्तिर्यस्य स तथा कृष्णः । स्वसेनायाः गुप्त्यै रक्षणार्थं सेनां स्वसेनां विहाय, दूराद्युद्धं कर्तव्यमिति वलिष्ठस्य नीतिं दर्शयित्वैव । पुरीं सम्प्राप्य सम्पूजितोऽवसत्।।३३।।

यं गङ्गाजमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमःस्वाध्यायसम्पद्युतात् ।
पूर्तिं तस्य कृतौ सतां सुखकरोऽध्यायस्तथा षोडशः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां षोडशोऽध्यायः ।।

**ताम्रपर्णीया–** 'सन्दर्शयन् वलिनाम्' इत्युक्तं स्पष्टयन्नुपसंहरति- **नीतिमिति** ।।३३।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां [प्रमाणमालायां] षोडशोऽध्यायः ।।

**चट्टि–** 'सन्दर्शयन् बलिनाम्' इत्युक्तनीतिस्वरूपं दर्शयन्नध्यायार्थं उपसंहरति– **नीतिमिति** ।। सर्वविषये पूर्णात्मशक्तिः स्वरूपशक्तिर्यस्य स तथा श्रीकृष्णः । स्वसेनायाः गुप्त्यै रक्षणार्थं सेनां स्वसेनां विहाय, दूराद्युद्धं कर्तव्यमिति वलिष्ठस्य नीतिं दर्शयित्वैव पुरीं मधुरां प्राप्य दमघोषेण साकमिति शेषः । सम्पूजितस्सन् अवसत् । 'तौ तु कञ्चनकालेन दमघोषेण संयुतौ । नगरीं मधुरां प्राप्तौ वसुदेवसुतावुभौ ।।' इति हरिवंशे । इत्यशेषमतिमङ्गलम् ।।३३।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां षोडशोऽध्यायः ।।

---

१. अनन्तभट्टीया- संदर्शयन् बलिनामित्युक्तं स्पष्टयन्नुपसंहरति- नीतिं वलिष्ठस्येति ।। इति हो.पुस्तके अधिकः पाठः ।

# अथ सप्तदशोऽध्यायः

**गतेऽथ चेदिपे स्वकं पुरं जनार्दनोऽश्रुणोत् ।**
**[1]रमैव [2]रुक्मिणीति योद्यतां स्वयंवराय ताम् ॥१॥**

**व्यासतीर्थीया–** सृगालं हत्वा मधुरां प्राप्तस्य भगवतः प्रवृत्तामुत्तरकथामाह– **गतेऽथेति** ॥ चेदिपो दमघोषो ॥१॥

**वेदाङ्गतीर्थीया–** चेदिपे दमघोषे गते कृष्णेन पृष्टेति शेषः । हरेः प्रदातुमुद्यतां पित्रेति शेषः । स्वयंवरं विनैवेति भावः ॥१॥

**मधुसूदनीया–** ॥ **गतेऽथेति** ॥ चेदिपे दमघोषे मथुरायास्सकाशात् स्वपुरं प्रति तदा आजगाम इति ॥१-३॥

**वरदराजीया–** ॥ **गत इति** ॥ चेदिपे चेदिदेशाधिपे दमघोषे स्वकं पुरं गते सति या रमैव साक्षात् लक्ष्मीः रुक्मिणीति प्रादुर्भूता तां स्वयंवरोद्यताम् । तस्याः स्वयंवरोद्योगमिति यावत् ॥१॥

**अनन्तभट्टीया–** चेदिपे दमघोषे ॥१॥

**जनार्दनीया–** मधुरागमनकालप्रवृत्तां कथामाह– **गत इत्यादिना** ॥ चेदिपे चेदिविषयाधिपे दमघोषे स्वकं पुरं प्रति गते सति जनार्दनः कृष्णः रुक्मिणीति रुक्मिणीनाम्नी या रमैव स्वयंवराय उद्यतां उद्युक्तां तां रुक्मिणीं अशृणोत् ॥१॥

---

१. 'रुक्मिणी नाम ते कन्या न सा प्राकृतमानुषी । श्रीरेव ब्रह्मवाक्येन जाता केनापि हेतुना ॥' इति विष्णुपर्वणि ५१.३१

२. 'द्वितीया तनया जज्ञे रुक्मिणी नाम नामतः । तदाऽशरीरिणी वाचा राजानं तमुवाच ह ॥ चतुर्भुजाय दातव्या कन्येयं भुवि भीष्मक ।...यतः सुवर्णतिलका जन्मना सह भारत ॥ ततः सा रुक्मिणी नाम ब्राह्मणैः कीर्तिता तदा ॥' इति स्कान्दे आवन्त्यखण्ड.रेवाखण्ड.१४२.९-१२ ।

**भारतश्री–** चेदिपे दमघोषे पूर्वं कृष्णरामाभ्यां सह गते । 'तौ तु स्वल्पेन कालेन दमघोषेण सङ्गतौ । नगरीं मथुरां प्राप्तौ वसुदेवसुतावुभौ ।।' इति हरिवंशोक्तेः ।।१।।

**चट्टि–**मधुरां प्राप्तस्य भगवतः प्रवृत्तामुत्तरकथामाह– गतेति ।। अथ चेदिपे चेदिविषयाधिपे दमघोषे मधुरायाः सकाशात् स्वकं पुरं प्रति गते सति जनार्दनः श्रीकृष्णः या रमैव रुक्मिणीति प्रादुर्भूता तां स्वयंवराय उद्यतां उद्युक्तां अशृणोत् ।।१।।

**स रुक्मिनामकोऽग्रजः श्रियो[1] द्विषन् रमापतिम् ।**
**हरेः प्रदातुमुद्यतां[2] न्यवारयद्धरिप्रियाम् ।।२।।**

**व्यासतीर्थीया–** रुक्मिनामकः हरेः प्रदातुं उद्यतां न्यवारयदिति चाशृणोत् ।।१-५।।

**वेदाङ्गतीर्थीया–** न्यवारयत् निवारणं चाशृणोदिति योज्यम् ।।२-४।।

**वादिराजतीर्थीया–** स रुक्मिनामकोऽग्रज इत्यत्र श्रियः श्रीरूपरुक्मिण्या अग्रजः ।।२-५।।

**वरदराजीया–** श्रियः रुक्मिण्याः अग्रजो रुक्मिनामको रमापतिं कृष्णं द्विषन् हरिप्रियां रुक्मिणीं हरेः कृष्णस्य कृष्णायेत्यर्थः प्रदातुमुद्यतां, भीष्मकेण इति शेषः । न्यवारयत् कृष्णाय न दातव्यमिति निवारितवान् । एतदपि अशृणोदिति भावः ।।२।।

**भावविवृति–** ।।१।। स रुक्मिनामकोऽग्रजः...हरिप्रियाम् इत्यत्र श्रियो रुक्मिण्या अग्रजः श्रेष्ठः पूर्वं कृष्णो पराजितो अत एव रमापतिं कृष्णं द्विषन् हरेः कृष्णस्य प्रदातुं उद्यतां, भीष्मकादिभिरिति शेषः । हरिप्रियां रुक्मिणीं न्यवारयत् कृष्णाय न दातव्यमिति ।।२-३।।

**अनन्तभट्टीया–** श्रिया सम्पदा रमापतिं कृष्णं द्विषन् न्यवारयत् । एतदशृणोदित्यन्वयः ।।२।।[3]

**जनार्दनीया–** श्रियः रुक्मिण्याः अग्रजः रुक्मिनामकः स रुक्मी रमायाः सर्वसम्पदाभिमानिन्याः लक्ष्म्याः, पतिं कृष्णं श्रियः सम्पदः हीन इति द्विषन् कुत्सयन् हरिप्रियां कृष्णदयितां रुक्मिणीं हरेः प्रदातुं उद्यतान् भीष्मकादिसद्बन्धून् न्यवारयत् । इदमप्यशृणोदिति योज्यम् । 'श्रियः' इत्युभयत्र सम्बध्यते । तथोक्तं भागवते– [१०.५७.२३] 'बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप । रुक्मी निवार्य कृष्णद्विट् चैद्याय समकल्पयत् ।।' इति । बन्धूनां बन्धूनित्यर्थः ।।२।।

---

१. 'श्रिया द्विषन्' इति अनन्तभट्टपाठः । २. 'उद्यतान्' इति चट्टिटिप्पण्यां पाठान्तरम् ।
३. अनन्तभट्टीया– श्रियोऽग्रज इत्यन्वयः । 'श्रिया' इति पाठे श्रिया संपदः द्विषतीत्यर्थ इत्याहुः । इति हो.पुस्तके अधिकः पाठः ।

**ताम्रपर्णीया–** ।।१।। श्रियो रुक्मिण्या अग्रज इति सम्बन्धः । 'श्रिया उद्विषन्' इति वा 'श्रिय द्विषन्' इति क्वचित् पाठः ।।२-५।।

**भारतश्री–** सः रुक्मिनामकः पूर्वं इल्वलावतारत्वेन प्रोक्तः प्रसिद्धः । श्रियः रुक्मिण्याः ।।२-६।।

**चट्टि–** श्रियः श्रीरूपरुक्मिण्याः अग्रजः यः रुक्मिनामकः स रुक्मी रमायाः सर्वसम्पदाभिमानिन्याः लक्ष्म्याः, पतिं श्रीकृष्णं श्रियः सम्पदः हीन इति द्विषन् कुत्सयन् हरिप्रियां श्रीकृष्णदयितां रुक्मिणीं हरेः प्रदातुं उद्यतां भीष्मकेणेति शेषः न्यवारयत् । श्रीकृष्णाय न दातव्येति निवारितवान् । इदमप्यभृणोदिति योज्यम् । श्रियः इत्युभयत्र सम्बध्यते । 'उद्यतान्' इति पाठे रुक्मिणीं हरेः प्रदातुमुद्यतान् भीष्मकादिसद्बन्धून् न्यवायत् इति । यथोक्तं भागवते– [१०.५७.२३] बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप । रुक्मी निवार्य कृष्णद्विट् चैद्याय समकल्पयत् ।। इति । बन्धूनां बन्धूनित्यर्थः ।।२।।

**प्रघोषिते स्वयंवरेऽथ तेन मागधादयः ।**
**समीयुरुग्रपौरुषाः ससाल्वपौण्ड्रचेदिपाः ।।३।।**

**वरदराजीया–** तेन भीष्मकेण[१] रुक्मिण्याः । प्रघोषिते भेरीताडनादिना । साल्वादिभिः सह वर्तमानाः मागधादयः ।।३।।

**जनार्दनीया–** अथ निवारणानन्तरम् । तेन रुक्मिणा । प्रघोषिते भेरीताडनादिना । समीयुः समागताः ।।३।।

**चट्टि–** अथ निवारणानन्तरं तेन रुक्मिणा स्वयंवरे प्रघोषिते सति भेरीताडनादिना इति शेषः । साल्वपौण्ड्रचेदिपैः सहिताः उग्रपौरुषाः मागधादयः समीयुः समागताः ।।३।।

**तदा जगाम केशवो जवेन कुण्डिनं पुरम् ।**
**स्मृतोऽथ तेन पक्षिराट् समाजगाम केशवम् ।।४।।**

**मधुसूदनीया–** ।। **तदा जगामेति** ।। केशवो रथमारुह्य जवेन कुण्डिनपुरं प्रति जगाम । 'अस्मिन्दिने मुहूर्ते तु यास्यामः कुण्डिनं पुरम् । रथमानय मे शीघ्रं सारथे दारुकप्रभो ।। एवमुक्त्वा तु कृष्णोऽपि जगामाशु रथेन वै । भीष्मकस्य गृहं प्राप्तो लोहितायति भास्करे ।।' इति हरिवंशे । अथ कुण्डिनप्रवेशानन्तरं तेन कृष्णेन स्मृतः पक्षिराट् गरुडः केशवं समाजगाम । 'प्राप्ते राजसमाजे तु शिबिराकीर्णभूतले । रङ्गं सुविपुलं दृष्ट्वा राजसीं तनुमाविशत् ।।

१. 'रुक्मिणा' इति क्वचित् पाठः ।

वित्रासनार्थं भूतानां प्रकाशार्थं पुरातनम् । मनसा चिन्तयामास वैनतेयं महाबलम् ।।
ततश्चिन्तितमात्रस्तु विदित्वा विनतात्मजः । सुखलक्ष्यं वपुः कृत्वा निलिल्ये केशवान्तिके ।।'
इति हरिवंशे [२.४७.२५-२८] ।।४।।

**वरदराजीया–** जवेन वेगेन । तेन कृष्णेन पक्षिराट् गरुडः ।।४।।

**भावविवृति–** तदाऽजगाम केशवो...केशवमित्यत्र केशवस्तदा स्वयंवरघोषणकाले जवेन वेगवता रथेन कुण्डिनपुरं प्रति जगाम । अथ तत्प्राप्त्यनन्तरं तेन अत्र पक्षिराडागच्छतु इति स्मृतः पक्षिराडागत [स्म नः] । पक्षिराट् केशवमाजगाम । तदुक्तम्– 'उग्रसेनं तु गोविन्दः प्राह निश्चितदर्शनः । तिष्ठ त्वं नृपशार्दूल भ्रात्रा मे सहितोऽनघ ।। एवमुक्त्वा तु कृष्णो वै जगामाशु रथेन वै । भीष्मकस्य गृहं प्राप्तो लोहितायति भास्करे ।।' इति ।[हरिवंशे.२.४७.१६,२५] 'विवासनार्थं भूपानां प्रकाशार्थे परानेनम् । मनसा चिन्तयामास वैनतेयं माहामुने ।।' इति [हरिवंशे.२.४७.२७] ।।४-५३।।

**जनार्दनीया–** तदा राज्ञां आगमनकाले तेन कृष्णेन स्मृतः पक्षिराट् गरुडः केशवं प्रत्याजगाम । अथ गरुडागमनानन्तरं केशवो गरुडमारुह्येति वाक्यशेषः । कुण्डिनपुरं प्रत्याजगाम ।।४।।

**चट्टि–** तदा राज्ञां आगमनकाले । केशवः श्रीकृष्णः रथमारुह्य जवेन कुण्डिनपुरं प्रति जगाम । एवमुक्त्वा तु कृष्णो वै जगामाशु रथेन वै । भीष्मकस्य गृहं प्राप्तो रोहितायति भास्करे ।। इति हरिवंशे । अथ कुण्डिनपुरप्रवेशानन्तरं तेन श्रीकृष्णेन स्मृतः पक्षिराट् गरुडश्च केशवं प्रत्याजगाम । प्राप्ते राजसमाजे तु शिबिराकीर्णभूतले । रङ्गं सुविपुलं दृष्ट्वा राजर्सी तनुमाविशत् ।। वित्रासनार्थं भूतानां प्रकाशार्थं पुरातनम् । मनसा चिन्तयामास वैनतेयं महाबलम् ।। ततश्चिन्तितमात्रस्तु विदित्वा विनतात्मजः । मुखलक्ष्म्यं [सुखलक्ष्यं] वपुः कृत्वा विविशे केशवान्तिकम् ।। इति हरिवंशे ।।४।।

**पतत्रवायुनाऽस्य ते नरेश्वराः प्रपातिताः ।**
**[1]यदेदृशं पतत्रिणो बलं हरेः किमुच्यते ।।५।।**

**वेदाङ्गतीर्थीया–** पतत्रवायुनेत्ययं श्लोकः ग्रन्थकारवचनम् ।।५।।

**सत्याभिनवतीर्थीया–** यदेदृशं पतत्रिणो बलं...इत्यस्ति । तस्यार्थः । यदा पतत्रिणः बलं ईदृशं पूर्वोक्तरीत्या उत्तममिति लोकैरुच्यते तदा हरेर्बलमुत्तममिति लोकैरुच्यत इति किमु वक्तव्यम् इति । एतेन कैमुत्यन्यायप्रदर्शनार्थं किं वक्तव्यमिति वक्तव्यम् । तदभावात् न्यूनतेति शङ्कानवकाशः । वक्तव्यमित्यध्याहार इत्यभ्युपगमात् ।।५।।

---

१.'यदीदृशं' इति जनार्दनचट्टीपाठः इति भाति ।

**मधुसूदनीया–** ।। **पतत्रवायुनेति** ।। 'तस्य पक्षनिपातेन पवनात् भ्रान्तकारिणा । कम्पिता मनुजास्सर्वे न्युब्जाश्च पतिता भुवि ।। गरुडाभिहतास्सर्वे प्रचेष्टन्तो यथोरगाः ।।' इति च [हरि.२.४७.२९] ।।५-६९।।

**वरदराजीया–** अस्य गरुडस्य पतत्रवायुना पक्षयोर्वर्त्तेन ते मागधादयः प्रपातिताः पतनं प्रापिताः । पतत्रिणो गरुडस्य । हरेः कृष्णस्य बलं किमुच्यते । किं वक्तव्यमित्यर्थः ।।५।।

**जनार्दनीया–** अस्य गरुडस्य पतत्रयोः पक्षयोः, वायुना ते मागधादयः प्रपातिताः पतनं प्रापिताः । ते नृपाः इति अब्रुवन् । किमिति ? यत् यस्मात् पतत्रिणः ईदृशं बलं तत् तस्मात् हरेर्बलं किमुच्यते ? हरिबलं उत्तममिति किं वक्तव्यमित्यर्थः ।।५।।

**चट्टि–** अस्य गरुडस्य पतत्रयोः पक्षयोः, वायुना ते मागधादयः नरेश्वराः प्रपातिताः पतनं प्रापिताः । ते नृपाः इति अब्रुवन् । किमिति ? यत् यस्मात् पतत्रिणः ईदृशं बलं तत् तस्मात् हरेर्बलं किमुच्यते ? उत्तममिति किं वक्तव्यमित्यर्थः । 'तस्य पक्षप्रपातेन पवनोद्भ्रान्तकारिणा । कम्पिता मनुजा सर्वे [न्युब्जाश्च] कुब्जाश्च पतिता भुवि ।। गरुडाभिहताः सर्वे प्रवेष्टन्तो यथोरगाः ।।' इति ।।५।।

**किमत्र नः कृतं भवेत् सुखाय हीति तेऽब्रुवन् ।**
**अथाब्रवीज्जरासुतो जयी पयोब्धिमन्दिरः ।**
**किलैष [१]पक्षिवाहनो यतश्च नान्यथा भवेत् ।।६।।**

**व्यासतीर्थीया–** तत्र किं [कृतं] वृतं नाशुभाय [नः सुखाय] भवेत् तच्चिन्त्यतामितीति तेऽब्रुवन् । पयोब्धिमन्दिरः एषः कृष्णः किल निश्चितः । यतो जयी ।।६-७।।

**वेदाङ्गतीर्थीया–** किमुतेत्यनुवादः । तेन पातिता नरेश्वराः । जयी एष कृष्णः पयोब्धिमन्दिरः श्रीनारायणः किल । पक्षिवाहनो यतः अतश्च पक्षिवाहनत्वलिङ्गाच्च ।।६।।

**वादिराजतीर्थीया–** यतश्च नान्यथा भवेदित्यत्र यतोऽयं पक्षिवाहनः पयोब्धिमन्दिरः किल । अन्यथा पयोब्धिमन्दिरत्वाभावे न भवेत् पक्षिवाहनत्वं न भवेत् ।।६-१९।।

**वरदराजीया–** नोऽस्माकं सुखाय किं कृतं भवेत् ['किं कर्म सुखाय भवेत्' इति क्वचित्] । यः पयोब्धिमन्दिरः नारायणः स एष कृष्णः किल । कुतः? एषः पक्षिवाहनः जयी च । अन्यथा

---

१. 'त्रिविक्रमं त्रिलोकेशं त्रिदशेन्द्रारिनाशनम् । इति मे निश्चिता बुद्धिः जातोऽयं मथुरामधि ।। कुले महति वै राज्ञां विपुले चक्रवर्तिनाम् । कथमन्यस्य मर्त्यस्य गरुडो वाहनं भवेत् ।। विशेषेण तु कन्यार्थे विक्रमस्थे जनार्दने । कः स्थास्यति पुमानद्य गरुडस्याग्रतो बली ।।' इति विष्णुपर्वणि.४८.३४-३६ ।

पयोब्धिमन्दिरस्य विष्णुत्वाभावे पक्षिवाहनत्वं जयित्वञ्च न भवेत् । तदुभयस्य विष्णुचिह्नत्वादिति भावः ।।६।।

**अनन्तभट्टीया–** नः सुखाय भवेत् । यः पयोब्धिमन्दिरः स एष कृष्णः किल । तत्र लिङ्गमाह– **यत इति** ।। यतः अयं कृष्णः पक्षिवाहनः अतो अन्यथा न भवेत् । यः पयोब्धिमन्दिरः नारायणः स एष कृष्णः किल । कुतः ? एषः पक्षिवाहनो जयी च । अन्यथा पयोब्धिमन्दिरस्य विष्णुत्वाभावे पक्षिवाहनत्वं जयित्वञ्च न भवेत् । तदुभयस्य विष्णुचिह्नत्वादिति भावः ।।६।।

**जनार्दनीया–** अत्र स्वयंवरे नोऽस्माकं किं कृतं कर्म सुखाय भवेत् ? इत्यब्रुवन्नित्यर्थः । जयी जयवान् एषः कृष्णः पयोब्धिमन्दिरो हरिः किल । यतः पक्षिवाहनः अत एवेत्यर्थः । अन्यथा हर्यभावे पक्षिवाहनो न भवेत् ।।६।।

**ताम्रपर्णीया–** एष कृष्णो यतः पक्षिवाहनः अतः पयोब्धिमन्दिरः । यतश्च पयोब्धिमन्दिरोऽतो जयी । इतः परमस्मान् जेष्यतीति यावत् । अन्यथा जयित्वाभावे पयोब्धिमन्दिरत्वं न भवेत् । पयोब्धिमन्दिरत्वाभावे दृष्टं पक्षिवाहनत्वं च न भवेदित्यर्थः । एवं जयित्वेऽनुमानमुक्त्वा अनुभवं च प्रमाणयति– **जिता इति** ।। यद्वा एष कृष्णः पयोब्धिमन्दिर इति साध्यम् । यतो जयी यतश्च पक्षिवाहन इति हेतुद्वयम् । अन्यथा पयोब्धिमन्दिरत्वाभावे सर्वजयित्वं पक्षिवाहनत्वं च न भवेदित्यर्थः । पक्षिवाहनत्वं तत्र प्रत्यक्षसिद्धम् ।।६।।

**भारतश्री–** नान्यथा भवेत् अन्यो न भवेत् ।।६।।

**चट्टि–** अत्र स्वयंवरे नोऽस्माकं किं कृतं कर्म सुखाय भवेत् ? इत्यब्रुवन् । अथ अनन्तरं जरासुतः अब्रवीत् । किमिति । जयी एषः श्रीकृष्णः पयोब्धिमन्दिरो हरिः किल । यतः एषः पक्षिवाहनः अत एवेत्यर्थः । अन्यथा हरित्वाभावे पक्षिवाहनो न भवेत् ।।६।।

**जिता वयं च सर्वशोऽमुनैकलेन संयुगे ।**
**अनेकशो न सङ्गतैर्जितः कदाचिदेष हि ।।७।।**

**वरदराजीया–** जयित्वं स्पष्टमाह– **जिता इति** ।। अनेकशो बहुवारं संयुगे युद्धे एकलेन एकेनैव अमुना कृष्णेन सङ्गतैः मिलितैः जितः पराजितः न ।।७।।

**जनार्दनीया–** एकलेन एकेन अमुना कृष्णेन सर्वशः सर्वे वयं संयुगे सङ्गरे अनेकशः बहुवारं जिताश्च पराजिताः । सङ्गतैः सम्यङ्मिलितैः अस्माभिः एषः कृष्णः कदाचिन्न जितः न पराजितः ।।७।।

**ताम्रपर्णीया–** जयित्वहेतोरसिद्धिं परिहरति– **जिता वयमिति** ।। ब्रह्मरुद्रादिवरतोऽजेया अपि वयमिति चार्थः ।।७।।

**भारतश्री–** कदाचिदेव...जित इति वर्तते ।।७।।

**चट्टि–** एकलेन एकेन अमुना श्रीकृष्णेन सर्वशः सर्वे वयं संयुगे अनेकशः बहुवारं जिताः पराजिताश्च । सङ्गतैः सम्यङ्मिलितैः अस्माभिः श्रीकृष्णः कदाचिन्न जितः न पराजितः ।।७।।

**अमुष्य चाग्रजः पुरा निहन्तुमुद्यतो हि माम् ।**
**अदृश्यवाक्यतोऽत्यजत् प्रताडनात् सुपीडितम् ।।८।।**

**व्यासतीर्थीया–** अस्याग्रजोऽपि जयीत्याह– **अमुष्येति** ।।८।।

**वरदराजीया–** अमुष्य कृष्णस्य अग्रजो मां निहन्तुं उद्यतः अदृश्यस्य यस्य कस्यचिद्वाक्यतः सुपीडितं मां अत्यजत् ।।८।।

**जनार्दनीया–** पुरा प्रथमयुद्धे । अमुष्य कृष्णस्य ।।८।।

**ताम्रपर्णीया–** ।। **अमुष्य चेति** ।। एतद्बाहुबलाश्रय एतदग्रजोऽपीत्यर्थः । तेन किमस्य चोच्यत इति कैमुत्यावकाशः । अत एव राम इत्यनुक्त्वा अमुष्याग्रज इत्येतत्सम्बन्ध उक्तः । भवाव इत्यपि उक्तेति शेषः ।।८-२३।।

**चट्टि–** पुरा प्रथमयुद्धे अमुष्य श्रीकृष्णस्य अग्रजः रामः मां निहन्तुं उद्यतस्सन् अदृश्यवाक्यतः प्रताडनात् सुपीडितं कृत्वा अत्यजत् ।।८।।

**[१]किमस्य तूच्यते बलं वयं तृणोपमाः कृताः ।**
**समस्तशो मृधे मृधे हि येन चाक्षतेन हि ।।९।।**

**व्यासतीर्थीया–** [न केवलं वधं] कथञ्चिज्जिता इत्याह- **किमस्येति** ।।९-११।।

**वरदराजीया–** अस्य कृष्णस्य । अक्षतेन क्षतरहितेन येन कृष्णेन ।।९।।

**जनार्दनीया–** अक्षतेन क्षतरहितेन येन कृष्णेन मृधे मृधे युद्धे युद्धे समस्तशो वयं तृणोपमाः कृताः हि यस्मात् तस्मात् अस्य कृष्णस्य बलं किमुच्यते । कृष्णबलं उत्तममिति किं वक्तव्यमित्यर्थः ।।९।।

---

१.'किमस्य चोच्यते' इति ताम्रपर्णीयपाठः ।

**चट्टि–** अक्षतेन क्षतरहितेन येन श्रीकृष्णेन मृधे मृधे प्रति प्रति युद्धे समस्तशो वयं तृणोपमाः कृताः हि यस्मात् तस्मात् अस्य श्रीकृष्णस्य बलं किमुच्यते । श्रीकृष्णबलं उत्तममिति किं किं वक्तव्यमित्यर्थः ।।९।।

**किमत्र कुर्वतां सुखं भवेदुदीर्णसङ्कटे ।**
**इति ब्रुवन्नवाङ्मुखं नृपश्चकार विच्छविः ।।१०।।**

**वरदराजीया–** अत्र उदीर्णसङ्कटे प्राप्तसङ्कटे किं कृत्यं कुर्वतां अस्माकम् । नृपो जरासन्धः विच्छविः विगतशोभाः सन् मुखं अवाक् अधश्चकार ।।१०।।

**अनन्तभट्टीया–** नृपः मुखं अवाङ्चकार ।।१०।।

**जनार्दनीया–** अत्र स्वयंवरे उदीर्णसङ्कटे उत्कृष्टापदि प्राप्ते सति किं कुर्वताम् ? किं कर्म कुर्वताम् ? नः सुखं भवेदिति ब्रुवन् । नृपो जरासन्धः विच्छविः विगतकान्तिः सन् अवाङ्मुखं अधोमुखं चकार ।।१०।।

**चट्टि–** अत्र स्वयंवरे उदीर्णसङ्कटे उत्कृष्टापदि प्राप्ते सति किं कुर्वताम् ? किं कर्म कुर्वताम् ? नः सुखं भवेदिति ब्रुवन् । नृपो जरासन्धः विच्छविः विगतकान्तिः सन् अवाङ्मुखं चकार ।।१०।।

**अथाऽह [१]चेदिभूपतिः सदन्तवक्त्रको वचः ।**
**पुरा हरेर्हि पार्षदः प्रसन्नबुद्धिरेकदा ।।११।।**

**वरदराजीया–** सदन्तवक्त्रो दन्तवक्त्रेण सहितः चेदिभूपतिः शिशुपालः । ननु हरिद्वेषवतः शिशुपालस्य कथं वक्ष्यमाणं तत्वज्ञानपूर्वकं वचनं घटत इत्यत आह– **पुरेति** ।। हि यस्मात् तस्मात् एकदा कदाचित् प्रसन्नबुद्धिः 'शुभजीवप्रकाशेन कदाचिच्छुभबुद्धयः' इति वचनादिति भावः ।।११।।

**जनार्दनीया–** दन्तवक्त्रेण सह वर्तमानः चेदिभूपतिः शिशुपालः पुरा हरेः पार्षदः हि यस्मात् तस्मात् एकदा कचित् प्रसन्नबुद्धिः हरौ शुभबुद्धिः अत एव तादृशं वचः आह ।।११।।

**चट्टि–** अथ अनन्तरं दन्तवक्त्रेण सह वर्तमानः सदन्तवक्त्रः चेदिभूपतिः शिशुपालः पुरा हरेः पार्षदः हि यस्मात् तस्मात् एकदा कचित् प्रसन्नबुद्धिः हरौ शुभबुद्धिः सन् अत एव तादृशं वचः आह ।।११।।

---

१. हरिवंशे दन्तवक्त्रवाक्यमेतत्– 'मर्त्येऽस्मिन् पुरुषेन्द्रोऽसौ न कश्चित्प्राकृतो नरः । देवलोकेषु देवेषु प्रवरः पुरुषोत्तमः ।। देवानामपि कर्ताऽसौ लोकानाञ्च विशेषतः । न चैव बालिशा बुद्धिः न चेर्ष्या नापि मत्सरः ।। न स्तब्धो न कृशो नार्तः प्रणतार्तिहरः सदा । एष विष्णुः प्रभुर्देवो देवानामपि दैवतम् ।। आगतो गरुडेनेह छद्मप्राकाश्यहेतुना । नानास्त्रसहितो याति कृष्णः शत्रुविनाशने ।।' इति विष्णुपर्वणि.४९.१८-२२ ।

**शृणुष्व राजसत्तम प्रभुं शिवस्वयम्भुवोः ।**
**हरिं वदन्ति केचिदप्यदो भवेन्न वै मृषा ।।१२।।**

**व्यासतीर्थीया–** शिवस्वयंभुवोऽपि मृषा पुनरन्यथा च जायते हरिः पर इत्यत्र न संशयः ।। ।।१२-१३।।

**वरदराजीया–** हे राजसत्तम! जरासन्ध! शिवस्वयम्भुवोः रुद्रचतुर्मुखयोः प्रभुं स्वमिनं हरिं केचित् ज्ञानिनो वदन्ति । अदो वचनं न मृषा भवेत् । किन्तु सत्यमेवेत्यर्थः ।।१२।।

**जनार्दनीया–** 'प्रसन्नबुद्धिः' इत्युक्तं स्पष्टयति– **शृणुष्वेति** ।। हे राजसत्तम जरासन्ध शृणुष्वेत्याहेति सम्बन्धः । केचित् सन्तः प्रभुं हरिं वदन्ति । अदः इदं वचः मृषा न सत्यमेवेत्यर्थः ।।१२।।

**चट्टि–** प्रसन्नबुद्धिः इत्युक्तं विशदयति– **शृणुष्वेति** ।। हे राजसत्तम जरासन्ध शृणुष्वेत्याहेत्यन्वयः । केचित् सन्तः हरिं शिवस्वयम्भुवोः प्रभुं वदन्ति । अदः इदं वचः मृषा न भवेत् सत्यमेवेत्यर्थः।।१२।।

**तथाऽऽवयोश्च दर्शने भवेत् कदाचिदूर्जिता ।**
**अमुष्य भक्तिरन्यथा पुनश्च जायते क्रुधा ।।१३।।**

**वेदाङ्गतीर्थीया–** अन्यथा पुनः, अन्यथा च भक्तेरन्यथा, द्वेषेणेति यावत् ।।१३।।

**वरदराजीया–** तथा अमुष्य कृष्णस्य दर्शने ऊर्जिता उत्तमा भक्तिः । अन्यथा दर्शनाभावे क्रुधा क्रोधो द्वेष इति यावत् ।।१३।।

**अनन्तभट्टीया–** अमुष्य अमुष्मिन् इत्यर्थः ।।१३।।

**जनार्दनीया–** तथा आवयोर्दन्तवक्रस्य मम च अमुष्य कृष्णस्य दर्शने जाते सति कदाचिदूर्जिता उत्कृष्टा भक्तिर्भवेत् । पुनरनन्तरं क्रुधा कोपः । अन्यथा भक्त्यभावः, द्वेष इत्यर्थः । जायते च ।।१३।।

**चट्टि–** तथा आवयोर्दन्तवक्रस्य मम च अमुष्य कृष्णस्य दर्शने जाते सति कदाचिदूर्जिता उत्कृष्टा भक्तिर्भवेत् । पुनरनन्तरं क्रुधा कोपेन अन्यथा भक्त्यभावः, द्वेष इत्यर्थः । जायते च ।।१३।।

**न कारणञ्च विद्महे न संशयः परो हरिः ।**
**[१]व्रजाम तं सुखार्थिनो वयं विहाय शत्रुताम् ।।१४।।**

---

१. 'अर्घ्यमाचमनं दत्वा आतिथ्यं च नराधिपाः । करिष्यामो वयं सर्वे केशवाय महात्मने ।। एवं सन्धानतः कृत्वा कृष्णेन सहिता वयम् । वसामो विगतोद्वेगा निर्भया विगतज्वराः ।।' इति विष्णुपर्वणि ४९.२३-२४ ।

**व्यासतीर्थीया–** अत्र किं कृतं नः शुभाय भवेदिति अस्य किमुत्तरमित्यत आह– **व्रजामेति** ।।१४-१६।।

**वेदाङ्गतीर्थीया–** कारणं कदाचिद्भक्तेः कदाचिद् द्वेषस्य च । किमत्रेति त्वदुक्तस्योत्तरं– **व्रजाम** इति ।। [शरणमिति] शेषः ।।१४।।

**वरदराजीया–** अत्र कारणं न विद्महे । हरिः पर इत्यत्र न संशयः । सुखार्थिनो वयं शत्रुतां द्वेषतां द्वेषं विहाय तं कृष्णं व्रजेम शरणमिति शेषः ।।१४।।

**जनार्दनीया–** तत्र भक्तिद्वेषोत्पत्तौ कारणं न विद्महे न जानीमः । तथापि हरिः परः उत्तमः । संशयो न । किमत्र कुर्वतां सुखं भवेदित्यस्योत्तरमाह– **व्रजामेति** ।। तं कृष्णं व्रजाम । शरणमिति शेषः ।।१४।।

**चट्टि–** तत्र भक्तिद्वेषोत्पत्तौ कारणं न विद्महे न जानीमः । तथापि हरिः परः उत्तमः । संशयो न च नास्त्येव । किमत्र कुर्वतां सुखं भवेदित्यस्योत्तरमाह– **व्रजामेति** ।। सुखार्थिनो वयं शत्रुतां शत्रुत्वं द्वेषं विहाय तं श्रीकृष्णं व्रजाम । शरणमिति शेषः ।।१४।।

**इदं हि नः शुभप्रदं न चान्यथा शुभं क्वचित् ।**
**इतीरितो जरासुतो ददर्श तौ दहन्निव ।।१५।।**

**वरदराजीया–** इदं द्वेषत्यागः शरणप्राप्तिश्चेति द्वयम् । अन्यथा एतद्वयाभावे । तौ शिशुपालदन्तवक्रौ ।।१५।।

**जनार्दनीया–** इदं हि इदमेव मयोक्तमेव । शरणप्राप्तिरिति यावत् । नः शुभप्रदं सुखप्रदम् । अन्यथा मदुक्त्यकरणे तौ शिशुपालदन्तवक्रौ दहन्निव ददर्श ।।१५।।

**चट्टि–** इदं हि इदमेव द्वेषत्यागः शरणप्राप्तिश्चेति द्वयमेवेत्यर्थः । नः शुभप्रदं अन्यथा मदुक्ताकरणे । क्वचिदपि शुभं सुखं न च नास्त्येव इत्याहेति पूर्वेण सम्बन्धः । इतीरितः जरासुतः शिशुपालदन्तवक्रौ दहन्निव ददर्श ।।१५।।

**अथ प्रहस्य सौभराड् वचो जगाद मागधम् ।**
**विनिन्द्य तौ क्रुधा स्फुरन् क्रुधा स्फुरन्तमीक्ष्य च ।।१६।।**

**वरदराजीया–** सौभराट् साल्वः तौ शिशुपालदन्तवक्रौ विनिन्द्य निर्भर्त्स्य क्रुधा क्रोधेन स्फुरन्तं जरासन्धम् ।।१६।।

**जनार्दनीया–** सौभराट् साल्वः स्वयं क्रुधा स्फुरन् उच्चलन् सन् क्रुधा स्फुरन्तं जरासन्धमीक्ष्य, तौ शिशुपालदन्तवक्रौ विनिन्द्य प्रहस्य च मागधं प्रति वचो जगाद ।।१६।।

**चट्टि–** अथ अनन्तरं सौभराट् साल्वः स्वयं क्रुधा कोपेन स्फुरन् उच्चलन् सन् क्रुधा स्फुरन्तं जरासन्धमीक्ष्य, तौ शिशुपालदन्तवक्रौ विनिन्द्य प्रहस्य च मागधं प्रति वचो जगाद ।।१६।।

**न तन्मृषा हरिः स्वयं [१]जनार्दनो वधाय नः ।**
**प्रजात एष यादवो वयं च दानवेश्वराः ।।१७।।**

**व्यासतीर्थीया–** एषः यादवो हरिरिति यत्तन्मृषा न । हरिश्चेत् किमर्थमत्रोत्पन्न इत्यत उक्तम्– **स्वयमिति** ।।१७।।

**वेदाङ्गतीर्थीया–** पयोब्धिमन्दिर इति त्वयोक्तं तन्न मृषा न भवेत् । तदेवानूद्याह– **हरिः स्वयमिति** ।। जनान् अर्दयतीति जनार्दनः । हरिः स्वयं एषः यादवः प्रजातः ।।१७-२२।।

**वरदराजीया–** हरिः स्वयं कृष्ण इति यत् तन्न मृषा । जनार्दन एव नोऽस्माकं वधाय यादवो प्रजातः । वयं च सर्वे पूर्वं दानवेश्वराः ।।१७।।

**अनन्तभट्टीया–** अयं यादवः हरिरिति यत् तन्न मृषा । अत्रोत्पत्तौ निमित्तमाह– **स्वयमिति** ।।१७।।

**जनार्दनीया–** किमिति? स्वयं कृष्णः हरिरिति त्वयोक्तं तद्वाक्यं मृषा न । ननु हरित्वेऽपि कृष्णः किमर्थं जात इत्यत आह– **जनार्दन इति** ।। एषः हरिः यतो जनार्दनो द्वेषिजनमर्दनः अतो नः वधाय यादवः सन् प्रजातः । अस्मद्वधः कुतः क्रियते? इत्यत आह– **वयमिति** ।। यतो वयं पूर्वं दानवेश्वराः ।।१७।।

**चट्टि–** किमिति? स्वयं श्रीकृष्णः हरिरिति यत् त्वयोक्तं तद्वाक्यं मृषा न । ननु हरित्वे श्रीकृष्णः सन् किमर्थं जात इत्यत आह– **जनार्दन इति** ।। एषः हरिः यतो जनार्दनो द्वेषिजनमर्दनः अतो नः वधाय यादवः सन् प्रजातः । अस्मद्वधः कुतः क्रियते? इत्यत आह– **वयमिति** ।। यतो वयं सर्वे पूर्वं दानवेश्वराः ।।१७।।

**स्वधर्म एष नः सदा दृढप्रतीपता हरौ ।**
**स्वधर्मिणो हता अपि प्रयाम सद्गतिं ध्रुवम् ।।१८।।**

---

१. 'अहं जानामि वै कृष्णं आदिदेवं सनातनम् ।....सम्भूतं देवकीगर्भे विष्णुं लोकनमस्कृतम् ।। कंसराजवधार्थाय भारावतरणाय च । अस्माकं च विनाशाय लोकसंरक्षणाय च ।।' इति विष्णुपर्वणि ४९.२९-३१ ।

**व्यासतीर्थीया–** हरेः [प्रतीपाश्चेन्मितामह] इत्यत आह– **स्वधर्मिण इति** ।। इत्यपि इत्येवोक्ता ।।१८-२२।।

**वरदराजीया–** हरौ दृढप्रतीपता दृढद्वेषयुक्तता इत्येषः नोऽस्माकं धर्म एव । स्वधर्मिणः स्वधर्मनिरताः ।।१८।।

**जनार्दनीया–** एवं चेत् द्वेषनिवृत्त्यर्थं सन्धानं किमर्थं न क्रियते इत्यत आह– **स्वधर्म इति** ।। हरौ सदा प्रतीपता एषः नः स्वधर्मः । स्वधर्मफलमाह– **स्वधर्मिण इति** ।।१८।।

**चट्टि–** एवं चेत् तद्वधनिवृत्त्यर्थं सन्धानं किमर्थं न क्रियते इत्यत आह– **स्वधर्म इति** ।। हरौ सदा दृढप्रतीपता इत्येषः नः स्वधर्मः । स्वधर्मफलमाह– **स्वधर्मिण इति** ।। स्वधर्मिणः स्वधर्मवन्तः हता अपि ध्रुवं सद्गतिं प्रयाम ।।१८।।

**शिवश्च नः परा गतिर्गुरुर्भवानरिर्हरिः ।**
**इतीरितः स मागधो जगाद साधु साध्विति ।।१९।।**

**वरदराजीया–** नोऽस्माकं शिवः परा गतिः परदैवम् । भवान् त्वं गुरुः हरिश्च हरिः शत्रुः । साधु साध्विति जगाद ।।१९।।

**जनार्दनीया–** परागतिः परदैवमित्यर्थः । भवान् त्वं राजा जरासन्धः गुरुः । हरिः अरिः शत्रुः । साधु साधु सम्यगुक्तमिति जगाद ।।१९।।

**चट्टि–** नो अस्माकं शिवश्च शिव एव परागतिः परदैवमित्यर्थः । भवान् त्वं गुरुः । हरिः अरिः शत्रुः । इति साल्वेन ईरितो मागधः साधु साधु सम्यगुक्तं सम्यगुक्तमिति जगाद ।।१९।।

**तथैव रुक्मिपूर्वकाः करूशचेदिपौ च तौ ।**
**विनिश्चयं कुबुद्धयो युधे च चक्रुरूर्जितम् ।।२०।।**

**सत्याभिनवतीर्थीया–** तत्रैव विनिश्चयं कुबुद्धयो युधे ... इत्यस्ति । तस्यार्थः । कुबुद्धयः वीत्यविभक्तिको निर्देशः । विना परमात्मना कृष्णेन सह युधे युद्धार्थं ऊर्जितं निश्चयं चक्रुरिति । एतेन ऊर्जितं निश्चयं चक्रुरित्यनेन पूर्णत्वात् 'विनिश्चयम्' इत्यत्र 'वि' इत्येतत् व्यर्थमिति दूषणं पराकृतम् । 'वि' इत्येतत् निश्चयविशेषणमित्यनङ्गीकारात् ।।२०।।

**वरदराजीया–** रुक्मिपूर्वकाः तथैव अब्रुवन् । तौ करूशचेदिपौ दन्तवक्रशिशुपालौ च तथैवेत्यर्थः । युधे युद्धार्थम् ।।२०।।

**जनार्दनीया**— तथैव साल्ववत् तौ पूर्वोक्तौ करूशचेदिपौ करूशविषयाणां चेदिविषयाणां च यौ रक्षकौ दन्तवक्रशिशुपालौ च तथैवोचतुरित्यर्थः । कुबुद्धयः दुरात्मानः साल्वादयः युद्धे कृष्णेन सह युद्धार्थे ।।२०।।

**चट्टि**— रुक्मिपूर्वकाः तथैव साल्ववत् ऊचुः । तौ पूर्वोक्तौ करूशचेदिपौ करूशविषयाणां चेदिविषयाणां रक्षकौ दन्तवक्रशिशुपालौ च तथैवोचतुरित्यर्थः । कुबुद्धयः दुरात्मानः साल्वादयः युद्धे श्रीकृष्णेन सह युद्धार्थमूर्जितं दृढं विनिश्चयं च चक्रुः ।।२०।।

**सदा प्रतीपकारिणौ भवाव कृष्ण इत्यपि ।**
**गुरोः प्रसादमाप्नुतां करूशचेदिभूभृतौ ।।२१।।**

**वादिराजतीर्थीया**— यदा करूशचेदिभूभृतावपि कृष्णे सदा प्रतीपकारिणौ भवावेति निश्चयं चक्रतुः । तदा गुरोर्जरासन्धस्य प्रसादमाप्नुतां गतावित्यन्वयः । लिङि द्विवचनम् ।।२०-२७।।

**वरदराजीया**— कृष्णे सदा प्रतीपकारिणौ द्वेषकर्तारौ भवाव इति सङ्कल्प्य गुरोः जरासन्धस्य प्रसादं अनुग्रहं आप्नुतां प्राप्तवन्तौ ।।२१।।

**अनन्तभट्टीया**— कृष्णे प्रतीपकारिणौ भवाव इति गुरोर्जरासुतस्य प्रसादं आप्नुतां आप्तवन्तौ । सदा कृष्णप्रतिकूल...र्भवत्विति अनुग्रहमित्यर्थः ।।२१।।

**जनार्दनीया**— करूशचेदिभूभृतौ कृष्णविषये सदा प्रतीपकारिणौ प्रतिकूलाचरणशीलौ अपि आवामपि भवाव इति प्रतिज्ञां कृत्वेत्यर्थः । गुरोः असतां गुरोः जरासन्धस्य प्रसादं अनुग्रहं आप्नुतां प्रापतुः ।।२१।।

**चट्टि**— तौ करूशचेदिपौ श्रीकृष्णविषये सदा प्रतीपकारिणौ द्वेषकारिणौ आवामपि भवाव इति सङ्कल्प्य गुरोः जरासन्धस्य प्रसादं अनुग्रहं आप्नुतां प्रापतुः ।।२१।।

**पुनश्च ते त्वमन्त्रयन् सहैव पापबुद्धयः ।**
**ध्रुवं समागतो हरिर्लभेत रुक्मिणीमिमाम् ।।२२।।**

**वरदराजीया**— ते जरासन्धादयो अमन्त्रयन् विचारयामासुः । हरिः कृष्णः रुक्मिणीं लभेत प्राप्नुयात् ।।२२।।

**जनार्दनीया**— ते जरासन्धादयः अमन्त्रयन् विचारं चक्रुः । लभेत प्राप्नुयात् ।।२२।।

**चट्टि**— पापबुद्धयः ते जरासन्धादयः पुनश्च सहैव सम्भूय अमन्त्रयन् विचारं चक्रुः । समागतः हरिः श्रीकृष्णः इमां रुक्मिणीं ध्रुवं लभेत प्राप्नुयात् ।।२२।।

**अयं त्रिलोकसुन्दरोऽनुरूपिणी च रुक्मिणी ।**
**मुखेन बाहुनाऽप्ययं समस्तलोकजिद् वशी ॥२३॥**

**व्यासतीर्थीया—** मुखेन मुखकान्त्यादिना ॥२३-२४॥

**वेदाङ्गतीर्थीया—** मुखेन मुखकान्त्यादिना वशी । वाहुना समस्तलोकजित् ॥२३॥

**वरदराजीया—** अयं कृष्णः त्रिलोकसुन्दरः रुक्मिणी अनुरूपिणी समानरूपवती । मुखेन वाग्युद्धेन वाहुना वाहुयुद्धेन च समस्तलोकजित् वशी स्वतन्त्रः ॥२३॥

**जनार्दनीया—** अयं कृष्णः । सुरूपिणी सुन्दररूपवती । मुखेन मुखतेजसा समस्तलोकजित् तिरस्कृतसमस्तलोकमुखकान्तिरिति भावः । मुखेन वशी, कृष्णमुखावलोकनेन सर्वे तद्वशा भवन्तीति भावः । बाहुनापि वाहुवलेन युद्धे समस्तलोकजित् । अत एव वशीकृतलोक इत्यर्थः ॥२३॥

**ताम्रपर्णीया—** मुखेन वाचा । मुखकान्त्येति वा ॥२४-२७॥

**चट्टि—** अयं श्रीकृष्णः त्रिलोकसुन्दरः रुक्मिणी च अनुरूपिणी समानरूपिणी । अयं श्रीकृष्णः मुखेन वाग्युद्धेन वाहुना वाहुयुद्धेन च समस्तलोकजित् वशी स्वतन्त्रः । यद्वा मुखेन मुखतेजसा समस्तलोकजित् स्वमुखतेजसा तिरस्कृतसमस्तलोकमुखकान्तिरिति भावः । मुखेन वशी, श्रीकृष्णमुखावलोकनेन सर्वे तद्वशा भवन्तीति भावः । वाहुना वाहुवलेनापि युद्धे समस्तलोकजित् । अत एव वशी वशीकृतसर्वलोक इत्यर्थः ॥२३॥

**समस्तवेदिनां वरं जितारिमग्र्यरूपिणम् ।**
**समस्तयोषितां वरा व्रजेत रुक्मिणी ध्रुवम् ॥२४॥**

**वरदराजीया—** समस्तवेदित्वादेरेव रुक्मिणी ध्रुवं व्रजेत व्रियेत ॥२४॥

**जनार्दनीया—** समस्तवेदिनां सर्वज्ञानां मध्ये वरं, जिता अरयो येन स तथा तम् । अग्र्यं उत्तमं रूपमस्यास्तीति तं कृष्णं योषितां स्त्रीणां मध्ये व्रजेत व्रीयत यदा ॥२४॥

**चट्टि—** समस्तवेदिनां सर्वज्ञानां मध्ये वरं, जिता अरयो येन स तथा तम् । अग्र्यं उत्तमं रूपमस्यास्तीति अग्र्यरूपं तं श्रीकृष्णं समस्तयोषितां मध्ये वरा उत्तमा रुक्मिणी ध्रुवं व्रजेत व्रियेत ॥२४॥

**वयं च मानसङ्गयं नितान्तमाप्नुमस्तदा ।**
**न शक्नुमो निवारितुं शरैरमुं कथञ्चन ॥२५॥**

**व्यासतीर्थीया–** सर्वर्षिगन्धर्वादिसमस्तवेदिनां व्रजतु कृष्णं रुक्मिणी का नो हानिरित्यत आह– **वयमिति** ।।२५-२६।।

**वरदराजीया–** वयं च मानसङ्क्षयं मानहानिं नितान्तं अत्यन्तमाप्नुमः । अमुं कृष्णं शरैः निवारितुम् ।।२५।।

**जनार्दनीया–** तदा वयं मानसङ्क्षयं मानभङ्गम् । अमुं कृष्णं निवारितुं, न शक्नुमः न समर्थाः ।।२५।।

**चट्टि–** यदा तदा वयं मानसङ्क्षयं मानहानिं नितान्तं अत्यन्तं आप्नुमः । मानसङ्क्षयं मनःखेदमिति वा । अमुं श्रीकृष्णं शरैः निवारितुं, कथञ्चन न शक्नुमः न समर्थाः ।।२५।।

**अतः स्वयंवरे यथा न सङ्गमो हरेर्भवेत् ।**
**तथा विधानमेव नः [१]सुनीतिरूर्जिता ध्रुवम् ।।२६।।**

**वरदराजीया–** अतः कारणात् स्वयंवरे हरेः कृष्णस्य सङ्गमः समागमः यथा न भवेत् तथा विधानं करणं नोऽस्माकं ऊर्जिता उत्कृष्टा सुनीतिः । ध्रुवं निश्चिता ।।२६।।

**जनार्दनीया–** अतः कारणात् स्वयंवरे हरेः कृष्णस्य सङ्गमः मेलनं नोऽस्माकं यथा न भवेत् तथा विधानमेव करणमेव ध्रुवं ऊर्जिता महती सुनीतिः उत्तमनीतिः ।।२६।।

**चट्टि–** अतः कारणात् स्वयंवरे हरेः श्रीकृष्णस्य सङ्गमः सहवासः नोऽस्माकं यथा न भवेत् तथा विधानमेव करणमेव ध्रुवं ऊर्जिता महती सुनीतिः उत्तमनीतिः ।।२६।।

**अतो न देयमस्य नः सुभूभुजां समागमे ।**
**क्वचित् कदाचिदासनं न चार्घ्यपूर्वको विधिः ।।२७।।**

**व्यासतीर्थीया–** समागमे संमेलने ।।२७-३१।।

**वेदाङ्गतीर्थीया–** अतः स्वयंवरे एतद्वर्जनस्योपायान्तराभावात् ।।२७-३१।।

**वरदराजीया–** क्वचित्स्थले कदाचित् काले आसनं उपवेष्टुं न देयम् । अर्घ्यपूर्वको विधिः पूजा च न देया ।।२७।।

---

१. क्रियमाणो अयं विचारः हरिवंशे क्रथकैशिकमुखान्निःसृतः । तथाहि- 'शत्रुस्ते मागधो राजा जरासन्धो महाद्युतिः । कथां ते ब्रुवते नित्यं नृपाणामभयप्रदः ।। सिंहासनमनध्यास्यं पुरं चास्य न विद्यते । कथं राजसमाजेऽस्मिन् आस्यते देवकीसुतः ।। कृष्णोऽपि सुमहावीर्यो ह्यभिमानी महाद्युतिः । न चागमिष्यते वाऽस्मिन् कन्यार्थे च स्वयंवरे ।। पार्थिवेषूपविष्टेषु स्वेषु सिंहासनेषु वै । कथमास्यति नीचेषु आसनेषु महाद्युतिः ।।' इति विष्णुपर्वणि ५०.१४-१७

**जनार्दनीया–** अतः कृष्णसङ्गमाभावार्थं अस्य कृष्णस्य भूभुजां भूपालानां नः समागमे संमेलने कचित् अत्र अन्यस्थलेऽपि वा कदाचित् समये आसनं न देयम् । अर्घ्यपूर्वको विधिश्च पूजापि न कर्तव्या ।।२७।।

**चट्टि–** अतः श्रीकृष्णसङ्गमाभावार्थं अस्य श्रीकृष्णस्य भूभुजां भूपालानां समागमे संमेलने कचित् अत्र अन्यत्रस्थलेऽपि वा कदाचित् समये नो अस्माभिः आसनं न देयम् । अर्घ्यपूर्वको विधिश्च पूजापि न कर्तव्यः ।।२७।।

**न चाऽस्यति क्षितौ कचिद् विमानितः पुरो हि नः ।**
**वरासनस्थभूभुजां स मानितो हि दैवतैः ।।२८।।**

**वादिराजतीर्थीया–** न चास्यति क्षितावित्यत्र 'आस उपवेशने' इति धातोः दास्यतीतिवत् लटि रूपमिदम् ।।२८-४१।।

**वरदराजीया–** वरासनस्थितानां भूभुजां राज्ञां नोऽस्माकं पुरः अग्रे अवमानितः अपमानं प्राप्तः क्षितौ भूमौ न चास्यति नोपविशति हि यस्मात् कृष्णो दैवतैः देवैः मानितः तस्मादित्यर्थः ।।२८।।

**अनन्तभट्टीया–** नः पुरः अग्रे ।।२८।।

**जनार्दनीया–** वरासने उत्तमासने तिष्ठन्तीति तथा, ते च ते भूभुजश्च भूपाः, तेषाम् । पुरः विमानितः अवमानं प्राप्तः सन् क्षितौ भूम्यां अध इत्यर्थः । नास्यति नोपविशति । कुतः ? हि यतः स कृष्णः दैवतैर्मानितः अत एवेत्यर्थः ।।२८।।

**ताम्रपर्णीया–** आस्यति उपविशति । आस उपवेशने ।।२८-३१।।

**चट्टि–** वरासने उत्तमासने तिष्ठन्तीति तथा, ते च ते भूभुजश्च भूपाः, तेषां नः पुरः विमानितः अवमानं प्राप्तः सन् क्षितौ अध इत्यर्थः । नास्यति नोपविशति । हि यतः स श्रीकृष्णः दैवतैर्मानितः ।।२८।।

**स दर्पमानसंयुतः क्रुधा प्रयास्यति ध्रुवम् ।**
**पुरीं स्वकां ततो वयं विधेम च स्वयंवरम् ।।२९।।**

**वरदराजीया–** दर्पमानाभ्यां क्रोधाहङ्काराभ्यां युतः क्रोधेन स्वकां पुरीं मधुरां पुरीं प्रयास्यति । ततः तदनन्तरम् ।।२९।।

**जनार्दनीया–** दर्पः गर्वः, मानः अभिमानः, ताभ्यां संयुतः स कृष्णः क्रुधा कोपेन ध्रुवं स्वकां पुरीं प्रति यास्यति । ततः कृष्णगमनानन्तरम् । विधेम कुर्मः ।।२९।।

**चट्टि–** दर्पः गर्वः, मानः अभिमानः, ताभ्यां संयुतः स श्रीकृष्णः क्रुधा कोपेन ध्रुवं स्वकां पुरीं प्रयास्यति । ततः अनन्तरं वयं स्वयंवरं विधेम कुर्मः ॥२९॥

**इति स्म सर्वभूभृतां विनिश्चयं सकैशिकः ।**
**क्रथोऽवगम्य भीष्मकानुजोऽभ्ययाद्धरिं द्रुतम् ॥३०॥**

**वरदराजीया–** सकैशिकः कैशिकेन सहितो भीष्मकस्य अनुजः क्रथनामा सर्वेषां भूभुजां जरासन्धादीनां विनिश्चियं अवगम्य हरिं कृष्णं प्रति अभ्ययात् ॥३०॥

**जनार्दनीया–** कैशिकेन सह वर्तमानः भीष्मकानुजः क्रथः इति उक्तप्रकारेण सर्वभूभुजां विनिश्चयं अवगम्य ज्ञात्वा, हरिं प्रति द्रुतं अभ्ययात् ॥३०॥

**चट्टि–** कैशिकेन सहितः सकैशिकः भीष्मकानुजः क्रथः इत्युक्तप्रकारेण सर्वभूभुजां विनिश्चयं अवगम्य ज्ञात्वा, हरिं प्रति द्रुतं शीघ्रं अभ्ययात् ॥३०॥

**प्रणम्य पादपद्मयोर्निजं गृहं प्रवेश्य च ।**
**महासनं प्रदाय तौ प्रचक्रतुर्वरार्चनम् ॥३१॥**

**वरदराजीया–** तौ क्रथकैशिकौ वरार्चनं उत्तमां पूजाम् ॥३१॥

**जनार्दनीया–** तौ क्रथकैशिकाख्यौ प्रचक्रतुः । कृष्णायेति शेषः ॥३१॥

**चट्टि–** तौ क्रथकैशिकौ पादपद्मयोः श्रीकृष्णस्येति शेषः । प्रणम्य निजं गृहं प्रवेश्य च महासनं प्रदाय वरार्चनं उत्तमां पूजां प्रचक्रतुः ॥३१॥

**अथाऽगमच्छतक्रतोर्वचः प्रगृह्य भूभुजः ।**
**जरासुतादिकान् [1]पुमानुवाच चार्थवद् वचः ॥३२॥**

---

१. 'एवं दूतस्य वचनं यथोक्तं वज्रपाणिना । लिखित्वा सुमहातेजाः कौशिकः प्राह शासनम् ॥ कौशिक उवाच– विदितं वो नृपाः सर्वे वैनतेयसहाच्युतः । आगतोऽतिथिरूपेण विदर्भनगरीं हरिः ॥ प्राप्तमालोक्य पात्रोऽयमिति सञ्चिन्त्य भूपतिः । प्रददौ वासुदेवाय स्वं राज्यं धर्महेतुना ॥ इदमासनमास्वेति भ्रात्रा मे चोदिते ततः । वागुक्ता चाशरीरेण केनापि व्योमचारिणा ॥ देवदूत उवाच– न युक्तमासनं दातुं त्वयासीनं नराधिप । इदमस्यासनं दिव्यं सर्वरत्नविभूषितम् ॥ जाम्बूनदमयं शुभ्रं रचितं विश्वकर्मणा । प्रेषितं देवराजेन सिंहलक्षणलक्षितम् ॥ अत्रोपविष्टं देवेशं चराचरनमस्कृतम् । अभिषिञ्चन्तु राजेन्द्रं बहुभिः पार्थिवैः सह ॥ आगताः कुण्डिनगरे कन्याहेतोर्नराधिपाः । नागमिष्यति यः कश्चित् सोऽस्य वध्यो भविष्यति ॥ इमे चैवाष्टकलशा निधीनामंशसम्भवाः । अक्षया राजराजस्य धनेशस्य महात्मनः ॥..

**व्यासतीर्थीया–** शतक्रतोः पुमान् [1]॥३२॥

**वेदाङ्गतीर्थीया–** शतक्रतोः पुमान् उत शतक्रतोः वचः प्रगृह्य ॥३२॥

**वरदराजीया–** शतक्रतोरिन्द्रस्य पुमाननुचरः शतक्रतोर्वचः वाक्यं प्रगृह्य आदाय भूभुजः नृपान् अर्थवत् अर्थपुष्टियुक्तम् ॥३२॥

**अनन्तभट्टीया–** शतक्रतोः पुमान् तदनुचर इत्यर्थः ॥३२॥

**जनार्दनीया–** शतक्रतोः इन्द्रस्य पुमान् दूतः वचः इन्द्रवचः प्रगृह्य स्वीकृत्य, भूभुजः प्रत्यगमत् । जरासुतादिकान् प्रति अर्थवत् अर्थोपेतम् । न व्यर्थमित्यर्थः । वचः उवाच ॥३२॥

**ताम्रपर्णीया–** शतक्रतोः पुमान् दूतः ॥३२-३८॥

**भावचन्द्रिका–** ॥१-३१॥ पुमान् चित्राङ्गदो नाम गन्धर्व उवाच । तथोक्तं हरिवंशे ॥३२॥

**चट्टि–** अथ अनन्तरं शतक्रतोः इन्द्रस्य पुमान् दूतः वचः इन्द्रवचः प्रगृह्य स्वीकृत्य, भूभुजः प्रत्यगमत् । जरासुतादिकान् प्रति अर्थवत् अर्थोपेतं वचः उवाच ॥३२॥

**अहं प्रियः शचीपतेः सदाऽस्य चाक्षिगोचरः ।**
**सुरेन्द्र आज्ञयाऽवदन्नृपान् व ईश्वरो हि सः ॥३३॥**

**वेदाङ्गतीर्थीया–** आज्ञया आज्ञापूर्वकं अवदत् ॥३२॥

**सत्याभिनवतीर्थीया–** तत्रैव अहं शचीपतेः प्रिय... इति श्लोके 'आज्ञया अवदत्' इत्यस्य आज्ञया आज्ञां आज्ञारूपं वाक्यमिति यावत् । अवदित्यर्थः । एतेन आज्ञारूपं वाक्यमवददिति वक्तव्यम् । 'आज्ञया अवदत्' इति कथनमनुपपन्नमिति दूषणं प्रत्युक्तम् । ['आज्ञया' इति तृतीयैकवचनम्] 'आज्ञाम्' इति द्वितीयैकवचनादेश इति स्वीकरणात् ॥३३॥

**वरदराजीया–** शचीपतेः अहं प्रियः । अस्य शचीपतेः अक्षिगोचरः पुरोवर्ती च । आज्ञया न तु प्रार्थनया । सः इन्द्रः वः युष्माकं ईश्वरः स्वामी ॥३३॥

**जनार्दनीया–** किमिति ? 'सदा' इत्युभयत्र सम्बन्धः । अस्य शचीपतेः अक्ष्णोर्गोचरश्च दृग्विषय इत्यर्थः । सुरेन्द्रो नृपान् राजभूतान् वः युष्मान् आज्ञयाऽवदत् । हि यतः स सुरेन्द्रो वः युष्माकं ईश्वरः स्वामी । अतो आज्ञां अवददित्यर्थः । न तु प्रार्थनया । 'व' इत्युभयत्र सम्बध्यते ॥३३॥

---

...दिव्याः काञ्चनरत्नाढ्या दिव्याभरणयोनयः । राजेन्द्रस्याभिषेकार्थं आगच्छन्ति नृपैर्वृताः ॥ एष शक्रस्य सन्देशः कथितो वो नराधिपाः । लेखेनाहूय तान् सर्वान् अभिषिञ्चन्तु केशवम् ॥' इति हरिवंशे.२.५०.२४-३५ ।

**चट्टि–** किमिति ? शचीपतेः इन्द्रस्य अहं सदा प्रियः । सदा अस्य अक्षिगोचरः अक्ष्णोः गोचरः दृग्विषय इत्यर्थः । सदा इत्युभयत्र सम्बध्यते । सुरेन्द्रो नृपान् राजभूतान् वः युष्मान् आज्ञयाऽवदत् । न तु प्रार्थनया । हि यस्मात् स सुरेन्द्रो वः युष्माकं ईश्वरः स्वामी । तस्मात् आज्ञया अवददित्यर्थः । वः इत्यस्य उभयत्र सम्बन्धः ॥३३॥

**समस्तराजसत्पतिर्हरिर्न चान्य इत्यपि ।**
**वराभिषेकमीशितुः कुरुध्वमाश्वसंशयम् ॥३४॥**

**वरदराजीया–** किमवदत् सः । समस्तानां राज्ञां सन् निर्दुष्टः पतिः हरिः । अन्यः पतिः न च । ईशितुः कृष्णस्य वराभिषेकं महाराजाभिषेकम् ।असंशयमिति क्रियाविशेषणम् ॥३४॥

**जनार्दनीया–** आज्ञां स्पष्टयति– **समस्तेति** ॥ समस्तानां राज्ञां जरासन्धादीनां, सत्पतिः मुख्यस्वामी हरिरपि कृष्ण एवेत्यर्थः । अन्यो न च नास्त्येवेति बुद्ध्या असंशयं यथा भवति तथा । ईशितुः कृष्णस्य वराभिषेकं साम्राज्याभिषेकं आशु कुरुध्वम् ॥३४॥

**भावचन्द्रिका–** समस्तराज्ञां सन्त उत्तमाः पर इति यावत् । तेषां सुराणां पतिः । राज्ञां पतयस्सुराः । सुराणां पतिः हरिरित्यर्थः ॥३४॥

**चट्टि–** आज्ञापूर्वकं वचनं स्पष्टयति– **समस्तेति** ॥ समस्तानां राज्ञां जरासन्धादीनां, सत्पतिः मुख्यस्वामी हरिरपि श्रीकृष्ण एवेत्यर्थः । अन्यो न च नास्त्येवेति बुद्ध्या असंशयं यथा भवति तथा । ईशितुः श्रीकृष्णस्य वराभिषेकं आशु कुरुध्वम् ॥३४॥

**अतोऽन्यथा शिरस्यहं निपातयामि वोऽशनिम् ।**
**इतीदमिन्द्रशासनं कुरुध्वमित्यसौ ययौ ॥३५॥**

**वेदाङ्गतीर्थीया–** इत्युक्त्वा असौ दूतः ययौ ॥३५-३९॥

**वरदराजीया–** अतोऽन्यथा अभिषेकाकरणे वो युष्माकं शिरसि अशनिं वज्रं निपातयामि पातयिष्यामि इति उक्तप्रकारेण इन्द्रस्य शासनं आज्ञां कुरुध्वं इत्युक्त्वा असौ शक्रानुचरो ययौ ॥३५॥

**जनार्दनीया–** अतः मदाज्ञायाः अन्यथा वैपरीत्याचरणात् । कृष्णस्य अभिषेकाकरणादित्यर्थः । वः शिरसि अशनिं वज्रं निपातयामि । इति मदुक्तप्रकारेण इदं अभिषेककरणरूपं इन्द्रस्य शासनं आज्ञां कुरुध्वम् । इत्युक्त्वा, असौ इन्द्रदूतः ययौ ॥३५॥

**चट्टि–** अतः मदाज्ञायाः अन्यथा वैपरीत्याचरणात् । श्रीकृष्णस्य अभिषेकाकरणादित्यर्थः । अहं वः शिरसि अशनिं वज्रं निपातयामि । इति मदुक्तप्रकारेण इदं अभिषेककरणरूपं इन्द्रस्य शासनं आज्ञां कुरुध्वम् । इत्युक्त्वा, असौ इन्द्रदूतः ययौ ।।३५।।

**तदीरितं निशम्य ते पुनः सुतप्तचेतसः ।**
**बभूवुरूचिरे वचः सुगर्वितो हि वासवः ।।३६।।**

**वरदराजीया–** तेनानुचरेण ईरितं उक्तं निशम्य श्रुत्वा ते जरासन्धादयः पुनः अधिकं सुतप्तचेतसः क्लेशयुक्तमनसो बभूवुः । वचो वाक्यमूचिरे उक्तवन्तः । किमिति । वासवः इन्द्रः सुगर्वितो अत्यन्तगर्वयुक्तो, जात इति शेषः ।।३६।।

**अनन्तभट्टीया–** तदेवाभिनीय दर्शयति– **सुगर्वित इति** ।। वासवः इदानीं सुगर्वितः ।।३६।।

**जनार्दनीया–** ते जरासन्धादयः तेन दूतेन ईरितम् । किमिति? वासवः इन्द्रः सुगर्वितो हि अतिगर्वयुक्तः खलु । इदानीमिति शेषः ।।३६।।

**चट्टि–** ते जरासन्धादयः तेन दूतेन ईरितं निशम्य पुनः सुतप्तचेतसो बभूवुः । वासवः इन्द्रः सुगर्वितो हि अतिगर्वयुक्तः खलु । इदानीमिति शेषः । इति वचः ऊचिरे ।।३६।।

**पुरा बिभेति नः सदा प्रति प्रति स्म वासवः ।**
**उताद्य कृष्णसंश्रयाद् दृढं विभीषयत्यसौ ।।३७।।**

**व्यासतीर्थीया–** सगर्विततत्वमेव विवृण्वन्नाह– **पुरेति** ।।३७।।

**वरदराजीया–** पुरा पूर्वं नोऽस्माकं मध्ये प्रति प्रति एकैकस्मै बिभेति । अद्य उत इदानीं असौ वासवः कृष्णस्य संश्रयात् आश्रयात् दृढं अत्यन्तं भीषयति । अस्मानिति शेषः ।।३७।।

**अनन्तभट्टीया–** एकैकस्मादपीति सूचयितुं प्रति प्रतीत्युक्तम् ।।३७।।

**जनार्दनीया–** पुरा कृष्णोत्पत्तेः पूर्वं सदा वासवः नोऽस्माकं सकाशात् प्रति प्रति स्म एकैकस्मादपि बिभेति । उत असौ इन्द्रः ।।३७।।

**चट्टि–** पुरा श्रीकृष्णोत्पत्तेः पूर्वं सदा वासवः नोऽस्माकं सकाशात् प्रति प्रति स्म एकैकस्मादपि बिभेति । अद्य उत इदानीं तु असौ इन्द्रः श्रीकृष्णस्य संश्रयात् आश्रयात् दृढमत्यन्तं विभीषयति । अस्मानिति शेषः ।।३७।।

**अदृश्य एव देवराड् यदि स्म वज्रमुत्सृजेत् ।**
**भवेम पीडिता वयं वरादमृत्यवोऽपि हि ॥३८॥**

**वरदराजीया–** देवराट् इन्द्रो अदृश्यो अस्माभिः अदृश्यमान एव वज्रं उत्सृजेत् निपातयेत् । अस्मास्विति शेषः । तर्हि वरात् ब्रह्मादिवरात् अमृत्यवो मरणरहिता अपि वयं पीडिताः दुःखिता भवेम । मारयितुमशक्योऽपि वासवः पीडां कर्तुं समर्थ एव इति भावः ॥३८॥

**जनार्दनीया–** यदि अदृश्यः सन् । तर्हि अमृत्यवोऽपि वयं पीडिताः भवेम ॥३८॥

**चट्टि–** देवराट् इन्द्रः अदृश्यः अस्माभिः अदृश्यः सन्नेव यदि वज्रमुत्सृजेत् । तर्हि वरात् ब्रह्मादिवराद् अमृत्यवोऽपि वयं पीडिताः भवेम ॥३८॥

**पुरा दिविस्थितस्य च प्रमर्दने वयं क्षमाः ।**
**उताद्य यद्यमुं वयं व्रजेम कृष्ण एष्यति ॥३९॥**

**व्यासतीर्थीया–** सुगर्वितं वासवमर्दयामासेत्यत आह– **पुरेति** ॥ पश्चात् कृष्ण एष्यति । रुक्मिणीं हरिष्यति च ॥३९-४२॥

**वरदराजीया–** पुरा पूर्वं दिवि स्वर्गे स्थितस्य अस्य शक्रस्य । तत्र गत्वा पीडने वयं क्षमाः शक्ताः । अद्य तु अमुं इन्द्रं यदि व्रजेम तर्हि कृष्ण एष्यति । आगत्य चास्मत्पुराणि नाशयिष्यतीति भावः ॥३९॥

**अनन्तभट्टीया–** अस्य शस्त्रादिकं नाशयितुमिति शेषः । अथवा...इत्यर्थः ॥३९॥

**जनार्दनीया–** दिविस्थितस्य इन्द्रस्य । क्षमाः समर्थाः । उत अद्य यदि वयं अमुं इन्द्रं व्रजेम । तर्हि कृष्णः एष्यति योद्धुमागमिष्यति ॥३९॥

**ताम्रपर्णीया–** ॥ **यद्यमुमिति** ॥ यद्यमुं व्रजेम । अत तर्हि कृष्ण एष्यतीति सम्बन्धः ॥३९॥

**चट्टि–** पुरा पूर्वं दिवि स्वर्गे स्थितस्यापि इन्द्रस्य प्रमर्दने वयं क्षमाः समर्थाः । अद्य तु यदि वयं अमुं इन्द्रं व्रजेम । तर्हि श्रीकृष्णः एष्यति योद्धुमागमिष्यति ॥३९॥

**अतोऽभिषेचनाद् यदीह शार्ङ्गिणः शचीपतिः ।**
**न वज्रमुत्सृजेत् तदाऽभिषेचयाम तं वयम् ॥४०॥**

**वेदाङ्गतीर्थीया–** इह अस्मासु । तदा तर्हि ॥४०॥

**वरदराजीया–** यतः कारणात् शार्ङ्गिणः कृष्णस्य अभिषेचनात् शचीपतिः इन्द्रः इहास्मासु वज्रं न उत्सृजेत् न पातयिष्यति तदा तस्मात् तं कृष्णं अभिषेचयामः अभिषेकं कुर्महे ।।४०।।

**अनन्तभट्टीया–** शार्ङ्गिणः अभिषेचनात् । तदा तर्हि अभिषेचयामः । अस्त्रविसर्जनं परिहर्तुं कृष्णाभिषेकं कुर्म इत्यर्थः ।।४०।।

**जनार्दनीया–** अतः कारणात् यदि शचीपतिः शार्ङ्गिणः शार्ङ्गधन्विनः कृष्णस्य अभिषेचनात् इह अस्मासु वज्रं न उत्सृजेत् । तदा तर्हि वयं तं कृष्णं अभिषेचयामः अभिषेकं कुर्मः ।।४०।।

**ताम्रपर्णीया–** अतोऽभिषेचनात् स्वोपदिष्टाभिषेचनादिति वा ।।४०-४८।।

**चट्टि–** अतः कारणात् यदि शचीपतिः शार्ङ्गिणः श्रीकृष्णस्य अभिषेचनादिह अस्मासु वज्रं न उत्सृजेत् । तदा तर्हि वयं तं श्रीकृष्णं अभिषेचयामः अभिषेकिणं कुर्मः ।।४०।।

**अतोऽन्यथा दनुर्यथा वरादमृत्युकोऽपि सन् ।**
**सुरेन्द्रवज्रताडितो बभूव कुक्षिगास्ययुक् ।।४१।।**

**वरदराजीया–** अतोऽन्यथा उक्तप्रकारेणाकरणे यथा अमृत्युकः वरात् मरणरहितोऽपि दनुनामा सुरेन्द्रस्य वज्रेण ताडितः सन् कुक्षिगास्ययुक् कुक्षिनिक्षिप्तमुखो बभूव ।।४१।।

**अनन्तभट्टीया–** अन्यथा तदकरणे ।।४१।।

**जनार्दनीया–** अतोऽन्यथा कृष्णस्य अभिषेकाकरणे दनुः दनुनामराक्षसः अमृत्युकः मृत्युरहितः सन्नपि यथा सुरेन्द्रवज्रताडनात्, कुक्षौ उदरे गच्छतीति कुक्षिगं, तत् आस्यं, तेन युक्तः बभूव ।।४१।।

**चट्टि–** अतोऽन्यथा श्रीकृष्णस्य अभिषेकाकरणे दनुनामराक्षसः वरात् अमृत्युकः मृत्युरहितः सन्नपि यथा सः सुरेन्द्रवज्रताडितः सन् । कुक्षि उदरं गच्छतीति कुक्षिगं, तच्च तदास्यं च, तेन युक् युक्तः बभूव ।।४१।।

**तथैव कृष्णसंश्रयात् स नः शचीपतिर्नयेत् ।**
**इति स्म निश्चिता नृपानयातयन्त शौरये ।।४२।।**

**वेदाङ्गतीर्थीया–** इत्येवं विचार्य निश्चिताः अभिषेक्तुं निश्चिताः जरासुतादयः शौरये श्रीकृष्णाय नृपान् कांश्चन नृपान् अयातयन्त अभिषेक्तुमिति भावः ।।४२।।

**वादिराजतीर्थीया–** इति स्म निश्चिता नृपानित्यत्र इति स्म निश्चिताः जरासुतादयः नृपान् कांश्चिन्नृपान् शौरये कृष्णार्थं कृष्णाभिषेकार्थमिति यावत् । अयातयन्त प्रापयामासुः । अहङ्कारवशात् स्वयं न गताः ।

**वरदराजीया—** कृष्णाश्रयबलात् नो अस्मान् तथा कुक्षिगतास्यान् नयेत् कुर्यात् । इत्युक्तरीत्या निश्चिताः अभिषेचनं कर्तव्यमिति निश्चययुक्ताः समस्तशः सर्वान् नृपान्, कतिपयानिति शेषः । शौरये कृष्णाय अयातयन्त तत्समीपं प्रेषयामासुः । जरासन्धाद्याः स्वयमभिषेचनार्थं न जग्मुरिति भावः ।।४२।।

**अनन्तभट्टीया—** निश्चित्य अभिषेकस्य कर्तव्यत्वं निश्चितवन्त इत्यर्थः । नृपान् कतिचिन्नृपान् ।।४२।।

**जनार्दनीया—** तथैव दनुवत् सः नः अस्मान् नयेत् प्रापयेत् इति उक्तरीत्या विचार्य, विनिश्चिताः स्म अभिषेक्तुं विनिश्चयवन्तोऽपि जरासन्धादयः नृपान् कांश्चन नृपान् शौरये कृष्णाय अभिषेकं कर्तुं अयातयन्त प्रेषयामासुः । जरासन्धादिचत्वारो नृपाः अन्यनृपान् अभिषेक्तुं प्रेषयामासुः । स्वयं न गता इति भावः ।।४२।।

**चट्टि—** सः शचीपतिः इन्द्रः श्रीकृष्णसंश्रयात् तथैव दनुमिव नः अस्मान् नयेत् प्रापयेत् इत्युक्तरीत्या विचार्य, निश्चिताः स्म अभिषेक्तुं विनिश्चयवन्तोऽपि जरासन्धादयः नृपान् कांश्चन नृपान् शौरये श्रीकृष्णाय अभिषेकं कर्तुं अयातयन्त प्रेषयामासुः । जरासन्धादयः चत्वारो नृपाः अन्यान् नृपान् अभिषेक्तुं प्रेषयामासुः । स्वयं न जग्मुः इति भावः ।।४२।।

**समस्तशो जरासुतादिभिः कृतेऽभिषेचने ।**
**अतीव भग्नमानकान् न चानुयाति कश्चन ।।४३।।**

**व्यासतीर्थीया—** मागधादयः स्वयं कृष्णाभिषेककार्यार्थं कस्मान्नागुरित्यत आह । इन्द्राज्ञाभावात् । इन्द्रः किमर्थं तत्प्रत्याज्ञां नाकरोत् इत्यतस्तस्य भावं निरूपयति— **समस्तश इति** ।।४३-४७।।

**वेदाङ्गतीर्थीया—** जरासुतादयः नृपानयातयन्तः । स्वयं अभिषेक्तुं कुतो न गता [इत्यत आह— **समस्तशः इति** ।। न यात्विति सुरेन्द्रवचनादेव । सुरेन्द्रः कस्मात् तथावददित्यतः तदभिप्रायमाह— **समाश्रयमिति** ।।४४-४६।।

**वादिराजतीर्थीया—** अन्यद्वाराऽभिषेचने कृते सति सर्वैर्न गतमिति इन्द्रः कुतो न चुकोपेत्यतस्तात्पर्यमाह— **समस्तश इति** ।। सर्वैर्गत्वाऽभिषेके कृते सति अतीव भग्नमानकान् जरासुतादीन् कश्चन नानुयाति । असुरा अपि जीवनार्थिनः केशवमेव समाश्रयं कुर्युरिति हेतोः सर्वेषामसुराणामपि कृष्णशरणप्राप्तौ शरणागतानां च संहरणायोगाख्यहेतोरित्यर्थः । देवकार्यस्य भूभारभूतदैत्यहननाख्यदेवकार्यस्य सङ्क्षयः नाशः स्यात् इतीक्ष्य इत्थं विचार्य, पाकशानः सरुक्मिसाल्वचेदिपः रुक्मिसाल्वचेदिपैः सहितः मागधः हरिं न यात्विति जरासुतादिकानवदत् दूतमुखेनावददित्येकान्वयः ।।४३-५०।।

**वरदराजीया–** कुत इत्यतो देवकार्यदर्शिनेन्द्रेण तथैवानुशासनस्य कृतत्वादित्याह– **जरासुतादिभिरित्यादिना** ।। समस्तशो जरासुतादिभिः अभिषेचने कृते सति तेनैव अतिभग्नमानकान् अत्यन्तं तिरस्कृताभिमानान् जरासुतादीन् कश्चन न याति न यास्यति ।।४३।।

**अनन्तभट्टीया–** ननु तथेन्द्रशासनाभावादिति चेत् । सोऽपि तथा किमिति नाज्ञापयामासेत्यतः तदभिसन्धिमुद्घाटयति– **समस्तश इति** ।। समस्तशः समस्तैः ।।४३।।

**जनार्दनीया–** ननु ते चत्वारः कुतो न गताः? इत्याशङ्कायां न गन्तव्यमिति इन्द्रस्य आज्ञयैवेत्युक्ते इन्द्रोऽपि किमर्थं तथा आज्ञापयामासेत्यतस्तदभिप्रायमाह– **समस्तश इत्यादिना** ।। समस्तशः समस्तैः कृते सति । अतीव भग्नो मानः अभिमानो येषां ते तथा तान् । जरासुतादीन् कश्चन पुरुषः नानुयाति अनुकूलवर्ती न भविष्यति ।।४३।।

**चट्टि–** ननु ते चत्वारः कुतो न जग्मुः? इत्यतः देवकार्यदर्शिना इन्द्रेण तथैव अनुशासनस्य कृतत्वात् इत्याह– **समस्तश इत्यादिना** ।। जरासुतादिभिः समस्तशः समस्तैः अभिषेचने अभिषेके कृते सति । अतीव अत्यन्तं भग्नो मानः अभिमानो येषां ते तथा तान् । जरासुतादीन् कश्चन पुरुषः नानुयाति न यास्यति ।।४३।।

**समाश्रयं च केशवं तदैव जीवनार्थिनः ।**
**प्रकुर्युरासुरा अपीति [1]देवकार्यसङ्क्षयः ।।४४।।**

**वरदराजीया–** प्रत्युत केशवं कृष्णमेव आसुरा अपि असुरस्वभावा अपि जीवनार्थिनः जीवितेच्छवः सन्तः समाश्रयं सम्यक् स्वाश्रयं कुर्युः । जरासन्धादीन् हित्वा कृष्णमेव समाश्रयेयुरिति भावः । इति उक्तप्रकारेण देवकार्याणां सञ्चयं सङ्ग्रहम् ।।४४।।

**जनार्दनीया–** तदा मानभङ्गकाले जीवनार्थिनः आसुरा अपि केशवमेव समाश्रयं सम्यग्रक्षकं प्रकुर्युः । इत्यस्माद्धेतोः देवकार्यस्य संक्षयो विनाशः स्यादिति शेषः ।।४४।।

**चट्टि–** तदा मानभङ्गकाले आसुरा अपि जीवनार्थिनः सन्तः केशवं श्रीकृष्णमेव समाश्रयं सम्यगाश्रयं च प्रकुर्युः । जरासन्धादीन् हित्वा श्रीकृष्णमेव समाश्रयेयुरिति भावः । इति हेतोः । श्रीकृष्णः शरणं गतानां सर्वेषां असुराणां संहरणाख्यहेतोः इत्यर्थः । देवकार्यस्य भूभारभूतदैत्यहननाख्यदेवकार्यस्य संक्षयो नाशः स्यादिति शेषः ।।४४।।

---

१. 'देवकार्यसञ्चयम्' इति वरदराजीयपाठः ।

[*]इतीक्ष्य पाकशासनोऽवदज्जरासुतादिकान् ।
सरुक्मिसाल्वचेदिपो न यातु मागधो हरिम् ॥४५॥

**वेदाङ्गतीर्थीया–** अतः तदनन्तरम् ॥४७-४८॥

**वरदराजीया–** उदीक्ष्य निश्चित्य पाकशासनः इन्द्रः जरासुतादिकान् अवदत् उक्त्वा प्रेषितवान् । किमिति । रुक्मिसाल्वचेदिपैः सह वर्तमानो मागधः जरासन्धो हरिं कृष्णं प्रति न यातु अभिषेचनार्थं न गच्छतु ॥४५॥

**जनार्दनीया–** पाकशासनः इन्द्र इतीक्ष्य इति विचार्य अवदत् । दूतमुखादिति शेषः । किमिति? रुक्म्यादिभिः सहितो मागधः हरिं कृष्णं अभिषेकार्थं न यातु न प्राप्नोतु । इत्यवददित्यर्थः ॥४५॥

**चट्टि–** पाकशासनः इन्द्र इतीक्ष्य विचार्य रुक्मिसाल्वचेदिपैः सहितो मागधः हरिं श्रीकृष्णं अभिषेकार्थं न यातु इति जरासुतादिकान् अवदत् । दूतमुखेन अवददित्यन्वयः ॥४५॥

ततस्तु तान् विनाऽपरेऽधिराजराज इत्यमुम् ।
तदाऽभिषेक्तुमुद्यता नृपाः सुरेशशासनात् ॥४६॥

**वरदराजीया–** ततस्तु तस्मादेव कारणात् सुरेशस्य इन्द्रस्य शासनात् तान् जरासुतादीन् विहाय परे नृपाः अमुं कृष्णं अधिराजानां राजेति अभिषेक्तुं अभिषेकिनं कर्तुं उद्यताः आरम्भं कृतवन्तः ॥४६॥

**जनार्दनीया–** ततः कारणात् अपरे नृपाः सुरेन्द्रशासनात् मागधादिचतुरः विना विहाय, अधिराजानां चक्रवर्तिनां राजेति अमुं कृष्णं अभिषेक्तुं तदा उद्यताः उद्योगवन्तो बभूवुरिति शेषः ॥४६॥

**भावचन्द्रिका–** अयमधिराजराजशब्दार्थः । राजानः प्रसिद्धाः अधिराजाः देवाः तेषां राजा इत्ययमर्थो हरिवंशे ॥ **सरुक्मीति** ॥ 'जरासन्धः सुनीथश्च रुक्मी चैव महारथः । साल्वः सौभपतिश्चैव चत्वारो राजसत्तमाः ॥ रङ्गस्याशून्यताहेतोः तिष्ठन्त्विह पार्थिवाः ॥'[२.५०.५६] इति हरिवंशेषु इन्द्रवचनोक्तेः । सुनीथः शिशुपालः ॥४६॥

**चट्टि–** ततः कारणात् अपरे नृपाः सुरेन्द्रशासनात् तान् मागधादीन् चतुरः विना अतिहाय, अधिराजानां चक्रवर्तिनां राजेति अमुं श्रीकृष्णं अभिषेक्तुं तदा उद्यताः उद्युक्ताः उद्योगवन्तो बभूवुरिति शेषः ॥४६॥

---

* 'उदीक्ष्य' इति वरदराजीयपाठः ।

**[1]अतः शचीपतिर्निजं वरासनं हरेरदात् ।**
**विवेश तत्र केशवो नभस्तलावतारिते ॥४७॥**

**वेदाङ्गतीर्थीया–** अतः तदनन्तरम् ॥४७-४८॥

**वरदराजीया–** अत एव शचीपतिः इन्द्रो निजं स्वकीयं वरासनं सिंहासनं हरेः कृष्णस्यार्थे अदात् प्रेषयामास । केशवः कृष्णः नभस्थलात् आकाशादवतारिते तत्र वरासने विवेश उपविष्टवान् ॥४७॥

**अनन्तभट्टीया–** विवेश उपनिविष्टः ॥४७॥

**जनार्दनीया–** अदात् प्रेषयामास । नभस्थलात् आकाशात् अवतारिते आगते सति तत्र वरासने विवेश उपविष्टोऽभूत् ॥४७॥

**चट्टि–** ततः शचीपतिः इन्द्रः निजं स्वकीयं वरासनं सिंहासनं हरेः श्रीकृष्णस्य अदात् प्रेषयामास । नभस्थलात् आकाशात् अवतारिते आगते तत्र वरासने केशवः विवेश उपविष्टोऽभूत् ॥४७॥

**करे प्रगृह्य केशवो न्यवेशयत् सहाऽसने ।**
**[2]पतत्रिपुङ्गवं च तौ स भीष्मकानुजौ प्रभुः ॥४८॥**

**व्यासतीर्थीया–** सह आसने एकासने ॥४८॥

**वरदराजीया–** पतत्रिपुङ्गवं गरुडं भीष्मकानुजौ क्रथकैशिकौ स्वात्मना सह आसने सिंहासने करे गृहित्वा न्यवेशयत् उपवेशयामास । चत्वारोऽपि उपविष्टा इति भावः ॥४८॥

**अनन्तभट्टीया–** करे प्रगृह्य करं प्रगृह्येत्यर्थः । तौ भीष्मकानुजौ सहासने एकासने ॥४८॥

**जनार्दनीया–** प्रभुः स केशवः पतत्रिपुङ्गवं गरुडं भीष्मकानुजौ तौ क्रथकैशिकौ करे करं प्रगृह्य, सहासने एकासने इन्द्रप्रेषितासन इत्यर्थः । न्यवेषयत् उपवेषयामास ॥४८॥

---

१. इन्द्रदूतेन चित्राङ्गदेन सन्देशकथनसमये उक्तं अत्र अतिदिशति भगवनाचार्यः । तथाहि– 'न युक्तमासनं दातुं त्वयासीनं नराधिप । इदमस्यासनं दिव्यं सर्वरत्नविभूषितम् ॥ जाम्बूनदमयं शुभ्रं रचितं विश्वकर्मणा । प्रेषितं देवराजेन सिंहलक्षणलक्षितम् ॥ अत्रोपविष्टं देवेशं चराचरनमस्कृतम् । अभिषिञ्चन्तु राजेन्द्रं बहुभिः पार्थिवैः सह ॥' इति विष्णुपर्वणि ५०.२८-३०। 'गते कृष्णे महावीर्ये आदाय वरमासनम् । सभामादाय देवाश्च प्रययुस्त्रिदशालयम् ॥' इति विष्णुपर्वणि ५१.७० ।

२. 'वैनतेयश्च बलवान् कामरूपी नराकृतिः । दक्षिणं पार्श्वमाश्रित्य आसनस्थो महाबलः ॥ क्रथश्च कैशिको वीरो वामपर्श्वे तथासने । उपविष्टौ महात्मानौ देवस्यानुमते नृपौ' ॥

**चट्टि–** प्रभुः स केशवः श्रीकृष्णः पतत्रिपुङ्गवं गरुडं तौ पूर्वोक्तौ भीष्मकानुजौ क्रथकैशिकौ च करे करं प्रगृह्य, सहासने एकासने इन्द्रप्रेषितासन इत्यर्थः । न्यवेषयत् उपवेषयामास ।।४८।।

**अथाखिला नरेश्वरा मुनीन्द्रसंयुता हरिम् ।**
**[१]सुशातकौम्भकुम्भकैः प्रचक्रुरभिषेकिणम् ।।४९।।**

**व्यासतीर्थीया–** सुशातकौम्भानां हेमनिष्पन्नानां कुम्भानां कैरुदकैः ।।४९।।

**वेदाङ्गतीर्थीया–** अतः तदनन्तरं सुशातकौम्भकुम्भकैः सौवर्णकुम्भसम्भृतोदकैः ।।४९-५१।।

**वरदराजीया–** सुशातकौम्भकुम्भकैः सुवर्णानां कुम्भानां सम्बन्धिभिः उदकैरभिषेकिणं अभिषिक्तं प्रचक्रुः ।।४९।।

**अनन्तभट्टीया–** शातकौम्भानां सुवर्णनिर्मितानां सम्बन्धि कैरुदकैः ।।४९।।

**जनार्दनीया–** शातकुम्भसम्बन्धिनः शातकौम्भाः शोभनाश्च ते शातकौम्भाश्च सुवर्णनिर्मिताः, ते च ते कुम्भाश्च, तेषु विद्यमानानि च तानि कानि च जलानि, तैः । हरिं अभिषेकिणं अभिषेकवन्तं प्रचक्रुः । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भम्...।।' इत्यमरः ।।४९।।

**ताम्रपर्णीया–** सुशातकौम्भकुम्भकैः शातकौम्भानां सौवर्णानां कुम्भानां कैरुदकैः ।।४९-५१।।

**चट्टि–** अथ अनन्तरं अखिलाः नरेश्वराः मुनीन्द्रसंयुताः सन्तः । शातकुम्भं सुवर्णं शातकुम्भसम्बन्धिनः शातकौम्भाः, ते च ते कुम्भाश्च शातकौम्भकुम्भाः, शोभनाश्च ते शातकौम्भकुम्भाश्च, तेषु विद्यमानानि च तानि कानि च जलानि च तैः । हरिं अभिषेकिणं अभिषेकवन्तं प्रचक्रुः । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भम्... ।।' इत्यमरः ।।४९।।

**[२]विरिञ्चशर्वपूर्वकैरभिष्टुतः सुरादिभिः ।**
**समस्तदेवगायकैः प्रगीत आस केशवः ।।५०।।**

---

१. 'इमे चैवाष्टकलशा निधीनामंशसम्भवाः । अक्षया राजराजस्य धनेशस्य महात्मनः ।। दिव्याः काञ्चनरत्नाढ्या दिव्याभरणयोनयः । राजेन्द्रस्याभिषेकार्थं आगच्छन्ति नृपैर्वृताः ।।' इति [२.५०.३२-३३] विष्णुपर्वगतवाक्येन शातकौम्भकुम्भानां शोभनाता उच्यते । तदिदं 'सु'शब्देन सङ्गृह्णाति भगवानाचार्यः ।

२. 'दूरादेव प्रकाशन्ती पताकाध्वजमालिनी । शुभा देवसभा रम्या स्नानहेतोरिहागता ।।६१।। गन्धर्वा मुनयश्चैव किन्नराश्च समन्ततः । उपगायन्ति देवेशं अम्बरान्तरमाश्रिताः ।।६४।। स्तुवन्ति मुनयश्चैव सिद्धाश्च परमर्षयः । देवदुन्दुभयश्चैव स्वयमेवानदन् दिवि ।।६५।। अष्टौ ये लोकपालास्ते स्वासु दिक्षु समास्थिताः । उपगायन्ति नृत्यन्ति स्तुवन्ति च समन्ततः ।।६८।।' इत्यादि हरिवंशोक्तं [विष्णुपर्व.५०.६१] सङ्गृह्णाति– विरिञ्चेति ।।

**वरदराजीया–** विरिञ्चादिपूर्वकैः सुरैः । समस्तैः देवगायकैः देवगन्धर्वैः ।।५०।।

**जनार्दनीया–** पूर्वकैः सुरादिभिः ।।५०।।

**चट्टि–** केशवः श्रीकृष्णः विरिञ्चशर्वपूर्वकैः सुरादिभिः अभिष्टुतः समस्तदेवगायकैः देवगन्धर्वैश्च प्रगीतः आस ।।५०।।

**अथाऽह भीष्मकं प्रभुः स्वयंवरः किल त्वया ।**
**अभीप्सितः सुताकृते शुभाय ते भवेन्न सः ।।५१।।**

**वादिराजतीर्थीया–** स्वयंवरः किलेत्यत्र स्वयंवरः चैद्यं प्रति स्वयंवरः ।।५१-५२।।

**वरदराजीया–** प्रभुः कृष्णः भीष्मकमाह । किमिति । सुताकृते रुक्मिण्यर्थे स्वयंवरः यस्त्वयाभीप्सितः किल । सः स्वयंवरः ते शुभाय क्षेमाय न भवेत् । अन्यस्मै दातुं उद्यमः सुखकरो न भवतीति भावः ।

**जनार्दनीया–** त्वया सुताकृते पुत्र्यर्थं स्वयंवरो अभीप्सितो वाञ्छितः किल । सः स्वयंवरः ते शुभाय पुण्याय न भवेत् ।।५१।।

**चट्टि–** अथ अनन्तरं प्रभुः श्रीकृष्णः भीष्मकमाह । किमिति । सुताकृते पुत्र्यर्थं त्वया स्वयंवरो अभीप्सितो वाञ्छितः किल । सः स्वयंवरः ते शुभाय पुण्याय न भवेत् ।।५१।।

**[१]इयं रमा तवाऽऽत्मजा बभूव तां हरेर्न चेत्[२] ।**
**ददाति चेत् तदा पिता निरिन्दिरो व्रजेदधः ।।५२।।**

**वेदाङ्गतीर्थीया–** रमा इयं ममैषा तवात्मजा बभूव । पिता तस्याः पिता भवान् तां हरेः मम ददाति न । अन्यस्मै ददाति चेत् तदा तर्हि निरिन्दिरः निःश्रीकः श्रीरहितः अधः अधोलोकं व्रजेदिति योजना ।।५२।।

**वरदराजीया–** रमैव इयं तवात्मजा बभूव । पिता जनको तां हरेः हरये न ददाति चेत् अन्यस्मै दातुं इच्छति चेत् इत्यपि ग्राह्यम् । तदा निरिन्दिरः दरिद्रः इन्दिराप्रसादरहितो वा सन् अधः तमो व्रजेत् ।।५२।।

---

१. 'रुक्मिणी नाम ते कन्या न सा प्राकृतमानुषी । श्रीरेषा ब्रह्मवाक्येन जाता केनापि हेतुना ।। न च सा मनुजेन्द्राणां स्वयंवरविधिक्षमा । एका त्वेकाय दातव्या इति धर्मो व्यवस्थितः ।। न च तां शक्ष्यसे राजन् लक्ष्मीं दातुं स्वयंवरे । सदृशं वरमालोक्य दातुमर्हसि धर्मतः ।।' इत्याद्युक्तं सङ्गृह्णाति- इयं रमेत्यादिना ।।

२. 'हरेर्न च' इति पाठान्तरमिति ताम्रपर्णीटिप्पण्याम् ।

**अनन्तभट्टीया–** हरेः हरये । उपलक्षणमेतत् । अन्यस्मै दातुमिच्छति चेत् ।।५२।।

**जनार्दनीया–** रमा लक्ष्मीः इयं रुक्मिणीनाम्नी सती तव आत्मजा बभूव । यदि पिता रुक्मिणी पिता भवान् तां रुक्मिणीं हरेः अथ न ददाति दातुं नेच्छति चेत्, अन्यस्मै ददाति चेत् तदा तर्हि निरिन्दिरः श्रीरहितः । सम्पद्धीन इत्यर्थः । तादृशः सन् अधः तमो व्रजेत् ।।५२।।

**ताम्रपर्णीया–** ।। **इयं रमेति** ।। एकश्चेत् शब्दो यद्यर्थे अन्यस्तर्हीत्यर्थः । तदा शब्दस्तस्मादित्यर्थे । तदैव निरिन्दिरो व्रजेन्न कालव्यवधानेनेति वा । 'हरेर्न च' इति क्वचित् पाठः ।।५२-६०।।

**अतिविशद–** इयं रमा तवात्मजा...अधः इत्यत्र चेत् चेदिति पदद्वयमस्ति तत्रैकेनैव चरितार्थत्वात् एकं व्यर्थमिति चेन्न । इयं तवात्मजा रमा चेत् बभूव तां पिता हरेर्न ददाति चेत् तदा तर्हि निरिन्दिरो अधः व्रजेदित्यन्वये द्वयोरप्यवैय्यर्थ्यात् । इदं वाक्यं तर्करूपं चेत् इत्यादितल्लक्षणात् । तथाच अत्र तां पिता हरेर्न ददाति चेत् इत्यापादकपरं तर्हि निरिन्दिरो व्रजेदध इत्यापाद्यपरम् । तर्के चापादकस्यापाद्येन व्याप्तिरवश्या । यद्यत्र इयं तवात्मजा रमा चेत् बभूवेत्येतद्विना तां पिता हरेर्न ददाति चेत् तर्हि निरिन्दिरो अधः व्रजेदित्येवोक्तौ न व्याप्तिः । या सुता सा हरे... अन्यथा तत्पितुरनर्थ इत्येतस्य कुत्राप्यदृष्टत्वात् । इयं तवात्मजा रमा चेत् बभूव तां पिता हरेर्न ददाति चेत् इत्युक्तावेतस्योपपादकवाक्येन यत्सुता रमा तां हरेर्न ददाति चेत् पिता निरिन्दिरः सन् अधो व्रजेदिति व्याप्तेः । 'ज्येष्ठभ्राता पितृसमः' इत्यादिना पितृसमेषु रुक्मिप्रभृतिषु रुक्मिण्या हरेरदानदोषादिना अधःपातादेः स्मृत्यादिसिद्धत्वेन तथैव सिद्धत्वात् । अधो व्रजेदित्यादिना आपाद्यस्यानिष्टत्वमुक्तमेव प्रतितर्केण प्रतिघाताद्यङ्गत्रयमपि ज्ञातव्यमिति । अन्ययोजनायां अन्यस्मै... चेदित्यध्याहारादिदोषः । हरेर्न ददाति चेदित्यनेन आदातुरधोगमनसम्भवे पुनः अन्यस्मै ददाति चेदित्यादेः वैयर्थ्यमेव । अथवा यत्तदोर्नित्यसम्बन्धात् तामिति श्रूयमाणत्वात् या रमा बभूव तां हरेर्न ददाति चेत् तदा पिता निरिन्दिरः सन् अधो व्रजेदिति लुप्तोपमा । यथेत्यध्याहारो वा । तवात्मजा इयं चेत् रमा चेत् तवापि तथेति ।।५२।।

**चट्टि–** रमैवेयं रुक्मिणीनाम्नी सती तव आत्मजा बभूव । यदि पिता रुक्मिणी पिता भवान् तां रुक्मिणीं हरेः न ददाति दातुं नेच्छति चेत्, अन्यस्मै ददाति चेत् तदा तर्हि निरिन्दिरः श्रीरहितः । सम्पद्धीन इत्यर्थः । इन्दिराप्रसादरहितो वा । तादृशः सन् अधः तमो व्रजेत् ।।५२।।

**हिताय चैतदीरितं तवान्यथा न चिन्तय ।**
**न योषिदिच्छया त्वहं ब्रवीमि पश्य यादृशः ।।५३।।**

**व्यासतीर्थीया–** [हरेरन्यस्मै] दातुमिच्छति चेत् नान्ययेत्युक्तं विस्पष्टमाह– **न योषिदिति** ।। अहं यादृशस्तादृशम् ।।५३।।

**वेदाङ्गतीर्थीया–** अहं यादृशः तादृशं मां पश्य ।।५३।।

**वरदराजीया–** रुक्मिण्याशया अहं वदामीति न भ्रमितव्यमित्याह– **हितायेति** ।। अन्यथा प्रकारान्तरं न विचिन्तय न विचारय । अन्यथा नेत्युक्तं विवृणोति– **नेति** ।। योषिदिच्छया भार्येच्छया न ब्रवीमि । किन्तु यादृशोऽहं तं मां पश्य ।।५३।।

**अनन्तभट्टीया–** अहं यादृशः यादृशमहिमयुक्तः तत्पश्य ।।५३।।

**जनार्दनीया–** एतद्वाक्यं तव हिताय ईरितं उक्तम् । अन्यथा स्वप्रयोजनार्थमितीरितमिति न चिन्तय । अहं योषितः भार्यायाः इच्छया न ब्रवीमि । कुतः? अहं यादृशः यादृशसम्पद्युक्तः तादृशं मां पश्येति ।।५३।।

**चट्टि–** एतद्वाक्यं तव हिताय ईरितं उक्तम् । अन्यथा स्वप्रयोजनार्थमितीरितमिति न चिन्तय । अहं योषितः भार्यायाः इच्छया न ब्रवीमि । कुतः ? अहं यादृशः यादृशसम्पद्युक्तः तादृशं मां पश्येति आहेति पूर्वेण सम्बन्धः ।।५३।।

**उदीर्य चैवमीश्वरश्चकार हाविरात्मनः ।**
**स विश्वरूपमुत्तमं विसङ्ख्यशीर्षबाहुकम् ।।५४।।**

**वेदाङ्गतीर्थीया–** स ईश्वरः एवमुदीर्य आत्मनो विश्वरूपमाविश्चकार ।।५४।।

**वादिराजतीर्थीया–** योषिदिच्छया नेति प्रमापयितुं मत्स्यकूर्माद्यनन्तरूपाण्यपि स्वविश्वरूपे दर्शितवानिति भावेन विसङ्ख्यरूपसंयुतमित्युक्तम् ।।५४- ५६।।

**वरदराजीया–** इत्युदीर्य ईश्वरः कृष्णः आत्मनः स्वस्योत्तमं विश्वरूपं परिपूर्णरूपं आविश्चकार ह प्रदर्शयामास । विश्वरूपमेव वर्णयति– **विसङ्ख्येत्यादिना** ।। विसङ्ख्याः सङ्ख्यारहितानि शीर्षाणि शिरांसि बाहवो यस्य स तथा ।।५४।।

**भावविवृति–** उदीर्य चैवमीश्वर इत्यत्र चशब्दो दिव्यदृष्टिं प्रदायेति सूचकः । द्वितीयश्चशब्दः तद्योग्यरूपं अदर्शयदिति सूचकः ।।५४-७४।।

**जनार्दनीया–** ईश्वरः स कृष्णः उदीर्य, आत्मनः विश्वरूपं आविश्चकार ह प्रकटमकरोत् । कथं भूतम्? उत्तमम् । शीर्षाणि शिरांसि च बाहवश्च, विसङ्ख्याः विगतसङ्ख्याः शीर्षाबाहवो यस्य तत् ।।

**चट्टि–** ईश्वरः स श्रीकृष्णः एवं उदीर्य, आत्मनः स्वस्य उत्तमं विश्वरूपं परिपूर्णरूपं आविश्चकार ह प्रदर्शयामास । विश्वरूपमेव दर्शयति– **विसङ्ख्यशीर्षबाहुकमित्यादिना** ।। विसङ्ख्याः विगतसङ्ख्याः विगतसङ्ख्याकानि शीर्षाणि शिरांसि बाहवो यस्य तत् ।।५४।।

**[1]अनन्ततेज आततं विसङ्ख्यरूपसंयुतम् ।**
**विचित्रमौलिकुण्डलाङ्गदोरुहारनूपुरम् ।।५५।।**

**वेदाङ्गतीर्थीया–** अनेकतेजआततं बहुतेजसा व्याप्तम् । अनेकतेजः आततं इति भिन्नं वा पदम्।।५५।।

**वरदराजीया–** अनन्ततेजसा अमिततेजसा आततं व्याप्तम् । विसङ्ख्यैरनन्तैः रूपैः संयुतम् । विचित्राणि मौल्यादीनि नूपुरान्तानि यस्य तत् तथा ।।५५।।

**जनार्दनीया–** अनेकं बहुप्रकारं तेजो यस्य तत् । आततं अण्डस्य अन्तर्बहिर्व्याप्तम् । विसङ्ख्यरूपैः अनन्तरूपैः संयुतम् । अङ्गदानि बाहुभूषणानि नूपुराणि पादभूषणानि विचित्राणि मौल्यादीनि यस्य तत् ।।५५।।

**चट्टि–** अनन्ततेजसा अमिततेजसा आततं व्याप्तम् । विसङ्ख्यैः अनन्तैः रूपैः संयुतं मौलयश्च कुण्डलानि च अङ्गदानि बाहुभूषणानि च उरुहाराश्च नूपुराणि पादभूषणानि च । विचित्राणि मौल्यादीनि यस्य तत् ।।५५।।

**ज्वलत्सुकौस्तुभप्रभाऽभिभासकं शुभाम्बरम् ।**
**प्रपश्य यादृशाः स्त्रियो ममेत्यदर्शयच्छ्रियम् ।।५६।।**

**वेदाङ्गतीर्थीया–** ताः प्रपश्य ।।५६।।

**वरदराजीया–** तथा ज्वलत्सुकौस्तुभस्य प्रभाया अप्यभिभासकं सुभासकम् । शुभान्यम्बराणि यस्य तत् तथा । मम यादृशाः स्त्रियः सन्तीति ताः प्रपश्य इत्युक्त्वा अनन्तरूपिणीं अनन्तरूपवतीं श्रियं रमाञ्च अदर्शयत् ।।५६।।

**अनन्तभट्टीया–** कौस्तुभप्रभासकस्तथोक्तः ।।५६।।

**जनार्दनीया–** ज्वलत् प्रकाशमानं तच्च तत् कौस्तुभं च, तस्य प्रभामभिभासयति प्रकाशयतीति तथा । शुभान्यम्बराणि वासांसि यस्य तत् । मम यादृशाः स्त्रियः सन्ति ता अपि प्रपश्येत्युक्त्वा,

---

१. 'अनेकतेज आततं' इति वेदाङ्गतीर्थीयजनार्दनीयटिप्पण्योः पाठान्तरम् ।

मनुष्यदृष्टितः मनुष्यज्ञानापेक्षया रुक्मिणीतनोरपि रुक्मिणीस्वरूपभूतायाः श्रिया अपीत्यर्थः । अधिकां, रूपेणेति शेषः । परां सर्वोत्तमां अनन्तरूपिणीं बहुरूपवतीं श्रियं अदर्शयत् । स्वविश्वरूपवत् रमाया अपि अनन्तरूपाण्यदर्शयदिति भावः । देवताश्च स्वरूपाश्रितब्रह्मादिदेवानपि व्यदर्शयत् । देवताः देव्यः जाम्ववत्यादिषण्महामहिष्यश्चेति वा । विमलादिस्वस्वरूपभूतशक्तयो वा ।।५६-५७।।

**चट्टि–** ज्वलत् प्रकाशमानं तच्च तत् कौस्तुभं च, तस्य प्रभामभिभासयति प्रकाशयतीति तथा । शुभान्यम्बराणि वासांसि यस्य तत् । मम यादृशाः स्त्रियः सन्ति ता अपि प्रपश्येत्युक्त्वा, मनुष्यदृष्टितः मनुष्यज्ञानापेक्षया रुक्मिणीतनोरपि रुक्मिणीस्वरूपायाः श्रियो अपीत्यर्थः । अधिकां रूपेणेति शेषः । परां सर्वोत्तमां अनन्तरूपिणीं बहुरूपवतीं श्रियं अदर्शयत् । स्वविश्वरूपवत् रमाया अपि अनन्तरूपाण्यदर्शयदिति भावः । देवताश्च स्वरूपाश्रितब्रह्मादिदेवानपि अदर्शयत् । देवताः देव्यः जाम्ववत्यादिषण्महामहिष्यश्चेति वा । विमलादिस्वस्वरूपभूतशक्तयो वा । ताश्च व्यदर्शयत् ।। ।।५६-५७।।

**अनन्तरूपिणीं परां मनुष्यदृष्टितोऽधिकाम् ।**
**स्वरुक्मिणीतनोरपि व्यदर्शयच्च देवताः ।।५७।।**

**वेदाङ्गतीर्थीया–** मनुष्यदृष्टितः मनुष्यदृष्ट्या । स्वरुक्मिणीतनोरपि अधिकां रूपादिगुणैरधिकाम् ।।५७।।

**वादिराजतीर्थीया–** अनन्तरूपिणीं 'रूपं स्वभावे सौन्दर्ये' इति वचनात् अनन्तसौन्दर्यवतीम् ।। **स्वरुक्मिणीतनोरपि** ।। मनुष्यदृष्टितः अधिकां न तु स्वभावतः । उभयोरैक्येन नीचोच्चभावायोगात् । एतादृशीं श्रियमदर्शयदिति पूर्वेणान्वयः । यद्वा 'यादृशाः स्त्रियः' इति बहुवचनप्रयोगात् उरसि अङ्क्योः असङ्ख्यातपादसेवार्थं च अनन्तरूपिणीमित्यर्थः ।।५७-५९।।

**वरदराजीया–** ननु रुक्मिण्या अपि रमास्वरूपत्वात् 'रुक्मिणीतनोरपि अधिकां अनन्तरूपवतीं श्रियं व्यदर्शयत्' इति कथमुक्तं इत्यत उक्तम्– **मनुष्यदृष्टित इति** ।। सौन्दर्यादिगुणविशेषैः स्वावतारभूताया अपि रुक्मिण्याः सकाशात् मनुष्यदृष्ट्यपेक्षया अधिकत्वेन दृश्यमानामिति भावः । स विश्वरूपे ब्रह्मादिदेवताश्च व्यदर्शयदित्यर्थः ।।५७।।

**अनन्तभट्टीया–** आगमादिबाधपरिहारार्थं मनुष्येत्युक्तम् । देवताः ब्रह्मादीन् ।।५७।।

**तदद्भुतं समीक्ष्य तु प्रभीत आशु भीष्मकः ।**
**पपात पादयोर्विभोः[1] करोमि तत् तथेति च ।।५८।।**

---
१. 'प्रभोः' इति वरदराजीये पाठान्तरम् ।

**वेदाङ्गतीर्थीया–** तत् त्वयोक्तं तथा करोमीति च वदन्निति शेषः ।।५८-५९।।

**वरदराजीया–** अद्भुतं तद्विश्वरूपं समीक्ष्य प्रभीतः अत्यन्तभीतः आस । विभोः [प्रभोः इति पाठान्तरम्] कृष्णस्य तव वचः यथोक्तं तथैव ।।५८।।

**जनार्दनीया–** अद्भुतं आश्चर्यकरं तद्विश्वरूपम् । तथा यथा त्वया उक्तं तथा तत्ते वाक्यं करोमीति ब्रुवन्, पपात ।।५८।।

**चट्टि–** अद्भुतं आश्चर्यकरं तद्विश्वरूपं समीक्ष्य भीष्मकः प्रभीतः अत्यन्तभीतः आस । तथा यथा त्वया उक्तं तथा तत्ते वाक्यं करोमीति ब्रुवन्, विभोः श्रीकृष्णस्य पादयोः पपात च ।।५८।।

**पुनश्च विश्वरूपतां पिधाय पद्मलोचनः ।**
**जगाम पक्षिवाहनः पुरीं स्वबाहुपालिताम् ।।५९।।**

**सत्याभिनवतीर्थीया–** तत्रैव पुनश्च विश्वरूपतां विधाय...इति श्लोके 'पुनः' इत्यस्य पुनः पुनः पादयोः पपातेति पूर्वेणान्वयः । एतेन 'पुनः' इत्येतत् व्यर्थमिति दूषणं निरस्तम् । पुनरित्यस्यावृत्तिं पपात पादयोः । करोमि तत्तथेति च इति पूर्ववाक्यस्थितपादयोः पपातेत्यनेनान्वयं च स्वीकृत्य पुनः पुनः पादयोः पपातेत्यर्थस्योक्तत्वात् ।।५९।।

**वरदराजीया–** पुनश्च अनन्तरं पिधाय आच्छाद्य पक्षिवाहनः गरुडवाहनः सन् स्वबाहुपालितां मधुरां पुरीं जगाम ।।५९।।

**जनार्दनीया–** पिधाय आच्छाद्य, पुरीं मधुराम् ।।५९।।

**चट्टि–** पद्मलोचनः श्रीकृष्णः विश्वरूपतां विश्वरूपं पुनः पिधाय आच्छाद्य पक्षिवाहनः गरुडवाहनः सन् स्ववाहुपालितां पुरीं मधुरां प्रति जगाम ।।५९।।

**अपाम्पतिश्च मैथिलः स्वयंवरं कृतावपि ।**
**हरिं विनिश्चयादियं व्रजेदिति स्म चक्रतुः ।।६०।।**

**व्यासतीर्थीया–** नन्विन्दिरास्वयंवरो नाशुभाय मैथिलादिभिः कृतत्वादिति शङ्कां तदभिप्रायकथनेन वारयति ।।६०।।

**वेदाङ्गतीर्थीया–** नन्विन्दिरास्वयंवरः शुभाय न चेत् नाज्ञानिनौ वरुणमैथिलौ किमिति स्वयंवरं अकुरुतामिति तत्राह– **अपांपतिरिति** ।।६०।।

**वादिराजतीर्थीया–** अनन्ययोग्या श्रीश्चेत् ज्ञानिना वरुणेन मिथिलेन च देवानां राज्ञां च मेलनं कृत्वा लक्ष्म्याः सीतायाश्च कुतः स्वयंवरः कृत इत्यत आह– **अपां पतिरिति** ।। स्वयंवरं कृतावपीत्यत्र स्वयंवरमुद्दिश्य कृतौ प्रयत्नेऽपि । यद्वा कृच्छब्दात् कृताविति द्विवचनप्रयोगः । स्वयंवरं कृतौ कुर्वाणावपि । इयं रमा हरिं व्रजेदिति विनिश्चयादेव चक्रतुरित्यन्वयः ।।६०।।

**वरदराजीया–** ननु भीष्मकेण क्रियमाणः रुक्मिणीस्वयंवरः कृष्णेन किमर्थं वारितः । यस्मै कस्मैचित् रुक्मिणीप्रदानेच्छायां महान् प्रत्यवायः स्यात् । तत्परिहारार्थमिति चेत् तर्हि पूर्वं वरुणजनकाभ्यां लक्ष्मीजानक्योः स्वयंवरोऽपि तयोः प्रत्यावायपरिहारार्थं वारणीयः प्रसज्येत इति इमामाशङ्कां परिहरति– **अपां पतिरित्यादिना** ।। अपांपतिर्वरुणो मैथिलो जनकश्च उभौ स्वयंवरं कृतावपि स्वयंवरकर्तारावपि इयं रमा जानकी च हरिमेव व्रजेदिति निश्चयादेव स्वयवरं चक्रतुः ।।६०।।

**अनन्तभट्टीया–** इन्दिरायाः स्वयंवरो न कार्यः । कथं वरुणजनकौ तमकुरुतामित्यत आह– **अपामिति** ।। कृतौ कृतवन्तौ ।।६०।।

**जनार्दनीया–** ननु रमायाः स्वयंवरं कर्तुः प्रत्यवायश्चेत् वरुणजनकयोः स्वयंवरः प्रत्यवायहेतुः कथं नाभूत् ? इत्यत आह- **अपां पतिरिति** ।। अपां पतिः वारां पतिः वरुणो, मैथिलो जनकः यद्यपि स्वयंवरं कृतावपि, इयं ममात्मजा रमेति वरुणः, इयं सीता रमेति जनकः, हरिं नारायणं रामं च निश्चयाद् व्रजेत् इत्यभिप्रायेण स्वयंवरं चक्रतुः स्म ।।६०।।

**चट्टि–** ननु रमायाः स्वयंवरं कर्तुः प्रत्यवायश्चेत् वरुणजनकयोः स्वयंवरः प्रत्यवायहेतुः कथं नाभूत्? इत्यत आह– **अपां पतिरिति** ।। अपां पतिः वरुणो मैथिलो जनकः यद्यपि स्वयंवरं कृतावपि तथापि इयं ममात्मजा रमेति वरुणः, इयं ममात्मजा रमेति जनकश्च हरिं नारायणं श्रीरामं च निश्चयाद् व्रजेत् इत्यभिप्रायेण स्वयंवरं चक्रतुः ।।६०।।

**स्वयंवरः क्षितेर्भुजां स्वधर्म इत्यतो द्वयोः ।**
**न दोष आस भीष्मको न केशवार्थमैच्छत ।।६१।।**

**व्यासतीर्थीया–** ननु मिथिलादेर्विनिश्चयादियं व्रजेदिति विनिश्चयश्चेत् कस्मात् तूष्णीं हरये न प्रादुरित्यत आह– **स्वयंवर इति** ।।६१-६२।।

**वेदाङ्गतीर्थीया–** तर्हि स्वयंवरं किमिति अकुरुतामिति तत्राह– **स्वयंवर इति** ।।६१-६९।।

**वादिराजतीर्थीया–** देवेष्वपि वायुसोमादित्यानां क्षत्रियत्वादादित्यगणस्थो वरुणोऽपि क्षत्रिय इति भावेनोक्तम्– **स्वयंवरः क्षितेर्भुजामिति** ।।६१-६३।।

**वरदराजीया–** नन्वेवं निश्चयश्चेत् तर्हि किमर्थं स्वयंवर इत्यत उक्तम्– **क्षितेर्भुजां** राज्ञां **स्वयंवरो धर्म इति** बुद्ध्या इति ।। **न त्वियं कश्चन व्रजेदिति** बुद्ध्येत्यर्थः । अतः काराणात् द्वयोः जनकवरुणयोः दोषः प्रत्यावायः नास न बभूव ।।६१।।

**अनन्तभट्टीया–** ननु हरिं व्रजेदिति निश्चयसद्भावे स्वयंवरः किमर्थं कृत इत्यत आह– **स्वयंवर इति** ।। वरुणस्यापि क्षत्रियत्वेन परिगणनान्नानुपपत्तिरित्याहुः ।।६१।।[1]

**जनार्दनीया–** ननु एवं निश्चयश्चेत् तर्हि स्वयंवरं किमित्यकुर्वतामित्यत आह– **स्वयंवर इति** ।। क्षितेर्भुजां राज्ञां स्वयंवरः स्वधर्म इत्यत इति हेतोश्चक्रतुरित्यर्थः । अतः द्वयोः वरुणजनकयोः । भीष्मकः केशवार्थं नैच्छत यतः ।।६१।।

**ताम्रपर्णीया–** हरिं व्रजेदिति निश्चयसद्भावे स्वयंवरः किमर्थं कृत इत्यत आह– **स्वयंवर इति** ।। वरुणस्यापि क्षत्रियत्वेन परिगणनान्नानुपपत्तिः ।।६१।।

**चट्टि–** नन्वेवं निश्चयश्चेत् तर्हि स्वयंवरं किमित्यकुर्वतामित्यत आह– **स्वयंवर इति** ।। क्षितेर्भुजां राज्ञां स्वयंवरः स्वधर्म इति हेतोश्चक्रतुरित्यर्थः । देवेष्वपि वायुसोमादीनां क्षत्रियत्वादादित्यगणस्थो वरुणोपि क्षत्रिय इति भावेनोक्तम्– **स्वयंवरः क्षितेर्भुजां स्वधर्म इति** ।। अतः द्वयोः वरुणजनकयोः दोषः नास न बभूव । भीष्मकः केशवार्थं नैच्छत ।।६१।।

**अतो हरौ प्रबोध्य तं गते कृपालुसत्तमे ।**
**वशीकृते च भीष्मके नृपास्त्वमन्त्रयन् पुनः ।।६२।।**

**वरदराजीया–** भीष्मकस्तु केशवार्थं रुक्मिणीं दातुं नैच्छत् । अतः महाप्रत्यवायपरिहारार्थं भीष्मकं प्रबोध्य अन्यस्मै न दातव्या मह्यमेव दातव्या इति बोधयित्वा हरौ कृष्णे गते सति । एतावत्करणहेतुः– **कृपालुसत्तम इति** ।। वशीकृते कृष्णेनेति शेषः ।।६२।।

**जनार्दनीया–** अतो दोषः स्यादिति । हरौ तं भीष्मकं प्रबोध्य सम्यग्बोधयित्वा, गते सति । कृष्णेन वशीकृते सति ।।६२।।

**ताम्रपर्णीया–** ।। **अतो हराविति** ।। यतस्तस्यादाने दोषो भवत्यतो दोषपरिहारार्थं तं प्रबोध्य कृपालुस्वरूपे हरौ गते सतीत्यर्थः ।।६२-६५।।

**चट्टि–** यतः अतो दोषः स्यादिति कृपालुसत्तमे हरौ तं भीष्मकं प्रबोध्य सम्यक् बोधयित्वा, गते सति भीष्मके वशीकृते च कृष्णेन इति शेषः । नृपाः पुनः अमन्त्रयन् ।।६२।।

---

१. इति हो.पुस्तकपाठः ।

**यशश्च धर्ममुत्तमं विधित्सता वृकोदरे ।**
**न केशवेन सूदितो जरासुतो हि मन्यते ॥६३॥**

**व्यासतीर्थीया–** मग्नाशयत्वादालोचनस्यावकाशत्वं परिहरन् तत्प्रकारमाह– **यशश्चेत्यादिना** ॥ ॥६३-६९॥

**वरदराजीया–** ननु वहुवारं कृष्णेन पराजितस्य जरासुतस्य पुनः कृष्णपराभवार्थं विचारः कथं प्रवृत्त इत्यतः कृष्णाभिसन्धिं अजानतः पुनः कृष्णजयार्थं चिन्तयतो जरासुतस्य अभिप्रायमाह– **यशश्चेत्यादिना** ॥ यशआदिकं वृकोदरे कर्तुं केशवेन अहतः जरासुतः एवं भ्रान्त्या मन्यते ॥६३॥

**जनार्दनीया–** पुनः पुनः कृष्णेन पराजितो जरासन्धः किमर्थं युद्धार्थं यतते इत्यत तदभिप्रायमाह– **यश इत्यादिना** ॥ वृकोदरे यशः धर्मं विधित्सता विधातुमिच्छता केशवेन न सूदितः न हतो । जरासन्ध इति मन्यते ॥६३॥

**भावचन्द्रिका–** केशवाभिप्रायमज्ञात्वा स्वयमन्यथा मन्यत इत्याहुः– **यशश्चेति** ॥६३॥

**चट्टि–** ननु श्रीकृष्णेन पराजितो जरासन्धः पुनः किमर्थं युद्धाय यतते इत्यत तस्याभिप्रायमाह– **यश इत्यादिना** ॥ वृकोदरे उत्तमं यशः धर्मं च विधित्सता विधातुमिच्छता केशवेन श्रीकृष्णेन न सूदितः न हतो जरासुत इति मन्यते ॥६३॥

**वराच्छिवस्य मामयं न हन्तुमीष्ट उत्तमात् ।**
**अतः शिवप्रसादतो जितोऽपि जेष्य उत्तरम् ॥६४॥**

**वादिराजतीर्थीया–** उत्तरं उत्तरकालं 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ॥६४-६९॥

**वरदराजीया–** तत्किमित्यत आह– **वरादिति** ॥ अयं कृष्णः मां हन्तुं नेष्टे न शक्तः । अतः उत्तरं उत्तरत्र जेष्ये ॥६४॥

**अनन्तभट्टीया–** उत्तरं उत्तरत्र ॥६४॥

**जनार्दनीया–** इतीति किम् ? अयं कृष्णः उत्तमात् वरात् हन्तुं नेष्टे न समर्थः । अतः कारणात् जितोऽपि पूर्वं पराजितोऽप्यहं शिवप्रसादतः उत्तरं उत्तरत्र जेष्य इति मन्यत इति सम्बन्धः ॥६४॥

**चट्टि–** इतीति किम् ? अयं श्रीकृष्णः उत्तमात् शिवस्य वरात् मां हन्तुं नेष्टे न समर्थः । अतः कारणात् जितोऽपि पूर्वं पराजितोऽप्यहं शिवप्रसादतः उत्तरं उत्तरत्र जेष्य इति मन्यत इति सम्बन्धः ॥६४॥

**मृधे मृधे जितोऽपि सन् दृढाशया पुनः पुनः ।**
**समीहते युधे शिवं न चावमन्यते क्वचित् ॥६५॥**

**वरदराजीया–** एवं जरासुतस्य निर्भयत्वे शिवे विश्वास एव कारणमित्याह– **मृध इति** ॥ प्रतियुद्धं जितः पराजितोऽपि युद्धे युद्धार्थं समीहते इच्छति । अत एव शिवं नावमन्यते ॥६५॥

**अनन्तभट्टीया–** युधे युद्धाय ॥६५॥

**जनार्दनीया–** जरासन्धस्य शिवे भक्तिदार्ढ्यं दर्शयति– **मृध इति** ॥ मृधे मृधे प्रतियुद्धं इत्यर्थः । जितः सन्नपि दृढाशया उत्तरोत्तरं जेष्यामि इति निश्चितेच्छया पुनः पुनः युधे युद्धार्थं समीहते यतते । क्वचिच्छिवं च नावमन्यते नैव तिरस्करोति ॥६५॥

**चट्टि–** एवं जरासुतस्य निर्भयत्वे विश्वास एव कारणमित्याह– **मृध इति** ॥ मृधे मृधे प्रतियुद्धं इत्यर्थः । जितः सन्नपि दृढाशया उत्तरत्र विजेष्यामि इति निश्चितेच्छया पुनः पुनः युधे युद्धार्थं समीहते यतते । क्वचिदपि शिवं न चावमन्यते नैव तिरस्करोति ॥६५॥

**अतः पुनश्च भूमिपानुवाच बार्हद्रथः ।**
**धिगेव पौरुषं हि नो यदेष नोऽजयत् सदा ॥६६॥**

**वरदराजीया–** बार्हद्रथः पुनरुवाच । किमिति । नोऽस्माकं पौरुषं धिक् । यत् यस्मादेषः कृष्णः सदा नः अस्मान् अजयत् ॥६६॥

**अनन्तभट्टीया–** यद्यस्मादजयत् उत्तत्र अस्मज्जयीत्यन्वयः । अथवा पत्यार्थिकाणो बृहच्छब्दानन्तर्यं। छान्दसत्वन्नानुगमश्च । अथवा बृहदिति द्रष्टव्यम् ॥६६॥[१]

**जनार्दनीया–** अतश्च अत एव उवाच । किमिति ? नः पौरुषं धिक् दहतु । कुतः ? यद्यस्मात् एषः कृष्णः नोऽस्मान् सदा प्रतियुद्धे अजयत् जितवान् किल ॥६६॥

**ताम्रपर्णीया–** ॥ **बार्हद्रथ इति** ॥ अत्र शुनःशेपन्यायेन बार्हद्रथः तदिति पदच्छेदः । यस्मादजय तस्मात् धिगित्यन्वयः ॥६६-६९॥

**चट्टि–** अतश्च अत एव पुनः भूमिपान् बार्हद्रथः जरासन्धः उवाच । किमिति? नः पौरुषं धिक् दहतु । कुतः? यद्यस्मात् एषः श्रीकृष्णः नोऽस्मान् सदैव प्रतियुद्धेऽपि अजयत् हि जितवान् किल ॥६६॥

---

१. अनन्तभट्टीया– बार्हद्रथ इति । अत्र शुनश्शेपन्यायेन बार्हद्रथः । तदिति परिच्छेदः [पदच्छेदः] ॥ इति हो.पुस्तकपाठः ।

**अभूपतेर्न चाऽसनं प्रदेयमित्युदाहृतम् ।**
**अमुष्य नस्तदन्यथा बभूव चिन्तितं नृपाः ॥६७॥**

**वरदराजीया–** अभूपतेः राजपदवीरहितस्य अमुष्य कृष्णस्यासनं न देयमिति अस्माभिः उदाहृतम् । तत् चिन्तितं वाञ्छितं कार्यं अन्यथाबभूव विपरीतं जातम् ॥६७॥

**जनार्दनीया–** अभूपतेः अराज्ञः अमुष्य कृष्णस्य । उदाहृतं अस्माभिरुक्तम् । हे नृपाः नोऽस्माकं चिन्तितं तत् आसनादिकं न देयमिति चिन्तितं अन्यथा विपरीतं बभूव ॥६७॥

**चट्टि–** अभूपतेः अराज्ञः अमुष्य श्रीकृष्णस्य आसनं न प्रदेयमित्युदाहृतम् । हे नृपाः नोऽस्माकं तच्चिन्तितं आसनादिकं न देयमिति चिन्तितं अन्यथा विपरीतं बभूव ॥६७॥

**अयं नृपोत्तमाङ्कणे महेन्द्रपीठमारुहत् ।**
**समस्तराजराजतामवाप नोऽप्यनिच्छताम् ॥६८॥**

**वरदराजीया–** अन्यथात्वमेव दर्शयति– **अयमिति** ॥ अयं कृष्णः नृपोत्तमस्य भीष्मकस्याङ्कणे, नृपोत्तमानां सर्वेषां राज्ञामङ्कणे सभायामिति वा । महेन्द्रपीठं इन्द्रसिंहासनं नोऽस्माकं अनिच्छतां सताम् ॥६८॥

**अनन्तभट्टीया–** अनिच्छतां सताम् ॥६८॥

**जनार्दनीया–** 'अन्यथा' इत्युक्तं विवृण्वन्नाहेत्याह । अयं कृष्णः नृपोत्तमस्य भीष्मकस्य, अङ्कणे महेन्द्रपीठं इन्द्रसिंहासनं आरुहत् आरुरोह । अनिच्छतां नः सकाशात्, समस्तानां राज्ञां राजतां राजत्वं चक्रवर्तित्वम् । श्रेष्ठत्वमिति यावत् । अवाप ॥६८॥

**चट्टि–** अन्यथा इत्युक्तं विवृण्वन्नाहेत्याह– **अयमिति** ॥ अयं श्रीकृष्णः नृपोत्तमस्य भीष्मकस्य, नृपोत्तमानां राज्ञां वा अङ्गणे महेन्द्रपीठं इन्द्रसिंहासनं आरुहत् आरुरोह । अनिच्छतां नः सकाशात् समस्तानां राज्ञां राजतां राजत्वं चक्रवर्तित्वम् । श्रेष्ठत्वमिति यावत् । अवाप ॥६८॥

**अतः पुनः कथं हरिं वयं जयेम चिन्त्यताम् ।**
**यथा च भीष्मकात्मजामवाप्नुयाच्च चेदिराट् ॥६९॥**

**वरदराजीया–** जयेमेति चिन्त्यताम् । जयोपायो विचार्य इत्यर्थः । अन्यदपि चिन्तितमित्याह– **यथेति** ॥६९॥

**अनन्तभट्टीया–** चिन्त्यतां तथा चिन्त्यताम् ।।६९।।

**जनार्दनीया–** अतः पुनः इतः परं कथं जयेम? तच्चिन्त्यताम् । चेदिराट् शिशुपालः । अवाप्नुयात् । तच्चापि चिन्त्यताम् ।।६९।।

**चट्टि–** अतः पुनः इतः परं हरिं वयं कथं जयेम? तच्चिन्त्यताम् । चेदिराट् शिशुपालः यथा च भीष्मकात्मजां अवाप्नुयात् तच्चापि चिन्त्यताम् ।।६९।।

**अयं हि दत्तपुत्रको म औरसाद् विशिष्यते ।**
**अतो निवेश्य एष मे सुरूपिणी च रुग्मिणी ।।७०।।**

**व्यासतीर्थीया–** निवेश्य आग्रहविषयः ।।७०।।

**वेदाङ्गतीर्थीया–** निवेश्यः उवाह्यः ।।७०-७४।।

**वादिराजतीर्थीया–** अयं हि दत्तपुत्रक इत्यत्र अयं शिशुपालः स्वपित्रा दमघोषेण पुत्रवदेनं परिपालय विवाहं च कारयेति मत्करे दत्तत्वात् दत्तपुत्रक इत्यर्थः । मे औरसात् पुत्रात् सहदेवादपि विशिष्यते । अतो निवेश्य इत्यत्र निवेश्यः उद्वाह्यः ।।७०-७१।।

**मधुसूदनीया– ।। अयं हि दत्तपुत्रक इति ।।** शिशुपालस्य जरासन्धदत्तपुत्रत्वं च वसुवंशजदमघोषेण जरासन्धाय दत्तत्वात् । 'चेदिराजस्य तु वसोरासीत् पुत्रो बृहद्रथः । वसोरेव तदा वंशे दमघोषोऽपि चेदिराट् ।। जरासन्धस्तु सुतवद्ददर्शैनं जुगोप च ।।' इति हरिवंशे [२.५९.२०-२४] । निवेश्यः उद्वाह्यः विवाह्य इति यावत् । 'निवेशः शिखरोद्वाहे विन्यासेषु प्रकीर्तितः' इति विश्वः । वरदराजाचार्यस्तु 'निवेश्यः निर्वाह्यः पालनीय एवेत्यर्थः' इति व्याचक्षते । तन्न । प्रमाणविरुद्धत्वात् अप्रामाणिकत्वाच्च । निवेशनस्यैवशब्दार्थत्वेन पालनस्याऽशब्दार्थत्वाच्च ।।७०-७८।।

**वरदराजीया–** हि यस्मादयं शिशुपालो मे दत्तपुत्रकोऽपि औरसपुत्रात् सहदेवात् विशिष्यते । अत एव शिशुपालो मे मया निवेश्यः निर्वाह्यः पालनीय एवेति भावः । रुक्मिणी च सम्पाद्या इति शेषः ।।७०।।

**अनन्तभट्टीया–** निवेश्यः विवाह्यः ।।७०।।

**जनार्दनीया–** अयं चेदिराट् मे दत्तपुत्रकः औरसात् वीर्यजादपि विशिष्यते । यतः अतः एषः शिशुपालः मे मया निवेश्यः उद्वाह्यः । 'निवेशः शिबिरोद्वाहनिश्वानेषु प्रकीर्तितः' इति शाश्वतः । सुरूपिणी च रुक्मिणी च योग्या ।।७०।।

**ताम्रपर्णीया–** अतो निवेश्य इति । चो हेतौ । यतः सुरूपिणी रुक्मिण्यतस्तस्यामेष मया निवेश्यः स्थापनीय इत्यर्थः ।।७०।।

**चट्टि–** अयं चेदिराट् मे दत्तपुत्रकः औरसात् वीर्यजादपि विशिष्यते । यतः अतः एषः शिशुपालः मे मया निवेश्यः उद्वाह्यः इत्यर्थः । रुक्मिणी सुरूपिणी च अतः इयमेव भाव्या । तदुक्तं विष्णुपुराणे– 'तस्मादन्तर्जलान् निष्क्रम्य निवेष्टुकामः कन्यार्थं मान्धातारं अगच्छति ।' 'निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः' इति विश्वः। शिशुपालस्य जरासन्धदत्तपुत्रत्वं वसुवंशजदमघोषेण जरासन्धाय दत्तत्वात् । 'वसोरेव तदा वंशे दमघोषोऽपि चेदिराट् । चेदिराजस्य तु वसोरासीत् पुत्रो बृहद्रथः ।। जरासन्धः स्वसुतवत् ददृशे तं जुगोप च ।।' इति हरिवंशे [२प.५९अ.२०-२४] ।।७०।।

**शिवागमेषु शिष्यकाः सरुक्मिसाल्वपौण्ड्रकाः ।**
**ममाखिला नृपास्ततः कुरुध्वमेतदेव मे ।।७१।।**

**वरदराजीया–** रुक्म्यादिभिः सह वर्तमानाः अखिलाः नृपाः शिवागमेषु विषये मम शिष्यकाः । ततः तस्मात् गुरुभूतस्य मे एतदेव मयोक्तमेव कार्यम् ।।७१।।

**अनन्तभट्टीया–** मम शिष्यकाः । यत्प्रागुक्तम् ।।७१।।

**जनार्दनीया–** शिवागमेषु मम शिष्यकाः यतः अतः मे एतदेव अभीष्टं कुरुध्वम् ।।७१।।

**ताम्रपर्णीया–** ।। **सरूक्मिसाल्वेति** ।। यद्यपि पौण्ड्रको 'नान्यो मत्तो विष्णुरस्ति' इति वादी तथापि विष्णो रुद्रादत्यवमताज्ञानात् जरासन्धभयाच्च तच्छिष्यत्वमुपपद्यते ।।७१-७३।।

**चट्टि–** सरुक्मिसाल्वपौण्ड्रकाः अखिलाः नृपाः यतः शिवागमेषु मम शिष्यकाः ततः मे एतदेव अभीष्टं कुरुध्वम् ।।७१।।

**इतीरिते तु सौभराड् जगाद रुक्मिसंविदा ।**
**स्वयंवरो निवर्तितः स्वसारमेष दास्यति ।।७२।।**

**वादिराजतीर्थीया–** स्वयंवरो निवर्तित इत्यत्र प्रतापातिशयं दृष्ट्वा कन्या यत्र स्वयमेव वरं वरयति स स्वयंवरः ।।७२-७३।।

**वरदराजीया–** सौभराट् साल्वः रुक्मिसंविदा रुक्मिसंवादात् समेत्य जगाद । किमिति । रुक्मिण्याः स्वयंवरो निवर्तितः विसर्जितः । एषः रुक्मी स्वसारं भगिनीं दास्यति । शिशुपालायेति शेषः ।।७२।।

**अनन्तभट्टीया–** संविदा अनुमत्या । दास्यति शिशुपालायेति शेषः ।।७२।।

**जनार्दनीया–** रुक्मिणः संविदा अनुमतेन स्वयंवरः निवर्तितः त्यक्तः । एषः रुक्मी स्वसारं भगिनीं शिशुपालाय दास्यति ।।७२।।

**चट्टि–** जरासन्धेन इतीरिते सति सौभराट् साल्वः रुक्मिणः संविदा अनुमतेन । स्वयंवरः निवर्तितः त्यक्तः । एषः रुक्मी स्वसारं रुक्मिणीं शिशुपालाय दास्यतीति जगाद । वरस्य प्रतापातिशयं दृष्ट्वा कन्या यत्र स्वयं वरं वरयति सः स्वयंवरः इत्यर्थः ।।७२।।

**न चातिवर्तितुं क्षमः पिताऽस्य चेदिपाय ताम् ।**
**प्रदातुकाममात्मजं वयोगतस्तथाऽबलः ।।७३।।**

**वरदराजीया–** तां रुक्मिणीं चेदिपाय प्रदातुकामं आत्मजं रुक्मिणं अतिवर्तितुं अस्य रुक्मिणः पिता भीष्मको न क्षमो न शक्तः । यतो वयोगतो वृद्धः तथा अबलो दुर्बलश्च ।।७३।।

**जनार्दनीया–** अस्य रुक्मिणः पिता तां रुक्मिणीं, प्रदातुं कामो यस्य तम् । पुत्रं अतिवर्तितुं अतिक्रान्तुं न क्षमः न समर्थः । कुतो ? यतो वयोगतः वृद्धः तथा अबलः निर्बलः ।।७३।।

**चट्टि–** अस्य रुक्मिणः पिता भीष्मकः चेदिपाय शिशुपालाय तां रुक्मिणीं, प्रदातुं कामो यस्य सः तम् । पुत्रं अतिवर्तितुं न क्षमः न समर्थः । कुतो ? यतो वयोगतः वृद्धः तथा अबलः निर्बलश्च ।।७३।।

**स्वयं तु कृष्ण एत्य नो विजित्य कन्यकां हरेत् ।**
**ततोऽस्य पूर्वमेव नो ह्यभावता कृता शुभा ।।७४।।**

**व्यासतीर्थीया–** ततः हरात् [हरणात्] ।।७४।।

**वादिराजतीर्थीया–** अभावता कृता शुभेत्यत्र अस्य कृष्णस्य पूर्वमेव या अभावता कृता गर्गेणैव कृता सा नः अस्माकं शुभा हि ।।७४।।

**वरदराजीया–** कृष्ण आगतश्चेत् निवारणे उपायः क इत्यत कृष्णाभाव एव सम्पाद्य इत्याह– **स्वयं त्वित्यादिना** ।। हरेदिति शङ्का चेत् तदर्थं अस्य कृष्णस्याभावता न विद्यते भावो सत्ता यस्य स तथा । कृष्णाभाव इति यावत् । पूर्वमेव कृता अभावता नो अस्माकं निश्चिता च । सा च अभावता नोऽस्माकं शुभा अभीष्टसिद्धौ इत्यर्थः ।।७४।।

**अनन्तभट्टीया–** नः शुभा ।।७४।।

**जनार्दनीया–** यदि कृष्णः कन्यकां हरेत् ? तर्हि किं कर्तव्यमित्यतः तत्रोपायमाह– **स्वयं त्विति** ।। यतो हरेत् ततः कारणात् पूर्वमेव कन्याप्रदानात् पूर्वं अस्य कृष्णस्य अभावता कृता । अभावकरणं हननमित्यर्थः । नोऽस्माकं शुभं हि मङ्गलं खलु ।।७४।।

**ताम्रपर्णीया–** ।। **अभावतेति** ।। न भवतीत्यभाव इति व्युत्पत्त्या अभावोऽसत् अभावता असत्वम् । अस्यासत्वं कृतं चेच्छुभमित्यर्थः । यद्वा भावशब्देन एतत्प्रतियोगी लक्ष्यते । यस्याभावप्रतियोगित्वं कृतं चेत् शुभमित्यर्थः ।।७४।।

**चट्टि–** यदि श्रीकृष्णः स्वयमेत्य कन्यकां हरेत् ? तर्हि किं कर्तव्यमिति अतः तत्रोपायमाह– **स्वयं त्विति** ।। श्रीकृष्णः स्वयमेत्यागत्य नः विजित्य कन्यकां यतः हरेत् ततः कारणात् पूर्वमेव कन्याप्रदानात् पूर्वं अस्य श्रीकृष्णस्य । अभावता अभावकरणं हननमित्यर्थः । कृता नोऽस्माकं शुभा हि मङ्गलं खलु।

**उपाय एष चिन्तितो मयाऽत्र मागधेश्वर ।**
**मुनिं हि गर्गनामकं ह्यमुष्य स्याल[१] आक्षिपत् ।।७५।।**

**वेदाङ्गतीर्थीया–** अमुष्य गर्गस्य ।।७५।।

**वादिराजतीर्थीया–** तामेव कथां साल्वः विविच्याह– **मुनिं हीत्यादिना** ।। अमुष्य गर्गस्य स्यालः भार्यासहोदरः कश्चिद्यादवः ।।७५।।

**वरदराजीया–** अत्र कृष्णाभावे वक्ष्यमाणः उपायः चिन्तितः । तमुपायमेव दर्शयति– **मुनिमित्यादिना** ।। अमुष्य गर्गस्य शालः भार्यानुजः आक्षिपत् निन्दितवान् ।।७५।।

**भावविवृति–** श्यालो मातुलपुत्रः ।।७५-७९।।

**अनन्तभट्टीया–** अमुष्य गर्गस्य श्यालः ।।७५।।[२]

**जनार्दनीया–** कृष्णाभावकरणे उपायमाह– **उपाय इति** ।। अत्र कृष्णाभावविषये एषः वक्ष्यमाणः । अमुष्य गर्गस्य श्यालः स्त्रियः कनिष्ठभ्राता आक्षिपत् निन्दितवान् ।।७५।।

**ताम्रपर्णीया–** ।। **अमुष्य श्याल इति** ।। गर्गस्य भगिनीपतिरित्यर्थः ।।७५।।

**भावचन्द्रिका–** साल्वः [श्यालः]।....। न तु भार्यासहोदरः ।।७५।।

---

१. शाल इति वरदराजीयपाठः ।

२. अनन्तभट्टीया– अमुष्य शाल इति गर्गस्य भगिनी पतिरित्यर्थः । केचित्तु भार्यानुज इत्यर्थमाहुः ।। इति हो.पुस्तके अधिकः पाठः ।

**चंट्टि–** श्रीकृष्णाभावे उपायमाह– **उपाय इति** ।। हे मागधेश्वर अत्र श्रीकृष्णाभावविषये मया एषः वक्ष्यमाणः उपायः चिन्तितः । गर्गनामकं मुनिममुष्य गर्गस्य श्यालः भार्यानुजः आक्षिपत् निन्दितवान् ।

**यदाऽस्य षण्ढतोदिता मुनेः पुरो हि तस्य च ।**
**परेण वृष्णयोऽहसंश्चुकोप गर्ग एषु ह ।।७६।।**

**व्यासतीर्थीया–** परेण कृष्णेन चोदितः ।।७६।।

**वेदाङ्गतीर्थीया–** परेण चोदिता इति शेषः । परेण अन्येन अपहसता श्यालेन षण्डचोदितेन वा ।।७६-७९।।

**वादिराजतीर्थीया–** परेण कृष्णेन चोदिता वृष्णयः अहसन्निति योग्यपदाध्याहारः । परेण सह अहसन्निति वा ।।७६-७९।।

**वरदराजीया–** आक्षेपमेव दर्शयति– **यदेति** ।। यदा पुरोहितस्य गर्गस्य षण्ढता नपुंसकता परेण कृष्णेन । प्रेरिता इति शेषः । एषु वृष्णिषु यदुषु चुकोप कोपं कृतवान् ।।७६।।

**अनन्तभट्टीया–** परेण कृष्णेन चोदिताः ।।७६।।[१]

**जनार्दनीया–** आक्षेपं स्पष्टयति– **यदेति** ।। तस्य कृष्णस्य पुरः अग्रे अस्य मुनेः गर्गस्य षण्डता नपुंसकत्वं श्यालेन यदा उदिता तदा परेण कृष्णेन प्रेरिताः वृष्णयः यादवाः अहसन् जहसुः । गर्ग एषु वृष्णिषु चुकोप ।।७६।।

**ताम्रपर्णीया–** परेण कृष्णेनेति तृतीया साहित्ये । केचित्तु 'परेण कृष्णेन प्रेरिता इति शेषः' इत्याहुः ।।७६-८१।।

**चट्टि–** आक्षेपं स्पष्टयति– **यदेति** ।। यदा पुरोहितस्य अस्य मुनेः षण्डता उदिता तदा परेण श्रीकृष्णेन प्रेरिताः वृष्णयः यादवाश्च अहसन् जहसुः । गर्ग एषु वृष्णिषु चुकोप ।।७६।।

**चकार हि प्रतिश्रवं समार्जये सुतं द्रुतम् ।**
**अकृष्णतां य आनयेद् भुवोऽपि वृष्णिनाशकः ।।७७।।**

**वरदराजीया–** प्रतिश्रवं प्रतिज्ञाम् । प्रतिज्ञामेव आह– **समार्जय इत्यादिना** ।। भुवः भूम्याः अकृष्णतां कृष्णाभावतां आनयेत् । यः सुतः आनयेदित्यर्थः । यः सुतः वृष्णीनां नाशकोऽपि स्यात्तमित्यर्थः ।।

१. अनन्तभट्टीया– यदेति । ब्रह्मचारी गर्गः किमर्थं विवाहं नेच्छतीति प्रसङ्गे यथा परेण शालेन परिचोदिता तदा परेण कृष्णेन सहिता वृष्णयो अहसन् इत्यर्थः । केचित्तु परेण प्रेरिता इत्यर्थमाहुः ।। इति हो.पुस्तके अधिकः पाठः ।

**जनार्दनीया–** प्रतिश्रवं प्रतिज्ञां चकार च । स्वप्रतिश्रवप्रकारं दर्शयति– **समार्जय इति** ।। वृष्णिनाशकस्सन् भुवो भूमेर्भागं अकृष्णतां कृष्णरहितत्वं य आनयेत् तं सुतं द्रुतं समार्जये सम्पादये सम्पादयामि ।।७७।।

**चट्टि–** प्रतिश्रवं प्रतिज्ञां चकार । प्रतिश्रवप्रकारं दर्शयति– **समार्जय इति** ।। भुवो भूमेः । अकृष्णतां कृष्णरहितत्वं य आनयेत् प्रापयेत् यश्च वृष्णिनाशकः स्यात् तं सुतं द्रुतं समार्जये सम्पादयामि ।।

**यतो हि कृष्णसंश्रयाद् बतापहासिता वयम् ।**
**इति ब्रुवन् वनं ययौ तपश्च शैवमाचरत् ।।७८।।**

**वरदराजीया–** अपहासिता अपहासं प्रापिता । शैवं शिवविषयकम् ।।७८।।

**जनार्दनीया–** कुतः? वयं अपहासिताः अपहासं प्रापिताः । बत कष्टम् ।।७८।।

**चट्टि–** कुतः? यतः श्रीकृष्णसंश्रयात् वृष्णिभिरिति शेषः । वयं अपहासिताः अपहासं प्रापिताः । अतः तादृशं सुतं समार्जये इति पूर्वेण सम्बन्धः । बत कष्टम् । इति ब्रुवन् वनं ययौ ।।७८।।

**स चूर्णमायसं त्वदन् ददर्श चाब्दतः शिवम् ।**
**वरं ततोऽभिपेदिवान् सुतं हरेरभावदम् ।।७९।।**

**मधुसूदनीया–** ।। **ददर्श चाब्दतः शिवमिति** ।। न च 'रुद्रमाराधयामास द्वादशाब्दानपोशनः । पुत्रकामेन मुनिना तोष्य रुद्रात् सुतो वृतः ।।' इति हरिवंशे [२.५२.२७] गर्गस्य द्वादशाब्दपर्यन्तं तपश्चरणस्योक्तत्वात् तद्विरोध इति वाच्यम् । द्वादशाब्दस्य द्वादशमासार्थकत्वेन विरोधाभावात् । 'अविश्वासात् स तु सक्रोध एव । ययौ विदेहानवसत् पञ्च चाब्दान्' इत्यग्रेतनवाक्येऽपि [१.३९.३७] 'षष्टिवर्षगते काले यद्रोषोऽभून्ममानघ' इति हरिवंशवाक्यस्थषष्टिवर्षशब्देन षष्टिमासा ग्राह्या इत्यभिप्रायेण पञ्चाब्दानित्युक्तम् । नन्वेवमभिप्रायः कुत इति चेत् 'तथापि मासा द्वादश नः प्रयाताः । वेदप्रामाण्याद्वत्सरास्ते हि मासैस्सहस्राब्दं सत्रमुक्तं नराणाम्' इति हठवादेऽपि तथैवोच्यमानत्वात् । यद्वा अब्द इत्यत्यस्य बहुवचनात् तसिप्रत्ययान्तत्वेन वा विरोधाभावादिति भावः ।।७९-८०।।

**वरदराजीया–** आयसं लोहसम्बन्धि चूर्णपिष्टं अदन् भक्षयन् अब्दतो वर्षमात्रेण । ततः शिवात् अभिपेदिवान् प्राप्तः । वरमेव विशेषयति– **सुतमिति** ।।७९।।

**जनार्दनीया–** स गर्गः आयसं लोहसम्बन्धिचूर्णं अदन् भक्ष्यन् तपः अचरत् । अब्दतः वत्सरमात्रेण ददर्श । ततः रुद्रात् सुतरूपं वरम् ।।७९।।

**चट्टि–** श्रीकृष्णाभावे उपायमाह– **उपाय इति** ।। हे मागधेश्वर अत्र श्रीकृष्णाभावविषये मया एषः वक्ष्यमाणः उपायः चिन्तितः । गर्गनामकं मुनिममुष्य गर्गस्य श्यालः भार्यानुजः आक्षिपत् निन्दितवान् ।

**यदाऽस्य षण्ढतोदिता मुनेः पुरो हि तस्य च ।**
**परेण वृष्णयोऽहसंश्चुकोप गर्ग एषु ह ।।७६।।**

**व्यासतीर्थीया–** परेण कृष्णेन चोदितः ।।७६।।

**वेदाङ्गतीर्थीया–** परेण चोदिता इति शेषः । परेण अन्येन अपहसता श्यालेन षण्डचोदितेन वा ।।७६-७९।।

**वादिराजतीर्थीया–** परेण कृष्णेन चोदिता वृष्णयः अहसन्निति योग्यपदाध्याहारः । परेण सह अहसन्निति वा ।।७६-७९।।

**वरदराजीया–** आक्षेपमेव दर्शयति– **यदेति** ।। यदा पुरोहितस्य गर्गस्य षण्ढता नपुंसकता परेण कृष्णेन । प्रेरिता इति शेषः । एषु वृष्णिषु यदुषु चुकोप कोपं कृतवान् ।।७६।।

**अनन्तभट्टीया–** परेण कृष्णेन चोदिताः ।।७६।।[१]

**जनार्दनीया–** आक्षेपं स्पष्टयति– **यदेति** ।। तस्य कृष्णस्य पुरः अग्रे अस्य मुनेः गर्गस्य षण्डता नपुंसकत्वं श्यालेन यदा उदिता तदा परेण कृष्णेन प्रेरिताः वृष्णयः यादवाः अहसन् जहसुः । गर्ग एषु वृष्णिषु चुकोप ।।७६।।

**ताम्रपर्णीया–** परेण कृष्णेनेति तृतीया साहित्ये । केचित्तु 'परेण कृष्णेन प्रेरिता इति शेषः' इत्याहुः ।।७६-८१।।

**चट्टि–** आक्षेपं स्पष्टयति– **यदेति** ।। यदा पुरोहितस्य अस्य मुनेः षण्डता उदिता तदा परेण श्रीकृष्णेन प्रेरिताः वृष्णयः यादवाश्च अहसन् जहसुः । गर्ग एषु वृष्णिषु चुकोप ।।७६।।

**चकार हि प्रतिश्रवं समार्जये सुतं द्रुतम् ।**
**अकृष्णतां य आनयेद् भुवोऽपि वृष्णिनाशकः ।।७७।।**

**वरदराजीया–** प्रतिश्रवं प्रतिज्ञाम् । प्रतिज्ञामेव आह– **समार्जय इत्यादिना** ।। भुवः भूम्याः अकृष्णतां कृष्णाभावतां आनयेत् । यः सुतः आनयेदित्यर्थः । यः सुतः वृष्णीनां नाशकोऽपि स्यात्तमित्यर्थः ।।

१. अनन्तभट्टीया– यदेति । ब्रह्मचारी गर्गः किमर्थं विवाहं नेच्छतीति प्रसङ्गे यथा परेण शालेन परिचोदिता तदा परेण कृष्णेन सहिता वृष्णयो अहसन् इत्यर्थः । केचित्तु परेण प्रेरिता इत्यर्थमाहुः ।। इति हो.पुस्तके अधिकः पाठः ।

**जनार्दनीया–** प्रतिश्रवं प्रतिज्ञां चकार च । स्वप्रतिश्रवप्रकारं दर्शयति– **समार्जय इति** ।। वृष्णिनाशकस्सन् भुवो भूमेर्भागं अकृष्णतां कृष्णरहितत्वं य आनयेत् तं सुतं द्रुतं समार्जये सम्पादये सम्पादयामि ।।७७।।

**चट्टि–** प्रतिश्रवं प्रतिज्ञां चकार । प्रतिश्रवप्रकारं दर्शयति– **समार्जय इति** ।। भुवो भूमेः । अकृष्णतां कृष्णरहितत्वं य आनयेत् प्रापयेत् यश्च वृष्णिनाशकः स्यात् तं सुतं द्रुतं समार्जये सम्पादयामि ।।

**यतो हि कृष्णसंश्रयाद् बतापहासिता वयम् ।**
**इति ब्रुवन् वनं ययौ तपश्च शैवमाचरत् ।।७८।।**

**वरदराजीया–** अपहासिता अपहासं प्रापिता । शैवं शिवविषयकम् ।।७८।।

**जनार्दनीया–** कुतः? वयं अपहासिताः अपहासं प्रापिताः । बत कष्टम् ।।७८।।

**चट्टि–** कुतः? यतः श्रीकृष्णसंश्रयात् वृष्णिभिरिति शेषः । वयं अपहासिताः अपहासं प्रापिताः । अतः तादृशं सुतं समार्जये इति पूर्वेण सम्बन्धः । बत कष्टम् । इति ब्रुवन् वनं ययौ ।।७८।।

**स चूर्णमायसं त्वदन् ददर्श चाब्दतः शिवम् ।**
**वरं ततोऽभिपेदिवान् सुतं हरेरभावदम् ।।७९।।**

**मधुसूदनीया–** ।। **ददर्श चाब्दतः शिवमिति** ।। न च 'रुद्रमाराधयामास द्वादशाब्दानपोशनः । पुत्रकामेन मुनिना तोष्य रुद्रात् सुतो वृतः ।।' इति हरिवंशे [२.५२.२७] गर्गस्य द्वादशाब्दपर्यन्तं तपश्चरणस्योक्तत्वात् तद्विरोध इति वाच्यम् । द्वादशाब्दस्य द्वादशमासार्थकत्वेन विरोधाभावात् । 'अविश्वासात् स तु सक्रोध एव । ययौ विदेहानवसत् पञ्च चाब्दान्' इत्यग्रेतनवाक्येऽपि [१.३९.३७] 'षष्टिवर्षगते काले यद्रोषोऽभून्ममानघ' इति हरिवंशवाक्यस्थषष्टिवर्षशब्देन षष्टिमासा ग्राह्या इत्यभिप्रायेण पञ्चाब्दानित्युक्तम् । नन्वेवमभिप्रायः कुत इति चेत् 'तथापि मासा द्वादश नः प्रयाताः । वेदप्रामाण्याद्वत्सरास्ते हि मासैस्सहस्राब्दं सत्रमुक्तं नराणाम्' इति हठवादेऽपि तथैवोच्यमानत्वात् । यद्वा अब्द इत्यत्यस्य बहुवचनात् तसिप्रत्ययान्तत्वेन वा विरोधाभावादिति भावः ।।७९-८०।।

**वरदराजीया–** आयसं लोहसम्बन्धि चूर्णपिष्टं अदन् भक्षयन् अब्दतो वर्षमात्रेण । ततः शिवात् अभिपेदिवान् प्राप्तः । वरमेव विशेषयति– **सुतमिति** ।।७९।।

**जनार्दनीया–** स गर्गः आयसं लोहसम्बन्धिचूर्णं अदन् भक्ष्यन् तपः अचरत् । अब्दतः वत्सरमात्रेण ददर्श । ततः रुद्रात् सुतरूपं वरम् ।।७९।।

**चट्टि–** स गर्गः आयसं लोहसम्बन्धि चूर्णं पिष्टं अदन् शिवसम्बन्धि तपश्चाचरत् । अब्दतः वत्सरमात्रेण ददर्श । ततः रुद्रात् हरेः श्रीकृष्णस्याभावदं सुतं वरं अभिपेदिवान् । नच 'रुद्रमाराधयामास द्वादशाब्दमयोशिना। पुत्रकामेन मुनिना तोष्य रुद्रात्सुतो वृतः ।।' इति हरिवंशे [२.५२.२७] गर्गस्य द्वादशाब्दपर्यन्तं तपश्चरणस्योक्तत्वात् । तद्विरोध इति वाच्यम् । द्वादशाब्दस्य द्वादशमासार्थकत्वेन विरोधाभावात् । अत एव 'अविश्वासात् स तु सक्रोध एव । ययौ विदेहानवसत् पञ्च चाब्दान् ।।' इत्यग्रेतनवाक्येऽपि 'षष्टिवर्षगते काले यद्रोषोऽभूत् ममानघ' इति हरिवंशवाक्यस्थषष्ठिवर्षशब्देन षष्टिमासाः ग्राह्याः इत्यभिप्रायेण पञ्चाब्दानित्युक्तम् । एवमभिप्रायः कुतोऽवगत इति चेन्न 'तथापि मासा द्वादश नः प्रयाताः । वेदप्रामाण्याद्वत्सरास्ते हि मासैस्सहस्राब्दं सत्रमुक्तम् नराणाम् ।।' इत्यग्रे तथैवोच्यमानत्वात् इति भावः ।।७९।।

**स विष्णुदैवतोऽपि सन् प्रविष्ट उल्बणासुरैः ।**
**व्यधाद्धरेः प्रतीपकं व्रतं च नैष्ठिकं जहौ ।।८०।।**

**वेदाङ्गतीर्थीया–** नैष्टिकं व्रतं नैष्ठिकब्रह्मचर्यव्रतम् ।।८०।।

**वादिराजतीर्थीया–** विष्णुभक्तो गर्गः कथं तत्प्रतीपमाचरदित्यत आह– **स विष्णुदैवत इति** ।। अस्मदसुराः तादृशा इति भावः ।।८०-८१।।

**वरदराजीया–** सः गर्गो विष्णुदैवतोऽपि विष्णुरेव दैवतं यस्य स तथा । नैष्ठिकं ब्रह्मचर्यम् ।।८०।।

**भावविवृति–** उल्बणासुरैः क्रूरराक्षसैर्बहुभिराविष्टः । व्रतश्च नैष्ठिकं कदापि दारसङ्ग्रहं न करिष्य इति सङ्कल्प्य ब्रह्मचर्यधारणम् । तदुक्तं हरिवंशेषु– 'ब्रह्मचारी सदा भूत्वा न स्म दारान् स विन्दति । तथाच वर्तमानं तं ह्यूर्ध्वरेतसमव्ययम् ।।' इति ।।८०।।

**जनार्दनीया–** सः गर्गः । विष्णुः दैवतं यस्य स तथा । तादृशोऽपि उल्बणासुरैः क्रूरदैत्यैः प्रविष्टः सन् । प्रतीपकं विरुद्धम् । नैष्ठिकं व्रतं नैष्ठिकब्रह्मचर्यव्रतं जहौ अत्यजत् ।।८०।।

**भावचन्द्रिका–** असुरैरित्युक्त्या असुरावेशबाहुल्यात् आग्रहातिशय इत्याहुः । 'ब्रह्मचारी सदा भूत्वा न स्म दारान् स विन्दति । तथाच वर्तमानं तं ऊर्ध्वरेतसमव्ययम् ।।' [२.५७.७] इति हरिवंशवचनात् । अत एव नैष्ठिकमिति वक्ष्यति ।।८०।।

**चट्टि–** सः गर्गः । विष्णुः दैवतं यस्य स तथा । तादृशस्सन् उल्बणासुरैः प्रविष्टः सन् हरेः प्रतीपकं कर्म व्यधात् । नैष्ठिकं व्रतं ब्रह्मचर्यव्रतं च जहौ अत्यजत् ।।८०।।

**तमार चाऽसुराप्सरा बलिष्ठपुत्रकाम्यया ।**
**प्रविश्य गोपिकाङ्गनासमूहमध्यमुल्बणा ॥८१॥**

**वेदाङ्गतीर्थीया–** असुराप्सरा गोपाङ्गाना समूहमध्यं प्रविश्य । तस्य गोपाङ्गना समूहस्य ॥८३॥

**मधुसूदनीया–** ॥ **तमार चेति** ॥ [नन्दगोव्रजभि] यावनदेशस्थाभीरपल्यां स्थितं तं गर्गं गोपवेषधारिणी सती असुराप्सरा आर प्रापेत्यन्वयः । तत्र हेतुमाह– **बलिष्ठेति** ॥ तथाचोक्तम्– 'स नृपस्तमुपानीय सान्त्वयित्वा द्विजोत्तमम् । तं घोषमध्ये यवनो गोपस्त्रीषु समासृजत् ॥ गोपाली त्वप्सरास्तत्र गोपस्त्रीवेषधारिणी । धारयामास गर्गस्य गर्भं दुर्धरमच्युतम् ॥' इति हरिवंशोक्तेः [२.५७.१३-१४] ॥८१॥

**वरदराजीया–** असुराप्सराः असुरस्वरूपा अप्सरा अत एव उल्बणा क्रूरा गोपिकासमूहस्य मध्यं प्रविश्य तं गर्गमार प्राप्तवती । किमर्थम् । वलिष्ठस्य बलाधिकस्य पुत्रस्य काम्यया आकाङ्क्ष्या ॥८१॥

**भावविवृति–** तं गर्गम् । असुरा तमोयोग्या तपआदिना प्राप्तेत्यर्थः । 'आसुरीणां वरादेस्तु वपुर्मात्रं भविष्यति' इत्युक्तेः ॥८१-११६॥

**अनन्तभट्टीया–** असुररूपा अप्सराः प्रविश्य तं आरेति योजना ॥८१॥

**जनार्दनीया–** असुरा असुरसम्बन्धिनी । अत एव उल्बणा क्रूरा । अप्सरा गोपिकाङ्गनानां गोपिकास्त्रीणां समूहस्य मध्यं प्रविश्य तं गर्गं आर प्राप ॥८१॥

**चट्टि–** असुरा असुरसम्बन्धिनी अत एव उल्बणा क्रूरा । अप्सराः गोपिकाङ्गनानां गोपिकास्त्रीणां समूहस्य मध्ये प्रविश्य बलिष्ठपुत्रकाम्यया तं गर्गं आर । तथा चोक्तम्– 'सः नृपस्तमुपानीय सान्त्वयित्वा द्विजोत्तमम् । तं घोषमध्ये यवनो गोपस्त्रीषु समासृजत् ॥ गोपाली त्वप्सरास्तत्र गोपस्त्रीवेषधारिणी । धारयामास गर्गस्य गर्भं दुर्धरमच्युतम् ॥' इति हरिवंशोक्तेः [२.५७.१३-१४] ॥८१॥

**स यावनेन भूभृता हि गोपिकाभिरर्चितः[1] ।**
**अपुत्रकेण जानता मुनेर्मनोऽनुचिन्तितम् ॥८२॥**

**वेदाङ्गतीर्थीया–** तस्य गोपाङ्गनासमूहस्य तत्समीपगमने किं कारणमित्यत आह– **स इति** ॥८२॥

**वादिराजतीर्थीया–** गोपिकाभिरर्चित इत्यत्र यावनेन भूभृता कर्त्रा गोपिकाभिः करणैः स मुनिरर्चितः मुनेः चित्तवशीकरणाय भवतीभिरागन्तव्यमिति प्रार्थयित्वा ताभिः सह पूजित इति भावः ॥८२॥

१. 'अर्थितः' इति वरदराजीयपाठः ।

**चट्टि–** स गर्गः आयसं लोहसम्बन्धि चूर्णं पिष्टं अदन् शिवसम्बन्धि तपश्चाचरत् । अब्दतः वत्सरमात्रेण ददर्श । ततः रुद्रात् हरेः श्रीकृष्णस्याभावदं सुतं वरं अभिपेदिवान् । नच 'रुद्रमाराधयामास द्वादशाब्दमयोशिना। पुत्रकामेन मुनिना तोष्य रुद्रात्सुतो वृतः ॥' इति हरिवंशे [२.५२.२७] गर्गस्य द्वादशाब्दपर्यन्तं तपश्चरणस्योक्तत्वात् । तद्विरोध इति वाच्यम् । द्वादशाब्दस्य द्वादशमासार्थकत्वेन विरोधाभावात् । अत एव 'अविश्वासात् स तु सक्रोध एव । ययौ विदेहानवसत् पञ्च चाब्दान् ॥' इत्यग्रेतनवाक्येऽपि 'षष्टिवर्षगते काले यद्रोषोऽभूत् ममानघ' इति हरिवंशवाक्यस्थषष्ठिवर्षशब्देन षष्ठिमासाः ग्राह्याः इत्यभिप्रायेण पञ्चाब्दानित्युक्तम् । एवमभिप्रायः कुतोऽवगत इति चेन्न 'तथापि मासा द्वादश नः प्रयाताः । वेदप्रामाण्याद्वत्सरास्ते हि मासैस्सहस्राब्दं सत्रमुक्तम् नराणाम् ॥' इत्यग्रे तथैवोच्यमानत्वात् इति भावः ॥७९॥

**स विष्णुदैवतोऽपि सन् प्रविष्ट उल्बणासुरैः ।**
**व्यधाद्धरेः प्रतीपकं व्रतं च नैष्ठिकं जहौ ॥८०॥**

**वेदाङ्गतीर्थीया–** नैष्ठिकं व्रतं नैष्ठिकब्रह्मचर्यव्रतम् ॥८०॥

**वादिराजतीर्थीया–** विष्णुभक्तो गर्गः कथं तत्प्रतीपमाचरदित्यत आह– **स विष्णुदैवत इति** ॥ अस्मदसुराः तादृशा इति भावः ॥८०-८१॥

**वरदराजीया–** सः गर्गो विष्णुदैवतोऽपि विष्णुरेव दैवतं यस्य स तथा । नैष्ठिकं ब्रह्मचर्यम् ॥८०॥

**भावविवृति–** उल्बणासुरैः क्रूरराक्षसैर्बहुभिराविष्टः । व्रतश्च नैष्ठिकं कदापि दारसङ्ग्रहं न करिष्य इति सङ्कल्प्य ब्रह्मचर्यधारणम् । तदुक्तं हरिवंशेषु– 'ब्रह्मचारी सदा भूत्वा न स्म दारान् स विन्दति । तथाच वर्तमानं तं ह्यूर्ध्वरेतसमव्ययम् ॥' इति ॥८०॥

**जनार्दनीया–** सः गर्गः । विष्णुः दैवतं यस्य स तथा । तादृशोऽपि उल्बणासुरैः क्रूरदैत्यैः प्रविष्टः सन् । प्रतीपकं विरुद्धम् । नैष्ठिकं व्रतं नैष्ठिकब्रह्मचर्यव्रतं जहौ अत्यजत् ॥८०॥

**भावचन्द्रिका–** असुरैरित्युक्त्या असुरावेशबाहुल्यात् आग्रहातिशय इत्याहुः । 'ब्रह्मचारी सदा भूत्वा न स्म दारान् स विन्दति । तथाच वर्तमानं तं ऊर्ध्वरेतसमव्ययम् ॥' [२.५७.७] इति हरिवंशवचनात् । अत एव नैष्ठिकमिति वक्ष्यति ॥८०॥

**चट्टि–** सः गर्गः । विष्णुः दैवतं यस्य स तथा । तादृशस्सन् उल्बणासुरैः प्रविष्टः सन् हरेः प्रतीपकं कर्म व्यधात् । नैष्ठिकं व्रतं ब्रह्मचर्यव्रतं च जहौ अत्यजत् ॥८०॥

**तमार चाऽसुराप्सरा बलिष्ठपुत्रकाम्यया ।**
**प्रविश्य गोपिकाङ्गनासमूहमध्यमुल्बणा ॥८१॥**

**वेदाङ्गतीर्थीया–** असुराप्सरा गोपाङ्गाना समूहमध्यं प्रविश्य । तस्य गोपाङ्गना समूहस्य ॥८३॥

**मधुसूदनीया–** ॥ **तमार चेति** ॥ [नन्दगोव्रजभि] यावनदेशस्थाभीरपल्यां स्थितं तं गर्गं गोपवेषधारिणी सती असुराप्सरा आर प्रापेत्यन्वयः । तत्र हेतुमाह– **बलिष्ठेति** ॥ तथाचोक्तम्– 'स नृपस्तमुपानीय सान्त्वयित्वा द्विजोत्तमम् । तं घोषमध्ये यवनो गोपस्त्रीषु समासृजत् ॥ गोपाली त्वप्सरास्तत्र गोपस्त्रीवेषधारिणी । धारयामास गर्गस्य गर्भं दुर्धरमच्युतम् ॥' इति हरिवंशोक्तेः [२.५७.१३-१४] ॥८१॥

**वरदराजीया–** असुराप्सराः असुरस्वरूपा अप्सरा अत एव उल्बणा क्रूरा गोपिकासमूहस्य मध्यं प्रविश्य तं गर्गमार प्राप्तवती । किमर्थम् । बलिष्ठस्य बलाधिकस्य पुत्रस्य काम्यया आकाङ्क्षया ॥८१॥

**भावविवृति–** तं गर्गम् । असुरा तमोयोग्या तपआदिना प्राप्तेत्यर्थः । 'आसुरीणां वरादेस्तु वपुर्मात्रं भविष्यति' इत्युक्तेः ॥८१-११६॥

**अनन्तभट्टीया–** असुररूपा अप्सराः प्रविश्य तं आरेति योजना ॥८१॥

**जनार्दनीया–** असुरा असुरसम्बन्धिनी । अत एव उल्बणा क्रूरा । अप्सरा गोपिकाङ्गनानां गोपिकास्त्रीणां समूहस्य मध्यं प्रविश्य तं गर्गं आर प्राप ॥८१॥

**चट्टि–** असुरा असुरसम्बन्धिनी अत एव उल्बणा क्रूरा । अप्सराः गोपिकाङ्गनानां गोपिकास्त्रीणां समूहस्य मध्ये प्रविश्य बलिष्ठपुत्रकाम्यया तं गर्गं आर । तथा चोक्तम्– 'सः नृपस्तमुपानीय सान्त्वयित्वा द्विजोत्तमम् । तं घोषमध्ये यवनो गोपस्त्रीषु समासृजत् ॥ गोपाली त्वप्सरास्तत्र गोपस्त्रीवेषधारिणी । धारयामास गर्गस्य गर्भं दुर्धरमच्युतम् ॥' इति हरिवंशोक्तेः [२.५७.१३-१४] ॥८१॥

**स यावनेन भूभृता हि गोपिकाभिरर्चितः[१] ।**
**अपुत्रकेण जानता मुनेर्मनोऽनुचिन्तितम् ॥८२॥**

**वेदाङ्गतीर्थीया–** तस्य गोपाङ्गनासमूहस्य तत्समीपगमने किं कारणमित्यत आह– **स इति** ॥८२॥

**वादिराजतीर्थीया–** गोपिकाभिरर्चित इत्यत्र यावनेन भूभृता कर्त्रा गोपिकाभिः करणैः स मुनिरर्चितः मुनेः चित्तवशीकरणाय भवतीभिरागन्तव्यमिति प्रार्थयित्वा ताभिः सह पूजित इति भावः ॥८२॥

१. 'अर्थितः' इति वरदराजीयपाठः ।

**मधुसूदनीया–** ।। **यावनेन भूभृतेति** ।। 'शकास्तुषारा दरदाः पारदाः श्रृङ्गलाः खसाः । पह्लवाः शतशश्चान्ये म्लेच्छा हैमवतास्तथा ।।' इति [२.५७.२०] हरिवंशोक्तप्रभेदानां यवनानां राज्ञेत्यर्थः ।।८२।।

**वरदराजीया–** सः गर्गः अपुत्रकेण पुत्ररहितेन मुनेः गर्गस्य मनसा अनुचिन्तितं पुत्रोत्पत्त्यभिसन्धिं जानता यावनेन यवनसम्बन्धिना भूभृता राज्ञा गोपिकाभिः करणैस्तद्वारेत्यर्थः । [अर्चितः इति क्वचित्] अर्थितः गोपिकासु मध्ये कस्याञ्चित् मदर्थमेव पुत्रः उत्पाद्य इति प्रार्थित इत्यर्थः ।।८२।।

**अनन्तभट्टीया–** गोपिकाभिरिति करणे तृतीया ।।८२।।

**जनार्दनीया–** तस्य गोपिकाङ्गनासमूहस्य मध्यं प्रविश्य गमने कारणमाह– **स इति** ।। मुनेर्गर्गस्य मनसा अनुचिन्तितं विचारितं जानता अपुत्रकेण यावनेन म्लेच्छसम्बन्धिना भूभृता राज्ञा गोपिकाभिः करणैः । गोपिकाद्वारेणेति यावत् । सः गर्गः अर्चितोऽभूदिति शेषः । गोपिकायां पुत्रमुत्पाद्य मे देहीति यावनेन प्रार्थितोऽभूदिति कथानुसन्धेया । अप्सरा अपि तमर्चितुं गोपिकामध्ये प्रविष्टेति भावः ।।८२।।

**ताम्रपर्णीया–** यावनेन कर्त्रा । गोपिकाभिः करणैः तद्वारेत्यर्थः ।।८२।।

**भावचन्द्रिका–** यवनो मुन्यभिप्रायं ज्ञात्वा स्वदेशं प्रापयित्वा यवनदेशस्य हेयत्वात् तत्र स्वगोष्ठे स्थापयामास । यवनार्थमेव तदा गोपिकाभिरर्चितः असुराप्सराः यवनभोगाङ्गना । 'सन्तोषयामास च तं यवनेशो ह्यनात्मजः । तद्योषित्सङ्गमाच्चास्य पुत्रोऽभूत्कलिसन्निभः ।।' [कलिसप्रभः] इति विष्णुपुराणे [५.२३.४] ।।८२।।

**चट्टि–** तस्य गोपिकाङ्गनासमूहमध्यं प्रविश्य गमने कारणमाह– **स इति** ।। मुनेर्गर्गस्य मनसा अनुचिन्तितं विचारितं जानता अपुत्रकेण पुत्ररहितेन यावनेन म्लेच्छसम्बन्धिना भूभृता 'शकास्तुरुष्काः दरदाः पारदाः भृङ्गलाः खसाः । पह्लवाः शतशश्चान्ये म्लेच्छा हैमवतास्तथा ।।' इति [२प.५७अ.२०] हरिवंशोक्तप्रभेदानां यवनानां राज्ञेत्यर्थः । तेन कर्त्रा गोपिकाभिः करणैः गोपिकाद्वारेणेति यावत् । सः गर्गः अर्चितोऽभूदिति शेषः । गोपिकायां पुत्रमुत्पाद्य मे देहीति यावनेन प्रार्थितोऽभूदिति कथानुसन्धेया । अप्सरा अपि तमर्चितुं गोपिकामध्यं प्रविष्टेति भावः ।।८२।।

**स चाप्सरस्तनौ सुतं निषिच्य यावनाय च ।**
**ददौ विमोहितः क्रुधा किमेतदीशवैरिणः ।।८३।।**

**व्यासतीर्थीया–** 'किमेतदीशवैरिण' इत्येतद्भगवत आचार्यस्य वचनम् ।।८३।।

**वेदाङ्गतीर्थीया–** ईश प्रभो हे जरासुत । वैरिणः एतत् प्रतिकूलाचरणं किं विचित्रम् ? वैरिणः सर्वमपि प्रतीपं कुर्युरिति भावः ।।८४।।

**वादिराजतीर्थीया–** किमेतदीशवैरिण इत्यत्र ईशे महादेवे वैरिणः कृष्णस्य एतत् स्वपुरोहितेनैव स्वमृत्युसम्पादनादिव्यसनं किं किमाश्चर्यमिति साल्ववचनम् ।।८३-८५।।

**मधुसूदनीया–** ननु गर्गेण कथं असुर्यप्सरस्त्रीगमनं कृतमित्यत आह– **किमेतदिति** ।। एतत् तुरुष्कस्त्रीगमनमित्यर्थः । ईशवैरिणः कृष्णवैरिणः ।।८३-१०५।।

**वरदराजीया–** पुत्रकाम्यया प्राप्तायां गोपाङ्गनासमूहस्थितायां अप्सरसस्तनौ असुराप्सरसः देहे सुतं रेतोद्वारा निषिच्य उत्पाद्य यावनाय भूभृते ददौ । यतः क्रुधा कोपेन विमोहितः कर्तव्यमूढ इत्यर्थः । अनेन गर्गादीनां त्रयाणामपि कार्यं सम्पादितं भवतीत्युक्तं भवति । असुराविष्टेन गर्गेण एतदनुष्ठितं न चित्रमित्याह भगवानाचार्यः– **किमेतदित्यादिना** ।। ईशस्य वैरी शत्रुः असुरो यत्र स तथा ।।८३।।

**अनन्तभट्टीया–** निषिच्य उत्पाद्य । 'किमेतदीशवैरिण' इति आचार्यस्य ग्रन्थकर्तुर्वचनम् ।।८३।।[1]

**जनार्दनीया–** क्रुधा क्रोधाभिमान्यसुरेण मोहितः मोहं प्रापितः स गर्गः अप्सरस्तनौ अप्सरः शरीरे सुतं निषिच्य उत्पाद्य । हे ईश जरासन्ध वैरिणः तव वैरिणः कृष्णस्य एतद्भर्त्राचरितप्रतिकूलं किं अल्पमेव । तस्य योग्यं नैवेत्यर्थः । इतोऽप्यधिकं कार्यमेवेति भावः । 'किमेतदीशवैरिणः' इत्याचार्योक्तिर्वा । ईशस्य हरेर्वैरी असुरो यस्मिन् स तथा तस्य । पुरुषस्य एतत् एतादृशं हरेः प्रतिकूलाचरणं किं किमाश्चर्यमित्यर्थः ।।८३।।

**ताम्रपर्णीया–** ।। **किमेतदिति** ।। हे ईश जरासुत वैरिण एतादृशं प्रतिकूलाचरणं किं चित्रमित्यर्थः । यद्वा एतदाचार्यवचनम् । ईशे भगवति वैरिणः किं चित्रमित्यर्थः । 'स आश्रमात्' इत्यादिकं तु साल्ववचनम् । केचित्तु 'किमेतदित्यारभ्य वैष्णवम्' इति पर्यन्तमाचार्यवचनमित्याहुः । अन्ये तु ईशे रुद्रे वैरिणः कृष्णस्य एतत् स्वपुरोहितेनैव मृत्युसम्पादनं किमाश्चर्यमित्याहुः ।।८३-१०३।।

**चट्टि–** क्रुधा क्रोधाभिमानिना असुरेण विमोहितः मोहं प्रापितः स गर्गः अप्सरस्तनौ अप्सरसः शरीरे सुतं निषिच्य उत्पाद्य यावनाय ददौ च । ननु गर्गेण कथं असुराप्सरस्त्रीगमनं कृतमित्यत आह– **किमेतदिति** ।। 'किमेतदीशवैरिणः' इति आचार्योक्तिः । ईशस्य वैरी असुरो यस्मिन् स तथा तस्य गर्गस्य एतत् म्लेच्छस्त्रीगमनमित्यर्थः । किं किमाश्चर्यमित्यर्थः ।।८३।।

**स आश्रमाच्च नैष्ठिकाद् विदूषितः प्रतीपकृत् ।**
**हरेश्च तापमेयिवान् जगर्ह चाऽत्मशेमुषीम् ।।८४।।**

---

१. अनन्तभट्टीया– किमेतदिति ।। हे ईश जरासुत तव वैरिणः किमेतदित्यर्थः । एतदाचार्यवचनमित्याहुः ।। इति हो.पुस्तके अधिकः पाठः ।

**वरदराजीया–** एतदित्युक्तं विशदयति– **स इति** ।। हरेः प्रतीपकृदिति सम्बन्धः । तापं पश्चात्तापम् । आत्मनः शेमुर्षीं बुद्धिं जगर्ह निन्दितवान् ।।८४।।

**अनन्तभट्टीया–** हरेः प्रतीपकृच्च । शेमुर्षीं बुद्धिम् ।।८४।।

**जनार्दनीया–** नैष्ठिकादाश्रमात् नैष्ठिकब्रह्मचर्याश्रमात् विदूषितः भ्रष्टः हरेः कृष्णस्य प्रतीपकृत् स गर्गः तापं पश्चात्तापं एयिवान् प्राप्तवान् । आत्मनः स्वस्य शेमुर्षीं मतिं जगर्ह गर्हयामास ।।८४।।

**चट्टि–** एतदित्युक्तं विशदयति– **स इति** ।। हरेः श्रीकृष्णस्य प्रतीपकृत् स गर्गः नैष्ठिकादाश्रमात् नैष्ठिकब्रह्मचर्याश्रमात् विदूषितः भ्रष्टः सन् तापं पश्चात्तापं एयिवान् प्राप्तवान् सन् आत्मनः स्वस्य शेमुर्षीं मतिं जगर्ह गर्हयामास ।।८४।।

**जगाम चारणं हरिं प्रपाहि मां सुपापिनम् ।**
**इति स्म विष्ण्वनुज्ञया चकार वैष्णवं तपः ।।८५।।**

**व्यासतीर्थीया–** इति स्म ब्रुवन् ।।८५।।

**वेदाङ्गतीर्थीया–** इति स्म ब्रुवन् अरणं जगाम ।।८५-८६।।

**वरदराजीया–** अरणं शरणम् । शरणप्राप्तिप्रकारमाह– **प्रपाहीति** ।। इति स्म शरणं जगामेति सम्बन्धः । वैष्णवं विष्णुविषयम् ।।८५।।

**अनन्तभट्टीया–** अब्रुवन् शरणं [अरणं?] जगाम ।।८५।।

**जनार्दनीया–** सुपापिनं मां प्रपाहीति स्म ब्रुवन् हरिं कृष्णं अरणं जगाम । तपश्चकार च ।।८४।।

**चट्टि–** सुपापिनं मां प्रपाहीति स्म ब्रुवन् हरिं श्रीकृष्णं अरणं शरणं जगाम । विष्ण्वनुज्ञया वैष्णवं विष्णुसम्बन्धि तपश्चकार स्म ।।८५।।

**कुतो हि भाग्यमापतेन्मुनेः शिवार्चने सदा ।**
**भवादृशा हि दानवाः स्थिराः शिवार्चने सदा[१] ।।८६।।**

**वादिराजतीर्थीया–** मध्ये शिवार्चनस्य त्यक्तत्वात् गर्गं दूषयति- **कुतो हीति** ।। मुनेः शिवार्चने कृतेऽपि सदा भाग्यं कुत आपतेत् । मुनेः शिवार्चने स्थैर्याभावादिति भावः । यद्वा असदा कदाचिदित्यर्थः ।।८६।।

१. 'असदा' इति वादिराजीये पाठान्तरम् ।

**वरदराजीया–** कुतो हीत्यादिना पुनः साल्वोऽपि विज्ञापयति । मुनेः गर्गस्य सदा शिवार्चने कुतो भाग्यं अदृष्टं प्राप्यते । न कुतोऽपि । अल्पभाग्यत्वात् कदाचिदेव । भाग्याभावमेवाह– **भवादृशा इति** ।।

**जनार्दनीया–** साल्वः गर्गं निन्दयन् दानवांस्तुवन् पुनराहेत्याह– **कुत इति** ।। मुनेर्गर्गस्य शिवार्चने सदा भाग्यं कुतः? कस्माद् हेतोः आपतेद्भवेत् न भवेदित्यर्थः । भवादृशास्त्वद्विधाः दानवाः सदा शिवार्चने स्थिराः निष्ठावन्तः ।।८६।।

**चट्टि–** साल्वो गर्गं निन्दयन् दानवांस्तुवन् पुनराहेत्याह– **कुत इति** ।। मुनेर्गर्गस्य सदा शिवार्चने भाग्यं कुतः? कस्माद् हेतोः आप्यते न कुतोऽपि । भवादृशास्त्वद्विधाः दानवाः सदा शिवार्चने स्थिराः निष्ठावन्तः ।।८६।।

**सुतोऽस्य कालनामको बभूव कृष्णमर्दितुम् ।**
**सदैव कालकाङ्क्षणात् स यावनाभिषेचितः ।।८७।।**

**व्यासतीर्थीया–** कृष्णमर्दितुं सदैव कालकाङ्क्षणात् कालनामकः ।।८७।।

**वेदाङ्गतीर्थीया–** कृष्णं अर्दितुं हन्तुं सदा कालकाङ्क्षणात् कालप्रतीक्षणात् कालः । सः यावनाभिषेचितः अभूदिति... ।।८७-१०२।।

**वादिराजतीर्थीया–** सदैव कालकाङ्क्षणादित्यत्र कृष्णमर्दितुं कालकाङ्क्षणात् कालनामको बभूवेति पूर्वेणान्वयः ।।८७-९२।।

**वरदराजीया–** अस्य गर्गस्य सुतः कृष्णमर्दितुं सदैव कालस्य काङ्क्षणात् प्रतीक्षणान्निमित्तात् कालनामको बभूवेत्यर्थः । स कालनामा यावनेन भूभृता अभिषेचित स्वराज्येऽभिषिक्तः ।।८७।।

**अनन्तभट्टीया–** ।। **कालेति** ।। कृष्णवधकालकाङ्क्षणात् कालनामकः ।।८७।।

**जनार्दनीया–** अस्य गर्गस्य सुतः कालनामको बभूव । कुतः? कृष्णं अर्दितुं संहर्तुं सदैव कालस्य काङ्क्षणात् प्रतीक्षणात् । सः कालः यावनेन अभिषेचितः अभिषिक्तोऽभूद्यत इति शेषः । तस्माद्यावन इत्यर्थः ।।८७।।

**चट्टि–** अस्य गर्गस्य सुतः श्रीकृष्णं अर्दितुं हन्तुं सदैव कालस्य काङ्क्षणात् प्रतीक्षणात् कालनामको बभूव । सः कालः यावनेन स्वराज्ये अभिषेचितः अभिषिक्तोऽभूद्यत इति शेषः । तस्माद्यावन इत्यर्थः ।।

**तवैव शिष्य एष चातिभक्तिमान् हि शङ्करे ।**
**प्रभूतसेनया युतो बलोद्धतश्च सर्वदा ।।८८।।**

**वरदराजीया–** एषः तवैव शिष्यः हि यस्मात् शङ्करे भक्तिमान् तस्मात् तव शिष्य एव इत्यर्थः । प्रभूतया बहुसेनया[१] ।।८८।।

**जनार्दनीया–** एषः कालयावनः । प्रभूतयोत्कृष्टया ।।८८।।

**चट्टि–** एषः कालयावनश्च तवैव शिष्यः शङ्करे अतिभक्तिमान् प्रभूतयोत्कृष्टया सेनया युतः सर्वदा बलोद्धतश्च ।।८८।।

**तमेष यामि शासनात् तवोपनीय सत्वरम् ।**
**विकृष्णकं क्षितेस्तलं विधाय संरमामहे ।।८९।।**

**सत्याभिनवतीर्थीया–** तत्रैव विकृष्णकं विधाय च...इत्यस्ति । तस्य अर्थः । कृष्णं हत्वा क्षितेः तलं विकृष्णकं कृष्णवार्तारहितं च विधाय रमामहे इति । एतेन हननक्रियाबोधार्थं 'कृष्णं हत्वा' इति वक्तव्यम्, 'क्षितेस्तलं विकृष्णकं विधाय' इति कथनमनुपपन्नम् । कृष्णस्य हननाभावेऽपि क्षितेस्तलादन्यत्र गमनमात्रेण क्षितेस्तलस्य कृष्णराहित्यसम्भवादिति दूषणं परास्तम् । 'कृष्णं हत्वा' इति शेषेण कृष्णहननमुच्यत इत्यभ्युपगमात् । एतेनैव अध्याहृतेन 'कृष्णं हत्वा' इत्यनेनैव क्षितेस्तलस्य कृष्णराहित्यलाभात् 'क्षितेस्तलं विकृष्णकं विधाय' इति कथनं व्यर्थमिति दूषणं परास्तम् । 'क्षितेस्तलं विकृष्णकं विधाय' इत्यनेन क्षितेस्तलं कृष्णरहितं कृत्वेत्यर्थो नोच्यते । किन्तु क्षितेस्तलं कृष्णवार्तारहितं कृत्वेत्यर्थ उच्यत इति स्वीकरणात् ।।८९।।

**वरदराजीया–** तं कालं एषोऽहं तव शासनात् यामि गच्छामि । गत्वा सत्वरं वेगेन तं कालयवनं आनीय तेन क्षितेस्तलं विकृष्णकं विगतकृष्णं विधाय कृत्वा सम्यक् रमामहे सुखेन वर्तामहे ।।८९।।

**अनन्तभट्टीया–** तव शासनात् उपनीय...।।८९।।

**जनार्दनीया–** अहं तव शासनात् तं प्रति यामि गच्छामि । एवं तमेव कालयवनं सत्वरं तव उपानीय समीपमानीय क्षितेस्तलं भूलोकं, विगतः कृष्णो यस्मात् तत् तादृशं विधाय रमामहे ।।८९।।

**चट्टि–** अहं तव शासनात् तं प्रत्येव यामि गच्छामि । तं कालयावनं सत्वरं तव उपानीय समीपमानीय क्षितेस्तलं भूलोकम् । विगतः कृष्णो यस्मात् तत् तथा तादृशं विधाय च रमामहे ।।८९।।

**ततश्च रुक्मिणीं वयं प्रदापयाम चेदिपे ।**
**विनाश्य देवपक्षिणो यथेष्टमास्म सर्वदा ।।९०।।**

---

१. 'प्रभूतयावनाख्यसेनया' इति क्वचित् ।

**वरदराजीया–** एतदेव विवृणेति– **ततश्चेति** ।। चेदिपे शिशुपालार्थम् । देवपक्षिणो नृपान् । यथेष्टमिति क्रियाविशेषणम् । आस्म तिष्ठामहे ।।९०।।

**जनार्दनीया–** ततः प्रदापयाम दापयिष्यामः । यथेष्टं यथा भवति तथा । आस्म तिष्ठामः ।।९०।।

**चट्टि–** ततः वयं रुक्मिणीं चेदिपे शिशुपालाय प्रदापयाम दापयिष्यामः । देवपक्षिणः नृपान् विनाश्य यथेष्टं यथा भवति तथा, आस्म तिष्ठामः ।।९०।।

**इतीरितो जरासुतो बभूव दुर्मना भृशम् ।**
**किरीटमण्डितं शिरश्चकार चाऽश्ववाग् भृशम् ।।९१।।**

**वरदराजीया–** अवाक् अधश्चकार ।।९१।।

**जनार्दनीया–** दुर्मनाः दुःखयुक्तमनाः । किरीटेन मुकुटेन मण्डितं अलङ्कृतं शिरः अवाक् चकार अधश्चकार ।।९१।।

**चट्टि–** साल्वेन इतीरितः जरासुतः भृशं दुर्मनाः दुःखयुक्तमनाः बभूव । किरीटेन मण्डितं अलंकृतं शिरः आशु भृशं अवाक्चकार अधश्चकार ।।९१।।

**करं करेण पीडयन् निशाम्य चाऽत्मनो भुजौ ।**
**जगाद कार्यसिद्धये कथं प्रयाचये परम् ।।९२।।**

**वरदराजीया–** भुजौ निशाम्य अवलोक्य जगाद । किमिति । स्वकार्यसिद्धये परं अन्यं कथं प्रयाचये प्रार्थये ।।९२।।

**अनन्तभट्टीया–** निशाम्य निरीक्ष्य ।।९२।।

**जनार्दनीया–** करं करेण पीडयन् मर्दयन् आत्मनः भुजौ निशाम्य निरीक्ष्य जगाद । किमिति ? कार्यसिद्धये स्वकार्यनिष्पत्त्यै परं अन्यं कथं प्रयाचये प्रार्थये ।।९२।।

**चट्टि–** करं करेण पीडयन् मर्दयन् आत्मनः भुजौ निशाम्य दृष्ट्वा जगाद । किमिति ? कार्यसिद्धये स्वकार्यनिष्पत्तौ परं अन्यं कथं प्रयाचये प्रार्थये ।।९२।।

**सुदुर्गकार्यसन्ततिं ह्यगुः स्म मद्भुजाश्रयाः ।**
**समस्तभूतले नृपाः स चाहमेष मागधः ।।९३।।**

**वरदराजीया–** एषः तवैव शिष्यः हि यस्मात् शङ्करे भक्तिमान् तस्मात् तव शिष्य एव इत्यर्थः । प्रभूतया बहुसेनया[१] ।।८८।।

**जनार्दनीया–** एषः कालयावनः । प्रभूतयोत्कृष्टया ।।८८।।

**चट्टि–** एषः कालयावनश्च तवैव शिष्यः शङ्करे अतिभक्तिमान् प्रभूतयोत्कृष्टया सेनया युतः सर्वदा बलोद्धतश्च ।।८८।।

**तमेष यामि शासनात् तवोपनीय सत्वरम् ।**
**विकृष्णकं क्षितेस्तलं विधाय संरमामहे ।।८९।।**

**सत्याभिनवतीर्थीया–** तत्रैव विकृष्णकं विधाय च...इत्यस्ति । तस्य अर्थः । कृष्णं हत्वा क्षितेः तलं विकृष्णकं कृष्णवार्तारहितं च विधाय रमामहे इति । एतेन हननक्रियाबोधार्थं 'कृष्णं हत्वा' इति वक्तव्यम्, 'क्षितेस्तलं विकृष्णकं विधाय' इति कथनमनुपपन्नम् । कृष्णस्य हननाभावेऽपि क्षितेस्तलादन्यत्र गमनमात्रेण क्षितेस्तलस्य कृष्णराहित्यसम्भवादिति दूषणं परास्तम् । 'कृष्णं हत्वा' इति शेषेण कृष्णहननमुच्यत इत्यभ्युपगमात् । एतेनैव अध्याहृतेन 'कृष्णं हत्वा' इत्यनेनैव क्षितेस्तलस्य कृष्णराहित्यलाभात् 'क्षितेस्तलं विकृष्णकं विधाय' इति कथनं व्यर्थमिति दूषणं परास्तम् । 'क्षितेस्तलं विकृष्णकं विधाय' इत्यनेन क्षितेस्तलं कृष्णरहितं कृत्वेत्यर्थो नोच्यते । किन्तु क्षितेस्तलं कृष्णवार्तारहितं कृत्वेत्यर्थ उच्यत इति स्वीकरणात् ।।८९।।

**वरदराजीया–** तं कालं एषोऽहं तव शासनात् यामि गच्छामि । गत्वा सत्वरं वेगेन तं कालयवनं आनीय तेन क्षितेस्तलं विकृष्णकं विगतकृष्णं विधाय कृत्वा सम्यक् रमामहे सुखेन वर्तामहे ।।८९।।

**अनन्तभट्टीया–** तव शासनात् उपनीय...।।८९।।

**जनार्दनीया–** अहं तव शासनात् तं प्रति यामि गच्छामि । एवं तमेव कालयवनं सत्वरं तव उपानीय समीपमानीय क्षितेस्तलं भूलोकं, विगतः कृष्णो यस्मात् तत् तादृशं विधाय रमामहे ।।८९।।

**चट्टि–** अहं तव शासनात् तं प्रत्येव यामि गच्छामि । तं कालयावनं सत्वरं तव उपानीय समीपमानीय क्षितेस्तलं भूलोकम् । विगतः कृष्णो यस्मात् तत् तथा तादृशं विधाय च रमामहे ।।८९।।

**ततश्च रुक्मिणीं वयं प्रदापयाम चेदिपे ।**
**विनाश्य देवपक्षिणो यथेष्टमास्म सर्वदा ।।९०।।**

---

१. 'प्रभूतयावनाख्यसेनया' इति क्वचित् ।

**वरदराजीया–** एतदेव विवृणोति– **ततश्चेति** ।। चेदिपे शिशुपालार्थम् । देवपक्षिणो नृपान् । यथेष्टमिति क्रियाविशेषणम् । आस्म तिष्ठामहे ।।९०।।

**जनार्दनीया–** ततः प्रदापयाम दापयिष्यामः । यथेष्टं यथा भवति तथा । आस्म तिष्ठामः ।।९०।।

**चट्टि–** ततः वयं रुक्मिणीं चेदिपे शिशुपालाय प्रदापयाम दापयिष्यामः । देवपक्षिणः नृपान् विनाश्य यथेष्टं यथा भवति तथा, आस्म तिष्ठामः ।।९०।।

**इतीरितो जरासुतो बभूव दुर्मना भृशम् ।**
**किरीटमण्डितं शिरश्चकार चाऽश्ववाग् भृशम् ।।९१।।**

**वरदराजीया–** अवाक् अधश्चकार ।।९१।।

**जनार्दनीया–** दुर्मनाः दुःखयुक्तमनाः । किरीटेन मुकुटेन मण्डितं अलङ्कृतं शिरः अवाक् चकार अधश्चकार ।।९१।।

**चट्टि–** साल्वेन इतीरितः जरासुतः भृशं दुर्मनाः दुःखयुक्तमनाः बभूव । किरीटेन मण्डितं अलंकृतं शिरः आशु भृशं अवाक्चकार अधश्चकार ।।९१।।

**करं करेण पीडयन् निशाम्य चाऽत्मनो भुजौ ।**
**जगाद कार्यसिद्धये कथं प्रयाचये परम् ।।९२।।**

**वरदराजीया–** भुजौ निशाम्य अवलोक्य जगाद । किमिति । स्वकार्यसिद्धये परं अन्यं कथं प्रयाचये प्रार्थये ।।९२।।

**अनन्तभट्टीया–** निशाम्य निरीक्ष्य ।।९२।।

**जनार्दनीया–** करं करेण पीडयन् मर्दयन् आत्मनः भुजौ निशाम्य निरीक्ष्य जगाद । किमिति ? कार्यसिद्धये स्वकार्यनिष्पत्त्यै परं अन्यं कथं प्रयाचये प्रार्थये ।।९२।।

**चट्टि–** करं करेण पीडयन् मर्दयन् आत्मनः भुजौ निशाम्य दृष्ट्वा जगाद । किमिति ? कार्यसिद्धये स्वकार्यनिष्पत्तौ परं अन्यं कथं प्रयाचये प्रार्थये ।।९२।।

**सुदुर्गकार्यसन्ततिं ह्यगुः स्म मद्भुजाश्रयाः ।**
**समस्तभूतले नृपाः स चाहमेष मागधः ।।९३।।**

**वादिराजतीर्थीया–** सुदुर्गकार्यसन्ततिमित्यत्र सुष्ठु दुर्गा प्राप्तुमशक्या या कार्यसन्ततिः तामित्यर्थः ॥९३॥

**वरदराजीया–** मद्भुजाश्रयाः नृपाः अन्यैः अत्यन्तं अगम्यं कार्यसन्ततिं कार्यपरम्परां अगुः प्राप्तवन्तः । स एषोऽहं मागधः ॥९३॥

**अनन्तभट्टीया–** अगुः साधितवन्तः ॥९३॥

**जनार्दनीया–** समस्तभूतले सर्वराष्ट्रेष्वित्यर्थः। मद्भुजाश्रया नृपाः सुदुर्गाणां अतीव गन्तुमशक्यानां कार्याणां सन्ततिं समूहं अगुः स्म प्रापुः किल । स च एव एषोऽहं मागधो हि ॥९३॥

**चट्टि–** समस्तभूतले विद्यमानाः नृपाः मद्भुजाश्रया सन्तः सुदुर्गाणां अतीव गन्तुमशक्यानां कार्याणां सन्ततिं समूहं अगुः स्म प्रापुः किल । स च स एव एषोऽहं मागधो हि ॥९३॥

**कदाऽप्यचीर्णमद्य तत् कथं करोमि केवलम् ।**
**गिरीशपादसंश्रयः प्रभुः समस्तभूभृताम् ॥९४॥**

**वादिराजतीर्थीया–** कदाप्यचीर्णमित्यत्र कदाप्यचीर्णं अकृतं तत् याचनमित्यर्थः ॥९४-१०१॥

**वरदराजीया–** अचीर्णं अननुष्ठितं यत् परप्रार्थनं तत् अद्य केवलं कारणं विना कथं करोमि । केवलमित्येतत् विवृणोति– **गिरीशेति** ॥९४॥

**अनन्तभट्टीया–** तत् वरप्रार्थनम् । केवलं गिरीशपादसंश्रयः ॥९४॥

**जनार्दनीया–** अचीर्णं यदन्ययाचनं तत् । अद्य तत्र । गिरीशेत्यादिहेतुगर्भविशेषणम् ॥९४॥

**चट्टि–** कदाप्यचीर्णं अननुष्ठितं यदन्ययाचनं तत् केवलं गिरीशपादसंश्रयः समस्तभूभृतां अहं प्रभुः । अद्य कथं करोमि ॥९४॥

**इतीरितः स सौभराड् जगाद वाक्यमुत्तमम् ।**
**भवानपि स्म मुह्यते किमस्मदादयः प्रभो ॥९५॥**

**वरदराजीया–** उत्तरं परिहाररूपम् । मुह्यते मूढो भवति ॥९५॥

**जनार्दनीया–** उत्तरं परिहाररूपं वाक्यम् । हे प्रभो जरासन्ध । भवानपि मुह्यते मोहं प्राप्नोति ॥

**चट्टि–** जरासन्धेन इतीरितः सः सौभराट् साल्वः उत्तरं परिहाररूपं वाक्यं जगाद । किमिति । प्रभो जरासन्ध भवानपि मुह्यते मोहं प्राप्नोति अस्मदादयः किम् ॥९५॥

**स्वशिष्यकैः कृतं तु यन् किमन्यसाधितं भवेत् ।**
**स्वशिष्यदासवर्गकैः समर्थयन्ति भूभुजः ॥९६॥**

**वरदराजीया–** अन्यसाधितं भवेत् किम्? न भवेदेव । किन्तु स्वेनैव कृतं भवेदित्यर्थः । समर्थयन्ति साधयन्ति ॥९६॥

**जनार्दनीया–** स्वशिष्यकैः यत् कृतं तत् कर्म अन्येन साधितं सम्पादितं भवेत् किम् ? न भवेदित्यर्थः । स्वकृतमेव भवेदिति भावः । स्वशिष्यदासानां वर्गकैः समूहैः करणैः समर्थयन्ति कार्यं सम्पादयन्ति ॥९६॥

**चट्टि–** स्वशिष्यकैः यत् कृतं तत् कर्म अन्येन साधितं सम्पादितं भवेत् किम् ? न भवेदित्यर्थः । स्वकृतमेव भवेदिति भावः । भूभुजः राजानः स्वशिष्यदासानां वर्गकैः समूहैः करणैः समर्थयन्ति कार्यं सम्पादयन्ति ॥९६॥

**अपि स्म ते बलाश्रयप्रवृत्तयोऽस्मदादयः ।**
**पुमान् कुठारसङ्ग्रहादशक्त ईर्यते हि किम् ॥९७॥**

**व्यासतीर्थीया–** न केवलं वयं शिष्या इत्याह– **अपीति** ॥ इतोऽपि खेदो न कार्य इत्याह– **पुमानिति** ॥९७॥

**वरदराजीया–** ते बलाश्रया प्रवृत्तिः येषां ते तथोक्ताः । बलशब्दस्य नित्यसापेक्षत्वात् समासः । शिष्यानुष्ठितं अन्यानुष्ठितं न भवतीत्यत्र दृष्टान्तमाह– **पुमानिति** ॥९७॥

**अनन्तभट्टीया–** ॥ **बलेति** ॥ बलाश्रयात् प्रवृत्तिर्येषां ते तथोक्तः । नित्यसापेक्षत्वात् समासः ॥९७॥

**जनार्दनीया–** अस्मदादयोऽपि मदादयोऽपि ते तव । बलाश्रयेण प्रवृत्तिर्येषां ते तथा । उक्तमेवार्थं दृष्टान्तपूर्वकमाह– **पुमानिति** ॥९७॥

**चट्टि–** अस्मदादयोऽपि मदादयोऽपि ते तव । बलाश्रयेण प्रवृत्तिर्येषां ते तथा । त्वदधीनाः इत्यर्थः। शिष्याद्यनुष्ठितमन्यानुष्ठितं न भवतीत्यत्र दृष्टान्तमाह– **पुमानिति** ॥ पुमान् कुठारस्य परशोः सङ्ग्रहात् ग्रहणात् अशक्त इतीर्यते किम् ? नेर्यते एवेत्यर्थः ॥९७॥

**कुठारसम्मितो ह्यसौ तवैव यावनेश्वरः ।**
**विना भवद्बलं क्वचित् प्रवर्तितुं नहि क्षमः ॥९८॥**

**व्यासतीर्थीया–** कुठारसंमितत्वं तस्य कथमित्यत उक्तम्– **विनेति** ।।९८।।

**वरदराजीया–** कुठारसम्मितत्वं दर्शयति– **विनेति** ।।९८।।

**जनार्दनीया–** कुठारेण परशुना सम्मितो समानः । कुठारसम्मितत्वं स्पष्टयति– **विनेत्यादिना** ।। प्रवर्तितुं कृष्णादन्यत्र प्रवर्तितुं न क्षमः ।।९८।।

**चट्टि–** असौ यावनेश्वरः तव कुठारेण परशुना सम्मितो समानः । कुठारसम्मितत्वं स्पष्टयति– **विनेत्यादिना** ।। भवद्बलं विना कचित् श्रीकृष्णादन्यत्र प्रवर्तितुं न क्षमः न समर्थो हि ।।९८।।

**वरो हि कृष्णमर्दने वृतोऽस्य केवलः शिवात् ।**
**तदन्यशत्रुपीडनात् त्वमेव तस्य रक्षकः ।।९९।।**

**व्यासतीर्थीया–** मद्बलं विना प्रकषितुं [प्रवर्तितुं] न [क्षमश्चेत्तदुरणं] व्यर्थमित्यत आह– **वर इति** ।। केवल एकः ।।९९।।

**सत्याभिनवतीर्थीया–** तत्रैव वरो हि कृष्णमर्दने...इत्यस्ति । तस्यार्थः । अस्य कालयवनस्यार्थे गर्गेण शिवात् केवलः असहायः वरान्तररहित इति यावत् । कृष्णमर्दने वरो वृत इत्येतत् हि प्रसिद्धमिति । एतेन वरान्तररहितः कृष्णमर्दने वरः वृत इति वक्तव्यम् । कृष्णमर्दने केवलो वरो वृत इति कथनमनुपपन्नमिति दूषणं परिहृतम् । असहायवाचकस्य केवलशब्दस्य वरान्तररहित इत्यर्थे तात्पर्यं, कृष्णमर्दने वर इत्यनेनान्वयं च स्वीकृत्य वरान्तररहितः कृष्णमर्दने वरो वृत इत्यर्थस्योक्तत्वात् ।।९९।।

**वरदराजीया–** शिवप्रसादात् बले विद्यमाने किमस्य अस्मद्बलाश्रयणेत्याशङ्क्य शिवप्रदत्तबलं कृष्णविषय एव । अन्यत्र कार्यसाधने त्वद्बलमेवाश्रयणीयं अतः सः कुठारसम्मित एवेत्याह– **वरो हीत्यादिना** ।। केवलो वर इति सम्बन्धः । अस्य कालस्य तदन्यशत्रुपीडनात् रक्षकः रक्षणे विषये । रक्षतेः त्रायत्यर्थत्वात् 'भीत्रार्थानाम्' इति पञ्चमी ।।९९।।

**अनन्तभट्टीया–** अस्य तदन्यशत्रुपीडनात् रक्षकः । रक्षतेः..त्यर्थत्वात् 'भीत्रार्थनाम्' इति पीडनादिति पञ्चमी ।।९९।।

**जनार्दनीया–** एकः केवलः । 'कृत्स्नैकश्च केवलाश्च अवधारिताः' । कुतः? हि यस्मात् केवलं कृष्णमर्दनविषये वरो वृतः तस्मात् क्षमो नेति । अस्य कालनाम्नः तस्मात् कृष्णात् अन्ये ये शात्रवः, तेभ्यो यत्पीडनं भयमित्यर्थः । तस्माद्रक्षकः त्राता त्वमेव नैवान्य इत्यर्थः ।।९९।।

**चट्टि–** कुतः हि यस्मात् केवलं श्रीकृष्णमर्दने विषये अस्य कालयवनस्य शिवात् वरो वृतः । गर्गेणेति शेषः । तस्मात् क्षमो नेति । तस्य कालनाम्नः तस्मात् श्रीकृष्णात् अन्ये ये शात्रवः, तेभ्यो यत्पीडनं भयमित्यर्थः । तस्माद्रक्षकः त्राता त्वमेव नैवान्य इत्यर्थः ।।९९।।

**तवाखिलैरजेयता शिवप्रसादतोऽस्ति हि ।**
**विशेषतो हरेर्जये वरादयं विमृग्यते ।।१००।।**

**वरदराजीया–** एतावता तव न अशक्ततेत्याह– **तवेति** । तर्हि अयं किमर्थं मृग्यत इत्यत आह– **विशेषत इति** ।। हरेः कृष्णस्य जयविषये । वरान्निमित्तात् ।।१००।।

**जनार्दनीया–** कुत इत्यत आह– **तवेति** ।। हि यस्मादजेयता अस्ति तस्मादिति सम्बन्धः । अयं कालः हरेः कृष्णस्य जये जयविषये विशेषतः कृष्णमेव हनिष्यति इत्येवं रूपविशेषात् वरात् विमृग्यते अन्विष्यते ।।१००।।

**चट्टि–** कुत इत्यत आह– **तवेति** ।। हि यस्मात् शिवप्रसादतः तव ते अखिलैः अजेयता अस्ति तस्मादिति सम्बन्धः । अयं हरेः श्रीकृष्णस्य जये विषये विशेषतः श्रीकृष्णमेव हनिष्यति इत्येवं रूपविशेषाद्वरात् विमृग्यते अन्विष्यते ।।१००।।

**इतीरितेऽप्यतृप्तवत् स्थिते तु बार्हद्रथे ।**
**जगाम सौभमास्थितः स सौभराट् च यावनम् ।।१०१।।**

**वरदराजीया–** अतृप्तवत् असन्तुष्टवत् । यावनं कालयावनम् ।।१०१।।

**जनार्दनीया–** अतृप्तवत् अतुष्टवत् । सौभे सौभविमाने राजते असौ तथा । स साल्वः सौभविमानं आस्थितः आरूढः सन् यावनं प्रति जगाम ।।१०१।।

**चट्टि–** साल्वेन इतीरितेऽपि बार्हद्रथे जरासन्धे अतृप्तवत् असन्तुष्टवत् स्थिते सति, सौभविमाने राजते इति सौभराट् साल्वः सौभं विमानं आस्थितः आरूढः सन् यावनं प्रति जगाम च ।।१०१।।

**स कालयावनोऽथ तं जरासुतान्तिकागतम् ।**
**निशम्य भक्तिपूर्वकं प्रणम्य चाऽर्चयद् द्रुतम् ।।१०२।।**

**वादिराजतीर्थीया–** स कालयावन इत्यत्र यवनपुत्रो यावनः कालश्चासौ यावनश्चेति विग्रहः । स्वनिष्ठजातिविवक्षया कालयावन इत्यपि तस्यैव नाम ।।१०२-१०९।।

**वरदराजीया–** जरासुतास्यान्तिकात् आगतं तं साल्वं निशम्य श्रुत्वा ।।१०२।।

**जनार्दनीया–** अन्तिकादागतं साल्वं अर्चयत् ।।१०२।।

**चट्टि–** अथ अनन्तरं सः कालयावनः जरासुतस्य अन्तिकात् समीपात् आगतं साल्वं निशम्य श्रुत्वा भक्तिपूर्वकं प्रणम्य द्रुतं अर्चयत् ।।१०२।।

**जरासुतो हि दैवतं समस्तकेशवद्विषाम् ।**
**इति प्रणम्य तां दिशं तदीयमाश्वपूजयत् ।।१०३।।**

**व्यासतीर्थीया–** इति हेतोः प्रणम्य ।।१०३।।

**वेदाङ्गतीर्थीया–** तदीयं जरासन्धसम्बन्धिनं साल्वं अपूजयत् ।।१०३।।

**वरदराजीया–** समस्तानां केशवद्विषां दैवतं हि यस्मात् तस्मात् तां दिशं यस्यां दिशि जरासन्धो विद्यते तामित्यर्थः । तदीयं जरासुतसम्बन्धिनम् साल्वम् ।।१०३।।

**अनन्तभट्टीया–** तां तां दिशं जरासुतसंयुक्तदेशभागम् ।।१०३।।

**जनार्दनीया–** उक्तमेवार्थं विशिष्यन्नाह– **जरासुत इति** ।। दैवतं देवतानुग्रहद्वारभूतः । गुरुरिति यावत् । तथोक्तं पुरस्तात् 'गुरुर्भवान्' इति । इति बुद्ध्या तां दिशं यस्यां दिशि जरासुतस्तिष्ठति तां दिशमित्यर्थः । तदीयं जरासुतसम्बन्धिनं साल्वम् ।।१०३।।

**चट्टि–** उक्तमेवार्थं विशिष्यन्नाह– **जरासुत इति** ।। समस्तकेशवद्विषां दैवतं देवतानुग्रहद्वारभूतः । गुरुरिति यावत् । तथा चोक्तं पुरस्तात् 'गुरुर्भवान्' इति । इति बुद्ध्या तां दिशं यस्यां दिशि जरासन्धस्तिष्ठति तां दिशमित्यर्थः । प्रणम्य तदीयं जरासन्धसम्बन्धिनं साल्वं आशु अपूजयत् हि ।।१०३।।

**तदीरितं निशम्य च द्रुतं त्रिकोटिसङ्ख्यया ।**
**अक्षोहिणीकया युतः स्वसेनया निराक्रमत् ।।१०४।।**

**वरदराजीया–** तेन साल्वेन ईरितम् । त्रिकोटिसङ्ख्यया कोटित्रयसङ्ख्याकाश्वयुक्तया बह्वक्षौहिणीयुक्तया स्वसेनया निराक्रमत् निर्गतवान् ।।१०४।।

**जनार्दनीया–** तदीरितं साल्वोक्तं निशम्य । त्रिकोटिसङ्ख्यया अक्षौहणीकया स्वसेनया त्रिकोटिसङ्ख्याकाक्षौहिणीसङ्ख्याकया स्वसेनया युतः । कालयावनः निराक्रमत् निर्जगाम ।।१०४।।

**ताम्रपर्णीया–** ।। **त्रिकोटिसङ्ख्ययाऽक्षोहिणीकयेति** ।। अनेन 'रुरोध मधुरामेत्य तिसृभिः म्लेच्छकोटिभिः' इति [भा.१०.५३.२८] भागवतकोटिशब्दस्य कोट्यक्षौहिणीपर्यवसानमित्युक्तं भवति ।। ।।१०४-१०६।।

**चट्टि–** तदीरितं साल्वोक्तं निशम्य त्रिकोटिसङ्ख्यया अक्षौहिणीकया त्रिकोटिसङ्ख्याकाक्षौहिणीसङ्ख्याकया स्वसेनया युतः युक्तः कालयावनः द्रुतं निराक्रमत् निर्जगाम च ।।१०४।।

**तदश्वमूत्रविष्ठया बभूव नामतः शकृत् ।**
**नदी सुवेगगामिनी कलौ च या वहेद् द्रुतम् ।।१०५।।**

**वेदाङ्गतीर्थीया–** वहेत् प्रवहेत् ।।१०५।।

**वरदराजीया–** तस्य कालस्याश्वनां मूत्रेण विष्ठया च सुवेगगामिनी अत्यन्तं वेगेन गच्छन्ती नामतः शकृदिति प्रसिद्धा नदी बभूव । या नदी कलौ कलियुगे वहेत् वहति तिष्ठेत् ।।१०५।।

**जनार्दनीया–** तस्य अश्वानां मूत्रं च विष्ठा च तयोः समाहारः तदश्वमूत्रविष्ठा तया । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति सूत्रेण परवल्लिङ्गता । सुवेगेन गच्छति वहतीति तथा । नामतः नाम्ना शकृत् शकृदिति प्रसिद्धा नदी बभूव । या नदी कलौ युगे द्रुतं वेगेन वेगात् वहेत् प्रवहति ।।१०५।।

**अतिविशद–** तदश्वमूत्रविष्ठया इत्यत्र समाहारद्वन्द्वः इतरेतरद्वन्द्वो वा । नाद्यः । समाहारस्य नपुंसकत्वनियतत्वेन मूत्रविष्ठितमिति स्यात् । मूत्रविष्टया इति कथमुक्तमिति चेन्न । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्यनेन परलिङ्गत्वोपपत्तेः । मूत्रसहितविष्टयेति वा ।।१०५।।

**चट्टि–** तस्य अश्वानां मूत्रं च विष्ठा च तयोः समाहारः तदश्वमूत्रविष्ठा तया । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति सूत्रेण परवल्लिङ्गता । सुवेगेन गच्छति वहतीति सुवेगगामिनी । नामतः नाम्ना शकृत् शकृदिति प्रसिद्धा नदी बभूव । या नदी कलौ युगे द्रुतं वेगेन वहेत् प्रवहति ।।१०५।।

**पुनः पुनर्नदीभवं निशाम्य देशसङ्क्षयम् ।**
**तदन्यदेशमूत्रितं व्यशोषयद्धि मारुतः ।।१०६।।**

**मधुसूदनीया–** ।। **तदन्यदेशमूत्रितम्** ।। तस्याः शकृद्याः सकाशात् अन्यस्मिन्देशे स्थितं मूत्रमित्यर्थः ।।

**वरदराजीया–** पुनः पुनः अश्वमूत्रपुरीषाभ्यां नद्या भवं उत्पत्तिं देशस्य सङ्क्षयो यस्मात् नदीभवात् । तं निशम्य अवलोक्य मारुतो वायुः तदन्यस्मिन् शकृन्नदीदेशादन्यस्मिन् देशे मूत्रितं मूत्रं व्यशोषयत् शोषयामास । पुनः यथा नदी न स्यात्तथा चकारेति भावः ।।१०६।।

**अनन्तभट्टीया–** ।। तदन्येति ।। शकृन्नदीदेशादन्यदेशमूत्रितम् ।।१०६।।

**जनार्दनीया–** मारुतो वायुः पुनः पुनः नदीभ्यो भवं उत्पन्नं देशानां सङ्क्षयं नाशं निशाम्य दृष्ट्वा तस्माच्छकृन्नदीदेशात् अन्यदेशे मूत्रितं मूत्रं व्यशोषयत् ।।१०६।।

**चट्टि–** मारुतो वायुः पुनः पुनः नदीभवं उत्पन्नं देशानां सङ्क्षयं नाशं निशाम्य दृष्ट्वा तस्याः शकृन्नद्याः सकाशात् अन्यस्मिन् देशे स्थितं मूत्रितं मूत्रमित्यर्थः । व्यशोषयत् हि ।।१०६।।

**हरिश्च वैनतेययुग् विचार्य रामसंयुतः ।**
**सदाऽतिपूर्णसंविदप्यजोऽथ लीलयाऽस्मरत् ।।१०७।।**

**वेदाङ्गतीर्थीया–** इत्यस्मरत् अचिन्तयत् ।।१०७।।

**सत्याभिनवतीर्थीया–** तत्रैव हरिश्च वैनतेययुग्विचार्य...इति श्लोकः । तस्यार्थः । अथ अनन्तरं वैनतेययुक् रामसंयुतः हरिः लीलया कालयवनादिनिराकरणसमर्थोऽपि सदा अतिपूर्णसंविदपि विचारितकार्यनिर्वाहकं अस्मरदिति । कथं विचारः कृतः विचारितकार्यनिर्वाहकं कमस्मरदिति शङ्काद्वयपरिहारार्थं 'हरिश्च वैनतेययुक्' इति श्लोकोक्तस्य विवरणं 'युयुत्सुरेष यावनः' इत्यादिना 'अस्मरत् सुरेशवर्धकिम्' इत्यन्तेन क्रियते । एतेन 'लीलया' इत्येतदनन्वितमिति दूषणं परास्तम् । कालयवनादि-निराकरणसमर्थोऽपीत्यध्याहृतेनान्वयस्योक्तत्वात् । एतेनैव अस्मरदित्यस्य विचारमकरोदित्यर्थो वक्तव्यः । सः न सम्भवति । 'विचार्य' इत्यनेन विचारस्योक्तत्वादिति शङ्का परास्ता । 'अस्मरत्' इत्यस्य 'विचारमकरोत्' इत्यर्थमनङ्गीकृत्य 'स्मरणमकरोत्' इत्यर्थ इत्यभ्युपगमात् । एतेनैव 'अस्मरत्' इत्यस्य कर्म नोक्तमिति शङ्कानवकाशः । विचारितकार्यनिर्वाहकमित्यस्य शेषेण कर्मोच्यते इति स्वीकरणात् । एतेनैव 'युयुत्सुरेष यावनः' इत्यादिकं 'हरिश्च वैनतेययुक्' इति श्लोकेन पुनरुक्तमिति चोद्यं प्रत्युक्तम् । अधिकविधानार्थं 'युयुत्सुरेष यावनः' इत्यादिकं प्रवृत्तमित्यभ्युपगमात् ।।१०७।।

**मधुसूदनीया–** अस्मरन् विचारं कृतवानित्यर्थः ।।१०७।।

**वरदराजीया–** वैनतेययुक् गरुडेन युक्तः रामेण बलभद्रेण च संयुतः । सदा अत्यन्तं पूर्णा संवित् यस्यासौ तथाभूतोऽपि लीलया अस्मरत् चिन्तितवान् ।।१०७।।

**जनार्दनीया–** सदा अत्यन्तं पूर्णं संविज्ज्ञानं यस्य स तथा । रामेण संयुतः वैनतेययुक् विनतायाः अपत्येन गरुडेन युक्तः सन् विचार्य, लीलया क्रीडेच्छयेत्यर्थः । अस्मरत् अचिन्तयत् ।।१०७।।

**ताम्रपर्णीया–** वैनतेययुक् रामसंयुतो हरिश्च विचार्य वक्ष्यमाणप्रकारेण कर्तव्यमस्मरत् । न केवलमस्मरत् । एवमुदीर्य चेत्यन्वयः [श्लो-१११] ।।१०७-१०९।।

**भावचन्द्रिका**— प्रागगृहीतस्य मध्ये अननुसंहितस्य पुनरनुसन्धानं स्मरणम् । एवञ्च अस्मरदिति ज्ञानस्य आगन्तुकत्वं प्रतीयते । अत आह— **सदेति** ।। 'तदैक्षत' इतिवत् भूत्वाभवनपरं तदिति भावः । 'भक्तानां स्मरणं विष्णोः नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं नैवान्यत्कचित्...।।' इत्यस्य ईशावास्यभाष्यानुसारात् अर्थोऽवगन्तव्यः । अस्मरदिति विश्वकर्माणं तदनुग्रहोन्मुखोऽभवदित्यर्थः ।।१०७।।

**चट्टि**— अथ अनन्तरं सदा अत्यन्तं पूर्णा संविज्ज्ञानं यस्य स तथा, तादृशोप्यजः हरिश्च रामेण संयुतः सन् वैनतेययुक् विनतायाः अपत्येन गरुडेन युक्तः सन् विचार्य, लीलया क्रीडेच्छयेत्यर्थः । अस्मरत् अचिन्तयत् ।।१०७।।

**युयुत्सुरेष यावनः समीपमागतोऽद्य नः ।**
**युयुत्सतामनेन नो जरासुतोऽभियास्यति ।।१०८।।**

**मधुसूदनीया**— किमित्यत आह— **युयुत्सुरिति** ।।१०८-११०।।

**वरदराजीया**— किमिति युयुत्सुः योद्धुकामो यावनोऽस्माकं समीपं आगतः । अनेन यावनेन नः अस्माकं युयुत्सुतां जरासुतो अभियास्यति आयास्यति ।।१०८।।

**अनन्तभट्टीया**— युयुत्सुतामिति षष्ठी ।।१०८।।

**जनार्दनीया**— किमिति ? योद्धुमिच्छतीति युयुत्सुः । अनेन कालेन । नोऽस्माकम् । युयुत्सन्ति योद्धुमिच्छन्तीति युयुत्सवः, तेषां युयुत्सतां सताम् । अभियास्यति आगमिष्यति ।।१०८।।

**अतिविशद**— .... 'अजोऽथ लीलयास्मरत् । युयुत्सुरेष यावनः समीपमागतो हि नः । युयुत्सुतामनेन नो जरासुतोऽभियास्यति । स यादवान् हनिष्यति प्रभङ्गतस्तु कोपितः । पुरा जयाशया हि नो यदून् न जघ्निवानसौ । निराशकोऽद्य यादवान् अपि स्म पीडयिष्यति । अतः समुद्रमध्यापुरीविधानमद्य मे । प्ररोचते निधानमप्यमुत्र सर्वसात्वताम् ।।' इत्यादिना जरासुताद्यशक्यपुरीनिर्माणमुच्यते । तदयुक्तमिवाभाति । जरासुतादीनां स्वर्गगमनेऽप्यशक्यत्वाभावात् । यथोक्तं पूर्वत्र- '...ऊचिरे वचः सुगर्वितो हि वासवः । पुरा बिभेति नः सदा प्रति प्रति स्म वासवः । उताद्य कृष्णसंश्रयात् दृढं विभीषयत्यसौ । पुरा दिविस्थितस्य च प्रमर्दने वयं क्षमाः ।। उताद्य यद्यमुं व्रजेम कृष्ण एष्यति ।।' इत्यादिना पूर्वोत्तरग्रन्थपर्यालोचनया जरासुतशिष्यसर्वराज्ञां स्वर्गगमनशक्तिः तत्रस्थितदेवेन्द्रबाधनशक्तिश्च प्रतीयते तस्मात् भक्षितेऽपि लशुने न शान्तो व्याधिरितिवत् द्वारवतीनिर्माणेऽपि जरासुतादिबाधानिस्तारात् । न च स्वर्गबाधनशक्तिसद्भावेऽपि द्वारावतीबाधने तेषां सामर्थ्याभाव इति वाच्यम् । साल्वपौण्ड्रादिभिस्तद्बाधनस्य उत्तरत्र ग्रन्थकारैरेव वक्ष्यमाणत्वात् । तस्मात् कथमेतदिति चेत् न ।

'देव्याः हरेः किमु विडम्बनमात्रमेतत् । विक्रीडतोः सुरनरादिवदेव तस्मात्' इत्यादिना सर्वज्ञाचार्यैरेव सर्वानुपपत्तेः परिहारात् । इदमत्राकूतम् । द्वारवतीनिर्माणेन केवलं नरान् विडम्बता कृष्णेन नराशक्यं द्वारवतीनिर्माणनं कृतम् । तदनन्तरं अहं कृतकार्य इति कृष्णेनोक्ते हे स्वामिन् न स्वयं कृतकार्यः जरासुतादीनामेतद्बाधने ह्यशक्यत्वाभावादिति पुनरुद्धवादिभिरुक्ते तर्हि सर्वैः पुर्याः समरक्षणेनैव भाव्यमित्युक्त्वा सर्वस्थापनं कृतमिति । अन्यथा बलरामादिसर्वयदून् परित्यज्य एकस्यैव युद्धगमनानुपपत्तेः । पूर्वमेवं कदापि अकृतत्वात् सर्वस्थापनस्य एतत्प्रयोजनाभावे अन्यत्प्रयोजनमित्यास्तां विस्तरः ।।१०८।।

**चट्टि—** किमिति ? यावनः युयुत्सुः योद्धकाम एव अद्य नोऽस्माकं समीपमागतः । अनेन नो युयुत्सतां जरासुतः अभियास्यति आगमिष्यति ।।१०८।।

**स यादवान् हनिष्यति प्रभङ्गतस्तु कोपतः[1] ।**
**पुरा जयाशया हि नो यदून् न जघ्निवानसौ ।।१०९।।**

**वेदाङ्गतीर्थीया—** प्रभङ्गतः पराजयात् । जयाशया विजेष्ये यदुपुर्यां दौहित्रं स्थापयिष्य इति चाशया ।।१०९।।

**वरदराजीया—** सः जरासुतः प्रभङ्गतः बहुवारं युद्धे स्वभङ्गेन नोऽस्माकं जयाशया ।।१०९।।

**अनन्तभट्टीया—** नः जयाशया ।।१०९।।

**जनार्दनीया—** स जरासन्धः प्रभङ्गतः स्वेन प्राप्तपराभवात् जनान् कोपतो हनिष्यति । ननु पुरा पराजितो जरासन्धः कुतो न जघानेत्यत आह— **पुरेति** ।। असौ जरासन्धः पुरा पूर्वयुद्धेषु जयाशया स्वस्य उत्तरत्र जयः स्यादित्याशया नोऽस्माकं यदून् यादवान् न जघ्निवान् जघान । यदुपुर्यां दौहित्रस्य साम्राज्यार्थमेव न जघ्निवानिति भावः ।।१०९।।

**चट्टि—** स जरासन्धः प्रभङ्गतः स्वेन बहुवारं युद्धे प्रभङ्गतः कोपितः सन् यादवान् हनिष्यति । ननु पुरा पराजितो जरासन्धः यादवान् कुतो न जघानेत्यत आह— **पुरेति** ।। असौ जरासन्धः पुरा पूर्वं युद्धेषु जयाशया स्वस्य उत्तरत्र जयः स्यादित्याशया नोऽस्माकं यदून् यादवान् न जघ्निवान् ।।१०९।।

**निराशकोऽद्य यादवनापि स्म पीडयिष्यति ।**
**अतः समुद्रमध्यगापुरीविधानमद्य मे ।**
**प्ररोचते निधानमप्यमुत्र सर्वसात्त्वताम् ।।११०।।**

---
१. 'कोपितः' इति चट्टिपाठः ।

**वेदाङ्गतीर्थीया–** निराशकः रामकृष्णौ विजेष्य इत्याशारहितः ।।११०।।

**वादिराजतीर्थीया–** समुद्रमध्यगापुरीविधानमित्यत्र समुद्रमध्यगा आ समन्ताद्ध्रियमाना या पुरी तस्याः विधानं अतिविस्तृतपुरीविधानमित्यर्थः ।।११०-१११।।

**वरदराजीया–** निराशको अस्मज्जये । समुद्रमध्यगाया पुर्याः विधानं रचनम् । अमुत्र पुर्यां सर्वसात्वतां सर्वेषां यादवनां निधानं स्थापनम् ।।११०।।

**जनार्दनीया–** अद्य निराशकः जयाशया रहितः सन् यादवानपि यादवानेव पीडयिष्यति स्म । अस्मान् पीडयितुं न समर्थ इति भावः । समुद्रस्य मध्ये गच्छतीति तथा, सा च सा पुरी च, तस्याः विधानं निर्माणम् । अमुत्र पुर्यां सर्वसात्वतां सर्वेषां यादवानां निधानमपि संस्थापनमपि अद्य मे प्ररोचते रुचिर्जायते । 'रुचिर प्रीणने' इति धातुः ।।११०।।

**ताम्रपर्णीया–** ।। **समुद्रमध्यगेति** ।। समुद्रमध्यगा च सा आ विस्तृता पुरी चेति विग्रहः ।।११०-११२।।

**चट्टि–** अद्य तु निराशकः जयाशयारहितस्सन् यादवानपि यादवानेव पीडयिष्यति । अस्मान् पीडयितुं न समर्थ इति भावः । अतः समुद्रस्य मध्ये गच्छतीति समुद्रगा, सा च सा पुरी च, तस्याः विधानं निर्माणम् । अमुत्र पुर्यां सर्वसात्वतां विधानमपि संस्थापनमपि अद्य मे प्ररोचते रुचिर्जायते । 'रुचिर् प्रीणने' इति धातुः ।।११०।।

**उदीर्य चैवमीश्वरोऽस्मरत् सुरेशवर्धकिम् ।**
**स भौवनः समागतः कुशस्थलीं विनिर्ममे ।।१११।।**

**वेदाङ्गतीर्थीया–** भौवनः विश्वकर्मा ।।१११।।

**वादिराजतीर्थीया–** स भौवनस्समागत इत्यत्र भौवनः भुवनाख्यवर्धकिपुत्रः विश्वकर्मा ।। ।।१११-१२०।।

**मधुसूदनीया–** ।। **स भौवन इति** ।। भुवननिर्मातृत्वाद्भौवनो वर्धकीभूतो विश्वकर्मेत्यर्थः । यत्तु 'भौवनः भुवनाख्यस्याऽपत्यम्' इति वरदराजीयानन्तभट्टीयव्याख्यानम् । तन्न । विश्वकर्मणः द्युनामापरपर्यायप्रभासाख्याष्टमवसुजन्यत्वेन भुवनाख्यजन्यत्वस्य काप्यप्रसिद्धेः । 'बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी । योगसिद्धा जगत् कृत्स्नमसक्ता विचचार ह ।। प्रभासस्य तु सा भार्या वसूनामष्टमस्य तु । विश्वकर्मा महाभागः तस्यां जज्ञे प्रजापतिः।।' इति हरिवंशोक्तेः [१.३.४५-४६] । नच पूर्वजन्मनि

भुवनाख्यदेवजन्यत्वं सम्भविष्यतीति वाच्यम् । 'शिल्पिमुख्यस्तु देवानां प्रजापतिसुतः प्रभुः । विश्वकर्मा स्वमत्या वै पुरीं संस्थापयिष्यति ।।' इति हरिवंशवचनेन [२.५८.२०] पूर्वजन्मनि ब्रह्मसुतत्वोक्तेः । भुवनाख्यदेवस्य क्वाप्यप्रसिद्धत्वाच्च । भौवनिरित्यापाताच्च ।।१११-११२।।

**वरदराजीया–** सुरेशवर्धकिं विश्वकर्माणं अस्मरत् आगन्तव्यमिति चिन्तितवान् । सः विश्वकर्मा भौवनः भुवनाख्यस्यापत्यं कुशस्थलीं तन्नाम्नीं द्वारकां विनिर्ममे निर्मितवान् ।।१११।।

**अनन्तभट्टीया–** भौवनः भुवननाम्नो अपत्यमित्यर्थः ।।१११।।

**जनार्दनीया–** सुरेशवर्धकिं देवतक्षकं विश्वकर्माणं अस्मरत् । भुवनस्यापत्यं भौवनः । स विश्वकर्मा । समागतः सन् कुशस्थलीं द्वारकापुरीं विनिर्ममे रचितवान् ।।१११।।

**चट्टि–** ईश्वरः श्रीकृष्णः एवमुदीर्य सुरेशवर्धकिं देवतक्षाणं विश्वकर्माणं अस्मरत् । सः भौवनः भुवननिर्माणकर्तृत्वात् भौवनः वर्धकिरित्यर्थः । समागतः सन् कुशस्थलीं द्वारकापुरीं विनिर्ममे रचितवान् । भौवनः भवनाख्यस्यापत्यमिति केषाञ्चित् व्याख्यानम् । तत्प्रमाणविरुद्धम् । विश्वकर्मणः द्युनामापरपर्यायप्रभासाख्याष्टमवसुजन्यत्वेन भुवनाख्यजन्यत्वस्य क्वाप्यप्रसिद्धेः । 'बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी । योगसिद्धा जगत् कृत्स्नमसक्ता विचचार ह ।। प्रभासस्य [प्रधानस्य] तु सा भार्या वसूनामष्टमस्य तु । विश्वकर्मा महाभागः तस्यां जज्ञे प्रजापतिः ।।' इति हरिवंशोक्तेः [१प.३अ.४५-४६]। न च पूर्वजन्मनि भुवनाख्यदेवजन्यत्वं सम्भविष्यतीति वाच्यम् । 'शिल्पिमुख्यस्तु देवानां प्रजापतिसुतः प्रभुः । विश्वकर्मा स्वमत्या वै पुरीं संस्थापयिष्यति ।।' इति हरिवंशवचनेन [२प.५८अ.२०] पूर्वजन्मनि ब्रह्मसुतत्वोक्तेः । भुवनाख्यदेवस्य क्वाप्यप्रसिद्धत्वाच्च । भौवनिरित्यापाताच्च ।।१११।।

**निरम्बुके तु सागरे जनार्दनाज्ञया कृते ।**
**महोदकस्य मध्यतश्चकार तां पुरीं शुभाम् ।**
**द्विषट्कयोजनायतां पयोब्धिमध्यगोपमाम् ।।११२।।**

**वरदराजीया–** निरम्बुके निर्गतोदके । परितः स्थितमहोदकस्य मध्यतो मध्ये । द्विषट्कयोजनायतां द्वादशयोजनविस्तृतां पयोब्धिमध्यगोपमां पयोब्धिमध्यगश्वेतद्वीपोपमाम् ।।११२।।

**जनार्दनीया–** तदेव विशदयति– **निरम्बुक इति** ।। निरम्बुके निर्गतजले अपसृतजले इत्यर्थः । सागरे कृते सति, कृष्णेनेति शेषः । जनार्दनाज्ञया महोदकस्य प्राकाररूपेण स्थितजलसमूहस्येत्यर्थः । मध्यतो मध्यप्रदेशे द्विषट्कयोजनैः आयतां विस्तृतां, पयोब्धिमध्यगेन क्षीरसमुद्रमध्यस्थेन उपमां सदृशीम् । अत एव शुभां श्रेष्ठां पुरीं चकार । विश्वकर्मेति शेषः ।।११२।।

**ताम्रपर्णीया–** ।। **द्विषट्केति** ।। 'त्रिंशद्योजनविस्तीर्णं ददौ कृष्णस्य सागरः । असृजत् पयसां मध्ये तत्र द्वारवतीं पुरीम् ।।' इति पाद्मे [उत्तरखण्ड.२४६.४०] ।।११३।।

**भावचन्द्रिका–** ।। **द्विषट्केति** ।। 'त्रिंशद्योजनविस्तारं ददौ कृष्णस्य सागरः । असृजत् पयसां मध्ये तत्र द्वारवतीं पुरीम् ।।' ।।११३।।

**चट्टि–** तदेव विशदयति– **निरम्बुके इति** ।। सागरे निरम्बुके निर्गतजले अपसृतजले इत्यर्थः । कृते सति श्रीकृष्णेनेति शेषः । विश्वकर्मा जनार्दनस्याज्ञया महोदकस्य मध्यतो मध्ये, द्विषट्कयोजनायतां द्विषट्कयोजनैः आयतां विस्तृतां, पयोब्धिमध्यगोपमां पयोब्धिमध्यगेन क्षीरसमुद्रमध्यस्थितेन श्वेतद्वीपेन उपमां सदृशीम् । अत एव शुभां श्रेष्ठां पुरीं चकार ।।११२।।

**चकार लावणोदकं जनार्दनोऽमृतोपमम् ।**
**सभां सुधर्मनामकां ददौ समीरणोऽस्य च ।।११३।।**

**मधुसूदनीया–** ।। **चकार लावणोदकमिति** ।। यद्यपि पूर्वं समुद्रो मधुरोदक एव वडवामुखनारायण-शापेन लवणोदको बभूव । तथाचोक्तम्- 'नारायणो लोकहितार्थं वडवामुखो नाम पुरा महर्षिर्बभूव । तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतः । तेन अमर्षितेन आत्मगात्रोष्मणा समुद्रः स्तिमितजलः कृतः । स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः । उक्तश्चाप्यपेयो भविष्यस्येतच्च ते तोयं वडवामुखसञ्ज्ञितेन पेपीयमानं मधुरं भविष्यति । तदेतदद्यापि वडवामुखसञ्ज्ञितेनाऽनुवर्तिना तोयं समुद्रात् पीयते' इति मोक्षधर्मे [३५१.६१-६२]। तादृशं लवणोदकं अमृतोपमं पीयूषसदृशं चकारेत्यन्वयः । उक्तं च– 'उवाह सर्वगन्धाढ्यं स्वच्छं वारि महोदधिः । तोयं विलवणं मृष्टं वासुदेवस्य शासनात् ।। गुल्फदघ्नं जानुदघ्नं ऊरुदघ्नमथापि वा । नार्यस्ता स्तनदघ्नं वा जलं समभिकाङ्क्षितम् ।।' इति हरिवंशे [२.८८.] ।।११३-११९।।

**वरदराजीया–** लावणं लवणमयं उदकं अमृतोपमं अमृतसदृशम् । समीरणो वायुः ।।११३।।

**अनन्तभट्टीया–** अस्य श्रीकृष्णस्य ।।११३।।[१]

**जनार्दनीया–** लावणं लवणसमुद्रसम्बन्धि, उदकं अमृतेन उपमं तुल्यम् । समीरणो वायुः । सुधर्मनामिकां शोभनो धर्मो यस्यां सा ताम् । 'धर्मादनिच् केवलात्' [सि.कौ.८६३] इति अनिच् । सभां अस्य कृष्णस्यार्थे ददौ ।।११३।।

१. अनन्तभट्टीया– अस्य वर्धकिनः ।।११३।। इति हो.पुस्तके अधिकः पाठः ।

**ताम्रपर्णीया–** ।। **अस्य चेति** ।। कृष्णस्येत्यर्थः । स समीरिणः । केचित्तु 'अस्य वर्धकिनः । स विश्वकर्मा केशवाय तां प्रदाय निधीन् समर्प्य ययौ' इत्यर्थमाहुः ।।११३-१२०।।

**भावचन्द्रिका–** समीरणो मुख्यवायुः । 'प्राणो यो भूतानां' 'मारुतं जगतः प्राणम्' [हरि.२.५८.६८-७०] इति विशेषणात् ।।११३।।

**चट्टि–** जनार्दनः श्रीकृष्णः लावणोदकं लावणं लवणसम्बन्धि उदकं अमृतोपमं पीयूषसदृशं चकार । यद्यपि पूर्वं समुद्रो मधुरोदक एव वडवामुखनारायणशापेन लवणोदको बभूव । तथाचोक्तम्- 'नारायणो लोकहितार्थं वडवामुखो नाम पुरा महर्षिर्बभूव । तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतः। तेनामर्षितेन आत्मगात्रेण समुद्रः स्तिमितजलः कृतः । स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः ।। उक्तश्चापेयो भविष्यस्येत्येतच्च तोयं वडवामुखेन पीयमानं मधुरं भविष्यति । तदेतद् वडवामुख-संज्ञितेनाऽनुवर्तिना तोयं समुद्रात् पीयते ।।' इति मोक्षधर्मे [३५१अ.६१-६२]। उक्तं च– 'उवाह सर्वगन्धाढ्यं स्वच्छं वारि महोदधिः । तोयं चालवणं [विलवणं] मृष्टं [वीर] वासुदेवस्य शासनात् ।। गुल्फदघ्नं जानुदघ्नं ऊरुदघ्नमथापि वा । नार्यस्ता स्तनदघ्नं वा जलं समभिकाङ्क्षितम् ।।' इति हरिवंशे [२प.८८अ.२३-२४] समीरणो वायुः । सुधर्मनामिकां सभां अस्य श्रीकृष्णस्यार्थे ददौ ।।११३।।

**शतक्रतोः सभां तु तां प्रदाय केशवाय सः ।**
**निधीन् समर्प्य सर्वशो ययौ प्रणम्य तं प्रभुम् ।।११४।।**

**वरदराजीया–** शतक्रतोरिन्द्रस्य तां सुधर्माख्याम् । सर्वशो निधीन् नवनिधीन् समर्प्य स सुरवर्धकिः ययौ ।।११४।।

**अनन्तभट्टीया–** ।। **निधीनिति** ।। सङ्ख्या...शेषः । अत एव हरिवंशे–

'स शङ्खः केशवाह्वानं ज्ञात्वा गुह्यकराट् स्वयम् । आजगाम समीपं वै तस्य द्वारवतीपतेः ।।
स शङ्खः प्राञ्जलिर्भूत्वा विनयादवनतस्थितः[1] । विष्णुं विज्ञापयामास यथा वैश्रवणं तथा ।।
भगवन् किं मया कार्यं सुराणां हितरक्षिणा । नियोजय महाबाहो यत्कार्यं यदुनन्दन ।।
तमुवाच हृशीकेषः शङ्खं गुह्यकमुत्तमम् । पुरेऽस्मिन् ये कृशधनाः तान् धनेनाभिपूरय ।।
नेच्छाम्यनशिनं द्रष्टुं कृशं मलिनमेव वा । देहीति चाभिभाषन्तं नगर्यां निर्धनं नरम् ।।
गृहीत्वा शासनं निधिराट् केशवस्य ह । निधीनाज्ञापयामास द्वारवत्याः गृहे गृहे ।।'

इत्युक्तम् । [२.५८.५९-६४] ...इत्यस्मिन् व्याख्यानेऽपि हरिवंशवाक्यमस्ति ।

---

१. 'विनयाद् अवनिं गतः' इति मुद्रितपुस्तकपाठः ।

'चकार वायोराह्वानं भूयश्च पुरुषोत्तमः । प्राणयोनिस्तु भूतानां उपतस्थे जनार्दनम् ।।
एकमासीनमेकान्ते यादवानामथाधिपम् । किं मया देव कर्तव्यं शाधि मां पुरुषोत्तम ।।
यद् ब्रवीषि महाबाहो सर्वं कर्तास्मि तेऽनघ । तमुवाच हृशीकेशः प्रहस्य पुरुषोत्तमः ।।
मारुतं जगतः प्राणं भूषणं समुपस्थितम् । गच्छ मारुत देवेशं अनुमान्य सहामरैः ।।
सभां सुधर्मां आनीय देवेभ्यस्त्वमिहानय । यादवा धार्मिका ह्येते विनताश्च सहस्रशः ।।
तस्यां विशेयुरेते हि न तु या कृत्रिमा भवेत् । सा ह्यक्षया सभा वायो कामगा कामरूपिणी ।।
सा यदून् धारयेत् सर्वान् यथैव त्रिदशांस्तथा । सङ्गृह्य वचनं तस्य कृष्णस्याक्लिष्टकर्मणः ।।
वायुरात्मोपमगतिः जगाम त्रिदशालयम् । सोऽनुमान्य सुरान् सर्वान् कृष्णवाक्यं निवेद्य च ।।
सभां सुधर्मामादाय पुनरायान्महीतलम् । सुधर्मां तां सुधर्माय कृष्णायाक्लिष्टकर्मणे ।।
देवो देवसभां दत्वा वायुरन्तरधीयत ।।' इति[२.५८.६७-७७] ।।११४।।[१]

**जनार्दनीया–** ननु सुधर्मासभा इन्द्रस्येति प्रसिद्धिः । वायुस्तां कथं ददावित्यत आह– **शतक्रतोरिति** ।। स वायुः तां सभां शतक्रतोः इन्द्रादादाय, केशवाय प्रदाय, सर्वशः सर्वान् नवसङ्ख्याकान् निधीन् समर्प्य, तं प्रभुं कृष्णं प्रणम्य, ययौ । 'अस्य वर्धकिः ददौ । स वर्धकिः ययौ' इति व्याख्यानमनादरणीयम् । हरिवंशगतवाक्यविरोधात् । तथाहि– 'गच्छ मारुत देवेशमनुमान्य सहामरैः । सभां सुधर्मामादाय देवेभ्यस्त्वमिहानय ।।' [विष्णुपर्व.५८.७१] इति । तत्रैव–

'वायुरात्मापि जगतो जगाम त्रिदशालयम् । सोऽनुमान्य सुरान् सर्वान् कृष्णवाक्यं निवेद्य च ।।
सभां सुधर्मामादाय पुनरायान्महीतलम् । सुधर्मां तां सुधर्माय कृष्णायाक्लिष्टकारिणे ।।
देवो देवसभां दत्वा वायुरन्तरधीयत ।।' [विष्णुपर्व.५८.७४-७६] इति ।।

स्वकीयं स्वेषां विद्यमानं देवाः यद्यत् विशेषवस्तु तत्तद्धरौ समर्पयन्निति भावः । सोऽच्युतः पक्षिपुङ्गवं गरुडं विमुच्य विहाय, योद्धुमैच्छत् ।।११४-११५।।

**भावचन्द्रिका–** ।। **निधीनिति** ।। कुवेरभृत्याः सकलनिधिनियामकाः पद्ममहापद्मशङ्खमकरकच्छप-मुकुन्दकुन्दनीलखर्वनामानो नव निधयः कृष्णेन स्मृताः आगत्य वाय्वाज्ञया सर्वयादवगृहेषु निधीन् समर्पयामासुः इति ।।११४।।

**चट्टि–** ननु सुधर्मसभा इन्द्रस्येति प्रसिद्धिः । वायुस्तां कथं ददावित्यत आह– **शतक्रतोरिति** ।। स वायुः तां सभां शतक्रतोः इन्द्रादादाय, केशवाय प्रदाय, सर्वशः सर्वान् नवसङ्ख्याकान् निधीन् समर्प्य, तं प्रभुं श्रीकृष्णं प्रणम्य ययौ । 'अस्य वर्धकिः ददौ । स वर्धकिः ययौ' इति व्याख्यानमनादरणीयम् ।

---

१. अनन्तभट्टीया– स विश्वकर्मा केशवाय तां प्रदाय निधीन् समर्प्य ययावित्यर्थमाहुः।। इति हो.पुस्तके अधिकःपाठः ।

**ताम्रपर्णीया–** ।। **अस्य चेति** ।। कृष्णस्येत्यर्थः । स समीरिणः । केचित्तु 'अस्य वर्धकिनः । स विश्वकर्मा केशवाय तां प्रदाय निधीन् समर्प्य ययौ' इत्यर्थमाहुः ।।११३-१२०।।

**भावचन्द्रिका–** समीरणो मुख्यवायुः । 'प्राणो यो भूतानां' 'मारुतं जगतः प्राणम्' [हरि.२.५८.६८-७०] इति विशेषणात् ।।११३।।

**चट्टि–** जनार्दनः श्रीकृष्णः लावणोदकं लावणं लवणसम्बन्धि उदकं अमृतोपमं पीयूषसदृशं चकार । यद्यपि पूर्वं समुद्रो मधुरोदक एव वडवामुखनारायणशापेन लवणोदको बभूव । तथाचोक्तम्- 'नारायणो लोकहितार्थं वडवामुखो नाम पुरा महर्षिर्बभूव । तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतः। तेनामर्षितेन आत्मगात्रेण समुद्रः स्तिमितजलः कृतः । स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः ।। उक्तश्चापेयो भविष्यस्येत्येतच्च तोयं वडवामुखेन पीयमानं मधुरं भविष्यति । तदेतद् वडवामुख-संज्ञितेनाऽनुवर्तिना तोयं समुद्रात् पीयते ।।' इति मोक्षधर्मे [३५१अ.६१-६२]। उक्तं च– 'उवाह सर्वगन्धाढ्यं स्वच्छं वारि महोदधिः । तोयं चालवणं [विलवणं] मृष्टं [वीर] वासुदेवस्य शासनात् ।। गुल्फदघ्नं जानुदघ्नं ऊरुदघ्नमथापि वा । नार्यस्ता स्तनदघ्नं वा जलं समभिकाङ्क्षितम् ।।' इति हरिवंशे [२प.८८अ.२३-२४] समीरणो वायुः । सुधर्मनामिकां सभां अस्य श्रीकृष्णस्यार्थे ददौ ।।११३।।

**शतक्रतोः सभां तु तां प्रदाय केशवाय सः ।**
**निधीन् समर्प्य सर्वशो ययौ प्रणम्य तं प्रभुम् ।।११४।।**

**वरदराजीया–** शतक्रतोरिन्द्रस्य तां सुधर्माख्याम् । सर्वशो निधीन् नवनिधीन् समर्प्य स सुरवर्धकिः ययौ ।।११४।।

**अनन्तभट्टीया–** ।। **निधीनिति** ।। सङ्ख्या...शेषः । अत एव हरिवंशे–

'स शङ्खः केशवाह्वानं ज्ञात्वा गुह्यकराट् स्वयम् । आजगाम समीपं वै तस्य द्वारवतीपतेः ।।
स शङ्खः प्राञ्जलिर्भूत्वा विनयादवनतस्थितः[1] । विष्णुं विज्ञापयामास यथा वैश्रवणं तथा ।।
भगवन् किं मया कार्यं सुराणां हितरक्षिणा । नियोजय महाबाहो यत्कार्यं यदुनन्दन ।।
तमुवाच हृशीकेषः शङ्खं गुह्यकमुत्तमम् । पुरेऽस्मिन् ये कृशधनाः तान् धनेनाभिपूरय ।।
नेच्छाम्यनशिनं द्रष्टुं कृशं मलिनमेव वा । देहीति चाभिभाषन्तं नगर्यां निर्धनं नरम् ।।
गृहीत्वा शासनं निधिराट् केशवस्य ह । निधीनाज्ञापयामास द्वारवत्याः गृहे गृहे ।।'

इत्युक्तम् । [२.५८.५९-६४] ...इत्यस्मिन् व्याख्यानेऽपि हरिवंशवाक्यमस्ति ।

१. 'विनयाद् अवनिं गतः' इति मुद्रितपुस्तकपाठः ।

'चकार वायोराह्वानं भूयश्च पुरुषोत्तमः । प्राणयोनिस्तु भूतानां उपतस्थे जनार्दनम् ।।
एकमासीनमेकान्ते यादवानामथाधिपम् । किं मया देव कर्तव्यं शाधि मां पुरुषोत्तम ।।
यद् ब्रवीषि महाबाहो सर्वं कर्तास्मि तेऽनघ । तमुवाच हृशीकेशः प्रहस्य पुरुषोत्तमः ।।
मारुतं जगतः प्राणं भूषणं समुपस्थितम् । गच्छ मारुत देवेशं अनुमान्य सहामरैः ।।
सभां सुधर्मां आनीय देवेभ्यस्त्वमिहानय । यादवा धार्मिका ह्येते विनताश्च सहस्रशः ।।
तस्यां विशेयुरेते हि न तु या कृत्रिमा भवेत् । सा ह्यक्षया सभा वायो कामगा कामरूपिणी ।।
सा यदून् धारयेत् सर्वान् यथैव त्रिदशांस्तथा । सङ्गृह्य वचनं तस्य कृष्णस्याक्लिष्टकर्मणः ।।
वायुरात्मोपमगतिः जगाम त्रिदशालयम् । सोऽनुमान्य सुरान् सर्वान् कृष्णवाक्यं निवेद्य च ।।
सभां सुधर्मामादाय पुनरायान्महीतलम् । सुधर्मां तां सुधर्माय कृष्णायाक्लिष्टकर्मणे ।।
देवो देवसभां दत्वा वायुरन्तरधीयत ।।' इति[२.५८.६७-७७] ।।११४।।[१]

**जनार्दनीया–** ननु सुधर्मासभा इन्द्रस्येति प्रसिद्धिः । वायुस्तां कथं ददावित्यत आह– **शतक्रतोरिति** ।। स वायुः तां सभां शतक्रतोः इन्द्रादादाय, केशवाय प्रदाय, सर्वशः सर्वान् नवसङ्ख्याकान् निधीन् समर्प्य, तं प्रभुं कृष्णं प्रणम्य, ययौ । 'अस्य वर्धकिः ददौ । स वर्धकिः ययौ' इति व्याख्यानमनादरणीयम् । हरिवंशगतवाक्यविरोधात् । तथाहि– 'गच्छ मारुत देवेशमनुमान्य सहामरैः । सभां सुधर्मामादाय देवेभ्यस्त्वमिहानय ।।' [विष्णुपर्व.५८.७१] इति । तत्रैव–

'वायुरात्मापि जगतो जगाम त्रिदशालयम् । सोऽनुमान्य सुरान् सर्वान् कृष्णवाक्यं निवेद्य च ।।
सभां सुधर्मामादाय पुनरायान्महीतलम् । सुधर्मां तां सुधर्माय कृष्णायाक्लिष्टकारिणे ।।
देवो देवसभां दत्वा वायुरन्तरधीयत ।।' [विष्णुपर्व.५८.७४-७६] इति ।।

स्वकीयं स्वेषां विद्यमानं देवाः यद्यत् विशेषवस्तु तत्तद्धरौ समर्पयन्निति भावः । सोऽच्युतः पक्षिपुङ्गवं गरुडं विमुच्य विहाय, योद्धुमैच्छत् ।।११४-११५।।

**भावचन्द्रिका–** ।। **निधीनिति** ।। कुबेरभृत्याः सकलनिधिनियामकाः पद्ममहापद्मशङ्खमकरकच्छप-मुकुन्दकुन्दनीलखर्वनामानो नव निधयः कृष्णेन स्मृताः आगत्य वाय्वाज्ञया सर्वयादवगृहेषु निधीन् समर्पयामासुः इति ।।११४।।

**चट्टि–** ननु सुधर्मसभा इन्द्रस्येति प्रसिद्धिः । वायुस्तां कथं ददावित्यत आह– **शतक्रतोरिति** ।। स वायुः तां सभां शतक्रतोः इन्द्रादादाय, केशवाय प्रदाय, सर्वशः सर्वान् नवसङ्ख्याकान् निधीन् समर्प्य, तं प्रभुं श्रीकृष्णं प्रणम्य ययौ । 'अस्य वर्धकिः ददौ । स वर्धकिः ययौ' इति व्याख्यानमनादरणीयम् ।

---

१. अनन्तभट्टीया– स विश्वकर्मा केशवाय तां प्रदाय निधीन् समर्प्य ययावित्यर्थमाहुः।। इति हो.पुस्तके अधिकःपाठः ।

हरिवंशगतवाक्यविरोधात् । तथाहि– गच्छ मारुत देवेशमनुमान्य सहामरैः । सभां सुधर्मामादाय देवेभ्यस्त्वमिहानय ।। [विष्णुपर्व.५८.७१] इति । तत्रैव– वायुरात्मोपमगतिः जगाम त्रिदशालयम् । सोऽनुमान्य सुरान् सर्वान् कृष्णवाक्यं निवेद्य च ।। सभां सुधर्मामादाय पुनरायान्महीतलम् । सुधर्मां तां सुधर्माय कृष्णायाक्लिष्टकरिणे ।। देवो देवसभां दत्वा वायुरन्तरधीयत ।। [विष्णुपर्व.५८.७४-७६] इति ।।११४।।

**समस्तदेवतागणाः स्वकीयमर्पयन् हरौ ।**
**विमुच्य पक्षिपुङ्गवं स योद्धुमैच्छदच्युतः ।।११५।।**

**वेदाङ्गतीर्थीया–** स्वकीयं स्वेषां विद्यमानम् ।।११५।।

**वरदराजीया–** स्वकीयमर्पयन् समर्पितवन्तः । पक्षिपुङ्गवं गरुडं विमुच्य मुक्त्वा ।।११५।।

**चट्टि–** समस्तदेवतागणाः स्वकीयं स्वेषां विद्यमानं यत् विशेषवस्तु तत् हरौ समर्पयन् । सोऽच्युतः श्रीकृष्णः पक्षिपुङ्गवं गरुडं विमुच्य विहाय, योद्धुमैच्छत् ।।११५।।

**समस्तमाधुरान् प्रभुः कुशस्थलीस्थितान् [१]क्षणात् ।**
**विधाय बाहुयोधकः स यावनं समभ्ययात् ।।११६।।**

**वरदराजीया–** समस्तान् माधुरान् मधुरायां विद्यमानान् यादवान् कुशस्थल्यां द्वाराकायां स्थितान् क्षणात् क्षणेन विधाय कृत्वा बाहुयोधको बाहुभ्यां युद्धं करिष्यन् ।।११६।।

**भावविवृति–** समस्त माधुरान् ...समभ्ययात् इत्यत्र स प्रभुः कृष्णः समस्तान् मथुरायां स्थितान् तदनु कुशस्थलीस्थितान् विधाय 'क्षणाद्' इत्युक्त्या मथुरायां सुप्तान् द्वारकायां प्रबुद्धान् चक्र इति ज्ञायते । तदुक्तम्– 'सुषुप्तान् मथुरायां तान् पौरांस्तत्र जनार्दनः । उद्धृत्य सहसा रात्रौ द्वारकायां समवेशयत् ।। प्रबुद्धास्ते जनास्सर्वे पुत्रदारसमन्विताः । हेमहर्म्यतले विष्टा विस्मयं परमं ययुः ।।' इति पाद्मे [उत्तरखं.२४६.४४-४५]। भागवते च– 'योगप्रभावेन नीत्वा सर्वजनं हरिः'['तत्र योगप्रभावेन नीत्वा स्वान् भगवान् हरिः' इति इदानीन्तनपाठः.१०.५३.४३] इति । बाहुयोधकस्स यावनं समभ्ययात् इत्यत्र आयुधादिकमगृहीत्वा यावनं योद्धुं समभ्ययात् सन्नद्धोऽभूत् । 'उदीर्य दूतमभ्ययात् स यावनं प्रबाधितुम्' इति वक्ष्यमाणत्वात् ।।११६।।

---

१. तथाच वंशीधरः- ''तथाच पाद्मोत्तरखण्डे– 'सुषुप्तान् मथुरायां तु पौरांस्तत्र जनार्दनः । उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत् ।। प्रबुद्धास्ते जनास्सर्वे पुत्रदारसमन्विताः । हैमहर्म्यतलाविष्टा विस्मयं परमं ययुः ।। इति ।।'' इति ।

**जनार्दनीया–** प्रभुः स कृष्णः समस्तमाधुरान् समस्तमधुरावासिनः कुशस्थल्यां द्वारकायां स्थितान् विद्यमानान् क्षणात् क्षणमात्रेण विधाय, वाहुभ्यां युध्यतीति वाहुयोधकः सन् यावनं प्रति समभ्ययात् ।।

**भावचन्द्रिका–** ।। **समस्तेति** ।। 'सुषुप्तान् मधुरायां तान् पौरान् तत्र जनार्दनः । उद्धृत्य सहसा रात्रौ द्वारकायां निवेशयत् ।। प्रबुद्धास्ते जनास्तत्र पुत्रदारसमन्विताः । हेमहर्म्यतलाविष्टाः विस्मयं परमं ययुः।।' इति पाद्मे ।।११६।।

**चट्टि–** प्रभुः श्रीकृष्णः समस्तमाधुरान् समस्तमधुरावासिनः कुशस्थल्यां द्वारकायां स्थितान् विद्यमानान् क्षणात् क्षणमात्रेण विधाय, बाहुभ्यां युध्यतीति बाहुयोधकः सन् यावनं प्रति समभ्ययात् ।।११६।।

**अनन्तशक्तिरप्यजः [1]सुनीतिदृष्टये नृणाम् ।**
**व्यवासयन्निजान् जनान् स लीलयैव केवलम् ।।११७।।**

**व्यासतीर्थीया–** मधुराया स्वजनरक्षणे शक्त्यभावात् व्यवासयत् किं इत्यत आह– **अनन्तेति**।।११७।।

**वरदराजीया–** पुरीनिर्माणेन प्राप्तां अशक्तिं परिहरति भगवानाचार्यः– **अनन्तशक्तिरित्यादिना** ।। सुनीतिदृष्टये सम्यङ्नीतिप्रदर्शनार्थं केवलं लीलयैव । नतु भीत्या व्यवासयत् निराक्रमत् ।।११७।।

**भावविवृति–** व्यवासयन्निजान् जनान् इत्यादिना सन्नद्धप्रकारं वदन् तदपि नृणां नीतिप्रदर्शनार्थमेव न त्वशक्त्येत्याह– **अनन्तेति** ।।११७-११९।।

**जनार्दनीया–** अनन्तशक्तिरप्यजः कृष्णः नृणां सुनीतिदृष्टये समीचीननीतिदर्शनार्थं निजान् जनान् केवलं लीलयैव क्रीडयैव । न तु भयेनेत्यर्थः । समुद्रमध्ये व्यवासयत् ।।११७।।

**चट्टि–** अनन्तशक्तिरपि सः अजः श्रीकृष्णः नृणां सुनीतिदृष्टये समीचीननीतिदर्शनार्थं निजान् जनान् केवलं लीलयैव न तु भयेनेत्यर्थः । समुद्रमध्ये व्यवासयत् ।।११७।।

**अनाद्यनन्तकालगं[2] समस्तलोकमण्डलम् ।**
**यदीक्षयैव रक्ष्यते किमस्य वृष्णिरक्षणम् ।।११८।।**

---

१. 'सर्वेष्वेव च युद्धेषु यदुभिस्स पराजितः । अपक्रान्तो जरासन्धः स्वल्पसैन्यैर्बलाधिकः । तद्बलं यादवानां वै रक्षितं यदनेकशः । तत्तु संनिधिमाहात्म्यं विष्णोरंशस्य चक्रिणः । मनुष्यधर्मशीलस्य लीला सा जगतः पतेः । अस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति । मनसैव जगत्सृष्टिसंहारं तु करोति यः । तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः । तथाऽपि ये मनुष्याणां धर्मास्तदनुवर्तनम् । कुर्वन्बलवता सन्धिं हीनैर्युद्धं करोत्यसौ । साम चोपप्रदानञ्च तथा भेदं च दर्शयन् । करोति दण्डपातं च क्वचिदेव पलायनम् । मनुष्यदेहिनां चेष्टामित्येवमनुकुर्वतः । लीला जगत्पतेस्तस्य छन्दतस्सम्प्रवर्तते ।' इति ब्रह्ममहापुराणे ८७अ.१२-१८ । २.'अनन्तकालकं' इति जनार्दनचट्टिटिप्पण्योः पाठान्तरम् ।

**व्यासतीर्थीया–** वृष्णिरक्षणशक्तिं कैमुत्या समर्थयते– **अनाद्यनन्तेति** ।।११८।।

**वरदराजीया–** अनाद्यनन्तकालगं विश्वमण्डलं यदीक्षया यस्य कटाक्षेण [स्वेच्छया] रक्ष्यते तस्य लोकान्तःपातिकतिपयवृष्णिरक्षणं किम्? न किमपि दुःशकमित्यर्थः ।।११८।।

**जनार्दनीया–** ननु अशक्तत्वादेव व्यवासयत् इति किं न स्यादित्यत आह– **अनाद्यनन्तेति** ।। अनाद्यनन्तकालकं अनादिः प्रागभावरहितः, अनन्तः ध्वंसरहितः, एतादृशो यः कालः तत्सम्बन्धवत् । समस्तलोकमण्डलं बहुचित्रजगत्समूहं यस्य हरेः ईक्षयैव रक्ष्यते तस्य हर्यात्मकस्य कृष्णस्य वृष्णीनां रक्षणं किम् ? न किमप्यशक्यमित्यर्थः ।।११८।।

**चट्टि–** ननु अशक्तत्वादेव व्यवासयत् इति किं न स्यादित्यत आह– **अनाद्यनन्तेति** ।। अनाद्यनन्तकालकं अनादिः प्रागभावरहितः, अनन्तः ध्वंसरहितः, एतादृशो यः कालः तत्सम्बन्धवत् । समस्तलोकमण्डलं सर्वजगतः समूहं यस्य हरेः ईक्षयैव रक्ष्यते तस्य हर्यात्मकस्य अस्य श्रीकृष्णस्य वृष्णीनां रक्षणं किम् ? न किमप्यशक्यमित्यर्थः ।।११८।।

**निरायुधं च मामयं वराच्छिवस्य न क्षमः ।**
**समस्तसेनया युतोऽपि योद्धुमित्यदर्शयत् ।।११९।।**

**व्यासतीर्थीया–** निरायुधः कस्माद्ययावित्यत इत्यत आह– **निरायुधमिति** ।।११९-१३१।।

**वरदराजीया–** शिवस्य वरात् निमित्तात् समस्तसेनया युतोऽपि मां प्रतियोद्धुं न क्षमो न समर्थः ।।११९।।

**भावविवृति–** कृष्णप्रदर्शितनीतिप्रकारमाह– **निरायुधमित्यादिना** ।। समस्तसेनया युतोऽयं यावनो मां योद्धुं न क्षमः । शिववराद्योद्धुं क्षमः किं नेत्याह– **वरादिति** ।। अपिशब्दादित्यनेन सम्बध्यते । नतु आवृत्तिः। मद्बाधने तव वरो नैव । वरे सत्यपि त्वं मां योद्धुं न क्षम इति दर्शनाय निरायुधतया आगमत् । अत्र कृष्ण एवमनेकनीतिप्रदर्शनं कृतवानिति सूचनाय चशब्दः ।।११९।।

**जनार्दनीया–** ननु बाहुयोधकः सन् यावनं किमर्थं समभ्ययादित्यत आह– **निरायुधमिति** ।। अयं यावनः समस्तसेनया युतोऽपि, शिवस्य वराच्च वरादपि निरायुधं मां प्रति योद्धुं न क्षमः न शक्तः इति बाहुयुद्धेन अदर्शयत् ।।११९।।

**भारतश्री–** स्वाभिप्रायमप्रकाशयन् 'निरायुधं च मामयं वराच्छिवस्य न क्षमः' इत्यादिकं लोकवञ्चनार्थमुक्तमिति ज्ञातव्यम् । अभिप्रायस्तु अनेन कृष्णो वध्य इति गर्गस्य शिववरोऽस्ति।

अकृष्णतां य आनयेत् भुवोपि वृष्णिनाशक इत्यभिप्रायेण गर्गः तपश्चकार । 'वरं ततोऽभिपेदिवान् सुतं हरेरभावादम्' इत्युक्तत्वात् । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषुः ॥' इत्यभिधानात् हरिशब्दस्य सर्पवाचकत्वात् अकृष्णतामित्युक्तत्वात् श्रीकृष्णः रुद्रवरमाननार्थं कृष्णपन्नगं घटे निक्षिप्य प्रेषितवान् । यवनः एनं हनिष्यति अनेन वरो गतार्थो भविष्यति । 'अयोग्यषु तु रुद्रादिवाक्यं तौ कुरुतो मृषा । एकदेशेन सत्यं तु योग्येष्वपि कदाचन ॥' [म.ता.नि.९-३८] इत्युक्तेः गर्गस्य योग्यत्वात् एवं चकारेति ज्ञातव्यम् । वृष्णिनाशक इत्युक्तं मृषा चकार । एकदेशेन सत्यं इत्युक्तत्वात् रुद्रेण च तस्मात् तस्यैव दत्तत्वात् । अथवा 'अकृष्णतां य आनयेत् भुवोऽपि वृष्णिनाशकः' इति गर्गाभिप्रायत्वात् वरग्रहणकाले हरेरभावमात्रस्यैव दत्तत्वात् वृष्णिविनाशादिप्रसक्त्यभावः । एतदभिप्रायमज्ञात्वा घटं पिपीलिकागणैः प्रपूर्य अहिं मृतं व्यदर्शयत् । किञ्च हरिवंशे 'यवनोऽयं महावाहुः हरिं कृष्णं हनिष्यति' इति गर्गवचनस्य विद्यमानत्वात् ब्राह्मणोक्तनिर्वाहार्थं च कृष्णपन्नगं घटे प्रेषयामासेति गर्गाभिप्रायस्याकिञ्चित्करत्वात् । ..उच्यते तस्यैव प्रधानत्वात् ॥११९॥

**चट्टि–** ननु श्रीकृष्णः बाहुयोधकः सन् यावनं किमर्थं समभ्ययादित्यत आह– **निरायुधमिति** ॥ अयं यावनः समस्तसेनया युतोऽपि, शिवस्य वराच्च वरादपि निरायुधं मां प्रति योद्धुं न क्षमः न शक्तः इति बाहुयुद्धमदर्शयत् ॥११९॥

**स कृष्णपन्नगं घटे निधाय केशवोऽर्पयत् ।**
**निरायुधोऽप्यहं क्षमो निहन्तुमप्रियानिति ॥१२०॥**

**वादिराजतीर्थीया–** स कृष्णपन्नगमित्यत्र न च वाच्यं कृष्णप्रेषितसर्पस्य कालयावनेन पिपीलिकापुञ्जैः नाशितत्वात्तदीयमेव कौशलमधिकमिति । सर्वज्ञोऽपि भगवान् श्रीकृष्णः नीतिव्याजेन 'भुवः अकृष्णतां य आनयेत् तं सुतं समार्जये' इति मुनिसङ्कल्पस्य 'हरिपदोक्तकृष्णाभावदं सुतं याहि' इति शिववरस्य चान्यथीकरणाय कृष्णसर्पं प्रेषितवान् । हर्यभावस्य मुनिना अप्रार्थितत्वात् हरिपदेनापि कृष्ण एवोच्यते । अत एव विकृष्णकं क्षितेस्तलमिति साल्वस्याप्युक्तिः । एवं च 'कृष्णपन्नगम्' इत्युक्तकृष्णसर्पस्यापि कृष्णपदवाच्यत्वात् कालयवनेन पिपीलिकाभिः तन्नाशे कारिते सति भुवि कस्यचित् कृष्णाभावस्य च तेनैव सम्पादितत्वात् मुनिसङ्कल्पः शिववरश्च तत एव सम्पादितो भवेत् । वरद्वयाभावात् । तस्य पराभवं च प्रागेव स्वलीलाकौशलेन श्रीकृष्णः साधितवान् । अतः श्रीकृष्णस्यैव नीतिरसदृशी । अन्यथा काप्यदर्शितनीतिमत्रैव कुतो दर्शयेत् । तस्मात् सर्वज्ञचूडामणिर्भगवानेवेति युक्तमुत्पश्यामः ॥ ॥१२०-१२२॥

**सत्याभिनवतीर्थीया–** तत्रैव स कृष्णपन्नगं घटे...इति श्लोकः । तस्यार्थः । सः केशवः निरायुधोऽपि अहं अप्रियान् हन्तुं क्षमः इति ज्ञापयितुं कृष्णपन्नगं घटे निधाय अर्पयत् इति । यद्यपि कृष्णः कृष्णसर्पप्रेषणानन्तरं कृष्णसर्पः पिपीलिकागणैः मृतो भविष्यतीति जानाति । तथापि कालयवनस्य यथा पिपीलिकागणैः कृष्णसर्पः मृतो जातः एवं मदीयबहुसेनया कृष्णो मृतो भविष्यति इति दुर्बुद्ध्युत्पत्त्या युद्धे निःशङ्कप्रवृत्त्यर्थं कृष्णसर्पप्रेषणं कृतवानिति द्रष्टव्यम् ।।१२०।।

**मधुसूदनीया–** ।। **स कृष्णपन्नगमिति** ।। यद्यपि कृष्णः सकलोपायज्ञ एव । तथापि कृष्णेन यादवान् प्रति कालयवनस्समागतः । शीघ्रं द्वारकां प्रति गन्तव्यमित्यभिहितम् । ततस्तैः त्वयि विद्यमाने किमस्माकं भयमित्यभिहितम् । ततः कृष्णोऽपि तेषां विभीषणार्थं कृष्णं घटे प्रक्षिप्य दूतेन प्रेषयित्वा मृतं अहिं प्रदर्शयित्वा एतन्न्यायेन अहमेकः किं कुर्यामिति तेषां भयमुत्पाद्य मधुरापुरात् द्वारकां प्रापयामास । अत एव पूर्वं बृहद्वनाद्वृन्दावनं प्रति गच्छथेत्युक्ते तदनन्तरं तद्वाक्ये तैरनादृते वृकसर्जनं कृतवान् । अतः कृष्णस्य न युक्तिबाधितोपायकरणेन अज्ञत्वमाशङ्क्यमिति भावः ।। ।।१२०-१२२।।

**वरदराजीया–** सः केशवः कृष्णपन्नगं कृष्णसर्पं अर्पयत् प्रेषितवान् । कृष्णपन्नगं समर्पयतोऽभिप्रायमाह– **निरायुधोऽपीति** ।।१२०।।

**भावविवृति–** तदेव विवृणोति– **स कृष्णपन्नगं घटे निधायेति ।।** कृष्णसर्पनिहितं घटं वस्त्रादिना पिधाय यावनाय देहीति स्वदूतं प्रेषयामास । बह्वभिप्रायेण एवं कृतवानिति सूचनाय अपिपदम् । यादवसभायामपहसितो गर्गः कोपाच्छिवमाराध्य यः भुवोऽकृष्णतां कृष्णाभावत्वं आनयेत् यश्च वृष्णिनाशकोऽपि भवेत् तादृशं पुत्रं देहीति प्रार्थितवान् । तेन तोषितो शिवः हरेरभावदः पुत्रो भविष्यतीत्युच्यते । नतु वृष्णिनाशकश्च भविष्यतीति 'ततो वरमभिपेदिवान् सुतं हरेरभावदम्' इत्युक्तेः । वरदातृशिवाभिप्रायस्तु 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिलस्त्रिषु।।' इत्यभिधानात् हरिशब्दस्य सर्पवाचकत्वमप्यस्तीति कृष्णसर्पाभावदस्सुतो भविष्यतीत्येव नतु कृष्णाभावदस्सुतो भविष्यतीति । अन्यथा गर्गेण कृष्णाभावदं सुतं देहीति प्रार्थितः शिवः कृष्णाभावदस्सुतो भविष्यतीत्येवमेव वदेत् । अतो वरदातृशिवाभिप्रायस्तु साल्वादिभिरानीतस्त्वमपि शिवाभिप्रायमज्ञात्वा मां प्रत्यागतोऽसीति प्रदर्शनाय घटं प्रेषयामासेत्यर्थः ।

किञ्च हरिवंशे च 'यवनोऽयं महाबाहुः हरिं कृष्णं हनिष्यति' इति गर्गवचनमस्ति । तद्वचनमपि कृष्णेन माननीयमिति तद्धनने एतद्वरं उपयोगी भवत्वित्यभिप्रायेण कृष्णसर्पं प्रेषयदिति । 'अयोग्येषु तु रुद्रादिवाक्यं तौ कुरुतो मृषा । एकदेशेन सत्यं तु योग्येष्वपि कदाचन।।' इत्युक्तेः ।।१२०-१६९।।

**जनार्दनीया–** केशवः निरायुधोऽप्यहं अप्रियान् शत्रून् निहन्तुं क्षमः इति दृष्टान्तं दर्शयितुं, कृष्णपन्नगं कृष्णसर्पं घटे निधाय, यावनाय अर्पयत् प्रेषयामास ॥१२०॥

**अतिविशद–** 'स कृष्णपन्नगं घटे निधाय केशवोऽर्पयत्' इत्यत्र केशवयुक्तेः सर्पस्य नष्टत्वेन कालयवनयुक्त्यपेक्षया कनिष्ठत्वं प्रतीयते । तत्र कारणं किमिति शङ्कायां वरदातुः रुद्रस्य वरं गृहीतुर्गर्गस्य कृष्णवधार्थमुत्पन्नस्य कालयवनस्यापि कृष्णसर्पनाशकत्वेन सार्थक्यं भवत्वित्यभिप्रायेण कृष्णेनैतत्कृतमित्याहुः । अन्यथा अघटितघटकशक्तिमतः कृष्णस्यैतादृशरीतिप्रदर्शनानुपपत्तेः । अनेन रुद्रादय एते कीटनाशनार्थं महाप्रयत्नकर्तार इत्यपहासः सूचितो भवति । आपाततः सर्पस्य नष्टत्वेऽपि कालयवननाशकत्वकार्येण हरिनीतेरेव प्रावल्यं ज्ञातव्यम् ॥१२०॥

**चट्टि–** सः केशवः अहं निरायुधोऽपि अप्रियान् शत्रून् निहन्तुं क्षमः इति दृष्टान्तं दर्शयितुं, कृष्णपन्नगं कृष्णसर्पं घटे निधाय अर्पयत् प्रेषयामास । यावनाय इति शेषः ॥१२०॥

**घटं पिपीलिकागणैः प्रपूर्य यावनोऽस्य च ।**
**बहुत्वतो विजेष्य इत्यहिं मृतं व्यदर्शयत् ॥१२१॥**

**वरदराजीया–** अस्य अस्मै कृष्णाय । एवं कर्तुः यावनस्याभिप्रायमाह– **बहुत्वत इति** ॥१२१॥

'**जनार्दनीया–** यावनः घटं प्रपूर्य पूरयित्वा, बहुत्वतः विजेष्य इत्यभिप्रायेण मृतं अहिं सर्पं अस्य कृष्णस्य अदर्शयत् ॥१२१॥

**ताम्रपर्णीया–** ॥ **अहिं मृतं व्यदर्शयदिति** ॥ नन्वत्र यावनस्य कृष्णापेक्षया कौशल्यं प्रतीयत इति चेदत्र केचिदाहुः 'अकृष्णतां य आनयेत्सुतं समार्जये इति मुनिसङ्कल्पस्य तथा शिववरस्य चावैय्यर्थ्याय कृष्णः कृष्णसर्पं प्रेषितवान् । पिपीलिकाभिस्तन्नाशे भुवि कस्यचित् कृष्णस्याभावस्य सिद्धेः' इति । अन्ये तु 'यावनोक्तं बहुत्वं जये न प्रयोजकम् । सर्पस्य सव्रणस्यैव पिपीलिकाभिर्मरणं न त्वव्रणस्य । अहं त्वव्रणः । अतः अव्रणसर्पवदेक एवाप्रियान् हन्तुं क्षम इति भावेन कृष्णेनैव किमत्र सत्यमित्यादिना स्वयमेवोक्तेर्न दोषः' इत्याहुः ॥१२१-१२५॥

**चट्टि–** यावनः पिपीलिकागणैः घटं प्रपूर्य पूरयित्वा, बहुत्चतः विजेष्य इत्यभिप्रायेण अस्य श्रीकृष्णस्य मृतं अहिं सर्पं मृतं व्यदर्शयत् ॥१२१॥

**किमत्र सत्यमित्यहं प्रदर्शयिष्य इत्यजः ।**
**उदीर्य दूतमभ्ययात् स यावनं प्रबाधितुम् ॥१२२॥**

**वेदाङ्गतीर्थीया–** अत्र उभयोर्मध्ये निरायुधजयस्य बहुत्वे जयस्य च किं सत्यं भविष्यतीति अहं प्रदर्शयिष्ये दूतमुदीर्य ॥१२२॥

**वादिराजतीर्थीया–** किमत्र सत्यमित्यत्र अत्र बहुभिः प्रबलस्याप्येकस्य हननं कर्तुं शक्यत इति तव कालयवनेन कृते पिपीलिकापूरणाख्ये कर्मणि बलवतैकेन बहूनां हननं कर्तुं शक्यत इति मया कृते च कर्मणि किं सत्यमित्येतदहं प्रदर्शयिष्ये कर्मणैव प्रदर्शयिष्ये । दूतमुदीर्येति सम्बन्धः । बलवतैकेनैव मया कालयवनस्य बहुतरतत्सेनायाश्च हनने कृते मत्कृतमेव सत्यं भविष्यति बहुसेनावता तव कालयवनेन मम पराभवः कारितश्चेत् तत्कृतमेव सत्यं भविष्यतीति भावः । इदं तु निदर्शनं मया प्रयोजनान्तरसम्पादनार्थमेव कृतम् । अतस्तव दृष्टान्तमात्रेण नार्थसिद्धिरिति भावः ॥१२२-१३४॥

**वरदराजीया–** अत्र तयोर्मध्ये सत्यं किमित्याह– **प्रदर्शयिष्य इति** ॥ दूतमुदीर्य कृष्णोऽभ्ययात् ॥१२२॥

**जनार्दनीया–** अत्र 'हन्तुं क्षमः' इति मम वाक्ये, 'विजेष्ये' इति तव वाक्ययोर्मध्ये किं सत्यं स्यादित्यपेक्षायां यत्सत्यं तदहं प्रदर्शयिष्य इत्यजः स कृष्णः दूतं प्रत्युदीर्य, यावनं प्रबाधितुं हन्तुं अभ्ययात् ॥१२२॥

**चट्टि–** अत्र 'हन्तुं क्षमः' इति मम वाक्यं, 'विजेष्ये' इति तव वाक्यं तयोर्मध्ये किं सत्यं स्यादित्यपेक्षायां यत्सत्यं तदहं प्रदर्शयिष्य इत्यजः स श्रीकृष्णः दूतं प्रत्युदीर्य, यावनं प्रबाधितुं हन्तुं अभ्ययात् । यद्यपि कृष्णः सकलोपायज्ञ एव । तथापि श्रीकृष्णेन यादवान् प्रति कालयवनस्समागतः । शीघ्रं द्वारकां प्रति गन्तव्यमित्यभिहितम् । ततस्तैः त्वयि विद्यमाने किमस्माकं भयमित्यभिहितम् । ततः श्रीकृष्णेन तेषां विभीषणार्थं कृष्णपन्नगं घटे प्रक्षिप्य दूतेन प्रेषयित्वा मृतमहिं प्रदर्शयित्वा एतन्न्यायेनाहं एकः किं कुर्यामिति तेषां भयोत्पादनेन मधुरापुरात् द्वारकां प्रापयामास । अत एव पूर्वं बृहद्वनाद्वृन्दावनं प्रति गच्छथेत्युक्ते तदनन्तरं तद्वाक्ये तैरनादृते वृकसर्जनं कृतवान् । अतः श्रीकृष्णस्य न युक्तिवाधितोपायकरणेनाऽज्ञत्वमाशङ्क्यमिति भावः ॥१२२॥

**स बाहुनैव केशवो विजित्य यावनं प्रभुः ।**
**निहत्य सर्वसैनिकान् स्वमस्य यापयत् पुरीम् ॥१२३॥**

**वेदाङ्गतीर्थीया–** अस्य कालयवनस्य स्वं धनम् ॥१२६॥

**मधुसूदनीया–** ॥ **स बाहुनैवेति** ॥ अस्य कालयवनस्य स्वं रथहस्त्यश्वादिधनं द्वारकां प्रतीति यावत् । प्रेषितवानित्यर्थः । तथोक्तम्– 'घातयित्वाऽऽत्मनश्शत्रून् तत्सैन्यं प्रत्यपद्यत ।

प्रभूतरथहस्त्यश्ववर्मशस्त्रायुधध्वजम् ।। आदायापययौ धीमान् तत्सैन्यं निहतेश्वरम् । निवेदयामास ततो नराधिपे तदुग्रसेने परिपूर्णमानसः ।। जनार्दनो द्वारवतीं पुरीं च तामशोभयत्तेन धनेन भूरिणा ।।' इति हरिवंशे [२.५७.६८-७०] । 'जग्राह मधुरामेत्य हस्त्यश्वस्यन्दनोज्ज्वलम् । आनीय चोग्रसेनाय द्वारवत्यां न्ययोजयत् ।।' इति विष्णुपुराणे च [५.२४.६-७] । 'यमस्य यापयत् पुरीं' इति पाठस्त्वप्रामाणिकः । मूलेषु पुस्तकेषु काप्यदर्शनादिति ज्ञेयम् । बाहुनैवेत्येवकारेण शस्त्रास्त्रादिसाधनान्तरं निषेधयति । तथाचोक्तम्– 'गजेन गजवृन्दानि रथेन रथयोधिनः । सादिनश्चाश्वयोधेन चरणेन पदातिनः । जघ्नतुस्तौ महावीर्यौ वसुदेवसुतौ उभौ ।।' इति हरिवंशे [२.४९.५४] ।।१२३-१२९।।

**वरदराजीया–** सः प्रभुः अस्य यावनस्य स्वं गजाश्वादिवित्तं पुरीं कुशस्थलीं प्रति यापयत् प्रेषयामासेत्यर्थः ।।१२३।।

**जनार्दनीया–** अस्य यावनस्य स्वं गजाश्वादिद्रव्यं पुरीं द्वारकां प्रति यापयत् प्रेषितवान् । 'हत्वा म्लेच्छबलं निन्ये तदीयां द्वारकां धनम्' इति दशमे [५५.५] ।।१२३।।

**चट्टि–** प्रभुः सः केशवः श्रीकृष्णः बाहुनैव यावनं विजित्य सर्वसैनिकान् निहत्य अस्य कालयवनस्य स्वं रथहस्त्यश्वादिधनं पुरीं द्वारकां प्रति अयापयत् प्रेषितवान् । तथा चोक्तम्– '[पातयित्वा] घातयित्वाऽऽत्मनश्शत्रून् तत्सैन्यं प्रत्यपद्यत । प्रभूतरथहस्त्यश्ववर्मशस्त्रायुधध्वजम् ।। आदायापययौ धीमान् तत्सैन्यं निहतेश्वरम् । निवेदयामास ततो नराधिपे तदुग्रसेने परिपूर्णमानसः ।। जनार्दनो द्वारवतीं च तां पुरीमशोभयत् तेन धनेन भूरिणा ।। इति हरिवंशे [२प.५७अ.६८-७०] । जग्राह मधुरामेत्य हस्त्यश्वस्यन्दनोज्ज्वलम् । आनीय चोग्रसेनाय द्वारवत्यां न्ययोजयत् ।।' इति विष्णुपुराणे च [५अं.२४अ.६-७]। बाहुनैवेत्येवकारेण शस्त्रास्त्रादिसाधनान्तरं निषेधति । तथाचोक्तम् । 'गजेन गजवृन्दानि रथेन रथयोधिनः । सादिभिश्चाश्वयोधानां चरणेन पदातिनः ।। जघ्नतुस्तौ महावीर्यौ वसुदेवसुतौ उभौ ।।' इति हरिवंशे [२.४९.५४] ।।१२३।।

**महास्त्रशस्त्रसञ्चयान् सृजन्तमाशु यावनम् ।**
**न्यपातयद् रथोत्तमात् तलेन केशवोऽरिहा ।।१२४।।**

**वरदराजीया–** सृजन्तं वर्षमाणम् । तलेन हस्ततलेन ।।१२४।।

**अनन्तभट्टीया–** तलेन हस्तेन ।।१२४।।

**जनार्दनीया–** अरिहा शत्रुघ्नः केशवः । सृजन्तं वर्षमाणं तलेन हस्ततलेन रथोत्तमात् उत्तमरथात् अधः न्यपातयत् ।।१२४।।

**चट्टि–** अरिहा शत्रुघ्नः सः केशवः महास्त्रशस्त्राणां सञ्चयान् समूहान् आशु सृजन्तं वर्षमाणं यावनं तलेन हस्ततलेन रथोत्तमात् उत्तमरथात् न्यपातयत् ।।१२४।।

**विवाहनं निरायुधं विधाय बाहुना क्षणात् ।**
**विमूर्च्छितं न चाहनत् [१]सुरार्थितं स्मरन् हरिः ।।१२५।।**

**वरदराजीया–** विगतवाहनं निर्गतायुधञ्च । सुराणामर्थितं प्रार्थितम् ।।१२५।।

**जनार्दनीया–** सुरैरर्थितं प्रार्थितं वरं स्मरन् हरिः विमूर्च्छितं यावनं न चाहनत् न जघान । 'पुरार्थितम्' इति वा पाठः ।।१२५।।

**चट्टि–** हरिः श्रीकृष्णः बाहुना क्षणात् तं यावनं विवाहनं निरायुधं च विधाय सुरैरर्थितं वरं स्मरन् विमूर्च्छितं यावनं न अहनत् न जघान । 'पुरार्थितम्' इति वा पाठः ।।१२५।।

**पुरा हि यौवनाश्वजे वरप्रदाः सुरेश्वराः ।**
**ययाचिरे जनार्दनं वरं वरप्रदेश्वरम् ।।१२६।।**

**वेदाङ्गतीर्थीया–** किं तत्र पुरार्थितमिति तत्राह– **पुरेति** ।। यौवनाश्वजे युवनाश्वापत्यं मान्धाता यौवनाश्वः । तज्जस्तु मुचुकुन्दः । तस्मिन् तद्विषय इति भावः ।।१२६।।

**वरदराजीया–** तदेव विशादयति– **पुरा हीति** ।। यौवनाश्वजे मुचुकुन्दे वरप्रदाः वरं दत्तवन्तः । दत्वा च वरं ययाचिरे याचितवन्तः ।।१२६।।

**अनन्तभट्टीया–** यौवनाश्वजः मुचुकुन्दः ।[२]

**जनार्दनीया–** तत्किमर्थितमित्यत आह– **पुरेति** ।। पुरा देवासुरयुद्धसमाप्तौ सुरेश्वराः, यौवनाश्वो युवनाश्वस्य पुत्रो मान्धाता, तज्जातो मुचुकुन्दः, तस्मिन् विषये वरप्रदाः वरं दत्तवन्तः सन्तः । वरं प्रददतीति ते तथा, तेषां ईश्वरं स्वामिनं जनार्दनं वरं ययाचिरे ।।१२६।।

**ताम्रपर्णीया–** यौवनाश्वजे मान्धातृजे मुचुकुन्दे ।।१२६-१२७।।

**चट्टि–** किमर्थं न जघानेत्यत आह– **पुरेति** ।। पुरा देवासुरयुद्धसमाप्तौ सुरेश्वराः, यौवनाश्वो युवनाश्वपुत्रो मान्धाता, तज्जो मुचुकुन्दः, तस्मिन् विषये वरप्रदाः वरं दत्तवन्तः सन्तः । वरं प्रददातीति वरप्रदाः तेषां ईश्वरं स्वामिनं जनार्दनं वरं ययाचिरे ।।१२६।।

---

१. 'पुरार्थितम्' इति जनार्दनीचट्टिटिप्पण्योः पाठान्तरम् । २. इति हो.पुस्तकपाठः ।

**अनर्थको वरोऽमुना वृतोऽपि सार्थको भवेत् ।**
**अरिं भविष्ययावनं दहत्वयं तवेश्वर ।।१२७।।**

**वेदाङ्गतीर्थीया–** अनर्थकः फलरहितः । कथं सार्थको भवेदित्यत आह– **अरिमिति** ।।१२७।।

**वरदराजीया–** किमिति । अमुना यौवनाश्वजेन अनर्थको निरर्थको वरो बहुकालनिद्रालक्षणो वृतोऽपि सार्थकः सफलो भवेत् । कथं हे ईश्वर! भविष्ययावनं उत्तरत्र जनिष्यमाणं यवनाख्यं तव अरिं शत्रुं अयं दहतु इति ।।१२७।।

**अनन्तभट्टीया–** तव अरिः भविष्ययावनः । स्वात्मन इति शेषः ।।१२७।।

**जनार्दनीया–** किमिति? अमुना मुचुकुन्देन अस्मत्तः अनर्थकः पुरुषार्थरहितः वरः वृतोऽपि, सार्थकः धर्मार्थादिपुरुषार्थसहितो भवेत् । सार्थकः कथं स्यादित्यत आह– **अरिमिति** ।। हे ईश्वर अयं मुचुकुन्दः तव अरिं, भविष्यः उत्तरत्र जनिष्यमाणः स चासौ यावनश्च तम् । दहत्विति वरं ययाचिरे इति सम्वन्धः ।।१२७।।

**चट्टि–** किमिति? अमुना मुचुकुन्देन अस्मत्तः अनर्थकः पुरुषार्थरहितः वरः वृतोऽपि, सार्थकः धर्मादिपुरुषार्थसहितो भवेत् । सार्थकः कथं स्यादित्यत आहुरित्याह– **अरिमिति** ।। हे ईश्वर अयं मुचुंकुन्दः तव अरिं शत्रुं, भविष्यः उत्तरत्र जनिष्यमाणः स चासौ यावनश्च तं दहत्विति वरं ययाचिरे इति सम्वन्धः ।।१२७।।

**तथाऽस्त्विति प्रभाषितं स्ववाक्यमेव केशवः ।**
**ऋतं विधातुमभ्ययात् स यौवनाश्वजान्तिकम् ।।१२८।।**

**वरदराजीया–** तथास्त्विति स्ववाक्यम् । ऋतं सत्यं विधातुं कर्तुम् ।।१२८।।

**जनार्दनीया–** स केशवः ऋतं सत्यं विधातुं कर्तुं यौवनाश्वजस्य मुचुकुन्दस्य अन्तिकं समीपं अभ्ययात् ।।१२८।।

**ताम्रपर्णीया–** स्वभाषितं वाक्यमित्येवता पूर्तौ अपि स्ववाक्यमित्युक्तिर्मूलरूपावतारयोर्भेदो नास्तीति नियमार्थः ।।१२८-१३८।।

**चट्टि–** केशवः श्रीकृष्णः तथास्त्विति दहत्विति प्रभाषितं स्ववाक्यमेव ऋतं सत्यं विधातुं कर्तुं यौवनाश्वजस्य मुचुकुन्दस्य अन्तिकं समीपं अभ्ययात् ।।१२८।।

**ससञ्ज्ञकोऽथ यावनो धरातलात् समुत्थितः ।**
**निपात्य यान्तमीश्वरं स पृष्ठतोऽन्वयात् क्रुधा ॥१२९॥**

**वरदराजीया–** ससञ्ज्ञको लब्धसञ्ज्ञः सः यावनः स्वात्मानं निपात्य अनन्तरं यान्तं गच्छन्तं ईश्वरं कृष्णं पृष्ठतः अन्वयात् ॥१२९॥

**जनार्दनीया–** अथ युद्धरङ्गात् गमनानन्तरं ससञ्ज्ञकः प्राप्तसञ्ज्ञो यावनः समुत्थितः सन्, स्वं निपात्य यान्तं गच्छन्तं ईश्वरं कृष्णं पृष्ठतः अनु पृष्ठमनु अयादगात् ॥१२९॥

**चट्टि–** अथ युद्धरङ्गात् कृष्णगमनानन्तरं ससञ्ज्ञकः प्राप्तसञ्ज्ञो सः यावनः धरातलात् समुत्थितः सन्, स्वं निपात्य यान्तं गच्छन्तं ईश्वरं कृष्णं क्रुधा पृष्ठतः अनु पृष्ठमनु अयात् अगात् ॥१२९॥

**हरिर्गुहां नृपस्य तु प्रविश्य संव्यवस्थितः ।**
**स यावनः पदाऽहनन्नृपं स तं ददर्श ह ॥१३०॥**

**मधुसूदनीया–** ॥ **नृपं स तं ददर्श हेति** ॥ हेत्यनेन तस्य सुप्तिर्बहुकालानुवृत्तेति सूचयति । तथाचोक्तम्– 'त्रेतायुगे प्रसुप्तोऽसि विदितो मेऽसि नारदात् । इदं कलियुगं विद्धि किमन्यत्करवाणि ते ॥' इति वचनात् हरिवंशे [२.५७.६२]॥१३०-१४३॥

**वरदराजीया–** नृपस्य मुचुकुन्दस्य गुहां प्रविश्य संव्यवस्थितः अप्रत्यक्षतया स्थितः । स नृपः तं यावनम् ॥१३०॥

**जनार्दनीया–** नृपस्य मुचुकुन्दस्य गुहां प्रविश्य, संव्यवस्थितः लीनः सन् स्थितः । स यावनः नृपं मुचकुन्दं पदाऽहनत् । स मुचकुन्दः तं यावनम् ॥१३०॥

**चट्टि–** हरिः श्रीकृष्णः नृपस्य मुचुकुन्दस्य गुहां प्रविश्य संव्यवस्थितः निलीनः सन् स्थितः । स यावनः नृपं मुचकुन्दं पदाऽहनत् । स मुचकुन्दः तं यावनं ददर्श । ह इत्यनेन तस्य सुप्तिर्बहुकालानुवृत्तेति । तथाचोक्तम् । 'त्रेतायुगे प्रसुप्तोऽसि विदितो मेऽसि नारदात् । इदं कलियुगं विद्धि किमन्यत् करवाणि ते ॥' इति श्रीकृष्णवचनात् हरिवंशे [२प.५७अ.६२] ॥१३०॥

**स तस्य दृष्टिमात्रतो बभूव भस्मसात् क्षणात् ।**
**स एव विष्णुरव्ययो ददाह तं हि वह्निवत् ॥१३१॥**

**वरदराजीया–** स यावनस्तस्य नृपस्य दृष्टिमात्रतो दर्शनमात्रेण । नेदं नृपस्य सामर्थ्यमित्याह– **स एवेति** ॥१३१॥

**जनार्दनीया–** सः यावनः तस्य मुचुकुन्दस्य दृष्टिमात्रतः अवलोकनमात्रादेव । स एव सुराणां तथास्त्विति वरप्रदो विष्णुः तं यावनम् ।।१३१।।

**भावचन्द्रिका–**वह्न्यन्तर्गतकाष्ठवत् दहनं नेत्याह– **अव्यय इति** ।।१३१।।

**चट्टि–** सः यावनः मुचुकुन्दस्य दृष्टिमात्रतः अवलोकनमात्रादेव क्षणात् भस्मसात् बभूव । अव्ययः स एव सुराणां तथास्त्विति वरप्रदो विष्णुः तं यावनं वह्निवद् वह्निरिव ददाह ।।१३१।।

**वराच्छिवस्य दैवतैरवध्यदानवान् पुरा[1] ।**
**हरेर्वरान्निहत्य स प्रपेद आश्विमं वरम् ।।१३२।।**

**व्यासतीर्थीया–** दर्शनतः कथं भस्मासाद् बभूवेत्यतो निमित्तमाह– **वरादिति** ।।१३२-१३३।।

**वरदराजीया–** शिवस्य वरादेव दैवतैरप्यवध्यान् दानवान् स्वयं हरेः वरात् निहत्य इमं वरं प्रपेदे प्राप्तवान् ।।१३२।।

**जनार्दनीया–** 'दृष्टिमात्रतो बभूव भस्मसात्' इत्युक्तस्य कारणमाह– **वरादिति** ।। पुरा मुचुकुन्दः वरात् देवतैर्देवैः अवध्याः हन्तुमशक्याः, ते च ते दानवाश्च तान् हरेः सकाशात् वरात् स्वेन प्राप्तवरात् आशु निहत्य, इमं वक्ष्यमाणं वरं देवेभ्यः प्रपेदे प्राप ।।१३२।।

**भावचन्द्रिका–** शिववरोल्लङ्घनसामर्थ्यश्चास्तीत्याह– **वरादिति** ।। **हरेरिति** ।। 'यथाभिवाञ्छितान् दिव्यान् गच्छ लोकान् नराधिप । भुङ्क्त्वा भोगान् महान् दिव्यान् भविष्यसि महाकुले ।। जातिस्मरो मत्प्रसादात् ततो मोक्षमवाप्स्यसि ।।' इति विष्णुपुराणे [५.२४.२-३]।।१३२।।

**चट्टि–** दृष्टिमात्रतो बभूव भस्मसात् इत्युक्तस्य कारणमाह– **वरादिति** ।। पुरा सः मुचुकुन्दः शिवस्य वरात् देवतैर्देवैः अवध्याः हन्तुमशक्याः, ते च ते दानवाश्च तान् हरेः वरात् स्वेन प्राप्तवरात् आशु निहत्य, इमं वक्ष्यमाणं वरं देवेभ्यः प्रपेदे प्राप ।।१३२।।

**सुदीर्घसुप्तिमात्मनः प्रसुप्तिभङ्गकृत्क्षयम् ।**
**स्वदृष्टिमात्रतस्ततो हतः स यावनस्तदा ।।१३३।।**

---

१. मुचुकुन्दः तारकासुरसंग्रामे देवानां साहाय्यमकरोत् । तदुक्तं स्कान्दे [माहेश्वरखण्डे.केदारखण्डे.२०.३५-३७] 'एवं लब्धवरो भूत्वा तारको हि महाबलः । देवान् युद्धार्थमाहूय युयुधे तैः सहासुरः ।। मुचुकुन्दं समाश्रित्य देवास्ते जयिनोऽभवन् । पुनः पुनः विकुर्वाणा देवास्ते तारकेण हि ।। मुचुकुन्दबलेनैव जयमापुः सुरास्तदा ।।' 'स याचितो सुरगणैरिन्द्राद्यैरात्मरक्षणे । असुरेभ्यः परिभ्रष्टैस्तद्रक्षां सोऽकरोच्चिरम् ।।' इति भागवते १०.५४.१५ ।

**वेदाङ्गतीर्थीया–** तत एव वरबलात् स्वदृष्टिमात्रतः हतः ।।१३३।।

**वरदराजीया–** इमं वरमित्युक्तं विशदयति– **सुदीर्घेति** ।। सुदीर्घकालं सुप्तिं निद्रां मध्ये निद्राभङ्गं कृतवतः क्षयश्च वरं प्रपेद इति सम्बन्धः । ततो निद्राभङ्गकृतत्वात् ।।१३३।।

**जनार्दनीया–** 'इमम्' इत्युक्तं विवृणोति– **सुदीर्घेति** ।। आत्मनः स्वस्य सुदीर्घसुप्तिं सुगाढां दीर्घां बहुकालवर्तिनीं, सुप्तिं निद्रां तथा स्वदृष्टिमात्रतः । प्रसुप्तिः गाढनिद्रा तस्याः भङ्गः तं करोतीति तथा, तस्य क्षयः नाशः तं तथा । एवं विधं वरं प्रपेदे । यत इति पूर्वेण सम्बन्धः । ततः कारणात् ।।१३३।।

**चट्टि–** 'इमम्' इत्युक्तं विवृणोति– **सुदीर्घेति** ।। आत्मनः स्वस्य सुदीर्घसुप्तिं सुदीर्घां बहुकालवर्तिनीं, सुप्तिं निद्रां तथा स्वदृष्टिमात्रतः । प्रसुप्तिः गाढनिद्रा तस्याः भङ्गः तं करोतीति तथा तस्य क्षयः नाशः तं तथा । एवं विधं वरं प्रपेदे । यत इति पूर्वेण सम्बन्धः । ततः कारणात् सः यावनः तदा हतः ।।

**अतश्च पुण्यमाप्तवान् सुरप्रसादतोऽक्षयम् ।**
**स यौवनाश्वजो नृपो न देवतोषणं वृथा ।।१३४।।**

**व्यासतीर्थीया–** ननु मुचुकुन्देन निद्रायाः तद्भङ्गकृत्क्षयस्यैव च प्रार्थितत्वात् स्वयं देवाः किमर्थं भविष्यद्भगवदरियावनदहनमदृष्टं प्रार्थितवन्तः । यद्भगवानदादित्यत आह– **न देवतोषणमिति** ।। ।।१३४-१३८।।

**वेदाङ्गतीर्थीया–** सुरप्रसादतः सुरप्रसादसम्भवात् । कथमेतददृष्टफलमभूत् इत्यत आह– अतः हरिविरोधिनिग्रहात् इति ।।१३४।।

**वादिराजतीर्थीया–** स यौवनाश्वज इत्यत्र युवनाश्वस्यापत्यं पुमान् यौवनाश्वः मान्धाता । तस्माज्जातो यौवनाश्वजो मुचुकुन्दः । न देवतोषणं वृथेत्यत्र देवानां तारतम्यं ज्ञात्वा यत्तोषणं तदेव देवतोषणम् । हिरण्यकशिपुरावणादीनां ब्रह्मशिवादिदैवतोषणस्य वैयर्थ्यप्रदर्शनात् इत्थमेवार्थो वक्तव्यः ।।१३४-१३९।।

**वरदराजीया–** अतश्च दुष्टयावनहन्तृत्वात् सुरप्रसादात् अक्षयं पुण्यञ्च अवाप्तवान् । अतो देवानां तोषणं सन्तुष्टिः वृथा न । किन्तु सफलमेवेत्यर्थः । अतो निद्रामात्रफलकत्वेन निरर्थकोऽपि वरो देवप्रार्थनया दुष्टनिबर्हणहेतुत्वात् सफलो जात इति भावः ।।१३४।।

**जनार्दनीया–** स नृपः अतः यावनवधात् सुराणां प्रसादतश्च अक्षयं अविनाशि पुण्यं पुण्यजां मुक्तिमिति यावत् । आप्तवान् । यतो देवतोषणं वृथा न । अतः अनर्थकोऽपि वरः सार्थकोऽभूदित्यर्थः ।।१३४।।

**चट्टि—** सः यौवनाश्वजो नृपः मुचुकुन्दः यावनवधात् सुराणां प्रसादतश्च अक्षयं अविनाशि पुण्यं आप्तवान् । यतो देवतोषणं वृथा न भवति । अतः अनर्थकोऽपि वरः सार्थकोऽभूदित्यर्थः ।।१३४।।

**ततो हरिं निरीक्ष्य स स्तुतिं विधाय चोत्तमम् ।**
**[1]हरेरनुज्ञया तपश्चचार मुक्तिमाप च ।।१३५।।**

**वरदराजीया—** सः नृपः हरिं कृष्णम् ।।१३५।।

**जनार्दनीया—** स मुचुकुन्दः ।।१३५।।

**चट्टि—** ततः अनन्तरं स मुचुकुन्दः हरिं श्रीकृष्णं निरीक्ष्य उत्तमां स्तुतिं च विधाय हरेः श्रीकृष्णस्य अनुज्ञया तपश्चकार । मुक्तिं चाप ।।१३५।।

**ततो गुहामुखाद्धरिर्विनिस्सृतो जरासुतम् ।**
**समस्तभूपसवृतं जिगाय बाहुनेश्वरः ।।१३६।।**

**वरदराजीया—** समस्तैः भूपैः संवृतं युक्तं जरासुतं बाहुनैव नतु आयुधैः जिगाय जितवान् ।।१३६।।

**जनार्दनीया—** विनिःसृतः निर्गतः ।।१३६।।

**चट्टि—** ईश्वरः हरिस्ततो अनन्तरं गुहामुखात् विनिःसृतः निर्गतः सन् समस्तभूपसंयुतं जरासन्धं बाहुनैव जिगाय ।।१३६।।

---

१. 'एवं दग्ध्वा स तं पापं दृष्ट्वा च मधुसूदनम् । कस्त्वमित्याह सोऽप्याह जातोऽहं शशिनः कुले । वसुदेवस्य तनयो यदुवंशसमुद्भवः । मुचुकुन्दोऽपि तच्छ्रुत्वा वृद्धगार्ग्यवचः स्मरन् । संस्मृत्य प्रणिपत्यैनं सर्वं सर्वेश्वरं हरिम् । आह जातो भवान्विष्णोरंशात्तु परमेश्वरः । पुरा गार्ग्येण कथितमष्टाविंशतिमे युगे । द्वापरान्ते हरेर्जन्म यदुवंशे भविष्यति । स त्वं प्राप्तो न सन्देहो मर्त्यानामुपकारकृत् ।...इत्थं स्तुतस्तदा तेन मुचुकुन्देन धीमता । प्राहेशः सर्वभूतानामनादिनिधनो हरिः। ...भुक्त्वा दिव्यान् महाभोगान् भविष्यसि महाकुले । जातिस्मरो मत्प्रसादात्ततो मोक्षमवाप्स्यसि ।... ततः कलियुगं ज्ञात्वा प्राप्तं तप्तुं ततो नृपः । नरनारायणस्थानं प्रययौ गन्धमादनम् ।।' इति ब्रह्ममहापुराणे ८८-८९अ.२३-२७.१-५ ।

ब्रह्मपुराणे ८९.२-३ । यथाभिवाञ्छिताल्लोकान् दिव्यान् गच्छ नरेश्वर । अव्याहतपरैश्वर्यो मत्प्रसादोपबृंहितः ।। भुक्त्वा दिव्यान् महाभोगान् भविष्यसि महाकुले । जातिस्मरो मत्प्रसादात् ततो मोक्षमवाप्स्यसि ।।' इति भागवते. १०.५४.६४-६५ । 'क्षत्रजन्मस्थितो जन्तूनवधीर्मृगयादिभिः । समाहितस्तत् तपसा जह्यघं मामुपाश्रितः ।। जन्मन्यनन्तरे राजन् सर्वभूतसुहृत्तमः। भूत्वा द्विजवरस्त्वं वै मामुपेष्यसि केवलम् ।।'

**तलेन मुष्टिभिस्तथा महीरुहैश्च चूर्णिताः ।**
**निपेतुरस्य सैनिकाः स्वयं च मूर्च्छितोऽपतत् ॥१३७॥**

**वरदराजीया–** अस्य जरासुतस्य । स्वयं जरासुतोऽपि ॥१३७॥

**जनार्दनीया–** तलेन कृष्णस्य हस्ततलेन पादतलेन च मुष्टिभिश्च तथा महीरुहैः कृष्णकरप्रेरितवृक्षैः चूर्णिताः चूर्णीकृताः अस्य जरासन्धस्य सैनिकाः निपेतुः । स्वयं च स्वयमपि जरासन्धः ॥१३७॥

**चट्टि–** तलेन श्रीकृष्णस्य हस्ततलेन पादतलेन च मुष्टिभिश्च तथा महीरुहैः श्रीकृष्णकरप्रेरितवृक्षैश्च चूर्णिताः चूर्णीकृताः अस्य जरासन्धस्य सैनिकाः निपेतुः । स्वयं च स्वयमपि जरासन्धः मूर्च्छितः सन्नपतत् ॥१३७॥

**ससाल्वपौण्ड्रचेदिपान् निपात्य सर्वभूभुजः ।**
**स पुप्लुवे जनार्दनः क्षणेन तां कुशस्थलीम् ॥१३८॥**

**वरदराजीया–** साल्वादिभिः सह वर्तमानान् सर्वान् भूभुजो नृपान् निपात्य तत्रत्य एव सः पुप्लुवे ॥१३८॥

**जनार्दनीया–** साल्वादिभिः सहिताः भूभुजः नृपान् निपात्य, तां स्वनिर्मितां कुशस्थलीं प्रति पुप्लुवे उत्पपात ॥१३८॥

**भावचन्द्रिका–** 'अष्टादशे तु सङ्ग्रामे' इत्युक्तवाक्याभिप्रायं विशदयितुमाह– **स पुप्लुव इति** ॥१३८॥

**चट्टि–** सः जनार्दनः श्रीकृष्णः ससाल्वपौण्ड्रचेदिपान् साल्वादिभिः सहितान् सर्वभूभुजः समस्तान् नृपान् निपात्य, तां स्वनिर्मितां कुशस्थलीं द्वारकां प्रति क्षणेन पुप्लुवे उत्पपात ॥१३८॥

**ससञ्ज्ञकाः समुत्थितास्ततो नृपाः पुनर्ययुः ।**
**जिगीषवोऽथ रुक्मिणीं [1]विधाय चेदिपे हरिम् ॥१३९॥**

**व्यासतीर्थीया–** जिगीषवः पुनः ययुः न्यवर्तन्त ॥१३९॥

**वेदाङ्गतीर्थीया–** ससञ्ज्ञकाः समुत्थिताः ततः युद्धरङ्गात् पुनर्ययुः । कुण्डिनपुरं ययुः । किं चिकीर्षवः ? अथ रुक्मिणीं चेदिपे प्रदाय हरिं जिगीषवः । भीष्मकेण कृष्णाय दातुं निश्चितां रुक्मिणीं चेदिपाय दापयित्वा तन्मानभङ्गात् तं जिगीषवः इति भावः ॥१३९-१४२॥

१.'प्रदाय' इति वेदाङ्गतीर्थपाठः ।

**वादिराजतीर्थीया–** जिगीषवोऽथ रुक्मिणीमित्यत्र अथ हरिं जिगीषव इति सम्बन्धः । विधाय मनसि विधाय ।।१३९-१४७।।

**वरदराजीया–** ससञ्ज्ञकाः सञ्ज्ञां प्राप्ताः सन्तः समुत्थिताः नृपाः अथानन्तरं रुक्मिणीं चेदिपे विधाय शिशुपालाय दापयित्वा तावतैव हरिं कृष्णं जिगीषवो जेतुं इच्छवः पुनर्ययुः । मिलिताः सन्तो भीष्मकनगरं पुनर्ययुरित्यर्थः ।।१३९।।

**जनार्दनीया–** अथ कृष्णगमनानन्तरम् सञ्ज्ञया सह वर्तमानाः ततः युद्धस्थानात् समुत्थिताः नृपाः मागधादयः रुक्मिणीं चेदिपे शिशुपालायेत्यर्थः । विधाय प्रदाय, हरिं कृष्णं जिगीषवः शिशुपालाय रुक्मिणीप्रदापनेन जातेन तन्मानभङ्गेन जेतुमिच्छवः सन्तः पुनर्ययुः । कुण्डिनपुरमिति शेषः ।।१३९।।

**ताम्रपर्णीया–** जिगीषवोऽथ रूक्मिणीमित्यत्र हरिं जिगीषव इति सम्बन्धः ।।१३९-१४३।।

**चट्टि–** अथ श्रीकृष्णगमनानन्तरं सञ्ज्ञया सह वर्तमानाः ससञ्ज्ञकाः ततः युद्धस्थानात् समुत्थिताः नृपाः मागधादयः रुक्मिणीं चेदिपे शिशुपालायेत्यर्थः । विधाय प्रदाय वाचेति शेषः । हरिं श्रीकृष्णं जिगीषवः शिशुपालाय रुक्मिणीप्रदापनेन जातेन तन्मानभङ्गेन जेतुमिच्छवः सन्तः पुनर्ययुः । कुण्डिनपुरमिति शेषः ।।१३९।।

**समस्तराजमण्डले विनिश्चयादुपागते ।**
**सभीष्मके च रुक्मिणि प्रदातुमुद्यते मुदा[1] ।।१४०।।**

**वेदाङ्गतीर्थीया–** निश्चयात् दापयाम इति निश्चयात् ।।१४०।।

**वरदराजीया–** उपागते सति सभीष्मके भीष्मकेण सहिते । प्रदातुं रुक्मिणीमिति शेषः । उद्यते उद्युक्ते सति ।।१४०।।

**जनार्दनीया–** मण्डले समूहे । विनिश्चयात् शिशुपालाय रुक्मिणीं प्रदापयाम इति निश्चयादुपागते सति भीष्मकेण सहिते राजमण्डले मुदा रुक्मिणीं प्रदातुं उद्यते सति । शिशुपालायेति शेषः । 'तदा' इति वा पाठः । तदा निश्चयसमये ।।१४०।।

**चट्टि–** समस्तराजमण्डले समस्तराजसमूहे । विनिश्चयात् शिशुपालाय रुक्मिणीं प्रदापयाम इति निश्चयादुपागते सति सभीष्मके रुक्मिणीं मुदा प्रदातुं शिशुपालायेति शेषः । उद्यते उद्युक्ते सति च । 'तदा' इति वा पाठः । तदा निश्चयसमये समस्तयोषितां प्रवरा सा विदर्भनन्दना रुक्मिणी च हरेः पदोः पादयोः सकाशं द्विजोत्तमं आशु अयापयत् प्रेषयामास ।।१४०-१४१।।

१. 'तदा' इति जनार्दनीचट्टीटिप्पण्योः पाठान्तरम् ।

**समस्तलोकयोषितां वरा विदर्भनन्दना ।**
**द्विजोत्तमं हरेः पदोः सकाशमाश्वयापयत् ॥१४१॥**

**वरदराजीया–** अयापयत् प्रेषयामास ॥१४१॥

**जनार्दनीया–** विदर्भनन्दना रुक्मिणी द्विजोत्तमं 'पुरोहितसुतं विप्रं प्रेषयामास रुक्मिणी' [उत्तरकाण्ड.२४७.२२] इति पाद्मे । अयापयत् प्रेषयामास ॥१४१॥

**भावचन्द्रिका–** द्विजोत्तमं स्वपुरोहितसुतं तमिति । 'श्रुत्वैतत् भगवान् रामो विपक्षाय नृपोत्तमम् । कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः ॥ बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः । त्वरितः कुण्डिनं प्रायात् ....॥' इति भागवते [१०.६८.२०-२१] ॥१४१॥

**निशम्य तद्वचो हरिः क्षणाद् विदर्भकानगात् ।**
**तमन्वयाद्धलायुधः समस्तयादवैः सह ॥१४२॥**

**वरदराजीया–** तस्य द्विजवरस्य वचः विदर्भकान् देशान् अगात् । समस्तयादवैः हलायुधः रामः तं कृष्णं अनु अगात् ॥१४२॥

**जनार्दनीया–** तद्वचः द्विजवचः । विदर्भकान् विदर्भविषयान् अगात् । समस्तयादवैः सह हलायुधः रामः तं कृष्णं अनु अगात् ॥१४२॥

**चट्टि–** हरिः श्रीकृष्णः तद्वचः द्विजवचनं निशम्य क्षणात् विदर्भकान् विदर्भविषयान् अगात् । हलायुधः बलरामः समस्तयादवैः सह तं श्रीकृष्णं अनु अयात् अगात् ॥१४२॥

**समस्तराजमण्डलं प्रयान्तमीक्ष्य केशवम् ।**
**सुयत्तमात्तकार्मुकं बभूव कन्यकावने ॥१४३॥**

**वरदराजीया–** प्रयान्तं आगतं केशवं ईक्ष्य समस्तराजमण्डलं आत्तकार्मुकं सत् कन्याकायाः अवने रक्षणे सुयत्तं अत्यन्तं सावधानं बभूवेति सम्बन्धः ॥१४३॥

**जनार्दनीया–** कन्यकाया अवने रक्षणविषये । आत्तकार्मुकं गृहीतधनुः सन् । सुयत्तं अतिप्रयत्नवद्बभूव ॥१४३॥

**चट्टि–** समस्तराजमण्डलं प्रयान्तं आगतं केशवमीक्ष्य कन्यकाया अवने रक्षणविषये । आत्तं कार्मुकं येन तत् तथा विधं सत् सुयत्तं अतिप्रयत्नवद्बभूव ॥१४३॥

**पुरा प्रदानतः सुरेक्षणच्छलाद् बहिर्गताम् ।**
**रथे न्यवेशयद्धरिः प्रपश्यतां च भूभृताम् ॥१४४॥**

**व्यासतीर्थीया–**आत्मानं प्रदातुं प्रपश्यतां च भूभृतामित्यनादरे षष्ठी । प्रपश्यतो भूभृतोऽनादृत्य ॥१४४॥

**मधुसूदनीया–** ॥ **सुरेक्षणच्छलादिति** ॥ 'इन्द्राणीमर्चयिष्यन्ति कृतकौतुकमङ्गला । केशवो मे भवेद्भर्ता नान्यः कश्चिद्भवेदिति ॥' च [हरि.२.५९.३४] ॥१४४-१६८॥

**वरदराजीया–** प्रदानतः कन्याप्रदानतः पुरा पूर्वं सुरेक्षणच्छलात् अम्बाख्यदेवतानिरीक्षणव्याजेन बहिर्गतां अम्बिकालयं प्रतीति शेषः । पश्यतामित्यनादरे षष्ठी ॥१४४॥

**जनार्दनीया–** हरिः प्रदानतः कन्यादानात् पुरा पूर्वं, सुरायाः अम्बिकायाः देव्याः ईक्षणं दर्शनं, तस्य छलात् व्याजात् । बहिर्गतां देवालयं प्रति गन्तुं बहिर्गतां रुक्मिणीं भूभृतां राज्ञां पश्यतां सतां रथे स्वरथे न्यवेशयत् ॥१४४॥

**ताम्रपर्णीया–** प्रपश्यतां च भूभृतामित्यनादरे षष्ठी । प्रपश्यतो भूभृतोऽनादृत्येति ॥१४४-१४६॥

**चट्टि–** हरिः श्रीकृष्णः प्रदानतः कन्यादानात् पुरा पूर्वं, सुरायाः इन्द्राण्याः ईक्षणं दर्शनं, तस्य छलात् व्याजात् । बहिर्गतां देवालयं प्रति गन्तुं बहिर्गतां रुक्मिणीं भूभृतां राज्ञां पश्यतां च सतां रथे स्वरथे न्यवेशयत् । 'इन्द्राणीमर्चयिष्यन्ति कृतकौतुकमङ्गला । केशवो मे भवेद्भर्ता नान्यः कश्चिद्भवेदिति ॥' च [हरि.२प.५९अ.३४] ॥१४४॥

**जरासुतादयो रुषा तमभ्ययुः शरोत्तमैः ।**
**विधाय तान् निरायुधान् जगाम केशवः शनैः ॥१४५॥**

**वरदराजीया–** तं कृष्णं शरोत्तमैः निरायुधान् विधायेति सम्बन्धः । शनैरिति भयाभावं सूचयति ॥

**जनार्दनीया–** तं कृष्णम् ॥१४५॥

**चट्टि–** जरासुतादयः रुषा तं श्रीकृष्णं अभ्ययुः । केशवः श्रीकृष्णः शरोत्तमैः तान् निरायुधान् विधाय शनैः जगाम । शनैरिति भयाभावं सूचयति ॥१४५॥

**पुनर्गृहीतकार्मुकान् हरिं प्रयातुमुद्यतान् ।**
**न्यवारयद्धलायुधो बलाद् बलोर्जिताग्रणीः ॥१४६॥**

**वरदराजीया–** बलेनोर्जितेषु अग्रणीः मुख्यः ।।१४६।।

**जनार्दनीया–** बलेन शक्त्या, ऊर्जितानां उत्कृष्टानां, अग्रणीः आद्यः । बलाढ्यानां मध्ये श्रेष्ठ इत्यर्थः । न्यवारयत् ।।१४६।।

**चट्टि–** बलेन शक्त्या ऊर्जितानां उत्कृष्टानां अग्रणीः आद्यः । बलाढ्यानां मध्ये श्रेष्ठ इत्यर्थः । हलायुधः बलरामः पुनः गृहीतकार्मुकान् हरिं प्रयान्तुं उद्यतान् जरासुतादीन् बलात् न्यवारयत् ।।१४६।।

**तदा सितः शिरोरुहो हरेर्हलायुधस्थितः ।**
**प्रकाशमाविशद् बलं विजेतुमत्र मागधम् ।।१४७।।**

**व्यासतीर्थीया–** प्रकाशमाविशत् प्रकटोऽभवत् ।।१४७।।

**वेदाङ्गतीर्थीया–** हलायुधस्थितः पूर्वमप्रकाशतया हलायुधस्थितः । प्रकाशमाविशत् बलं प्रकाशो यथा भवति तथा प्राविशत् आविर्बभूवेति भावः ।।१४७।।

**वादिराजतीर्थीया–** तदा सितः शिरोरुह इत्यत्र हलायुधस्थितः हरेः सितः शुक्लः शिरोरुहः केशः प्रकाशं व्यक्तं यथा भवति तथा बलं बलराममाविशत् । मागधं जेतुं विशिष्य सन्निधानमकरोदिति भावः ।।१४७-१८४।।

**वरदराजीया–** तदा हलायुधे बलभद्रे स्थितः सन्निहितः हरेः नारायणस्य सितः शुक्लकेशः ।।१४७।।

**जनार्दनीया–** तदा हलायुधे रामे प्रकाशतया स्थितः हरेः सितः शुक्लः शिरोरुहः केशः अत्र अस्मिन् युद्धे मागधं विजेतुं बलं बलभद्रं प्रकाशं प्रकाशं यथा स्यात् तथा । आविशत् इत्यर्थः । यद्वा शक्तिमुद्दिश्य प्रकाशमाविशत् प्रकटोऽभूत् अदात् ।।१४७।।

**ताम्रपर्णीया–** प्रकाशमाविशत् । व्यक्तं यथा भवति तथा बलराममाविशत् । विशिष्यसन्निहितोऽभूदिति यावत् ।।१४७-१६७।।

**चट्टि–** तदा हलायुधे रामे स्थितः हरेः सितः शुक्लशिरोरुहः केशः अत्र अस्मिन् युद्धे मागधं विजेतुं प्रकाशं व्यक्तं यथा भवति तथा । बलं बलरामं आविशत् इत्यर्थः । मागधं विजेतुं विशेषसन्निधानमकरोदिति भावः ।।१४७।।

**स तस्य मागधो रणे गदानिपातचूर्णितः ।**
**पपात भूतले बलो विजित्य तं ययौ पुरीम् ।।१४८।।**

**वरदराजीया–** शुक्लकेशाविर्भावफलमाह– **स इति** ।। स मागधः तस्य बलभद्रस्य गदानिपातेन चूर्णितः मूर्च्छितः । तं जरासुतम् । पुरीं द्वारकाम् ।।१४८।।

**जनार्दनीया–** स मागधः तस्य रामस्य गदायाः निपातनं, तेन चूर्णितः पिष्टीकृतः सन् पपात । बलः रामः तं जरासन्धम् ।।१४८।।

**चट्टि–** स मागधः तस्य रामस्य गदायाः निपातनेन चूर्णितः पिष्टीकृतः सन् भूतले पपात । बलः बलरामः तं जरासन्धं विजित्य पुरीं द्वारकां ययौ ।।१४८।।

**वरोरुवेषसंवृतोऽथ चेदिराट् समभ्ययात् ।**
**तमाससाद सात्यकिर्नदन् मृगाधिपो यथा ।।१४९।।**

**वेदाङ्गतीर्थीया–** वरोरुवेषसम्भृतः वरस्योरुवेषः तेन सम्भृतः युक्तः ।।१४९-१५१।।

**वरदराजीया–** वरस्य उरुवेषेण हरिद्रादिकौतुकेन संयुतश्चेदिराट् शिशुपालः । तं चेदिराजं सात्यकिः आससाद ।।१४९।।

**जनार्दनीया–** वरस्य उरुवेषः तेन संयुतः चेदिराट् । तं शिशुपालम् । यथा मृगाधिपः सिंहः ।।१४९।।

**चट्टि–** अथानन्तरं वरस्य उरुवेषः, तेन संयुतः चेदिराट् शिशुपालः समभ्ययात् । तं शिशुपालं सात्यकिः मृगाधिपः सिंहः यथा तथा नदन् आससाद ।।१४९।।

**चिरं प्रयुद्ध्य तावुभौ वरास्त्रशस्त्रवर्षिणौ ।**
**क्रुधा निरीक्ष्य तस्थतुः परस्परं स्फुरत्तनू ।।१५०।।**

**वरदराजीया–** तौ सात्यकिशिशुपालौ क्रुधा क्रोधेन स्फुरत्तनू देदीप्यमानदेहौ ।।१५०।।

**जनार्दनीया–** तावुभौ सात्यकिशिशुपालौ क्रुधा कोपेन स्फुरत्तनू चलद्देहौ । परस्परं निरीक्ष्य, तस्थतुः स्थितौ ।।१५०।।

**चट्टि–** तावुभौ सात्यकिशिशुपालौ वरास्त्रशस्त्रवर्षिणौ सन्तौ चिरं प्रयुद्ध्य क्रुधा कोपेन स्फुरत्तनू चलद्देहौ सन्तौ परस्परं निरीक्ष्य तस्थतुः ।।१५०।।

**समानभावमक्षमी शिनेः सुतात्मजः शरम् ।**
**अथोद्बबर्ह तत्क्षणाद् बलान्मुमोच वक्षसि ।।१५१।।**

**व्यासतीर्थीया–** समानभावत्वं समानत्वम् ।।१५१।।

**वेदाङ्गतीर्थीया–** समानभावं साम्यम् ।।१५१-१६१।।

**वरदराजीया–** समानभावं स्वेन समत्वं अक्षमी असहमानः शरं उद्बबर्ह इषुधेः निष्कासितवान् । बलात् बलेन ।।१५१।।

**अनन्तभट्टीया–** समानभावं स्वसमत्वम् ।।१५१।।

**जनार्दनीया–** समानभावं उभयोः समत्वं अक्षमी असहमानः । शिनेः सुतः सत्यकः, तस्य आत्मजः सात्यकिः । शरं उद्बबर्ह तूणान्निःसारितं चकार । अथ तं शरं बलादाकृष्येत्यर्थः । तस्य शिशुपालस्य वक्षसि मुमोच ।।१५१।।

**चट्टि–** शिनेः सुतः सत्यकः, तस्य आत्मजः सात्यकिः समानभावं उभयोः समत्वं अक्षमी असहमानः सन् शरं उद्बबर्ह तूणान्निःसारितं चकार । अथ अनन्तरं शरं बलादाकृष्येति शेषः । वक्षसि शिशुपालस्य वक्षसि मुमोच ।।१५१।।

**स तेन ताडितोऽपतद् विसञ्ज्ञको नृपात्मजः ।**
**विजित्य तं स सात्यकिर्ययौ प्रहृष्टमानसः ।।१५२।।**

**वरदराजीया–** सः नृपात्मजः चेदिराट् ।।१५२।।

**जनार्दनीया–** सः नृपात्मजः दमघोषपुत्रः शिशुपालः तेन सात्यकिना बाणेन च ताडितः विसञ्ज्ञकः सञ्ज्ञारहितः सन् अपतत् ।।१५२।।

**चट्टि–** सः नृपात्मजः दमघोषपुत्रः शिशुपालः तेन सात्यकिना बाणेन ताडितः सन् विसञ्ज्ञकः सञ्ज्ञारहितः सन् अपतत् । सः सात्यकिः तं शिशुपालं विजित्य प्रहृष्टमानसः सन् ययौ ।।१५२।।

**अथापरे च यादवा विजित्य तद्बलं ययुः ।**
**पुरैव रुक्मिपूर्वकाः प्रजग्मुरच्युतं प्रति ।।१५३।।**

**व्यासतीर्थीया–** पुरैव पूर्वमेव ।।१५३।।

**वरदराजीया–** तद्बलं तस्य शिशुपालस्य बलम् । पुरैव शिशुपालजयात् पूर्वमेव ।।१५३।।

**अनन्तभट्टीया–** कौतुकादिः । पुरा पूर्वं ।।१५३।।

**जनार्दनीया–** तत्प्रसिद्धं मिलितं वलं शिशुपालवलं वा । पुरैव 'पुनर्गृहीतकार्मुकान्' इत्युक्तबलभद्रादियुद्धात् पूर्वमेव रुक्मिपूर्वकाः सह प्रजग्मुः । योद्धुमिति शेषः ।।१५३।।

**चट्टि–** अथ अनन्तरं अपरे यादवाश्च तत् प्रसिद्धं वलं शिशुपालवलं वा विजित्य ययुः । पुरैव वलभद्रादियुद्धात् पूर्वमेव रुक्मिपूर्वकाः । योद्धुमिति शेषः । अच्युतं श्रीकृष्णं प्रति जग्मुः ।।१५३।।

**सहैकलव्यपूर्वकैः समेत्य भीष्मकात्मजः ।**
**हरिं ववर्ष सायकैः स सिंहवन्न्यवर्तत ।।१५४।।**

**वरदराजीया–** एकलव्यपूर्वकैः सह समेत्य सः हरिः न्यवर्तत परावृतोऽभूत् ।।१५४।।

**जनार्दनीया–** तदेव विवृणोति– **सहेति** ।। भीष्मकस्यात्मजः रुक्मी एकलव्यपूर्वकैः सह हरिं समेत्य प्राप्य, सायकैः ववर्ष । स कृष्णः न्यवर्तत परावृत्तोऽभूत् ।।१५४।।

**चट्टि–** तदेव विवृणोति– **सहेति** ।। भीष्मकस्यात्मजः रुक्मी एकलव्यपूर्वकैः सह हरिं श्रीकृष्णं समेत्य सायकैः वाणैः ववर्ष । स श्रीकृष्णः सिंहवत् न्यवर्तत परावृत्तोऽभूत् ।।१५४।।

**अक्षोहिणीत्रयं हरिस्तदा निहत्य सायकैः ।**
**अवाहनायुधं व्यधान्निषादपं शरैः क्षणात् ।।१५५।।**

**वरदराजीया–** अवाहनायुधं वाहनायुधरहितं निषादपं एकलव्यं व्यधात् ।।१५५।।

**जनार्दनीया–** अवाहनायुधं वाहनादिरहितम् । निषादपं एकलव्यम् ।।१५५।।

**चट्टि–** तदा हरिः श्रीकृष्णः अक्षौहिणीत्रयं सायकैः निहत्य निषादपं एकलव्यं क्षणाद् अवाहनायुधं वाहनायुधरहितं व्यधात् ।।१५५।।

**शरं शरीरनाशकं समाददानमीश्वरम् ।**
**स एकलव्य आशु तं विहाय दुद्रुवे भयात् ।।१५६।।**

**वरदराजीया–** तं कृष्णं विहाय ।।१५६।।

**जनार्दनीया–** शरं समाददानं स्वीकुर्वन्तं तमीश्वरं विहाय ।।१५६।।

**चट्टि–** सः एकलव्यः शरीरनाशकं शरं समादधानं स्वीकुर्वन्तमीश्वरं श्रीकृष्णं विहाय भयात् दुद्रुवे ।।१५६।।

**धनुर्भृतां वरे गते रणं विहाय भूभृतः ।**
**करूशराजपूर्वकाः क्षणात् प्रदुद्रुवुर्भयात् ॥१५७॥**

**वरदराजीया–** धनुर्भृतां वरे एकलव्ये । करूशराजपूर्वकाः दन्तवक्राद्याः ॥१५७॥

**जनार्दनीया–** धनुर्भृतां धनुर्धारिणां मध्ये, वरे श्रेष्ठे एकलव्ये । करूशराजो दन्तवक्रः ॥१५७॥

**चट्टि–** धनुर्भृतां धनुर्धारिणां मध्ये वरे श्रेष्ठे एकलव्ये रणं युद्धं विहाय गते सति करूशराजपूर्वकाः करुशराजो दन्तवक्रः तत्पूर्वकाः भूभृतः भयात् क्षणात् प्रदुद्रुवुः ॥१५७॥

**अथाऽससाद केशवं रुषा स भीष्मकात्मजः ।**
**शराम्बुधार आशु तं विवाहनं व्यधाद्धरिः ॥१५८॥**

**वरदराजीया–** शराम्बुधारा शराख्या अम्बुधारा यस्य स तथोक्तः । विवाहनं विगतवाहनं व्यधात् चकार ॥१५८॥

**जनार्दनीया–** रुषा कोपेन । शरा अम्बूनीव, तेषां धारा यस्य स तथा । आससाद प्राप । तं रुक्मिणं विवाहनं व्यधादकरोत् ॥१५८॥

**चट्टि–** अथ अनन्तरं सः भीष्मकात्मजः रुक्मी शराख्याः अम्बुधारा यस्य स तथाभूतस्सन् रुषा कोपेन केशवं श्रीकृष्णं आससाद प्राप । हरिः श्रीकृष्णः तं रुक्मिणं आशु विवाहनं वाहनरहितं व्यधात् ॥१५८॥

**चकर्त कार्मुकं पुनः स खड्गचर्मभृद्धरेः ।**
**रथं समारुहच्छरैश्चकर्त खड्गमीश्वरः ॥१५९॥**

**वरदराजीया–** सः रुक्मी । हरेः कृष्णस्य रथम् ॥१५९॥

**जनार्दनीया–** धनू रुक्मिधनुश्चकर्त चिच्छेद । पुनः स रुक्मी हरेः रथं समारुहत् । ईश्वरः कृष्णः रुक्मिणः खड्गं शरैश्चकर्त ॥१५९॥

**चट्टि–** कार्मुकं रुक्मिधनुः चकर्त । पुनः स रुक्मी खड्गचर्मभृत् सन् हरेः श्रीकृष्णस्य रथं समारुहत् । ईश्वरः श्रीकृष्णः रुक्मिणः खड्गं शरैश्चकर्त ॥१५९॥

**शरैर्वितस्तिमात्रकैर्विधाय तं निरायुधम् ।**
**प्रियावचः प्रपालयन् जघान नैनमच्युतः ॥१६०॥**

**वरदराजीया–** वितस्तिमात्रकैः वितस्तिप्रमाणकैः तं रुक्मिणम् । प्रियायाः रुक्मिण्याः वचः न हन्तव्य इत्येवं रूपम् ।।१६०।।

**जनार्दनीया–** वितस्तिमात्रकैः वितस्तिपरिमितैः तं रुक्मिणम् । प्रियायाः रुक्मिण्याः, वचः प्रपालयन् मद्भ्रातरं 'मा जहि' इति रुक्मिणीवाक्यं मानयन्नित्यर्थः । एनं रुक्मिणम् ।।१६०।।

**चट्टि–** अच्युतः श्रीकृष्णः वितस्तिमात्रकैः वितस्तिप्रमाणकैः शरैः तं रुक्मिणं निरायुधं विधाय प्रियायाः रुक्मिण्याः, वचः प्रपालयन् 'मद्भ्रातरं मा जहि' इति रुक्मिणीवाक्यं मानयन्नित्यर्थः । एनं रुक्मिणं न जघान ।।१६०।।

**निबद्ध्य पञ्चचूडिनं विधाय तं व्यसर्जयत् ।**
**जगज्जनित्रयोरिदं विडम्बनं रमेशयोः ।।१६१।।**

**व्यासतीर्थीया–** ननु सर्वसत्वेनान्योन्याभिप्रायवित्वात् किमर्थं 'हनिष्ये' 'न जहि' इत्युभौ प्रविवादं चक्रतुरित्यत आह– **जगदिति** ।।१६१।।

**वेदाङ्गतीर्थीया–** पञ्चचूडिनं पञ्चशिखिनम् ।।१६१-१६७।।

**वरदराजीया–** पञ्चचूडिनं पञ्चशिखं विधाय कृत्वा । जगज्जनित्रयोः जगतः मातापित्रोः रमा च ईशश्च तयोः इदं 'हन्तव्योऽयं' 'न हन्तव्योऽयम्' इत्यादिविवादकरणं केवलं विडम्बनं विनोदमात्रम् ।।१६१।।

**अनन्तभट्टीया–** रुक्मिहनने किमिति विवादं चक्रुरित्यत आह– **जगदिति** ।। पञ्चचूडिनं कतिपयकेश-वपनेन पञ्चशिखम् ।।१६१।।

**जनार्दनीया–** तं रुक्मिणं निबद्ध्य वध्वा पञ्चचूडिनं पञ्चशिखिनं विधाय व्यसर्जयत् । जगतां जनित्रयोः पित्रोः । रमा च ईशश्च तयोः रुक्मिणीकृष्णयोः । इदं इमं हनिष्ये, मा जहीत्यनयोः विवादकरणं विडम्बनं लोकानुकरणम् ।।१६१।।

**चट्टि–** तं रुक्मिणं निबद्ध्य पञ्चचूडिनं पञ्चशिखिनं विधाय, व्यसर्जयत् । जगतां जनित्रयोः पित्रोः । रमा च ईशश्च तयोः इदं इमं हनिष्ये, मा जहीत्यनयोः विवादकरणं विडम्बनं लोकानुकरणम् ।।१६१।।

**सदैकमानसावपि स्वधर्मशासकौ नृणाम् ।**
**रमा हरिश्च तत्र तौ विजह्तुर्हि रुक्मिणा ।।१६२।।**

**व्यासतीर्थीया–** ननु जगद्विडम्बनमपि किमर्थं चक्रुरित्यत उक्तं विवृण्वन्नाह– **सदैकेति** ।। बन्धुवधादौ प्रकृतोऽपि पत्नीप्रार्थितो निवृत्तेत्यादिस्वधर्मशासकौ ।।१६२-१६७।।

**वरदराजीया–** एकमानसौ अविरुद्धमनस्कौ स्वधर्मशासकौ धर्मशिक्षकौ रुक्मिणा साकं विजह्रतुः विनोदं चक्रुः ।।१६२।।

**अनन्तभट्टीया–** [तौ] कृष्णरुक्मिण्यौ ।।१६२।।

**जनार्दनीया–** 'विडम्बनम्' इत्युक्तं विशदयति– **सदेति** ।। सदा एकमानसावपि अविरुद्धेच्छावपि तौ रमा हरिश्च नृणां स्वधर्मशासकौ गृहिणां स्वधर्मशिक्षकौ च यतः अतस्तत्र युद्धे रथे वा रुक्मिणा सह विजह्रतुः क्रीडां चक्रतुः ।।१६२।।

**चट्टि–** 'विडम्बनम्' इत्युक्तं विशदयति– **सदेति** ।। सदा एकमानसौ अविरुद्धचित्तावपि तौ रमा हरिश्च नृणां स्वधर्मशासकौ स्वधर्मशिक्षकौ च यतः अतस्तत्र युद्धे रुक्मिणा सह विजह्रतुः विनोदं चक्रतुः ।।१६२।।

**अथाऽससाद सौभराड् हरिं शराम्बुवर्षणः ।**
**हरिः शरं यमोपमं मुमोच तस्य वक्षसि ।।१६३।।**

**वरदराजीया–** सौभराट् साल्वः शराख्याम्बुवर्षणकर्ता । यमोपमं मृत्युसदृशम् । तस्य साल्वस्य ।।१६३।।

**जनार्दनीया–** यमोपमं मृत्युसदृशं शरं तस्य साल्वस्य ।।१६३।।

**चट्टि–** अथ सौभराट् साल्वः शराख्याम्बुवर्षणः सन् हरिमाससाद । हरिः यमोपमं मृत्युसदृशं शरं तस्य साल्वस्य वक्षसि मुमोच ।।१६३।।

**शरेण तेन पीडितः पपात मन्दचेष्टितः ।**
**चिरात्तसञ्ज्ञकोऽगमत् त्रिनेत्रतोषणेच्छया ।।१६४।।**

**वरदराजीया–** मन्दं अल्पं चेष्टितं शरीरचेष्टा यस्य सः । चिरेण विलम्बेन आत्ता प्राप्ता सञ्ज्ञा ज्ञानं येन सः ।।१६४।।

**जनार्दनीया–** मन्दं ईषत्, चेष्टितं इन्द्रियव्यापारो यस्य स तथा । चिरात् सञ्ज्ञासहितः सन् त्रिनेत्रस्य त्र्यम्बकस्य तोषणेच्छया वनं प्रत्यगमत् ।।१६४।।

**चट्टि**— सः साल्वः तेन शरेण पीडितः सन् पपात । मन्दं ईषत्, चेष्टितं व्यापारो यस्य स तथा । चिरेण विलम्बेन आत्ता प्राप्ता सञ्ज्ञा ज्ञानं येन सः चिरात्तसञ्ज्ञकः सन् अहं इमां महीं अयादवीं यादवरहितां करिष्ये इति समस्तराजानां सन्निधौ समीपे उदीर्य त्रिनेत्रस्य रुद्रस्य तोषणेच्छया । वनं प्रतीति शेषः । अगमत् । अतिदुश्चरं तपः व्यधात् ।।१६४-१६५।।

**समस्तराजसन्निधावयादवीं महीमहम् ।**
**करिष्य इत्युदीर्य स व्यधात् तपोऽतिदुश्चरम् ।।१६५।।**

**वरदराजीया**— समस्तराजसन्निधौ इत्युदीर्य ।।१६५।।

**जनार्दनीया**— किं कृत्वा ? अहं इमां महीं अयादवीं यादवरहितां करिष्य इति राज्ञां सन्निधौ समीपे उदीर्य, स साल्वः ।।१६५।।

**अथो विवेश केशवः पुरीं कुशस्थलीं विभुः ।**
**प्रियायुतोऽब्जजादिभिः समीडितः सुरेश्वरः ।।१६६।।**

**वरदराजीया**— प्रियया रुक्मिण्या सहितः ।।१६६।।

**जनार्दनीया**— समीडितः सम्यक् स्तुतोऽभूदित्यर्थः ।।१६६।।

**चट्टि**— अथ अनन्तरं प्रभुः केशवः प्रियया रुक्मिण्या युतः सन् अब्जजादिभिः ब्रह्मादिभिः सुरेश्वरैः समीडितः सम्यक् स्तुतस्सन् कुशस्थलीं पुरीं द्वारकां विवेश ।।१६६।।

**पुरा ततो हलायुधः प्रियां निजां पुराऽपि हि ।**
**स वारुणीसमाह्वयामवाप रेवतीं प्रभुः ।।१६७।।**

**वेदाङ्गतीर्थीया**— ततो रुक्मिणीहरणात् पुरा पुरापि वारुणीसमाह्वयां निजां प्रियां अत्र जन्मनि नाम्ना रैवतीम् ।।१६८।।

**वरदराजीया**— ततः रुक्मिण्यानयनात् पुरा शेषजन्मनि निजां प्रियां वारुणीसमाह्वयां तन्नाम्नीं अत्र रैवतीं रैवतस्य पुत्रीम् ।।१६७।।

**जनार्दनीया**— ततः पुरा रुक्मिण्यानयनात् पूर्वं प्रभुः हलायुधः रामः पुरापि पूर्वमपि । मूलरूपेऽपीत्यर्थः । वारुणीति समाह्वयां समीचीननामवतीं निजां प्रियां स्वभार्यां रेवतीं भुवि रेवतीनाम्नीं अवाप ।।१६७।।

**चट्टि–** ततः रुक्मिणीस्वयंवरात् पुरा पूर्वं प्रभुः सः हलायुधः बलरामः पुरा पूर्वमपि । शेषाख्यमूलरूपेऽपीत्यर्थः । वारुणीति समाह्वयां समीचीननामवतीं निजां प्रियां स्वभार्यां रेवतीं भुवि रेवतीनाम्नीं अवाप ।।१६७।।

**पतिं यथाऽनुरूपिणं तदीयमेव पूर्वकम् ।**
**पिता तदीय ऐच्छत प्रवेत्तुमब्जसम्भवात् ।।१६८।।**

**व्यासतीर्थीया–** पुरातनः । कृष्णस्य रुक्मिणीस्वयंवरात् पूर्वं रेवतीप्राप्तिप्रकारमाह– **पतिमित्यदिना** ।।१६८।।

**वेदाङ्गतीर्थीया–** तदीयः पिता रेवतपुत्रः ककुद्मी ।।१६८।।

**सत्याभिनवतीर्थीया–** तत्रैव पतिं यथाऽनुरूपिणं...इति श्लोके 'यथानुरूपिणम्' इत्यस्य यथा पुत्रीरूपसदृशं, अनु समीचीनं रूपमस्यास्तीति यथानुरूपी तमित्यर्थः । एतेन 'अनुरूपिणम्' इत्यस्य पुत्रीरूपानुकूलरूपिणमित्यर्थो वक्तव्यः । तथा च 'अनुरूपिणम्' इत्यनेनैव पुत्रीरूपसदृशरूपिणमित्यर्थस्य लाभात् यथाशब्दो व्यर्थ इति दूषणं पराकृतम् । यथाशब्देन सादृश्यमुच्यते । अनुशब्देन अनुकूलत्वं नोच्यते किन्तु समीचीनत्वमुच्यते इत्यभ्युपगमात् ।।१६८।।

**वरदराजीया–** तदीयः रेवत्याः सम्बन्धी पिता रैवतः यथानुरूपिणं स्वसुतासमानरूपादिमन्तं तदीयमेव पूर्वजन्मनि विद्यमानभर्तारं अब्जसम्भवात् चतुर्मुखात् वेत्तुं ज्ञातुं ऐच्छत् ।।१६८।।

**अनन्तभट्टीया–** ऐक्षत विचारितवान् ।।१६८।।

**जनार्दनीया–** तदीयः रेवतीसम्बन्धी पिता ककुद्मी यथानुरूपिणं रेवतीरूपोचितं रूपं पूर्वमेव पूर्वजन्मनि विद्यमानमेव तदीयं रेवतीसम्बन्धिनं पतिं भर्तारं अब्जसम्भवात् ब्रह्मणः प्रवेत्तुं ज्ञातुं, ऐच्छत् ।।१६८।।

**ताम्रपर्णीया–** यथा यथावत्प्रवेत्तुमित्यन्वयः ।।१६८।।

**चट्टि–** तदीयः रेवतीसम्बन्धी पिता ककुद्मी यथानुरूपिणं रेवतीरूपोचितरूपं पूर्वकं पूर्वजन्मनि विद्यमानमेव तदीयं रेवतीसम्बन्धिनं पतिं भर्तारं अब्जसम्भवात् ब्रह्मणः सकाशात् प्रवेत्तुं ज्ञातुं ऐच्छत् ।।१६८।।

**स तत्सदो गतो वरात् तदीयतः प्रगीतिकाम् ।**
**निशम्य नाविदद् गतं युगोरुकालपर्ययम् ।।१६९।।**

**व्यासतीर्थीया–** युगान्तिकश्च उरुकालश्च शरीरस्य पर्यायो विपर्ययः निवृत्तिः ।।१६९।।

**वेदाङ्गतीर्थीया–** तदीयतः वरात् तत्सदोगतः ब्रह्मवरात् ब्रह्माणं प्राप्तः । युगोरुकालपर्ययः वहुयुगकालात्ययः ।।१७०।।

**मधुसूदनीया–** ।। **स तत्सदो गत इति** ।। रेवतपुत्रः ककुद्मिनामकः तदीयपितेत्यर्थः । रेवतीमादायेति शेषः । तदुक्तं नवमस्कन्धे– 'आनर्ताद्रैवतोऽभवत् [५.२७] । 'तस्य पुत्र शतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् । ककुद्मी रेवतीं कन्यां स्वमादाय विभुं गतः ।। पुत्र्या वरं प्रति प्रष्टुं ब्रह्मलोकमपावृतम् ।।' इति [५.२९-३०] । अत एव स रैवतो वलायेत्यत्र रैवतपुत्रत्वात् रैवत इति व्याख्येयम् । अन्यत्राप्युक्तम्- 'तस्य रेवतीनाम कन्याभवत् । स तामादाय कस्येयमर्हतीति भगवन्तमब्जयोनिं प्रष्टुं ब्रह्मलोकं जगाम । तावच्च ब्रह्मणोऽन्तिके हाहाहूहूसञ्ज्ञाभ्यां गन्धर्वाभ्यामतितानं नाम दिव्यं गान्धार्वं आगीयत' इत्यादि विष्णुपुराणे चतुर्थेंऽशे [१.६६-६७] 'छालिख्याख्यगन्धर्वगानम् । युगोरुकालपर्ययं बहुयुगातिक्रममित्यर्थः । सप्तविंशमहायुगकालमिति यावत् । तथाचोक्तम् नवमस्कन्धे [५.३३] 'कालोऽभियातस्त्रिनवचतुर्युग-विकल्पितः । मुहूर्त्तं शृण्वतः श्राव्यं प्रतियातस्य तेऽनघ ।।' इति । 'छालिख्यगान्धर्वमुदारकीर्तिः मेने किलैकं दिवसं सहस्रम् । चतुर्युगाणां नृप रैवत' इति हरिवंशे ।।१६९-१७३।।

**वरदराजीया–** अत एव तस्य ब्रह्मणः सदः सभां प्रति गतः । तत्सभाप्राप्तौ कारणमाह– **तदीयतो वरादिति** ।। तेन ब्रह्मणा दत्तात् वरात् सभां प्रत्यागन्तव्यं इत्येवं रूपात् । गीतिकां गानविशेषं निशम्य श्रुत्वा युगात्मकस्य उरुकालस्य पर्ययं अतिक्रमं नाविदत् न ज्ञातवान् ।।१६९।।

**भावविवृति–** स तत्सदो...कालपर्ययम् इत्यत्र मेरुस्थब्रह्मसभां गतः तदीयतो वरात् ब्रह्मसम्वन्धिवरात्। तद्विनात् तत्र गन्तुं अशक्यत्वात् । तत्र नरायोग्यगानं श्रुत्वा विमोहितो युगोरुकालपर्ययं युगानां महायुगानां उरुकालस्य सप्तविंशतिसङ्ख्याकस्य पर्ययमतिक्रमणं नाविदत् । तदेतदुक्तम्- 'अब्जयोनिं प्रभुं ब्रह्मलोकं जगाम' इति । 'साम्प्रतं हि वैवस्वते मनौ अष्टाविंशतिचतुर्युगमतीतप्रायमास हि कालः' इति विष्णुपुराणे । ब्रह्मवैवर्ते च– 'कथं बहुतिथे काले व्यतीते सूतनन्दन । न जरा रेवतीं प्राप रैवतं वा ककुद्मिनम् ।। मेरुं गतस्य वा तस्य सञ्जाता सङ्गतिः कथम् ।।' इति । 'कालो यातस्त्रिनवचतुर्युगविकल्पितः' इति भागवते ।।१६९-१८७।।

**अनन्तभट्टीया–** तदीयतः ब्रह्मदत्तात् ।। **युगेति** ।। युगात्मकस्य उरुकालस्य पर्ययमतिक्रमणम् ।।१७०।।[१]

---

१. अनन्तभट्टीया– रेवतीमिति ।। न च नृपस्याजसदोगतत्वाद्बहुकालं जीवितत्वेऽपि तत्पत्न्यादीनां नाशात् कथं जीवनमिति वाच्यम् ।। तस्या अपि ब्रह्मसदोगतत्वात् । इति हो.पुस्तके अधिकःपाठः ।

**जनार्दनीया–** स रेवतपुत्रः ककुद्मी । तदीयतो ब्रह्मसम्बन्धिनो वरात् ब्रह्मणो लोकगमनविषये ब्रह्मदत्तवरात् तस्य ब्रह्मणः, सदः सभां गतः प्राप्तः सन् प्रगीतिकां गायनं निशम्य, युगानां उरुकालस्य पर्यन्तं अतिक्रमणमित्यर्थः । नाविदत् न ज्ञानवान् ।।१६९।।

**ताम्रपर्णीया–** ।। **सदो गत इति** ।। पुत्र्या सहेति शेषः । तथा च भागवते । 'ककुद्मी [रैवतः] रेवतीं कन्यां स्वामादाय विभुं गतः । पुत्र्याः वरं परिप्रष्टुं ब्रह्मलोकमपावृतम्' इति [भा.९.४.२९] । अत्र सदश्शब्देन मेरुगतं ब्रह्मसदो विवक्षितम् । 'कथं बहुतिथे काले व्यतीते सूतनन्दन । न जरा रेवतीं प्राप रैवतं वा ककुद्मिनम् ।। मेरुं गतस्य वा तस्य संजाता सङ्गतिः कथं ।' इति पुराणवचनादिति ज्ञेयम् । युगोरुकालपर्ययं युगानां बहुकालविपर्ययं निवृत्तिं युगोरुकालस्यावृत्तिमिति वा ।।१६९-१७२।।

**भावचन्द्रिका–** ।। **तत्सदः** ।। ब्रह्मलोके 'पुत्रीवरं परिप्रष्टुं ब्रह्मलोकमपावृतम्' इति भागवते । 'अब्जयोनिं प्रष्टुं ब्रह्मलोकं जगाम' इति विष्णुपुराणे [४.१.६७]। मेरुस्थले न सदो भवेत् । तदुक्तं ब्रह्मवैवर्ते– ऋषयः– कथं बहुतिथे काले व्यतीतं सूतनन्दन । न जरा रैवतीं प्राप रैवतं वा ककुद्मिनम् ।। मेरुं गतस्य वा तस्य सञ्जाता सङ्गतिः कथम् ।। इति । तत्कथं युज्यते अपुनरावृत्तिस्थानात् तस्येति चेत् । उत्क्रान्तानां अपुनरावृत्त्यङ्गीकारात् ।।१६९।।

**चट्टि–** स रेवतपुत्रः ककुद्मी तदीयतो ब्रह्मसम्बन्धिनो वरात् ब्रह्मलोकगमनविषये ब्रह्मदत्तवरात् तस्य ब्रह्मणः, सदः सभां गतः प्राप्तः सन् । रेवतीमादाय इति शेषः । प्रगीतिकां छालिख्याख्यं गन्धर्वगानं निशम्य श्रुत्वा गतं युगानां उरुकालस्य पर्ययं पर्यायं अतिक्रमणमित्यर्थः । नाविदत् न ज्ञानवान् । तदुक्तम्- 'तस्य रेवतीनाम कन्याभवत् । स तामादाय कस्येयमर्हतीति भगवन्तमब्जयोनिं प्रष्टुं ब्रह्मलोकं जगाम । तावच्च ब्रह्मणोऽन्तिके हाहाहूहूसञ्ज्ञाभ्यां गन्धर्वाभ्यामतितानं नाम दिव्यं गान्धारं आगीयत ।' इत्यादि विष्णुपुराणे चतुर्थेऽशे [१अ.६६-६७] 'छालिख्यगान्धर्वमुदारकीर्तिः मेने किलैकं दिवसं सहस्रम् । चतुर्युगाणां नृप रैवत......।।' इति हरिवंशे ।।१६९।।

**नरानयोग्यगीतिका विमोहयेत् ततो नृपः ।**
**स मूढबुद्धिरन्ततोऽल्पकाल इत्यमन्यत ।।१७०।।**

**व्यासतीर्थीया–** कथं श्रवणतो गीतिका अमोहयदित्यत आह– **नरानिति** ।। अन्ततः उद्बोधान्ते ।।१७०-१७३।।

**वेदाङ्गतीर्थीया–** अयोग्यगीतिका नराणां श्रोतुमयोग्यगानः । ततः उद्बोध्य ।।१७१।।

**वरदराजीया**— तत्र कारणाह— **नरानिति** ।। अयोग्यगीतिका नरैः श्रोतुमयोग्यगीतिका स्वश्रवणमात्रेण नरान् विमोहयेत् मूर्च्छितान् कुर्यात् । यतः अतः सः नृपो रैवतः विमूढबुद्धिः अल्प एव अयं कालो गत इत्यमन्यत ।।१७०।।

**जनार्दनीया**— अयोग्यगीतिका मनुष्याणां श्रोतुमयोग्यगायनं नरान् विमोहयेत् यतस्ततः स नृपः ककुद्मी मूढबुद्धिः सन् मूर्च्छितचित्तः सन् अन्ततः उद्बोधनानन्तरं अल्पकालः अल्पकालो गतः इत्यमन्यत ज्ञातवान् ।।१७०।।

**भावचन्द्रिका**— ।। **गीतिकाम्** ।। हाहाहूहूकृतिरूपां गीतिकामिति । 'यतस्त्रिनवचतुर्युगविकल्पित' इति भागवते । 'साम्प्रतं भूतले वैवस्वते मनो अष्टाविंशतितममनोश्चतुर्युगमतीतप्रायं वर्तते । आसन्नो हि कलिः ।।' इति विष्णुपुराणे [४.१.७६-७७] ।।१७०।।

**चट्टि**— अयोग्यगीतिका मनुष्याणां श्रोतुमयोग्यगानं नरान् विमोहयेत् यतस्ततः स नृपः ककुद्मी मूढबुद्धिः सन् मूर्च्छितचित्तः सन् अन्ततः उद्बोधनानन्तरं अल्पकालः गतः इत्यमन्यत ज्ञातवान् ।।१७०।।

**स मूर्च्छितः प्रबोधितोऽब्जजेन तं त्वपृच्छत ।**
**सुतापतिं बलं च सोऽब्रवीद् युगात्यये बहौ ।।१७१।।**

**वेदाङ्गतीर्थीया**— तं सुतापतिं बहौ युगात्यये तमपृच्छत ।।१७१।।

**वरदराजीया**— एवं मूर्च्छितः अब्जजेन प्रबोधितः सञ्ज्ञां प्रापितस्सन् तमब्जजं प्रति सुताया योग्यं पतिमपृच्छत् पृष्टवान् । सोऽब्जजो बलभद्रं पतिं अब्रवीत् । बहौ युगात्यये सुताप्राप्त्यपेक्षया इत्यर्थः ।।१७१।।

**जनार्दनीया**— मूर्च्छितः स ककुद्मी बहौ युगात्यये युगातिक्रमणे सति अब्जजेन प्रबोधितः प्रबोधं प्रापितः सन् तं ब्रह्माणं सुतायाः स्वपुत्र्याः, पतिं 'मम सुतापतिः कः?' इति अपृच्छत् पप्रच्छ । स ब्रह्मा बलं बलभद्रं बलः ते सुता पतिरित्यब्रवीत् ।।१७१।।

**भारतश्री**— मूर्च्छितो देहभावरहितः ।।१७१।।

**चट्टि**— मूर्च्छितः स ककुद्मी बहौ युगात्यये युगातिक्रमणे सति अब्जजेन प्रबोधितः प्रबोधं प्रापितः सन् तं ब्रह्माणं सुतायाः पतिं 'मम सुतापतिः कः?' इति अपृच्छत् । स ब्रह्मा बलं बलभद्रं बलभद्रः ते सुतापतिरित्यब्रवीत् च ।।१७१।।

**स [1]रैवतो बलाय तां प्रदाय गन्धमादनम् ।**
**गतोऽत्र चीर्णसत्तपा अवाप केशवान्तिकम् ॥१७२॥**

**वेदाङ्गतीर्थीया–** रैवतः रेवतपुत्रः ककुद्मी ॥१७२-१७३॥

**वरदराजीया–** स रैवतो तां रेवतीं बलाय बलभद्राय प्रदाय दत्वा गन्धमादनपर्वतमावाप्य अत्र गन्धमादने पर्वते चीर्णं कृतं सत् समीचीनं तपो येन स तथोक्तः ॥१७२॥

**जनार्दनीया–** रैवतः रेवतपुत्रः ककुद्मी तां रेवतीं बलाय बलभद्राय प्रदाय, गन्धमादनं शैलं गतः प्राप्तः सन् अत्र शैले । चीर्णं सत्तपो येन स तथा । केशवान्तिकं वैकुण्ठं अवाप ॥१७२॥

**अतिविशद–** स रैवतो बलाय तां प्रदाय गन्धमादनं ययावित्यत्र रैवतः बलाय रेवतीं प्रदायेत्यनेन रैवतस्य रेवतीप्रदानं प्रतीयते । तदयुक्तम् । तस्य रामश्वशुरपितृत्वात् ।

... ... ... आनर्ताद्रैवतोऽभूत् । सोऽन्तःसमुद्रे नगरीं निर्माय कुशस्थलीम् ॥
आस्थितोऽभुङ्क्त विषयानानर्तादीन् अरिन्दमः । तस्य पुत्रशतं जज्ञे ककुद्मी ज्येष्ठमुत्तमम् ॥
ककुद्मी रेवतीं कन्यां स्वामादाय विभुं गतः । पुत्र्या वरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ॥

इत्यादिना नवमवाक्येन तथावगमात् । तथा 'वरात् तदीयतः प्रगीतिकां निशम्य नाविदद्गतं युगोरुकालपर्ययम्' इति बहुयुगपरिवर्तनं प्रतीयते । अत्र बहुशब्दस्य कुत्रावस्थानम् । तदपि न प्रतीयते । 'आनर्ताधिपतिः श्रीमान् रैवतो रेवतीं सुताम् । ब्रह्मणा चोदितः प्रादात् बलायेति पुरोदितम् ॥' इति दशम उक्तत्वेन दशमनवमयोर्विरोधाच्च । तस्मात्कथमेतदिति चेन्न । रेवतस्यापत्यं पुमान् रैवतमित्युपपत्तेः । यौगिकं नामैतत् । एतेन नवमदशमयोर्विरोधश्च परिहृतः । निर्णये दशमे च यौगिकनाम्नोक्तत्वात् । तथाच युगोरुकालपर्ययमित्यस्य सप्तविंशन्महायुगपर्यन्तमित्यर्थः । एवञ्च नानुपपत्तिः कुत्रापि ॥१७२॥

**चट्टि–** सः रैवतः रेवतपुत्रः ककुद्मी तां रेवतीं बलाय प्रदाय, गन्धमादनं शैलं गतः प्राप्तः सन् अत्र शैले । चीर्णं सत्तपो येन स तथा सन् केशवान्तिकं वैकुण्ठं अवाप ॥१७२॥

**बलोऽपि तां पुरातनप्रमाणसम्मितां विभुः ।**
**हलेन चाऽज्ञया समां चकार सत्यवाञ्छितः ॥१७३॥**

**वेदाङ्गतीर्थीया–** पुरातनप्रमाणसम्मितां पूर्वतनमनुष्यप्रमाणसम्मिताम् । अत्युच्चामिति यावत् । समां परिमाणतः आत्मनः समाम् ॥१७३-१७७॥

---

१. इक्ष्वाकुपुत्रः शर्यातिः । तस्य रोचमानः। रोचमानस्य पुत्रोभूद् रेवो रैवत एव च । ककुद्मी चापरं नाम ज्येष्ठः पुत्रशतस्य च ॥ मत्स्य.१२.२३ ।

**वरदराजीया–** पुरातनप्रमाणसम्मितां अतीतयुगवर्तिमनुष्यप्रमाणां अत्युच्चां रेवतीं हलेन स्वायुधेन आज्ञया ह्रस्वा भव इत्याज्ञया च समां स्वप्रमाणसम्मितां चकार । यतः सत्यसङ्कल्प इत्यर्थः ।।१७३।।

**अनन्तभट्टीया–** स्वमानोचितपरिमाणामित्यर्थः ।।१७३।।

**जनार्दनीया–** पुरातनानां पूर्वयुगस्थमनुष्याणां प्रमाणेन संमितां समानां तां रेवतीं हलेन लाङ्गलेन आत्मना स्वेन समां स्वसमामित्यर्थः । चकार । यतः सत्यवाञ्छितः सत्यकामः अत एवेत्यर्थः । 'स्वोच्चा भार्या न विवाह्या' इत्युक्तधर्मशास्त्रादिति भावः ।।१७३।।

**ताम्रपर्णीया–** आज्ञया कृष्णस्य । सत्यवाञ्छितत्वेऽप्ययं हेतुः ।।१७३।।

**भावचन्द्रिका–** पुरातनप्रमाणसंमितां तालप्रामाणामाज्ञाय ।।१७३।।

**चट्टि–** विभुः बलोऽपि पुरातनानां पूर्वयुगस्थमनुष्याणां, प्रमाणेन संमितां समानां तां रेवेतीं हलेन लाङ्गलेन आत्मना स्वेन समां स्वसमामित्यर्थः चकार । यतः सत्यवाञ्छितः सत्यकामः अत एवेत्यर्थः । 'स्वोच्चा भार्या न विवाह्या' इत्युक्तं धर्मशास्त्रे इति भावः ।।१७३।।

**तया रतः सुतावुभौ शठोल्मुकाभिधावधात् ।**
**पुराऽर्यमांशकौ सुरावुदारचेष्टितो बलः ।।१७४।।**

**व्यासतीर्थीया–** अर्यमा च अंशकश्चेत्यर्यमांशकौ ।।१७४-१७९।।

**मधुसूदनीया–** ।। **पुरार्यमांशकौ इति** ।। पुरा पूर्वजन्मनि अर्यमा चांशकश्चेति अर्यमांशकौ तदाख्यौ सुरौ । न चांशाख्यसुरो अप्रसिद्ध इति वाच्यम् । 'धातार्यमा च मित्रश्च वरुणांशो भगस्तथा । इन्द्रो विवस्वान् पूषा च सविता तथा । कथितो विष्णुरित्येष काश्यपेयो गणास्तथा ।।' इति हरिवंशोक्ते अंशाख्यसुरस्य सत्वात् । नत्वर्यमांशकाविति भावः ।।१७४-१८०।।

**वरदराजीया–** तया रेवत्या रतः रतिं कृत्वा शठोल्मुकनामानौ सुतावधात् उत्पादयामास । पुरा पूर्वजन्मनि अर्यम्णो देवतायाः स्वरूपांशकौ अत एव सुरौ । उदारं उत्कृष्टं चेष्टितं कर्म यस्य सः ।।१७४।।

**अनन्तभट्टीया–** अर्यमा च अंशकश्चेति द्वन्द्वः ।।१७४।।

**जनार्दनीया–** उदारचेष्टितः उत्कृष्टकर्मा बलः तया रेवत्या रतः रमन् सन् । शठश्च उल्मुखश्च इत्यभिधा ययोस्तौ तथा । उभौ सुतौ अधाज्जनयामास । तौ पूर्वं कावित्यत आह– **पुरेति** ।। पुरा अर्यमा च अंशकश्चेति द्वन्द्वः । अर्यमांशकनामानौ सुरौ देवौ आदित्यौ । आदित्याश्चोक्ता हरिवंशे–

'धातार्यमा च मित्रश्च वरुणांशो भगस्तथा । इन्द्रो विवस्वान् पूषा च त्वष्टा च सविता तथा ।। कथितो विष्णुरित्येष काश्यपेयो गणस्तथा । इत्येते द्वादशादित्या ज्वलन्तः सूर्यवर्चसः ।।' [भविष्यत्पर्वणि.६९.२१] ।।१७४।।

**ताम्रपर्णीया–** अर्यमा चांशकश्चेत्यर्यमांशकौ । 'अश्विनौ निर्ऋतिश्चैव कुबेरश्च दिगीश्वराः । अर्यमण्यंशादि चतृषु विशेषावेशसंयुताः ।।' इति बृहद्भाष्ये अंशनामकर्मादित्यस्योक्तेर्नाप्रसिद्धकल्पनेति ज्ञेयम् ।। ।।१७४-१७९।।

**अतिविशद–** पुरार्यमांशकौ सुरौ इत्यत्र अर्यमा पूर्वः अंशको अपर इति द्वयोः द्विसूर्यरूपत्वम् । नतु द्वयोरेकांशत्वम् । यथोक्तं हरिवंशे– 'धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा । इन्द्रो विवस्वान् पूषा च त्वष्टा च सविता तथा ।। कथितो विष्णुरित्येव... ।।' इति ।।१७४।।

**भारतश्री–** अर्यमांशकौ अर्यमा च अंशश्च । अंशो अंशको । अर्यमांशकौ आदित्यौ । तदुक्तं हरिवंशे- 'इन्द्रो विष्णुर्भगस्त्वष्टा वरुणोंऽशोऽर्यमा रविः। पूषा मित्रश्च वरदः मनुः पर्जन्य एव च ।। इत्येते द्वादशादित्याः... ।।' इति ।।१७५।।

**चट्टि–** उदारचेष्टितः उत्कृष्टकर्मा बलः तया रेवत्या रतः रमन् सन् । शठश्च उल्मुखश्च इत्यभिधा ययोस्तौ तथा । उभौ सुतौ अधाज्जनयामास । तौ पूर्वं कावित्यत आह– **पुरेति** ।। पुरा पूर्वजन्मनि अर्यमा च अंशकश्चेति द्वन्द्वः । अर्यमांशकनामानौ सुरौ देवौ आदित्यौ । आदित्याश्चोक्ता हरिवंशे– 'धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा । इन्द्रो विवस्वान् पूषा च त्वष्टा च सविता तथा ।। कथितो विष्णुरित्येष काश्यपेयो गणस्तथा । इत्येते द्वादशादित्या ज्वलन्तः सूर्यवर्चसः ।।' [भविष्यत्पर्वणि.६९.२१] ।।१७४।।

**जनार्दनश्च रुक्मिणीकरं शुभे दिनेऽग्रहीत् ।**
**महोत्सवस्तदाऽभवत् कुशस्थलीनिवासिनाम् ।।१७५।।**

**वरदराजीया–** एवं ज्येष्ठविवाहानन्तरं जनार्दनः कृष्णोऽपि । तदा करग्रहसमये ।।१७५।।

**जनार्दनीया–** रुक्मिण्याः करं अग्रहीत् । पाणिग्रहणकर्माकरोदित्यर्थः । तदा पाणिग्रहणकाले ।।१७५।।

**भावचन्द्रिका–** ।। **जनार्दनश्चेति** ।। राक्षसविवाहस्य कृतत्वात् पुनरुद्वाहे दोष इति चेन्न । अष्टौ विवाहाः । 'अलङ्कृत्य दद्यात् स ब्राह्मणः । यत् ऋत्विजे ददाति स देवः । गोमिथुनं दत्वा प्रयच्छत् स आर्षः । सहधर्मं युवां चरतुं इति दद्यात् स प्राजापत्यः । धनं गृहीत्वा दद्यात् स आसुरः । वधूवरयोः सङ्केतो गान्धर्वः । हत्वा भित्वा च शीर्षाणि रुदन्तीं रुदद्भ्यो वा हरेत् स राक्षसः । सुप्तां

प्रसुप्तां वा हरेत् स पैशाचः । पूर्वेषां चतुर्णां पृथक्त्वं उत्तरैश्चतुर्भिर्मिता भवति । यदुत्पन्नस्य वंशस्य राज्यमभिप्रेतं तस्या उत्तरचतुष्टयगतविवाहसम्भवे पुनर्ब्राह्मविवाहः कर्तव्यः' इत्यादिपर्वणि शाकुन्तलोपाख्यानोक्तेः पुनर्ब्राह्मविवाहो न दोष इति ज्ञेयम् ।।१७५।।

**चट्टि–** जनार्दनः श्रीकृष्णश्च रुक्मिण्याः करं शुभे दिने अग्रहीत् । पाणिग्रहणकर्माकरोदित्यर्थः । तदा पाणिग्रहणसमये कुशस्थलीनिवासिनां महोत्सवोऽभवत् ।।१७५।।

**चतुर्मुखेशपूर्वकाः सुरा वियत्यवस्थिताः ।**
**प्रतुष्टुवुर्जनार्दनं रमासमेतमव्ययम् ।।१७६।।**

**वरदराजीया–** वियति आकाशे । रमया रुक्मिण्या समेतम् ।।१७६।।

**जनार्दनीया–** वियत्याकाशे । रमया रुक्मिण्या समेतं प्रतुष्टुवुः ।।१७६।।

**चट्टि–** चतुर्मुखेशपूर्वकाः सुराः वियत्याकाशे अवस्थिताः सन्तः, रमया रुक्मिण्या समेतं अव्ययं नाशरहितं जनार्दनं श्रीकृष्णं प्रतुष्टुवुः ।।१७६।।

**मुनीन्द्रदेवगायकादयोऽपि यादवैः सह ।**
**विचेरुरुत्तमोत्सवे रमारमेशयोगिनि ।।१७७।।**

**वेदाङ्गतीर्थीया–** रमारमेशयोगिनि रमारमेशयोः योगः पाणिग्रहणसमावस्थानं [समावेशः] अस्मिन्नस्तीति रमारमेशयोगी तस्मिन् उत्तमोत्सवे ।।१७८-१८०।।

**वरदराजीया–** मुनीन्द्रा देवगायका गन्धर्वाश्च आदयो येषां ते तथा । रमारमेशयोः योगो विद्यते अस्मिन्निति तथा तस्मिन् ।।१७७।।

**अनन्तभट्टीया–** देवगायकाः गन्धर्वाः ।।१७७।।

**जनार्दनीया–** मुनीन्द्राः देवगायकाः गन्धर्वादयोऽपि सिद्धचारणादयोऽपि यादवैः सह । रमा च रमेशश्च तथा, तयोर्योगो विद्यते यस्मिन् तथा तस्मिन् । उत्तमोत्सवे विचेरुः ।।१७७।।

**चट्टि–** मुनीन्द्राः मुनिश्रेष्ठाः देवगायकाः गन्धर्वाः ते आदयो एषां ते सिद्धचारणादयो ते तथा । तेऽपि यादवैः सह । रमारमेशयोः योगः अस्मिन् अस्तीति रमारमेशयोगी तस्मिन् । उत्तमे उत्सवे विचेरुः ।।१७७।।

**सुरांशकाश्च ये नृपाः समाहुता महोत्सवे ।**
**सपाण्डवाः समाययुर्हरिं रमासमायुतम् ॥१७८॥**

**वरदराजीया–** महोत्सवे सुरांशकाः देवावताराः सपाण्डवाः पाण्डवैः सहिताः नृपाः समहुताः । रमया समायुतं हरिं समाययुः ॥१७८॥

**जनार्दनीया–** समाहुताः आकारिताः । रमया समायुतं हरिं समाययुः ॥१७८॥

**चट्टि–** सपाण्डवाः पाण्डवैः सहिताः सुरांशकाः ये नृपाः ते च समाहुताः आकारिताः सन्तः । रमया समायुतं हरिं समाययुः ॥१७८॥

**समस्तलोकसुन्दरौ युतौ रमारमेश्वरौ ।**
**समीक्ष्य मोदमाययुः समस्तलोकसज्जनाः ॥१७९॥**

**सत्याभिनवतीर्थीया–** तत्रैव समस्तलोकसुन्दरौ युतौ...इति श्लोकः । तस्यार्थः । समस्तलोकसज्जनाः समस्तलोकेषु विद्यमानाः सज्जनाः समस्तलोकसुन्दरौ समस्तलोकौ पूर्णप्रकाशौ सुन्दरौ अतिसुन्दरौ युतौ संयुक्तौ रमारमेश्वरौ समीक्ष्य मोदमाययुरिति ॥१७९॥

**वरदराजीया–** आगमनस्य फलमाह– **समस्तेति** ॥१७९॥

**जनार्दनीया–** लोकेषु प्राणिषु ये सज्जनाः, समस्ताश्च ते लोकसज्जनाश्च तथा । समीक्ष्य, मोदं आययुः प्रापुः ॥१७९॥

**चट्टि–** समस्तलोकेषु समस्तप्राणिषु ये सज्जनाः ते समस्तलोकसुन्दरौ रमारमेश्वरौ युतौ युक्तौ समीक्ष्य दृष्ट्वा मोदं हर्षं आययुः प्रापुः ॥१७९॥

**तया रमन् जनार्दनो वियोगशून्यया सदा ।**
**अधत्त पुत्रमुत्तमं मनोभवं पुरातनम् ॥१८०॥**

**व्यासतीर्थीया–** पुरातनं सुतम् ॥१८०-१८१॥

**वेदाङ्गतीर्थीया–** तया रमन् जनार्दनः पुरातनं मनोभवं पुत्रं तस्यां पुत्रं अधत्त ॥१८१॥

**वरदराजीया–** सदा वियोगशून्यया वियोगरहितया । पुरातनं मनोभवं कामम् ॥१८०॥

**अनन्तभट्टीया–** पुरातनं सुतमिति शेषः ॥१८०॥[1]

---

१. अनन्तभट्टीया– मनोभवमिति ॥ चतुर्मुखमनोभवं काममित्यर्थः ॥ जरासुतेन युद्धकाले आत्ममनोभव इति वा ॥ इति हो.पुस्तके अधिकः पाठः ।

**जनार्दनीया—** सदा वियोगशून्यया वियोगरहितया तया रुक्मिण्या । पुरातनं पूर्वपुत्रं मनोभवं कामं रुक्मिण्यां उत्तमं पुत्रं अधत्त उत्पादयामास ।।१८०।।

**ताम्रपर्णीया—** चतुर्मुखमनोभवं काममित्यर्थः । जरासुतेन युद्धकाले आत्ममनोभवमिति वा पुरातनं सुतम् ।।१८०-१८१।।

**चट्टि—** जनार्दनः श्रीकृष्णः सदा वियोगशून्यया तया रुक्मिण्या रमन् पुरातनं पूर्वपुत्रं मनोभवं कामं रुक्मिण्यां उत्तमं पुत्रं अधत्त उत्पादयामास ।।१८०।।

**चतुस्तनोर्हरेः प्रभोस्तृतीयरूपसंयुतः ।**
**ततस्तदाह्वयोऽभवत् स रुक्मिणीसुतो बली ।।१८१।।**

**वेदाङ्गतीर्थीया—** वासुदेवादिचतुस्तनोः तृतीयरूपसंयुतः प्रद्युम्नाख्यांशेन युक्तः ।।१८१।।

**वरदराजीया—** चतुस्तनोः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यचतुरूपस्य हरेः तृतीयेन प्रद्युम्नाख्यरूपेण संयुतः । ततः तेन युक्तत्वात् तदाह्वयः प्रद्युम्ननामा अत एव बली च बभूवेत्यर्थः ।।१८१।।

**अनन्तभट्टीया—** तृतीयरूपं प्रद्युम्नाख्यं रूपम् ।।१८१।।

**जनार्दनीया—** बली स रुक्मिणीसुतः चतुस्तनोः वासुदेवादिचतुःस्वरूपकस्य प्रभोर्हरेः तृतीयरूपेण प्रद्युम्नाख्यरूपेण संयुतः । प्रद्युम्नाविष्ट इत्यर्थः । यतः कारणात्ततः तस्य प्रद्युम्नस्य आह्वयं नाम यस्यासौ तत्तथा अभवत् ।।१८१।।

**भारतश्री—** वासुदेवादिषु तृतीयः प्रद्युम्नः ।।१८१-१८७।।

**चट्टि—** बली स रुक्मिणीसुतः चतुस्तनोः वासुदेवादिचतुःस्वरूपकस्य प्रभोर्हरेः तृतीयरूपेण प्रद्युम्नाख्यरूपेण संयुतः । प्रद्युम्नाविष्ट इत्यर्थः । यतः कारणात्ततः तस्य प्रद्युम्नस्य आह्वयं नाम यस्यासौ तथा अभवत् ।।१८१।।

**पुरैव मृत्यवेऽवदत् तमेव शम्बरस्य ह ।**
**प्रजातमब्जजाङ्गजस्तवान्तकोऽयमित्यपि ।।१८२।।**

**व्यासतीर्थीया—** पुरैव प्रद्युम्नोत्पत्तेः पूर्वमेव प्रजातमवदत् ।।१८२-१८५।।

**वेदाङ्गतीर्थीया—** अब्जजाङ्गजः प्रद्युम्नोत्पत्तेः पुरैव प्रद्युम्नं शम्बरस्य मृत्यवे मरणाय भविष्यतीति अवदत् । कृष्णपुत्रः प्रद्युम्ननामा भविष्यति स त्वां हनिष्यतीति शम्बरमवददिति भावः । प्रजातं तं प्रद्युम्नं तव अन्तकः पूर्वं मयोक्तः तव मृत्युरयं श्रीकृष्णपुत्रो जात इत्यप्यवदत् ।।१८२-१८४।।

**मधुसूदनीया–** ।। **पुरैवेति** ।। अब्जजाङ्कजो नारदः पुरैव प्रद्युम्नोत्पत्तेः पूर्वमेव तं प्रद्युम्नमेव शम्बरस्य मृत्यवे मरणाय हेतुः उत्पन्न इत्यवदत् । मम मृत्युः केन स्यादिति पृष्टो नारदः प्रद्युम्नाख्यः कृष्णपुत्रो भविष्यति । स त्वां हनिष्यतीत्यवददिति भावः । प्रजातं तं प्रद्युम्नं तव भवतः अयमन्तकः मृतिहेतुरुत्पन्न इत्यवदत् । प्रद्युम्नोत्पत्त्यनन्तरं नारदः शम्बरसमीपमागत्य मया यः पूर्वं तवान्तक उक्तः स इदानीमुत्पन्न इत्यप्याहेत्यर्थः ।।१८२।।

**वरदराजीया–** पुरैव प्रद्युम्नोत्पत्तेः पूर्वमेव अब्जजाङ्कजः नारदः तमेव जनिष्यमाणं प्रद्युम्नं शम्बरस्य मृत्यवे मरणार्थं मरणहेतुमवददित्यर्थः । कृष्णस्य भविता पुत्रस्तव मृत्युरिति पूर्वमेव अवददिति भावः । प्रजातमुत्पन्नमपि तं यः पूर्वं मयोक्तः सोऽयं तवान्तको जात इत्यवददित्यर्थः ।।१८२।।

**अनन्तभट्टीया–** पुरा प्रद्युम्नोत्पत्तेः प्राक् कृष्णस्य भविष्यत्पुत्रः तवान्तकः इत्यवदत् । तं प्रजातं च तवान्तकोऽयं जात इत्यप्यवदत् । यद्वा पुरैवेति शम्बरस्य मृत्यवे मरणायैव नारदस्तं प्रजातमेव प्रजातमात्रं शिशुमिति यावत् । अयं तव पुरा पूर्वजन्मनि अन्तक एवेत्यर्थः । पुरा अन्तकं पूर्वस्मिन् जन्मनि अस्मिन् जन्मनीत्यर्थो वा ।।१८२।।[1]

**जनार्दनीया–** अब्जजस्य ब्रह्मणः अङ्कजः ऊरुजो नारदः पुरैव प्रद्युम्नोत्पत्तेः प्राक् यं प्रद्युम्नं शम्बरस्य मृत्यवे अवदत् । कृष्णात् रुक्मिण्यां प्रद्युम्ननामा यः पुत्रः भविष्यति स तव मृत्युरिति शम्बरं प्रत्यवदिति भावः । अपि उत्पत्त्यनन्तरमपि प्रजातं उत्पन्नं तमेव पूर्वोक्तं प्रद्युम्नमेव अयं रुक्मिण्यां उत्पन्नोऽयं प्रद्युम्नः तव मृत्युरिति पुनरवददिति पद्यस्थपदान्यावृत्य कानिचित् पदान्याहार्य योज्यम् ।।

**ताम्रपर्णीया–** ।। **पुरैवेति** ।। शम्बरस्य मृत्यवे मरणायैव नारदः प्रजातमेव प्रजातमात्रं शिशुमिति यावत् । अयं तव पुरा पूर्वजन्मन्यन्तक एवेत्यवददित्यर्थः । नारदः शम्बरस्य मृत्यवे प्रजातं तं शिशुं उत्पत्तेः पुरैव तवान्तकोऽयं जनिष्यमाणः इत्यवददित्यर्थः ।।१८२-२००।।

**चट्टि–** अब्जजस्य ब्रह्मणः अङ्कजः ऊरुजो नारदः पुरैव प्रद्युम्नोत्पत्तेः पूर्वमेव यं प्रद्युम्नं शम्बरस्य मृत्यवे मरणाय हेतुमवदत् । मम मृत्युः केन स्यादिति शम्बरेण पृष्टो नारदः प्रद्युम्नाख्यः श्रीकृष्णपुत्रो भविष्यति स त्वां हनिष्यति इत्यवदिति भावः । प्रजातं तं प्रद्युम्नमेव तव भवतः अयं अन्तको मृतिहेतुरुत्पन्नः इत्यवदत् । प्रद्युम्नोत्पत्त्यनन्तरमपि नारदः शम्बरसमीपमागत्य मया यः पूर्वं तवान्तक उक्तः सः इदानीं उत्पन्नः इत्याहेत्यर्थः ।।१८२।।

---

१. अनन्तभट्टीया– रैवतेति ।। शम्बरमृत्यवे मरणायैव नारदः तं प्रजातमेव प्रजातमात्रं शिशुमिति यावत् । अयं तव पुरा पूर्वजन्मन्यन्तक एवेत्यवददित्यर्थः । पुराप्यन्तकः पूर्वजन्मनि अस्मिन् जन्मनीति वा । केचित्तु पुरैव मनोजोत्पत्तेः प्रागेव कृष्णस्य भविष्यपुत्रस्तवान्तक इत्यवदत् । तं प्रजातं च तवान्तको जात इत्यवददित्यर्थमाहुः ।। इति हो.पुस्तके अधिकः पाठः ।

**स मायया हरेः सुतं प्रगृह्य सूतिकागृहात् ।**
**अवाक्षिपन्महोदधावुपेक्षितोऽरिपाणिना[1] ॥१८३॥**

**मधुसूदनीया–** ॥ **सूतिकागृहादिति** ॥ 'तं सप्तरात्रं सम्पूर्णे निशीथे सूतिकागृहात् । जहार कृष्णस्य सुतं शिशुं वै कालशम्वरः ॥' इति हरिवंशे [२.१०४.३] । 'षष्ठेऽह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात् । ममैष हन्तेति मुने हृतवान् कालशम्बरः ॥' इति विष्णुपुराणेऽपि [५.२७.३] ॥ ॥१८३-१८५॥

**वरदराजीया–** स शम्वरः मायया ऐन्द्रजालिकया सर्वान् विमोह्येति शेषः । हरेः सुतं प्रद्युम्नं महोदधौ अवाक्षिपत् । अरिपाणिना चक्रपाणिना कृष्णेनोपेक्षितः ॥१८३॥

**जनार्दनीया–** शम्बरः सूतिकागृहात् प्रसूतिकागृहात् । प्रगृह्य आदाय, महोदधौ समुद्रे । कथम्भूतः ? अरिपाणिना चक्रपाणिना कृष्णेन उपेक्षितः ॥१८३॥

**भावचन्द्रिका–** ॥ **अवाक्षिपत्** ॥ 'षष्ठेऽह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात्' इति विष्णुपुराणे [५.२७.३] ॥१८४॥

**चट्टि–** सः शम्बरासुरः मायया सूतिकागृहात् हरेः सुतं प्रगृह्य आदाय, अरिपाणिना चक्रपाणिना श्रीकृष्णेन उपेक्षितः सन् महोदधौ समुद्रे अवाक्षिपतत् क्षिप्तवान् । 'तं सप्तरात्रे सम्पूर्णे निशीथे सूतिकागृहात् । जहार कृष्णस्य सुतं शिशुं वै कालशम्बरः ॥' इति हरिवंशे [विष्णुपर्वणि.१०४अ.३]। 'षष्ठेऽह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात् । ममैष हन्तेति मुने हृतवान् कालशम्बरः ॥' इति विष्णुपुराणेऽपि [५अं.२७अ.३] ॥१८३॥

**तमग्रसज्जलेचरः स दाशहस्तमागतः ।**
**कुमारमस्य तूदरे निरीक्ष्य शम्बरे ददुः ॥१८४॥**

**वेदाङ्गतीर्थीया–** शम्बरे ददुर्दाशाः ॥१८४॥

**वादिराजतीर्थीया–** कुमारमस्य तूदरे निरीक्ष्येत्यत्र निरीक्ष्य मृतिकाले विवृतवदनद्वारा निरीक्ष्य ॥१८४-१९५॥

---

१. 'वधार्थं शम्बरस्य त्वं ह्रियमाणो ह्युपेक्षितः । केशवेन महाबाहो देवकार्यार्थसिद्धये ॥ यैषा मायावती नाम भार्या वै शम्बरस्य तु । रतिं तां विद्धि कल्याणीं तव भार्यां पुरातनीम् ॥ इति हरिवंशे.२.१०६.४९-५० ।

**वरदराजीया–** तं प्रद्युम्नं जलेचरो मत्स्यः । सः जलेचरः दाशहस्तं धीवरवशमागतः । अस्य मत्स्यस्य उदरे । शम्बरे ददुः । दाशाः मत्स्योदरे कुमारोऽस्तीत्यनुमाय सकुमारं मत्स्यं शम्बराय समर्पयन्निति भावः ।।१८४।।

**जनार्दनीया–** जलेचरः तं प्रद्युम्नं अग्रसत् गिलितवान् । स मत्स्यः दाशानां मत्स्यघातिनां हस्तमागतः प्राप्तः । अस्य मत्स्यस्य उदरे कुमारं निरीक्ष्य शम्बरे शम्बरवशे मत्स्यं ददुः । दाशा इति शेषः ।।१८४।।

**चट्टि–** जलेचरो मत्स्यः तं प्रद्युम्नं अग्रसत् गिलितवान् । स मत्स्यः दाशानां मत्स्यघातिनां, हस्तमागतः प्राप्तः । दाशा इति शेषः । अस्य मत्स्यस्य उदरे कुमारं निरीक्ष्य शम्बरे शम्बरवशे ददुः ।।

**विपाट्य मत्स्यकोदरं स शम्बरः कुमारकम् ।**
**न्यवेदयन् मनोभवप्रियाकरे सुरूपिणम् ।।१८५।।**

**वरदराजीया–** स शम्बरः मत्स्यकोदरं विपाट्य विदार्य मनोभवस्य कामस्य प्रियायाः रत्याः करे न्यवेदयत् दत्तवान् ।।१८५।।

**अनन्तभट्टीया–** ।। **मनोभवप्रियाकरेति** ।। मनोभवत्वं चतुर्मुखमनोभवत्वम् । जरासुतेन युद्धसमये कृष्णमनोभवत्वं वा ज्ञातव्यम् ।।१८६।।

**जनार्दनीया–** विपाट्य विदार्य, मनोभवस्य कामस्य प्रियायाः दयितायाः करे कुमारं न्यवेदयत् ददौ ।।१८५।।

**भावचन्द्रिका–** ।। **सुरूपिणमिति** ।। सुरूपी पोषणीय इति मत्वा ददाविति भावः ।।१८६।।

**चट्टि–** सः शम्बरं मत्स्यकोदरं विपाट्य विदार्य, सुरूपिणं कुमारकं मनोभवस्य कामस्य प्रियायाः दयितायाः करे न्यवेदयत् ।।१८५।।

**[१]अनङ्गतामुपागते पुरा हरेण साऽङ्गजे ।**
**वशं विरिञ्चिशापतो [२]जगाम शम्बरस्य हि ।।१८६।।**

---

१. 'कुरु सृष्टिं विचित्राञ्च कन्दर्प मम शासनात् । इत्युक्तो ब्रह्मणा देवि जगामादर्शनं स्मरः ।। क्रुद्धेन ब्रह्मणा शप्तो विनाशं यास्यसि ध्रुवम् । मद्वचो न कृतं यस्माद्भवनेत्रोद्भवाग्निना ।।' इति स्कान्दे [आवन्त्यखण्ड.२खं.१३अ.७-९] कामस्य अनङ्गत्वे ब्रह्मशापमप्याह मत्स्यपुराणम् । 'तथापि लज्जावनतः प्रजापतिरभूत् पुरा । स्वसुतोपगमाद् ब्रह्मा शशाप कुसुमायुधम् ।। यस्मान्ममापि भवता मनः सङ्क्षोभितं शरैः । तस्मात् त्वद्देहमचिराद् रुद्रो भस्मीकरिष्यति ।।'

**व्यासतीर्थीया–** मनोभवप्रिया कुतः शम्बरवशं जगामेत्यत आह– **अनङ्गतामिति** ।।१८६।।

**मधुसूदनीया–** ।। **अनङ्गतामुपगत इति** ।। ननु हरेण मन्मथस्याऽनङ्गत्वे प्रापिते जीवस्य देहमन्तरेणाऽवस्थानायोगात् स कुत्रावस्थित इति चेत् । सनत्कुमारदेहे अवस्थितः । 'सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम्' इति हरिवंशे । 'सनत्कुमारं प्रद्युम्नं विद्धि राजन् महौजसम्' इत्यादिपर्वणि [६८.१५२] च सनत्कुमारे लयस्य सनत्कुमारादुत्पत्तेश्च कथनात् तस्मिन् प्रवेशावगमात् । अत एवाग्रे 'चतुर्मुखांशसयुतं कुमारमेव षण्मुखम्' इति षण्मुखस्यापि सनत्कुमारादेव उत्पत्तिकथनात् मन्मथस्य देहनाशाऽनन्तरं तत्र प्रवेश इति मन्तव्यम् ।।१८६।।

**वरदराजीया–** ननु कामस्य भार्या रतिः कथमत्र स्थिता इत्यत आह– **अनङ्गतामित्यादिना** ।। पुरा हरेण रुद्रेण अङ्गजे कामे अनङ्गतां अङ्गरहिततां उपागते प्रापिते, भस्मसात्कृत इति यावत् । विरिञ्चस्य शापतः शम्बरस्य वशं जगामेति सम्बन्धः ।।१८६।।

**जनार्दनीया–** ननु कामभार्याया शम्बरगृहे वासः किमर्थमभूदित्यतस्तत्कारणमाह– **अनङ्गतामिति** ।। पुरा हरेण अङ्गजे कामे अनङ्गतां देहाभावत्वं उपागते सति सा तद्भार्या रतिः विरिञ्चिशापतः शम्बरस्य वशं जगाम । हि यस्मात् तस्मादिति सम्बन्धः ।।१८६।।

**चट्टि–** ननु कामभार्या शम्बरगेहे किमर्थमास्थितेत्यतस्तत्कारणमाह– **अनङ्गतामिति** ।। पुरा हरेण अङ्गजे कामे अनङ्गतां देहाभाववत्वं उपागते सति सा तद्भार्या रतिः विरिञ्चिशापतः शम्बरस्य वशं जगाम । हि यस्मात् तस्मादिति सम्बन्धः ।।१८६।।

**पुरा हि पञ्चभर्तृकां निशम्य कञ्जोदिताम् ।**
**जहास पार्षतात्मजां शशाप तां ततस्त्वजः ।।१८७।।**

**व्यासतीर्थीया–** विरिञ्चिशापश्च कुतो जात इत्यत आह– **पुरा हीति** ।।१८७-१८८।।

**वरदराजीया–** ननु ब्रह्मणा किमर्थं शप्तेत्यत आह– **पुरा हीति** ।। पुरा पार्षतात्मजां द्रौपदीं पञ्चभर्तृकां कञ्जेनोदितां ईरितां श्रुत्वा जहास । अतः कारणात् शशापेति सम्बन्धः ।।१८७।।

---

...तेन प्रार्थितो ब्रह्मा तस्मै श्रीकृष्णाद् पुनर्जन्म लप्स्यसि इति अनुग्रहं चकार ।। [मत्स्य.४.११-१८] 'भैष्म्यां कृष्णाद् महाविष्णोः प्रद्युम्नाख्यो भविष्यति । वसिष्यसि त्वं च शापात् ब्रह्मणः शम्बरालये ।।' वैशाखमाहात्म्य ९.१३ इति रतिं प्रति अशरीरवचनम् ।

२. रत्या शम्बरालयगमनं उक्तं स्कान्दे माहेश्वर.२१.१२५ ।

**भावविवृतिः**– पुरा हि पञ्चभर्तृकां निशम्य कञ्जजोदिताम् इत्यत्र पुरा इन्द्रसेनया रुद्रं प्रति प्रार्थनासमये वा । अजोदितां तेन तथास्त्वित्यङ्गीकृतां विष्णुरुद्रवरात् पञ्चभर्तृकां द्रौपदीं निशम्येत्यर्थः । ब्रह्मणा शापप्रदानसमये पतियोगो भविष्यतीत्यनुक्ता । अत एव हिशब्दः ।।१८७-१९३।।

**जनार्दनीया**– विरिञ्चः किमर्थमशपदित्यत आह– **पुरेति** ।। पुरा कञ्जजेन ब्रह्मणा उदितां पञ्चभर्तृकां पञ्चभर्तृवर्तीं पार्षतात्मजां द्रौपदीं निशम्य श्रुत्वा रतिः जहास । यतः अब्जजो ब्रह्मा तां रतिं असुरेण दूषिता भवेति शशाप ।।१८७।।

**चट्टि**– विरिञ्चः रतिं किमर्थमशपदित्यत आह– **पुरेति** ।। पुरा कञ्जजेन ब्रह्मणा उदितां पञ्चभर्तृकां पञ्चभर्तृमतीं पार्षतात्मजां द्रौपदीं निशम्य श्रुत्वा जहास । यतः ततो अजः ब्रह्मा तां रतिं असुरेण दूषिता भवेति शशाप ।।१८७।।

**भवासुरेण दूषितेति सा ततो हि मायया ।**
**पिधाय तां निजां तनुं जगाम चान्ययाऽसुरम् ।।१८८।।**

**वेदाङ्गतीर्थीया**– असुरेण दूषिता भव इति विरिञ्चशापातः । [ततः] शापात् अन्यया तन्वा ।।१८८।।

**मधुसूदनीया**– ।। **पिधाय तां निजां तनुमिति** ।। अन्यथा च रूपान्तरेणैव 'मायां शरीरजां तस्य मोहनार्थं दुरात्मनः । रतेरुत्पादनार्थाय प्रेषयत्यनिशं तदा ।।' इति हरिवंशे [२.१०६.५१-५२]। 'शम्बरं मोहयामास मायारूपेण रूपिणी । विहाराद्युपभोगेषु रूपं मायामयं शुभम् । दर्शयामास...।।' इत्यादि विष्णुपुराणे च [५.२८.२८-२९] ।।१८८-१८९।।

**वरदराजीया**– शापप्रकारमाह– **भवेति** ।। इति शशापेति सम्बन्धः । ननु देवतायाः कथमसुरेण योग इत्यत आह– **सेत्यादिना** ।। ततः शापात् मायया वैष्णव्या निजां तां देवतातनुं पिधाय आच्छाद्य अन्यया निर्मितया असुरं शम्बरं प्रति जगाम ।।१८८।।

**जनार्दनीया**– ततः शापप्राप्त्यनन्तरं सा रतिः मायया निजां स्वसम्बन्धिनीं तनुं देवतादेहं पिधाय आच्छाद्य, अन्यया इच्छया कल्पितया असुरं जगाम ।।१८८।।

**भारतश्री**– अन्यया तन्वा ।।१८८।।

**चट्टि**– सा रतिः ततः ब्रह्मशापादसुरगृहे स्थितापि निजस्वरूपतः असुरं न गच्छति स्म । किन्तु सा रतिः मायया विद्यासामर्थ्येन तां निजां तनुं पिधाय अन्यया कल्पितया असुरं जगाम इति योजना । 'मायां शरीरजां तस्य मोहनार्थं दुरात्मनः । रतेरुत्पादनार्थाय प्रेषयत्यनिशं तदा ।।' इति हरिवंशे

[२.१०६.५१-५२]। 'शम्वरं मोहयामास मायारूपेण रूपिणी । विहाराद्युपभोगेषु रूपं मायामयं शुभम् ।। दर्शयामास... ।' इत्यादि विष्णुपुराणे च [५.२८.२८-२९]। सा रतिः निजं पतिं प्रद्युम्नं समीक्ष्य हर्षिता सन्तोषयुक्ता अभूदिति शेषः ।।१८८।।

**गृहेऽपि साऽऽसुरे स्थिता [१]निजस्वरूपतोऽसुरम् ।**
**न गच्छति स्म सा पतिं निजं समीक्ष्य हर्षिता ।।१८९।।**

**व्यासतीर्थीया–** निजरूपेणासुरं गच्छति किमित्यत उक्तं विवृण्वन्नाह– **गृहेऽपीति** ।।१८९-१९४।।

**वेदाङ्गतीर्थीया–** आसुरे गृहे कुमारकं कुमाररूपं पतिं समीक्ष्य ।।१८९।।

**वरदराजीया–** उक्तमेवार्थं द्रढयति– **गृह इति** ।। आसुरे असुरसम्वन्धिनि गृहे स्थितापि इति सम्वन्धः । निजस्वरूपतो देवतास्वरूपेण असुरं न गच्छति स्म । तया देवताशरीरेण अन्यगात्वं न प्राप्तमिति भावः । निजं पतिं प्रद्युम्नम् ।।१८९।।

**अनन्तभट्टीया–** ।। **गृहेऽपीति** ।। सा रतिः आसुरे गृहे विद्यमाना निजस्वरूपेण असुरं न गच्छति । किन्तु जीवसहितं स्वसदृशं देहं स्वमायया सृष्ट्वा तं प्रेषयति । यथोक्तं हरिवंशे- प्रद्युम्नं प्रति नारदवाक्यम्– 'एषा मायावती नाम भार्या वै शम्बरस्य तु । रतिं तां विद्धि कल्याणीं तव भार्यां पुरातनीम् ।। तव... पि परां शम्बरस्य गृहेऽवसत् । मायां शरीरजां न्यस्य मोहनार्थं दुरात्मनः ।। रतेरुत्पादनार्थाय प्रेषयत्यनिशं रतिः...।।' नच ब्रह्मशापानर्थक्यम् । तस्य असुरगृहवासतत्सम्भाषणादि-विषयत्वात् ।।१८९।।

**जनार्दनीया–** उक्तमेवार्थं द्रढयति– **गृह इति** ।। सा रतिः अपि यद्यपि असुरे शंवरसम्वन्धिनि गृहे स्थिता तथापि निजस्वरूपतः देवतास्वरूपेण न गच्छति स्म । तया देवताशरीरेण अन्यगात्वं न प्राप्तमिति भावः । सा रतिः निजं पतिं प्रद्युम्नं समीक्ष्य हर्षिता सन्तोषयुक्ता सती ।।१८९।।

**भारतश्री–** सा कुत्र स्थिता इत्यत आह– **गृहेऽपीति** ।। निजस्वरूपतः आसुरे गृहे स्थिता तथापि तेन निजस्वरूपेण असुरं न गच्छति स्म । 'शम्बरेण दूषिता भव' इत्येव शशाप अतः शम्बरगृहे साऽसीत् ।।१८९।।

---

१. 'कामपत्नी न कान्तैषा शम्बरस्य रतिप्रिया । मायारूपेण तं दैत्यं मोहयत्यसकृच्छुभा ।। न चैषा तस्य कौमारे वशे तिष्ठति शोभना । आत्ममायामयं कृत्वा रूपं शम्बरमाविशत् ।।' विष्णुपर्व.१०८.२६-२७ रुक्मिणीं प्रति नारदवचनं ब्रह्मपुराणे.९१.३७-३९ 'इयं मायावती भार्या तनयस्यास्य ते सती । शम्बरस्य न भार्येयं श्रूयतामत्र कारणम् ।। मन्मथे तु गते नाशं तदुद्भवपरायणा । शम्बरं मोहयामास मायारूपेण रुक्मिणि ।। विवाहाद्युपभोगेषु रूपं मायामयं शुभम् । दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा ।।'

**रसायनैः कुमारकं व्यवर्द्धयद् रतिः पतिम् ।**
**स पूर्णयौवनोऽभवच्चतुर्भिरेव वत्सरैः ॥१९०॥**

**वेदाङ्गतीर्थीया–** रसायनैः शरीरधातुपुष्टिकरैः आज्यादिभिर्व्यवर्धयत् ॥१९०॥

**मधुसूदनीया–** ॥ **रसायनैरिति** ॥ ननु स्तन्यपानमाकारयित्वा रसायनैः किमर्थं अवर्धयत् इत्यत उक्तम्– **पतिरिति** ॥ भर्तुः स्तनदानेन पोषणमयुक्तमिति रसायनैरवर्धयदिति भावः । तथाचोक्तम्– 'भर्तुर्भार्या त्वहं भूत्वा वक्ष्ये वा पुत्र इत्युत । एवं सञ्चिन्त्य मनसा धात्र्यास्तं सा समर्पयत् ॥ रसायनप्रयोगैश्च शीघ्रमेव व्यवर्धयत ॥' इति हरिवंशे [२.१०५.१२-१३] ॥१९०-२०३॥

**वरदराजीया–** रसायनैः शरीराभिवृद्धिहेतुभूतैः ॥१९०॥

**भावचन्द्रिका–** व्यवर्धयत् नारदेन ज्ञात्वा । 'कौतुकाविष्टां तन्वीं प्राहाथ नारदः' इति विष्णुपुराणे [५.२७.९] ॥१९०॥

**जनार्दनीया–** रसायनैः क्षीरघृताद्यैः कुमारकं कुमारस्वरूपं पतिं व्यवर्धयत् । कुमारकं स्कन्धस्वरुपं पतिं वा ॥१९०॥

**चट्टि–** रतिः रसायनैः शरीराभिवृद्धिहेतुभूतैः क्षीरघृताद्यैः कुमारकं कुमाररूपं स्कन्दस्वरूपमित्यर्थः । पतिं व्यवर्धयत् इत्यन्वयः । ननु स्तन्यपानमकारयित्वा रसायनैः किमर्थमवर्धयदित्यत उक्तम्– **पतिमिति** ॥ भर्तुस्स्तनदानेन तोषणमयुक्तमिति रसायनैः अवर्धयदिति भावः । तथाचोक्तम्– 'भर्तुर्भार्या त्वहं भूत्वा वक्ष्ये वा पुत्र इत्युत । एवं सञ्चिन्त्य मानसा धात्र्यास्तं सा समर्पयत् ॥ रसायनप्रयोगैश्च पूर्वमेवान्ववर्धयत् ॥' इति हरिवंशे [२प.१०५अ.१२-१३]। सः प्रद्युम्नः चतुर्भिः वत्सरैरेव पूर्णयौवनं यस्य सः अभवत् ॥१९०॥

**पतिं सुपूर्णयौवनं निरीक्ष्य तां विषज्जतीम् ।**
**उवाच कार्ष्णिरम्ब ते कुचेष्टितं कथं न्विति ॥१९१॥**

**वरदराजीया–** विषज्जतीं भार्यावच्चेष्टमानां तां रतिम् । कुचेष्टितं लज्जाविलासादिरूपम् ॥१९१॥

**अनन्तभट्टीया–** विषज्जतीं इच्छन्तीं भार्येव चेष्टमानाम् ॥१९१॥

**जनार्दनीया–** कार्ष्णिः कृष्णपुत्रः प्रद्युम्नः विषज्जतीं विलज्जतीं भार्यावद्विकारवतीं रतिं प्रत्युवाच । किमिति ? हे अम्ब मातः ते तव कुचेष्टितं लज्जादिकुत्सिताचरणं कथम् ? किमर्थमित्युवाचेति सम्बन्धः ॥१९१॥

**चट्टि–** सुपूर्णयौवनं पतिं निरीक्ष्य विषज्जतीं भार्यावद्विकारवतीं तां रतिं कार्ष्णिः श्रीकृष्णपुत्रः प्रद्युम्नः उवाच । किमिति ? हे अम्ब मातः ते तव कुचेष्टितं लज्जादिकुत्सिताचरणं कथम् ? किमर्थमित्युवाचेति पूर्वेण सम्बन्धः ।।१९१।।

**जगाद साऽखिलं पतौ [१]तदस्य जन्म चाऽगतिम् ।**
**ततोऽग्रहीत् स तां प्रियां रतिं रमापतेः सुतः ।।१९२।।**

**वेदाङ्गतीर्थीया–** तदखिलं स्वागमनादिकं अस्य जन्म आगतिं च उवाच ।।१९२।।

**वरदराजीया–** पतौ पत्ये । अखिलमित्युक्तं विवृणोति– **तदस्येति** ।। अस्य प्रद्युम्नस्य तत् जन्म आगतिं आगमनश्च । तां रतिं प्रियामग्रहीत् भार्यात्वेन स्वीचकार ।।१९२।।

**अनन्तभट्टीया–** तदखिलम् । सः अङ्गजः ।।१९२।।

**जनार्दनीया–** सा रतिः पतौ पत्ये स्वागमनकारणं अस्य प्रद्युम्नस्य जन्म कृष्णाज्जननं आगतिं अत्रागमनं चेत्यखिलं जगाद । अग्रहीत् मातृबुद्धिं विहाय भार्यात्वेनाङ्गीचकार ।।१९२।।

**चट्टि–** सा रतिः तदा पतौ पत्यौ स्वागमनकारणं अस्य प्रद्युम्नस्य जन्म कृष्णाज्जन्म आगतिं अत्रागमनम् चेत्यखिलं जगाद । ततो अनन्तरं रमापतेः श्रीकृष्णस्य सुतः प्रद्युम्नः तां रतिं प्रियां अग्रहीत् तस्यां मातृबुद्धिं विहाय भार्यात्वेनाङ्गीचकार ।।१९२।।

**ददौ च मन्त्रमुत्तमं समस्तमायिनाशकम् ।**
**भृगूत्थरामदैवतं रतिर्हरेः सुताय सा ।।१९३।।**

**वरदराजीया–** समस्तानां मायिनां नाशकम् । भृगूत्थरामदैवतं परशुरामदैवताकं मनुं मन्त्रम् ।।१९३।।

**भावविवृति–** ददौ च मन्त्रमुत्तमम् इत्यत्र मन्त्रस्याभिभवसम्भवात् स्मारयामासेति वक्तव्यम् । 'गुणास्तु कालात् पितृमातृदोषात् स्वकर्मतो वाऽभिभवं प्रयान्ति' इत्युक्तेः । पत्न्या भर्तुरुपदेशायोगात् पत्रिकायां लिखित्वा ददाविति वा ।।१९३-२०५।।

**जनार्दनीया–** सा रतिः हरेः सुताय भृगूत्थरामदैवतं परशुरामदेवताकं मन्त्रम् ।।१९३।।

**भावचन्द्रिका–** ।। **ददाविति** ।। 'स्वावराणां गुरुत्वं तु भवेत् कारणतः क्वचित्' इत्युक्तेऽपि प्रियामग्रहीदित्युक्त्या शिष्यत्वेन स्वीकारवदेव भार्यात्वेन स्वीकारोक्त्या गुरुत्वासम्भवेन लोके यथाप्तः कश्चित् स्वशस्त्रमन्यस्मै ददाति एवमेव मन्त्रानपि वाचा ददाविति ।।१९३।।

---

१. 'तदास्य' इति चट्टिपाठः ।

**चट्टि–** सा रतिः हरेः सुताय भृगूत्थरामदैवतं परशुरामदेवताकं समस्तमायिनाशकं उत्तमं मन्त्रं च ददौ ।।१९३।।

**ततः स्वदारधर्षकं समाह्वयद् युधेऽङ्गजः ।**
**स शम्बरं समेत्य तं युयोध शक्तितो बली ।।१९४।।**

**वरदराजीया–** युद्धे युद्धार्थं समाह्वयत् । शम्बरमिति शेषः । सः अङ्गजः प्रद्युम्नः [शम्बरश्च] समाह्वयत् । बली सः शम्बरः तं प्रद्युम्नमेत्येति सम्बन्धः ।।१९४।।

**जनार्दनीया–** सोऽङ्गजः कामावतारः प्रद्युम्नः, स्वस्य दारा भार्या तस्याः धर्षकं शम्बरं युधे युद्धार्थं समाह्वयत् । स बली शम्बरः तं प्रद्युम्नं एत्य शक्तितो युयोध युद्धमकरोत् ।।१९४।।

**चट्टि–** ततः सोऽङ्गजः कामावतारः प्रद्युम्नः, स्वस्य दाराः भार्या तस्याः धर्षकं शम्बरं युधे युद्धार्थं समाह्वयत् । बली सः शम्बरश्च तं प्रद्युम्नं एत्य शक्तितो युयोध ।।१९४।।

**स चर्मखड्गधारिणं वरास्त्रशस्त्रपादपैः ।**
**यदा न योद्धुमाशकद्धरेः सुतं न दृश्यते ।।१९५।।**

**व्यासतीर्थीया–** यदा योद्धुं नाशकत् तदा न दृश्यते नादृश्यत ।।१९५-१९८।।

**वेदाङ्गतीर्थीया–** न दृश्यते अदृश्योऽभूदिति भावः ।।१९५।।

**वादिराजतीर्थीया–** हरेः सुतं न दृश्यत इत्यत्र हरेः सुतं प्रति यदा योद्धुं नाशकत् तदा स शम्बरः न दृश्यते । केनापि न दृश्यते । अदृश्योऽभूदित्यर्थः ।।१९५-२०४।।

**वरदराजीया–** सः शम्बरः खड्गचर्मधारिणं हरेः सुतं प्रति यदा योद्धुं नाशकत् सम्यक् न शक्तवान् । तदा न दृश्यते । मायया अदृश्योऽभूदित्यर्थः ।।१९५।।

**अनन्तभट्टीया–** स शम्बरः हरेः सुतं...योद्धुं नाशकत् । तदा न दृश्यते अन्तर्दध इत्यर्थः ।।१९५।।[१]

**जनार्दनीया–** स शम्बरः वरास्त्रादिकरणैः खड्गचर्मधारिणं हरेः सुतं प्रति योद्धुं यदा आ ईषदपि नाशकत् शक्तो न बभूव । तदा मायया न दृश्यते नादृश्यत । अन्तर्हितोऽभूदिति भावः ।।१९५।।

**चट्टि–** स शम्बरः वरास्त्रशस्त्रपादपैः करणैः खड्गचर्मधारिणं हरेः सुतं प्रति योद्धुं यदा आ ईषदपि नाशकत् शक्तो न बभूव । तदा न दृश्यते मायया अदृश्योऽभूदित्यर्थः ।।१९५।।

---

१. **अनन्तभट्टीया–** न दृश्यते अदृश्योऽभवत् । इति हो.पुस्तके अधिकः पाठः ।

**सहस्रमायमुल्बणं त्वदृश्यमम्वराद् गिरीन् ।**
**सृजन्तमेत्य विद्यया जघान कृष्णनन्दनः ॥१९६॥**

**वेदाङ्गतीर्थीया–** विद्यया मायां विनाश्य ॥१९६-२०४॥

**वरदराजीया–** सहस्रं माया यस्य स तथा तम् । उल्वणं क्रूरं अदृश्यं अम्वरादाकाशात् गिरीन् पर्वतान् सृजन्तं विद्यया वैष्णव्या रतिदत्तया ॥१९६॥

**जनार्दनीया–** कृष्णनन्दनः सहस्रसङ्ख्याकाः मायाः ऐन्द्रजालिकविद्या यस्य स तथा । अत एव उल्वणं क्रूरं अदृश्यं अम्वराद्गिरीन् सृजन्तं वर्षमाणं शम्वरं विद्यया रतिप्रदत्तविद्यया जघान ॥१९६॥

**चट्टि–** श्रीकृष्णनन्दनः प्रद्युम्नः सहस्रसङ्ख्याकाः मायाः ऐन्द्रजालिकविद्या यस्य स तथा । अत उल्वणं क्रूरम् । अदृश्यं अम्वरात् आकाशात् गिरीन् सृजन्तं वर्षमाणं शम्वरं विद्यया रतिदत्तविद्यया एत्य जघान ॥१९६॥

**स विद्यया विनाशितोरुमाय आशु शम्वरः ।**
**निकृत्तकन्धरोऽपतद् वरासिनाऽमुना क्षणात् ॥१९७॥**

**वरदराजीया–** सः शम्वरः विद्यया प्रद्युम्नविद्यया विनाशिता उर्वी माया यस्य स तथा । अमुना प्रद्युम्नेन असिना खड्गेन निकृत्तकन्धरः छिन्नकण्ठः ॥१९७॥

**जनार्दनीया–** अमुना प्रद्युम्नेन विद्यया रामदैवतविद्यया करणेन । विनाशिताः उरु माया यस्य स तथा । स शम्बरः वरासिना उत्तमखड्गेन निकृत्तकन्धरः छिन्नगलः सन् अपतत् ॥१९७॥

**चट्टि–** अमुना प्रद्युम्नेन विद्यया रामदैवतविद्यया करणेन । विनाशिताः उरु माया यस्य स तथा । स शम्बरः वरासिना उत्तमखड्गेन क्षणात् निकृत्तकन्धरः छिन्नगलः सन् आशु अपतत् ॥१९७॥

**निहत्य तं हरेः सुतस्तयैव विद्ययाऽम्बरम् ।**
**समास्थितः स्वभार्यया समं कुशस्थलीं ययौ ॥१९८॥**

**वरदराजीया–** तं शम्वरं निहत्य तयैव विद्यया रतिदत्तया विद्यया अम्वरं आकाशम् । स्वभार्यया समं सह ॥१९८॥

**अनन्तभट्टीया–** ॥ **विद्यया इति** ॥ दत्तया ॥१९८॥

**जनार्दनीया–** तं शम्वरम् । तयैव विद्यया अम्बरमाकाशं समास्थितः आरूढः सन् । समं सह ॥१९८॥

**चट्टि–** हरेः श्रीकृष्णस्य सुतः प्रद्युम्नः तं शम्बरं तयैव विद्ययैव निहत्य विद्यया अम्बरमाकाशं आस्थितः आरूढः सन् स्वभार्यया रत्या सह कुशस्थलीं द्वारकां ययौ ।।१९८।।

**समस्तवेदिनोर्मुनिर्नरान् विडम्बमानयोः ।**
**रमारमेशयोः सुतं जगाद तं स्म नारदः ।।१९९।।**

**व्यासतीर्थीया–** तं सुतं जगाद ।।१९९-२००।।

**वरदराजीया–** नारदो मुनिः इति सम्बन्धः । विडम्बमानयोः विडम्बनं कुर्वतोः समस्तवेदिनोः सर्वज्ञयोरपि रमारमेशयोः रुक्मिणीकृष्णयोः पुरस्तात् तं प्रद्युम्नं सुतं जगाद । युवयोः पुत्रोऽयमित्युक्तवानित्यर्थः ।।१९९।।

**जनार्दनीया–** मुनिः नारदः समस्तवेदिनोः सर्वविदोः नरान् विडम्बमानयोः रमारमेशयोः रुक्मिणीकृष्णयोः तं सुतं प्रद्युम्नं जगाद । सूतिकागृहात् हृतो यो युवयोः पुत्रः सोऽयमिति जगादेति भावः ।।१९९।।

**चट्टि–** नारदः मुनिः समस्तवेदिनोः सर्वविदोः नरान् विडम्बमानयोः रमारमेशयोः रुक्मिणीकृष्णयोः तं प्रद्युम्नं सुतं जगाद । सूतिकागृहात् हृतो यो युवयोः सुतः सोऽयमिति पूर्वेणान्वयः ।।१९९।।

**स रुक्मिणीजनार्दनादिभिः सरामयादवैः ।**
**पितामहेन चाऽदरात् सुलालितोऽवसत् सुखम् ।।२००।।**

**वरदराजीया–** सः प्रद्युम्नः सरामयादवैः बलभद्रयादवसहितैः पितामहेन सह वसुदेवेन ।।२००।।

**जनार्दनीया–** स प्रद्युम्नः । आदिशब्देन अन्याः कृष्णभार्याः विवक्षिताः । रामेण सहितैर्यादवैः पितामहेन वसुदेवेन आदरात् स्नेहात् सुलालितः सन् सुखं यथा भवति तथा अवसत् ।।२००।।

**चट्टि–** स प्रद्युम्नः रुक्मिणीजनार्दनादिभिः । आदिशब्देन अन्याः श्रीकृष्णभार्याः विवक्षिताः । सरामयादवैः रामेण सहितैर्यादवैः पितामहेन वसुदेवेन च आदरात् स्नेहात् सुलालितः सन् सुखं यथा भवति तथा अवसत् ।।२००।।

**ततः पुरा स्यमन्तकं ह्यवाप सूर्यमण्डले ।**
**स्थिताद्धरेः स सत्रजित् सदाऽत्र केशवार्चकः ।।२०१।।**

**व्यासतीर्थीया–** जाम्बवतीप्राप्तिप्रसक्तिपूर्वकमाह– ततः प्रद्युम्नागमनात् **पुरेत्यादिना** ।।२०१-२०४।।

**वरदराजीया–** ततः प्रद्युम्नागमनात् पूर्वं सः प्रसिद्धः सत्राजिन्नामा यादवः सूर्यमण्डले स्थिताद्धरेः नारायणात् । अत्र सूर्यमण्डलाधिष्ठाने ।।२०१।।

**जनार्दनीया–** सत्यभामाविवाहप्रकारं वदिष्यन् आचार्यस्तदुपोद्घातमाह– **तत इत्यादिना** ।। ततः प्रद्युम्नागमनात् पुरा स प्रसिद्धः सत्राजिद्राजा सूर्यमण्डले स्थिताद्धरेः स्यमन्तकं मणिं अवाप । हि यतः अत्र सूर्यार्चायां केशवार्चकः नारायणपूजकः अतोऽवापेति सम्बन्धः ।।२०१।।

**ताम्रपर्णीया–** सत्रेण सदा दानेन रक्षणेन तपसा हरिं जितवानिति सत्रजित् । 'यज्ञभेदे सदा दाने सत्रमाच्छादने वा' इति यादवः ।।२०१-२०४।।

**चट्टि–** सत्यभामाविवाहप्रकारं वदिष्यन् आचार्यस्तदुपोद्घातमाह– **तत इत्यादिना** ।। ततः प्रद्युम्नागमनात् पुरा पूर्वं स प्रसिद्धः सत्राजिद्राजा सूर्यमण्डले स्थिताद्धरेः नारायणात् स्यमन्तकं स्यमन्तकाख्यं मणिं अवाप । हि यतः अत्र सूर्यार्चायां सदा केशवार्चकः अतोऽवापेति सम्बन्धः ।।२०१।।

**सदाऽस्य विष्णुभाविनोऽप्यतीव लोभमान्तरम् ।**
**प्रकाशयन् रमापतिर्ययाच ईश्वरो मणिम् ।।२०२।।**

**वरदराजीया–** ईश्वरोऽपि मणिं स्यमन्तकं ययाचे । तत्र कारणमाह– **सदेति** ।। सदा विष्णुभाविनोऽपि विष्णुभक्तस्यापि अस्य सत्राजितः आन्तरं अन्तर्विद्यमानं लोभम् ।।२०२।।

**जनार्दनीया–** ईश्वरः कृष्णः विष्णुभाविनोऽपि विष्णुभक्तस्यापि अस्य सत्राजितः आन्तरं हृत्सम्बन्धि लोभं मणौ विद्यमानं लोभं प्रकाशयन् प्रकटयन् मणिं ययाचे ।।२०२।।

**चट्टि–** रमापतिः ईश्वरः श्रीकृष्णः सदा विष्णुभाविनः विष्णुभक्तस्यापि अस्य सत्राजितः आन्तरं हृत्सम्बन्धि अतीवलोभं मणौ विद्यमानं अधिकं लोभं प्रकाशयन् प्रकटयन् मणिं ययाचे ।।२०२।।

**स तं न दत्तवांस्ततोऽनुजो निबद्ध्य तं मणिम् ।**
**वनं गतः प्रसेनको मृगाधिपेन पातितः ।।२०३।।**

**वरदराजीया–** सः सत्राजित् तं मणिम् । ततोऽनन्तरः अनुजः सत्राजितः । प्रसेनकः प्रसेनाख्यः । मृगाधिपेन सिंहेन पातितः मारितः ।।२०३।।

**जनार्दनीया–** स सत्राजित् तं मणिं कृष्णाय न दत्तवान् । ततः अनन्तरं अनुजः सत्राजिदनुजः तं स्यमन्तकमणिं कण्ठे निबध्य, वनं प्रति गतः सन् मृगाधिपेन सिंहेन पातितो निषूदितः यदा ।।२०३।।

**चट्टि–** स सत्राजित् तं मणिं श्रीकृष्णाय न दत्तवान् । ततः अनन्तरं अनुजः सत्राजिदनुजः प्रसनेकः तं स्यमन्तकमणिं कण्ठे निबध्य, वनं प्रति गतः सन् मृगाधिपेन सिंहेन पातितो मारितः ।।

**तदा स सत्रजिद्धरिं शशंस सोदरान्तकम् ।**
**उपांशु वर्त्मना ततो हरिः सयाद्रवो ययौ ।।२०४।।**

**वेदाङ्गतीर्थीया–** उपांशु शशंस । ततः अनन्तरम् । वर्त्मना प्रसेनगतमार्गेण । तत्पदं दृष्ट्वा इति भावः ।।२०५।।

**वादिराजतीर्थीया–** वर्त्मना ततो हरिरित्यत्र वर्त्मना प्रसेनस्य वर्त्मना ।।२०५।।

**मधुसूदनीया–** ।। **शशंस सोदरान्तकमिति** ।। उपांशु मन्दं रहसि इत्यर्थः । हरिं कृष्णं सोदरान्तकं शंशसेत्यन्वयः । ततः तद्वचनश्रवणाऽनन्तरं हरिः कृष्णः सयादवः यादवैस्सहितः सन् वर्त्मना प्रसेनगतमार्गेण ययावित्यन्वयः । यत्तु 'उपांशुवर्त्मना सूक्ष्ममार्गेण' इति वरदराजीयं व्याख्यानं तन्न । यादवैस्सह सूक्ष्ममार्गेण गमने पुनरपि कृष्णे चौर्यापरिहारात् । राजमार्गेण गमने खलु सर्वो ज्ञायेत । अत एव– 'प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः । भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ्जनाः ।।' इति भागवते [१०.६०.१६-१७] । कर्णे कर्णेऽजपन्नित्युक्त्या 'अनागच्छति तस्मिन् प्रसेने कृष्णो मणिरत्नमभिलषितवान् नैतत्प्राप्तवान् । नूनमेतदस्य कर्मेत्यखिल एव यदुलोकः परस्परं कर्णाकर्ण्याऽकथयत् । विदितलोकाऽपवादवृत्तान्तश्च भगवान् सर्वयदुसैन्यपरिवारपरिवृतः प्रसेनाश्वपदवीमनुससार' इति विष्णुपुराणेऽपि [४.१३.३५-३६] कर्णाकर्ण्या अकथयत् इत्युक्तत्वाच्च सत्राजिता रहस्युक्तमित्येव ज्ञायते ।।२०४-२०५।।

**वरदराजीया–** सोदरान्तकं प्रसेनमारकं उपांशुवर्त्मना करणे [कर्णे] शनैः उक्तिमार्गेण शशंस सर्वत्र अकथयत् । उपांशुवर्त्मना सूक्ष्ममार्गेण हरिः ययौ इति सम्बन्धः ।।२०४।।

**अनन्तभट्टीया–** शशंस अकथयत् ।।२०४।।

**जनार्दनीया–** तदा स सत्रजित् सहोदरस्यानुजस्यान्तकं मृत्युं हरिं कृष्णं उपांशु रहसि शनैर्वा शशंस अकथयत् । ममानुजः कृष्णेन पातित इत्यवददिति भावः । ततः वर्त्मना प्रसेनगतमार्गेण ययौ ।।२०४।।

**चट्टि–** तदा स सत्रजित् उपांशु मन्दं रहसीत्यर्थः । हरिं श्रीकृष्णं सोदरान्तकं शशंस । ततः तद्वचनश्रवणानन्तरं हरिः श्रीकृष्णः सयादवः यादवैः सहितः सन् वर्त्मना प्रसेनगतमार्गेण ययौ इत्यन्वयः । तदुक्तम्– 'प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः । भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ्जनाः।।'

इति भागवते [१०.६०.१६-१७]। कर्णे कर्णे जपन्नित्युक्त्या 'अनागच्छति तस्मिन् प्रसेने श्रीकृष्णो मणिरत्नमभिलषितवान् । नैतत्प्राप्तवान् नूनमेतदस्य कर्मेत्यखिल यदुलोकः परस्परं कर्णे कर्णे अकथयत् । विदितलोकापवादवृत्तान्तश्च भगवान् सर्वयदुसैन्यपरिवारितः सन् प्रसेनाश्वपदवीमनुससार ।' इति विष्णुपुराणेऽपि [४अं.१३अ.३५-३६] कर्णे कर्णे अकथयदित्युक्त्या च सत्रजिता रहस्युक्तमित्येव ज्ञायते ।।२०४।।

**वने स सिंहसूदितं पदैः प्रदर्श्य वृष्णिनाम् ।**
**प्रसेनमृक्षपातितं स सिंहमप्यदर्शयत् ।।२०५।।**

**व्यासतीर्थीया–** स निर्दोषोऽपि । सः प्रसेनं प्रदर्श्य सिंहमप्यदर्शयत् ।।२०५।।

**वेदाङ्गतीर्थीया–** स वने पदैः सिंहप्रसेनपदैः प्रसेनं सिंहसूदितं वृष्णीनामदर्शयत् ।।२०५।।

**वादिराजतीर्थीया–** पदैः प्रदर्श्य वृष्णिनामित्यत्र 'व्रीह्यादिभ्यश्च' इति सूत्रात् व्रीहिमान् व्रीहीतिवत् वृष्णिकुलवानेव वृष्णी । अतो वृष्णिनामिति साधुः । स सिंहमप्यदर्शयदित्यत्र स कृष्णः सिंहसूदितं प्रसेनं प्रदर्श्य स एव ऋक्षपातितं सिंहमप्यदर्शयदिति एवकाराध्याहारेणान्वयः । अतो न तच्छब्दवैयर्थ्यम् ।।२०५-२१३।।

**सत्याभिनवतीर्थीया–** तत्रैव वने स सिंहसूदितं पदैः.. इति श्लोके 'वने स सिंहसूदितम्' इत्यत्र विद्यमानस्य 'स' इत्यस्य सर्वज्ञत्वेन प्रसिद्ध इत्यर्थः । एतेन एकेनैव 'स' इत्यनेन पूर्णत्वात् द्वितीयः 'स' इति शब्दो व्यर्थ इति दूषणं परास्तम् । आद्यः 'स' इति शब्दः प्रसिद्ध्यर्थकः । द्वितीयः कृष्णपरामर्शात्मकः इत्यभ्युपगमात् ।।२०५।।

**वरदराजीया–** सः कृष्णः सिंहसूदितं सिंहेन मारितं प्रसेनं पदैः सिंहपदैः चिह्नैः व्यदर्शयत् । सः कृष्णः ऋक्षपातितं जाम्बवदाख्येन ऋक्षेण मारितं सिंहमप्यदर्शयत् ।।२०५।।

**भावविवृति–** वने स सिंहसूदितं..अदर्शयदित्यत्र सः सिंहमिति भिन्नं पदम् । सः कृष्णः पदैः अश्वरूक्षसिंहानां पदैः अङ्कितां भुवं प्रदर्श्य ससिंहसूदितं सिंहेन सूदितो हय इति शेषः । सिंहसूदितेन हयेन सहितः ससिंहसूदितः । प्रसेन इत्यर्थः । सहयं प्रसेनं सिंहोऽसूदयदित्यर्थः । सिंहसूदितं सहयं प्रसेनमृक्षपातितं जाम्बवता पातितं सिंहमप्यदर्शयदिति । यद्वा स कृष्णः पदैरश्वपदैः वने गच्छन् सिंहसूदितं अश्वं प्रदर्श्य सिंहसूदितं प्रसेनं प्रदर्श्य इति प्रथमा द्वितीयार्थे । 'सप्तसु प्रथमा' इति सूत्रात् । तमित्यर्थः । तथाच तं प्रसेनं पतितं रुक्षपातितं सिहमप्यदर्शयदिति । उक्तञ्च भागवते–

'तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् । प्रसेनो हयमारुह्य मृगयां व्यचरद्वने।।

[सप्रसेनं हयं हत्वा मणिमाच्छिद्य केसरी । गुहागताज्जाम्बवता निहतो मणिमिच्छता ।।]
सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले । अपश्यत् भ्रातरं भ्राता सत्राजित्पर्यतप्यत ।।
प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः । भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपन् जनः ।।
भगवांस्तदुपश्रुत्वा दुर्यशोलिप्तमात्मनः । मार्ष्टुं प्रसेनपदवीं अन्वपश्यत नागरैः ।।
हतं प्रसेनमश्वञ्च वीक्ष्य केसरिणा वने । तं चाद्रिपृष्ठे निहतं ऋक्षेण ददृशुर्जनाः ।।
इति दशमस्कन्धषट्पञ्चाशेऽध्याये ।।२०५-२६७।।

**अनन्तभट्टीया–** ऋक्षपातितमिति । न च 'विदुद्रुवुः रणात् सर्वे कपयो जाम्बवन्मुखाः' इत्येतद्विरोधः । तस्य कपिभ्यः प्रधानत्वोक्तेः । तत्र तत्पत्न्यादीनां तदाकारत्वाभावात् । न तत्सुतायाः तदाकारत्वमिति यावत् ।।

**जनार्दनीया–** स कृष्णः वने पदैः सिंहप्रसेनपदैः मुद्रितां भुवम्, दृष्ट्वेति वाक्यशेषः । सिंहेन सूदितं हतं प्रसेनम्, निश्चित्येति शेषः । सिंहसूदितं प्रसेनं वृष्णिनां यादवानां अदर्शयत् । इति सिंहसूदितं प्रसेनं इत्यावर्त्य मुद्रितादिपदान्यावृत्य योज्यम् । स कृष्णः प्रदर्श्य हतं प्रसेनं वृष्णीनां प्रदर्श्य इत्यर्थः । ऋक्षेन पातितं निहतं सिंहमपि अदर्शयत् । 'ऋक्षाच्छभल्लभल्लूकः' इत्यमरः ।।२०५।।

**ताम्रपर्णीया–** ।। **वृष्णीनामिति** ।। 'व्रीह्यादिभ्यश्च' [कौ.१९२३] इति सूत्राद् व्रीहिमानेव व्रीहीतिवत् । वृष्णिकुलवानेव वृष्णी ततो वृष्णिनामिति युक्तम् ।। **ऋक्षपातितमिति** ।। तस्य ऋक्षत्वेऽपि तत्पत्न्यादीनां तदाकारत्वाभावात् न तत्सुतायास्तदाकारत्वं शङ्कनीयम् । न चात्र पुनरुक्तिदोषः । स सिंहसूदितम् । स सिंहमिति द्विस्तच्छब्दश्रवणादिति वाच्यम् । प्रतिक्रियं कर्तुराकाङ्क्षितत्वात् । अत्र च सिंहसूदितत्वं प्रदर्श्य ऋक्षपातितं सिंहमप्यदर्शयदिति भिन्नकर्मकदर्शनक्रियाभेदश्रवणात् । देवदत्तो स्नात्वा भुक्त्वा गच्छतीत्यादावपि देवदत्तः स्नात्वा देवदत्तः भुक्त्वा देवदत्तः गच्छतीत्येवं देवदत्तपदानुवृत्तेः प्रमितत्वात् । आचार्यैस्तु स्पष्टप्रतिभासार्थं प्रतिक्रियं तत्रोक्तिः । इदमेव समाधानं एकविंशेऽध्याये 'ते चर्मवसना भूत्वा' इत्यत्र [श्लो३४४] द्रष्टव्यम् ।।२०५-२१४।।

**अतिविशद–** [अवेक्ष्य] सिंहसूदितं पदैः प्रदर्श्य वृष्णिनां प्रसेनमृक्षपातितमप्यदर्शयदित्येकान्वयेन परिहरणीयेति । अयं भावः । कृष्णः यादवैः सह वनं गत्वा तेभ्यः पूर्वं निपातितौ प्रसेनसिंहौ दर्शयित्वा अनन्तरं विशेषाकारेण एकं सिंहसूदितं अपरं ऋक्षपातितं अदर्शयदिति सर्वनामप्रसिद्धार्थमिति वचनात् । सः प्रसिद्ध इति वा । सः साररूप इति वा । पक्षद्वयेऽपि विशेषणपरं न विशेष्यमिति अक्षरयोजना । सः सारः प्रसिद्धो वा कृष्णः वने सिंहसूदितं प्रसेनं पदैः वृष्णीनां प्रदृश्य ऋक्षपातितं सिंहमप्यदर्शयदिति ।।२०५।।

**चट्टि–** स श्रीकृष्णः वने पदैः मुद्रितैः सिंहपदैः सिंहसूदितं सिंहेन सूदितं प्रसेनं वृष्णिनां प्रदर्श्य 'व्रीह्यादिभ्यश्च' इति सूत्रात् इनिः वृष्णिकुलमेषामस्तीति वृष्णिनः अतो वृष्णिनामिति साधुः । सः श्रीकृष्णः ऋक्षेण पातितं हतं सिंहमपि अदर्शयत् । 'ऋक्षाच्छभल्लभल्लूकाः' इत्यमरः ।।२०५।।

**ततो निधाय तान् बलं स जाम्बवत्परिग्रहम् ।**
**विवेश तत्र संयुगं बभूव तेन चेशितुः ।।२०६।।**

**व्यासतीर्थीया–** जाम्ववत्परिग्रहं जाम्ववता परिगृहीता बिलम् ।।२०६-२१७।।

**वेदाङ्गतीर्थीया–** तान् यादवान् निधाय बिलाद् वहिः । जाम्ववत्परिग्रहं जाम्ववदाश्रयम् ।। ।।२०७-२०९।।

**मधुसूदनीया–** ।। **विवेश तत्र संयुगमिति** ।। अत्र चशव्देन तद्युद्धस्य बहुकालानुवृत्तिं सूचयति । 'आसीत् तदष्टविंशाहं इतरेतरमुष्टिभिः । वज्रनिष्पेषपरुषैः अविश्रममहर्निशम् ।।' इति भागवतवचनाच्च [१०.६०.२४ ] 'वाहुभ्यामेव गोविन्दो दिवसान् एकविंशति' इति हरिवंशवचनात् [१.३८.३९] ।। ।।२०६-२१२।।

**वरदराजीया–** तान् यादवान् वहिः निधाय स्थापयित्वा जाम्ववतः परिग्रहं गृहं विलम् । तत्र विले तेन जाम्ववता सह ईशितुः कृष्णस्य संयुगं युद्धम् ।।२०६।।

**अनन्तभट्टीया–** निधाय परित्यज्य । परिगृह्यते इति परिग्रहः । कर्मण्यण् । जाम्बवतः परिग्रह इति षष्ठीसमासः ।।२०६।।

**जनार्दनीया–** ततोऽनन्तरं स कृष्णः तान् वृष्णीन् निधाय बिलाद्बहिर्विसृज्य । परिगृह्यत इति परिग्रहः। कर्मण्यण् । जाम्ववतः परिग्रहः वासार्थं स्वीकारो यस्मिन् तत्तथा । जाम्बवतो वासाश्रयभूतं बिलं गुहां विवेश । तत्र बिले तेन जाम्ववता सह ईशितुः ईशस्य कृष्णस्य संयुगं युद्धं बभूव ।।२०६।।

**चट्टि–** ततोऽनन्तरं स श्रीकृष्णः तान् वृष्णीन् । निधाय बिलाद्बहि इति शेषः । परिगृह्यत इति परिग्रहः । जाम्बवतः परिग्रहः वासार्थं स्वीकारो यस्मिन् तत्तथा । जाम्ववतो वासाश्रयभूतं बिलं गुहां प्रविवेश । तत्र बिले तेन जाम्बवता सह ईशितुः ईश्वरस्य श्रीकृष्णस्य संयुगं युद्धं बभूव ।।२०६।।

**युयोध मन्दमेव स प्रभुः स्वभक्त इत्यजः ।**
**चकार चोग्रमन्ततः प्रकाशयन् स्वमस्य हि ।।२०७।।**

**वरदराजीया–** सोऽजः कृष्णः स्वभक्त इति हेतोः मन्दं यथा भवति तथा युयोध युद्धं कृतवान् । अन्ते उग्रं युद्धं चकार । स्वं स्वात्मानं अस्य जाम्बवतः स्वात्मानं विज्ञापयितुं दृढं युयोधेति भावः ।।२०७।।

**जनार्दनीया–** स कृष्णः स्वभक्तः जाम्बवान् मम भक्त इत्यभिप्रायेण मन्दं व्यथा यथा न भवति तथेत्यर्थः। युयोध युद्धमकरोत् । पूर्वमिति शेषः । अन्ततः युद्धसमाप्तिसमये अस्य जाम्बवतः । स्वं स्वरूपं प्रकाशयन् प्रकटयन् सन् उग्रं क्रूरं युद्धं चकार ।।२०७।।

**चट्टि–** अजः प्रभुः स श्रीकृष्णः स्वभक्तः जाम्बवान् मम भक्त इत्यभिप्रायेण मन्दं यथा भवति तथा । युयोध आदाविति शेषः । अन्ततः युद्धसमाप्तिसमये अस्य जाम्बवतः स्वं स्वात्मानं प्रकाशयन् प्रकटयन् सन् उग्रं क्रूरं युद्धं चकार ।।२०७।।

**स मुष्टिपिष्टविग्रहो नितान्तमापदं गतः ।**
**जगाम चेतसाऽरणं रघूत्तमं निजं पतिम् ।।२०८।।**

**वरदराजीया–** उग्रयुद्धफलमाह– **स इति** ।। सः जाम्बवान् मुष्टिना पिष्टः चूर्णीकृतो विग्रहो यस्य स तथा । आपदं आपत्तिं गतः प्राप्तः रघूत्तमं रामं अरणं शरणम् ।।२०८।।

**जनार्दनीया–** मुष्टिभिः पिष्टः चूर्णीकृतः विग्रहो देहो यस्य स तथा । स जाम्बवान् नितान्तं आपदं प्राणसंशयं गतः प्राप्तः सन् चेतसा मनसा निजं पतिं स्वस्वामिनं रघूत्तमं रामं अरणं शरणं जगाम प्राप ।।२०८।।

**चट्टि–** सः जाम्बवान् मुष्टिभिः पिष्टः चूर्णीकृतः विग्रहो देहो यस्य स तथा सन् । नितान्तं आपदं प्राणसंशयं गतः प्राप्तः सन् चेतसा मनसा निजं पतिं स्वामिनं रघूत्तमं श्रीरामं अरणं शरणं जगाम ।।

**स्मृतिं गते तु राघवे तदाकृतिं यदूत्तमे ।**
**समस्तभेदवर्जितां समीक्ष्य सोऽयमित्यवैत् ।।२०९।।**

**वेदाङ्गतीर्थीया–** तदाकृतिं रामाकृतिम् । समस्तभेदवर्जितां कृष्णेन गुणक्रियाकृत्यादिभिः समस्तभेदवर्जिताम् । यदूत्तमे दृष्ट्वा स रामः अयं श्रीकृष्णः इत्यवैत् ।।२१०-२१२।।

**वरदराजीया–** तदाकृतिं तस्य रघूत्तमस्य आकारं समस्तगुणैः भेदवर्जितां यदूत्तमे कृष्णे समीक्ष्य दृष्ट्वा स राम एवायं कृष्ण इति अवैत् ज्ञातवान् ।।२०९।।

**जनार्दनीया–** जाम्बवता राघवे स्मृतिं गते सति तेन स्मृते सतीत्यर्थः । समस्तभेदैः गुणकर्माकृत्यादिसर्वभेदैः, वर्जितां रहितां तस्य रामस्य, आकृतिं स्वरूपं यदूत्तमे कृष्णे समीक्ष्य, सः मत्स्वामी रामः अयं कृष्ण इत्यनेन प्रकारेण अवैत् ज्ञातवान् ।।२०९।।

**चट्टि–** राघवे स्मृतिं गते सति समस्तभेदैः गुणकर्माकृत्यादिसर्वभेदैः, वर्जितां रहितां तस्य श्रीरामस्य, आकृतिं स्वरूपं यदूत्तमे श्रीकृष्णे समीक्ष्य, सः मत्स्वामी श्रीरामः अयं श्रीकृष्ण इत्यनेन प्रकारेण अवैत् ज्ञातवान् ।।२०९।।

**ततः क्षमापयन् सुतां प्रदाय रोहिणीं शुभाम् ।**
**मणिं च तं [१]नुनाव स प्रपन्न आशु पादयोः ।।२१०।।**

**वरदराजीया–** क्षमापयन् जाम्ववान् रोहिणीसञ्ज्ञां जाम्ववतीं तं स्यमन्तकं मणिश्च समर्पितवान् । नुनाव तुष्टाव ।।२१०।।

**जनार्दनीया–** ततः रामः कृष्ण एवेति ज्ञानानन्तरं क्षमापयन् आशु पादयोः प्रपन्नो नतः । स जाम्बवान् शुभां हरिभक्त्यादिगुणैर्मङ्गलां रोहिणीं रोहिणीनाम्नीं सुतां प्रदाय, तं स्यमन्तकाख्यं मणिं च प्रदाय, नुनाव तुष्टाव ।।२१०।।

**भारतश्री–** रोहिणीं जाम्बवतीम् ।।२१०।।

**चट्टि–** ततः अनन्तरं प्रपन्नः सः जाम्बवान् तं श्रीकृष्णं आशु क्षमापयन् सन् शुभां शोभनां रोहिणीनाम्नीं सुतां तं मणिं प्रदाय स्यमन्तकाख्यं मणिं च प्रदाय, पादयोः ननाम । नुनाव इति पाठे तुष्टावेत्यर्थः ।।२१०।।

**विधाय चक्रदारितं सुजीर्णदेहमस्य सः ।**
**युवानमाशु केशवश्चकार वेदनां विना ।।२११।।**

**वरदराजीया–** चक्रेण दारितं देहं तनुं विधाय अस्य जाम्बवतः सुजीर्णं बहुकालीनदेहं युवानं नूतनम् ।।२११।।

**जनार्दनीया–** स केशवः अस्य जाम्बवतः सुजीर्णं अतिशिथिलं देहं वेदनां व्यथां विना चक्रेण दारितं विदारितं विधाय आशु युवानं तरुणं चकार ।।२११।।

---

१. 'ननाम' इति चट्टिटिप्पणीपाठः ।

**चट्टि–** स केशवः अस्य जाम्बवतः सुजीर्णं अतिशिथिलं देहं वेदनां व्यथां विना चक्रेण दारितं विधाय तमिति शेषः । आशु युवानं तरुणं चकार ।।२११।।

**विधाय भक्तवाञ्छितं प्रियासहाय ईश्वरः ।**
**प्रगृह्य तं महामणिं विनिर्ययौ गुहामुखात् ।।२१२।।**

**वेदाङ्गतीर्थीया–** भक्तवाञ्छितं भक्तस्य जाम्बवतः वाञ्छितं जाम्बवती कृष्णाय दातव्येति वाञ्छितम् ।।२१२।।

**वरदराजीया–** ईश्वरः कृष्णः स्वभक्तस्य जाम्बवतः वाञ्छितं सुतां कृष्णाय दास्यामीति अभिलषितं विधाय, प्रिया जाम्बवती सहाया यस्य स तथोक्तः । गुहामुखात् जाम्बवता अधिष्ठितात् ।।२१२।।

**अनन्तभट्टीया–** युवानं विधाय ।।२१२।।

**जनार्दनीया–** ईश्वरः कृष्णः भक्तस्य जाम्बवतः, वाञ्छितं सुतां कृष्णाय दास्यामीति अभिलषितं विधाय, प्रिया जाम्बवतीसहायो यस्य स तथा तादृशः सन् । स्यमन्तकं महामणिं प्रगृह्य, गुहामुखाद्विनिर्ययौ विनिर्गतोऽभूत् ।।२१२।।

**चट्टि–** ईश्वरः श्रीकृष्णः भक्तस्य जाम्बवतः वाञ्छितं सुतां श्रीकृष्णाय दास्यामीत्यभिलषितं विधाय, प्रिया जाम्बवती सहायो यस्य स तथा सन् । तं महामणिं प्रगृह्य, गुहामुखाद्विनिर्ययौ विनिययौ ।।२१२।।

**गुहाप्रविष्टमीश्वरं बहून्यहान्यनिर्गतम् ।**
**प्रतीक्ष्य यादवास्तु ये गता गृहं तदाऽहृषुः ।।२१३।।**

**वादिराजतीर्थीया–** तदाऽहृषुरित्यत्र तदा कृष्णागमने सति 'हृषि हर्षणे' इति धातोः लुङि अहृषुरिति बहुवचनम् । हर्षं कृतवन्त इत्यर्थः ।।२१३-२१५।।

**मधुसूदनीया–** ।। **गुहां प्रविष्टमिति** ।। गुहां जाम्बवद्बिलं प्रविष्टं ईश्वरं कृष्णं अनिर्गतं वीक्ष्य गुहामुखादनिर्गतं वीक्ष्य बहून्यहानि द्वादशदिनानि प्रतीक्ष्य यादवा गृहं गता इत्यन्वयः । अदृष्टा गता इत्यन्वयः । 'अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः । प्रतीक्ष्य द्वादशाहानि दुःखितास्ते पुरं ययुः ।।' इति भागवतवचनात् [१०.०.३३] ।।२१३-२२६।।

**वरदराजीया–** प्रतीक्ष्य दृष्ट्वा जहृषुः ।।२१३।।

**जनार्दनीया–** गुहां प्रविष्टं अनिर्गतं अनिर्यातं ईश्वरं कृष्णं बहून्यहानि बहुदिनानि प्रतीक्ष्य आगमिष्यतीति प्रतीक्षां कृत्वा, गृहं प्रतिगताः ये यादवाः ते तु तदा कृष्णागमनकाले तु अधिकं जहृषुः तुतुषुः ।।२१३।।

**भावचन्द्रिका–** बहून्यहानि ।।२१३।।

**चट्टि–** गुहां जाम्बवद्बिलं प्रविष्टं गुहामुखादनिर्गतं ईश्वरं श्रीकृष्णं बहून्यहानि द्वादशदिनानि प्रतीक्ष्य आगमिष्यतीति प्रतीक्षां कृत्वा, ये यादवाः गृहं प्रति गताः ते तु तदा श्रीकृष्णागमनकाले जहृषुः तुतुषुरित्यर्थः । 'अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः [सबलाः जनाः]। प्रतीक्ष्य द्वादशाहानि दुःखितास्ते पुरं ययुः ।।' इति भागवते [१०.६०.३३] ।।२१३।।

**समस्तवृष्णिसन्निधौ यदूत्तमः स्यमन्तकम् ।**
**ददौ च सत्रजित्करे स विच्छविर्बभूव ह ।।२१४।।**

**वरदराजीया–** यदूत्तमः कृष्णः । सः सत्रजित् विच्छविः विगतकान्तिः अभूत् ।।२१४।।

**जनार्दनीया–** स सत्रजित् विच्छविर्विगतकान्तिः कृष्णमुखो बभूवेत्यर्थः ।।२१४।।

**चट्टि–** यदूत्तमः श्रीकृष्णः समस्तवृष्णिसन्निधौ स्यमन्तकं सत्रजित्करे ददौ । स सत्रजित् च विच्छविः विगतकान्तिः कृष्णमुखो बभूवेत्यर्थः ।।२१४।।

**स दुर्यशो रमापतावनूच्य मिथ्यया तपन् ।**
**[१]स्वपापहानकाङ्क्षया ददौ सुतां जनार्दने ।।२१५।।**

**वेदाङ्गतीर्थीया–** स दृष्ट [मणिः] मिथ्यया दुर्यशः अनूच्य तपन् पश्चात्तपन् ।।२१५-२१८।।

**वादिराजतीर्थीया–** मिथ्यया तपन्नित्यत्र मिथ्यया मिथ्यावचनेनेति 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' [गणसूत्रं] इत्यव्ययविधायकसूत्रात् जायेत्यादिवत् विभक्तिप्रतिरूपकमव्ययम् ।।२१५-२१८।।

**वरदराजीया–** मिथ्या मृषैव रमापतौ दुर्यशो अपकीर्तिं अनूच्य उक्त्वा तपन् अनुतापं कुर्वन् स्वपापस्य निबर्हणेच्छया सुतां सत्यभामाम् ।।२१५।।

**जनार्दनीया–** स सत्रजित् दुर्यशः चौर्यलक्षणदुष्कीर्तिं रमापतौ कृष्णे मिथ्यया अनूच्य उदीर्य । मिथ्ययेति विभक्तिप्रतिरूपकमव्ययम् । तपन् पश्चात्तापं कुर्वन् स्वपापहानिकाङ्क्षया स्वदोषपरिहारेच्छया जनार्दनाय कृष्णाय सुतां ददौ ।।२१५।।

---

१. 'स्वपापहानिकाङ्क्षया' इति जनार्दनीयपाठः ।

**ताम्रपर्णीया–** मिथ्ययानृतेन । विभक्तिप्रतिरूपकमव्ययमेतत् ।।२१५-२२३।।

**अतिविशद–** स दुर्यशो रमापतावनूच्य मिथ्यया तपन् इत्यत्र मिथ्ययेति विभक्तिप्रतिरूपकमव्ययम् ।।२१५।।

**चट्टि–** स सत्रजित् रमापतौ श्रीकृष्णे दुर्यशः चौर्यलक्षणदुष्कीर्तिं मिथ्यया वृथैव अनूच्य उदीर्य । मिथ्ययेति विभक्तिप्रतिरूपकमव्ययम् । तपन् पश्चात्तापं कुर्वन् स्वपापहानकाङ्क्षया स्वदोषपरिहारेच्छया जनार्दने श्रीकृष्णे कृष्णाय सुतां सत्यभामां ददौ ।।२१५।।

**मणिं च तं प्रदाय तं ननाम ह क्षमापयन् ।**
**मणिं पुनर्ददौ हरिर्मुमोद सत्यभामया ।।२१६।।**

**वरदराजीया–** तं कृष्णं क्षमापयन् ननाम । हरिः कृष्णः पुनः मणिं सत्राजिते ददौ ।।२१६।।

**जनार्दनीया–** तं मणिं स्यमन्तकमणिं प्रदाय, तं कृष्णम् । हरिः पुनः मणिं सत्राजिते ददौ । हरिः सत्यभामया सह मुमोद ।।२१६।।

**चट्टि–** तं मणिं च प्रदाय, तं श्रीकृष्णं क्षमापयन् सन् ननाम च । श्रीहरिः पुनः मणिं सत्राजिते ददौ । हरिः सत्यभामया सह मुमोद ।।२१६।।

**[1]रमैव सा हि भूरिति द्वितीयमूर्तिरुत्तमा ।**
**बभूव सत्रजित्सुता समस्तलोकसुन्दरी ।।२१७।।**

**सत्याभिनवतीर्थीया–** तत्रैव रमैव साऽपि भूरिति... इति श्लोकः । तस्यार्थः । या उत्तमा समस्तलोकसुन्दरी रमा तस्या एव सा प्रसिद्धा भूरिति द्वितीयमूर्तिरपि द्वितीयमूर्तिरिव सत्रजित्सुता बभूवेति । एतेन या रमा, तस्याः द्वितीयमूर्तिरिति अर्थलाभार्थं तस्या इति वक्तव्यम् । 'सा' इति कथनमयुक्तमिति चोद्यं प्रत्युक्तम् । 'सा' इत्यस्य आवृत्तिमङ्गीकृत्य आद्यस्य प्रसिद्ध्यर्थकत्वमभ्युपेत्य द्वितीयस्य अर्थवशात् विभक्तिविपरिणामं चाङ्गीकृत्य तस्याः द्वितीयमूर्तिरित्यर्थस्योक्तत्वात् । एतेनैव अपिशब्दो व्यर्थ इति दूषणं परिहृतम् । अपिशब्दस्य अवधारणार्थत्वमङ्गीकृत्य द्वितीयमूर्तिरेवेत्यर्थस्योक्तत्वात् ।।२१७।।

---

१. हेमाद्रौ व्रतखण्डे १६ अध्याये उमामहेश्वरसंवादे सुरूपद्वादशीव्रतनिरूपणप्रसङ्गे– 'लक्ष्मीयुक्तः पुरा नाथः क्रीडमानो हि नन्दने । तत्राययौ स भगवान् दुर्वासा ऋषिसत्तमः ।। सत्कृतश्च यथान्यायं अभ्युत्थानकपूर्वकम् । प्रेक्ष्य बीभत्सरूपं तं देव्या हासः कृतस्तदा ।। स च कोपेन महता वैश्वानरसमप्रभः । शशाप लक्ष्मीं दुष्टात्मा मुनिः क्रोधसमन्वितः ।। ... सा एव चावतीर्णा हि गोत्रकस्य गृहे सुता । [सेयं नृपावतीर्णा हि गोपिकानां गृहे सुता] सत्यभामा....।।'

**वरदराजीया**– सत्यभामा पूर्वं का इत्यत आह– **रमैवेति** ।। सापि न केवलं रुक्मिणी । भूरिति द्वितीया मूर्तिः द्वितीयरूपमेव सत्रजित्सुता सत्यभामा बभूव ।।२१७।।

**जनार्दनीया**– सत्यभामा पूर्वं का इत्यत आह– **रमैवेति** ।। द्वितीयमूर्तिः श्रीर्भूर्दुर्गेति त्रिरूपवत्याः लक्ष्म्याः द्वितीयमूर्तिरित्यर्थः । भूरिति नामवती या रमा हि सैव भूरेव सत्राजितः सुता बभूव । अत एव समस्तलोकेषु सुन्दरी रूपवती उत्तमा च ।।२१७।।

**चट्टि**– सत्यभामा पूर्वं का इत्यत आह– **रमैवेति** ।। द्वितीयमूर्तिः श्रीर्भूर्दुर्गेति त्रिरूपवत्याः लक्ष्म्याः द्वितीयमूर्तिरित्यर्थः । भूरिति नाम्नी या रमा सैव भूरेव सत्राजितः सुता बभूव । अत एव समस्तलोकेषु सुन्दरी रूपवती उत्तमा च ।।२१७।।

**ततो हि सा च रुक्मिणी प्रिये प्रियासु तेऽधिकम् ।**
**जनार्दनस्य ते हरेः सदाऽवियोगिनी यतः ।।२१८।।**

**व्यासतीर्थीया**– ततः समस्तयोषिद्वरत्वाद्धि ते सत्यभामा रुक्मिणी च प्रियास्वधिके हरेः प्रिये । स्त्रीत्वे समति [समेपि] सदावियोगित्वं च प्रियत्वे हेतुमाह– ते हरेः **सदाऽवियोगिनी यतः** ।। ।।२१८-२१९।।

**वेदाङ्गतीर्थीया**– ततः उभयोरपि रमावतारत्वात् । ननु रमावतारत्वेऽप्यधिकप्रियत्वं कुतः । सदावियोगिनी यतः रमेति शेषः ।।२१८-२२४।।

**वादिराजतीर्थीया**– तेऽधिकमित्यत्र 'मणीवादेर्ण' इति वचनात् न प्रगृह्यसञ्ज्ञा । यतः कारणात् सा रुक्मिणी चेत्युभे भार्ये मूलरूपे अवियोगिनी रमैव । ततः जनार्दनस्य हरेः प्रियासु ते अधिकं प्रिये इत्यन्वयः ।।२१८-२२७।।

**सत्याभिनवतीर्थीया**– तदनन्तरमेव ततो हि सा च रुक्मिणी...इति श्लोकः । तस्यार्थः रुक्मिणी सा पूर्वं प्रकृता रमा रमायाः श्रीरिति प्रथममूर्तिरिति यावत् । ततः सत्यभामारुक्मिण्योः रमामूर्तित्वात् ते सत्यभामारुक्मिण्यौ हरेः जनार्दनस्य कृष्णस्य प्रियासु अधिकं प्रिये । सत्यभामारुक्मिण्योः अधिकप्रियत्वे हेत्वन्तरमाह– **जनार्दनस्येति** ।। यतः ते सत्यभामारुक्मिण्यौ जनार्दनस्य सदाऽवियोगिनी सदा अवियोगिन्यौ ततश्च ततोऽपि अधिकं प्रिये इत्येतत् हि प्रमाणप्रसिद्धमिति ।।२१८।।

**वरदराजीया**– ततो हि कारणात् प्रियासु जाम्बवत्यादिषु ते सत्यभामारुक्मिणी च इत्युभे जनार्दनस्य अधिकं प्रिये बभूवतुः । यतः कारणात् ते उभे हरेः कृष्णस्य सदा अवियोगिनी वियोगरहितेत्यर्थः ।।२१८।।

**अनन्तभट्टीया–** प्रियासु रुक्मिणीसत्यभामे ।।२१८।।

**जनार्दनीया–** ततः सत्यभामारुक्मिण्योः रमास्वरूपत्वात् सा सत्यभामा रुक्मिणी चेति ते द्वे जनार्दनस्य प्रियासु भार्यासु मध्ये अधिकं यथा स्यात्तथा, प्रिये अनुग्रहपात्रभूते । कुतः? ते सत्यभामारुक्मिण्यौ हरेः सदा देशे काले च अवियोगिनी अवियोगिन्यौ वियोगशून्ये यतोऽतः अधिकं प्रियेत्यर्थः । यद्वा हरेः सदा अवियोगिनी रमेति शेषः । यतः अतः हरेः तदवतारत्वात् ते प्रिये ।।

**अतिविशद–** [तदा जगामेति ।] 'ततो हि सा च रुक्मिणी प्रिया प्रियासु तेऽधिकम् । जनार्दनस्य ते हरेः सदावियोगिनी यतः' इत्यत्र ते ते इति पदद्वयमस्ति । तत्रैवमक्षरयोजना । हि यस्मात् रुक्मिणी सा च सत्यभामा च यतस्ते तते व्याप्ते तस्माज्जनार्दनस्य सदावियोगिनी प्रियासु अधिकं ते उभे प्रिये इति । यतः जनार्दनस्य प्रियासु ते उभे प्रसिद्धे सर्वनामप्रसिद्धार्थमिति वचनात् । अतः रुक्मिणी सत्यभामा च अधिकं प्रिय इति वा ।।२१८।।

**चट्टि–** ततः सत्यभामारुक्मिण्योः रमास्वरूपत्वात् सा सत्यभामा रुक्मिणी चेति ते द्वे जनार्दनस्य प्रियासु भार्यासु मध्ये अधिकं यथा भवति तथा, प्रिये अनुग्रहपात्रभूते । कुतः ? ते सत्यभामारुक्मिण्यौ हरेः सदा देशे काले च अवियोगिनी अवियोगिन्यौ वियोगशून्ये यतोऽतः अधिकं प्रियेत्यर्थः । यद्वा हरेः सदा अवियोगिनी रमेति शेषः । यतः अतः हरेः तदवतारत्वात् ते प्रिये । 'तेऽधिकम्' इत्यत्र 'मणीवादेर्न' इति वचनात् न प्रगृह्यसञ्ज्ञा ।।२१८।।

**अथाऽप साम्बनामकं सुतं च रोहिणी हरेः ।**
**चतुर्मुखांशसंयुतं [१]कुमारमेव षण्मुखम् ।।२१९।।**

**वरदराजीया–** हरेः सकाशात् । पूर्वं षण्मुखं कुमारं सनत्कुमारात्मकं स्कन्दम् ।।२१९।।

**अनन्तभट्टीया–** कुसितैमेवेति [कुत्सितमेवेति] वा अधरः । सनत्कुमारक वेतिवा ।। [अत्र षोडशाध्याय समाप्तिः क्वचित् दृश्यते] ।

**जनार्दनीया–** रोहिणी जाम्बवती हरेः सकाशात् पूर्वं षण्मुखं कुमारं स्कन्दं इदानीं साम्बनामकं सुतं अवाप । कथंभूतम् साम्बम् ? चतुर्मुखस्य अंशेन संयुतम् ।।२१९।।

---

१. 'इत्युक्त्वा श्रीहरिस्तूर्णमुवाच च षडाननम् । अंशरूपेण वत्स त्वं गमिष्यसि महीतलम् ।। जाम्बवत्याश्च गर्भे च लभ जन्म सुरेश्वर ।।' इति ब्रह्मवैवर्तपुराणे.४.६.१२८ । 'कच्चिद्धरेः सौम्य सुतः स दक्षः आस्तेऽग्रणी रथिनां साधु साम्बः । असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ।।' इति भागवते.३.१.३० ।

२. इति हां.पुस्तकपाठः ।

**चट्टि**– अथ रोहिणी जाम्ववती च हरेः सकाशात् पूर्वं षण्मुखं कुमारं स्कन्दमेव इदानीं साम्बनामकं चतुर्मुखस्य ब्रह्मणः अंशेन संयुतं सुतं अवाप ।।२१९।।

**इति प्रशासति प्रभौ जगज्जनार्दनेऽखिलम् ।**
**अगण्यसद्गुणार्णवे कदाचिदाययौ द्विजः ।।२२०।।**

**व्यासतीर्थीया**– सदा जगत्प्रशासनप्रभौ इत्युक्तं सामर्थ्यं विशदयतोक्तम्– **अगण्येति** ।।२२०।।

**वरदराजीया– अत्र षोडशाध्यायपरिसमाप्तिरित्येकः पक्षः इत्युक्तं प्राक्** । जगत्प्रशासति सति । द्विजः ।।२२०।।

**जनार्दनीया**– इत्यनेन प्रकारेण प्रभौ कृष्णे जगत् प्रशासति सति । कदाचिद् द्विजः कश्चन ब्राह्मणः आययौ ।।२२०।।

**चट्टि**– अगण्यसद्गुणार्णवे प्रभौ जनार्दने श्रीकृष्णे इत्यनेन प्रकारेण अखिलं जगत् प्रशासति शिक्षति सति कदाचिद् द्विजः कश्चन ब्राह्मणः आययौ ।।२२०।।

**जनार्दनः स नामतो रमेशपादसंश्रयः ।**
**स मानितश्च विष्णुना प्रणम्य वाक्यमब्रवीत् ।।२२१।।**

**सत्याभिनवतीर्थीया**– तत्रैव जनार्दनस्स नामतो... इति श्लोकः । तस्यार्थः । यः जनार्दन इति नामतः नाम्ना युक्तः सः प्रसिद्धः रमेशपादसंश्रयः विष्णुना मानितश्च सः द्विजः कृष्णं प्रणम्य वाक्यमब्रवीदिति । एतेन 'जनार्दनो नामतः' इति पदद्वयमनन्वितमिति दूषणं परिहृतम् । 'इति' इत्यादेरध्याहारेण अन्वयस्योक्तत्वात् । एतेनैव एकेन 'स' इत्यनेन पूर्णत्वात् द्वितीयः 'सः' इति शब्दो व्यर्थ इति दूषणमपाकृतम् । आद्यः प्रसिद्ध्यर्थकः, द्वितीयः परामर्शार्थक इत्यङ्गीकारात् ।।२२१।।

**वरदराजीया**– जनार्दनो नामतः प्रसिद्धः स द्विजः मानितः पूजितः ।।२२१।।

**जनार्दनीया**– स द्विजः नामतः नाम्ना जनार्दनः । रमेशस्य पाद एव संश्रयः मुख्याश्रयः यस्य स तथा हरिभक्त इत्यर्थः । साक्षाद्धरिभक्तः औपचारेण दैत्यभक्त इति भावः । स जनार्दननामा द्विजः अब्रवीत् ।।२२१।।

**चट्टि**– स द्विजः नामतः नाम्ना जनार्दनः । रमेशस्य पादावेव संश्रयो मुख्याश्रयः यस्य स तथा हरिभक्त इत्यर्थः । साक्षाद्धरिभक्तः औपचारेण दैत्यभट इति भावः । स द्विजः विष्णुना श्रीकृष्णेन मानितस्सन् श्रीकृष्णं प्रणम्य वाक्यं अब्रवीत् ।।२२१।।

**अनन्तभट्टीया–** प्रियासु रुक्मिणीसत्यभामे ।।२१८।।

**जनार्दनीया–** ततः सत्यभामारुक्मिण्योः रमास्वरूपत्वात् सा सत्यभामा रुक्मिणी चेति ते द्वे जनार्दनस्य प्रियासु भार्यासु मध्ये अधिकं यथा स्यात्तथा, प्रिये अनुग्रहपात्रभूते । कुतः? ते सत्यभामारुक्मिण्यौ हरेः सदा देशे काले च अवियोगिनी अवियोगिन्यौ वियोगशून्ये यतोऽतः अधिकं प्रियेत्यर्थः । यद्वा हरेः सदा अवियोगिनी रमेति शेषः । यतः अतः हरेः तदवतारत्वात् ते प्रिये ।।

**अतिविशद–** [तदा जगामेति ।] 'ततो हि सा च रुक्मिणी प्रिया प्रियासु तेऽधिकम् । जनार्दनस्य ते हरेः सदावियोगिनी यतः' इत्यत्र ते ते इति पदद्वयमस्ति । तत्रैवमक्षरयोजना । हि यस्मात् रुक्मिणी सा च सत्यभामा च यतस्ते तते व्याप्ते तस्माज्जनार्दनस्य सदावियोगिनी प्रियासु अधिकं ते उभे प्रिये इति । यतः जनार्दनस्य प्रियासु ते उभे प्रसिद्धे सर्वनामप्रसिद्धार्थमिति वचनात् । अतः रुक्मिणी सत्यभामा च अधिकं प्रिय इति वा ।।२१८।।

**चट्टि–** ततः सत्यभामारुक्मिण्योः रमास्वरूपत्वात् सा सत्यभामा रुक्मिणी चेति ते द्वे जनार्दनस्य प्रियासु भार्यासु मध्ये अधिकं यथा भवति तथा, प्रिये अनुग्रहपात्रभूते । कुतः ? ते सत्यभामारुक्मिण्यौ हरेः सदा देशे काले च अवियोगिनी अवियोगिन्यौ वियोगशून्ये यतोऽतः अधिकं प्रियेत्यर्थः । यद्वा हरेः सदा अवियोगिनी रमेति शेषः । यतः अतः हरेः तदवतारत्वात् ते प्रिये । 'तेऽधिकम्' इत्यत्र 'मणीवादेर्न' इति वचनात् न प्रगृह्यसञ्ज्ञा ।।२१८।।

**अथाऽप साम्बनामकं सुतं च रोहिणी हरेः ।**
**चतुर्मुखांशसंयुतं [१]कुमारमेव षण्मुखम् ।।२१९।।**

**वरदराजीया–** हरेः सकाशात् । पूर्वं षण्मुखं कुमारं सनत्कुमारात्मकं स्कन्दम् ।।२१९।।

**अनन्तभट्टीया–** कुसितैमेवेति [कुत्सितमेवेति] वा अधरः । सनत्कुमारक वेतिवा ।। [अत्र षोडशाध्याय समाप्तिः क्वचित् दृश्यते] ।

**जनार्दनीया–** रोहिणी जाम्बवती हरेः सकाशात् पूर्वं षण्मुखं कुमारं स्कन्दं इदानीं साम्बनामकं सुतं अवाप । कथंभूतम् साम्बम् ? चतुर्मुखस्य अंशेन संयुतम् ।।२१९।।

---

१. 'इत्युक्त्वा श्रीहरिस्तूर्णमुवाच च षडाननम् । अंशरूपेण वत्स त्वं गमिष्यसि महीतलम् ।। जाम्बवत्याश्च गर्भे च लभ जन्म सुरेश्वर ।।' इति ब्रह्मवैवर्तपुराणे.४.६.१२८ । 'कच्चिद्धरेः सौम्य सुतः स दक्षः आस्तेऽग्रणी रथिनां साधु साम्बः । असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ।।' इति भागवते.३.१.३० ।

२. इति हो.पुस्तकपाठः ।

**चट्टि–** अथ रोहिणी जाम्ववती च हरेः सकाशात् पूर्वं षण्मुखं कुमारं स्कन्दमेव इदानीं साम्बनामकं चतुर्मुखस्य ब्रह्मणः अंशेन संयुतं सुतं अवाप ।।२१९।।

**इति प्रशासति प्रभौ जगज्जनार्दनेऽखिलम् ।**
**अगण्यसद्गुणार्णवे कदाचिदाययौ द्विजः ।।२२०।।**

**व्यासतीर्थीया–** सदा जगत्प्रशासनप्रभौ इत्युक्तं सामर्थ्यं विशदयतोक्तम्– **अगण्येति** ।।२२०।।

**वरदराजीया– अत्र षोडशाध्यायपरिसमाप्तिरित्येकः पक्षः इत्युक्तं प्राक्** । जगत्प्रशासति सति । द्विजः ।।२२०।।

**जनार्दनीया–** इत्यनेन प्रकारेण प्रभौ कृष्णे जगत् प्रशासति सति । कदाचिद् द्विजः कश्चन ब्राह्मणः आययौ ।।२२०।।

**चट्टि–** अगण्यसद्गुणार्णवे प्रभौ जनार्दने श्रीकृष्णे इत्यनेन प्रकारेण अखिलं जगत् प्रशासति शिक्षति सति कदाचिद् द्विजः कश्चन ब्राह्मणः आययौ ।।२२०।।

**जनार्दनः स नामतो रमेशपादसंश्रयः ।**
**स मानितश्च विष्णुना प्रणम्य वाक्यमब्रवीत् ।।२२१।।**

**सत्याभिनवतीर्थीया–** तत्रैव जनार्दनस्स नामतो... इति श्लोकः । तस्यार्थः । यः जनार्दन इति नामतः नाम्ना युक्तः सः प्रसिद्धः रमेशपादसंश्रयः विष्णुना मानितश्च सः द्विजः कृष्णं प्रणम्य वाक्यमब्रवीदिति । एतेन 'जनार्दनो नामतः' इति पदद्वयमनन्वितमिति दूषणं परिहृतम् । 'इति' इत्यादेरध्याहारेण अन्वयस्योक्तत्वात् । एतेनैव एकेन 'स' इत्यनेन पूर्णत्वात् द्वितीयः 'सः' इति शब्दो व्यर्थ इति दूषणमपाकृतम् । आद्यः प्रसिद्ध्यर्थकः, द्वितीयः परामर्शार्थक इत्यङ्गीकारात् ।।२२१।।

**वरदराजीया–** जनार्दनो नामतः प्रसिद्धः स द्विजः मानितः पूजितः ।।२२१।।

**जनार्दनीया–** स द्विजः नामतः नाम्ना जनार्दनः । रमेशस्य पाद एव संश्रयः मुख्याश्रयः यस्य स तथा हरिभक्त इत्यर्थः । साक्षाद्धरिभक्तः औपचारेण दैत्यभक्त इति भावः । स जनार्दननामा द्विजः अब्रवीत् ।।२२१।।

**चट्टि–** स द्विजः नामतः नाम्ना जनार्दनः । रमेशस्य पादावेव संश्रयो मुख्याश्रयः यस्य स तथा हरिभक्त इत्यर्थः । साक्षाद्धरिभक्तः औपचारेण दैत्यभट इति भावः । स द्विजः विष्णुना श्रीकृष्णेन मानितस्सन् श्रीकृष्णं प्रणम्य वाक्यं अब्रवीत् ।।२२१।।

**क्षमस्व मे वचः प्रभो ब्रवीम्यतीव पापकम्[1] ।**
**यतः सुपापदूतकस्ततो हि तादृशं वचः ॥२२२॥**

**व्यासतीर्थीया–** त्वद्वचोऽतीव पापकं कस्माज्जातमित्यत आह– **यत इति** ॥२२२-२२५॥

**वरदराजीया–** हि यस्मादतीवपापकं दोषावहं तस्मात् क्षमस्व । कुतः पापकं वाक्यं तवेत्यत आह– **यत इति** ॥ यतः सुपापयोः अत्यन्तपापिष्ठयोः दूतकः दूतः अतस्तदीयवाक्यमपि तादृशमेव मया उच्यत इत्यर्थः ॥२२२॥

**जनार्दनीया–** किमिति? हे प्रभो! अतीव पातकं पापरूपं वचः ब्रवीमि । क्षमस्वेत्यब्रवीदिति सम्बन्धः । तत्र हेतुमाहेत्याह– **यत इति** ॥ अहं सुपापयोरतिपापिष्ठयोर्दूतकः यतः अतः वचो हि वाक्यमपि तादृशं पापरूपमित्यर्थः ॥२२२॥

**चट्टि–** किमिति? हे प्रभो! अतीव पापकं पापरूपं वचः ब्रवीमि । क्षमस्वेत्यब्रवीदिति सम्बन्धः । तत्र हेतुमाह– **यत इति** ॥ यतो अहं सुपापयोरतिपापिष्ठयोर्दूतकः ततो वचो हि वाक्यमपि तादृशं पापरूपमित्यर्थः ॥२२२॥

**न तेऽस्त्यगोचरं क्वचित् तथाऽपि चाऽज्ञया वदे ।**
**वदेति चोदितोऽमुना द्विजो जगाद माधवम् ॥२२३॥**

**वरदराजीया–** क्वचित् देशे काले वा ते तव अगोचरं अज्ञातं नास्ति । सदा सर्वत्र सर्वज्ञत्वादित्यर्थः । अथापि तव आज्ञया वदे ब्रवीमि । अमुना कृष्णेन च वदेत्युदितः द्विजः माधवं कृष्णं जगाद उक्तवान् ॥२२३॥

**जनार्दनीया–** ते तव अगोचरं इन्द्रियाविषयं क्वचिन्नास्ति यद्यपि । तथापि तवाज्ञया वदे वच्मि । अमुना कृष्णेन वदेति चोदितः प्रेरितो द्विजः माधवं प्रति जगाद ॥२२३॥

**चट्टि–** ते तव क्वचित् देशे काले अगोचरं इन्द्रियाविषयं नास्ति यद्यपि । तथापि तवाज्ञया वदे वच्मि । अमुना श्रीकृष्णेन वदेति उदितः सः द्विजः माधवं प्रति जगाद ॥२२३॥

**सुतौ हि साल्वभूपतेर्बभूवतुः शिवाश्रयौ ।**
**[2]शिवप्रसादसम्भवौ पितुस्तपोबलेन तौ ॥२२४॥**

१. 'पातकम्' इति जनार्दनीयपाठः ।

**वेदाङ्गतीर्थीया–** कस्य दूतः किं तद्वचः इत्यतः आद्यस्योत्तरमाह– **सुतावित्यादिना** ।।२२४।।

**वरदराजीया–** शिवाश्रयौ वभूवतुः । यतः पितुः ब्रह्मदत्तस्य तपोबलेन शिवप्रसादसम्भवादित्यर्थः ।।

**जनार्दनीया–** किमिति ? साल्वभूपतेः साल्वदेशभूपस्य ब्रह्मदत्तस्य । शिवः आश्रयो ययोस्तौ तथा तादृशौ । सुतौ वभूवतुः । शिवस्य प्रसादतः 'तव बलिष्ठपुत्रौ स्याताम्' इत्येवं विधो यः प्रसादः, तस्मात् सम्भवः उत्पत्तिर्ययोः तौ तथा । तौ ब्रह्मदत्तसुतौ । पितुस्तपोबलेन ।।२२४।।

**ताम्रपर्णीया–** साल्वभूपतेः साल्वदेशाधिपतेः ब्रह्मदत्तस्य कनिष्ठपत्नीसुतौ । सौभाधिपः साल्वस्तु ज्येष्ठपत्नीपुत्र इति ज्ञेयम् । तपोबलेनाजेयतामवध्यतामिति पूर्वान्वयः । तपोबलेनाजितावबध्यकाविति चान्वयः । तपोबलेन प्रसन्नः शिवो दिदेशेत्युत्तरान्वयो वा । केवलं साक्षाज्जरासुतस्य शिष्यकौ । केवलं तपोबलेन वा ।।२२४-२२६।।

**चट्टि–** किमिति? साल्वभूपतेः साल्वदेशभूपस्य ब्रह्मदत्तस्य । शिवस्य प्रसादतः सम्भवः उत्पत्तिर्ययोः तौ तथा । शिवः आश्रयो ययोस्तौ शिवाश्रयौ सुतौ वभूवतुः । तौ ब्रह्मदत्तसुतौ पितुस्तपोबलेन अजेयतां अजेयत्वं अवध्यतां अवध्यत्वं च वरं शिवात् समापतुः । केवलं जरासुतस्य शिष्यकौ ।।

**[3]अजेयतामवध्यतां[4] च तौ शिवाद् वरं समापतुः ।**
**जरासुतस्य शिष्यकौ तपोबलेन केवलम् ।।२२५।।**

**व्यासतीर्थीया–** [तपोबलेनाजेयत्वमवध्यतां] केवलं । साक्षाज्जरासुतस्यापि शिष्यकौ ।।२२५।।

**वेदाङ्गतीर्थीया–** तपोबलेन अजेयवध्यतां जयत्वाभावं वध्यत्वाभावं च वरं आपतुः । केवलं जरासुतशिष्यकौ ।।२२५।।

---

२. 'अर्चितस्तेन राजेन्द्र शङ्करो नीललोहितः । आत्मानं दर्शयामास स्वप्ने राजानमब्रवीत् ।। प्रीतोऽस्मि तव भद्रं ते वरं वरय सुव्रत । अथ राजा जगन्नाथमुवाचेदं स्मयन्निव ।। पुत्रौ मम भवेतां हि तथेत्युक्त्वा वृषध्वजः । अन्तर्धानं गतः शम्भुः प्रतिबुद्धस्ततो नृपः ।।' इति हरिवंशे. भविष्यत्.१०४.७-९ ।

३. 'श्रीभगवानुवाच- वरं वरय भद्रं वां यथेच्छा वां तथास्तु ते । तावूचतुस्तदा राजन् प्रीतस्त्वं भगवन् यदि ।। देवासुरचमूमुख्यैर्यक्षगन्धर्वदानवैः । आवामजय्यौ सर्वात्मन्नेष नौ प्रथमो वरः ।। द्वितीयो नौ विरूपाक्ष रौद्रास्त्राणां च सङ्ग्रहः । माहेश्वरं तथा रौद्रमस्त्रं ब्रह्मशिरो महत् ।। अभेद्यं कवचं दिव्यमच्छेद्यं चापि कामुर्कम् । परशुं च तथा शर्व सदा रक्षार्थमेव च ।। सहायौ द्वौ महादेव भूतौ युद्धे हि गच्छताम् । एवमस्त्विति देवेश आह भृङ्गिरिटी हरः ।। कुण्डोदरं विरूपाक्षं सर्वप्राणिहिते रतम् । युवामथ च भूतेशौ सहायौ सततं रणे ।। सङ्ग्रामं गच्छतां घोरमेतयोर्बलशालिनोः । इत्युक्त्वा भगवाञ्छर्वस्तत्रैवान्तरधीयत ।।' इति हरिवंशे.भविष्यत्.१०५.११-१७ ।

४. 'अजेयवध्यतां' इति वेदाङ्गतीर्थपाठः

**वरदराजीया–** अजेयतां अवध्यातां जयत्ववध्यत्वरहितताम् । केवलं तपोबलेन शङ्करो दिदेशेति सम्बन्धः ।।२२५।।

**अनन्तभट्टीया–** ।। **अजेयेति** ।। अजेयतां [अवध्यतां ?] ताश्च तथा ।।२२५।।

**जनार्दनीया–** अवध्यतां वध्यत्वाभावं अजेयतां च जेयत्वाभावं च वरं शिवात् समापतुः । केवलं जरासुतस्य शिष्यकौ । तयोः हंसडिभिकयोः तपोबलेन तोषितः शङ्करः रुद्रः तथा यथा हंसडिभिकौ अवध्यौ, अजेयौ तथा तद्वदित्यर्थः । अजितौ अवध्यकौ महोदरनामानं च तथा कुण्डधारिणं कुण्डधारिनामानं चेत्युभौ भूतकौ दिदेश । तयोः सहायार्थमिति शेषः ।।२२५-२२६।।

**महोदरं च कुण्डधारिणं च भूतकावुभौ ।**
**तथाऽजिताववध्यकौ दिदेश शङ्करस्तयोः ।।२२६।।**

**व्यासतीर्थीया–** यथा हंसडिभिकौ तथा तयोः साहाय्ये दिदेश ।।२२६।।

**वरदराजीया–** अजितौ अवध्याविति भूतयोर्विशेषणम् ।।२२६।।

**अनन्तभट्टीया–** यथा हंसडिभिकौ तथेत्यर्थः । दिदेश सहायत्वेनेति शेषः ।।२२६।।

**चट्टि–** तयोः हंसडिभिकयोः तपोवलेन तोषितः इति शेषः । शङ्करः रुद्रः तथा यथा हंसडिभिकौ अवध्यौ, अजेयौ तथा तावपीत्यर्थः । अजितौ अवध्यकौ महोदरं महोदरनामानं च कुण्डधारिणं कुण्डधारिनामानं चेत्युभौ भूतकौ दिदेश । तयोः सहायार्थमिति शेषः ।।२२५-२२६।।

**तयोः सहाय एव तौ वराच्छिवस्य भूतकौ ।**
**अजेयतामवापतुर्न चान्यथाऽमरावपि ।।२२७।।**

**व्यासतीर्थीया–** महोदरकुण्डधारिणोऽप्यजेयावध्यत्वे हंसडिभिकनियम्यौ न स्यातामित्यत आह– **तयोः सहाय एवेति** ।। अमरावपि तयोः सहाय एव ।।२२७।।

**वेदाङ्गतीर्थीया–** अमरावपि देवयोनित्वात् मरणरहितावपि । तयोः सहाय एव अजेयतामवापतुः । अन्यथा तयोः सहायत्वाभावे न अजेयत्ववरो न ।।२२७-२३२।।

**वादिराजतीर्थीया–** न चान्यथामरावपीत्यत्र देवयोनित्वादेवामरौ स्वभावेन मरणरहितावपि तौ भूतकौ । अन्यथा शिववराभावे अजेयौ नेति योग्यपदाध्याहारेणान्वयः ।।२२७-२३७।।

**मधुसूदनीया–** ।। **तयोरिति** ।। तयोः हंसडिभिकयोस्सहाये सहायत्वविषये एव शिवस्य वरात् अजेयत्वमापतुः । अमरावपि यद्यप्यमरौ तथापि । अन्यथा हंसडिबिकयोः प्रातिकूल्ये अजेयौ न भवतः । तयोः साहाय्यं यावत् क्रियते तावत्पर्यन्तमेव भूतयोः रुद्रेणाजेयत्वस्य दत्तत्वादिति भावः ।।२२७-२५०।।

**वरदराजीया–** ननु भूतयोः सर्वथा अजेयत्वे कदाचित् हंसडिबिकप्रतिकूलाचरणसम्भवेन तयोः तन्नियम्यत्वं न स्यादित्यत आह– **तयोरिति** ।। तयोः हंसडिभिकयोः सहाये विद्यमानावेव तौ अजेयतामवापतुः । नान्यथा तत्प्रतिकूलाचरणे अजेयतां न अवापतुः । अतः सर्वथा अमरौ अवध्यावपि तौ हंसडिभिकाभ्यां नियम्यावेवेति भावः ।।२२७।।

**अनन्तभट्टीया–** भूतयोरजेयत्वे हंसडिभिकनियम्यत्वं न स्यादित्याशयेन भूतयोरजेयत्वं हंसडिभिकानुवर्तने सहाय एव न तु तत्प्रतिकूलतायाम् । सम इति शिवेन वरस्य दत्तत्वात् नियम्यत्वं तयोर्घटत इत्याह– **तयोरिति** ।। अमरावपि हंसडिभिकाभ्यां जेयावित्यर्थः ।।२२७।।

**जनार्दनीया–** अमरावपि अवध्यत्ववरं विनैव दैवतत्वात् मरणरहितावपि तौ भूतकावपि तयोः हंसडिभिकयोः सहाय एव शिवस्य वरात् अजेयतामवापतुः । एवकारार्थं स्पष्टयति– **न चेति** ।। अन्यथा तयोः सहायाभावे न च अजेयत्ववरं नैवापतुः ।।२२७।।

**ताम्रपर्णीया–** भूतयोरजेयावध्यत्वे हंसडिबिकनियम्यता न स्यात् । सर्वलोकजयित्वं च स्यादित्यत आह ।। अमरावपि देवानुचरत्वात् स्वभावतोऽमरावपि तयोस्सहाय एवाजेयतामवापतुरन्यथा तत्साहाय्याभावेऽजेयतां नावापतुरित्यन्वयः ।।२२७-२३७।।

**भारतश्री–** सहाये एव सहायार्थमेव । तादर्थ्ये सप्तमी ।।२२७।।

**चट्टि–** तौ भूतौ तयोः हंसडिभिकयोः सहाये सहायविषये एव शिवस्य वरात् अजेयतामवापतुः । अमरावपि यद्यपि अमरौ तथापि अन्यथा हंसडिभिकयोः प्रातिकूल्ये अजेयौ न भवतः । तयोः सहायं यावत् क्रियते तावत्पर्यन्तमेव भूतयोः रुद्रेणाजेयत्वस्य दत्तत्वादिति भावः ।।२२७।।

**अजेयतामवध्यतामवाप्य तावुभौ शिवात् ।**
**पितुस्तु राजसूयितां समिच्छतो [१]मदोद्धतौ ।।२२८।।**

**वरदराजीया–** तौ हंसडिबिकौ पितुः ब्रह्मदत्तस्य राजसूयितां राजसूययज्ञकर्तृकत्वं समिच्छतः अकाङ्क्षतः । यतः उभौ मदोद्धतौ ['महोद्धतौ' इति एकस्मिन् कोशे मूलटीकयोः पाठः] इत्यर्थः ।।२२८।।

१. 'महोद्धतौ' इति एकस्मिन् वरदराजीयकोशे मूलटीकयोः पाठः ।

**अनन्तभट्टीया–** राजसूयतां राजसूययागकर्तृत्वं कर्तुं पितुः राजसूयतामिति सम्बध्यते ॥२२८॥

**जनार्दनीया–** तावुभौ हंसडिभिकौ शिवात् अजेयतां अवध्यतां अवाप्य, पितुर्ब्रह्मदत्तस्य राजसूयितां राजसूयकर्तृत्वं समिच्छतः यतः, मदेन उद्धतौ मत्तौ ॥२२८॥

**चट्टि–** उभौ तौ हंसडिभिकौ शिवात् अजेयतां चावाप्य, मदेन उद्धतौ मत्तौ सन्तौ अपि पितुः साल्वस्य । राजसूयितां राजसूयो अस्यास्तीति राजसूयी, राजसूयिनो भावः राजसूयिता ताम् । राजसूययज्ञस्य कर्तृत्वमित्यर्थः । समिच्छतः ॥२२८॥

**जरासुतो गुरुत्वतो विरोद्धुमत्र नेच्छति ।**
**नृपांस्तु देवपक्षिणो विजित्य कर्तुमिच्छतः ॥२२९॥**

**व्यासतीर्थीया–** अतिबलीयसः जरासुतस्य भावात् कथं पितुः राजसूयितामिच्छतामित्यत आह– **जरासुत इति** ॥२२९॥

**वरदराजीया–** अत्र हंसडिभिकानुष्ठेये कार्ये विरोद्धुं विरोधं कर्तुम् । देवपक्षिणो नृपान् विजित्य ॥२२९॥

**जनार्दनीया–** ननु जरासन्धजयो न स्यादित्याशङ्कायामाह– **जरासुत इति** ॥ जरासुतः गुरुत्वतः स्वस्य तयोः गुरुत्वात् अत्र अस्मिन् राजसूयविषये विरोद्धुं विरोधं कर्तुं नेच्छति । देवपक्षिणः देवपक्षस्थान् नृपान् तु विशेषेण । विजित्येत्युपलक्षणम् । देवावतारांश्चेति द्रष्टव्यम् । तुशब्दबलात् असुरान् सुरांश्च सामान्यतो विजित्येति व्याख्येयम् । कर्तुं राजसूयं कर्तुमिच्छतः ॥२२९॥

**चट्टि–** ननु जरासन्धस्य सत्वात् कथं पितुः राजसूयितामिच्छतः इत्यत आह– **जरासुत इति** ॥ जरासुतः गुरुत्वतः स्वस्य तयोः गुरुत्वात् अत्र अस्मिन् राजसूयविषये विरोद्धुं नेच्छति । देवपक्षिणः देवपक्षस्थान् नृपान् तु विशेषेण विजित्य कर्तुं राजसूयं कर्तुमिच्छतः ॥२२९॥

**स्वयं हि राजसूयितां जरासुतो न मन्यते ।**
**यतो हि वैष्णवं क्रतुं तमाहुरीश वैदिकाः ॥२३०॥**

**व्यासतीर्थीया–** जरासुतः स्वयं कस्मात् राजसूयं नाकरोदित्यत आह– **स्वयं हीति** ॥२३०॥

**वरदराजीया–** ईशेति द्विजकर्तृकं कृष्णसम्बोधनम् । यतो वैदिकाः तं क्रतुं राजसूयं वैष्णवं विष्णुदेवताकं आहुः । अतः विष्णुद्वेषित्वात् जरासुतः स्वयं स्वस्य राजसूयितां तत्कर्तृत्वं न मन्यते न अपेक्ष्यते ॥२३०॥

**अनन्तभट्टीया–** ईशेति सम्बोधनम् ।।२३१।।

**जनार्दनीया–** स्वयं जरासुतः राजसूयितां राजसूयकर्तृत्वं न मन्यते नेच्छतीत्यर्थः । कुतः? हे ईश! वैदिकाः वेदसम्बन्धिनः वेदविद इति यावत् । तं क्रतुं राजसूयं यज्ञं वैष्णवं विष्णुदेवताकमित्याहुः यतः अतो न मन्यत इति सम्बन्धः ।।२३०।।

**चट्टि–** जरासुतः स्वयं कस्मात् राजसूयं न करोतीत्यत आह– **स्वयं हीति** ।। जरासुतः स्वयं राजसूयितां राजसूयकर्तृत्वं न मन्यते नेच्छतीत्यर्थः । कुतः? हे ईश! वैदिकाः वेदसम्बन्धिनः वेदविद इति यावत् । तं क्रतुं राजसूयं यज्ञं वैष्णवं विष्णुदेवताकमित्याहुः । यतः अतो न मन्यत इति सम्बन्धः ।।२३०।।

**इमौ पितुर्यशोऽर्थिनौ पराभवाय ते तथा ।**
**[१]समिच्छतोऽद्य तं क्रतुं भवन्तमूचतुश्च तौ ।।२३१।।**

**व्यासतीर्थीया–** राजसूयस्य वैष्णवत्वे तं शिवाश्रयोऽपि कस्मात् क्रतुमिच्छत इत्यत आह– **इमाविति** ।।२३१।।

**वरदराजीया–** तर्हि हंसडिभिकौ कथमिच्छत इत्यत आह– **इमाविति** ।। तथा ते पराभवाय च । भवन्तं त्वां प्रति ऊचतुः ।।२३१।।

**जनार्दनीया–** अवैष्णवाविमौ किमर्थं वैष्णवं क्रतुं इच्छतः ? इत्यत आह– **इमाविति** ।। इमौ हंसडिभिकौ । पितुर्यशः कीर्तिं अर्थिनौ इच्छन्तौ सन्तौ तथा । ते तव पराभवाय पराभवार्थं अच्युतदेवताकं क्रतुं समिच्छतः । यद्वा क्रतुं समिच्छतः । हे अच्युत! तौ हंसडिभिकौ भवन्तं ऊचतुः ।।२३१।।

**चट्टि–** ननु अवैष्णवाविमौ किमर्थं वैष्णवं क्रतुं इच्छतः ? इत्यत आह– **इमाविति** ।। इमौ हंसडिभिकौ । पितुर्यशः कीर्तिं अर्थिनौ इच्छन्तौ सन्तौ तथा । ते तव पराभवाय पराभवार्थं अद्य तं क्रतुं समिच्छतः । 'अच्युतक्रतुम्' इति पाठे अच्युतदैवतं क्रतुं अच्युत इति सम्बोधनं वा । तौ हंसडिभिकौ भवन्तं ऊचतुः ।।२३१।।

**[२]समुद्रसंश्रयो भवान् बहून् प्रगृह्य लावणान् ।**
**सुभारकानुपैहि नाविति क्षमस्व मे वचः ।।२३२।।**

---

१. 'समिच्छतोऽच्युतक्रतुं' इति जनार्दनीचट्टिटिप्पण्योः पाठान्तरम् ।

२. 'दीयतां करसर्वस्वं यज्ञार्थं सुन्दरं बहु । लवणानि बहून्यद्य गृह्य केशव मा चिरम् ।।' इति हरिवंशे.भविष्यत्.११३.२२ ।

**वेदाङ्गतीर्थीया–** द्वितीयस्योत्तरमाह– **समुद्रेति** ।।२३२।।

**वरदराजीया–** किमिति । भवान् त्वं समुद्रसंश्रयः । अतो बहून् लावणान् पदार्थान् सुभारकान् भारेणोपपन्नान् आदाय नौ आवां प्रति उपैहि आगच्छ इत्यूचतुरिति सम्बन्धः । मे मम अनुवादरूपं वचः ।।२३२।।

**अनन्तभट्टीया–** सुभारकान् भारशब्दः परिणामवाची ।।२३२।।

**जनार्दनीया–** किमिति? समुद्रः संश्रयः आश्रयो यस्य तथा । भवान् यतोऽतः । त्वमिति वाक्यशेषः । लावणान् लवणसमुद्रसम्बन्धिनः बहून् सुभारकान् रत्नादीनां सुभारान् । 'भारः स्याद्विंशतिस्तुला' इत्यमरः । प्रगृह्य आदाय नौ आवां उपेहीति मे वचः क्षमस्व ।।२३२।।

**चट्टि–** किमिति? यतो भवान् समुद्रः संश्रयः अतः त्वमिति शेषः । लावणान् लवणसमुद्रसम्बन्धिनः बहून् सुभारकान् रत्नादीनां सुभारान् । 'भारः स्याद्विंशतिस्तुला' इत्यमरः । प्रगृह्य आदाय नौ आवां उपेहीति मे वचः क्षमस्व । लावणान् लवणसम्बन्धिनः सुभारकान् इति वा ।।२३२।।

**इतीर्य तं ननाम स प्र चाहसन् स्म यादवाः ।**
**हरिस्तु सात्यकिं वचो जगाद मेघनिस्वनः ।।२३३।।**

**व्यासतीर्थीया–** लौकिकभये प्राप्ते हीनध्वनयो भवन्ति । न तथा भगवानित्युक्तम्- **मेघनिस्वन इत्युक्तमिति** ।। इत्थंभूतलक्षणे तृतीया ।।२३३।।

**वेदाङ्गतीर्थीया–** यादवाश्च प्राहसन् स्म ।।२३३-२३६।।

**वरदराजीया–** सः द्विजः तं कृष्णम् । यादवाश्च प्राहसन् स्मेत्यर्थः ।।२३३।।

**जनार्दनीया–** इतीर्य इत्युक्त्वा, स द्विजः तं कृष्णं ननाम । यादवाश्च प्राहसन् । 'प्र च' इत्यत्र भिन्नं पदम् । मेघस्य निःस्वन इव निःस्वनो ध्वनिर्यस्य स तथा ।।२३३।।

**चट्टि–** स विप्रः इतीर्य उक्त्वा, तं श्रीकृष्णं ननाम । यादवाश्च प्राहसन् स्म । प्र च इत्यत्र भिन्नं पदम् । लौकिकभये प्राप्ते जनाः हीनध्वनयो भवन्ति । न तथा भगवानित्याह– **मेघनिस्वन इति** ।। मेघस्य निःस्वन ध्वनिरिव ध्वनिः यस्य स तथा । श्रीकृष्णः सात्यकिं वचो जगाद ।।२३३।।

**प्रयाहि सात्यके वचो ब्रवीहि मे नृपाधमौ ।**
**समेत्य वां वरायुधैः करं ददान्यसंशयम् ।।२३४।।**

**वरदराजीया–** हे सात्यके! नृपाधमौ प्रति मे वचो ब्रवीहि प्रयाहि । वरायुधैः सह समेत्य वां युवयोः करं ददामि ।।२३४।।

**जनार्दनीया–** हे सात्यके! नृपेषु अधमौ कुत्सितौ, हंसडिभिकौ प्रति । कीदृशं वच इत्यत आह– **समेत्येति** ।। वां युवां समेत्य ।।२३४।।

**चट्टि–** हे सात्यके! नृपेषु अधमौ कुत्सितौ, हंसडिभिकौ प्रति प्रयाहि । मे वचः ब्रवीहि । कीदृशं वच इत्यत आह– **समेत्येति** ।। वां युवां समेत्य वरायुधैः श्रेष्ठायुधैः असंशयं संशयरहितं यथा भवति तथा करं ददानि ।।२३४।।

**उपैतमाशु संयुगार्थिनौ च पुष्करं प्रति ।**
**इतीरितः शिनेः सुतो जगाम विप्रसंयुतः ।।२३५।।**

**वरदराजीया–** पुष्करक्षेत्रं प्रति उपैतं आगच्छतम् । शिनेः सुतः सात्यकिः ।।२३५।।

**जनार्दनीया–** संयुगार्थिनौ युद्धार्थिनौ युवां पुष्करं प्रति पुष्कराख्यतीर्थं प्रति उपैतं आयातमिति जगादेति सम्बन्धः । शिनेः सुतः सात्यकिः ।।२३५।।

**चट्टि–** संयुगार्थिनौ युवां च पुष्करं पुष्कराख्यतीर्थं प्रत्यैतमायातं इति जगादेति सम्बन्धः । शिनेः सुतः सात्यकिः इतीरितः सन् श्रीकृष्णेन इति शेषः । विप्रसंयुतः सन् जगाम ।।२३५।।

**उपेत्य तौ हरेर्वचो जगाद सात्यकिर्बली ।**
**विधाय तौ तृणोपमौ गिरा जगाम केशवम् ।।२३६।।**

**वेदाङ्गतीर्थीया–** गिरा तौ तृणोपमौ विधाय ।।२३६।।

**सत्याभिनवतीर्थीया–** तत्रैव उपेत्य तौ हरेर्वचो जगाद .. इति श्लोके 'विधाय तौ तृणोपमौ गिरा' इत्यस्य गिरा वाक्येन तौ तृणोपमौ इति बुद्धिं लोकानां विधाय उत्पाद्येत्यर्थः । एतेन वाक्यस्य तृणोपमौ इति बुद्धिहेतुत्वेन तृणोपमत्वहेतुत्वाभावात् 'गिरा तृणोपमौ इति बुद्धिं विधाय' इति वक्तव्यं 'गिरा तृणोपमौ विधाय' इति कथनमनुपपन्नमिति दूषणं निरस्तम् । 'इति' 'लोकानां' 'बुद्धिं' इति पदानां शेषमङ्गीकृत्य तृणोपमाविति बुद्धिं लोकानामुत्पाद्येत्यर्थस्योक्तत्वात् ।।२३६।।

**वरदराजीया–** तौ हंसडिभिकावुपेत्य गिरा वचसा तृणोपमौ विधाय तिरस्कृत्येत्यर्थः ।।२३६।।

**अनन्तभट्टीया–** गिरा तृणोपमौ विधाय तिरस्कृत्येत्यर्थः ।।२३६।।

**जनार्दनीया–** तौ हंसडिभिकौ उपेत्य प्राप्य, तौ हंसडिभिकौ गिरा वाक्येन । तृणेन उपमौ सदृशौ । विधाय, केशवं प्रत्याजगाम । सात्यकिरिति शेषः ।।२३६।।

**चट्टि–** बली सात्यकिः तौ हंसडिभिकौ उपेत्य प्राप्य हरेः वचो जगाद । सात्यकिः हंसडिभिकौ गिरा वाक्येन तृणोपमौ तृणसदृशौ विधाय केशवं प्रत्याजगाम । सात्यकिरिति शेषः ।।२३६।।

**ततः पुरैव तावुभौ द्विजं हरस्वरूपिणम् ।**
**सुदुःखवासनामकं प्रचक्रतुस्तृणोपमम् ।।२३७।।**

**व्यासतीर्थीया–** [वरायुधाख्यं] सुदुःखं दुःखहेतुत्वात् वासो यस्यासौ तन्नाम ।।२३७।।

**वेदाङ्गतीर्थीया–** सुदुःखवासनामकं दुर्वासा दुःखवासनामकः । दुर्दुखपर्यायत्वात् । 'दुरशोभनदुःखयोः' इत्यभिधानम् ।।२३७।।

**वादिराजतीर्थीया–** सुदुःखवासनामकमित्यत्र 'दुरशोभनदुःखयोः' इति वचनात् सु शोभनं दुःखवाचकदुर्शब्दोपपदवासनाम यस्य स तथोक्तः । दुर्वासनामकमित्यर्थः ।।२३७।।

**मधुसूदनीया–** ।। ततः पुरैवेति ।। हंसडिभिकाभ्यां श्रीकृष्णं प्रति जनार्दनस्य प्रेषणात् प्रागित्यर्थः ।।२३७।।

**वरदराजीया–** ततो द्विजप्रेषणात् पुरैव पूर्वमेव हरस्वरूपिणं रुद्रावतारभूतं सुदुःखवासनामकं दूर्वासनामकं द्विजं तृणोपमं चक्रतुः ।।२३७।।

**अनन्तभट्टीया–** सुदुःखवासनामकं दुर्वाससम् ।।२३७।।[1]

**जनार्दनीया–** ततः पुरा कृष्णं प्रति दूतप्रेषणात् पूर्वं तावेव उभौ हंसडिभिकावेव हरस्वरूपिणं रुद्रावतारं सुदुःखवासनामकं दुर्वासा इति नामानं द्विजं अत्रिपुत्रत्वात् ब्राह्मणं तृणोपमं प्रचक्रतुः । दुरो दुःखपर्यायत्वात् । 'दुरशोभनदुःखयोः' इत्यभिधानम् ।।२३७।।

**चट्टि–** ततः पुरा श्रीकृष्णं प्रति जनार्दनाख्यब्राह्मणप्रेषणात् पूर्वं तावेव उभौ हंसडिभिकावेव हरस्वरूपिणं सुदुःखवासनामकम् । 'दुरशोभनदुःखयोः' इत्यभिधानात् । दुखवाचकदुश्शब्दोपपदं वासनाम यस्य स तथोक्तः । दुर्वासानामकमित्यर्थः । अत्रिपुत्रत्वात् द्विजं तृणोपमं तृणसदृशं प्रचक्रतुः ।।२३७।।

---

१. अनन्तभट्टीया– सुदुःखवासेति अनेन दूर्वास इत्यत्र वस निवास इत्यस्मादणुप्रत्यय इत्युक्तं भवति ।। इति हो.पुस्तके अधिकः पाठः ।

**दशत्रिकैः शतैर्वृतो यतीश्वरैः स सर्ववित् ।**
**[1]विपाटितात्मकौपिनादिसर्वमात्रकोऽभवत् ॥२३८॥**

**व्यासतीर्थीया–** [दशतस्त्रिकैः] दशत्रिकैः ॥२३८॥

**वेदाङ्गतीर्थीया–** दशत्रिकैः शतैः त्रिसहस्रैः ॥२३८॥

**वादिराजतीर्थीया–** विपाटिता आत्मकौपीनादिसर्वमात्रकाः सन्नाहा यस्य स तथोक्तः । आदिपदेन दण्डकमण्डल्वादिकं गृह्यते । कु कुत्सितस्य गुह्येन्द्रियस्य विषये पिः पिधानं तस्य नयनं प्रापणं कुपिनं तत्सम्वन्धि कौपिनम् । कौपीनमिति तु निरुक्तत्वादिकारस्य ईकारागमः ॥२३८-२४२॥

**वरदराजीया–** दशत्रिकैः शतैः सहस्रत्रयसङ्ख्याकैः यतीश्वरैः वृतः । तृणोपमं चक्रतुरित्येतद्विवृणोति– **विपाटितेति** ॥ विपाटिता भञ्जिता आत्मनः कौपीनदण्डादिः मात्रा साधनं यस्य स तथोक्तः ॥२३८॥

**अनन्तभट्टीया–** दशत्रिकैः शतैः सहस्रत्रयसङ्ख्याकैरित्यर्थः । मात्राशब्देन दण्डादिसाधनं गृह्यते ॥

**जनार्दनीया–** तृणोपममित्युक्तं विशदयति– **दशेति** ॥ दशत्रिकैः शतैः त्रिंशच्छतैः त्रिसहस्रसङ्ख्याकैरित्यर्थः । यतीश्वरैः परमहंसैः वृतः युक्तः सर्ववित् सर्वज्ञः स दुर्वासाः । आत्मनः कौपीनं तदेव आदिः पूर्वं यासां तास्तथा, विपाटिताः विदारिताः आत्मकौपीनादयः सर्वमात्राः वस्त्राणि दण्डकमण्डल्वादिसर्वसाधनानि वा यस्य स तथा । समासान्तः कप्रत्ययः । तादृशोऽभवत् । अन्येभ्योऽपीति ह्रस्वः ॥२३८॥

**ताम्रपर्णीया–** कुत्सितस्य गुह्यस्य विषये पिः पिधानम् । कुपितस्य नयनं प्रापणं येन तत् कुपितं तत्करणं वस्त्रं कौपिनम् । कौपीनमित्यत्र तु निरुक्तत्वादीकारागमः ॥२३८-२४१॥

**चट्टि–** तृणोपममित्युक्तं विशदयति– **दशेति** ॥ दशत्रिकैः शतैः त्रिंशच्छतैः त्रिसहस्रसङ्ख्याकैरित्यर्थः । यतीश्वरैः परमहंसैः वृतः युक्तः सर्ववित् सर्वज्ञः स दुर्वासाः । आत्मनः कौपीनं तदेव आदिः पूर्वं यासां तास्तथा, विपाटिताः विदारिताः आत्मकौपीनादयः सर्वमात्राः वस्त्रादण्डकमण्डल्वादिसर्वसाधनानि यस्य स तथा । स्वार्थे कप्रत्ययः । तादृशोऽभवत् ॥२३८॥

**वरात् स्वसम्भवादसौ न शापशक्तिमानभूत् ।**
**ततः समस्तभञ्जनोरुशक्तिमाप केशवम् ॥२३९॥**

---

१. 'तस्य बाहुं समादाय हंसो नृपवरोत्तमः । कौपीनं चिच्छिदे क्रूरः कृतान्त इव सत्तम ॥' इति हरिवंशे.भविष्यत्.१०९.८ तथा कृष्णं प्रति दुर्वासवचनम् । 'पश्येदं बहुधा देव भिन्नं भिन्नं सहस्रशः । शिक्यं च दारवं पात्रं द्विदलान् वेणुकान् बहून् ॥ इदमप्यपरं पश्य तयोः साहसचेष्टितम् । कौपीनं बहुधा छिन्नं तदस्माकं महद्धनम् ॥' इति हरिवंशे.भविष्यत्.१११.६०-६१ ।

**वेदाङ्गतीर्थीया–** ततः स्वयमसमर्थत्वात् ।।२३९।।

**वरदराजीया–** स्वसम्भवात् स्वदत्तात् वरात् समस्तभञ्जना उर्वी शक्तिर्यस्य तम् ।।२३९।।

**जनार्दनीया–** दूर्वासाः तौ किमिति नाशपदित्यत आह– **वरादिति** ।। असौ दुर्वासाः स्वस्माद्रुद्रात्मनः स्वस्मात्, सम्भवादुत्पन्नत्वात् वरान्निमित्ताद् अवध्यत्ववर्दानिमित्तादिति भावः । शापे शापदानविषये शक्तिमान्नाभूत् । ततः कारणात् । समस्तानां भञ्जने भङ्गविषये, उर्वी उत्कृष्टा शक्तिर्यस्य स तथा तम् ।।२३९।।

**चट्टि–** ननु दूर्वासाः किमिति नाशपदित्यत आह– **वरादिति** ।। असौ दुर्वासाः । स्वसम्भवात् स्वस्माद्रुद्रात्मनः स्वस्मात् सम्भवात् वरान्निमित्ताद् इति भावः । शापे शापदानविषये शक्तिमान्नाभूत् । ततः कारणात् । समस्तानां भञ्जने उर्वी उत्कृष्टा शक्तिर्यस्य स तथा तं, केशवं श्रीकृष्णं आप ।।२३९।।

**स तान् समर्च्य माधवः प्रदाय [१]चोरुमात्रकाः ।**
**ययौ च तैः समन्वितो वधाय साल्वपुत्रयोः ।।२४०।।**

**वरदराजीया–** तान् यतीश्वरान् समर्च्य उरुमात्रकाः समीचीनकौपीनादिसाधनानि प्रदाय साल्वस्य ब्रह्मदत्तस्य पुत्रयोः हंसडिभिकयोः वधाय ।।२४०।।

**जनार्दनीया–** तान् यतीश्वरान् समर्च्य, उरुमात्रका उत्तमदण्डकौपीनादिसाधनानि प्रदाय, तैर्यतीश्वरैः ।।

**चट्टि–** सः माधवः श्रीकृष्णः तान् यतीश्वरान् समर्च्य, उरुमात्रका उत्तमदण्डकौपीनादिसाधनानि प्रदाय, तैर्यतीश्वरैः समन्वितः सन् साल्वपुत्रयोः हंसडिभिकयोः वधाय ययौ ।।२४०।।

**तमत्रिजं हरात्मकं यतो हि वेद मागधः ।**
**ततोऽत्यजत् स्वशिष्यकौ निशम्य तत्प्रतीपकौ ।।२४१।।**

**व्यासतीर्थीया–** मागधः स्वशिष्यसाहाय्यं कुतो नाकरोदित्यत आह– **तमिति** ।।२४१।।

**वरदराजीया–** अत्रिजं दूर्वाससं हरात्मकं रुद्रावतारं यतो वेद अतस्तत्प्रतीपकौ दूर्वाससः विरोधिनौ श्रुत्वा स्वशिष्यकौ अपि अत्यजत् । तत्सहाये नो अभवत् ।।२४१।।

**अनन्तभट्टीया–** अत्रिजं दुर्वाससम् ।।२४१।।

---

१. 'छित्वा छित्वा च देवेशो दुकूलानि मृदूनि सः । ददौ तेभ्यस्तदा विष्णुः सर्वेभ्यो जनमेजय ।।' इति हरिवंशे. भविष्यत्. ११२.२३

**जनार्दनीया–** मागधः जरासन्धः हरात्मकं रुद्रावतारं अत्रिजं अत्रिपुत्रं तं दूर्वाससं यतः हि निश्चयेन वेद । ततः स्वशिष्यकौ हंसडिभिकौ तस्य दुर्वाससः प्रतीपकौ द्वेषिणौ इति निशम्य श्रुत्वा, अत्यजत् ।।२४१।।

**चट्टि–** मागधः जरासन्धः अत्रिजं अत्रिपुत्रं तं दूर्वाससं हरात्मकं रुद्रावतारं यतः हि निश्चयेन वेद । ततः स्वशिष्यकौ हंसडिभिकौ तस्य दुर्वाससः प्रतीपकौ द्वेषिणौ इति निशम्य श्रुत्वा, अत्यजत् ।।२४१।।

**हरौ तु पुष्करं गते मुनीश्वरैः समर्चिते ।**
**समीयतुश्च तावुभावथात्र हंसडीभिकौ ।।२४२।।**

**व्यासतीर्थीया–** गाण्डिवं गाण्डीवमितिवत् डिभिको डीभिक इति तन्नाम ।।२४२।।

**वेदाङ्गतीर्थीया–** गाण्डीवं गाण्डिवमिति[वत्] डिभिको डीभिकश्चेति नाम तस्य भवति ।।२४२।।

**वादिराजतीर्थीया–** हंसडीभिकावित्यत्र 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्' इति वचनात् डिभिक एव डीभिकः । इतः परं तस्य नाम्नोऽपि नाशो भविष्यतीति सूचनाय डिभिकनाम्न एव विकारः कृतः ।।२४२।।

**सत्याभिनवतीर्थीया–** तत्रैव हरौ तु पुष्करं गते... इति श्लोके 'धैर्यादिविषये एकप्रकारौ' इति ज्ञापनार्थं उभौ' इत्युक्तम् । एतेन 'हंसडिभकौ' इति द्विवचनेन द्वित्वस्य प्राप्तत्वात् 'उभौ' इत्येतत् व्यर्थमिति चोद्यं प्रत्युक्तम् । एकप्रकारतासमानाधिकरणद्वित्वज्ञापनार्थं 'उभौ' इत्युक्तमित्यभ्युपगमात् ।।२४२।।

**वरदराजीया–** हरौ तु पुष्करक्षेत्रं प्रति गते सति । अनन्तरं हंसडिभिकौ अपि पुष्करक्षेत्रं प्रति समीयतुः ।।२४२।।

**जनार्दनीया–** हरौ कृष्णे पुष्करं पुष्करतीर्थं प्रति गते सति अत्र पुष्करतीर्थे तावुभौ हंसडीभिकौ समीयतुः प्रापतुः । यथा गिरिशः गिरीशः तथा डिभिको डीभिकश्चेति नाम तस्य भवति ।।२४२।।

**ताम्रपर्णीया–** ।। **हंसडीभिकाविति** ।। गाण्डिवं गाण्डीवमितिवत् डिभिक एव डीभिकः ।। ।।२४२-२५०।।

**चट्टि–** मुनीश्वरैः समन्विते हरौ श्रीकृष्णे पुष्करं पुष्करतीर्थं प्रति गते सति अथ अत्र पुष्करं तावुभौ हंसडीभिकौ समीयतुः प्रापतुः ।।२४२।।

**स ब्रह्मदत्तनामकोऽत्र तत्पिताऽप्युपाययौ ।**
**समागतौ च भूतकौ शिवस्य यौ पुरस्सरौ ।।२४३।।**

**वादिराजतीर्थीया–** ब्रह्मदत्तस्य साल्वो ज्येष्ठपत्नीसुतः । इमौ तु कनिष्ठपत्नीसुतौ ज्येष्ठाद्विभक्तराज्यौ चेति भावेनोक्तं ब्रह्मदत्तनामकस्तत्पितेति । ज्येष्ठस्य सौभाधिपतेः साल्वविषयाधिपत्यमेव न्यायप्राप्तत्वादागतम् । अतस्तस्यापि साल्वनाम । अनयोस्तु साल्वविषयाधिपत्याभावात् तन्नामापि नास्तीति ज्ञेयम् ।।२४३-२४७।।

**वरदराजीया–** तत्पिता तयोः पिता ब्रह्मदत्तः । शिवस्य पुरस्सरौ ।।२४३।।

**जनार्दनीया–** अत्र पुष्करे तयोः पिता, शिवस्य पुरःसरौ अग्रगामिनौ, यौ भूतकौ तौ समागतौ।।२४३।।

**चट्टि–** ब्रह्मदत्तनामकः सः प्रसिद्धः तयोः हंसडिभिकयोः पितापि अत्र पुष्करं उपाययौ । यौ शिवस्य पुरःसरौ अग्रगामिनौ भूतकौ तौ च समागतौ ।।२४३।।

**विचक्रनामकोऽसुरः पुरा विरिञ्चतो वरम् ।**
**अवध्यतामजेयतामवाप्य बाधते सुरान् ।।२४४।।**

**व्यासतीर्थीया–** पुरा पूर्वमारभ्य सुरान् बाधते ।।२४४।।

**वरदराजीया–** पुरा पूर्वं विरिञ्चतो विरिञ्चात् अजेयतां अवध्यतां वरम् ।।२४४।।

**जनार्दनीया–** यः विचक्रनामकोऽसुरः पुरा विरिञ्चतः ब्रह्मणः अवध्यतां वध्यत्वाभावं अजेयतां जेयत्वाभावं वरं अवाप्य, सुरान् बाधते ।।२४४।।

**चट्टि–** यः विचक्रनामकोऽसुरः पुरा विरिञ्चितः ब्रह्मणः सकाशात् अवध्यतां वध्यत्वाभावं अजेयतां जेयत्वाभावं वरं अवाप्य, सुरान् बाधते ।।२४४।।

**स चाभवत् तयोः सखा सहायकाम्ययागमत् ।**
**हिडिम्बराक्षसोऽपि यः पुराऽऽप शङ्कराद् वरम् ।।२४५।।**

**वरदराजीया–** स विचक्रनामा तयोः हंसडिभिकयोः सखा अभवत् । अत एव तयोः सहायकाम्यया आगमत् । हिडिम्बाख्यः राक्षसः तपसा तोषितात् शङ्करात् वरमाप ।।२४५।।

**जनार्दनीया–** स च विचक्रः तयोः हंसडिभिकयोः सहायकाम्यया तयोः सहायकरणेच्छया अगमत् । यः हिडिम्बराक्षसः ।।२४५।।

**चट्टि–** स च विचक्रः तयोः हंसडिभिकयोः सखा अभवत् । तयोः सहायकाम्यया सहायकरणेच्छया अगमत् । यः हिडिम्बराक्षसः तोषितात् शङ्करात् कुतश्चन कस्यापि न जीयसे जेयो न भविष्यसि न

वध्यसे वध्यो न भविष्यसीति पुरा वरमवाप । सोऽपि तयोः हंसडिभिकयोः सखाभवत् । स च हिडिम्बराक्षसः तत्र पुष्करं समाजगाम ।।२४५।।

**न जीयसे न वध्यसे कुतश्चनेति [१]तोषितात् ।**
**स चैतयोः सखाऽभवत् समाजगाम तत्र च ।।२४६।।**

**वरदराजीया–** वरस्वरूपं दर्शयति– **नेति** । कुतश्चन केनापि न जीयसे पराभवं न प्राप्स्यसि । न वध्यसे वध्यो न भविष्यसि इति पूर्वेणान्वयः । स च हिडिम्बः तत्र युद्धे ।।२४६।।

**जनार्दनीया–** तोषणात् तपसा तोषणात् कुतश्चन कस्यापि न जीयसे जेयो न भविष्यसि न वध्यसे वध्यो न भविष्यसि इति शङ्कराद्वरं आप । स च राक्षसः ।।२४६।।

**अक्षोहिणीदशात्मकं बलं तयोर्बभूव ह ।**
**विचक्रगं षडात्मकं तथैकमेव राक्षसम् ।।२४७।।**

**व्यासतीर्थीया–** विचक्रं गच्छतीति विचक्रगं षडक्षौहिण्यात्मकम् ।।२४७।।

**वादिराजतीर्थीया–** तथैकमेव राक्षसमित्यत्र हिडिम्बाख्यरक्षस्सम्बन्धि राक्षसं एकं एकाक्षौहिण्यात्मकम् ।।२४७-२५१।।

**वरदराजीया–** तयोः हंसडिभिकयोः बलं अक्षौहिणीदशात्मकम्, विचक्रगं विचक्रे विद्यमानं षडात्मकं षडक्षौहिण्यात्मकं बलम्, राक्षसं रक्षः हिडिम्बः तत्सम्बन्धि एकं एकाक्षौहिण्यात्मकम् ।।२४७।।

**अनन्तभट्टीया–** तयोः हंसडिभिकयोः... ।।२४७।।

**जनार्दनीया–** तयोः हंसडिभिकयोः अक्षौहिणीदशात्मकं दशाक्षौहिणीसङ्ख्यारूपं विचक्रगं विचक्रस्य विद्यमानं बलं षडात्मकं षडक्षौहिण्यात्मकम् । तथैव रक्षसः सम्बन्धि राक्षसं एकं एकाक्षौहिण्यात्मकम् ।।२४७।।

**चट्टि–** तयोः हंसडिभिकयोः बलं अक्षौहिणीदशात्मकं दशाक्षौहिणीसङ्ख्यारूपं बभूव । विचक्रगं विचक्रस्य विद्यमानं बलं षडात्मकं षडक्षौहिण्यात्मकम् । तथैव रक्षसः सम्बन्धि राक्षसं बलं एकमेव एकाक्षौहिण्यात्मकमेव ।।२४७।।

---

१. 'तोषणात्' इति जनार्दनीयपाठः ।

**द्विरष्टसेनया युतौ सहैकयैव तौ नृपौ ।**
**समीयतुर्युधे हरिं हरिश्च तौ ससार ह ॥२४८॥**

**वरदराजीया–** एकया अक्षौहिण्या सहितया द्विरष्टसेनया सप्तदशाक्षौहिणीसङ्ख्यात्मकसेनया युतौ हंसडिभिकौ समीयतुः ॥२४८॥

**जनार्दनीया–** सहैकया एकाक्षौहिण्या सहितया द्विरष्टसेनया षोडशाक्षौहिणीसङ्ख्यया सेनया युतौ नृपौ हंसडिभिकौ युधे युद्धार्थं हरिं समीयतुः । हरिश्च तौ हंसडिभिकौ ससार प्राप ॥२४८॥

**चट्टि–** सहैकया एकाक्षौहिण्या सहितया द्विरष्टसेनया षोडशाक्षौहिणीसङ्ख्यया सेनया युतौ तौ नृपौ हंसडिभिकौ युधे युद्धार्थं हरिं श्रीकृष्णं समीयतुः । हरिश्च तौ हंसडिभिकौ ससार प्राप ॥२४८॥

**अथ द्वयोर्द्वयोरभूद् रणो भयानको महान् ।**
**हरिर्विचक्रमेयिवान् बलश्च हंसमुद्धतम् ॥२४९॥**

**वरदराजीया–** द्वयोर्द्वयोरित्युक्तं विवृणोति– **हरिरित्यादिना** ॥२४९॥

**जनार्दनीया–** भयानकः भयजनकः रणः द्वयोर्द्वयोरभूत् द्वन्द्वयुद्धमभूदिति भावः । द्वयोर्द्वयोरित्युक्तं विवृणोति– **हरिरित्यादिना** ॥ बलः रामः ॥२४९॥

**चट्टि–** अथ भयानकः भयजनकः महान् रणः द्वयोर्द्वयोरभूत् । द्वन्द्वयुद्धमभूदिति भावः । द्वयोरित्युक्तं विवृणोति– **हरिरित्यादिना** ॥ हरिः श्रीकृष्णः विचक्रमेयिवान् । उद्धतं हंसं बलरामश्च ययौ ॥२४९॥

**तदाऽस्य चानुजं ययौ शिनिप्रवीर आयुधी ।**
**गदश्च नामतोऽनुजो हरेः स रोहिणीसुतः ॥२५०॥**

**वेदाङ्गतीर्थीया–** नामतः गदः हरेरवरजो स रोहिणीसुतः ॥२५०॥

**वरदराजीया–** अस्य हंसस्यानुजं डिभिकं ययौ । हरेः कृष्णस्यानुजो गदो नामतः । हरेरनुज इत्युक्त्या देवकीपुत्रत्वं प्रतीयते । तन्निवारयति– **रोहिणीसुत इति** ॥२५०॥

**जनार्दनीया–** शिनिप्रवीरः सात्यकिः अस्य हंसस्य अनुजं डिभिकं नामतः । गदः गदनामेत्यर्थः । यः हरेः कृष्णस्य अनुजः अवरजः स रोहिण्याः वसुदेवभार्यायाः रोहिण्याः सुतः ॥२५०॥

**चट्टि–** तदा हंसस्य अनुजं डिभिकं आयुधी आयुधवान् सात्यकिः ययौ । नामतः गदः गदनामेत्यर्थः । यः हरेः श्रीकृष्णस्य अनुजः स रोहिण्याः वसुदेवभार्यायाः सुतः ॥२५०॥

**पुरा स चण्डको गणो हरेर्निवेदिताशनः ।**
**समाह्वयद् रणाय वै तयोः स तातमेव हि ॥२५१॥**

**व्यासतीर्थीया–** चण्डको हरेर्गणः । गणत्वेऽपि निवेदिताशनः ॥२५१॥

**वेदाङ्गतीर्थीया–** सः पुरा चण्डको गणः पार्षदः । स हि स एव गदः । तयोः तातमेव ब्रह्मदत्तमेव रणाय समाह्वयत् वै ॥२५१-२५३॥

**वादिराजतीर्थीया–** पुरा स चण्डको गणः इत्यत्र स गदः 'सङ्घाते प्रथमे गणे' इति वचनात् चण्डप्रचण्डजयविजयादिद्वारपालकेषु प्रथमं गण्यत इति गणः । चण्डकः चण्डनामा हरेः पार्षदः । निवेदिताशनः कदाचिद्वैकुण्ठनगरात् वहिर्गमने लीलया बुभुक्षतो हरेर्निवेदितस्वसङ्गृहीतदध्योदनः ॥ ॥२५१-२६३॥

**मधुसूदनीया–** हरेर्निवेदिताशनः सर्वेषां हरिनिवेदिताशनत्वे समानत्वेऽपि परमात्मसाहाय्येन इतरपरिवारदेवतानां परमात्मनिवेदिताशनत्वम् । अस्य तु परमात्मभोजनानन्तरं तदुच्छिष्टभोजित्वमिति विशेषः । निवेदितं समर्पितं अश्नातीति निवेदिताशनः । हर्युच्छिष्टभुगित्यर्थः ॥२५१-२७३॥

**वरदराजीया–** स पूर्वं क इत्यत आह– **पुरेति** ॥ चण्डको गणस्थः । गणदेवतात्वेऽपि हरेर्निवेदिताशनः समर्पितान्नः निवेदितमश्नातीति वा । स गदः तयोः हंसडिभिकयोः तातं ब्रह्मदत्तम् ॥२५१॥

**अनन्तभट्टीया–** ॥ **चण्डकेति** ॥ नाम्ना चण्डकः । गणो गणस्थः चण्डकनाम गणस्थ इति वा । 'हरेः गणः हरेः पार्षदः' इति चाहुः । **निवेदितेति** पादपीठवलिभुगित्यर्थः । पूर्वहरावगतेन्ने प्रदत्तवान् । ततो अनुजोऽभूदिति वा । देशान्तरे केचिद्विष्वक्सेन इत्याहुः ॥२५१॥[1]

**जनार्दनीया–** स गदः । पुरा चण्डक इति हरेर्गणः गणदेवता । चण्डप्रचण्डादिपार्षदेषु चण्डाख्य इत्यर्थः । तत्रापि निवेदितं समर्पितं अशनं अन्नं यस्य स तथा । स हि स गदः तयोः हंसडिभिकयोः तातं पितरं ब्रह्मदत्तं रणाय । वै निर्धारणे । समाह्वयत् ॥२५१॥

**ताम्रपर्णीया–** चण्डक इति हरेर्गणः हरेः परिवारः । चण्डको नाम्ना निवेदिताशनः पादपीठवलिभुक् । वादिराजतीर्थीये तु 'कदाचिद्वैकुण्ठनगराद् बहिर्गमनवेलायां हरेर्निवेदिताशनः समर्पितदध्योदनः' इत्युक्तम् ॥२५१-२८५॥

---

१. इति हो.पुस्तकपाठः ।

**भावचन्द्रिका–** ।। पुरेति ।। अत्र गदो विश्वक्सेन इति भाति । विश्वक्सेन इति हरेर्निवेदिताशन इति नारायणवर्मटीकायां, 'विश्वक्सेनो यादवत्वान्निवेद्यमपवाहयेत्' इति योगदीपिकायां 'दत्वाचमनमुच्छिष्टं विश्वक्सेनाय दापयेत्' इति भागवते । चण्डप्रचण्डादिद्वारपालानां प्रत्येकं गणास्सन्ति । चण्डादयश्च गणाधिपाः हरिपार्षदत्वात् । हरेश्चण्डको गणो निवेदिताशननाम्रा कश्चित्पार्षद इति तत्वं चण्डादिगणनिरूपणे विश्वक्सेनसंहितायां स्फुटमवगम्यते ।।२५२-२९८।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां सप्तदशोऽध्यायः ।।

**चट्टि–** स च गदः पुरा चण्डक इति हरेर्गणः गणदेवता । चण्डादिपार्षदेषु चण्डाख्य इत्यर्थः । तत्रापि निवेदितं समर्पितं अशनं अन्नं यस्य स तथा । यद्वा सः गदः 'सङ्घाते प्रथमे गणः' इति वचनात् । चण्डप्रचण्डाजयविजयादिद्वारपालकेषु प्रथमं गण्यते इति गणः । चण्डः चण्डनामा हरेः पार्षदः निवेदिताशनः कदाचित् वैकुण्ठनगरीबहिर्गमने लीलया बुभुक्षितो हरेः निवेदितस्वसम्भृतदध्यौदन इति । स हि गदः तयोः हंसडिभिकयोः तातं पितरं ब्रह्मदत्तमेव रणाय समाह्वयत् ।।२५१।।

**अक्षोहिणीत्रयान्विताः समस्तयादवास्तदा ।**
**त्रिलोचनानुगौ च तौ न्यवारयन् सराक्षसौ ।।२५२।।**

**वरदराजीया–** तदा युद्धसमये समस्तयादवाः अक्षौहिणीत्रयान्विताः सन्तः सराक्षसौ हिडिम्बेन सह वर्तमानौ त्रिलोचनानुगौ भूतकौ न्यवारयन् ।।२५२।।

**जनार्दनीया–** अक्षौहिणीनां त्रयेण त्र्यक्षौहिणीसङ्ख्याकात्मकबलेन, अन्विताः युक्ताः । समस्तयादवाः तदा द्वन्द्वयुद्धसमये सराक्षसौ हिडिम्बेन सहितौ । त्रिलोचनस्य त्र्यम्बकस्य अनुगौ अनुचरौ । तौ भूतकौ न्यवारयत् ।।२५२।।

**चट्टि–** तदा द्वन्द्वयुद्धसमये समस्तयादवाः । अक्षौहिणीत्रयान्विताः अक्षौहिणीनां त्रयेण त्र्यक्षौहिणी-सङ्ख्याकात्मकबलेन, अन्विताः सन्तः । सराक्षसौ हिडिम्बेन सहितौ । त्रिलोचनानुगौ त्रिलोचनस्य रुद्रस्य अनुगौ अनुचरौ तौ भूतकौ न्यवारयन् ।।२५२।।

**हरिर्विचक्रमोजसा महास्त्रशस्त्रवर्षिणम् ।**
**विवाहनं निरायुधं क्षणाच्चकार सायकैः ।।२५३।।**

**वेदाङ्गतीर्थीया–** ओजसा बलेन महास्त्रशस्त्रवर्षिणं विचक्रम् ।।२५३।।

**वरदराजीया–** हरिरोजसा बलेन महास्त्रशस्त्रवर्षिणम् । क्षणात् क्षणमात्रेण ।।२५३।।

**जनार्दनीया–** हरिः ओजसा बलेन महास्त्रशस्त्रवर्षिणं विचक्रम् । क्षणात् क्षणमात्रेण ।।२५३।।

**चट्टि–** हरिः श्रीकृष्णः ओजसा बलेन महास्त्रशस्त्रवर्षिणं विचक्रं क्षणात् क्षणमात्रेण सायकैः बाणैः विवाहनं निरायुधं च चकार ।।२५३।।

**पुनश्च पादपान् गिरीन् प्रमुञ्चतोऽरिणाऽरिहा ।**
**शिरो जहार देवता विनेदुरत्र हर्षिताः ।।२५४।।**

**वरदराजीया–** प्रमुञ्चतो विचक्रस्य । अरिणा चक्रेण । विनेदुः स्तुतिं कृतवन्तः ।।२५४।।

**जनार्दनीया–** अरिहा शत्रुघ्नः कृष्णः पुनश्च पुनरपि पादपान् वृक्षान् गिरींश्च प्रमुञ्चतः वर्षिणः विचक्रस्य शिरः अरिणा सुदर्शनेन जहार चिच्छेद । अत्र अस्मिन् समये हर्षिताः सन्तोषयुक्ताः देवताः विनेदुः जयशब्दं चक्रुः ।।२५४।।

**चट्टि–** अरिहा शत्रुघ्नः श्रीकृष्णः पुनश्च पुनरपि पादपान् वृक्षान् गिरींश्च प्रमुञ्चतः प्रवर्षिणः विचक्रस्य शिरः अरिणा सुदर्शनेन जहार चिच्छेद । देवताः अत्र अस्मिन् समये हर्षिताः सन्तोषयुक्ताः सन्तः विनेदुः जयशब्दं चक्रुः ।।२५४।।

**प्रसूनवर्षिभिः स्तुतश्चतुर्मुखादिभिः प्रभुः ।**
**ससार तौ हरानुगौ प्रभक्षकौ[1] स सात्त्वताम् ।।२५५।।**

**व्यासतीर्थीया–** सात्वतां प्रभक्षकौ । कर्मणि षष्ठी ।।२५५।।

**वेदाङ्गतीर्थीया–** हरानुगौ ससार ।।२५५।।

**वरदराजीया–** प्रसूनवर्षिभिः पुष्पवृष्टिं कुर्वद्भिः । सात्वतां प्रभक्षकौ ।।२५५।।

**अनन्तभट्टीया–** सात्वतां प्रभञ्जकौ । यादवान् बाधमानावित्यर्थः ।।२५५।।

**जनार्दनीया–** प्रसूनवर्षिभिः पुष्पवर्षणशीलैः चतुर्मुखादिभिर्ब्रह्मादिदेवैः स्तुतः प्रभुः स कृष्णः । सात्त्वतां यादवानां समूहमिति शेषः । प्रभक्षकौ तौ भूतकौ ससार प्राप ।।२५५।।

**चट्टि–** प्रभुः स श्रीकृष्णः प्रसूनवर्षिभिः चतुर्मुखादिभिः स्तुतः सन् सात्त्वतां प्रभक्षकौ । कर्मणि षष्ठी । हरानुगौ तौ भूतकौ ससार प्राप ।।२५५।।

---

१. प्रभञ्जकौ स सात्वताम् इति अनन्तभट्टीयपाठः ।

**समस्तयादवान् रणे विधूय तौ जनार्दनम् ।**
**उपेत्य चांसगौ हरेरदंशतां सुकर्णकौ ॥२५६॥**

**सत्याभिनवतीर्थीया–** तत्रैव समस्तयादवान् रणे...इति श्लोके 'सुकर्णकौ' इत्यस्य 'अतिशयेन निर्दुष्टकर्णौ' इत्यर्थः । एतेन 'कर्णौ' इत्यनेन पूर्णत्वात् सुशब्दः कशब्दश्च व्यर्थ इति दूषणं परिहृतम् । कर्णयोः क्षतादिदोषराहित्यज्ञापनार्थं सुशब्दः । 'आधिक्येऽधिकम्' इति वचनानुसारेण कर्णयोः क्षतादिराहित्यमतिशयेनेति वक्तुं कशब्दः इत्यभ्युपगमात् ॥२५६॥

**वरदराजीया–** तौ भूतकौ हरेरंसगौ स्कन्धगतौ हरेः सुकर्णौ शोभनकर्णौ अदंशतां दद्भिः धृतवन्तौ ॥२५६॥

**अनन्तभट्टीया–** सुकर्णकाविति कर्मकारकम् ॥२५६॥

**जनार्दनीया–** तौ भूतकौ रणे समस्तयादवान् विधूय विद्राव्य जनार्दनं उपेत्य अंसगौ स्कन्धस्थौ भूत्वा हरेः सुकर्णकौ क्षतभेदादिरहितत्वात् समीचीनकर्णौ अदंशतां दशनक्रियां चक्रतुः । नैव क्षतमिति भावः ॥२५६॥

**चट्टि–** तौ भूतकौ रणे समस्तयादवान् विधूय विद्राव्य जनार्दनं श्रीकृष्णं उपेत्य प्राप्य अंसगौ स्कन्धगौ भूत्वा, हरेः श्रीकृष्णस्य सुकर्णकौ क्षतभेदादिरहितत्वात् समीचीनकर्णौ अदंशतां दशनक्रियां चक्रतुः । नैव क्षतमिति भावः ॥२५६॥

**स तौ भुजप्रवेगतो विधूय शङ्करालये ।**
**न्यपातयद् बलार्णवोऽमितस्य किं तदुच्यते ॥२५७॥**

**सत्याभिनवतीर्थीया–** तदनन्तरमेव स तौ भुजं प्रवेगतो...इति श्लोके 'अमितस्य किं तदुच्यते' इत्यस्य अमितस्य तद्भूतपातनम् आश्चर्यमिति किमुच्यते । नोच्यते इत्यर्थः । एतेन पूर्ववाक्ये भूतपातनस्योक्तत्वात् भूतपातनं नोच्यते इति कथनं बाधितमिति दूषणं परास्तम् । ? आश्चर्यमितीतिपदयोः आश्चर्यमिति नोच्यते इत्यर्थस्योक्तत्वात् ॥२५७॥

**वरदराजीया–** स कृष्णः तौ भूतकौ भुजवलवेगतो विधूय शङ्करालये कैलासे न्यपातयत् । यतो बलार्णव इत्यर्थः । अमितस्य अनन्तबलस्य तत्कार्यं किमुच्यते । न किमप्याश्चर्यमिर्त्यः ॥२५७॥

**जनार्दनीया–** स कृष्णः भुजयोः प्रवेगतः चलनवेगात् तौ भूतकौ विधूय उत्थाप्य शङ्करालये कैलासे न्यपातयत् । यतो बलार्णवः अत इति सम्बन्धः । अमितस्य बलादिना अपरिमितस्य कृष्णस्य तत् कैलासे भूतपातनं किमुच्यते किमाश्चर्यमित्युच्यते । नैवाश्चर्यमित्यर्थः ॥२५७॥

**चट्टि—** स श्रीकृष्णः भुजयोः प्रवेगतः चलनप्रवेगात् तौ भूतकौ विधूय उत्थाप्य शङ्करालये कैलासे न्यपातयत् । यतो बलार्णवः अत इति सम्बन्धः । अमितस्य बलादिना अपरिमितस्य श्रीकृष्णस्य तत् कैलासे भूतपातनं किमुच्यते किमाश्चर्यमित्युच्यते । नैवाश्चर्यमित्यर्थः ।।२५७।।

**प्रभक्षयन्तमोजसा हिडिम्बमुद्धतं बलम् ।**
**सहोग्रसेनको ययौ पिता हरेः शरान् क्षिपन् ।।२५८।।**

**वेदाङ्गतीर्थीया—** बलं सेनाम् ।।२५८।।

**वरदराजीया—** बलं सेनां प्रभक्षयन्तं उद्धतं हिडिम्बं उग्रसेनेन सहितो हरेः पिता वसुदेवः ।।२५८।।

**अनन्तभट्टीया—** बलं सेनां प्रभक्षयन्तम् ।।२५८।।

**जनार्दनीया—** सहोग्रसेनकः उग्रसेनेन सह वर्तमानः हरेः पिता वसुदेवः बलं यादवसेनां ओजसा बलेन प्रभक्षयन्तं हिडिम्बं प्रति शरान् क्षिपन् वर्षयन् ययौ ।।२५८।।

**चट्टि—** सहोग्रसेनकः उग्रसेनेन सह वर्तमानः हरेः पिता वसुदेवः बलं यादवसेनां ओजसा बलेन प्रभक्षयन्तं उद्धतं हिडिम्बं प्रति शरान् क्षिपन् वर्षन् ययौ ।।२५८।।

**तयो रथौ सहायुधौ प्रभक्ष्य राक्षसो बली ।**
**प्रगृह्य तावभाषत प्रयातमाशु मे मुखम् ।।२५९।।**

**वरदराजीया—** तयोः वसुदेवोग्रसेनयोः । तौ वसुदेवोग्रसेनौ । मे मुखं प्रति प्रयातं आगच्छतम् ।।२५९।।

**जनार्दनीया—** तयोः उग्रसेनवसुदेवयोः । तौ उग्रसेनवसुदेवौ । हस्ताभ्यां प्रगृह्य, मे मुखं आशु प्रयातमिति अभाषत उवाच ।।२५९।।

**चट्टि—** बली राक्षसः हिडिम्बः तयोः वसुदेवोग्रसेनयोः सहायुधौ आयुधसहितौ रथौ प्रभक्ष्य तौ प्रगृह्य, मे मुखं आशु प्रयातमिति अभाषत उवाच ।।२५९।।

**तदा गदावरायुधः सहैव हंसभूभृता ।**
**प्रयुद्ध्यमान आययौ विहाय तं हलायुधः ।।२६०।।**

**वरदराजीया—** गदैव वरमायुधं यस्य स बलभद्रः । तं हंसं विहाय आययौ ।।२६०।।

**अनन्तभट्टीया—** तं हंसं विहाय ।।२६०।।

**जनार्दनीया–** तदा गदैव वरायुधं यस्य स तथा । गदया युध्यन्नित्यर्थः । हंसभूभृता हंसेन सहैव, प्रकर्षेण युध्यते असौ प्रयुध्यमानो । हलायुधो रामः तं हंसं विहाय हिडिम्बं प्रत्याययौ ।।२६०।।

**चट्टि–** तदा गदैव वरायुधं यस्य स तथा । गदया युध्यन्नित्यर्थः । हंसभूभृता हंसेन सहैव प्रयुध्यमानो हलायुधो बलरामः तं हंसं विहाय हिडिम्बं प्रत्याययौ ।।२६०।।

**तमागतं समीक्ष्य तौ विहाय राक्षसाधिपः ।**
**उपेत्य मुष्टिनाऽहनद् बलं स वक्षसि क्रुधा ।।२६१।।**

**वरदराजीया–** तौ वसुदेवोग्रसेनौ विहाय । क्रुधा क्रोधेन ।।२६१।।

**जनार्दनीया–** आगतं तं रामं समीक्ष्य, तौ उग्रसेनवसुदेवौ विहाय बलरामं उपेत्य मुष्टिना बलं अहनत् अहन् । स बलः राक्षसं वक्षसि क्रुधा कोपेन । अहन्नित्यर्थः । स राक्षसाधिपः बलं वक्षसि अहनदिति वा योज्यम् ।।२६१।।

**चट्टि–** सः राक्षसाधिपः हिडिम्बः आगतं तं रामं समीक्ष्य, तौ उग्रसेनवसुदेवौ विहाय, बलं बलरामं उपेत्य, क्रुधा कोपेन मुष्टिना वक्षस्यहनत् अहन् ।।२६१।।

**उभौ हि बाहुशालिनावयुद्ध्यतां च मुष्टिभिः ।**
**चिरं प्रयुद्ध्य तं बलोऽग्रहीत् स जङ्घयोर्विभुः ।।२६२।।**

**वरदराजीया–** तं हिडिम्बं जङ्घयोरग्रहीत् ।।२६२।।

**जनार्दनीया–** उभौ रामहिडिम्बौ अयुध्यतां युद्धं चक्रतुः । विभुः समर्थः सः बलः चिरं प्रयुध्य तं हिडिम्बं जङ्घयोः अग्रहीत् ।।२६२।।

**चट्टि–**बाहुशालिनौ उभौ रामहिडिम्बौ च मुष्टिभिः अयुध्यतां युद्धं चक्रतुः । विभुः सः बलः चिरं प्रयुध्य तं राक्षसं जङ्घयोः अग्रहीत् ।।२६२।।

**अथैनमुद्धृतं बलाद् बलः स दूरमाक्षिपत् ।**
**[१]पपात पादयोजने स नाऽजगाम तं पुनः ।।२६३।।**

---

१. 'तत उत्पत्य रामस्तु दोर्भ्यां सङ्गृह्य राक्षसम् । आदाय बहुवेगेन भ्रामयित्वा पदात् पदम् ।। व्याविध्यत् सुचिरं रामो दर्शयन्नात्मनो बलम् । उत्क्षिप्य राक्षसेन्द्रं तं सर्वलोकस्य पश्यतः ।। गव्यूतिमात्रं चिक्षेप ततो देशाद्धलायुधः । गतासू राक्षसश्रेष्ठस्ततो देशान्निराक्रमत् ।।' इति हरिवंशे.भविष्यत्.१२६.४१-४३ ।

**वादिराजतीर्थीया–** पादयोजने पादयुक्ते योजने क्रोशपञ्चक इत्यर्थः ।।२६३-२६६।।

**वरदराजीया–** बलः बलभद्रः बलात् बलेन एनं हिडिम्बं पादयोजने पादसहितयोजने । हिडिम्बस्तं बलभद्रं पुनः नाजगाम ।।२६३।।

**जनार्दनीया–** स बलः उद्धतं एनं दूरे अक्षिपत् चिक्षेप । स हिडिम्बः, पादयोजने पादेन सहितयोजने पुष्करप्रदेशात् पञ्चक्रोशपरिमितदेश इत्यर्थः । पपात । पुनः आवृत्य तं रामं प्रति नाजगाम ।।२६३।।

**अतिविशद–** पपात पादयोजन इत्यत्र योजनपादः पादयोजनः । पादेन सहितो योजनो वा क्रोशमात्रे वा ।।२६३-२९८।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ सप्तदशोऽध्यायः ।।

**चट्टि–**अथ अनन्तरं बलः उद्धतं एनं बलात् सुदूरे अक्षिपत् चिक्षेप । स हिडिम्बः पादयोजने पादेन सहितयोजने पुष्करप्रदेशात् पञ्चक्रोशपरिमितदेश इत्यर्थः । पपात । पुनः तं बलभद्रं प्रति नाजगाम ।।२६३।।

**विहाय सैनिकांश्च तौ नृपौ ययौ वनाय सः ।**
**निहत्य तस्य राक्षसान् हलायुधो ननाद ह ।।२६४।।**

**वरदराजीया–** सैनिकान् सेनायां विद्यमानान् राक्षसान्, तौ हंसडिभिकौ नृपौ च विहाय स हिडिम्बः वनाय स्वावासवनाय ययौ । तस्य हिडिम्बस्य राक्षसान् ।।२६४।।

**अनन्तभट्टीया–** तौ नृपौ हंसडिभिकौ ।।२६४।।

**जनार्दनीया–** स हिडिम्बः सैनिकान् स्वसैन्यसमूहान् तौ नृपौ हंसडिभिकौ च विहाय । तस्य हिडिम्बस्य ।।२६४।।

**चट्टि–** स हिडिम्बः सैनिकान् स्वसैन्यसमूहान् तौ नृपौ हंसडिभिकौ च विहाय वनाय ययौ । हलायुधः तस्य हिडिम्बस्य सम्बन्धिनो राक्षसान् हत्वा ननाद ।।२६४।।

**गदस्तु साल्वभूभृता वयोगतेन योधयन् ।**
**विवाहनं निरायुधं चकार सोऽप्यपाद्रवत् ।।२६५।।**

**व्यासतीर्थीया–** योधयन् युध्यन् ।।२६५।।

**वरदराजीया–** गदः कृष्णानुजः वयोगतेन वृद्धेन साल्वभूभृता ब्रह्मदत्तेन । सोऽपि ब्रह्मदत्तोऽप्याद्रवत् ।।२६५।।

**जनार्दनीया–** गदः वयोगतेन वृद्धेन साल्वभूभृता ब्रह्मदत्तेन योधयन् युध्यन् सन् । सोऽपि ब्रह्मदत्तः अपाद्रवत् ।।२६५।।

**चट्टि–** गदः श्रीकृष्णानुजः वयोगतेन वृद्धेन साल्वभूभृता ब्रह्मदत्तेन योधयन् युध्यन् सन् तं विवाहनं निरायुधं च चकार । सोऽपि ब्रह्मदत्तः अपाद्रवत् ।।२६५।।

**सुतेन [१]तस्य कन्यसा युयोध सात्यकी रथी ।**
**वरास्त्रशस्त्रयोधिनौ विजह्रतुश्च तावुभौ ।।२६६।।**

**वेदाङ्गतीर्थीया–** कन्यसा कनिष्ठेन ।।२६६।।

**वादिराजतीर्थीया–** सुतेन तस्य कन्यसेत्यत्र 'युवाल्पयोः कनन्यतरस्याम्' [कौ.२०१९] इति सूत्रात् अल्पः अल्पवयस्कः अनुजः कन्शब्देनोच्यते । तत ईयस् प्रत्यये कृते कनीयानितिवत् औणादिके यस् प्रत्यये कृते कन्यसिति शब्दो ज्ञेयः । अतः कन्यसेति साधु ।।२६६-२७२।।

**वरदराजीया–** सात्यकिस्तस्य ब्रह्मदत्तस्य कन्यसा कनीयसा सुतेन डिभिकेनेत्यर्थः ।।२६६।।

**अनन्तभट्टीया–** कन्यसा कनिष्ठेन ।।२६७।।[२]

**जनार्दनीया–** रथी सात्यकिः तस्य ब्रह्मदत्तस्य, कनीयान् कनिष्ठः, तेन सुतेन डिभिकेन युयोध।।२६६।।

**चट्टि–** रथी सात्यकिः । तस्य ब्रह्मदत्तस्य, कनीयान् कनिष्ठः, तेन तत्कनीयसा सुतेन डिभिकेन युयोध । वरास्त्रशस्त्रयोधिनौ तौ उभौ च विजह्रतुः । 'सुतेन तस्य कन्यसा' इति क्वचित्पाठः ।।२६६।।

**चिरं प्रयुद्ध्य सात्यकिः स हंसकन्यसा बली ।**
**शतं सपञ्चकं रणे चकर्त तस्य धन्विनाम् ।।२६७।।**

**वरदराजीया–** हंसकन्यसा हंसानुजेन । तस्य डिबिकस्य । धन्विनां धनुषां सपञ्चकं शतं पञ्चोत्तर-शतमित्यर्थः । चकर्त चिच्छेद ।।२६७।।

**जनार्दनीया–** स सात्यकिः हंसस्य कन्यसा कनीयसा अनुजेन डिभिकेन चिरं प्रयुध्य तस्य डिभिकस्य । धन्विनां पञ्चकेन सहितं शतं पञ्चोत्तरशतमित्यर्थः । चकर्त चिच्छेद ।।२६७।।

---

१. 'तत्कनीयसा' इति जनार्दनीचट्टिपाठः । २. अनन्तभट्टीया– कन्यसेत्यत्रेकारलोप छान्दसः । इति हो.पुस्तके अधिकः पाठः ।

**भावविवृति–** शतं सपञ्चकं रणे चकर्त धन्विनां इत्यत्र धन्विनां मध्ये तस्य डिबिकस्य पञ्चकसहितं धनुषां शतं चिच्छेद । यद्वा धन्विनां श्रेष्ठस्य डिबिकस्य सपञ्चकधनुषां शतमिति ।।२६७-२९८।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ सप्तदशोऽध्यायः ।।

**चट्टि–** बली स सात्यकिः हंसस्य कन्यसा कनिष्ठेन अनुजेन डिभिकेन चिरं प्रयुध्य तस्य डिभिकस्य । धन्विनां सपञ्चकं पञ्चकेन सहितं शतं पञ्चोत्तरशतमित्यर्थः । चकर्त चिच्छेद । कन्यसेत्यत्र 'युवाल्पयोः कनन्यतरस्याम्' इति सूत्रात् [कौ.२०१९] अल्पवयोऽनुजः कन्शब्देनोच्यते । ततः ईयस् प्रत्यये कृते कनीयानितिवत् औणादिके यस् प्रत्यये कृते कन्यस् इति शब्दो ज्ञेयः । अतः कन्यसेति साधु ।।२६७।।

**स खड्गचर्मभृद् रणेऽभ्ययात् सुतात्मजं शिनेः ।**
**स चैनमभ्ययात् तथा वरासिचर्मभृद् विभीः ।।२६८।।**

**वरदराजीया–** स डिभिकः शिनेः सुतस्य सत्यकस्यात्मकं सात्यकिम् । स च सात्यकिरेनं डिभिकम् । विभीः भयरहितः ।।२६८।।

**जनार्दनीया–** स डिभिकः । शिनेः सुतात्मजं पौत्रं सात्यकिं प्रत्यभ्ययात् । तथा वरासिचर्मभृत् विभीर्भयरहितः स सात्यकिः एनं डिभिकं अभ्ययात् ।।२६८।।

**चट्टि–** स डिभिकः चर्मखड्गभृत् सन् रणे शिनेः सुतात्मजं पौत्रं सात्यकिं प्रत्यभ्ययात् । तथा वरासिचर्मभृत् विभीर्भयरहितः स सात्यकिः एनं डिभिकं अभ्ययात् ।।२६८।।

**द्विषोडशप्रभेदकं वरासियुद्धमश्रमौ ।**
**प्रदर्श्य निर्विशेषकावुभौ व्यवस्थितौ चिरम् ।।२६९।।**

**वरदराजीया–** द्विषोडशप्रभेदकं द्वात्रिंशद्भेदभिन्नं वरासियुद्धं उत्तमखड्गयुद्धं प्रदर्श्य । निर्विशेषकौ परस्परविशेषरहितौ ।।२६९।।

**जनार्दनीया–** अश्रमौ श्रमरहितौ डिभिकसात्यकी द्विषोडशप्रभेदकं द्वात्रिंशद्भेदवत् वरं उत्तमं असियुद्धं खड्गयुद्धं प्रदर्श्य निर्विशेषकौ विशेषरहितौ तावुभौ चिरं व्यवस्थितौ ।।२६९।।

**चट्टि–** अश्रमौ श्रमरहितौ उभौ सात्यकिडिभिकौ द्विषोडशप्रभेदकं द्वात्रिंशद्भेदभिन्नं वरं उत्तमं असियुद्धं खड्गयुद्धं प्रदर्श्य, निर्विशेषकौ विशेषरहितौ सन्तौ चिरं व्यवस्थितौ ।।२६९।।

**परस्परान्तरैषिणौ[1] न चान्तरं व्यपश्यताम् ।**
**ततो विहाय सङ्गरं गतौ निरर्थकं त्विति ॥२७०॥**

**वरदराजीया–** परस्परान्तरैषिणौ परस्परं हन्तुं अवसरं अन्वेषमाणौ अन्तरं अवकाशं न व्यपश्यतां न दृष्टवन्तौ । ततः कारणात् सङ्गरं युद्धं विहाय गतौ । कुतः ? निरर्थकं जयापजयव्यवस्थापकं न भवतीति हेतोरित्यर्थः ॥२७०॥

**जनार्दनीया–** परस्परान्तरैषिणौ परस्परस्य 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः' [वार्तिक सि.कौ.२१४७] इति परपदस्य द्विर्भावः । 'समासवच्च बहुलम्' [वार्तिक सि.कौ.२१४७] इत्यत्र बहुलग्रहणादन्यपरयोर्न समासवत् । इतरशब्दस्य नित्यम् । 'असमासवद्भावे पूर्वपदस्य सुपस्सुर्वक्तव्यः' [वार्तिक सि.कौ.२१४७] कस्कादित्वाद्विसर्जनीयस्य सत्वम् । अन्योन्यं अन्तरं छिद्रं अवकाशं ईषिणौ इच्छतौ उभौ अन्तरं अवकाशं न व्यपश्यताम् । 'अन्तरेषिणौ' इति पाठे, 'सञ्ज्ञापूर्वो विधिरनित्यः' [परि.सू.] इति ज्ञेयम् । निरर्थकं व्यर्थमिति विचार्य सङ्गरं युद्धं विहाय गतौ ययतुः । डिभिकसात्यकी इति शेषः ॥२७०॥

**चट्टि–** परस्परं अन्योन्यं अन्तरं अवकाशं ईषिणौ इच्छतौ उभौ अन्तरं अवकाशम् च न व्यपश्यताम् । ततः सात्यकिडिभिकौ सङ्गरं निरर्थकं व्यर्थमिति विचार्य सङ्गरं युद्धं विहाय गतौ ययतुः ॥२७०॥

**ततः स हंससंयुतो जगाम योद्धुमच्युतम् ।**
**क्षणेन तौ निरायुधौ चकार केशवः शरैः ॥२७१॥**

**वरदराजीया–** ततोऽनन्तरं सः डिभिको हंसेन संयुतः । तौ हंसडिभिकौ ॥२७१॥

**जनार्दनीया–** हंसेन संयुतः स डिभिकः । तौ हंसडिभिकौ ॥२७१॥

**चट्टि–** ततो अनन्तरं सः डिभिकः हंसेन संयुतः सन् अच्युतं श्रीकृष्णं प्रति योद्धुं जगाम । केशवः श्रीकृष्णः क्षणेन शरैः तौ हंसडिभिकौ निरायुधौ चकार ॥२७१॥

**हतं च सैन्यमेतयोश्चतुर्थभागशेषितम् ।**
**क्षणेन केशवेन तद्भयादपेयतुश्च तौ ॥२७२॥**

**वेदाङ्गतीर्थीया–** चतुर्थभागं शेषितं यथा भवति तथा इति क्रियाविशेषणम् । क्षणेन हतम् ॥२७२॥

**वादिराजतीर्थीया–** चतुर्थभागशेषितमित्यत्र चतुर्थभागशेषितो यथा भवति तथा चतुर्थभागशेषितम् ॥२७२-२८३॥

---

१. 'अन्तरेषिणौ' इति जनार्दनचट्टिटिप्पण्योः पाठान्तरम् ।

**वरदराजीया–** एतयोः हंसडिभिकयाः सैन्यं चतुर्थो भागः अंशः शेषितः अवशेषितः यत्र तत् हतम् । त्रयो भागा हता इत्यर्थः । तस्य कृष्णस्य भयात् अपेयतुः अपगतौ ।।२७२।।

**जनार्दनीया–** चतुर्थभागं चतुर्थांशं पादमात्रमित्यर्थः । शेषितं उर्वरितं यथा स्यात्तथा । एतयोः हंसडिभिकयोः सैन्यं केशवेन क्षणेन हतं तौ हंसडिभिकौ तस्य कृष्णस्य भयात् अपेयतुः अपययतुः ।।२७२।।

**चट्टि–** चतुर्थभागं चतुर्थांशं पादमात्रमित्यर्थः । शेषं उर्वरितं यथा स्यात्तथा । एतयोः हंसडिभिकयोः सैन्यं केशवेन क्षणेन हतम् । तौ हंसडिभिकौ च तस्य श्रीकृष्णस्य भयात् अपेयतुः अपययतुः ।।२७२।।

**स पुष्करेक्षणस्तदा सुरैर्नुतोऽथ पुष्करे ।**
**उवास तां निशां प्रभुः सयादवोऽमितप्रभः ।।२७३।।**

**व्यासतीर्थीया–** युद्धेऽपि न मुखे ग्लानिरिति सूचयति– **पुष्करेक्षण इति** ।।२७३।।

**वरदराजीया–** सुरैर्नुतः स्तुतः पुष्करक्षेत्रे तां निशां रात्रिम् । अमितप्रभः अगणितप्रकाशः ।।२७३।।

**जनार्दनीया–** तदा स पुष्करेक्षणः कमललोचनः कृष्णः । सुरैर्नुतश्च स्तुतोऽभूत् । अमिता प्रभा दीप्तिर्यस्य स तथा । कृष्णः पुष्करे तां निशां रात्रीं उवास ।।२७३।।

**चट्टि–** युद्धेऽपि न मुखग्लानिरिति सूचयति– **पुष्करेक्षण इति** ।। तदा स पुष्करेक्षणः श्रीकृष्णः सुरैर्नुतश्च स्तुतोऽभूत् । अथ अमिता प्रभा दीप्तिर्यस्य स तथा । सयादवः प्रभुः श्रीकृष्णः पुष्करे क्षेत्रे तां निशां रात्रीं उवास ।।२७३।।

**परे दिने जनार्दनो नृपात्मजौ प्रविद्रुतौ ।**
**यमस्वसुस्तटे प्रभुः समाससाद पृष्ठतः ।।२७४।।**

**मधुसूदनीया–** ।। **यमस्वसुस्तटे प्रभुरिति** ।। गोवर्धनगिरिसमीपस्थयमुनातट इत्यर्थः । 'उभौ तौ हंसडिभिकौ रात्रावेव महागिरिम् । जग्मतुः सहितौ राजान् गोवर्धनमथो नृप ।। अथ प्रभाते विमले सूर्ये चाभ्युदिते सति । गोवर्धनं जगामाशु केशवः केशिमर्दनः ।। निकषा यमुनां राजन् ततो युद्धमवर्त्तत ।।' इति हरिवंशोक्तेः [३.१२७.१-२-५] ।।२७४-२८९।।

**वरदराजीया–** नृपात्मजौ हंसडिभिकौ यमस्वसुः यमुनायाः तटे प्रविद्रुतौ । पृष्ठतः समाससाद ।।२७४।।

**जनार्दनीया–** परे दिने द्वितीयदिवसे । यमस्वसुर्यमुनायास्तटे । नृपात्मजौ हंसडिभिकौ । पृष्ठतः समाससाद प्राप ।।२७४।।

**चट्टि–** प्रभुः जनार्दनः श्रीकृष्णः परे दिने द्वितीयदिवसे यमस्वसुर्यमुनायास्तटे । गोवर्धनगिरिसमीपस्थ यमुनातट इत्यर्थः । प्रविद्रुतौ नृपात्मजौ हंसडिभिकौ पृष्ठतः समाससाद प्राप । तदुक्तम्– 'उभौ तौ हंसडिभिकौ रात्रावेव महागिरिम् । जग्मतुः सहितौ राजान् गोवर्धनमथो नृप ।। अथ प्रभाते विमले सूर्ये चाभ्युदिते सति । गोवर्धनं जगामाशु केशवः केशिमर्दनः ।। निकषा यमुना राजन् ततो युद्धमवर्त्तत ।।' इति हरिवंशोक्तेः [३.१२७.१-२.५] ।।२७४।।

**स रौहिणेयसंयुतः समन्वितश्च सेनया ।**
**स्वशिष्टसेनया वृतौ पलायिनाववारयत् ।।२७५।।**

**वरदराजीया–** रौहिणेयेन संयुतः स कृष्णः । स्वकीयया अवशिष्टया सेनया सह पलायिनौ पलाय्य गच्छन्तौ अवारयत् वारयमास ।।२७५।।

**जनार्दनीया–** स कृष्णः स्वशिष्टसेनया स्वस्मादुर्वरितसेनया वृतौ परिवारितौ । पलायिनौ पलायनशीलौ अवारयत् निवारयामास ।।२७५।।

**चट्टि–** स श्रीकृष्णः रौहिणेयेन संयुतः सन् स्वसेनया समन्वितः सन् स्वशिष्टसेनया युतौ पलायिनौ पलायनशीलौ हंसडिभिकौ न्यवारयत् निवारयामास ।।२७५।।

**निवृत्य तौ स्वसेनया शरोत्तमैर्ववर्षतुः ।**
**सुकोपितौ समस्तशो यदूनवार्यपौरुषौ ।।२७६।।**

**वरदराजीया–** स्वसेनया सह निवृत्त्य समस्तशो यदून् ववर्षतुः । यतः अवार्यपौरुषौ ।।२७६।।

**जनार्दनीया–** अवार्यं वारयितुमशक्यं पौरुषं पराक्रमो ययोस्तौ तथा । सुकोपितौ अतिकोपयुक्तौ तौ हंसडिभिकौ स्वसेनया सह निवृत्त्य समस्तशः समस्तान् यदून् शरोत्तमैर्ववर्षतुः ।।२७६।।

**चट्टि–** अवार्यं वारयितुमशक्यं पौरुषं पराक्रमो ययोस्तौ तथा । सुकोपितौ अतिकोपयुक्तौ तौ हंसडिभिकौ स्वसेनया सह निवृत्त्य, समस्तशः समस्तान् यदून् शरोत्तमैर्ववर्षतुः ।।२७६।।

**अथाऽससाद हंसको हलायुधं महाधनुः ।**
**अनन्तरोऽस्य सात्यकिं गदं च सर्वसैनिकान् ।।२७७।।**

**वरदराजीया–** महत् धनुः यस्य स तथा हंसः हलायुधं आससाद । अस्य हंसस्य अनन्तरोऽनुजः सर्वसैनिकांश्च प्रति आससाद ।।२७७।।

**अनन्तभट्टीया–** अस्य हंसस्य अनन्तरः अनुजः ।।२७७।।

**जनार्दनीया–** अस्य हंसस्य अनन्तरः अवरजो डिभिकः । सात्यकिं गदं च सर्वसैनिकांश्च सर्वयादवान् आससाद इति शेषः ।।२७७।।

**चट्टि–** अथ अनन्तरं महाधनुः हंसः हलायुधं आससाद । अस्य हंसस्य अनन्तरः अवरजो डिभिकः सात्यकिं गदं च सर्वसैनिकांश्च आससाद इति शेषः ।।२७७।।

**स सात्यकिं निरायुधं विवाहनं विवर्मकम् ।**
**व्यधाद् गदं च तौ रणं विहाय हापजग्मतुः ।।२७८।।**

**वरदराजीया–** सात्यकिं निरायुधं चकार गदं च तथा व्यधात् । तौ गदसात्यकी अपजग्मतुः परावृत्त्य गतौ ।।२७८।।

**जनार्दनीया–** स डिभिकः । सात्यकीं गदं च आयुधादिरहितं व्यधात् अकरोत् । तौ सात्यकीगदौ ।।२७८।।

**चट्टि–** सः डिभिकः सात्यकिं निरायुधं विवाहनं विवर्मकं च व्यधात् । गदं च तथा व्यधात् । तौ गदसात्यकी रणं विहाय अपजग्मतुः ।।२७८।।

**विधूय सैनिकांश्च स प्रगृह्य चापमाततम् ।**
**हरिं जगाम चोन्नदन् महास्त्रशस्त्रवर्षणः ।।२७९।।**

**वरदराजीया–** स डिभिकः आततं अतिस्थूलं चापम् । महास्त्रशस्त्राणि वर्षतीति तथा ।।२७९।।

**जनार्दनीया–** स डिभिकः सैनिकान् यादवान् विधूय विद्रावयित्वा, आततं आरोपितमित्यर्थः । चापं धनुः प्रगृह्य उन्नदन् उच्चस्वरं कुर्वन् ।।२७९।।

**चट्टि–** स डिभिकः सैनिकान् यादवान् विधूय द्रावयित्वा आततमारोपितमित्यर्थः । चापं धनुः प्रगृह्य उन्नदन् उच्चध्वनिं कुर्वन् महास्त्रवर्षणस्सन् हरिं जगाम ।।२७९।।

**तमाशु केशवोऽरिहा समस्तसाधनोज्झितम् ।**
**क्षणाच्चकार सोऽप्यगाद् विसृज्य तं हलायुधम् ।।२८०।।**

**जनार्दनीया–** परे दिने द्वितीयदिवसे । यमस्वसुर्यमुनायास्तटे । नृपात्मजौ हंसडिभिकौ । पृष्ठतः समाससाद प्राप ।।२७४।।

**चट्टि–** प्रभुः जनार्दनः श्रीकृष्णः परे दिने द्वितीयदिवसे यमस्वसुर्यमुनायास्तटे । गोवर्धनगिरिसमीपस्थ यमुनातट इत्यर्थः । प्रविद्रुतौ नृपात्मजौ हंसडिभिकौ पृष्ठतः समाससाद प्राप । तदुक्तम्– 'उभौ तौ हंसडिभिकौ रात्रावेव महागिरिम् । जग्मतुः सहितौ राजान् गोवर्धनमथो नृप ।। अथ प्रभाते विमले सूर्ये चाभ्युदिते सति । गोवर्धनं जगामाशु केशवः केशिमर्दनः ।। निकषा यमुना राजन् ततो युद्धमवर्त्तत ।।' इति हरिवंशोक्तेः [३.१२७.१-२.५] ।।२७४।।

**स रौहिणेयसंयुतः समन्वितश्च सेनया ।**
**स्वशिष्टसेनया वृतौ पलायिनाववारयत् ।।२७५।।**

**वरदराजीया–** रौहिणेयेन संयुतः स कृष्णः । स्वकीयया अवशिष्टया सेनया सह पलायिनौ पलाय्य गच्छन्तौ अवारयत् वारयमास ।।२७५।।

**जनार्दनीया–** स कृष्णः स्वशिष्टसेनया स्वस्मादुर्वरितसेनया वृतौ परिवारितौ । पलायिनौ पलायनशीलौ अवारयत् निवारयामास ।।२७५।।

**चट्टि–** स श्रीकृष्णः रौहिणेयेन संयुतः सन् स्वसेनया समन्वितः सन् स्वशिष्टसेनया युतौ पलायिनौ पलायनशीलौ हंसडिभिकौ न्यवारयत् निवारयामास ।।२७५।।

**निवृत्य तौ स्वसेनया शरोत्तमैर्ववर्षतुः ।**
**सुकोपितौ समस्तशो यदूनवार्यपौरुषौ ।।२७६।।**

**वरदराजीया–** स्वसेनया सह निवृत्त्य समस्तशो यदून् ववर्षतुः । यतः अवार्यपौरुषौ ।।२७६।।

**जनार्दनीया–** अवार्यं वारयितुमशक्यं पौरुषं पराक्रमो ययोस्तौ तथा । सुकोपितौ अतिकोपयुक्तौ तौ हंसडिभिकौ स्वसेनया सह निवृत्त्य समस्तशः समस्तान् यदून् शरोत्तमैर्ववर्षतुः ।।२७६।।

**चट्टि–** अवार्यं वारयितुमशक्यं पौरुषं पराक्रमो ययोस्तौ तथा । सुकोपितौ अतिकोपयुक्तौ तौ हंसडिभिकौ स्वसेनया सह निवृत्त्य, समस्तशः समस्तान् यदून् शरोत्तमैर्ववर्षतुः ।।२७६।।

**अथाऽससाद हंसको हलायुधं महाधनुः ।**
**अनन्तरोऽस्य सात्यकिं गदं च सर्वसैनिकान् ।।२७७।।**

**वरदराजीया–** महत् धनुः यस्य स तथा हंसः हलायुधं आससाद । अस्य हंसस्य अनन्तरोऽनुजः सर्वसैनिकांश्च प्रति आससाद ।।२७७।।

**अनन्तभट्टीया–** अस्य हंसस्य अनन्तरः अनुजः ।।२७७।।

**जनार्दनीया–** अस्य हंसस्य अनन्तरः अवरजो डिभिकः । सात्यकिं गदं च सर्वसैनिकांश्च सर्वयादवान् आससाद इति शेषः ।।२७७।।

**चट्टि–** अथ अनन्तरं महाधनुः हंसः हलायुधं आससाद । अस्य हंसस्य अनन्तरः अवरजो डिभिकः सात्यकिं गदं च सर्वसैनिकांश्च आससाद इति शेषः ।।२७७।।

**स सात्यकिं निरायुधं विवाहनं विवर्मकम् ।**
**व्यधाद् गदं च तौ रणं विहाय हापजग्मतुः ।।२७८।।**

**वरदराजीया–** सात्यकिं निरायुधं चकार गदं च तथा व्यधात् । तौ गदसात्यकी अपजग्मतुः परावृत्त्य गतौ ।।२७८।।

**जनार्दनीया–** स डिभिकः । सात्यकीं गदं च आयुधादिरहितं व्यधात् अकरोत् । तौ सात्यकीगदौ ।।२७८।।

**चट्टि–** सः डिभिकः सात्यकिं निरायुधं विवाहनं विवर्मकं च व्यधात् । गदं च तथा व्यधात् । तौ गदसात्यकी रणं विहाय अपजग्मतुः ।।२७८।।

**विधूय सैनिकांश्च स प्रगृह्य चापमाततम् ।**
**हरिं जगाम चोन्नदन् महास्त्रशस्त्रवर्षणः ।।२७९।।**

**वरदराजीया–** स डिभिकः आततं अतिस्थूलं चापम् । महास्त्रशस्त्राणि वर्षतीति तथा ।।२७९।।

**जनार्दनीया–** स डिभिकः सैनिकान् यादवान् विधूय विद्रावयित्वा, आततं आरोपितमित्यर्थः । चापं धनुः प्रगृह्य उन्नदन् उच्चस्वरं कुर्वन् ।।२७९।।

**चट्टि–** स डिभिकः सैनिकान् यादवान् विधूय द्रावयित्वा आततमारोपितमित्यर्थः । चापं धनुः प्रगृह्य उन्नदन् उच्चध्वनिं कुर्वन् महास्त्रवर्षणस्सन् हरिं जगाम ।।२७९।।

**तमाशु केशवोऽरिहा समस्तसाधनोज्झितम् ।**
**क्षणाच्चकार सोऽप्यगाद् विसृज्य तं हलायुधम् ।।२८०।।**

**जनार्दनीया–** परे दिने द्वितीयदिवसे । यमस्वसुर्यमुनायास्तटे । नृपात्मजौ हंसडिभिकौ । पृष्ठतः समाससाद प्राप ।।२७४।।

**चट्टि–** प्रभुः जनार्दनः श्रीकृष्णः परे दिने द्वितीयदिवसे यमस्वसुर्यमुनायास्तटे । गोवर्धनगिरिसमीपस्थ यमुनातट इत्यर्थः । प्रविद्रुतौ नृपात्मजौ हंसडिभिकौ पृष्ठतः समाससाद प्राप । तदुक्तम्– 'उभौ तौ हंसडिभिकौ रात्रावेव महागिरिम् । जग्मतुः सहितौ राजान् गोवर्धनमथो नृप ।। अथ प्रभाते विमले सूर्ये चाभ्युदिते सति । गोवर्धनं जगामाशु केशवः केशिमर्दनः ।। निकषा यमुना राजन् ततो युद्धमवर्त्तत ।।' इति हरिवंशोक्तेः [३.१२७.१-२.५] ।।२७४।।

**स रौहिणेयसंयुतः समन्वितश्च सेनया ।**
**स्वशिष्टसेनया वृतौ पलायिनाववारयत् ।।२७५।।**

**वरदराजीया–** रौहिणेयेन संयुतः स कृष्णः । स्वकीयया अवशिष्टया सेनया सह पलायिनौ पलाय्य गच्छन्तौ अवारयत् वारयमास ।।२७५।।

**जनार्दनीया–** स कृष्णः स्वशिष्टसेनया स्वस्मादुर्वरितसेनया वृतौ परिवारितौ । पलायिनौ पलायनशीलौ अवारयत् निवारयामास ।।२७५।।

**चट्टि–** स श्रीकृष्णः रौहिणेयेन संयुतः सन् स्वसेनया समन्वितः सन् स्वशिष्टसेनया युतौ पलायिनौ पलायनशीलौ हंसडिभिकौ न्यवारयत् निवारयामास ।।२७५।।

**निवृत्य तौ स्वसेनया शरोत्तमैर्ववर्षतुः ।**
**सुकोपितौ समस्तशो यदूनवार्यपौरुषौ ।।२७६।।**

**वरदराजीया–** स्वसेनया सह निवृत्त्य समस्तशो यदून् ववर्षतुः । यतः अवार्यपौरुषौ ।।२७६।।

**जनार्दनीया–** अवार्यं वारयितुमशक्यं पौरुषं पराक्रमो ययोस्तौ तथा । सुकोपितौ अतिकोपयुक्तौ तौ हंसडिभिकौ स्वसेनया सह निवृत्त्य समस्तशः समस्तान् यदून् शरोत्तमैर्ववर्षतुः ।।२७६।।

**चट्टि–** अवार्यं वारयितुमशक्यं पौरुषं पराक्रमो ययोस्तौ तथा । सुकोपितौ अतिकोपयुक्तौ तौ हंसडिभिकौ स्वसेनया सह निवृत्त्य, समस्तशः समस्तान् यदून् शरोत्तमैर्ववर्षतुः ।।२७६।।

**अथाऽससाद हंसको हलायुधं महाधनुः ।**
**अनन्तरोऽस्य सात्यकिं गदं च सर्वसैनिकान् ।।२७७।।**

**वरदराजीया**– महत् धनुः यस्य स तथा हंसः हलायुधं आससाद । अस्य हंसस्य अनन्तरोऽनुजः सर्वसैनिकांश्च प्रति आससाद ।।२७७।।

**अनन्तभट्टीया**– अस्य हंसस्य अनन्तरः अनुजः ।।२७७।।

**जनार्दनीया**– अस्य हंसस्य अनन्तरः अवरजो डिभिकः । सात्यकिं गदं च सर्वसैनिकांश्च सर्वयादवान् आससाद इति शेषः ।।२७७।।

**चट्टि**– अथ अनन्तरं महाधनुः हंसः हलायुधं आससाद । अस्य हंसस्य अनन्तरः अवरजो डिभिकः सात्यकिं गदं च सर्वसैनिकांश्च आससाद इति शेषः ।।२७७।।

**स सात्यकिं निरायुधं विवाहनं विवर्मकम् ।**
**व्यधाद् गदं च तौ रणं विहाय हापजग्मतुः ।।२७८।।**

**वरदराजीया**– सात्यकिं निरायुधं चकार गदं च तथा व्यधात् । तौ गदसात्यकी अपजग्मतुः परावृत्त्य गतौ ।।२७८।।

**जनार्दनीया**– स डिभिकः । सात्यकीं गदं च आयुधादिरहितं व्यधात् अकरोत् । तौ सात्यकीगदौ ।।२७८।।

**चट्टि**– सः डिभिकः सात्यकिं निरायुधं विवाहनं विवर्मकं च व्यधात् । गदं च तथा व्यधात् । तौ गदसात्यकी रणं विहाय अपजग्मतुः ।।२७८।।

**विधूय सैनिकांश्च स प्रगृह्य चापमाततम् ।**
**हरिं जगाम चोन्नदन् महास्त्रशस्त्रवर्षणः ।।२७९।।**

**वरदराजीया**– स डिभिकः आततं अतिस्थूलं चापम् । महास्त्रशस्त्राणि वर्षतीति तथा ।।२७९।।

**जनार्दनीया**– स डिभिकः सैनिकान् यादवान् विधूय विद्रावयित्वा, आततं आरोपितमित्यर्थः । चापं धनुः प्रगृह्य उन्नदन् उच्चस्वरं कुर्वन् ।।२७९।।

**चट्टि**– स डिभिकः सैनिकान् यादवान् विधूय द्रावयित्वा आततमारोपितमित्यर्थः । चापं धनुः प्रगृह्य उन्नदन् उच्चध्वनिं कुर्वन् महास्त्रवर्षणस्सन् हरिं जगाम ।।२७९।।

**तमाशु केशवोऽरिहा समस्तसाधनोज्झितम् ।**
**क्षणाच्चकार सोऽप्यगाद् विसृज्य तं हलायुधम् ।।२८०।।**

**वरदराजीया—** तं डिभिकं समस्तैः धनुरादिसाधनैः उज्झितं चकार । धनुरादिकं चिच्छेदेत्यर्थः । सोऽपि डिभिकोऽपि तं कृष्णं विहाय हलायुधं प्रति जगाम ॥२८०॥

**जनार्दनीया—** समस्तसाधनैः सर्वयुद्धसाधनैः उज्झितं रहितं तं डिभिकं क्षणाच्चकार । सोऽपि डिभिकः तं कृष्णं विसृज्य, हलायुधं रामं प्रत्यगात् ॥२८०॥

**चट्टि—** अरिहा शत्रुघ्नः केशवः श्रीकृष्णः तं डिभिकं समस्तसाधनैः सर्वयुद्धसाधनैः उज्झितं रहितं क्षणाच्चकार । सोऽपि डिभिकः तं श्रीकृष्णं विसृज्य हलायुधं रामं प्रत्यगात् ॥२८०॥

**हलायुधो निरायुधं विधाय हंसमोजसा ।**
**विकृष्टचाप आगतं ददर्श तस्य चानुजम् ॥२८१॥**

**वरदराजीया—** विकृष्टमारोपितं चापं यस्य स तथा । स्वं प्रति आगतं तस्य हंसस्य अनुजं ददर्श ॥२८१॥

**जनार्दनीया—** ओजसा बलेन निरायुधं हंसं विधाय । तस्य हंसस्य अनुजं डिभिकं ददर्श ॥२८१॥

**चट्टि—** हलायुधः रामः ओजसा बलेन हंसं निरायुधं विधाय विकृष्टचापं आगतं तस्य हंसस्य अनुजं डिभिकं च ददर्श ॥२८१॥

**स हंस आशु कार्मुकं पुनः प्रगृह्य तं बलम् ।**
**यदाऽऽससाद केशवो न्यवारयत् तमोजसा ॥२८२॥**

**वरदराजीया—** सः हंसः पुनः अन्यकार्मुकं प्रगृह्य यदा बलं आससाद तदा केशवः तं हंसं न्यवारयत् ॥२८२॥

**जनार्दनीया—** स आदौ रामेण निरायुधः कृतो यः स इत्यर्थः । हंसः पुनः कार्मुकं प्रगृह्य, तं बलरामं आससाद प्राप यदा तदा केशवः तं हंसम् ॥२८२॥

**चट्टि—** स आदौ रामेण निरायुधः कृतो यः स इत्यर्थः । हंसः पुनः कार्मुकं प्रगृह्य, तं बलं बलरामं यदा आससाद तदा केशवः ओजसा बलेन तं हंसं न्यवारयत् ॥२८२॥

**शिनेः सुतात्मजोऽप्यसौ विहाय हंसकानुजम् ।**
**रथान्तरं समास्थितो जगाम तातमस्य च ॥२८३॥**

**वरदराजीया–** शिनेः सुतात्मजः सात्यकिः पूर्वं डिभिकेन युद्ध्यन् विरथीकृतः तं विहाय अन्यं रथं समास्थितो अस्य डिभिकस्य तातं पितरं ब्रह्मदत्तं प्रति जगाम ।।२८३।।

**जनार्दनीया–** असौ शिनेः सुतात्मजोऽपि पूर्वं डिभिकेन विरथीकृतोऽपि । सात्यकिरित्यर्थः । हंसकानुजं विहाय, रथान्तरं अन्यरथं समास्थितः आरूढः सन् अस्य डिभिकस्य तातं प्रति जगाम ।।२८३।।

**चट्टि–** असौ शिनेः सुतात्मजः पूर्वं डिभिकेन विरथीकृतः सात्यकिरपि । हंसकानुजं विहाय रथान्तरं अन्यं रथं समास्थितः आरूढः सन् अस्य डिभिकस्य तातं पितरं प्रति जगाम ।।२८३।।

**वयोगतः पिता तयोर्युयोध तेन वृष्णिना ।**
**शरं च कण्ठकूबरे व्यसर्जयत् स सात्यकेः ।।२८४।।**

**वरदराजीया–** तयोः हंसडिबिकयोः पिता वयोगतो वृद्धः ब्रह्मदत्तः तेन वृष्णिना सात्यकिना । सः ब्रह्मदत्तः सात्यकेः कण्ठस्य कूबरे कण्ठाधोविद्यमाननिम्नप्रदेशे शरं व्यसर्जयत् पातयामास ।।२८४।।

**अनन्तभट्टीया–** तयोः पिता ।।२८५।।

**जनार्दनीया–** वयोगतः वृद्धः तयोः पिता ब्रह्मदत्तः तेन वृष्णिना सात्यकिना सह युयोध । स ब्रह्मदत्तः सात्यकेः कण्ठकूबरे कण्ठोरःसन्धौ विद्यमाननिम्नप्रदेशे ।।२८४।।

**चट्टि–** वयोगतः वृद्धः तयोः पिता ब्रह्मदत्तः तेन वृष्णिना सात्यकिना सह युयोध । स ब्रह्मदत्तः सात्यकेः कण्ठकूबरे कण्ठोरःसन्धौ विद्यमाननिम्नप्रदेशे शरं च व्यसर्जयत् ।।२८४।।

**स सात्यकिर्दृढाहतो जगाम मोहमाशु च ।**
**सुलब्धसञ्ज्ञ उत्थितः समाददेऽर्द्धचन्द्रकम् ।।२८५।।**

**वरदराजीया–** मोहं मूर्च्छामाप । यतो दृढाहतः । सुलब्धसञ्ज्ञः सम्यक् प्राप्तसञ्ज्ञः अर्धचन्द्रकं अर्धचन्द्राख्यं बाणम् ।।२८५।।

**जनार्दनीया–** मोहं मूर्च्छाम् । सुलब्धा प्राप्ता सञ्ज्ञा येन स तथा । समुत्थितः सात्यकिः अर्धचन्द्रकं अर्धचन्द्राकारबाणविशेषं आददे । तूणादिति शेषः ।।२८५।।

**चट्टि–** सः सात्यकिः दृढाहतः सन् मोहं मूर्च्छां च जगाम । आशु सुलब्धा सञ्ज्ञा येन स तथा । उत्थितः सन् अर्धचन्द्रकं अर्धचन्द्राकारबाणविशेषं समाददे ।।२८५।।

**स तेन तच्छिरो बली चकर्त शुक्लमूर्द्धजम् ।**
**यदम्बयाऽभिकामितं पुरा पपात तत् क्षितौ ॥२८६॥**

**व्यासतीर्थीया–** यदम्बयाभिकामितमिति सूचयति ॥२८६॥

**वादिराजतीर्थीया–** देवस्त्रीविवाहोद्योगकरं शिरः पतितमिति सूचनाय यदम्बयाभिकाङ्क्षितमित्युक्तम् ॥२८६-२९२॥

**सत्याभिनवतीर्थीया–** तत्रैव स तेन तच्छिरो बली...इति श्लोकः । तस्यार्थः । बली सः सात्यकिः यत् अम्बया पुरा अवयवान्तरकामनायाः पूर्वं अभिकामितं शुक्लमूर्धजं यत् तच्छिरः तस्य साल्वस्य शिरः तेन अर्धचन्द्राकारबाणेन चकर्त । तच्छिरः क्षितौ पपातेति । अम्बया साल्वशिरः पूर्वमभिकामितम् । अनन्तरमवयवान्तरमभिकामितमित्युक्त्या साल्वावयवान्तरं सुन्दरं शिरः अतिसुन्दरमिति सूचितम् । अनेन यत् अम्बया अभिकामितं पुरा इत्येतत् व्यर्थमिति दूषणं निरस्तम् । अतिसुन्दरं साल्वशिरः सात्यकिना छिन्नं सत् पपातेति ज्ञापनार्थं 'यदम्बया अभिकामितं पुरा' इत्युक्तमित्यङ्गीकारात् ॥२८६॥

॥ इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादानां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां सप्तदशोऽध्यायः ॥

**वरदराजीया–** शुक्लमूर्धजं शुक्लकेशयुक्तं तस्य ब्रह्मदत्तस्य शिरः । यच्छिरः पुरा पूर्वं अम्बया भीष्मेण नीतया अभिकामितं वाञ्छितं तच्छिरः क्षितौ अपतत् ॥२८६॥

**अनन्तभट्टीया–** अम्बया अम्बाख्यस्त्रिया ॥२८६॥[१]

**जनार्दनीया–** सात्यकिः तेन अर्धचन्द्रेण । शुक्लाः श्वेतवर्णाः मूर्धजाः केशाः यस्मिन् तत्तथा तादृशम् । तस्य ब्रह्मदत्तस्य शिरश्चकर्त अच्छिनत् । पुरा अम्बया भीष्मेण ब्रह्मदत्तस्य पाणिग्रहणकाले आहृतया काशिराजसुतया अम्बया अम्बानाम्न्या यत्कामितं अपेक्षितं तच्छिरः क्षितौ अपतत् । 'साल्वकामाहम्' इति अम्बया यः पतित्वेन अपेक्षितः स साल्वः अपतदिति भावः ॥२८६॥

**ताम्रपर्णीया–** यदम्बयाभिकामितमित्यनेन सुन्दरमिति सूचयति । देवस्त्रीविवाहोद्योगकरं पतितमिति सूचितुमेवमुक्तम् । यद्वा शुक्लमूर्धजत्वे वहुकालीनत्वं हेतुं सूचयता यदम्बयाभिकामितमित्युक्तम् ॥ ॥२८६-२९३॥

---

१. अनन्तभट्टीया– यदम्बयेत्यत्र सुन्दरत्वं तस्य सूचयति । इति हो.पुस्तके अधिकः पाठः ।

**चट्टि–** बली सः सात्यकिः तेन अर्धचन्द्रकेण । शुक्लाः श्वेतवर्णाः मूर्धजाः यस्मिन् तत्तथा तादृशम् । तस्य ब्रह्मदत्तस्य शिरश्चकर्त । पुरा अम्बया भीष्मेण ब्रह्मदत्तस्य पाणिग्रहणकाले आहृतया काशिराजसुतया अम्बानाम्न्या यत्कामितं अपेक्षितं तच्छिरः क्षितौ भूमौ पपात । साल्वकामाहमित्यम्बया पतित्वेन यः अपेक्षितः स साल्वः अपतदिति भावः ।।२८६।।

**नदंश्च सात्यकिर्हरेर्जगाम पार्श्वमुद्धतः ।**
**बलोऽपि हंसकानुजं युयोध सेनया युतम् ।।२८७।।**

**वरदराजीया–** नदन् सिंहनादं कुर्वन् ।।२८७।।

**जनार्दनीया–** नदन् सिंहनादं कुर्वन् ।।२८७।।

**चट्टि–** उद्धतः सात्यकिश्च नदन् सिंहनादं कुर्वन् हरेः पार्श्वं जगाम । बलोऽपि सेनया युतं युक्तं हंसकानुजं डिभिकं युयोध ।।२८७।।

**हरिस्तु हंसमुल्बणैः शरैः समर्दयत् बलम् ।**
**जघान तस्य सर्वशो न कश्चिदत्र शेषितः ।।२८८।।**

**वरदराजीया–** हरिः हंसं समर्दयत् सम्यक् अर्दयामास । तस्य हंसस्य सर्वशः सर्वबलसैन्यं जघान । अत्र सेनायां हंसं विना न कश्चित् शेषितः अवशेषितः ।।२८८।।

**अनन्तभट्टीया–** तस्य बलं सेनाम् ।।२८८।।

**जनार्दनीया–** हरिः हंसं समर्दयत् पीडयामास । तस्य हंसस्य सर्वशः सर्वं बलं सेनां जघान । अत्र अस्मिन् युद्धे कश्चिदसुरः न शेषितः ।।२८८।।

**चट्टि–** हरिः हंसं उल्बणैः शरैः समर्दयत् । तस्य हंसस्य सर्वशः सर्वं बलं सेनां जघान । अत्र अस्मिन् बले कश्चिदपि असुरो न शेषितः ।।२८८।।

**स एक एव केशवं महास्त्रमुक् ससार ह ।**
**निवार्य तानि सर्वशो हरिर्निजास्त्रमाददे ।।२८९।।**

**वरदराजीया–** सः हंस एक एव महास्त्राणि मुञ्चतीति तथा । सर्वशः सर्वाणि तानि अस्त्राणि । निजास्त्रं वैष्णवास्त्रम् ।।२८९।।

**अनन्तभट्टीया–** निजास्त्रं नारायणास्त्रमाददे ।।२८९।।[1]

**जनार्दनीया–** स हंसः एक एव । महास्त्राणि मुञ्चतीति स तथा तादृशः सन् । केशवं ससार ह । हरिः सर्वशः सर्वाणि तानि हंसमुक्तास्त्राणि ।।२८९।।

**चट्टि–** स हंसः एक एव । महास्त्राणि मुञ्चतीति महास्त्रमुक् सन् केशवं ससार ह । हरिः सर्वशः सर्वाणि तानि हंसमुक्तास्त्राणि निवार्य निजास्त्रमादधे ।।२८९।।

**स वैष्णवास्त्रमुद्यतं निरीक्ष्य यानतो महीम् ।**
**गतः पराद्रवद् भयात् पपात यामुनोदके ।।२९०।।**

**मधुसूदनीया–** ।। **पपात यामुनोदक इति** ।। यामुनोदके कालीयह्रदे पपात । 'यत्र कृष्णो हृषीकेशः कालीयं बलशालिनम् । ममर्द च महाघोरं यावत् पातालसंस्थितिः । तावद्दीर्घं ह्रदं घोरं कालाञ्जननिभं महत् । तस्मिन् ह्रदे महाघोरे निपपात स हंसकः ।।' इति हरिवंशोक्तेः [३.१२८.२-३] ।।२९०।।

**वरदराजीया–** उद्यतं आगतं वैष्णवास्त्रं निरीक्ष्य यानतः रथात् महीं भूमिं गतः सन् पराद्रवत् । यामुनोदके यमुनायाः जले भयात् पपात ।।२९०।।

**जनार्दनीया–** स हंसः यानतः रथात् महीं गतः प्राप्तः सन् भयात् पराद्रवत् दुद्रुवे । यामुनोदके यमुनासम्बन्धिजले पपात ।।२९०।।

**चट्टि–** स हंसः उद्यतं वैष्णवास्त्रं निरीक्ष्य यानतः रथात् महीं गतः प्राप्तः सन् भयात् पराद्रवत् दुद्रुवे । यामुनोदके यमुनासम्बन्धिजले कालीयह्रदे पपात । 'यत्र कृष्णो हृषीकेशः कालीयं बलशालिनम् । ममर्द च महाघोरं यावत् पातालसंस्थितिः ।। तावद्दीर्घं ह्रदं घोरं कालाञ्जननिभं महत् । तस्मिन् ह्रदे महाघोरे निपपात स हंसकः ।।' इति हरिवंशोक्तेः [३.१२८.२-३] ।।२९०।।

**वरास्त्रपाणिरीश्वरः पदाऽहनच्छिरस्यमुम् ।**
**स मूर्च्छितो मुखेऽपतन्महाभुजङ्गमस्य ह ।।२९१।।**

**मधुसूदनीया–** ननु पलायिनं जले मज्जन्तं अस्त्ररहितं च न हन्यादिति निषेधात् क्षत्रधर्मस्थेन कृष्णेन पलायमानायुधरहितजलमग्नः हंसः कथं हत इत्यतः पापिनोऽपापवद्धनने प्रत्यवायोक्तेरधर्मेणैव हननं कर्तव्यमिति दर्शयितुं तथा स्वस्य सर्वेश्वरत्वेन विधिबन्धविधुरत्वेन दोषो नास्तीति दर्शयितुं च तादृशो हंसः कृष्णेन हत इत्याशयेनोक्तम्– **ईश्वर इति** ।। ईश्वरः ईशेभ्योः श्रीब्रह्मरुद्रशेषेन्द्रादिभ्यो वर

१. इति हो.पुस्तकपाठः ।

उत्तम इत्यर्थः । तथाचोक्तम्– 'ईशेभ्यं। ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् । वरोऽतो ईश्वराख्या ते मुख्या नान्यस्य कस्यचित् ।।' इति ब्रह्मवैवर्ते'' इति गीताभाष्ये [४.६] ।।२९१-२९३।।

**वरदराजीया–** वरास्त्रपाणिरपि ईश्वरः अमुं जले पतितं शिरसि प्रदेशे पदा अहनत् । ततः सः हंसः मूर्च्छित सन् महाभुजङ्गमस्य महासर्पस्य मुखे अपतत् । पदा ताडिते सति मूर्च्छां प्राप्तः दैवात् मुखं व्यादाय स्थितस्य महोरगस्य मुखे एव पपातेति भावः ।।२९१।।

**अनन्तभट्टीया–** महाभुजङ्गमस्य मुखे अपतत् ।।२९१।।

**जनार्दनीया–** वरास्त्रं पाणौ यस्य स तथा । ईश्वरः कृष्णः अमुं हंसं शिरसि पदा पादेन अहनत् । पादप्रहारं ददावित्यर्थः । स हंसः मूर्च्छितः सन् महाभुजङ्गमस्य यमुनायां स्थितस्य महासर्पस्य मुखे अपतत् ।।२९१।।

**चट्टि–** वरास्त्रं पाणौ यस्य स तथा । ईश्वरः श्रीकृष्णः अमुं हंसं शिरसि पदा पादेन अहनत् । पादप्रहारं ददावित्यर्थः । स हंसः मूर्च्छितः सन् महाभुजङ्गमस्य यमुनायां स्थितस्य महासर्पस्य मुखे अपतत् ।।२९१।।

**स धार्तराष्ट्रकोदरे यथा तमोऽन्धमेयिवान् ।**
**तथा सुदुःखसंयुतो वसन् मनोः परं म्रियेत् ।।२९२।।**

**व्यासतीर्थीया–** धार्तराष्ट्र इति तस्य भुजङ्गस्य नाम । मनोर्वैवस्वतस्य परमूर्ध्वं म्रियेत ।। वैवस्वतमन्वन्तरानन्तरं मरिष्यतीत्यर्थः ।।२९२।।

**वेदाङ्गतीर्थीया–** मनोः परं वैवस्वतमन्वन्तरानन्तरम् ।।२९२।।

**वादिराजतीर्थीया–** धार्तराष्ट्रकोदर इत्यत्र धृतराष्ट्राख्यो महानागः तस्य सम्वन्धिन्युदर इत्यर्थः ।।२९२-२९४।।

**वरदराजीया–** तदानीमेव हंसः तमः प्राप्त इति क्वचिदुक्तिः । तां घटते– **स इति** ।। सः हंसो धार्तराष्ट्रकस्य तन्नाम्नः सर्पस्योदरे यथा अन्धन्तम ईयिवान् प्राप्तः सुदुःखसंयुतो भवति तथा दुःखसंयुतस्सन् अवसत् । तर्हि किं तस्येदमेव तमः नेत्याह– **मनोरिति** ।। वैवस्वतमनोः परं वैवस्वतमन्वन्तरसमाप्तौ म्रियेत् मरिष्यति ।।२९२।।

**अनन्तभट्टीया–** धार्तराष्ट्रक इति सर्पस्य नाम । तस्य [उदरे]... मनोर्वैवस्वतस्य परम् ।।२९२।।[१]

---

१. अनन्तभट्टीया– ....किल इति सम्भावनायां लिट् च । इति हो.पुस्तकपाठः ।

**जनार्दनीया–** यथा तमोन्धं एयिवान् प्राप्तवान् तथा तद्वत् सुदुःखसंयुतः स हंसः, धार्तराष्ट्रकस्य धार्तराष्ट्रनाम्नः सर्पस्य उदरे अवसत् उवास । मनोः वैवस्वतमनोः परं अनन्तरं म्रियेत् मरिष्यतीत्यर्थः ।।२९२।।

**भारतश्री–** धार्तराष्ट्राख्यः सर्पः ।।२९२।।

।। इति डम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां सप्तदशोऽध्यायः ।।

**चट्टि–** स हंसः अन्धंतम एयिवान् यथा तथा तद्वत् सुदुःखसंयुतः सन् धार्तराष्ट्रकस्य धार्तराष्ट्रनाम्नः सर्पस्य, उदरे अवसत् । मनोः वैवस्वतमनोः परं अनन्तरं म्रियेत् मरिष्यतीत्यर्थः ।।२९२।।

**ततोऽन्धमेव तत् तमो हरेर्द्विडेति निश्चयात् ।**
**तदाऽस्य चानुजोऽग्रजं विमार्गयन् जलेऽपतत् ।।२९३।।**

**व्यासतीर्थीया–** तत् श्रुतिप्रसिद्धं तमः ।।२९३।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपश्चिकायां सप्तदशोऽध्यायः ।।

**वरदराजीया–** ततो मरणानन्तरं प्रसिद्धं तत् अन्धन्तमो निश्चियात् एति एष्यति । वर्तमानसामीप्यात् वर्तमानवन्निर्देशः । यतो हरेः द्विट् तस्मादिति वा । अस्य हंसस्यानुजो रोहिणीसुतं विहाय तेन युद्धं विसृज्य अग्रजं हंसं विमार्गयन् यामुनोदके अपतत् ।।२९३।।

**अनन्तभट्टीया–** तत् प्रसिद्धम् ।।२९३।।

**जनार्दनीया–** ततः मरणानन्तरं हरेर्द्विट् द्वेषी हंसः तत् प्रसिद्धं एति यास्यतीत्यर्थः । यदा हंसः पराद्रवत् तदा अस्य हंसस्य अनुजो डिभिकः रोहिणीसुतं रामं विहाय अग्रजं विमार्गयन् अन्वेषणं कुर्वन् जले अपतत् ।।२९३।।

**चट्टि–** ततः मरणानन्तरं हरेर्द्विट् द्वेषी हंसः तत् प्रसिद्धं अन्धं तम एव निश्चयादेति यास्यति । तदा यदा हंसः पराद्रवत् तदा अस्य हंसस्य अनुजो डिभिकः रोहिणीसुतं रामं विहाय अग्रजं विमार्गयन् जले अपतत् ।।२९३।।

**विहाय रोहिणीसुतं जले निमज्ज्य मार्गयन् ।**
**अपश्यमान आत्मनो व्यपाटयच्च काकुदम् ।।२९४।।**

**वेदाङ्गतीर्थीया–** काकुदं जिह्वामूलस्थिता सूक्ष्मा जिह्वा ['जिह्वामूलस्थितां सूक्ष्मजिह्वाम्' इति स्यात्] ।।२९४।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां सप्तदशोऽध्यायः ।।

**वादिराजतीर्थीया–** 'तालु काकुदमुच्यते' इत्यभिधानात् जिह्वामूलस्थितसूक्ष्मजिह्वां व्यपाटयत् ।।२९४-२९८।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां सप्तदशोऽध्यायः ।।

**मधुसूदनीया–** ।। **व्यपाटयच्च काकुदमिति** ।। काकुदं जिह्वामूलम् । 'हस्तेन जिह्वामाकृष्य भूयो भूयो विलप्य च । ततस्समूलमाकृष्य जिह्वां साहसकृत्स्वयम् ।। ममार तज्जले राजन् डिविको नरकोपमः ।।' इति हरिवंशवचनात् [३.१२९.१२-१३]। एतेन 'काकुदं ग्रीवाम्' इति अनन्तभट्टीयं 'ग्रीवामध्यम्' इति वरदराजीयश्च व्याख्यानमपास्तं वेदितव्यम् । अप्रामाणिकत्वात् । अत एव 'काकुदस्तस्य जिह्वा स्युः' इत्यत्र [१.८.७] ऋग्भाष्ये काकुदित्यस्य जिह्वार्थकत्वं स्पष्टम् ।।२९४-२९७।।

।। इति श्रीमद्विद्याधीशतीर्थश्रीपादशिष्येण मधुसूदनभिक्षुणा विरचिते श्रीमन्महाभारतातात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे सप्तदशोऽध्यायः ।।

**वरदराजीया–** जले निमज्य मार्गयन्नपि अग्रजमपश्यमानः आत्मनः स्वस्य काकुदं तालुग्रीवमिति यावत् । व्यपाटयत् चकर्त ।।२९४।।

**अनन्तभट्टीया–** काकुदं जिह्वा ।।२९४।।[१]

**जनार्दनीया–** जले निमज्य, मार्गयन् अपश्यमानोऽग्रजं अपश्यन् । अपश्यमान इति छान्दसः । आत्मनः स्वस्य काकुदं तालु व्यपाटयत् विदारितवान् । 'तालु तु काकुदः' इत्यमरः ।।२९४।।

**ताम्रपर्णीया–** काकुदं जिह्वाम् । 'उर्वीरापो न काकुदः' इति श्रुतेः । केचित्तु 'तालु काकुदमुच्यते' इत्यभिधानात् तालुमूलस्थितसूक्ष्मजिह्वाम्' इत्यर्थमाहुः ।।२९४-२९७।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां [प्रमाणमालायां] सप्तदशोऽध्यायः ।।

---

१. अनन्तभट्टीया– व्यपाटयदिति ।। काकुदं जित्कण्ठं ? व्यपाटयदित्यर्थः । 'उर्वीरापो न काकुदः' [ऋ.१.८.७] इत्यत्र जिह्वापरत्वेन भगवता व्याख्यातत्वात् । केचित्तु उपजिह्वा इत्यर्थमाहुः ।। इति हो.पुस्तके अधिकः पाठः ।

**चट्टि–** जले निमज्य, मार्गयन् अपश्यमानोऽग्रजं अपश्यन् सन् । अपश्यमान इति छान्दसः । आत्मनः स्वस्य काकुदं जिह्वां व्यपाटयत् विदारितवान् च ।

'हस्तेन जिह्वामाकृष्य भूयो भूयो विलप्य च । ततस्समूलमाकृष्य जिह्वां साहसकृत्स्वयम् ।।
ममार तज्जले राजन् डिबिको नरकोपमः ।।' इति हरिवंशवचनाच्च [३प.१२९अ.१२-१३]।
अत एव काकुदस्तस्य जिह्वासु इत्यत्र ऋग्भाष्ये काकुदित्यस्य जिह्वार्थकत्वं स्पष्टम् ।।२९४।।

**विहाय देहमुल्बणं तमोऽवतीर्य चाग्रजम् ।**
**प्रतीक्षमाण उल्बणं समत्ति तत् सुखेतरम् ।।२९५।।**

**वरदराजीया–** अत एव देहं विहाय उल्बणं दुःखात्मकं तमोऽवतीर्य प्राप्य तत्र अग्रजं हंसं प्रतीक्षमाणः तत् प्रसिद्धं सुखेतरत् दुःखं समत्ति सम्यगनुभवति ।।२९५।।

**अनन्तभट्टीया–** अग्रजं प्रतीक्षमाणः ।।२९५।।[१]

**जनार्दनीया–** देहं विहाय, उल्बणं क्रूरं तमः अवतीर्य प्राप्य, अग्रजं हंसं तत्रापि प्रतीक्षमाणः पश्यन् सन्, उल्बणं असह्यं तत्स्वरूपभूतमिति प्रसिद्धम् सुखादितरं अन्यत् दुःखमित्यर्थः । समत्ति अनुभवति ।।२९५।।

**चट्टि–** सः डिभिकः देहं विहाय, उल्बणं क्रूरं तमः अवतीर्य प्राप्य, अग्रजं हंसं तत्रापि प्रतीक्षमाणः पश्यन् सन्, उल्बणं असह्यं तत्स्वरूपभूतमिति प्रसिद्धं सुखादितरं अन्यत् दुःखमित्यर्थः । समत्ति सम्यक् अनुभवति ।।२९५।।

**ततो हरिर्बलैर्युतो बलान्वितो मुनीश्वरैः ।**
**समं कुशस्थलीं ययौ स्तुतः कशङ्करादिभिः ।।२९६।।**

**वरदराजीया–** बलैः स्वसेनाभिः युतो बलेन बलभद्रेण युतश्च मुनीश्वरैः समं सह नीतैः कशङ्करादिभिः ब्रह्मरुद्रादिभिः स्तुतः सन् कुशस्थलीं द्वारकां ययौ ।।२९६।।

**अनन्तभट्टीया–** कः ब्रह्मा ।।२९६।।

।। इति श्रीमुष्णं अनन्ताचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां तन्त्रमालायां [सत्तत्त्वमालायां] सप्तदशोऽध्यायः ।।

---

१. अनन्तभट्टीया– तत्र [तत्] श्रुतिप्रसिद्धं ।इति हो.पुस्तकपाठः ।

**जनार्दनीया–** ततः अनन्तरं बलैर्यादवसैन्यैर्युतः बलेन रामेण अन्वितः युक्तः हरिः मुनीश्वरैः यतीश्वरैः समं सह कुशस्थाली द्वारावतीं पुरीं ययौ प्राप । किं भूतो हरिः? कः ब्रह्मा शङ्करो रुद्रः तावेव आदिर्येषां ते तथा तैः स्तुतः ।।२९६।।

**चट्टि–** ततः अनन्तरं हरिः श्रीकृष्णः बलैर्यादवसैन्यैर्युतः बलेन बलरामेण अन्वितः युक्तः मुनीश्वरैः यतीश्वरैः समं सह कुशस्थलीं द्वारावतीं पुरीं ययौ प्राप । कथंभूतो हरिः ? कशङ्करादिभिः कः ब्रह्मा शङ्करो रुद्रः तावेव आदिर्येषां ते तथा तैः सुरैः स्तुतः ।।२९६।।

**स्वकीयपादपल्लवाश्रयं जनं प्रहर्षयन् ।**
**उवास नित्यसत्सुखार्णवो रमापतिर्गृहे ।।२९७।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमहाभारततात्पर्यनिर्णये
हंसडिभिकवधो नाम सप्तदशोऽध्यायः ।।

**वरदराजीया–** स्वकीयपादाख्यपल्लवाश्रयं जनं स्वभक्तजनं हर्षयन्, नित्येन सता निर्दुःखेन सुखेन अर्णव इव रमापतिः श्रीकृष्णः गृहे स्वगृहे अवसदित्यशेषमतिमङ्गलम् ।।२९७।।

श्रीमद्भारततात्पर्यनिर्णयाध्याय एव हि । सुव्याख्यानः सप्तदशः प्रीत्यै माधवमध्वयोः ।।

।। इति आद्य वरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
मन्दसुबोधिन्यां सप्तदशोऽध्यायः ।।

**जनार्दनीया–** नित्यं च तत् सत्सुखं च निर्दुष्टानन्दः, तेन अर्णव इवार्णवः । रमापतिः कृष्णः स्वकीयं स्वसम्बन्धि तच्च तत्पादपल्लवं च पादप्रवालं, तदेव आश्रयो यस्य स तथा । तं जनम् । भक्तजनमित्यर्थः । प्रहर्षयन् सन्तोषयन् गृहे स्वसद्मनि उवास अवसत् ।।२९७।।

यं गङ्गा जमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमःस्वाध्यायसम्पद्युतात् ।
पूर्तिं सप्तदशः कृतौ सुकृतिनोऽध्यायस्सतां मोददः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां सप्तदशोऽध्यायः ।।

**चट्टि–** सच्च तत् सुखं च सत्सुखं नित्यं च तत्सत्सुखं च नित्यसत्सुखं निर्दुष्टानन्दः, तेन अर्णव इव रमापतिः श्रीकृष्णः । स्वकीयं स्वसम्बन्धि तच्च तत्पादपल्लवं च तदेव आश्रयो यस्य स । तं जनम् । भक्तजनमित्यर्थः । प्रहर्षयन् सन्तोषयन् सन् गृहे स्वसदने उवास ।।२९७।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां सप्तदशोऽध्यायः ।।

★★★

# श्लोकार्धानुक्रमणिका

## ध



## न

## य

★★★

